३; द्रष्टव्यम् ॥ ५८. १ [ ४ ] दुहानो दधानः—*मॅ-मु। दघावः दुहानः–ग; दुहानः–घ; दधानः–त-भ ॥

[ ९. ४३ ] ५९. ५ [ ५ ] अयमिन्दुर्वाज°—*मॅ। इंदुर्वाज°–ग; यमिंदवाज°–त १.३.४.५-भ१.३; यमिदवाज°–त६; यदिंदुः यमिंदवाजः°–त७; यमिंदुः वाज°–भ२; यंमिवाज° –भ४। य इंदुर्वाज°–घ-मु ॥ ७ 'इडभावे च—*मॅ। इडभावश्च–ग-त-भ-मु ॥

॥ षष्ठाष्टकः समाप्तः ॥

सप्तमाष्टकभाष्यसंशोधनार्थमुपयुक्तानि लिखितपुस्तकानि—ग (१, २, ३), त (१, २, ३, ४, ५, ६, ७), भ (१, २, ४, ५, ६, ७)। भ६-पुस्तकं द्वितीयाध्यायस्य एकोनविंशे वर्गे ( ६८ तमे सूक्ते ) प्रारभ्यते।

[ ९. ४४ ] ६२.३ [ ६ ] गातुवित्तमः पुण्य°—ग३-*मॅ। गातुवित्तमहः पुण्य°–ग१. २; गातुवित्पुण्य°–त-भ-मु ॥

[ ९. ४५ ] ६२. १४ [ २ ] अभिगच्छ—ग-त१.२.७-भ४*-मॅ-मु। अभिगच्छति–त४.५; अभिगच्छतु–त६-भ१.७ ॥ १५. देवानायाचस्वेत्यर्थः—त३-भ१। देवानां पवस्वेत्यर्थः–ग; देवाना यावस्वेत्यर्थः–त१.२; देवानी याचस्वेत्यर्थः–त६-भ७; देवानां याचस्वेत्यर्थः–भ४। देवाना पवस्वेत्यर्थः–त५-मॅ-मु ॥ ६३.२ [५] अनूषत अस्तुवन्—त१.२-भ१-*मॅ-मु। अनूषत स्तुवते–ग; अनूषत स्तुवन्–त३.४.५.७-भ२.४; अनूषतास्तुवत्–त६; अनूषतास्तावन्–भ६ ॥

[ ९. ४६ ] ६३. १२ [ १ ] जाता वा—ग-भ। वा जाता वा–त१.२.३.७; जाताः–त५। वा जाताः–मॅ-मु ॥ २२ [ ३ ] वर्धयन्ति—ग-भ। प्रवर्धयंति–त-मॅ-मु ॥ ६४. ६ [ ६ ] त्रिशः—*मॅ-मु। विशः–ग-त३.४.५-भ२.४; विशेषः–त२.७; अण्वः–त६-भ६ ॥

[ ९. ४७ ] ६४. १७ [ २ ] अस्य—§। कृतान्यस्य–मॅ ॥ असुराणां नाशकानि—त१.२.७। असुराणां हिंसकाव–ग; असुराणां हिंसकानि–भ१ ( २ )। असुराणां–त३.५.६-भ२-६-मॅ। एतन्मन्त्रपूर्वार्धस्य भाष्यं मु-पुस्तके विभिन्नं वर्तते–' अस्य यस्यैतस्य सोमस्य दस्युतर्हणा दस्यूनामसुराणां तर्हणा नाशकानि कर्त्वा कर्माणि कृतानीत् अस्माभिरेव कृतानि सोयं ' इ. ॥ ६५. ४ [ ५ ] शत्रून्—भ१( २ )। शत्रूं–भ४। शत्रुं–मॅ-मु इतरेषु च ॥

[ ९. ४८ ] ६५. २१ [ ३ ] हे सोम—ग-भ। हे सुक्रतो शोभनकर्मवन् ( °कर्मवन्–त४-भ४ ) पवमान सोम–त-मु। हे पवमान सोम–*मॅ। 'सुक्रतो' इति पदं 'सुक्रतुः' इति पठित्वा भाष्यकारैः व्याख्यातम्। 'सुक्रतुः सुप्रज्ञः' इति भाष्यगतं व्याख्यानं मु-पुस्तके त्यक्तम्। एतदप्रामाणिकम्। 'पवमान' इति पदमप्यनावश्यकम्। एतत्सूक्तस्य द्वितीयमन्त्रभाष्यं द्रष्टव्यम् ॥ २६ [ ४ ] स्वर्दृशे सर्वदृशे—*मॅ-मु। स्वर्दृशे–ग-त३.६-भ; सर्वदृशे–त१.२.५.७; सर्वदृशे त४। 'स्वेः। दृशे' इति भिन्नः पदपाठः ॥ २७ साधारणमित्समानमेव—त६-भ१.२.४-*मॅ-मु। साधारणमिच्छमानमेव–त१.२.४.५.७; साधारणमित्यसमानमेव–भ६ ॥

[ ९. ५० ] ६७. १३ [ २ ] यज्ञमिच्छतो—त३-भ१.२.४। यज्ञमिच्छघृतो–त६-भ६.७। यज्ञमिच्छवो–त१.२.४.५.७-मॅ-मु ॥ २२ [ ४ ] योनिं स्थानं—ग-त३.६-भ

१.६.७ । योनिमुदरं स्थानं–त१.२.४.५.७-म२.४-मॅ-मु । अयं मन्त्रः पूर्वमागतः ( ९.२५.६ )। तत्र 'योनिं स्थानम्' इत्येव व्याख्यानमस्ति ॥

[ ९. ५१ ] ६८. १४ [ ३ ] व्याप्नुवन्ति प्राप्नुवन्ति—ग । व्याप्नुवंति–त१.२.६-म१.६.७; व्याप्नुवते व्याप्नुवंति–त३.४.५.७-म२-मॅ-मु ॥ २१ [ ५ ] अर्ष गच्छ—*मॅ-मु । अभ्यर्ष अभिगच्छ–ग; अर्ष गच्छसि–त१.२.३.४.५.७-म२.४; गच्छसि–त६-म६; र्ष गच्छसि–म१ ॥

[ ९. ५२ ] ६८. २३ शुक्षः इत्यनु°—ग-त२-*मॅ-अनु । शुक्षेत्यनु°–मु इतरेषु च ॥

[ ९. ५३ ] ६९. २५ [ १ ] स्पृधः स्पर्धमानाः । 'परिस्पृधः' इति प्रतीकम् ॥ ७०. ३ [ २ ] च निमित्ते—त३-म१-*मॅ-मु । धननिमित्ते–ग; च निमिते–त१.२.७; च निमित्त–त४.५-म२.४.७ ॥ ७ [ ३ ] त्वां-यो दुर्बुद्धिः—त३.७-म१.२.४*मॅ-मु । त्वां धुयो दुर्बुद्धिः–त१.२.५; दुर्धियो दुर्बुद्धिः–त४; त्वा यो-दुर्बुद्धि–त६; त्वां यो दुर्णधि–म७ ॥

[ ९. ५४ ] ७०. १७ [ १ ] अपरिमितस्य ... ... द्रष्टारं—त३.६-म१.२.६.७ । आदातारं ऋषिमतींद्रियस्य कर्मफलस्य,द्रष्टारं–ग । अपरिमितस्य कर्मफलस्य दातारं–त१.२.५.७-म४ मॅ-मु ॥

[ ९. ५५ ] ७१. ११ [ १ ] सौभगा सौभगानि—ग-त३-म४-मु । सौभगा सौभगा–म२ । सौभगानि–त२.४.५-म१.७-मॅ ॥

[ ९. ५६ ] ७२. १० [ ३ ] दश दशसंख्याकाः—त३-म२.४ । दशसंख्याका–मॅ-मु इतरेषु च ॥ १५ [ ४ ] इन्द्राय इन्द्रार्थं—ग-त३-म१.२.४.७-मु । इंद्रार्थं–त२.४.५.७-मॅ ॥

[ ९. ५७ ] ७२. २३ [ १ ] अस्मदर्थं—त२.३.४.६.७-म२.६.७-मु । अभि अस्मदर्थे–त१.५ । नोऽस्मदर्थे–मॅ ॥ ७३.७ [ ४ ] सः अभिषुतः पुनानः–ग-त३-म२.५ । अभिष्टुतः पुनानः–म१.६.७ । पुनानः–त२.४.५.७-म४-मॅ-मु ॥

[ ९. ५८ ] ७३. १ [ १ ] 'धारा सुतस्यान्धसो' इत्यस्यानन्तरं 'धारयाभिषुतस्यान्धसः' इत्यधिकं निरुक्तपाठे ॥ २८. [ ३ ] ऋग्वेदभाष्ये शाट्यायनकब्राह्मणवचनानि बहुत्र ( ऋ. सं. १. ५१. १३; ८४. १३; १०५ प्रस्ता.; १०५. १०; ५. २. १; ७. ३२ प्रस्ता.; ३३. ७; ८. ९१. १; ३; ५; ७; १०. ३८. ५; ५७. १; ६०. ७ ) उद्धृतानि । वेंकटमाधवस्य ऋग्वेदभाष्येऽपि शाट्यायनकवचनानि बहुश उद्धृतानि । शाट्यायनकब्राह्मणस्य जैमिनीयब्राह्मणेनातीव साम्यं दृश्यते । जैमिनीयब्राह्मणस्य कियांश्चिदंशः कॅलण्डमहोदयैः[1] मुद्रापितः । ऋग्वेदभाष्यलिखितपुस्तकेषु शाट्यायनकपाठानां प्रायोऽशुद्धत्वात् जैमिनीयपाठतुलनया शाट्यायनकपाठशोधनं सुशकम् । एतस्मिन् विषये ऑर्टेल्महोदयैः[2] बहु प्रयतितम् । बटकृष्णघोषमहोदयैरपि लुप्तब्राह्मणवचनशोधनमधिकृत्य निबन्ध आरचितः[3] । तद्गताः शाट्यायनजैमिनीय ब्राह्मणपाठा अस्मिन् पाठभेदादिविषयकविचारे तत्तत्स्थानेषु निवेशिताः ॥ ३०. [ ३ ] प्रतिममृशाते—*मॅ । प्रतिम्राते–ग; प्रतिमृशाते–त-म१.२.४.७-मु; प्रतिमुमृशाते–म७ ॥ नाविवेदं । नाविदं–शाट्या. ब्रा.; जै.ब्रा.। ७४. ५ [ ४ ] त्रिंशतं त्रिंशतानि—त३-म१.२.४ । त्रिंशतं–ग; त्रिंशतं शतानि–त; त्रिंशतं त्रिंशतानि–म७ । त्रिंशतं त्रीणि शतानि–*मॅ । 'त्रिंशतम्' इति पदं 'त्रिशतम्' इति पठित्वा

1. Amsterdam, 1919. 2. JAOS XVIII. p. 15, ff. 1897. 3. Lost Brāhmaṇas, Calcutta.

भाष्यकारैः व्याख्यातामिति व्यक्तं, परं 'त्रीणि शतानि' इत्यभ्यूहोऽनावश्यकः । 'त्रिशतानि' इत्यलम् ॥

[९. ५९] ७४. २३ [३] उपद्रवाणि । उपद्रवशब्दः पुंलिङ्गः ॥ २७ [४] विश्वानित्—भ१.४.७ । विश्वान्–ग-त१.२.३.६.७-भ२-मु; विश्वानेव–त४.५-मॅ ॥

[९. ६०] ७४. २९ पुरउष्णिगाद्यद्वादशका द्वयष्टका—*मॅ । पुरष्णिमगाद्यथद्वादशकाष्टका–ग; पुरउष्णिगाद्योद्वादशकोद्वयष्टकौ–त-भ४; पुरउष्णिगाद्योद्वादशको द्वयष्टकाः–भ१.७; पुरउष्णिगाद्यद्वादशको द्वयष्टकौ–मु ॥

[९. ६१] ७५. २९ [२] तुर्वशं तुर्वशनामकं—त३-भ१.२.४.५-मु । शनामकं–ग; तुर्वशं नामकं–त१.२.६; तुर्वशनामक–भ७ । तुर्वशनामकं–त४.५.७-मॅ ॥ ७६. २४ [८] संगच्छते—त३-भ । संगच्छेति–त । संगच्छति–*मॅ सप्तममन्त्रभाष्यं द्रष्टव्यम् ॥ ७७. १० [११] विश्वा विश्वानि । 'विश्वानि' इत्येव तु प्रतीकम् ॥ १४. ९ [१२] धनस्य—ग-त३-भ । अन्नस्य–त-मॅ-मु । वरिवःशब्दो विशेषतो नवमे मण्डले सर्वत्र धनवाच्येव ॥ २५ [१४] 'संशिश्वरीरिव' इत्येकं पदं सं + शिश्वरीरिव इति विभज्य व्याख्यातम् ॥ ७८. ४ [१६] चित्रं विचित्रं—त३-भ१.२.४ । चित्रं–त२.४.५.६.७-भ७-मॅ-मु । ७९. ७ [२३] 'हे मीढ्वः सेक्तः सोम पुनानः पूयमानस्त्वम्' इत्ययं भाष्यभागः सर्वेषु लिखितपुस्तकेषु मु-पुस्तके च भाष्यारम्भे गृहीतोऽस्ति ॥ १२ [२४] प्रबुद्धो—*मॅ-मु । प्रवृद्धो–ग-त-भ ॥

[९. ६२] ८१. २० [७] सृज्यन्ते—ग-त३.४-भ२.४.७ । असृज्यंते–त१.२.५.६.७; मृज्यंते–भ१; असृज्यंत–मॅ-मु ॥ ८२. ४ [१०] चेतति—ग१-त३-भ१.२.७ । स चेतति–त-भ४-मॅ-मु ॥ ज्ञायते—ग-भ१(२); संज्ञायते–त२.३.४.६.७-भ१.७; स ज्ञायते–त१.५-मॅ-मु ॥ २७ [१६] सोमः—ग-त३.७-भ१.२.७ । सोमश्च–त२.४.५.६-भ४-मॅ-मु ॥ ८४.१ [२४] जमदग्निना जमदग्निनाम्ना—भ१(२).४ । जमदग्नि जमदग्निनाम्ना-त३-भ२; जमदग्निनाम्ना–त१.२७-भ१.७-मॅ-मु ॥ परितः स्तोतव्यानि—भ१.४.७ । परिस्तोतव्यानि–त३-भ२ । परितः श्रोतव्यानि–त२.४.५-मॅ-मु ॥ १५ [२७] तुभ्य तुभ्यं—त३-भ१.२-मु । तुभ्यं–त२.७-भ४.७-मॅ ॥

[९. ६३] ८५. १६ [४] 'अति' इति पदस्य स्थाने 'अभि' इति भाष्यकारैः पठितं दृश्यते । ८६. ४. [८] सूर्यस्य—ग-त३-भ१.६.७ । प्रेरकस्य सूर्यस्य–त-भ२.४-मॅ-मु ॥ एतग्वः—ग-त३.७-भ-निघण्टु । एतग्वा–त२.४.५-मॅ-मु ॥ ८७. १ [१५] दधि ......दध्याशिरः दधिसंस्कृताः—ग-त३-भ । दधिसंस्कृताः–त-मॅ-मु । स्वीकृतपाठो मॅक्समुल्लरमहाशयैः नोपलब्धः । ऋ. सं. ९. ६५. १ भाष्ये स्वसारः इति पदमेतद्रीत्या व्याख्यातमस्ति ॥ ८ [१६] ते तव । 'ते' इति संहितायां नास्ति ॥

[९. ६४] ८९. ५ पवमानसौम्यम् । पवमानसोम्यमिति साधु ॥ ९०. ७ [६] अन्तरिक्ष्याणि—ग-त३.४-भ४ । आंतरिक्षाणि–त३.५-भ२.७-मॅ । अंतरिक्षाणि–मु ॥ ८. आ पवन्तां—भ१.७ । पवंतां-ग-त-भ२. ४-मॅ-मु ॥ ११ [७] सृज्यमाना—त३-भ । प्रसृज्यमाना–त-मॅ-मु ॥ १३ प्रसृज्यन्ते—त१.४.५ । प्रासृज्यत–त३; प्रसृज्यंत–त७-भ२; प्रासृज्यंत–मॅ-मु ।

'असृग्रम्' इति पदस्य लडर्थे व्याख्यानं नवमे मण्डले बहुत्रोपलभ्यते ॥ १७ [ ८ ] रूपा रूपाणि–त३-भ१.४-मु । रूपाणि–त-भ२.७-मॅ ॥ ३० [ ११ ] देवकामः—मु । देवः–§-मॅ । 'देवकामः' इति भाष्यमिति मॅक्समुल्लरमहाशयाः[1] । ऋ. सं. ९.६१.१९ अत्र 'देवावीः' इति पदमेवमेव व्याख्यातम् । ऋ. सं. ९.६४.१२;१०७.७ अपि द्रष्टव्यम् ॥ ९१.५ [ १२ ] आपवस्व—त-भ-मु । पवस्व–ग-मॅ ॥ ९२.४ [ १९ ] च तदा स—त३-भ२ । च स तदा–ग-त-मु । तदा स-मॅ ॥ ९३.७ [ २६ ] आ भर आहर—ग-भ१.४.७-*मॅ-मु । आहर आभर–त-भ२ ॥ १० [ २७ ] आहूत—ग-त-भ२-मु । आहुत–भ४.७-मॅ ॥

[ ९.६५ ] ९४. ३१-९५. २ [ ४ ] हे सोम :... ... आह्वयामहे–ग-त१.२.३.६.७-भ । पवमान पूयमान वृषा॰अभिमतफलानां वर्षितासि हि भवसि खलु । तस्मात् हे पवमान पुनान वा सोम स्वाध्यः शोभनकर्माणः सुष्ठु ध्यानवन्तो वा वयं भानुना रश्मिना द्युमन्तं दीप्तिमन्तं अतिशयेन तेजस्विनं इत्यर्थः स्तुतिमन्तं वा त्वा त्वां हवामहे यज्ञेषु आह्वयामहे-मु । हे पवमान पूयमान सोम स्वाध्यः सुकर्माणो वयं भानुना रश्मिना द्युमंतं द्युतिमंतं त्वा त्वां हवामहे आह्वयामः । हि यस्मात्त्वं वृषा कामानां वर्षयितासि–त५-मॅ ॥ स्वीकृतपाठे 'अतिशयेन तेजस्विनमित्यर्थः' इत्यंशोऽनावश्यकः । किंतु लिखितपुस्तकेषु विद्यमानत्वात्तत्र स्थापितः ॥ ९५. १२ [ ६ ] बभसति—*मॅ । गतमेनं–ग; गैभसंति–त-भ७-मु; गभसति–त३-भ२.४; गभेसति–भ१ ॥ १५ पात्रेण—ग-त३-भ । परिप्लवेन पात्रेण–त१.२.६.७-मु॰ । पारिप्लवेन पात्रेण–त४.५-मॅ ॥ २६ [ ८ ] भाष्यरचना न समीचीना दृश्यते ॥ ९६. ७ [ ९ ] डसि—ग-भ । जसि–त१.२.६.७-मु; डसि–त४.५ । उसि–त३-मॅ । ९६.१८ [ ११ ] सर्वस्य—ग-त३-भ१.२ । स्वर्गस्य सर्वस्य–भ७; सर्गस्य–त४; स्वर्गस्य–त२.५.६.७-मॅ-मु ॥ १८ [ ११ ] तं पूर्वोक्त°—ग-भ१.४ । पूर्वोक्त°–त-भ२.६.७-मॅ-मु ॥ ९७. १५ [ १५ ] पवस्व सर्वतो गच्छ । भाष्यकारैः 'आ पवस्व' इति स्वीकृत्य 'सर्वतो गच्छ' इति व्याख्यातमिति भाति ॥ २७. [ १७ ] गवादींश्च तेषां च वृद्धिं—§-मॅ-मु । 'गवादींश्च तेषां वृद्धिं च' इति साधु ॥ ९८. ३ [ १८ ] गमनशीलं बलं च—भ१ । गमनशीलं बलं किंच–त३-भ२.४.५;-गमनशीलं च–भ७; गमनशीलं किंच–ग-त१.२.५.६.७-मॅ-मु ॥ २४ [ २१ ] दिक्ष्वस्मभ्यं—ग*मॅ-मु । इतरलिखितपुस्तकेष्वशुद्धाः पाठाः ॥ आ प्रापय—ग-भ१.४.७ । आ प्रापथ–त३; आ प्रापयथ–भ२ । आ प्रयच्छ–त१.२.४.५-मॅ-मु ऋ. सं.९.६५.२४. द्रष्टव्यम् ॥ १००. १३ [ २९ ] प्रत्येकविशेषणापेक्षया—ग-त-भ१.२.४ ॥ प्रत्येकं विशे°–भ७-मॅ-मु ॥ १८ [ ३० ] शोभनप्रज्ञ—ग-त३-भ१.२.४ । शोभनयज्ञ–त-मॅ-मु ॥

[ ९.६६ ] १००. २८ [ १ ] स्तुत्यस्तोतृयष्टृयष्टव्य°—ग-त३.४.५-भ । स्तुत्यस्तोतृयष्टव्य°–त१.२.६.७; स्तुत्यस्तोतृयशब्दयष्टव्य°–त३ । स्तुत्यः स्तोतृयष्टृत्व°–मु । स्तुत्यस्तोतृयष्टव्ययष्टृ°–मॅ ॥ १०१. ६ [ २ ] नामनी वा—ग-त३ । नामनी–त-भ-मॅ-मु ॥ १३ [ ३ ] त्वदीयानि धामानि त्वदधीना... ..परि वर्तन्ते१ त्वदीयानि धामानि त्वदधीना अहोरात्ररूपाः कालविशेषाः परि भवंति सर्वत्र व्याप्तास्तिष्ठंति । यद्वा त्वदीयानि धामानि ( त्वदीयधामानि–भ१.४.७ ) त्वदधीना अहो ( 'त्वदधीना अहो' नास्ति–भ१ ) तेजसां परि वर्तते–ग-भ१.४.५.७;

1. Preface to the Second edition, Vol. IV. p. clxxviii.

त्वदीयानि धामानि त्वद्गत्यधीना......। यद्वा त्वदीयानि धामानि तेजांसि परितो वर्तते–त३-भ२। त्वदीयानि धामानि तेजांसि परितो वर्तते–त-मॅ-मु। 'धामानि' इति पदस्य साधारणत्वेन त-पुस्तकेषु तावान् भागो लुप्तः प्रतीयते। स्वीकृतपाठोऽपि न्यूनं सर्वथा न पूरयति। 'यानि' इति प्रतीकं भाष्ये न व्याख्यातम्। 'अहोरात्रौ यत्र यत्र' इत्यादिवाक्यस्य सुष्ठ्ववगमार्थमुपरितनपाठस्वीकृतिरावश्यकी। मॅक्समुल्लरमहाशयैरपि सदृश पाठ उपलब्धः किंतु तैर्न स्वीकृतः॥ २० [४] अस्मत्कृतानि—ग-त३-भ१.२.४। अस्मत्त्वतानि–भ७। अस्मद्गतानि–त-मॅ-मु॥ १०३. ८ [११] ञो रमादेशः–त३-भ१.२.४। 'ञस्यामादेशः' इति भाष्यम्॥. १३ [१२] अच्छ अभिगच्छन्ति—ग-भ। अभिगच्छंति–त-मॅ-मु॥ २३ [१३] तदार्षन्ति प्रगच्छन्ति। यद्यदा—भ४-*मॅ। अर्षति प्रगच्छंति यद्यदा–मु। लिखितपुस्तकेष्वबद्धाः पाठाः॥ १०४. ४ [१५] इन्द्राय—ग-त३-भ१.२.४। रंद्राय–भ७। चंद्राय–त-मॅ॥ तत इन्द्रस्य। तत इंद्रजाते–ग; तव इंद्रस्य–त-भ। इंद्रस्य–मॅ-मु॥ ९. [१६] प्रीणयितासि—ग-त३-भ२.४.५-मु। प्रीणयितासु–त; प्रीणयिता स–भ१। प्रीणयिता–भ७-मॅ॥ २८. [१८] °साहाय्याय—ग-भ१.२.४-*मॅ। °सहोज्याय–त; °सहाय्याय–त३-भ७। °सहायाय–मु॥ १०६. २०. [२५] पवित्राण्निर्गच्छन्तीत्यर्थः—ग-त३.७-भ१.४-*मॅ-मु। पवित्रानिर्गच्छंतीत्यर्थः--त१.२.४.५.६; पवित्राणि गच्छंतीत्यर्थः--भ२; पवित्रतागार्गच्छति--भ७॥ १०७. ८ [२८] प्रति प्रकर्षेण—ग-त३-भ१.४.५। प्रतिकर्षेण--त-भ२.७-मॅ। प्रकर्षेण--मु। 'प्रति प्रकर्षेण' इति पाठः समीचीनः स्यादिति मॅक्समुल्लरमहाशयैः स्वयमभ्यूहितम्[1]॥ १० तिलोपः—मॅ। तिलोपः अनित्यमागमशासनमिति सिच इ आ-§-मु। 'सिच इ आ' इत्यस्य स्थाने इट् न-ग; सच इंद्रा-भ४; सिच इत तः--भ७। मॅक्समुल्लरटिप्पणी द्रष्टव्या॥ १५. [२९] संक्रीडते। किं कुर्वन्......भृशमाह्वयन्। संक्रीडते। किं कुर्वन्...भृशमाह्वयन् क्रीडति--ग-त३-भ१.२.४। संक्रीडते--त-मॅ। संक्रीडते इंद्रं परमेश्वरं मदाय मदार्थं जोहुवत् आह्वानं कृतवान्--मु। स्वीकृतपाठो मॅक्समुल्लरमहाशयैर्नोपलब्धः॥

[९. ६७] १०७. २६ अलाय्यस्येत्येषा......शिष्टा गायत्र्यः—ग-त३-भ। त-मॅ-मु-पुस्तकेष्वेतन्नास्ति। स्वीकृतपाठो मॅक्समुल्लरमहाशयैर्लब्धोऽपि नाङ्गीकृतः॥ १०८. १० [१] मादयितृतमः—ग-त-३-भ१.४.५.७; मोदयितृतमः–त-भ२-मॅ-मु॥ ११०. ५ [१०] आभजतु—ग-त३-भ५। आभजतं--त१.२.४.५; आभजत्--भ२.४। आभजतां--मॅ-मु॥ ६. भजः—*मॅ। भज--ग-त१.२.४-भ४.७; यज--त५; भजे--त७; भजतेः--भ१(२)। भजेः--मु॥ २६ [१४] वक्तव्यस्य—ग-त१.२.६.७-भ१(२).२-मु। वक्तस्य--त३; वक्तृयस्य--भ४। अस्य--भ७-मॅ। ऋ. सं. १०. १७९ प्रस्तावना द्रष्टव्या॥ २७ विगाहत इति द्वे इति—ग-त३.७-*मॅ। विगाहत इति--त४.५-भ१.२.४.७-मु॥ ११२. ४ प्रथमं गच्छति। ततः पश्चात्—ग। पश्चात्प्रथमं गच्छति ततः--त-भ-मॅ-मु॥ ११ [१५] आगच्छतु—ग-त३-भ१.२.७। आगच्छत–त१.५.६; आगच्छति–त४; आगच्छत्--मॅ-मु॥ सिपि वा—*मॅ। सिपि ता-ग; सिपि ना--त-भ१.२.४; सिपि कचा--भ७। सिपि-मु॥ १९ [१७] देवानां पानाय—त१.२.३.६ ७-मु। देवानाय--भ१.७; देवानां गमनाय--भ२। देवयजनाय--मॅ॥ २६.

1. Preface to the Sixth volume of the First edition, Vol. IV. p. clxxviii (2nd Edn.).

[ १८ ] आगच्छति खलु—ग-त३-भ । आगच्छति--त-मॅ-मु ॥ ११२. १ [ १९ ] ग्राव्णा—ग-त७ । त्वं ग्राव्णा--मॅ-मु इतरेषु च ॥ ७ [ २० ] रक्षसां—ग-त-भ२.४-मु । रक्षसानां--भ१ । राक्षसानां--भ७-मॅ ॥ १८. [२२] 'तेजसा' इत्यस्यानन्तरं त७-पुस्तके 'पोता स्वयं पवित्रः सन्' इति, मु-पुस्तके च 'यः पोता स्वयं पवित्रः सन् स' इत्यधिकं विद्यते । त७-मु-पुस्तकपाठयोः साम्यमितरत्राप्युपलभ्यते । ऋ. सं. १०. १२. ६ टिप्पणी द्रष्टव्या । मु-पुस्तकपाठोऽस्मल्लिखितपुस्तकेषु नोपलभ्यत इति मॅक्समुल्लरमहाशयैरुक्तम्[1] ॥ ११३. १९ [ २७ ] अथ—ग । अथवा--त-भ-मॅ-मु ॥ ११४. ८. [ ३० ] नास्मानपापान्—ग । अस्मानपापान्--त-भ-मॅ-मु ॥ २७ [ ३२ ] यागादिपरं वेदशास्त्रविदं—*मॅ-मु । यागादिपरवेदशास्त्रविदं--ग-भ२.४; यागादिपरवेदशास्त्राविदं--त१.२.७; यागादिपरवेदशास्त्रविदं--त४.५; यागादिपरं वेदशास्त्रं--भ१; योगादिपरं वेदशास्त्रं--भ७ ॥

[ ९. ६८ ] ११४. ३१ वत्सप्रिर्भा° । 'वत्सप्रीर्भा°' इत्यनुक्रमणीपाठः ॥ ११५. ७. [ १ ] पयांसि प्रस्रवन्ति—ग-त३-भ२.४.५ । यांति प्रस्रवंति—त१.२.६.७-मु; यांसि प्रस्रवंति--त५ । प्रस्रवंति--मॅ ॥ ८ [ १ ] बर्हिषदः......वचनावन्तः......स्त्रियाः। लिङ्गभेदात् दुष्टं व्याख्यानम् ॥ २३. [ २ ] सोमदातृभ्यो—त१.२.३.४.५–भ२.६.७ । सोमं दातृभ्यो-त६-मॅ-मु ॥ ११६. ४. [ ३ ] स सोमो—ग-त३-भ१.४.५.७ । सोमो--त-भ७-मॅ-मु ॥ ११ [ ४ ] स सोमो—ग-त-भ२.४.५.६-मु । सोमो--भ१.७-मॅ ॥ १६ भूतजातं—त३-भ१.२.७-मु । भूतजातं च–त२.५.७-भ४.६-मॅ ॥ २४. [ ५ ] सः सूर्याद्भि—ग-त३.७-भ१.२.४-*मॅ-मु । स सूर्याद्भि--त१.२.६; स सूर्याद्भि--त४.५; स सूर्यादि--भ६; स सूर्यः--भ७ ॥ ११७. ३. [ ६ ] तस्य--त३-भ१.२.५ । रसस्य--त१.२.५.६-भ४.६-मॅ-मु ॥ ११८ ३. [ ९ ] उदकनामैतत् सर्वमुदकं--ग-त-भ२.५.६-मु । उदकं–भ१.४.७-मॅ ॥

[ ९. ६९ ] ११८. ३० [ १ ] सोम—*मॅ । यज्ञेष्वपि सोम--ग; यद्द्रोपव सोम--त१; यद्रोपव सोम--त२.४.५.६-भ६; यद्रोपच० सोम--त३-भ२.४. द्रोपव सोम--भ१.७; यद्रा सोम--त७ । च सोम–मु ॥ ११९. १८. [३] पूतो भवति वा—ग-त-भ२.४-मुं । पूतो भवति–भ१.६.७-मॅ ॥ २६ सोमः—मु । सोम-§ ।° सोम--मॅ ॥ १२०. १७. [ ५ ] मृजी शौचा°—त२.३.६.७-भ-*मॅ-मु । मृशी शौचा°–ग; मृजी शोचा°–त४; मृजी शौवा°—त५ । 'मृजू शौचा°' इति धातुपाठः ॥ २०. निर्नेजनाय—ग-त२-भ१.४-*मॅ । निर्निजनाय–त१.३.६.७-भ२.७-मु; निर्नजनाय–त४; निर्भजनाय–त५; निर्णेजनाय–भ६ ॥ १२१. १३. [ ७ ] परिस्रुताः—त-भ-मु । परिष्कृताः–ग । परिस्त्रुताः–मॅ ( मुद्रणदोषः ? ) ॥ १७. प्रजाश्च—ग-त२.३-भ२.४.६-मु । प्रजाः–भ१ । प्रजाश्च–त७-मॅ ॥ १२२. २०. [ १० ] बाधकानामभिता—ग-भ४-*मॅ-मु । बाधकानां० आसिता–त-भ६; बाधकां असिता–भ१.२.७ ॥ २१. पवमानेन परिप्लुते—मु । पवमानेन परिते–ग-त-भ२.४.५.६; पवमाने परिते–भ१.७ । पवमाने–*मॅ । मु-पुस्तकपाठः समीचीन इति मॅक्समुल्लरमहाशयानां मतम्[2] ॥

1. Preface to the Second edition, Vol. IV. p. clxxii. 2. Ibid p. clxxi.

[९. ७०] १२३. १६ [२] वरणार्थं—*मॅ। वर्षणार्थ–ग; वर्णार्थे–त-भ-मु ॥ १२४. १९. [५] रुन्धन्ति—त३-भ१.२-मु। रुभंति–ग; रुधंति--त-भ४.६ ॥ २८. [६] स्वभूतो —ग-त३। स्वरूपतो–त-भ-मॅ-मु। 'तस्य' इत्यस्य स्थाने 'तस्थाः' इति भाव्यम् ॥ १२५. ११. [७] स्थाल्याग्रयणं—त-भ-मु। स्थाल्या ग्रहणं–मॅ ॥ १२६. १८. [१०] बाधां—त-भ१.२. ६.७-मु। बाधा–भ४; बाधां न्विनाश्य–ग; बाधन्–मॅ ॥ १९. तिपि......तिपो लोपः—त-भ १.४-मॅ। सिपि...सिपे रूपं–ग; तिपि तिलोपः–त३-भ२.६.७-मु। मध्यमपुरुषेण व्याख्यातत्वात् 'सिपि......सिपो लोपः' इति भाव्यम् ॥

[९. ७१] १२६. ३२ [१] पय उदकं—ग-त३.४-भ.१.२.५.७-मु। उदकं--त१.२.५.६.७-भ४.६-मॅ ॥ १२७. १. किंचायं सोमः—*मॅ-मु। किंच यं सोमं--ग-त ५.६.७-भ७; किंचायं सोमं--त१.२.३.४-भ१.४.६; किंच सोमः--भ२ ॥ १०. [२] बाधकमस्य—त-भ२.६-मु। बाधकस्य--भ१.७-मॅ ॥ १२८. २५ [६] आ रिणन्ति—ग-भ ६-*मॅ-मु। इतरलिखितपुस्तकेष्वबद्धाः पाठाः ॥ १२९. २. [७] विशेषेणाक्तः—त४। विशेषेणक्तः--त५.७; विशेषेण–मॅ-मु इतरेषु च ॥ ४. [७] सर्वेषु। सवनेष्वित्यर्थः। ऋ. सं. ९. ७५. ३ द्रष्टव्यम् ॥ १४. [८] सोमस्य स्वभूतो धर्मः—ग-*मॅ-मु। सोमस्वभूतो वर्णः–त१.२.६; सोमस्य स्वभुतो वर्णः–त३.४-भ२.६.७; सोमस्वभु - - नो वर्णः--त५; सोमस्वभूतो वर्णः–त७; सोमस्य स्वभुवो वर्णः–भ१; सोमस्य स्वभुवनो वर्णः–भ४ ॥

[९. ७२] १३०. १२ [१] कलशे द्रोणाभिधाने—ग-त३-भ२.४। कलशो द्रोणाभिधानः–त; द्रोणकलशो द्रोणाभिधानः–भ६ कलशे कलशो द्रोणाभिधानः–मॅ-मु ॥ २६. [२] दशभिः दशसंख्याकाभिः–ग-त१.२.३.४.६.७-भ२-मु। दशसंख्याकाभिः–त५-भ१.४.६. ७-मॅ ॥ अङ्गुलीभिः—त३-भ१(२).२-मु। मॅ इतरेषु च नास्ति ॥ १३१. २८. [५] अभिमन्यमानान्—ग। अभिगम्यमानान्--भ२। अभिमानान्–त-भ१.४.७-मॅ-मु ॥ ३१. दृश्यन्ते—*मॅ। दृश्यते--§-मु ॥ १३२. १ विः—भ१.७। वेः -मॅ-मु इतरेषु च ॥ ११.[६] संगच्छन्ति—ग-त३.४-भ१.२.४-मु। गच्छंति–त१.२.५-भ६-मॅ ॥ १७. [७] उच्छ्रिते पदे—त-भ२.६। उछिते प्रादेशे–भ७। उच्छूते प्रदेशे–मु। उच्छ्रितप्रदेशे–मॅ ॥ २८. [८] अदाभ्यग्रहे त्रिभि°–भ१(२). २.४-*मॅ। अदाभ्यग्रहहोतृभि°–ग; अदाभ्यग्रहो त्रिभि°--त-भ१.६.७। अदाभ्यग्रहात्रिभि°–मु ॥ १३३. १ मा वियोक्षीः—भ१(२)। मा वियणक्षीः–ग; मा नियोक्षीः–त३-भ २.५; स्वानियोक्षीः–भ.१.७; मा नियोक्षाः–भ४। त-मॅ-मु-पुस्तकेष्वेतन्नास्ति ॥ २९. [८] तेरेनं ......सप्तकृत्वो वा। आपस्तम्बश्रौतसूत्र एतदन्वेषणीयम्। इदं सूत्रं ऋ. सं. ९. १०७. ५ भाष्येऽप्युद्धृतम्। तत्र 'आप्नोति' इति पाठः ॥ १५. [९] स्वभूतस्य—भ१ (२) । स्वभूतं तस्य ग; भूतस्य–त-भ। एवंभूतस्य–मॅ-मु ॥

[९. ७३] १३३. २४ [१] 'हनुरधिषवणफलकः' इत्यम्नानात् हनुस्थानीये—भ१ (२)। हनु अधिषवण इत्याम्नानात् हनुस्थाने-(हनुस्थानीयाधि°–ग)–ग-त३-भ२.४.५.६; हनु अधियण इत्याम्नानास्तवनुस्थाने–भ१.७; हनु--त। मॅ-मु-पुस्तकयोरेतन्नास्ति ॥ २६. समशब्दयन् वा—ग-भ१(२)। तदस्य शब्दयन वा–त१; तदस्य शब्दयेन वा–त२.६.७; तदस्य शब्द-

यन्वा--त१.भ४.६; तदस्य शब्दयन वा--त५; तदस्य शब्दयन्--भ१; तदस्य शब्दस्य यत्--भ२; तदस्य शब्दयमानस्य वा--त४। तदास्य शब्दयन्वा--मु। तदास्यशब्दयन्वा--मॅ॥ १३४. १ पूजयन्ति वा—त-भ-मॅ-मु। वा इति पदात् 'पूरयन्ति पूजयन्ति वा' इति भाष्यम्॥ १३५. १. [४] सहस्रधारे। बहूदकधारा—त२.३.७-भ१.२.४-मु। सहस्रधारे बहूदकधारे–भ६। सहस्रधारेऽव उदकधारा–मॅ। ऋ. सं. ९. ७४. ६ द्रष्टव्यम्॥ २ स्थिताः समस्वरन्—भ१(२)। स्थिता–भ१। स्थितां–मॅ इतरेषु च। पृथिवीं समस्वरन् वृष्टया--मु॥ ६ राजभृत्या यथा—भ१(२)। राजा–भ१.७। राजानो--मॅ-मु इतरेषु च। विचारयितुं—ग-त१.२.३.६.७-भ। विवारयितुं (१)–त४.५-मॅ-मु। विचारयितुं नाम अन्वेषितुम्॥ एते–भ१(२)। एव ते–भ१; एत एव ते–भ४। एवं ते–त-मॅ-मु॥ २८. [६] नरश्चापाहासत—*मॅ। नरश्च तानहासत–ग; नरश्च त्वमहासत–त-भ१.२.४.६; नरश्च जपहास–भ७। नरश्च अपहासत–मु॥ १३६. ५ गन्धर्वेष्वन्तरिक्षेऽवतिष्ठते—भ१(२)। °गंधर्वाश्चेतंतरिक्षेविष्ठन–भ१; °गंधर्वाश्चेतेंतरिक्षेविष्ठना–त२-भ४; °गंधर्वाश्चेतेंतरिक्षे तिष्ठंति-भ६; °गंधर्वेद्वयंतरिक्षेष्ट्न्–भ७। °गंधर्वाश्चांतरिक्षेऽतिष्ठन्–मॅ-मु। अस्मत्स्वीकृतपाठ एव शुद्धः॥ ६. [७] गोरूपया—ग-भ६। याः गोपाया–भ१.७। गोपया–त-भ४-मॅ-मु॥ ८. मरुतः स्पशः प्रध्यमया वाचा—भ१(२)। मध्यमवाचा प्रभव मरुतः स्पशः वाचा–ग; मध्यमवाचा प्रप्र मरुतो (मरुते--त) शसः वाचा–त-भ१.२.४.७; मध्यमवाचा प्रथममयारुतो शसः वाचा–भ६। मध्यमवाचा पुत्रा मरुतः स्पशो वाचा–मु। मध्यमवाचः पुत्रा मरुतः स्पशो वाचा–*मॅ॥ १३७. ४ [९] लेट्याडागमः—भ१.२.४–*मॅ। द्विले सर्वाडागमः–ग; लेट्यडागमः–त-भ७-मु॥

[९. ७४] १३७. २९ [२] गतेर्निघातः—त३-भ१.२.४-*मॅ-मु। गतेनघातः--ग; गच्छतेर्निघातः–त-भ६; गतेविघातः–भ७॥ १३८. ६. [३] अस्मद्यज्ञं—ग। तस्माद्यज्ञं--त-भ-मॅ-मु॥ ७. इन्द्रस्य—ग-भ१(२)। इंद्रः–त-भ-मॅ-मु। ८. मार्गो—ग-त-भ१. २.४.६। मार्गे–भ७-मॅ-मु। इन्द्रस्य गमनार्थं मार्गो विस्तीर्णोऽभवदित्येव शुद्धं वाक्यम्। इंद्रः गंतुं मार्गे विस्तीर्णोऽभवादिति मॅक्समुल्लरपाठोऽनन्वितः॥ २४. [४] मापोरित्वे रुन्निति—*मॅ-मु। लिखितपुस्तकेष्वबद्धाः पाठाः॥

[९. ७५] १४१. १७ [३] हिरण्यपाणिराभिषुणोति। ऋ. सं. ९. १. २; ९७. १ भाष्येऽप्युद्धृतमेतद्वचनं कुत्रत्यमित्यन्वेषणीयम्॥ १८ [३] 'नियम्यमानः सोमः' इत्येतावत्पर्यन्तो भाष्यभाग उत्तरवाक्येन न संगच्छते। अत्र भाष्ये रचनादोषो दृश्यते। 'ततः ऋतस्य......दोग्धृत्वमभिहितम्' इत्ययं भाष्यभागः 'अवक्रन्दति शब्दायते' इत्यस्यानन्तरं यदि स्थाप्येत, 'सोमः' इति शब्दस्य च द्विरुक्तिर्यदि त्यज्येत, तर्हि समग्रं भाष्यं समीचीनं सुसंगतं च भवेत्॥ १४२. १३. [५] वचनवन्तः। 'वञ्चनवन्तः' इति यास्कपाठः॥

[९. ७६] १४४. २ [४] मनुष्यवाच्यनृतशब्द°। अनृतशब्दो मनुष्यवाची कुत्र वर्तते?॥ ऋतशब्दस्य देवार्थः। 'देवार्थः' इति प्रयोगो न शुद्धो दृश्यते॥७ किं। रजः—*मॅ। रजः--ग। किंच रजः--त-भ-मु॥

[९. ७७] १४५. ६ [२] तिरस्तीर्णं तिरस्कुर्वन्? १५. [३] उपरता अश्रेत्युपराः भ१ (२)-*मॅ-मु। उपरता वा अश्रेत्युपराः--ग; उपरता च अश्रेत्युपरोः–त१.२; उपरता च अश्रेत्युपराः–त३.४.५.६.७-भ४; उपरता च अश्रेत्युपचारः–भ१.७; उपरतावश्रेत्युपराः–भ६॥ [५] वरुणः—इति न व्याख्यातम्॥ १४६. ५. वृजनेषु—त७-मु। वृजिनेषु–मॅ इतरेषु च। 'वृजनेषु' इति संहितायाम्। स एव युक्तः पाठ इति मॅक्समुल्लरमहाशयाः[1]॥

[९. ७८] १४७. ७ [३] ता एता आरः ईमेनं—भ१(२)। ता ईमेनं--ग। ता ईमेना एवेमेनं--त-भ-मॅ। ईमेनं पवमानं--मु॥ ८. ता एव—त४-भ६। ता पव–त१.२.५.६; ता एताः–भ१(२)। त एते--भ१.७-मॅ-मु॥ १७ [४] स्वर्गस्य सुखस्य। विकल्पेन व्याख्यातत्वात् 'स्वर्गस्य सुखस्य वा' इत्यावश्यकम्॥ [५] द्रविणानि धनानि--त३-भ। द्रविणानि--ग-त-मॅ-मु॥

[९. ७९] १४८. १५ [२] प्र धन्वन्तु–ग-त-भ४. ६। धन्वंतु–मु। प्र णो धन्वंतु प्रधन्वंतु--मॅ॥ २६. [३] समरीत—त१.२.३.६.७-भ२.४-*मॅ-मु। समरीत्–त४.५; समरीन्–भ६॥ १४९. ८. [४] द्युलोकस्थसोमांशभूतं—ग-त३.४-भ२.५.६-मु। कस्थसोमांशभूतं–त१.२.५.६.७। सोमांशभूतं–भ७-मॅ॥

[९. ८०] १५०. २१ [३] संक्रीडमानो—ग-त-भ२.४.६-मुं। स क्रीडमानो–भ१. ७-मॅ॥

[९. ८१] १५१. २१ [२] स यथा—ग-त३-भ१.२.४.७-मु। यथा–त-भ६-मॅ॥ २२. सोमसजुषां—*मॅ। सोमसजोषां–त-भ१.२.६-मु; सोममजोषां–भ४॥

[९. ८२] १५३. २५ [४] तद्गर्भत्वं—ग-त३-भ२. ६। गर्भत्वं–त-भ१.४.७-मॅ-मु॥ १५४. ३ [५] सोम त्वं—ग-त३.४-भ१.२.४.७। सोम–त१.२.५.६.७-भ६-मॅ-मु॥

[९. ८३] १५५. ८ [३] प्रज्ञावन्तो देवा—ग-त३-भ। प्रज्ञावंतो–त-मॅ-मु॥ ९ पितरः पालका—ग-त३.४-भ१.२.४। पालका–त१.२.५.६-भ६-मॅ-मु॥ २३. [४] पाशसमूहस्वामी—ग-भ४। पशुसमूहस्वामी (?)–मॅ-मु इतरेषु च॥

[९. ८४] १५७. १४ [४] वायुभिरेव—भ१ (२)-*मॅ। वायुरेव–मु इतरेषु च॥

[९. ८५] १५८. १५ [२] संग्रामात्—§-मॅ-मु। 'संग्रामान्' इति स्यादिति मॅक्समुल्लरमहाशयाः संभावयन्ति॥ १६०. २६ [११] उत्पतन्तं—भ६। उत्पतंतं पतयंतं–मॅ-इतरेषु च। वर्तमानं सुपर्णं शोभनपर्णोपेतं पश्चादुपपतिवांसं उपपतयंतं सोमं–मु॥ भाष्यकारैः 'उपपतिवांसम्' इति पदं विभज्य व्याख्यातम्॥

[९. ८६] १६१. ११ नीवावरी—§-मॅ। निवावरी–मु-अनु.। आक्रुष्टा–इति भाष्यकाराः पठितवन्तः। 'अक्रुष्टा' इत्यनुक्रमण्यां तद्भाष्ये च॥ १५. पृश्नयो-—ग-त३.७-भ१.२.४-*मॅ-मु। प्रश्नयो–त१.२.४.५.६-भ६; पृश्नये–भ७॥ तृतीये त्रयः। 'तृतीयेऽत्रयः' इत्यनुक्रमणीपाठः। 'चतुर्थे दशर्चेऽत्रय इतिनामानः' इति षड्गुरुशिष्यकृतायां वेदार्थदीपिकायाम्। 'तृतीये त्रयः'

1. Preface to the Second edition, Vol. IV. p. clxxviii.

इति सायणाचार्याः ॥ १६ पञ्चान्त्यास्तिस्रो §-मॅ-मु । पंचात्या—अनु. ॥ १६२. ११ [ ३ ] अथ प्रत्यक्षकृतः । 'अथ परोक्षकृतः' इति भाष्यम् ॥ १६३. १३. [ ७ ] तनस्तदर्थं—मु । ततो तदर्थं--(?) त-मॅ । तदर्थं--भ ॥ १६४. ३ [ ९ ] तादृशः सोमो महानुभावः सोमः पुनानः पूयमानः । क्लिष्टेयं रचना । पुनानः इति प्रतीकमग्रे गृहीतमेव । अत्रैतदनावश्यकम् । 'तादृशो महानुभावः सोमः' इत्यलम् । तादृशः सोमो महानुभावः पुनानः पूयमानः—मु ॥ १६५. ७. [१३] शोध्यमानश्च —भ-मु । सूयमानः शोध्यमानश्च—मॅ इतरेषु च । 'सूयमानः' इत्यनावश्यकम् ॥ १७. [ १४ ] दिवि स्प्रष्टारं—ग-भ६ । दिवस्पष्टारं—त१.२.५.६; दिवस्प्रष्टारं—त३.४-भ४; दिवि स्रष्टारं--त७ । देवस्प्रष्टारं—भ१.२.७-मॅ । दिवः स्प्रष्टारं—मु । ऋ. सं. १०. ३६. ६; ८८. १ द्रष्टव्यम् ॥ २७. [ १५ ] उत्कृष्टे—मु । तदुत्कृष्टे—त-भ१.२.६. । महत्युत्कृष्टे—भ७-मॅ । महति इत्यनावश्यकम् ॥ ऋ. सं. १. १६४. ३९ इत्यादि द्रष्टव्यम् ॥ व्योमन्—त-भ१.२.४ । व्योमनि—भ६-मॅ । व्योमन् व्योमनि—मु । ऋ. सं. १.१६४. ३९ अत्र व्योमन् इति पदमेतद्रीत्या विकल्पेन व्याख्यातम् ॥ २८ यतः—§-मु । अतो—मॅ । 'विऽओमनि । अतः' इति पदपाठः । भाष्यकारैः 'व्योमन् यतः' इति स्वीकृतमिति व्यक्तं ज्ञायते । 'अतः' इति पदस्य 'यस्मात्सोमात्' इति व्याख्यानं नितरामशक्यम् । नापि 'अस्मात्सोमात्' इति व्याख्यानं संभवति, 'स सोमः' इति पदयोरग्रे विद्यमानत्वात् । मॅक्समुल्लरटिप्पण्यामयं पाठो न निर्दिष्ट इत्याश्चर्यं खलु ॥ १६९. ५ [२५] नवते क्षोदते । 'नवते क्षोदति' इति निघण्टुः ॥ १६. [ २६ ] रसमयान् । एतत्केनान्वितम् ? ॥ २४ [ २७ ] दीप्तयः—त३-भ१.२.४.७ । रश्मयो दीप्तयः—ग । रश्मयः—त-भ६-मॅ-मु । रश्मिशब्दः पुंल्लिंगः । अत्र तु स्त्रीलिङ्गस्यापेक्षा । अनन्तरवर्ती 'दीप्तिरक्षे' इति प्रयोगोऽपि स्त्रीकृतपाठस्य युक्तत्वं द्रढयति ॥ २५. [ २७ ] 'गोभिः' इत्यस्यानन्तरं 'पयोभिः' इति व्याख्यानमपेक्षितम् । ऋ. सं. ९. ६१. १३ द्रष्टव्यम् ॥ १७१. २ [ ३१ ] अवक्रन्दन्—त३.७-भ२-*मॅ । अवक्रंदति--ग; अवक्रंदत्- त१.२.४.५.६-भ-मु । अव चक्रदत् इति क्रियापदं विशेषणत्वेन व्याख्यातम् ॥ १३ [ ३२ ] भाष्यस्यान्तिमं वाक्यं न सम्यगर्थमावहति ॥ २१. [ ३३ ] नृभिर्नेतृभिः । 'हरिः' इति पदस्य स्थाने 'नृभिः' इति भाष्यकारा अपठन् । भ१ (२) लिखितपुस्तके संहितापाठेऽपि 'हरिः' इत्यस्य स्थाने 'नृभिः' इति दृश्यत इत्याश्चर्यम् ॥ १७२. २ [ ३४ ] 'धनेभ्यो हिताय' इत्यस्य स्थाने 'जनेभ्यो हिताय' इति बहुषु पुस्तकेषु वर्तमानः पाठः 'धन्याय' इत्यस्य स्थाने जन्याय इति भाष्यकारैः पठितं स्यादित्याशङ्कयति । एकस्मिँल्लिखितपुस्तके [ भ१(२) ] 'जन्याय' इति पाठः साक्षादुपलभ्यः ॥ १८. [ ३६ ] पयोभिराच्छादयन्तीति शेषः । °च्छादयन्तीत्यर्थः इति साधुना ॥ २६. [ ३७ ] वीयसे गच्छसि । वी गत्यादिषु । 'वि । ईयसे' इति पदपाठः । 'वीयसे' इति भाष्यकारा अपठन् ॥ १७५. ६. [४४] आभिषवादिकर्मणा ... दशापवित्रान् । दुष्टः प्रयोगः ॥ २३. [ ४६ ] द्रोणकलशाधवनीय°—त२.३.७-भ१.२. ७ । द्रोणकलशावनीय°—ग; द्रोणकलशधवनीय°--भ४ । द्रोणकलशाधावनीय°—त१.४.५.६-भ६-मॅ-मु ॥

[ ९. ८७ ] १७७. २३ [ ५ ] किमित्र*—त-भ२. ४. ६ । किमिश्र--भ१ । किमिच्छवः—भ७-मॅ-मु । उत्तरपादस्य दृष्टान्तत्वात् 'किमिव' इत्येवावश्यकम् ॥ १७८. १६ [ ८ ] पात्रं स्वयं प्राप्तव्यं—*मॅ । पात्रं स्वया प्राप्तव्यं—ग-त३-६-भ; प्राप्तं स्वया प्राप्तव्यं—त४.५ । पात्रं तया प्राप्तव्यं-मु॥

[ ९. ८८ ] १७९. २० [ २ ] अस्मद्विरोधीनि—ग-त४-मु । अस्मद्विरोधाधीनि—त१. २. ५; अस्मद्विरोधादीनि—भ६; अस्मद्विरोधारत्—त६-भ७; अस्मद्विरोधान्वित्—भ४ । अस्मद्विरोधात्—भ१-*मॅ । लिखितपुस्तकपाठशादश्यात्—मु-पुस्तकपाठो युक्ततर इति मॅक्समुल्लरमतम्[1] । २८. [ ३ ] हवमाह्वानं—§-मॅ । 'हवे' इति पदपाठः । हवे हवं—मु ॥

[ ९. ८९ ] १८१. १८ [ १ ] पवमानः पूयमानः—ग-त३-भ । पवमानः—त-मॅ-मु ॥ २०. निषीदति—भ१ (२)-*मॅ । लिखितपुस्तकेऽन्त्यपादस्य व्याख्यानं लुप्तं दृश्यते । निषीदति वा मातुः पृथिव्या उपस्थे—ग; निसीद निषीदति मातुः दशापवित्रस्य उत्संगे द्युलोकस्य वा उपस्थे सोमः आ वा--त१.२; निषीदति वा—त३-भ; निषीद निषीदति निषीदति वा—त५; निसीद निषीदति वा--त६; नि सीद मातुः......उत्संगे......सोम आ निषीदति वा—त७; नि षीदन् निषीदति वा—भ६ । नि सीदति मातुः दशापवित्रस्य उपस्थे द्युलोकस्य वा उपस्थे अथवा वने सोमः आनिषीदति—मु ॥ १७. [ ४ ] मार्जयन्ति । मर्जयन्ति इति संहितापदपाठयोः ॥ १८२. १३ [ ४ ] उक्तलक्षणाश्वस्थानीयं व्याप्तं—मॅ । उक्तलक्षणाश्वमश्वस्थानीयं व्याप्तं--भ७ । उपलक्षणमश्वमश्वस्थानीयं व्याप्तं—मु । 'व्याप्तम्' इत्यस्यानन्तरं 'वा' पदस्य निवेशनेन मु-पुस्तकपाठः समीचीनतरः स्यादिति मॅक्समुल्लरमतम्[2] ॥ १८३. ८. [ ७ ] अस्य मन्त्रस्य भाष्यं लिखितपुस्तकेषु सर्वथा नोपलभ्यत इति मॅक्समुल्लरमहाशयैरुक्तम्[3] ॥ अस्माभिस्तावत् केषुचिल्लिखितपुस्तकेषूपलब्धं भाष्यं न सायणाचार्यकृतमिति मत्वा अधष्टिप्पण्यां दत्तम् ॥ वस्तुतः मॅक्समुल्लरसंपादितेषु केषुचित् पुस्तकेष्वेतेन भाव्यम् ॥

[ ९. ९० ] १४ [ १ ] रथो न इति पदद्वयं न व्याख्यातम् ॥ १७ [ १ ] प्रगच्छति—ग-त३-भ४ । प्रयच्छति (?)--त-भ१.२.६.७-मॅ-मु ॥ १८५. ९ [ ६ ] विमृष्य—*मॅ-मु । निष्कृष्य--ग; निकृष्य—त-भ ॥

[ ९. ९१ ] १८५. २० षष्ठं—*मॅ । अष्टमं—§-मु ॥ १८६. ३१ [ ४ ] पवमान—ग-त३-भ१ । पवमानः (?)--त-भ४.६.७-मॅ-मु ॥ ३२ ऊर्णुहि । 'वि' इति पदं न व्याख्यातम् । विविधं ऊर्णुहि—मु ॥ १८७. २ तेषां—भ४-*मॅ । अपां--ग; धेपां—त-भ१.६.७-मु ॥ २२ [ ६ ] तोका पुत्रान्—*मॅ । तोकान् पुत्रान्—ग-त३-भ४. ६; तोकान्-त-भ२; लोकान्—भ१.७ । तोका तोकान्—मु ॥

[ ९. ९२ ] १८८. १४ [ २ ] उपविशन्—§-मॅ । सीदन् उपविशन्—मु ॥ सप्तसंख्याका—§-मॅ । सप्त सप्तसंख्याका—मु ॥ १८९. १ [ ४ ] स्वभूताः--भ७-*मॅ-मु । स्यभूताः—ग; प्रभूताः--त-भ१.२.४.५.६ ॥ ४ उदकैः—मॅ । बलैरुदकैर्वा--ग; उदकैर्वा—त-भ१.२-मु; उदकैर्बलैर्वा—भ४; उदकै—भ७ ॥ ५ सप्त--ग-भ । त-मॅ-मु-पुस्तकेषु नास्ति ॥ १२ [ ५० ] प्रसिद्धं—ग-भ । प्रसिद्धस्य—त-मॅ-मु ॥

[ ९. ९४ ] १९२. २१ [ ३ ] सांग्रामिकाणि—ग-भ२ । सांग्रामिकानि—मु । संग्रामिकाणि--त-भ१-४-६-मॅ ॥ १९३. १३ [ ५ ] विश्वानि—§-मॅ । तानि विश्वानि—मु ॥

1. Preface to the Second edition, Vol. IV. p. clxxviii.
2. Ibid. p. clxxi. 3. Ibid. p. clxxiii.

[ ९. ९५. ] ११४. २४ [ ३ ] अवर्णस्य—*मॅ-मु । अवर्णस्य—त-भ१.२.४.६; अवर्णस्य--म७; अभ्यासस्य, उकारस्यात्यकारादेशश्छान्दसः--ग ॥ ११५. ७ [ ५ ] धनप्रदानाभिमुखीं कुरु--त३.४-म१.२.४-*मॅ-मु । धनप्रदानाभिमुखी कुरु—ग-म७; धनप्रदानाभिमुखीं—त१.२.५.६.७-म६ ॥ त्वं च—ग-त३-म४ । त्वं--त-म१.२.६-मॅ-मु ॥

[ ९. ९६ ] ११५. २० [ १ ] इतानीन्द्रस्य—*मॅ । इतान् इंद्रस्य--§-मु ॥ ११६. ११ [ ४ ] देवैस्तायमानाय—त-म२.६ । देवैः स्तूयमानाय--म१.७-मॅ-मु ॥ ११७. १५ [ ६ ] छेदकोऽस्ति । ' स्वधितिर्वनानाम् ' इति मन्त्रभागस्य प्रत्यक्षकृतं व्याख्यानं द्वितीयमन्त्रभागस्य परोक्षव्याख्यानेन न संगच्छते ॥ २१ [ ७ ] ईशिता—ग-म-मॅ-मु । ' ईंषिणीः ' इति भाष्यम् । ऋ. सं. ९. ६८. ८; ९५. ३ द्रष्टव्यम् ॥ ११८. २ [ ८ ] सः सोमः......अभि अर्ष अभिगच्छ । पुरुषव्यत्ययेन व्याख्यानं दुष्टम् ।° ' हे सोम ' इति भाष्यादौ गृहीत्वा ' सः त्वम् ' इति कृतं चेत् सुष्ठु भवेत् ॥ ११९.४ [ ११ ] अभिगतस्त्वं—§-मॅ । चतुर्थपादो न व्याख्यातः । पादटिप्पणी द्रष्टव्या । अभिगतस्त्वं वीरोभिर्वेगवद्भिः अश्वैर्व्याप्रकैः—मु । अवातः इति पदं भाष्यकारैः अवः नञ्पूर्वकं व्याख्यातम् ॥ ५. अस्माकं—§-मॅ । अस्माकं मघवा इंद्रो भव भूयाः—मु ॥ १३ [ १२ ] एवं—§-मॅ । एव एवं-मु ॥ २३ [ १३ ] उदकवतो—भ४-*मॅ । उदकवतो—ग; उदंकवंति—त-म२-मु; उदकवतो—त३-म१.७; उदवंतो—म६° ॥ २००. १६ [ १५ ] वोळ्हा वोढाश्वः—§-मॅ । वोळ्हा वोढा अश्व इव-मु ॥ २५ [ १६ ] आजादेशः—त१.२.५.६-म१.२.६.७-मॅ-मु । सूत्रे आजादेशाभावात् ' आदेशः ' इति भाष्यम् ॥ २०२.९ [ २० ] यूथानि—§-मॅ । यूथा यूथानि—मु ॥ २८ [ २२ ] कुर्वन्—ग-त-म४.६ । कुर्वन् सोमस्य—म१.२ । कुर्वन् सोमः—म७-मॅ-मु । 'सोमः' इति पदमग्रे विद्यते खलु ॥ २०३. १५ [ २४ ] सुष्टु—§-मॅ । सुष्टुवाः सुष्टु—मु ॥

[ ९. ९७ ] २०३. ३१ [ १ ] हिरण्यपाणिरभिषुणोति । इयं श्रुतिः कुत उद्धृता ? ऋ. सं. ९.१.२; ७५.३ भाष्येऽपीयं दृश्यते ॥ २०४. १९ [ ३ ] अविभवे—त३.४.५-म । अविभये—त१.२.६.७-मॅ-मु ॥ २८ [ ४ ] प्रभूतं धनाय—ग-त३-म१.२.४.७-*मॅ । प्रभूतधनाय—त-म६-मु ॥ २०५. ३ लेट्याडागमः—ग-त४-म१.२.४ । लेट्यडागमः—त१.२.३.५.६.७-म६-मॅ-मु ॥ ७ [ ५ ] बहुविधधारोपेतः—ग-त३.७-म१.२.४ । बहुधारोपेतः—मॅ७ । बहुविधधारः—त१.२.४.५.६-म६-मॅ-मु । ऋ.०सं.०९.९७.१९ द्रष्टव्यम् ॥ २६ [ ७ ] उद्धारयन्—*मॅ-मु । उद्धरन्—त१.२.६; उद्धरयन्—त४.५-म६ ॥ २०६. ८ [ ८ ] हंसा इवाचरन्तो वा—त३-म१.२.४.७ । हंसान् रूपा वा—ग । हंसा इव चरंतो वा—त-म६-मॅ मु ॥ १२. घोशब्दस्य पृषोदरादित्वाद् इत्यादेशः—*मॅ । घोषशब्दस्य पृषोदरादित्वादागूष इत्यादेशः—मु । लिखितपुस्तकेष्वशुद्धाः पाठाः । ऋ. सं. १.६१.२; ६२.१; मॅक्समुल्लरटिप्पणी च द्रष्टव्या ॥ १४ [ ८ ] आकोऽनु°—आक अनु°—§-मॅ । आक् अनु°—मु ॥ २०७. १२ [ ११ ] पवते—ग-त१.३.६.७-म । पवते क्षरति—त२-मॅ-मु । ' पवते ' इति पदं व्याख्यातचरम् ॥ १७ [ १२ ] प्रियाणि प्रीणयितॄणि धर्माणि धारकाणि तेजांस्यृतुथा । अयं पाठः मॅक्समुल्लरमहाशयैः मु-पुस्तकानुसारेण स्वीकृतः । परमस्माभिः ग-त३.७-म१(२). २.४-पुस्तकेषु स उपलब्धः । प्रियाणि प्रीणि धारकाणि तेजांसि ऋतुथा काले—म१.७ ॥ कालेकाले । अयं पाठः मु-पुस्तके विद्यमानोऽपि लिखितपुस्तकेष्वनुपलम्भा-

म्मॅक्समुल्लरमहाशयै न स्वीकृतः[1]। परमस्माकं ग-त-३.७-भ१(२). २.४-पुस्तकेषु स उपलभ्यते। काले-भ१.६.७ ॥ ३० [ १३ ] इव आ। मु-पुस्तकमनुसृत्य मॅ-पुस्तके स्वीकृतः[2]। इव-§॥ २०८. २६ [ १६ ] सुपथानि—§-मॅ। सुपथा सुपथानि-मु॥ सुगा—§-मॅ। सुगानि-मु। 'सुगानि' इति प्रतीकम्॥ २०९. २६ [ १९ ] बहुविधधारोपेतः—ग-त३-भ। बहुधारोपेतः-त-मॅ-मु। ऋ. सं. ९. ९७. ५ द्रष्टव्यम्॥ २१०. ४ [ २० ] अबद्धा इत्यर्थः—भ१(२)-*मॅ-मु। अश्वा इवेत्यर्थः-ग; अबधीत्यर्थः-त-भ१.२.४.६; अवधा इत्यर्थः-भ७॥ २११. ६ [२३] क्षारयिता—*मॅ। क्षारयि-ग; रक्षयिता-त-भ-मु; क्षरयिता-त३॥ ७ [ २३ ] प्र पवते—ग-त ३-भ१.२.५। पवते-त-भ६.७-मॅ-मु॥ १९ [ २४ ] सुष्ठु संभृतं—ग-त३-भ२.४। सुष्ठु तं भृतं-भ१; सुष्ठु संभूतं-भ५; सुष्ठु भृतं-भ७। संभृतं-त-भ६-मॅ-मु। 'सु' इत्यस्य व्याख्यानं 'सुष्ठु' इति॥ २१२. ७ [ २६ ] तथा आयज्यवः... ... च प्रेरयन्तु—ग-त३.४-भ१(२).२.५.६। एतन्नास्ति त१.२.५.६-भ१.४.७-मॅ-पुस्तकेषु। कीदृशाः सुमतिं शोभनमतिं यजमानं आयज्यवः यष्टुमिच्छवः विश्ववाराः विश्वैर्वरणीयाः होतारो न इ.-मु। तृतीयपादस्य व्याख्यानं मॅक्समुल्लरमहाशयैः लिखितपुस्तकेषु नोपलब्धम्[3]। मु-पुस्तकपाठापेक्षयास्मत्स्वीकृतपाठः समीचीनतर इति विश्वसिमः। प्रथमं तावत् मु—पुस्तकपाठो लिखितपुस्तकेषु नोपलब्धः। सुमतिशब्दो यजमानार्थे क्वचिदिव प्रयुक्तः। 'आयज्यवः' इतिपदगत 'आ' इत्युपसर्गो न व्याख्यातः। 'विश्ववाराः' इतिपदस्थो विश्वशब्दस्तेनैव व्याख्यातः। तथा च 'सुमतिम्' इति पदस्य 'आयज्वनः' इति पदेनान्वयो न सम्यगर्थकरो नापि सायणरीत्यनुसारी। स्वीकृतपाठस्तावत् प्राचीनेषु पुस्तकेषूपलब्धः। तत्त्पदानां व्याख्यानानि च सायणभाष्ये साधारण्येनोपलभ्यन्ते। 'आयज्यवः' इति पदस्य व्याख्याने ऋ. सं. १.३९.९; ८६.७; १८०.२८; ३.६.२; ५.८७.१; ६.२१.१०; २२.११; ४८.२०; ४९.४; ७.५६.१४; ८.७.३३ अत्रस्थं प्रयज्युशब्दस्य व्याख्यानं प्रमाणम्। 'प्रेरयन्तु' इति पदस्य साधारण्येन पाठलोपः संजात इति प्रतिभाति॥ २१३. ७ [ २९ ] भजनसाधनं धनं—*मॅ। भजनसाधनं-§-मु॥ २१४. ५ [ ३२ ] पन्थानं—§-मॅ। पंथां. पंथानं-मु॥ मार्गमभि—§-मॅ। मार्गमनु-मु॥ 'अनु' इति संहिता॥ २१५. ११ [ ३६ ] बहुधि—*मॅ। बहुधियं-§-मु॥ २१६ २ [ ३८ ] प्रिया प्रियाणि—ग-त३.४-भ४.५.६। प्रियाणि-भ१.७ मॅ-मु॥ ४. कारिणे न—ग-*मॅ-मु। यथा कारिणे च-त-भ१.२.८.६; यथा कारिणे न-त३; यथा कारिणं-भ५.७॥ भृतकाय भृतिं यथा प्रयच्छन्ति—*मॅ। भृतकाय यथा. भृतिं प्रयच्छति-ग; कृतकाय भृतिं तथा प्रयच्छति-त-भ६; भृतकाय ( कृतकाय-भ२; ऋतकाय-त३ ) भृतिं यथा प्रयच्छति-त३-भ१.२.४.७। यथा कारिणे च कृतकाय भृतिं प्रयच्छति-मु॥ २० [ ४० ] समुद्द्रवन्ति—मु। समुद्रवंत्यस्मादाप इति-ग; संद्रवंति-त-भ-मॅ। मु-पुस्तकपाठः समीचीनतर इति मॅक्समुल्लरमहाशयानां मतम्[4]। २१७. २७ [ ४४ ] वा वस्वो वसुनो—*मॅ। आपवस्व वस्वो वसुनो-त१.२.६.७; वा पवस्व वस्वां वसुना-त३.४-भ१.२.४.७; वा पवस्व स्वो वसुनो-त५; चापवस्व स्वो वसुनो-भ६; आपवस्व वस्वां वसु-मु॥ २१८. १० [ ४५ ] स्थानं—भ१.६.७।

1. Preface to the Second edition, Vol. IV. p. clxxviii. 2. Ibid. 3. Ibid. p. clxxiii. 4. Ibid. p. clxxviii.

योनिस्थानं—त-भ२-मॅ-मु । १९ [ ४६ ] काम—ग-त३-भ । कामद्-त-मॅ-मु ॥ [ ५४ ] स्नेहयत् इति संहितापदपाठयोः । भाष्यकारैः स्नेहयत् इति पठितं दृश्यते ॥ २२१. १३ अक्षति°— § । अचति°-मॅ-मु ॥ २१ [ ५५ ] मघवद्भ्यो धनवद्भ्यो—ग-त३-भ१.५.६.७ । मघवद्भ्यो-त-भ४-मॅ-मु॥ २२२.१ [ ५६ ] लभन्त इति—*मॅ । लभंते-ग-त-भ-मु ॥ १९. [५८] एतन्नामिका—ग-त३-भ१.२.४.७ । एतन्नामका-त-भ६-मु । एतन्नामकीः-*मॅ ॥

[ ९. ९८ ] २२३. २४ [४] मर्त्याय—§-मॅ । मर्ताय-मु॥ २५ धनं—मॅ । धनं प्रयच्छति तथा सति हे इंदो सहस्रसंख्याकं बहुरूपं धनं-ग । एतन्मन्त्रभाष्यं त्रुटितं वर्तते केषांचित् पदानां व्याख्यानाभावात् । धनं विवाससि । हे इंदो सोम त्वं सहस्रिणं सहस्रसंख्याकं रयिं धनं शतात्मानं अपरिमितपुत्रपौत्राद्युपेतं-मु ॥ २२४. ११ [ ६ ] स्वयशसं स्वभूत°—त१.२.६.७-*मॅ-मु । स्वयशसं प्रभूत°-ग; स्वयशसं भूत°-त३.४.५-भ ॥ २२५. २८ [ १२ ] सोममश्याम अश्नीयाम—*मॅ । सोममश्याम अश्नवाम-ग; तत्रभवा सोममश्याम अश्नीम-त१.२.५.६.७; सोममश्याम अश्नाम -त३; सोममश्याम अश्नीम-त४-भ५; सोममश्याम अश्नाम-भ१; सोमं तत्रभवा अश्याम अश्नीम-भ२; तत्रभवं सोममश्याम अश्नीम-भ६; सोममश्याम अश्नवाम-भ७ । तत्रभवं सोममश्याम अश्नीयाम पिबेम-मु ॥

[ ९. ९९ ] २२७. १३ [ ५ ] तं सोमं—ग-त३-भ । सोमं-त-मॅ-मु ॥

[ ९. १०० ] २२९. १५ [ ५ ] क्रान्तदर्शिन्—त३-भ । क्रांतदर्शन्-त४.५ । क्रांतदर्शन-ग-त१.२.६.७-मॅ-मु ॥ अस्माकं—ग-त-३-भ । अस्मभ्यं-त-मॅ-मु ॥

[ ९. १०१ ] २३०. १०. षोळश श्यावाश्विरंधीगुर्ययाति°—§-मॅ । षोळशांधीगुः श्यावाश्विर्ययाति°-मु-अनु ॥ १७ [ १ ] पुरःस्थित°—*मॅ । पुरःस्थितस्य—§-मु ॥ २३३. २९ [ १० ] स्वर्गप्रापका—त६-भ । सर्वप्रापका-त१.२.४.५.७-मॅ-मु । ऋ. सं. ९.२१.१ द्रष्टव्यम् ॥ २३४. २१ [ १३ ] पुरापराद्धं मखमेतन्नामानं—भ१.४-*मॅ । मखमपराद्धं-ग; पुरा अपराद्धमखं एतन्नामानं-त१.२.७-मु; पुरा अपराधं मखं एतन्नामानं-त५; पुरा अपराद्धं मखं (मुखं-भ२) एतन्नामानं-त३-भ२; पुरापराद्धमखमेतशनामानं-भ६ ॥

[ ९. १०२ ] २३६. १५ [ ४ ] अनुशासति—ग-त-भ । अनुशासंति (?)-मॅ-मु ॥

[ ९. १०३ ] २३८. १२ [ ४ ] अहिंसितः—§-मॅ । अहिंस्यः-मु ॥ २४ [ ६ ] किम्प्रत्ययः—भ । कित्प्रत्ययः-त-मॅ-मु । ऋ. सं. ३.४९.३ द्रष्टव्यम् ॥

[ ९. १०४ ] २३९. ३ [ १ ] शोभार्थं—त३.६-भ५ । शोभनार्थ-त१.२.४.५.७-भ१.२.४.६.७-मॅ-मु ॥ २४०. १ [ ५ ] नः अस्मदीयानां—ग-त३.६-भ१.२.४ । हे न अस्मदीनां-त१.४.५; हे न अस्मदादीनां-त७ । नोऽस्मदादीनां-त२-भ६-मॅ-मु ॥ ऋ. सं. ९.१०५.५ द्रष्टव्यम् ॥

[ ९. १०७ ] २४६. ५ [ ५ ] तैरेनं ... सप्तकृत्वो वा । एतदापस्तम्बश्रौतसूत्रेऽन्वेषणीयम् । ऋ. सं. ९.७२.८ भाष्येऽप्येतन्निर्दिष्टम् । तत्र 'आध्नोति' इति पाठः ॥ १९. [ ७ ] सोमः—*मॅ । सोमो भवान्-ग-त३.४.६-भ७; सोमो भवन्-त१.२.५.७-भ४.६-मु; सोमो

भवान–भ१ ॥ २१ अत्यन्तं देवकामो —*मॅ-मु। अत्यंत कामो–ग-त१.२.३.५.६.७-म१.४.६.७; अत्यंतकामो–त४-म२ ॥ २४७. २५ [ ११ ] अलंक्रियते तद्वत्—ग-त३.६-भ। अलंक्रियते–त१.२.४.५.७-मॅ-मु ॥ २४८. ७ [ १२ ] मधुररसस्य—ग-त४.६-भ। रसस्य–त१.२.४.५.७-मॅ-मु ॥ २५१. १० [ २४ ] स तादृशः—ग-त३.६-भ१.२.७-मु। तादृशः–त१.२.४.५.७-भ४.६-मॅ ॥

[ ९. १०८ ] २५२. १६ [ २ ] यस्य यं—ग-त३-भ। यस्य–त४.५.६-मॅ-मु ॥ १७ स्वर्दृशः सर्वस्य दर्शकस्य—ग-त३-भ२-*मॅ। ईदृशः सर्वस्य दर्शकस्य–त१.२.४.५.७-भ६; स्वर्विदः स्वर्गलंभकस्य–त६-भ१.७; स्वर्विदः स्वर्गलंभकस्य स्वर्दृशः सर्वस्य दर्शकस्य–भ४। स्वर्विदः सर्वस्य दर्शकस्य–मु। 'स्वर्विदः' इति संहिता। सायणाचार्यैः 'स्वर्दृशः' इति पठितं दृश्यते ॥ २४ [ ३ ] घुशिरं विशब्दने—*मॅ। घुशिरवशब्दने–ग; घुषिरब्भिशते–त१.२.५.७; घुषिरविशब्दने–त३.४.६-भ१.२.७-मु; घुषिरनिशब्दने–भ४; घुषिरविशब्दे–भ६ ॥ २९ [ ४ ] एतन्नामकोऽगिरा—त२.३.४.७-भ४.७-*मॅ-मु। एतन्नामकोंगिद्वा–त५; एतन्नामकोंग्निग–त६-भ१.७; एतन्नामकोंगिरः यद्वा–भ६ ॥ २५३. ३ आनशुः व्याप्नुवन्। आशुः आनशिरे व्याप्नुवन्–ग-भ१.५; आनशुः आनव्योप्नुवन्–त१.२.५; आनशुः आनशिरे व्याप्नुवन्–त३ ६-भ२.४ ६.७; आनशुः आनशिरे आप्नुवन्–त४; आनशुः अन्नानि व्याप्नुवन्–त७-मु। आनशुः आप्नुवन्–*मॅ ॥ १७ [ ६ ] निरच्छिनन् निरगमयत्—त६-भ। निरच्छिनत् निरवासयत्–ग; निरच्छिनत् निरवामयत्–त३। निरच्छिनत्–त१.२.४.५-भ६-मॅ-मु। ऋ. सं. १०.६७.५ द्रष्टव्यम् ॥ २६[७] स्तोतव्यं—ग-त३.४-भ१.२.६.७-*मॅ। तव्यं–त१.२.५.७; स्तोध्यं–त६; स्तोतव्य–भ४। स्तव्यं–मु ॥ २७ वनक्रक्षं—त१.२ ३.४.६.७-भ२.६.७-मु। नवकृक्षं–ग; वनशक्षं–त५। वनक्रक्षं–भ१.४-मॅ। 'वनक्रक्षम्' इत्येव संहितापाठः ॥ उदकानां कर्षकं—त३.४-भ१.२.४.६। उदकानां वर्षकं–ग-त६ भ७-मु। उदकानामर्षकं—त१.२.५-मॅ ॥ २५४. १८ [ १० ] अभिपुतः—ग-त३.६-भ१.२.७। अभिषुतस्त्वं–त१.२.४.५.७-भ४.६-मॅ-मु ॥ २५५. २१ [ १४ ] लेट्याडागमः—ग-त४-भ४। लेट्यडागमः–त१.२.३.५-भ१.२.६.७-मॅ-मु ॥ २५६. ७ [ १६ ] एतेभ्यः—त२-भ६। यतेभ्यो–त१.४.५। तेभ्यो–मु। च तेभ्यो–मॅ। ऋ. सं. ९.७०.८ द्रष्टव्यम् ॥ —जुष्टः पर्याप्तः—ग-त३ ४.६-भ५.६। जुष्टः–त१.२.५.७-भ२.४-मॅ-मु ॥

[ ९. १०९ ] २५८. १० [ १३ ] इन्दुः सोमः—ग-त३.६-भ२.५.७। इंदुः–त४.५.७-भ६-मॅ-मु ॥ २५९. १८ [ २२ ] गव्यैः क्षीरादिभिः......रिणम्—ग-त३.४-भ६। ('श्रीयमाणः' इत्यस्य स्थाने श्रियमाणः–त४; श्रयमाणः–भ६; 'मिश्रयन्वा' इत्यस्य स्थाने मिश्रइत्या–भ६; 'वसतीवरीः' इत्यस्य स्थाने वसतीवरीभिः–गे)। स्वीकृतपाठः त१.२.५.६.७-भ१.२.४-मॅ-पुस्तकेषु नास्ति। 'श्रीणन् प्रेरयन्' इति पदयोर्मध्य उत्तरार्धस्य व्याख्यानं नष्टमिति व्यक्तमेव। अस्मत्स्वीकृतपाठ एतन्न्यूनं सुयोग्यतया संपूरयति। यद्यपि त४-भ६-पुस्तकयोः प्रान्तेऽयं लिखित उपलभ्यते तथापि सायणभाष्यरीत्यनुसरणादयं सायणकृत एवेति मन्तुमुच्चितम्। 'श्रीणन्' 'रिणन्' इति पदयोः सादृश्येन लिखितपुस्तकेषु पाठलोपः संजातः स्यात्। श्रीणन् प्रेरयन् उग्र उद्गूर्णः सोमो–मु। 'सोमोऽभिषूयते' इत्यन्तिमं पदद्वयमनावश्यकम् ॥

[ ९. ११० ] २६०. १ [ १ ] यापयिता विनाशयिता—ग-त३.६-भ। यापयिता-त१.२.४.५-मॅ-मु॥ २६२. ७ [ ९ ] निःष्ठाः—§-मॅ। निःष्ठा-मु। ऋ. सं. ३.३१.१० द्रष्टव्यम्॥ २० [ ११ ] यज्ञवान्—ग-*मॅ-मु। यजमानः–त-भ॥

[ ९. १११ ] २६३. ३० [ २ ] आदरार्थें—*मॅ। आदरार्था–ग-त३.६-भ१.४.७; आदरार्थे–त-भ६-मु; आदरार्थः–भ२॥ २६४. ९ [ ३ ] आदरार्थे—त४-*मॅ। आदरार्था–त१.२.३.५.६.७-भ। आदरार्थे–मु॥ १३ आदरार्थे—भ१.७-*मॅ। आदरार्थः–ग; आदरार्था–त-भ-मु॥

[ ९. ११२ ] २६४. २१ [ १ ] सोमस्याजामित्वाय—§-मॅ। सोमस्य जामित्वाय–मु। निरु. ४.२० द्रष्टव्यम्॥ २६५. १२ [ ३ ] सर्वं त्रय्या विद्यया भिषज्यति। किंमूलेयं श्रुतिः ?॥ प्रक्षिणोति—त१.२.३.४.७-भ१.२.४.६-*मॅ-मु। प्रदाक्षिणाति–ग; प्रक्षिणेति–त६-भ७; प्रेक्षिणोति–त५॥ १७ जसः शसादेशः—*मॅ-मु; बस्याकानादेशः–ग; जसोकारादेशः–त; जस्याकारादेशः–भ॥ २८ [ ४ ] नर्मसचिवाः—ग-भ४-*मॅ-मु। नर्मशविवा–त१.२.३.५-भ१.२.६; नर्मश्राविवा–त४; नर्मशायिव–त६-भ७॥

[ ९. ११३ ] २६६. २९ [ ३ ] दुहिता श्रद्धा नाम—ग-त३.४.६-भ। दुहिता–त१.२.५-मॅ-मु॥ २६८. २६ [ १० ] यद्वा कामा......प्रज्ञापकस्य—ग-त३.४-भ। (त४-भ६-पुस्तकयोः प्रान्तेऽयं पाठो लिखितोऽस्ति। 'निकामा' नास्ति–भ४; अभिलाषनिकामाश्च–भ१ २.४; यत्र च विद्यते–त७-भ४.६; यत्र च लोके–भ२; तत्र लोके–ग)। त१.२.५.६.७-मॅ-मु-पुस्तकेष्वयं पाठो नास्ति। त्रुटितस्थाने लिखितपुस्तकेष्ववकाशोऽपि न दर्शितोऽस्ति इति मॅक्समुल्लरमहाशयैः स्वकीयटिप्पण्यां लिखितम्। 'यद्वा' इति पदस्य द्विरागमन लिखितपुस्तकेषु पाठलोपः संजातो दृश्यते॥ २८ सहस्थानं—*मॅ। महस्थानं–ग-त३-भ१.४.५.६; महस्थानं–त१-भ२; महे स्थाने–त७॥ विष्टपं सहस्थानं विद्यते यत्र लोके–मु॥ —यत्र—×-मॅ॥ —हर्षणं हर्षश्च—§-मॅ।मु-पुस्तक एतन्नास्ति॥..

[ ९. ११४ ] २६९. १६ [ १ ] तं जनं—*मॅ। तं मनुजं–ग; तमनुजनं–त-भ-मु॥ २७ [ २ ] वर्धयन्—ग-*मॅ। बर्धन्–त-भ-मु॥ २९ पालकः—*मॅ। पालकः सप्–ग; पालकः स–त-भ४.६-मु; पालकः सं–त३-भ१.२॥ २७०. ६ [ ३ ] नानासूर्याः—त१.२.३.६.७-भ। सोता नानासूर्या–त५। तां नानासूर्या–मॅ-मु॥ ९ आदित्याः—त३-भ१.२.४। सप्तादित्याः–त-भ६-मॅ-मु॥ —मार्ताण्ड°—ग-त३-भ१.५। मार्तंड°–त-भ२.४.६-मॅ-मु॥ २७०. २० [ ४ ] यद्धविरस्ति—*मॅ-मु। हविरस्ति–§॥ २२ अरातित्ववान्—ग-त-भ४.६.७-मु। अरातित्वान्–भ१.२। अरातिवान्–भ७-मॅ॥

नवमं मण्डलं समाप्तम्॥

---

# दशमं मण्डलम्

[ १०. १ ] २७२. ४ [ २ ] मथितो यद्वा विभृतः—ग-त३-भ५.६। मथितः–त-भ१.२.७-मॅ-मु॥ 'विविधं ह्रियमाणः' इत्याद्यर्थस्य वैकल्पिकत्वात् स्वीकृतपाठ एवोचितः॥ १४ [ ३ ] 'विष्णुः' इति प्रथममागतं पदमनावश्यकम्। मु-पुस्तके तत्यक्तं भाष्यारम्भे च 'परमं उत्कृष्टं' इति पदद्वयमधिकम्॥ पादटिप्पणीगतं पाठान्तरं द्रष्टव्यम्॥ १५ अस्य इमं—ग। अस्य इमे त-भ-मु। अस्य मे-मॅ॥ २७३. ९ [ ५ ] 'प्रतिऽअर्धिम्' इति पदं विभज्य व्याख्यातम्। तैत्तिरीयसंहितायां ( ५.४.८.३ ) 'यत्सर्वेषामर्धमिन्द्रः प्रति' इति पाठः॥

[ १०. २ ] २७४. २८ [ ३ ] प्रायणीयायामाग्नेयस्य—ग-त३-भ। प्रायणीयायामपि–मॅ-मु। त-पुस्तकेषु किंचिद्गलितम्॥ २७५. १८ [४] वः युष्माकं—ग-त३-भ-मु। युष्माकं–त-मॅ॥ २० तदेतत्। तत एव–ग। तदेनं–त-भ। तत्–मॅ। अग्निस्तत्स्विष्टकृतं विश्वं–मु॥ २८ [ ५ ] सततयाजनेन दीनबलाः—ग। सततयानिजितेन°–त१.२.३.५-भ१.२.५; सततयानजनितेन°–त६-भ७; संततयानिजितेन°–त४; सततयाविदितेन°–त७; सततयानिर्जितेन°–भ६। दीनबलाः–मॅ-मु॥ २७६. १० [६] नानारूपं वा—ग-त३.६-भ१.२.४.५.७। नानारूपं–त१.२.४.५.७-भ६-मॅ-मु॥

[ १०. ३ ] २७७. ७ [ १ ] लभ्यते—§-मु। लक्ष्यते-मॅ॥ २७८. ६ [ ४ ] किंच—त२.३-भ४.६-मु। किंतु–भ७-मॅ॥ वग्नून्—त१.२.६.७-भ-मु। वसून्–त३; यवग्नून्–त४.५। न वग्नून्–मॅ॥ स्तुत्यस्तोतृत्वयष्टृयष्टव्यत्व°—*मॅ। स्तुत्यस्तोत्रोत्वयष्टृयष्टव्य–ग; स्तुत्यस्तोतृत्वशब्दयष्टव्य°–त१.२.४.५.७-भ६; स्तुत्यस्तोतृत्वयष्टृयष्टव्य°–त३.६-भ१.२.४.७। स्तुत्यस्तोतृयष्टृयष्टव्य°–मु॥ अञ्जन्तः। 'अजन्तः' इति स्यादिति मॅक्समुल्लरमहाशयाः॥ १० यान्ति वा—ग-त३-भ१.२.४.७। यांति–त-भ६-मॅ-मु॥ २८ [ ६ ] 'किंच' इति पदमनावश्यकं प्रतिभाति॥

[ १०. ४ ] २८०. ९ [ ३ ] सन्नस्मिन्—ग-त३-भ१.२.४.५। तस्मिन्–त-भ६-मॅ-मु॥ आधिः सप्तम्यर्थद्योतकः। वस्तुतः पञ्चम्यर्थे व्याख्यातः॥ २८१. १३ [ ६ ] अधीतां। एतस्मात्पूर्वं द्वितीयपादस्य भाष्यं लुप्तं प्रतिभाति॥

[ १०. ५ ] २८२. ८ [ १ ] 'मनो वै देवा मनुष्यस्य जानन्ति' इति कुत्रोक्तम्?॥ २८३. ३ [ ३ ] अग्निसूर्यात्मना—ग-त१.२.४.५.६-भ६-मु। अग्निं सूर्यात्मना–त३.७-भ२-मॅ। अग्निर्वा सूर्यात्मना–भ१.४; अग्निवा सूर्यात्मना–भ७॥ ३१ [ ५ ] ततः—ग-त१.२.३.६.७-भ२-५-६। व्याप्तः–भ१.४.७। प्राप्तः -मॅ-मु॥ ३२ प्रायच्छदिति—ग-त३-भ२। प्रायच्छति–त१.२.६.७-भ१.४-मु; प्रयच्छदिति–भ६। प्रयच्छति–भ७-मॅ॥ २८४. ६ [ ६ ] निरुक्तपाठः क्वचिद्भिन्नः॥ २४ [ ७ ] प्रथममेव जातः—ग-त३-भ१.२.४.७। प्रथमजातः–त-भ६-मॅ-मु॥ २६ पूर्वस्मिन्—ग-त३-भ५.६। पूर्वत्वं–त-भ१.२.४.७-मॅ-मु॥

[ १०. ६ ] २८७. १० [ ७ ] आहुतिप्रक्षेपार्हः—ग-त-भ१.२.४.६-मु-उद्गीथ। आहुतिप्रक्षेणार्हः–भ७। आहुतिप्रक्षेपणार्हः–मॅ॥

[ १०. ७ ] २८८. २३ [४] मर्यादया—§। मर्यादतया–मॅ-मु ॥ २४ मां त्रायसे—त२-भ१.४.६-उद्गीथ। मात्रायसे–त१.३.७; मंत्रायसे–त४.५-भ७; मां त्रयसे–त६-भ२। त्रायसे–मॅ-मु ॥ २८९. ६ [ ५ ] अध्वरस्य यज्ञस्य—§-मु-उद्गीथ। अध्वरस्य–मॅ ॥

[ १०. ८ ] २९०. २४ [ ३ ] आशीषदर्थे। आरब्ध ईषद्धिनरित—*मॅ-मु। लिखित-पुस्तकेष्वबद्धाः पाठाः। आरब्ध आशीषदर्थे रश्मिर्हिंसार्थः ईषद्धिनस्ति–उद्गीथ। २९१. १३ [ ५ ] सोमरसलक्षणस्य। भौमरसलक्षणस्य–उद्गीथ। पुनरपि ऋ. सं. १०.२७.१३;२४ भाष्ये उद्गीथः " भौम०" इत्येवालिखत्। देवराजनिघंटुर्द्रष्टव्यः ॥ २८ [ ६ ] हविषां—ग-त-भ१.२.४.५.६। हविषो–भ७-मॅ-मु ॥ २९२. ३ [ ७ ] इममर्थं ब्रवीति—ग-त३.६.७-भ६-*मॅ। इंममर्थं ब्रवीति–त१.२.४; इंद्रममर्थं ब्रवीति–त५; इंद्र इमर्थं ब्रवीति–त३-भ१.४.७। इन्द्र इममर्थं ब्रवीति–मु ॥

[ १०. ९ ] २९३. २ [ १ ] ईशाना......प्रतिष्ठा—*मॅ-मु-× ॥ ४ पञ्चमी ......प्रतिष्ठेति—त७-भ२-*मॅ-मु ॥ १७ [ २ ] स्तन्यरसं—त-भ। तनये यथा रसं–ग। स्तन्यं रसं–मॅ-मु ॥

[ १०. १० ] २९५. २१ [ २ ] 'उर्विया परि ख्यन्' इत्यंशो भाष्ये न व्याख्यातो दृश्यते। उद्गीथभाष्ये तावदुत्तरार्धे 'वीरा उर्विया परि ख्यन्' इत्येतदेव व्याख्यातम्। सायण-भाष्यस्य उद्गीथभाष्यस्य चातीव साम्यादुद्गीथभाष्यस्यांशोऽत्रोद्ध्रियते–'( वीराः ) उरु विस्तीर्णे विजनं चावान्तरद्वीपं गूढसंभोगस्थानं त्वयाभिप्रेतं परि ख्यन् सर्वतोऽव्यवधानेन पश्यन्ति। तस्मादत्र न कश्चिद् दुष्करं क्रियमाणं पश्यतीत्येतन्मा मंस्थास्त्वम्' उक्तं च मनुना–'मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः। तांश्च देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः' ( मनु. ८. ८६ ) इति ' ॥ २९५. २७ [ ३ ] देवा अपि—ग-भ। देवा–त-मु। अपि देवा–मॅ ॥ २९६. ९ [ ४ ] प्रजापतिः—§-उद्गीथ। प्रजापतेः–मॅ-मु ॥ कृतवान्—भ६-उद्गीथ। कृ–भ१.२.४; त-वर्गपुस्तकेषु 'कृतवान्' नास्ति। कृतं–भ७-मॅ-मु ॥ १० ऋता ऋतानि—ग-भ-मु। ऋतानि–त-मॅ ॥ २९८. १० [१०] उत्तरा उत्तराणि—ग-त४-भ१.२.४-उद्गीथ। उत्तराणि–मॅ-मु इतरेषु च ॥ गच्छान्—भ७-*मॅ-मु-उद्गीथ। गच्छन्–ग; गछन्–त-भ१.२.४.६ ॥ २९९. १४ [ १३ ] परिष्वक्तुं। परिष्वक्तुं–§-मु-उद्गीथ। भाष्यकारैः प्रायः 'परिष्वक्तुम्' इति लिखितं दृश्यते ॥

[ १०. ११ ] ३००. २ [ २ ] वृणते। 'वृणे' इति प्रतीकम्। वृणे इति केवलं त४-पुस्तके। इतरत्र 'वृणः' इति ॥ ५ यज्ञार्हः सोऽग्निः—ग-त-भ२.६-मु। यज्ञार्हः–भ१.४.७-मॅ ॥ ३०१. ३ [ ४ ] अभिगमनीयं तं व्रजन्तो—*मॅ-मु। अभिगमाय त्वा व्रजंतो–ग; अभिगमनीय तां व्रतंतो–त-भ ॥ ११ [ ५ ] स्वपुष्टिं—§-मु-उद्गीथ। च पुष्टिं–मॅ ॥ २० [ ६ ] उदीरय उद्गमय—ग-त१.२.३.४.६-भ२.४.५.६-मु-उद्गीथ। उद्गमय–त५-मॅ ॥ २२ स्वीयं ज्योतिः—त३-भ५। स्वयं ज्योतिः–ग-त-भ२.६-मु। स्वज्योतिः–उद्गीथ। ज्योतिः–भ१.४.७-मॅ ॥ २५ इच्छति च—त-भ१.२.४.६-मु। इच्छति–भ७-मॅ ॥ ३०२. ३ [ ७ ] ते त्वदीयां—त-भ५.६-मु। ते तव स्वभूतां–उद्गीथ। त्वदीयां–ग-भ१.२.४,७-मॅ ॥ ३०३. २ [ १ ] अस्मद्यज्ञादपगन्ता—*मॅ। अस्मद्यज्ञागं–ग; अस्मद्यज्ञामपगंता–त-भ१.२.४; अस्मद्यज्ञमपगंता–भ६.७-मु। अस्मद्यज्ञान-पगंता–उद्गीथ ॥

[ १०. १२ ] ३०३. १५ [ १ ] **अस्मद्यागकाले**—§-मु-उद्गीथ। अस्मद्यजनकाले–मॅ ।। २३ [ २ ] **संदीपनेन**—ग-त-भ१.२.४.५.६-मु-उद्गीथ। दीपनेन–भ७-मॅ।। ३०४. २३ [ ५ ] **स्निग्धेनाहूयमानः**—ग-त३ । स्निग्धेमा°–त१.२.५.६; स्निग्धिना°–भ१.४; स्निग्धाना°–भ५; स्निग्धेजिह्वामा°–भ६; स्निग्धोना°–भ७। स्निग्धमाहूयमानः–त४.७-मॅ-मु।। **को वि वेद**। एतन्न व्याख्यातम्। २७ [ ६ ] षष्ठमन्त्रभाष्यं बहुषु पुस्तकेषु लुप्तम्। ग-त७-पुस्तकयोरुपलभ्यमानमध:टिप्पण्यामुद्धृतम्। त७-मु-पुस्तकयोर्भाष्यं समानमेव। अन्येष्वपि केषुचित्स्थलेषु मु-पुस्तकपाठः त७-पुस्तकपाठसमानो वर्तते। मु-पुस्तके भाष्यं कुत उद्धृतमित्यस्मिन् विषये मॅक्समुल्लरमहाशयैः स्वकीयटिप्पण्यां जिज्ञासा प्रकटिता। उद्गीथभाष्ये षष्ठमन्त्रभाष्यं त्रुटितम्।

[ १०. १३ ] ३०६. १३ [ १ ] **गच्छतु**—ग-त२.३.४.५.६-भ१.२.४.५-मु। गच्छत–त१; गच्छति–भ६; गछता–भ७। गच्छतां–मॅ।। २५ [ २ ] **प्रतिगच्छथः**—त१.२.५-भ१.४। प्रतिगच्छतः–भ६.७-मॅ-मु। ऐतं गतवती स्थः–उद्गीथ।। २६ **प्र भरन् प्रभरन्ति**—त१.२.६.७-भ२.६-*मॅ-मु। प्रहरंति–ग; प्रतरन् प्रभरंति–त४.५-भ४; प्रातरन् प्रभरंति–त३-भ१; प्र भरन् प्रहरंति–भ७। प्र भरन् प्रभवंत (?)–उद्गीथ।। ३०७. ६ [ ३ ] **पदितृणि होतृत्वेन**। होतृत्वेन–त१.२; पदितृणि हेतृत्वेन–त३-भ२; पदित्रीणि हेतृत्वेन–त४.५; हातृत्वेन–त६.७; तृणि हेतृत्वेन–भ१.४; पदित्रीणि होतृत्वेन–भ६। वृष्टिहेतुत्वेन–भ७-मॅ। वृत्तिहेतुत्वेन–मु। पदितृणि स्थितिहेतुत्वेन–उद्गीथ।। **अनुरोहामि शकटे युवयोः स्थापनवहनानन्तरं**—मु। आरोहामि शकटे युवयोः स्वासनहवनानंतरं–त१.२.३.६.७-भ१.२.४; आरोहामि शकटे युवयोः स्वामनहवनानंतरं–त४.५; आरोहामि शकटे युवयोः वासनहवनानंतरं–भ५; अस्वरोहामि शकटे युवयोः स्थापनवहनानतरं–भ७। अनुरोहामि शकटयोः स्थापनवहनानंतरं–*मॅ। अनु अरोहं युवयोः स्वासनभवनानंतरं–उद्गीथ। हे शकटे इति संबुद्धिः।। ३०८. १ [ ५ ] **पुत्रभूताः**—ग-*मॅ-मु-उद्गीथ। पितृभूताः–त-भ ।।

[ १०. १४ ] ३०८. ७ **सरमापुत्रौ......स्थितौ**—*मॅ-मु।। पुत्रौ द्वौ श्वानौ परलोकमार्गमभितस्थौ–§।। ११ '**महापितृयज्ञे**' इत्यस्यानन्तरं त३-भ१.२.४-पुस्तकेषु पञ्चाक्षराणामवकाशो दत्तः।" महापितृयज्ञे परेयिवांसमित्येषा यमयागाख्या याज्या' इति पाठं संभावयामः। एतत्सूक्तगतचतुर्थमन्त्रस्य विनियोजकं वाक्यं द्रष्टव्यम्।। ३०९ [ २ ] **सर्वे स्वाः......गतीरनुगच्छन्ति**—*मॅ-मु। सर्वे स्वः स्वभूताः पथ्याः स्वकर्ममार्गे प्रतिगताः अनुगच्छति–ग; सर्वस्वाः स्वभूताः पथ्याः स्वकर्ममार्गप्रत्यागताः ( °प्रतागताः–त३.४.५-भ ) अनुगच्छंति–त-भ।। ३०९. ८ [ ३ ] **भवति - - -। तत्र**—मॅ। भवति तत्र–§। द्वितीयपादस्य व्याख्यानं लुप्तम्। 'भवति तथा बृहस्पतिः ऋक्कभिः पितृविशेषैः सह वर्धमानो भवति • तत्र'–मु। 'बृहस्पतिर्ऋक्वभिः। ऋक्वनो देवविशेषाः। ऋक्वभिर्मध्यस्थानैर्देवगणैः सह सदा वव्रुधानो वर्धमान आस्ते'–उद्गीथ। सायणभाष्यस्य उपलब्धोद्गीथभाष्येण सादृश्यात् सायणभाष्यपाठोऽत्रानुमातुं शक्यः।। ३१०. ९ [ ७ ] **सत्रमध्ये दीक्षितमरणे**—भ६। सत्रमध्ये दीक्षितमध्ये मरणे–ग; तत्रमध्ये दीक्षितमध्ये मय्येरयो ( रयो–त४)–त; सत्रमध्ये दीक्षितमध्ये मय्येरणे ( माज्यरणे–त३; मय्येमरणे–भ१; माज्यराणो–भ५ )–त३-भ१.२.४.५; सत्रमध्ये दीक्षितस्य मरणे–*मॅ-मु।। १७ **सत्रा मदन्ता मदन्तौ**—

§-मु। मदंतौ—मॅ॥ २३ [ ८ ] 'यमेन' इति न व्याख्यातम्॥ २५ भ्रियमानाख्यं—त-भ६। भ१.२.४.७-पुस्तकेषु कियांश्चिदंशो लुप्तः। 'न्' इति दन्त्यवर्णस्य भावात् 'भ्रि' युक्तः पाठोऽस्ढः। 'श्मशानाख्यं' इति मॅक्समुल्लरमहाशयाः संभावयन्ति। तेषां टिप्पणी तै. आ. ६.४.२ च द्रष्टव्यम्॥ ३११. ५ [ ९ ] प्रमृज्यमानदहनस्थानात्। प्रमृज्यमानदाहन°—त१; प्रमृजमानदाहन°—त.२.६; मृत्यक्षमानदहन°—त३-भ२.४;. प्रमृजमानदहन°—त४.७-भ६; ° प्रमृजमानदेहन°—त५; प्रत्यक्षमानदहन°—भ१। मृतयजमानदहन°—मॅ-मु॥ २७ [ ११ ] ताभ्यां श्वभ्यां—ग-त-मु। ताभ्यां श्व—भ१.४.७; ताभ्यां—भ६-मॅ॥ ३१२. २२ [ १४ ] प्रतिष्ठत च—ग-त-भ१.२.४-मु। प्र तिष्ठत—भ६। प्र च तिष्ठत—मॅ॥ ३१३. ९ [ १६ ] बृहन्महज्जगद्यमश्च—*मॅ-मु। बृहज्जंगमश्च—ग-भ६; बृहत् महज्जंगमश्च—त-भ१.२.४; बृहत् अंगमाश्च—भ७॥ षण्मोर्वीरंहस°...। ऋ. सं. ६.४७.३; १०. १२८. ५ भाष्यं श. ब्रा. १.५.१.२२ च द्रष्टव्यम्॥ १० सर्वा ता सर्वाणि—ग-त३.४-भ१.२.४.६-मु। सर्वा ता सर्वाणि—त१.२.५.६.७। सर्वाणि—भ७-मॅ॥ आहिता आहितानि—त-भ१.४.६-मु। आहितानि—ग-भ७-मॅ॥ ११ अवस्थितानि—§-मॅ-मु। 'अवस्थापितानि' इति भाष्यम्॥

[ १०. १५ ] ३१३. ३२ [ २ ] आग्निमारुते इदं पितृभ्यः—त१.२.७-भ२.७-मु। भ७-वर्जयित्वा सर्वेषु पुस्तकेषु 'इदं पितृभ्यः' इत्यारभ्य 'पूर्वमेवोदाहृतम्' इत्येतावत्पर्यन्तो भागो लुप्तः। त१.२.३.७-भ१.२.४.६-पुस्तकेषु 'महापितृयज्ञे पितरो बर्हिषद इत्यस्य द्वितीयानुवाक्या सूत्रे तु पूर्वमुदाहृतम्' इत्यंशः 'चतस्रः इति' इत्यस्यानन्तरं पुनरावृत्तः। भ७-मॅ-पुस्तकयोः 'आग्निमारुते' इति पदं नास्ति॥ ३१७. ९ [ ११ ] शुचीनि—त१.२.४.६.७-मु-उद्गीथ। शुनि—त५; उक्तानि—ग; शब्दानि—त३-भ१.२.४; शुचि—भ६। सुचि—*मॅ। मॅक्समुल्लरमहाशयैरभ्यूहितः पाठः 'प्रयतानि' इति पदेनान्वितः। 'शुचीनि' इति 'हवींषि' इत्यस्य विशेषणम्। बहुषु पुस्तकेष्वभिप्रेतोऽयं पाठ उद्गीथभाष्येऽप्युपलभ्यमानत्वादस्माभिः स्वीकृतः॥ शुचीनि इति न 'प्रयतानि' इति पदस्य व्याख्यानं किंतु स्वतन्त्रं पदम्। अस्य सूक्तस्य द्वादशे मन्त्रेऽपि उद्गीथः 'प्रयता' इत्यस्यानन्तरं 'शुचीनि' इति पदं निदधाति॥ ३१८. १३ [ १४ ] तृप्यन्ति—उद्गीथ-मॅ-मु॥

[ १०. १६ ] ३१८. २५ [ १ ] मषीभूतं—त३-भ१.४। मषीभस्मीभूतं—भ२; मेषीभूतं भ७। भस्मीभूतं—त-मॅ-मु। मन्त्रस्य पूर्वार्धे दहनस्यावस्थात्रयं कथितम्। मषीभवनं संतपनं त्वग्विक्षेपणमिति क्रमेणावस्थाः। भस्मीभवनं न प्रथमावस्था। तै. आ. ६.१.४ द्रष्टव्यम्॥ ३१९. ५ [ २ ] गच्छाति—उद्गीथ। १० [ ३ ] त्वदीयं—§। ते त्वदीयं—मॅ-मु। 'ते' इति मन्त्रे नास्ति॥ १३. एतन्मन्त्रस्यान्तिमो भागः अपूर्णो व्याख्यात इति मॅक्समुल्लरमतम्। 'कर्मफलम्' इत्यत्रैकं वाक्यं परिसमापितं चेत्, नैतदपूर्णं किंतु संक्षिप्तम्। मु-पुस्तके 'तत्रान्तरिक्षे' इत्येतस्मात्पूर्वं 'यदि' इत्यधिकम्। प्रति तिष्ठ—भ७-मॅ। प्रति तिष्ठति—त१.२.४.६.७; प्र तिष्ठति—त५-भ६; प्रतिष्ठितः—त३-भ१.२.४। प्रति तिष्ठ प्रतितिष्ठति—मु। तै. आ. ६.१.४ अत्रायं मन्त्रो व्याख्यातः। तत्र अन्तिमभागस्य व्याख्यानमेवं वर्तते—यत्र यस्मिल्लोँके ते तव हितं सुखमस्ति तत्र गत्वौषधीषु प्रविश्य तद्द्वारा पितृदेहमातृदेहौ प्रविश्य तत्र तत्रोचितानि शरीराणि स्वीकृत्य तैः शरीरैः प्रतिष्ठितो भव॥ ३२०. १२ [ ६ ] श्वापदः श्वशृगालादिः—त३.४-भ५-मु। श्वापदः सृगालादिः—ग; श्वापदः श्वशृगादिः

भर.८-मॅ-मु ॥ १७ तं तादृशं—ग१.२-त४.५। तादृशं–त३.६.७.८-भ२.८-मॅ-मु ॥ त्वा त्वां—त४.५। त्वां–त३.६.७.८-भ२.८-मॅ-मु ॥ १९ °लोपः। गतमन्यन्—ग१.२-त४.५। °लोपः–त३.६.७.८-भ२.८-मॅ-मु ॥ ७१६. १० [ ७ ] कर्मण्यप्—ग१.२-त४.५। कर्मण्यण्–त३.६.७.८-भ२.८-मॅ-मु ॥

[ १०. १३४ ] ७९६. २५ [ १ ] आप्रासि—त१.२.३.६.७.८-भ। आप्रथयसि–त४.५-मॅ-मु ॥ २८ जनित्री साधु जनयित्री—ग१.२-त१.२.३.६.७.८-भ। जनित्री जनयित्री–मु। जनित्री–त४.५-मॅ ॥ ७९८. ३ [ ४ ] अन्नानि धनानि वा—ग१.२। अन्नानि वा–त-भ-मॅ-मु ॥ १४ [ ५ ] वियुत्य—ग२। वियता–त-भ-मॅ-मु। 'वियता' इति व्याख्यानं न समीचीनं, किंत्वम्यूहोऽनावश्यक इति मॅक्समुल्लरमतम् ॥

[ १०. १३५ ] ८००. ५ [ २ ] दोषानावि°—ग१.२। दोषान्यावि°–त१.२.३.६.७.८-भ१.२.४.८; दोषाण्यावि°–भ७। दूषणान्यावि°–मॅ-मु ॥ १९ [ ३ ] पुण्यपापात्मकं—ग१.२-त१.३.६.७.८-भ-मु। पुण्यं पुण्यकामात्मकं–त४.५। पुण्यापुण्यात्मकं–मॅ ॥ ८०१. १५ [ ५ ] सार्वात्म्य°—ग१.२-भ१-मु। सर्वात्म°–त१.२.३.६.७.८। सर्वात्म्य°–त४.५-भ२.४.८-मॅ ॥ १८ निर्वर्तयति—*मॅ-मु। निर्वर्तयते–ग१.२। निवृर्तयति–त-भ ॥ --निर्वर्तयितु°—*मॅ-मु। निर्वर्तयतु°–ग१.२; निवर्तयितु°–त-भ ॥ निर्वर्त्यस्या°—ग१.२-*मॅ-मु। निवर्त्यस्या°–त-भ२.४.८; विवर्त्यस्या°–भ७ ॥ १९ सार्वात्म्या°—ग१.२-त-भ-मु। सर्वात्म्या°–मॅ ॥

[ १०. १३६ ] ८०४. २५ [ ७ ] आलोडयति—*मॅ-मु। श्वालोकयति–त१.३.७; श्वोलोकयति–त२; आलोकयंति–त४; आलोकयुति--त५; श्वलोकयति–त६; आलोकयति–भ ॥

[ १०. १३७ ] ८०६. ११ [ ५ ] विश्वा विश्वानि—ग१.२-त४-भ२-मु। विश्वानि–त३.६.७.८-भ१.४.७.८-मॅ ॥

[ १०. १३८. ] ८०७. २३. [ २ ] श्वञ्चयः अगमयः—ग१.२-त४.५-भ२। श्वंचयः–त१.२.३.६.७.८-भ१.४.७.८-मॅ-मु ॥ ८०९. २. [ ५ ] अप्रहृतसेनः—ग१.२-*मॅ-मु। प्रकृतसेनः–त१.२.३.६.७.८-भ१; 'अहृतसेनः–त४.५; प्रहृतसेनः–भ१.२.४.८ ॥ २३. [ ६ ] स्तोतव्यानीत्यर्थः—ग१.२-त१.२.३.५.६.७.८-भ-मु। आम्नातव्यानीत्यर्थः–त५-मॅ ॥

[ १०. १३९. ] ८१०. २१. [ २ ] इत्यकारलोपे—त४-भ७। इत्यःकारलोपे–ग१; इत्यर्थः कारलोपे–ग२। इत्याकारलोपे–त१.२.३.५.६.७.८-भ१.२.४.८-मॅ-मु ॥ ८१२. २. [ ६ ] प्रवहणे निमित्तभूते—त१.२.३.७-भ२.८-मु। निमित्तभूते–भ१.४.७-प्रवहणनिमित्तभूते–मॅ ॥ ७. [ ६ ] लेट्याडागमः—त१.२.३.६.७। लेट्यडागमः–त४.५.८-भ-मॅ-मु ॥

[ १०. १४०. ] ८१२. ३०. [ २ ] वसु धनं—§-मु। वसुर्धनं (?)-मॅ ॥ ८१३. ७. [ ३ ] हितः—त२.३.७-भं। कर्मभिर्हितः–मॅ-मु ॥ १०. इत्यस्य—§-मॅ-मु। 'इत्यत्र' इति समीचीनमिति मॅक्समुल्लरमहाशयाः ॥

[ १०. १४२. ] ८१६. २२. [ २ ] प्रादुर्भवनं। प्रादुर्भावं–मॅ-मु ॥ ८१८. ८. [ ६ ] आक्रम्य—त१.२.३.६.७-भ१.२.४-मु। अक्रम्य–त८। अभिक्रम्य–मॅ ॥ १२. अध्वा कर्तव्यः—*मॅ-मु। लिखितपुस्तकेष्वशुद्धम् ॥

[१०. १४३.] ८१९. २४. [१] ऊरू—त४-मु। ऊद्-त८-म२.७.८-मॅ। त्यूद्-त२.३॥ ८२१. १६. [५] पुनर्युवामकुरुतम्—त२-म१.४। पुनर्युवानं कुरुतं-त४.५-म७-मॅ-मु॥ १७. अडभावश्च। लुङि वा मन्त्रे घस इति च्लेर्लुक्—म२। अडभावश्च लुङि मंत्रे घसेति च्लेर्लुक्-त१.२.३.६.७.८-म१.४.७.८.। अडभावश्च-मॅ-मु॥

[१०. १४४.] ८२२.'२३. [२] यजमानं च—त-म-मु। यजमानं-मॅ॥ ८२३. १९. [५] जागार जजागार—त१.२.३,६.७.८-म-मु। जजागार-त४। जागार--त५-मॅ॥ ८२४. १. [६] यद्वा अस्मदस्मत्तः......°त्यन्वयः—*मॅ-मु। लिखितपुस्तकेष्वशुद्धम्॥

[१०. १४५.] ८२४. ४. अत एतत्सूक्त°—त१.२.३.७-म२.७.८-मु। एत एव सूक्त°-म१। अत एव सूक्त°--म४-मॅ॥ १०. °रभिमन्त्रणम्—*मॅ-मु। °रभिमंत्रणे--त-म१.२.८; °भिमंत्रेण--म४॥ ८२५. ५. [४] नो न खलु—म२.८। नो खलु--त-म१.४.७-मॅ-मु॥ ७. गमयामसि गमयामः—त१.४-म२। गमसि गयामः--त२.३.६.७.८-म१.४.७; गमयामसि गमयाम--त५; गमयामसि गयामः--त७। गमयामसि--मॅ-मु॥ १४. [५] अभिभवाव—त४. ५-म२। अभिभवेम--म७। अभिभवाम--त३.६.७.८-म८-मॅ-मु॥

[१०. १४६.] ८२६. १६. [२] वृषारवोक्तस्य शब्दस्य—म१.२.४। वृषारवेकेस्य शब्दस्य--त१.२.३.६.८; वृषारकोक्तस्य शब्दस्य--त४; वृषारकेस्य शब्दस्य--त७; वृषारवे स्वशब्दस्य--म७। वृषारवाय स्वशब्दस्य--मॅ-मु। स्वीकृतपाठो यद्यपि मॅक्समुल्लरमहाशयैः नोपलब्धस्तथापि तैः संभावितः॥ चीचीशब्दकरणेन—म२। °करणे--त१.२.३.७-म१.४.७.८-मु। °कारेण--*मॅ। स्वीकृतपाठो मॅक्समुल्लरमहाशयैः नोपलब्धः॥ १७. आघाटिभिरिव। आघाटयो घाटलिकाः—*मॅ-मु। आघाटिभिरिव आघाटया घाटलिकाः--त१.२.३.६.७.८; आघाटिभिरिव आघाट आघाटभिकाः--त४; आघाटिभिर्मरतक आघाट आघाटलिकाः--त५; आघाटिभिरिव आघाटय आघाटलिकाः--ग१.२-म२॥ २८. [३] अपेक्षितं—ग१.२-त४.५-म१.२.४.८। अर्ण्यो क्षतं--त१.२.३.६.७.८; अरण्ये कृतं--म५। अरण्ये क्षत्रं--मु। अरण्ये क्षतं--मॅ॥ ८२७. ५. [४] पक्षिमृगादिशब्दं—ग२। पक्षिमृगादि--त४.५। पक्षिमृगादिकं शब्दं--त३.६.७.८-म२.८-मॅ-मु। तै. ब्रा. २.५.९.७ भाष्यं समीचीनतरमिति मॅक्समुल्लरमहाशयैरुक्तम्॥

[१०. १४७.] ८२८. २५. [३] पुरुहूत बहुभिराहूत—ग१.२-त४.५। पुरुहूत-त३.६.७.८-म२.८-मॅ-मु॥ सूरिषु स्तोतृषु—ग१.२-त४.५-म२। सूरिषु-त१.२.३.६.७.८-म२-मॅ-मु॥ २६. अभिकामयस्व वा—त-म। अभिकामयस्व-मॅ-मु॥

[१०. १४८] ८२९.२४. [१] बहुबल बहुधन वा—ग१.२। बहुबलधन वा-त३.६-म२.५; बहुलधन वा-त४.५; बहुलं धन पा-म१.४.८; बहुलंधन-म७। बहुलधन-मॅ-मु॥ २६. यस्य—ग१.२-त१.२.३.६.७.८.म२.८। यद्वा यस्य-त४.५-मॅ-मु॥ ८३०. ६. [२] विशः प्रजाः—ग१.२-म२-*मॅ। विशः जातः-त१.२.३.६.७.८-म१.४.८-मु। विशः प्रभाः-त४.५; विवश जातः-म७॥ १६. [३] सर्वस्य भवेम। भवेम-मॅ-मु॥

[१०.१४९] ८३१. १३. अर्चत आर्षं—*मॅ-मु। अर्चतस्यार्षं-ग१.२-त७-म१.२.८; अर्षतस्यार्षं-त१.२.३.८-म४; अर्चतस्यार्षं-त४.५॥ २६. [१] शिक्षकः सादी—ग१.२-

भर। शिक्षकः साक्षी—त१.२.३.६.७.८-भ१.४.५.८। शिक्षकः—मॅ-मु॥ ८३२. ८. [ २ ] ऊर्ध्वमवस्थितं—ग१.२-त-भ१.२.४। ऊर्ध्वमिव स्थितं—भ८। ऊर्ध्वमेव स्थितं—भ७-मॅ-मु॥ ९. अस्तेर्लेकि—त-भ। अस्तेर्लुङि—मॅ-मु॥ २९. [ ४ ] योद्धा—ग१.२। वा—त१.२.३.६.७.८-भ। च—त४.५-मॅ-मु॥

[ १०. १५० ] ८३४. २१. [ ४ ] विशेषणसापेक्षस्यापि धनशब्दस्य—*मॅ-मु। लिखितपुस्तकेष्वशुद्धम्॥ २२. धनसातये—त-भ। धनस्य सातये—मॅ-मु॥

[ १०. १५२ ] ८३६. २३. भरद्वाजपुत्रस्य शासनाम्न—ग१.२-त४.५। शासनाम्र—त३.६.७.८-भ२.८-मॅ-मु॥ २१. [ १ ] एतत्संज्ञोऽहं—ग१.२-त४.५-भ२। तत्संज्ञोऽहं—त३.६.७.८-भ२.८-मॅ.मु॥ २२. भवासि—ग१.२-त४.५-भ२। भवसीति—त३.६.७.८-भ८-मॅ-मु॥

[ १०. १५३ ] ८३८. २१. [ ३ ] आवरकापनोदनेन—ग१.२-त४-भ२। आकारका°—त१.२.३.६.७.८-भ। आवारका°—मॅ-मु॥ ८३९. १. [ ५ ] अभिभूरसि—ग२-त४-भ२। असि—त१.२.३.६.७.८-भ१.४.७.८। अभिभूः—मॅ-मु॥

[ १०. १५४ ] ८३९. १७. [ १ ] यदाथर्वणाङ्गिरसो—*मॅ-मु। यदथर्वांगिरसो--ग१२;. यदथर्वणांगिरसो--त१.२.३.६.७.८-भ१.२.४; यदथर्वाणंगिरसो--भ७; यद-र्वणांगिरसो--भ८॥ यद्यजूंषि घृतस्य कुल्या, यदाथर्वणाङ्गिरसो मधोः कुल्या। तैत्तिरीयारण्यके 'कूल्या' इति दीर्घम्॥ १८. अपि—ग२-त४-भ२। प्रत्यपि--त३.६.७.८-भ८-मॅ-मु॥

[ १०. १५५. ] ८४०. २८. [ १ ] विकृताङ्गि—§-मु। विकृतांगे (?)-मॅ॥ ८४१. १०. [ २ ] अराय्यम् अदात्रीं दान°—भ। अराय्यं अदान°--त१.२.३.६.८; अराज्यं अदात्रीं राज्य°--त४.५। अराय्यं दान°--त७-मॅ-मु॥ ८४२. २. [ ४ ] तवादेशः—ग१.२-भ२। तन्वादेशः--त१.२.३.६.७.८-भ१.७.८; तनादेशः--त४.५; दद्यादेशः--भ४। तनवादेशः--मॅ-मु॥ ९. [ ५ ] पर्यनेषत पर्यनयन्—ग१.२-*मॅ। पर्यनेषत् पर्यनयत्--त१.२.३.६; पर्यनेषत् पर्यनयत-त४.५-भ१.४.७-मु; पर्यनेषत पर्यनयत्--त८-भ८; पर्यनेषत् पर्यनयन्--त७-भ२॥

[ १०. १५६. ] ८४३. ३. [ ३ ] अश्वैश्वोपेतं—§-मु। अश्वोपेतं--मॅ॥ ४. अङ्कधि—ग१.२-त१.२.३.६.७.८-भ२-*मॅ-मु। आद्धि--त४.५-भ७; *अङ्वि--भ१.८; अंङ्वि--भ४॥ ११. [ ४ ] उपर्यवस्थापितवानसि—ग१.२। उपर्यवस्थितवानसि--त-भ-मॅ-मु। ऋ. सं. ८. ८९. ७ द्रष्टव्यम्॥

[ १०. १५७ ] ८४४. २१ इमा नु कं—त१.२.३.६.७-भ२-अनु। इमा नु—त८-भ१.४-मॅ-मु॥

[ १०. १५८ ] ८४५. ११ [ ३ ] विद्धातु—ग१.२-त७। विधातु—त१.२.३.४.५-भ। दधातु—मॅ-मु॥ १६ [ ४ ] प्रकाशकं तदनुग्राहकं—ग१.२-त४.५-भ२.८-मु। प्रकाशकं—त१.२.६.८; प्रकाशं तदनुग्राहकं—भ१.४; प्रकाशो तदनुग्राहकं—भ७। प्रकाशकं तदानुग्राहकं—मॅ॥

[ १०. १६० ] ८४६. १२ [ ५ ] अश्वानात्मन इच्छन्तः—त४.५-भ२। अश्वान इच्छंतः--त१.२.३.६.७.८-भ८। अश्वानिच्छंतः--भ१.४-मॅ-मु॥

[ १०. १६१ ] ८५०. २१ [ ३ ] सहस्राक्षेण। सहस्रमिति—त१.२.३.७-म१.२.४.८-मु। सहस्रमिति--म७-मॅ ॥

[ १०. १६३ ] ८५३. १० [ १ ] उद्धारयामि—*मॅ। उद्धरयामि--त१.२.३.६.७.८-म-मु। उद्वरयामि--त४.५ ॥ १२. छुबुकाच्चुबुकात्—म२.८-*मॅ-मु। छुबुकात् चुचुकात्--त१.२.३.४.५.७.८; छुबुकात्--त६; छुबुकात्--म१; छुकात्--म४; छबुकात्--म७ ॥ १७ उद्धारयामि—*मॅ। उद्वारयामि–त४.५; उद्धरयामि--त१.२.३.६.७.८-म१.२.७.८-मु ॥ ८५४. १६ [ ४ ] जघनाभ्यां—त१.२.३.६.७.८-म१.२.४.७। जंघनाभ्यां--म८-मॅ-मु ॥

[ १०. १६४ ] ८५६. ४ [ ४ ] अभितो द्रोहकं—त१.२.६.७.८-म१.२.४.७। अभिद्रोहकं--त४.५; अभितो द्राह अभितो द्रोहकं--त३। अभितो द्रोहं--मॅ-मु ॥

[ १०. १६५ ] ८५६. १९ प्रायश्चित्तं—ग१.२-त१.२.३.६.७-*मॅ। प्रायश्चित्त--त४.५; प्रायश्चित्तं मद--म१.४; प्रायश्चित्तं महद--म५। प्रायश्चित्तमिदं--मु-अनु ॥ ८५७. ५ [ २ ] इषितो गतः—ग१.२-त४.५-म२। इषितः--त१.२.३.६.७.८-म१.४.७.८-मॅ-मु ॥ ८५८. ७ [ ५ ] विश्वानि सर्वाणि—ग१.२-त४.५-म२। सर्वाणि विश्वानि--त१.३.६.७.८-म८। सर्वाणि--मॅ-मु ॥

[१०.१६६] ८५८.१३. प्रयाणसमये - - - जपेत्–मॅ। प्रयाणसमये निर्गमनावं जपेत्--त१; प्रयाणसमये निर्गमनाद्यं जपेत्–त२.३.६.८-म१.४; प्रयाणसमये निर्गमनार्थं जपेत्–त७; प्रयाणसमये निर्गच्छमानाद्यं जपेत्–म२; प्रयाणसमये निर्गमनाद्ध्वं जपेत्–म५; प्रयाणसमये निर्गमनात्वं जपेत्–म८; प्रयाणसमये निर्गच्छतार्थं जपेत्–ग१; प्रयाणसमये निर्गच्छन्मार्गे जपेत्–त४.५। प्रयाणसमये निर्गमनार्थमेतज्जपेत्--मु। 'प्रयाणसमये गृहमाभिगच्छन्नेतज्जपेत्' इति मॅक्समुल्लरमहाशयाः संभावयन्ति। 'प्रयाणसमये' इति वचनात् लिखितपुस्तकपाठेभ्यश्चानुमातुं शक्यं यद्भाष्यकारैरेतत्सूक्तमन्यथा विनियुक्तम् ॥ ८५९. ९. [३] उभे आर्त्नींइव—ग१.२-त४.५-म२। आर्त्नी इव–त३.६.७.८-म८-मॅ-मु ॥ २८ [ ५ ] वृष्टाज्जलात्—त१.२.३.६.७-म। वृषाज्जलात्–त८; निष्कृष्टांजलात्–त४.५। वृष्टिजलात्–मॅ-मु ॥

[ १०. १६७ ] ८६०. १३ [ १ ] न केवल°—त-म-मु। नः केवल° (!)–मॅ ॥ १९. [ २ ] स्वार्जितम् उक्त°—त-म-मु। उक्त°–मॅ ॥ २२ देशे—त-म-मु। यज्ञे–मॅ ॥

[ १०. १६८ ] ८६१. ३१ [ २ ] स्वयुक्—ऽ-मॅ। सयुक्–मु। 'सयुक्' इति संहितापाठः ॥ ८६२. ११ [ ३ ] सत्यवान् यज्ञवान्वा—म२। सत्यवान्वा–त१.२.३.६.७.८-म१.४.५.८। सत्यवान्–मॅ-मु ॥ २० [ ४ ] शनैर्गच्छन्ति— त१.२.३.६.७.८-म-मु। शनैर्गतिः–त४.५-मॅ ॥

[ १०. १६९ ] ८६३. ३ [ १ ] प्रीणयित्रीः—त६-म२.७। प्राणयित्रीः–त३.४.५.७.८-म८-मॅ-मु। ऋ. सं. १०. ३०. १४; १. ८०. ४ द्रष्टव्यम् ॥ १५ [ ३ ] या देवेष्विति द्वाभ्यां—त-म-मु। द्वाभ्यां–मॅ ॥

[ १०. १७० ] ८६५. १२ [ ४ ] रोचनं रोचमानं स्थानम्—म२। रोचमास्थानं–त१; रोचनमास्थानं–त२.३.६.७.८; रोचमानं स्थानं-म१.४.८। रोचनं स्थानं–त४,५-म७-मॅ। रोचनं–मु ॥

[ १०. १७१ ] ८६६. ८ [ ४ ] सायंसमये—ग१.२-त४.५ । समये–त१.२.६.८-भ १.४; अस्तमये–भ७ । अस्तसमये–मॅ-मु ॥ प्रातःकाले—ग१.२-त४.५ । काले–त१.२.६.८-भ १.४ । उदयकाले–भ७-मॅ-मु ॥

[ १०. १७२ ] ८६६. १५ सूत्रितम् आ याहि वनसा सहेति नव समाम्नाता इति । आ याहि वनसा सहेति नव ( वन–त१; नंव-त७ ) समाम्नाता ( समाम्ना–त२.६-मु ) ( इति–त७ )–त१.२.६.७-मु । सूत्रितं इमा नु कं भुवना सीषधामा याहिं वनसा सहेति–ग१.२ । त३-भ १.२.४-पुस्तकेष्ववकाश उत्सृष्टः । सूत्रितं–त४.५-मॅ ॥ १८ [ १ ] धनेन वा—ग१.२-धनेन–त-भ-मॅ-मु ॥

[ १०. १७३ ] ८६७. १८. [ १ ] त्वा त्वां—ग१.२-त४-भ । त्वा--त१.२.५.६.७ । त्वां--त३.८-मॅ-मु ॥

[ १०. १७४ ] ८६९. १७–२१ [ २ ] हे राजन् ... ... °चात्रापि संबोध्यः—त१.२.३.६.७-मु । ( शपत्नान्--त१.२.३.६; 'या' इत्यस्य स्थाने याग्य--त१.२.३.६; 'अपि' नास्ति--त७; पृतना--त७; आत्मानमिच्छंतं--त१.२.३.६.७; ईर्षेति--त१.२.३.६; 'ईर्ष्येति' नास्ति--त७; 'तिरस्' नास्ति--त७-मु; ईर्ष्यान्यां--त१.३.६; ईर्षायां--त७ ) । इतर-पुस्तकेषु मॅ-पुस्तके च द्वितीयमन्त्रभाष्यं नास्ति । मॅक्समुल्लरमहाशयैः मु-पुस्तकस्थं भाष्यं स्वकीय-टिप्पण्यामुद्धृतं तस्य प्रामाण्यं चाक्षिप्तम् । परं त्विदं भाष्यं लिखितपुस्तकेषु केषुचिदुपलभ्यं, न कपोल-कल्पितमिति व्यक्तमेव । मॅ-संपादितलिखितपुस्तकसंग्रहापेक्षया मु-पुस्तक-संपादकैरस्माभिश्च संपादितः पुस्तकसंग्रहः समृद्धतर इत्यप्येतेन स्पष्टं भवति ॥ २८. [ ३ ] असत्सि—त१.२.३.७-भ२-मु । इति सति--भ८ । असि--भ१-४.७-मॅ ॥

[ १०. १७५ ] ८७१. ८. [ ४ ] सुवतु—*मॅ-मु । प्रस्वतु--ग१.२; प्रसुवतु--त१.२.३.६.७.८; प्रसवतु--त४.५; प्रसुवतु--भ ॥

[ १०. १७६. ] ८७२. १८. [४] देवाद्देव°—त१.२.३.६.७.८-भ१.२-मु । देवदेव°–त४.५; देववादेव°--भ४; अमरणदेवतादेव°--भ७ । देव°--भ८-मॅ ॥ मनुष्यात् मनुष्य°—त-भ १.२.४.८ । मनुष्य°--भ७-मॅ-मु ॥

[ १०. १७७. ] ८७३. ३. [ १ ] हृदा हृत्स्थेन । तात्स्थ्यात्ताच्छब्द्यम्—*-मॅ-मु ॥ लिखितपुस्तकेष्वबद्धाः पाठाः । मॅक्समुल्लरमहाशयानामभ्यूहो युक्त एव[1] ॥

[ १०. १७८ ] ८७४. २४. [ १ ] तार्क्ष्यं...गर्गादिः—*मॅ-मु । अत्रापि लिखित-पुस्तकपाठानामबद्धत्वान्मॅ-अभ्यूहो युक्तः[2] ॥ ग१.२-पुस्तकद्वयमत्र समाप्तम् ॥ ८७५. ६. डप्रत्ययः–*मॅ-मु । इट्प्रत्ययः--त१.२.३.६.७.८-भ; इडप्रत्ययः--त४.५ ॥

[ १०. १७९ ] ८७६. १ शिबिर्नाम—त४.५.६.७-भ-मु । शिवि°--त१.२.३.८-मॅ ॥ २. रोहिदश्वपुत्रो । रुशदश्वपुत्री इति अनुक्रमणीभाष्यपाठः ॥ ३. शिबि°—त१.२.३.५.६--भ-मु-अनु । शिवि°--त४-७.८-मॅ ॥ ४. दधिघर्मे—त४.५.७-भ२-*मॅ । दधिघर्म्ये--त१.३.६.८-भ८-मु॥

1. Preface to the Sixth Volume of the first edition, Vol. IV, p. cxli, 2nd edn.
2. Ibid. p. cxl.

[ १०. १८० ] ८७७. १४ हविःषुं। हविषु--त४.५। हविषि--त३.६.७.८-भ२.८-मॅ-मु॥ २५ [ १ ] रैशब्दाच्च—त१.२.३.६.७.८-भ। रैशब्दाच्च--त४.५-मॅ-मु। ऋ.सं. १.१८.२; ७९.५; ९२.१४; ९५.११; ११६.१८ द्रष्टव्यम्॥

[ १०. १८२ ] ८७९. २४ [ १ ] क्षिपत् क्षिपतु—त४.५-भ१.२.४। क्षिपतु--त१.२.३.८-भ८-मु; क्षिपंतु--त६। क्षिपंत्--त७-भ७-मॅ॥

[ १०. १८३ ] ८८०. ११ ऋचः—*मॅ-मु। अंत्याः ऋचः--त१.२.३.६.७.८-भ१.२.४.८; इत्याचरु--त४.५; अनृचः—भ७॥ ८८१. १२ [ ३ ] सर्वजननहेतुः—भ७। सर्वजनहेतुः—त३.४.५.६.७.८-भ२.८-मॅ-मु॥

[ १०. १८४ ] ८८१. १३ गर्भाणां कर्ता—त४.५-भ७। गर्भाणां--त३.६.७.८-भ२.८-मॅ-मु। २३ [ १ ] विसृजत्वित्यर्थः—त१.२.३.६.७.८-भ२.४.८-मु। सृजत्वि०--त४-५-मॅ॥ २४. स्रावपातापप्रसवा—त३-भ१.४.८-*मॅ। म्नावपाताप०--त१.२.६.८; स्रावपाताप्रसवा--त४.५.७; स्रावपाताय०--भ२; स्रावपातप्रसवा--भ७। गर्भपातापप्रसवा--मु॥

[ १०. १८५ ] ८८२. १३ [ १ ] त्रीणामित्यपि छन्दसि दृश्यते। '०छन्दसीष्यते' इति काशिकावचनम्॥

[ १०. १८७ ] ८८३. २६ [ २ ] धन्वान्तरिक्षम्। धन्वन्यन्तरिक्षे—भ२। धन्वांतरिक्ष धन्वंतरिक्षे--त१.२.३.६.८; यद्वांतरिक्षं ग्वनांतरिक्षे--त४.५; धन्वांतरिक्षं धन्वंतरिक्षे--त७; धन्वन्यंतरिक्षे--भ१.७; धन्वान्यंतरिक्षे--भ४; धन्वांतरिक्षे--भ८। धन्वान्तरिक्षं--मु। धन्वांतरिक्षं धन्वांतरिक्षं--मॅ॥ २७. प्रकाशते—भ७। प्रकाशयते--मॅ-मु इतरेषु च॥ ८८४. १ [ ४ ] अभि अभिमुखं—भ। अभिमुखं--त-मॅ-मु॥

[ १०. १८९ ] ८८५. २९ [ ३ ] स्तुतिरूपा—त-भ। श्रुतिरूपा (!)—मॅ-मु॥ ३२ [३] सूर्यं सेवत इत्यर्थः—भ२.४.८। स्तूयते सूर्य सवते इत्यर्थः--त१.२.३.६.८; सेवत इत्यर्थः--त४.५; स्तूयते सूर्य सेवत इत्यर्थः--त७। स्तूयते सूर्यः सर्वत इत्यर्थः--*मॅ-मु। सर्वत इत्यनर्थकोऽप्यूहः॥

[ १०. १९० ] ८८६. ४ ०त्वात्ताद्दग्रूप—*मॅ-मु। ०त्वाद्दग्रूप--त१.२.३.६.७.८-भ२.४.८; ०त्वाद्दपं०--त४; ०त्वाकन्याद्दरूप०--त५॥ १४ [ १ ] ०रूपादुपादानभूतात्—मु। ०रूपादानभूतात्--त१.२.३.६.७.८-भ४.८; ०भूतात्--त४; ०नूनात्--त५। ०रूपापादानभूतात्--*मॅ॥ २४ [ २ ] भूतजातानि—त१.३.६.७-मु। भूतानि--त४.५.८-भ-मॅ॥ ८८७. ३ [ ३ ] कल्पे—भ२। काले--भ७-मॅ-मु॥

[ १०. १९१ ] ८८८. १६ [ ४ ] समांना समानानि—त१.२.३.७-भ२। समानानि—भ१.४.७.८-मॅ-मु॥

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 10 | 19 | Mss. | Ms. |
| ३३ | ११ | महोदयैः। | महोदयैः |
| ५० | ९ | ०द्रुळिखितं | ०द्रुळितं |
| ६० | २३ | बार्भ्रीघातेत | बार्भ्रीशतेन |
| ६८ | ३२ | स्तोतुन् | स्तोतुम् |

# प्रथमद्वितीयतृतीयभागसंबन्धिपाठभेदादिविषयकविचारस्य

## परिशिष्टम्

### प्रथमो भागः

१. १७. अभ्यर्हितं पूर्वम्—( पा. सू. २.२.३४.४ )॥

२. २. तदेतदृचाभ्युक्तम्—( गो. ब्रा. १. १. ९ )॥

२. ३. बह्व। 'बह्वय' इति पठनीयम्। हैद्राबादनगरस्थलिखितपुस्तके ( ३९/१ क्रमाङ्कयुते ) तथोपलभ्यते॥

२. २४. वृत्रं शत्रुं हन्तुं शक्नोत्याभिर्ऋग्भिरित्येषा व्युत्पत्तिः कस्मिंश्चिद्ब्राह्मणे विज्ञायते। शां. ब्रा. २३.२ द्रष्टव्यम्।

२. २६. प्रणयनादि°। 'अप्प्रणयनादि°' इति हैद्राबादपुस्तकानुसारेण पठनीयम्॥

३६. १० [ १. १. २ ] तंनन्प्रत्ययः। 'तनप्रत्ययः' इति भाव्यम्॥

३८. ८ [ १. १. ६ ] शाट्यायनब्राह्मणपाटेन साम्यमादधानो जैमिनीयब्राह्मणपाठो बटकृष्णघोषमहोदयैः प्रकाशितः[1]॥

२१३. १९ [ १. २९. ७ ] सहस्रेषु इति पदम्। सहस्रेषु इत्यशुद्धम्॥

३६१. २० [ १. ५१. १३ ] जैमिनीयब्राह्मणेऽपि शाट्यायनब्राह्मणसमानः पाठः[2]॥

३६२. ९ [ १. ५१. १४ ] शाट्यायनब्राह्मणसदृशो जैमिनीयब्राह्मणपाठः ( ३. १५ ) बटकृष्णघोषमहोदयानां पुस्तके[3] द्रष्टव्यः॥

४२४. ८ [ १. ६२. ३ ] 'अन्नादिर्नी ते' एतस्मादारभ्य 'स इन्द्रोऽलभतेति' एतावत्पर्यन्तं शाट्यायनकवचनम्। जैमिनीयब्राह्मणे 'अन्नादिनीमरे ते सरमे प्रजां करोमि या नो गा अन्वविद इति' इयानेवांशः। शाट्यायनकजैमिनीयवचनानुसारेण गवामन्वेषणानन्तरं सरमायाः प्रजाया अन्नं प्रदातुमिन्द्रः प्रतिज्ञातवान्। सायणभाष्ये तु साररूपेणोद्धृतायां कथायां सरमा गवामन्वेषणात्पूर्वमेव प्रजाया अन्नप्रदानार्थमिन्द्रेण सह समयं चक्र इति लिखितम्[4]॥

४४०. २७ [ १. ६४. ८ ] पृषत्यः श्वेतबिन्द्वङ्किता मृग्य इत्यैतिहासिकाः (?)॥

४५९. २०. [ १. ६९. ४ ] प्वादीनां...ह्रस्वत्वम्। दुष्टेयं व्याकरणप्रक्रिया। 'मीनातेर्निगमे' इति सूत्रेण ह्रस्वत्वम्॥

४६९. १७ [ १. ७१. १० ] प्वादीनां...ह्रस्वत्वम्। प्राग्वत् 'मीनातेर्निगमे' इति सूत्रेण ह्रस्वत्वम्॥

५२३. ३ [ १. ८४. १३ ] सायणाचार्यैः साररूपेणोद्धृतः शाट्यायनपाठो वेङ्कटमाधवभाष्ये साक्षादुपलभ्यत इति प्रायस्तत्समानेन जैमिनीयब्राह्मणपाठेनानुमातुं शक्यम्[5]। वेङ्कटमाधवभाष्यगतः चतुर्दशमन्त्रस्थः पाठोऽत्र दीयते—

1. *Collection of the Fragments of Lost Brāhmaṇas*, Batakrishna Ghosh, Calcutta 1935, p. 1
2. Ibid. p. 6. 3. Ibid. pp. 7-12. 4. Ibid. p. 13. 5. Ibid. pp. 13-18.

'दध्यङ् ह वा आथर्वणस्तेजस्वी ब्रह्मवर्चस्यास। तं ह स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदैव विशीर्षाणः शेरते। स ह स्वर्गं लोकमुच्चक्राम। स इन्द्रोऽसुरैरभिबाढ उवाच क्व नु स दध्यङ्ङभवदिति। तस्मै होचुः स्वर्गं वै भगवः स लोकमुदक्रामदिति। स होवाच न ह्यस्येह किंचित् परिशिष्टमस्तीति। तस्मै होचुरासीदेतदाश्वं शीर्षं येनाश्विभ्यां देववेदं प्राब्रवीत्। तत्तु न विद्म यत्राभवदिति। तद्वा अन्विच्छतेति। तद्धान्वैषिषुः। इच्छन्नश्वस्येत्यादिकमुक्त्वाह। शर्यणावद्ध नाम कुरुक्षेत्रस्य जघनार्धे सरः स्कन्दते। तदनुविद्याजहुः तदस्मै प्रायच्छन्। तद्ध स्मासुराणां प्रकाशेऽधारयन् तद्ध स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदैव विशीर्षाणः शेरते। स ह तैरेवास्थिभिर्नव नवतीर्जघानासुराणामिति'॥

५३६. ७ [ १. ८६. ४ ] मरुतो देवाः सोमस्य मत्सन्। (निविदध्यायः,खिल.५.५.९)॥

५४२. १७ [ १. ८८. १ ] तथा चाहुः–सर्वा स्त्री मध्यमस्थाना पुमान्वायुश्च सर्वगः। गणाश्च सर्वे मरुत इति वृद्धानुशासनम्॥ क एते वृद्धाः?

५४२. १८ पौराणिकास्त्वाचक्षते–मारीचात्कश्यपात्सप्तगणात्मका एकोनपञ्चाशत्संख्याका मरुतो जज्ञिरे इति। ब्रह्मपु. १२४. ७१, १०३ द्रष्टव्यम्॥

६२७. २१ [ १. १०२. ६ ] तथा च शाट्यायनकं–सिम इति वै श्रेष्ठमाचक्षते। तृतीयभागे ५४७. १४ [ ८. ४. १ ] टिप्पणी द्रष्टव्या॥

६४०. ६ [ १. १०५ ] अत्र सायणभाष्ये शाट्यायनब्राह्मणगता त्रितस्य कथा साररूपेणोद्धृतास्ति। वेङ्कटमाधवभाष्ये स्वयं शाट्यायनपाठ उद्धृतोऽस्ति। स यथा—

'आप्त्यान् सातं नयतोऽरण्ये पिपासाविन्दत्। ते धन्वन् कूपमविन्दन्। तत्र द्वितोऽवरोढुमकामयत नैकतस्त्रितोऽवारोहत्। तौ यदापिबतामतृप्यतामथ हैनं तदेव रथचक्रेणापिधाय गोभिः प्रैताम्। सोऽकामयतोदित इयां गातुं नाथं विन्देयेति'। जैमिनीयब्राह्मणपाठः प्राय एतत्समान एव[1]।

६४५. १४ [ १. १०५. १० ] शाट्यायनपाठेन साद्दश्यमादधानो जैमिनीयब्राह्मणपाठोऽधो दीयते[2]—'अथो हैषामेतान्येव पञ्च ज्योतींषि यान्येषु लोकेषु दीप्यन्तेऽग्निः पृथिव्यां वायुरन्तरिक्ष आदित्यो दिवि चन्द्रमा नक्षत्रेषु विद्युदप्सु'॥

७१९. २७ [ १. ११६. १२ ] इयं दधीच आथर्वणस्य कथा भाष्यकारैः शाट्यायनकवाजसनेयकाभ्यामुद्धृता॥ अस्मिन् विषये श. ब्रा.१४.१.१.१८-२४ द्रष्टव्यम्। वेङ्कटमाधवाचार्यैरपि स्वकीय ऋग्भाष्य इयं कथा ताभ्यामेवोद्धृत्य दत्ता। वेङ्कटमाधवभाष्यगतः शाट्यायनकपाठः जैमिनीयब्राह्मणपाठाद्भिन्नः। वेङ्कटमाधवभाष्यं[3] (ऋ. सं. १. ११६. १२) द्रष्टव्यम्॥

७२४. ५ [ १. ११६. १८ ] रयिशब्दाच्च। 'रेशब्दैश्च' इति भाष्यम्। ऋ. सं. १. १८.२; ७९.५; ९२.१४; ९५.११; १०.१८०.१ द्रष्टव्यम्॥

७७६. १६ [ १. १२२. १४ ] 'मणिग्रीवम्' इति पदं स्वररहितमिति वेङ्कटमाधवाचार्यैः स्वकीय ऋग्वेदभाष्ये लिखितम्[4]॥

1. Ibid. pp. 19-21. 2. Ibid. pp. 22-24. 3. Ṛgveda Saṁhitā with Veṅkaṭa Mādhava's *Ṛgarthadīpikā*, edited by Dr. L. Sarup, Lahore. 4. Cf. Ṛgvedānukramaṇī by Mādhava Bhaṭṭa, edited by Dr. C. Kunhan Raja, Madras 1932, preface p. xxv.

८१८. २६ [ १. १२९. ४ ] पृत्सु । 'पृत्सुषु' इति संहिता ॥

१११३. २५ [ १. १९१. १२ ] 'पुष्पम्' इति संहिता । 'पुष्यम्' इति भाष्यकारः ॥

## द्वितीयो भागः

१. १० [ २. १ ] त्वमग्न इति... ..आङ्गिरस उच्यते । इति ऋष्यनुक्रमणे शौनकस्य वचनम् ॥

१८. ८ [ २. ३. १० ] अग्निर्वै देवानां शमिता इति श्रुतेर्मूलमन्वेषणीयम् ॥

२८. १८ [ २. ७. ६ ] ड्रम्नः । 'द्रुम्नः' इति शुद्धम् । एवमेव भाष्येऽपि ॥

४५. ८ [ २. १२ ] तान्दृष्ट्वा निर्जगामेन्द्रो यज्ञाद्गृत्समदाकृतिः। अस्य मूलं नोपलब्धम् ॥

४७. १९ [ २. १२. ५ ] मीङ्‌ हिंसायाम् । 'मीञ्' इति भाष्यम् ॥

१०२. १६ [ २. २४. १२ ] मीङ्‌ हिंसायाम् । पूर्ववत् 'मीञ्' इति शुद्धम् ॥

११५. २७ [ २. २८ ] इदमेकादशर्चं......चेति शुश्रुम । अस्य मूलमन्वेषणीयम् ॥

१२९. २ [ २. ३१. ४ ] छन्दांसि वै ग्नाः ( तै. सं. ५.१.७.२ ) ॥

१४४. ५ [ २. ३४. ८ ] प्रस्नुतस्तनी । ऋ. सं. १.३८.८ भाष्यं द्रष्टव्यम् ॥

१६२. ११ [ २. ३८. १० ] छन्दांसि वै ग्नाः ( तै. सं. ५.१.७.२ ) ॥

१६२. १२ [ २. ३८. १० ] पशवो वै रयिः ( तै. ब्रा. १.४.४.९ ) ॥

१८८. २० [ ३. २. ९ ] प्रजा वा अनूयाजाः इति श्रुतिः कुत्रत्येति न ज्ञायते ॥

१८८. २२ [ ३. २. ९ ] त्रीन् परिधींस्तिस्रः समिधः इति निगमस्य मूलमन्वेषणीयम् ॥

२५०. ९ [ ३. १५. ४ ] एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः । ताण्ड्य म. ब्रा. १६. १. २ अत्र 'एष वाव प्रथमो यज्ञानाम्' इति ॥

२५८. १ [ ३. १७. ३ ] प्रजामेका रक्षत्यूर्जमेका राष्ट्रमेका रक्षति । अस्याः श्रुतेर्मूलं नोपलब्धम् ॥

३५५. २५ [ ३. ३४. १ ] चैत्रमासे तपेदिन्द्रः इति स्मृतिवचनं कत्यम् ? ऋ. सं. १०. १०७. १ भाष्ये 'चैत्रमासे तयोरिन्द्रः' इति ॥

४२३. १२ [ ३. ५१. ७ ] इन्द्रः शार्यातस्य यज्ञे सोमरसानपिबदित्येषोऽर्थः कौषीतके स्पष्टमुक्तः । शाङ्खायनब्राह्मणे न स उपलब्धः ॥

४६४. ३ [ ३. ५६. ४ ] मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः चैत्राद्यः स ज्ञेयः । कत्यमिदम् ? ॥

४६४. १८ [ ३. ५६. ५ ] त्रयो वा इमे त्रिवृतो लोकाः ( ऐ. आ. १.२.२ ) ॥

४८६. १२ [ ३. ६२. ३ ] पशवो वै रयिः ( तै. ब्रा. १.४.४.९ ) ॥

४८६. १४ [ ३. ६२. ३ ] वाचि हि प्राणं जुहुमः प्राणे वा वाचम् । कत्येयं श्रुतिः ? ॥

५००. १३ [ ४. १. १६ ] जानन्त्यो । 'जानत्यो' इति भाष्यम् ॥

५३६. ४ [ ४. ६. ४ ] यद्वै देवैर्जोष्यते हविस्तद्गिरिमात्रं वर्धते । इयं श्रुतिरन्वेषणीया ॥

५४६. १९ [ ४. ९. ५] स हि सप्तदशः कर्मणामुपद्रष्टा भवति इत्युक्तिरापस्तम्बे द्रष्टव्या ॥

६०८. २० [ ४. २४. ९ ] अल्पं यः परिगृह्णाति......वस्त्रमित्ययम्' एते श्लोकाः संप्रदायविद्भिः (?) पठयन्ते ॥

६१६. १० [ ४. २७. १ ] श्येनभावं......गर्भे नु सन्निति । अस्य श्लोकस्य मूलस्थानं नोपलब्धम् ॥

६५६.१४ [४.३८.२] तानग्निरश्वो भूत्वाभ्यद्रवत् इति कस्मिंश्चिद्ब्राह्मणे समाम्नातम् ॥

६७९. २ [ ४. ४५. १ ] इदमन्नमशनं पानं खादश्च इति कुत्र श्रुतम् ? ॥

६७९. ३ [ ४. ४५. १ ] माता पिता पुत्रस्तदेव तन्मिथुनम् ( तै. सं. ६.५.६.३ )॥

७१५. २ [ ४. ५८. ३ ] शाब्दिकास्तु......( पा. म. १.१.१ ) ॥

७२४. ५ [ ५. २. १ ] जैमिनीयब्राह्मणगतस्त्रैवृष्णकथाभागोऽधो दीयते—

'वृशो वै जानस्त्र्यरुणस्य त्रैवृष्णस्यैक्ष्वाकस्य राज्ञः पुरोहित आसाथ ह स्म ततः पुरा राजभ्यः पुरोहिता एव रथान् संगृह्णन्त्यौपद्रष्ट्र्याय नेदयं पापं करवदिति । तौ हाधावयन्तौ ब्राह्मणकुमारं पथि क्रीळन्तं रथचक्रेण विचिच्छिदतुरितरो हाधावयन्नभिप्रयुयावा अपेतर आययाम स हाथि न शशाकापयन्तुम् । तं ह तदेव विचिच्छिदतुस्तस्मिन्होदाते त्वं हन्तासि त्वं हन्तासीति......नेति हेतर उवाचाप वा अहमायांसं स त्वमभिप्रायौषीस्त्वमेव हन्तासीति । तौ वै पृच्छावहा इति । तौ हैक्ष्वाकूनेव प्रश्नमेयतुस्ते हैक्ष्वाकव ऊचुर्यो वाव रथं संगृह्णाति स रथस्येशे त्वमेव हन्तासीति वृशमेव पराब्रुवन् । सोऽकामयतोदितं इयां गातुं नाथं विन्देय समयं कुमारो जीवेदिति । स एतत्सामापश्यत्तेनैनं समैरयत् ......स क्रुद्धो जनमगच्छदनृतं मा व्यवोचन्निति । तेषां हैक्ष्वाकूणामग्नेर्हरोऽपाक्रामद्यं सायमोदनमध्यदधुः प्रातः सोऽपच्यत यः प्रातः सायं स ब्राह्मणं वा अनार्यमपाराम तेषां नोऽग्नेर्हरोऽपाक्रमीदेतैनमनुमन्त्रयामहा इति । तमन्वमन्त्रयन्त । स आगच्छद्यथा राज्ञा ब्राह्मणोऽनुमन्त्र्यमाण आगच्छेदेवम् । स आगत्याकामयत पश्येयमिदमग्नेर्हर इति । स एतत्सामापश्यत्तदभ्यगायत । तदपश्यत्पिशाची वा इयं त्र्यरुणस्य जाया सैनत्कशिपुनाच्छादयित्वाध्यास्त इति तदभिव्याहरत् '।

वेङ्कटमाधवस्य ऋग्वेदभाष्येऽपि शाट्यायनोक्त इतिहासः श्लोकैर्बद्ध्वोद्धृतः स द्रष्टव्यः । सायणभाष्यापेक्षया वेङ्कटमाधवभाष्यगतः कथाभागो जैमिनीयब्राह्मणपाठेनाधिकतरं सादृश्यमावहति । वेङ्कटमाधवभाष्ये शाट्यायनब्राह्मणभागोऽशत उद्धृतोऽस्ति सोऽत्र दीयते—

'स आगच्छद्यथा राज्ञा ब्राह्मणोऽनुमन्त्र्यमाण आगच्छेदेवम् । स एतत्सामापश्यत्तदभ्यगायत तदपश्यत्पिशाची वा इयं त्र्यरुणस्य जाया सैनत्कशिपुनाच्छादयित्वाध्यास्त इति ' [१] ॥

८२२. १७ [ ५. ३४. ४ ] इन्द्रो यतीन्......प्रायच्छम् । ताण्ड्यमहाब्राह्मणे 'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्' इतीयानंशो बहुवारमागतः ( ८.१.४.; १३.४. १७ इ. ) ॥

८३८. २ [ ५. ४०. ८ ] स्वर्भानुश्चासुरः......°दपाकृन्तन् इति श्रुतिः हारिद्रविकब्राह्मणादुद्धृता । हारिद्रविकब्राह्मणं नोपलभ्यते । 'यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकम्' इति निरु. १०. ५ । तै. सं. १.५.१.१; श. ब्रा. ९.१.१.६ अपि द्रष्टव्यम् । पातञ्जलमहाभाष्ये (पा. सू. ४.२.१०४. १९) हारिद्रविणा निर्दिष्टाः । 'हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः' इति च काशिका ( पा. सू. ४. २. २. १०४ ) । चरणव्यूहे हारिद्रवीया इति यजुर्वेदस्य शाखा[२] ॥

1. Batakrishna Ghosh, Lost Brāhmaṇas, pp. 41–6. 2. Ibid. p. 114.

८४१. १२ [ ५. ४१. ७ ] ईषिः प्रापणकर्मा स्यादुपप्राभिः समन्वितः । अयं श्लोकार्धः कुत उद्धृतः ? ऋ. सं. ९. १३ टिप्पणी द्रष्टव्या ॥

८९४. १२ [ ५. ५२. १७ ] अदितिगर्भे... अभवन्निति पुराणेषु ( ? ) प्रसिद्धम् ॥

९२९. १२ [ ५. ६१. ८ ] अर्धं शरीरस्य भार्या इति कस्याः स्मृतेः ? ॥

९३१. १६ [ ५. ६१. १७ ] संपन्नऋषिभावस्य ...... वनं जगामेति । नीतिमञ्जरी ( ८६ ) द्रष्टव्या ॥

९६५. १७ [ ५. ७६ ] °तिरिक्तोक्थ्ये । '°तिरिक्तोक्थे' इति पठनीयम् ॥

९६८. १७ [ ५. ७७. २ ] पूर्वाह्णो वै देवानाम् इति श्रुतिः कस्या ? ॥

९८९. २१ [ ५. ८५. २ ]वनेषु हीदमेषु...व्यन्तरिक्षं ततान इति वाजसनेयकम् (?) ॥

९९१. १४ [ ५. ८५. ६ ] एष ब्रह्मा । कुत्रेयं श्रुतिः ? ॥

## तृतीयो भागः

२८. २१. [ ६. ९. २ ] एतच्च संप्रदायविद्भिरुक्तं ( ? ) ॥

२८. २३. आत्मविदः ( ? ) ॥

१३५. २६. [ ६. ४२. २ ] अन्य आह ( ? ) ॥

१४६. ५. [ ६. ४४. २४ ] चक्षुश्च श्रोत्रं च ...... ( खिल २. १२ ) ॥

१६५. २७. [ ६. ४७. २० ] अगव्यूती......स्तुतः । बृहद्देवतापाठस्तु 'अगव्यूति स्तौति देवान् पादो भूमिमथोत्तरः । बृहस्पतिं तृतीयस्तु इन्द्रमेवोत्तमं पदम्' ( बृहद्दे. ५. १११ ) । अनु. भा. ६. ४७. द्रष्टव्यम् ॥

१७२. २७. [ ६. ४८. ७ ] भरत्ऽवाजे इति शुद्धः पदपाठः ॥

२७०. २४. [ ७. २ प्रस्ता. ] पशाविष्टाविदम् । 'पशौ वसिष्ठानामिदम्' इति युक्तमिति टिप्पण्यां संसूचितम् । ऋ. सं. १०. ११० प्रस्तावनायां 'पशौ जामदग्न्यानामिदमाप्रीसूक्तम्' इति पाठानुसारेण सूचितपाठो युक्ततरः प्रतिभाति ॥

३५०. २७. [ ७. ३३. ७ ] कृणोति । करोति–शाट्या. ब्रा., जै. ब्रा. ॥

३५०. २८. तासां ज्योतिः । तेषां तज्ज्योतिः–शाट्या ब्रा.; तेषामेति ( तेषामेतत् ) ज्योतिः–जै. ब्रा. ॥

४०४. ९. [ ७. ५७. ३ ] कश्चिदेकवाक्यतामाह ( ? ) ॥

४५८. ३१. [ ७. ८२. ३ ] अस्य मदे...°पिन्वदपितः । खिलसूक्ते ( ५. ५ ) '°जिन्वदजुवोऽपिन्वदजितः' इति पाठः ॥

४७१. १५. [ ७. ८७. ४ ] अपर आह ( ? ) ॥

४७२. ३१. [ ७. ८८. २ ] स्वर्ऽयं° इति शुद्धः संहितापाठः ॥

४८०. ११. [ ७. ९१. ५ ] ग्रहशब्दस्य नपुंसकलिङ्गप्रयोगश्चिन्त्यः ॥

४९६. २३. [ ७. ९८. ६ ] न केवलमेकस्या एव गोः पतिः । अयमभ्यूहितः पाठः ऋ. सं. १०. १०८. ३; १६६. १ भाष्यगतसमानपाठेन समर्थितः ॥

५१२. २३. [ ७. १०४. १२ ] अत्र केचिदाहुः (?) ॥

५४७. १४. [ ८. ४. १ ] सिम इति वै श्रेष्ठमाचक्षते। जैमिनीयब्राह्मणेऽप्ययं पाठ उपलभ्यते। वाजसनेयकस्थोऽयमिति सायणाचार्यैर्लिखितं किंतु शतपथब्राह्मणेऽयं नास्ति। भाष्यकाराणामयं प्रमाद इति वक्तुं न शक्यते यतो वाजसनेयकपाठत्वेनोद्धृताः केचनान्येऽपि पाठा वाजसनेयके नोपलभ्यन्ते[1] ॥

५५५. १४ [ ८. ५. २ ] छान्दसत्वम्। 'छान्दसं वत्वम्' इति युक्तः पाठः। त३-पुस्तके तथोपलभ्यते ॥

६९६. १८ [ ८. २९. २ ] 'अग्नये गृहपतये' इति श्रुतेर्मूलं नोपलब्धम् ॥

६९७. ६ [ ८. २९. ५ ] प्रथमो दैव्यो भिषक्—तै. सं. ४.५.१.२ ॥

७. ११. २२ [ ८. ३३. ६ ] श्मश्रु युद्धमिति वृद्धा (?) वदन्ति ॥

७१४. १६ [ ८. ३३.१७] प्रायोगिश्चासङ्गो......दानं दत्त्वा। अस्य मूलं नोपलब्धम्॥

७७९. १४-८०५.११ [ ८. ४९-५८ ] वालखिल्यसूक्तपाठभेदाः खिलेषु प्रथमाध्याये ४, ६ सूक्तयोः, तृतीयाध्याये १-८, १८ सूक्तेषु च द्रष्टव्याः ॥

९०४. १० [ ८. ९१. १ ] अभ्यवयन्ती। अभ्यवयती[2]—जै. ब्रा. ॥

९०४. ११ सा तमभिव्याजहार। साभिव्याहरत्[2]—शाट्या. ब्रा., जै. ब्रा. ॥

९०४. ११ अस्यै त इदं। अस्यै वा इदं[2]—शाट्या. ब्रा., जै. ब्रा. ॥

९०५. ८ [ ८. ९१. ३ ] सोमपीथ इह वा अस्य। सोमपीथौ ह वा अस्य स[2]—शाट्या. ब्रा., जै. ब्रा. ॥

९०५. ३० [ ८. ९१. ५ ] किं कामयसीति। किं कामासीति[2]—शाट्या.ब्रा.,जै. ब्रा. ॥

९०५. ३१ पिता स। 'पितास' ( = पिता + आस ) इति पठनीयम्। जैमिनीयब्राह्मणेऽप्येवमेव पाठः[2] ॥

९०६. १८ [ ८. ९१. ७ ] तां खेऽनसोऽत्यबृहत्सा संश्लिष्टकाभवत्। तां खेऽनसोऽत्यबृहत्सा कृकलास्यभवत्तां ग्ने युगस्यात्यबृहत्सा संश्लिष्टकाभवत्—शाट्या. ब्रा., जै. ब्रा. ॥

९२८. २ [ ८. ९५. ७ ] वासुरान्। वा असुरान्—शाट्या. ब्रा. ॥

९२८. २ तत ऋषयः। त एत ऋषयः—वेंकटमाधवभाष्ये ॥

९३५. १ [ ८. ९६. १४ ] केचित् (?) इष्यामि वो मरुत इति पठन्ति ॥

1. Ibid. p. 19. 2. Ibid. pp. 57-60.

## ॥ ऋग्वेदसंहिता ॥

श्रीमत्सायणाचार्यविरचितभाष्यसमेता

९–१० मण्डले

ॐ

# ऋग्वेदसंहिता

## श्रीमंत्सायणाचार्यविरचितभाष्यसमेता

## ॥ अथ नवमं मण्डलम् ॥

नवमे[1] मण्डले[1] सप्तानुवाकाः । तत्र प्रथमेऽनुवाके चतुर्विंशतिसंख्याकानि सूक्तानि । तत्र 'स्वादिष्ठया' इति दशर्चं प्रथमं सूक्तम् । अत्रानुक्रम्यते—'स्वादिष्ठया दश मधुच्छन्दाः' इति । वैश्वामित्रो मधुच्छन्दा ऋषिः । प्राग्वत्सप्रीयपरिभाषया गायत्री छन्दः । 'नवमं मण्डलं पावमानं सौम्यम्' (अनु.) इति वचनात् पवमानगुणविशिष्टः सोमो देवता । ग्रावस्तोत्रेऽर्बुदसूक्तस्य प्रागुत्तमाया इदमादिकं सर्वं पावमानं विकल्पेनावपनीयम् । सूत्रितं च—'प्रैते वदन्त्वित्यर्बुदं प्रागुत्तमाया[2] आ व ऋञ्जसे प्र वो ग्रावाण इति सूक्तयोरन्तरोपरिष्टात्पुरस्ताद्वा पावमानीरोप्य यथार्थमा[3] वा ग्रहग्रहणात्[3]' (आश्व. श्रौ. ५. १२) इति । उपाकर्मणि मण्डलादिग्रहण आद्या । सूत्रं पूर्वमेवोदाहृतम् ॥

**स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ १ ॥**

स्वादिष्ठया । मदिष्ठया । पवस्व । सोम । धारया । इन्द्राय । पातवे । सुतः ॥ १ ॥

हे ^सोम ^इन्द्राय ^पातवे पातुं ^सुतः अभिषुतः त्वं ^स्वादिष्ठया स्वादुतमया ^मदिष्ठया अतिशयेन मादयित्र्या ^धारया ^पवस्व क्षर ॥

**रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् । द्रुणा सधस्थमासदत् ॥ २ ॥**

रक्षःऽहा । विश्वऽचर्षणिः । अभि । योनिम् । अयःऽहतम् ।
द्रुणा । सधऽस्थम् । आ । असदत् ॥ २ ॥

^रक्षोहा रक्षसां हन्ता ^विश्वचर्षणिः विश्वस्य द्रष्टा सोमः ^अयोहतं हिरण्येन हतम् । तथा च ब्राह्मणं—'हिरण्यपाणिरभिषुणोति' इति । ^द्रुणा द्रोणकलशेनाधिषवणफलकाभ्यां[4] वा ^सधस्थं सहस्थानं ^योनिम् अभिषवस्थानम् ^अभि ^आसदत् अभ्यासीददिति ॥

**वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ ३ ॥**

वरिवःऽधातमः । भव । मंहिष्ठः । वृत्रहन्ऽतमः । पर्षि । राधः । मघोनाम् ॥ ३ ॥

हे सोम त्वं ^वरिवोधातमः अतिशयेन धनानां दाता ^भव । 'वेदो वरिवः' इति धननामसु पाठात् । ^मंहिष्ठः दातृतमश्च भव । सर्वदातृत्वमत्रोच्यते इत्यपुनरुक्तिः । ^वृत्रहन्तमः अतिशयेन शत्रूणां हन्ता भव । किंच ^मघोनां धनवतां शत्रूणां ^राधः धनं च ^पर्षि अस्मभ्यं प्रयच्छ ॥

---

१. ग-त-भ-तत्र । २. ग-प्रागुपेततमाया । ३. ग-यथार्थमावग्रहणात्; त१-यथार्थमावाग्रहणात्; त५.६-भ१-यथार्थमावापग्रहणात्; भ४-यथार्थमतापग्रहणात् । ४. भ१-°कलशेविषवण°; भ४-'कलशेधिषवण° ।

अभ्यर्ष महानां देवानां वीतिमन्धसा । अभि वाजमुत श्रवः ॥ ४ ॥

अभि । अर्ष । महानाम् । देवानाम् । वीतिम् । अन्धसा । अभि । वाजम् । उत । श्रवः ॥४॥

हे सोम त्वं ᵛमहानां महतां ᵛदेवानां ᵛवीतिं यज्ञम् ᵛअन्धसा धानाद्यन्नेन सह ᵛअभ्यर्ष अभिगच्छ। ᵛउत अपि चाभिगच्छंस्त्वं[1] ᵛवाजं बलं ᵛश्रवः अन्नं चाभिगमयास्मानित्यर्थः ॥

त्वामच्छा चरामसि तदिदर्थं दिवेदिवे । इन्दो त्वे न आशसः ॥ ५ ॥

त्वाम् । अच्छ । चरामसि । तत् । इत् । अर्थम् । दिवेऽदिवे ।
इन्दो इति । त्वे इति । नः । आऽशसः ॥ ५ ॥

हे ᵛइन्दो यागेषु क्रियमाण सोम ᵛत्वामच्छ त्वां प्रति ᵛचरामसि वयं चरामः। ᵛदिवेदिवे प्रतिदिनमस्माकं ᵛतदित् तदेव त्वत्परिचरणमेव ᵛअर्थं कार्यं नान्यत्कार्यमस्ति। ᵛनः अस्माकम् ᵛआशसः आशंसनान्यपि ᵛत्वे त्वय्येव नान्यत्र ॥ ॥ १६ ॥

पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ॥ ६ ॥

पुनाति । ते । परिऽस्रुतम् । सोमम् । सूर्यस्य । दुहिता । वारेण । शश्वता । तना ॥ ६ ॥

हे सोम ᵛते तव ᵛपरिस्रुतं क्षरन्तं ᵛसोमं सोमरसं ᵛसूर्यस्य ᵛदुहिता श्रद्धा देवी ᵛवारेण[2] वालेन ᵛशश्वता शाश्वतेन ᵛतना विस्तृतेन ᵛपुनाति[2]। तथा च वाजसनेयिन आमनन्ति–' श्रद्धा वै सूर्यस्य दुहिता श्रद्धा ह्येनं पुनाति[3] ' इति[3] ॥

तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश । स्वसारः पार्ये दिवि ॥ ७ ॥

तम् । ईम् । अण्वीः । सऽमर्ये । आ । गृभ्णन्ति । योषणः । दश । स्वसारः । पार्ये । दिवि ॥७॥

ᵛसमर्ये समनुष्ये यज्ञे ᵛपार्ये ᵛदिवि सौत्येऽहनि ᵛयोषणः स्त्रियः ᵛस्वसारः स्वयं सरन्त्यो दशसंख्याकाः ᵛअण्वीः[4] अण्व्योऽङ्गुलयः। ' अग्रुवः अण्व्यः ' इत्यङ्गुलिनामसु पाठात्। ᵛतमीं तमेनं सोमम् ᵛआ ᵛगृभ्णन्ति आगृह्णन्ति ॥

तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम् । त्रिधातु वारणं मधु ॥ ८ ॥

तम् । ईम् । हिन्वन्ति । अग्रुवः । धमन्ति । बाकुरम् । दृतिम् । त्रिऽधातु । वारणम् । मधु ॥८॥

ᵛतमीम् एनं सोमम् ᵛअग्रुवः अङ्गुलयः ᵛहिन्वन्ति अभिषवदेशं प्रति प्रेरयन्ति। प्रेरयित्वा च ᵛबाकुरं भासमानं ᵛदृतिं दृतिसदृशांशुमेनं[5] सोमं ᵛधमन्ति अभिषुण्वन्ति[6]। यद्यपि धमतिरभिषवकर्मा न भवति तथाप्यौचित्यादत्राभिषवपरो भविष्यति। तदेतत् सोमात्मकं ᵛमधु वस्तु ᵛत्रिधातु त्रिस्थानम्। द्रोणकलश आधवनीयः पूतभृदिति त्रिधातवः। ᵛवारणं शत्रूणां वारकं च भवति ॥

अभीममघ्न्या उत श्रीणन्ति धेनवः शिशुम् । सोममिन्द्राय पातवे ॥ ९ ॥

अभि । इमम् । अघ्न्याः । उत । श्रीणन्ति । धेनवः । शिशुम् । सोमम् । इन्द्राय । पातवे ॥९॥

१. त१.५.६-भ१–चाभि° । २. ग-भ–' वारेण······पुनाति ' नास्ति । ३. ग–पुनंतीति । सा वारेण वालमयेन शश्वता दृढेन वस्त्रेण पुनाति शोधयति । यजुर्ब्राह्मणं वारेण शश्वता तनेत्याह वारेणा हि सोमं पुनंतीति; त-भ१.२.४ पुनंतीति । ४. ग-त५–अण्वीरेता । ५. ग–°सदृशुमंशुमेनं; घ–°सदृशं मधु । ६. ग-त१.२.५.६.७–भ–अभिषुण्वंति च ।

उत अपि च इमम् एनं शिशुं बालं सोमम् अघ्न्याः अहन्तव्याः धेनवः गावः इन्द्राय पातवे पातुम् अभि श्रीणन्ति। स्वकीयेन पयसा संस्कुर्वन्तीत्यर्थः ॥

अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते। शूरो मघा च मंहते ॥ १० ॥

अस्य। इत्। इन्द्रः। मदेषु। आ। विश्वा। वृत्राणि। जिघ्नते। शूरः। मघा। च। मंहते ॥ १० ॥

शूरः वीरः इन्द्रः अस्येत् अस्य सोमस्यैव मदेषु विश्वा विश्वानि वृत्राणि शत्रून् आ जिघ्नते आहन्ति। मघा मघानि धनानि च मंहते यजमानेभ्यः प्रयच्छति ॥ ॥ १७ ॥

'पवस्व' इति दशर्चं द्वितीयं सूक्तं काण्वस्य मेधातिथेरार्षं[1] गायत्रं पवमानसोमदेवताकम्। तथा चानुक्रान्तं–'पवस्व मेधातिथिः[2]' इति। उक्तो विनियोगः ॥

पवस्व देववीरति पवित्रं सोम रंह्या। इन्द्रमिन्दो वृषा विश ॥ १ ॥

पवस्व। देवऽवीः। अति। पवित्रम्। सोम। रंह्या। इन्द्रम्। इन्दो इति। वृषा। आ। विश ॥ १ ॥

हे सोम देववीः देवकामस्त्वं रंह्या वेगेन पवित्रं यथा भवति तथा अति पवस्व अतिक्षर। किंच हे इन्दो वृषा सेचकस्त्वम् इन्द्रम् आ विश प्रविश ॥

आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः। आ योनिं धर्णसिः सदः ॥ २ ॥

आ। वच्यस्व। महि। प्सरः। वृषा। इन्दो इति। द्युम्नवत्ऽतमः।
आ। योनिम्। धर्णसिः। सदः ॥ २ ॥

हे इन्दो सोम महि महान् वृषा कामानां वर्षकः द्युम्नवत्तमः यशस्वितमः धर्णसिः धर्ता त्वं प्सरः पानीयमन्धः आ वच्यस्व अस्मान् प्रत्यागमय। योनिं स्वकीयं स्थानम् आ सदः आसीद च ॥

अधुक्षत प्रियं मधु धारा सुतस्य वेधसः। अपो वसिष्ट सुक्रतुः ॥ ३ ॥

अधुक्षत। प्रियम्। मधु। धारा। सुतस्य। वेधसः। अपः। वसिष्ट। सुऽक्रतुः ॥ ३ ॥

सुतस्य अभिषुतस्य वेधसः अभिलषितस्य विधातुर्यस्य सोमस्य धारा प्रियं प्रीतिकरं मधु अमृतम् अधुक्षत दुग्धे सः सुक्रतुः सुकर्मा[3] सोमः अपः वसतीवरीः वसिष्ट आच्छादयति ॥

महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः। यद्गोभिर्वासयिष्यसे ॥ ४ ॥

महान्तम्। त्वा। महीः। अनु। आपः। अर्षन्ति। सिन्धवः। यत्। गोभिः। वासयिष्यसे ॥ ४ ॥

हे सोम त्वं यत् यदा यज्ञे गोभिः गोविकारैः पयोभिः वासयिष्यसे आच्छादयिष्यसे तदा महान्तं त्वाम् अनु प्रति। सिन्धवः स्यन्दमानाः महीः महत्यः आपः अर्षन्ति गच्छन्ति ॥

समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः। सोमः पवित्रे अस्मयुः ॥ ५ ॥

समुद्रः। अप्ऽसु। ममृजे। विष्टम्भः। धरुणः। दिवः। सोमः। पवित्रे। अस्मऽयुः ॥ ५ ॥

---

१. ग-त१.२.६–मेध्यातिथे°। २. ग-त१.२.६-मु–मेध्यातिथि°। ३. ग-त४.५-मु–शोभनकर्मा; घ-त६–भीमकर्मा; त१.२.७–भामकर्मा; भ४–सोकर्मा।

ᵛसमुद्रः। समुद्द्रवन्त्यस्माद्रसा इति समुद्रः। ᵛविष्टम्भः ᵛदिवः स्वर्गस्य ᵛधरुणः धारकश्च ᵛअस्मयुः अस्मत्कामः ᵛसोमः ᵛअप्सु उदकेषु ᵛमर्मृजे मृज्यते ᵛपवित्रे अभिषिच्यत इत्यर्थः॥ ॥१८॥

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः। सं सूर्येण रोचते॥ ६॥

अचिक्रदत्। वृषा। हरिः। महान्। मित्रः। न। दर्शतः। सम्। सूर्येण। रोचते॥ ६॥

ᵛवृषा कामानां वर्षकः ᵛहरिः हरितवर्णः ᵛमहान् सर्वोत्तमः ᵛमित्रो ᵛन यथा सखा तद्वत् ᵛदर्शतः[1] दर्शनीयो योऽयं सोमः ᵛअचिक्रदत् शब्दं करोति सोऽयं सोमः ᵛसूर्येण सह ᵛरोचते[2] दिवि प्रकाशते॥

गिरस्त इन्दु ओजसा मर्मृज्यन्ते अपस्युवः। याभिर्मदाय शुम्भसे॥ ७॥

गिरः। ते। इन्दो इति। ओजसा। मर्मृज्यन्ते। अपस्युवः। याभिः। मदाय। शुम्भसे॥ ७॥

हे ᵛइन्दो ᵛते तव ᵛओजसा बलेन ᵛअपस्युवः कर्मेच्छासंबन्धिन्यः ताः ᵛगिरः स्तुतयः ᵛमर्मृज्यन्ते शोध्यन्ते ᵛयाभिः गीर्भिस्त्वं ᵛमदाय क्षरन् ᵛशुम्भसे अलंक्रियसे॥

तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे। तव प्रशस्तयो महीः॥ ८॥

तम्। त्वा। मदाय। घृष्वये। ऊँ इति। लोकऽकृत्नुम्। ईमहे। तव। प्रऽशस्तयः। महीः॥८॥

हे सोम यस्य ᵛतव ᵛप्रशस्तयः प्रशंसाः ᵛमहीः महत्यः ᵛघृष्वय ᵛउ त्वत्प्रसादाच्छत्रूणां घर्षणशीलाय यजमानायैव ᵛलोककृत्नुम् उत्तमस्य लोकस्य कर्तारं ᵛतं त्वां सोमं ᵛमदाय ᵛईमहे वयं याचामहे॥

अस्मभ्यमिन्दविन्द्रयुर्मध्वः पवस्व धारया। पर्जन्यो वृष्टिमाँइव॥ ९॥

अस्मभ्यम्। इन्दो इति। इन्द्रऽयुः। मध्वः। पवस्व। धारया। पर्जन्यः। वृष्टिमान्ऽइव॥ ९॥

हे ᵛइन्दो सोम ᵛइन्द्रयुः इन्द्रकामस्त्वं ᵛमध्वः मदकरस्यामृतस्य[3] ᵛधारया ᵛपर्जन्यो ᵛवृष्टिमानिव यथा वर्षवान् पर्जन्यो मेघस्तथा[4] ᵛअस्मभ्यं मेधातिथिभ्यः ᵛपवस्व क्षर॥

गोषा इन्दो नृषा अस्यश्वसा वाजसा उत। आत्मा यज्ञस्य पूर्व्यः॥ १०॥

गोऽसाः। इन्दो इति। नृऽसाः। असि। अश्वऽसाः। वाजऽसाः। उत।

आत्मा। यज्ञस्य। पूर्व्यः॥ १०॥

हे ᵛइन्दो ᵛयज्ञस्य ᵛपूर्व्यः प्रत्नः ᵛआत्मा आत्मभूतस्त्वं ᵛगोषाः अस्मभ्यं गवां दाता ᵛअसि भवसि। ᵛनृषाः पुत्राणां दाता चासि। ᵛअश्वसाः अश्वानां दाता चासि। ᵛउत अपि च ᵛवाजसाः अन्नानां दाता चासि॥ ॥१९॥

'एष देवः' इति दशर्चं तृतीयं सूक्तमाजीगर्तेः शुनःशेपस्यार्षं गायत्रं पवमानसोमदेवताकम्। अनुक्रान्तं च–'एषः शुनःशेपः' इति। उक्तो विनियोगः॥

---

१. त–दर्शतो कं; भ१.४–दर्शतो क। २. घ-मु- सं रोचते। ३. ग–मदकरस्य रसस्य; घ-त७–मदकरस्य सोमस्य; त४–मदकरस्योत्तमस्य; त५–मदकरस्यामततस्य। ४. ग–मेघः क्षरति तथा।

एष देवो अमर्त्यः पर्णवीरिव दीयति । अभि द्रोणान्यासदम् ॥ १ ॥
एषः । देवः । अमर्त्यः । पर्णवीःऽइव । दीयति । अभि । द्रोणानि । आऽसदम् ॥ १ ॥

^देवः द्योतमानः ^अमर्त्यः मरणरहितः ^एषः सोमः ^द्रोणानि द्रोणकलशानि ^अभि अभिलक्ष्य ^आसदम् आसदनार्थं ^पर्णवीरिव यथा पक्षी तथा वेगेन ^दीयति गच्छति ॥

एष देवो विपा कृतोऽति ह्वरांसि धावति । पवमानो अदाभ्यः ॥ २ ॥
एषः । देवः । विपा । कृतः । अति । ह्वरांसि । धावति । पवमानः । अदाभ्यः ॥ २ ॥

^विपा अङ्गुल्या । 'अथर्यो विपः' इत्यङ्गुलिनामसु पाठात् । ^कृतः अभिषुतः[1] ^एषः सोमः ^देवः ^पवमानः क्षरन् ^अदाभ्यः केनाप्यहिंसितश्च सन् ^ह्वरांसि शत्रून् ^अति ^धावति हन्तुमभिगच्छति ॥

एष देवो विपन्युभिः पवमान ऋतायुभिः । हरिर्वाजाय मृज्यते ॥ ३ ॥
एषः । देवः । विपन्युऽभिः । पवमानः । ऋतयुऽभिः । हरिः । वाजाय । मृज्यते ॥ ३ ॥

^पवमानः क्षरन् ^एषः सोमः ^देवः ^विपन्युभिः स्तोतृभिः ^ऋतायुभिः यज्ञकामैः[2] ^हरिः अश्व इव ^वाजाय संग्रामार्थं ^मृज्यते स्तुतिभिरलंक्रियते ॥

एष विश्वानि वार्या शूरो यन्निव सत्वभिः । पवमानः सिषासति ॥ ४ ॥
एषः । विश्वानि । वार्या । शूरः । यन्ऽइव । सत्वऽभिः । पवमानः । सिसासति ॥ ४ ॥

^पवमानः क्षरन् ^शूरः वीरः ^एषः सोमो देवः ^विश्वानि सर्वाणि ^वार्या वरणीयाणि धनानि ^सत्वभिः बलैः ^यन्निव गच्छन्निव ^सिषासति अस्मदर्थं संभक्तुमिच्छति ॥

एष देवो रथर्यति पवमानो दशस्यति । आविष्कृणोति वग्वनुम् ॥ ५ ॥
एषः । देवः । रथर्यति । पवमानः । दशस्यति । आविः । कृणोति । वग्वनुम् ॥ ५ ॥

^पवमानः[3] क्षरन् ^एषः सोमः ^देवः ^रथर्यति अस्मदीयं यागं प्रत्यागमनाय रथं कामयते । ^दशस्यति आगत्य चास्मभ्यमभिलषितं प्रयच्छति[4] । ^वग्वनुं शब्दम् ^आविष्कृणोति । अभिषूयमाणः प्रकटयति ॥ ॥ २० ॥

एष विप्रैरभिष्टुतोऽपो देवो वि गाहते । दधद्रत्नानि दाशुषे ॥ ६ ॥
एषः । विप्रैः । अभिऽस्तुतः । अपः । देवः । वि । गाहते । दधत् । रत्नानि । दाशुषे ॥ ६ ॥

^विप्रैः मेधाविभिः स्तोतृभिः ^अभिष्टुतः परितः स्तुतः ^एषः सोमः ^देवः ^दाशुषे हविषां प्रदात्रे यजमानाय ^रत्नानि रमणीयानि धनानि ^दधत् धारयन् प्रयच्छन् ^अपः वसतीवरीः ^वि ^गाहते प्रविशति ॥

एष दिवं वि धावति तिरो रजांसि धारया । पवमानः कनिक्रदत् ॥ ७ ॥
एषः । दिवम् । वि । धावति । तिरः । रजांसि । धारया । पवमानः । कनिक्रदत् ॥ ७ ॥

---

१. ग–सुतोभिषुतः । २. ग-त-भ-मु–यज्ञकामैर्वा । ३. घ–पवमानः पूयमानः । ४. ग-घ-त-भ–प्रयच्छति च ।

ᵛधारया ᵛपवमानः क्षरन् ᵛएषः सोमः ᵛकनिक्रदत् अभिपूयमाणः शब्दं कुर्वन् ᵛरजांसि लोकान् ᵛतिरः तिरस्कुर्वन् यागात् ᵛदिवं स्वर्गं ᵛवि ᵛधावति गच्छति ॥

एष दिवं व्यासरत्तिरो रजांस्यस्पृतः । पवमानः स्वध्वरः ॥ ८ ॥

एषः । दिवम् । वि । आ । असरत् । तिरः । रजांसि । अस्पृतः । पवमानः । सुऽअध्वरः ॥८॥

ᵛपवमानः क्षरन् ᵛएषः सोमः ᵛस्वध्वरः सुयज्ञः ᵛअस्पृतः केनाप्यहिंसितश्च सन् ᵛरजांसि लोकान् ᵛतिरः[1] तिरस्कुर्वन् यज्ञात् ᵛदिवं प्रति ᵛव्यासरत् विसरति गच्छति ॥

एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः । हरिः पवित्रे अर्षति ॥ ९ ॥

एषः । प्रत्नेन । जन्मना । देवः । देवेभ्यः । सुतः । हरिः । पवित्रे । अर्षति ॥ ९ ॥

ᵛहरिः हरितवर्णः ᵛदेवः द्योतमानः ᵛएषः सोमः ᵛप्रत्नेन पुराणेन ᵛजन्मना जननेन ᵛदेवेभ्यः देवार्थं ᵛसुतः अभिषुतः सन् ᵛपवित्रे स्थातुम् ᵛअर्षति गच्छति ॥

एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः । धारया पवते सुतः ॥ १० ॥

एषः । ऊँ इति । स्यः । पुरुऽव्रतः । जज्ञानः । जनयन् । इषः । धारया । पवते । सुतः ॥ १० ॥

ᵛस्यः ᵛएष ᵛउ[2] सोम एव ᵛपुरुव्रतः बहुकर्मा ᵛजज्ञानः जायमान एव ᵛइषः अन्नानि ᵛजनयन् उत्पादयन् ᵛसुतः अभिषुतः सन् ᵛधारया ᵛपवते क्षरति ॥ ॥ २१ ॥

'सना च' इति दशर्चं चतुर्थं सूक्तमाङ्गिरसकुलस्य हिरण्यस्तूपस्यार्षं गायत्रं पवमानसोमदेवताकम् । अनुक्रान्तं च—'सन हिरण्यस्तूपः' इति । उक्तो विनियोगः ॥

सना च सोम जेषि च पवमान महि श्रवः । अथा नो वस्यसस्कृधि ॥ १ ॥

सन । च । सोम । जेषि । च । पवमान । महि । श्रवः । अथ । नः । वस्यसः । कृधि ॥ १ ॥

हे ᵛमहि ᵛश्रवः महदन्न ᵛपवमान ᵛसोम ᵛसन[3] । अस्मद्यागे यजनीयान् देवान् भज । ᵛजेषि ᵛच । यागविध्वंसकारिणो राक्षसांश्च जय । ᵛअथ देवान् प्राप्य राक्षसांश्च जित्वानन्तरं ᵛनः अस्मान् ᵛवस्यसः श्रेयसः[4] ᵛकृधि कुरु । श्रेयोऽस्मभ्यं देहीत्यर्थः ॥

सना ज्योतिः सना स्वर्विश्वा च सोम सौभगा । अथा नो वस्यसस्कृधि ॥२॥

सन । ज्योतिः । सन । स्वः । विश्वा । च । सोम । सौभगा । अथ । नः । वस्यसः । कृधि ॥२॥

हे ᵛसोम त्वं ᵛज्योतिः तेजः ᵛसन अस्मभ्यं प्रयच्छ । अपि च ᵛस्वः[5] स्वर्गं ᵛसन अस्मभ्यं देहि । ᵛविश्वा विश्वानि ᵛसौभगा सौभाग्यानि ᵛच सन । सिद्धमन्यत् ॥

सना दक्षमुत क्रतुमप सोम मृधो जहि । अथा नो वस्यसस्कृधि ॥ ३ ॥

सन । दक्षम् । उत । क्रतुम् । अप । सोम । मृधः । जहि । अथ । नः । वस्यसः । कृधि ॥ ३ ॥

हे ᵛसोम त्वं ᵛदक्षं बलं ᵛसन अस्मभ्यं देहि । ᵛउत अपि च ᵛक्रतुं प्रज्ञानं सन । ᵛमृधः हिंसकान् शत्रूंश्च ᵛअप ᵛजहि मारय । सिद्धमन्यत् ॥

---

१. ग-त-म—'तिरः' नास्ति । २. ग-घ-त-भ—'उँ' नास्ति । ३. ग—सना । ४. त-भ२.४—श्रेयः । ५. ग-त-म—'स्वः' नास्ति ।

पवी॑तारः पुनी॒तन॒ सोम॒मिन्द्रा॑य॒ पात॑वे । अथा॑ नो॒ वस्य॑सस्कृधि ॥ ४ ॥

पवि॑तारः । पु॒नी॒तन॑ । सोम॑म् । इन्द्रा॑य । पात॑वे । अथ॑ । नः॒ । वस्य॑सः । कृ॒धि॒ ॥ ४ ॥

हे ᵛपवीतारः[1] सोमाभिषवकर्तारः यूयम् ᵛइन्द्राय ᵛपातवे पातुं ᵛसोमं ᵛपुनीतन अभिषुणुत । सिद्धमन्यत् ॥

त्वं सूर्ये॑ न॒ आ भ॑ज॒ तव॒ क्रत्वा॒ तवो॒तिभिः॑ । अथा॑ नो॒ वस्य॑सस्कृधि ॥ ५ ॥

त्वम् । सूर्ये॑ । नः॒ । आ । भ॒ज॒ । तव॑ । क्रत्वा॑ । तव॑ । ऊ॒तिऽभिः॑ । अथ॑ । नः॒ । वस्य॑सः । कृ॒धि॒ ॥ ५ ॥

हे सोम ᵛत्वं ᵛतव ᵛक्रत्वा ᵛतव ᵛऊतिभिः त्वत्कर्तृकेण कर्मणा त्वत्कर्तृकाभी रक्षाभिश्च ᵛनः अस्मान् ᵛसूर्ये ᵛआ ᵛभज प्रापय । सिद्धमन्यत् ॥ ॥ २२ ॥

तव॒ क्रत्वा॒ तवो॒तिभि॒र्ज्योक्प॑श्येम॒ सूर्य॑म् । अथा॑ नो॒ वस्य॑सस्कृधि ॥ ६ ॥

तव॑ । क्रत्वा॑ । तव॑ । ऊ॒तिऽभिः॑ । ज्योक् । प॒श्ये॒म॒ । सूर्य॑म् । अथ॑ । नः॒ । वस्य॑सः । कृ॒धि॒ ॥ ६ ॥

हे सोम ᵛतव ᵛक्रत्वा प्रज्ञानेन ᵛतव ᵛऊतिभिः रक्षाभिश्च ᵛज्योक् चिरं ᵛपश्येम ᵛसूर्यम् । पश्याम[2] द्रक्ष्यामः[3] । सिद्धमन्यत् ॥

अ॒भ्य॑र्ष स्वायुध॒ सोम॑ द्वि॒बर्ह॑सं र॒यिम् । अथा॑ नो॒ वस्य॑सस्कृधि ॥ ७ ॥

अ॒भि । अ॒र्ष॒ । सु॒ऽआ॒यु॒ध॒ । सोम॑ । द्वि॒ऽबर्ह॑सम् । र॒यिम् । अथ॑ । नः॒ । वस्य॑सः । कृ॒धि॒ ॥ ७ ॥

हे ᵛस्वायुध शोभनायुध ᵛसोम त्वं ᵛद्विबर्हसं द्वयोर्द्यावापृथिव्योः स्थानयोः परिवृढं ᵛरयिं धनम् ᵛअभ्यर्ष अस्मानभिगमय । सिद्धमन्यत् ॥

अ॒भ्य१॑र्षान॑पच्युतो र॒यिं स॒मत्सु॑ सास॒हिः । अथा॑ नो॒ वस्य॑सस्कृधि ॥ ८ ॥

अ॒भि । अ॒र्ष॒ । अन॑पऽच्युतः । र॒यिम् । स॒मत्ऽसु॑ । स॒स॒हिः । अथ॑ । नः॒ । वस्य॑सः । कृ॒धि॒ ॥ ८ ॥

हे सोम ᵛसमत्सु संग्रामेषु ᵛअनपच्युतः शत्रुभिरनाहतः[4] ᵛसासहिः शत्रूणामभिभविता त्वं ᵛरयिं धनम् ᵛअभ्यर्ष अस्मानभिगमय । सिद्धमन्यत् ॥

त्वां य॒ज्ञैर॑वीवृध॒न्पव॑मान॒ विध॑र्मणि । अथा॑ नो॒ वस्य॑सस्कृधि ॥ ९ ॥

त्वाम् । य॒ज्ञैः । अ॒वी॒वृ॒ध॒न् । पव॑मान । विऽध॑र्मणि । अथ॑ । नः॒ । वस्य॑सः । कृ॒धि॒ ॥ ९ ॥

हे ᵛपवमान सोम यजमानानां विधारणाय प्रवृत्तं ᵛत्वां ᵛयज्ञैः ᵛविधर्मणि आत्मनो विधारणार्थम् ᵛअवीवृधन् यजमाना वर्धयन्ति । सिद्धमन्यत् ॥

र॒यिं न॑श्चि॒त्रम॒श्विन॒मिन्दो॑ वि॒श्वायु॒मा भ॑र । अथा॑ नो॒ वस्य॑सस्कृधि ॥ १० ॥

र॒यिम् । नः॒ । चि॒त्रम् । अ॒श्विन॑म् । इन्दो॒ इति॑ । वि॒श्वऽआ॑युम् । आ । भ॒र॒ ।
अथ॑ । नः॒ । वस्य॑सः । कृ॒धि॒ ॥ १० ॥

---

१. ग-भ१.३-पवितारः । २. ग-त२-अद्यामः; त६-पश्येम । ३. त२-'द्रक्ष्यामः' नास्ति । ४. ग-°रनभिभूतः; भ१.३-°रनाभिहतः; भ२-°रनभिहतः; भ४-°रनभिहितः ।

हे इन्दो यागेषु क्रियमाण सोम त्वं[1] चित्रं नानाविधम् अश्विनम् अश्ववन्तं च विश्वायुं सर्वगामिनं रयिं नः अस्मभ्यम् आ भर आहर। सिद्धमन्यत् ॥ ॥ २३ ॥

'समिद्धः' इत्येकादशर्चं पञ्चमं सूक्तं काश्यपस्यासितस्य[2] देवलस्य वार्षम्। अष्टम्याद्याश्चतस्रोऽनुष्टुभः शिष्टाः सप्त गायत्र्यः। नराशंसवर्जिताः[3] समिदादयः क्रमेण प्रत्यृचं देवताः। तथा चानुक्रान्तं–'समिद्ध एकादश काश्यपोऽसितो देवलो वा विंशतिः सूक्तान्याद्यमाप्रियश्चतुरनुष्टुबन्तम्' इति। काश्यपस्य[4] पावमानमिदमाप्रीसूक्तम्[4]। सूत्रितं च–'समिद्धो अद्येति सर्वेषां यथर्षि वा' (आश्व. श्रौ. ३. २) इति ॥

समिद्धो विश्वतस्पतिः पवमानो वि राजति। प्रीणन्वृषा कनिक्रदत् ॥ १ ॥

सम्ऽइद्धः। विश्वतः। पतिः। पवमानः। वि। राजति। प्रीणन्। वृषा। कनिक्रदत् ॥१॥

आप्रीवत्सोमस्तुतिरत्र[5]। समिद्धः सम्यग्दीप्तः विश्वतस्पतिः सर्वतः स्वामी वृषा कामानां वर्षिता पवमानः सोमः कनिक्रदत् अभिषूयमाणः शब्दं कुर्वन् प्रीणन् देवान् प्रीणयन् वि राजति यागेषु प्रकाशते ॥

तनूनपात्पवमानः शृङ्गे शिशानो अर्षति। अन्तरिक्षेण रारजत् ॥ २ ॥

तनूऽनपात्। पवमानः। शृङ्गे इति। शिशानः। अर्षति। अन्तरिक्षेण। रारजत् ॥ २ ॥

तनूनपात्[6] पवमानः सोमः। तनूनपादत्र सोमो भवति। तथा च श्रूयते—'अङ्गेभ्योऽशवो जायन्ते ततः सोमो जायते' इति। शृङ्गे दीप्ते उन्नतप्रदेशे[7]। 'हृणिः शृङ्गाणि' इति ज्वलन्नामसु पाठात्। शिशानः तीक्ष्णीकुर्वन् अन्तरिक्षेण रारजत् अर्षति। द्रोणकलशं प्रति गच्छति। तथा चाम्नायते—'द्वाभ्यां धाराभ्यामाग्रयणं[8] गृह्णाति[9]' इति ॥

ईळेन्यः पवमानो रयिर्वि राजति द्युमान्। मधोर्धाराभिरोजसा ॥ ३ ॥

ईळेन्यः। पवमानः। रयिः। वि। राजति। द्युऽमान्। मधोः। धाराभिः। ओजसा ॥ ३ ॥

ईळेन्यः स्तुत्यः पवमानः सोमः रयिः अभीष्टस्य दाता द्युमान् दीप्तिमांश्च सन् मधोः उदकस्य धाराभिः सह क्षरन् ओजसा बलेन वि राजति प्रकाशते ॥

बर्हिः प्राचीनमोजसा पवमानः स्तृणन्हरिः। देवेषु देव ईयते ॥ ४ ॥

बर्हिः। प्राचीनम्। ओजसा। पवमानः। स्तृणन्। हरिः। देवेषु। देवः। ईयते ॥ ४ ॥

हरिः हरितवर्णः देवः द्योतमानः सोमः पवमानः देवेषु[10] यज्ञेषु बर्हिः प्राचीनं प्राचीनाग्रं स्तृणन् स्तारयन् ओजसा बलेन ईयते गच्छति ॥

---

१. ग-त५-भ२-स त्वं; भ १.४- - - स त्वं। २. ग-त-भ४-मु-काश्यपासितस्य। ३. घ-भ१.२.३-नाराशंस°। ४. ग-शौनकस्य पवमानसोममिद°; त-भ४-शौनकस्य पावमानमिद°। ५. त-भ४-आप्रीतन्सोम°; मु-आप्रीयसोम°। ६. घ-तनूनपाद्देवः। ७. त-°प्रवेशे। ८. ग-पराभ्यामाग्रयणं; त६-आसभ्यामाग्रयणं; भ२.३-आग्रयणं। ९. ग-त१.२.६.७-गृण्हामीति; त४.५-गृह्णामिति; भ३-गृहतीति। १०. ग-त-भ४-'देवेषु' नास्ति।

उदातैर्जिहते बृहद्द्वारो देवीर्हिरण्ययीः। पवमानेन सुष्टुताः ॥ ५ ॥

उत्। आतैः। जिहते। बृहत्। द्वारः। देवीः। हिरण्ययीः। पवमानेन। सुऽस्तुताः ॥ ५ ॥

हिरण्ययीः हिरण्मय्यः द्वारो देवीः द्वारो देव्यः पवमानेन सोमेन सह सुष्टुताः स्तोतृभिः सम्यक् स्तुताः सत्यः बृहत् बृहतीभ्यो महतीभ्यः आतैः आतभ्यो दिग्भ्यः। 'आता आशाः' इति दिङ्नामसु पाठात्। उत् जिहते उद्गच्छन्ति ॥ ॥ २४ ॥

सुशिल्पे बृहती मही पवमानो वृषण्यति। नक्तोषासा न दर्शते ॥ ६ ॥

सुशिल्पे इति सुऽशिल्पे। बृहती इति। मही इति। पवमानः। वृषण्यति।
नक्तोषसा। न। दर्शते इति ॥ ६ ॥

सुशिल्पे सुरूपे बृहती परिवृढे मही महत्यौ न संप्रति दर्शते दर्शनीये नक्तोषासा नक्तोषासौ[1] पवमानः सोमः वृषण्यति कामयते ॥

उभा देवा नृचक्षसा होतारा दैव्या हुवे। पवमान इन्द्रो वृषा ॥ ७ ॥

उभा। देवा। नृऽचक्षसा। होतारा। दैव्या। हुवे। पवमानः। इन्द्रः। वृषा ॥ ७ ॥

नृचक्षसा मनुष्याणां द्रष्टारौ दैव्या दैव्यौ देवसंबन्धिनौ होतारा होतारौ उभा उभौ देवा देवौ हुवे आह्वयामि यज्ञे। पवमानः सोमः इन्द्रः दीप्तः। तथा च यास्कः–'इन्द्र इरां दृणातीति वेरां दारयत इति वेरां धारयतीति वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धत[2] तदिन्द्रस्येन्द्रत्वमिति विज्ञायते' (निरु. १०. ८) इति। वृषा कामानां वर्षिता च भवतीति ॥

भारती पवमानस्य सरस्वतीळा मही। इमं नो यज्ञमा गमन्तिस्रो देवीः सुपेशसः ॥ ८ ॥

भारती। पवमानस्य। सरस्वती। इळा। मही।
इमम्। नः। यज्ञम्। आ। गमन्। तिस्रः। देवीः। सुऽपेशसः ॥ ८ ॥

भारती भारत्याख्या सरस्वती सरस्वत्याख्या च मही महती इळाख्या[3] च तिस्रः सुपेशसः सुरूपाः देवीः देव्यः नः अस्माकं पवमानस्य सोमस्य संबन्धिनम् इमं[4] यज्ञं प्रति आ गमन् आगच्छन्तु ॥

त्वष्टारमग्रजां गोपां पुरोयावानमा हुवे।
इन्दुरिन्द्रो वृषा हरिः पवमानः प्रजापतिः ॥ ९ ॥

त्वष्टारम्। अग्रऽजाम्। गोपाम्। पुरःऽयावानम्। आ। हुवे।
इन्दुः। इन्द्रः। वृषा। हरिः। पवमानः। प्रजाऽपतिः ॥ ९ ॥

अग्रजाम् अग्रे जातं गोपां प्रजानां पालयितारं पुरोयावानं देवानां पुरस्ताद्गन्तारं त्वष्टारं देवम् आ हुवे अहमाह्वयामि यज्ञे। हरिः[5] हरितवर्णः पवमानः इन्दुः सोमः[6] इन्द्रः देवानामीश्वरः वृषा कामानां वर्षिता च प्रजापतिः प्रजानां पालयिता च भवतीति ॥

---

१. ग-मु–नक्तोषसौ। २. त१.२.६.७-मु–समैंधन्; त४.५-भ३–समैधन; भ४–समैवंत। ३. भ१.२.३–इळा इळाख्या। ४. त-भ–'इमं' नास्ति। ५. ग-त-भ२.३.४–'हरिः' नास्ति। ६. त-भ–'सोमः' नास्ति।

वनस्पतिं पवमान मध्वा समङ्ग्धि धारया ।
सहस्रवल्शं हरितं भ्राजमानं हिरण्ययम् ॥ १० ॥

वनस्पतिम् । पवमान । मध्वा । सम् । अङ्ग्धि । धारया ।
सहस्रऽवल्शम् । हरितम् । भ्राजमानम् । हिरण्ययम् ॥ १० ॥

हे ᵛपवमान सोम ᵛहरितं हरितवर्णं ᵛहिरण्ययं कदाचिद्धिरण्मयवर्णं च ᵛभ्राजमानं दीप्यमानं ᵛसहस्रवल्शं सहस्रशाखं ᵛवनस्पतिं देवं ᵛधारया धारामयेण ᵛमध्वा मधुना ᵛसमङ्ग्धि अङ्क्ष्व । संस्कुर्वित्यर्थः ॥

विश्वे देवाः स्वाहाकृतिं पवमानस्या गत ।
वायुर्बृहस्पतिः सूर्योऽग्निरिन्द्रः सजोषसः ॥ ११ ॥

विश्वे । देवाः । स्वाहाऽकृतिम् । पवमानस्य । आ । गत ।
वायुः । बृहस्पतिः । सूर्यः । अग्निः । इन्द्रः । सऽजोषसः ॥ ११ ॥

हे ᵛविश्वे ᵛदेवाः ᵛवायुः ᵛबृहस्पतिः च ᵛसूर्यः च ᵛअग्निः च ᵛइन्द्रः च सर्वे यूयं ᵛसजोषसः संगताः सन्तः ᵛपवमानस्य सोमस्य ᵛस्वाहाकृतिं स्वाहाकारं प्रति[1] ᵛआ ᵛगत[1] आगच्छत ॥ ॥२५॥

'मन्द्रया' इति नवर्चं षष्ठं सूक्तं काश्यपस्यासितस्य देवलस्य वार्षं गायत्रं पवमानसोमदेवताकम्[2] ॥

मन्द्रया सोम धारया वृषा पवस्व देवयुः । अव्यो वारेष्वस्मयुः ॥ १ ॥

मन्द्रया । सोम । धारया । वृषा । पवस्व । देवऽयुः । अव्यः । वारेषु । अस्मऽयुः ॥ १ ॥

हे ᵛसोम ᵛवृषा कामानां वर्षिता ᵛदेवयुः देवकामः ᵛअस्मयुः अस्मत्कामश्च ᵛअव्यः अवेः ᵛवारेषु वालेषु दशापवित्रे ᵛमन्द्रया मदकरया ᵛधारया ᵛपवस्व क्षर ॥

अभि त्यं मद्यं मदमिन्दविन्द्र इति क्षर । अभि वाजिनो अर्वतः ॥ २ ॥

अभि । त्यम् । मद्यम् । मदम् । इन्दो इति । इन्द्रः । इति । क्षर । अभि । वाजिनः । अर्वतः ॥२॥

हे ᵛइन्दो सोम त्वम् ᵛइन्द्रः ईश्वरः ᵛइति कृत्वा ᵛत्यं[3] तं[3] ᵛमद्यं मदकरं[4] ᵛमदं रसम् ᵛअभि[5] ᵛक्षर वर्ष । ᵛवाजिनः बलवतः ᵛअर्वतः अश्वांश्च अस्मदर्थम् ᵛअभि क्षरेत्यर्थः ॥

अभि त्यं पूर्व्यं मदं सुवानो अर्ष पवित्र आ । अभि वाजमुत श्रवः ॥ ३ ॥

अभि । त्यम् । पूर्व्यम् । मदम् । सुवानः । अर्ष । पवित्रे । आ । अभि । वाजम् । उत । श्रवः ॥३॥

हे सोम ᵛसुवानः अभिषूयमाणस्त्वं ᵛपूर्व्यं प्रत्नं ᵛत्यं तं प्रसिद्धं ᵛमदं मदकरं रसं ᵛपवित्रे ᵛआ समन्तात् ᵛअभि ᵛअर्ष अभिगमय । ᵛवाजं बलमस्मान् ᵛअभि अर्ष । ᵛउत अपि च ᵛश्रवः अन्नमभ्यर्ष ॥

---

१. ग-त४.५–' प्रति आ गत ' नास्ति; त१.२.६.७-मु–आगत । २. ग–ॱदेवताकं अनुक्रांतं मंद्रया नवेति; घ–ॱदेवताकं मंद्रया नवेति अनुक्रांतं च । ३. ग-त-भ–'त्यं तं' नास्ति । ४. त-भ–मदकरमत्यंतं । ५. त-भ–' अभि ' नास्ति ।

अनु द्रप्सास इन्दव आपो न प्रवतासरन्। पुनाना इन्द्रमाशत ॥ ४ ॥

अनु। द्रप्सासः। इन्दवः। आपः। न। प्रऽवता। असरन्। पुनानाः। इन्द्रम्। आशत ॥४॥

द्रप्सासः द्रुतगतयः[1] पुनानाः क्षरन्तः इन्दवः सोमाः प्रवता प्रवणेन मार्गेण आपो न आप इव इन्द्रम् अनु असरन् अनुगच्छन्ति। आशत व्याप्नुवन्ति च ॥

यमत्यमिव वाजिनं मृजन्ति योषणो दश। वने क्रीळन्तमत्यविम् ॥ ५ ॥

यम्। अत्यम्ऽइव। वाजिनम्। मृजन्ति। योषणः। दश। वने। क्रीळन्तम्। अतिऽअविम् ॥ ५ ॥

अत्यविं दशापवित्रमतिक्रम्य वने अरण्ये क्रीळन्तं वर्तमानं यं सोमं दश[2] दशसंख्याकाः योषणः स्त्रियः। अङ्गुलय इत्यर्थः। तथा च निगमान्तरं– 'तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश' (ऋ. सं. ९.१.७) इति। वाजिनं बलिनम् अत्यमिव[3] अश्वमिव मृजन्ति परिचरन्ति। उत्तरया सहान्वयः ॥ ॥ २६ ॥

तं गोभिर्वृषणं रसं मदाय देववीतये। सुतं भराय सं सृज ॥ ६ ॥

तम्। गोभिः। वृषणम्। रसम्। मदाय। देवऽवीतये। सुतम्। भराय। सम्। सृज ॥ ६ ॥

वृषणं कामानां वर्षितारं देववीतये देवानां पानाय मदाय सुतम् अभिषुतं तं रसं भराय संग्रामाय गोभिः[4] पयोभिः[4] सं सृज संयोजय ॥

देवो देवाय धारयेन्द्राय पवते सुतः। पयो यदस्य पीपयत् ॥ ७ ॥

देवः। देवाय। धारया। इन्द्राय। पवते। सुतः। पयः। यत्। अस्य। पीपयत् ॥ ७ ॥

देवाय द्योतमानाय इन्द्राय सुतः अभिषुतः देवः द्योतमानः सोमः धारया पवते क्षरति। यत् यस्मात् अस्य सोमस्य पयः पीपयत् इन्द्रमाप्यायितवत्। तस्माद्धारया पवत इत्यर्थः ॥

आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः। प्रत्नं नि पाति काव्यम् ॥ ८ ॥

आत्मा। यज्ञस्य। रंह्या। सुस्वानः। पवते। सुतः। प्रत्नम्। नि। पाति। काव्यम् ॥८॥

यज्ञस्य आत्मा आत्मभूतः सुतः अभिषुतः सोमः सुष्वाणः यजमानेभ्यः कामान् प्रेरयन् रंह्या वेगेन पवते क्षरति। प्रत्नं पुरातनं काव्यम् आत्मनः कवित्वं च नि पाति अभिरक्षति ॥

एवा पुनान इन्द्रयुर्मदं मदिष्ठ वीतये। गुहा चिद्दधिषे गिरः ॥ ९ ॥

एव। पुनानः। इन्द्रऽयुः। मदम्। मदिष्ठ। वीतये। गुहा। चित्। दधिषे। गिरः ॥९॥

हे मदिष्ठ अतिशयेन मदकर सोम इन्द्रयुः इन्द्रकामस्त्वं वीतये इन्द्रस्य पानाय एव एवं मदं पुनानः क्षरन् गुहा गुहायाम्। यज्ञशालायामित्यर्थः। गिरः चित् शब्दानपि दधिषे। अभिषववेलायामुपरवेषु धारयसि। करोषीत्यर्थः ॥ ॥ २७ ॥

१. त–द्रुगतयः। २. त-भ४–'दश' नास्ति। ३. ग-भ–अत्यं न। ४. ग-त४.५-भ–'गोभिः पयोभिः' नास्ति; घ–गोभिः।

'असृग्रम्' इति नवर्चं सप्तमं सूक्तम्। 'असृग्रम्' इत्यनुक्रान्तम्। असितो देवलो वर्षिः। तौ च कश्यपगोत्रजौ[1]। गायत्रं[2] छन्दः[2]। सोमः पवमानो देवता। उक्तो विनियोगः॥

**असृ॑ग्र॒मिन्द॑वः प॒था धर्म॑न्नृ॒तस्य॑ सु॒श्रियः॑। वि॒दा॒ना अ॑स्य॒ योज॑नम्॥ १॥**

असृ॑ग्रम्। इन्द॑वः। प॒था। धर्म॑न्। ऋ॒तस्य॑। सु॒ऽश्रियः॑। वि॒दा॒नाः। अ॒स्य॒। योज॑नम्॥१॥

ᐯसुश्रियः शोभनश्रयणाः[3] ᐯअस्य इन्द्रस्य ᐯयोजनं संबन्धं ᐯविदानाः जानन्तः ᐯइन्दवः सोमाः ᐯधर्मन् कर्मणि ᐯऋतस्य यज्ञस्य ᐯपथा मार्गेण ᐯअसृग्रं सृज्यन्ते॥

**प्र धारा॒ मध्वो॑ अग्रि॒यो म॒हीर॒पो वि गा॑हते। ह॒विर्ह॒विष्षु॒ वन्द्यः॑॥ २॥**

प्र। धारा॑। मध्वः॑। अ॒ग्रि॒यः। म॒हीः। अ॒पः। वि। गा॒ह॒ते॒। ह॒विः। ह॒विष्षु॑। वन्द्यः॑॥२॥

ᐯहविष्षु हविषां मध्ये ᐯवन्द्यः स्तुत्यः ᐯहविः हविरात्मको यः सोमः ᐯमहीः महतीः ᐯअपः वसतीवरीः ᐯवि ᐯगाहते तस्य ᐯमध्वः सोमस्य ᐯअग्रियः मुख्याः ᐯधाराः ᐯप्र पतन्तीत्यर्थः॥

**प्र यु॒जो वा॒चो अ॑ग्रि॒यो वृषाव॑ चक्रदद्वने॑। सद्मा॒भि स॒त्यो अ॑ध्व॒रः॥ ३॥**

प्र। यु॒जः। वा॒चः। अ॒ग्रि॒यः। वृषा॑। अव॑। च॒क्र॒द॒त्। वने॑। सद्म॑। अ॒भि। स॒त्यः। अ॒ध्व॒रः॥३॥

एतदेव दर्शयति। ᐯवृषा कामानां वर्षकः ᐯसत्यः सत्यभूतः ᐯअध्वरः हिंसावर्जितः ᐯअग्रियः मुख्यः सोमः ᐯसद्म यज्ञगृहम् ᐯअभि प्रति ᐯवने उदके ᐯयुजः युक्ताः ᐯवाचः ᐯप्र ᐯअव ᐯचक्रदत् अवक्रन्दति। शब्दान् करोतीत्यर्थः॥

**परि॒ यत्काव्या॑ क॒विर्नृ॒म्णा वसा॑नो॒ अर्ष॑ति। स्व॑र्वा॒जी सि॑षासति॥ ४॥**

परि॑। यत्। काव्या॑। क॒विः। नृ॒म्णा। वसा॑नः। अर्ष॑ति। स्वः॑। वा॒जी। सि॒सा॒स॒ति॒॥ ४॥

ᐯकविः क्रान्तकर्मा सोमः ᐯनृम्णा नृम्णानि[4] धनानि ᐯवसानः आच्छादयन् स्तोतॄणां ᐯकाव्या[5] काव्यानि कविकर्माणि स्तोत्राणि ᐯयत् यदा ᐯपरि ᐯअर्षति परिगच्छति तदा ᐯस्वः स्वर्गं[6] ᐯवाजी बलवानन्नवान् वा इन्द्रः ᐯसिषासति। यागं प्रत्यागन्तुं स्वकीयं बलं संभक्तुमिच्छति॥

**पव॑मानो अ॒भि स्पृधो॑ वि॒शो॒ राजे॑व सीदति। यदी॑मृ॒ण्वन्ति॑ वे॒धसः॑॥ ५॥**

पव॑मानः। अ॒भि। स्पृधः॑। वि॒शः॑। राजा॑ऽइव। सी॒द॒ति॒। यत्। ई॒म्। ऋ॒ण्वन्ति॑। वे॒धसः॑॥५॥

ᐯयत् यदा ᐯईम् एनं सोमं ᐯवेधसः कर्मणां कर्तारः[7] ᐯऋण्वन्ति प्रेरयन्ति तदा ᐯपवमानः क्षरन्नेष सोमः ᐯस्पृधः स्पर्धमानान् यागविघ्नकारिणो राक्षसान् ᐯविशः स्पर्धमानान् मनुष्यान् ᐯराजेव[8] यथा राजा[9] तद्वत् ᐯअभि ᐯषीदति[10] नाशयितुमभिगच्छति॥ ॥ २८॥

**अव्यो॒ वारे॒ परि॑ प्रि॒यो हरि॒र्वने॑षु सीदति। रे॒भो व॑नुष्यते म॒ती॥ ६॥**

अव्यः॑। वारे॑। परि॑। प्रि॒यः। हरिः॑। वने॑षु। सी॒द॒ति॒। रे॒भः। व॒नु॒ष्य॒ते॒। म॒ती॥ ६॥

१. ग-त७-काश्यपगोत्रजौ; भ१.३-कश्यपगोत्रौ। २. भ१.२.३-गायत्रछंदसं। ३. त-भ-°श्रवणा। ४. ग-त-भ-'नृम्णानि' नास्ति। ५. ग-त-भ-'काव्या' नास्ति। ६. ग-स्वर्गात्। ७. त-भ-कर्तारं। ८. त-भ४-राजसेव। ९. भ१.२.३.४-राजाभिषीदति। १०. त-भ१.२.४-निषीदति।

vहरिः हरितवर्णः vप्रियः देवानां प्रियतम एव सोमः vवनेषु उदकेषु संपृक्तः vअव्यः अवेः vवारे वालोपेते vपरि vषीदति । किंच vरेभः अभिषववेलायामुपरवेषु शब्दं कुर्वन् vमती मत्या स्तुत्या vवनुष्यते सेव्यते ॥

**स वायुमिन्द्रमश्विना साकं मदेन गच्छति । रणा यो अस्य धर्मभिः ॥ ७ ॥**

सः । वायुम् । इन्द्रम् । अश्विना । साकम् । मदेन । गच्छति । रण । यः । अस्य । धर्मऽभिः ॥७॥

vयः यजमानः vअस्य सोमस्य vधर्मभिः कर्मभिः क्रयणाभिषवादिभिः vरण रमते vसः यजमानः vवायुमिन्द्रं च vअश्विना अश्विनौ[1] च vमदेन vसाकं सह vगच्छति प्राप्नोति ॥

**आ मित्रावरुणा भगं मध्वः पवन्त ऊर्मयः । विदाना अस्य शक्मभिः ॥ ८ ॥**

आ । मित्रावरुणा । भगम् । मध्वः । पवन्ते । ऊर्मयः । विदानाः । अस्य । शक्मऽभिः ॥ ८ ॥

येषां यजमानानां vमध्वः सोमस्य vऊर्मयः तरङ्गाः vमित्रावरुणा मित्रावरुणौ देवौ vभगं भगाख्यं देवं च प्रति vपवन्ते क्षरन्ति. ते यजमानाः vअस्य सोमस्येमं सोमं vविदानाः जानन्तः vशक्मभिः सुखैः संगच्छन्त[2] इति शेषः ॥

**अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये । श्रवो वसूनि सं जितम् ॥ ९ ॥**

अस्मभ्यम् । रोदसी इति । रयिम् । मध्वः । वाजस्य । सातये । श्रवः । वसूनि । सम् । जितम् ॥९॥

हे vरोदसी द्यावापृथिव्यौ युवां vमध्वः देवानां मोदयितुः[3] vवाजस्य सोमात्मकस्यान्नस्य vसातये लाभाय vअस्मभ्यं काश्यपासितेभ्यः काश्यपदेवलेभ्यो वा vरयिं धनं vश्रवः अन्नं च vवसूनि वासकान्यन्यान्यपि पश्वादीनि धनानि vसं vजितं संजयतम् । प्रयच्छतमित्यर्थः ॥ ॥ २९ ॥

'एते सोमाः' इति नवर्चमष्टमं सूक्तम् । ऋष्याद्याः पूर्ववत् । अनुक्रान्तं च–'एते सोमाः' इति । उक्तः सूक्तविनियोगः । ग्रावस्तोत्रे गाणगारिमतेनाभिरूपकरणे सोमे मृज्यमाने 'मृजन्ति त्वा' इत्येषा । सूत्रितं च–'अथापरमभिरूपं कुर्यादिति गाणगारिरा प्यायस्व समेतु त इति तिस्रो मृजन्ति त्वा दश क्षिपः' (आश्व. श्रौ. ५.१२) इति ॥

**एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन् । वर्धन्तो अस्य वीर्यम् ॥ १ ॥**

एते । सोमाः । अभि । प्रियम् । इन्द्रस्य । कामम् । अक्षरन् । वर्धन्तः । अस्य । वीर्यम् ॥१॥

vएते अभिषुता इमे vसोमाः vअस्य इन्द्रस्य vवीर्यं शक्तिं vवर्धन्तः वर्धयन्तः vइन्द्रस्य vकामं काम्यं vप्रियं प्रीतिकरं रसम् vअभि vअक्षरन् अभिपवन्ते अभ्यवर्षन् ॥

**पुनानासश्चमूषदो गच्छन्तो वायुमश्विना । ते नो धान्तु सुवीर्यम् ॥ २ ॥**

पुनानासः । चमूऽसदः । गच्छन्तः । वायुम् । अश्विना । ते । नः । धान्तु । सुऽवीर्यम् ॥२॥

vते प्रसिद्धाः सोमाः vपुनानासः पुनाना अभिपूयमाणाः vचमूषदः चमसेषु सीदन्तः vवायुम् vअश्विना अश्विनौ च vगच्छन्तः प्राप्नुवन्तः vनः अस्मभ्यं vसुवीर्यं शोभनवीर्यं vधान्तु धारयन्तु । प्रयच्छन्त्वित्यर्थः ॥

---

१. ग-त-भ-'अश्विनौ' नास्ति । २. घ–आसंगच्छंत । ३. ग–मादयितुः ।

इन्द्र॑स्य सोम॒ राध॑से पुना॒नो हार्दि॑ चोदय । ऋ॒तस्य॒ योनि॑मा॒सद॑म् ॥ ३ ॥

इन्द्र॑स्य । सोम॑ । राध॑से । पु॒ना॒नः । हार्दि॑ । चो॒द॒य॒ । ऋ॒तस्य॑ । योनि॑म् । आ॒ऽसद॑म् ॥ ३ ॥

हे सोम पुनानः अभिषूयमाणः हार्दि अभिलषितस्त्वम् इन्द्रस्य राधसे संराधनाय ऋतस्य यज्ञस्य योनिं स्थानम् आसदं यथेन्द्र आसीदति तथेन्द्रं चोदय प्रेरय ॥

मृ॒जन्ति॑ त्वा॒ दश॒ क्षिपो॑ हि॒न्वन्ति॑ स॒प्त धी॒तय॑ः । अनु॒ विप्रा॑ अमादिषुः ॥ ४ ॥

मृ॒जन्ति॑ । त्वा॒ । दश॑ । क्षिप॑ः । हि॒न्वन्ति॑ । स॒प्त । धी॒तय॑ः । अनु॑ । विप्रा॑ः । अ॒मा॒दि॒षुः॒ ॥ ४ ॥

हे सोम त्वा त्वां दश दशसंख्याकाः क्षिपः अङ्गुलयः । 'व्रिशः[1] क्षिपः' इत्यङ्गुलिनामसु पाठात् । मृजन्ति परिचरन्ति । सप्त सप्तसंख्याकाः धीतयः होत्रकाश्च त्वा त्वां हिन्वन्ति स्वस्वव्यापारैः प्रीणयन्ति । विप्राः मेधाविनश्च त्वाम् अनु अमादिषुः अनुमादयन्ति ॥

दे॒वेभ्य॑स्त्वा॒ मदा॑य॒ कं सृ॑जा॒नमति॑ मे॒ष्य॑ः । सं गोभि॑र्वासयामसि ॥ ५ ॥

दे॒वेभ्य॑ः । त्वा॒ । मदा॑य । कम् । सृ॒जा॒नम् । अति॑ । मे॒ष्य॑ः । सम् । गोभि॑ः । वा॒स॒या॒म॒सि॒ ॥ ५ ॥

हे सोम मेष्यः अवेर्लोमानि कम्[2] उदकं च अति अभि[2] सृजानं त्वा त्वां देवेभ्यः देवानाम् । विभक्तिव्यत्ययः । मदाय मदार्थं गोभिः गोविकारैः पयोभिः सं वासयामसि संवासयामः ॥ ॥ ३० ॥

पु॒ना॒नः क॒लशे॒ष्वा वस्त्रा॑ण्यरु॒षो हरि॑ः । परि॒ गव्या॑न्यव्यत ॥ ६ ॥

पु॒ना॒नः । क॒लशे॑षु । आ । वस्त्रा॑णि । अ॒रु॒षः । हरि॑ः । परि॑ । गव्या॑नि । अ॒व्य॒त॒ ॥ ६ ॥

पुनानः पूयमानः कलशेषु कुम्भेषु निषिच्यमानः अरुषः आरोचमानः हरिः हरितवर्णः सोमः गव्यानि दध्यादीनि वस्त्राणि वासांसीव परि अव्यत पर्याच्छादयति ॥

म॒घोन॒ आ प॑वस्व नो ज॒हि विश्वा॒ अप॒ द्विष॑ः । इन्दो॒ सखा॑य॒मा वि॑श ॥ ७ ॥

म॒घोन॑ः । आ । प॒व॒स्व॒ । न॒ः । ज॒हि । विश्वा॑ः । अप॑ । द्विष॑ः ।

इन्दो॒ इति॑ । सखा॑यम् । आ । वि॒श॒ ॥ ७ ॥

हे इन्दो सोम मघोनः धनवतः नः अस्मान् प्रति पवस्व क्षर । विश्वाः विश्वान् द्विषः द्वेष्टॄन् अप जहि मारय च । सखायं प्रियमिन्द्रम् आ विश आप्नुहि च ॥

वृ॒ष्टिं दि॒वः परि॑ स्रव द्यु॒म्नं पृ॑थि॒व्या अधि॑ । सहो॑ नः सोम पृ॒त्सु धा॑ः ॥ ८ ॥

वृ॒ष्टिम् । दि॒वः । परि॑ । स्र॒व॒ । द्यु॒म्नम् । पृ॒थि॒व्याः । अधि॑ ।

सह॑ः । न॒ः । सो॒म॒ । पृ॒त्ऽसु । धा॒ः ॥ ८ ॥

१. ग-त१.२.४.७-भ४-विशः; त६-भ१.३-'व्रिशः' नास्ति । २. ग-इत्यर्थः अति; घ-कमुदकं चात्यभि; त१-कं उदकं चादन्यभि; न२.६-कं उदकं न्यभि; त४.५- - - - द अभि; त७-कमुदकं त्वदन्यभि; भ१.२-द अति; भ३-दशापवित्रमति; भ४-अभि; मु-कमुदकं चाति ।

हे ᵛसोम त्वं ᵛदिवः द्युलोकात् ᵛवृष्टिं वर्षं ᵛपरि ᵛस्रव वर्ष। ᵛपृथिव्या ᵛअधि पृथिव्याम्। अधिः सप्तम्यर्थानुवादः। ᵛद्युम्नम् अन्नं चोत्पादयेति शेषः। ᵛनः अस्माकं ᵛसहः बलं च ᵛपृत्सु संग्रामेषु ᵛधाः धेहि ॥

नृचक्षसं त्वा वयमिन्द्रपीतं स्वर्विदम्। भक्षीमहि प्रजामिषम् ॥ ९ ॥

नृऽचक्षसम्। त्वा। वयम्। इन्द्रऽपीतम्। स्वःऽविदम्। भक्षीमहि। प्रऽजाम्। इषम् ॥९॥

हे सोम ᵛनृचक्षसं नृणां द्रष्टारं ᵛस्वर्विदं सर्वज्ञम् ᵛइन्द्रपीतम् इन्द्रेण[1] पीतं ᵛत्वा[1] त्वां पिबन्तः ᵛवयं काश्यपासिताः काश्यपदेवला[2] वा ᵛप्रजां पुत्रादिकाम् ᵛइषम् अन्नं च ᵛभक्षीमहि भजेमहि ॥ ॥३१॥

'परि प्रिया' इति नवर्चं नवमं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'परि प्रिया' इत्यनुक्रान्तम्। उक्तो विनियोगः ॥

परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः। सुवानो याति कविक्रतुः ॥ १ ॥

परि। प्रिया। दिवः। कविः। वयांसि। नप्त्योः। हितः। सुवानः। याति। कविऽक्रतुः ॥१॥

ᵛकविः मेधावी ᵛकविक्रतुः क्रान्तप्रज्ञः क्रान्तकर्मा वा सोमः ᵛनप्त्योः अधिषवणफलकयोः ᵛहितः निहितः ᵛसुवानः अभिषूयमाणः ᵛदिवः द्युलोकस्य ᵛपरि ᵛप्रिया अतिप्रियाणि ᵛवयांसि प्राप्णः। तथा च मन्त्रवर्णः—'वयांसि[3] इयेना अतिथयः पर्वतानां ककुभः' इति। ᵛयाति गच्छति ॥

प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहे। वीत्यर्ष चनिष्ठया ॥ २ ॥

प्रऽप्र। क्षयाय। पन्यसे। जनाय। जुष्टः। अद्रुहे। वीती। अर्ष। चनिष्ठया ॥ २ ॥

हे सोम ᵛप्रप्र अत्यन्तं ᵛक्षयाय तव निवासभूताय ᵛअद्रुहे अद्रोग्ध्रे च ᵛपन्यसे स्तोत्रे ᵛजनाय मनुष्याय ᵛवीती वीत्यै भक्षणाय ᵛजुष्टः पर्याप्तस्त्वं ᵛचनिष्ठया अन्नवत्तमया धारया ᵛअर्ष यागं प्रति गच्छ ॥

स सूनुर्मातरा शुचिर्जातो जाते अरोचयत्। महान्मही ऋतावृधा ॥ ३ ॥

सः। सूनुः। मातरा। शुचिः। जातः। जाते इति। अरोचयत।
महान्। मही इति। ऋतऽवृधा ॥ ३ ॥

ᵛजातः उत्पन्नः ᵛशुचिः विशुद्धः ᵛमहान् हविरुत्तमः ᵛसः सोमाख्यः ᵛसूनुः पुत्रः ᵛमही महत्यौ ᵛऋतावृधा यज्ञस्य वर्धयित्र्यौ ᵛजाते विश्वस्य जनयित्र्यौ ᵛमातरा आत्मनो मातरौ द्यावापृथिव्यौ ᵛअरोचयत् रोचयति दीपयति ॥

स सप्त धीतिभिर्हितो नद्यो अजिन्वदद्रुहः। या एकमक्षि वावृधुः ॥ ४ ॥

सः। सप्त। धीतिऽभिः। हितः। नद्यः। अजिन्वत्। अद्रुहः। याः। एकम्। अक्षि। ववृधुः ॥४॥

---

१. ग-त-भ-'इंद्रेण पीतं त्वा' नास्ति। २. त-कश्यप॰। ३. ग-भ-'वयांसि' नास्ति।

vयाः नद्यः यम् vएकं मुख्यं सोमम् vअक्षि अक्षीणं vववृधुः वर्धयन्ति vसः सोमः vधीतिभिः[1] अङ्गुलिभिः। 'रशना धीतयः' इत्यङ्गुलिनामसु पाठात्। vहितः निहितः सन् vअद्रुहः द्रोहवर्जिताः vसप्त सप्तसंख्याकाः vनद्यः नदीः[2] vअजिन्वत् प्रीणयति ॥

ता अभि सन्तमस्तृतं महे युवानमा दधुः। इन्दुमिन्द्र तव व्रते ॥ ५ ॥

ताः। अभि। सन्तम्। अस्तृतम्। महे। युवानम्। आ। दधुः। इन्दुम्। इन्द्र। तव। व्रते ॥५॥

हे vइन्द्र vतव त्वदीये vव्रते कर्मणि vताः अङ्गुल्यः। पूर्वत्र धीतिभिः इत्यङ्गुलीनामुपात्तत्वात् तच्छब्देन परामर्शः। vसन्तं विद्यमानम् vअस्तृतम् अहिंसितं vयुवानं नित्यतरुणम् vइन्दुं सोमं vमहे महतेऽभिषवादिलक्षणाय कर्मणे vअभि vआ vदधुः ॥ ॥ ३२ ॥

अभि वह्निरमर्त्यः सप्त पश्यति वावहिः। क्रिविर्देवीरतर्पयत् ॥ ६ ॥

अभि। वह्निः। अमर्त्यः। सप्त। पश्यति। वावहिः। क्रिविः। देवीः। अतर्पयत् ॥ ६ ॥

यः vवह्निः यज्ञस्य धुरो वोढा vअमर्त्यः मरणरहितः vवावहिः देवानां तृप्तेरत्यन्तं वोढा च सोमः vसप्त नदीः vपश्यति सोऽयं vक्रिविः कूपरूपेण[3] पूर्णोऽवस्थितः सन् vदेवीः नदीःv अतर्पयत् तर्पयति ॥

अवा कल्पेषु नः पुमस्तमांसि सोम योध्या। तानि पुनान जङ्घनः ॥ ७ ॥

अव। कल्पेषु। नः। पुमः। तमांसि। सोम। योध्या। तानि। पुनान। जङ्घनः ॥ ७ ॥

हे vपुमः पुमन् सोम vकल्पेषु कल्पनीयेष्वहःसु vनः अस्मान् vअव रक्ष। अपि च vपुनान हे पवमान vसोम त्वं vयोध्या योधनीयानि vतमांसि रक्षांसि यानि vतानि vजङ्घनः नाशय ॥

नू नव्यसे नवीयसे सूक्ताय साधया पथः। प्रत्नवद्रोचया रुचः ॥ ८ ॥

नु। नव्यसे। नवीयसे। सुऽउक्ताय। साधय। पथः। प्रत्नऽवत्। रोचय। रुचः ॥ ८ ॥

हे सोम vनव्यसे नव्याय नूतनाय vनवीयसे स्तुत्यायास्माकं vसूक्ताय vपथः मार्गान् vनु क्षिप्रं vसाधय अभिगच्छ। अपि च vप्रत्नवत् यथापूर्वं vरुचः स्वदीप्तीः vरोचय प्रकाशय ॥

पवमान महि श्रवो गामश्वं रासि वीरवत्। सना मेधां सना स्वः ॥ ९ ॥

पवमान। महि। श्रवः। गाम्। अश्वम्। रासि। वीरऽवत्।

सन। मेधाम्। सन। स्वरिति स्वः ॥ ९ ॥

हे vपवमान सोम यस्त्वं vवीरवत् पुत्रवत् vमहि महत् vश्रवः अन्नं vगां च vअश्वं च vरासि अस्मभ्यं प्रयच्छसि स त्वं vमेधां vसन अस्मभ्यं प्रयच्छ। अपि च vस्वः यदस्मदभिलषितं तत् सर्वं vसन देहि ॥ ॥ ३३ ॥

'प्र स्वानासः' इति नवर्चं दशमं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'प्र स्वानासः' इत्यनुक्रान्तम्। उक्तो विनियोगः ॥

१. ग-त-भ४-धीतयः। २. त१.४.५.६.७-भ४--नदीभिः; त२-नदीव। ३. ग-कूपवत्।

प्र स्वानासो रथाइवार्वन्तो न श्रवस्यवः । सोमासो राये अक्रमुः ॥ १ ॥

प्र । स्वानासः । रथाःऽइव । अर्वन्तः । न । श्रवस्यवः । सोमासः । राये । अक्रमुः ॥ १ ॥

प्र स्वानासः अभिषववेलायामुपरवेषु शब्दं कुर्वन्तः सोमासः सोमाः रथाइव यथा शब्दं कुर्वन्तो रथाः अर्वन्तो न यथा शब्दं कुर्वन्तोऽश्वाः तथा श्रवस्यवः शत्रुभ्योऽन्नमिच्छन्तः राये यजमानानां धनाय अक्रमुः आगच्छन् ॥

हिन्वानासो रथाइव दधन्विरे गभस्त्योः । भरासः कारिणामिव ॥ २ ॥

हिन्वानासः । रथाःऽइव । दधन्विरे । गभस्त्योः । भरासः । कारिणाम्ऽइव ॥ २ ॥

सोमाः रथाइव यथा रथास्तथा हिन्वानासः हिन्वाना. यागदेशं प्रति गच्छन्तः भरासः भराः कारिणामिव यथा भारवाहिनां[1] बाह्वोर्धीयन्ते तथा गभस्त्योः ऋत्विजां बाह्वोः । 'गभस्ती बाहू' इति बाहुनामसु पाठात् । दधन्विरे धीयन्ते ॥

राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते । यज्ञो न सप्त धातृभिः ॥ ३ ॥

राजानः । न । प्रशस्तिऽभिः । सोमासः । गोभिः । अञ्जते । यज्ञः । न । सप्त । धातृऽभिः ॥३॥

सोमासः सोमाः प्रशस्तिभिः प्रशस्ताभिः[2] स्तुतिरूपाभिर्वाग्भिः राजानो न यथा राजानः सप्त धातृभिः सप्त होत्राभिः यज्ञो न यथा च यज्ञस्तथा गोभिः गोविकारैः पयोभिः अञ्जते अज्यन्ते । संस्क्रियन्त इत्यर्थः ॥

परि सुवानास इन्दवो मदाय बर्हणा गिरा । सुता अर्षन्ति धारया ॥ ४ ॥

परि । सुवानासः । इन्दवः । मदाय । बर्हणा । गिरा । सुताः । अर्षन्ति । धारया ॥ ४ ॥

सुवानासः सुवाना अभिषूयमाणाः इन्दवः सोमाः बर्हणा महत्या गिरा स्तुतिरूपया वाचा सुताः अभिषुताः सन्तः मदाय मदार्थं धारया परि अर्षन्ति परितो गच्छन्ति ॥

आपानासो विवस्वतो जनन्त उषसो भगम् । सूरा अण्वं वि तन्वते ॥ ५ ॥

आपानासः । विवस्वतः । जनन्तः । उषसः । भगम् । सूराः । अण्वम् । वि । तन्वते ॥५॥

विवस्वतः इन्द्रस्य आपानासः आपानभूताः उषसः भगं जनन्तः जनयन्तः सूराः सरन्तः सोमाः अण्वं वि तन्वते । अभिषववेलायामुपरवेषु शब्दं कुर्वन्ति ॥ ॥ ३४ ॥

अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः । वृष्णो हरस आयवः ॥ ६ ॥

अप । द्वारा । मतीनाम् । प्रत्नाः । ऋण्वन्ति । कारवः । वृष्णः । हरसे । आयवः ॥ ६ ॥

मतीनां स्तुतीनां कारवः कर्तार ऋत्विजः प्रत्नाः पुराणाः वृष्णः सेचकस्य सोमस्य[3] हरस आहरस आहर्तारश्च आयवः मनुष्याः द्वारा यज्ञस्य द्वाराणि अप ऋण्वन्ति ॥

समीचीनास आसते होतारः सप्तजामयः । पदमेकस्य पिप्रतः ॥ ७ ॥

सम्ऽईचीनासः । आसते । होतारः । सप्तऽजामयः । पदम् । एकस्य । पिप्रतः ॥ ७ ॥

---

१. त-भ-मु–भारवाहानां । २. ग-भ–'प्रशस्ताभिः' नास्ति; घ–शस्ताभिः । ३. ग-घ-त–'सोमस्य' नास्ति ।

समीचीनासः समीचीनाः जामयः जामिसदृशाः एकस्य सोमस्य पदे स्थाने पिप्रतः पूरयन्तः सप्त होतारः सप्त होत्रकाः आसते यज्ञ उपविशन्ति ॥

**नाभा नाभिं न आ ददे चक्षुश्चित्सूर्ये सचा । कवेरपत्यमा दुहे ॥ ८ ॥**

नाभा । नाभिम् । नः । आ । ददे । चक्षुः । चित् । सूर्ये । सचा । कवेः । अपत्यम् । आ । दुहे ॥८॥

नाभिं यज्ञस्य नाभिभूतं सोमं नः अस्माकं नाभा नाभौ अहम् आ ददे । पिबामीत्यर्थः । पीतसोमानामस्माकं चक्षुश्चित् चक्षुरपि सूर्ये सचा संगतं भवति । किंच कवेः क्रान्तकर्मणः सोमस्य अपत्यम्[1] अंशुम् आ दुहे आपूरयामि ॥

**अभि प्रिया दिवस्पदमध्वर्युभिर्गुहा हितम् । सूरः पश्यति चक्षसा ॥ ९ ॥**

अभि । प्रिया । दिवः । पदम् । अध्वर्युऽभिः । गुहा । हितम् । सूरः । पश्यति । चक्षसा ॥९॥

सूरः सुवीर्य इन्द्रः चक्षसा चक्षुषा दिवः दीप्तस्यात्मनः[2] प्रिया प्रियं पदम् अध्वर्युभिः गुहा गुहायां हृदये हितं निहितं[3] पीतं सोममपि अभि[4] पश्यति ॥ ॥ ३५ ॥

' उपास्मै ' इति नवर्चमेकादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' उपास्मै ' इत्यनुक्रान्तम् । उक्तः सूक्तविनियोगः । अभिष्टवे घर्मदुघावत्सेऽपनीयमाने[5] ' नमसेदुप ' इत्येषा । सूत्रितं च–' नमसेदुप सीदत संजानाना उप सीदन्नभिज्ञु ' ( आश्व. श्रौ. ४.७ ) इति ॥

**उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ इयक्षते ॥ १ ॥**

उप । अस्मै । गायत । नरः । पवमानाय । इन्दवे । अभि । देवान् । इयक्षते ॥ १ ॥

हे नरः नेतार ऋत्विजः[6] यज्ञस्य देवान् इन्द्रादीन् अभि इयक्षते आभिमुख्येन यष्टुमिच्छते[7] पवमानाय क्षरते अस्मै अभिपूयमाणाय इन्दवे सोमाय उप गायत उपगानं कुरुत ॥

**अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥ २ ॥**

अभि । ते । मधुना । पयः । अथर्वाणः । अशिश्रयुः । देवम् । देवाय । देवऽयु ॥ २ ॥

हे सोम ते तव देवं देवनशीलं देवयु देवयुं देवकामं रसं देवाय देवनशीलायेन्द्राय मधुना पयः गव्येन पयसा अथर्वाणः ऋषयः अभि अशिश्रयुः अभ्यश्रीणन् । संस्कुर्वन्नित्यर्थः ॥

**स नः पवस्व शं गवे शं जनाय शमर्वते । शं राजन्नोषधीभ्यः ॥ ३ ॥**

सः । नः । पवस्व । शम् । गवे । शम् । जनाय । शम् । अर्वते । शम् । राजन् । ओषधीभ्यः ॥ ३ ॥

हे राजन् दीप्यमान सोम सः प्रसिद्धस्त्वं नः अस्माकं गवे शं सुखं पवस्व क्षर । जनाय पुत्रादये च शं पवस्व । अर्वते अश्वाय च शं पवस्व । ओषधीभ्यः च शं पवस्व ॥

---

१. ग–अपत्यमपत्यभूतं । २. घ-त७– दीप्तस्य स्वर्गस्यात्मनः । ३. ग-घ-त–' निहितं ' नास्ति । ४. त-भ४–' अभि ' नास्ति । ५. ग–घर्मदुघावत्से उपनीयमाने; त-मु–घर्मदुघोवत्सो पवनीयमाने; भ१.२.३–घर्मदुघोवत्से पनीयमाने; भ४–घर्मदुघोवत्से पवनीयमाने । ६. ग-त-भ–'ऋत्विजः' नास्ति । ७. त-भ–°मिच्छति ।

बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे । सोमाय गाथमर्चत ॥ ४ ॥
बभ्रवे । नु । स्वऽतवसे । अरुणाय । दिविऽस्पृशे । सोमाय । गाथम् । अर्चत ॥ ४ ॥

हे स्तोतारः ᵛबभ्रवे बभ्रुवर्णाय ᵛस्वतवसे स्वबलाय ᵛअरुणाय कदाचिदरुणवर्णाय ᵛदिविस्पृशे दिवं स्पृशते ᵛसोमाय ᵛनु[1] क्षिप्रं[1] ᵛगाथं स्तुतिरूपां वाचम् ᵛअर्चत । उच्चारयतेत्यर्थः ॥

हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनीतन । मधावा धावता मधु ॥ ५ ॥
हस्तऽच्युतेभिः । अद्रिऽभिः । सुतम् । सोमम् । पुनीतन । मधौ । आ । धावत । मधु ॥५॥

हे ऋत्विजः ᵛहस्तच्युतेभिः हस्तप्रच्युतैः ᵛअद्रिभिः अभिषवग्रावभिः ᵛसुतम् अभिषुतं ᵛसोमं ᵛपुनीतन पवित्रे पावयत । अपि च ᵛमधौ मदकरे सोमे ᵛमधु गव्यं पयः ᵛआ ᵛधावत प्रक्षिपत ॥ ॥३६॥

नमसेदुप सीदत दध्नेदभि श्रीणीतन । इन्दुमिन्द्रे दधातन ॥ ६ ॥
नमसा । इत् । उप । सीदत । दध्ना । इत् । अभि । श्रीणीतन । इन्दुम् । इन्द्रे । दधातन ॥ ६ ॥

हे ऋत्विजः ᵛनमसेत् नमस्कारेणैव ᵛउप ᵛसीदत सोममुपगच्छत । ᵛदध्नेत् दध्नैव ᵛअभि ᵛश्रीणीतन अभिश्रीणीत च । ᵛइन्द्रे ᵛइन्दुं सोमं ᵛदधातन धत्त च ॥

अमित्रहा विचर्षणिः पवस्व सोम शं गवे । देवेभ्यो अनुकामकृत् ॥ ७ ॥
अमित्रऽहा । विऽचर्षणिः । पवस्व । सोम । शम् । गवे । देवेभ्यः । अनुकामऽकृत् ॥७॥

हे ᵛसोम ᵛअमित्रहा अमित्राणां हन्ता ᵛविचर्षणिः विद्रष्टा ᵛदेवेभ्यः ᵛअनुकामकृत् अभीष्टस्य कर्ता त्वं ᵛगवे अस्माकं गवे ᵛशं सुखं ᵛपवस्व क्षर ॥

इन्द्राय सोम पातवे मदाय परि षिच्यसे । मनश्चिन्मनसस्पतिः ॥ ८ ॥
इन्द्राय । सोम । पातवे । मदाय । परि । सिच्यसे । मनःऽचित् । मनसः । पतिः ॥ ८ ॥

हे ᵛसोम ᵛमनश्चित् मनसो ᵛज्ञाता ᵛमनसस्पतिः ईश्वरस्त्वम् ᵛइन्द्राय इन्द्रस्य ᵛपातवे पानाय ᵛमदाय च ᵛपरि ᵛषिच्यसे परितः पात्रेषु सिच्यसे ॥

पवमान सुवीर्यं रयिं सोम रिरीहि नः । इन्दविन्द्रेण नो युजा ॥ ९ ॥
पवमान । सुऽवीर्यम् । रयिम् । सोम । रिरीहि । नः । इन्दो इति । इन्द्रेण । नः । युजा ॥९॥

हे ᵛइन्दो क्रियमाण ᵛपवमान ᵛसोम त्वं ᵛसुवीर्यं शोभनवीर्योपेतं ᵛरयिं धनं ᵛनः अस्माकं संबन्धिना ᵛइन्द्रेण ᵛयुजा सहायेन ᵛनः अस्मभ्यं ᵛरिरीहि देहि ॥ ॥ ३७ ॥

' सोमा असृग्रम् ' इति नवर्चं द्वादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' सोमा असृग्रम् ' इत्यनुक्रान्तम् । उक्तो विनियोगः ॥

सोमा असृग्रमिन्दवः सुता ऋतस्य सादने । इन्द्राय मधुमत्तमाः ॥ १ ॥
सोमाः । असृग्रम् । इन्दवः । सुताः । ऋतस्य । सदने । इन्द्राय । मधुमत्ऽतमाः ॥ १ ॥

---

१. ग-त-भ-' नु क्षिप्रं ' नास्ति ।

सुताः अभिषुताः मधुमत्तमाः अतिशयेन मधुमन्तः[1] इन्दवः सोमाः ऋतस्य यज्ञस्य सादने गृहे[2] इन्द्राय इन्द्रार्थम् असृग्रं सृज्यन्ते ॥

अभि विप्रा अनूषत गावो वत्सं न मातरः । इन्द्रं सोमस्य पीतये ॥ २ ॥

अभि । विप्राः । अनूषत । गावः । वत्सम् । न । मातरः । इन्द्रम् । सोमस्य । पीतये ॥२॥

विप्राः मेधाविनः सोमस्य पीतये पानाय इन्द्रं मातरः जनयित्र्यः गावः वत्सं न यथा वत्सं प्रति तद्वत् अभि अनूषत अभिशब्दयन्ति ॥

मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित् । सोमो गौरी अधि श्रितः ॥ ३ ॥

मदऽच्युत् । क्षेति । सदने । सिन्धोः । ऊर्मा । विपःऽचित् ।
सोमः । गौरी इति । अधि । श्रितः ॥ ३ ॥

मदच्युत् मदकरस्य रसस्य च्यावयिता सोमः सादने[3] । संहितायां दीर्घश्छान्दसः । स्थाने क्षेति निवसति । एतदेव विवृणोति । सिन्धोः नद्याः ऊर्मा ऊर्मौ तरङ्गे । वसतीवरीष्वित्यर्थः । विपश्चित् विद्वान् सोमः गौरी अधि गौर्यामधि । अधीति सप्तम्यर्थानुवादः । माध्यमिकायां वाचि । 'गौरी गान्धर्वी' इति वाङ्नामसु पाठात् । श्रितः निवसति ॥

दिवो नाभा विचक्षणोऽव्यो वारे महीयते । सोमो यः सुक्रतुः कविः ॥ ४ ॥

दिवः । नाभा । विऽचक्षणः । अव्यः । वारे । महीयते । सोमः । यः । सुऽक्रतुः । कविः ॥४॥

यः सुक्रतुः सुप्रज्ञः कविः क्रान्तकर्मा विचक्षणः विद्रष्टा सः सोमः दिवः अन्तरिक्षस्य नाभा नाभौ नाभिभूते अव्यः अवेः वारे वाले महीयते पूज्यते । पूयमानः स्तूयत इत्यर्थः ॥

यः सोमः कलशेष्वाँ अन्तः पवित्र आहितः । तमिन्दुः परि षस्वजे ॥ ५ ॥

यः । सोमः । कलशेषु । आ । अन्तरिति । पवित्रे । आऽहितः । तम् । इन्दुः । परि । सस्वजे ॥५॥

यः सोमः कलशेषु कुम्भेषु आ आस्ते यश्च पवित्रे पवित्रस्य अन्तः मध्ये आहितः निहितः तं स्वांशभूतं सोमम् इन्दुः[4] सोमो देवः परि षस्वजे प्रविशति ॥ ॥ ३८ ॥

प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि । जिन्वन्कोशं मधुश्चुतम् ॥ ६ ॥

प्र । वाचम् । इन्दुः । इष्यति । समुद्रस्य । अधि । विष्टपि । जिन्वन् । कोशम् । मधुऽश्चुतम् ॥६॥

इन्दुः सोमः मधुश्चुतं मधुनश्च्यावकं कोशं मेघम् । 'अम्बुरः कोशः' इति मेघनामसु पाठात् । जिन्वन् प्रीणयन् समुद्रस्य अन्तरिक्षस्य अधि विष्टपि विष्टब्धे स्थाने वाचं प्र इष्यति प्रेरयति । पवित्रे पूयमानः शब्दं करोतीत्यर्थः ॥

नित्यस्तोत्रो वनस्पतिर्धीनामन्तः सबर्दुघः । हिन्वानो मानुषा युगा ॥ ७ ॥

नित्यऽस्तोत्रः । वनस्पतिः । धीनाम् । अन्तरिति । सबःऽदुघः । हिन्वानः । मानुषा । युगा ॥७॥

---

१. ग-मधुराः । २. ग-त-भ४-सदने; भ१.२.३-' गृहे ' नास्ति । ३. ग-त-भ-सदने; घ-मदन ।
४. न-भ-इंदुं ।

ᵛनित्यस्तोत्रः संततस्तोत्रः ᵛसबर्दुघः अमृतस्य दोग्धा ᵛवनस्पतिः वनानां पालयिता सोमः ᵛमानुषा मानुषाणि ᵛयुगा युगानि अहीनैकाहात्मकानि ᵛहिन्वानः प्रीणयन् ᵛधीनां कर्मणाम् ᵛअन्तः मध्ये निवसतीत्यर्थः ॥

**अभि प्रिया दिवस्पदा सोमो हिन्वानो अर्षति । विप्रस्य धारया कविः ॥ ८ ॥**

अभि । प्रिया । दिवः । पदा । सोमः । हिन्वानः । अर्षति । विप्रस्य । धारया । कविः ॥ ८ ॥

ᵛकविः क्रान्तकर्मा ᵛसोमः ᵛदिवः[1] अन्तरिक्षात् ᵛहिन्वानः प्रेर्यमाणः ᵛविप्रस्य मेधाविनः स्वस्य ᵛधारया ᵛप्रिया प्रियाणि ᵛपदा पदानि स्थानानि ᵛअभि ᵛअर्षति अभिगच्छति ॥

**आ पवमान धारय रयिं सहस्रवर्चसम् । अस्मे इन्दो स्वाभुवम् ॥ ९ ॥**

आ । पवमान । धारय । रयिम् । सहस्रऽवर्चसम् । अस्मे इति । इन्दो इति । सुऽआभुवम् ॥ ९ ॥

हे ᵛपवमान ᵛइन्दो सोम त्वं ᵛसहस्रवर्चसं बहुदीप्तिं ᵛस्वाभुवं शोभनभवनं ᵛरयिं धनम् ᵛअस्मे अस्मासु ᵛधारय[2] । प्रक्षिपेत्यर्थः ॥ ॥ ३९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल-
साम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थ-
प्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके सप्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
षष्ठस्य सप्तमोऽध्यायः संग्रहात्संप्रदर्शितः ।
अथाष्टमः सुमतिना संगमेन[3] प्रदर्श्यते ॥

तत्र ' सोमः पुनानः ' इति नवर्चं त्रयोदशं सूक्तम् । असितो देवलो वर्षिः । सोमो देवता । ' पवमानगुणः सोमो विज्ञेयः काश्यपात्परी॰ इति विद्यादनुक्तेऽपि लाघवाया दळहच्युतात् ' ॥ 'सोमः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**सोमः पुनानो अर्षति सहस्रधारो अत्यविः । वायोरिन्द्रस्य निष्कृतम् ॥ १ ॥**

सोमः । पुनानः । अर्षति । सहस्रऽधारः । अतिऽअविः । वायोः । इन्द्रस्य । निःऽकृतम् ॥ १ ॥

अयं ᵛपुनानः पावकः ᵛसोमः ᵛअर्षति गच्छति । कीदृशोऽयं पवमानः । ᵛसहस्रधारः अपरिमितधारः ᵛअत्यविः । अत्राविशब्देन तल्लोमान्युच्यन्ते । अविलोमभिर्निष्पादितं दशापवित्रमित्यर्थः । तदतिक्रम्य गच्छतीत्यत्यविः । किमर्थम् । ᵛवायोरिन्द्रस्य च पानायेति शेषः । किं प्रति । ᵛनिष्कृतम् । निरित्येष समित्येतस्मिन्नर्थे । संस्कृतं पात्रं प्रति ॥

---

१. त-भ४-देवः । २. घ-आधारय । ३. ग-संग्रहेण ।

पर्वमानमवस्यवो विप्रंमुभि प्र गायत । सुष्वाणं देववीतये ॥ २ ॥

पर्वमानम् । अवस्यवः । विप्रम् । अभि । प्र । गायत । सुस्वानम् । देवऽवीतये ॥ २ ॥

हे vअवस्यवः रक्षणकामा उद्गात्रादयः यूयं vपवमानं शोधकं vविप्रं विशेषेण देवानां प्रीणयितारं विप्रवच्छुद्धं वा । अथवा विप्र इति मेधाविनाम । मेधाविनम् । vदेववीतये देवपानाय vसुष्वाणं सूयमानम् vअभि vप्र vगायत आभिमुख्येन प्रकर्षेण स्तुत ॥

पर्वन्ते वाजसातये सोमाः सहस्रपाजसः । गृणाना देववीतये ॥ ३ ॥

पर्वन्ते । वाजऽसातये । सोमाः । सहस्रऽपाजसः । गृणानाः । देवऽवीतये ॥ ३ ॥

vपवन्ते क्षरन्ति vसोमाः । किमर्थम् । vवाजसातये अन्नस्य लाभाय । कीदृशाः । vसहस्रपाजसः बहुबलाः[1] । पातॄणां बलप्रदा इत्यर्थः । vगृणानाः । कर्मणि कर्तृप्रत्ययः । स्तूयमानाः । पुनः किमर्थम् । vदेववीतये । देवानां वीतिर्गतिः प्राप्तिर्भक्षणं वा यस्मिन् स देववीतिर्यज्ञः[2] । तदर्थम् । यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा अन्नलाभ इत्यर्थः ॥

उत नो वाजसातये पर्वस्व बृहतीरिषः । द्युमदिन्दो सुवीर्यम् ॥ ४ ॥

उत । नः । वाजऽसातये । पर्वस्व । बृहतीः । इषः । द्युऽमत् । इन्दो इति । सुऽवीर्यम् ॥४॥

vउत अपि च vनः अस्माकं vवाजसातये अन्नलाभाय हे vइन्दो सोम vबृहतीरिषः महतीः रसधाराः vद्युमत् दीप्तिमत् vसुवीर्यं शोभनसामर्थ्यं च vपवस्व क्षर । शोभनसामर्थ्योपेता धाराः पवस्वेत्यर्थः । अथवा । वाजसातये संग्रामाय बृहतीरिषो द्युमत् सुवीर्यं संपादयितुं पवस्वेति योज्यम् ॥

ते नः सहस्रिणं रयिं पर्वन्तामा सुवीर्यम् । सुवाना देवास इन्दवः ॥ ५ ॥

ते । नः । सहस्रिणम् । रयिम् । पर्वन्ताम् । आ । सुऽवीर्यम् । सुवानाः । देवासः । इन्दवः ॥५॥

vते vइन्दवः सोमाः vनः अस्माकं vसहस्रिणं सहस्रसंख्योपेतं vरयिं धनं vसुवीर्यं च[3] vआ vपवन्ताम् । कीदृशास्ते । vसुवानाः सूयमानाः vदेवासः द्योतनादिगुणयुक्ताः[4] ॥ ॥ १ ॥

अत्या हियाना न हेतृभिरसृग्रं वाजसातये । वि वारमव्यमाशवः ॥ ६ ॥

अत्याः । हियानाः । न । हेतृऽभिः । असृग्रम् । वाजऽसातये । वि । वारम् । अव्यम् । आशवः ॥६॥

vवाजसातये संग्रामाय vहियानाः प्रेर्यमाणाः vअत्याः vन अश्वा इव ते यथा प्रेरकैः प्रेर्यमाणाः संग्रामाय शीघ्रं धावन्ति तद्वत् vहेतृभिः प्रेरकैः प्रेर्यमाणाः vआशवः शीघ्रगामिनः सोमाः वाजसातये[5] अन्नलाभाय[5] vअव्यं vवारं दशापवित्रं vवि-vअसृग्रं व्यतिसृज्यन्ते[6] ॥

वाश्रा अर्षन्तीन्दवोऽभि वत्सं न धेनवः । दधन्विरे गभस्त्योः ॥ ७ ॥

वाश्राः । अर्षन्ति । इन्दवः । अभि । वत्सम् । न । धेनवः । दधन्विरे । गभस्त्योः ॥ ७ ॥

१. त-भ४–बहुलाः । २. त-भ४–देवतातिर्यज्ञः । ३. ग-त-भ४– वा । ४. ग-त-भ१.२.४–°गुणकाः; भ५–°गुणकराः । ५. भ–‘वाजसातये अन्नलाभाय’ नास्ति । ६. त१.२.६–व्यतिसृज्यंते किं प्रति अव्यं अविभवां वारं वालं दशापवित्रं प्रतीत्यर्थः; त३.५-भ४–पुस्तकेषु ‘व्यतिसृज्यंते’ इत्यस्यानन्तरं किंचिदवकाशो विद्यते; त७–व्यतिसृज्यंते किं प्रति अव्यं वारं वालां दशापवित्रं प्रतीत्यर्थः ।

ᵛवाश्राः शब्दयन्तः ᵛइन्दवः सोमाः ᵛअभि ᵛअर्षन्ति अभिगच्छन्ति पात्रं प्रति वाश्राः शब्दकारिण्यः ᵛधेनवः ᵛन। ता यथा शब्दयन्त्यः ᵛवत्सं प्रत्यागच्छन्ति तद्वत्। त एव ᵛगभस्त्योः बाह्वोः ᵛदधन्विरे ध्रियन्ते च ॥

जुष्ट इन्द्राय मत्सरः पवमान कनिक्रदत्। विश्वा अप द्विषो जहि ॥ ८ ॥

जुष्टः। इन्द्राय। मत्सरः। पवमान। कनिक्रदत्। विश्वाः। अप। द्विषः। जहि ॥ ८ ॥

ᵛइन्द्राय ᵛजुष्टः प्रियः[1] पर्याप्तः ᵛमत्सरः सोमो भवतीति शेषः। 'मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः' (निरु. २.५) इति निरुक्तम्। हे ᵛपवमान त्वं ᵛकनिक्रदत् शब्दयन् ᵛविश्वाः ᵛद्विषः सर्वानस्माकं द्वेष्टॄन् ᵛअप ᵛजहि ॥

अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः। योनावृतस्य सीदत ॥ ९ ॥

अपऽघ्नन्तः। अराव्णः। पवमानाः। स्वःऽदृशः। योनौ। ऋतस्य। सीदत ॥ ९ ॥

हे ᵛपवमानाः ᵛअराव्णः अदानानयजमानान् ᵛअपघ्नन्तः हिंसन्तः ᵛस्वर्दृशः सर्वत्र[2] द्रष्टारश्च यूयम् ᵛऋतस्य ᵛयोनौ यज्ञस्य स्थाने ᵛसीदत। अथवा। सोमपानार्थमुक्तलक्षणा देवा ऋतस्य योनौ सीदतेति योज्यम् ॥ ॥ २ ॥

'परि प्र' इत्यष्टर्चं चतुर्दशं सूक्तम्। ऋष्यादि पूर्ववत्। 'परि प्राष्टौ' इत्यनुक्रान्तम्। गतो विनियोगः ॥

परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः। कारं बिभ्रत्पुरुस्पृहम् ॥ १ ॥

परि। प्र। असिस्यदत्। कविः। सिन्धोः। ऊर्मौ। अधि। श्रितः।
कारम्। बिभ्रत्। पुरुऽस्पृहम् ॥ १ ॥

ᵛपरि ᵛप्रासिष्यदत् परिप्रस्यन्दते ᵛकविः मेधावी सोमः[3] ᵛसिन्धोरूर्मौ तरङ्गे[4] वसतीवर्युदकरसे[4] ᵛअधि ᵛश्रितः आश्रितः। ᵛपुरुस्पृहं बहुभिः स्पृहणीयं ᵛकारं शब्दं ᵛबिभ्रत् धारयन् परिस्यन्दत इति संबन्धः ॥

गिरा यदी सबन्धवः पञ्च व्राता अपस्यवः। परिष्कृण्वन्ति धर्णसिम् ॥ २ ॥

गिरा। यदि। सऽबन्धवः। पञ्च। व्राताः। अपस्यवः। परिऽकृण्वन्ति। धर्णसिम् ॥ २ ॥

ᵛसबन्धवः समानबन्धनाः ᵛपञ्च ᵛव्राताः पञ्च जना मनुष्या[5] यजमानाः[5] ᵛअपस्यवः कर्मेच्छवः यद्यदा ईमेनं ᵛधर्णसिं धारकं सोमं ᵛगिरा[6] स्तुत्या[6] ᵛपरिष्कृण्वन्ति अलंकुर्वन्ति। अस्योत्तरत्रान्वयः ॥

आदस्य शुष्मिणो रसे विश्वे देवा अमत्सत। यदी गोभिर्वसायते ॥ ३ ॥

आत्। अस्य। शुष्मिणः। रसे। विश्वे। देवाः। अमत्सत। यदि। गोभिः। वसायते ॥ ३ ॥

---

१. ग-त-भ-मु-'प्रियः' नास्ति। २. भ१.३-सर्व। ३. ग-त-भ-'सोमः' नास्ति। ४. ग-त-भ-'तरंगे...°रसे' नास्ति। ५. ग-त-भ-'मनुष्या यजमानाः' नास्ति। ६. ग-त-भ-'गिरा स्तुत्या' नास्ति।

ᵛआत् परिष्करणानन्तरमेव ᵛशुष्मिणः बलवतः ᵛअस्य सोमस्य ᵛरसे ᵛविश्वे ᵛदेवाः ᵛअमत्सत अमाद्यन्त[1]। ᵛयदि यदा ᵛगोभिः गोविकारैः। विकारे प्रकृतिशब्दः। क्षीरादिभिः ᵛवसायते आच्छाद्यते ॥

**निरिणानो वि धावति जहच्छर्याणि तान्वा। अत्रा सं जिघ्रते युजा ॥ ४ ॥**

निऽरिणानः। वि। धावति। जहत्। शर्याणि। तान्वा। अत्र। सम्। जिघ्रते। युजा ॥४॥

अयं सोमः ᵛनिरिणानः दशापवित्राद्धो गच्छन् ᵛवि ᵛधावति विविधं धावति - - - - यदा ᵛतान्वा। तनु दशापवित्रवस्त्रम्। तत्संबन्धीनि ᵛशर्याणि द्वाराणि ᵛजहत्[2] अधः सरति। ᵛअत्र अस्मिन् यज्ञे ᵛयुजा सखिभूतेनेन्द्रेण सह ᵛसं ᵛजिघ्रते संगतो भवति। वस्त्रसुषिराद्विनिर्गत्य दशापवित्रादधः सत्[3] पात्रं विविधं गच्छन् होमद्वारेणेन्द्रेण संगतो भवतीत्यर्थः ॥

**नप्तीभिर्यो विवस्वतः शुभ्रो न मामृजे युवा। गाः कृण्वानो न निर्णिजम् ॥ ५ ॥**

नप्तीभिः। यः। विवस्वतः। शुभ्रः। न। ममृजे। युवा। गाः। कृण्वानः। न। निःऽनिजम् ॥५॥

ᵛयः सोमः ᵛविवस्वतः परिचरणवतो यजमानस्य ᵛनप्तीभिः पौत्रस्थानीयाभिः। तस्य हस्तः पुत्रोऽङ्गुलयः पौत्रस्थानीया इत्यभिप्रायः। ᵛमामृजे[4] मृज्यते ᵛशुभ्रो ᵛन दीप्तोऽश्वः ᵛयुवा इव। यथाप्रवृद्धोऽश्वो[5] मृज्यते स्वपरिचारकैस्तद्वत् स एव युवा मिश्रणशीलः सोमः ᵛनिर्णिजम्। 'निर्णिक्' इति रूपनाम। स्वकीयं रूपं ᵛगाः ᵛन[6] ᵛकृण्वानः गोविकारांश्च कुर्वाणो भवतीति शेषः ॥ ॥ ३ ॥

**अति श्रिती तिरश्चता गव्या जिगात्यण्व्या। वग्नुमियर्ति यं विदे ॥ ६ ॥**

अति। श्रिती। तिरश्चता। गव्या। जिगाति। अण्व्या। वग्नुम्। इयर्ति। यम्। विदे ॥ ६ ॥

ᵛअण्व्या अङ्गुल्याभिपूयमानः सोमः ᵛगव्या गव्यानि ᵛश्रिती श्रित्यै श्रयणार्थं ᵛतिरश्चता तिरश्चीनम् ᵛअति ᵛजिगाति। अंशुमतिक्रम्य गच्छति। तथाङ्गुल्याभिपूयमानः ᵛवग्नुं शब्दम् ᵛइयर्ति प्रेरयति[7] ॥

**अभि क्षिपः समग्मत मर्जयन्तीरिषस्पतिम्। पृष्ठा गृभ्णत वाजिनः ॥ ७ ॥**

अभि। क्षिपः। सम्। अग्मत। मर्जयन्तीः। इषः। पतिम्। पृष्ठा। गृभ्णत। वाजिनः ॥ ७ ॥

ᵛक्षिपः अङ्गुलयः ᵛमर्जयन्तीः[8] अभिमृशन्त्यः ᵛइषस्पतिम् अन्नानां स्वामिनं सोमम् ᵛअभि ᵛसमग्मत अभिसंगच्छन्ते। संगत्य च ᵛवाजिनः बलवतः सोमस्य ᵛपृष्ठा पृष्ठानि ᵛगृभ्णत गृह्णन्त्यभिषवाङ्गुलयः ॥

**परि दिव्यानि मर्मृशद्विश्वानि सोम पार्थिवा। वसूनि याह्यस्मयुः ॥ ८ ॥**

परि। दिव्यानि। मर्मृशत्। विश्वानि। सोम। पार्थिवा। वसूनि। याहि। अस्मऽयुः ॥८॥

---

१. ग-माद्यंति; भ१.२.३-अमाद्यं। २. त-भ-'जहत्' नास्ति। ३. ग-भ१.२.३-मु-सरन्; त-भ४-सन्। ४. ग-ममृजे। ५. ग-यथातिप्रयत्नात् युवाश्वो। ६. ग-त-भ-'न' नास्ति। ७. ग-प्रेरयति यं शब्दं जानामी; घ-प्रेरयति विदे जानते यजमानाय। ८. भ१-४-पुस्तकयोः 'मर्जयन्तीः' इत्यस्यानन्तरं कियांश्चिदवकाशो विद्यते।

हे ᵛसोम ᵛदिव्यानि पार्थिवानि च ᵛविश्वानि[1] सर्वाणि ᵛवसूनि धनानि[1] ᵛपरि ᵛमर्मृशत् परिमृशन् परिगृह्णन् ᵛअस्मयुः अस्मान् कामयमानः ᵛयाहि आगच्छ। एवमभिषुण्वन्[2] रसं[2] संबोध्य ब्रूते ॥　　॥ ४ ॥

'एष धिया' इत्यष्टर्चं पञ्चदशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'एष धिया' इत्यनुक्रान्तम्। गतो विनियोगः ॥

**एष धिया यात्यण्व्या शूरो रथेभिराशुभिः। गच्छन्निन्द्रस्य निष्कृतम् ॥ १ ॥**

एषः। धिया। याति। अण्व्या। शूरः। रथेभिः। आशुऽभिः।
गच्छन्। इन्द्रस्य। निःऽकृतम् ॥ १ ॥

ᵛएषः सोमः ᵛशूरः विक्रान्तः ᵛअण्व्या अङ्गुल्याभिषुतः ᵛधिया कर्मणा ᵛयाति गच्छति। कं देशं प्रति। उच्यते। ᵛइन्द्रस्य ᵛनिष्कृतं स्थानं दिवं प्रति ᵛरथेभिः रथैः ᵛआशुभिः शीघ्रगामिभिः ᵛगच्छन् इन्द्रेण रथेऽवस्थाप्य स्वस्थाननयनाय। अङ्गुल्याभिपूयमाणः सन् होमद्वाराग्निं निष्पीडनद्वारा[3] पात्रं वा गच्छतीत्यर्थः[3] ॥

**एष पुरू धियायते बृहते देवतातये। यत्रामृतास आसते ॥ २ ॥**

एषः। पुरु। धियाऽयते। बृहते। देवऽतातये। यत्र। अमृतासः। आसते ॥ २ ॥

ᵛएषः सोमः ᵛपुरु बहुलं ᵛधियायते धियं कर्मेच्छति। धीशब्दाद्यकारोपजनः। यद्वा। द्वितीयार्थे तृतीया छान्दसश्चालुक्। कस्मै। ᵛबृहते महते ᵛदेवतातये यज्ञाय। ᵛयत्र यस्मिन् यज्ञे ᵛअमृतासः अमृता देवाः ᵛआसते वसन्ति तदर्थम् ॥

**एष हितो वि नीयतेऽन्तः शुभ्रावता पथा। यदी तुञ्जन्ति भूर्णयः ॥ ३ ॥**

एषः। हितः। वि। नीयते। अन्तरिति। शुभ्रऽवता। पथा। यदि। तुञ्जन्ति। भूर्णयः ॥३॥

ᵛएषः सोमः ᵛहितः निहितः हविर्धाने ᵛवि ᵛनीयते तस्मात् स्थानादाहवनीयं प्रति। ᵛअन्तः तयोर्मध्यदेशे ᵛशुभ्रावता शोभावता ᵛपथा मार्गेण ᵛयदि यदा ᵛतुञ्जन्ति प्रयच्छन्ति देवेभ्यः ᵛभूर्णयः भरणशीला अध्वर्य्वादयः। तदा वि नीयत इति समन्वयः ॥

**एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो३ वृषा। नृम्णा दधान ओजसा ॥ ४ ॥**

एषः। शृङ्गाणि। दोधुवत्। शिशीते। यूथ्यः। वृषा। नृम्णा। दधानः। ओजसा ॥ ४ ॥

ᵛएषः सोमः ᵛशृङ्गाणि शृङ्गवदुन्नतानंशूनभिषवकाले ᵛदोधुवत् धूनोति[4]। ᵛयूथ्यः यूथार्हो यूथपतिः ᵛवृषा वृषभो यथा ᵛशिशीते तीक्ष्णे शृङ्गे धूनोति[5] तद्वत्। कीदृश एषः। ᵛओजसा बलेन ᵛनृम्णा नृम्णानि धनानि ᵛदधानः अस्मदर्थं धारयन् ॥

---

१. ग-त३.४.५-भ४-वसूनि; त७-वसूनि धनानि विश्वानि सर्वाणि; भ१.२.३-विश्वानि वसूनि। २. ग-एवमभिषवानंतरं; भ१.३-एवमभिषुण्वन्। ३. ग-निपातनद्वारा च तत्रैवागच्छतीत्यर्थः; त-निष्पीडनद्वारा पात्रे वा गच्छतीत्यर्थः; भ१.३-वा पात्रं गच्छतीत्यर्थः; भ४-निष्पीडनद्वारा पात्रं गच्छतीत्यर्थः। ४. घ-त१.६.७-भ१.३-धुनोति। ५. घ-त७-धुनोति; त१.२.३.६-भ१.४-धूनेति।

**एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः । पतिः सिन्धूनां भवन् ॥ ५ ॥**

एषः । रुक्मिऽभिः । ईयते । वाजी । शुभ्रेभिः । अंशुऽभिः । पतिः । सिन्धूनाम् । भवन् ॥ ५ ॥

vएषः सोमः vरुक्मिभिः अध्वर्य्वादिभिः सह vईयते गच्छति । कीदृश एषः । vवाजी वेजनवान्[1] vशुभ्रेभिः शुभ्रैर्दीप्तैः vअंशुभिः विशिष्टः । अथवा रुक्मिभिरित्येतदप्यंशुविशेषणम् । vसिन्धूनां स्यन्दमानानां रसानां vपतिः vभवन् य[2] ईयत इति ॥

**एष वसूनि पिब्दना परुषा ययिवाँ अति । अव शादेषु गच्छति ॥ ६ ॥**

एषः । वसूनि । पिब्दना । परुषा । ययिऽवान् । अति । अव । शादेषु । गच्छति ॥ ६ ॥

vएषः सोमः vवसूनि आच्छादकानि vपिब्दना पिब्दनानि[3] पीडितानि रक्षांसि vपरुषा पर्वणा vअति अतिक्रम्य vययिवान् गच्छन् vशादेषु शातनीयेषु रक्षःसु vअव vगच्छति ॥

**एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः । प्रचक्राणं महीरिषः ॥ ७ ॥**

एतम् । मृजन्ति । मर्ज्यम् । उप । द्रोणेषु । आयवः । प्रऽचक्राणम् । महीः । इषः ॥ ७ ॥

vआयवः मनुष्या ऋत्विजः vएतं सोमं vमर्ज्यं मार्जनीयम् vउप vमृजन्ति । निष्पीडयन्तीत्यर्थः । कुत्र । vद्रोणेषु द्रोणकलशेषु । कीदृशम् । vमहीरिषः महान्त्यन्नानि vप्रचक्राणं कुर्वाणम् । प्रभूतरसस्राविणमित्यर्थः ॥

ग्रावस्तोत्रे गाणगारिमतेनाभिरूपकरणे मृज्यमाने सोमे 'एतमु त्यम्' इत्येषा । सूत्रितं च— 'एतमु त्यं दश क्षिपो मृज्यमानः सुहस्त्या' (आश्व. श्रौ. ५ . १२) इति ॥

**एतमु त्यं दश क्षिपो मृजन्ति सप्त धीतयः । स्वायुधं मदिन्तमम् ॥ ८ ॥**

एतम् । ऊँ इति । त्यम् । दश । क्षिपः । मृजन्ति । सप्त । धीतयः ।
सुऽआयुधम् । मदिन्ऽतमम् ॥ ८ ॥

vत्यं तम् vएतमु एतमेव सोमं vदश vक्षिपः दशाङ्गुलयः vमृजन्ति परिचरन्ति । vसप्त vधीतयः सप्त ऋत्विजश्च । ऋत्विजोऽङ्गुलिभिर्मृजन्तीत्यर्थः । कीदृशमेतम्[4] । vस्वायुधं शोभनायुधं vमदिन्तमं मादयितृतमम् । रक्षोहननसामर्थ्यप्रदर्शनाय स्वायुधशब्दश्रवणम् ॥ ॥ ५ ॥

'प्र ते सोतारः' इत्यष्टर्चं षोडशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'प्र ते' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**प्र ते सोतार ओण्यो३ रसं मदाय घृष्वये । सर्गो न तक्त्येतशः ॥ १ ॥**

प्र । ते । सोतारः । ओण्योः । रसम् । मदाय । घृष्वये । सर्गः । न । तक्ति । एतशः ॥ १ ॥

हे सोम vते तव रसं vसोतारः सोमाभिषवकर्तारः vओण्योः vरसम् । लुप्तोपममेतत् । द्यावापृथिव्यो रसमुदकमिव । अथवौण्योर्द्यावापृथिव्योर्मध्ये तयोः संबन्धिनं वा रसम् । vप्र स्रावयन्तीति

---

१. ग–वाजनवान्; घ–वेगवान् । २. ग–अयं; घ–यं । ३. ग-त१.२.३.६.७-भ२.३–'पिब्दनानि' नास्ति । ४. ग-त-भ४–कीदृशमेनं ।

शेषः। किमर्थम्। ᵛधृष्णवे शत्रुधर्षणशीलाय[1] ᵛमदाय इन्द्रस्य मदाय। अभिषवजनितः सोमः ᵛसर्गः सृष्टः ᵛएतशः ᵛन अश्व इव ᵛतक्ति गच्छति पात्रं प्रति॥

क्रत्वा दक्षस्य रथ्यमपो वसानमन्धसा। गोषामण्वेषु सश्चिम॥ २॥

क्रत्वा। दक्षस्य। रथ्यम्। अपः। वसानम्। अन्धसा। गोऽसाम्। अण्वेषु। सश्चिम॥२॥

वयमभिषोतारः ᵛदक्षस्य बलस्य ᵛरथ्यं नेतारम् ᵛअपः उदकानि रसान् ᵛवसानम् आच्छादयन्तम् ᵛअन्धसा श्रयणान्नेन सहितं ᵛगोषां गवां सोतारमेवमुक्तलक्षणं[2] सोमं ᵛक्रत्वा कर्मणा ᵛअण्वेषु अङ्गुलीषु ᵛसश्चिम संयोजयामः[3]॥

अनप्तमप्सु दुष्टरं सोमं पवित्र आ सृज। पुनीहीन्द्राय पातवे॥ ३॥

अनप्तम्। अप्ऽसु। दुस्तरम्। सोमम्। पवित्रे। आ। सृज। पुनीहि। इन्द्राय। पातवे॥३॥

ᵛअनप्तं शत्रुभिरनाप्तम् ᵛअप्सु[4] आन्तरिक्ष्यासु। वर्तमानमिति शेषः। ᵛदुष्टरम् अन्यैरनभिभाव्यम्। न हि सोमं कश्चिदप्यतितरति। ईदृशं ᵛसोमं ᵛपवित्रे दशापवित्रे ᵛआ ᵛसृज प्रक्षिप हे अध्वर्यो। तत्रोच्यते[5]। ᵛइन्द्राय इन्द्रस्य ᵛपातवे पातुं ᵛपुनीहि॥

प्र पुनानस्य चेतसा सोमः पवित्रे अर्षति। क्रत्वा सधस्थमासदत्॥ ४॥

प्र। पुनानस्य। चेतसा। सोमः। पवित्रे। अर्षति। क्रत्वा। सधऽस्थम्। आ। असदत्॥४॥

ᵛचेतसा स्तुत्या ᵛपुनानस्य पूयमानस्यांशीभूतः ᵛसोमः ᵛपवित्रे दशापवित्रे ᵛअर्षति गच्छति[6]। अथ पश्चात् ᵛक्रत्वा कर्मणा प्रज्ञानेन वा ᵛसधस्थं सहस्थानं द्रोणकलशे[7] ᵛआसदत् आसीदति॥

प्र त्वा नमोभिरिन्दव इन्द्र सोमा असृक्षत। महे भराय कारिणः॥ ५॥

प्र। त्वा। नमःऽभिः। इन्दवः। इन्द्र। सोमाः। असृक्षत। महे। भराय। कारिणः॥ ५॥

हे ᵛइन्द्र ᵛत्वा त्वां ᵛनमोभिः नमस्कारोपलक्षितैः स्तोत्रैरथवान्नैः सह ᵛइन्दवः ᵛसोमाः ᵛप्र[8] ᵛअसृक्षत[8] प्राप्नुवन्ति। किमर्थम्। ᵛमहे महते ᵛभराय संग्रामाय। कीदृशाः। ᵛकारिणः बलकरणशीलाः॥

पुनानो रूपे अव्यये विश्वा अर्षन्नभि श्रियः। शूरो न गोषु तिष्ठति॥ ६॥

पुनानः। रूपे। अव्यये। विश्वाः। अर्षन्। अभि। श्रियः। शूरः। न। गोषु। तिष्ठति॥६॥

ᵛअव्यये अविमये ᵛरूपे रूप्यमाणे वस्त्रे ᵛपुनानः पूयमानः ᵛविश्वाः सर्वाः ᵛश्रियः शोभाः ᵛअभि ᵛअर्षन् अभिगच्छन् ᵛगोषु निमित्तासु ᵛशूरो ᵛन शूर इव स यथा संग्रामे तिष्ठति तद्वदसौ ᵛतिष्ठति पात्रे॥

१. घ–घर्षणशीलाय; भ–शत्रूणां घर्षणशीलाय। २. ग–दातारमेव। ३. त–संयोजमानः। ४. त-भ–अप्सु अप्सु। ५. ग–तदेवोच्यते; त-भ४–तवोच्यते। ६. भ१.२–प्रगच्छति। ७. ग–द्रोणकलशं। ८. घ–असृक्षत; त-भ–प्रासृजन्।

दिवो न सानु पिप्युषी धारा सुतस्य वेधसः । वृथा पवित्रे अर्षति ॥ ७ ॥

दिवः । न । सानु । पिप्युषी । धारा । सुतस्य । वेधसः । वृथा । पवित्रे । अर्षति ॥ ७ ॥

दिवो न द्युलोकादन्तरिक्षाद्दिव सानु समुच्छ्रितमुदकं तद्यथाधो निपतति तद्वत् वेधसः विधातुर्बलस्य कर्तुः सुतस्य अभिषुतस्य सोमस्य पिप्युषी आप्याययन्ती धारा वृथा अनायासेनैव पवित्रे दशापवित्रे अर्षति गच्छति ॥

त्वं सोम विपश्चितं तना पुनान आयुषु । अव्यो वारं वि धावसि ॥ ८ ॥

त्वम् । सोम । विपःऽचितम् । तना । पुनानः । आयुषु । अव्यः । वारम् । वि । धावसि ॥ ८ ॥

हे सोम त्वं विपश्चितं[1] स्तोतारम् आयुषु मनुष्येषु[2] मध्ये रक्षसि । अथवा । तृतीयार्थे द्वितीया । विपश्चिताध्वर्युणा । तना वस्त्रेण पुनानः पूयमानः । अथवा । विपश्चितमिन्द्रं प्रीणयितुं तना पुनानः सन् । अव्यो वारम् अवेर्वालं वि धावसि विविधं गच्छसि ॥ ॥ ६ ॥

'प्र निम्नेनेव' इत्यष्टर्चं सप्तदशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'प्र निम्नेनेव' इत्यनुक्रान्तम् । गतो विनियोगः ॥

प्र निम्नेनेव सिन्धवो घ्नन्तो वृत्राणि भूर्णयः । सोमा असृग्रमाशवः ॥ १ ॥

प्र । निम्नेनऽइव । सिन्धवः । घ्नन्तः । वृत्राणि । भूर्णयः । सोमाः । असृग्रम् । आशवः ॥ १ ॥

निम्नेन प्रवणेन देशेन सिन्धवः नद्यः इव तथा वृत्राणि शत्रून् घ्नन्तः भूर्णयः क्षिप्रगमनाः आशवः व्याप्ताः सोमाः प्र असृग्रं प्रगच्छन्ति द्रोणकलशं प्रति ॥

अभि सुवानास इन्दवो वृष्टयः पृथिवीमिव । इन्द्रं सोमासो अक्षरन् ॥ २ ॥

अभि । सुवानासः । इन्दवः । वृष्टयः । पृथिवीम्ऽइव । इन्द्रम् । सोमासः । अक्षरन् ॥ २ ॥

सुवानासः सूयमानाः इन्दवः द्रवरूपाः सोमासः सोमाः इन्द्रं प्रीणयितुम् अभि अक्षरन् । किमिव । वृष्टयः पृथिवीमिव ॥

अत्यूर्मिर्मत्सरो मदः सोमः पवित्रे अर्षति । विघ्नन्रक्षांसि देवयुः ॥ ३ ॥

अतिऽऊर्मिः । मत्सरः । मदः । सोमः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥ ३ ॥

अत्यूर्मिः । अतिक्रान्ता ऊर्मयो यस्मात् सोऽत्यूर्मिः । अतिप्रवृद्ध इत्यर्थः । मत्सरः मादनशीलः मदः मदात्मकः सोमः पवित्रे अर्षति गच्छति । किं कुर्वन् । रक्षांसि विघ्नन् घातयन् देवयुः देवान् कामयमानोऽर्षतीति संबन्धः ॥

पवित्रेष्ट्यां द्वितीयाज्यभागस्य 'आ कलशेषु' इति याज्या । सूत्रितं च—'आ कलशेषु धावति पवित्रे परिषिच्यत इत्येका[3]' ( आश्व. श्रौ. ५. १२ ) इति[3] ॥

आ कलशेषु धावति पवित्रे परि षिच्यते । उक्थैर्यज्ञेषु वर्धते ॥ ४ ॥

आ । कलशेषु । धावति । पवित्रे । परि । सिच्यते । उक्थैः । यज्ञेषु । वर्धते ॥ ४ ॥

---

१. भ–विपश्चितं स्तोतृनामैतत् । २. भ–इतरेषु मनुष्येषु । ३. त-भ-मु–इत्येके ।

अयं सोमः ᵛकलशेषु ᵛआ ᵛधावति। तदर्थं ᵛपवित्रे ᵛपरि ᵛषिच्यते अध्वर्युभिः। ᵛउक्थैः स्तोत्रैः ᵛयज्ञेषु निमित्तेषु ᵛवर्धते प्रवृद्धो भवति ॥

**अति त्री सोम रोचना रोहन्न भ्राजसे दिवम्। इष्णन्त्सूर्यं न चोदयः ॥ ५ ॥**

अति। त्री। सोम। रोचना। रोहन्। न। भ्राजसे। दिवम्। इष्णन्। सूर्यम्। न। चोदयः ॥५॥

हे ᵛसोम त्वं ᵛत्री ᵛरोचना[1] त्रीणि[1] रोचनानि त्रीँल्लोकान् ᵛअति अतिक्रम्य ᵛरोहन् उपरिस्थं ᵛदिवं द्युलोकं ᵛभ्राजसे प्रकाशयसि। तथा ᵛइष्णन् गच्छन् ᵛसूर्यं ᵛन सूर्यं च ᵛचोदयः चोदयसि प्रेरयसि। नशब्दश्चार्थे ॥

**अभि विप्रा अनूषत मूर्धन्यज्ञस्य कारवः। दधानाश्चक्षसि प्रियम् ॥ ६ ॥**

अभि। विप्राः। अनूषत। मूर्धन्। यज्ञस्य। कारवः। दधानाः। चक्षसि। प्रियम् ॥ ६ ॥

ᵛअभि[2] ᵛअनूषत[2] अभिष्टुवन्ति ᵛविप्राः मेधाविनः स्तोतारः। कुत्र[3]। ᵛयज्ञस्य ᵛमूर्धन् मूर्धनि। शिरोवदुत्तमेऽभिषवदिवस इत्यर्थः। कीदृशास्ते। ᵛकारवः कर्तारः परिचर्याया यागानुष्ठातारो वा। ᵛचक्षसि द्रष्टरि सोमे ᵛप्रियं ᵛदधानाः अभ्यनूषतेति समन्वयः ॥

**तमु त्वा वाजिनं नरो धीभिर्विप्रा अवस्यवः। मृजन्ति देवतातये ॥ ७ ॥**

तम्। ऊँ इति। त्वा। वाजिनम्। नरः। धीभिः। विप्राः। अवस्यवः। मृजन्ति। देवऽतातये ॥७॥

हे सोम ᵛतमु तमेव ᵛत्वा[4] त्वां ᵛवाजिनम् अन्नवन्तं गमनवन्तं वा ᵛनरः नेतारः ᵛविप्राः मेधाविनोऽध्वर्य्वादयः ᵛधीभिः[4] कर्मभिः ᵛमृजन्ति शोधयन्ति ᵛदेवतातये यज्ञार्थम्। किमिच्छवः। ᵛअवस्यवः अन्नमिच्छवः[5] ॥

**मधोर्धारामनु क्षर तीव्रः सधस्थमासदः। चारुर्ऋताय पीतये ॥ ८ ॥**

मधोः। धाराम्। अनु। क्षर। तीव्रः। सधऽस्थम्। आ। असदः। चारुः। ऋताय। पीतये ॥८॥

हे सोम त्वं ᵛमधोः मधुररसस्य ᵛधारामनु ᵛक्षर प्रवहन्[6]। ᵛतीव्रः तीव्ररसः सन् ᵛसधस्थं सहस्थानमभिषवस्थानं पवित्रं वा ᵛआ ᵛअसदः सीद। ᵛचारुः चरणशीलः सन् ᵛऋताय यज्ञार्थं ᵛपीतये देवानां पानाय ॥ ॥ ७ ॥

'परि सुवानः' इति सप्तर्चमष्टादशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'परि सुवानः सप्त' इत्यनुक्रान्तम्। गतो विनियोगः ॥

**परि सुवानो गिरिष्ठाः पवित्रे सोमो अक्षाः। मदेषु सर्वधा असि ॥ १ ॥**

परि। सुवानः। गिरिऽस्थाः। पवित्रे। सोमः। अक्षारिति। मदेषु। सर्वऽधाः। असि ॥१॥

१. त१.२.६–रोचना; त३.४.५.७-भ३–'रोचनौ त्रीणि' नास्ति। २. भ–हे सोम त्वां अभ्यनूषत। ३. ग–क्व; त-भ४–क्रतु। ४. ग-त–'त्वा' नास्ति। ५. ग–अवस्यवः रक्षणेच्छवः देवतातये यज्ञाय तवा धीभिः कर्मभिः मृजंति। ६. ग-भ१.३–प्रवह।

अयं ᵛसोमः ᵛपवित्रे ᵛपरि ᵛअक्षाः परिक्षरति । ᵛसुवानः सूयमानः ᵛगिरिष्ठाः गिरिस्थायी । ग्रावसु वर्तमान इत्यर्थः । स त्वं ᵛमदेषु मादकेषु सोतृषु ᵛसर्वधा[1] ᵛअसि सर्वस्य धाता दाता वा भवसि[1] ॥

**त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः । मदेषु सर्वधा असि ॥ २ ॥**

त्वम् । विप्रः । त्वम् । कविः । मधु । प्र । जातम् । अन्धसः । मदेषु । सर्वऽधाः । असि ॥२॥

हे सोम ᵛत्वं ᵛविप्रः विविधं प्रीणयिता विप्रसदृशो वा ᵛत्वं च ᵛकविः मेधावी । अतस्त्वम् ᵛअन्धसः अन्नात् ᵛजातं ᵛमधु मधुररसं ᵛप्र यच्छसीति शेषः ॥

**तव विश्वे सजोषसो देवासः पीतिमाशत । मदेषु सर्वधा असि ॥ ३ ॥**

तव । विश्वे । सऽजोषसः । देवासः । पीतिम् । आशत । मदेषु । सर्वऽधाः । असि ॥ ३ ॥

हे सोम ᵛतव ᵛपीतिं पानं ᵛविश्वे ᵛदेवासः देवाः[2] ᵛसजोषसः समानप्रीतयः सन्तः ᵛआशत प्राप्नुवन् ॥

**आ यो विश्वानि वार्या वसूनि हस्तयोर्दधे । मदेषु सर्वधा असि ॥ ४ ॥**

आ । यः । विश्वानि । वार्या । वसूनि । हस्तयोः । दधे । मदेषु । सर्वऽधाः । असि ॥४॥

ᵛयः सोमः ᵛविश्वानि ᵛवार्या वरणीयानि ᵛवसूनि धनानि[3] स्तोतुः ᵛहस्तयोः ᵛआ ᵛदधे करोति । प्रयच्छतीत्यर्थः । ᵛमदेषु ᵛसर्वधा ᵛअसि इति । अथवा[4] स शुष्मी इत्युत्तरत्र संबन्धः ॥

**य इमे रोदसी मही सं मातरेव दोहते । मदेषु सर्वधा असि ॥ ५ ॥**

यः । इमे इति । रोदसी इति । मही इति । सम् । मातराऽइव । दोहते ।
मदेषु । सर्वऽधाः । असि ॥ ५ ॥

ᵛयः सोमः ᵛइमे ᵛमही महत्यौ ᵛरोदसी द्यावापृथिव्यौ ᵛसं ᵛदोहते । उभयोः सारं परिगृह्णातीत्यर्थः । ᵛमातरेव यथा द्वे मातरावेको वत्सो दोहते तद्वत् ॥

**परि यो रोदसी उभे सद्यो वाजेभिरर्षति । मदेषु सर्वधा असि ॥ ६ ॥**

परि । यः । रोदसी इति । उभे इति । सद्यः । वाजेभिः । अर्षति । मदेषु । सर्वऽधाः । असि ॥६॥

ᵛयः सोमः ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛसद्यः तदानीमेव ᵛवाजेभिः अन्नैः ᵛपरि ᵛअर्षति परिगच्छति[5] । सोमाहुत्या[6] द्यावापृथिव्यावन्नवत्यौ करोतीत्यर्थः ॥

**स शुष्मी कलशेष्वा पुनानो अचिक्रदत् । मदेषु सर्वधा असि ॥ ७ ॥**

सः । शुष्मी । कलशेषु । आ । पुनानः । अचिक्रदत् । मदेषु । सर्वऽधाः । असि ॥ ७ ॥

---

१. ग–सर्वधाता दाता चसि भवसि; त१.६–सर्वधा सर्वदा असि सर्वस्य धाता दाता वा भवति; त३.४.५–सर्वधाता दाता चा भवति; त७–सर्वस्य दाता दाता वा भवति; भ४–सर्वधा असि सर्वस्य धाता दाता भवसि; मु–सर्वधा सर्वदा असि सर्वस्य धाता दाता वा भवसि । २. घ–सर्वे देवाः । ३. ग-त-भ–' धनानि ' नास्ति । ४. ग-त-मु–' अथवा ' नास्ति । ५. त-भ४–परिगच्छति परिगच्छ; मु–परिगच्छति परिगत्य । ६. घ–आहुत्या ।

उक्तरीत्या[1] महान् ᵛसः सोमः ᵛशुष्मी बलवान् ᵛपुनानः पूयमानः सन् ᵛआ[2] ᵛअचिक्रदत् शब्दं[3] करोति। अत्र सर्वत्र यथोचितमुत्तरपादो नेयः॥ ॥ ८॥

'यत् सोम' इति सप्तर्चमेकोनविंशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'यत् सोम' इत्यनुक्रान्तम्। गतो विनियोगः॥

**यत्सो॑म चि॒त्रमु॒क्थ्यं॑ दि॒व्यं पार्थि॑वं॒ वसु॑। तन्नः॑ पुना॒न आ भ॑र॥ १॥**

यत्। सो॒म॒। चि॒त्रम्। उ॒क्थ्य॑म्। दि॒व्यम्। पार्थि॑वम्। वसु॑। तत्। न॒ः। पु॒ना॒नः। आ। भ॒र॥१॥

हे ᵛसोम ᵛयत् ᵛचित्रं चायनीयम् ᵛउक्थ्यं स्तुत्यं ᵛदिव्यं दिवि भवं ᵛपार्थिवं पृथिवीसंबद्धं[4] च ᵛवसु[4] धनमस्ति ᵛतत् ᵛनः अस्मभ्यं ᵛपुनानः पूयमानः सन् ᵛआ ᵛभर आहर॥

**यु॒वं हि स्थः॑ स्व॑र्पती॒ इन्द्र॑श्च सोम॒ गोप॑ती। ई॒शा॒ना पि॑प्यतं॒ धियः॑॥ २॥**

यु॒वम्। हि। स्थः। स्व॑ःपती॒ इति॒ स्वः॑ऽपती। इन्द्रः॑। च॒। सो॒म॒। गोप॑ती॒ इति॒ गोऽप॑ती। ई॒शा॒ना। पि॒प्य॒त॒म्। धियः॑॥ २॥

हे ᵛसोम ᵛत्वम् ᵛइन्द्रश्च ᵛयुवं ᵛहि युवां खलु ᵛस्वर्पती सर्वस्य[5] स्वामिनौ ᵛस्थः भवथः। तथा ᵛगोपती गवां पालकौ ᵛईशाना ईश्वरौ सन्तौ ᵛधियः अस्मदीयानि कर्माणि ᵛपिप्यतं प्याययतम्॥

**वृषा॑ पुना॒न आ॒युषु॑ स्त॒नय॒न्नधि॑ ब॒र्हिषि॑। हरि॑ः सन्योनि॒मास॑दत्॥ ३॥**

वृषा॑। पु॒ना॒नः। आ॒युषु॑। स्त॒नय॑न्। अधि॑। ब॒र्हिषि॑। हरि॑ः। सन्। योनि॑म्। आ। अ॒स॒द॒त्॥३॥

ᵛवृषा[6] कामानां वर्षकः सोमः[6] ᵛआयुषु मनुष्येष्वध्वर्य्वादिषु ᵛपुनानः पूयमानः सन् ᵛस्तनयन् शब्दं कुर्वन् ᵛअधि ᵛबर्हिषि। अधीति सप्तम्यर्थानुवादी। आस्तीर्णे दर्भे ᵛहरिः[7] हरितवर्णः ᵛसन् ᵛयोनिं स्वकीयं स्थानम् ᵛआसदत् आसीदति॥

**अवा॑वशन्त धी॒तयो॑ वृष॒भस्याधि॒ रेत॑सि। सू॒नोर्व॒त्सस्य॑ मा॒तरः॑॥ ४॥**

अवा॑वशन्त। धी॒तयः॑। वृ॒ष॒भस्य॑। अधि॑। रेत॑सि। सू॒नोः। व॒त्सस्य॑। मा॒तरः॑॥ ४॥

ᵛधीतयः धीयमानाः सोमाख्येन वत्सेन पीयमाना वसतीवर्यः। क्तिन् व्यत्ययेनान्तोदात्तः। ᵛअधि ᵛरेतसि स्वकीये सारे ᵛवृषभस्य वर्षकस्य सोमस्य। सोममित्यर्थः। ᵛअवावशन्त पुनः[8] कामयन्ते[8]। सोममाप्याययितुं कामयन्त इत्यर्थः। तदेवाह। ᵛसूनोः स्वपुत्रस्थानीयस्य ᵛवत्सस्य सोमस्य ᵛमातरः निर्मात्र्यः प्रवृद्धिकामा मातृस्थानीया अवावशन्तेति समन्वयः॥

**कु॒विद्वृ॑ष॒ण्यन्ती॑भ्यः पुना॒नो गर्भ॑मा॒दध॑त्। याः शु॒क्रं दु॑ह॒ते पयः॑॥ ५॥**

कु॒वित्। वृ॒ष॒ण्यन्ती॑भ्यः। पु॒ना॒नः। गर्भ॑म्। आ॒ऽदध॑त्। याः। शु॒क्रम्। दु॒ह॒ते। पयः॑॥५॥

१. भ- य उक्तरीत्या। २. ग-त-भ-'आ' नास्ति। ३. घ-कलशेषु शब्दं। ४. ग-°संबंधि यत्। ५. ग-स्व; त१.३.६.७-मु-स्वर्गस्य। ६. ग-त-म-'वृषा ··· सोमः' नास्ति। ७. ग-त-'हरिः' नास्ति; भ-हरिः सन्। ८. घ-मीलितवंतः; भ१.२-पुनःपुनः कामयंते।

ᵛवृषण्यन्तीभ्यः वृषणं सोममात्मन इच्छन्तीभ्यो वसतीवरीभ्यः ᵛपुनानः पूयमानो मिश्रयमाणः ᵛगर्भं स्वगर्भस्थानीयं रसं ᵛकुवित् बहु प्रभूतम् ᵛआदधत् करोति। ᵛयाः आपः ᵛशुक्रं दीप्तं ᵛपयः ᵛदुहते स्ववत्साय सोमाय ताभ्यो गर्भमादधत् ॥

उप॑ शिक्षापतस्थुषो॑ भियस॒मा धे॑हि॒ शत्रु॑षु । पव॑मान वि॒दा र॒यिम् ॥ ६ ॥

उप॑ । शि॒क्ष॒ । अ॒प॒ऽत॒स्थुषः॑ । भि॒यस॑म् । आ । धे॒हि॒ । शत्रु॑षु । पव॑मान । वि॒दाः॑ । र॒यिम् ॥६॥

हे ᵛपवमान सोम ᵛउप ᵛशिक्ष त्वं समीपे कुरु। कान्। ᵛअपतस्थुषः अपक्रम्य स्थितान्। अस्मदभिमतानित्यर्थः। ᵛशत्रुषु अस्मद्विरोधिषु ᵛभियसं भयम् ᵛआ ᵛधेहि कुरु जनय। अस्माकं तेषां शत्रूणां ᵛरयिं धनं ᵛविदाः विन्दसि ॥

नि शत्रोः॑ सोम॒ वृष्ण्यं॒ नि शुष्मं॒ नि वय॑स्तिर । दू॒रे वा॑ स॒तो अन्ति॑ वा ॥ ७ ॥

नि । शत्रोः॑ । सो॒म॒ । वृष्ण्य॑म् । नि । शुष्म॑म् । नि । वयः॑ । ति॒र॒ ।

दू॒रे । वा॒ । स॒तः । अन्ति॑ । वा॒ ॥७॥

हे अभिपूयमाण ᵛसोम त्वं ᵛशत्रोः ᵛवृष्ण्यं वर्षकं बलं ᵛनि ᵛतिर। निपूर्वस्तिरतिर्नाशार्थः। नाशय। तथा शत्रोः ᵛशुष्मं शोषकं तेजः ᵛनि ᵛतिर। तस्यैव[1] ᵛवयः अन्नं च ᵛनि तिर। कीदृशस्य शत्रोः। ᵛदूरे ᵛवा ᵛसतः अस्मत्तो दूरे वर्तमानस्य ᵛअन्ति ᵛवा सतोऽन्तिके वर्तमानस्य वा ॥ ॥९॥

'प्र कविः' इति सप्तर्चं विंशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'प्र कविः' इत्यनुक्रान्तम्। गतो विनियोगः ॥

प्र क॒विर्दे॒ववी॑तये॒ऽव्यो॒ वारे॑भिरर्षति । सा॒ह्वान्विश्वा॑ अ॒भि स्पृधः॑ ॥ १ ॥

प्र । क॒विः । दे॒वऽवी॑तये । अव्यः॑ । वारे॑भिः । अ॒र्ष॒ति॒ । स॒ह्वान् । विश्वाः॑ । अ॒भि । स्पृधः॑ ॥१॥

ᵛकविः मेधावी सोमः ᵛदेववीतये देवानां पानाय ᵛअव्यः अवेः ᵛवारेभिः वारैः[2] दशापवित्रेण ᵛप्र ᵛअर्षति प्रकर्षेण गच्छति। ᵛसाह्वान् शत्रूणां सोढा सोमः ᵛविश्वाः ᵛस्पृधः सर्वान् संग्रामान् हिंसकान् वा ᵛअभि भवतीति शेषः ॥

स हि ष्मा॑ जरि॒तृभ्य॒ आ वाजं॒ गोम॑न्त॒मिन्व॑ति । पव॑मानः सह॒स्रिण॑म् ॥ २ ॥

सः । हि । स्म॒ । ज॒रि॒तृऽभ्यः॑ । आ । वाज॑म् । गोऽम॑न्तम् । इन्व॑ति ।

पव॑मानः । स॒ह॒स्रिण॑म् ॥ २ ॥

ᵛस ᵛहि ᵛष्म स खलु ᵛपवमानः सोमः ᵛजरितृभ्यः स्तोतृभ्यः ᵛगोमन्तं बहुभिर्गोभिर्युक्तं ᵛसहस्रिणं सहस्रसंख्याकं ᵛवाजम् अन्नम्[3] ᵛआ अभिमुखम् ᵛइन्वति व्याप्नोति। प्रयच्छतीत्यर्थः ॥

परि॒ विश्वा॑नि॒ चेत॑सा मृ॒शसे॒ पव॑से म॒ती । स नः॑ सोम॒ श्रवो॑ विदः ॥ ३ ॥

परि॑ । विश्वा॑नि । चेत॑सा । मृ॒शसे॑ । पव॑से । म॒ती । सः । नः॒ । सो॒म॒ । श्रवः॑ । वि॒दः॒ ॥३॥

हे सोम त्वं ᵛचेतसा स्वीयेनास्मदनुकूलेन चित्तेन ᵛविश्वानि सर्वाणि धनानि ᵛपरि ᵛमृशसे। प्रयच्छसीत्यर्थः। ᵛमती मत्यास्मत्स्तुत्या ᵛपवसे क्षरसि रसम्। ᵛसः त्वं हे ᵛसोम ᵛनः अस्मभ्यं ᵛश्रवः अन्नं ᵛविदः देहि ॥

१. घ–तथैव। २. घ–वारैर्वालैः। ३. ग-त-भ–अन्नं वा।

अ॒भ्य॑र्ष बृ॒हद्यशो॑ म॒घव॑द्भ्यो ध्रु॒वं र॒यिम् । इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥ ४ ॥

अ॒भि । अ॒र्ष॒ । बृ॒हत् । यशः॑ । म॒घव॑त्ऽभ्यः । ध्रु॒वम् । र॒यिम् ।
इष॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र ॥ ४ ॥

हे सोम ᵛबृहद्यशः महतीं कीर्तिम् ᵛअभ्यर्ष अभिगमय । ᵛमघवद्भ्यः हविष्मद्भ्यः[1] अस्मभ्यं ᵛध्रुवं ᵛरयिं धनं चाभ्यर्ष । किंच ᵛइषम् अन्नं ᵛस्तोतृभ्यः अस्मभ्यम् ᵛआ ᵛभर आहर ॥

त्वं राजे॑व सुव्र॒तो गिरः॑ सो॒मा वि॑वेशिथ । पु॒ना॒नो व॑ह्ने अद्भुत ॥ ५ ॥

त्वम् । राजा॑ऽइव । सु॒ऽव्र॒तः । गिरः॑ । सो॒म॒ । आ । वि॒वे॒शि॒थ॒ । पु॒ना॒नः । व॒ह्ने॒ । अ॒द्भु॒त॒ ॥५॥

हे ᵛसोम ᵛसुव्रतः सुकर्मा ᵛपुनानः ᵛत्वं ᵛराजेव ᵛगिरः अस्मदीयाः स्तुतीः ᵛआ ᵛविवेशिथ आविशसि । हे ᵛवह्ने वोढः ᵛअद्भुत महन् सोम ॥

स वह्नि॑र॒प्सु दु॒ष्टरो॑ मृ॒ज्यमा॑नो॒ गभ॑स्त्योः । सोम॑श्च॒मूषु॑ सीदति ॥ ६ ॥

सः । वह्निः॑ । अ॒प्ऽसु । दु॒स्तरः॑ । मृ॒ज्यमा॑नः । गभ॑स्त्योः । सोमः॑ । च॒मूषु॑ । सी॒द॒ति॒ ॥६॥

ᵛसः ᵛसोमः ᵛवह्निः वोढा यज्ञादेः ᵛअप्सु अन्तरिक्षे वर्तमानः ᵛदुष्टरः दुःखेनान्यैस्तरणीयः ᵛमृज्यमानः शोध्यमानः ᵛगभस्त्योः हस्तयोरेवंभूतः सन् सः ᵛचमूषु पात्रेषु ᵛसीदति ॥

क्री॒ळुर्म॒खो न मं॑ह॒युः प॒वित्रं॑ सोम गच्छसि । दध॑त्स्तो॒त्रे सु॒वीर्य॑म् ॥ ७ ॥

क्री॒ळुः । म॒खः । न । मं॒ह॒युः । प॒वित्र॑म् । सो॒म॒ । ग॒च्छ॒सि॒ । दध॑त् । स्तो॒त्रे । सु॒ऽवीर्य॑म् ॥७॥

हे ᵛसोम ᵛक्रीळुः क्रीडनशीलस्त्वं ᵛमंहयुः । मंहतिर्दानकर्मा । दानेच्छुः ᵛमखो ᵛन दानमिव ᵛपवित्रं ᵛगच्छसि । किं कुर्वन् । ᵛस्तोत्रे स्तुतिकर्त्रे ᵛसुवीर्यं शोभनवीर्यं ᵛदधत् प्रयच्छन् ॥ ॥१०॥

' एते धावन्ति ' इति सप्तर्चमेकविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' एते धावन्ति ' इत्यनुक्रान्तम् । गतो विनियोगः ॥

ए॒ते धा॑व॒न्तीन्द॑वः॒ सोमा॒ इन्द्रा॑य॒ घृष्व॑यः । म॒त्स॒रासः॑ स्व॒र्विदः॑ ॥ १ ॥

ए॒ते । धा॒व॒न्ति॒ । इन्द॑वः । सोमाः॑ । इन्द्रा॑य । घृष्व॑यः । म॒त्स॒रासः॑ । स्वः॒ऽविदः॑ ॥ १ ॥

ᵛएते ᵛसोमाः ᵛइन्द्राय ᵛधावन्ति गच्छन्ति । कीदृशा एते । ᵛइन्दवः क्लेदयितारो दीप्ता वा ᵛघृष्वयः घर्षणशीलाः ᵛमत्सरासः मादयितारः ᵛस्वर्विदः स्वर्लोकस्य लम्भयितारः ॥

प्र॒वृ॒ण्वन्तो॑ अभि॒युजः॒ सुष्व॑ये वरिवो॒विदः॑ । स्व॒यं स्तो॒त्रे व॑य॒स्कृतः॑ ॥ २ ॥

प्र॒ऽवृ॒ण्वन्तः॑ । अ॒भि॒ऽयुजः॑ । सुस्व॑ये । व॒रि॒वः॒ऽविदः॑ । स्व॒यम् । स्तो॒त्रे । व॒यः॒ऽकृतः॑ ॥ २ ॥

ᵛप्रवृण्वन्तः सुवानं प्रकर्षेण संभजन्तः तथा ᵛअभियुजः अभियोजयितारः ᵛसुष्वये सुष्ठु अभिषवकर्त्रे ᵛवरिवोविदः । ' वरिवः ' इति धननाम । तस्य लम्भयितारः ᵛस्वयं ᵛस्तोत्रे[2] ᵛवयस्कृतः अन्नस्य कर्तारः । एते धावन्तीति संबन्धः ॥

१. ग-घ-त३-५– ' हविष्मद्भ्यः ' नास्ति । २. भ– स्तोत्रे च ।

वृथा क्रीळन्त इन्दवः सधस्थमभ्येकमित् । सिन्धोरूर्मा व्यक्षरन् ॥ ३ ॥

वृथा । क्रीळन्तः । इन्दवः । सधऽस्थम् । अभि । एकम् । इत् । सिन्धोः । ऊर्मा । वि । अक्षरन् ॥३॥

वृथा अनायासेन क्रीळन्तः इन्दवः सोमाः एकमित् एकमेव सधस्थं सहस्थानं द्रोणकलशं वा अभि अक्षरन्निति शेषः । सिन्धोरूर्मा वसतीवरीषु व्यक्षरन् ॥

एते विश्वानि वार्या पवमानास आशत । हिता न सप्तयो रथे ॥ ४ ॥

एते । विश्वानि । वार्या । पवमानासः । आशत । हिताः । न । सप्तयः । रथे ॥ ४ ॥

एते सोमाः पवमानासः पूयमानाः विश्वानि वार्या[1] वार्याणि वरणीयानि धनानि आशत व्याप्नुवन् । रथे हिताः स्थापिताः[2] न[2] सप्तयः अश्वा इव । ते यथा रथमभिमतं देशं प्राप्नुवन्ति तद्वद्धनमस्माकं प्रायच्छन्नित्यर्थः ॥

आस्मिन्पिशङ्गमिन्दवो दधाता वेनमादिशे । यो अस्मभ्यमरावा ॥ ५ ॥

आ । अस्मिन् । पिशङ्गम् । इन्दवः । दधात । वेनम् । आऽदिशे ।

यः । अस्मभ्यम् । अरावा ॥ ५ ॥

हे इन्दवः सोमाः अस्मिन् यजमाने पिशङ्गं बहुरूपं मणिमुक्ताहिरण्यादिभेदेन नानारूपं वेनं कामयन्तं बहुविधं कामम् आदिशे अस्मभ्यमादेशनाय आ दधात आयच्छत[3] । यः यजमानः अस्मभ्यम् अरावा - - - - - प्रयच्छति प्राप्तकाम एव खलु ऋत्विग्भ्यः प्रयच्छति ॥

ऋभुर्न रथ्यं नवं दधाता केतमादिशे । शुक्राः पवध्वमर्णसा ॥ ६ ॥

ऋभुः । न । रथ्यम् । नवम् । दधात । केतम् । आऽदिशे । शुक्राः । पवध्वम् । अर्णसा ॥६॥

ऋभुर्न उरु भासमानो रथस्वामीव स यथा रथ्यं रथस्य नेतारं नवं स्तुत्यं कुशलं सारथिनमग्र आधत्ते तद्वदस्मदीयेऽस्मिन् आदिशे स्वामिनि[4] केतं प्रज्ञानं दधात स्थापयत । हे सोमाः योऽस्मभ्यं प्रयच्छति तस्मिन्नित्यर्थः। हे सोमाः अर्णसा उदकेन शुक्राः दीप्ताः सन्तः पवध्वं क्षरध्वम् ॥

एत उ त्ये अवीवशन्काष्ठां वाजिनो अक्रत । सतः प्रासाविषुर्मतिम् ॥ ७ ॥

एते । ऊँ इति । त्ये । अवीवशन् । काष्ठाम् । वाजिनः । अक्रत ।

सतः । प्र । असाविषुः । मतिम् ॥ ७ ॥

त्ये ते एत उ एत एव सोमाः अवीवशन् कामयन्ते यज्ञम् । कान्त्वा च वाजिनः बलवन्तोऽन्नवन्तो वा सोमाः काष्ठाम् अक्रत निवासस्थानमकुर्वन् । द्रोणकलशादुद्गता[5] ग्रहानित्यर्थः[5] । सतः यजमानस्य स्तोतुर्वा मतिं बुद्धिं स्तुतिं वा प्रासाविषुः प्रैरयन् ॥ ॥ ११ ॥

' एते सोमासः ' इति सप्तर्चं द्वाविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' एते सोमासः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

---

१. ग-त-भ-' वार्या ' नास्ति । २. ग-युक्ताः। ३. भ-स्थापयत । ४. ग-त्तदेशय स्वामिनि; त-भ-सं स्वामिनि । ५. ग-द्रोणकलशानित्यर्थः ।

**एते सोमास आशवो रथाइव प्र वाजिनः । सर्गाः सृष्टा अहेषत ॥ १ ॥**

एते । सोमासः । आशवः । रथाःऽइव । प्र । वाजिनः । सर्गाः । सृष्टाः । अहेषत ॥ १ ॥

ᵛएते पूयमानाः ᵛसोमासः सोमाः ᵛसृष्टाः अध्वर्युणा ᵛआशवः दशापवित्रादधोगमने शीघ्राः ᵛप्र ᵛअहेषत प्रहेषन्ते । शीघ्रगमने दृष्टान्तद्वयम् । आजौ सृष्टाः शीघ्राः ᵛरथाइव तथोक्तलक्षणाः[1] ᵛवाजिनः इव वेजनवन्तोऽश्वा इव[1] ॥

**एते वाताइवोरवः पर्जन्यस्येव वृष्टयः । अग्नेरिव भ्रमा वृथा ॥ २ ॥**

एते । वाताःऽइव । उरवः । पर्जन्यस्यऽइव । वृष्टयः । अग्नेःऽइव । भ्रमाः । वृथा ॥२॥

ᵛएते सोमाः ᵛउरवः महान्तः ᵛवाताइव[2] वायव इव[3] ᵛवृथा अनायासेन व्यानशुः इत्युत्तरत्र संबन्धनीयम् । अथवाध्याहारेण निःसरन्तीति योज्यम् । तथा ᵛपर्जन्यस्य ᵛवृष्टयः ᵛइव वर्षा यथा तथैव । किंच ᵛअग्नेः ᵛभ्रमाः भ्रमणा ज्वालासंचाराः ᵛइव ॥

**एते पूता विपश्चितः सोमासो दध्याशिरः । विपा व्यानशुर्धियः ॥ ३ ॥**

एते । पूताः । विपःऽचितः । सोमासः । दधिऽआशिरः । विपा । वि । आनशुः । धियः ॥३॥

ᵛएते ᵛसोमासः सोमाः ᵛपूताः शुद्धाः ᵛविपश्चितः प्राज्ञाः ᵛदध्याशिरः दध्याश्रयणाः ᵛविपा प्रज्ञानेन ᵛधियः अस्मदीयानि कर्माणि ᵛव्यानशुः व्याप्नुवन्ति ॥

**एते मृष्टा अमर्त्याः ससृवांसो न शश्रमुः । इयक्षन्तः पथो रजः ॥ ४ ॥**

एते । मृष्टाः । अमर्त्याः । ससृऽवांसः । न । शश्रमुः । इयक्षन्तः । पथः । रजः ॥४॥

ᵛएते सोमाः ᵛमृष्टाः दशापवित्रेण शोधिताः ᵛअमर्त्याः अमरणधर्माणः ᵛससृवांसः हविर्धानात् सरन्तः ᵛपथः मार्गान् ᵛरजः लोकांश्च ᵛइयक्षन्तः गन्तुमिच्छन्तः ᵛन ᵛशश्रमुः न श्राम्यन्ति ॥

**एते पृष्ठानि रोदसोर्विप्रयन्तो व्यानशुः । उतेदमुत्तमं रजः ॥ ५ ॥**

एते । पृष्ठानि । रोदसोः । विऽप्रयन्तः । वि । आनशुः । उत । इदम् । उत्ऽतमम् । रजः ॥५॥

ᵛएते सोमाः ᵛरोदसोः[4], द्यावापृथिव्योः[5] ᵛपृष्ठानि, ᵛविप्रयन्तः विविधं गच्छन्तः ᵛव्यानशुः व्याप्नुवन्ति । ᵛउत अपि च ᵛइदमुत्तमं ᵛरजः द्युलोकं व्यानशुः । आहुतिद्वारेणेति भावः । रोदसोरित्यत्रान्तरिक्षोऽभिप्रेतः ॥

**तन्तुं तन्वानमुत्तममनु प्रवत आशत । उतेदमुत्तमाय्यम् ॥ ६ ॥**

तन्तुम् । तन्वानम् । उत्ऽतमम् । अनु । प्रऽवतः । आशत । उत । इदम् । उत्तमाय्यम् ॥६॥

ᵛतन्तुं यज्ञं ᵛतन्वानम् ᵛउत्तमम् उत्कृष्टं सोमम् ᵛअनु ᵛआशत ᵛप्रवतः नद्यः । ᵛउत अपि च ᵛइदं कर्म अनेन सोमेन ᵛउत्तमाय्यम् उत्तमीकृतम्[5] । अथवा तन्तुं तन्वानं सोमं प्रवतोऽधःस्थिताः

१. घ–तथोक्तलक्षणसर्गा वाजिन इव सृष्टा अश्वा इव; त१.२.६.७-मु–उक्तलक्षणसर्गा वाजिन इव वेजनवंतोश्वा इव । २. ग-त३.४.५-भ४–वाता । ३. त-भ२.४–' इव ' नास्ति । ४. ग–रोदस्योः । ५. त१.२.६–°कृत्यं ।

सर्वा अन्वाशत । उतेदमुत्तमाय्यं रजः । द्युलोक इत्यर्थः । सोऽप्यन्वश्नुते पृथिव्या वान्तरिक्षेण च । उत्तमीकृतमुत्तमाय्यम् ॥

त्वं सोम पणिभ्य आ वसु गव्यानि धारयः । ततं तन्तुमचिक्रदः ॥ ७ ॥

त्वम् । सोम । पणिऽभ्यः । आ । वसु । गव्यानि । धारयः । ततम् । तन्तुम् । अचिक्रदः ॥७॥

हे सोम त्वं पणिभ्यः असुरेभ्यो लुब्धकेभ्यो वा सकाशात् गव्यानि गोहितानि वसु वसूनि गोयूथानि वसूनि चेति[1] वा आ आहृत्य धारयः[2] धारयसि । तथा तन्तुं यज्ञं प्रति ततं विस्तृतं यथा भवति तथा अचिक्रदः शब्दमकार्षीः ॥ ॥ १२ ॥

'सोमा असृग्रम्' इति सप्तर्चं त्रयोविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'सोमा असृग्रम्' इत्यनुक्रान्तम् । गतो विनियोगः ॥

सोमा असृग्रमाशवो मधोर्मदस्य धारया । अभि विश्वानि काव्या ॥ १ ॥

सोमाः । असृग्रम् । आशवः । मधोः । मदस्य । धारया । अभि । विश्वानि । काव्या ॥१॥

आशवः शीघ्राः सोमाः असृग्रम् असृग्रन् सृज्यन्ते । मधोः मधुरस्य[3] मदस्य[3] मदकरस्य धारया असृग्रमिति संबन्धः । किं प्रति उच्यते । अभि लक्षीकृत्य विश्वानि सर्वाणि काव्या काव्यानि स्तोत्राणि प्रति । स्तोत्रसमय इत्यर्थः ॥

अनु प्रत्नास आयवः पदं नवीयो अक्रमुः । रुचे जनन्त सूर्यम् ॥ २ ॥

अनु । प्रत्नासः । आयवः । पदम् । नवीयः । अक्रमुः । रुचे । जनन्त । सूर्यम् ॥ २ ॥

प्रत्नासः पुराणाः केचित् आयवः शीघ्रगमना अश्वाः नवीयः नवतरं पदम् अनु अक्रमुः अनुक्रमन्ते । रूपकव्याहारेण सोमाः स्तूयन्ते । रुचे[4] दीप्त्यै[4] सूर्यं जनन्त कुर्वन्ति । दीप्तं कुर्वन्तीत्यर्थः । सोमप्यायनेन हि चन्द्रो रोचते ॥

आ पवमान नो भरार्यो अदाशुषो गयम् । कृधि प्रजावतीरिषः ॥ ३ ॥

आ । पवमान । नः । भर । अर्यः । अदाशुषः । गयम् । कृधि । प्रजाऽवतीः । इषः ॥ ३ ॥

हे पवमान सोम त्वं नः अस्मभ्यम् अर्यः अरेः अदाशुषः अप्रयच्छतः[5] गयं गृहं गृहोपलक्षितं धनम् आ भर आहर । तथास्मभ्यं प्रजावतीरिषः च[6] कृधि कुरु ॥

अभि सोमास आयवः पवन्ते मद्यं मदम् । अभि कोशं मधुश्चुतम् ॥ ४ ॥

अभि । सोमासः । आयवः । पवन्ते । मद्यम् । मदम् । अभि । कोशम् । मधुऽश्चुतम् ॥४॥

आयवः गन्तारः सोमासः सोमाः मद्यं मदकरं रसम् अभि पवन्ते क्षरन्ति । तथा मधुश्चुतं मधुस्राविणं कोशम् । रसाधारेण कोशशब्देन तत्रामिश्रितो रसो लक्ष्यते । तम् अभि पवन्त इति शेषः[7] ॥

---

१. म१.२.३–वेति । २. ग-म१.२.३–आधारयः । ३. त-म–'मधुरस्य मदस्य' नास्ति । ४. घ–एतैः सोमैः रुचे दीप्तौ; त-म–रुचे दीप्तौ । ५. त-म–प्रयच्छतः । ६. घ–अन्नानि च । ७. घ–शेषः किमर्थं मदे मदं मदाय हर्षाय ।

सोमो॑ अर्षति धर्णसिर्दधा॑न इन्द्रि॒यं रसम्॑ । सु॒वीरो॑ अभिशस्ति॒पाः ॥ ५ ॥

सोमः॑ । अर्षति । ध॒र्णसिः । दधा॑नः । इ॒न्द्रि॒यम् । रस॑म् । सु॒ऽवीर॑ः । अ॒भि॒श॒स्ति॒ऽपाः ॥५॥

ᵛसोमः ᵛअर्षति गच्छति । कीदृशः सः । ᵛधर्णसिः धारको जगतां तथा ᵛइन्द्रियम् इन्द्रियवर्धकं ᵛरसं ᵛदधानः धारयन् ᵛसुवीरः सुवीर्यः ᵛअभिशस्तिपाः अभिशस्तेः पाता । अभितो हिंसा ततो रक्षक इत्यर्थः । सोमपानं ब्रह्महत्यादिनिन्दामनुमार्ष्टीति प्रसिद्धम् ॥

इन्द्रा॑य सोम पवसे दे॒वेभ्यः॑ सध॒माद्यः॑ । इन्दो॒ वाजं॑ सिषाससि ॥ ६ ॥

इन्द्रा॑य । सो॒म॒ । प॒व॒से॒ । दे॒वेभ्यः॑ । स॒ध॒ऽमाद्यः॑ । इन्दो॒ इति॑ । वाज॑म् । सि॒सा॒स॒सि॒ ॥६॥

हे ᵛसोम ᵛसधमाद्यः । सधमादो यज्ञः । तदर्हस्त्वम् ᵛइन्द्राय ᵛदेवेभ्यः चान्येभ्यः[1] ᵛपवसे क्षरसि । हे तादृश ᵛइन्दो सोम अस्मभ्यं ᵛवाजम् अन्नं ᵛसिषाससि दातुमिच्छसि ॥

अ॒स्य पी॒त्वा मदा॑नामिन्द्रो॑ वृ॒त्राण्य॑प्र॒ति । ज॒घान॑ ज॒घन॑च्च॒ नु ॥ ७ ॥

अ॒स्य । पी॒त्वा । मदा॑नाम् । इन्द्रः॑ । वृ॒त्राणि॑ । अ॒प्र॒ति । ज॒घान॑ । ज॒घन॑त् । च॒ । नु ॥७॥

ᵛमदानां मदकराणां मध्येऽतिशयेन मदकरम् ᵛअस्य अमुं सोमं ᵛपीत्वा ᵛवृत्राणि शत्रून् अप्रतिगतः[2] सन् ᵛइन्द्रः ᵛजघान हतवान् । ᵛनु क्षिप्रं ᵛजघनत् ᵛच । हन्तु चेदानीमपि[3] ॥ ॥१३॥

' प्र सोमासः ' इति सप्तर्चं चतुर्विंशं सूक्तम् । असितो देवलो वर्षिर्गायत्री छन्दः सोमो देवता । ' प्र सोमासः ' इत्यनुक्रान्तम् । गतो विनियोगः ॥

प्र सोमा॑सो अधन्विषुः पव॑मानास॒ इन्द॑वः । श्री॒णा॒ना अ॒प्सु मृ॑ञ्जत ॥ १ ॥

प्र । सोमा॑सः । अ॒ध॒न्वि॒षुः॒ । पव॑मानासः । इन्द॑वः । श्री॒णा॒नाः । अ॒प्ऽसु । मृ॒ञ्ज॒त ॥ १ ॥

ᵛसोमासः सोमाः ᵛपवमानासः[4] पूयमानाः ᵛइन्दवः दीप्ताः[5] ᵛप्र ᵛअधन्विषुः । धन्वतिर्गतिकर्मा । प्रगच्छन्ति । किंच ᵛश्रीणानाः गोभिः श्रयमाणाः ᵛअप्सु वसतीवरीषु च ᵛमृञ्जत मृज्यन्ते ॥

अ॒भि गावो॑ अधन्विषु॒रापो॒ न प्र॒वता॑ य॒तीः । पु॒ना॒ना इन्द्र॑माशत ॥ २ ॥

अ॒भि । गावः॑ । अ॒ध॒न्वि॒षुः॒ । आपः॑ । न । प्र॒ऽवता॑ । य॒तीः । पु॒ना॒नाः । इन्द्र॑म् । आ॒श॒त ॥२॥

ᵛगावः गमनशीला इन्दवः[6] ᵛअभि ᵛअधन्विषुः अभिगच्छन्ति दशापवित्रम् । किमिव । ᵛप्रवता प्रवणवता देशेन ᵛयतीः गच्छन्त्यः ᵛआपो ᵛन आप इव । पश्चात् ᵛपुनानाः ᵛइन्द्रं प्रीणयितुम् ᵛआशत व्याप्नुवन् । आहुतिप्रणाड्येन्द्रमेव वा व्याप्नुवन् ॥

प्र प॑वमान धन्वसि॒ सोमेन्द्रा॑य॒ पात॑वे । नृभि॑र्य॒तो वि नी॑यसे ॥ ३ ॥

प्र । प॒व॒मा॒न॒ । ध॒न्व॒सि॒ । सोम॑ । इन्द्रा॑य । पात॑वे । नृऽभिः॑ । य॒तः । वि । नी॒य॒से॒ ॥ ३ ॥

हे ᵛपवमान ᵛसोम ᵛइन्द्राय इन्द्रस्य ᵛपातवे पानाय ᵛप्र ᵛधन्वसि प्रगच्छस्याहवनीयं प्रति हविर्धानात् । तदेवाह । ᵛनृभिः नेतृभिर्ऋत्विग्भिः ᵛयतः विनीतः[7] ᵛवि ᵛनीयसे हविर्धानात् । अथवा । पवमान प्र धन्वसि पात्रं प्रतीन्द्रपानाय तदर्थं हविर्धानाद्वि नीयसे ॥

---

१. म१.२.३-' चान्येभ्यः ' नास्ति । २. त-भ-प्रतिगतः । ३. ग-घ-त-भ२-चेदानीमिति । ४. त३.५-भ-पवमानाः । ५. त-भ-दीप्ताः सोमाः । ६. घ-इंदवः सोमाः । ७. ग-विगृहीतो ।

त्वं सोम नृमादनः पवस्व चर्षणीसहे। सस्निर्यो अनुमाद्यः ॥ ४ ॥
त्वम्। सोम। नृऽमादनः। पवस्व। चर्षणिऽसहे। सस्निः। यः। अनुऽमाद्यः ॥ ४ ॥

हे ᵛसोम ᵛत्वं ᵛनृमादनः नृणां मादयिता त्वं ᵛचर्षणीसहे। चर्षणयो मनुष्या द्वेष्टारः[1]। तेषां समभिभवित्र इन्द्राय ᵛपवस्व क्षर ᵛयः त्वं ᵛसस्निः शुद्धः ᵛअनुमाद्यः स्तुत्यः स[2] पवस्वेति समन्वयः ॥

इन्दो यदद्रिभिः सुतः पवित्रं परिधावसि। अरमिन्द्रस्य धाम्ने ॥ ५ ॥
इन्दो इति। यत्। अद्रिऽभिः। सुतः। पवित्रम्। परिऽधावसि। अरम्। इन्द्रस्य। धाम्ने ॥५॥

हे ᵛइन्दो त्वं ᵛयत् यदा ᵛअद्रिभिः ग्रावभिः ᵛसुतः अभिषुतः ᵛपवित्रं दशापवित्रं ᵛपरिधावसि परिगच्छसि। तदा ᵛइन्द्रस्य ᵛधाम्ने स्थानायाधारकायोदराय[3] वा ᵛअरं पर्याप्तो भवसि ॥

पवस्व वृत्रहन्तमोक्थेभिरनुमाद्यः। शुचिः पावको अद्भुतः ॥ ६ ॥
पवस्व। वृत्रहन्ऽतम। उक्थेभिः। अनुऽमाद्यः। शुचिः। पावकः। अद्भुतः ॥ ६ ॥

हे ᵛवृत्रहन्तम शत्रूणामतिशयेन हन्तरिन्दो त्वं[4] ᵛपवस्व क्षर। कीदृशस्त्वम्। ᵛउक्थेभिः शस्त्रैः ᵛअनुमाद्यः स्तुत्यः ᵛशुचिः शुद्धः ᵛपावकः अन्यस्य शोधकः ᵛअद्भुतः महान्। एवंमहानुभावः पवस्व ॥

शुचिः पावक उच्यते सोमः सुतस्य मध्वः। देवावीरघशंसहा ॥ ७ ॥
शुचिः। पावकः। उच्यते। सोमः। सुतस्य। मध्वः। देवऽअवीः। अघशंसऽहा ॥ ७ ॥

ᵛसुतस्य अभिषुतस्य ᵛमध्वः मदकरस्य वल्ल्यात्मकः ᵛसोमः रसरूपः ᵛशुचिः स्वयं शुद्धः ᵛपावकः शोधकश्च ᵛउच्यते। तथा ᵛदेवावीः देवानामविता तर्पयिता ᵛअघशंसहा। अघं पापं शंसन्तीत्यघशंसा असुराः। तेषां हन्तेति चोच्यते ॥ ॥ १४ ॥ ॥ १ ॥

द्वितीयेऽनुवाके षट्त्रिंशत्सूक्तानि। तत्र 'पवस्व' इति षडृचं प्रथमं सूक्तं दृळहच्युतनाम्नोऽगस्त्यपुत्रस्यार्षं गायत्रं पवमानसोमदेवताकम्। अनुक्रान्तं च—'पवस्व षड् दृळहच्युत आगस्त्यः' इति। गतो विनियोगः ॥

पवस्व दक्षसाधनो देवेभ्यः पीतये हरे। मरुद्भ्यो वायवे मदः ॥ १ ॥
पवस्व। दक्षऽसाधनः। देवेभ्यः। पीतये। हरे। मरुत्ऽभ्यः। वायवे। मदः ॥ १ ॥

हे ᵛहरे हरितवर्ण पापहर्तर्वा सोम ᵛदक्षसाधनः। दक्षो बलम्। तस्य साधकः ᵛमदः मदकरश्च त्वं ᵛपवस्व क्षर। ᵛदेवेभ्यः इन्द्रादिभ्यः ᵛपीतये पानाय। तथा ᵛमरुद्भ्यः ᵛवायवे च पीतये पवस्व ॥

पवमान धिया हितो३भि योनिं कनिक्रदत्। धर्मणा वायुमा विश ॥ २ ॥
पवमान। धिया। हितः। अभि। योनिम्। कनिक्रदत्। धर्मणा। वायुम्। आ। विश ॥२॥

हे ᵛपवमान सोम ᵛधिया कर्मणास्मदव्यापारेण अङ्गुल्या[5] वा ᵛहितः धृतः सन् ᵛकनिक्रदत् शब्दं कुर्वन् ᵛयोनिं स्थानं ग्रहं वा ᵛअभि विशेति शेषः। तदेवाह। ᵛधर्मणा[6] ᵛवायुम्। वायुसंबन्धि[7] पात्रमित्यर्थः। तत् ᵛआ ᵛविश प्रविश ॥

---

१. घ–शत्रवः। २. भ१.२.३–'स' नास्ति। ३. ग–स्थानाय धारकायोदराय; घ-त-भ–स्थानाधारकायोदराय। ४. भ१.२.३–'त्वं' नास्ति। ५. ग-ङ–'अंगुल्या' नास्ति। ६. त१.२.३.७-भ१.२.३-मु–धर्मणा कर्मणा; भ ४–धर्मणा कर्मणा वा। ७. ग-घ-त-भ-मु–°संबंधिनं।

सं देवैः शोभते वृषा कविर्योनावधि प्रियः। वृत्रहा देववीतमः ॥ ३ ॥

सम्। देवैः। शोभते। वृषा। कविः। योनौ। अधि। प्रियः। वृत्रऽहा। देवऽवीतमः ॥३॥

अयं सोमः सं शोभते देवैः सह योनौ स्थाने स्वीयेऽधिष्ठितः वृषा[1] कामानां वर्षकः कविः क्रान्तप्रज्ञः[1] प्रियः प्रियभूतः सर्वेषां यद्वा प्रीणयिता वृत्रहा वृत्रस्य हन्ता देववीतमः अतिशयेन देवान् कामयमानः एवंमहानुभावः सोमः संशोभते ॥

विश्वा रूपाण्याविशन्पुनानो याति हर्यतः। यत्रामृतास आसते ॥ ४ ॥

विश्वा। रूपाणि। आऽविशन्। पुनानः। याति। हर्यतः। यत्र। अमृतासः। आसते ॥४॥

विश्वा सर्वाणि रूपाण्याविशन् पुनानः पूयमानः हर्यतः कमनीयः। 'हर्य गतिकान्त्योः'। ईदृशः याति गच्छति। यत्र अमृतासः अमृता देवाः आसते तिष्ठन्ति तं देशं याति ॥

अरुषो जनयन् गिरः सोमः पवत आयुषक्। इन्द्रं गच्छन् कविक्रतुः ॥ ५ ॥

अरुषः। जनयन्। गिरः। सोमः। पवते। आयुषक्। इन्द्रम्। गच्छन्। कविऽक्रतुः ॥५॥

अरुषः आरोचमानः सोमः गिरः शब्दान् जनयन् पवते क्षरति। किं कुर्वन्। आयुषक्[2] अनुषक्तम् इन्द्रं गच्छन् व्याप्नुवन् कविक्रतुः क्रान्तप्रज्ञः ॥

आ पवस्व मदिन्तम पवित्रं धारया कवे। अर्कस्य योनिमासदम् ॥ ६ ॥

आ। पवस्व। मदिन्ऽतम। पवित्रम्। धारया। कवे। अर्कस्य। योनिम्। आऽसदम् ॥६॥

हे मदिन्तम मादयितृतम कवे क्रान्तप्रज्ञ सोम त्वं पवित्रम् अतिक्रम्य धारया आ पवस्व। किमर्थम्। अर्कस्य अर्चनीयस्येन्द्रस्य योनिं स्थानम् आसदं प्राप्तुम् ॥ ॥ १५ ॥

'तममृक्षन्त' इति षडृचं द्वितीयं सूक्तं दृळहच्युतपुत्रस्येध्मवाहनाम्न आर्षं गायत्रं पवमानसोमदेवताकम्। अनुक्रान्तं च—'तममृक्षन्तेध्मवाहो दार्ढच्युतः' इति। गतो विनियोगः ॥

तममृक्षन्त वाजिनमुपस्थे अदितेरधि। विप्रासो अण्व्या धिया ॥ १ ॥

तम्। अमृक्षन्त। वाजिनम्। उपऽस्थे। अदितेः। अधि। विप्रासः। अण्व्या। धिया ॥१॥

तं वाजिनम् अश्वमश्ववदाशुम्। व्याप्तमित्यर्थः। अदितेः पृथिव्याः उपस्थे[3] उत्सङ्गे। अधि इति सप्तम्यर्थानुवादी। अमृक्षन्त शोधितवन्तः। के। विप्रासः मेधाविनोऽध्वर्य्वादयः। केन साधनेन। अण्व्या अङ्गुल्या धिया प्रज्ञया स्तुत्या वा अमृक्षन्त। अथवाण्व्या सूक्ष्मया धियाङ्गुल्येति विशेष्यविशेषणभावः ॥

तं गावो अभ्यनूषत सहस्रधारमक्षितम्। इन्दुं धर्तारमा दिवः ॥ २ ॥

तम्। गावः। अभि। अनूषत। सहस्रऽधारम्। अक्षितम्। इन्दुम्। धर्तारम्। आ। दिवः ॥२॥

तं सोमं गावः गन्त्र्यः स्तुतयः अभ्यनूषत अस्तुवन्। कीदृशं तम्। सहस्रधारं बहुधारम् अक्षितम् अक्षीणम् इन्दुं दीप्तं दिवः द्युलोकस्य आ धर्तारं सर्वतो धारकम्। सोमाधारत्वात् द्युलोकवासिनां संस्थानस्य ॥

---

१. ग-त-भ-'वृषा...क्रांतप्रज्ञः' नास्ति। २. ग-त-भ—आनुषक्। ३. घ—उपस्थे अधि।

तं वेधां मेधयाह्यन्पवमानमधि द्यवि । धर्णसिं भूरिधायसम् ॥ ३ ॥

तम् । वेधाम् । मेधया । अह्यन् । पवमानम् । अधि । द्यवि । धर्णसिम् । भूरिऽधायसम् ॥३॥

वेधां विधातारं पवमानं तं मेधया प्रज्ञया अह्यन् प्रहिण्वन्ति । किं प्रति । अधि द्यवि द्युलोकं प्रति । पुनः कीदृशम् । धर्णसिं सर्वस्य धारकं भूरिधायसं बहूनां कर्तारम् ॥

तमह्यन्भुरिजोर्धिया संवसानं विवस्वतः । पतिं वाचो अदाभ्यम् ॥ ४ ॥

तम् । अह्यन् । भुरिजोः । धिया । सम्ऽवसानम् । विवस्वतः । पतिम् । वाचः । अदाभ्यम् ॥४॥

तं सोमं विवस्वतः परिचरत[1] ऋत्विजः भुरिजोः बाह्वोः धिया अङ्गुल्या अह्यन् प्राहिण्वन् । कीदृशं तम् । संवसानं वसन्तं पात्रे वाचः स्तुतेः पतिं स्वामिनम् अदाभ्यम् अदम्भनीयम् ॥

तं सानावधि जामयो हरिं हिन्वन्त्यद्रिभिः । हर्यतं भूरिचक्षसम् ॥ ५ ॥

तम् । सानौ । अधि । जामयः । हरिम् । हिन्वन्ति । अद्रिऽभिः । हर्यतम् । भूरिऽचक्षसम् ॥५॥

तं[2] सोमं हरिं हरितवर्णं सानावधि समुच्छ्रिते देशे । अधीति सप्तम्यर्थानुवादी । जामयः[3] अङ्गुलयः[3] हिन्वन्ति प्रेरयन्ति । अधिषुण्वन्ति अद्रिभिः ग्रावभिः । कीदृशम् । हर्यतं कमनीयं भूरिचक्षसं बहुद्रष्टारम् ॥

तं त्वा हिन्वन्ति वेधसः पवमान गिरावृधम् । इन्दविन्द्राय मत्सरम् ॥ ६ ॥

तम् । त्वा । हिन्वन्ति । वेधसः । पवमान । गिराऽवृधम् । इन्दो इति । इन्द्राय । मत्सरम् ॥६॥

हे पवमान[4] सोम तम् उक्तगुणविशिष्टं त्वा त्वां हिन्वन्ति प्रेरयन्ति । कस्मै । इन्द्राय । के । वेधसः विधातार ऋत्विजः । कीदृशं त्वाम् । गिरावृधं स्तुत्या वर्धमानम् इन्दुं[5] दीप्तं सरूपं वा[5] मत्सरं मदकरम् ॥ ॥ १६ ॥

'एष कविः' इति षडृचं तृतीयं सूक्तं नृमेधनाम्न आङ्गिरसस्यार्षं गायत्रं सौम्यम् । 'एष कविर्नृमेधः' इत्यनुक्रान्तम् । उक्तो विनियोगः ॥

एष कविरभिष्टुतः पवित्रे अधि तोशते । पुनानो घ्नन्नप स्रिधः ॥ १ ॥

एषः । कविः । अभिऽस्तुतः । पवित्रे । अधि । तोशते । पुनानः । घ्नन् । अप । स्रिधः ॥ १ ॥

एषः सोमः कविः मेधावी अभिष्टुतः अभितः स्तुतः पवित्रे अधि दशापवित्रमतीत्य तोशते । यद्यपि तोशतिर्वधकर्मा तथापि हनने गतिसद्भावादत्र गतिमात्रे वर्तते । गच्छतीत्यर्थः[6] । अथवा । पवित्रेऽधि कृष्णाजिने तोशते हन्यते । पीड्यत इत्यर्थः । किं कुर्वन् । पुनानः पूयमानः स्रिधः शत्रून् अप घ्नन् अपगमयन् ॥

एष इन्द्राय वायवे स्वर्जित्परि षिच्यते । पवित्रे दक्षसाधनः ॥ २ ॥

एषः । इन्द्राय । वायवे । स्वःऽजित् । परि । सिच्यते । पवित्रे । दक्षऽसाधनः ॥ २ ॥

१. ग–परिचरंतः । २. ग–जामयोंगुल्यः तं । ३. ग-त-म–'जामयः अङ्गुल्यः' नास्ति । ४. घ–पवमान पूयमान इंदो दीप्त । ५. घ–'इन्दुं · · · वा' नास्ति । ६. त–गच्छंतीत्यर्थः ।

ᵛएषः सोमः ᵛस्वर्जित् स्वर्गस्य सर्वस्य वा जेता[1] ᵛइन्द्राय ᵛवायवे च ᵛपवित्रे ᵛपरि ᵛषिच्यते । कीदृश एषः । ᵛदक्षसाधनः बलकारी ॥

**एष नृभिर्वि नीयते दिवो मूर्धा वृषा सुतः । सोमो वनेषु विश्ववित् ॥ ३ ॥**

एषः । नृऽभिः । वि । नीयते । दिवः । मूर्धा । वृषा । सुतः । सोमः । वनेषु । विश्वऽवित् ॥३॥

ᵛएषः ᵛसोमः ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛवि ᵛनीयते विविधं नीयते । एष कीदृशः । ᵛदिवः द्युलोकस्य ᵛमूर्धा शिरोवत्प्रधानभूतः ᵛवृषा अभिमतवर्षकः ᵛसुतः अभिषुतः । कुत्र नीयते । ᵛवनेषु वननीयेषु वनसंभूतद्रुमविकारेषु वा पात्रेषु । ᵛविश्ववित् सर्वज्ञ एष इति समन्वयः ॥

**एष गव्युरचिक्रदत्पवमानो हिरण्ययुः । इन्दुः सत्राजिदस्तृतः ॥ ४ ॥**

एषः । गव्युः । अचिक्रदत् । पवमानः । हिरण्यऽयुः । इन्दुः । सत्राऽजित् । अस्तृतः ॥४॥

ᵛएषः सोमः ᵛपवमानः पूयमानः ᵛअचिक्रदत् शब्दं करोति । कथंभूतः सन् । ᵛगव्युः अस्माकं गा इच्छन् ᵛहिरण्ययुः धनमिच्छन् ᵛइन्दुः दीप्तः सन् ᵛसत्राजित् महतः[2] शत्रोरसुरादेर्जेता ᵛअस्तृतः स्वयमन्यैरहिंस्यश्च सन् ॥

**एष सूर्येण हासते पवमानो अधि द्यवि । पवित्रे मत्सरो मदः ॥ ५ ॥**

एषः । सूर्येण । हासते । पवमानः । अधि । द्यवि । पवित्रे । मत्सरः । मदः ॥ ५ ॥

ᵛएषः ᵛपवमानः पूयमानः सोमः ᵛसूर्येण देवेन ᵛअधि ᵛद्यवि द्युलोकेऽन्तरिक्षे ᵛपवित्रे ᵛहासते परित्यज्यते । ᵛमत्सरः मदकरः ᵛमदः सोमः । यद्यप्यध्वर्युहस्ताद्दशापवित्रे परित्यज्यते सोमस्तथाप्यन्तरिक्षे सूर्येण पवित्रे त्यज्यत इति भावना वीर्यवत्त्वाय । सत्स्वप्यन्यदेवेषु सोमस्रावणे सूर्यस्य कः प्रसङ्ग इति न वाच्यं सूर्यरश्मिभिरेव सोमस्याप्यायनात् ॥

**एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः । पुनान इन्दुरिन्द्रमा ॥ ६ ॥**

एषः । शुष्मी । असिस्यदत् । अन्तरिक्षे । वृषा । हरिः । पुनानः । इन्दुः । इन्द्रम् । आ ॥ ६ ॥

ᵛएष ᵛशुष्मी बलवान् सोमः ᵛअन्तरिक्षे दशापवित्रे ᵛअसिष्यदत् स्यन्दते । कीदृश एषः । ᵛवृषा वर्षकः ᵛहरिः हरितवर्णः ᵛपुनानः पूयमानः ᵛइन्दुः दीप्तश्चैव[3] ᵛइन्द्रमा इन्द्रं च अभिगच्छतीति शेषः । आ इति चार्थे ॥ ॥ १७ ॥

'एष वाजी' इति षडृचं चतुर्थं सूक्तं प्रियमेधस्यार्षं गायत्रं सौम्यम् । 'एष वाजी प्रियमेधः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः । अव्यो वारं वि धावति ॥ १ ॥**

एषः । वाजी । हितः । नृऽभिः । विश्वऽवित् । मनसः । पतिः । अव्यः । वारम् । वि । धावति ॥१॥

ᵛएषः सोमः ᵛवाजी गमनशीलः ᵛहितः अध्वर्युणा[4] पात्रे निहितः ᵛविश्ववित् सर्वज्ञः ᵛमनसः स्तोत्रस्य ᵛपतिः स्वामी । अथवा सोमस्य मनोभिमानित्वात् मनसः स्वामित्वं 'चन्द्रमा

---

१. ग-त-भ४-जेता सोमः । २. ग-संहत°; त-महतां । ३. ग-दीप्तश्चंद्र इव; घ-दीप्तश्च; त-दीप्तश्च इव । ४. घ-नृभिः अध्वर्य्वादिभिः ।

मनो भूत्वा हृदयं प्राविशत्' ( ऐ. आ. २.४.२) इति श्रुतेः। तादृशोऽसौ अव्यो वारम् अवेर्वालं दशापवित्रं वि धावति विविधं गच्छति ॥

**एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः। विश्वा धामान्याविशन् ॥ २ ॥**

एषः। पवित्रे। अक्षरत्। सोमः। देवेभ्यः। सुतः। विश्वा। धामानि। आऽविशन् ॥२॥

एषः सोमः देवेभ्यः देवार्थं सुतः अभिषुतः सन् पवित्रे अक्षरत स्रवति। विश्वा सर्वाणि धामानि देवशरीराणि आविशन् प्रविशन्। प्रवेष्टुमित्यर्थः ॥

**एष देवः शुभायतेऽधि योनावमर्त्यः। वृत्रहा देववीतमः ॥ ३ ॥**

एषः। देवः। शुभायते। अधि। योनौ। अमर्त्यः। वृत्रऽहा। देवऽवीतमः ॥ ३ ॥

एषः सोमः देवः शुभायते शोभते। कुत्र। अधि योनौ स्वीये स्थाने। कीदृश एषः। अमर्त्यः अमरणधर्मा वृत्रहा शत्रुहन्ता देववीतमः अतिशयेन देवानां कामयिता ॥

**एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः। अभि द्रोणानि धावति ॥ ४ ॥**

एषः। वृषा। कनिक्रदत्। दशऽभिः। जामिऽभिः। यतः। अभि। द्रोणानि। धावति ॥४॥

एष वृषा वर्षिता कामानां कनिक्रदत् शब्दं कुर्वन् दशभिर्जामिभिः अङ्गुलीभिः यतः धृतः द्रोणानि द्रुममयाणि[1] पात्राणि अभि धावति अभिगच्छति ॥

**एष सूर्यमरोचयत्पवमानो विचर्षणिः। विश्वा धामानि विश्ववित् ॥ ५ ॥**

एषः। सूर्यम्। अरोचयत्। पवमानः। विऽचर्षणिः। विश्वा। धामानि। विश्वऽवित् ॥५॥

एषः सोमः सूर्यमरोचयत् रोचयति स्वरसेन। पवमानः पूयमानः विचर्षणिः सर्वस्य द्रष्टा विश्ववित् सर्ववित्। न केवलं सूर्यं किंतु विश्वा सर्वाणि धामानि तेजःस्थानानि रोचयति ॥

**एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति। देवावीरघशंसहा ॥ ६ ॥**

एषः। शुष्मी। अदाभ्यः। सोमः। पुनानः। अर्षति। देवऽअवीः। अघशंसऽहा ॥ ६ ॥

एषः सोमः शुष्मी बलवान् अदाभ्यः अदम्भनीयः पुनानः पूयमानः अर्षति गच्छति। देवावीः देवानामविता अघशंसहा। अघान् शंसन्तीत्यघशंसाः। तेषां हन्ता ॥ ॥ १९ ॥

'प्रास्य' इति षड़्चं पञ्चमं सूक्तं नृमेधस्याङ्गिरसस्यार्षं गायत्रं पवमानसोमदेवताकम्। अनुक्रम्यते च—'प्रास्य नृमेधः' इति। गतो विनियोगः ॥

**प्रास्य धारा अक्षरन्वृष्णः सुतस्यौजसा। देवाँ अनु प्रभूषतः ॥ १ ॥**

प्र। अस्य। धाराः। अक्षरन्। वृष्णः। सुतस्य। ओजसा। देवान्। अनु। प्रऽभूषतः ॥१॥

अस्य सोमस्य वृष्णः वर्षकस्य सुतस्य अभिषुतस्य देवाननु प्रभूषतः प्रभवितुमिच्छतः ओजसा स्ववीर्येण धाराः प्र अक्षरन् प्रकर्षेण क्षरन्ति ॥

१. ग-घ-त-भ-मु—द्रुममयानि।

सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा। ज्योतिर्जज्ञानमुक्थ्यम् ॥ २ ॥

सप्तिम्। मृजन्ति। वेधसः। गृणन्तः। कारवः। गिरा। ज्योतिः। जज्ञानम्। उक्थ्यम् ॥२॥

सप्तिम् अश्वस्थानीयं सर्पणस्वभावं वा सोमं मृजन्ति शोधयन्ति। के। गृणन्तः स्तुवन्तः वेधसः विधातारः कारवः कर्मकर्तारोऽध्वर्य्वादयः गिरा स्तुत्या साधनेन। कीदृशं सप्तिम्। ज्योतिः दीप्यमानं सोमं जज्ञानं[1] जायमानम्। प्रवृद्धमित्यर्थः। अथवा ज्योतिर्जायमानम् 'अयं वै ज्योतिर्यत् सोमः' इति श्रुतेः[2]। उक्थ्यं[3] स्तुत्यम्[3] ॥

सुषहा सोम तानि ते पुनानाय प्रभूवसो। वर्धा समुद्रमुक्थ्यम् ॥ ३ ॥

सुऽसहा। सोम। तानि। ते। पुनानाय। प्रभूवसो इति प्रभुऽवसो। वर्ध। समुद्रम्। उक्थ्यम् ॥३॥

हे सोम प्रभूवसो प्रभूतधन पुनानाय पूयमानस्य ते तव तानि तेजांसि सुषहा शोभनाभिभावुकानि। यस्मादेवं तस्मात् समुद्रं समुद्रसदृशं द्रोणकलशम् उक्थ्यं स्तुत्यं तं वर्ध वर्धय। पूरय रसेन ॥

विश्वा वसूनि संजयन्पवस्व सोम धारया। इनु द्वेषांसि सध्र्यक् ॥ ४ ॥

विश्वा। वसूनि। सम्ऽजयन्। पवस्व। सोम। धारया। इनु। द्वेषांसि। सध्र्यक् ॥ ४ ॥

हे सोम विश्वा सर्वाणि वसूनि अस्मदर्थं संजयन् पवस्व क्षर धारया। द्वेषांसि द्वेष्याणि सर्वाणि सध्र्यक् सहैव इनु प्रेरय दूरदेशं प्रति ॥

रक्षा सु नो अररुषः स्वनात्समस्य कस्य चित्। निदो यत्र मुमुच्महे ॥ ५ ॥

रक्ष। सु। नः। अररुषः। स्वनात्। समस्य। कस्य। चित्। निदः। यत्र। मुमुच्महे ॥ ५ ॥

हे सोम नः अस्मान् सु सुष्ठु रक्ष पालय। कस्मात्। अररुषः अदातुः स्वनात् शब्दात् निन्दारूपात्[4]। किमेकस्यादानशीलस्य। न। समस्य सर्वस्य योऽस्ति तस्य सर्वस्य कस्यचित्। कंचनामुञ्चन्नित्यर्थः। न केवलमदातुः स्वनात्। किं तर्हि। कस्य चित् कस्यापि निदः निन्दकाद्रक्ष। यत्र मुमुच्महे यस्मिन्रक्षणे सति वयं मुक्ता भवेम तेन रक्षणेन रक्षेति ॥

एन्दो पार्थिवं रयिं दिव्यं पवस्व धारया। द्युमन्तं शुष्ममा भर ॥ ६ ॥

आ। इन्दो इति। पार्थिवम्। रयिम्। दिव्यम्। पवस्व। धारया।
द्युऽमन्तम्। शुष्मम्। आ। भर ॥ ६ ॥

हे इन्दो क्रियमान सोम त्वं धारया आ पवस्व सर्वतः क्षर। पार्थिवं दिव्यं च रयिं धनं द्युमन्तं दीप्तिमन्तं शुष्मं बलं च आ भर आहरास्मभ्यम् ॥ ॥ १९ ॥

'प्र धाराः' इति षडृचं षष्ठं सूक्तं बिन्दुनाम्न आङ्गिरसस्यार्षं गायत्रं पवमानसोमदेवताकम्। 'प्र धारा बिन्दुः' इत्यनुक्रमणिका। गतो विनियोगः ॥

---

१. ग-त-जज्ञानं जातं। २. भ-श्रुतिः। ३. भ१.२.३-'उक्थ्यं स्तुत्यं' नास्ति। ४. घ-त-निदः निंदारूपात्।

प्र धारा अस्य शुष्मिणो वृथा पवित्रे अक्षरन् । पुनानो वाचमिष्यति ॥ १ ॥

प्र । धाराः । अस्य । शुष्मिणः । वृथा । पवित्रे । अक्षरन् । पुनानः । वाचम् । इष्यति ॥१॥

शुष्मिणः बलवतः अस्य सोमस्य धाराः पवित्रे दशापवित्रे वृथा अप्रयत्नेन[1] अक्षरन् स्रवन्ति[2] । तदानीं पुनानः पूयमानः सोमः वाचं स्तुतिं स्वीयं ध्वनिं वा इष्यति प्रेरयति ॥

इन्दुर्हियानः सोतृभिर्मृज्यमानः कनिक्रदत् । इयर्ति वग्नुमिन्द्रियम् ॥ २ ॥

इन्दुः । हियानः । सोतृऽभिः । मृज्यमानः । कनिक्रदत् । इयर्ति । वग्नुम् । इन्द्रियम् ॥२॥

अयम् इन्दुः दीप्तः सोमः हियानः प्रेर्यमाणः व्याप्रियमाणः । कैः । सोतृभिः[3] ऋत्विग्भिः । पश्चाद्दशापवित्रे मृज्यमानः शोध्यमानः[4] कनिक्रदत् शब्दं कुर्वन् इन्द्रियम् इन्द्रस्य संबन्धिन-मिन्द्रियमपि - - - - - करं वग्नुं शब्दम् इयर्ति प्रेरयति ग्रहणसमये ॥

आ नः शुष्मं नृषाह्यं वीरवन्तं पुरुस्पृहम् । पवस्व सोम धारया ॥ ३ ॥

आ । नः । शुष्मम् । नृऽसह्यम् । वीरऽवन्तम् । पुरुऽस्पृहम् । पवस्व । सोम । धारया ॥ ३ ॥

हे सोम त्वं धारया आ पवस्व । किम् । शुष्मं बलम् । कीदृशम् । नृषाह्यं नृणामस्म-द्विरोधिनामभिभावुकं वीरवन्तं पुत्रोपेतं पुरुस्पृहं बहुभिः स्पृहणीयं शुष्ममा पवस्व । एतस्य लाभाय पवस्वेत्यर्थः । रसस्रावे सति होमद्वारा तत्सिद्धे शुष्मं पवस्वेत्युपचर्यते ॥

प्र सोमो अति धारया पवमानो असिष्यदत् । अभि द्रोणान्यासदम् ॥ ४ ॥

प्र । सोमः । अति । धारया । पवमानः । असिस्यदत् । अभि । द्रोणानि । आऽसदम् ॥४॥

अयं पवमानः सोमः धारया अति अतिक्रम्य दशापवित्रं प्र असिष्यदत् प्रस्यन्दते । किमर्थम् । द्रोणानि द्रोणकलशादीनि आसदम् आसादनाय[5] ॥

अप्सु त्वा मधुमत्तमं हरिं हिन्वन्त्यद्रिभिः । इन्दविन्द्राय पीतये ॥ ५ ॥

अप्ऽसु । त्वा । मधुमत्ऽतमम् । हरिम् । हिन्वन्ति । अद्रिऽभिः । इन्दो इति । इन्द्राय । पीतये ॥५॥

हे इन्दो सोम अप्सु वसतीवरीषूदकेषु मधुमत्तमम् अतिशयेन मधुमन्तं हरिं हरितवर्णं त्वा त्वाम् अद्रिभिः अभिषवग्रावभिः हिन्वन्ति प्रेरयन्ति । किमर्थम् । इन्द्राय इन्द्रस्य पीतये पानाय ॥

सुनोता मधुमत्तमं सोममिन्द्राय वज्रिणे । चारुं शर्धाय मत्सरम् ॥ ६ ॥

सुनोत । मधुमत्ऽतमम् । सोमम् । इन्द्राय । वज्रिणे । चारुम् । शर्धाय । मत्सरम् ॥ ६ ॥

हे ऋत्विजः यूयं मधुमत्तमं मधुररसोपेतं सोममिन्द्राय वज्रिणे वज्रयुक्ताय सुनोत सुनुत । पुनः कीदृशम् । चारुं चरणीयं मत्सरं मदकरं शर्धाय अस्माकं बलायेन्द्रस्य पानाय च सोमं सुनुतेति ब्रूते यजमानः स्वीयान् ॥ ॥ २० ॥

---

१. ग–अप्रयासेन । २. म–प्रस्रवंति । ३. त·म१.४–स्तोतृभिः । ४. ग·म२.३–शोध्यमानः सन् । ५. म२.३–आसदनाय; म५–आसनाय ।

'प्र सोमासः' इति षडृचं सप्तमं सूक्तं राहूगणस्य गोतमस्यार्षं सौम्यम्। 'प्र सोमासो गोतमः' इत्यनुक्रान्तम्। गतो विनियोगः॥

प्र सोमा॑सः स्वा॒ध्य१॑ः पव॑मानासो अक्रमुः। र॒यिं कृ॑ण्वन्ति॒ चेत॑नम् ॥ १ ॥

प्र। सोमा॑सः। सु॒ऽआ॒ध्य॑ः। पव॑मानासः। अ॒क्र॒मुः॒। र॒यिम्। कृ॒ण्वन्ति॑। चेत॑नम् ॥ १ ॥

प्र अक्रमुः प्रगच्छन्ति कलशं प्रति। के। सोमासः सोमाः। कीदृशाः। स्वाध्यः सुध्यानाः सुकर्माणो वा पवमानासः पूयमानाः। ते[1] च[1] चेतनं प्रज्ञापनं रयिं धनं कृण्वन्ति कुर्वन्त्यस्माकम्॥

दि॒वस्पृ॑थि॒व्या अधि॒ भवे॑न्दो द्यु॒म्नव॑र्धनः। भवा॑ वाजा॑नां॒ पति॑ः ॥ २ ॥

दि॒वः। पृ॒थि॒व्याः। अधि॑। भव॑। इ॒न्दो॒ इति॑। द्यु॒म्नऽव॑र्धनः। भव॑। वाजा॑नाम्। पति॑ः ॥२॥

हे इन्दो वाजानाम् अन्नानां पतिः स्वामी त्वं दिवः द्युलोकस्य पृथिव्याः भूलोकस्य द्युम्नवर्धनः द्योतमानस्य हिरण्यादिलक्षणधनस्य वर्धयिता भव। अस्माकं लोकद्वये यत् द्युम्नमस्ति तस्य वर्धयिता भवास्मभ्यमित्यर्थः॥

तुभ्यं॒ वाता॑ अभि॒प्रिय॑स्तु॒भ्यम॑र्षन्ति॒ सिन्ध॑वः। सोम॒ वर्ध॑न्ति ते॒ मह॑ः ॥ ३ ॥

तुभ्य॑म्। वाता॑ः। अ॒भि॒ऽप्रिय॑ः। तुभ्य॑म्। अ॒र्ष॒न्ति॒। सिन्ध॑वः। सोम॑। वर्ध॑न्ति। ते॒। मह॑ः ॥३॥

हे सोम तुभ्यं त्वदर्थं वाताः वायवः अभिप्रियः अभितर्पयितारो भवन्ति। तथा सिन्धवः स्यन्दमाना नद्यः तुभ्यमर्षन्ति गच्छन्ति। अभिपूयमाणस्य तवाप्यायनायैवं कुर्वन्तीत्यर्थः। त उभयेऽमी ते तव महः महत्त्वं वर्धन्ति वर्धयन्ति॥

आ प्या॑यस्व॒ समे॑तु ते वि॒श्वत॑ः सोम॒ वृष्ण्य॑म्। भवा॒ वाज॑स्य संग॒थे ॥ ४ ॥

आ। प्या॒य॒स्व॒। सम्। ए॒तु॒। ते॒। वि॒श्वत॑ः। सोम॑। वृष्ण्य॑म्। भव॑। वाज॑स्य। सम्ऽग॒थे ॥ ४ ॥

हे सोम त्वं वायुभिरद्भिश्च आ प्यायस्व प्रवृद्धो भव। ते त्वां विश्वतः वृष्ण्यं वर्षयोग्यं बलं समेतु संगच्छताम्। संगथे संग्रामे वाजस्य अन्नस्य प्रापकः भव॥

तुभ्यं॒ गावो॑ घृ॒तं पयो॒ बभ्रो॑ दुदु॒ह्रे अक्षि॑तम्। वर्षि॑ष्ठे॒ अधि॑ सान॑वि ॥ ५ ॥

तुभ्य॑म्। गाव॑ः। घृ॒तम्। पय॑ः। बभ्रो॒ इति॑। दु॒दु॒ह्रे। अक्षि॑तम्। वर्षि॑ष्ठे। अधि॑। सान॑वि ॥५॥

हे बभ्रो बभ्रुवर्ण सोम तुभ्यं त्वदर्थं गावो घृतं पयः च अक्षितम् अक्षीणं दुदुह्रे दुहते। वर्षिष्ठे प्रवृद्धे अधि सानवि समुच्छ्रिते प्रदेशे स्थिताय तुभ्यम्॥

स्वा॒यु॒धस्य॑ ते स॒तो भुव॑नस्य पते व॒यम्। इन्दो॑ सखि॒त्वमु॑श्मसि ॥ ६ ॥

सु॒ऽआ॒यु॒धस्य॑। ते॒। स॒तः। भुव॑नस्य। प॒ते॒। व॒यम्। इन्दो॒ इति॑। स॒खि॒ऽत्वम्। उ॒श्म॒सि॒ ॥६॥

हे भुवनस्य भूतजातस्य पते स्वामिन् पालक सोम। सोमस्य जगदाप्यायिकत्वेन तत्स्वामित्वम्। हे इन्दो सोम वयम् अनुष्ठातारः स्वायुधस्य ते तव सतः[2] सखित्वमुश्मसि कामयामहे॥ ॥ २१ ॥

---

१. घ-त-भ४-तव। २. भ१-संतः।

'प्र सोमासः' इति षड्टचमष्टमं सूक्तमात्रेयस्य श्यावाश्वस्यार्षं गायत्रं सौम्यम्। अनुक्रम्यते च—'प्र सोमासः श्यावाश्वः' इति। गतो विनियोगः॥

**प्र सोमा॑सो मद॒च्युतः॒ श्रव॑से नो म॒घोनः॑। सु॒ता वि॒दथे॑ अक्रमुः॥ १॥**

प्र। सोमा॑सः। मद॒ऽच्युतः॑। श्रव॑से। नः॒। म॒घोनः॑। सु॒ताः। वि॒दथे॑। अ॒क्र॒मुः॒॥ १॥

^सोमासः सोमाः ^मदच्युतः मदस्राविणः ^सुताः अभिषुताः सन्तः ^विदथे यज्ञे ^मघोनः हविष्मतो मम ^श्रवसे अन्नाय कीर्तये वा ^प्र ^अक्रमुः प्रगच्छन्ति॥

**आदीं॑ त्रि॒तस्य॒ योष॑णो॒ हरिं॑ हिन्व॒न्त्यद्रि॑भिः। इन्दु॒मिन्द्रा॑य पी॒तये॑॥ २॥**

आत्। ई॒म्। त्रि॒तस्य॑। योष॑णः। हरि॑म्। हि॒न्व॒न्ति॒। अद्रि॑ऽभिः। इन्दु॑म्। इन्द्रा॑य। पी॒तये॑॥२॥

^आत् अपि[1] च[1] ^ईम् एनं ^हरिं हरितवर्णं सोमं ^त्रितस्य ऋषेः ^योषणः अङ्गुलयः ^अद्रिभिः ग्रावभिः ^हिन्वन्ति प्रेरयन्ति[2]। किमर्थम्। ^इन्दुं दीप्तं सोमम् ^इन्द्राय इन्द्रस्य ^पीतये पानाय॥

**आदीं॑ हं॒सो यथा॑ ग॒णं विश्व॑स्यावीवशन्म॒तिम्। अत्यो॒ न गोभि॑रज्यते॥ ३॥**

आत्। ई॒म्। हं॒सः। यथा॑। ग॒णम्। विश्व॑स्य। अ॒वी॒व॒श॒त्। म॒तिम्।

अत्यः॑। न। गोभिः॑। अ॒ज्य॒ते॒॥ ३॥

^आत् अपि च ^ईम् अयं सोमः ^हंसो ^यथा ^गणं जनसंघं स्वगतिविशेषेण स्वनेन वा प्रविशति तद्वत् ^विश्वस्य सर्वस्य स्तोतृजनस्य ^मतिं स्तुतिं बुद्धिं वा ^अवीवशत् वशं नयति। स च सोमः ^अत्यो ^न अश्व इव ^गोभिः गव्यैरुदकैर्वा ^अज्यते सिच्यते स्निग्धीक्रियते॥

**उ॒भे सो॑माव॒चाक॑शन्मृ॒गो न त॒क्तो अ॑र्षसि। सीद॑न्नृ॒तस्य॒ योनि॒मा॥ ४॥**

उ॒भे इति॑। सो॒म॒। अ॒व॒ऽचाक॑शत्। मृ॒गः। न। त॒क्तः। अ॒र्ष॒सि॒।

सीद॑न्। ऋ॒तस्य॑। योनि॑म्। आ॥ ४॥

हे ^सोम ^उभे द्यावापृथिव्यौ ^अवचाकशत्। पश्यतिकर्मैतत्। पश्यन् ^मृगो ^न मृग इव ^तक्तः गव्यैः पयआदिभिर्मिश्रितः सन्। 'दध्ना तनक्ति' (तै. सं. २.५.३.५) इत्यादौ तथा दृष्टत्वात्। ^अर्षसि[3] गच्छसि[3] च[4]। किं कुर्वन्। ^ऋतस्य यज्ञस्य ^योनिं स्थानम् ^आ ^सीदन् आश्रयन्[5]। यज्ञसाधनाय गच्छसीत्यर्थः[6]॥

**अ॒भि गावो॑ अनूषत॒ योषा॑ जा॒रमि॑व प्रि॒यम्। अग॑न्ना॒जिं यथा॑ हि॒तम्॥ ५॥**

अ॒भि। गावः॑। अ॒नू॒ष॒त॒। योषा॑। जा॒रम्ऽइ॑व। प्रि॒यम्। अग॑न्। आ॒जिम्। यथा॑। हि॒तम्॥५॥

---

१. ग—अभिषवानंतरं; भ१.२—एवं च। २. ग-त-भ—'प्रेरयंति' नास्ति। ३. घ-त-भ—अर्षति गच्छति। ४. त७-भ२—'च' नास्ति। ५. ग-घ-त-भं-४—आश्रयन् गच्छति; भ१.२.३-मु—आश्रयन् गच्छसि। ६. ग-घ-त-भ—गच्छतीत्यर्थः।

हे सोम त्वां ^गावः शब्दाः ^अभि ^अनूषत अभिष्टुवन्ति। ^योषा ^प्रियं ^जारमिव। सा यथा तं स्तौति तद्वत्। स सोमः ^आजिं गन्तव्यं ^हितं मित्रमिव तं ^यथा अन्यः ^अगन्[1] स्वहिताय गच्छति तद्वत्। अथवा हितं धनप्रापकत्वेन[2] हितकरम्[3] आजिं शूर इव। अयमागच्छति पात्रम् ॥

**अस्मे धेहि द्युमद्यशो मघवद्भ्यश्च मह्यं च। सनिं मेधामुत श्रवः ॥ ६ ॥**

अस्मे इति। धेहि। द्युऽमत्। यशः। मघवत्ऽभ्यः। च। मह्यम्। च। सनिम्। मेधाम्। उत। श्रवः ॥ ६ ॥

हे सोम ^अस्मे[4] अस्मभ्यं ^द्युमत् दीप्तिमत् ^यशः अन्नं ^धेहि देहि। कीदृशेभ्योऽस्मभ्यम्। ^मघवद्भ्यश्च हविर्लक्षणान्नवद्भ्यश्च ^मह्यं ^च स्तुतिकर्त्रे च। अथवा मह्यमस्मभ्यमित्यर्थः। अस्मे मघवद्भ्यश्च मह्यं चेति तेषामेवाशंसनाभेदादुभयत्र चशब्दो युक्तः। किंच ^सनिं धनं ^मेधां प्रज्ञाम् ^उत अपि च ^श्रवः कीर्तिं च धेहि ॥   ॥ २२ ॥

'प्र सोमासः' इति षड्टचं नवमं सूक्तं त्रितस्यार्षं गायत्रं पवमानसोमदेवताकम्। 'प्र सोमासस्त्रितः' इत्यनुक्रान्तम्। गतो विनियोगः ॥

**प्र सोमासो विपश्चितोऽपां न यन्त्यूर्मयः। वनानि महिषाइव ॥ १ ॥**

प्र। सोमासः। विपःऽचितः। अपाम्। न। यन्ति। ऊर्मयः। वनानि। महिषाःऽइव ॥१॥

^विपश्चितः मेधाविनः ^सोमासः सोमाः ^प्र[5] ^यन्ति[5] प्रगच्छन्ति पात्राणि प्रति। किमिव। ^अपाम् ^ऊर्मयः ^न। ते यथा संततमुच्चलन्ति[6] तद्वत्। बाहुल्येऽयं दृष्टान्तो दर्शितो गमने दृष्टान्तान्तरमभिधीयते। ^वनानि ^महिषाः प्रवृद्धा मृगाः ^इव। अथवा स्वाश्रयात् प्रपतने[7] प्रथमो दृष्टान्तो द्वितीयस्तु दशापवित्रादधःप्रवेशे ॥

**अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया। वाजं गोमन्तमक्षरन् ॥ २ ॥**

अभि। द्रोणानि। बभ्रवः। शुक्राः। ऋतस्य। धारया। वाजम्। गोऽमन्तम्। अक्षरन् ॥२॥

^अभि क्षरन्तीति शेषः। उपसर्गश्रुतेरुचितक्रियाध्याहारः। ^द्रोणानि द्रोणकलशान् प्रति। यद्यपि द्रोणकलश एक एव तथापि तत्सम्बन्धान्यादितरेऽपि पात्रा द्रोणा इत्युच्यन्ते। अथवैकस्मिन्नेव पूजार्थं बहुवचनम्। के। ^बभ्रवः बभ्रुवर्णाः सोमाः ^शुक्राः दीप्ताः। केन प्रकारेण। ^ऋतस्य[8] अमृतस्य[8] ^धारया धाराकारेण[9]। किंच ^वाजम् अन्नं ^गोमन्तं बहुगोयुक्तम् ^अक्षरन् क्षरन्ति। अथवैकमेव वाक्यम्। उक्तविधाः सोमा द्रोणान् प्रत्यक्षरन् धारया। किं कुर्वन्तः। गोमन्तं वाजं प्रयच्छन्त इत्यर्थः ॥

**सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः। सोमा अर्षन्ति विष्णवे ॥ ३ ॥**

सुताः। इन्द्राय। वायवे। वरुणाय। मरुत्ऽभ्यः। सोमाः। अर्षन्ति। विष्णवे ॥ ३ ॥

१. ग-त-भ-'अगन्' नास्ति। २. त-धेनप्रापत्वेन; भ१.४-धनप्रापत्वेन। ३. ग-हितकरं त्वां; त-भ-मु-हितकरं वा। ४. ग-त-भ-'अस्मे' नास्ति। ५. त-भ१.४-प्रणयंति। ६. ग-°मुच्चलंति। ७. ग-प्रच्यवने; त-भ४-प्रद्रवने। ८. ग-त-भ-'ऋतस्य अमृतस्य' नास्ति। ९. भ१-धारकेण।

Vसुताः अभिषुताः Vसोमाः Vइन्द्राय इन्द्रार्थं Vवायवे च Vवरुणाय च Vमरुद्भ्यः च Vविष्णवे चैषामर्थम् Vअर्षन्ति गच्छन्ति ॥

तिस्रो वाच उदीरते गावो मिमन्ति धेनवः । हरिरेति कनिक्रदत् ॥ ४ ॥
तिस्रः । वाचः । उत् । ईरते । गावः । मिमन्ति । धेनवः । हरिः । एति । कनिक्रदत् ॥४॥

Vतिस्रो Vवाचः । ऋगादिभेदेन त्रिविधा स्तुतिः । Vउदीरते प्रोद्गमयन्त्यृत्विजः । Vधेनवः आशिरेण प्रीणयित्र्यः Vगावः Vमिमन्ति शब्दयन्ति दोहार्थम् । Vहरिः हरितवर्णश्च सोमः Vकनिक्रदत् शब्दं कुर्वन् Vएति गच्छति[1] कलशम् ॥

अभि ब्रह्मीरनूषत यह्वीरृतस्य मातरः । मर्मृज्यन्ते दिवः शिशुम् ॥ ५ ॥
अभि । ब्रह्मीः । अनूषत । यह्वीः । ऋतस्य । मातरः । मर्मृज्यन्ते । दिवः । शिशुम् ॥ ५ ॥

Vब्रह्मीः ब्राह्मणप्रेरिताः Vयह्वीः महत्यः । यह्वीरिति महन्नाम । Vऋतस्य यज्ञस्य Vमातरः निर्मात्र्यः स्तुतयः Vअभि Vअनूषत स्तुवन्ति । किम् । Vदिवः द्युदेवतायाः Vशिशुं शिशुस्थानीयं सोमम् । तमेव Vमर्मृज्यन्ते[2] मृजन्ति । 'तृतीयस्यामितो दिवि सोम आसीत्' ( तै. सं. ३. ५. ७. १ ) इत्यादिश्रुतेर्द्युशिशुत्वं तस्य ॥

रायः समुद्रांश्चतुरोऽस्मभ्यं सोम विश्वतः । आ पवस्व सहस्रिणः ॥ ६ ॥
रायः । समुद्रान् । चतुरः । अस्मभ्यम् । सोम । विश्वतः । आ । पवस्व । सहस्रिणः ॥ ६ ॥

Vरायः धनस्य संबन्धिनः Vचतुरः Vसमुद्रान् । धनपूर्णानित्यर्थः । तादृशान् समुद्रान् Vअस्मभ्यम् अर्थाय हे Vसोम Vविश्वतः सर्वतः Vआ Vपवस्व । तथा Vसहस्रिणः अपरिमितान् कामान् आ पवस्व आयच्छ । चतुःसमुद्रस्थधनविशेषप्राप्तेः तन्मध्यगतभूमिस्वामित्वमन्तरेणासंभवाच्चतुःसमुद्रमुद्रितभूमण्डलस्वामित्वमेवाशास्ते यजमानः ॥ ॥ २३ ॥

'प्र सुवानः' इति षडृचं दशमं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'प्र सुवानः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

प्र सुवानो धारया तनेन्दुर्हिन्वानो अर्षति । रुजद्दृळ्हा व्योजसा ॥ १ ॥
प्र । सुवानः । धारया । तना । इन्दुः । हिन्वानः । अर्षति । रुजत् । दृळ्हा । वि । ओजसा ॥१॥

Vइन्दुः सोमः Vसुवानः सूयमानः Vहिन्वानः अध्वर्युणा प्रेर्यमाणः Vधारया Vतना पवित्रं Vप्र Vअर्षति गच्छति । अथ प्रत्यक्षेणोच्यते । Vदृळ्हा दृढान्यपि शत्रुपुराणि Vओजसा बलेन Vवि Vरुजत् विरुजति विश्लथयति ॥

सुत इन्द्राय वायवे वरुणाय मरुद्भ्यः । सोमो अर्षति विष्णवे ॥ २ ॥
सुतः । इन्द्राय । वायवे । वरुणाय । मरुत्ऽभ्यः । सोमः । अर्षति । विष्णवे ॥ २ ॥

अयं Vसुतः अभिषुतः Vसोमः इन्द्राद्यर्थम्[3] Vअर्षति गच्छति ॥

१. ग-त१.६-भ१-'गच्छति' नास्ति । २. त-मृज्यते । ३. घ-इंद्राय वायवे वरुणाय मरुद्भ्यश्च विष्णवे च ।

वृषाणं वृषभिर्यतं सुन्वन्ति सोममद्रिभिः। दुहन्ति शक्मना पयः ॥ ३ ॥

वृषाणम्। वृषऽभिः। यतम्। सुन्वन्ति। सोमम्। अद्रिऽभिः। दुहन्ति। शक्मना। पयः ॥३॥

वृषाणं रससेक्तारं यतं नियतं सोमं वृषभिः रसस्य वर्षकैः अद्रिभिः ग्रावभिः सुन्वन्ति[1]। शक्मना कर्मणा दुहन्ति अध्वर्य्वादयः पयः सोमरसम्। सोमं पयो दुहन्तीति द्विकर्मकोऽयम् ॥

भुवत्त्रितस्य मर्ज्यो भुवदिन्द्राय मत्सरः। सं रूपैरज्यते हरिः ॥ ४ ॥

भुवत्। त्रितस्य। मर्ज्यः। भुवत्। इन्द्राय। मत्सरः। सम्। रूपैः। अज्यते। हरिः ॥४॥

त्रितस्य अपां पुत्रस्य सूक्तद्रष्टुः ऋषेः सोऽयं मत्सरः मदकरः सोमः मर्ज्यो भुवत् शुद्धो[2] भवति। तस्य यागार्थं शेषपानार्थं च। तथा इन्द्राय इन्द्रपानाय मर्ज्यः भुवत्। रूपैः रूपकैश्च[3] क्षीरादिभिः हरिः हरितवर्णः सोमः सम् अज्यते ॥

अभीमृतस्य विष्टपं दुहते पृश्निमातरः। चारु प्रियतमं हविः ॥ ५ ॥

अभि। ईम्। ऋतस्य। विष्टपम्। दुहते। पृश्निऽमातरः। चारु। प्रियऽतमम्। हविः ॥५॥

ईम् एनं सोमम् ऋतस्य विष्टपं स्थानम्। यज्ञाश्रयमित्यर्थः। तादृशं पृश्निमातरः मरुतः अभि दुहते। किम्। प्रियतमम् इन्द्रादीनां हविः होमसाधनं चारु[4] मनोहरम्[4]। मरुत्प्रेरितवृष्ट्या सोमवृद्धेस्तद्दोग्धृत्वम् ॥

समेनमह्रुता इमा गिरो अर्षन्ति सस्रुतः। धेनूर्वाश्रो अवीवशत् ॥ ६ ॥

सम्। एनम्। अह्रुताः। इमाः। गिरः। अर्षन्ति। सऽस्रुतः। धेनूः। वाश्रः। अवीवशत् ॥६॥

सम् अर्षन्ति संगच्छन्ते एनं सोमम् अह्रुताः अकुटिलाः गिरः अस्मदीयाः स्तुतयः सस्रुतः सरन्त्यः। ताश्च धेनूः प्रीणयित्रीः[5] स्तुतीः वाश्रः शब्दयन् अवीवशत् कामयते[6] सोमः ॥ ॥ २४ ॥

'आ नः' इति षडृचमेकादशं सूक्तमाङ्गिरसस्य प्रभूवसोरार्षं गायत्रं पवमानसोमदेवताकम्। अनुक्रान्तं च—'आ नः पवस्व प्रभूवसुः' इति। गतो विनियोगः ॥

आ नः पवस्व धारया पवमान रयिं पृथुम्। यया ज्योतिर्विदासि नः ॥ १ ॥

आ। नः। पवस्व। धारया। पवमान। रयिम्। पृथुम्। यया। ज्योतिः। विदासि। नः ॥ १ ॥

हे पवमान सोम त्वं धारया नः अस्माकम् आ पवस्व सर्वतः क्षर। किम्। रयिं धनं पृथुं विस्तीर्णम्। यया धारया ज्योतिः द्योतमानं यज्ञं स्वर्गं वा विदासि लम्भयसि नः अस्माकम् ॥

इन्दो समुद्रमीङ्खय पवस्व विश्वमेजय। रायो धर्ता न ओजसा ॥ २ ॥

इन्दो इति। समुद्रम्ऽईङ्खय। पवस्व। विश्वम्ऽएजय। रायः। धर्ता। नः। ओजसा ॥२॥

हे इन्दो सोम हे समुद्रमीङ्खय। समुद्रमित्युदकनाम। ईङ्खयतिर्गतिकर्मा[7]। उदकप्रेरक तथा हे विश्वमेजय विश्वस्य सर्वस्यास्मच्छत्रोः कम्पयितः सोम त्वम् ओजसा त्वदीयेन बलेन नः

१. त-भ-'सुन्वंति' नास्ति। २. ग-त-भ-'शुद्धो' नास्ति। ३. भ१-°रूपकैश्च। ४. ग-त-भ-सोमं। ५. घ-त-भ४-प्रीणयित्र्यः। ६. ग-अकामयत। ७. ग-भ४-ईंखति°; त-ईषति°।

अस्मभ्यं "रायः धनस्य "धर्ता धारकः "पवस्व । भवेत्यर्थः । अत्र यद्यप्युदकप्रेरणसर्वशत्रुकम्पने संबोधनान्तर्गतत्वाद्बुद्धेरथगते तथापि यजमानस्यापेक्षिते इति रायो धर्तृत्ववदाशास्ये अधिगन्तव्ये ॥

**त्वया॑ वी॒रेण॑ वीरवो॒ऽभि ष्या॑म पृतन्य॒तः । क्षरा॑ णो अ॒भि वार्य॑म् ॥ ३ ॥**

त्वया॑ । वी॒रेण॑ । वी॒र॒ऽव॒ः । अ॒भि । स्या॒म॒ । पृ॒त॒न्य॒तः । क्षर॑ । नः॒ । अ॒भि । वार्य॑म् ॥ ३ ॥

हे "वीरवः वीरवन् सोम "वीरेण "त्वया साधनेन "पृतन्यतः संग्राममिच्छतः शत्रून् "अभि "स्याम अभिभवेम । अतः "नः अस्माकं "वार्यं वरणीयं धनम् "अभि "क्षर । अभिगमयेत्यर्थः । अथवा वरणीयं सोमाख्यं धनं क्षर पवस्व ॥

**प्र वाज॒मिन्दु॑रिष्यति॒ सिषा॑सन्वाज॒सा ऋषि॑ः । व्र॒ता वि॒दान॒ आयु॑धा ॥ ४ ॥**

प्र । वाज॑म् । इन्दु॑ः । इ॒ष्य॒ति॒ । सिसा॑सन् । वा॒ज॒ऽसाः । ऋषि॑ः । व्र॒ता । वि॒दानः॑ । आयु॑धा ॥४॥

सोमः "वाजम् अन्नम् "इष्यति प्रेरयति यजमानेभ्यः[1] । किं कुर्वन् । "सिषासन् यजमानान् संभक्तुमिच्छन् । ईदृशः "इन्दुः[2] "वाजसाः अन्नस्य दाता "ऋषिः सर्वस्य द्रष्टा "व्रता कर्माणि आयुधानि च "विद्वानः जानन् ॥

**तं गी॒र्भिर्वा॑च॒मीङ्ख॒यं पु॑ना॒नं वा॑सयामसि । सोम॒ं जन॑स्य॒ गोप॑तिम् ॥ ५ ॥**

तम् । गीः॒ऽभिः । वा॒च॒म॒ऽई॒ङ्ख॒यम् । पु॒ना॒नम् । वा॒स॒या॒म॒सि॒ । सोम॑म् । जन॑स्य । गोऽप॑तिम् ॥५॥

"तं सोमं "गीर्भिः स्तुतिवाग्भिः[3] स्तोमानि शेषः । किंच "वाचमीङ्खयं वाचः प्रेरयितारं "पुनानं पूयमानं तं "सोमं "वासयामसि वासयामः श्रयणद्रव्यैः । कीदृशं सोमम् । "जनस्य "गोपतिं गवां पालकम् । यद्वा । एकमेव वाक्यम् । उक्तविशेषणविशिष्टं सोमं स्तुतिभिर्वासयाम इति । माधवस्तु वाचमिति पृथक्पदं निरुक्तं कृत्वा वाक्यद्वयं चकार ॥

**विश्वो॒ यस्य॑ व्र॒ते जनो॑ दा॒धार॒ धर्म॑ण॒स्पते॑ः । पु॒ना॒नस्य॑ प्र॒भूव॑सोः ॥ ६ ॥**

विश्वः॑ । यस्य॑ । व्र॒ते । जनः॑ । दा॒धार॑ । धर्म॑णः । पते॑ः । पु॒ना॒नस्य॑ । प्र॒भुऽव॑सोः ॥ ६ ॥

"विश्वः सर्वः "जनः मनुष्यो यजमानः "यस्य सोमस्य "व्रते कर्मणि "दाधार धारयति मन इति शेषः । कीदृशस्य । "धर्मणः[4] कर्मणः "पतेः पालकस्य "पुनानस्य पूयमानस्य "प्रभूवसोः प्रभूतधनस्य ॥　　॥ २९ ॥

'असर्जि' इति षळृचं द्वादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'असर्जि' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**अस॑र्जि॒ रथ्यो॑ यथा प॒वित्रे॑ च॒म्वो॑ः सु॒तः । कार्ष्म॑न्वा॒जी न्य॑क्रमीत् ॥ १ ॥**

असर्जि । रथ्यः॑ । य॒था॒ । प॒वित्रे॑ । च॒म्वोः॑ । सु॒तः । कार्ष्म॑न् । वा॒जी । नि । अ॒क्र॒मी॒त् ॥१॥

"रथ्यो "यथा रथसंबन्ध्यश्व इव स यथा विसृज्यते तद्वत् "चम्वोः अधिषवणफलकयोः "सुतः अभिषुतः सोमः "असर्जि सृष्टोऽभूत् "पवित्रे । तथाभूतः "वाजी वेजनवान् सोमाख्योऽश्वः "कार्ष्मन् । कार्ष्मं युद्धमितरेतरकर्षणात् । अत्र देवानामाकर्षणवति[5] यज्ञाख्ये संग्रामे "न्यक्रमीत् नितरां क्रामति ॥

1. त—यजमानेभ्यः । 2. भ१.२—इंदुः सोमः । 3. त१.२.६-भ१.२—स्तुतिभिर्वाग्भिः; त७—स्तुतिभिः । 4. ग-त-भ—यस्य धर्मणः । 5. ग—ॱमाकर्षणोपेते; त-भ२.४—ॱमाकर्षणयति; भ१—ॱमाकर्षयति ।

स वह्निः सोम जागृविः पवस्व देववीरति । अभि कोशं मधुश्चुतम् ॥ २ ॥

सः । वह्निः । सोम । जागृविः । पवस्व । देवऽवीः । अति । अभि । कोशम् । मधुऽश्चुतम् ॥२॥

हे ^सोम ^स ^वह्निः वाहकः ^जागृविः जागरूकः ^देववीः देवकामस्त्वं ^मधुश्चुतं मधुस्राविं ^कोशं दशापवित्रमतिक्रम्य ^अभि ^पवस्व द्रोणकलशं प्रति क्षर ॥

स नो ज्योतींषि पूर्व्य पवमान वि रोचय । क्रत्वे दक्षाय नो हिनु ॥ ३ ॥

सः । नः । ज्योतींषि । पूर्व्य । पवमान । वि । रोचय । क्रत्वे । दक्षाय । नः । हिनु ॥ ३ ॥

हे ^पूर्व्य पुराण ^पवमान सोम[1] ^नः अस्माकं ^ज्योतींषि दिव्यानि स्थानानि ^वि ^रोचय प्रकाशय । किंच ^क्रत्वे कर्मणे यागाय ^दक्षाय बलाय च[2] बलप्रदाय[3] यागाय वा ^नः अस्मान् ^हिनु प्रेरय ॥

शुम्भमान ऋतायुभिर्मृज्यमानो गभस्त्योः । पवते वारे अव्यये ॥ ४ ॥

शुम्भमानः । ऋतयुऽभिः । मृज्यमानः । गभस्त्योः । पवते । वारे । अव्यये ॥ ४ ॥

^ऋतायुभिः यज्ञकामैर्ऋत्विग्भिः ^शुम्भमानः अलंक्रियमाणस्तेषामेव ^गभस्त्योः हस्तयोः ^मृज्यमानः सोमः ^अव्यये अविमये ^वारे वाले दशापवित्रे ^पवते पूयते ॥

स विश्वा दाशुषे वसु सोमो दिव्यानि पार्थिवा । पवतामान्तरिक्ष्या ॥ ५ ॥

सः । विश्वा । दाशुषे । वसु । सोमः । दिव्यानि । पार्थिवा । पवताम् । आ । अन्तरिक्ष्या ॥ ५ ॥

^सः अभिषूयमाणः ^सोमः ^दाशुषे हविर्दात्रे ^विश्वा सर्वाणि ^वसु वसूनि धनानि ^पवतां प्रयच्छतु । विश्वानीत्युक्तस्य विवरणं शिष्टम् । ^दिव्यानि दिवि भवानि ^पार्थिवा पृथिवीसंबद्धानि ^अन्तरिक्ष्या[4] अन्तरिक्षे भवानि च पवताम् ॥

आ दिवस्पृष्ठमश्वयुर्गव्ययुः सोम रोहसि । वीरयुः शवसस्पते ॥ ६ ॥

आ । दिवः । पृष्ठम् । अश्वऽयुः । गव्यऽयुः । सोम । रोहसि । वीरऽयुः । शवसः । पते ॥६॥

हे ^सोम त्वं स्तोतॄणाम् ^अश्वयुः अश्वानिच्छन् ^गव्ययुः गा इच्छन् ^वीरयुः पुत्रानिच्छन् ^दिवस्पृष्ठं द्युलोकम् ^आ ^रोहसि आरोहसि[5] हे ^शवसस्पते अन्नस्य पालक ॥ ॥ २६ ॥

'स सुतः' इति षड्चं त्रयोदशं सूक्तं रहूगणस्यार्षं गायत्रं सौम्यम् । अनुक्रम्यते च—' स सुतो रहूगणः ' इति । गतो विनियोगः ॥

स सुतः पीतये वृषा सोमः पवित्रे अर्षति । विघ्नन्रक्षांसि देवयुः ॥ १ ॥

सः । सुतः । पीतये । वृषा । सोमः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥१॥

^सः ^सोमः ^पीतये इन्द्रादिपानाय[6] ^सुतः अभिषुतः ^वृषा वर्षणः[7] सन् ^पवित्रे ^अर्षति गच्छति । किं कुर्वन् । ^रक्षांसि ^विघ्नन्[8] ^देवयुः देवकामः स इत्यन्वयः ॥

१. ध—सोम स त्वं । २. ग-घ-त—' च ' नास्ति । ३. म१.२—बलप्रदानाय । ४. त५-म१.२—आंतरिक्ष्या । ५. ग-त-म४—रोह° । ६. ग—इंद्रपानाय । ७. ग—वर्षकः; त३.४.५-म४—कषणः । ८. ग-त५—विघ्नन् निघ्नन् ; त३—निघ्नन् ।

स पवित्रे विचक्षणो हरिरर्षति धर्णसिः । अभि योनिं कनिक्रदत् ॥ २ ॥

सः । पवित्रे । विऽचक्षणः । हरिः । अर्षति । धर्णसिः । अभि । योनिम् । कनिक्रदत् ॥२॥

सः सोमः विचक्षणः । पश्यतिकर्मैतत् । सर्वस्य द्रष्टा हरिः हरितवर्णः सोमः धर्णसिः सर्वस्य धारकः पवित्रे अर्षति गच्छति । पश्चात् कनिक्रदत् शब्दं कुर्वन् योनिं स्थानं द्रोणकलशम् अभि गच्छति ॥

स वाजी रोचना दिवः पवमानो वि धावति । रक्षोहा वारमव्ययम् ॥ ३ ॥

सः । वाजी । रोचना । दिवः । पवमानः । वि । धावति । रक्षःऽहा । वारम् । अव्ययम् ॥३॥

स वाजी वेजनवानश्वस्थानीयः दिवः स्वर्गस्य[1] रोचना रोचकः पवमानः पूयमानः वि धावति । कीदृशः । रक्षोहा रक्षोहन्ता अव्ययं वारं दशापवित्रमतीत्य व[2] धावति ॥

स त्रितस्याधि सानवि पवमानो अरोचयत् । जामिभिः सूर्यं सह ॥ ४ ॥

सः । त्रितस्य । अधि । सानवि । पवमानः । अरोचयत् । जामिऽभिः । सूर्यम् । सह ॥४॥

सः सोमः त्रितस्य महर्षेः अधि सानवि समुच्छ्रिते यज्ञे । अधीति सप्तम्यर्थानुवादी । पवमानः पूयमानः जामिभिः प्रवृद्धैर्बन्धुभूतैर्वा स्वतेजोभिः सह सहितः सन् सूर्यम् अरोचयत् प्रकाशितवान् ॥

स वृत्रहा वृषा सुतो वरिवोविददाभ्यः । सोमो वाजमिवासरत् ॥ ५ ॥

सः । वृत्रऽहा । वृषा । सुतः । वरिवःऽवित् । अदाभ्यः । सोमः । वाजम्ऽइव । असरत् ॥५॥

स वृत्रहा वृषा वर्षकः सुतः अभिषुतः वरिवोवित् यष्टुर्धनस्य लम्भकः अदाभ्यः[3] अन्यैरदम्भनीयः सोमः वाजमिव संग्राममश्व इव असरत् गच्छति कलशम् ॥

स देवः कविनेषितो३ऽभि द्रोणानि धावति । इन्दुरिन्द्राय मंहना ॥ ६ ॥

सः । देवः । कविना । इषितः । अभि । द्रोणानि । धावति । इन्दुः । इन्द्राय । मंहना ॥६॥

सः सोमः देवः इन्दुः क्रियमाणः कविना क्रान्तप्रज्ञेनाध्वर्युणा इषितः प्रेरितः सन् द्रोणानि द्रोणकलशान् अभि धावति अभिगच्छति । किमर्थम् । इन्द्राय इन्द्रार्थम् । मंहना महान् स इति समन्वयः ॥ ॥ २७ ॥

'एषः' इति षड्चं चतुर्दशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'एष उ स्यः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

एष उ स्य वृषा रथोऽव्यो वारेभिरर्षति । गच्छन्वाजं सहस्रिणम् ॥ १ ॥

एषः । ऊँ इति । स्यः । वृषा । रथः । अव्यः । वारेभिः । अर्षति ।
गच्छन् । वाजम् । सहस्रिणम् ॥ १ ॥

१. ग-त-म-'स्वर्गस्य' नास्ति । २. ग-वि; तै-म४-व । ३. घ-त१.२.६.७-अदाभ्यः अदातृभ्यः; त३.४.५-अदातृभ्यः ।

ᐯस्यः स[1] प्रसिद्धः ᐯएषः अभिषुतः सोमः ᐯवृषा वर्षिता ᐯरथः रंहणस्वभावः ᐯअव्यो ᐯवारेभिः अवेर्वालैर्दशापवित्रेण ᐯअर्षति गच्छति कलशम् । ᐯवाजम् अन्नं ᐯसहस्रिणं सहस्रसंख्याकं यजमानाय प्रदातुं ᐯगच्छन् द्रोणकलशं प्रविशन्नर्षतीत्यर्थः । ᐯउ[2] पूरणः[2] ॥

**एतं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः । इन्दुमिन्द्राय पीतये ॥ २ ॥**

एतम् । त्रितस्य । योषणः । हरिम् । हिन्वन्ति । अद्रिऽभिः । इन्दुम् । इन्द्राय । पीतये ॥२॥

ᐯएतम् ᐯइन्दुं क्रियमाणं ᐯहरिं हरितवर्णं सोमं ᐯत्रितस्य ऋषेः ᐯयोषणः अङ्गुलयः ᐯअद्रिभिः[3] ᐯहिन्वन्ति[3] ᐯइन्द्राय इन्द्रस्य ᐯपीतये पानाय ॥

**एतं त्यं हरितो दश मर्मृज्यन्ते अपस्युवः । याभिर्मदाय शुम्भते ॥ ३ ॥**

एतम् । त्यम् । हरितः । दश । मर्मृज्यन्ते । अपस्युवः । याभिः । मदाय । शुम्भते ॥ ३ ॥

ᐯएतं ᐯत्यं तं सोममध्वर्योः ᐯदश ᐯहरितः हरणस्वभावा अङ्गुलयः ᐯअपस्युवः कर्मेच्छवः सत्यः ᐯमर्मृज्यन्ते शोधयन्ति । ᐯयाभिः इन्द्रस्य ᐯमदाय ᐯशुम्भते दीप्यते । शोध्यत इत्यर्थः । तमेतमिति संबन्धः ॥

**एष स्य मानुषीष्वा श्येनो न विक्षु सीदति । गच्छञ्जारो न योषितम् ॥ ४ ॥**

एषः । स्यः । मानुषीषु । आ । श्येनः । न । विक्षु । सीदति । गच्छन् । जारः । न । योषितम् ॥४॥

ᐯस्यः सः ᐯएषः सोमः ᐯमानुषीषु ᐯविक्षु प्रजासु यजमानरूपास्वनुग्रहेण ᐯआ ᐯसीदति ᐯश्येनो ᐯन श्येन इव । पुनः[4] क इव[4] । ᐯयोषितं ᐯगच्छन् अभिगच्छन् ᐯजारः ᐯन जार इव । स यथा संकेतितस्तस्याः कामपूरणाय गूढो गच्छति तद्वदित्यर्थः ॥

**एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः । य इन्दुर्वारमाविशत् ॥ ५ ॥**

एषः । स्यः । मद्यः । रसः । अव । चष्टे । दिवः । शिशुः । यः । इन्दुः । वारम् । आ । अविशत् ॥५॥

ᐯस्यः[5] सः ᐯएषः ᐯमद्यः मदनिमित्तः ᐯरसः ᐯअव ᐯचष्टे सर्वमवपश्यति[6] । ᐯदिवः ᐯशिशुः द्युपुत्रः । तत्रोत्पत्तेः पुत्रत्वमस्य । ᐯय ᐯइन्दुः दीप्तः सोमः ᐯवारं दशापवित्रम् ᐯआविशत् आविशति स एष इति ॥

**एष स्य पीतये सुतो हरिरर्षति धर्णसिः । क्रन्दन्योनिमभि प्रियम् ॥ ६ ॥**

एषः । स्यः । पीतये । सुतः । हरिः । अर्षति । धर्णसिः । क्रन्दन् । योनिम् । अभि । प्रियम् ॥६॥

ᐯएष ᐯस्यः स सोमः ᐯपीतये पानाय ᐯसुतः अभिषुतः ᐯहरिः हरितवर्णः ᐯधर्णसिः धारकः ᐯप्रियं स्वप्रियभूतं ᐯयोनिं स्थानं द्रोणकलशं ᐯक्रन्दन् शब्दयन् ᐯअभि ᐯअर्षति गच्छति ॥　॥ २८ ॥

'आशुरर्ष' इति षडृचं पञ्चदशं सूक्तमाङ्गिरसस्य बृहन्मतेरार्षं गायत्रं पवमानसोमदेवताकम् । 'आशुरर्ष बृहन्मतिः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

१. ग-त-भ-'स' नास्ति । २. ग-त-भ-'उ पूरणः' नास्ति । ३. घ-अद्रिभिः ग्रावभिः हिन्वंति प्रेरयंति । ४. ग-घ-त३.४.५-भ३-'पुनः क इव' नास्ति । ५. ग-त-भ३.४-'स्यः' नास्ति । ६. ग-त-भ२.३-सर्वमवपश्यदिति; भ४-सर्वमेव पश्यति ।

आशुरर्ष बृहन्मते परि प्रियेण धाम्ना । यत्र देवा इति ब्रवन् ॥ १ ॥

आशुः । अर्ष । बृहत्ऽमते । परि । प्रियेण । धाम्ना । यत्र । देवाः । इति । ब्रवन् ॥ १ ॥

हे ᐯबृहन्मते महामते सोम ᐯप्रियेण देवानां प्रियतमेन ᐯधाम्ना शरीरेण धारया ᐯआशुः शीघ्रः सन् ᐯपरि ᐯअर्ष परिगच्छ । ᐯयत्र ᐯदेवाः इन्द्रादयो वर्तन्ते ᐯइति ᐯब्रवन् ब्रुवन् उच्चारयन् । तां[1] दिशं गच्छामीति ब्रुवन्नित्यर्थः ॥

परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः । वृष्टिं दिवः परि स्रव ॥ २ ॥

परिऽकृण्वन् । अनिःऽकृतम् । जनाय । यातयन् । इषः । वृष्टिम् । दिवः । परि । स्रव ॥२॥

ᐯअनिष्कृतम् असंस्कृतं यजमानं स्थानं वा ᐯपरिष्कृण्वन् संस्कुर्वन् ᐯजनाय यागकर्त्रे ᐯइषः अन्नानि ᐯयातयन् निर्गमयन् ᐯदिवः अन्तरिक्षात् ᐯवृष्टिं ᐯपरि ᐯस्रव ॥

सुत एति पवित्र आ त्विषिं दधान ओजसा । विचक्षाणो विरोचयन् ॥ ३ ॥

सुतः । एति । पवित्रे । आ । त्विषिम् । दधानः । ओजसा । विऽचक्षाणः । विऽरोचयन् ॥३॥

ᐯसुतः अभिषुतः सोमः सन् ᐯपवित्रे दशापवित्रे । ᐯआ इत्यनर्थकः । ᐯओजसा बलेन शीघ्रम् ᐯएति गच्छति । कीदृशः सन् । ᐯत्विषिं दीप्तिं ᐯदधानः धारयन् ᐯविचक्षाणः सर्वं पश्यन् ᐯविरोचयन् दीपयंश्च । किम् । देवानिति शेषः ॥

अयं स यो दिवस्परि रघुयामा पवित्र आ । सिन्धोरूर्मा व्यक्षरत् ॥ ४ ॥

अयम् । सः । यः । दिवः । परि । रघुऽयामा । पवित्रे । आ । सिन्धोः । ऊर्मा । वि । अक्षरत् ॥४॥

ᐯअयं ᐯसः सोमः ᐯपवित्रे ᐯआ सिच्यमान इति शेषः । ᐯसिन्धोः जलस्राविण्याः ᐯऊर्मा[2] ऊर्मौ संघाते ᐯव्यक्षरत् विविधं क्षरति[3] । स इत्युक्तं क इत्याह । ᐯयो ᐯदिवस्परि द्युलोकस्योपरि ᐯरघुयामा लघुगमनो देवप्राप्तौ सोऽयमिति संबन्धः ॥

आविवासन्परावतो अथो अर्वावतः सुतः । इन्द्राय सिच्यते मधु ॥ ५ ॥

आऽविवासन् । पराऽवतः । अथो इति । अर्वाऽवतः । सुतः । इन्द्राय । सिच्यते । मधु ॥५॥

ᐯसुतः अभिषुतः सोमः ᐯपरावतः । दूरनमितान् । दूरस्थान् ᐯअथो अपि च ᐯअर्वावतः अन्तिकस्थांश्च देवान्[4] ᐯआविवासन्[4] । रसेन परिचरणायेत्यर्थः । ᐯइन्द्राय इन्द्रार्थं ᐯमधु मधुसदृशः सोमः ᐯसिच्यते ॥

समीचीना अनूषत हरिं हिन्वन्त्यद्रिभिः । योनावृतस्य सीदत ॥ ६ ॥

सम्ऽईचीनाः । अनूषत । हरिम् । हिन्वन्ति । अद्रिऽभिः । योनौ । ऋतस्य । सीदत ॥ ६ ॥

ᐯसमीचीनाः सम्यगञ्चिताः संगताः स्तोतारः ᐯअनूषत स्तुवन्ति । किंच सोमं ᐯहरिं हरितवर्णं ᐯहिन्वन्ति प्रेरयन्ति गमयन्ति ᐯअद्रिभिः ग्रावभिः । यस्मादेवं तस्मात् ᐯऋतस्य यज्ञस्य ᐯयोनौ स्थाने ᐯसीदत निषण्णा भवत हे देवाः ॥ ॥ २९ ॥

---

१. ग–तेषां; त-म३.४–ते ता । २. ग-त-म–' ऊर्मा ' नास्ति । ३. ग–क्षरति गच्छति । ४. घ–आविवासन् ; त-म–देवानामभिविवासन् ।

'पुनानः' इति षड्टचं षोडशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'पुनानः' इत्यनुक्रान्तम्। गतो विनियोगः ॥

**पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः। शुम्भन्ति विप्रं धीतिभिः ॥ १ ॥**

पुनानः। अक्रमीत्। अभि। विश्वाः। मृधः। विऽचर्षणिः। शुम्भन्ति। विप्रम्। धीतिऽभिः ॥ १ ॥

पुनानः पूयमानः विचर्षणिः द्रष्टा सोमः[1] विश्वाः सर्वान् मृधः हिंसकान् शत्रून् अभि अक्रमीत् अतिक्रान्तवान्[2]। तं विप्रं मेधाविनं धीतिभिः कर्मभिरभिषवादिभिः स्तुतिभिर्वा शुम्भन्ति दीपयन्ति अलंकुर्वन्ति ॥

**आ योनिमरुणो रुहद्गमदिन्द्रं वृषा सुतः। ध्रुवे सदसि सीदति ॥ २ ॥**

आ। योनिम्। अरुणः। रुहत्। गमत्। इन्द्रम्। वृषा। सुतः। ध्रुवे। सदसि। सीदति ॥ २ ॥

अयम् अरुणः अरुणवर्णः सोमः योनिं स्थानं द्रोणकलशम् आ रुहत् आरोहति। ततः इन्द्रं गमत् गच्छति। कुतः सन्। अयं वृषा वर्षकः फलानां सुतः अभिषुतः सन् गत्वा ध्रुवे सदसि स्थिरे स्थाने द्युलोकाख्ये सीदति निवसति ॥

**नू नो रयिं महामिन्दोऽस्मभ्यं सोम विश्वतः। आ पवस्व सहस्रिणम् ॥ ३ ॥**

नु। नः। रयिम्। महाम्। इन्दो इति। अस्मभ्यम्। सोम। विश्वतः।
आ। पवस्व। सहस्रिणम् ॥ ३ ॥

हे सोम अभिषुतस्त्वं हे इन्दो[3] नः अस्मभ्यं नु क्षिप्रं महां महान्तं सहस्रिणम् असंख्यातं[4] रयिं धनं विश्वतः आ पवस्व सर्वतः परिस्रव ॥

**विश्वा सोम पवमान द्युम्नानीन्दवा भर। विदाः सहस्रिणीरिषः ॥ ४ ॥**

विश्वा। सोम। पवमान। द्युम्नानि। इन्दो इति। आ। भर। विदाः। सहस्रिणीः। इषः ॥ ४ ॥

हे सोम पवमान पूयमान [3]इन्दो दीप्त त्वं विश्वा सर्वाणि द्युम्नानि द्रविणानि आ भर आहर। विदाः लम्भय च सहस्रिणीः सहस्रसंख्याकानि[4] इषः अन्नानि ॥

**स नः पुनान आ भर रयिं स्तोत्रे सुवीर्यम्। जरितुर्वर्धया गिरः ॥ ५ ॥**

सः। नः। पुनानः। आ। भर। रयिम्। स्तोत्रे। सुऽवीर्यम्। जरितुः। वर्धय। गिरः ॥ ५ ॥

हे सोम सः[5] त्वं नः अस्मभ्यं स्तोत्रे स्तोतृभ्यः पुनानः पूयमानोऽभिपूयमाणः आ भर आहर। किम्। रयिं धनम्। कीदृशम्। सुवीर्यं सुपुत्रम्। किंच जरितुः स्तोतुः गिरः स्तुतीः वर्धय ॥

**पुनान इन्दवा भर सोम द्विबर्हसं रयिम्। वृषन्निन्दो न उक्थ्यम् ॥ ६ ॥**

पुनानः। इन्दो इति। आ। भर। सोम। द्विऽबर्हसम्। रयिम्।
वृषन्। इन्दो इति। नः। उक्थ्यम् ॥ ६ ॥

१. ग–सर्वस्य। २. ग-घ-त१.२.४.५.७–अक्रांतवान्; त३.६-भ३.४–अक्रांतवान्। ३. घ–इंदो दीप्त। ४. घ–सहस्रसंख्यातं। ४. ग-घ-त-भ-°संख्याका। ५. त–'सः' नास्ति।

हे इन्दो सोम पुनानः पूयमानस्त्वम् आ भर आहर । किम् । रयिं धनम् । कीदृशं धनम् । द्विबर्हसं द्वयोः द्युपृथिव्याख्ययोः स्थानयोः परिवृद्धम् । तदेवाह । हे इन्दो[1] वृषन् वर्षक नः अस्मभ्यम् उक्थ्यं स्तुत्यं धनमा भर ॥ ॥ ३० ॥

' प्र ये गावः ' इति षडृचं सप्तदशं सूक्तं काण्वस्य मेध्यातिथेरार्षं गायत्रं पवमानसोमदेवताकम् । तथा चानुक्रान्तं-' प्र ये गावो मेध्यातिथिः ' इति । गतो विनियोगः ॥

प्र ये गावो न भूर्णयस्त्वेषा अयासो अक्रमुः । घ्नन्तः कृष्णामप त्वचम् ॥१॥

प्र । ये । गावः । न । भूर्णयः । त्वेषाः । अयासः । अक्रमुः । घ्नन्तः । कृष्णाम् । अप । त्वचम् ॥१॥

ये अभिषुताः सोमाः गावो न उदकानीव तानि यथा तूर्णमधः पतन्ति तद्वत् । एवं वोपमीयन्ते । यथा गावः स्वगोष्ठं प्रत्याशु गच्छन्ति तद्वत् । अथवा गावः स्तुतिवाचः । ता यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति तद्वत् । भूर्णयः क्षिप्राः[2] त्वेषाः दीप्ताः अयासः अया गमनशीलाः कृष्णां त्वचम् । कृष्णा त्वग्रक्षाः । तम् अप[3] घ्नन्तः[3] निघ्नन्तः । त्वचिः संवरणकर्मा । ईदृग्भूताः सोमाः प्र अक्रमुः । तान् स्तुतेति[4] शेषः ॥

सुवितस्य मनामहेऽति सेतुं दुराव्यम् । साह्वांसो दस्युमव्रतम् ॥ २ ॥

सुवितस्य । मनामहे । अति । सेतुम् । दुःऽआव्यम् । सह्वांसः । दस्युम् । अव्रतम् ॥ २ ॥

सुवितस्य । शोभनं प्राप्तः सुवितः । शोभनस्य सोमस्य सेतुं रक्षोविषयं बन्धनं दुराव्यं दुष्टमतिं च रक्षसां बन्धनं तेषां हननबुद्धिं च सोमकर्तृकाः मनामहे स्तुमः । कथं स्तुम इति तदुच्यते । अव्रतम् अकर्माणं दस्युं शत्रुं साह्वांसः अभिभवन्तः ॥

शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः । चरन्ति विद्युतो दिवि ॥ ३ ॥

शृण्वे । वृष्टेःऽइव । स्वनः । पवमानस्य । शुष्मिणः । चरन्ति । विऽद्युतः । दिवि ॥ ३ ॥

शृण्वे श्रूयते । किम् । सोमस्वनः । किमिव । वृष्टेः, वर्षणस्य स्वनः इव । तस्य यथा महान्[5] स्वनः श्रूयते तद्वत् प्रभूतरसापातसमये श्रूयते । कस्य स्वन इति तत्राह । पवमानस्य पूयमानस्य शुष्मिणः बलवतः । तस्यैव विद्युतः दीप्तयः दिवि अन्तरिक्षे चरन्ति ॥

आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत् । अश्वावद्वाजवत्सुतः ॥ ४ ॥

आ । पवस्व । महीम् । इषम् । गोऽमत् । इन्दो इति । हिरण्यऽवत् ।

अश्वऽवत् । वाजऽवत् । सुतः ॥ ४ ॥

हे इन्दो सोम सुतः अभिषुतस्त्वं महीमिषम् महदन्नम् आ पवस्व[6] । कीदृशमन्नम् । गोमत् बहुगोभिरुपेतमेवं[7] हिरण्यवत्[8] हिरण्यैः अश्ववत् अश्वैः वाजवत् वाजैर्बलैश्चोपेतम्[8] ॥

१. ग-त-भ-'इन्दो' नास्ति; घ-इंदो सोम । २. ग-त३.४.५-भ३-' क्षिप्राः ' नास्ति । ३. त-भ-' अप घ्नंतः ' नास्ति । ४. ग-स्तुवंतीति; घ-त-भ३.४-मु-स्तुवंतेति । ५. त-महत् ; भ३.४-महन् । ६. घ-पवस्व क्षर । ७. घ-गोभिरु'; भ-बहुभिर्गोभिरु' । ८. ग-हिरण्यवद्धिरण्यैरुपेतं अश्ववद्वाजवद्वाजैर्बलैश्चोपेतं; घ-हिरण्यवद्धिरण्ययुक्तं अश्ववदश्वयुक्तं वाजवद्बलैश्चोपेतं; त-भ३-हिरण्यवद्धिरण्यैरश्ववद्वाजैर्बलैश्चोपेतं ।

**स पवस्व विचर्षण आ मही रोदसी पृण । उषाः सूर्यो न रश्मिभिः ॥ ५ ॥**

सः । पवस्व । विऽचर्षणे । आ । मही इति । रोदसी इति । पृण ।
उषाः । सूर्यः । न । रश्मिऽभिः ॥ ५ ॥

हे विचर्षणे विद्रष्टः सोम सः त्वं पवस्व क्षर रसम् । तथा कृत्वा तेन रसेन मही महत्यौ रोदसी द्यावापृथिव्यौ आ पृण आपूरय । उषाः उषसः । एकदेशवाचिनोषःशब्देन तदुपलक्षितमहरुच्यते तत्प्राधान्यात् । अहानि रश्मिभिः सूर्यो न सूर्य इव ॥

**परि णः शर्मयन्त्या धारया सोम विश्वतः । सरा रसेव विष्टपम् ॥ ६ ॥**

परि । नः । शर्मऽयन्त्या । धारया । सोम । विश्वतः । सर । रसाऽइव । विष्टपम् ॥ ६ ॥

हे सोम नः अस्मभ्यं शर्मयन्त्या सुखयन्त्या धारया विश्वतः सर्वतः परि सर परिचर । रसेव रसेनेव विष्टपं भूलोकम् । यद्वा । रसा नदी स्थानं सा प्रवणरूपमिव ॥ ॥ ३१ ॥

'जनयन्' इति षड्चमष्टादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'जनयन्' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**जनयन्रोचना दिवो जनयन्नप्सु सूर्यम् । वसानो गा अपो हरिः ॥ १ ॥**

जनयन् । रोचना । दिवः । जनयन् । अप्ऽसु । सूर्यम् । वसानः । गाः । अपः । हरिः ॥१॥

अयं हरिः सोमः दिवः द्युसंबन्धीनि रोचना रोचनानि नक्षत्रग्रहमण्डलानि जनयन् तथा अप्सु अन्तरिक्षे सूर्यं च जनयन् तथा गाः अधोगन्त्रीः अपः वसानः भूमिमात्मानं वाच्छादयन् पवत इत्युत्तरत्र संबन्धः ॥

**एष प्रत्नेन मन्मना देवो देवेभ्यस्परि । धारया पवते सुतः ॥ २ ॥**

एषः । प्रत्नेन । मन्मना । देवः । देवेभ्यः । परि । धारया । पवते । सुतः ॥ २ ॥

एषः सोमः[1] प्रत्नेन पुराणेन मन्मना मननीयेन स्तोत्रेण युक्तः[2] सुतः अभिषुतश्च सन् देवेभ्यः परि[3] परितः धारया स्वीयया पवते ॥

**वावृधानाय तूर्वये पवन्ते वाजसातये । सोमाः सहस्रपाजसः ॥ ३ ॥**

ववृधानाय । तूर्वये । पवन्ते । वाजऽसातये । सोमाः । सहस्रऽपाजसः ॥ ३ ॥

वावृधानाय वर्धमानाय तूर्वये क्षिप्राय वाजसातये संग्रामायान्नलाभाय[4] वा पवन्ते पूयन्ते । के । सोमाः । कीदृशाः । सहस्रपाजसः अपरिमितबलाः । असंख्यातवेगा इत्यर्थः ॥

**दुहानः प्रत्नमित्पयः पवित्रे परि षिच्यते । क्रन्दन्देवाँ अजीजनत् ॥ ४ ॥**

दुहानः । प्रत्नम् । इत् । पयः । पवित्रे । परि । सिच्यते । क्रन्दन् । देवान् । अजीजनत् ॥ ४ ॥

---

१. घ–सोमो देवः । २. ग–युक्तो देवो द्योतमानः । ३. ग-त३.४.५-भ३-'परि' नास्ति । ४. त–संग्रामान्न' ।

प्रत्नमित् पुराणमेव पयः रसं दुहानः दधानः सोमः पवित्रे परि षिच्यते। किंच क्रन्दन् शब्दं कुर्वन् देवानजीजनत् जनयति स्वसमीपे। यत्र सोमोऽभिषूयते तत्र देवा नियतं प्रादुर्भवन्ति। अतो जनयतीत्युपचर्यते॥

**अभि विश्वानि वार्याभि देवाँ ऋतावृधः। सोमः पुनानो अर्षति॥ ५॥**

अभि। विश्वानि। वार्या। अभि। देवान्। ऋतऽवृधः। सोमः। पुनानः। अर्षति॥ ५॥

अयं सोमः पुनानः पूयमानः विश्वानि वार्या वरणीयानि धनानि अभि अर्षति। तथा ऋतावृधः यज्ञवर्धकान् देवान् अभि अर्षति॥

**गोमन्नः सोम वीरवदश्वावद्वाजवत्सुतः। पवस्व बृहतीरिषः॥ ६॥**

गोऽमत्। नः। सोम। वीरऽवत्। अश्वऽवत्। वाजऽवत्। सुतः। पवस्व। बृहतीः। इषः॥ ६॥

हे सोम सुतः त्वं नः अस्मभ्यं गोमत् गोभिर्युक्तं वीरवत् बहुभिर्वीरैरुपेतम्[1] अश्वावत् अश्वैर्युक्तं वाजवत् वाजैर्बलैः संग्रामैर्वोपेतं धनं बृहतीरिषः प्रभूतान्यन्नानि पवस्व। प्रयच्छेत्यर्थः॥ ॥ ३२॥

'यो अत्यइव' इति पञ्चमेकोनविंशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'यो अत्यइव' इत्यनुक्रान्तम्। गतो विनियोगः॥

**यो अत्यइव मृज्यते गोभिर्मदाय हर्यतः। तं गीर्भिर्वासयामसि॥ १॥**

यः। अत्यःऽइव। मृज्यते। गोभिः। मदाय। हर्यतः। तम्। गीःऽभिः। वासयामसि॥ १॥

यः सोमः अत्यइव अतनशीलोऽश्व इव गोभिः वसतीवरीभिरद्भिर्गोविकारैः पयआदिभिर्वा मृज्यते मिश्र्यते। किमर्थम्। मदाय देवानाम्। कीदृशः। यः हर्यतः कान्तः। तं सोमं गीर्भिः स्तुतिभिः वासयामसि वासयामः॥

**तं नो विश्वा अवस्युवो गिरः शुम्भन्ति पूर्वथा। इन्दुमिन्द्राय पीतये॥ २॥**

तम्। नः। विश्वाः। अवस्युवः। गिरः। शुम्भन्ति। पूर्वऽथा। इन्दुम्। इन्द्राय। पीतये॥ २॥

तम् इन्दुं सोमं नः अस्माकं विश्वाः सर्वाः अवस्युवः। अवो रक्षणम्। तदिच्छन्त्यः गिरः स्तुतयः पूर्वथा पूर्वमिव पूर्वं यथा तथेदानीमपि शुम्भन्ति दीपयन्ति। किमर्थम्। इन्द्राय इन्द्रस्य पीतये पानाय॥

**पुनानो याति हर्यतः सोमो गीर्भिः परिष्कृतः। विप्रस्य मेध्यातिथेः॥ ३॥**

पुनानः। याति। हर्यतः। सोमः। गीःऽभिः। परिऽकृतः। विप्रस्य। मेध्यऽअतिथेः॥ ३॥

पुनानः पूयमानः हर्यतः कमनीयः सोमो गीर्भिः परिष्कृतः स्तुतिभिरलंकृतः याति कलशं प्रति। किमर्थम्। विप्रस्य मेधाविनः मेध्यातिथेः मम यागार्थम्। यद्वा। मम गीर्भिरिति संबन्धः॥

**पवमान विदा रयिमस्मभ्यं सोम सुश्रियम्। इन्दो सहस्रवर्चसम्॥ ४॥**

पवमान। विदाः। रयिम्। अस्मभ्यम्। सोम। सुऽश्रियम्। इन्दो इति। सहस्रऽवर्चसम्॥ ४॥

---

१. घ–पुत्रैरुपेतं।

हे ᵛपवमान[1] ᵛइन्दो ᵛसोम ᵛअस्मभ्यं[1] ᵛसुश्रियं शोभनया[2] श्रिया[2] युक्तं ᵛसहस्रवर्चसं बहुदीप्तिं ᵛरयिं धनं ᵛविदाः । देहीत्यर्थः ॥

**इन्दुरत्यो न वाजसृत्कनिक्रन्ति पवित्र आ । यदक्षारति देवयुः ॥ ५ ॥**

इन्दुः । अत्यः । न । वाजऽसृत् । कनिक्रन्ति । पवित्रे । आ । यत् । अक्षाः । अति । देवऽयुः ॥५॥

अयम् ᵛइन्दुः ᵛवाजसृत् संग्रामसरणः ᵛअत्यो ᵛन अश्व इव ᵛपवित्र ᵛआ पवित्रे ᵛकनिक्रन्ति[3] शब्दं[4] करोति । ᵛयत् यदा ᵛअक्षाः क्षरति । 'क्षर संचलने' इत्यस्माच्छान्दसे लुङि तिपि सिच् । 'बहुलं छन्दसि' इतीडभावः । इडभावे च 'रात्सस्य' इति सलोपः । ᵛदेवयुः देवकामः सन् तदा शब्दं करोति[5] ॥

**पवस्व वाजसातये विप्रस्य गृणतो वृधे । सोम रास्व सुवीर्यम् ॥ ६ ॥**

पवस्व । वाजऽसातये । विप्रस्य । गृणतः । वृधे । सोम । रास्व । सुऽवीर्यम् ॥ ६ ॥

हे सोम ᵛपवस्व क्षर । किमर्थम् । ᵛवाजसातये अन्नलाभाय[6] । तथा ᵛगृणतः स्तुवतः ᵛविप्रस्य मम मेध्यातिथेः ᵛवृधे वर्धनाय च । हे ᵛसोम ᵛसुवीर्यं शोभनवीर्योपेतं पुत्रं च ᵛरास्व देहि ॥ ॥ ३३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल-

साम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थ-

प्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टकेऽष्टमोऽध्यायः ॥

समाप्तं च षष्ठाष्टकम् ॥

१. ग-त-पवमानविदास्मभ्यं । २. भ१.२.५-शोभनश्रिया । ३. त३-भ१.४-कनिक्रंदति ४. ग-त३.५-भ३.४-'शब्दं' नास्ति । ५. घ-त१.२.६-करोति । आ पूरणः । ६. घ-त-भ१.४-मु-अन्नस्य लाभाय ।

ॐ

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ सप्तमाष्टकस्य प्रथमाध्याय आरभ्यते । 'प्र णः' इति षडृचं त्रिंशं सूक्तमाङ्गिरसस्यायास्यस्यार्षं गायत्रं पवमानसोमदेवताकम् । तथा चानुक्रान्तं–'प्र णोऽयास्यः' इति । गतो विनियोगः ॥

**प्र ण इन्दो महे तन ऊर्मिं न बिभ्रदर्षसि । अभि देवाँ अयास्यः ॥ १ ॥**

प्र । नः । इन्दो इति । महे । तने । ऊर्मिम् । न । बिभ्रत् । अर्षसि । अभि । देवान् । अयास्यः ॥ १ ॥

हे इन्दो सोम त्वं नः अस्माकं महे महते तने धनाय प्र अर्षसि प्रगच्छसि[1] । न संप्रति अयास्यः चायमृषिः तव ऊर्मिं तरङ्गं बिभ्रत् धारयन् देवान् अभि गच्छति यष्टुम् ॥

**मती जुष्टो धिया हितः सोमो हिन्वे परावति । विप्रस्य धारया कविः ॥ २ ॥**

मती । जुष्टः । धिया । हितः । सोमः । हिन्वे । पराऽवति । विप्रस्य । धारया । कविः ॥ २ ॥

कविः क्रान्तकर्मा सोमः विप्रस्य मेधाविनः स्तोतुः मती मत्या स्तुत्या जुष्टः सेवितः धिया कर्मणा हितः यज्ञे निहितः परावति पवित्राद्दूरदेशे धारया हिन्वे प्रेर्यते ॥

**अयं देवेषु जागृविः सुत एति पवित्र आ । सोमो याति विचर्षणिः ॥ ३ ॥**

अयम् । देवेषु । जागृविः । सुतः । एति । पवित्रे । आ । सोमः । याति । विऽचर्षणिः ॥ ३ ॥

जागृविः जागरणशीलः अयं सोमः देवेषु देवार्थं सुतः अभिषुतः आ एति समन्तात् गच्छति । अपि च विचर्षणिः विद्रष्टा[2] सोमः पवित्रे याति पावनाय गच्छति ॥

**स नः पवस्व वाजयुश्चक्राणश्चारुमध्वरम् । बर्हिष्माँ आ विवासति ॥ ४ ॥**

सः । नः । पवस्व । वाजऽयुः । चक्राणः । चारुम् । अध्वरम् । बर्हिष्मान् । आ । विवासति ॥ ४ ॥

हे सोम यं त्वां बर्हिष्मान् ऋत्विक् आ विवासति परिचरति सः त्वं नः अस्मदर्थं वाजयुः अन्नमिच्छन् अध्वरं हिंसारहितं यागं[3] चारुं कल्याणं चक्राणः कुर्वन् पवस्व क्षर ॥

**स नो भगाय वायवे विप्रवीरः सदावृधः । सोमो देवेष्वा यमत् ॥ ५ ॥**

सः । नः । भगाय । वायवे । विप्रऽवीरः । सदाऽवृधः । सोमः । देवेषु । आ । यमत् ॥ ५ ॥

सः पवमानः सोमः वायवे वायुदेवार्थं भगाय भगदेवार्थं च विप्रवीरः विप्रैर्मेधाविभिः स्तुत्या प्रेरितः सदावृधः नित्यवृद्धो[4] भवन् नः अस्मभ्यं देवेषु स्थितं धनम् आ यमत् आ प्रयच्छतु ॥

---

१. घ-त६-भ१–क्षिप्रं गच्छसि । २. ग–स्तोता । ३. ग–विश्वद्रष्टा । ४. घ-त-भ–यागं च ।
५. भ१–नित्यनित्यशुद्धो; भ२–नित्यं वृद्धो ।

स नो॑ अ॒द्य वसु॑त्तये क्रतु॒विद्गा॑तु॒वित्त॑मः । वाजं॑ जेषि॒ श्रवो॑ बृ॒हत् ॥ ६ ॥

सः । नः॒ । अ॒द्य । वसु॑त्तये । क्र॒तु॒ऽवित् । गा॒तु॒वित्ऽत॑मः । वाज॑म् । जे॒षि॒ । श्रवः॑ । बृ॒हत् ॥६॥

हे सोम ᵛक्रतुवित् क्रतूनां कर्मणां लम्भकः[1] ᵛगातुवित्तमः पुण्यलोकानामतिशयेन मार्गस्य ज्ञाता त्वम् ᵛअद्य अस्मिन्नहनि ᵛनः अस्माकं ᵛवसुत्तये धनलाभाय ᵛबृहत् महत् ᵛश्रवः अन्नं ᵛवाजं बलं च ᵛजेषि जय ॥ ॥ १ ॥

'स पवस्व' इति षड्चमेकविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'स पवस्व' इत्यनुक्रान्तम् । गतो विनियोगः ॥

स प॑वस्व॒ मदा॑य॒ कं नृ॒चक्षा॑ दे॒ववी॑तये । इन्द॒विन्द्रा॑य पी॒तये॑ ॥ १ ॥

सः । प॒व॒स्व॒ । मदा॑य । कम् । नृ॒ऽचक्षाः॑ । दे॒वऽवी॑तये । इन्दो॒ इति॑ । इन्द्रा॑य । पी॒तये॑ ॥१॥

हे ᵛइन्दो सोम ᵛनृचक्षाः नृणां नेतॄणां द्रष्टा ᵛसः त्वं ᵛदेववीतये यज्ञाय ᵛइन्द्राय इन्द्रस्य ᵛपीतये पानाय च ᵛमदाय मदार्थं च ᵛकं सुखं यथा भवति तथा ᵛपवस्व क्षर ॥

स नो॑ अ॒र्षा॒भि दू॒त्यं१॒॑ त्वमिन्द्रा॑य तोशसे । दे॒वान्त्सखि॑भ्य॒ आ वर॑म् ॥ २ ॥

सः । नः॒ । अ॒र्ष॒ । अ॒भि । दू॒त्य॑म् । त्वम् । इन्द्रा॑य । तो॒श॒से॒ । दे॒वान् । सखि॑ऽभ्यः । आ । वर॑म् ॥२॥

हे सोम ᵛत्वं ᵛनः अस्माकं ᵛदूत्यं[2] दूतस्य कर्म ᵛअर्ष अभिगच्छ[3] । अपि[3] च यस्त्वं ᵛइन्द्राय इन्द्रार्थं ᵛतोशसे पीयसे ᵛसः त्वं ᵛसखिभ्यः प्रियेभ्यः अस्मभ्यं ᵛवरं श्रेष्ठं धनं ᵛदेवान् ᵛआ याचस्वेत्यर्थः ॥

उ॒त त्वाम॑रु॒णं व॒यं गोभि॑रञ्ज्मो॒ मदा॑य॒ कम् । वि नो॑ रा॒ये दुरो॑ वृधि ॥ ३ ॥

उ॒त । त्वाम् । अ॒रु॒णम् । व॒यम् । गोभिः॑ । अ॒ञ्ज्मः॒ । मदा॑य । कम् ।
वि । नः॒ । रा॒ये । दुरः॑ । वृ॒धि॒ ॥ ३ ॥

ᵛउत अपि च हे सोम यम् ᵛअरुणम् अरुणवर्णं ᵛत्वां ᵛमदाय मदार्थं ᵛवयम् आङ्गिरसायास्याः ᵛगोभिः गोविकारैः पयोभिः ᵛअञ्ज्मः वामयामः[4] संस्कुर्मः[5] । ᵛकम् इति पूरणम् । स त्वं ᵛनः अस्माकं ᵛराये धनाय ᵛदुरः द्वाराणि ᵛवि ᵛवृधि विवृतानि कुरु ॥

अत्यू॑ प॒वित्र॑मक्रमीद्वा॒जी धुरं॒ न याम॑नि । इन्दु॑र्दे॒वेषु॑ पत्यते ॥ ४ ॥

अति॑ । ऊँ॒ इति॑ । प॒वित्र॑म् । अ॒क्र॒मी॒त् । वा॒जी । धुर॑म् । न । याम॑नि । इन्दुः॑ । दे॒वेषु॑ । प॒त्य॒ते॒ ॥४॥

ᵛइन्दुः सोमः ᵛवाजी अश्वः ᵛयामनि गमने ᵛधुरं ᵛन रथस्य धुरं यथा तथा ᵛपवित्रम् ᵛअति ᵛअक्रमीत् अतिगच्छति । ᵛदेवेषु देवानां मध्ये ᵛपत्यते गच्छति च ॥

समी॒ सखा॑यो अस्वर॒न्वने॒ क्रीळ॑न्त॒मत्य॑विम् । इन्दुं॑ ना॒वा अ॑नूषत ॥ ५ ॥

सम् । ई॒मिति॑ । सखा॑यः । अ॒स्व॒र॒न् । वने॑ । क्रीळ॑न्तम् । अति॑ऽअविम् ।
इन्दु॑म् । ना॒वाः । अ॒नू॒ष॒त ॥ ५ ॥

---

१. ग–लंभकोथ । २. त६-भ१.४.७–'दूत्यं' नास्ति । ३. त३–अभिगच्छत्स्वपि; भ२–अभिगच्छसि अपि । ४. त१.२.३-भ१–वातयामः; त६-भ६.७–अंजयामः । ५. ग-त१.२.३.६-भ-'संस्कुर्मः' नास्ति ।

<sup>v</sup>अत्यविम् अतिक्रान्तं दशापवित्रं <sup>v</sup>वने उदके <sup>v</sup>क्रीळन्तं संक्रीडमानम् <sup>v</sup>ईम् एनम् <sup>v</sup>इन्दुं सोमं <sup>v</sup>सखायः प्रियस्तोतारः <sup>v</sup>सम् <sup>v</sup>अस्वरन् संस्तुवन्ति । <sup>v</sup>नावाः वाचोऽपि <sup>v</sup>अनूषत अस्तुवन् । 'नौरक्षरम्' इति वाङ्नामसु पाठात् ॥

**तया पवस्व धारया यया पीतो विचक्षसे । इन्दो स्तोत्रे सुवीर्यम् ॥ ६ ॥**

तया । पवस्व । धारया । यया । पीतः । विऽचक्षसे । इन्दो इति । स्तोत्रे । सुऽवीर्यम् ॥६॥

हे <sup>v</sup>इन्दो त्वं <sup>v</sup>यया <sup>v</sup>धारया <sup>v</sup>पीतः सन् <sup>v</sup>विचक्षसे विचक्षणाय <sup>v</sup>स्तोत्रे स्तोत्राणां कर्त्रे पुरुषाय <sup>v</sup>सुवीर्यं शोभनवीर्यं प्रयच्छसीति शेषः। <sup>v</sup>तया धारया <sup>v</sup>पवस्व क्षर ॥ ॥ २ ॥

'असृग्रन्' इति षडृचं द्वाविंशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'असृग्रन्' इत्यनुक्रान्तम्। गतो विनियोगः ॥

**असृग्रन्देववीतयेऽत्यासः कृत्व्याइव । क्षरन्तः पर्वतावृधः ॥ १ ॥**

असृग्रन् । देवऽवीतये । अत्यासः । कृत्व्याःऽइव । क्षरन्तः । पर्वतऽवृधः ॥ १ ॥

<sup>v</sup>पर्वतावृधः पर्वतैरभिषवग्रावभिर्वृद्धाः पर्वतेषु जाता वा <sup>v</sup>क्षरन्तः सोमाः <sup>v</sup>देववीतये यज्ञाय <sup>v</sup>अत्यासः अश्वाः <sup>v</sup>कृत्व्याइव यथा कर्मण्या अश्वाः तद्वत् <sup>v</sup>असृग्रन् सृज्यन्ते ॥

**परिष्कृतास इन्दवो योषेव पित्र्यावती । वायुं सोमा असृक्षत ॥ २ ॥**

परिऽकृतासः । इन्दवः । योषाऽइव । पित्र्यऽवती । वायुम् । सोमाः । असृक्षत ॥ २ ॥

<sup>v</sup>इन्दवः यागेषु क्रियमाणाः <sup>v</sup>सोमाः <sup>v</sup>परिष्कृतासः परिष्कृता अलंकृताः[1] सन्तः <sup>v</sup>पित्र्यावती पितृमती <sup>v</sup>योषेव अलंकृता कन्यका यथा वरं प्रति गच्छति तद्वत् <sup>v</sup>वायुं प्रति <sup>v</sup>असृक्षत गच्छन्ति ॥

**एते सोमास इन्दवः प्रयस्वन्तश्चमू सुताः । इन्द्रं वर्धन्ति कर्मभिः ॥ ३ ॥**

एते । सोमासः । इन्दवः । प्रयस्वन्तः । चमू इति । सुताः । इन्द्रम् । वर्धन्ति । कर्मऽभिः ॥३॥

<sup>v</sup>इन्दवः दीप्ताः <sup>v</sup>प्रयस्वन्तः अन्नवन्तः <sup>v</sup>एते अस्मिन् कर्मणि वर्तमाना अमी <sup>v</sup>सोमासः सोमाः <sup>v</sup>चमू चम्वोरधिषवणफलकयोः <sup>v</sup>सुताः अभिषुताः सन्तः <sup>v</sup>कर्मभिः यागैः <sup>v</sup>इन्द्रं <sup>v</sup>वर्धन्ति वर्धयन्ति प्रीणयन्तीत्यर्थः ॥

**आ धावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना । गोभिः श्रीणीत मत्सरम् ॥ ४ ॥**

आ । धावत । सुऽहस्त्यः । शुक्रा । गृभ्णीत । मन्थिना । गोभिः । श्रीणीत । मत्सरम् ॥ ४ ॥

हे <sup>v</sup>सुहस्त्यः शोभनहस्ता ऋत्विजः <sup>v</sup>आ <sup>v</sup>धावत । मां संप्रति आगच्छत । <sup>v</sup>मन्थिना सह <sup>v</sup>शुक्रा शुक्रं च <sup>v</sup>गृभ्णीत गृह्णीत सोमम् । <sup>v</sup>मत्सरं सोमं <sup>v</sup>गोभिः गोविकारैः पयोभिः <sup>v</sup>श्रीणीत संस्कुरुत च ॥

**स पवस्व धनंजय प्रयन्ता राधसो महः । अस्मभ्यं सोम गातुवित् ॥ ५ ॥**

सः । पवस्व । धनम्ऽजय । प्रऽयन्ता । राधसः । महः । अस्मभ्यम् । सोम । गातुऽवित् ॥५॥

1. त१.२.६.७-भ६.७-'अलंकृताः' नास्ति ।

हे vधनंजय शत्रुसंबन्धिनां जनानां जेतः vसोम vगातुवित् अभीष्टमार्गस्य लम्भकः vअस्मभ्यं vमहः महतः vराधसः धनस्य vप्रयन्ता प्रदाता च यः[1] vसः त्वं[1] vपवस्व क्षर ॥

**एतं मृजन्ति मर्ज्यं पवमानं दश क्षिपः । इन्द्राय मत्सरं मदम् ॥ ६ ॥**

एतम् । मृजन्ति । मर्ज्यम् । पवमानम् । दश । क्षिपः । इन्द्राय । मत्सरम् । मदम् ॥ ६ ॥

vमर्ज्यं मर्जनीयं शोध्यं vपवमानं क्षरन्तं vमत्सरं मदकरम् vएतम् इमं vमदं सोमं दशसंख्याकाः vक्षिपः अङ्गुलयः । 'विशः क्षिपः' इत्यङ्गुलिनामसु पाठात् । इन्द्रार्थं[2] vमृजन्ति पवित्रे[3] शोधयन्ति ॥ ॥ ३ ॥

'अया सोमः' इति पञ्चर्चं त्रयोविंशं सूक्तं भृगुपुत्रस्य कवेरार्षं गायत्रं पवमानसोमदेवताकम् । तथा चानुक्रान्तम्—'अया सोमः पञ्च कविर्भार्गवः' इति । उक्तो विनियोगः ॥

**अया सोमः सुकृत्यया महश्चिदभ्यवर्धत । मन्दान उद्वृषायते ॥ १ ॥**

अया । सोमः । सुऽकृत्यया । महः । चित् । अभि । अवर्धत । मन्दानः । उत् । वृषऽयते ॥ १ ॥

vसोमः vअया अनया vसुकृत्यया शोभनयाभिषवादिलक्षणया क्रियया vमहश्चित् महतो देवान् प्रति vअभ्यवर्धत प्रवृद्धोऽभूत् । vमन्दानः मोदमानः vउद्वृषायते वृषवदाचरति । यथा मोदमानो वृषभः शब्दं करोति तथाभिषववेलायामुपरवेषु शब्दं करोतीत्यर्थः ॥

**कृतानीदस्य कर्त्वा चेतन्ते दस्युतर्हणा । ऋणा च धृष्णुश्चयते ॥ २ ॥**

कृतानि । इत् । अस्य । कर्त्वा । चेतन्ते । दस्युऽतर्हणा । ऋणा । च । धृष्णुः । चयते ॥२॥

vअस्य यस्य एतस्य सोमस्य vदस्युतर्हणा दस्यूनामसुराणां नाशकानि vकर्त्वा कर्माणि सः vइत् अस्माभिरेव सोऽयं vधृष्णुः धृष्टः सोमो यजमानानाम् vऋणा vच ऋणान्यपि vचयते कामप्रदानेन चातयति ॥

**आत्सोम इन्द्रियो रसो वज्रः सहस्रसा भुवत् । उक्थं यदस्य जायते ॥ ३ ॥**

आत् । सोमः । इन्द्रियः । रसः । वज्रः । सहस्रऽसाः । भुवत् । उक्थम् । यत् । अस्य । जायते ॥३॥

vयत् यदा vअस्य इन्द्रस्य vउक्थं शस्त्रं vजायते प्रादुर्भवति तत् vआत् अनन्तरमेव vइन्द्रियः इन्द्रस्य प्रियकरः रसः बलवान् vवज्रः वज्रसदृशः केनाप्यहिंस्यः vसोमः vसहस्रसाः अस्मभ्यम-परिमितस्य[4] धनस्य दाता भवति ॥

**स्वयं कविर्विधर्तरि विप्राय रत्नमिच्छति । यदी मर्मृज्यते धियः ॥ ४ ॥**

स्वयम् । कविः । विऽधर्तरि । विप्राय । रत्नम् । इच्छति । यदि । मर्मृज्यते । धियः ॥ ४ ॥

vयदि vकविः क्रान्तकर्मा अयं सोमः vधियः धीभिः[5] । विभक्तिव्यत्ययः । धीतिभिः[6] । अङ्गुलीभिरित्यर्थः । vमर्मृज्यते शोध्यते तर्हि vस्वयं[7] स्वयमेव vविप्राय मेधाविने vविधर्तरि कामानां विधातरीन्द्रे vरत्नं रमणीयं धनम् vइच्छति । इन्द्रेण धनं दापयितुमिच्छतीत्यर्थः ॥

१. ग-त१.२.३-भ२-स त्वं; त६-भ७- स; भ१- सद्य । २. ग-इंद्रस्य पानाय; त१.२.३.७-भ२.७-'इंद्रार्थे' नास्ति; भ४-इंद्राय इंद्रार्थं । ३. ग-पवित्रैः । ४. ग-सहस्रपरिमितस्य । ५. त६-भ१.७-धीतिभिः; भ४-धीतिः । ६. त१.२.७-धीभिः; भ१-धीतिः । ७. ग-त६-भ१.७-'स्वयं' नास्ति ।

सिषासतू रयीणां वाजेष्वर्वतामिव । भरेषु जिग्युषामसि ॥ ५ ॥

सिसासतुः । रयीणाम् । वाजेषु । अर्वताम्ऽइव । भरेषु । जिग्युषाम् । असि ॥ ५ ॥

हे सोम त्वं ᵛभरेषु संग्रामेषु ᵛजिग्युषां शत्रून् जयतां ᵛरयीणां धनानां ᵛसिषासतुः संभक्तुमिच्छुः ᵛअसि भवसि । शत्रून्[1] जयद्भ्यो धनानि प्रयच्छसीत्यर्थः । तत्र दृष्टान्तः। ᵛवाजेषु संग्रामेषु ᵛअर्वतामिव अश्वानामिव । यथा संग्रामं प्रविशद्भ्योऽश्वेभ्यो घासं प्रयच्छन्ति तद्वदित्यर्थः[1]॥ ॥ ४ ॥

'तं त्वा' इति पञ्चर्चं चतुर्विंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'तं त्वा' इत्यनुक्रान्तम् । गतो विनियोगः ॥

तं त्वा नृम्णानि बिभ्रतं सधस्थेषु महो दिवः । चारुं सुकृत्ययेमहे ॥ १ ॥

तम् । त्वा । नृम्णानि । बिभ्रतम् । सधऽस्थेषु । महः । दिवः । चारुम् । सुऽकृत्यया । ईमहे ॥ १ ॥

ᵛमहः[2] ᵛदिवः महतो द्युलोकस्य ᵛसधस्थेषु सहस्थानेषु स्थितं ᵛनृम्णानि धनानि ᵛबिभ्रतम् अस्मदर्थं[3] धारयन्तं ᵛचारुं कल्याणं ᵛतं पवमानं ᵛत्वा त्वां ᵛसुकृत्यया शोभनया क्रियया ᵛईमहे धनानि याचामहे ॥

संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् । शतं पुरो रुरुक्षणिम् ॥ २ ॥

संवृक्तऽधृष्णुम् । उक्थ्यम् । महाऽमहिव्रतम् । मदम् । शतम् । पुरः । रुरुक्षणिम् ॥ २ ॥

हे सोम ᵛसंवृक्तधृष्णुम् । संवृक्ताः संछिन्ना धृष्णवो धर्षणशीलाः[4] शत्रवो येनासौ संवृक्तधृष्णुः। तम् ᵛउक्थ्यम् उक्थार्हं प्रशस्यं ᵛमहामहिव्रतं महनीयबहुकर्माणं ᵛमदं मदकरं ᵛशतं बहूनि ᵛपुरः शत्रूणां पुराणि ᵛरुरुक्षणिं विनाशयन्तं त्वां धनानीमह इति संबन्धः ॥

अतस्त्वा रयिमभि राजानं सुक्रतो दिवः । सुपर्णो अव्यथिर्भरत् ॥ ३ ॥

अतः । त्वा । रयिम् । अभि । राजानम् । सुक्रतो इति सुऽक्रतो । दिवः ।

सुऽपर्णः । अव्यथिः । भरत् ॥ ३ ॥

हे सोम ᵛरयिमभि धनं प्रति ᵛराजानं ᵛत्वा त्वाम् ᵛअतः[5] ᵛदिवः अमुष्मात् द्युलोकात् ᵛसुक्रतुः सुप्रज्ञः ᵛअव्यथिः व्यथारहितः ᵛसुपर्णः श्येनः ᵛभरत् आहरत् । तथा च निगमान्तरम्— 'आदाय श्येनो अभरत्सोमं सहस्रं सवाँ' (ऋ. सं. ४.२६.७) इति ॥

विश्वस्मा इत्स्वर्दृशे साधारणं रजस्तुरम् । गोपामृतस्य विर्भरत् ॥ ४ ॥

विश्वस्मै । इत् । स्वः । दृशे । साधारणम् । रजःऽतुरम् । गोपाम् । ऋतस्य । विः । भरत् ॥४॥

ᵛरजस्तुरम् उदकस्य प्रेरकम् ᵛऋतस्य यज्ञस्य ᵛगोपां गोपायितारं ᵛविश्वस्मै सर्वस्मै ᵛस्वर्दृशे सर्वदृशे देवाय ᵛसाधारणम् ᵛइत् समानमेव सन्तं सोमं ᵛविः पक्षी श्येनः ᵛभरत् स्वर्गादाहरत् ॥

---

१. ग–सिषासन् वाजेषु संग्रामेषु अश्वानां घासं प्रयच्छति तद्वत् जयद्भ्यो धनानि प्रयच्छसीत्यर्थः ।
२. त१-भ१.२.३.७–महो महत्याः; भ४–महो महत्यः । ३. ग-त६-भ१.७– अस्मदर्थे । ४. त३. ६-भ१.२.७–धृष्णाः; भ४–धृष्टाः धर्षणशीलाः । ५ त१.२–महतो; त५–अतोपि ।

अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे । अभिष्टिकृद्विचर्षणिः ॥ ५ ॥

अर्ध । हिन्वानः । इन्द्रियम् । ज्यायः । महिऽत्वम् । आनशे । अभिष्टिऽकृत् । विऽचर्षणिः ॥५॥

अध अथ विचर्षणिः कर्मणां विद्रष्टा अभिष्टिकृत् यजमानानामभीष्टस्य फलस्य कर्ता सोमः इन्द्रियं स्वकीयं बलं हिन्वानः प्रेरयन् ज्यायः प्रशस्यतरं महित्वं महत्त्वम् आनशे प्राप्नोति ॥ ॥ ५ ॥

'पवस्व' इति पञ्चर्चं पञ्चविंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'पवस्व' इत्यनुक्रान्तम् । गतो विनियोगः ॥

पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि । अयक्ष्मा बृहतीरिषः ॥ १ ॥

पवस्व । वृष्टिम् । आ । सु । नः । अपाम् । ऊर्मिम् । दिवः । परि । अयक्ष्माः । बृहतीः । इषः ॥१॥

हे सोम त्वं दिवः द्युलोकात् वृष्टिं नः अस्माकम् आ पवस्व समन्तात् क्षर । एतदेव दर्शयति । अपाम् उदकानाम् ऊर्मिं तरङ्गं दिवः परि आ पवस्व । अपि च अयक्ष्माः यक्ष्मरहितानि[1] अनामयानि बृहतीः महान्ति[2] इषः अन्नानि आ पवस्व ॥

तया पवस्व धारया यया गाव इहागमन् । जन्यास उप नो गृहम् ॥ २ ॥

तया । पवस्व । धारया । यया । गावः । इह । आऽगमन् । जन्यासः । उप । नः । गृहम् ॥ २ ॥

हे सोम त्वं तया तादृश्या धारया पवस्व क्षर । कीदृश्येत्यत्राह[3] । यया यादृश्या त्वदीयया धारया जन्यासः जन्याः शत्रुजनपदभवाः गावः इह अस्मिँल्लोके नः अस्माकं संबन्धि गृहम् उप आगमन् उपागच्छन्ति ॥

घृतं पवस्व धारया यज्ञेषु देववीतमः । अस्मभ्यं वृष्टिमा पव ॥ ३ ॥

घृतम् । पवस्व । धारया । यज्ञेषु । देवऽवीतमः । अस्मभ्यम् । वृष्टिम् । आ । पव ॥ ३ ॥

हे सोम यज्ञेषु देववीतमः अत्यन्तं देवकामस्त्वम् अस्मभ्यं भार्गवेभ्यः[4] कविभ्यः[4] घृतम् उदकम् । 'वनं घृतम्' इत्युदकनामसु पाठात् । धारया संपातेन पवस्व क्षर । वृष्टिं वर्षं च आ पव पवस्व ॥

स न ऊर्जे व्य१॒॑व्ययं पवित्रं धाव धारया । देवासः शृणवन्हि कम् ॥ ४ ॥

सः । नः । ऊर्जे । वि । अव्ययम् । पवित्रम् । धाव । धारया । देवासः । शृणवन् । हि । कम् ॥४॥

हे सोम सुतः अभिषुतस्त्वं नः अस्माकम् ऊर्जे अन्नाय अव्ययम् अविमयं पवित्रं धारया संपातेन वि धाव प्राप्नुहि । देवासः देवा अपि हि कं शृणवन् गमनवेलायामुत्पन्नं तव शब्दं शृण्वन्तु ॥

पवमानो असिष्यदद्रक्षांस्यपजङ्घनत् । प्रत्नवद्रोचयन्रुचः ॥ ५ ॥

पवमानः । असिस्यदत् । रक्षांसि । अपऽजङ्घनत् । प्रत्नऽवत् । रोचयन् । रुचः ॥ ५ ॥

१. ग–यक्ष्मरहिताः; त६-म१.७–रहितानि । २. ग–महतीः । ३. ग–°त्यत आह । ४. ग–होत्रच्छावाकादिभ्यो ।

ᵛरक्षांसि राक्षसान् ᵛअपजङ्घनत् अपघ्नन् ᵛरुचः आत्मीया दीप्तीः ᵛप्रत्नवत् पुराणवत्[1] ᵛरोचयन् दीपयन् ᵛपवमानः सोमः ᵛअसिष्यदत् स्यन्दते ॥ ॥ ६ ॥

'उत्ते' इति पञ्चर्चं पञ्चाशं सूक्तमाङ्गिरसस्योचथ्यस्यार्षं गायत्रं पवमानसोमदेवताकम्। तथा चानुक्रान्तम्—'उत्ते शुष्मास उचथ्यः' इति। उक्तो विनियोगः ॥

**उत्ते॒ शुष्मा॑स ईरते॒ सिन्धो॑रू॒र्मेरि॑व स्व॒नः। वा॒णस्य॑ चोदया प॒विम् ॥ १ ॥**

उत्। ते॒। शुष्मा॑सः। ई॒र॒ते॒। सिन्धोः॑। ऊ॒र्मेःऽइ॑व। स्व॒नः। वा॒णस्य॑। चो॒द॒य॒। प॒विम् ॥१॥

हे सोम ᵛते तव ᵛशुष्मासः शुष्मा वेगाः ᵛउत् ᵛईरते उद्गच्छन्ति। तत्र दृष्टान्तः। ᵛसिन्धोः समुद्रस्य ᵛऊर्मेरिव यथा तरङ्गात् ᵛस्वनः ध्वनिरुद्गच्छति तद्वदित्यर्थः। सः त्वं ᵛवाणस्य विसृष्टस्य बाणस्य नालस्य[2] वा वादित्रविशेषस्य[2] ᵛपविं शब्दम्। 'पविः भारती' इति वाङ्नामसु पाठात्। ᵛचोदय प्रेरय। वेगेन स्यन्दमानस्त्वं विसृष्टबाणशब्दसदृशं शब्दं कुर्वित्यर्थः ॥

**प्र॒स॒वे त॒ उदी॑रते ति॒स्रो वाचो॑ मख॒स्युवः॑। यदव्य॒ एषि॒ सान॑वि ॥ २ ॥**

प्र॒ऽस॒वे। ते॒। उत्। ई॒र॒ते॒। ति॒स्रः। वाचः॑। म॒ख॒स्युवः॑। यत्। अव्ये॑। एषि॑। सान॑वि ॥२॥

हे सोम ᵛते तव ᵛप्रसवे सति ᵛमखस्युवः यज्ञमिच्छतो यजमानस्य ᵛतिस्रो ᵛवाचः ऋग्यजुः-सामात्मकानि त्रीणि वाक्यानि ᵛउदीरते उद्गच्छन्ति। कदेत्यत आह। ᵛयत् यदा ᵛसानवि व्युच्छ्रिते ᵛअव्ये अविमये पवित्रे ᵛएषि त्वं गच्छसि ॥

**अव्यो॒ वारे॒ परि॑ प्रि॒यं हरिं॑ हिन्व॒न्त्यद्रि॑भिः। पव॑मानं मधु॒श्चुत॑म् ॥ ३ ॥**

अव्यः॑। वारे॑। परि॑। प्रि॒यम्। हरि॑म्। हि॒न्व॒न्ति॒। अद्रि॑ऽभिः। पव॑मानम्। म॒धु॒ऽश्चुत॑म् ॥३॥

ᵛप्रियं देवानां प्रीतिकरं ᵛहरिं हरितवर्णम् ᵛअद्रिभिः ग्रावभिरभिषुतं ᵛमधुश्चुतं मधुनो रसस्य च्यावयितारं ᵛपवमानं सोमम् ᵛअव्यः अवेः ᵛवारे वाले ᵛपरि ᵛहिन्वन्ति ऋत्विजः परिप्रेरयन्ति ॥

**आ पव॑स्व मदिन्तम प॒वित्रं॒ धार॑या कवे। अ॒र्कस्य॒ योनि॑मा॒सद॑म् ॥ ४ ॥**

आ। प॒व॒स्व॒। म॒दि॒न्ऽत॒म॒। प॒वित्र॑म्। धार॑या। क॒वे॒। अ॒र्कस्य॑। योनि॑म्। आ॒ऽसद॑म् ॥४॥

हे ᵛमदिन्तम मादयितृतम ᵛकवे क्रान्तकर्मन् सोम ᵛअर्कस्य अर्चनीयस्येन्द्रस्य ᵛयोनिं स्थानम् ᵛआसदं प्राप्तुं ᵛपवित्रम् अतीत्य ᵛधारया संपातेन ᵛआ ᵛपवस्व आभिमुख्येन क्षर। यद्यप्येषा पूर्वस्मिन्नध्याये (ऋ. सं. ९.२५.६) व्याकृता तथापि मन्दमतीनां विस्मरणशङ्कया पुनर्व्याख्याता ॥

**स पव॑स्व मदिन्तम॒ गोभि॑रञ्जा॒नो अ॒क्तुभिः॑। इन्द॒विन्द्रा॑य पी॒तये॑ ॥ ५ ॥**

सः। प॒व॒स्व॒। म॒दि॒न्ऽत॒म॒। गोभिः॑। अ॒ञ्जा॒नः। अ॒क्तुऽभिः॑। इन्दो॒ इति॑। इन्द्रा॑य। पी॒तये॑ ॥५॥

हे ᵛमदिन्तम मादयितृतम ᵛइन्दो सोम ᵛअक्तुभिः अञ्जनसाधनभूतैः ᵛगोभिः गोविकारैः पयोभिः ᵛअञ्जानः अज्यमानः संस्क्रियमाणः ᵛसः त्वम् ᵛइन्द्राय इन्द्रस्य ᵛपीतये पानाय[3] ᵛपवस्व क्षर ॥ ॥ ७ ॥

---

१. ग-त७-भ७-'पुराणवत्' नास्ति। २. ग-त६-भ१.७-'नालस्य...'विशेषस्य' नास्ति। ३. ग-पानार्थं; त१.२.४.५.७-पानीय।

'अध्वर्यो' इति पञ्चर्चं सप्तविंशं सूक्तमाङ्गिरसस्योचथ्यस्यार्षं गायत्रं पवमानसोमदेवताकम्। तथा चानुक्रम्यते—'अध्वर्यो' इति। गतः सूक्तविनियोगः॥

अध्वर्यो अद्रिभिः सुतं सोमं पवित्र आ सृज। पुनीहीन्द्राय पातवे॥ १॥

अध्वर्यो इति। अद्रिऽभिः। सुतम्। सोमम्। पवित्रे। आ। सृज। पुनीहि। इन्द्राय। पातवे॥१॥

हे अध्वर्यो अद्रिभिः ग्रावभिः सुतम् अभिषुतं सोमं पवित्र आ सृज। एतदेव दर्शयति। इन्द्राय इन्द्रस्य पातवे पानाय पुनीहि पावय॥

दिवः पीयूषमुत्तमं सोममिन्द्राय वज्रिणे। सुनोता मधुमत्तमम्॥ २॥

दिवः। पीयूषम्। उत्ऽतमम्। सोमम्। इन्द्राय। वज्रिणे। सुनोत। मधुमत्ऽतमम्॥२॥

हे अध्वर्यवः यूयं मधुमत्तमम् अतिशयेन मधुमन्तं दिवः द्युलोकस्य पीयूषम् अमृतम् उत्तमं श्रेष्ठं सोमं वज्रिणे वज्रवते इन्द्राय सुनोत अभिषुणुत॥

तव त्य इन्दो अन्धसो देवा मधोर्व्यश्नते। पवमानस्य मरुतः॥ ३॥

तव। त्ये। इन्दो इति। अन्धसः। देवाः। मधोः। वि। अश्नते। पवमानस्य। मरुतः॥३॥

हे इन्दो सोम तव संबन्धिनं मधोः मदकरस्य[1] पवमानस्य[2] पूयमानम् अन्धसः अन्नम्। कर्मणि षष्ठी। त्ये त इमे देवाः इन्द्रादयः मरुतः च व्यश्नते व्याप्नुवन्ति प्राप्नुवन्तीत्यर्थः॥

त्वं हि सोम वर्धयन्त्सुतो मदाय भूर्णये। वृषन्त्स्तोतारमूतये॥ ४॥

त्वम्। हि। सोम। वर्धयन्। सुतः। मदाय। भूर्णये। वृषन्। स्तोतारम्। ऊतये॥ ४॥

हे सोम सुतः अभिषुतः त्वं वर्धयन् देवान् प्रवृद्धान् कुर्वन् वृषन् कामान् वर्षन् भूर्णये क्षिप्राय मदाय ऊतये रक्षणाय च स्तोतारम् अभिगच्छसीत्यर्थः[3]॥

अभ्यर्ष विचक्षण पवित्रं धारया सुतः। अभि वाजमुत श्रवः॥ ५॥

अभि। अर्ष। विऽचक्षण। पवित्रम्। धारया। सुतः। अभि। वाजम्। उत। श्रवः॥५॥

हे विचक्षण सोम सुतः अभिषुतस्त्वं पवित्रम् अभि प्रति धारया अर्ष गच्छ। उत अपि चास्माकं वाजम् अन्नं श्रवः कीर्तिं च अभि क्षरेत्यर्थः[4]॥ ॥ ८॥

'परि द्युक्षः' इति पञ्चर्चमष्टाविंशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'परि द्युक्षः' इत्यनुक्रान्तम्। उक्तो विनियोगः॥

परि द्युक्षः सनद्रयिर्भरद्वाजं नो अन्धसा। सुवानो अर्ष पवित्र आ॥ १॥

परि। द्युक्षः। सनत्ऽरयिः। भरत्। वाजम्। नः। अन्धसा। सुवानः। अर्ष। पवित्रे। आ॥१॥

द्युक्षः दीप्तः सनद्रयिः दीयमानधनः सोमः नः अस्माकं वाजं बलम् अन्धसा अन्नेन सह परि भरत् परिभरतु[5] प्रयच्छतु[6]। अथ प्रत्यक्षस्तुतिः। हे सोम[6] सुवानः अभिषूयमाणस्त्वं पवित्रे आ अर्ष क्षर॥

---

१. ग—मधुरस्य। २. ग—पूयमानस्य। ३. ग—अभ्यर्षेति उत्तरत्र संबंधः। ४. त१.४.५.६-भ१.७-मु—रक्षेत्यर्थः; त३—रक्षेति शेषः। ५. ग—संपादयतु; त३.६-भ१.२.७—भरंतु। ६. ग—'प्रयच्छतु...सोम' नास्ति।

तव॑ प्र॒त्नेभि॒रध्व॑भि॒रव्यो॒ वारे॒ परि॑ प्रि॒यः। स॒हस्र॑धारो या॒त्तना॑ ॥ २ ॥

तव॑। प्र॒त्नेभिः॑। अध्व॑ऽभिः। अव्यः॑। वारे॑। परि॑। प्रि॒यः। स॒हस्र॑ऽधारः। या॒त्। तना॑ ॥२॥

हे सोम ^vतव संबन्धी ^vप्रियः देवानां प्रीतिकरः ^vसहस्रधारः बहुधारः ^vतना विस्तृतसारो[1] रसः ^vप्रत्नेभिः पुराणैः ^vअध्वभिः मार्गैः ^vअव्यः अवेः ^vवारे वाले दशापवित्रे ^vपरि ^vयात् परिगच्छति ॥

च॒रुर्न यस्तमी॑ङ्खयेन्दो॒ न दान॑मीङ्खय। व॒धैर्व॑धस्नवीङ्खय ॥ ३ ॥

च॒रुः। न। यः। तम्। ई॒ङ्ख॒य॒। इन्दो॒ इति॑। न। दान॑म्। ई॒ङ्ख॒य॒।

व॒धैः। व॒ध॒स्नो॒ इति॑ वधऽस्नो। ई॒ङ्ख॒य॒ ॥ ३ ॥

हे सोम ^vचरुर्न चरुरिव ^vयः पूर्णोदनो[2] भवति ^vतमीङ्खय अस्मान् प्रापय। अपि च हे ^vइन्दो ^vन इदानीं ^vदानं देयम् ^vईङ्खय। हे ^vवधस्नो प्रहारेण प्रस्रवणशील सोम ^vवधैः प्राणां प्रहारैः ^vईङ्खय ॥

नि शुष्म॑मिन्दवेषां॒ पुरु॑हूत॒ जना॑नाम्। यो अ॒स्माँ आ॒दिदे॑शति ॥ ४ ॥

नि। शुष्म॑म्। इन्दो॒ इति॑। ए॒षा॒म्। पुरु॑ऽहूत। जना॑नाम्। यः। अ॒स्मान्। आ॒ऽदिदे॑शति ॥४॥

हे ^vपुरुहूत बहुभिराहूत ^vइन्दो सोम त्वं ^vयः शुष्मो येषां शत्रुजनानां बलम् ^vअस्मान् ^vआदिदेशति बाधार्थमाह्वयति ^vएषां शत्रुजनानां तं ^vशुष्मं बलं ^vनि न्यक् कुर्विति शेषः ॥

श॒तं न॑ इन्द ऊ॒तिभिः॑ स॒हस्रं॑ वा॒ शुची॑नाम्। पव॑स्व मंहय॒द्र॑यिः ॥ ५ ॥

श॒तम्। नः॒। इन्दो॒ इति॑। ऊ॒तिऽभिः॑। स॒हस्र॑म्। वा॒। शुची॑नाम्। पव॑स्व। मं॒हय॒त्ऽर॑यिः ॥५॥

हे ^vइन्दो सोम ^vमंहयद्रयिः प्रदीयमानधनस्त्वं ^vनः अस्माकम् ^vऊतिभिः ऊतिभ्यः। विभक्तिव्यत्ययः। रक्षार्थं ^vशुचीनां शुद्धानां तव अंशभूतानां सोमानां ^vशतं ^vसहस्रं ^vवा ^vपवस्व क्षर ॥ ॥ ९ ॥

'उत्ते' इति चतुर्ऋचमेकोनत्रिंशं सूक्तं काश्यपस्यावत्सारस्यार्षं गायत्रं पवमानसोमदेवताकम्। तथा चानुक्रान्तम्—'उत्ते चतुष्कमवत्सारः' इति। उक्तो विनियोगः ॥

उत्ते॒ शुष्मा॑सो अस्थू॒ रक्षो॑ भि॒न्दन्तो॑ अद्रिवः। नु॒दस्व॒ याः प॑रि॒स्पृधः॑ ॥ १ ॥

उत्। ते॒। शु॒ष्मासः॑। अ॒स्थुः॒। रक्षः॑। भि॒न्दन्तः॑। अ॒द्रि॒ऽवः॒। नु॒दस्व॑। याः। प॒रि॒ऽस्पृधः॑ ॥१॥

हे ^vअद्रिवः ग्राववन् सोम ^vते तव ^vशुष्मासः शुष्मा वेगाः ^vरक्षः राक्षसान् ^vभिन्दन्तः विदारयन्तः ^vउत् ^vअस्थुः उत्तिष्ठन्ति। ^vयाः ^vस्पृधः स्पर्धमानाः शत्रुसेना अस्मान् प्रतिबाधन्ते तास्त्वं ^vनुदस्व प्रेरय। बाधस्वेत्यर्थः ॥

अ॒या नि॒जघ्नि॒रोज॑सा रथस॒ङ्गे धने॑ हि॒ते। स्तवा॒ अबि॑भ्युषा हृ॒दा ॥ २ ॥

अ॒या। नि॒ऽज॒घ्निः। ओज॑सा। र॒थ॒ऽस॒ङ्गे। धने॑। हि॒ते। स्तवै॑। अबि॑भ्युषा। हृ॒दा ॥२॥

---

१. ग–विस्तृतस्सारो; त६-भ१.७–विसृतसारो। २. ग-त१.२.३.४.५-भ१.२–पूर्णोदनो; त६-भ७–पूर्णेदिनो; भ४–पूर्णेदनो।

हे सोम त्वम् ᵛअया अनेन कृतेन[1] ᵛओजसा बलेन ᵛनिजघ्निः शत्रून् हन्तुं शीलवान्। तं त्वाम् ᵛअबिभ्युषा अभीतेन ᵛहृदा मनसा युक्तोऽहं ᵛरथसङ्गे अस्माकं रथानां सङ्गे ᵛहिते शत्रुषु निहिते ᵛधने च निमित्ते ᵛस्तवै स्तौमि॥

**अस्य॑ व्र॒तानि॒ नाधृषे॒ पव॑मानस्य दू॒ढ्या॑। रु॒ज यस्त्वा॑ पृत॒न्यति॑॥ ३॥**

अस्य॑। व्र॒तानि॑। न। आ॒ऽधृषे॑। पव॑मानस्य। दुः॒ऽध्या॑। रु॒ज। यः। त्वा॒। पृ॒त॒न्यति॑॥३॥

हे सोम ᵛपवमानस्य क्षरतो यस्य ᵛअस्य तव ᵛव्रतानि कर्माणि ᵛदूढ्या दुर्बुद्धिना राक्षसेन ᵛनाधृषे आधर्षयितुमशक्यानि स त्वं त्वां ᵛयः दुर्बुद्धिः शत्रुः ᵛपृतन्यति योद्धुमिच्छति तं ᵛरुज बाधस्व॥

**तं हि॑न्वन्ति मद॒च्युतं॒ हरिं॑ न॒दीषु॑ वा॒जिन॑म्। इन्दु॒मिन्द्रा॑य मत्स॒रम्॥ ४॥**

तम्। हि॒न्वन्ति॒। म॒द॒ऽच्युत॑म्। हरि॑म्। न॒दीषु॑। वा॒जिन॑म्। इन्दु॑म्। इन्द्रा॑य। म॒त्स॒रम्॥४॥

ᵛमदच्युतं मदस्य च्यावयितारं ᵛहरिं हरितवर्णं ᵛवाजिनं बलिनं ᵛमत्सरं मदकरं ᵛतम् ᵛइन्दुं सोमं ᵛनदीषु वसतीवरीषु ᵛइन्द्राय इन्द्रार्थं ᵛहिन्वन्ति ऋत्विजः प्रेरयन्ति॥　॥ १०॥

‘अस्य प्रत्नाम्’ इति चतुर्ऋचं त्रिंशं सूक्तम्। ऋष्याद्याः पूर्ववत्। ‘अस्य प्रत्नाम्’ इत्यनुक्रान्तम्। उक्तो विनियोगः॥

**अ॒स्य प्र॒त्नामनु॒ द्युतं॑ शु॒क्रं दु॑दुह्रे॒ अह्र॑यः। पयः॑ सहस्र॒सामृषि॑म्॥ १॥**

अ॒स्य। प्र॒त्नाम्। अनु॑। द्युत॑म्। शु॒क्रम्। दु॒दु॒ह्रे॒। अह्र॑यः। पयः॑। स॒ह॒स्र॒ऽसाम्। ऋषि॑म्॥१॥

ᵛअस्य सोमस्य ᵛप्रत्नां पुराणां ᵛद्युतं[2] द्योतमानां तनुम् ᵛअनु[2] ᵛशुक्रं दीप्तं ᵛसहस्रसाम् अभिलषितस्यापरिमितस्य दातारम् ᵛऋषिम् अतीन्द्रियस्य कर्मफलस्य द्रष्टारं ᵛपयः पातव्यं रसम् ᵛअह्रयः कवयः ᵛदुदुह्रे दुहन्ति॥

**अ॒यं सूर्य॑इवोप॒दृग॒यं सरां॑सि धावति। स॒प्त प्र॒वत॒ आ दिव॑म्॥ २॥**

अ॒यम्। सूर्यः॑ऽइव। उ॒प॒ऽदृक्। अ॒यम्। सरां॑सि। धा॒व॒ति॒। स॒प्त। प्र॒ऽवतः॑। आ। दिव॑म्॥२॥

ᵛअयं सोमः ᵛसूर्यइव यथा सूर्यः सर्वस्य लोकस्योपद्रष्टा तद्वत् कर्मणाम् ᵛउपदृक् उपद्रष्टा। अपि च ᵛअयं सोमः ᵛसरांसि। त्रिंशदुक्थपात्राणीति केचिद्वर्णयन्ति। अपरे तु त्रिंशदहोरात्राणि सरांसीति। तानि ᵛधावति[3] गच्छति[3]। तथा च यास्कः—‘तत्रैतद्याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि माध्यंदिने सवन एकदेवतानि तान्येतस्मिन्काल एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते। त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येति नैरुक्ताः’ (निरु. ५. ११) इति। अपि चायं सोमः ᵛदिवम् अधिकृत्य ᵛसप्त ᵛप्रवतः सप्त नदीः ᵛआ तिष्ठति॥

**अ॒यं विश्वा॑नि तिष्ठति पुना॒नो भुव॒नोप॑रि। सोमो॑ दे॒वो न सूर्यः॑॥ ३॥**

अ॒यम्। विश्वा॑नि। ति॒ष्ठ॒ति॒। पु॒ना॒नः। भुव॑ना। उ॒परि॑। सोमः॑। दे॒वः। न। सूर्यः॑॥३॥

ᵛपुनानः पूयमानः ᵛअयं ᵛसोमः ᵛविश्वानि सर्वाणि ᵛभुवना भुवनानि सर्वेषां भुवनानाम् ᵛउपरि ᵛतिष्ठति। तत्र दृष्टान्तमाह। ᵛदेवो ᵛन ᵛसूर्यः। यथा सूर्यो देवः सर्वेषां भुवनानामुपरि तिष्ठति तद्वदयं सोमोऽपीत्यर्थः॥

---

१. त४-भ७—प्रकृतेन। २. ग—द्योतमानां तनु; त३-भ२—द्योतमानां तनुमनु; त६-भ७—द्योतवन्मनु; भ१—द्योतनुमनु। ३. ग—तार्वति; त३.६-भ१.२.७—धावति।

परि णो देववीतये वाजाँ अर्षसि गोमतः । पुनान इन्दविन्द्रयुः ॥ ४ ॥
परि । नः । देवऽवीतये । वाजान् । अर्षसि । गोऽमतः । पुनानः । इन्दो इति । इन्द्रऽयुः ॥४॥

हे इन्दो सोम इन्द्रयुः इन्द्रकामः पुनानः पूयमानस्त्वं नः अस्माकं देववीतये यज्ञाय गोमतः गोयुक्तानि वाजान् अन्नानि परि अर्षसि परितः क्षरेत्यर्थः ॥ ॥ ११ ॥

'यवंयवं नः' इति चतुर्ऋचमेकत्रिंशं सूक्तं काश्यपस्यावत्सारस्यार्षं गायत्रं पवमानसोमदेवताकम् । 'यवंयवम्' इत्यनुक्रान्तम् । गतो विनियोगः ॥

यवंयवं नो अन्धसा पुष्टंपुष्टं परि स्रव । सोम विश्वा च सौभगा ॥ १ ॥
यवम्ऽयवम् । नः । अन्धसा । पुष्टम्ऽपुष्टम् । परि । स्रव । सोम । विश्वा । च । सौभगा ॥१॥

हे सोम त्वं नः अस्माकं पुष्टंपुष्टं बहुलं यवंयवं पुनःपुनर्युतं रसम् अन्धसा अन्नात्मना परि स्रव धारया क्षर ॥ अत्र प्रार्थयितुस्तृष्णयात्यन्तं पीडितत्वात् 'आबाधे च' (पा. सू. ८.१.१०) इति द्विर्भावः[1] । पीडा प्रयोक्तृधर्मो नाभिधेयधर्म इत्युक्तम् ॥ अपि च विश्वा विश्वानि सौभगा सौभगानि धनानि परि स्रव ॥

इन्दो यथा तव स्तवो यथा ते जातमन्धसः । नि बर्हिषि प्रिये सदः ॥ २ ॥
इन्दो इति । यथा । तव । स्तवः । यथा । ते । जातम् । अन्धसः । नि । बर्हिषि । प्रिये । सदः ॥२॥

हे[2] इन्दो सोम अन्धसः अन्नरूपस्य तव संबन्धी स्तवः स्तवनं स्तोत्रं तथा ते तव जातं जन्म यथा प्रादुर्भूतमस्ति तथा त्वं प्रिये प्रीणयितरि बर्हिषि अस्मद्यागे नि षदः निषण्णो भव ॥

उत नो गोविदश्ववित्पवस्व सोमान्धसा । मक्षूतमेभिरहभिः ॥ ३ ॥
उत । नः । गोऽवित् । अश्वऽवित् । पवस्व । सोम । अन्धसा । मक्षुऽतमेभिः । अहऽभिः ॥३॥

उत अपि च हे सोम नः अस्माकं गोवित् गोप्रदः अश्ववित् अश्वप्रदश्च त्वं मक्षूतमेभिः मक्षुतमैरतिशयेन शीघ्रैः अहभिः अहोभिर्हेतुभिः अन्धसा अन्नेन पवस्व धारया क्षर ॥

यो जिनाति न जीयते हन्ति शत्रुमभीत्य । स पवस्व सहस्रजित् ॥ ४ ॥
यः । जिनाति । न । जीयते । हन्ति । शत्रुम् । अभिऽइत्य । सः । पवस्व । सहस्रऽजित् ॥४॥

हे सहस्रजित् असंख्यानां[3] शत्रूणां जेतः सोम यः भवान्[4] जिनाति शत्रून् हन्ति न जीयते स्वयं शत्रुभिर्न जीयते । न हन्यत इत्यर्थः । शत्रुमभीत्य शत्रुं स्वयमभ्येत्य हन्ति न च स्वयं शत्रुभिरभिभूयते सः त्वं पवस्व क्षर ॥ ॥ १२ ॥

'परि सोमः' इति चतुर्ऋचं द्वात्रिंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'परि सोमः' इत्यनुक्रान्तम् । उक्तो विनियोगः ॥

परि सोम ऋतं बृहदाशुः पवित्रे अर्षति । विघ्नन्रक्षांसि देवयुः ॥ १ ॥
परि । सोमः । ऋतम् । बृहत् । आशुः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥१॥

---

१. ग–द्विर्भावः । आबाधनमाबाधः; त३-भ२.५–द्विर्बाधः । अबाधमाबाधः; भ१.७–द्विर्भावः । आबाधे चेति । २. ग–हे इंदो यथा तव स्तवो भवति यथा वा ते तुभ्यं अंधसो जातं अन्ननं प्रियार्थं तादृशः त्वं बर्हिषि निषीद । ३. भ४–सहस्रसंख्यानां । ४. ग-त३.६-भ१.२.७–'भवान्' नास्ति ।

ᵛआशुः क्षिप्रकारी ᵛदेवयुः देवकामः ᵛसोमः ᵛपवित्रे स्थित्वा ᵛरक्षांसि राक्षसान् ᵛविघ्नन् निघ्नन् ᵛबृहत् महत् ᵛऋतम् अन्नं ᵛपरि ᵛअर्षति परिगमयति । अस्मभ्यं प्रयच्छतीत्यर्थः ॥

**यत्सोमो वाजमर्षति शतं धारा अपस्युवः । इन्द्रस्य सख्यमाविशन् ॥ २ ॥**

यत् । सोमः । वाजम् । अर्षति । शतम् । धाराः । अपस्युवः । इन्द्रस्य । सख्यम् । आऽविशन् ॥२॥

ᵛयत् यदा ᵛअपस्युवः कर्मकामाः ᵛशतं शतसंख्याकाः ᵛधाराः सोमस्य धाराः ᵛइन्द्रस्य ᵛसख्यं सखित्वम् ᵛआविशन् प्राप्नुवन्ति तदा ᵛसोमः ᵛवाजम् अन्नम् ᵛअर्षति गमयति । अस्मभ्यं प्रयच्छतीत्यर्थः ॥

**अभि त्वा योषणो दश जारं न कन्यानूषत । मृज्यसे सोम सातये ॥ ३ ॥**

अभि । त्वा । योषणः । दश । जारम् । न । कन्या । अनूषत । मृज्यसे । सोम । सातये ॥३॥

हे ᵛसोम ᵛत्वा त्वां याः ᵛदश दशसंख्याकाः ᵛयोषणः अङ्गुलयः ᵛकन्या पितृमती[1] कन्यका ᵛजारं ᵛन यथा प्रियमभिशब्दायते तद्वत् ᵛअभि ᵛअनूषत अभिशब्दायन्ते ताभिः ᵛसातये अस्माकं धनस्य लाभाय ᵛमृज्यसे इन्द्रार्थं शोध्यसे[2] ॥

**त्वमिन्द्राय विष्णवे स्वादुरिन्दो परि स्रव । नॄन्त्स्तोतॄन्पाह्यंहसः ॥ ४ ॥**

त्वम् । इन्द्राय । विष्णवे । स्वादुः । इन्दो इति । परि । स्रव । नॄन् । स्तोतॄन् । पाहि । अंहसः ॥४॥

हे ᵛइन्दो सोम ᵛस्वादुः प्रियरसस्त्वम् ᵛइन्द्राय इन्द्रार्थं ᵛविष्णवे विष्णवर्थं च ᵛपरि ᵛस्रव परिक्षर । ᵛनॄन् कर्मणां नेतॄन् ᵛस्तोतॄन् त्वद्विषयाणां स्तुतीनां कर्तॄन् ᵛअंहसः दुरितात् ᵛपाहि रक्ष च ॥ ॥ १३ ॥

'प्र ते धाराः' इति चतुर्ऋचं त्रयस्त्रिंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'प्र ते धाराः' इत्यनुक्रान्तम् । उक्तो विनियोगः ॥

**प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः । अच्छा वाजं सहस्रिणम् ॥ १ ॥**

प्र । ते । धाराः । असश्चतः । दिवः । न । यन्ति । वृष्टयः । अच्छ । वाजम् । सहस्रिणम् ॥१॥

हे सोम ᵛते तव ᵛअसश्चतः सङ्गरहिताः ᵛधाराः ᵛसहस्रिणम् अपरिमितसंख्याकं ᵛवाजम् अन्नम् ᵛअच्छ अस्मदर्थं ᵛप्र ᵛयन्ति प्रगच्छन्ति । तत्र दृष्टान्तः । ᵛदिवो ᵛन ᵛवृष्टयः । यथा द्युलोकात् वर्षधारा निःसङ्गाः प्रजानामपरिमितमन्नं[3] प्रयच्छन्ति[4] तद्वदित्यर्थः ॥

**अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति । हरिस्तुञ्जान आयुधा ॥ २ ॥**

अभि । प्रियाणि । काव्या । विश्वा । चक्षाणः । अर्षति । हरिः । तुञ्जानः । आयुधा ॥ २ ॥

ᵛहरिः हरितवर्णः सोमः ᵛविश्वा विश्वानि ᵛप्रियाणि देवानां प्रीतिकराणि ᵛकाव्या काव्यानि कर्माणि ᵛचक्षाणः पश्यन् ᵛआयुधा स्वकीयान्यायुधानि ᵛतुञ्जानः राक्षसान् प्रति प्रेरयंश्च ᵛअभि ᵛअर्षति यागं प्रति गच्छति ॥

---

१. ग-ऋतुमती । २. ग-त३-म५-त्वं शोध्यसे । ३. ग-जनानाम° । ४. ग-त३-म४.५-प्रति यांति; त-प्रयंति; म१.२-प्रयाति ।

स मर्मृजान आयुभिरिभो राजेव सुव्रतः। श्येनो न वंसु षीदति ॥ ३ ॥

सः। मर्मृजानः। आयुऽभिः। इभः। राजाऽइव। सुऽव्रतः। श्येनः। न। वंसु। सीदति ॥३॥

Vसुव्रतः सुकर्मा Vसः सोमः Vआयुभिः मनुष्यैर्ऋत्विग्भिः Vमर्मृजानः शोध्यमानः Vइभः गतभयः Vराजेव यथा राजा Vश्येनो Vन यथा च श्येनस्तथा Vवंसु उदकेषु वसतीवरीषु Vसीदति ॥

स नो विश्वा दिवो वसूतो पृथिव्या अधि। पुनान इन्दवा भर ॥ ४ ॥

सः। नः। विश्वा। दिवः। वसु। उतो इति। पृथिव्याः। अधि। पुनानः। इन्दो इति। आ। भर ॥४॥

हे Vइन्दो सोम Vसः अभिषुतः Vपुनानः पवमानस्त्वं Vदिवः Vअधि दिवि स्थितानि Vउतो अपि च Vपृथिव्या अधि पृथिव्यां स्थितानि। अधीति सप्तम्यर्थानुवादः। Vविश्वा विश्वानि Vवसु वसूनि Vनः अस्मभ्यम् Vआ Vभर आहर ॥ ॥ १४ ॥

'तरत्सः' इति चतुर्ऋचं चतुस्त्रिंशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'तरत्सः' इत्यनुक्रान्तम्। उक्तो विनियोगः ॥

तरत्स मन्दी धावति धारा सुतस्यान्धसः। तरत्स मन्दी धावति ॥ १ ॥

तरत्। सः। मन्दी। धावति। धारा। सुतस्य। अन्धसः। तरत्। सः। मन्दी। धावति ॥१॥

Vमन्दी देवानां हर्षकरः Vसः सोमः Vतरत् स्तोतॄन् पाप्मनः सकाशात् तारयन् Vधावति पवते। तदेव दर्शयति। Vसुतस्य अभिषुतस्य Vअन्धसः देवानामन्नात्मकस्य सोमस्य Vधारा धावतीति। पुनरपि तदेवाह अत्यन्तादरार्थं Vतरत्स Vमन्दी Vधावति इति। यद्वा। अस्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः। तद्यथा—'तरति स पापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिम्। धारा सुतस्यान्धसो धारयाभिषुतस्य[1] सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य' (निरु. १३·६) इति ॥

उस्रा वेद वसूनां मर्तस्य देव्यवसः। तरत्स मन्दी धावति ॥ २ ॥

उस्रा। वेद। वसूनाम्। मर्तस्य। देवी। अवसः। तरत्। सः। मन्दी। धावति ॥ २ ॥

Vवसूनां धनानाम् Vउस्रा उत्सरणशीला प्रदात्री Vदेवी द्योतमाना स्तूयमाना वा यस्य[2] सोमस्य धारा Vमर्तस्य मनुष्यं यजमानम् Vअवसः रक्षितुं Vवेद जानाति। सिद्धमन्यत् ॥

ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे। तरत्स मन्दी धावति ॥ ३ ॥

ध्वस्रयोः। पुरुऽसन्त्योः। आ। सहस्राणि। दद्महे। तरत्। सः। मन्दी। धावति ॥ ३ ॥

Vध्वस्रयोः Vपुरुषन्त्योः। ध्वस्रः कश्चिद्राजा पुरुषन्तिः कश्चित्। तयोरुभयोः। अत्र इतरेतरयोगविवक्षया द्विवचनं द्रष्टव्यम्। Vसहस्राणि धनानां सहस्राणि Vआ Vदद्महे वयं प्रतिगृह्णीमः। तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः। सिद्धमन्यत्। यथावत्सार एतयोर्धनानि प्रतिजग्राह एवं तरन्तपुरुमीळ्हौ प्रतिजगृहतुः। तथा च शाट्यायनकम्—'अथ ह वै तरन्तपुरुमीळ्हौ वैददश्वी ध्वस्रयोः पुरुषन्त्योर्बहु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्माङ्गुल्या सातं प्रतिमभृशाते तावकामयेतामसातं नाविवेदं सातं स्यादात्तमिवैव न प्रतिगृहीतमिति

१. त१.२.५–धाराभिरभि°; त२.३.४·भ२–धाराभि°। २. त३-भ–'यस्य' नास्ति।

तावेतच्चतुर्ऋचमपश्यतां तेन प्रत्यैतां ततो वै तयोरसातं सातमभवदात्तमिवैव न प्रतिगृहीतं स यः प्रतिगृह्य कामयेत ' इत्यादि ॥

**आ य॒योस्त्रि॒ंशतं॒ तना॑ स॒हस्रा॑णि च॒ दद्म॑हे । तर॒त्स म॒न्दी धा॑वति ॥ ४ ॥**

आ । य॒योः॑ । त्रि॒ंशत॑म् । तना॑ । स॒हस्रा॑णि । च॒ । दद्म॑हे । तर॑त् । सः॒ । म॒न्दी । धा॒वति ॥४॥

ᵛययोः ध्वस्रपुरुपन्त्योः ᵛत्रिंशतं त्रिंशतानि ᵛसहस्राणि ᵛतना वस्त्राणि ᵛआ ᵛदद्महे वयं प्रतिगृह्णीमः तयोरस्माभिः प्रतिगृहीतं तत्सर्वमप्रतिगृहीतमस्त्विति सोममृषिः प्रार्थयत इति सोमस्यैव स्तुतिः । सिद्धमन्यत् ॥ ॥ १५ ॥

' पवस्व ' इति चतुर्ऋचं पञ्चत्रिंशं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' पवस्व ' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**पव॑स्व गो॒जिद॑श्व॒जिद्वि॑श्व॒जित्सो॑म रण्य॒जित् । प्र॒जाव॒द्रत्न॒मा भ॑र ॥ १ ॥**

पव॑स्व । गो॒ऽजित् । अ॒श्व॒ऽजित् । वि॒श्व॒ऽजित् । सो॒म । र॒ण्य॒ऽजित् ।
प्र॒जाऽव॑त् । रत्न॑म् । आ । भ॒र ॥ १ ॥

हे ᵛसोम ᵛगोजित् शत्रूणां गवां जेता ᵛअश्वजित् अश्वानामपि जेता ᵛविश्वजित् विश्वस्य जगतो जेता ᵛरण्यजित् रमणीयस्य धनस्यापि जेता त्वं ᵛपवस्व धारया क्षर । अपि चास्मभ्यं ᵛप्रजावत् पुत्राद्युपेतं ᵛरत्नं रमणीयं धनम् ᵛआ ᵛभर आहर ॥

**पव॑स्वा॒द्भ्यो अदा॑भ्यः॒ पव॒स्वौष॑धीभ्यः । पव॑स्व धि॒षणा॑भ्यः ॥ २ ॥**

पव॑स्व । अ॒त्ऽभ्यः । अदा॑भ्यः । पव॑स्व । ओष॑धीभ्यः । पव॑स्व । धि॒षणा॑भ्यः ॥ २ ॥

हे सोम त्वम् ᵛअद्भ्यः वसतीवरीभ्यः ᵛअदाभ्यः अंशुभ्यश्च ᵛपवस्व क्षर । अपि च ᵛओषधीभ्यः ᵛपवस्व क्षर । किंच ᵛधिषणाभ्यः ग्रावभ्यः ᵛपवस्व क्षर ॥

**त्वं सो॑म॒ पव॑मानो॒ विश्वा॑नि दुरि॒ता त॑र । क॒विः सी॑द॒ नि ब॒र्हिषि॑ ॥ ३ ॥**

त्वम् । सो॒म । पव॑मानः । विश्वा॑नि । दुः॒ऽइता । त॒र । क॒विः । सी॒द॒ । नि । ब॒र्हिषि॑ ॥ ३ ॥

हे ᵛसोम ᵛपवमानः पूयमानः ᵛकविः क्रान्तकर्मा ᵛत्वं ᵛविश्वानि सर्वाणि दुरितानि राक्षसैः कृतान्युपद्रवाणि ᵛतर निराकुरु । अस्मिन् ᵛबर्हिषि ᵛनि ᵛषीद च ॥

**पव॑मान॒ स्व॑र्वि॒दो जाय॑मानोऽभवो म॒हान् । इन्दो॒ विश्वाँ॑ अ॒भीद॑सि ॥ ४ ॥**

पव॑मान । स्वः॑ । वि॒दः॒ । जाय॑मानः । अ॒भवः॒ । म॒हान् । इन्दो॒ इति॑ । विश्वा॑न् । अ॒भि । इत् । अ॒सि॥४॥

हे ᵛपवमान सोम त्वं ᵛस्वः सर्वं ᵛविदः यजमानाय प्रयच्छ । अपि च ᵛजायमानः प्रादुर्भवन्नेव ᵛमहान् पूजनीयः ᵛअभवः[1] असि । किंच हे ᵛइन्दो सोम त्वं ᵛविश्वानित् सर्वानेव शत्रून् ᵛअभि ᵛअसि तेजसाभिभवसि ॥ ॥ १६ ॥

' प्र गायत्रेण ' इति चतुर्ऋचं षट्त्रिंशं सूक्तं काश्यपस्यावत्सारस्यार्षम् । तृतीया पुरउष्णिगाद्या द्वादशका अष्टका । शिष्टा गायत्र्यः । पवमानः सोमो देवता । तथा चानुक्रान्तं—' प्र गायत्रेणोपान्त्या पुरउष्णिक् ' इति । उक्तो विनियोगः ॥

---

१. ग-घ-त-भ-' अभवः ' नास्ति ।

**प्र गा॒य॒त्रेण॑ गायत॒ पव॑मानं॒ विच॑र्षणिम् । इन्दुं॑ स॒हस्र॑चक्षसम् ॥ १ ॥**

प्र । गा॒य॒त्रेण॑ । गा॒य॒त॒ । पव॑मानम् । वि॒ऽच॑र्षणिम् । इन्दु॑म् । स॒हस्र॑ऽचक्षसम् ॥ १ ॥

^v^विचर्षणिं विद्रष्टारं ^v^सहस्रचक्षसं बहुदर्शनं ^v^पवमानं पूयमानम् ^v^इन्दुं सोमं ^v^गायत्रेण गायत्रनामधेयेन साम्ना ^v^प्र ^v^गायत हे स्तोतारः गानं कुरुत । स्तुतेत्यर्थः ॥

**तं त्वा॑ स॒हस्र॑चक्षसम॒थो॑ स॒हस्र॑भर्णसम् । अति॒ वार॑मपाविषुः ॥ २ ॥**

तम् । त्वा॒ । स॒हस्र॑ऽचक्षसम् । अ॒थो इति॑ । स॒हस्र॑ऽभर्णसम् । अति॑ । वार॑म् । अ॒पा॒वि॒षुः ॥२॥

हे सोम ^v^सहस्रचक्षसं बहुदर्शनम् ^v^अथो अपि च ^v^सहस्रभर्णसं बहुभरणं ^v^तम् अभिषुतं ^v^त्वा त्वां ^v^वारं वालं दशापवित्रम् ^v^अति ^v^अपाविषुः ऋत्विजः पावयन्ति ॥

**अति॒ वारा॒न्पव॑मानो असिष्यदत्क॒लशाँ॑ अ॒भि धा॑वति । इन्द्र॑स्य॒ हार्द्या॑वि॒शन् ॥३॥**

अति॑ । वारा॑न् । पव॑मानः । असि॑स्यदत् । क॒लशा॑न् । अ॒भि । धा॒वति॒ । इन्द्र॑स्य । हा॒र्दि । आ॒ऽवि॒शन् ॥३॥

^v^पवमानः पूयमानः सोमः ^v^वारान् अवेर्वालान् ^v^अति अतिक्रम्य ^v^असिष्यदत् स्यन्दते । अपि च ^v^इन्द्रस्य ^v^हार्दि हृदयम् ^v^आविशन् ^v^कलशान् द्रोणान् ^v^अभि ^v^धावति अभिगच्छति ॥

**इन्द्र॑स्य सोम॒ राध॑से॒ शं प॑वस्व विचर्षणे । प्र॒जाव॒द्रेत॒ आ भ॑र ॥ ४ ॥**

इन्द्र॑स्य । सोम॑ । राध॑से । शम् । प॒व॒स्व॒ । वि॒ऽच॒र्ष॒णे॒ । प्र॒जाऽव॑त् । रेतः॑ । आ । भ॒र॒ ॥ ४ ॥

हे ^v^विचर्षणे विद्रष्टः त्वम् ^v^इन्द्रस्य ^v^राधसे राधनाय संसिद्ध्यै ^v^शं सुखकरं रसं ^v^पवस्व क्षर । अपि चास्मभ्यं ^v^प्रजावत् पुत्राद्युपेतं ^v^रेतः उदकमन्नं वा ^v^आ ^v^भर आहर । प्रयच्छेत्यर्थः ॥ ॥१७॥ ॥२॥

तृतीयेऽनुवाके सप्त सूक्तानि । तत्र 'अया वीती' इति त्रिंशदृचं प्रथमं सूक्तम् । अमहीयुर्नामाङ्गिरस ऋषिः । गायत्री छन्दः । पवमानः सोमो देवता । तथा चानुक्रान्तम्—'अया वीती त्रिंशदमहीयुः' इति । उक्तो विनियोगः ॥

**अ॒या वी॒ती परि॑ स्रव॒ यस्त॑ इन्दो॒ मदे॒ष्वा । अ॒वाह॑न्नव॒तीर्नव॑ ॥ १ ॥**

अ॒या । वी॒ती । परि॑ । स्र॒व॒ । यः । ते॒ । इ॒न्दो॒ इति॑ । मदे॑षु । आ । अ॒व॒ऽअह॑न् । न॒व॒तीः । नव॑ ॥१॥

हे ^v^इन्दो सोम ^v^अया अनेन रसेन ^v^वीती वीत्या इन्द्रस्य भक्षणाय ^v^परि ^v^स्रव परिक्षर । कीदृशेन रसेनेत्यत आह । ^v^ते तव ^v^यः रसः ^v^मदेषु संग्रामेषु ^v^नवतीर्नव इति नवनवतिसंख्याकाश्च शत्रुपुरीः ^v^अवाहन् जघान । अमुं सोमरसं पीत्वा मत्तः सन्निन्द्र उक्तलक्षणाः शत्रुपुरीर्जघानेति कृत्वा रसो जघानेत्युपचारः ॥

**पुरः॑ स॒द्य इ॒त्थाधि॑ये॒ दिवो॑दासाय॒ शम्ब॑रम् । अध॒ त्यं तु॒र्वशं॒ यदु॑म् ॥ २ ॥**

पुरः॑ । स॒द्यः । इ॒त्थाऽधि॑ये । दिवः॑ऽदासाय । शम्ब॑रम् । अध॑ । त्यम् । तु॒र्वश॑म् । यदु॑म् ॥२॥

^v^सद्यः एकस्मिन्नेवाह्नि ^v^पुरः शत्रूणां पुराणि सोमरसोऽवाहन् । ^v^इत्थाधिये सत्यकर्मणे ^v^दिवोदासाय राज्ञे ^v^शम्बरं शत्रुपुराणां स्वामिनम् ^v^अध अथ ^v^त्यं तं ^v^तुर्वशं तुर्वशनामकं राजानं दिवोदासशत्रुं ^v^यदुं यदुनामकं राजानं च[1] वशमानयच्च[1] । अत्रापि सोमरसं पीत्वा मत्तः सन्निन्द्रः सर्वमेतदकार्षीदिति सोमरसे कर्तृत्वमुपचर्यते ॥

१. ग—स्ववशमनयच्च; भ१.७—च वशमनयच्च ।

परि णो अश्वमश्वविद्गोमदिन्दो हिरण्यवत्। क्षरा सहस्रिणीरिषः ॥ ३ ॥

परि। नः। अश्वम्। अश्वऽवित्। गोऽमत्। इन्दो इति। हिरण्यऽवत्। क्षर। सहस्रिणीः। इषः ॥ ३ ॥

हे इन्दो सोम अश्ववित् अश्वस्य लम्भकस्त्वं नः अस्माकम् अश्वं गोमत् गोयुक्तं हिरण्यवत् हिरण्योपेतं धनं च परि क्षर। अपि च सहस्रिणीः बहूनि इषः अन्नानि क्षर ॥

पवमानस्य ते वयं पवित्रमभ्युन्दतः। सखित्वमा वृणीमहे ॥ ४ ॥

पवमानस्य। ते। वयम्। पवित्रम्। अभिऽउन्दतः। सखिऽत्वम्। आ। वृणीमहे ॥ ४ ॥

हे सोम पवित्रमभ्युन्दतः पवित्रमभिक्लेदयतः पवमानस्य क्षरतश्च ते तव सखित्वं सख्यं वयम् अमहीयव आङ्गिरसाः आ वृणीमहे प्रार्थयामहे ॥

ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया। तेभिर्नः सोम मृळय ॥ ५ ॥

ये। ते। पवित्रम्। ऊर्मयः। अभिऽक्षरन्ति। धारया। तेभिः। नः। सोम। मृळय ॥ ५ ॥

हे सोम ते तव ये[1] ऊर्मयः तरङ्गाः पवित्रे धारया क्षरन्ति तेभिः तैरूर्मिभिः नः अस्मान् मृळय सुखय ॥ ॥ १८ ॥

स नः पुनान आ भर रयिं वीरवतीमिषम्। ईशानः सोम विश्वतः ॥ ६ ॥

सः। नः। पुनानः। आ। भर। रयिम्। वीरऽवतीम्। इषम्। ईशानः। सोम। विश्वतः ॥ ६ ॥

हे सोम विश्वतः सर्वस्य जगतः ईशानः ईश्वरः सः अभिषुतः पुनानः पूयमानस्त्वं नः अस्मभ्यं रयिं धनं वीरवतीं पुत्राद्युपेतम् इषम् अन्नं च आ भर आहर ॥

एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम्। समादित्येभिरख्यत ॥ ७ ॥

एतम्। ऊँ इति। त्यम्। दश। क्षिपः। मृजन्ति। सिन्धुऽमातरम्। सम्। आदित्येभिः। अख्यत ॥ ७ ॥

सिन्धुमातरं यस्य सोमस्य सिन्धवो नद्यो मातरो भवन्ति त्यं तम् एतम् इमं सोमं दश क्षिपः दशसंख्याका अङ्गुलयः मृजन्ति शोधयन्ति। अपि च सोऽयं सोमः आदित्येभिः आदित्यैः सम् अख्यत संगच्छते ॥

समिन्द्रेणोत वायुना सुत एति पवित्र आ। सं सूर्यस्य रश्मिभिः ॥ ८ ॥

सम्। इन्द्रेण। उत। वायुना। सुतः। एति। पवित्रे। आ। सम्। सूर्यस्य। रश्मिऽभिः ॥ ८ ॥

सुतः अभिषुतः सोमः पवित्रे इन्द्रेण सम् एति संगच्छते। उत अपि च वायुना समेति। सूर्यस्य रश्मिभिः मयूखैरपि सम् एति ॥

स नो भगाय वायवे पूष्णे पवस्व मधुमान्। चारुर्मित्रे वरुणे च ॥ ९ ॥

सः। नः। भगाय। वायवे। पूष्णे। पवस्व। मधुऽमान्। चारुः। मित्रे। वरुणे। च ॥ ९ ॥

हे सोम मधुमान् मधुररसः चारुः कल्याणस्वरूपश्च सः अभिषुतस्त्वं नः अस्माकं यज्ञे भगाय भगाख्याय देवाय वायवे च पूष्णे[2] च[2], मित्रे मित्राय देवाय वरुणे वरुणाय च पवस्व क्षर ॥

---

१. त-भ२-'ये' नास्ति। २. त१.२.६.७-पूष्णे रवये; त४-पूष्णे खेद।

उच्चा ते॑ जा॒तमन्ध॑सो दि॒वि षद्भूम्या द॑दे । उ॒ग्रं शर्म॒ महि॒ श्रवः॑ ॥ १० ॥

उ॒च्चा । ते॒ । जा॒तम् । अन्ध॑सः । दि॒वि । सत् । भूमिः॑ । आ । द॒दे॒ । उ॒ग्रम् । शर्म॑ । महि॑ । श्रवः॑ ॥ १० ॥

हे सोम ते तव संबन्धिनः अन्धसः रसस्य उच्चा उपरि जातं जन्म अपि च दिवि द्युलोके सत् विद्यमानं त्वत्तस्तव संबन्धि उग्रम् उद्गूर्णं शर्म सुखं महि महत् श्रवः अन्नं च भूमिः आ ददे। भूम्या ददे इति पदत्रयमामनन्ति। विसर्जनीयलोपः सांहितिकः। भूमिर्भौमा जना मादृशाः। भूमिष्ठैरादीयत इत्यर्थः॥ ॥ १९ ॥

एना विश्वा॑न्य॒र्य आ द्यु॒म्नानि॒ मानु॑षाणाम् । सिषा॑सन्तो वनामहे ॥ ११ ॥

ए॒ना । विश्वा॑नि । अ॒र्यः । आ । द्यु॒म्नानि॑ । मानु॑षाणाम् । सिसा॑सन्तः । व॒ना॒म॒हे॒ ॥ ११ ॥

एना एनेनानेन सोमेन मानुषाणां मनुष्याणां विश्वा विश्वानि द्युम्नानि अन्नानि आ[1] अर्यः अभिगच्छन्तः सिषासन्तः संभक्तुमिच्छन्तश्च वयं वनामहे संभजामहे॥

स न॒ इन्द्रा॑य॒ यज्य॑वे॒ वरु॑णाय म॒रुद्भ्यः॑ । व॒रि॒वो॒वित्परि॑ स्रव ॥ १२ ॥

सः । नः॒ । इन्द्रा॑य । यज्य॑वे । वरु॑णाय । म॒रुत्ऽभ्यः॑ । व॒रि॒वः॒ऽवित् । परि॑ । स्र॒व॒ ॥ १२ ॥

हे सोम वरिवोवित् धनस्य लम्भकः पवमानस्त्वं नः अस्माकं यज्यवे यष्टव्याय इन्द्राय वरुणाय च मरुद्भ्यः च परि स्रव धारया क्षर॥

उपो॒ षु जा॒तम॒प्तुरं॒ गोभि॑र्भ॒ङ्गं परि॑ष्कृतम् । इन्दुं॑ दे॒वा अ॑यासिषुः ॥ १३ ॥

उपो॒ इति॑ । सु । जा॒तम् । अ॒प्ऽतुर॑म् । गोभिः॑ । भ॒ङ्गम् । परि॑ऽकृतम् । इन्दु॑म् । दे॒वाः । अ॒या॒सि॒षुः॒ ॥ १३ ॥

सु जातं सम्यक्प्रादुर्भूतम् अप्तुरं वसतीवरीभिः प्रेरितं भङ्गं शत्रूणां भञ्जकं गोभिः गोविकारैः पयोभिः परिष्कृतम् अलंकृतं संस्कृतम् इन्दुं सोमं देवाः इन्द्रादयः उप अयासिषुः उपागच्छन्ति॥

तमिद्व॑र्धन्तु नो॒ गिरो॑ व॒त्सं सं॒शिश्व॑रीरिव । य इन्द्र॑स्य हृदं॒सनिः॑ ॥ १४ ॥

तम् । इत् । व॒र्धन्तु॒ । नः॒ । गिरः॑ । व॒त्सम् । सं॒ऽशिश्व॑रीःऽइव । यः । इन्द्र॑स्य । हृ॒द॒म्ऽसनिः॑ ॥ १४ ॥

यः सोमः इन्द्रस्य हृदंसनिः हृदयस्य संभक्ता भवति तमित् तमेव सोमं नः अस्माकं गिरः स्तुतिरूपा वाचः सं वर्धन्तु सम्यग्वर्धयन्तु। तत्र दृष्टान्तः। वत्सं बालं शिश्वरीरिव। यथा शिश्वर्यो वृद्धपयस्का[2] मातरो वत्सं वर्धयन्ति तद्वदित्यर्थः॥

अर्षा॑ णः सोम॒ शं गवे॑ धु॒क्षस्व॑ पि॒प्युषी॒मिष॑म् । वर्धा॑ समु॒द्रमु॒क्थ्य॑म् ॥ १५ ॥

अर्ष॑ । नः॒ । सो॒म॒ । शम् । गवे॑ । धु॒क्षस्व॑ । पि॒प्युषी॑म् । इष॑म् । वर्ध॑ । स॒मु॒द्रम् । उ॒क्थ्य॑म् ॥ १५ ॥

हे सोम त्वं नः अस्माकं गवे शं सुखम् अर्ष क्षर। अपि च पिप्युषीं प्रवृद्धम्[3] इषम् अन्नं धुक्षस्व पूरय। किंच उक्थ्यं प्रशस्यं समुद्रम् उदकं वर्ध वर्धय॥ ॥ २० ॥

---

१. ग-त२.५.६-भ२.४-' आ ' नास्ति। २. ग-वृद्धपसका; त१.६-वृद्धपयस्का; त२-वृद्धस्पयस्का; त४-वद्धपयस्का। ३. ग-त-भ४-प्रवृद्धां।

**पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम्। ज्योतिर्वैश्वानरं बृहत् ॥ १६ ॥**

पवमानः । अजीजनत् । दिवः । चित्रम् । न । तन्यतुम् । ज्योतिः । वैश्वानरम् । बृहत् ॥ १६ ॥

पवमानः सोमः बृहत् महत् वैश्वानरं वैश्वानराख्यं ज्योतिः तेजः दिवः द्युलोकस्य चित्रं विचित्रं तन्यतुं न अशनिमिव अजीजनत् अजनयत् ॥

**पवमानस्य ते रसो मदो राजन्नदुच्छुनः । वि वारमव्यमर्षति ॥ १७ ॥**

पवमानस्य । ते । रसः । मदः । राजन् । अदुच्छुनः । वि । वारम् । अव्यम् । अर्षति ॥ १७ ॥

हे राजन् दीप्यमान सोम पवमानस्य क्षरतः ते तव अदुच्छुनः रक्षोवर्जितः मदः मदकरः रसः अव्यम् अविमयं वारं वालं दशापवित्रम् अर्षति अभिगच्छति ॥

**पवमान रसस्तव दक्षो वि राजति द्युमान् । ज्योतिर्विश्वं स्वर्दृशे ॥ १८ ॥**

पवमान । रसः । तव । दक्षः । वि । राजति । द्युऽमान् । ज्योतिः । विश्वम् । स्वः । दृशे ॥ १८ ॥

हे पवमान सोम तव त्वदीयः दक्षः वृद्धः द्युमान् दीप्तिमान् रसः वि राजति प्रकाशते । न केवलं स्वयमेव प्रकाशते किंतु विश्वं व्याप्तं स्वः सर्वं ज्योतिः तेजश्च दृशे द्रष्टुं करोतीति शेषः ॥

**यस्ते मदो वरेण्यस्तेना पवस्वान्धसा । देवावीरघशंसहा ॥ १९ ॥**

यः । ते । मदः । वरेण्यः । तेन । पवस्व । अन्धसा । देवऽअवीः । अघशंसऽहा ॥ १९ ॥

हे सोम ते तव देवावीः देवकामः अघशंसहा राक्षसानां हन्ता वरेण्यः सर्वैर्वरणीयः मदः मदकरः यः रसो विद्यते तेन रसेन अन्धसा अदनीयेन पवस्व क्षर ॥

**जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवेदिवे । गोषा उ अश्वसा असि ॥ २० ॥**

जघ्निः । वृत्रम् । अमित्रियम् । सस्निः । वाजम् । दिवेऽदिवे ।
गोऽसाः । ऊँ इति । अश्वऽसाः । असि ॥ २० ॥

हे सोम त्वम् अमित्रियम् अमित्रभवं वृत्रं शत्रुं जघ्निः हन्ता असि भवसि । किंच दिवेदिवे प्रतिदिनं वाजं संग्रामं सस्निः संभक्तासि । किंच गोषाः गवां दातासि । अश्वसाः अश्वानां दाता चासि ॥ ॥ २१ ॥

**संमिश्लो अरुषो भव सूपस्थाभिर्न धेनुभिः । सीदञ्छ्येनो न योनिमा ॥ २१ ॥**

सम्ऽमिश्लः । अरुषः । भव । सुऽउपस्थाभिः । न । धेनुऽभिः ।
सीदन् । श्येनः । न । योनिम् । आ ॥ २१ ॥

हे सोम त्वं सूपस्थाभिः शोभनोपस्थानाभिः धेनुभिः गोभिः । गोविकारैः पयोभिरित्यर्थः । संमिश्लः संमिश्रितः श्येनो न यथा श्येनः शीघ्रमागत्य स्थानमासीदति तद्वत् योनिं स्वकीयं स्थानम् आ सीदन् । न संप्रत्यर्थे । इदानीम् अरुषः आरोचमानः भव ॥

**स पवस्व य आविथेन्द्रं वृत्राय हन्तवे । वव्रिवांसं महीरपः ॥ २२ ॥**

सः । पवस्व । यः । आविथ । इन्द्रम् । वृत्राय । हन्तवे । वव्रिऽवांसम् । महीः । अपः ॥ २२ ॥

हे सोम ^v^यः त्वं ^v^मही: महती: ^v^अपः महान्त्युदकानि ^v^वव्रिवांसं निरुन्धानं ^v^वृत्राय वृत्रं ^v^हन्तवे हन्तुम् ^v^इन्द्रम् ^v^आविथ अरक्षः ^v^सः त्वं ^v^पवस्व धारया क्षर। सोमं पीत्वा मत्तः सन्निन्द्रो महान्त्युदकानि निरुन्धानं वृत्रं जघानेत्यर्थः ॥

**सुवीरासो वयं धना जयेम सोम मीढ्वः। पुनानो वर्ध नो गिरः ॥ २३ ॥**

सुऽवीरासः। वयम्। धना। जयेम। सोम। मीढ्वः। पुनानः। वर्ध। नः। गिरः ॥२३॥

^v^सुवीरासः सुवीराः कल्याणपुत्राः ^v^वयम् अमहीयव आङ्गिरसाः ^v^धना शत्रूणां धनानि ^v^जयेम। शत्रून् जित्वा तदीयानि धनानि स्वीकुर्यामेत्यर्थः। हे ^v^मीढ्वः सेक्तः ^v^सोम ^v^पुनानः पूयमानस्त्वं ^v^नः अस्माकं ^v^गिरः स्तुतिरूपा वाचश्च ^v^वर्ध वर्धय ॥

**त्वोतासस्तवावसा स्याम वन्वन्त आमुरः। सोम व्रतेषु जागृहि ॥ २४ ॥**

त्वाऽऊतासः। तव। अवसा। स्याम। वन्वन्तः। आऽमुरः। सोम। व्रतेषु। जागृहि ॥२४॥

हे ^v^सोम ^v^तव त्वदीयेन ^v^अवसा रक्षणेन ^v^त्वोतासः त्वया रक्षिताः सन्तः ^v^वन्वन्तः शत्रून् भजमानाः ^v^आमुरः तेषामभिमारकाः ^v^स्याम भवेम। ^v^व्रतेषु अस्माकं कर्मसु ^v^जागृहि प्रबुद्धो भव ॥

**अपघ्नन्पवते मृधोऽप सोमो अराव्णः। गच्छन्निन्द्रस्य निष्कृतम् ॥ २५ ॥**

अपऽघ्नन्। पवते। मृधः। अप। सोमः। अराव्णः। गच्छन्। इन्द्रस्य। निःऽकृतम् ॥२५॥

^v^सोमः ^v^मृधः हिंसकाञ्छत्रून् ^v^अपघ्नन् मारयन् ^v^अराव्णः शक्तौ सत्यां धनानामदातॄंश्च ^v^अप घ्नन् ^v^इन्द्रस्य ^v^निष्कृतं स्थानं ^v^गच्छन् प्राप्नुवन् ^v^पवते धारया क्षरति ॥ ॥ २२ ॥

**महो नो राय आ भर पवमान जही मृधः। रास्वेन्दो वीरवद्यशः ॥ २६ ॥**

महः। नः। रायः। आ। भर। पवमान। जहि। मृधः।

रास्व। इन्दो इति। वीरऽवत्। यशः ॥ २६ ॥

हे ^v^पवमान ^v^इन्दो सोम ^v^नः अस्माकं ^v^महः महान्ति ^v^रायः धनानि ^v^आ ^v^भर आहर। ^v^मृधः हिंसकाञ्छत्रूंश्च ^v^जहि मारय। ^v^वीरवत् पुत्राद्युपेतां[1] ^v^यशः कीर्तिं च ^v^रास्व अस्मभ्यं देहि ॥

**न त्वा शतं चन ह्रुतो राधो दित्सन्तमा मिनन्। यत्पुनानो मखस्यसे ॥२७॥**

न। त्वा। शतम्। चन। ह्रुतः। राधः। दित्सन्तम्। आ। मिनन्।

यत्। पुनानः। मखस्यसे ॥ २७ ॥

हे सोम ^v^राधः धनम् ^v^आ ^v^दित्सन्तम् आदातुमिच्छन्तं ^v^त्वा त्वां ^v^शतं ^v^चन बहवोऽपि ^v^ह्रुतः हिंसकाः शत्रवः ^v^न ^v^मिनन् न[2] हिंसन्ति। कदेत्यत्राह। ^v^यत् यदा ^v^पुनानः पूयमानस्त्वं ^v^मखस्यसे अस्मभ्यं धनं दातुमिच्छसि ॥

**पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने। विश्वा अप द्विषो जहि ॥२८॥**

पवस्व। इन्दो इति। वृषा। सुतः। कृधि। नः। यशसः। जने। विश्वाः। अप। द्विषः। जहि ॥२८॥

---

१. ग-त-भ४-'द्युपेतं। २. त-भ२-'न' नास्ति।

हे ᵛइन्दो सोम ᵛसुतः अभिषुतः[1] ᵛवृषा सेक्ता त्वं ᵛपवस्व धारया क्षर। ᵛजने जनपदेषु ᵛनः अस्मान् ᵛयशसः यशस्विनः ᵛकृधि कुरु। ᵛविश्वाः सर्वान् ᵛद्विषः द्वेष्टॄन् शत्रून् ᵛअप ᵛजहि मारय च॥

अस्य ते सख्ये वयं तवेन्दो द्युम्न उत्तमे। सासह्याम पृतन्यतः॥ २९॥

अस्य। ते। सख्ये। वयम्। तव। इन्दो इति। द्युम्ने। उत्ऽतमे। ससह्याम। पृतन्यतः॥२९॥

हे ᵛइन्दो सोम ᵛअस्य अस्मिन् यागे वर्तमानस्य ᵛते तव ᵛसख्ये सखित्वे सति ᵛवयम् अमहीयव आङ्गिरसाः ᵛतव त्वदीये ᵛउत्तमे श्रेष्ठे ᵛद्युम्ने अन्ने तृप्तिं[2] प्राप्ताः[2]। तथा च यास्कः–'द्युम्नं द्योततेर्यशो वान्नं वा' (निरु. ५. ५) इति। ᵛपृतन्यतः युद्धमिच्छतः शत्रून् ᵛससह्याम अभिभवेम॥

या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे। रक्षा समस्य नो निदः॥३०॥

या। ते। भीमानि। आयुधा। तिग्मानि। सन्ति। धूर्वणे। रक्ष। समस्य। नः। निदः॥३०॥

हे सोम ᵛते तव ᵛया यानि ᵛभीमानि शत्रूणां भयंकराणि ᵛतिग्मानि तीक्ष्णानि ᵛआयुधा आयुधानि ᵛधूर्वणे[3] शत्रुवधार्थं ᵛसन्ति तैरायुधैः ᵛसमस्य सर्वस्य शत्रोः ᵛनिदः निन्दायाः ᵛनः अस्मान् ᵛरक्ष पालय॥ ॥ २३॥

'एते असृग्रम्' इति त्रिंशदृचं द्वितीयं सूक्तं भार्गवस्य जमदग्नेरार्षं गायत्रं पवमानसोमदेवताकम्। तथा चानुक्रान्तम्—'एते असृग्रं जमदग्निः' इति। गतो विनियोगः॥

एते असृग्रमिन्दवस्तिरः पवित्रमाशवः। विश्वान्यभि सौभगा॥ १॥

एते। असृग्रम्। इन्दवः। तिरः। पवित्रम्। आशवः। विश्वानि। अभि। सौभगा॥ १॥

ᵛआशवः शीघ्राः ᵛएते पवमानाः ᵛइन्दवः सोमाः ᵛविश्वानि सर्वाणि ᵛसौभगा सौभगानि धनान्यभिलक्ष्य ᵛपवित्रं ᵛतिरः ᵛअसृग्रम् ऋत्विग्भिः सृज्यन्ते॥

विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः। तना कृण्वन्तो अर्वते॥ २॥

विऽघ्नन्तः। दुःऽइता। पुरु। सुऽगा। तोकाय। वाजिनः। तना। कृण्वन्तः। अर्वते॥२॥

ᵛवाजिनः बलवन्तः सोमाः ᵛपुरु बहूनि ᵛदुरिता दुरितानि ᵛविघ्नन्तः विशेषेण नाशयन्तः ᵛतोकाय अस्माकं पुत्राय ᵛअर्वते अश्वाय च ᵛसुगा सुखानि ᵛतना धनानि च ᵛकृण्वन्तः कुर्वन्तः तिरः पवित्रं सृज्यन्त इति संबन्धः॥

कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम्। इळामस्मभ्यं संयतम्॥ ३॥

कृण्वन्तः। वरिवः। गवे। अभि। अर्षन्ति। सुऽस्तुतिम्। इळाम्। अस्मभ्यम्। सम्ऽयतम्॥३॥

अस्माकं ᵛगवे ᵛअस्मभ्यं च ᵛसंयतं यदस्मान् संयच्छति तत् ᵛवरिवः धनम् ᵛइळाम् अन्नं च ᵛकृण्वन्तः कुर्वन्तः सोमाः ᵛसुष्टुतिम् अस्मदीयां शोभनां स्तुतिम् ᵛअभ्यर्षन्ति आभिमुख्येन गच्छन्ति॥

---

१. ग-त३.६-म१.२.७–'अभिषुतः' नास्ति। २. ग-त३-म१.५.७–'तृप्तिं प्राप्ताः' नास्ति। ३. त१.२.६–तूर्वणे; त४.५–पूर्वणे।

असा॑व्यं॒शुर्मदा॑या॒प्सु दक्षो॑ गिरि॒ष्ठाः । श्ये॒नो न योनि॒मास॑दत् ॥ ४ ॥

असा॑वि । अं॒शुः । मदा॑य । अ॒प्ऽसु । दक्षः॑ । गि॒रि॒ऽस्थाः । श्ये॒नः । न । योनि॑म् । आ । अ॒स॒द॒त् ॥४॥

ᐯगिरिष्ठाः पर्वते जातः ᐯअंशुः सोमः ᐯमदाय मदार्थम् ᐯअसावि अभिषुतः । ᐯअप्सु वसतीवरीषु ᐯदक्षः प्रवृद्धश्च भवति । किंच ᐯश्येनो ᐯन यथा श्येनो वेगेनागम्य स्थानमासीदति तद्वदयं सोमो ᐯयोनिं स्वकीयं स्थानम् ᐯआसदत् आसीदति ॥

शु॒भ्रमन्धो॑ देववा॒तम॒प्सु धू॒तो नृभिः॑ सु॒तः । स्वद॑न्ति॒ गावः॒ पयो॑भिः ॥ ५ ॥

शु॒भ्रम् । अन्धः॑ । दे॒व॒ऽवा॒तम् । अ॒प्ऽसु । धू॒तः । नृऽभिः॑ । सु॒तः ।
स्वद॑न्ति । गावः॑ । पयः॑ऽभिः ॥ ५ ॥

यत् ᐯदेववातं देवैः प्रार्थितं ᐯशुभ्रं शोभनम् ᐯअन्धः अन्नं ᐯगावः पशवः ᐯपयोभिः आशिरैः ᐯस्वदन्ति स्वादयन्ति[1] सोऽयं सोमः ᐯनृभिः नेतृभिर्ऋत्विग्भिः ᐯसुतः अभिषुतः सन् ᐯअप्सु वसतीवरीषु ᐯधूतः शोधितो भवति ॥　　॥०२४॥

आदी॒मश्वं॒ न हेता॒रोऽशू॑शुभन्न॒मृता॑य । मध्वो॒ रसं॑ सध॒मादे॑ ॥ ६ ॥

आत् । ई॒म् । अश्व॑म् । न । हेता॑रः । अशू॑शुभन् । अ॒मृता॑य । मध्वः॑ । रस॑म् । स॒ध॒ऽमादे॑ ॥ ६ ॥

ᐯआत् अनन्तरं ᐯहेतारः प्रेरका ऋत्विजः ᐯसधमादे यज्ञे ᐯईम् एनं ᐯमध्वः मदकरस्य सोमस्य ᐯरसम् ᐯअमृताय अमरणाय ᐯअश्वं ᐯन अश्वमिव ᐯअशूशुभन् शोभयन्ति ॥

यास्ते॒ धारा॑ मधु॒श्चुतोऽसृ॑ग्रमिन्द ऊ॒तये॑ । ताभिः॑ प॒वित्र॒मास॑दः ॥ ७ ॥

याः । ते॒ । धाराः॑ । म॒धु॒ऽश्चुतः॑ । असृ॑ग्रम् । इन्दो॒ इति॑ । ऊ॒तये॑ ।
ताभिः॑ । प॒वित्र॑म् । आ । अ॒स॒दः॒ ॥ ७ ॥

हे ᐯइन्दो सोम ᐯते तव ᐯमधुश्चुतः मधुररसस्य श्चोतयित्र्यः ᐯयाः ᐯधाराः ᐯऊतये रक्षणाय ᐯअसृग्रं सृज्यन्ते ᐯताभिः धाराभिस्त्वं ᐯपवित्रम् ᐯआसदः आसीद ॥

सो अ॒र्षेन्द्रा॑य पी॒तये॑ ति॒रो रोमा॑ण्य॒व्यया॑ । सीद॒न् योना॒ वने॒ष्वा ॥ ८ ॥

सः । अ॒र्ष॒ । इन्द्रा॑य । पी॒तये॑ । ति॒रः । रोमा॑णि । अ॒व्यया॑ । सीद॑न् । योना॑ । वने॑षु । आ ॥८॥

हे सोम ᐯसः अभिषुतस्त्वम् ᐯअव्यया अव्ययानि अविमयानि ᐯरोमाणि वालानि ᐯतिरः तिरस्कुर्वन् ᐯवनेषु पात्रेषु ᐯयोना योनौ स्थाने ᐯआ ᐯसीदन् ᐯइन्द्राय इन्द्रस्य ᐯपीतये पानाय ᐯअर्ष क्षर ॥

त्वमि॑न्दो॒ परि॑ स्र॒व स्वादि॑ष्ठो॒ अङ्गि॑रोभ्यः । व॒रि॒वो॒विद्घृ॒तं पयः॑ ॥ ९ ॥

त्वम् । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व॒ । स्वादि॑ष्ठः । अङ्गि॑रःऽभ्यः । व॒रि॒वः॒ऽवित् । घृ॒तम् । पयः॑ ॥९॥

हे ᐯइन्दो सोम ᐯस्वादिष्ठः स्वादुतमः ᐯवरिवोवित् अस्मदभिलषितस्य धनस्य लम्भकश्च[2] ᐯत्वम् ᐯअङ्गिरोभ्यः अङ्गिरसामर्थाय ᐯघृतम् आज्यं ᐯपयः च ᐯपरि ᐯस्रव परिक्षर ॥

१. ग-त-भ१.२.४–स्वदयंति; भ७–' स्वादयंति ' नास्ति ।　२. ग–लंभक ।

अयं विचर्षणिर्हितः पवमानः स चेतति । हिन्वान आप्यं बृहत् ॥ १० ॥

अयम् । विऽचर्षणिः । हितः । पवमानः । सः । चेतति । हिन्वानः । आप्यम् । बृहत् ॥ १० ॥

vविचर्षणिः विद्रष्टा vहितः पात्रेषु निहितः vपवमानः vअयं सोमः vआप्यम् अप्सु भवं vबृहत् महदन्नं vहिन्वानः प्रेरयन् vचेतति सर्वैः ज्ञायते ॥ ॥ २५ ॥

एष वृषा वृषव्रतः पवमानो अशस्तिहा । करद्वसूनि दाशुषे ॥ ११ ॥

एषः । वृषा । वृषऽव्रतः । पवमानः । अशस्तिऽहा । करत् । वसूनि । दाशुषे ॥ ११ ॥

vवृषा कामानां सेक्ता vवृषव्रतः वृषकर्मा vअशस्तिहा राक्षसानां हन्ता vपवमानः vएषः सोमः vदाशुषे हविषां दात्रे यजमानाय vवसूनि धनानि vकरत् करोति । प्रयच्छतीत्यर्थः ॥

आ पवस्व सहस्रिणं रयिं गोमन्तमश्विनम् । पुरुश्चन्द्रं पुरुस्पृहम् ॥ १२ ॥

आ । पवस्व । सहस्रिणम् । रयिम् । गोऽमन्तम् । अश्विनम् । पुरुऽचन्द्रम् । पुरुऽस्पृहम् ॥ १२ ॥

हे सोम त्वं vसहस्रिणं बहुसंख्याकं vगोमन्तं गोभिरुपेतम् vअश्विनम् अश्ववन्तं vपुरुश्चन्द्रं बहूनां हर्षकं vपुरुस्पृहं बहुस्पृहणीयं vरयिं धनम् vआ vपवस्व परिक्षर ॥

एष स्य परि षिच्यते मर्मृज्यमान आयुभिः । उरुगायः कविक्रतुः ॥ १३ ॥

एषः । स्यः । परि । सिच्यते । मर्मृज्यमानः । आयुऽभिः । उरुऽगायः । कविऽक्रतुः ॥ १३ ॥

vउरुगायः बहुस्तुतिः vकविक्रतुः क्रान्तप्रज्ञः क्रान्तकर्मा वा vस्यः सः vएषः अयं सोमः vआयुभिः मनुष्यैः vमर्मृज्यमानः शोध्यमानः vपरि vषिच्यते ॥

सहस्रोतिः शतामघो विमानो रजसः कविः । इन्द्राय पवते मदः ॥ १४ ॥

सहस्रऽऊतिः । शतऽमघः । विऽमानः । रजसः । कविः । इन्द्राय । पवते । मदः ॥ १४ ॥

vसहस्रोतिः अपरिमितरक्षणः vशतमघः बहुधनः vरजसः लोकस्य vविमानः निर्माता vकविः क्रान्तकर्मा vमदः मदकरः सोमः vइन्द्राय इन्द्रार्थं vपवते धारया क्षरति ॥

गिरा जात इह स्तुत इन्दुरिन्द्राय धीयते । विर्योना वसताविव ॥ १५ ॥

गिरा । जातः । इह । स्तुतः । इन्दुः । इन्द्राय । धीयते । विः । योना । वसतौऽइव ॥ १५ ॥

vजातः प्रादुर्भूतः vगिरा स्तुत्या vस्तुतः च vइन्दुः सोमः vइह अस्मिन् यज्ञे vयोना योनौ स्वस्थाने vइन्द्राय इन्द्रार्थं vवसताविव vविः यथा स्ववासे पक्षी तथा vधीयते निधीयते ॥ ॥ २६ ॥

पवमानः सुतो नृभिः सोमो वाजमिवासरत् । चमूषु शक्मनासदम् ॥ १६ ॥

पवमानः । सुतः । नृऽभिः । सोमः । वाजम्ऽइव । असरत् । चमूषु । शक्मना । आऽसदम् ॥ १६ ॥

vनृभिः नेतृभिर्ऋत्विग्भिः vसुतः अभिषुतः vसोमः vचमूषु चमसेषु vशक्मना बलेन vआसदम् उपवेष्टुं vवाजमिव युद्धमिव[1] स्थानम् vअसरत् सरति ॥

तं त्रिपृष्ठे त्रिवन्धुरे रथे युञ्जन्ति यातवे । ऋषीणां सप्त धीतिभिः ॥ १७ ॥

तम् । त्रिऽपृष्ठे । त्रिऽवन्धुरे । रथे । युञ्जन्ति । यातवे । ऋषीणाम् । सप्त । धीतिऽभिः ॥ १७ ॥

---

१. भ–'युद्धमिव' नास्ति ।

ᵛत्रिपृष्ठे त्रिषवणपृष्ठे ᵛत्रिवन्धुरे त्रिवेदवन्धुरे ᵛऋषीणां ᵛरथे यज्ञरथे ᵛतं सोमं ᵛसप्त सप्तभिः ᵛधीतिभिः छन्दोभिः ᵛयातवे देवान् प्रति गन्तुं ᵛयुञ्जन्ति ऋत्विजो योजयन्ति ॥

तं सोतारो धनस्पृतमाशुं वाजाय यातवे । हरिं हिनोत वाजिनम् ॥ १८ ॥

तम् । सोतारः । धनऽस्पृतम् । आशुम् । वाजाय । यातवे । हरिम् । हिनोत । वाजिनम् ॥ १८ ॥

हे ᵛसोतारः अभिषवकर्तार ऋत्विजः ᵛधनस्पृतं धनानां स्प्रष्टारं ᵛवाजिनं बलिनम् ᵛआशुं वेगवन्तं ᵛतं सोमात्मकं ᵛहरिम् अश्वं ᵛवाजाय यज्ञाख्यं संग्रामं ᵛयातवे गन्तुं ᵛहिनोत प्रेरयत । यथा योद्धारो युद्धं गन्तुं बलिनं वेगवन्तमश्वं प्रेरयन्ति तद्वत् यज्ञमभिगन्तुं बलवन्तं सोमं प्रेरयतेति भावः ॥

आविशन्कलशं सुतो विश्वा अर्षन्नभि श्रियः । शूरो न गोषु तिष्ठति ॥ १९ ॥

आऽविशन् । कलशम् । सुतः । विश्वाः । अर्षन् । अभि । श्रियः । शूरः । न । गोषु । तिष्ठति ॥ १९ ॥

ᵛसुतः अभिषुतः सोमः ᵛकलशं द्रोणम् ᵛआविशन् ᵛविश्वाः सर्वाः ᵛश्रियः संपदः ᵛअभि ᵛअर्षन् अस्मानभिगमयन् ᵛगोषु शत्रूणां पशुषु ᵛशूरो ᵛन यथा शूरो निःशङ्कः ᵛतिष्ठति तद्वद्यज्ञेषु निःशङ्कस्तिष्ठति ॥

आ त इन्दो मदाय कं पयो दुहन्त्यायवः । देवा देवेभ्यो मधु ॥ २० ॥

आ । ते । इन्दो इति । मदाय । कम् । पयः । दुहन्ति । आयवः । देवाः । देवेभ्यः । मधु ॥ २० ॥

हे ᵛइन्दो सोम ᵛते तव ᵛमधु मधुभूतं ᵛपयः पेयं रसं ᵛदेवाः स्तोतारः ᵛआयवः मनुष्याः ᵛमदाय ᵛकं मदार्थं ᵛदेवेभ्यः इन्द्रादिभ्यः ᵛआ ᵛदुहन्ति ॥ ॥ २७ ॥

आ नः सोमं पवित्र आ सृजता मधुमत्तमम् । देवेभ्यो देवश्रुत्तमम् ॥ २१ ॥

आ । नः । सोमम् । पवित्रे । आ । सृजत । मधुमत्ऽतमम् । देवेभ्यः । देवश्रुत्ऽतमम् ॥ २१ ॥

हे ऋत्विजः ᵛनः अस्माकं ᵛदेवश्रुत्तमम् अत्यन्तं देवैः श्रूयमाणं ᵛमधुमत्तमम् अतिशयेन मधुमन्तं ᵛसोमं ᵛदेवेभ्यः इन्द्राद्यर्थं[1] ᵛपवित्रे दशापवित्रे ᵛआ ᵛसृजत साधयत[2] ॥

एते सोमा असृक्षत गृणानाः श्रवसे महे । मदिन्तमस्य धारया ॥ २२ ॥

एते । सोमाः । असृक्षत । गृणानाः । श्रवसे । महे । मदिन्ऽतमस्य । धारया ॥ २२ ॥

ᵛगृणानाः स्तूयमानाः ᵛएते इमे ᵛसोमाः ᵛमहे महते ᵛश्रवसे अन्नाय ᵛमदिन्तमस्य मादयितृतमस्य रसस्य ᵛधारया ᵛअसृक्षत ऋत्विग्भिः सृज्यन्ते ॥

अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि । सनद्वाजः परि स्रव ॥ २३ ॥

अभि । गव्यानि । वीतये । नृम्णा । पुनानः । अर्षसि । सनत्ऽवाजः । परि । स्रव ॥ २३ ॥

हे सोम ᵛपुनानः पूयमानो यस्त्वं ᵛवीतये भक्षणाय ᵛगव्यानि गोसंबन्धीनि ᵛनृम्णा[3] नृम्णानि धनानि क्षीरादीनि ᵛअभि ᵛअर्षसि अभिगच्छसि स त्वं ᵛसनद्वाजः दीयमानान्नः सन् ᵛपरि ᵛस्रव परिक्षर ॥

उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः । गृणानो जमदग्निना ॥ २४ ॥

उत । नः । गोऽमतीः । इषः । विश्वाः । अर्ष । परिऽस्तुभः । गृणानः । जमत्ऽअग्निना ॥ २४ ॥

१. ग-त३-भ-देवार्थं । २. त३-भ१.२.५.७-प्रक्षिपति; त७-प्रक्षिपत साधयत; भ४-प्रक्षिपत ।
३. त-' नृम्णा ' नास्ति ।

^उत अपि च हे सोम ^जमदग्निना जमदग्निनाम्ना ऋषिणा मया ^गृणानः स्तूयमानस्त्वं ^नः अस्माकं ^गोमतीः गोभिर्युक्तानि ^परिष्टुभः परितः स्तोतव्यानि ^विश्वाः सर्वाणि ^इषः अन्नानि ^अर्ष गच्छ। अस्मभ्यमेवंविधान्यन्नानि देहीत्यर्थः ॥

**पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः। अभि विश्वानि काव्या॥२५॥**

पवस्व। वाचः। अग्रियः। सोम। चित्राभिः। ऊतिऽभिः। अभि। विश्वानि। काव्या॥२५॥

हे ^सोम ^अग्रियः मुख्यस्त्वं ^चित्राभिः पूजनीयैः ^ऊतिभिः रक्षणैः सह ^वाचः अस्मदीयाः स्तुतीः ^अभि[1] ^पवस्व। एतदेव दर्शयति। ^विश्वानि सर्वाणि ^काव्या काव्यानि स्तुत्यात्मकानि वाक्यानि अभि पवस्वेति ॥ ॥ २८ ॥

**त्वं समुद्रिया अपोऽग्रियो वाच ईरयन्। पवस्व विश्वमेजय ॥ २६ ॥**

त्वम्। समुद्रियाः। अपः। अग्रियः। वाचः। ईरयन्। पवस्व। विश्वम्ऽएजय ॥ २६ ॥

हे ^विश्वमेजय विश्वकम्पक सोम ^अग्रियः मुख्यः ^त्वं ^वाचः ^ईरयन् प्रेरयन् ^समुद्रियाः आन्तरिक्षाणि ^अपः उदकानि ^पवस्व धारया क्षर ॥

**तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे। तुभ्यमर्षन्ति सिन्धवः ॥ २७ ॥**

तुभ्य। इमा। भुवना। कवे। महिम्ने। सोम। तस्थिरे। तुभ्यम्। अर्षन्ति। सिन्धवः ॥२७॥

हे ^कवे क्रान्तकर्मन्[2] ^सोम ^तुभ्य तुभ्यं तव ^महिम्ने ^इमा इमानि ^भुवना भुवनानि ^तस्थिरे तिष्ठन्ति। त्वामेव पुरस्कुर्वन्तीत्यर्थः। अपि च ^सिन्धवः नद्यः ^तुभ्यम् एव ^अर्षन्ति गच्छन्ति। त्वदाज्ञामेवानुपालयन्तीत्यर्थः ॥

**प्र ते दिवो न वृष्टयो धारा यन्त्यसश्चतः। अभि शुक्रामुपस्तिरम् ॥ २८ ॥**

प्र। ते। दिवः। न। वृष्टयः। धाराः। यन्ति। असश्चतः। अभि। शुक्राम्। उपऽस्तिरम् ॥२८॥

हे सोम ^ते तव ^असश्चतः असङ्गाः ^धाराः ^दिवः अन्तरिक्षात् ^वृष्टयः ^न वर्षाणीव ^शुक्रां शुक्लवर्णां शुक्लवर्णैः अविलोमभिर्निर्मितम् ^उपस्तिरम् उपस्तीर्यमाणं पवित्रम् ^अभि प्रति ^प्र[3] ^यन्ति[3] ॥

**इन्द्रायेन्दुं पुनीतनोग्रं दक्षाय साधनम्। ईशानं वीतिराधसम् ॥ २९ ॥**

इन्द्राय। इन्दुम्। पुनीतन। उग्रम्। दक्षाय। साधनम्। ईशानम्। वीतिऽराधसम् ॥ २९ ॥

हे ऋत्विजः ^उग्रम् उद्गूर्णं ^दक्षाय बलस्य ^साधनं करणम् ^ईशानं धनानामीश्वरं ^वीतिराधसं दत्तधनम् ^इन्दुं सोमम् ^इन्द्राय इन्द्रार्थं ^पुनीतन पुनीत ॥

**पवमान ऋतः कविः सोमः पवित्रमासदत्। दधत्स्तोत्रे सुवीर्यम् ॥ ३० ॥**

पवमानः। ऋतः। कविः। सोमः। पवित्रम्। आ। असदत्। दधत्। स्तोत्रे। सुऽवीर्यम् ॥३०॥

^ऋतः सत्यभूतः ^कविः क्रान्तकर्मा ^पवमानः ^सोमः अस्मदीये ^स्तोत्रे ^सुवीर्यं शोभनवीर्यं ^दधत् प्रयच्छन् ^पवित्रमासदत् आसीददिति ॥ ॥ २९ ॥

'आ पवस्व' इति त्रिंशदृचं तृतीयं सूक्तं काश्यपस्य निध्रुवेरार्षं गायत्रं पवमानसोमदेवताकम्। तथा चानुक्रान्तम्—'आ पवस्व निध्रुविः काश्यपः' इति। गतो विनियोगः ॥

---

१. ग-त३-भ-प्रति; त४-अति। २. ग-क्रांतप्रज्ञ। ३. ग-त३.६-यंति; भ१.७-प्रयच्छंति।

**आ पवस्व सहस्रिणं रयिं सोम सुवीर्यम् । अस्मे श्रवांसि धारय ॥ १ ॥**

आ । पवस्व । सहस्रिणम् । रयिम् । सोम । सुऽवीर्यम् । अस्मे इति । श्रवांसि । धारय ॥१॥

हे Vसोम त्वं Vसहस्रिणं बहुसंख्याकं Vसुवीर्यं शोभनवीर्यं Vरयिं धनम् Vआ Vपवस्व आभिमुख्येन क्षर । अपि च Vअस्मे[1] अस्मासु Vश्रवांसि अन्नानि Vधारय स्थापय ॥

**इषमूर्जं च पिन्वस इन्द्राय मत्सरिन्तमः । चमूष्वा नि षीदसि ॥ २ ॥**

इषम् । ऊर्जम् । च । पिन्वसे । इन्द्राय । मत्सरिन्ऽतमः । चमूषु । आ । नि । सीदसि ॥२॥

हे सोम Vमत्सरिन्तमः अतिशयेन मदयितृतमस्त्वम्[2] Vइन्द्राय इन्द्रार्थम् Vइषम् अन्नम् Vऊर्जं रसं Vच Vपिन्वसे क्षरसि । अपि च Vचमूषु चमसेषु Vआ Vनि Vषीदसि निषीदसि ॥

**सुत इन्द्राय विष्णवे सोमः कलशे अक्षरत् । मधुमाँ अस्तु वायवे ॥ ३ ॥**

सुतः । इन्द्राय । विष्णवे । सोमः । कलशे । अक्षरत् । मधुऽमान् । अस्तु । वायवे ॥ ३ ॥

Vइन्द्राय इन्द्रार्थं Vविष्णवे विष्ण्वर्थं च Vवायवे वाय्वर्थं च Vसुतः अभिषुतः यः Vसोमः Vकलशे द्रोणकलशे Vअक्षरत् क्षरति सोऽयं सोमः Vमधुमान् मधुररसवान् Vअस्तु भवतु ॥

**एते असृग्रमाशवोऽति ह्वरांसि बभ्रवः । सोमा ऋतस्य धारया ॥ ४ ॥**

एते । असृग्रम् । आशवः । अति । ह्वरांसि । बभ्रवः । सोमाः । ऋतस्य । धारया ॥ ४ ॥

Vबभ्रवः बभ्रुवर्णाः Vआशवः शीघ्राः Vएते इमे Vसोमाः Vऋतस्य उदकस्य Vधारया Vअसृग्रं सृज्यन्ते । Vह्वरांसि रक्षांस्यभिगच्छन्ति च ॥

**इन्द्रं वर्धन्तो अप्तुरः कृण्वन्तो विश्वमार्यम् । अपघ्नन्तो अराव्णः ॥ ५ ॥**

इन्द्रम् । वर्धन्तः । अप्ऽतुरः । कृण्वन्तः । विश्वम् । आर्यम् । अपऽघ्नन्तः । अराव्णः ॥५॥

Vइन्द्रं Vवर्धन्तः वर्धयन्तः Vअप्तुरः उदकस्य प्रेरकाः Vविश्वं सोममस्मदीयकर्मार्थम् Vआर्यं भद्रं Vकृण्वन्तः कुर्वन्तः Vअराव्णः अदातॄन् Vअपघ्नन्तः विनाशयन्तः । अभ्यर्षन्तीत्युत्तरया[3] संबन्धः ॥ ॥ ३० ॥

**सुता अनु स्वमा रजोऽभ्यर्षन्ति बभ्रवः । इन्द्रं गच्छन्त इन्दवः ॥ ६ ॥**

सुताः । अनु । स्वम् । आ । रजः । अभि । अर्षन्ति । बभ्रवः । इन्द्रम् । गच्छन्तः । इन्दवः ॥६॥

Vबभ्रवः बभ्रुवर्णाः Vसुताः अभिषुताः Vइन्दवः सोमाः Vइन्द्रम् Vआ Vगच्छन्तः आभिमुख्येन प्राप्नुवन्तः Vस्वं स्वकीयं Vरजः स्थानम् Vअनु प्रति Vअभ्यर्षन्ति अभिगच्छन्ति ॥

**अया पवस्व धारया यया सूर्यमरोचयः । हिन्वानो मानुषीरपः ॥ ७ ॥**

अया । पवस्व । धारया । यया । सूर्यम् । अरोचयः । हिन्वानः । मानुषीः । अपः ॥ ७ ॥

हे सोम Vमानुषीः मनुष्याणां हितानि Vअपः उदकानि Vहिन्वानः प्रेरयंस्त्वं Vयया धारया Vसूर्यमरोचयः प्राकाशयः[4] तया Vअया अनया Vधारया Vपवस्व क्षर ॥

---

१. त–अस्माकं । २. ग-त७–मादयितृ॰। ३. ग-त३-भ–उत्तरया। ४. ग-त३-भ१.२.७–अप्रकाशयः; त-भ४-मु–प्रकाशयः।

अयुक्त सूर एतशं पवमानो मनावधि । अन्तरिक्षेण यातवे ॥ ८ ॥

अयुक्त । सूरः । एतशम् । पवमानः । मनौ । अधि । अन्तरिक्षेण । यातवे ॥ ८ ॥

पवमानः पूयमानः सोमः मनावधि । मनुर्मनुष्यः । तस्मिन् मनुष्य इत्यर्थः । अन्तरिक्षेण यातवे गन्तुं सूरः सूर्यस्य एतशम् अश्वम् । 'एतग्वः एतशः' इत्यश्वनामसु पाठात् । अयुक्त युङ्क्ते ॥

उत त्या हरितो दश सूरो अयुक्त यातवे । इन्दुरिन्द्र इति ब्रुवन् ॥ ९ ॥

उत । त्याः । हरितः । दश । सूरः । अयुक्त । यातवे । इन्दुः । इन्द्रः । इति । ब्रुवन् ॥ ९ ॥

उत अपि च इन्दुः सोमः इन्द्र इति ब्रुवन् त्याः ताः दश दशसंख्याकाः हरितः दिशः प्रति यातवे गन्तुं सूरः सूर्यस्यैतशम् अयुक्त युनक्ति ॥

परीतो वायवे सुतं गिर इन्द्राय मत्सरम् । अव्यो वारेषु सिञ्चत ॥ १० ॥

परि । इतः । वायवे । सुतम् । गिरः । इन्द्राय । मत्सरम् । अव्यः । वारेषु । सिञ्चत ॥ १० ॥

हे गिरः स्तोतारः यूयं वायवे वाय्वर्थम् इन्द्राय इन्द्रार्थं च सुतम् अभिषुतं मत्सरं मदकरं सोमम् इतः अभिषवदेशादुद्धृत्य अव्यः अवेः वारेषु वालेषु परि षिञ्चत ॥ ॥ ३१ ॥

पवमान विदा रयिमस्मभ्यं सोम दुष्टरम् । यो दूणाशो वनुष्यता ॥ ११ ॥

पवमान । विदाः । रयिम् । अस्मभ्यम् । सोम । दुस्तरम् । यः । दुःऽनशः । वनुष्यता ॥ ११ ॥

हे पवमान सोम यः रयिः वनुष्यता हिंसकेन शत्रुणा दूणाशः नाशयितुमशक्यः तं शत्रुभिः दुष्टरं रयिं धनम् अस्मभ्यं विदाः देहि ॥

अभ्यर्ष सहस्रिणं रयिं गोमन्तमश्विनम् । अभि वाजमुत श्रवः ॥ १२ ॥

अभि । अर्ष । सहस्रिणम् । रयिम् । गोऽमन्तम् । अश्विनम् । अभि । वाजम् । उत । श्रवः ॥ १२ ॥

हे सोम त्वं सहस्रिणं बहुसंख्याकं गोमन्तं गोभिर्युक्तम् अश्विनम् अश्ववन्तं रयिं धनम् अभ्यर्ष अस्मानभिगमय । उत अपि च वाजं बलं श्रवः अन्नं चास्मान् अभि गमय ॥

सोमो देवो न सूर्योऽद्रिभिः पवते सुतः । दधानः कलशे रसम् ॥ १३ ॥

सोमः । देवः । न । सूर्यः । अद्रिऽभिः । पवते । सुतः । दधानः । कलशे । रसम् ॥ १३ ॥

देवो न देव इव सूर्यः रोचमानः सोमः अद्रिभिः ग्रावभिः सुतः अभिषुतः सन् कलशे द्रोणकलशे रसं दधानः धारयन् पवते धारया क्षरति ॥

एते धामान्यार्या शुक्रा ऋतस्य धारया । वाजं गोमन्तमक्षरन् ॥ १४ ॥

एते । धामानि । आर्या । शुक्राः । ऋतस्य । धारया । वाजम् । गोऽमन्तम् । अक्षरन् ॥ १४ ॥

एते अभिषुताः इमे शुक्राः दीप्ताः सोमाः आर्या आर्याणां श्रेष्ठानां यजमानानां धामानि गृहान् प्रति गोमन्तं गोभिर्युक्तं वाजम् अन्नम् ऋतस्य उदकस्य धारया अक्षरन् क्षरन्ति ॥

सुता इन्द्राय वज्रिणे सोमासो दध्याशिरः । पवित्रमत्यक्षरन् ॥ १५ ॥

सुताः । इन्द्राय । वज्रिणे । सोमासः । दधिऽआशिरः । पवित्रम् । अति । अक्षरन् ॥ १५ ॥

ᵛवज्रिणे वज्रवते ᵛइन्द्राय इन्द्रार्थं ᵛसुताः अभिषुताः ᵛदध्याशिरः । दधि आशीराश्रयणद्रव्यं येषां ते दध्याशिरः । दधिसंस्कृताः ᵛसोमासः सोमाः ᵛपवित्रमति अतिक्रम्य ᵛअक्षरन् धारया क्षरन्ति ॥ ॥ ३२ ॥

प्र सोम मधुमत्तमो राये अर्ष पवित्र आ । मदो यो देववीतमः ॥ १६ ॥

प्र । सोम । मधुमत्ऽतमः । राये । अर्ष । पवित्रे । आ । मदः । यः । देवऽवीतमः ॥ १६ ॥

हे ᵛसोम ते तव ᵛयः ᵛमदः रसः ᵛमधुमत्तमः अत्यन्तं मधुमान् ᵛदेववीतमः अतिशयेन देवकामश्च तं रसं ᵛराये अस्माकं धनार्थं ᵛपवित्रे ᵛप्र ᵛआ ᵛअर्ष धारया क्षर ॥

तमीं मृजन्त्यायवो हरिं नदीषु वाजिनम् । इन्दुमिन्द्राय मत्सरम् ॥ १७ ॥

तम् । ईम् इति । मृजन्ति । आयवः । हरिम् । नदीषु । वाजिनम् । इन्दुम् । इन्द्राय । मत्सरम् ॥ १७ ॥

ᵛहरिं हरितवर्णं ᵛवाजिनं बलिनं ᵛमत्सरं मदकरं ᵛतं पवमानम् ᵛईम् एनम् ᵛइन्दुं सोमम् ᵛआयवः मनुष्या ऋत्विजः ᵛनदीषु वसतीवरीषु ᵛमृजन्ति मार्जयन्ति[1] ॥

आ पवस्व हिरण्यवदश्वावत्सोम वीरवत् । वाजं गोमन्तमा भर ॥ १८ ॥

आ । पवस्व । हिरण्यऽवत् । अश्वऽवत् । सोम । वीरऽवत् । वाजम् । गोऽमन्तम् । आ । भर ॥ १८ ॥

हे ᵛसोम त्वं ᵛहिरण्यवत् सुवर्णोपेतम् ᵛअश्ववत् अश्वयुक्तं च ᵛवीरवत् पुत्राद्युपेतं च धनम् ᵛआ ᵛपवस्व अस्मान् प्रति क्षर । अपि च ᵛगोमन्तं पशुभिरुपेतं ᵛवाजम् अन्नम् ᵛआ ᵛभर अस्मभ्यमाहर ॥

परि वाजे न वाजयुमव्यो वारेषु सिञ्चत । इन्द्राय मधुमत्तमम् ॥ १९ ॥

परि । वाजे । न । वाजऽयुम् । अव्यः । वारेषु । सिञ्चत । इन्द्राय । मधुमत्ऽतमम् ॥ १९ ॥

ᵛवाजयुं युद्धकामं ᵛमधुमत्तमम् अतिशयेन मधुमन्तं सोमम् ᵛइन्द्राय इन्द्रार्थं ᵛअव्यः अवेः ᵛवारेषु वालेषु दशापवित्रे ᵛवाजे ᵛन युद्ध इव हे ऋत्विजः ᵛपरि ᵛसिञ्चत ॥

कविं मृजन्ति मर्ज्यं धीभिर्विप्रा अवस्यवः । वृषा कनिक्रदर्षति ॥ २० ॥

कविम् । मृजन्ति । मर्ज्यम् । धीभिः । विप्राः । अवस्यवः । वृषा । कनिक्रत् । अर्षति ॥ २० ॥

ᵛअवस्यवः रक्षणकामाः ᵛविप्राः मेधाविन ऋत्विजः ᵛधीभिः अङ्गुलीभिः ᵛमर्ज्यं मर्जनीयं ᵛकविं क्रान्तकर्माणं यं सोमं ᵛमृजन्ति मार्जयन्ति[2] सोऽयं ᵛवृषा सेचकः सोमः ᵛकनिक्रत् शब्दं कुर्वन् ᵛअर्षति धारया क्षरति ॥ ॥ ३३ ॥

वृषणं धीभिरप्तुरं सोममृतस्य धारया । मती विप्राः समस्वरन् ॥ २१ ॥

वृषणम् । धीभिः । अप्ऽतुरम् । सोमम् । ऋतस्य । धारया । मती । विप्राः । सम् । अस्वरन् ॥ २१ ॥

ᵛविप्राः मेधाविन ऋत्विजः ᵛवृषणं कामानां वर्षकम् ᵛअप्तुरम् अपां प्रेरकं ᵛसोमं ᵛधीभिः अङ्गुलीभिः ᵛमती मत्या स्तुत्या च ᵛऋतस्य उदकस्य ᵛधारया ᵛसमस्वरन् प्रेरयन्ति ॥

पवस्व देवायुषगिन्द्रं गच्छतु ते मदः । वायुमा रोह धर्मणा ॥ २२ ॥

पवस्व । देव । आयुषक् । इन्द्रम् । गच्छतु । ते । मदः । वायुम् । आ । रोह । धर्मणा ॥ २२ ॥

---

१. ग–शोधयंति; त२.३.४.६.७-भ–मर्जयंति । २. त-भ-मु–मर्जयंति ।

हे ᵛदेव द्योतमान सोम ᵛपवस्व धारया क्षर। अपि च ᵛते तव ᵛमदः मदकरो रसः ᵛआयुषक् अनुषक्तम् ᵛइन्द्रं प्रति ᵛगच्छतु। अपि च त्वं ᵛवायुं ᵛधर्मणा धारकेण रसेन ᵛआ ᵛरोह प्राप्नुहि ॥

**पवमान नि तोशसे रयिं सोम श्रवाय्यम्। प्रियः समुद्रमा विश ॥ २३ ॥**

पवमान। नि। तोशसे। रयिम्। सोम। श्रवाय्यम्। प्रियः। समुद्रम्। आ। विश ॥ २३ ॥

हे ᵛपवमान ᵛसोम यस्त्वं ᵛश्रवाय्यं श्रवणीयं ᵛरयिं शत्रूणां धनं ᵛनि ᵛतोशसे नितरां पीडयसि स त्वं ᵛप्रियः सन् ᵛसमुद्रं द्रोणकलशम् ᵛआ ᵛविश प्रविश ॥

**अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः। नुदस्वादेवयुं जनम् ॥ २४ ॥**

अपऽघ्नन्। पवसे। मृधः। क्रतुऽवित्। सोम। मत्सरः। नुदस्व। अदेवऽयुम्। जनम् ॥२४॥

हे ᵛसोम ᵛमत्सरः मदकरो यस्त्वं ᵛमृधः हिंसकान् शत्रून् ᵛअपघ्नन् मारयन् ᵛक्रतुवित् अस्मभ्यं प्रज्ञां प्रयच्छन् ᵛपवसे क्षरसि स त्वम् ᵛअदेवयुम् अदेवकामं ᵛजनं राक्षसवर्गं ᵛनुदस्व प्रेरय ॥

**पवमाना असृक्षत सोमाः शुक्रास इन्दवः। अभि विश्वानि काव्या ॥ २५ ॥**

पवमानाः। असृक्षत। सोमाः। शुक्रासः। इन्दवः। अभि। विश्वानि। काव्या ॥ २५ ॥

ᵛशुक्रासः उज्ज्वलाः ᵛइन्दवः दीप्ताः ᵛपवमानाः क्षरन्तः ᵛसोमाः ᵛविश्वानि ᵛकाव्या काव्यानि स्तोत्राणि ᵛअभि ᵛअसृक्षत सृज्यन्त ऋत्विग्भिः[1] ॥ ॥ ३४ ॥

**पवमानास आशवः शुभ्रा असृग्रमिन्दवः। घ्नन्तो विश्वा अप द्विषः ॥ २६ ॥**

पवमानासः। आशवः। शुभ्राः। असृग्रम्। इन्दवः। घ्नन्तः। विश्वाः। अप। द्विषः ॥ २६ ॥

ᵛआशवः शीघ्राः ᵛशुभ्राः शोभमानाः ᵛपवमानासः क्षरन्तः ᵛइन्दवः दीप्ताः सोमाः ᵛविश्वाः सर्वान् ᵛद्विषः द्वेष्टॄन् शत्रून् ᵛअप ᵛघ्नन्तः मारयन्तः ᵛअसृग्रं सृज्यन्ते ॥

**पवमाना दिवस्पर्यन्तरिक्षादसृक्षत। पृथिव्या अधि सानवि ॥ २७ ॥**

पवमानाः। दिवः। परि। अन्तरिक्षात्। असृक्षत। पृथिव्याः। अधि। सानवि ॥ २७ ॥

ᵛपवमानाः सोमाः ᵛदिवः द्युलोकात् ᵛअन्तरिक्षात् च ᵛपृथिव्याः भूम्याः ᵛअधि ᵛसानवि समुच्छ्रिते देशे देवयजने ᵛपरि ᵛअसृक्षत सृज्यन्ते ॥

**पुनानः सोम धारयेन्दो विश्वा अप स्रिधः। जहि रक्षांसि सुक्रतो ॥ २८ ॥**

पुनानः। सोम। धारया। इन्दो इति। विश्वाः। अप। स्रिधः।
जहि। रक्षांसि। सुक्रतो इति सुऽक्रतो ॥ २८ ॥

हे ᵛइन्दो दीप्त ᵛसुक्रतो सुकर्मन् ᵛसोम ᵛधारया ᵛपुनानः पूयमानस्त्वं ᵛविश्वाः सर्वान् ᵛस्रिधः द्वेष्टॄन् शत्रून् ᵛरक्षांसि राक्षसांश्च ᵛअप ᵛजहि मारय ॥

**अपघ्नन्त्सोम रक्षसोऽभ्यर्ष कनिक्रदत्। द्युमन्तं शुष्ममुत्तमम् ॥ २९ ॥**

अपऽघ्नन्। सोम। रक्षसः। अभि। अर्ष। कनिक्रदत्। द्युऽमन्तम्। शुष्मम्। उत्ऽतमम् ॥२९॥

हे ᵛसोम त्वं ᵛरक्षसः रक्षांसि ᵛअपघ्नन् विनाशयन् ᵛकनिक्रदत् शब्दं कुर्वन् ᵛद्युमन्तं दीप्तिमन्तम् ᵛउत्तमं श्रेष्ठं ᵛशुष्मं बलम् ᵛअभ्यर्ष अस्मान् प्रति पवस्व ॥

---

१. ग-त३-म-' ऋत्विग्भिः ' नास्ति।

अस्मे वसूनि धारय सोम दिव्यानि पार्थिवा । इन्दो विश्वानि वार्या ॥ ३० ॥

अस्मे इति । वसूनि । धारय । सोम । दिव्यानि । पार्थिवा । इन्दो इति । विश्वानि । वार्या ॥३०॥

हे इन्दो दीप्त सोम दिव्यानि दिवि भवानि पार्थिवा पार्थिवानि पृथिव्यां जातानि च विश्वानि[1] सर्वाणि वार्या[1] वार्याणि वरणीयानि वसूनि अस्मे अस्मासु धारय प्रक्षिप ॥ ॥३५॥

' वृषा सोम ' इति त्रिंशदृचं चतुर्थं सूक्तं मारीचस्य कश्यपस्यार्षं गायत्रं पवमानसोम्यम् । तथा चानुक्रान्तं—' वृषा सोम कश्यपः ' इति । उक्तो विनियोगः ॥

वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे ॥ १ ॥

वृषा । सोम । द्युऽमान् । असि । वृषा । देव । वृषऽव्रतः । वृषा । धर्माणि । दधिषे ॥ १ ॥

हे सोम वृषा वर्षकस्त्वं द्युमान् दीप्तिमान् असि । अपि च हे देव द्योतमान सोम वृषा त्वं वृषव्रतः वर्षणशीलकर्मासि । किंच हे सोम वृषा त्वं धर्माणि देवानां मनुष्याणां च हितानि कर्माणि दधिषे धारयसि ॥

वृष्णस्ते वृष्ण्यं शवो वृषा वनं वृषा मदः । सत्यं वृषन्वृषेदसि ॥ २ ॥

वृष्णः । ते । वृष्ण्यम् । शवः । वृषा । वनम् । वृषा । मदः ।
सत्यम् । वृषन् । वृषा । इत् । असि ॥ २ ॥

हे वृषन् कामानां वर्षक सोम वृष्णः वर्षितुः ते तव शवः बलं वृष्ण्यं वर्षणशीलं भवति । वनं तव[2] भजनमपि[2] वृषा वर्षणशीलम् । मदः तव रसोऽपि वृषा वर्षणशीलः । सत्यं सत्यमेव त्वं वृषेत् वर्षणशील एव असि भवसि ॥

अश्वो न चक्रदो वृषा सं गा इन्दो समर्वतः । वि नो राये दुरो वृधि ॥ ३ ॥

अश्वः । न । चक्रदः । वृषा । सम् । गाः । इन्दो इति । सम् । अर्वतः ।
वि । नः । राये । दुरः । वृधि ॥ ३ ॥

हे इन्दो सोम वृषा त्वम् अश्वो न अश्व इव सं चक्रदः संक्रन्दसे । अपि च गाः पशून् अर्वतः अश्वांश्चास्मभ्यं सं प्रयच्छसीति शेषः । किंच नः अस्माकं राये धनाय दुरः द्वाराणि वि वृधि विवृतानि[3] कुरु ॥

असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥ ४ ॥

असृक्षत । प्र । वाजिनः । गव्या । सोमासः । अश्वऽया । शुक्रासः । वीरऽया । आशवः ॥४॥

वाजिनः बलवन्तः शुक्रासः शुक्रा उज्ज्वलाः आशवः वेगवन्तश्च सोमासः सोमाः गव्या गवेच्छया अश्वया अश्वेच्छया च वीरया पुत्रेच्छया च प्र असृक्षत ऋत्विग्भिः[4] सृज्यन्ते[4] ॥

शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः । पवन्ते वारे अव्यये ॥ ५ ॥

शुम्भमानाः । ऋतयुऽभिः । मृज्यमानाः । गभस्त्योः । पवन्ते । वारे । अव्यये ॥ ५ ॥

---

१. ग-भ–' विश्वानि...वार्या ' नास्ति । २. ग–ते संभजनमपि; त४–तव जनमपि; त५–तव मा भजनमपि । ३. ग–वृद्धानि । ४. ग-भ१.७–असृज्यंत; त–ऋत्विग्भिः सृज्यंत सृज्यते; त३-भ२.४–असृंज्यते ।

ऋतायुभिः यज्ञकामैः शुम्भमानाः अलंक्रियमाणाः गभस्त्योः गभस्तिभ्यां बाहुभ्याम्। 'गभस्ती बाहू' इति बाहुनामसु पाठात्। मृज्यमानाः शोध्यमानाः सोमाः अव्यये अविमये वारे वाले पवित्रे पवन्ते क्षरन्ति ॥ ॥ ३६ ॥

**ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा। पवन्तामान्तरिक्ष्या ॥ ६ ॥**

ते। विश्वा। दाशुषे। वसु। सोमाः। दिव्यानि। पार्थिवा। पवन्ताम्। आ। अन्तरिक्ष्या ॥ ६ ॥

ते सोमाः दिव्यानि दिवि भवानि पार्थिवा पार्थिवानि पृथिव्यां संभूतानि च अन्तरिक्ष्या अन्तरिक्ष्याणि अन्तरिक्षे जातानि च विश्वा विश्वानि वसु वसूनि धनानि दाशुषे हविषां प्रदात्रे यजमानाय आ पवन्तां क्षरन्तु[1] ॥

**पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत। सूर्यस्येव न रश्मयः ॥ ७ ॥**

पवमानस्य। विश्वऽवित्। प्र। ते। सर्गाः। असृक्षत। सूर्यस्यऽइव। न। रश्मयः ॥ ७ ॥

हे विश्ववित् विश्वस्य द्रष्टः सोम पवमानस्य क्षरतः ते तव सर्गाः सृज्यमाना धाराः सूर्यस्येव रश्मयः सूर्यस्य किरणा इव प्रकाशमानाः। न इति[2] संप्रत्यर्थे[2]। इदानीं प्र असृक्षत प्रसृज्यन्ते ॥

**केतुं कृण्वन्दिवस्परि विश्वा रूपाभ्यर्षसि। समुद्रः सोम पिन्वसे ॥ ८ ॥**

केतुम्। कृण्वन्। दिवः। परि। विश्वा। रूपा। अभि। अर्षसि। समुद्रः। सोम। पिन्वसे ॥ ८ ॥

हे सोम समुद्रः। समुद्रवन्ति यस्माद्रसाः स समुद्रः। स त्वं केतुं प्रज्ञानं कृण्वन् कुर्वन् अस्माकं विश्वा विश्वानि रूपा रूपाणि दिवः अन्तरिक्षात् अभ्यर्षसि अभिपवसे। पिन्वसे नानाविधानि धनानि चास्मभ्यं प्रयच्छसि ॥

**हिन्वानो वाचमिष्यसि पवमान विधर्मणि। अक्रान्देवो न सूर्यः ॥ ९ ॥**

हिन्वानः। वाचम्। इष्यसि। पवमान। विऽधर्मणि। अक्रान्। देवः। न। सूर्यः ॥ ९ ॥

हे पवमान सोम हिन्वानः प्रेर्यमाणस्त्वं वाचं शब्दम् इष्यसि प्रेरयसि। कदेत्यत्राह। यदा तव रसः सूर्यः देवो न देव इव विधर्मणि विधारके पवित्रे अक्रान् अक्रमीत् तदेत्यर्थः ॥

**इन्दुः पविष्ट चेतनः प्रियः कवीनां मती। सृजदश्वं रथीरिव ॥ १० ॥**

इन्दुः। पविष्ट। चेतनः। प्रियः। कवीनाम्। मती। सृजत्। अश्वम्। रथीःऽइव ॥ १० ॥

चेतनः प्रज्ञापकः प्रियः देवानां प्रीतिकरः इन्दुः सोमः कवीनां क्रान्तकर्मणां स्तोतॄणां मती मत्या स्तुत्या पविष्ट पवते। अश्वं हयं रथीरिव रथीव ऊर्मिं सृजत् सृजति च ॥ ॥ ३७ ॥

**ऊर्मिर्यस्ते पवित्र आ देववीः पर्यक्षरत्। सीदन्नृतस्य योनिमा ॥ ११ ॥**

ऊर्मिः। यः। ते। पवित्रे। आ। देवऽअवीः। परिऽअक्षरत्।
सीदन्। ऋतस्य। योनिम्। आ ॥ ११ ॥

हे सोम ते तव यः देवावीः देवकामः ऊर्मिः तरङ्गः ऋतस्य यज्ञस्य योनिं स्थानम् आ सीदन् पवित्रे पर्यक्षरत् परिक्षरति तमूर्मिं सृजतीति पूर्वत्र संबन्धः ॥

---

१. ग–स्रवंतु। २. ग-त३-भ१.७–'इति संप्रत्यर्थे' नास्ति।

**स नो॑ अर्ष प॒वित्र॒ आ मदो॒ यो दे॑व॒वीत॑मः । इन्द॒विन्द्रा॑य पी॒तये॑ ॥ १२ ॥**

सः । नः॒ । अ॒र्ष॒ । प॒वित्रे॑ । आ । मदः॑ । यः । दे॒व॒ऽवीत॑मः ।
इन्दो॒ इति॑ । इन्द्रा॑य । पी॒तये॑ ॥ १२ ॥

हे ᵛइन्दो ᵛयः त्वं ᵛदेववीतमः अतिशयेन देवकामः ᵛमदः मदकरश्च भवसि ᵛसः त्वं ᵛनः अस्माकं ᵛपवित्रे ᵛइन्द्राय इन्द्रस्य ᵛपीतये पानाय ᵛआ ᵛअर्ष आपवस्व ॥

**इ॒षे प॑वस्व॒ धार॑या मृ॒ज्यमा॑नो मनी॒षिभिः॑ । इन्दो॑ रु॒चाभि गा इ॑हि ॥ १३ ॥**

इ॒षे । प॒व॒स्व॒ । धार॑या । मृ॒ज्यमा॑नः । म॒नी॒षिऽभिः॑ । इन्दो॒ इति॑ । रु॒चा । अ॒भि । गाः । इ॒हि॒ ॥ १३ ॥

हे ᵛइन्दो सोम ᵛमनीषिभिः ऋत्विग्भिः ᵛमृज्यमानः शोध्यमानस्त्वम् ᵛइषे अस्माकमन्नाय ᵛधारया ᵛपवस्व क्षर । ᵛरुचा रोचमानेनान्धसा ᵛगाः पशून् ᵛअभि ᵛइहि अभिगच्छ ॥

**पु॒ना॒नो वरि॑वस्कृ॒ध्यूर्जं॒ जना॑य गिर्वणः । हरे॑ सृजा॒न आ॒शिर॑म् ॥ १४ ॥**

पु॒ना॒नः । वरि॑वः । कृ॒धि॒ । ऊर्ज॑म् । जना॑य । गि॒र्व॒णः॒ । हरे॑ । सृ॒जा॒नः । आ॒ऽशिर॑म् ॥ १४ ॥

हे ᵛगिर्वणः गीर्भिर्वननीय ᵛहरे हरितवर्ण सोम ᵛआशिरं क्षीरं[1] प्रति ᵛसृजानः विसृज्यमानः ᵛपुनानः पूयमानस्त्वं ᵛजनाय यजमानार्थं[2] ᵛवरिवः धनम् ᵛऊर्जम् अन्नं च ᵛकृधि कुरु ॥

**पु॒ना॒नो दे॒ववी॑तय॒ इन्द्र॑स्य याहि निष्कृ॒तम् । द्यु॒ता॒नो वा॒जिभि॑र्य॒तः ॥ १५ ॥**

पु॒ना॒नः । दे॒व॒ऽवी॑तये । इन्द्र॑स्य । या॒हि॒ । निः॒ऽकृ॒तम् । द्यु॒ता॒नः । वा॒जिऽभिः॑ । य॒तः ॥ १५ ॥

हे सोम ᵛद्युतानः दीप्यमानः ᵛवाजिभिः बलिभिर्यजमानैः ᵛयतः संगृहीतः ᵛदेववीतये यज्ञार्थं ᵛपुनानः पूयमानस्त्वम् ᵛइन्द्रस्य ᵛनिष्कृतं स्थानं ᵛयाहि गच्छ ॥　॥ ३८ ॥

**प्र हि॒न्वा॒नास॒ इन्द॒वोऽच्छा॑ समु॒द्रमा॒शवः॑ । धि॒या जू॒ता अ॑सृक्षत ॥ १६ ॥**

प्र । हि॒न्वा॒नासः॑ । इन्द॑वः । अच्छ॑ । स॒मु॒द्रम् । आ॒शवः॑ । धि॒या । जू॒ताः । अ॒सृ॒क्ष॒त॒ ॥ १६ ॥

ᵛआशवः वेगवन्तः ᵛइन्दवः सोमाः ᵛसमुद्रम् अन्तरिक्षम् ᵛअच्छ प्रति ᵛहिन्वानासः हिन्वानाः प्रेर्यमाणाः ᵛधिया अङ्गुल्या ᵛजूताः कृष्टाश्च ᵛप्र ᵛअसृक्षत सृज्यन्ते[3] ॥

**म॒र्मृ॒जा॒नास॑ आ॒यवो॒ वृथा॑ समु॒द्रमिन्द॑वः । अग्म॑न्नृ॒तस्य॒ योनि॒मा ॥ १७ ॥**

म॒र्मृ॒जा॒नासः॑ । आ॒यवः॑ । वृथा॑ । स॒मु॒द्रम् । इन्द॑वः । अग्म॑न् । ऋ॒तस्य॑ । योनि॑म् । आ ॥ १७ ॥

ᵛमर्मृजानासः मर्मृज्यमानाः ᵛआयवः गन्तारः ᵛइन्दवः सोमाः ᵛवृथा आयासं विनैव ᵛसमुद्रम् अन्तरिक्षं गच्छन्ति । एतदेव दर्शयति । ᵛऋतस्य उदकस्य ᵛयोनिं स्थानम् ᵛअग्मन्[4] गच्छन्तीति ॥

**परि॑ णो याह्यस्म॒युर्विश्वा॒ वसू॒न्योज॑सा । पा॒हि नः॒ शर्म॑ वी॒रव॑त् ॥ १८ ॥**

परि॑ । नः॒ । या॒हि॒ । अ॒स्म॒ऽयुः । विश्वा॑ । वसू॑नि । ओज॑सा । पा॒हि । नः॒ । शर्म॑ । वी॒रऽव॑त् ॥ १८ ॥

हे सोम ᵛअस्मयुः अस्मत्कामस्त्वं ᵛनः अस्माकं ᵛविश्वा विश्वानि ᵛवसूनि धनानि ᵛओजसा बलेन सह ᵛपरि ᵛयाहि रक्षार्थं परिगच्छ। अपि च ᵛनः अस्माकं ᵛवीरवत् पुत्रवत् ᵛशर्म गृहं ᵛपाहि रक्ष ॥

---

१. ग-त३.६.भ१.२.७–' क्षीरं ' नास्ति । २. ग-त-भ१.२.४.५–जनार्थं । ३. ग–प्रसृज्यंते; त७-भ२–सृज्यते । ४. त१.२.३.४.५.६-भ१.२.७–आगमन्; भ४–आगमन् ।

मिमाति वह्निरेतशः पदं युजान ऋक्वभिः । प्र यत्समुद्र आहितः ॥ १९ ॥
मिमाति । वह्निः । एतशः । पदम् । युजानः । ऋक्वऽभिः । प्र । यत् । समुद्रे । आऽहितः ॥ १९॥

हे सोम यत्[1] यदा यः[1] वह्निः वहनशीलः एतशः अश्वः मिमाति शब्दं करोति ऋक्वभिः[2] ऋत्विग्भिः स्तोतृभिः पदं[3] यज्ञे युजानः[3] निदधत् स्तोत्रश्रवणार्थमागच्छति च तदा स यज्ञवाहकाश्वात्मा त्वं समुद्रे उदके वसतीवरीषु प्र आहितः भवसि[4] ॥

आ यद्योनिं हिरण्ययमाशुर्ऋतस्य सीदति । जहात्यप्रचेतसः ॥ २० ॥
आ । यत् । योनिम् । हिरण्ययम् । आशुः । ऋतस्य । सीदति । जहाति । अप्रऽचेतसः ॥२०॥

यत् यदा आशुः वेगवान् सोमः ऋतस्य यज्ञस्य हिरण्ययं हिरण्मयं योनिं स्थानम् । ' हिरण्यपाणिरभिषुणोति ' इत्युक्तम् । आ सीदति तदानीम् अप्रचेतसः जहाति विसृजति । अस्तोतॄणां यज्ञं नाभिगच्छति किंतु स्तोतॄणामेव यज्ञमभिगच्छतीत्यर्थः ॥ ॥ ३९ ॥

अभि वेना अनूषतेयक्षन्ति प्रचेतसः । मज्जन्त्यविचेतसः ॥ २१ ॥
अभि । वेनाः । अनूषत । इयक्षन्ति । प्रऽचेतसः । मज्जन्ति । अविऽचेतसः ॥ २१ ॥

वेनाः कान्ताः स्तोतारः अभि अनूषत सोममभिष्टुवन्ति । प्रचेतसः सुमतयः इयक्षन्ति यष्टुमिच्छन्ति च । अविचेतसः । विशिष्टमतयो विचेतसः । अविचेतसो विपरीतमतय इत्यर्थः । मज्जन्ति निमज्जन्ति । ये सोमं नाभिष्टुवन्ति न यजन्ति च ते नरके पतन्तीत्यर्थः ॥

इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । ऋतस्य योनिमासदम् ॥ २२ ॥
इन्द्राय । इन्दो इति । मरुत्वते । पवस्व । मधुमत्ऽतमः । ऋतस्य । योनिम् । आऽसदम् ॥ २२ ॥

हे इन्दो सोम मधुमत्तमः अतिशयेन मधुमांस्त्वम् ऋतस्य यज्ञस्य योनिं स्थानम् आसदम् उपवेष्टुं मरुत्वते इन्द्राय इन्द्रार्थं पवस्व क्षर ॥

तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति वेधसः । सं त्वा मृजन्त्यायवः ॥ २३ ॥
तम् । त्वा । विप्राः । वचःऽविदः । परि । कृण्वन्ति । वेधसः । सम् । त्वा । मृजन्ति । आयवः ॥२३॥

हे सोम तं पवमानं त्वा त्वां विप्राः प्राज्ञाः वेधसः कर्मणां कर्तारः[5] वचोविदः स्तोतारः परिष्कृण्वन्ति अलंकुर्वन्ति । अपि च त्वा त्वाम् आयवः मनुष्याः सं मृजन्ति सम्यक् शोधयन्ति ॥

रसं ते मित्रो अर्यमा पिबन्ति वरुणः कवे । पवमानस्य मरुतः ॥ २४ ॥
रसम् । ते । मित्रः । अर्यमा । पिबन्ति । वरुणः । कवे । पवमानस्य । मरुतः ॥ २४ ॥

हे कवे क्रान्तकर्मन् सोम पवमानस्य क्षरतः ते तव रसं मित्रः अर्यमा च वरुणः च मरुतः च एते सर्वे देवाः पिबन्ति ॥

त्वं सोम विपश्चितं पुनानो वाचमिष्यसि । इन्दो सहस्रभर्णसम् ॥ २५ ॥
त्वम् । सोम । विपःऽचितम् । पुनानः । वाचम् । इष्यसि । इन्दो इति । सहस्रऽभर्णसम् ॥२५॥

---

१. ग–यस्त्वदीयो । २. ग–यदा ऋक्वभिः । ३. त१.२.६.७–मु–पदं युजानो यज्ञे युजानो; त५–पदं यज्ञे युजानो युजानो; भ४–पदं यज्ञे युंजानो । ४. त३–भ१.७–भवति । ५. ग–धावितरो ( ? विधातारो ) ।

हे ᐯइन्दो दीप्त ᐯसोम ᐯपुनानः पूयमानः ᐯत्वं ᐯविपश्चितं प्रज्ञया पवित्रां ᐯसहस्रभर्णसं बहुभरणां ᐯवाचम् ᐯइष्यसि प्रेरयसि ॥ ॥ ४० ॥

उतो सहस्रभर्णसं वाचं सोम मखस्युवम्। पुनान इन्दवा भर ॥ २६ ॥

उतो इति। सहस्रऽभर्णसम्। वाचम्। सोम। मखस्युवम्।
पुनानः। इन्दो इति। आ। भर ॥ २६ ॥

ᐯउतो अपि च हे ᐯइन्दो दीप्त ᐯसोम ᐯपुनानः पूयमानस्त्वं ᐯसहस्रभर्णसं सहस्रभरणां ᐯमखस्युवं धनकामां ᐯवाचम् अस्मभ्यम् ᐯआ ᐯभर आहर ॥

पुनान इन्दवेषां पुरुहूत जनानाम्। प्रियः समुद्रमा विश ॥ २७ ॥

पुनानः। इन्दो इति। एषाम्। पुरुऽहूत। जनानाम्। प्रियः। समुद्रम्। आ। विश ॥ २७ ॥

हे ᐯपुरुहूत बहुभिराहूत ᐯइन्दो सोम ᐯपुनानः पूयमानस्त्वम् ᐯएषाम् अस्मिन् यागे स्तोत्रं कुर्वतां ᐯजनानां ᐯप्रियः सन् ᐯसमुद्रं द्रोणकलशम् ᐯआ ᐯविश प्रविश ॥

दविद्युतत्या रुचा परिष्टोभन्त्या कृपा। सोमाः शुक्रा गवाशिरः ॥ २८ ॥

दविद्युतत्या। रुचा। परिऽस्तोभन्त्या। कृपा। सोमाः। शुक्राः। गोऽआशिरः ॥ २८ ॥

ᐯशुक्राः उज्ज्वलाः ᐯदविद्युतत्या द्योतमानया ᐯरुचा दीप्त्या ᐯपरिष्टोभन्त्या परितः शब्दायमानया ᐯकृपा धारया च युक्ताः ᐯसोमाः ᐯगवाशिरः भवन्ति। गव्येन पयसा मिश्रिता भवन्तीत्यर्थः॥

हिन्वानो हेतृभिर्यत आ वाजं वाज्यक्रमीत्। सीदन्तो वनुषो यथा ॥ २९ ॥

हिन्वानः। हेतृऽभिः। यतः। आ। वाजम्। वाजी। अक्रमीत्।
सीदन्तः। वनुषः। यथा ॥ २९ ॥

ᐯवाजी बलवान्[1] सोमः ᐯहेतृभिः प्रेरकैः स्तोतृभिः ᐯहिन्वानः स्तोत्रैः प्रेर्यमाणः ᐯयतः संयतः सन् ᐯवाजं यागाख्यं युद्धम् ᐯआ ᐯअक्रमीत् आक्रामति। तत्र दृष्टान्तः। ᐯयथा ᐯवनुषः हन्तारो भटाः ᐯसीदन्तः युद्धं प्रविशन्तः आक्रामन्ति[2] तद्वदित्यर्थः ॥

ऋधक्सोम स्वस्तये संजग्मानो दिवः कविः। पवस्व सूर्यो दृशे ॥ ३० ॥

ऋधक्। सोम। स्वस्तये। सम्ऽजग्मानः। दिवः। कविः। पवस्व। सूर्यः। दृशे ॥ ३० ॥

हे ᐯसोम ᐯकविः क्रान्तः ᐯसूर्यः सुवीर्यस्त्वम् ᐯऋधक् ऋध्नुवन्। तथा च यास्कः—'ऋधगिति पृथग्भावस्यानुप्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते' ( निरु. ४. २५ ) इति। ᐯसंजग्मानः संगच्छमानः ᐯस्वस्तये ᐯदृशे दर्शनाय च ᐯदिवः ᐯपवस्व क्षर ॥ ॥ ४१ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण[3] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके प्रथमोऽध्यायः ॥

---

१. भ७–वेजनवान्। २. त-मु–आक्रमंति; भ७–अकमांति। ३. ग-त१.२.३.४.५-भ१.२.४–सायणामात्येन।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

'हिन्वन्ति' इति त्रिंशदृचं पञ्चमं सूक्तं वरुणपुत्रस्य भृगोरार्षं भार्गवस्य जमदग्नेर्वा गायत्रं पवमानसोमदेवताकम्। तथा चानुक्रम्यते–'हिन्वन्ति भृगुर्वारुणिर्जमदग्निर्वा' इति। गतो विनियोगः॥

**हिन्वन्ति सूरमुस्रयः स्वसारो जामयस्पतिम्। महामिन्दुं महीयुवः॥ १॥**

हिन्वन्ति। सूरम्। उस्रयः। स्वसारः। जामयः। पतिम्। महाम्। इन्दुम्। महीयुवः॥ १॥

अत्र सर्वत्र पवमानः सोमः स्तूयते। तत्रादावृषिः सोमं प्रत्याह। मदीया अङ्गुलयस्त्वामभिषोतुं प्रेरयन्तीति। तदुच्यते। ᵛस्वसारः। अङ्गुलिनामैतत्। सुष्ठु कर्मसु प्रेर्यन्त ऋत्विग्भिरिति स्वसारः। ᵛजामयः एकस्मात्पाणेरुत्पन्नत्वात्[1] परस्परं बन्धुभूताः ᵛउस्रयः कर्मार्थं निवसन्त्यः। सर्वत्र गन्त्र्य इत्यर्थः। तादृश्योऽङ्गुलयः ᵛमहीयुवः त्वदभिषवं कामयमानाः सत्यः ᵛसूरं सुवीर्यं सोमे पीते वीर्यं भवतीति शोभनवीर्यकारणं वा सर्वेषां कर्मणि प्रेरकं वा तादृशं ᵛपतिं सर्वस्य स्थावरजङ्गमजातस्य स्वामिनं यस्माद्देवार्थमिज्यते अत[2] एव ᵛमहां देवेभ्यो दीयमानत्वेन महान्तं महनीयं वा ᵛइन्दुं ग्रहेषु स्यन्दमानं सोमं ᵛहिन्वन्ति प्रेरयन्ति। 'हि वर्धनगत्योः'। स्वादिः॥

**पवमान रुचारुचा देवो देवेभ्यस्परि। विश्वा वसून्या विश॥ २॥**

पवमान। रुचाऽरुचा। देवः। देवेभ्यः। परि। विश्वा। वसूनि। आ। विश॥ २॥

हे ᵛपवमान दशापवित्रेण पूयमान यद्वा पुनान शुद्ध सोम ᵛरुचारुचा। 'रुच दीप्तौ'। सर्वेण तेजसा ᵛदेवः दीप्यमानस्त्वं ᵛदेवेभ्यः ᵛपरि देवेभ्यः सकाशात् ᵛविश्वा व्याप्तानि सर्वाणि बहूनि ᵛवसूनि धनानि अस्माकम् ᵛआ ᵛविश प्रापय। यद्वा। देवेभ्यस्तदर्थं सर्वाणि वसूनि निवासस्थानानि ग्रहादीनि आ विश समन्तात् प्रविश॥

**आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः। इषे पवस्व संयतम्॥ ३॥**

आ। पवमान। सुऽस्तुतिम्। वृष्टिम्। देवेभ्यः। दुवः। इषे। पवस्व। सम्ऽयतम्॥ ३॥

हे ᵛपवमान पूयमान पुनान वा सोम ᵛसुष्टुतिं शोभनस्तुतियुक्तां ᵛवृष्टिं ᵛदेवेभ्यः देवानां ᵛदुवः। 'सुपां सुलुक्°' इति चतुर्थ्या लुक्। दुवसे परिचरणाय ᵛआ ᵛपवस्व आगमय। त्वं यथा मदीयया स्तुत्या वृष्टिर्भविष्यति तथा कुर्वित्यर्थः। किं चास्माकम् ᵛइषे अन्नार्थं च ᵛसंयतं सम्यगस्मान् संगच्छन्तीं वृष्टिं कुरु। यद्वा। दुवः परिचर्यामभिलक्ष्य क्रियमाणां सुष्टुतिं शोभनस्तुतिरूपां वृष्टिम्। बहुस्तुतिमित्यर्थः। एतां देवेभ्यः प्रापय॥

**वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे। पवमान स्वाध्यः॥ ४॥**

वृषा। हि। असि। भानुना। द्युऽमन्तम्। त्वा। हवामहे। पवमान। सुऽआध्यः॥ ४॥

हे सोम त्वं ᵛवृषा अभिमतफलानां वर्षिता ᵛअसि ᵛहि भवसि खलु। तस्मात् हे ᵛपवमान

१. भ१(२)–एकस्मिन् पाणौ अत्यासन्नत्वात्। २. त३-भ१.२.७–तं अत।

पूयमान पुनान वा सोम ᵛस्वाध्यः शोभनकर्माणः सुष्ठु ध्यानवन्तो वा वयं ᵛभानुना तेजसा ᵛद्युमन्तं दीप्तिमन्तम् । अतिशयेन तेजस्विनमित्यर्थः । स्तुतिमन्तं वा ᵛत्वा त्वां ᵛहवामहे यज्ञेष्वाह्वयामहे ॥

**आ पवस्व सुवीर्यं मन्दमानः स्वायुध । इहो ष्विन्दवा गहि ॥ ५ ॥**

आ । पवस्व । सुऽवीर्यम् । मन्दमानः । सुऽआयुध । इहो इति । सु । इन्दो इति । आ । गहि ॥५॥

हे ᵛस्वायुध । यज्ञे स्फ्यकपालादीनि दशायुधानीत्यभिधीयन्ते । शोभनानि तानि यस्य स तथोक्तः। यद्वा । धनुरादीन्यायुधानि यस्य सः । तादृश हे सोम त्वं ᵛमन्दमानः मोदमानः सन् । यद्वा । अन्तर्णीतण्यर्थः । देवान् स्वयं मादयन् । ᵛसुवीर्यं शोभनवीर्योपेतं पुत्रादिकमस्माकम् ᵛआ ᵛपवस्व । पवतिर्गत्यर्थः । आप्रापय । किंच हे ᵛइन्दो ग्रहेषु चमसेषु च क्षरणशील सोम ᵛइहो । इह उ पदद्वयम् । उ इत्यवधारणे । इहैवास्मदीये यज्ञ एव सुष्ठु ᵛआ ᵛगहि आगच्छ ॥     ॥ १ ॥

**यदद्भिः परिषिच्यसे मृज्यमानो गभस्त्योः । द्रुणा सधस्थमश्नुषे ॥ ६ ॥**

यत् । अत्ऽभिः । परिऽसिच्यसे । मृज्यमानः । गभस्त्योः । द्रुणा । सधऽस्थम् । अश्नुषे ॥६॥

हे सोम ᵛगभस्त्योः । बाहुनामैतत् । बभस्ति दीपयन्ति निर्मथ्नन्त्याभ्यामग्निमिति गभस्ती बाहू । तयोः ᵛमृज्यमानः ताभ्यां शोध्यमानः सन् ᵛअद्भिः । सोमसेचनार्थं चतुर्विधा आपः । ताभिर्वसतीवरीभिरेकधनाभिश्च ᵛयत् यदा ᵛपरिषिच्यसे परितः सिच्यमानो भवसि तदानीं ᵛद्रुणा द्रुममयेन पात्रेण गृह्यमाणः सन् ᵛसधस्थम् । सह तिष्ठन्त्यत्रेति सधस्थं स्थानं ग्रहचमसादिकम् । ᵛअश्नुषे प्राप्नोषि ॥

**प्र सोमाय व्यश्ववत्पवमानाय गायत । महे सहस्रचक्षसे ॥ ७ ॥**

प्र । सोमाय । व्यश्वऽवत् । पवमानाय । गायत । महे । सहस्रऽचक्षसे ॥ ७ ॥

हे स्तोतारः ᵛपवमानाय दशापवित्रेण पूयमानाय पुनानाय वा ᵛसोमाय ᵛप्र ᵛगायत प्रकर्षेण सामगानं[1] कुरुत । अभिष्टुत वा । कथमिव । ᵛव्यश्ववत् । यथा पूर्वं व्यश्वो नामर्षिः सोममगासीत् तद्वद्यूयमपि । कीदृशाय । ᵛमहे महते । देवेभ्यः स्वीक्रियमाणत्वेन गुणादिभिर्वा महत्त्वयुक्ताय ᵛसहस्रचक्षसे । प्रयोगबाहुल्यापेक्षमेतद्वचनम् । सहस्रसंख्याकस्तोत्रयुक्ताय । यद्वा । नानाविधैर्देवैरनेकधा द्रष्टव्याय सोमायेति ॥

**यस्य वर्णं मधुश्चुतं हरिं हिन्वन्त्यद्रिभिः । इन्दुमिन्द्राय पीतये ॥ ८ ॥**

यस्य । वर्णम् । मधुऽश्चुतम् । हरिम् । हिन्वन्ति । अद्रिऽभिः । इन्दुम् । इन्द्राय । पीतये ॥८॥

हे अध्वर्य्वादयः ᵛवर्णं शत्रूणां वारकम् । येनासौ पीयते तेन मत्तेन शत्रवः संप्रह्रियन्त इति शत्रुनिवारणसमर्थम् । ᵛमधुश्चुतं मधुररसस्य च्यावयितारं[2] ᵛहरिं[3] हरितवर्णम् ᵛइन्दुम् । इन्धेरेतद्रूपमत्रेष्यते । सर्वतो दीप्यमानम् । 'उन्दी क्लेदने' इत्यस्माद्वा । अभिषवानन्तरं पात्रेषु क्षरणशीलम् । ᵛयस्य सोमस्य तव कारणमंशुम् ᵛअद्रिभिः ᵛहिन्वन्ति प्रेरयन्ति । अभिषुण्वन्तीत्यर्थः । ᵛइन्द्राय ᵛपीतये इन्द्रस्य पानाय । तदर्थमित्यर्थः ॥

---

१. ग–साम गायत गानं; त१.३.४.५.६-भ१.२.४–साम गायमानं; त२–सामणायमानं; त७–सामगायनं । २. ग-त३-भ५–च्यावयितारं क्षारयितारं । ३. त–रसं ।

तस्यं ते वाजिनों वयं विश्वा धनानि जिग्युषः । सखित्वमा वृणीमहे ॥ ९ ॥

तस्यं । ते । वाजिनंः । वयम् । विश्वां । धनानि । जिग्युषंः । सखिऽत्वम् । आ । वृणीमहे ॥९॥

हे सोम ᵛवाजिनः संभृतहविष्काः ᵛवयं ᵛविश्वा विश्वानि सर्वाणि व्याप्तानि वा शत्रुधनानि ᵛजिग्युषः जितवतः ᵛतस्य पूर्वोक्तलक्षणस्य प्रसिद्धस्य वा ᵛते तव ᵛसखित्वं स्तुत्यस्तोतृलक्षणं सख्यम् ᵛआ ᵛवृणीमहे संभजामहे। अस्मभ्यं धनं देहीति संभजनं कुर्म इत्यर्थः ॥ जिग्युषः । 'जि जये'। लिटि क्वसौ 'वस्वेकाजात्°' इति नियमादिडभावः । 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य कवर्गादेशः । ङसि परतो वसोः संप्रसारणम् । क्वसुप्रत्ययस्वरः ॥

वृषा पवस्व धारया मरुत्वते च मत्सरः । विश्वा दधान ओजसा ॥ १० ॥

वृषां । पवस्व । धारंया । मरुत्वंते । च । मत्सरः । विश्वां । दधानः । ओजंसा ॥ १० ॥

हे सोम त्वं ᵛवृषा स्तोतृणामभिमतफलस्य वर्षकः सन् ᵛधारया त्वदीयया ᵛपवस्व द्रोणकलशमागच्छ। पवतिर्गतिकर्मा । आगतस्त्वं[1] यदास्माभिरिन्द्राय दीयसे तदा ᵛमरुत्वते सहाया मरुतो यस्य सन्ति तस्मा इन्द्राय ᵛमत्सरः मदकरः ᵛच भव। कीदृशः । ᵛविश्वा विश्वानि सर्वाणि व्याप्तानि वा धनानि ᵛओजसा आत्मीयेन बलेन युक्तः सन् स्तोतृभ्यस्तानि ᵛदधानः प्रयच्छन् । त्वं मादयिता भवेति समन्वयः ॥ ॥ २ ॥

तं त्वां धर्तारमोण्यो३ः पवमान स्वर्दृशम् । हिन्वे वाजेषु वाजिनम् ॥ ११ ॥

तम् । त्वा । धर्तारम् । ओण्योः । पवमान । स्वःऽदृशम् । हिन्वे । वाजेषु । वाजिनम् ॥११॥

हे ᵛपवमान पूयमान पुनान वा हे सोम ᵛओण्योः। द्यावापृथिवीनामैतत् । तयोः ᵛधर्तारं धारकमत एव ᵛस्वर्दृशं सर्वस्य सूर्यस्य वा द्रष्टारं सर्वैर्देवैर्द्रष्टव्यं वा ᵛवाजिनं बलवन्तं ᵛतं पूर्वोक्तगुणप्रसिद्धं[2] ᵛत्वा त्वां ᵛवाजेषु संग्रामेषु ᵛहिन्वे प्रेरयामि। यद्वा। वाजेष्वन्नेषु विषयेषु हिनोमि । अन्नादिकं प्रयच्छेत्यर्थः ॥

अया चित्तो विपानया हरिः पवस्व धारया । युजं वाजेषु चोदय ॥ १२ ॥

अया । चित्तः । विपा । अनया । हरिः । पवस्व । धारया । युजम् । वाजेषु । चोदय ॥१२॥

हे पवमान ᵛअया। 'अय पय गतौ'। कर्मार्थमितस्ततो गच्छन्तीभिरनया ᵛविपा। 'विप प्रेरणे'। हवींष्यग्नौ प्रेरयन्तीति विपोऽङ्गुलयः। एकवचनं छान्दसम्। प्रत्येकविवक्षया वा। एताभिर्मदीयाभिरङ्गुलीभिः ᵛचित्तः ज्ञातः निर्गतोऽभिषुतः ᵛहरिः हरितवर्णस्त्वं धारया संततया ᵛपवस्व द्रोणकलशं ग्रहांश्चागच्छ त्वम्। किंच ᵛयुजं सखायमिन्द्रं ᵛवाजेषु संग्रामेषु ᵛचोदय प्रेरय। यदा अस्माभिरिन्द्रार्थं सोमो दीयते तदा तत्पानेन हृष्टः सन् शत्रून् हन्तीत्यर्थः ॥

आ न इन्दो महीमिषं पवस्व विश्वदर्शतः । अस्मभ्यं सोम गातुवित् ॥ १३ ॥

आ । नः । इन्दो इति । महीम् । इषम् । पवस्व । विश्वऽदर्शतः ।

अस्मभ्यम् । सोम । गातुऽवित् ॥ १३ ॥

१. ग–एवंभूतस्त्वं । २. ग-न३-भ–पूर्वोक्तगुणं प्रसिद्धं; त-मु–पूर्वोक्तगुणसिद्धं ।

हे ᵛइन्दो क्षरणशील दीपनशील वा हे सोम ᵛविश्वदर्शतः विश्वैः सर्वैर्दर्शनीयः। यद्वा। विश्वं सर्वं वस्तुजातं दृश्यते ज्ञाप्यतेऽनेनेति । सः विश्वस्य प्रकाशक[1] इत्यर्थः। तादृशस्त्वं ᵛमहीमिषं महत्प्रभूतमन्नं ᵛनः अस्मभ्यम् ᵛआ ᵛपवस्व आगमय। प्रयच्छेत्यर्थः। किंच हे ᵛसोम अभिपूयमाण पवमान ᵛअस्मभ्यं ᵛगातुवित् स्वर्गमार्गस्य[2] लम्भयिता ज्ञापयिता भव ॥

आ कलशा अनूषतेन्दो धाराभिरोजसा। एन्द्रस्य पीतये विश ॥ १४ ॥

आ। कलशाः। अनूषत। इन्दो इति। धाराभिः। ओजसा। आ। इन्द्रस्य। पीतये। विश ॥ १४॥

हे ᵛइन्दो क्षरणशील सोम ᵛओजसा बलेन युक्तस्य तव ᵛधाराभिः निरन्तराभिः सहिताः ᵛकलशाः। प्रयोगबाहुल्यापेक्षमेतद्बहुवचनम्। द्रोणकलशाः ᵛआ[3] ᵛअनूषत[3] स्तोतृभिः[4] आभिमुख्येन स्तूयन्ते। सोमाभिषवकाले हि ऋत्विजः स्तुवन्ति खलु। ततस्त्वम् ᵛइन्द्रस्य ᵛपीतये पानाय ᵛआ ᵛविश ग्रहांश्चमसांश्च प्रविश ॥

यस्य ते मद्यं रसं तीव्रं दुहन्त्यद्रिभिः। स पवस्वाभिमातिहा ॥ १५ ॥

यस्य। ते। मद्यम्। रसम्। तीव्रम्। दुहन्ति। अद्रिऽभिः। सः। पवस्व। अभिमातिऽहा॥१५॥

हे सोम ᵛयस्य ᵛते तव ᵛमद्यं मदकरं ᵛतीव्रं क्षिप्रं मदकारिणं ᵛरसम् ᵛअद्रिभिः ग्रावभिरध्वर्य्वादयः ᵛदुहन्ति अभिषुण्वन्ति ᵛसः[5] तादृशस्त्वं[5] ᵛअभिमातिहा। अभितो मातिरभिमानं येषां ते शत्रवः। पापरूपाणां शत्रूणां हन्ता सन् ᵛपवस्व सर्वतो गच्छ। येऽभिषुण्वन्ति ते पापरहिताः सुकृतिनो भवन्तीत्यर्थः ॥ ॥ ३ ॥

राजा मेधाभिरीयते पवमानो मनावधि। अन्तरिक्षेण यातवे ॥ १६ ॥

राजा। मेधाभिः। ईयते। पवमानः। मनौ। अधि। अन्तरिक्षेण। यातवे ॥ १६ ॥

ᵛमनौ मनुष्ये यागं कुर्वाणे सति। यद्वा। मनावधि। मनुर्मन्तव्यो यज्ञः। तस्मिन् ᵛपवमानः पूयमानः पुनानो वा ᵛराजा। राजशब्देन सोमोऽभिधीयते। 'सोमं राजानमक्रीणन्' (ऐ. ब्रा. १.२७) इत्यादिषु दृष्टत्वात्। स राजा ᵛमेधाभिः स्तुतिभिः सह[6] ᵛईयते गच्छति। किमर्थम्। ᵛअन्तरिक्षेण आकाशमार्गेण द्रोणकलशं प्रति ᵛयातवे यातुम्। द्रोणाभिगमनकाले हि स्तोतृभिः स्तूयते खलु ॥

आ न इन्दो शतग्विनं गवां पोषं स्वश्व्यम्। वहा भगत्तिमूतये ॥ १७ ॥

आ। नः। इन्दो इति। शतऽग्विनम्। गवाम्। पोषम्। सुऽअश्व्यम्। वह। भगत्तिम्। ऊतये॥१७॥

हे ᵛइन्दो पात्रेषु क्षरणशील दीपनशील वा हे सोम ᵛशतग्विनं शतसहस्रसंख्याभिर्गोभिर्युक्तं ᵛगवां ᵛपोषं गवादीनां पुष्टिवर्धनं ᵛस्वश्व्यं शोभनाश्वसङ्घसहितं ᵛभगत्तिं भगदत्तिं भजनीयधनदानं च ᵛऊतये रक्षणार्थं ᵛनः अस्माकम् ᵛआ ᵛवह प्रापय। गवादींश्च तेषां च वृद्धिं प्रयच्छेत्यर्थः ॥

आ नः सोम सहो जुवो रूपं न वर्चसे भर। सुष्वाणो देववीतये ॥ १८ ॥

आ। नः। सोम। सहः। जुवः। रूपम्। न। वर्चसे। भर। सुस्वानः। देवऽवीतये ॥१८॥

१. त-प्रकाशकस्य; भ२-प्रकाशस्य। २. त३-स्वर्गस्य। ३. त-अनूषत। ४. ग-ऋत्विग्भिः। ५. भ५-एतादृशस्त्वं। ६. ग-स्तुतः।

हे ᵛसोम ᵛदेववीतये देवपानाय देवानां कामाय वा ᵛसुष्वाणः अभिषूयमाणोऽभिषुतो भव त्वम्। ᵛमहः शत्र्वभिभवनसमर्थं बलं ᵛजुवः। जु इति गत्यर्थः। शत्रून् प्रति शीघ्रगमनं च। यद्वा। सर्वतो गमनशीलं बलं च। ᵛन इति चार्थे। ᵛवर्चसे। 'वर्च दीप्तौ'। दीप्त्यै सर्वत्र प्रकाशनाय ᵛरूपं च ᵛनः अस्मभ्यम् ᵛआ ᵛभर आहर प्रयच्छ॥

**अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्। सीदञ्छ्येनो न योनिमा॥ १९॥**

अर्ष। सोम। द्युमत्ऽतमः। अभि। द्रोणानि। रोरुवत्।
सीदन्। श्येनः। न। योनिम्। आ॥ १९॥

हे ᵛसोम अभिषूयमाण पवमान ᵛद्युमत्तमः अतिशयेन दीप्तिमांस्त्वं ᵛद्रोणानि। प्रयोगबाहुल्यापेक्षमेतद्बहुवचनम्। द्रोणान् ᵛअभि लक्ष्यीकृत्य ᵛरोरुवत् पुनःपुनर्भृशं वा शब्दं कुर्वन् ᵛअर्ष तानागच्छ। दशापवित्रमध्यान्निर्गतः सोमोऽविच्छिन्नधारया द्रोणकलशे[1] पतन् शब्दं करोति खलु। तत्र दृष्टान्तः। ᵛश्येनो ᵛन यथा ᵛआ ᵛसीदन् सर्वतो गच्छन् श्येनः शंसनीयगतिः[2] पक्षी ᵛयोनिं स्वस्थानं कुलायं प्रति भृशं शब्दायमानः सन्नागच्छति तद्वत्॥

**अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः। सोमो अर्षति विष्णवे॥ २०॥**

अप्साः। इन्द्राय। वायवे। वरुणाय। मरुत्ऽभ्यः। सोमः। अर्षति। विष्णवे॥ २०॥

ᵛअप्साः वसतीवरीनामधेयानामपां संभक्ता। 'षण संभक्तौ'। 'जनसन°' इति विट्। आत्वं 'विड्वनोः' इति। तादृशः ᵛसोमः ᵛअर्षति द्रोणकलशमागच्छति। किमर्थम्। ᵛइन्द्राय। सर्वदेवानां प्रथम[3] एवेन्द्रः सोमं पिबति तस्मात्पूर्वमेवाभिहितः। तस्मै ᵛवायवे तत्सहायाय च। ऐन्द्रवायवे हीन्द्रस्यानन्तरं वायुः सोमं पिबति तस्मात्तदनु वायुरुक्तः। तस्मै च ᵛवरुणाय ᵛमरुद्भ्यः मितं शब्दं कुर्वद्भ्य एतन्नामकेभ्यो देवेभ्यः ᵛविष्णवे सर्वजगद्व्यापिने विष्णवे च। एतेषां पातुं सोमः स्रवतीत्यर्थः॥ ॥ ४॥

**इषं तोकाय नो दधदस्मभ्यं सोम विश्वतः। आ पवस्व सहस्रिणम्॥ २१॥**

इषम्। तोकाय। नः। दधत्। अस्मभ्यम्। सोम। विश्वतः। आ। पवस्व। सहस्रिणम्॥ २१॥

हे ᵛसोम त्वं ᵛनः अस्माकं ᵛतोकाय पुत्राय ᵛइषम् अन्नं ᵛदधत् विदधत् प्रयच्छन् ᵛसहस्रिणं सहस्रसंख्याकं धनं ᵛविश्वतः सर्वतो दिक्षु ᵛअस्मभ्यं च[4] ᵛआ ᵛपवस्व आप्रापय। अस्मभ्यं पुत्राय च अन्नधनादिकं प्रयच्छेत्यर्थः॥

**ये सोमासः परावति ये अर्वावति सुन्विरे। ये वादः शर्यणावति॥ २२॥**

ये। सोमासः। पराऽवति। ये। अर्वाऽवति। सुन्विरे। ये। वा। अदः। शर्यणाऽवति॥ २२॥

एतदादिभ्यामृग्भ्यामिन्द्रार्थं सर्वत्र सोमाभिषवोऽस्तीत्याह। ᵛये ᵛसोमासः सोमाः ᵛपरावति विप्रकृष्टेऽतिदूरे देशे ᵛये वा ᵛअर्वावति अन्तिके देशे इन्द्रार्थं ᵛसुन्विरे अभिषूयन्ते अभ्यषूयन्त ᵛये ᵛवा ᵛशर्यणावति। कुरुक्षेत्रस्य जघनार्धे शर्यणावत्संज्ञकं मधुररसयुक्तं सोमवत्सरोऽस्ति। ᵛअदः अस्मिन् सरसि सुरसा ये सोमाः इन्द्रायाभिषूयन्ते तेऽस्माकमभिमतफलं प्रयच्छन्त्विति वक्ष्यमाणेन संबन्धः॥

१. ग-त३-भ१.७-'द्रोणकलशे' नास्ति। २. न-शंसनीयं गच्छति। ३. ग-त३-भ१.४.७-प्रथमत। ४. न-मु-वा।

य आर्जीकेषु कृत्वसु ये मध्ये पुस्त्यानाम् । ये वा जनेषु पञ्चसु ॥ २३ ॥

ये । आर्जीकेषु । कृत्वऽसु । ये । मध्ये । पुस्त्यानाम् । ये । वा । जनेषु । पञ्चऽसु ॥ २३ ॥

ये वा सोमाः आर्जीकेषु । ऋजीकानामदूरभवा आर्जीका देशाः । तेषु तथा कृत्वसु । कृत्वान इति देशाभिधानम् । तेषु कर्मवत्सु देशेषु च किंच पस्त्यानां सरस्वत्यादीनां नदीनां मध्ये समीपे च ये सोमा अभिषूयन्ते । 'ऋषयो वै सरस्वत्यां सत्रमासत' (ऐ. ब्रा. २.१९) इत्यादिषु नदीतीरे यज्ञकरणस्य श्रवणात् । किंच जनेषु पञ्चसु । निषादपञ्चमाश्चत्वारो वर्णाः पञ्च जनाः । तेषु च ये वा सोमा अभिषुताः ते सोमा अस्माकमभिमतं प्रयच्छन्त्वित्युत्तरेण संबन्धः ॥

ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्यम् । सुवाना देवास इन्दवः ॥ २४ ॥

ते । नः । वृष्टिम् । दिवः । परि । पवन्ताम् । आ । सुऽवीर्यम् । सुवानाः । देवासः । इन्दवः ॥ २४ ॥

सुवानाः तत्र चात्र चाभिषूयमाणा देवा दीपनशीलाः स्तुत्या वा इन्दवः ग्रहेषु चमसेषु च क्षरन्तः ते सोमाः नः अस्माकं दिवस्परि । परिशब्दः पञ्चम्यर्थद्योतकः । अन्तरिक्षादादित्याद्वा वृष्टिम् । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः' इति वृष्टिकारणत्वात् । किंच सुवीर्यं शोभनवीर्योपेतं पुत्रं च धनादिकं वा आ पवन्तां प्रापयन्तु । यजमानः सोमेन अभिमतफलानि प्राप्नोति खलु ॥

पवते हर्यतो हरिर्गृणानो जमदग्निना । हिन्वानो गोरधि त्वचि ॥ २५ ॥

पवते । हर्यतः । हरिः । गृणानः । जमत्ऽअग्निना । हिन्वानः । गोः । अधि । त्वचि ॥ २५ ॥

हर्यतः देवान् कामयमानः हरिः हरितवर्णः किंच गोः त्वचि अधि आनडुहे चर्मणि हिन्वानः प्रेर्यमाणः स सोमः जमदग्निना मन्त्रद्रष्ट्रर्षिणा गृणानः स्तूयमानः सन् पवते दशापवित्रेण पूतो भवति । यद्वा । पात्राण्यभिगच्छति ॥  ॥ ५ ॥

प्र शुक्रासो वयोजुवो हिन्वानासो न सप्तयः । श्रीणाना अप्सु मृञ्जत ॥ २६ ॥

प्र । शुक्रासः । वयःऽजुवः । हिन्वानासः । न । सप्तयः । श्रीणानाः । अप्ऽसु । मृञ्जत ॥ २६ ॥

शुक्रासः शुक्रा दीप्यमानाः वयोजुवः अन्नं प्रेरयन्तः । यद्यदपेक्ष्य देवेभ्यः सोमं प्रयच्छन्ति तत्तदपेक्षितं सोमो ददाति । ते सोमाः श्रीणानाः दधिक्षीरादिभिः श्रीयमाणाः सन्तः अप्सु वसतीवरीष्वेकधनासु च मृञ्जत ऋत्विग्भिः प्रमृज्यन्ते शोध्यन्ते । तत्र दृष्टान्तः । हिन्वानासो न सप्तयः । अश्वनामैतत् । यथाश्वा हिन्वानासो हिन्वानाः सादिभिः प्रेर्यमाणाः सन्तोऽप्सु तैरेव प्रशोधिता भवन्ति तद्वत् ॥

तं त्वा सुतेष्वाभुवो हिन्विरे देवतातये । स पवस्वानया रुचा ॥ २७ ॥

तम् । त्वा । सुतेषु । आऽभुवः । हिन्विरे । देवऽतातये । सः । पवस्व । अनया । रुचा ॥ २७ ॥

अथ प्रत्यक्षकृतः । हे सोम आभुवः । कर्मकरणार्थं समन्ताद्भवन्तीत्याभुव ऋत्विजः । ते सुतेषु । सुतोऽभिषुतः सोमः । तद्वत्सु यज्ञेषु देवतातये । 'सर्वदेवात्तातिल्' इति स्वार्थिकस्तातिल् । इन्द्रादिदेवेभ्यः तं तादृशं प्रसिद्धं त्वा त्वां हिन्विरे ग्रावभिः प्रेरयन्ति । अभिषुण्वन्तीत्यर्थः । ततः सः अभिषुतः स त्वम् अनया रुचा दीप्यमानया धारया द्रोणकलशं प्रति पवस्व

आगच्छ। पवतिर्गतिकर्मा। यद्वा। अनया मदीयया रुचा स्तुत्या सह कलशमागच्छ। कलशाभिगमनकाले हि सोमं स्तुवन्ति ॥

**आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे। पान्तमा पुरुस्पृहम् ॥ २८ ॥**

आ। ते। दक्षम्। मयःऽभुवम्। वह्निम्। अद्य। वृणीमहे। पान्तम्। आ। पुरुऽस्पृहम् ॥२८॥

हे सोम यष्टारो वयं ^ते तव स्वभूतं ^दक्षं बलम् ^अद्य अस्मिन् यागदिने आभिमुख्येन ^आ ^वृणीमहे संभजामहे[1]। कीदृशम्। ^मयोभुवं सुखस्य भावकं ^वह्निं धनादीनां प्रापकं ^पान्तं शत्रुभ्यो रक्षकं ^पुरुस्पृहं बहुभिः स्पृहणीयं काम्यमानं बलमिति ॥

**आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम्। पान्तमा पुरुस्पृहम् ॥ २९ ॥**

आ। मन्द्रम्। आ। वरेण्यम्। आ। विप्रम्। आ। मनीषिणम्।
पान्तम्। आ। पुरुऽस्पृहम् ॥ २९ ॥

हे सोम ^मन्द्रं मदकरं स्तुत्यं वा त्वाम् ^आ वृणीमहे। ^वरेण्यं सर्वैर्वरणीयं संभजनीयं च। किंच ^विप्रं मेधाविनं त्वाम्। तथा ^मनीषिणम्। मनस ईषा मनीषा। तद्वन्तं स्तुतिमन्तं वा त्वाम् ^आ वृणीमहे। प्रत्येकविशेषणापेक्षया आ इत्युपसर्गः कृतः। किंच ^पान्तं सर्वेषां रक्षकं ^पुरुस्पृहं बहुभिः स्पृहणीयं च त्वां संभजामहे ॥

**आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा। पान्तमा पुरुस्पृहम् ॥ ३० ॥**

आ। रयिम्। आ। सुऽचेतुनम्। आ। सुक्रतो इति सुऽक्रतो। तनूषु। आ।
पान्तम्। आ। पुरुऽस्पृहम् ॥ ३० ॥

हे ^सुक्रतो शोभनप्रज्ञ सोम त्वदीयं ^रयिं धनं वयम् ^आ वृणीमहे। किंच ^सुचेतुनम्। 'चिती संज्ञाने'। भाव औणादिक उनन्प्रत्ययः। सुज्ञानं च। ^तनूषु[2] अस्मत्पुत्रेषु च धनं सुज्ञानं च त्वम् ^आ विधेहि। यद्वा पुत्रार्थं वयमावृणीमहे। तथा ^पान्तं सर्वस्य रक्षकं ^पुरुस्पृहं बहुभिर्यष्टृभिः काम्यमानं त्वां संभजामहे ॥ ॥ ६ ॥

'पवस्व' इति त्रिंशदृचं षष्ठं सूक्तम्। अत्रानुक्रम्यते—'पवस्व शतं वैखानसा अष्टादश्यनुष्टुप्परास्तिस्र आग्नेय्यः' इति। शतसंख्याका वैखानसाख्याः संहता ऋषयः। 'त्वं सोम सूरः' इत्येषानुष्टुप्। शिष्टा गायत्र्यः। 'अग्न आयूंषि' इत्याद्यास्तिस्रः पवमानविशिष्टाग्निदेवताकाः। अन्यासां पवमानः सोमो देवता। गतः सूक्तविनियोगः ॥

**पवस्व विश्वचर्षणेऽभि विश्वानि काव्या। सखा सखिभ्य ईड्यः ॥ १ ॥**

पवस्व। विश्वऽचर्षणे। अभि। विश्वानि। काव्या। सखा। सखिऽभ्यः। ईड्यः ॥ १ ॥

हे ^विश्वचर्षणे सर्वव्यापित्वेन सर्वस्य द्रष्टर्हे सोम ^सखा स्तुत्यस्तोतृयष्टृयष्टव्यलक्षणेन संबन्धेन सखिभूतस्त्वम् ^ईड्यः स्तोतव्यः सन् ^सखिभ्यः हविष्प्रदानेनोपकारकत्वात् मित्रभूतेभ्योऽस्मभ्यं ^विश्वानि सर्वाणि ^काव्या। कवेः कर्माणि काव्यानि। ब्राह्मणादित्वात् ष्यञ्। सर्वाणि स्तोत्राणि ^अभि लक्षीकृत्य ^पवस्व आगच्छ ॥

१. न–'संभजामहे' नास्ति। २. भ–किंच तनूषु।

ताभ्यां विश्वस्य राजसि ये पवमान धामनी । प्रतीची सोम तस्थतुः ॥२॥

ताभ्याम् । विश्वस्य । राजसि । ये इति । पवमान । धामनी इति ।
प्रतीची इति । सोम । तस्थतुः ॥ २ ॥

हे पवमान दशापवित्रेण पूयमान पुनान वा हे सोम ये धामनी पूर्वपक्षापरपक्षयोर्लता-रूपस्य सोमस्य तवैकैकपर्णवृद्धिह्रासाभ्यां तव स्वभूतौ पूर्वादिपक्षौ । यद्वा ये धामनी नामनी अंशुसोमात्मके अपि प्रतीची त्वदभिमुखं गच्छन्त्यौ गच्छती वा पक्षौ नामनी वा तस्थतुः उपजग्मतुः ताभ्यां त्वं विश्वस्य सर्वस्य लोकस्य राजसि स्वामी भवसि । पूर्वादिपक्षाभ्यां सर्वलोकस्योप-नायकत्वात्तस्य स्वामी भवसि । पृथिव्यामंशुनाम्ना मनुष्याणां सर्वेषामभीप्सितदानेन तस्य लोकस्य द्युलोके देवेभ्यः स्वसुधामयकलादानेन तेषां प्रीणयिता भवसि[1] । देवाः खलु सोमस्यैकैकवृद्धि-ह्रासाभ्यां कलाः पिबन्ति ॥

परि धामानि यानि ते त्वं सोमासि विश्वतः । पवमान ऋतुभिः कवे ॥३॥

परि । धामानि । यानि । ते । त्वम् । सोम । असि । विश्वतः । पवमान । ऋतुऽभिः । कवे ॥३॥

हे सोम यस्मात् ते त्वदीयानि धामानि त्वदधीना अहोरात्ररूपाः कालविशेषाः परि भवन्ति सर्वत्र व्याप्तास्तिष्ठन्ति । यद्वा त्वदीयानि धामानि तेजांसि परि वर्तन्ते अत एव हे पवमान पूयमान हे कवे क्रान्तकर्मन् हे सोम त्वम् ऋतुभिः वसन्तादिकालविशेषैः सह विश्वतः सर्वतः असि भवसि । अहोरात्रौ यत्र यत्र व्याप्तौ तत्र तत्र वसन्तादिकालोपाधिकः सोमस्तिष्ठति । तयोस्तद-धीनत्वादित्यर्थः ॥

पवस्व जनयन्निषोऽभि विश्वानि वार्या । सखा सखिभ्य ऊतये ॥ ४ ॥

पवस्व । जनयन् । इषः । अभि । विश्वानि । वार्या । सखा । सखिऽभ्यः । ऊतये ॥ ४ ॥

हे सोम सखा सखिभूतस्त्वं विश्वानि सर्वाणि वार्या वरणीयान्यस्मत्कृतानि स्तोत्राणि अभि लक्षीकृत्य सखिभ्यः अस्मभ्यम् ऊतये रक्षणाय जीवनाय इषः अन्नानि जनयन् प्रयच्छन् पवस्व आगच्छ । पवतिर्गतिकर्मा ॥

तव शुक्रासो अर्चयो दिवस्पृष्ठे वि तन्वते । पवित्रं सोम धामभिः ॥ ५ ॥

तव । शुक्रासः । अर्चयः । दिवः । पृष्ठे । वि । तन्वते । पवित्रम् । सोम । धामऽभिः ॥५॥

हे सोम शुक्रासः सर्वत्र ज्वलनशीलाः धामभिः तेजोभिः सहितस्य तव स्वभूताः अर्चयः अर्चनीया रश्मयः दिवः द्योतमानस्यादित्यस्य द्युलोकस्य वा पृष्ठे अधरभागे । पृथिव्या-मित्यर्थः । पवित्रं पवनसाधनमुदकं वि तन्वते विशेषेण तन्वन्ति विस्तारयन्ति । सर्वत्र कुर्वन्तीत्यर्थः ॥ ॥ ७ ॥

तवेमे सप्त सिन्धवः प्रशिषं सोम सिस्रते । तुभ्यं धावन्ति धेनवः ॥ ६ ॥

तव । इमे । सप्त । सिन्धवः । प्रऽशिषम् । सोम । सिस्रते । तुभ्यम् । धावन्ति । धेनवः ॥६॥

वृष्टिकर्तृत्वप्रसङ्गादाह । हे सोम इमे इमाः त्वया सृष्टाः सप्त सप्तसंख्याकाः सिन्धवः स्यन्दमाना गङ्गाद्या नद्यः । यद्वा सप्त सर्पणशीला नद्यः तव प्रशिषं प्रशासनमाज्ञामभि सिस्रते

1. त–भवति ।

अनुसरन्ति । त्वदाज्ञामनुसृत्य समुद्रं गच्छन्तीत्यर्थः । किंच धेनवः नवप्रसूतिका देवानां हविष्प्रदानेन प्रीणयिष्यो गावः तुभ्यं त्वदर्थमेवाशिरं प्रयच्छाम इति धावन्ति आगच्छन्ति ॥

प्र सो॑म याहि॒ धार॑या सु॒त इन्द्रा॑य मत्स॒रः । दधा॑नो॒ अक्षि॑ति॒ श्रवः॑ ॥ ७ ॥

प्र । सो॒म॒ । या॒हि॒ । धार॑या । सु॒तः । इन्द्रा॑य । म॒त्स॒रः । द॒धा॑नः । अक्षि॑ति । श्रवः॑ ॥ ७ ॥

हे[१] सोम अभिपूयमाण देव मत्सरः इन्द्रस्य मदकरस्त्वं सुतः अस्माभिरभिषुतः सन् इन्द्राय इन्द्रार्थं दशापवित्रान्निर्गतया संततया त्वदीयया धारया द्रोणकलशं प्र याहि प्रकर्षेण प्राप्नुहि । यद्वा । हे सोम सुतोऽभिषुतस्त्वमिन्द्राय मत्सरो मादयितृतमः सन् धारयाग्नौ स्वाहाकारेण पात्रात् पतन्त्या धारया सह त्वमिन्द्रमुपयाहि । कीदृशः[१] । अक्षिति अक्षीणं श्रवः। श्रव इत्यन्ननाम । दधानः अस्मभ्यं प्रयच्छन् प्र याहीति ॥

समु॑ त्वा धी॒भिर॑स्वरन् हिन्व॒तीः स॒प्त जा॒मयः॑ । विप्र॑मा॒जा वि॒वस्व॑तः ॥ ८ ॥

सम् । ऊँ इति॑ । त्वा॒ । धी॒भिः॑ । अ॒स्व॒र॒न् । हि॒न्व॒तीः । स॒प्त । जा॒मयः॑ ।
विप्र॑म् । आ॒जा । वि॒वस्व॑तः ॥ ८ ॥

हे सोम हिन्वतीः । लिङ्गव्यत्ययः । हिन्वन्तः स्तुतीः प्रेरयन्तः सप्त सप्तसंख्याकाः जामयः एकस्मिन् यज्ञे कर्मकरणेन परस्परं बन्धुभूता होतृप्रभृतयः सप्त होत्रकाः विवस्वतः देवानां हविष्प्रदानेन परिचरणवतो यजमानस्य आजा आजौ । अजन्ति गच्छन्ति ऋत्विजोऽत्रेत्याजिर्यज्ञः । तस्मिन् विप्रं मेधाविनं पवमानं त्वा त्वामेव धीभिः[२] धीतिभिः स्तुतिभिः सम् अस्वरन् अशब्दयन् अस्तुवन् । यद्वा । हिन्वतीर्गच्छन्त्यः सप्त जामयो गङ्गाद्याः सप्त नद्यो धीभिः । वर्णलोपश्छान्दसः । धीतिभिः[३] अङ्गुलीभिर्विप्रं त्वां समस्वरन् प्रेरयन्ति । वसतीवरीभिरेकधनाभिश्च परिशोधनार्थं प्रेरयन्तीति ॥

मृ॒जन्ति॑ त्वा॒ सम॒ग्रुवो॑ऽव्ये॑ जी॒रावधि॒ ष्वणि॑ । रे॒भो यद॒ज्यसे॒ वने॑ ॥ ९ ॥

मृ॒जन्ति॑ । त्वा॒ । सम् । अ॒ग्रुवः॑ । अव्ये॑ । जी॒रौ । अधि॑ । स्वनि॑ । रे॒भः । यत् । अ॒ज्यसे॑ । वने॑ ॥ ९ ॥

हे सोम अग्रुवः । अङ्गुलिनामैतत् । अजन्ति प्रक्षिपन्ति हवींष्यग्नाविति । यद्वा अगेर्गत्यर्थस्य । कर्मकरणार्थमितस्ततो गच्छन्तीति । अग्रुवोऽङ्गुलयोऽस्मदीयाः जीरौ पापानामभिभावुके क्षिप्रं कृते वा स्वनि अधि अधिकं शब्दायमाने अव्ये अविवालेन कृते पवित्रे त्वा त्वां तदा[४] सं मृजन्ति सम्यक् शोधयन्ति । यत् यदा रेभः । 'रेभृ शब्दे' । उदकमध्ये प्रक्षेपेण शब्दायमानस्त्वं वने वननीये वसतीवर्याख्य उदके अज्यसे अक्तः सिक्तो भवसि । तदा मृजन्तीत्यन्वयः ॥

पव॑मानस्य ते कवे॒ वाजि॒न्त्सर्गा॑ असृक्षत । अर्व॑न्तो॒ न श्र॑व॒स्यवः॑ ॥ १० ॥

पव॑मानस्य । ते॒ । क॒वे॒ । वाजि॑न् । सर्गाः॑ । अ॒सृ॒क्ष॒त॒ । अर्व॑न्तः । न । श्र॒व॒स्यवः॑ ॥ १० ॥

मार्जनप्रसङ्गमाह । हे कवे क्रान्तप्रज्ञ हे वाजिन् अन्नवन् सोम पवमानस्य दशापवित्रेण पूयमानस्य ते तव सर्गाः । सृज्यन्त इति सर्गा धाराः । कीदृशाः । श्रवस्यवः । छन्दसि परेच्छायां

---

१. ग-हे सोम इंद्रार्थं सुतोभिषुतः मदकरः एवंभूतः धारया प्र याहि । पुनः कीदृशः । २. त-भ१. २.७-' धीभिः ' नास्ति । ३. ग-त१.५.७-धीभिः । ४. त-सदा ।

क्यच्। वष्टृणामन्नं कामयमानास्त्वदीया धाराः ᵛअसृक्षत सृजन्ति[1]। निर्गच्छन्तीत्यर्थः। तत्र दृष्टान्तः। ᵛअर्वन्तो ᵛन। यथाश्वा मन्दुरातो[2] निर्गच्छन्ति तद्वत् पवित्रान्निःसरन्तीत्यर्थः। प्रयोगापेक्षं चात्र धाराबाहुल्यम्॥ ॥ ८ ॥

**अच्छा॒ कोशं॑ मधु॒श्चुत॒मसृ॑ग्रं॒ वारे॑ अ॒व्यये॑। अवा॑वशन्त धी॒तयः॑ ॥ ११ ॥**

अच्छ॑। कोश॑म्। म॒धु॒ऽश्चुत॑म्। असृ॑ग्रम्। वारे॑। अ॒व्यये॑। अवा॑वशन्त। धी॒तयः॑ ॥ ११ ॥

धारानिर्गमनप्रसङ्गादभिधीयते। ᵛमधुश्चुतं मधुररसस्य च्यावयितारं क्षारयितारं ᵛकोशं द्रोणकलशम् ᵛअच्छ अभिलक्ष्य ᵛअव्यये अविमये अविस्वभूते[3] वा ᵛवारे वाले दशापवित्रे ᵛअसृग्रं सोमा ऋत्विग्भिः सृज्यन्ते। सृजेः कर्मणि 'तिङां तिङो भवन्ति' इति झो[4] रमादेशः[4]। किंच ᵛधीतयः। अङ्गुलिनामैतत्। धयन्ति पिबन्त्याभिरिति। अस्मदीया अङ्गुलयः ᵛअवावशन्त तान् सोमान् पुनःपुनर्मार्जनार्थं कामयन्ते ॥

**अच्छा॑ समु॒द्रमिन्द॒वोऽस्तं॒ गावो॒ न धे॒नवः॑। अग्म॑न्नृ॒तस्य॒ योनि॒मा ॥ १२ ॥**

अच्छ॑। स॒मु॒द्रम्। इन्द॑वः। अस्त॑म्। गावः॑। न। धे॒नवः॑। अग्म॑न्। ऋ॒तस्य॑। योनि॑म्। आ ॥ १२ ॥

ᵛइन्दवः[5] क्षरन्तः सोमाः ᵛसमुद्रं सोमानामेकत्रैव संगमनस्थानं द्रोणकलशम् ᵛअच्छ अभि गच्छन्ति। तत्र दृष्टान्तः। ᵛधेनवः पयःप्रदानेन जनानां प्रीणयित्र्यो नवप्रसूतिकाः ᵛगावः ᵛअस्तं गृहं यथाभिगच्छन्ति तद्वत्। किंच ते सोमाः ᵛऋतस्य सत्यभूतस्य यज्ञस्य ᵛयोनिं स्थानम् ᵛआ ᵛअग्मन् आभिमुख्येन गच्छन्ति। गमेर्लुङि सिचो लुक्युपधालोपः ॥

**प्र ण॑ इन्दो म॒हे रण॒ आपो॑ अर्षन्ति॒ सिन्ध॑वः। यद्गोभि॑र्वासयि॒ष्यसे॑ ॥ १३ ॥**

प्र। नः॒। इन्दो॒ इति॑। म॒हे। रणे॑। आपः॑। अर्ष॑न्ति। सिन्ध॑वः।
यत्। गोभिः॑। वा॒स॒यि॒ष्यसे॑ ॥ १३ ॥

हे ᵛइन्दो क्षरन् सोम ᵛनः अस्माकं स्वभूताय ᵛरणे रणाय। रणन्ति स्तुवन्ति देवानत्रेति रणो यज्ञः। अधिकरणे अप्। 'ङेर्यः' (पा. सू. ७.१.१३) इति न भवति सर्वविधीनां छन्दसि विकल्पितत्वात्। ᵛमहे महते रणाय यज्ञाय तदर्थं ᵛसिन्धवः स्यन्दमानाः ᵛआपः वसतीवर्याख्याः सोमसेकार्थं तदा ᵛअर्षन्ति प्रगच्छन्ति। ᵛयत् यदा त्वं ᵛगोभिः गव्यैर्दधिक्षीरादिभिः ᵛवासयिष्यसे आच्छादयसे मिश्रितो भवसि तदापो गच्छन्तीति ॥

**अस्य॑ ते स॒ख्ये व॒यमिय॑क्षन्त॒स्त्वोत॑यः। इन्दो॑ सखि॒त्वमु॑श्मसि ॥ १४ ॥**

अस्य॑। ते॒। स॒ख्ये। व॒यम्। इय॑क्षन्तः। त्वाऽऊ॑तयः। इन्दो॒ इति॑। स॒खि॒ऽत्वम्। उ॒श्म॒सि ॥ १४ ॥

हे ᵛइन्दो पवमान ᵛइयक्षन्तः यष्टुमिच्छन्तः पूजयितुमिच्छन्तो वा ᵛअस्य प्रसिद्धस्य ᵛते तव ᵛसख्ये सखिकर्मणि स्थिताः ᵛवयं ᵛत्वोतयः त्वदायत्तरक्षणाः सन्तः ᵛसखित्वं सखिभावमेव ᵛउश्मसि उश्मः कामयामहे ॥

१. ग-त३-भ२.४.५-विसृजंति; भ१.७-विसृज्यंति। २. ग-नगरतः; त१.५.७-मंदुगतो; त२-मंदुर्गतो; त३-नंदूरतो; त४-मंदुर्गतयो; भ४-नंदुरातो। ३. ग-अविसंभूते; त-भ४-अविश्वभूते। ४. ग-भ१-मु-झोरमादेशः; त१-नोरमादेशः; त२.४.५.६.७-नो दमादेशः। ५. त१.५.-इंदवः समुद्रः; त४-इंदवः समुद्राः।

आ पवस्व गविष्टये महे सोम नृचक्षसे । एन्द्रस्य जठरे विश ॥ १५ ॥

आ । पवस्व । गोऽइष्टये । महे । सोम । नृऽचक्षसे । आ । इन्द्रस्य । जठरे । विश ॥ १५ ॥

हे सोम पवमान गविष्टये अङ्गिरसां गवामन्वेष्ट्रे महे महते नृचक्षसे नृणां मनुष्याणां द्रष्ट्रे कर्मनेतॄणां फलं पश्यते वा इन्द्राय आ पवस्व पात्रेषु दशापवित्रेण पूतो भव। ततः इन्द्रस्य जठरे उदर उदरभूते द्रोणकलशे वा आ विश प्रविश ॥ ॥ ९ ॥

महाँ असि सोम ज्येष्ठ उग्राणामिन्द ओजिष्ठः । युध्वा सञ्छश्वज्जिगेथ ॥ १६ ॥

महान् । असि । सोम । ज्येष्ठः । उग्राणाम् । इन्दो इति । ओजिष्ठः ।
युध्वा । सन् । शश्वत् । जिगेथ ॥ १६ ॥

हे सोम त्वं महान् असि यतस्त्वं देवानां प्रीणयितासि खलु । त्वं ज्येष्ठः प्रशस्यतमो भवसि। किंच हे इन्दो पवमान त्वम् उग्राणाम् उद्गूर्णबलानामपि ओजिष्ठः ओजस्वितमो भवसि। त्वं युध्वा सन् शत्रुभिः सह युद्धं कुर्वन्नेव शश्वत् सर्वदा जिगेथ तांस्तेषां धनानि च जितवानसि । 'जि जये'। थलि 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य कवर्गादेशः ॥

य उग्रेभ्यश्चिदोजीयाञ्छूरेभ्यश्चिच्छूरतरः । भूरिदाभ्यश्चिन्मंहीयान् ॥ १७ ॥

यः । उग्रेभ्यः । चित् । ओजीयान् । शूरेभ्यः । चित् । शूरऽतरः ।
भूरिऽदाभ्यः । चित् । मंहीयान् ॥ १७ ॥

यः सोमः उग्रेभ्यश्चित् उद्गूर्णेभ्यो बलवद्भ्योऽपि ओजीयान् ओजस्वितमः । किंच यः शूरेभ्यश्चित् वीरेभ्योऽपि शूरतरः अत्यन्तसमर्थो भवति। तथा यः सोमः भूरिदाभ्यः । 'डुदाञ् दाने'। 'आतो मनिन्' इति विच्। बहुधनानां दातृभ्योऽपि मंहीयान् दातृतमो भवति। तं त्वां वृणीमह इत्युत्तरेण संबन्धः ॥

त्वं सोम सूर एषस्तोकस्य साता तनूनाम् । वृणीमहे सख्याय वृणीमहे युज्याय ॥१८॥

त्वम् । सोम । सूरः । आ । इषः । तोकस्य । साता । तनूनाम् ।
वृणीमहे । सख्याय । वृणीमहे । युज्याय ॥ १८ ॥

हे सोम सूरः सुवीर्यः । यद्वा । सर्वस्य यागादिकर्मणि प्रेरकः त्वम् इषः अन्नानि अस्माकम् आ धेहि[1]। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः।' किंच त्वं तोकस्य पुत्रस्य तनूनाम्। तन्वन्ति विस्तारयन्ति कुलमिति तन्वः पौत्राः। तेषां च साता दाता भव।' 'षणु दाने'। 'जनसन०' इति विट्। 'जनसन०' इत्यात्वम्। वयं तं त्वां सख्याय सखिभावाय कर्मणे वा वृणीमहे संभजामहे। तथा युज्याय। युजूः[2] सहायः। तस्य भावे कर्मणि वा यत्। संज्ञापूर्वकस्य विधेरनित्यत्वादवृद्धिः। शत्रुवधादिलक्षणसाहाय्याय च वयं वृणीमहे ॥

अग्निहोत्रे पूर्वस्यामाहुतौ हुतायामुपस्थितेन[3] यजमानेन प्रतिदिवसं प्रतिसंवत्सरं वानेन तृचेनाग्निरुपस्थेयः। सूत्रितं च- 'आग्नेयीभिश्चाग्न आयूंषि पवस इति तिसृभिः संवत्सरे संवत्सरे' (आश्व.

१. ग-वह। २. ग-युक्; म१.७-युक्तः। ३. त२.६.७-मु- °मुपोषितेन; त५-°मुपोस्थितेन।

श्रौ. २.३-४ ) इति । चौलादिकर्मसु चतस्र आज्याहुतयो होतव्यास्तत्रैव तिस्रः । सूत्रितं च—' तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादग्न आयूंषि पवस इति तिसृभिः ' ( आश्व. गृ. १.४.३-४ ) इति । आधाने पवमानेष्टावग्नेः पवमानस्य ' अग्न आयूंषि ' इत्येषाऽनुवाक्या । ' अग्ने पवस्व ' इत्येषा याज्या । सूत्रितं च—' प्रथमायामग्निरग्निः पवमानोऽग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः' ( आश्व. श्रौ. २.१ ) इति । पुनराधेये द्वितीयाज्यभागस्य ' अग्न आयूंषि ' इत्येषा वैकल्पिकानुवाक्या । सूत्रितं च— ' नित्यं पूर्वमनुब्राह्मणिनोऽग्न आयूंषि पवस इत्युत्तरम् ' ( आश्व. श्रौ. २.८ ) इति ॥

अग्न आयूंषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ १९ ॥

अग्ने । आयूंषि । पवसे । आ । सुव । ऊर्जम् । इषम् । च । नः ।

आरे । बाधस्व । दुच्छुनाम् ॥ १९ ॥

हे अग्ने पवमानरूप त्वमस्माकम् आयूंषि जीवनानि[1] पवसे रक्षसि[2] । नः अस्माकम् ऊर्जम् अन्नरसम् इषम् अन्नं च आ सुव आभिमुख्येन प्रेरय । किंच दुच्छुनाम् । रक्षोनामैतत् । रक्षांसि आरे अस्मत्तो दूर एव बाधस्व संपीडय ॥

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ २० ॥

अग्निः । ऋषिः । पवमानः । पाञ्चऽजन्यः । पुरःऽहितः । तम् । ईमहे । महाऽगयम् ॥ २० ॥

पाञ्चजन्यः । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । यद्वा । गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येते पञ्चजनाः । अथवा देवमनुष्या गन्धर्वाप्सरसः सर्पाः पितर इति ब्राह्मणेऽभिहिताः पञ्चजनाः । ' गम्भीराञ्ञ्यः' इत्यत्र ' बहिर्देवपञ्चजनेभ्य इति वक्तव्यम् ' ( का. ४. ३. ५८. १ ) इति वचनात् भवार्थे ञ्यप्रत्ययः । तेषां तत्तदभीष्टप्रदानेन स्वभूतः ऋषिः सर्वस्य द्रष्टा पवमानः तद्रूपोऽग्निः[3] पुरोहितः कर्मार्थमृत्विग्भिः पुरो निहितः । तं पूर्वोक्तलक्षणं महागयं महद्भिर्देवादिभिरपि गीर्भिः[4] गातव्यम् । महान्ति प्रभूतानि यज्ञगृहाणि वा यस्य स तथोक्तः । तं पवमानगुणविशिष्टमग्निम् ईमहे धनादीनि याचामहे ॥　　॥ १० ॥

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥ २१ ॥

अग्ने । पवस्व । सुऽअपाः । अस्मे इति । वर्चः । सुऽवीर्यम् ।

दधत् । रयिम् । मयि । पोषम् ॥ २१ ॥

हे अग्ने स्वपाः । ' सोमनसी°' इत्युत्तरपदाद्युदात्तत्वम् । शोभनकर्मा त्वम् अस्मे अस्मासु सुवीर्यं शोभनवीर्योपेतं वर्चः । ' वर्च दीप्तौ ' । तेजः पवस्व आगमय । तथा भवान् रयिं धनं पुत्रं वा पोषम् । भावे कर्मणि वा घञ् । गवां पुष्टिं यद्वा गवादिकं मयि भवान् दधत् दधातु । करोत्वित्यर्थः । दधातेर्लेट्यडागमः । ' घोर्लोपो लेटि वा ' ( पा. सू. ७. ३. ७० ) इत्याकारलोपः ॥

पवमानो अति स्रिधोऽभ्यर्षति सुष्टुतिम् । सूरो न विश्वदर्शतः ॥ २२ ॥

पवमानः । अति । स्रिधः । अभि । अर्षति । सुऽस्तुतिम् । सूरः । न । विश्वऽदर्शतः ॥ २२ ॥

१. ग-भ-' जीवनानि ' नास्ति; त३-जीवनाय । २. ग-भ-' रक्षसि ' नास्ति । ३. ग-त३-भ- ' तद्रूपोऽग्निः' नास्ति । ४. त३.७-भ२-' गीर्भिः' नास्ति ।

पवमानः सोमः स्रिधः हिंसकान् शत्रूनतिक्रम्य गच्छति। तथा सुष्टुतिं स्तोतॄणां शोभनां स्तुतिम् अभ्यर्षति आभिमुख्येन गच्छति। ‘ऋषी गतौ’। तौदादिकः। ‘बहुलं छन्दसि’ इति शप्। गुणः। किंच सूरो न सूर्य इव विश्वदर्शतः सर्वस्य द्रष्टा सर्वैर्वा दर्शनीयो भवति॥

**स मर्मृजान आयुभिः प्रयस्वान्प्रयसे हितः। इन्दुरत्यो विचक्षणः॥ २३॥**

सः। मर्मृजानः। आयुऽभिः। प्रयस्वान्। प्रयसे। हितः। इन्दुः। अत्यः। विऽचक्षणः॥२३॥

आयुभिः कर्मनेतृभिर्मनुष्यैः मर्मृजानः पुनःपुनर्मृज्यमानः शोध्यमानः सः इन्दुः स सोमः अत्यः देवान् संततं गन्ता भवति। कीदृशः। प्रयस्वान् प्रीणनशीलान्नवान्। यद्वा। स्तोतृभ्यो देयत्वेनान्नयुक्तः। अत एव प्रयसे हवीरूपायान्नाय हितः विचक्षणः सर्वस्य प्रदर्शनकारी सर्वस्य विद्रष्टा वा सोमो देवानभिगन्ता भवति। ‘चक्षिङ् व्यक्तायां वाचि’। ‘अनुदात्तेतश्च हलादेः’ इति युच्॥

**पवमान ऋतं बृहच्छुक्रं ज्योतिरजीजनत्। कृष्णा तमांसि जङ्घनत्॥ २४॥**

पवमानः। ऋतम्। बृहत्। शुक्रम्। ज्योतिः। अजीजनत्। कृष्णा। तमांसि। जङ्घनत्॥२४॥

पवमानः ऋतं सत्यं यथार्थभूतं बृहत् प्रभूतं सर्वदेशेषु व्यापकं शुक्रं दीप्यमानं श्वेतवर्णं ज्योतिः तेजः अजीजनत् द्युलोक उदपादयत्। किं कुर्वन्। कृष्णा कृष्णवर्णानि तमांसि जङ्घनत् भृशं विनाशयन्। हन्तेर्यङ्लुकि शतरि रूपम्। ‘अभ्यस्तानामादिः’ इत्याद्युदात्तत्वम्॥

**पवमानस्य जङ्घ्नतो हरेश्चन्द्रा असृक्षत। जीरा अजिरशोचिषः॥ २५॥**

पवमानस्य। जङ्घ्नतः। हरेः। चन्द्राः। असृक्षत। जीराः। अजिरऽशोचिषः॥ २५॥

जङ्घ्नतः पुनःपुनस्तमांसि विनाशयतः हरेः हरितवर्णस्य अजिरशोचिषः सर्वत्र गमनशीलतेजसः पवमानस्य सोमस्य चन्द्राः। ‘चदि आह्लादने’। देवानामाह्लादयित्र्यः जीराः क्षिप्रंक्षरणशीला धाराः असृक्षत सृजन्ति। पवित्रान्निर्गच्छन्तीत्यर्थः॥ ॥ ११॥

**पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः। हरिश्चन्द्रो मरुद्गणः॥ २६॥**

पवमानः। रथिऽतमः। शुभ्रेभिः। शुभ्रशःऽतमः। हरिऽचन्द्रः। मरुत्ऽगणः॥ २६॥

पवमानः देवः रथीतमः अतिशयेन रथवान्। ‘ईद्रथिनः’ (पा. सू. ८. २. १७. १) इति ईकारः। तथा शुभ्रेभिः शोभायुक्तेभ्यस्तेजोभ्योऽपि शुभ्रशस्तमः अत्यन्तदीप्यमानश्च। यद्वा। निर्मलेभ्योऽपि निर्मलतमयशोयुक्तः हरिश्चन्द्रः। ‘ह्रस्वाच्चन्द्रोत्तरपदे’ इति सांहितिकः सुट्। हरितवर्णदीप्तिर्हरितधारावान् वा मरुद्गणः। मरुतो यस्य गणः सहायभूताः स तथोक्तः। तादृशः सर्वाँल्लोकान्[1] स्वरश्मिभिः स्वदीप्तिभिः व्यश्नवत् व्याप्नोदित्युत्तरेणान्वयः॥

**पवमानो व्यश्नवद्रश्मिभिर्वाजसातमः। दधत्स्तोत्रे सुवीर्यम्॥ २७॥**

पवमानः। वि। अश्नवत्। रश्मिऽभिः। वाजऽसातमः। दधत्। स्तोत्रे। सुऽवीर्यम्॥ २७॥

---

१. ग-त३-भ५-सोमः सर्वान्; त२-सर्वान्।

ᵛपवमानः सोमः[1] ᵛरश्मिभिः स्वदीप्तिभिः ᵛव्यश्नवत् सर्वं जगद्व्याप्नोतु। कीदृशः। ᵛवाजसातमः अतिशयेनान्नस्य दाता बलस्य संभक्ता वा। तथा ᵛस्तोत्रे पवमानस्तोत्रं कुर्वते मनवे ᵛसुवीर्यं सुवीर्योपेतं पुत्रं धनं वा ᵛदधत् विदधत् प्रयच्छन्[2] व्याप्नोतु। अश्नोतेर्लेट्यडागमः॥

**प्र सुवान इन्दुरक्षाः पवित्रमत्यव्ययम्। पुनान इन्दुरिन्द्रमा॥ २८॥**

प्र। सुवानः। इन्दुः। अक्षारिति। पवित्रम्। अति। अव्ययम्।

पुनानः। इन्दुः। इन्द्रम्। आ॥ २८॥

ᵛसुवानः अभिषूयमाणः ᵛइन्दुः सोमः ᵛअव्ययम् अविमयमूर्णास्तुकेन निर्मितं दशापवित्रमतीत्य ᵛप्र[3] ᵛअक्षाः[3] कलशं प्रति प्रकर्षेण क्षरति। क्षरतेर्लुङि तिपि सिचि छान्दस इडागमाभावः। 'अतो लान्तस्य[4]' (पा. सू. ७. २. २) इति वृद्धिः। 'रात्सस्य' इति सिचो लोपः। रेफान्तं स्पष्टयितुमितिकारः। 'बहुलं छन्दसि' (पा. सू. ७.३.९७) इति ईडभावः। हल्ङ्यादिना तिलोपः। ततः ᵛपुनानः पवित्रेण शुद्धः ᵛइन्दुः सोमः ᵛइन्द्रमा विशति। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥

**एष सोमो अधि त्वचि गवां क्रीळत्यद्रिभिः। इन्द्रं मदाय जोहुवत्॥ २९॥**

एषः। सोमः। अधि। त्वचि। गवाम्। क्रीळति। अद्रिऽभिः। इन्द्रम्। मदाय। जोहुवत्॥२९॥

ᵛएषः अंशुरूपः ᵛसोमः ᵛगवां ᵛत्वचि आनडुहचर्मणि। अधिशब्द उपर्यर्थद्योतकः। चर्मण्युपरि ᵛअद्रिभिः ग्रावभिः सह ᵛक्रीडति अभिषवाय संक्रीडते। किं कुर्वन्। ᵛमदाय सोमपानेन मादयितुम् ᵛइन्द्रं ᵛजोहुवत् भृशमाह्वयन्। एतेन तत्काल इन्द्रविषयां स्तुतिं कुर्वन्तीत्यवगम्यते॥

**यस्य ते द्युम्नवत्पयः पवमानाभृतं दिवः। तेन नो मृळ जीवसे॥ ३०॥**

यस्य। ते। द्युम्नऽवत्। पयः। पवमान। आऽभृतम्। दिवः। तेन। नः। मृळ। जीवसे॥३०॥

हे ᵛपवमान पूयमान हे सोम ᵛदिवः द्युलोकात् ᵛआभृतं श्येनरूपया गायत्र्याहृतं ᵛद्युम्नवत् अन्नवत् यशोयुक्तं वा ᵛपयः सोमलक्षणमन्नं ᵛयस्य ᵛते तव स्वभूतं विद्यते तस्मात्त्वं ᵛतेन अन्नेन ᵛनः अस्मान् ᵛजीवसे चिरजीवनाय ᵛमृळ[5] मृळय सुखय॥ ॥ १२॥

'त्वं सोमासि' इति द्वात्रिंशदृचं सप्तमं सूक्तम्। आद्यतृचस्य बार्हस्पत्यो भरद्वाज ऋषिः। द्वितीयस्य मारीचः कश्यपः। तृतीयस्य राहूगणो गोतमः। चतुर्थस्य भौमोऽत्रिः। पञ्चमस्य गाथिनो विश्वामित्रः। षष्ठस्य भार्गवो जमदग्निः। सप्तमस्य मैत्रावरुणिर्वसिष्ठः। सूक्तशेषस्याङ्गिरसः पवित्रो वसिष्ठो वोभौ वा समुदितावृषी। 'पवस्व सोम मन्दयन्' इत्याद्यास्तिस्रो द्विपदा गायत्र्यः। 'अलाय्यस्य' इत्येषा त्रिंशी पुरउष्णिक् आद्यद्वादशकव्यष्टकवती सप्तविंश्येकत्रिंशीद्वात्रिंश्यस्तिस्रोऽनुष्टुभः। शिष्टा गायत्र्यः। 'अविता नो अजाश्वः' इत्याद्यास्तिस्रः पवमानपूषदेवत्याः पवमानसोमदेवताका वा। 'यत्ते पवित्रमर्चिषि' इत्याद्याः पञ्चर्चः पवमानाग्निदेवत्याः। आसां पञ्चानां मध्ये 'उभाभ्यां देव सवितः' इति तृतीया पवमानसवितृदेवताका[6] वा। चतुर्थी 'त्रिभिष्ट्वं देव सवितः'

१. ग-त३-भ५-पुनानः एतन्नामको देवः। २. ग-प्रयच्छतु; त२-प्रयन; भ१.७-प्रयच्छते। ३. ग-द्रोण°। ४. ग-त१.२-लृांतस्य; त४-लृांतस्य; त५-लतिस्य; त६-त्रांतस्य; भ४-लंतिस्य; भ१(२)-मु-पा. सू.-लृांतस्य। ५. ग-त-भ२.४-'मृळ' नास्ति। ६. त-भ२.५-पवमानसोमदेवताका; भ१-पवमानसवितृमदेवताका; भ४-पवमानसवितृसोमदेवताका।

इत्येषा विकल्पेन पवमानाग्निसवितृदेवताका । 'पुनन्तु माम्' इत्येषा विकल्पेन वैश्वदेवी । 'यः पावमानीरध्येति' इत्यादिके द्वे पवमानमण्डलाध्येतृस्तुतिप्रतिपादिके । अतः सैव देवता । शिष्टाः सर्वाः पवमानसोमदेवताकाः । तथा चानुक्रम्यते–'त्वं सोमासि द्वात्रिंशद्भरद्वाजः कश्यपो गोतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठ इति ह[1] तृचाः सप्त ऋषयः शेषे पवित्रो वसिष्ठो वोभौ वा पवस्व सोम तिस्रो नित्यद्विपदा गायत्र्योऽविता नस्त्रिस्रः पौष्ण्यो वा यत्ते पवित्रं पञ्चाग्नेय्यः साविञ्यग्निसावित्री वैश्वदेवी वासामन्त्यास्त्रिंशी पुरउष्णिक् सप्तविंश्यनुष्टुबन्त्ये च ते पावमान्यध्येतृस्तुती' इति । गतः सूक्तविनियोगः ॥

त्वं सो॑मासि धार॒युर्म॒न्द्र ओजि॑ष्ठो अध्व॒रे । पव॑स्व मंह॒यद्र॑यिः ॥ १ ॥

त्वम् । सो॒म॒ । अ॒सि॒ । धा॒र॒युः । म॒न्द्रः । ओजि॑ष्ठः । अ॒ध्व॒रे । पव॑स्व । मं॒ह॒यत्ऽर॑यिः ॥ १ ॥

हे सोम अभिपूयमाण पवमान मन्द्रः मादयितृतमः ओजिष्ठः ओजस्वितमः त्वम् अध्वरे हिंसारहितेऽस्मदीये यज्ञे धारयुः अभिपवणधाराकामः असि भवसि । ततस्त्वं मंहयद्रयिः स्तोतृभ्यः प्रदीयमानधनः सन् पवस्व द्रोणकलशे ग्रहादिषु दशापवित्रेण पूतो भव । यद्वा । धारयुः । 'तद्वदर्थे भाष्यते' इति मत्वर्थीयो युः । स हे सोम त्वं धारावानिव ततः पवस्वेति संबन्धः ॥

त्वं सु॒तो नृ॒माद॑नो दध॒न्वान्म॑त्स॒रिन्त॑मः । इन्द्रा॑य सू॒रिरन्ध॑सा ॥ २ ॥

त्वम् । सु॒तः । नृ॒ऽमाद॑नः । द॒ध॒न्वान् । म॒त्स॒रिन्ऽत॑मः । इन्द्रा॑य । सू॒रिः । अन्ध॑सा ॥ २ ॥

हे सोम नृमादनः नृणां कर्मणो नेतृणामृत्विजां मादयिता अत एव दधन्वान् तेभ्यो धनानि धारयन् प्रयच्छन् यद्वा यज्ञस्य धारकः सूरिः प्राज्ञः सुतः अस्माभिरभिषुतः त्वम् अन्धसा हवीरूपेणान्नेन सह इन्द्राय मत्सरिन्तमः तस्यातिशयेन मदकारी भव । 'नाद्घस्य' इति नकारः ॥

त्वं सु॑ष्वा॒णो अद्रि॑भिर॒भ्य॑र्ष॒ कनि॑क्रदत् । द्यु॒मन्तं॒ शुष्म॑मुत्त॒मम् ॥ ३ ॥

त्वम् । सु॒स्वा॒नः । अद्रि॑ऽभिः । अ॒भि । अ॒र्ष॒ । कनि॑क्रदत् । द्यु॒ऽमन्त॑म् । शुष्म॑म् । उ॒त्ऽत॒मम् ॥ ३ ॥

हे पवमान सोम[2] अद्रिभिः ग्रावभिः सुष्वाणः सुन्वानोऽभिपूयमाणः त्वं कनिक्रदत् भृशं शब्दं कुर्वन् अभ्यर्ष कलशं पात्राणि वा[3] अभिगच्छ[3] । तथा द्युमन्तं दीप्तियुक्तम् उत्तमं शुष्मं शत्रूणां शोषकं बलं च प्राप्नुहि । यद्वा । एकवाक्यतया योजनीयः । सूयमानस्त्वं बलमभिगच्छेति । 'कदि क्रदि' आह्वाने । क्रदेर्यङ्लुकि नलोपोऽभ्यासस्य निगागमश्च 'दाधर्तिदर्धर्ति०' इति सूत्रेण सर्वं निपात्यते । तस्माच्छतृप्रत्ययः । 'अभ्यस्तानामादिः' इति स्वरः ॥

इन्दु॒र्हिन्वा॒नो अ॑र्षति ति॒रो वारा॑ण्य॒व्यया॑ । हरि॒र्वाज॑मचिक्रदत् ॥ ४ ॥

इन्दुः॑ । हि॒न्वा॒नः । अ॒र्ष॒ति॒ । ति॒रः । वारा॑णि । अ॒व्यया॑ । हरिः॑ । वाज॑म् । अ॒चि॒क्र॒द॒त् ॥ ४ ॥

हिन्वानः ग्रावभिः प्रेर्यमाणोऽभिपूयमाणः इन्दुः सोमः अव्यया अविमयान्यवीनां स्वभूतानि वाराणि वालानि । पवित्राणीत्यर्थः । तानि तिरः तिरस्कृत्य व्यवधाय अर्षति गच्छति । प्रभूतं निर्गच्छतीत्यर्थः । सोऽयं हरिः हरितवर्णः सोमः वाजम् अन्नम् अचिक्रदत् शब्दयति । त्वया सह इन्द्रमहमाह्वयामीत्यर्थः[4] ॥

---

१. ग-त-भ१.७-मु–'ह' नास्ति । २. ग-त३-भ१.२.७ 'सोम' नास्ति । ३. ग-त-भ-मु–चाभिगच्छ । ४. त–इंद्रमहं माह्वयामीति वाजयाह्वयामीत्यर्थः; त३-भ२.५–इंद्रमह मादयामीति वाजसाह्वयामीत्यर्थः ।

**इन्दो॒ व्य॑व्य॑मर्षसि॒ वि श्रवां॑सि॒ वि सौभ॑गा । वि वाजा॑न्त्सोम॒ गोम॑तः ॥ ५ ॥**

इन्दो॒ इति॑ । वि । अव्य॑म् । अ॒र्ष॒सि॒ । वि । श्रवां॑सि । वि । सौभ॑गा ।

वि । वाजा॑न् । सो॒म॒ । गोऽम॑तः ॥ ५ ॥

हे ᵛइन्दो सोम ᵛअव्यम् अविवाले भवं पवित्रं ᵛवि ᵛअर्षसि विविधं धाराभिर्गच्छसि। किंच ᵛश्रवांसि हवीरूपाण्यन्नानि च ᵛवि गच्छसि। तथा ᵛसौभगा। सुभगस्य भावः सौभगम्। सुभगशब्द उद्गात्रादिषु पठ्यते। तस्योत्तरपदवृद्धिर्नेष्यते। सौभगानि[1] धनानि विविधं प्राप्नोषि। तथा हे ᵛसोम ᵛगोमतः पशुमन्ति ᵛवाजान् बलानि च विविधं प्राप्नुहि। तानि सर्वाण्यस्माकं प्रापयेत्यभिप्रायः ॥ ॥ १३ ॥

**आ न॑ इन्दो शत॒ग्विनं॑ र॒यिं गोम॑न्तम॒श्विन॑म् । भरा॑ सोम सह॒स्रिण॑म् ॥ ६ ॥**

आ । न॒: । इन्दो॒ इति॑ । श॒त॒ऽग्विन॑म् । र॒यिम् । गोऽम॑न्तम् । अ॒श्विन॑म् ।

भर॑ । सो॒म॒ । स॒ह॒स्रिण॑म् ॥ ६ ॥

हे ᵛइन्दो पात्रेषु क्षरन् हे ᵛसोम ᵛनः अस्मभ्यम् ᵛआ ᵛभर संपादय देहि। किमिति उच्यते। ᵛशतग्विनम्। शतं गावो यस्य स शतगुः। तद्वन्तं ᵛगोमन्तं प्रशस्तपशुमन्तम् ᵛअश्विनम् अश्वयुक्तं ᵛसहस्रिणं सहस्रसंख्याकं ᵛरयिं धनं पुत्रं वा आ भर ॥

**पव॑मानास॒ इन्द॑वस्ति॒रः प॒वित्र॑मा॒शवः॑ । इन्द्रं॒ यामे॑भिराशत ॥ ७ ॥**

पव॑मानासः । इन्द॑वः । ति॒रः । प॒वित्र॑म् । आ॒शवः॑ । इन्द्र॑म् । यामे॑भिः । आ॒श॒त॒ ॥ ७ ॥

ᵛपवित्रम् ऊर्णास्तुकेन निर्मितं दशापवित्रं ᵛतिरः तिरस्कृत्य व्यवधायकं कृत्वा ᵛपवमानासः कलशं प्रति बहुधाराः क्षरन्तः ᵛआशवः क्षिप्रंमदकारिणश्रमसादीन् व्याप्नुवन्तो वा ᵛइन्दवः सोमाः ᵛयामेभिः स्वीयैर्गमनैः ᵛइन्द्रम् ᵛआशत व्याप्नुवन्ति ॥

**क॒कु॒हः सो॒म्यो रस॒ इन्दु॒रिन्द्रा॑य पू॒र्व्यः । आ॒युः प॑वत आ॒यवे॑ ॥ ८ ॥**

क॒कु॒हः । सो॒म्यः । रसः॑ । इन्दुः॑ । इन्द्रा॑य । पू॒र्व्यः॑ । आ॒युः । प॒व॒ते॒ । आ॒यवे॑ ॥ ८ ॥

ᵛककुहः। सोमः[2] सर्वकर्मकारयितृत्वेन सर्वेषां समुच्छ्रितोऽतिशयितो भवति। सोऽयं ᵛपूर्व्यः पूर्वैः कृतोऽभिषुतः पूर्वं प्रातःकाले कृतो वा ᵛआयुः इन्द्रमभिगन्ता[3] ᵛइन्दुः पात्रेषु क्षरन् ᵛसोम्यः। 'मये च' (पा. सू. ४. ४. १३८) इति यप्रत्ययः। सोममयः ᵛरसः ᵛआयवे सर्वत्र गन्त्रे ᵛइन्द्राय ᵛपवते कलशेषु पवित्रेण पूतो भवति। यद्वा। इन्द्रार्थमभिमुखं गच्छति। पवतिर्गतिकर्मा ॥

**हि॒न्वन्ति॒ सूर॒मुस्र॑यः॒ पव॑मानं मधु॒श्चुत॑म् । अ॒भि गि॒रा सम॑स्वरन् ॥ ९ ॥**

हि॒न्वन्ति॑ । सूर॑म् । उस्र॑यः । पव॑मानम् । म॒धु॒ऽश्चुत॑म् । अ॒भि । गि॒रा । सम् । अ॒स्व॒र॒न् ॥ ९ ॥

ᵛउस्रयः कर्मकरणार्थमितस्ततः संचरन्त्योऽङ्गुलयः ᵛमधुश्चुतं मदकरस्य रसस्य स्त्रावयितारं ᵛसूरं सुवीर्यं सर्वस्य यागादिकर्मणि प्रेरकं ᵛपवमानं सोमं ᵛहिन्वन्ति अभिषवार्थं संप्रेरयन्ति। ततः स्तोतारः ᵛगिरा स्तुत्या तमेनम् ᵛअभि ᵛसमस्वरन् सम्यगभिष्टुवन्ति ॥

१. ग-त३-भ२.५-सौभाग्यानि। २. त३-यः सोमः। ३. त-इंद्र तेभिगंता।

**अविता नो अजाश्वः पूषा यामनियामनि। आ भक्षत्कन्यासु नः ॥ १० ॥**

अविता। नः। अजऽअश्वः। पूषा। यामनिऽयामनि। आ। भक्षत्। कन्यासु। नः ॥ १० ॥

अजाश्वः। 'अजाः पूष्णः' इत्युक्तत्वादजा एवाश्वा वाहनानि यस्य स तथोक्तः। सः पूषा एतन्नामको देवः यामनियामनि सर्वस्मिन् गमने भौमदिव्यलक्षणे नः अस्माकम् अविता पालयिता भवतु। किंच कन्यासु कमनीयास्वभिमतासु स्त्रीषु नः अस्मान् आ भक्षत् आभजतु। अस्माकं कन्याः प्रयच्छत्वित्यर्थः। भजः सेवार्थाल्लेटि सिप्यडागमे रूपम्। यद्वा। अजाश्वोऽजवाहनः पूषा सर्वस्य पोषयिता सोमो यामनियामनि। यायते प्राप्यते देवैरत्रेति याम यज्ञः। तत्र यज्ञे नोऽस्माकमविता रक्षिता भवतु। तथा कन्यासु स्त्रीष्विष्टास्वस्माना भक्षत्[1] प्रापयतु ॥ ॥ १४ ॥

**अयं सोमः कपर्दिने घृतं न पवते मधु। आ भक्षत्कन्यासु नः ॥ ११ ॥**

अयम्। सोमः। कपर्दिने। घृतम्। न। पवते। मधु। आ। भक्षत्। कन्यासु। नः ॥ ११ ॥

कपर्दिने कल्याणमुकुटवते सोमाय पूष्णे वा तदर्थम् अयं मादयिताभिषुतोऽस्मदीयः सोमः पवते च गच्छति। तं प्राप्नोति। तत्र दृष्टान्तः। घृतं न मधु मादकं हवीरूपं घृतं यथा सोमं पूषणं वा गच्छति तद्वत्। ततः सः कन्यासु[2] अस्मानागमयत्[2] ॥

**अयं त आघृणे सुतो घृतं न पवते शुचि। आ भक्षत्कन्यासु नः ॥ १२ ॥**

अयम्। ते। आघृणे। सुतः। घृतम्। न। पवते। शुचि। आ। भक्षत्। कन्यासु। नः ॥ १२ ॥

हे आघृणे। 'घृ क्षरणदीप्त्योः'। सर्वतो दीप्यमान पवमान पूषन् वा ते त्वदर्थं सुतः अभिषुतः अयं सोमः पवते त्वदभिमुखमागच्छति। यद्वा। त्वदर्थं पात्रेषु पवित्रेण पूतो भवति क्षरति वा। तत्र दृष्टान्तः। घृतं न शुचि। शुद्धं घृतं यथा त्वां प्राप्नोति तद्वत्। ततस्त्वमभिलषितान्यस्माकं देहीति ॥

**वाचो जन्तुः कवीनां पवस्व सोम धारया। देवेषु रत्नधा असि ॥ १३ ॥**

वाचः। जन्तुः। कवीनाम्। पवस्व। सोम। धारया। देवेषु। रत्नऽधाः। असि ॥ १३ ॥

हे सोम कवीनां क्रान्तप्रज्ञानां स्तोतॄणां वाचो जन्तुः स्तुतेर्जनयिता। यद्वा। मेधाविनां मध्ये त्वमेव[3] वाचं जनयसि। अत्यन्तं वाग्मी त्वं धारया पवस्व द्रोणकलशं ग्रहांश्च प्राप्नुहि। ततः इन्द्रादिदेवेषु रत्नधाः रमणशीलस्य सोमस्य निधाता असि भवसि। अथवा। देवेषु स्तोत्रकारिषु कर्म कुर्वाणेषु वास्मासु रत्नस्य कनकादेर्दाता भवसि ॥

ग्रावस्तोत्रे गाणगारिमतेनाभिरूपकरणे कलशेषु सोम आसिच्यमाने वक्तव्यस्य तृचस्य 'आ कलशेषु' इत्यादिके द्वितीयातृतीये। सूत्रितं च—'आ कलशेषु धावति श्येनो वर्म वि गाहत इति द्वे' (आश्व. श्रौ. ५. १२) इति ॥

**आ कलशेषु धावति श्येनो वर्म वि गाहते। अभि द्रोणा कनिक्रदत् ॥ १४ ॥**

आ। कलशेषु। धावति। श्येनः। वर्म। वि। गाहते। अभि। द्रोणा। कनिक्रदत् ॥ १४ ॥

१. ग-त-भ१.२.४–'भक्षत्' नास्ति। २. ग–कन्याः अस्मानागमयतु; त१–कन्यास्तस्मानागमयत्; त२–कन्यास्वमानागमयत्; भ१–कन्यास्मानागमयत्; भ४–कन्यामयत्; भ७–कन्यासु नोस्मानागमयत्। ३. त–'त्वमेव' नास्ति।

ऋत्विग्भिरभिषिच्यमानः कश्चित्सोमः ᵛकलशेषु सोमाधारेषु द्रोणकलशेषु ᵛआ ᵛधावति सर्वतो गच्छति । ᵛश्येनः । लुप्तोपममेतत् । यथा श्येनः ᵛवर्म वरणीयं कुलायं ᵛवि ᵛगाहते प्रविशति तद्वत् । ᵛकनिक्रदत् अत्यन्तं शब्दं कुर्वन् ᵛद्रोणा द्रोणकलशानभिगच्छति च । यद्वा । द्रोणाधवनीयपूतभृत्संज्ञकाभिप्रायम् । एकः सिच्यमानः सोमो द्रोणं प्रति शब्दायमानः प्रथमं गच्छति । ततः पश्चात् पात्रद्वयमिति ॥

**परि॒ प्र सो॑म ते॒ रसोऽस॑र्जि क॒लशे॑ सु॒तः । श्ये॒नो न त॒क्तो अ॑र्षति ॥ १५ ॥**

परि॑ । प्र । सो॒म॒ । ते॒ । रसः॑ । अस॑र्जि । क॒लशे॑ । सु॒तः । श्ये॒नः । न । त॒क्तः । अ॒र्ष॒ति॒ ॥ १५ ॥

हे ᵛसोम ᵛकलशेषु द्रोणाभिधानेषु ᵛसुतः अभिषुतः ᵛते तव ᵛरसः ᵛपरि ᵛप्र[1] ᵛअसर्जि[1] परितो ग्रहेषु चमसेषु च प्रसृष्टो विभक्तो[2] भवति[2] । कथमिव । ᵛश्येनो ᵛन ᵛतक्तः । तकिर्गतिकर्मा । गमनशीलः श्येनः पक्षी यथा सर्वत्र ᵛअर्षति गच्छति तद्वत् । यद्वा । यथा श्येनः सर्वतो गन्ता तद्वत्तक्तः पात्रेषु गतः सोमोऽर्षति इन्द्रादिदेवानागच्छतु । अर्तेर्लेटि सिपि वा रूपम् । पूर्वम् ‘ ऋषी गतौ ’ इत्यस्माल्लटि शपि रूपम् ॥ ॥ १५ ॥

**पव॑स्व सोम म॒न्दय॒न्निन्द्रा॑य॒ मधु॑मत्तमः ॥ १६ ॥**

पव॑स्व । सो॒म॒ । म॒न्दय॑न् । इन्द्रा॑य । मधु॑मत्ऽतमः ॥ १६ ॥

हे ᵛसोम ᵛमधुमत्तमः अतिशयेन मधुररसवांस्त्वं ᵛमन्दयन् मादयिता भवन् । यद्वा । ᵛइन्द्राय । ‘ क्रियाग्रहणं कर्तव्यम् ’ इति संप्रदानम् । इन्द्रं मोदमानः सन् ᵛपवस्व इन्द्रार्थमागच्छ ॥

**असृ॑ग्रन् दे॒ववी॑तये वाज॒यन्तो॒ रथा॑इव ॥ १७ ॥**

असृ॑ग्रन् । दे॒वऽवी॑तये । वा॒ज॒ऽयन्तः॑ । रथाः॑ऽइव ॥ १७ ॥

एतेऽभिषुताः सोमाः ᵛवाजयन्तः सन्तः[3] ᵛदेववीतये देवानां पानाय ᵛअसृग्रन् विसृज्यन्ते ऋत्विग्भिः प्रदीयन्ते । तत्र दृष्टान्तः । ᵛरथाइव । वाजयन्तः शत्रुधनानि बलानि वा स्वामिन इच्छन्तो रथा देववीतये देवानां गमनाय यथा विसृज्यन्ते तद्वत् ॥

**ते सु॒तासो॑ म॒दिन्त॑माः शु॒क्रा वा॒युम॑सृक्षत ॥ १८ ॥**

ते । सु॒तासः॑ । म॒दिन्ऽत॑माः । शु॒क्राः । वा॒युम् । अ॒सृ॒क्ष॒त॒ ॥ १८ ॥

ᵛमदिन्तमाः अतिशयेन मादयितारः ᵛशुक्राः दीप्यमानाः सुता[4] अभिषुताः ᵛते सोमाः ᵛवायुं शब्दम् ᵛअसृक्षत असृजन् अकार्षुः । यद्वा वायुमेव सोमपानार्थमसृजन् । सोमेषु सुतेषु[5] सत्सु[6] वायुस्तत्पानार्थमागच्छति खलु ॥

**ग्राव्णा॑ तु॒न्नो अ॒भिष्टु॑तः प॒वित्रं॑ सोम गच्छसि । दध॑त्स्तो॒त्रे सु॒वीर्य॑म् ॥ १९ ॥**

ग्राव्णा॑ । तु॒न्नः । अ॒भिऽस्तु॑तः । प॒वित्र॑म् । सो॒म॒ । गच्छ॑सि । दध॑त् । स्तो॒त्रे । सु॒ऽवीर्य॑म् ॥ १९ ॥

---

१. ग-भ४-सृज्यते; त-भ१.२.७-प्रसृज्यते; मु-प्रामर्जि परिप्रसृज्यते । २. त३-भ१.४.७-विभक्तो भवत् । ३. ग-भ५-यजमानानामन्नमिच्छंतः; त३-भ२.४-यजमानानामन्नमिच्छंतः संतः । ४. भ१ (२)-सुतासः । ५. त-‘ सुतेषु ’ नास्ति । ६. ग-त३-भ१.७-‘ सत्सु ’ नास्ति ।

हे ᵛसोम ᵛग्राव्णा ᵛतुन्नः अभिपीडितोऽभिषुतस्त्वं स्तोतृभिः ᵛअभिष्टुतः सन् ᵛपवित्रं[1] ᵛगच्छसि प्राप्नोषि। किं कुर्वन्। ᵛस्तोत्रे स्तोत्रकारिणे जनाय ᵛसुवीर्यं शोभनवीर्योपेतं धनादिकं ᵛदधत् विदधत् प्रयच्छन् ॥

**एष तुन्नो अभिष्टुतः पवित्रमति गाहते। रक्षोहा वारमव्ययम् ॥ २० ॥**

एषः। तुन्नः। अभिऽस्तुतः। पवित्रम्। अति। गाहते। रक्षःऽहा। वारम्। अव्ययम् ॥ २० ॥

ᵛतुन्नः। 'तुद व्यथने'। ग्रावभिरभिव्यथितः सुतः अत एव सर्वैः ᵛअभिष्टुतः ᵛएषः अस्मदीयः सोमः ᵛरक्षोहा कर्मविघ्नकारिणां रक्षसां पापानां वा[2] हन्ताभवत्। ᵛअव्ययम् अविमयमव्यवयवभूतं ᵛवारं वालं तेन कृतं ᵛपवित्रं दशापवित्रम् ᵛअति अतिक्रम्य ᵛगाहते द्रोणकलशं प्रविशति ॥ ॥१६॥

**यदन्ति यच्च दूरके भयं विन्दति मामिह। पवमान वि तज्जहि २१ ॥**

यत्। अन्ति। यत्। च। दूरके। भयम्। विन्दति। माम्। इह। पवमान। वि। तत्। जहि ॥ २१ ॥

हे ᵛपवमान पूयमान पुनान वा सोम ᵛयत् ᵛभयम् ᵛअन्ति अन्तिके तथा ᵛयच्च भयं ᵛदूरके अतिदूरे देशे अथवा ᵛइह अस्मिन् प्रदेशेऽपि भयं ᵛमां ᵛविन्दति लभते प्राप्नोति ᵛतत् भयं त्वं ᵛवि ᵛजहि विशेषेण नाशय। यद्वा। इहेति यज्ञोऽयं लोको वा। अस्मिन् क्रियमाणे यज्ञेऽस्मिँल्लोके वा यद्भयं व्याप्नोति तन्नाशयेत्यर्थः ॥

**पवमानः सो अद्य नः पवित्रेण विचर्षणिः। यः पोता स पुनातु नः ॥ २२ ॥**

पवमानः। सः। अद्य। नः। पवित्रेण। विऽचर्षणिः। यः। पोता। सः। पुनातु। नः ॥ २२ ॥

ᵛसः तादृशः प्रसिद्धः ᵛविचर्षणिः सर्वस्य द्रष्टा ᵛपवमानः ᵛअद्य इदानीमेव ᵛपवित्रेण पापशोधकेन तेजसा[3] ᵛनः अस्मान् ᵛपुनातु पापरहितान् करोतु ॥

पवित्रेष्ट्यां प्रथमाज्यभागस्य याज्या 'यत्ते पवित्रम्' इत्येषा[4]। सूत्रितं च—'यत्ते पवित्रमर्चिष्या कलशेषु धावतीति पवित्र इत्येते" (आश्व. श्रौ. २. १२) इति ॥

**यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्म तेन पुनीहि नः ॥ २३ ॥**

यत्। ते। पवित्रम्। अर्चिषि। अग्ने। विऽततम्। अन्तः। आ। ब्रह्म। तेन। पुनीहि। नः ॥ २३ ॥

हे पवमानगुणविशिष्ट ᵛअग्ने ᵛते त्वदीयं ᵛपवित्रं शोधकं ᵛयत् स्वतेजः ᵛअर्चिषि औरवैद्युतादितेजसि ᵛअन्तः मध्ये ᵛआ ᵛविततम् आविस्तृतं विद्यते। यद्वा। हे अग्ने ते तव स्वभूतेऽर्चिषि तेजस्यन्तर्मध्ये यत्पवित्रं शुद्ध्युत्पादकं सामर्थ्यमस्ति। ᵛतेन तादृशेन[5] तेजसा ᵛब्रह्म पुत्रादिवर्धनकारि ᵛनः शरीरं ᵛपुनीहि पापरहितं पूतं कुरु ॥

**यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः। ब्रह्मसवैः पुनीहि नः ॥ २४ ॥**

यत्। ते। पवित्रम्। अर्चिऽवत्। अग्ने। तेन। पुनीहि। नः। ब्रह्मऽसवैः। पुनीहि। नः ॥ २४ ॥

१. ग-त३-भ५-पवित्रं दशापवित्रं। २. त१.५-भ७-च; त४-चा। ३. त७-तेजसा पोता स्वयं पवित्रः सन्; मु-तेजसा यः पोता स्वयं पवित्रः सन्। ४. ग-इत्येका; त-भ-मु-इत्येक। ५. ग-तत्सदृशेन।

हे अग्ने ᵛपवित्रं शोधकम् ᵛअर्चिवत् अर्चिर्वत् । 'छन्दसीरः' इति मतुपो वत्वम् । सौरादि-तेजोयुक्तं ᵛते त्वदीयं ᵛयत् तेजो विद्यते ᵛतेन स्वीयेनैव तेजसा ᵛनः अस्मान् ᵛपुनीहि पूतान् कुरु । किंच ᵛब्रह्मसवैः ब्राह्मणकर्तृकसोमाभिषवैः । यद्वा । ब्रह्म सोमः । तस्याभिषवैः नोऽस्मान् पुनीहि ॥

**उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ २५ ॥**

उभाभ्याम् । देव । सवितरिति । पवित्रेण । सवेन । च । माम् । पुनीहि । विश्वतः ॥ २५ ॥

हे ᵛसवितः सर्वस्य प्रेरक हे ᵛदेव द्योतमान सोम त्वं ᵛपवित्रेण पापशोधकेन स्वदीयेन तेजसा ᵛसवेन सोमाभिषवेण ᵛच एताभ्याम् ᵛउभाभ्यां ᵛविश्वतः सर्वतः ᵛमां ᵛपुनीहि पूतं कुरु ॥ ॥१७॥

**त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः ॥ २६ ॥**

त्रिऽभिः । त्वम् । देव । सवितः । वर्षिष्ठैः । सोम । धामऽभिः । अग्ने । दक्षैः । पुनीहि । नः ॥२६॥

हे ᵛदेव स्तुत्य दीप्यमान वा हे ᵛसवितः सर्वस्य स्वस्वकर्मणि चोदयितर्हे ᵛसोम पवमान-गुणविशिष्ट हे ᵛअग्ने ᵛत्वं ᵛवर्षिष्ठैः वृद्धतमैः अत एव ᵛदक्षैः सामर्थ्यवद्भिः ᵛत्रिभिः ᵛधामभिः शरीरैः अग्निवायुसूर्यात्मकैस्त्रिभिः शरीरैः ᵛनः अस्मान् ᵛपुनीहि परिशुद्धान् कुरु ॥

**पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।**
**विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा ॥ २७ ॥**

पुनन्तु । माम् । देवऽजनाः । पुनन्तु । वसवः । धिया ।
विश्वे । देवाः । पुनीत । मा । जातऽवेदः । पुनीहि । मा ॥ २७ ॥

ᵛदेवजनाः । देवानां जनः प्रादुर्भावो येषां यज्ञेष्विति देवजना यजमानाः । यद्वा इन्द्रादि-देवगणाः । ᵛमां ᵛपुनन्तु परिपूतं कुर्वन्तु । तथा ᵛवसवः वासका[1] देवाः[2] ᵛधिया आत्मीयेन कर्मणा मां ᵛपुनन्तु । अथ प्रत्यक्षः । हे ᵛविश्वे ᵛदेवाः सर्वे देवाः ᵛमा मां ᵛपुनीत पूतं कुरुत । हे ᵛजातवेदः जातानि भूतजातानि वेत्तीति यद्वा जातप्रज्ञ हे अग्ने ᵛमा मां ᵛपुनीहि ॥

**प्र प्यायस्व प्र स्यन्दस्व सोम विश्वेभिरंशुभिः । देवेभ्य उत्तमं हविः ॥ २८ ॥**

प्र । प्यायस्व । प्र । स्यन्दस्व । सोम । विश्वेभिः । अंशुऽभिः । देवेभ्यः । उत्ऽतमम् । हविः ॥२८॥

हे ᵛसोम ᵛप्र ᵛप्यायस्व अस्मान् प्रकर्षेण वर्धय[2] । यद्वा देवान् सोमेन वर्धय । किंच ᵛविश्वेभिरंशुभिः सर्वैस्त्वदीयैरंशुभिः ᵛदेवेभ्यः देवार्थम् ᵛउत्तमं प्रशस्ततमं ᵛहविः सोमरूपं ᵛप्र ᵛस्यन्दस्व कलशादीन् प्रति प्रस्रव । प्रयच्छेति यावत् ॥

अग्नीषोमप्रणयने 'उप प्रियम्' इत्येषा । सूत्रितं च—'उप प्रियं पनिप्नतमित्यर्धर्चे आरमेत्' ( आश्व. श्रौ. ४. १० ) इति ॥

**उप प्रियं पनिप्नतं युवानमाहुतीवृधम् । अगन्म बिभ्रतो नमः ॥ २९ ॥**

उप । प्रियम् । पनिप्नतम् । युवानम् । आहुतिऽवृधम् । अगन्म । बिभ्रतः । नमः ॥ २९ ॥

ᵛप्रियं सर्वस्य प्रीणयितारं ᵛपनिप्नतम् अत्यन्तं शब्दायमानं ᵛयुवानं तरुणम् ᵛआहुतिवृधम् आहुतिभिर्वर्धनीयं पवमानं वयं ᵛनमः[3] हविर्नमस्कारं वा ᵛबिभ्रतः धारयन्तः सन्तः ᵛउप ᵛअगन्म

१. ग–अपि । २. ग-त३-म१.२.४.५–प्रवर्धय । ३. ग–विप्राः ।

उपगच्छेम। गमेर्लुङि 'मन्त्रे घस॰' इति च्लेर्लुकि सति 'म्वोश्च' इति नकारः। पनिप्नतम्। पनेः स्तुत्यर्थस्य यङ्लुकि रूपम्। 'दाधर्ति दर्धर्ति॰' इति सूत्रे इतिकरणस्य प्रदर्शनार्थत्वादत्राभ्यासस्य निगागम उपधालोपश्च निपात्यते॥

**अलाय्यस्य परशुर्ननाश तमा पवस्व देव सोम। आखुं चिदेव देव सोम॥३०॥**

अलाय्यस्य। परशुः। ननाश। तम्। आ। पवस्व। देव। सोम।

आखुम्। चित्। एव। देव। सोम॥ ३०॥

^अलाय्यस्य। अर्तेरौणादिक आय्यप्रत्ययः। कपिलकादित्वाल्लत्वम्। अभिगमनशीलस्य शत्रोः ^परशुः छेदकः पवमानः ^तम् एव शत्रुं ^ननाश नाशयतु नास्मानपापान्। ततो हे ^देव दीप्यमान ^सोम ^आ ^पवस्व अस्मदाभिमुख्येन गच्छ। किंच हे ^देव द्योतमान स्तुत्य वा हे ^सोम ^आखुं ^चित्। 'खनु अवदारणे'। सर्वस्याहन्तारमपि ^तं शत्रुम् ^एव बाधस्व नास्मानपापानिति॥

**यः पावमानीरध्येत्यृषिभिः संभृतं रसम्।**
**सर्वं स पूतमश्नाति स्वदितं मातरिश्वना॥ ३१॥**

यः। पावमानीः। अधिऽएति। ऋषिऽभिः। सम्ऽभृतम्। रसम्।

सर्वम्। सः। पूतम्। अश्नाति। स्वदितम्। मातरिश्वना॥ ३१॥

^यः जनः[1] ^पावमानीः पवमानदेवताकाः सर्वा ऋचः तद्रूपम् ^ऋषिभिः सूक्तद्रष्टृभिर्मधुच्छन्दः-प्रभृतिभिः ^संभृतं संपादितं ^रसं वेदरसभूतं सारं सूक्तसंघम् ^अध्येति अधीते ^सः जनः ^सर्वं भोज्यजातं ^पूतं परिशुद्धमेव ^अश्नाति। परिपूतं पापरहितमन्नं भक्षयति। कथमस्य पूतत्वं तत्राह। स्वस्याशनात्प्रागेव ^मातरिश्वना। मातर्यन्तरिक्षे श्वसितीति मातरिश्वा वायुः। स च वायुः पवित्रमेव। पवित्रेण वायुना ^स्वदितं स्वादूकृतं परिपूतमेवान्नं पश्चात् स नरोऽश्नाति॥

**पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम्।**
**तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम्॥ ३२॥**

पावमानीः। यः। अधिऽएति। ऋषिऽभिः। सम्ऽभृतम्। रसम्।

तस्मै। सरस्वती। दुहे। क्षीरम्। सर्पिः। मधु। उदकम्॥ ३२॥

^यः ब्राह्मणः ^पावमानीः पवमानदेवताका ऋचः तदात्मकम् ^ऋषिभिः मधुच्छन्दआदिभिः ^संभृतं ^रसं वेदसारं सूक्तसंघम् ^अध्येति अधीते ^तस्मै पवमानाध्ययनं कुर्वते जनाय ^सरस्वती सर्वत्र सरणवती वाग्देवता ^क्षीरं यज्ञसाधनभूतं पयः ^सर्पिः तादृशं घृतं ^मधु मदकरम् ^उदकं सोमं ^दुहे स्वयमेव दोग्धि। एवं नरं यागादिपरं वेदशास्त्रविदं करोतीत्यर्थः। 'दुह प्रपूरणे'। कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ' इति यकः प्रतिषेधः। 'लोपस्त आत्मनेपदेषु' इति तलोपः॥ ॥१८॥ ॥३॥

चतुर्थेऽनुवाकेऽष्टादश सूक्तानि। तत्र 'प्र देवम्' इति दशर्चं प्रथमं सूक्तं भलन्दनपुत्रस्य वत्सप्रेरार्षं पवमानसोमदेवताकम्। दशमी त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रम्यते—'प्र देवं दश वत्सप्रिर्भालन्दनस्त्रिष्टुबन्तं ह' इति। गतो विनियोगः॥

---

१. ग-त३-भ२.५–यजमानः।

प्र देवमच्छा मधुमन्त इन्दवोऽसिष्यदन्त गाव आ न धेनवः ।
बर्हिषदो वचनावन्त ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे ॥ १ ॥

प्र । देवम् । अच्छ । मधुऽमन्तः । इन्दवः । असिस्यदन्त । गावः । आ । न । धेनवः ।
बर्हिऽसदः । वचनाऽवन्तः । ऊधऽभिः । परिऽस्रुतम् । उस्रियाः । निःऽनिजम् । धिरे ॥ १ ॥

ᵛमधुमन्तः मादकरससंयुक्ताः[1] ᵛइन्दवः सोमाः ᵛदेवं द्योतमानं सोमात्मकमिन्द्रम् ᵛअच्छ प्रति ᵛप्र ᵛअसिष्यदन्त प्रस्यन्दन्ते । प्रहादिषु प्रक्षरन्ति । स्यन्दतेर्ण्यन्तस्य लुङि चङि रूपम् । तत्र दृष्टान्तः । ᵛगाव ᵛआ ᵛन ᵛधेनवः । पयस्विन्यः प्रीणयित्र्यो गावो यथा वत्सं प्रति पयांसि प्रस्रवन्ति तद्वत् । किंच ᵛबर्हिषदः बर्हिषि सीदन्तः ᵛवचनावन्तः हम्भारवादिशब्दवन्तः ᵛउस्रियाः । गोनामैतत् । तादृश्यो गावः ᵛऊधभिः पयोधारकैः स्वैः स्वैरूधभिः ᵛपरिस्रुतं[2] परितः स्रवणशीलं ᵛनिर्णिजं शुद्धं पयोभूतं सोमरसं ᵛधिरे दधिरे । इन्द्रार्थं धारयन्ति ॥

स रोरुवदभि पूर्वा अचिक्रददुपारुहः श्रथयन्त्स्वादते हरिः ।
तिरः पवित्रं परियन्नुरु ज्रयो नि शर्याणि दधते देव आ वरम् ॥ २ ॥

सः । रोरुवत् । अभि । पूर्वाः । अचिक्रदत् । उपऽआरुहः । श्रथयन् । स्वादते । हरिः ।
तिरः । पवित्रम् । परिऽयन् । उरु । ज्रयः । नि । शर्याणि । दधते । देवः । आ । वरम् ॥ २ ॥

ᵛरोरुवत् कलशादिकं प्रति अत्यन्तं शब्दं कुर्वन् ᵛसः सोमः ᵛपूर्वाः मुख्याः स्तोतॄणां स्तुतीः ᵛअभि ᵛअचिक्रदत् अभिमुखमध्वनयत् । स्तुतयः माधीयस्य इति प्रतिध्वनिमङ्गीकारमकार्षी-दित्यर्थः । किंच ᵛहरिः हरितवर्णः ᵛउपारुहः । रोहतेस्ताच्छीलिकः क्विप् । उपारोहणशीला ऊर्ध्वं प्रादुर्भवनशीला ओषधीः ᵛश्रथयन् अग्रे विश्लेषयन् ᵛस्वादते स्वादूकरोति । ताः फलिनीः कुर्वन् स्वादुयुक्ता विदधातीत्यर्थः । तथा ᵛपवित्रम् अविवालात्मकं दशापवित्रं ᵛतिरः तिरस्कृत्य पात्राणि प्रत्यात्मनः क्षरणकाले पवित्रं व्यवधायकं कृत्वा ᵛपरियन् परितो गच्छन् सोमः ᵛउरु महान्तं ᵛज्रयः वेगं करोति । ततः ᵛशर्याणि । 'शॄ हिंसायाम्' । हिंसितव्यानि यद्वा शरेण हन्तव्यानि रक्षांसि ᵛनि ᵛदधते निक्षिपति न्यक्करोति । हिनस्तीति यावत् । पश्चात् ᵛदेवः दीप्यमानः सोमः ᵛवरं वरणीयं धनं सोमदातृभ्यो यजमानेभ्यः ᵛआ दधते आधारयति । प्रयच्छतीत्यर्थः । दधातेः लेट्यडागमे[3] 'घोर्लोपो लेटि वा' इत्याकारलोपः ॥

वि यो ममे यम्या संयती मदः साकंवृधा पयसा पिन्वदक्षिता ।
मही अपारे रजसी विवेविदद्भिव्रजन्नक्षितं पाज आ ददे ॥ ३ ॥

वि । यः । ममे । यम्या । संयती इति सम्ऽयती । मदः । साकम्ऽवृधा । पयसा । पिन्वत् । अक्षिता ।
मही इति । अपारे इति । रजसी इति । विऽवेविदत् । अभिऽव्रजन् । अक्षितम् । पाजः । आ । ददे ॥ ३ ॥

ᵛयः ᵛमदः । माद्यत्यनेनेति मदः सोमरसः । ᵛयम्या युगलभूते ᵛसंयती परस्परं संगच्छमाने द्यावापृथिव्यौ ᵛवि ᵛममे विशेषेण निर्मितवान् ततः ते ᵛसाकंवृधा सहैव वर्धनशीले तथा ᵛअक्षिता

१. ग–मधुररसयुक्ताः; त३-भ२–मदकररसयुक्ताः । २. त-मु–ताभ्यः परिस्रुतं । ३. त३-भ१. ५.७–लेट्याडागमे ।

अक्षीणे सामर्थ्यवत्यौ यथा भविष्यतः तथा स सोमः पयसा पयोरूपेण स्वीयरसेन पिन्वत् असिञ्चत्। अवर्धयदिति यावत्। किंच मही महत्यौ अत एव अपारे पर्यन्तरहिते रजसी। द्यावापृथिवीनामैतत्। ते द्यावापृथिव्यौ विवेविदत्। 'विद ज्ञाने'। यङ्लुकि शतरि रूपम्। अभ्यासस्वरः[1]। इयं पृथिवीयं द्यौरिति सर्वेषां विविच्य तेजसा प्रज्ञापयन् अभिव्रजन् अभितः सर्वतो गच्छन् स सोमः अक्षितम् अक्षीणमविनश्वरं पाजः बलम् आ ददे स्वीकृतवान्। अत्यन्तं बलवानभवदित्यर्थः॥

स मातरा विचरन्वाजयन्नपः प्र मेधिरः स्वधया पिन्वते पदम्।
अंशुर्यवेन पिपिशे यतो नृभिः सं जामिभिर्नसते रक्षते शिरः॥ ४॥

सः। मातरा। विऽचरन्। वाजयन्। अपः। प्र। मेधिरः। स्वधया। पिन्वते। पदम्।
अंशुः। यवेन। पिपिशे। यतः। नृऽभिः। सम्। जामिऽभिः। नसते। रक्षते। शिरः॥४॥

मेधिरः। 'मेधारथाभ्यामिरन्निरचौ०' (पा. सू. ५.२.१०९.३) इतीरन्प्रत्ययो मत्वर्थीयः। मेधावान् प्राज्ञः सः सोमः मातरा मातरौ जगतो निर्मात्र्यौ द्यावापृथिव्यौ विचरन् अन्तरेणात्यन्तं चरन् तथा अपः अन्तरिक्षस्थितान्युदकानि वाजयन् प्रेरयन्। वजेर्ण्यन्तस्य[2] शतरि रूपम्। तादृशः स्वधया सक्तुलक्षणेनान्नेन सह पदं स्वस्थानमुत्तरवेदिरूपं प्र पिन्वते प्रकर्षेणाप्याययति। ततः नृभिः कर्मनेतृभिर्ऋत्विग्भिः यतः संयतः अंशुः सोमः यवेन पिपिशे। 'पिश अवयवे'। अवयववत्त्वेन कृतः। मिश्रित इत्यर्थः। सोमस्तु यवसक्तुभिः श्रीयते खलु। सोऽयं जामिभिः एकस्मात्पाणेरुत्पन्नाभिरङ्गुलीभिः सं नसते संगच्छते च। शिरः शीर्णं भूतजातं रक्षते च[3]। स्वीयरसेन रक्षति पोषयति। नसतिर्गतिकर्मा। 'चादिलोपे विभाषा' इति न निघातः॥

सं दक्षेण मनसा जायते कविर्ऋतस्य गर्भो निहितो यमा परः।
यूना ह सन्ता प्रथमं वि जज्ञतुर्गुहा हितं जनिम नेममुद्यतम्॥ ५॥

सम्। दक्षेण। मनसा। जायते। कविः। ऋतस्य। गर्भः। निऽहितः। यमा। परः।
यूना। ह। सन्ता। प्रथमम्। वि। जज्ञतुः। गुहा। हितम्। जनिम। नेमम्। उत्ऽयतम्॥५॥

प्रसङ्गात् सोमसूर्ययोराविर्भावमाह। दक्षेण प्रवृद्धेन मनसा सह सं जायते पृथिव्याः[4] सम्यग्जायते। तथा ऋतस्य उदकस्यैव गर्भः गर्भवदाधारः। यद्वा। सत्यस्य यज्ञस्य मध्ये गर्भः शब्दनीयः स्तुत्यः। स एव सोमः परः परस्तादन्तरिक्षे यमा यमेन नियमेन देवैः निहितः सः। सूर्याद्धि वृष्टिर्भवति। तस्मात्सोमः सूर्यात्मकतयावस्थित इत्यर्थः। एवं यूना। ह इत्यवधारणे। युवानावेव सन्तौ तौ प्रथमं जननकाले वि जज्ञतुः। अयं सोमोऽयं सूर्य इति विशेषेण ज्ञायते। तयोश्चार्धं जनिम जन्म गुहा गुहायां हितं निहितं भवति। तयोः नेमम् अर्धं च[5] उद्यतं[5] प्रकाशितं भवति। दिवा सूर्यः प्रादुर्भवति रात्रौ चन्द्रमा इति॥ ॥ १९॥

मन्द्रस्य रूपं विविदुर्मनीषिणः श्येनो यदन्धो अभरत्परावतः।
तं मर्जयन्त सुवृधं नदीष्वाँ उशन्तमंशुं परियन्तमृग्मियम्॥ ६॥

---

१. ग-त३-भ-अभ्यस्तस्वरः; त४.५-अभ्यस्वरः। २. त४-भ२.७-वाजेर्ण्यतस्य। ३. भ६-'च' नास्ति। ४. ग-पृथिव्यां। ५. त१.२.५.६-चोद्यतमुद्यत; त४-वोद्यतमुद्यत; भ६-चोद्यतमुद्यतं; भ७-चोद्यत।

मन्द्रस्य । रूपम् । विविदुः । मनीषिणः । श्येनः । यत् । अन्धः । अभरत् । पराऽवतः ।
तम् । मर्जयन्त । सुऽवृधम् । नदीषु । आ । उशन्तम् । अंशुम् । परिऽयन्तम् । ऋग्मियम् ॥६॥

ᵛमनीषिणः प्राज्ञा यष्टारः ᵛमन्द्रस्य मदकरस्य तस्य सोमस्य ᵛरूपं ᵛविविदुः जानन्ति। ᵛयत् ᵛअन्धः यत् सोमलक्षणमन्नं ᵛश्येनः गायत्रीरूपः पक्षी ᵛपरावतः दूरात् द्युलोकात् ᵛआभरत् आजहार। 'हृग्रहोर्भश्छन्दसि' इति भकारः। ᵛतं तादृशं ᵛसुवृधं सुष्ठु वर्धमानं सुवर्धयितारं वा ᵛअंशुं सोमं ᵛनदीषु नदमानासु[1] वसतीवर्याख्यास्वप्सु ᵛआ ᵛमर्जयन्त ऋत्विज आशोधयन्ति। अलंकुर्वन्ति वा। कीदृशम्। ᵛउशन्तं[2] देवान् कामयमानं ᵛपरियन्तं परितो गच्छन्तम् ᵛऋग्मियम् ऋगर्हं स्तुत्यं सोममामर्जयन्तीति ॥

**त्वां मृजन्ति दश योषणः सुतं सोम ऋषिभिर्मतिभिर्धीतिभिर्हितम्।**
**अव्यो वारेभिरुत देवहूतिभिर्नृभिर्यतो वाजमा दर्षि सातये ॥ ७ ॥**

त्वाम् । मृजन्ति । दश । योषणः । सुतम् । सोम । ऋषिऽभिः । मतिऽभिः । धीतिऽभिः । हितम् ।
अव्यः । वारेभिः । उत । देवहूतिऽभिः । नृऽभिः । यतः । वाजम् । आ । दर्षि । सातये ॥७॥

हे ᵛसोम ᵛयोषणः द्वाभ्यां पाणिभ्यां विभज्योत्पन्नाः ᵛदश दशसंख्याका अङ्गुलयः ᵛऋषिभिः मधुच्छन्दःप्रभृतिभिः ᵛसुतम् अभिषुतं ᵛहितं पात्रेषु निहितं ᵛत्वां ᵛमतिभिः स्तुतिभिः ᵛधीतिभिः कर्मभिश्च ᵛअव्यः ᵛवारेभिः[3] अविवालैः[3] पवित्रैः ᵛमृजन्ति शोधयन्ति। ᵛउत अपि च ᵛदेवहूतिभिः देवाह्वानयुक्तैः ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛयतः ग्रहेषु संयमितः संगृहीतस्त्वं ᵛसातये[4] दानाय ᵛवाजम् अन्नम्[4] ᵛआ ᵛदर्षि आविदारयसि। विवृतं करोषि। स्तोतृभ्योऽन्नादिकं प्रयच्छसीति यावत् ॥

**परिप्रयन्तं वय्यं सुषंसदं सोमं मनीषा अभ्यनूषत स्तुभः।**
**यो धारया मधुमाँ ऊर्मिणा दिव इयर्ति वाचं रयिषाळमर्त्यः ॥ ८ ॥**

परिऽप्रयन्तम् । वय्यम् । सुऽसंसदम् । सोमम् । मनीषाः । अभि । अनूषत । स्तुभः ।
यः । धारया । मधुऽमान् । ऊर्मिणा । दिवः । इयर्ति । वाचम् । रयिषाट् । अमर्त्यः ॥ ८ ॥

ᵛपरिप्रयन्तं पात्राणि परितः प्रगच्छन्तं ᵛवय्यं देवैः काम्यमानं ᵛसुसंसदं शोभनसंसदनं ᵛसोमं ᵛमनीषाः मनस ईशित्र्यः ᵛस्तुभः स्तुतयः ᵛअभ्यनूषत अभिष्टुवन्ति। वय्यम्। 'वी गत्यादिषु' इत्यस्माद्यति 'भय्यप्रवय्ये च छन्दसि' (पा. सू. ६. १. ८३) इति निपातितः। अत्रानुपसर्गस्यापि निपातनं भवति। ᵛमधुमान् मदकररसवान् ᵛयः सोमः ᵛधारया स्वीयया ᵛऊर्मिणा वसतीवर्याख्येनोदकेन सह ᵛदिवः आकाशात् द्रोणकलशं आपतति[5] ᵛरयिषाट् शत्रुधनानामभिभविता ᵛअमर्त्यः मनुष्यधर्मरहितः स सोमः ᵛवाचम् ᵛइयर्ति प्रेरयति। तदा हि स्तोतारः स्तुवन्ति[6] ॥

**अयं दिव इयर्ति विश्वमा रजः सोमः पुनानः कलशेषु सीदति।**
**अद्भिर्गोभिर्मृज्यते अद्रिभिः सुतः पुनान इन्दुर्वरिवो विदत्प्रियम् ॥ ९ ॥**

---

१. ग-भ६—नदनासु। २. त१.३.४.५.६.७-भ१.२.४.६—उशंतं तं। ३. ग-भ१.७—वालैः। ४. त१—वाजमन्नं; त२.३.४.५.६-भ२.६—वाजमन्नं सातये दानाय वाजमन्नं। ५. ग—आपवते। ६. ग-त३—स्तुवंति तदुच्यते; त१.२.६.७-भ१.२.४.७—स्तुवंति उच्यते।

अयम् । दिवः । इयर्ति । विश्वम् । आ । रजः । सोमः । पुनानः । कलशेषु । सीदति ।
अत्ऽभिः । गोभिः । मृज्यते । अद्रिऽभिः । सुतः । पुनानः । इन्दुः । वरिवः । विदत् । प्रियम् ॥९॥

ᵛअयं सोमः ᵛदिवः द्युलोकात् ᵛविश्वं ᵛरजः । उदकनामैतत् । सर्वमुदकम् ᵛइयर्ति[1] अभिप्रापयति । किंच ᵛपुनानः दशापवित्रेण पूयमानः ᵛसोमः ᵛकलशेषु द्रोणनामसु ᵛसीदति । तथा ᵛअद्रिभिः ग्रावभिः ᵛअद्भिः वसतीवर्याख्याभिः ᵛगोभिः गोविकारैः क्षीरदध्यादिभिश्च ᵛमृज्यते शोध्यते अलंक्रियते । ततः ᵛपुनानः पूतः ᵛइन्दुः सोमः ᵛप्रियं प्रियतरं प्रीणनकारि वा ᵛवरिवः वरणीयं धनं ᵛविदत् स्तोतृभ्यो लम्भयति । प्रयच्छतीति यावत् ॥

एवा नः सोम परिषिच्यमानो वयो दधच्चित्रतमं पवस्व ।
अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥ १० ॥

एव । नः । सोम । परिऽसिच्यमानः । वयः । दधत् । चित्रऽतमम् । पवस्व ।
अद्वेषे इति । द्यावापृथिवी इति । हुवेम । देवाः । धत्त । रयिम् । अस्मे इति । सुऽवीरम् ॥१०॥

अयं प्रत्यक्षकृतः । हे ᵛसोम ᵛदधत् प्रयच्छंस्त्वं ᵛपरिषिच्यमानः परितोऽद्भिर्गोभिर्वा सिच्यमानः ᵛएव[2] ᵛचित्रतमं[3] चित्रं नानाविधं चायनीयतमं वा ᵛवयः अन्नं ᵛनः अस्मभ्यं ᵛपवस्व प्रापय । प्रयच्छेति यावत् । किंच ᵛअद्वेषे द्वेषरहिते ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛहुवेम हविष्प्रदानार्थं वयमाह्वयेम । हे ᵛदेवाः यूयं च ᵛसुवीरम् । वीरः कर्मणि समर्थः पुत्रः । तादृशपुत्रोपेतं ᵛरयिं धनम् ᵛअस्मे अस्मासु ᵛधत्त निधत्त ॥ ॥ २० ॥

'इषुर्न' इति दशर्चं द्वितीयं सूक्तमाङ्गिरसस्य हिरण्यस्तूपस्यार्षं पवमानसोमदेवताकम् । नवमीदशम्यौ त्रिष्टुभौ । शिष्टा जगत्यः । तथा चानुक्रान्तम्—'इषुर्न हिरण्यस्तूपोऽन्त्ये[4] त्रिष्टुभौ' इति । गतो विनियोगः ।

इषुर्न धन्वन्प्रति धीयते मतिर्वत्सो न मातुरुप सर्ज्यूधनि ।
उरुधारेव दुहे अग्र आयत्यस्य व्रतेष्वपि सोम इष्यते ॥ १ ॥

इषुः । न । धन्वन् । प्रति । धीयते । मतिः । वत्सः । न । मातुः । उप । सर्जि । ऊधनि ।
उरुधाराऽइव । दुहे । अग्रे । आऽयती । अस्य । व्रतेषु । अपि । सोमः । इष्यते ॥ १ ॥

अस्मिन् पवमानरूप इन्द्रे ᵛमतिः मननीयास्मदीया स्तुतिः ᵛप्रति ᵛधीयते अस्माभिर्निधीयते वा । दधाते रूपम् । तत्र दृष्टान्तः । ᵛइषुर्न यथेषुः शरः ᵛधन्वन् धनुषि प्रति धीयते तद्वत् । किंच ᵛऊधनि सर्वस्य पोषयितृत्वेनोधःस्थानीय इन्द्रे सोमो मदार्थमस्माभिः ᵛउप ᵛसर्जि उपसृज्यते । कथमिव । ᵛमातुः गोः ᵛऊधनि पयोधारके ᵛवत्सो ᵛन वत्सो यथा पयःपानार्थं सृज्यते तद्वत् । ᵛउरुधारेव बहुविधपयोधारा गौरिव ᵛअग्रे वत्सस्य पुरतः ᵛआयती गच्छन्ती सती पयः ᵛदुहे दुग्धे तथा सोऽयमिन्द्रो वत्सभूतेभ्यः स्तोतृभ्यः पुरतो गच्छन् बहुविधान् कामान् दुग्धे । किंच ᵛअस्य एतादृशस्य ᵛव्रतेष्वपि ᵛसोम ᵛइष्यते यष्टृभिः प्रेर्यते खलु ॥

---

१. भ५–आ इयर्ति । २. ग-त-भ–एवं; मु–एव एवं । ३. ग-त१.२.५.६-भ१.४.६–'चित्रतमं' नास्ति । ४. त१.२.४.५.६–हिरण्यस्तूपोंते ।

उपो॑ म॒तिः पृ॒च्यते॑ सि॒च्यते॒ मधु॑ म॒न्द्राज॑नी चोदते अ॒न्तरा॒सनि॑ ।
पव॑मानः सं॒त॒निः प्र॑घ्न॒ताम॑िव मधु॑मान्द्र॒प्सः परि॒ वार॑मर्षति ॥ २ ॥

उपो॒ इति॑ । म॒तिः । पृ॒च्यते॑ । सि॒च्यते॑ । मधु॑ । म॒न्द्रऽअज॑नी । चो॒द॒ते । अ॒न्तः । आ॒सनि॑ ।
पव॑मानः । स॒म्ऽत॒निः । प्र॒घ्न॒ताम्ऽइ॑व । मधु॑ऽमान् । द्र॒प्सः । परि॑ । वार॑म् । अ॒र्ष॒ति॒ ॥ २ ॥

अस्मिन् पवमानरूपे[1] इन्द्रे ᵛमतिः स्तुतिः ᵛउपो ᵛपृच्यते उपपृच्यते स्तोतृभिः संयोज्यते । 'पृची संपर्के'। तथा ᵛमधु मदकरः सोमः इन्द्रार्थं ᵛसिच्यते अद्भिः यवसक्तुभिश्च सिक्तो भवति । ततश्च ᵛमन्द्राजनी । 'अज गतिक्षेपणयोः' इत्यस्य ल्युटि ङीपि रूपम् । मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य ᵛआसनि आस्ये ᵛअन्तः मध्ये ᵛचोदते यष्टृभिः प्रेर्यते । आस्यशब्दस्य 'पद्दन्नोमास्°' इत्यादिना आसन्नित्यादेशः । किंच ᵛसंतनिः ग्रहादिषु सम्यग्विस्तृतः ᵛमधुमान् मदकररसवान् ᵛपवमानः पूयमानः सोमः ᵛद्रप्सः द्रुतगमनशीलो यद्वा क्षिप्रंहननशीलः[2] सन् ᵛवारम् अविवालमयं पवित्रं परितः ᵛअर्षति आगच्छति । तत्र दृष्टान्तः । ᵛप्रघ्नतामिव । प्रकर्षेण हन्तॄणां योद्धॄणां संतनिः सम्यग्विसृष्टः शरो यथा शीघ्रं प्राप्यमभितो गच्छति तद्वत् ॥

अव्ये॑ वधू॒युः प॑वते॒ परि॑ त्व॒चि श्र॑थ्नी॒ते न॒प्तीरदि॑तेर्ऋ॒तं य॒ते ।
हरि॑रक्रान् यज॒तः सं॑य॒तो मदो॑ नृ॒म्णा शिशा॑नो महि॒षो न शो॑भते ॥ ३ ॥

अव्ये॑ । व॒धू॒ऽयुः । प॒व॒ते॒ । परि॑ । त्व॒चि । श्र॒थ्नी॒ते । न॒प्तीः । अदि॑तेः । ऋ॒तम् । य॒ते ।
हरि॑ः । अ॒क्रा॒न् । य॒ज॒तः । स॒म्ऽय॒तः । मदः॑ । नृ॒म्णा । शिशा॑नः । म॒हि॒षः । न । शो॒भ॒ते॒ ॥ ३ ॥

ᵛवधूयुः । वधूभूता वसतीवर्य एकधनासहिता आपः । तद्वान् सोमः ᵛअव्ये अवेः स्वभूते ᵛत्वचि चर्मणि ᵛपरि ᵛपवते परितो वर्तते पूतो भवति वा । किंच ᵛनप्तीः नप्त्रीः । नप्तृशब्दश्चतुर्थापत्यवाची । सोमस्य नप्त्रीः । सोमो ह्योषधीनामग्रे[3] रेतो निषिञ्चति । 'प्रजापते रेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधयः' (ऐ. आ. २.१.३) इति श्रुतेः । यद्वा । नप्तृशब्दोऽपत्यवाची । तस्यापत्यानि । सोमः सुधामयैः स्वकिरणैरोषधीर्वर्धयति । तस्मादपत्यभूताः । ᵛअदितेः । पृथिवीनामैतत् । अदीनायाः पृथिव्या उत्पन्ना ओषधीः ᵛऋतं सत्यरूपं यज्ञं ᵛयते गच्छते यजमानाय ᵛश्रथ्नीते अग्रभागे फलिनीः कर्तुं विश्लेषयति । किंच ᵛहरिः हरितवर्णः ᵛयजतः सर्वैर्यष्टव्यः अत एव ᵛसंयतः ग्रहादिषु संगृहीतः ᵛमदः माद्यत्यनेनेति मदः सोमः । तादृशः ᵛअक्रान् क्रामति । पात्रेष्ववतिष्ठते । यद्वा । शत्रूनतिक्रामति । क्रमेर्लुङि तिपि 'बहुलं छन्दसि' इति इडागमाभावाद्वृद्धौ कृतायां सिज्लोपे सति हल्ङ्यादिना तिपो लोपे 'मो नो धातोः' इति नत्वे कृते रूपम् । अत एव सोमः ᵛनृम्णा स्वबलानि ᵛशिशानः तीक्ष्णीकुर्वन् । अथवा शत्रुबलानि तनूकुर्वन् । ᵛमहिषो ᵛन[4] । महन्नामैतत् । महानिव सर्वत्र व्याप्त इव ᵛशोभते स्वतेजसा सर्वत्र दीप्यते । यद्वा । नः संप्रत्यर्थे । इदानीमेवंगुणयुक्तो महान् सोमः शोभत इति ॥

१. त-भ६-पवमानरूपे स्तोत्रे । २. ग-क्षिप्रंपवन°; त-भ१.२.४.७-क्षिप्रंधनन°; भ६-क्षिप्रंप्रधनन° । ३. त१.२.५.७-ह्योषधीनामग्नौ; त४-भ६-ह्योषधीनाममग्नौ; भ७-ह्योषधीनामग्ने । ४. ग-त-भ-'न' नास्ति ।

उक्षा मिमाति प्रति यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम् ।
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥ ४ ॥

उक्षा । मिमाति । प्रति । यन्ति । धेनवः । देवस्य । देवीः । उप । यन्ति । निःऽकृतम् ।
अति । अक्रमीत् । अर्जुनम् । वारम् । अव्ययम् । अत्कम् । न । निक्तम् । परि । सोमः । अव्यत ॥४॥

उक्षा रेतसः सेक्ता वृषभः पुरतः मिमाति शब्दायते । 'माङ् माने शब्दे च[1]' । तं वृषभं धेनवः गावः प्रति यन्ति अनुगच्छन्ति । तथा देवस्य द्योतमानस्य निष्कृतं[2] संस्कृतं स्थानं[2] देवीः देव्यः उप यन्ति उपगच्छन्ति । अनेनार्थेन सोमस्तुतिश्चाभिधीयते । सोमः[3] सन् द्रोण-कलशाभिगमनकाले शब्दं करोति । तमनु धेनवः प्रीणयित्र्यः स्तुतयः परियन्ति देवस्य स्थानं स्तुतयोऽभिगच्छन्ति । तथा सोऽयं सोमः अर्जुनं श्वेतवर्णम् अव्ययम् अविमयमविस्वभूतं[4] वारं वालं पवित्रम् अत्यक्रमीत् अतिक्रामति । अतिक्रम्य पात्राणि गच्छतीत्यर्थः । किंच सोमः अत्कं न आत्मीयं कवचमिव निक्तम् उज्ज्वलं श्रयणद्रव्यं[5] परि अव्यत परितः संवृणोति ॥

अमृक्तेन रुशता वाससा हरिरमर्त्यो निर्णिजानः परि व्यत ।
दिवस्पृष्ठं बर्हणा निर्णिजे कृतोपस्तरणं चम्वोर्नभस्मयम् ॥ ५ ॥

अमृक्तेन । रुशता । वाससा । हरिः । अमर्त्यः । निःऽनिजानः । परि । व्यत ।
दिवः । पृष्ठम् । बर्हणा । निःऽनिजे । कृत । उपऽस्तरणम् । चम्वोः । नभस्मयम् ॥ ५ ॥

अमर्त्यः मनुष्यधर्मरहितः हरिः हरितवर्णः सोमः निर्णिजानः उदकेन शोध्यमानः सन् अमृक्तेन । 'मृजी शौचालंकारयोः' । अनिर्णिक्तेनापि रुशता स्वतः शुक्लवर्णेन पयोरूपेण वाससा परि व्यत परित आच्छादयति । सोमे परिपूते गव्येन पयसा मिश्रीकुर्वन्ति खलु । तदुच्यते । ततः सोऽयं सोमः दिवः द्युलोकस्य पृष्ठं पृष्ठभागे तिष्ठन्तमादित्यं बर्हणा बर्हणाय पापानामुद्यमन-कारिणे पापनाशिने निर्निजे निर्नेजनाय परिपवनाय[6] कृत द्युलोकेऽकार्षीत् । स हि स्वदीप्त्या सर्वं निर्णेक्ति । कृत । कृणोतेर्लुङि 'ह्रस्वात्'' इति सिचो लोपः । तदेवाह । चम्वोः । द्यावापृथिवीनामैतत् । चमन्ति भक्षयन्त्यत्र देवा मनुष्या इति । तयोः उपस्तरणम् आच्छादनशीलं नभस्मयम् आदित्य-मयमादित्यस्य स्वभूतं तेजश्च सर्वेषां निर्णेजनाय[7] अकार्षीत् ॥ ॥ २१ ॥

सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुपः साकमीरते ।
तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किं चन ॥ ६ ॥

सूर्यस्यऽइव । रश्मयः । द्रवयित्नवः । मत्सरासः । प्रऽसुपः । साकम् । ईरते ।
तन्तुम् । ततम् । परि । सर्गासः । आशवः । न । इन्द्रात् । ऋते । पवते । धाम । किम् । चन ॥६॥

---

१. भ६–वा । २. त-भ१.४.६.७–स्थानं निष्कृतं संस्कृतं स्थानं; भ२–स्थानं निष्कृतं निष्कृतस्थानं; मु–निःकृतं संस्कृतं स्थानं । ३. ग–सोमः कामसेक्ता । ४. ग–अविसंभूत । ५. ग-भ४–श्रवणद्रव्यं; त४–अर्यणद्रव्यं; त५–अयणद्रव्यं; भ६–श्रपणद्रव्यं । ६. त-भ१.२.४.७–परिपवमानाय । ७. त३-भ२–निर्निजनाय; त७–निर्णिजेजनाय; भ१.७–निर्निजमानाय ।

ᵛसूर्यस्य ᵛरश्मयः सर्वस्य प्रेरकस्य सुवीर्यस्य वादित्यस्य रश्मयः सर्वतो व्यापकाः किरणाः ᵛइव ᵛद्रावयित्नवः सर्वत्रद्रवणशीलाः ᵛमत्सरासः मदकराः ᵛप्रसुपः शत्रूणां प्रस्वापका हन्तारः ᵛआशवः ग्रहेषु चमसेषु च व्याप्ताः ᵛसर्गासः सृज्यमानाः सोमाः ᵛततं विस्तृतं ᵛतन्तुं तन्तुभिः कृतं वस्त्रं ᵛसाकं सह युगपत् ᵛपरि ᵛईरते परितो गच्छन्ति। ते सोमाः ᵛइन्द्रादृते इन्द्रं वर्जयित्वा अन्यत् ᵛकिं ᵛचन ᵛधाम देवशरीरं लक्षीकृत्य ᵛन ᵛपवते न गच्छति[1]। एकवचनं छान्दसम्। न गच्छन्ति। किंत्विन्द्रस्यैव धाम प्रति गच्छन्ति। इन्द्रस्य धाम्नो बहुत्वं च 'अयाळिन्द्रस्य प्रिया धामानि' (वा. सं. २१.४७) इति मन्त्रवर्णादवगम्यते ॥

सिन्धो॑रिव प्रव॒णे नि॒म्न आ॒शवो॒ वृष॑च्युता॒ मदा॑सो गा॒तुमा॑शत ।
शं नो॑ नि॒वेशे॑ द्वि॒पदे॒ चतु॑ष्पदे॒ऽस्मे वाजा॑ः सोम तिष्ठन्तु कृ॒ष्टय॑ः ॥ ७ ॥

सिन्धो॑ःऽइव । प्र॒वणे॑ । नि॒म्ने । आ॒शव॑ः । वृष॑ऽच्युताः । मदा॑सः । गा॒तुम् । आ॒शत॒ ।
शम् । नः॒ । नि॒ऽवेशे॑ । द्वि॒ऽपदे॑ । चतुः॑ऽपदे । अ॒स्मे इति॑ । वाजा॑ः । सो॒म । ति॒ष्ठ॒न्तु॒ । कृ॒ष्टय॑ः ॥ ७ ॥

ᵛवृषच्युताः। वृष हिंसासंक्लेशनदानेष्वपि। वृषभिः सोमस्य दातृभिर्ऋत्विग्भिश्च्युताः परिस्रुताः ᵛमदासः मदकारिणः सोमाः स्तुतिभिः प्राप्तव्यं इन्द्रं ᵛगातुं गमनम् ᵛआशत प्राप्नुवन्ति। तत्र दृष्टान्तः। ᵛसिन्धोरिव ᵛप्रवणे। प्रगच्छन्त्युदकानि यत्रेति तत्प्रवणम्। तस्मिन् ᵛनिम्ने स्थले सिन्धोर्नद्याः ᵛआशवः व्याप्ता आपो यथा गच्छन्ति तद्वत्। अथ प्रत्यक्षः। हे ᵛसोम ᵛनः अस्माकं ᵛनिवेशे स्वगृहं प्रति प्रवेशने निर्गमने वा ᵛद्विपदे पुत्रादिकाय[3] ᵛचतुष्पदे गवादिकाय पशवे[4] ᵛशं सुखं कुरु। किंच हे सोम ᵛअस्मे अस्मासु ᵛवाजाः अन्नानि ᵛकृष्टयः पुत्रादिकाः प्रजाश्च ᵛतिष्ठन्तु। अन्नादिकं[5] देहीत्यर्थः ॥

आ नः॑ पवस्व॒ वसु॑म॒द्धिर॑ण्यव॒दश्वा॑व॒द्गोम॒द्यव॑म॒त्सु॒वीर्य॑म् ।
यू॒यं हि सो॑म पि॒तरो॒ मम॒ स्थन॑ दि॒वो मू॒र्धान॑ः प्रस्थि॑ता वय॒स्कृत॑ः ॥ ८ ॥

आ । नः॒ । प॒व॒स्व॒ । वसु॑ऽमत् । हिर॑ण्यऽवत् । अश्व॑ऽवत् । गोऽम॑त् । यव॑ऽमत् । सु॒ऽवीर्य॑म् ।
यू॒यम् । हि । सो॒म॒ । पि॒तर॑ः । मम॑ । स्थन॑ । दि॒वः । मू॒र्धान॑ः । प्रऽस्थि॑ताः । व॒यः॒ऽकृत॑ः ॥ ८ ॥

हे सोम त्वं ᵛवसुमत् वसुयुक्तं ᵛहिरण्यवत् कनकादिसहितम् ᵛअश्ववत् ᵛगोमत् गवाश्वसहितं[6] ᵛयवमत्। यवो नाम धान्यविशेषः। धान्यविशिष्टं ᵛसुवीर्यं शोभनवीर्योपेतं धनं ᵛनः अस्मभ्यम् ᵛआ ᵛपवस्व आप्रापय। प्रयच्छेति यावत्। किंच हे ᵛसोम यतस्त्वं मम पितॄणामङ्गिरसामपि[7] पितासि[7] ततो ᵛयूयम् एव ᵛमम ᵛपितरः ᵛस्थन भवथ। पितृबहुत्वमत्र सोमस्याभिधीयते। कीदृशाः। ᵛदिवः द्युलोकस्य ᵛमूर्धानः मूर्धवदुच्छ्रिताः। कर्मभिः स्वर्गादिकमलभन्तेत्यर्थः। ᵛप्रस्थिताः सर्वदा कर्मकरणार्थं स्थिताः ᵛवयस्कृतः हवीरूपस्यान्नस्य कर्तारः। तादृशा मम पितरस्त्वं भवसि ॥

१. त१.२.३.४.५.६-भ१.२.६-गच्छंति। २. त-गच्छंत्यु°। ३. त३-भ१.७-पुत्राय। ४. ग-त३-भ२.४.५-पशवे च। ५. ग-अन्नादिकं पश्वादिकं च। ६. ग-त३-भ२.४.५-गवाश्वयुक्तं; भ१.७-वाश्वयुक्तं। ७. ग-त-भ२.४.६-ऽङ्गिरसामधिपतिरसि।

एते सोमाः पर्वमानास इन्द्रं रथाइव प्र ययुः सातिमच्छ ।
सुताः पवित्रमति यन्त्यव्यं हित्वी वव्रिं हरितो वृष्टिमच्छ ॥ ९ ॥

एते । सोमाः । पर्वमानासः । इन्द्रम् । रथाःऽइव । प्र । ययुः । सातिम् । अच्छ ।
सुताः । पवित्रम् । अति । यन्ति । अव्यम् । हित्वी । वव्रिम् । हरितः । वृष्टिम् । अच्छ ॥९॥

पवमानासः पवित्रेण पूयमानाः एते अस्मदीयाः सोमाः सातिम् । 'षण संभक्तौ'। कर्मणि क्तिन् । सर्वैः संभजनीयम् इन्द्रम् अच्छ प्र ययुः प्रकर्षेण गच्छन्ति । तत्र दृष्टान्तः । रथाइव । इन्द्रस्य रथा यथा सातिम् । 'षो अन्तकर्मणि' । 'ऊतियूति°' इत्यादिना निपातितः । सीयते म्रियतेऽस्मिन्निति सातिः संग्रामः । तमच्छ तं प्रति प्रगच्छन्ति तद्वत् । किंच सुताः ग्रावभिरभिषुताः सोमाः अव्यम् अविवालभवं पवित्रम् अति यन्ति अतीत्य गच्छन्ति । तेऽमी हरितः[1] हरितवर्णा अश्वाः । यद्वा । हरितस्त आदित्यवाहनरूपा[2] अश्वा भूत्वा । वव्रिम् । वृणोति शरीरमिति वव्रिर्जरा । 'आदृगमहन°' इति किप्रत्ययः । सर्वाङ्गव्यापिनीं जरां हित्वी हित्वा तरुणाः सन्तः वृष्टिमच्छ वृष्टिं गमयितुं गच्छन्ति । हित्वी । 'जहातेश्च क्त्वि' ( पा. सू.७.४.४३ ) इति ह्यादेशः । 'स्नात्व्यादयश्च' इति छन्दसि निपातितम्[3] ॥

इन्दविन्द्राय बृहते पवस्व सुमृळीको अनवद्यो रिशादाः ।
भरा चन्द्राणि गृणते वसूनि देवैर्द्यावापृथिवी प्रावतं नः ॥ १० ॥

इन्दो इति । इन्द्राय । बृहते । पवस्व । सुऽमृळीकः । अनवद्यः । रिशादाः ।
भर । चन्द्राणि । गृणते । वसूनि । देवैः । द्यावापृथिवी इति । प्र । अवतम् । नः ॥१०॥

हे इन्दो सोम त्वं बृहते महते इन्द्राय तदर्थं पवस्व पात्रेषु क्षर । इन्द्रं प्रत्यागच्छ वा । कीदृशः । सुमृळीकः इन्द्रस्य सुष्ठु सुखयिता अत एव अनवद्यः गर्हारहितः रिशादाः रिशतां बाधकानामसिता । एतादृशस्त्वमिन्द्राय पवस्व । किंच गृणते स्तुवते मह्यं चन्द्राणि आह्लादकानि वसूनि धनानि भर प्रयच्छ । किंच हे द्यावापृथिवी युवां च पवमानेन परिप्लुते सत्यौ देवैः सुभगैर्धनैः सह नः अस्मान् प्रावतं प्ररक्षतम् ॥ ॥ २२ ॥

'त्रिरस्मै' इति दशर्चं तृतीयं सूक्तं वैश्वामित्रस्य रेणोरार्षम् । दशमी त्रिष्टुप् शिष्टा जगत्यः । पवमानः सोमो देवता । 'त्रिरस्मै रेणुः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

त्रिरस्मै सप्त धेनवो दुदुह्रे सत्यामाशिरं पूर्व्ये व्योमनि ।
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥ १ ॥

त्रिः । अस्मै । सप्त । धेनवः । दुदुह्रे । सत्याम् । आऽशिरम् । पूर्व्ये । विऽओमनि ।
चत्वारि । अन्या । भुवनानि । निःऽनिजे । चारूणि । चक्रे । यत् । ऋतैः । अवर्धत ॥१॥

अस्मै पवमानाय पूर्व्ये पूर्वैः कृते व्योमनि । विविधमोमावनं गमनं देवानामत्रेति व्योम यज्ञः । तस्मिन् स्थिताय । यद्वा । प्रत्ने व्योमन्यन्तरिक्षे वर्तमानाय । त्रिः सप्त एकविंशतिसंख्याकाः

---

१. त-भ६-'हरितः' नास्ति । २. ग-त३-भ२.४-आदित्यस्य वाहनरूपा । ३. ग-त३-भ१.२.४.५.७-निपातितः ।

ᵛधेनवः प्रीणयित्र्यो गावः ᵛसत्यां यथार्थभूताम्[1] ᵛआशिरम् आश्रयणसाधनं क्षीरादि ᵛदुदुह्रे दुहन्ति। यद्वा। त्रिः सप्त 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' (तै. सं.५.४.१२.२) इत्येतैः सर्वैः सह गोषु पय उत्पाद्यते तद्गावो दुहन्त इति। किंचायं सोमः ᵛअन्या अन्यानि ᵛचत्वारि ᵛभुवनानि उदकानि वसतीवरीस्त्रिस्त्रश्चैकधना इति तानि चतुःसंख्याकानि ᵛचारुणि कल्याणान्युदकानि ᵛनिर्णिजे निर्णेजनाय परिशोधनाय परिपोषणाय[2] वा[2] ᵛचक्रे। कदा करोति। ᵛयत् यदा अयम् ᵛऋतैः यज्ञैः ᵛअवर्धत वर्धितवान् तदा करोति ॥

स भिक्ष॑माणो अ॒मृत॑स्य॒ चारु॑ण उ॒भे द्यावा॒ काव्ये॑ना॒ वि श॑श्रथे।
तेजि॑ष्ठा अ॒पो मं॒हना॒ परि॑ व्यत॒ यदी॑ दे॒वस्य॒ श्रव॑सा॒ सदो॑ वि॒दुः ॥ २ ॥

सः। भिक्ष॑माणः। अ॒मृत॑स्य। चारु॑णः। उ॒भे इति॑। द्यावा॑। काव्ये॑न। वि। श॒श्र॒थे।
तेजि॑ष्ठाः। अ॒पः। मं॒हना॑। परि॑। व्य॒त॒। यदि॑। दे॒वस्य॑। श्रव॑सा। सदः॑। वि॒दुः ॥ २ ॥

ᵛसः पवमानः ᵛचारुणः कल्याणस्य ᵛअमृतस्य उदकस्य। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानसंज्ञा। 'चतुर्थ्यर्थे बहुलम्°' (पा. सू. २.३.६२) इति षष्ठी। चारूदकं ᵛभिक्षमाणः यष्टृभिर्याच्यमानः सन् ᵛउभे। द्यावादेशस्य द्वंद्वे विहितत्वादत्रोत्तरपदाभावे द्वंद्वः प्रतीयते। उभे द्यावापृथिव्यौ ᵛकाव्येन कविकर्मणा ᵛवि ᵛशश्रथे विवृते[3] करोति। यज्ञनिमित्तेन[4] उदकेन[5] संपूरयतीत्यर्थः। किंच ᵛतेजिष्ठाः अतिशयेन दीप्तानि[6] ᵛअपः उदकानि ᵛमंहना महत्त्वेन ᵛपरि ᵛव्यत वरणार्थं परित आच्छादयति। ᵛयदि यदा ऋत्विजः ᵛदेवस्य द्योतमानस्य सोमस्य ᵛसदः स्थानं ᵛश्रवसा हविषा युक्ताः सन्तः ᵛविदुः यागार्थं जानन्ति लभन्ते तदा परित आवृणोतीति। 'विद ज्ञाने'। 'सिजभ्यस्त°' इति झेर्जुसादेशः[7] ॥

ते अ॑स्य सन्तु के॒तवोऽमृ॑त्यवोऽदा॑भ्यासो ज॒नुषी॑ उ॒भे अनु॑।
येभि॑र्नृ॒म्णा च॑ दे॒व्या॑ च पु॒नत॒ आदिद्राजा॑नं म॒नना॑ अगृभ्णत ॥ ३ ॥

ते। अ॒स्य॒। स॒न्तु॒। के॒तवः॑। अम॑र्त्यवः। अदा॑भ्यासः। ज॒नु॒षी इति॑। उ॒भे इति॑। अनु॑।
येभिः॑। नृ॒म्णा। च॒। दे॒व्या॑। च॒। पु॒न॒ते। आत्। इत्। राजा॑नम्। म॒नना॑ः। अ॒गृ॒भ्ण॒त ॥ ३ ॥

ᵛअस्य एतादृशस्य सोमस्य ᵛकेतवः प्रज्ञापकाः सर्वैश्चायनीयाः ᵛअमृत्यवः मरणधर्मरहिता अत एव ᵛअदाभ्यासः। 'दभेश्चेति वक्तव्यम्' (पा. सू. ३. १. १२४. ३) इति ण्यत्। परैरहिंस्याः ᵛते तादृशाः अस्य रश्मयः ᵛउभे ᵛजनुषी जन्मनी स्थावरजङ्गमात्मके द्वे ᵛअनु लक्षीकृत्य ᵛसन्तु रक्षन्तु। ओषधीनामयं[8] सोमो रेतो निषिञ्चति यज्ञे मनुष्याणां च धाराः स्रवन्ति खलु। सोऽयं ᵛयेभिः यैः केतुभिः ᵛनृम्णा नृम्णानि बलानि ᵛदेव्या[9] देवार्हाणि[9] ᵛच अन्नानि ᵛपुनते प्रेरयति ᵛआदित् अभिषवानन्तरमेव ᵛराजानं सोमं ᵛमननाः मननीयाः स्तुतयः ᵛअगृभ्णत परिगृह्णन्ति। प्राप्नुवन्तीत्यर्थः। 'हृग्रहोः°' इति भकारः ॥

१. त३-भ२.६-यथार्थभूतं; भ१.७-यथार्थं भूतं। २. ग-त३-भ१.७-'परिपोषणाय वा' नास्ति। ३. त३-भ१.२.५.७-विभृते। ४. ग-त-भ२.४.६-मु-यज्ञेन निमित्तेन; भ१-यज्ञे निमित्तेन। ५. ग-अमृतेनोदकेन; त-भ२.४.६-प्रत्नेनोदकेन। ६. भ६-दीप्ता। ७. त१.४-र्जुसादेशः; त२.६-र्ऋर्जुसादेशः; त५-र्र्जुसादेशः; भ६-मतुबादेशः। ८. ग-त-भ१.२.४.६-ओषधीनामग्रे। ९. त-भ६-देव्यावार्हाणि।

स मृज्यमानो दशभिः सुकर्मभिः प्र मध्यमासु मातृषु प्रमे सचा ।
व्रतानि पानो अमृतस्य चारुण उभे नृचक्षा अनु पश्यते विशौ ॥ ४ ॥

सः । मृज्यमानः । दशऽभिः । सुकर्मऽभिः । प्र । मध्यमासु । मातृषु । प्रऽमे । सचा ।
व्रतानि । पानः । अमृतस्य । चारुणः । उभे इति । नृऽचक्षाः । अनु । पश्यते । विशौ ॥ ४ ॥

"सः पवमानः "सुकर्मभिः शोभनकर्मयुक्ताभिः "दशभिः दशसंख्याकाभिरङ्गुलीभिः "मृज्यमानः[1] सः "सचा 'अग्नौ प्रास्ताहुतिः' इत्यादिक्रमेणापां सहायः "प्रमे लोकान् प्रमातुं "मध्यमासु अन्तरिक्षस्थितासु अवतिष्ठते ॥ प्रमे । प्रपूर्वान्मातेः क्विपि ङयि 'आतः' इति योगविभागादाकारलोपः ॥ किंच "नृचक्षाः नृणां द्रष्टा पवमानः "चारुणः कल्याणस्य "अमृतस्य उदकस्य वृष्ट्यर्थं "व्रतानि यागादिकर्माणि "पानः रक्षन् "उभे "विशौ मनुष्यान् देवांश्चान्तरिक्षेण गच्छन् "अनु "पश्यते[2] अनुपश्यति । मनुष्यानभिमतदानेन देवान् हविष्प्रदानेनेति ॥

स मर्मृजान इन्द्रियाय धायस ओभे अन्ता रोदसी हर्षते हितः ।
वृषा शुष्मेण बाधते वि दुर्मतीरादेदिशानः शर्यहेव शुरुधः ॥ ५ ॥

सः । मर्मृजानः । इन्द्रियाय । धायसे । आ । उभे इति । अन्तरिति । रोदसी इति । हर्षते । हितः ।
वृषा । शुष्मेण । बाधते । वि । दुःऽमतीः । आऽदेदिशानः । शर्यहाऽइव । शुरुधः ॥ ५ ॥

"मर्मृजानः पवित्रेण मृज्यमानः "सः पवमानः "धायसे जगतो धारकाय "इन्द्रियाय इन्द्रस्य पर्याप्ताय बलाय तदर्थम् "उभे "रोदसी । 'कालाध्वनोः°' इति द्वितीया । उभयोः द्यावापृथिव्योः "अन्तः "हितः मध्ये वर्तमानः सन् "आ[3] "हर्षते[3] सर्वतो गच्छति । इन्द्रस्य हि सोमेन बलं भवति । "वृषा कामानामुदकानां वा वर्षकः सोऽयं "शुष्मेण शोषकेण बलेन "दुर्मतीः दुष्टबुद्धीनसुरान् "वि "बाधते विशेषेण पीडयति । किं कुर्वन् । "शुरुधः । शुचा रुन्धन्ति परानिति । पृषोदरादिः । दुःखकारिणोऽसुरान् "आदेदिशानः पुनःपुनराह्वयन् हन्ति । तत्र दृष्टान्तः । "शर्यहेव । हननसाधनैः इषुभिर्हन्ता वीरः प्रतिभटान् यथा हिनस्ति तद्वत् ॥ ॥ २३ ॥

स मातरा न ददृशान उस्रियो नानदद्देति मरुतामिव स्वनः ।
जानन्नृतं प्रथमं यत्स्वर्णरं प्रशस्तये कमवृणीत सुक्रतुः ॥ ६ ॥

सः । मातरा । न । ददृशानः । उस्रियः । नानदत् । एति । मरुताम्ऽइव । स्वनः ।
जानन् । ऋतम् । प्रथमम् । यत् । स्वःऽनरम् । प्रऽशस्तये । कम् । अवृणीत । सुऽक्रतुः ॥ ६ ॥

"सः पवमानः "मातरा मातरौ द्यावापृथिव्यौ "ददृशानः पुनःपुनः पश्यन् ततः "नानदत् भृशं शब्दं कुर्वन् "एति सर्वत्र गच्छति । तत्र दृष्टान्तः । "उस्रियः "न । उस्रियेति गोनाम । तस्य स्वभूतो वत्सो यथा मातरं गां पश्यन् शब्दं करोति तद्वत् । किंच "मरुतामिव । यथा मरुतां गणः "स्वनः । पचाद्यजन्तः । स्वनं कुर्वन् सर्वतो गच्छति तद्वत् । "यत् उदकं "स्वर्णरम् । स्वरिति

१. ग-त३.४-भ५.६–मृज्यमानः शोध्यमानः । २. त-भ६–पश्यन् । ३. त-भ२.६–आ हर्षति; भ१.७–आर्षति ।

सर्वपर्यायः। सर्वमनुष्यहितं भवति। सर्वे हि मनुष्या उदके संगच्छन्ते तत्कार्यत्वात्। तादृशं ᵛप्रथमं मुख्यम् ᵛऋतम् उदकं ᵛजानन् विद्वान् ᵛसुक्रतुः शोभनकर्मा सुप्रज्ञो वा स पवमानः ᵛप्रशस्तये प्रशंसनायात्मस्तोत्रकरणाय ᵛकं मनुष्यम् ᵛअवृणीत समभजत। नान्यमस्मद्व्यतिरिक्तमित्यर्थः॥

**रुवति भीमो वृषभस्तविष्यया शृङ्गे शिशानो हरिणी विचक्षणः।**
**आ योनिं सोमः सुकृतं नि षीदति गव्ययी त्वग्भवति निर्णिगव्ययी॥७॥**

रुवति। भीमः। वृषभः। तविष्यया। शृङ्गे इति। शिशानः। हरिणी इति। विऽचक्षणः।
आ। योनिम्। सोमः। सुऽकृतम्। नि। सीदति।
गव्ययी। त्वक्। भवति। निःऽनिक्। अव्ययी॥ ७॥

ᵛभीमः शत्रूणां भयंकरः ᵛवृषभः कामानामुदकानां वा वर्षकः ᵛविचक्षणः सर्वस्य विदर्शनशीलः स पवमानः ᵛतविष्यया। तु इति वृद्ध्यर्थः। अस्मात् 'अच इः' (उ. सू. ४. १३८) इति इप्रत्ययः। तस्मादिच्छायामर्थे क्यच्। 'सर्वप्रातिपदिकेभ्यः॰' (का. ७.१.५१.३) इति सुगागमः। आत्मनो बलेच्छया ᵛहरिणी हरितवर्णे द्वे ᵛशृङ्गे ᵛशिशानः तीक्ष्णीकुर्वन् द्रोणकलशं प्रति द्वाभ्यां धाराभ्यां स्थाल्याग्रयणं गृह्णाति। तदुच्यते। ते धारारूपशृङ्गे तीक्ष्णीकुर्वन् ᵛरुवति शब्दायते। 'रु शब्दे'। 'बहुलं छन्दसि' इति शः। ततः सः ᵛसोमः ᵛसुकृतं सुष्ठु कृतं ᵛयोनिं स्वस्थानं द्रोणकलशम् ᵛआ ᵛनि ᵛषीदति समन्तात्तिष्ठति। तस्य सोमस्य ᵛनिर्णिक् निर्नेक्त्री परिशोधयित्री ᵛगव्ययी गोमयी ᵛत्वग्भवति। आनडुहे हि चर्मणि सोमाभिषवः। एवम् ᵛअव्ययी अविमयी त्वक् च निर्नेक्त्री भवति। तद्धि दशापवित्रापेक्ष्यमभिहितम्॥

**शुचिः पुनानस्तन्वमरेपसमव्ये हरिर्न्यधाविष्ट सानवि।**
**जुष्टो मित्राय वरुणाय वायवे त्रिधातु मधु क्रियते सुकर्मभिः॥ ८॥**

शुचिः। पुनानः। तन्वम्। अरेपसम्। अव्ये। हरिः। नि। अधाविष्ट। सानवि।
जुष्टः। मित्राय। वरुणाय। वायवे। त्रिऽधातु। मधु। क्रियते। सुकर्मऽभिः॥ ८॥

ᵛअरेपसं पापरहितम्। यद्वा। 'रिपि गतौ'। गतिरहितम्। पात्रे स्थितमित्यर्थः। तादृशं ᵛतन्वम् आत्मीयं शरीरं ᵛपुनानः शोधयन् अत एव ᵛशुचिः पूतो दीप्यमानो वा ᵛहरिः हरितवर्णः सोमः ᵛसानवि सानुनि समुच्छ्रिते ᵛअव्ये अविवालकृते दशापवित्रे ᵛन्यधाविष्ट ऋत्विग्भिर्निधीयते। 'धूञ् कम्पने'। 'स्यसिच्सीयुट्तासिषु॰' (पा. सू. ६. ४. ६२) इति कर्मणि लुङि चिण्वदिट्। णित्वाद्वृद्धिः। ततः ᵛमित्राय ᵛवरुणाय ᵛवायवे एतेभ्यः ᵛजुष्टः पर्याप्तः ᵛत्रिधातु त्रिरंधानो वसतीवरीभिर्दध्ना पयसा संस्पृष्टः सोमः ᵛत्रिधातु तादृशं ᵛमधु मदकरः सोमः ᵛसुकर्मभिः शोभनकर्मयुक्तैर्ऋत्विग्भिः ᵛक्रियते मित्रादिदेवार्थं प्रदीयते॥

**पवस्व सोम देववीतये वृषेन्द्रस्य हार्दि सोमधानमा विश।**
**पुरा नो बाधाद्दुरिताति पारय क्षेत्रविद्धि दिश आहा विपृच्छते॥ ९॥**

पवस्व। सोम। देवऽवीतये। वृषा। इन्द्रस्य। हार्दि। सोमऽधानम्। आ। विश।
पुरा। नः। बाधात्। दुःऽइता। अति। पारय। क्षेत्रऽवित्। हि। दिशः। आह। विऽपृच्छते॥९॥

हे ᵛसोम ᵛवृषा कामानामुदकानां वा सेचकस्त्वं ᵛदेववीतये देवानां पानाय ᵛपवस्व कलशादिषु क्षर। अथ हे सोम त्वम् ᵛइन्द्रस्य ᵛहार्दि हृदयंगमं प्रियं ᵛसोमधानम्। सोमो निधीयतेऽस्मिन्निति सोमधानं पात्रम्। तत् ᵛआ ᵛविश प्रविश। किंच ᵛनः अस्माकं ᵛबाधात् बाधनात् पीडनात् ᵛपुरा पूर्वमेव दुरितानि दुर्गमनानि रक्षांसि ᵛअति ᵛपारय अतीत्य पारं गमय। अपि च ᵛक्षेत्रवित् मार्गज्ञः पुरुषः ᵛविपृच्छते विविधं पन्थानं पृच्छते जनाय ᵛदिशः मार्गान् ᵛआह ᵛहि ब्रूते खलु। उक्त्वा तं यथा रक्षति तथा यज्ञमार्गवेत्ता त्वमस्मभ्यं यज्ञपथ उक्त्वास्मान् पालयेति ॥

हितो न सप्तिरभि वाजमर्षेन्द्रस्येन्दो जठरमा पवस्व।
नावा न सिन्धुमति पर्षि विद्वाञ्छूरो न युध्यन्नव नो निदः स्पः ॥ १० ॥

हितः। न। सप्तिः। अभि। वाजम्। अर्ष। इन्द्रस्य। इन्दो इति। जठरम्। आ। पवस्व।
नावा। न। सिन्धुम्। अति। पर्षि। विद्वान्।
शूरः। न। युध्यन्। अव। नः। निदः। स्परिति स्पः ॥ १० ॥

हे सोम ऋत्विग्भिः प्रेर्यमाणः सन् ᵛवाजं सोमनिधानं द्रोणकलशम् ᵛअभि ᵛअर्ष अभिगच्छ। तत्र दृष्टान्तः। ᵛहितो ᵛन ᵛसप्तिः। अश्वो हितः प्रेर्यमाणः सन् वाजं संग्राममभिलक्ष्य यथा याति तद्वत्। ततो हे ᵛइन्दो ᵛइन्द्रस्य ᵛजठरं जठरभूतं द्रोणकलशं वा ᵛआ ᵛपवस्व आभिमुख्येन प्रविश। किंच ᵛविद्वान् सर्वं जानंस्त्वमस्मान् ᵛअति ᵛपर्षि दुरितान्यतीत्य पारय। तत्र दृष्टान्तः। ᵛनावा ᵛन। यथा नाविकाः ᵛसिन्धुं नदीं नावा मनुष्यान् पारयन्ति तद्वत्। किंच हे सोम त्वं ᵛशूरो ᵛन शूरो वीर इव ᵛयुध्यन् शत्रून् संप्रहरन् ᵛनिदः निन्दकाच्छत्रोः ᵛनः अस्मान् ᵛअव ᵛस्पः अवपारय। बाधां विनाश्य पालय। यद्वा। नोऽस्माकं निदो निन्दकाञ्छत्रूनव स्पः अवाङ्मुखं जहि। 'स्पृ हिंसायाम्'। 'बहुलं छन्दसि' इति श्नाप्रत्ययस्य लुक्। तिपि गुणे हल्ङ्यादिना तिपो लोपः ॥ ॥ २४ ॥

'आ दक्षिणा' इति नवर्चं चतुर्थं सूक्तं वैश्वामित्रस्यर्षभस्यार्षं पवमानसोमदेवताकम्। नवमी त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रान्तम्–'आ दक्षिणा नव ऋषभस्तौ वैश्वामित्रौ' इति। 'तौ' इत्यनेन प्रकृतो रेणुर्ऋषभश्चोभे परामृश्येते। श्रूयते हि–'अथ ह विश्वामित्रः पुत्रानामन्त्रयामास मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः' (ऐ. ब्रा. ७, १७) इति। गतः सूक्तविनियोगः ॥

आ दक्षिणा सृज्यते शुष्म्या३सदं वेति द्रुहो रक्षसः पाति जागृविः।
हरिरोपशं कृणुते नभस्पय उपस्तिरे चम्वो३र्ब्रह्म निर्णिजे ॥ १ ॥

आ। दक्षिणा। सृज्यते। शुष्मी। आऽसदम्। वेति। द्रुहः। रक्षसः। पाति। जागृविः।
हरिः। ओपशम्। कृणुते। नभः। पयः। उपऽस्तिरे। चम्वोः। ब्रह्म। निःऽनिजे ॥ १ ॥

सोमस्य स्वभूते यज्ञे ऋत्विग्भ्यः ᵛदक्षिणा ᵛआ ᵛसृज्यते अस्माभिः प्रदीयते। ᵛशुष्मी बलवान् सोमः ᵛआसदम् आस्थानं द्रोणाख्यं ᵛवेति प्रविशति। किंच ᵛजागृविः जागरणशीलः सोमः ᵛद्रुहः द्रोहकारिणः ᵛरक्षसः राक्षसात् ᵛपाति स्तोतॄन् रक्षति। अपि च ᵛहरिः हरितवर्णः सोमः ᵛओपशम्। आ समन्तादुपशेत इत्योपशः। सर्वस्य धारकं ᵛनभः नभस आदित्यस्य स्वभूतं ᵛपयः उदकं ᵛकृणुते सर्वत्र करोति। 'अग्नौ प्रास्ताहुतिः' इत्यादिक्रमेण करोतीत्यर्थः। यद्वा। नभोऽन्तरिक्षं पयः पयसो

धारकं करोतीति। किंचायं सोमः ᵛचम्वोः। द्यावापृथिवीनामैतत्। चमन्ति भक्षयन्ति मनुष्यदेवा अत्रेति। तयोः ᵛउपस्तिरे उपस्तरणायाच्छादनाय ᵛब्रह्म बृहदुद्यतं तमांसि विनाशयन्तं यद्वा परिवृढं सूर्यं द्युलोके करोति। तथा तमेव सूर्यं ᵛनिर्णिजे पदार्थानां निर्णेजनाय परिशोधनाय च करोति। आदित्यो हि द्यावापृथिव्यौ स्वतेजसोपस्तृणाति। स हि स्वभासा सर्वं निर्णेक्ति च॥

प्र कृ॒ष्टिहे॑व शू॒ष ए॑ति॒ रोरु॑वदसु॒र्यं१॒॑ वर्णं॒ नि रि॑णीते अस्य॒ तम्।
जहा॑ति व॒व्रिं पि॒तुरे॑ति निष्कृ॒तमु॑प॒प्रुतं॑ कृणुते नि॒र्णिजं॒ तना॑॥ २॥

प्र। कृ॒ष्टिहाऽइ॑व। शू॒षः। ए॒ति॒। रोरु॑वत्। अ॒सु॒र्य॑म्। वर्ण॑म्। नि। रि॒णी॒ते॒। अ॒स्य॒। तम्। जहा॑ति। व॒व्रिम्। पि॒तुः। ए॒ति॒। निः॒ऽकृ॒तम्। उ॒प॒ऽप्रु॒तम्। कृ॒णु॒ते॒। निः॒ऽनिज॑म्। तना॑॥२॥

ᵛशूषः शत्रूणां शोषको बलवान् सोमः ᵛरोरुवत् अत्यन्तं शब्दं कुर्वन् ᵛकृष्टिहेव मनुष्याणां हन्ता योद्धेव ᵛप्र ᵛएति प्रगच्छति। किंच ᵛअसुर्यम् असुराणां बाधकम् ᵛअस्य आत्मनो ᵛवर्णं हरितमावारकं बलं वा ᵛनि ᵛरिणीते निर्गमयति। ततः स सोमः ᵛवव्रिम्। वृणोति शरीरमिति वव्रिर्जरा। ᵛजहाति त्यजति। कथमिति चेत् तदुच्यते। ᵛपितुः अन्नं सोमः ᵛनिष्कृतं[1] संस्कृतं द्रोणकलशं दिवं वा इदानीम् ᵛएति गच्छति। किंच सोमः ᵛतना अविच्छेदेन तते विस्तृते दशापवित्रे ᵛनिर्णिजम्। निर्णिगिति रूपनाम। आत्मीयं रूपम् ᵛउपप्रुतम् उपगमनशीलं ᵛकृणुते करोति। तस्माज्जरां त्यजतीत्यर्थः॥

अद्रि॑भिः सु॒तः प॑वते॒ गभ॑स्त्योर्वृषा॒यते॒ नभ॑सा॒ वेप॑ते म॒ती।
स मो॑दते॒ नस॑ते॒ साध॑ते गि॒रा नै॑नि॒क्ते अ॒प्सु यज॑ते॒ परी॑मणि॥ ३॥

अद्रि॑ऽभिः। सु॒तः। प॒व॒ते॒। गभ॑स्त्योः। वृ॒ष॒ऽयते॑। नभ॑सा। वेप॑ते। म॒ती। सः। मो॒द॒ते॒। नस॑ते। साध॑ते। गि॒रा। ने॒नि॒क्ते। अ॒प्ऽसु। यज॑ते। परी॑मणि॥ ३॥

ᵛअद्रिभिः ग्रावभिः ᵛगभस्त्योः बाह्वोः बाहुभ्यां च ᵛसुतः अभिषुतः स सोमः ᵛपवते पात्राणि प्रति गच्छति। यः[2] सोमः ᵛवृषायते वृषवदाचरति। किंच यः ᵛमती स्तुत्याभिष्टुतः सन् ᵛनभसा अन्तरिक्षेण ᵛवेपते सर्वत्र गच्छति। ᵛसः सोमः ᵛमोदते हृष्टो भवति। तथा ᵛनसते ग्रहादिषु संश्लिष्टो भवति। किंच ᵛगिरा स्तुत्या स्तुतः सन् ᵛसाधते स्तोतृणां धनान्नादिकं साधयति। अपि च ᵛअप्सु वसतीवर्याख्यासु ᵛनेनिक्ते शुद्धो भवति। तथा ᵛपरीमणि देवैः रक्ष्यमाणे यज्ञे देवानां हविष्प्रदानेन पोषके वा यज्ञे ᵛयजते पूजितो भवति॥

परि॑ द्यु॒क्षं सह॑सः पर्वता॒वृधं॒ मध्वः॑ सिञ्चन्ति ह॒र्म्यस्य॑ स॒क्षणि॑म्।
आ यस्मि॒न्गावः॑ सुहु॒ताद॒ ऊध॑नि मू॒र्धञ्छ्री॒णन्त्य॑ग्रि॒यं वरी॑मभिः॥ ४॥

परि॑। द्यु॒क्षम्। सह॑सः। प॒र्व॒त॒ऽवृध॑म्। मध्वः॑। सि॒ञ्च॒न्ति॒। ह॒र्म्यस्य॑। स॒क्षणि॑म्। आ। यस्मि॑न्। गावः॑। सु॒हु॒त॒ऽअदः॑। ऊध॑नि। मू॒र्धन्। श्री॒णन्ति॑। अ॒ग्रि॒यम्। वरी॑मऽभिः॥४॥

ᵛसहसः सहस्विनः ᵛमध्वः मदकराः सोमाः ᵛद्युक्षं दीप्यमाने[3] द्युलोके ᵛक्षियन्तं निवसन्तं ᵛपर्वतावृधं मेघानां पर्वतानां वा वर्धयितारं ᵛहर्म्यस्य शत्रुपुरस्य ᵛसक्षणिम् अभिभवितारमिन्द्रं ᵛपरि

---

१. त-भ६-तिरस्कृतं। २. ग-नभसांतरिक्षेण वृषायते वर्षते मत्या स्तुत्यस्थानात् कंपते। ३. ग-त-भ२.६-दीप्यमानं।

ᵛषिञ्चन्ति। तथा ᵛसुहुतादः सुहुतानां हविषां भक्षयितारः ᵛगावः ᵛमूर्धन् मूर्धनि समुच्छ्रिते ᵛऊधनि पयोधारके स्थाने स्थितम् ᵛअग्रियं मुख्यं पयः ᵛवरीमभिः उरुत्वैर्महत्त्वैः ᵛयस्मिन् पवमानगुणविशिष्ट इन्द्रे ᵛआ ᵛश्रीणन्ति आमिश्रयन्ति। दध्ना पयसा च सोमं श्रीणन्ति खलु। तदुच्यते ॥

समी रथं न भुरिजोरहेषत दश स्वसारो अदितेरुपस्थ आ।
जिगादुप ज्रयति गोरपीच्यं पदं यदस्य मतुथा अजीजनन् ॥ ५ ॥

सम्। ईमिति। रथम्। न। भुरिजोः। अहेषत। दश। स्वसारः। अदितेः। उपऽस्थे। आ।
जिगात्। उप। ज्रयति। गोः। अपीच्यम्। पदम्। यत्। अस्य। मतुथाः। अजीजनन् ॥५॥

ᵛभुरिजोः। बाहुनामैतत्। बिभ्रति पदार्थानाभ्यामिति। तयोर्बाह्वोः ᵛदश दशसंख्याकाः ᵛस्वसारः सर्वत्रसरणशीला अङ्गुलयः ᵛअदितेः भूमेः ᵛउपस्थे समीपे देवयजनदेशे ᵛईम् एनं सोमम् ᵛआ आभिमुख्येन ᵛसम् ᵛअहेषत संप्रेरयन्ति। 'हि वर्धनगत्योः'। लुङि रूपम्। कथमिव। ᵛरथं ᵛन। रथं यथाङ्गुलयः प्रेरयन्ति तद्वत्। स सोमः ᵛजिगात् पात्राणि गच्छति। किंच ᵛगोः धेनोः ᵛअपीच्यम् अन्तर्हितं पयः ᵛउप ᵛज्रयति तदानीमुपगच्छति। ᵛयत् यदा ᵛमतुथाः मननीयगाथावन्तः स्तोतारः ᵛअस्य सोमस्य ᵛपदं स्थानम् ᵛअजीजनन् जनयन्ति तदानीमित्यर्थः ॥ ॥२५॥

अभिष्टवे[1] 'श्येनो न योनिम्' इत्येषा। सूत्रितं च—'संप्रेषितः श्येनो न योनिं सदनं धिया कृतम्' (आश्व. श्रौ. ४. ७) इति। अग्नीषोमप्रणयनेऽप्येषा। सूत्रितं च–'अन्तश्च प्रागा अदितिर्भवासि श्येनो न योनिं सदनं धिया कृतम्' (आश्व. श्रौ. ४. १०) इति ॥

श्येनो न योनिं सदनं धिया कृतं हिरण्ययमासदं देव एषति।
ए रिणन्ति बर्हिषि प्रियं गिराश्वो न देवाँ अप्येति यज्ञियः ॥ ६ ॥

श्येनः। न। योनिम्। सदनम्। धिया। कृतम्। हिरण्ययम्। आऽसदम्। देवः। आ। ईषति।
आ। ईमिति। रिणन्ति। बर्हिषि। प्रियम्। गिरा।
अश्वः। न। देवान्। अपि। एति। यज्ञियः ॥ ६ ॥

ᵛदेवः द्योतमानः पवमानः ᵛधिया स्वकर्मणा ᵛकृतं संपादितं ᵛहिरण्ययं हिरणमयम् ᵛआसदम् आसन्द्यभिधानम् ᵛएषति अभिमुखं गच्छति। ईषतेर्गत्यर्थस्य व्यत्ययेन परस्मैपदम्। तत्र दृष्टान्तः। ᵛश्येनो ᵛन ᵛयोनिम्। कुलायं यथा श्येनः पक्षी प्रविशति तद्वत्। ततः ᵛईम् एनं ᵛप्रियं प्रीणयितारं सोमं ᵛगिरा स्तुत्या ᵛबर्हिषि यज्ञे ᵛआ ᵛरिणन्ति स्तोतारोऽभिमुखं प्रेरयन्ति। स्तुवन्तीत्यर्थः। अनन्तरं ᵛयज्ञियः यज्ञार्हः यष्टव्योऽयं सोमः ᵛअश्वो ᵛन अश्व इव त्वरया ᵛदेवान् ᵛअप्येति अभिगच्छति ॥

परा व्यक्तो अरुषो दिवः कविर्वृषा त्रिपृष्ठो अनविष्ट गा अभि।
सहस्रणीतिर्यतिः परायती रेभो न पूर्वीरुषसो वि राजति ॥ ७ ॥

परा। विऽअक्तः। अरुषः। दिवः। कविः। वृषा। त्रिऽपृष्ठः। अनविष्ट। गाः। अभि।
सहस्रऽनीतिः। यतिः। पराऽयतिः। रेभः। न। पूर्वीः। उषसः। वि। राजति ॥ ७ ॥

१. ग–अवितावप्रवर्ग्ये।

ᵛअरुषः आरोचमानः ᵛकविः क्रान्तप्रज्ञः सोमः ᵛव्यक्तः विस्पष्टधारायुक्तः। यद्वा। वसतीवरीभिर्विशेषेणाक्तः सिक्तः सन् ᵛदिवः अन्तरिक्षात् ᵛपरा पराङ्मुखम् आगच्छति। पवित्रात् द्रोणकलशं परागच्छतीत्यर्थः। ᵛवृषा वृषभः ᵛत्रिपृष्ठः। त्रीणि सवनानि पृष्ठान्यस्येति त्रिपृष्ठः सोमस्य सर्वेषु विद्यमानत्वात्। तस्मात् त्रिपृष्ठः सोमः ᵛगाः स्तोतृभिः क्रियमाणाः स्तुतीरभिलक्ष्य ᵛअनविष्ट शब्दायते। 'नु शब्दे'। किंच ᵛसहस्रणीतिः सहस्रनयनः। प्रयोगबाहुल्यापेक्षं ग्रहेषु चमसेषु च सहस्रविधनयनत्वम्। अत एव ᵛयतिः पात्रादीनि प्रत्यागन्ता ᵛपरायतिः कलशान् प्रति परागन्ता भवति। सोऽयं ᵛपूर्वीः बह्वीः ᵛउषसः। 'कालाध्वनोः' इति द्वितीया। बहुपूषःकालेषु ᵛरेभो ᵛन। 'रेभृ शब्दे'। शब्दायमानः स्तोतेव ᵛवि ᵛराजति विशेषेण दीप्यते। तेषु सोमस्याभिषूयमाणत्वात्। स्तोता खलु देवानां स्तुतिकरणेन राजति[1]॥

त्वेषं रूपं कृणुते वर्णो अस्य स यत्राशयत्समृता सेधति स्रिधः।
अप्सा याति स्वधया दैव्यं जनं सं सुष्टुती नसते सं गोअग्रया॥ ८॥

त्वेषम्। रूपम्। कृणुते। वर्णः। अस्य। सः। यत्र। अशयत्। समऽऋता। सेधति। स्रिधः।
अप्साः। याति। स्वधया। दैव्यम्। जनम्। सम्। सुऽस्तुती। नसते। सम्। गोऽअग्रया॥८॥

ᵛअस्य। अन्वादेशे अशादेशः। अस्य सोमस्य स्वभूतः ᵛवर्णः शत्रूणां निवारको रश्मिः ᵛत्वेषं दीप्यमानं ᵛरूपं ᵛकृणुते करोति। ᵛसः रश्मिः ᵛयत्र ᵛसमृता। अर्तेः क्तिनि रूपम्। सम्यक् प्राप्यते योद्धृभिरत्रेति संग्रामः। अस्मिन् समृतौ युद्धे ᵛअशयत् शेते तिष्ठति। शीङो लङि 'बहुलं छन्दसि' इति शपो लुगभावः। तत्र युद्धे स रश्मिः ᵛस्रिधः शोषकाञ्छत्रून् ᵛसेधति निषेधति। हिनस्तीति यावत्। वाक्यभेदादनिघातः। किंच ᵛअप्साः। सनोतेः विटि आत्वे कृते रूपम्। अपामुदकानां दाता। यद्वा वसतीवर्याख्यानामपां संभक्ता। सोऽयं ᵛस्वधया हवीरूपेणान्नेन सह ᵛदैव्यं देवानां संबन्धिनं ᵛजनं[2] प्रति ᵛयाति गच्छति। अपि च सोऽयं ᵛसुष्टुती सुस्तुत्या ᵛसं संगच्छते। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। किंच स सोमः ᵛगोअग्रया गवादिमुख्यया यया वाचा स्तोतारः पशून् याचन्ते तया वाचा ᵛसं ᵛनसते संगतो भवति। नसतिर्गत्यर्थः। भिन्नवाक्यत्वादनिघातः॥

उक्षेव यूथा परियन्नरावीदधि त्विषीरधित सूर्यस्य।
दिव्यः सुपर्णोऽव चक्षत क्षां सोमः परि क्रतुना पश्यते जाः॥ ९॥

उक्षाऽइव। यूथा। परिऽयन्। अरावीत्। अधि। त्विषीः। अधित। सूर्यस्य।
दिव्यः। सुऽपर्णः। अव। चक्षत। क्षाम्। सोमः। परि। क्रतुना। पश्यते। जाः॥९॥

ᵛउक्षेव वृषभ इव ᵛयूथा गोयूथानि प्रत्यागच्छञ्छब्दं करोति तद्वदयं सोमः स्तुतीः ᵛपरियन् परिगच्छन् ᵛअरावीत् शब्दायते। ततः ᵛसूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य[3] ᵛत्विषीः दीप्तीः ᵛअधि ᵛअधित अधिदधाति। सूर्यात्मना द्युलोकेऽवतिष्ठत इत्यर्थः। दधातेर्लुङि 'स्थाघ्वोरिच्च' इति इत्वकित्त्वे। किंच ᵛदिव्यः दिवि भवः ᵛसुपर्णः सुपतनः श्येनरूपया[4] गायत्र्याहृतत्वाच्छोभनगमनः सोमः ᵛक्षाम्। पृथिवीनामैतत्। क्षियन्ति निवसन्त्यत्रेति। क्षां पृथिवीम् ᵛअव ᵛचक्षत अवपश्यति।

---

१. भ६–विराजति। २. त१.२.५.६-भ६–'जनं' नास्ति। ३. त-भ–प्रेरकादित्यस्य। ४. त१.२.६.७-भ६–शोभन°; त५–शोन°।

षष्ठेर्लङि 'बहुलं छन्दसि' इति शपो लुगभावः। ततः ᵛसोमः ᵛजाः[१] जाताः[१] प्रजाः ᵛक्रतुना प्रज्ञानेन ᵛपरि ᵛपश्यते परितः पश्यति। व्यत्ययेनात्मनेपदम्॥ ॥ २६ ॥

'हरिं मृजन्ति' इति नवर्चं पञ्चमं सूक्तमाङ्गिरसस्य हरिमन्तस्यार्षं पवमानसोमदेवताकम्। 'जागतमूर्ध्वं प्रागुशनसः' (अनु. ९.६७) इति परिभाषया जागतम्। तथा चानुक्रान्तं—'हरिं मृजन्ति हरिमन्तः' इति। गतो विनियोगः॥

हरिं मृजन्त्यरुषो न युज्यते सं धेनुभिः कलशे सोमो अज्यते।
उद्वाचमीरयति हिन्वते मती पुरुष्टुतस्य कति चित्परिप्रियः॥ १॥

हरिम्। मृजन्ति। अरुषः। न। युज्यते। सम्। धेनुऽभिः। कलशे। सोमः। अज्यते।
उत्। वाचम्। ईरयति। हिन्वते। मती। पुरुऽस्तुतस्य। कति। चित्। परिऽप्रियः॥ १॥

ᵛहरिं हरितवर्णं सोममृत्विजो ᵛमृजन्ति मार्जयन्ति। 'मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते' (पा. म. १.१.३.१०; का. १.१.५) इति तत्र वृद्धेरभावः। सोऽयम् ᵛअरुषः। अर्तेरुषच्प्रत्ययः। गमनशीलोऽश्व इव ᵛयुज्यते इन्द्रादिभिः संयुज्यते। किंच ᵛकलशे द्रोणाभिधाने स्थितः ᵛसोमः ᵛधेनुभिः गोविकारैः दध्यादिभिः ᵛसम् ᵛअज्यते समक्तः सिक्तो भवति। अपि च सोमो यदा ᵛवाचं शब्दम् ᵛउत् ᵛईरयति उद्गमयति। शब्दं करोतीत्यर्थः। तदा स्तोतारश्च ᵛमती। 'सुपां सुलुक्०' इति द्वितीयायाः पूर्वसवर्णदीर्घः। स्तुतिं ᵛहिन्वते प्रेरयन्ति। 'हि गतौ वृद्धौ च' इति स्वादिः आत्मनेपदी। ततः स्तोत्राभिष्टुतः सः ᵛपुरुष्टुतस्य बहुस्तोत्रयुक्तस्य स्तोतुः ᵛपरिप्रियः। 'प्रीङ् तर्पणे'। क्विप्। शसि इयङादेशः। कृदुत्तरपदप्रकृतिस्वरत्वम्। परितः प्रीणयितॄणि ᵛकति ᵛचित् कियन्ति धनानि प्रयच्छति॥

साकं वदन्ति बहवो मनीषिण इन्द्रस्य सोमं जठरे यदादुहुः।
यदी मृजन्ति सुगभस्तयो नरः सनीळाभिर्दशभिः काम्यं मधु॥ २॥

साकम्। वदन्ति। बहवः। मनीषिणः। इन्द्रस्य। सोमम्। जठरे। यत्। आऽदुहुः।
यदि। मृजन्ति। सुऽगभस्तयः। नरः। सऽनीळाभिः। दशऽभिः। काम्यम्। मधु॥ २॥

ᵛमनीषिणः मनस ईशितारः प्राज्ञाः ᵛबहवः स्तोतारः ᵛसाकं सहैव युगपत् मन्त्रान् ᵛवदन्ति। तदा स्तुवन्ति। यदा[२] ᵛइन्द्रस्य ᵛजठरे द्रोणकलशे ᵛसोमम् ᵛआदुहुः ऋत्विजो दुदुहुः तदाभिष्टुवन्तीति। दुहेर्लिट्युसि रूपम्। द्विर्वचनस्य छन्दसि विकल्पितत्वादत्र द्विर्वचनाभावः। किंच ᵛयदि यदा ᵛसुगभस्तयः शोभनबाहुकाः ᵛनरः कर्मनेतारो मनुष्याः ᵛकाम्यं काम्यमानं ᵛमधु मदकरं सोमं ᵛसनीळाभिः ᵛदशभिः दशसंख्याकाभिरङ्गुलीभिः ᵛमृजन्ति सोममभिषुण्वन्ति तदा वदन्तीत्यन्वयः॥

अरममाणो अत्येति गा अभि सूर्यस्य प्रियं दुहितुस्तिरो रवम्।
अन्वस्मै जोषमभरद्विनंगृसः सं द्वयीभिः स्वसृभिः क्षेति जामिभिः॥ ३॥

अरममाणः। अति। एति। गाः। अभि। सूर्यस्य। प्रियम्। दुहितुः। तिरः। रवम्।
अनु। अस्मै। जोषम्। अभरत्। विनम्ऽगृसः।
सम्। द्वयीभिः। स्वसृऽभिः। क्षेति। जामिऽभिः॥ ३॥

---

१. ग—जाः प्रजानामेतत्, जाताः, त१.२.६.७—जाः; त३.४.५-भ२.६.७—जाताः। २. त—यद्वा।

ᵛसः सोमः ᵛअरममाणः अनुपरतः सन् । पुनःपुनर्देवानां प्रीणनाय ग्रहादीनि प्रविशन्नित्यर्थः । ᵛगाः गोविकारानाश्रयणानभिलक्ष्य ᵛअत्येति अतिक्रम्य गच्छति । ततः शब्दायमानः सोमः ᵛसूर्यस्य आदित्यस्य ᵛदुहितुः उषसः ᵛप्रियं ᵛरवं शब्दं ᵛतिरः तिरस्करोति । तस्मिन्काले सोमाभिषवध्वनिर्महान् भवतीत्यर्थः । ᵛविनंगृसः । विनं कमनीयं स्तोत्रं गृह्णातीति विनंगृसः स्तोता । ᵛजोषम् । जुषेर्घञि रूपम् । पर्याप्तं स्तोत्रं तस्मै सोमाय ᵛअनु ᵛअभरत् अनुभरति । करोतीति यावत् । सोऽयं सोमः ᵛद्वयाभिः द्वाभ्यां पाणिभ्यामुत्पन्नाभिः ᵛजामिभिः परस्परं बन्धुभिः स्वसृभिः कर्मकरणार्थमितस्ततो गच्छन्तीभिरङ्गुलीभिः ᵛसं ᵛक्षेति संगच्छते । 'क्षि निवासगत्योः' । छान्दसो विकरणस्य लुक् ॥

नृधू॑तो॒ अद्रि॑षुतो ब॒र्हिषि॑ प्रि॒यः पति॒र्गवां॑ प्र॒दिव॒ इन्दु॑र्ऋ॒त्विय॑ः ।
पुरं॑धिवा॒न्मनु॑षो यज्ञ॒साध॑नः॒ शुचि॑र्धि॒या प॑वते॒ सोम॑ इन्द्र ते ॥ ४ ॥

नृऽधू॑तः । अद्रि॑ऽसुतः । ब॒र्हिषि॑ । प्रि॒यः । पतिः॑ । गवा॑म् । प्र॒ऽदिवः॑ । इन्दुः॑ । ऋ॒त्वियः॑ ।
पुरं॑धिऽवान् । मनु॑षः । य॒ज्ञ॒ऽसाध॑नः । शुचिः॑ । धि॒या । प॒व॒ते॒ । सोमः॑ । इन्द्र॑ । ते॒ । ॥४॥

हे ᵛइन्द्र पवमानगुणविशिष्टेन्द्र ᵛते त्वदर्थं ᵛबर्हिषि यज्ञेऽयं ᵛसोमः ᵛधिया स्वेन कर्मणा धारया वा ᵛपवते पात्रेषु स्यन्दते । कीदृशः। ᵛनृधूतः कर्मनेतृभिर्मनुष्यैः शोधितः ᵛअद्रिषुतः ग्रावभिरभिषुतः ᵛप्रियः देवानां प्रीणयिता ᵛगवां ᵛपतिः स्वामी । इन्द्रो गा अलभत तस्माद्गवां स्वामी । ᵛप्रदिवः । पुराणनामैतत् । पुराणः ᵛइन्दुः पात्रेषु क्षरन् ᵛऋत्वियः ऋतौ जातः । 'ऋतोरण्' 'छन्दसि घस्' ( पा. सू. ५. १. १०५–१०६ ) इति घस् । सित्वेन पदसंज्ञायां भसंज्ञानिमित्त[1] ओर्गुणो[1] न भवति । ᵛपुरंधिवान् । 'पुरंधिर्बहुधीः' ( निरु. ६. १३ ) इति यास्कः । बहुकर्मवान् ᵛमनुषः मनुष्यस्य ᵛयज्ञसाधनः ᵛशुचिः दीप्यमानः । यद्वा । दशापवित्रेण शुद्धः । एवंगुणः सोमः इन्द्रार्थं पवत इति संबन्धः ॥

नृबा॒हुभ्यां॑ चोदि॒तो धार॑या सु॒तो॑ऽनुष्व॒धं प॑वते॒ सोम॑ इन्द्र ते ।
आप्राः॒ क्रतू॒न्त्सम॑जैरध्व॒रे म॒तीर्वेर्न द्रु॒षच्च॒म्वो॒३॒॑रास॑द॒द्धरिः॑ ॥ ५ ॥

नृबा॒हुऽभ्या॑म् । चो॒दि॒तः । धार॑या । सु॒तः । अ॒नु॒ऽस्व॒धम् । प॒व॒ते॒ । सोमः॑ । इ॒न्द्र॒ । ते॒ ।
आ । अ॒प्राः॒ । क्रतू॑न् । सम् । अ॒जैः॒ । अ॒ध्व॒रे । म॒तीः ।
वेः । न । द्रु॒ऽसत् । च॒म्वोः॑ । आ । अ॒स॒द॒त् । हरिः॑ ॥ ५ ॥

हे ᵛइन्द्र पवमानगुणविशिष्ट ᵛनृबाहुभ्यां कर्मनेतॄणामृत्विजां बाहुभ्यां ᵛचोदितः प्रेरितः ᵛधारया ᵛसुतः अभिषुतः । यथा धारा भवति तथाभिषुत इत्यर्थः । तादृशः ᵛसोमः ᵛते तव ᵛअनुष्वधं बलमनु बलार्थम् । यद्वा । स्वधेत्यन्ननाम । अन्नार्थं ᵛपवते[2] आगच्छति । ततः स त्वं सोमपानेन ᵛक्रतून् कर्माणि ᵛआप्राः आपूरयसि । किंच ᵛअध्वरे यज्ञे ᵛमतीः अभिमन्यमानान् शत्रून् ᵛसमजैः सम्यग्जितवानसि । 'जि जये' । लुङि सिपि सिचो 'बहुलं छन्दसि' इति इडभावः । 'सिचि वृद्धिः०' इति वृद्धिः । सोऽयं ᵛहरिः हरितवर्णः सोमः ᵛचम्वोः अधिषवणफलकयोः ᵛआसदत् आसीदति । तत्र दृष्टान्तः । ᵛवेर्न । वी गत्यादिषु । 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । 'सार्व-

१. ग–भसंज्ञानिवृत्तेर्गुणः । २. ग-त१.२.३.४.५.६-भ–विपवते; त७–वेः पवते ।

धातुकार्धधातुकयोः ' इति गुणः । यथा विः पक्षी ᐯद्रुषन् द्रुमे सीदतीति तद्वत् । द्रुषत्[1] । 'पूर्वपदात् ' इति षत्वम् ॥ ॥ २७ ॥

अंशुं दुहन्ति स्तनयन्तमक्षितं कविं कवयोऽपसो मनीषिणः ।
समी गावो मतयो यन्ति संयत ऋतस्य योना सदने पुनर्भुवः ॥ ६ ॥

अंशुम् । दुहन्ति । स्तनयन्तम् । अक्षितम् । कविम् । कवयः । अपसः । मनीषिणः ।
सम् । ईम् । गावः । मतयः । यन्ति । सम्ऽयतः । ऋतस्य । योना । सदने । पुनःऽभुवः ॥ ६ ॥

ᐯकवयः क्रान्तप्रज्ञाः ᐯअपसः कर्मवन्तः ᐯमनीषिणः । मनस ईशा मनीषा बुद्धिः । तद्वन्त ऋत्विजः ᐯस्तनयन्तं शब्दायमानम् ᐯअक्षितम् अक्षीणं ᐯकविं क्रान्तदर्शिनम् ᐯअंशुं सोमं ᐯदुहन्ति अभिषुण्वन्ति । ततः ᐯपुनर्भुवः पुनर्भवनशीलाः ᐯगावः पशवः ᐯमतयः मननीयाः स्तुतयश्च ᐯसंयतः परस्परं संगताः सत्यः ᐯऋतस्य सत्यभूतस्य यज्ञस्य ᐯयोना योनौ योनिस्थानीय उत्पत्तिभूते ᐯसदने उत्तरवेद्यालये ᐯईम् एनं सोमं ᐯसं ᐯयन्ति संगच्छन्ति ॥

नाभा पृथिव्या धरुणो महो दिवोऽपामूर्मौ सिन्धुष्वन्तरुक्षितः ।
इन्द्रस्य वज्रो वृषभो विभूवसुः सोमो हृदे पवते चारु मत्सरः ॥ ७ ॥

नाभा । पृथिव्याः । धरुणः । महः । दिवः । अपाम् । ऊर्मौ । सिन्धुषु । अन्तः । उक्षितः ।
इन्द्रस्य । वज्रः । वृषभः । विभुऽवसुः । सोमः । हृदे । पवते । चारु । मत्सरः ॥ ७ ॥

ᐯमहः महतः ᐯदिवः द्युलोकस्य ᐯधरुणः धारकोऽयं सोमः ᐯपृथिव्याः विस्तीर्णाया भूमेः ᐯनाभा नाभौ नाभिस्थानीये उच्छ्रिते पदे ' यदुत्तरवेदीनाभिः ' ( ऐ. ब्रा. १. २८ ) इत्याम्नानात् उत्तरवेदिस्थान ऋत्विग्भिर्निहितः ᐯसिन्धुषु स्यन्दमानासु नदीषु ᐯअपाम् उदकानाम् ᐯऊर्मौ संघे ᐯअन्तः मध्ये ᐯउक्षितः सिक्तः । अन्तरिक्षस्थानमध्ये वर्तमान इत्यर्थः । तादृशः ᐯइन्द्रस्य ᐯवज्रः वज्रस्थानीयः ᐯवृषभः कामानां वर्षिता अत एव ᐯविभूवसुः, व्याप्तधनः ᐯसोमः ᐯचारु कल्याणं यथा भवति तथा इन्द्रस्य ᐯमत्सरः मादयिता सन् ᐯहृदे मनसे सुखाय ᐯपवते आगच्छति ॥

स तू पवस्व परि पार्थिवं रजः स्तोत्रे शिक्षन्नाधून्वते च सुक्रतो ।
मा नो निर्भाग्वसुनः सादनस्पृशो रयिं पिशङ्गं बहुलं वसीमहि ॥ ८ ॥

सः । तु । पवस्व । परि । पार्थिवम् । रजः । स्तोत्रे । शिक्षन् । आऽधून्वते । च । सुक्रतो इति सुऽक्रतो ॥ मा । नः । निः । भाक् । वसुनः । सादनऽस्पृशः ।
रयिम् । पिशङ्गम् । बहुलम् । वसीमहि ॥ ८ ॥

हे ᐯसुक्रतो शोभनकर्मन् सुप्रज्ञ वा सोम तादृशस्त्वं ᐯपार्थिवं ᐯरजः लोकं लक्षीकृत्य ᐯतु क्षिप्रं ᐯपरि ᐯपवस्व परितः सर्वतः क्षर । किं कुर्वन् । ᐯआधून्वते अदाभ्यग्रहे त्रिभिरंशुभिराधावनं कुर्वते । तथा भगवता आपस्तम्बेन सूत्रितं—' तैरेनं चतुराधुनोति पञ्चकृत्वः सप्तकृत्वो वा ' इति । तस्मै धनादिकं ᐯशिक्षन् प्रयच्छन् परि पवस्वेति समन्वयः । ततस्त्वं ᐯनः अस्मान् ᐯवसुनः धनात् ᐯमा

१. ग-त१.२.३-भ१.२.४.६-द्रुषदिति; भ१(२)-द्रुषदित्यत्र ।

ᵛनिर्भाक् मा निर्भाङ्क्षीः मा वियोक्षीः। कीदृशात्। ᵛसदनस्पृशः। येन[1] भूतेन[1] वसुना सदनानि गृहान् पुत्रादीन् स्पृशन्ति तादृशात् गृहादिकस्य प्रदातुः धनान्मा[2] वियुजः। भाक्। 'भज सेवायाम्'। लुङि सिपि सिचि 'बहुलं छन्दसि' इति इडागमाभावः। 'एकाचः°' इति इट्प्रतिषेधः। हलन्तलक्षणा वृद्धिः (पा. सू. ७. २. ३)। सिपो[3] लोपः। यस्मादेवं तस्माद्वयं ᵛपिशङ्गं नानारूपं कनकादिना अत एव ᵛबहुलं प्रभूतं ᵛरयिं धनं ᵛवसीमहि आच्छादयेम। बहुधनवन्तो भवेमेत्यर्थः। 'वस आच्छादने'। आदादिकः। लिङि रूपम् ॥

**आ तू न॑ इन्दो श॒तदा॒त्वश्व्यं॑ स॒हस्र॑दातु पशु॒मद्धिर॑ण्यवत्।**
**उप॑ मास्व बृह॒ती रे॒वती॒रिषोऽधि॑ स्तो॒त्रस्य॑ पवमान नो गहि ॥ ९ ॥**

आ। तु। नः। इन्दो इति॑। शतऽदा॑तु। अश्व्य॑म्। सहस्र॑ऽदातु। पशुऽमत्। हिर॑ण्यऽवत्।
उप॑। मास्व। बृहतीः। रेवतीः। इषः॑। अधि॑। स्तोत्रस्य॑। पवमान। नः। गहि ॥ ९ ॥

हे ᵛइन्दो पवमान ᵛनः अस्मभ्यं ᵛतु क्षिप्रं धनम् ᵛआ आयच्छ। कीदृशम्। ᵛशतदातु। दातु दानम्। बहुदानम् ᵛअश्व्यम् अश्वसहितं ᵛसहस्रदातु सहस्रदानोपेतं ᵛपशुमत् पश्वादियुक्तं ᵛहिरण्यवत् हिरण्ययुक्तं च धनं देहि। तथा हे सोम ᵛबृहतीः प्रभूतानि ᵛरेवतीः धनवन्ति[4]। यद्वा पयसो दातारः पशवः। तद्वन्ति ᵛइषः अन्नानि चास्मभ्यम् ᵛउप ᵛमास्व उपनिर्मिमीष्व। कुर्विति यावत्। किंच हे ᵛपवमान ᵛनः[5] अस्माकं स्वभूतस्य ᵛस्तोत्रस्य श्रवणाय ᵛअधि ᵛगहि आगच्छ। 'क्रियार्थोपपदस्य°' (पा. सू. २.३.१४) इति चतुर्थी। 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी ॥ ॥ २८ ॥

'स्रक्के' इति नवर्चं षष्ठं सूक्तमाङ्गिरसस्य पवित्रस्यार्षं जागतं पवमानसोमदेवताकम्। तथा चानुक्रम्यते—'स्रक्के पवित्रः' इति। प्रवर्ग्येऽभिष्टव एतत्सूक्तम्। सूत्रितं च—'स्रक्के द्रप्सस्यायं वेनश्चोदयत्पृश्निगर्भाः' (आश्व. श्रौ. ४.६) इति ॥

**स्रक्के॑ द्र॒प्सस्य॒ धम॑तः॒ सम॑स्वरन्नृ॒तस्य॒ योना॒ सम॑रन्त॒ नाभ॑यः।**
**त्रीन्त्स मू॒र्ध्नो असु॑रश्चक्र आ॒रभे॑ स॒त्यस्य॒ नाव॑ः सु॒कृत॑मपीपरन् ॥ १ ॥**

स्रक्के॑। द्रप्सस्य॑। धम॑तः। सम्। अस्वरन्। ऋतस्य॑। योना॑। सम्। अरन्त। नाभ॑यः।
त्रीन्। सः। मूर्ध्नः। असु॑रः। चक्रे। आऽरभे॑। सत्यस्य॑। नाव॑ः। सुऽकृत॑म्। अपीपरन् ॥ १ ॥

ᵛस्रक्के यज्ञस्य[6] हनुस्थानीये। स्रक्व ओष्ठप्रान्तो हनुरुच्यते। 'हनुरधिषवणफलकः' इत्याम्नानात् हनुस्थानीये अधिषवणफलके ᵛधमतः अभिपूर्यमाणस्य ᵛद्रप्सस्य सोमस्यांशवः ᵛसमस्वरन् संगच्छन्ते। समशब्दयन् वा। ᵛऋतस्य सत्यभूतस्य यज्ञस्य ᵛयोना योनावुत्पत्तिस्थाने ᵛनाभयः सोमरसाः ᵛसमरन्त संगच्छन्ते। अतेः 'समो गमि°' इत्यादिनात्मनेपदम्। 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङ्। अथ ᵛअसुरः बलवान् सर्वेषां प्रीणनात् प्राणदाता वा ᵛसः सोमः ᵛमूर्ध्नः समुच्छ्रितान् ᵛत्रीन् लोकान् ᵛआरभे आरम्भणाय मनुष्यदेवादीनां संचरणाय[7] करोति। किंच ᵛसत्यस्य सत्यभूतस्य सोमस्य ᵛनावः नौका इव स्थिताश्चतस्रः स्थाल्यः[8]। आदित्याग्रयणोक्थ्यध्रुवस्थाल्य इति। ताः

१. ग-त३.४-भ५—येन प्रभूतेन; त१.२.५.६.७-भ४—ये भूतेन; भ१.७—यत्ते नव। २. ग—यत्रास्मान् मा; त-भ२.४.६—यन्नाम्ना; भ१.७—यन्ना। ३. ग—सिचो। ४. ग—धनवतीः; त७—धनवती। ५. भ६—सोम। ६. ग—यज्ञवक्त्रस्य। ७. ग-त-भ५.६—संचरणाय च; भ१.७—संवरणाय। ८. त—स्थाल्या स्थानि; भ१.४—स्थाल्यः स्थानि; भ६—स्थाल्य स्थानि।

स्थादयः ᵛसुकृतं सुष्ठु कर्माणि कुर्वन्तं यजमानम् ᵛअपीपरन् अभिमतदानेन पूजयन्ति[1] वा। पारयतेर्लुङि चङि सन्वद्भावाभ्यासेत्वदीर्घाः ॥

सम्यक् सम्यञ्चो महिषा अहेषत सिन्धोरूर्मावधि वेना अवीविपन्।
मधोर्धाराभिर्जनयन्तो अर्कमित्प्रियामिन्द्रस्य तन्वमवीवृधन् ॥ २ ॥

सम्यक्। सम्यञ्चः। महिषाः। अहेषत। सिन्धोः। ऊर्मौ। अधि। वेनाः। अवीविपन्।
मधोः। धाराभिः। जनयन्तः। अर्कम्। इत्। प्रियाम्। इन्द्रस्य। तन्वम्। अवीवृधन् ॥२॥

ᵛमहिषाः पूज्या महान्तो वर्त्विजः ᵛसम्यञ्चः परस्परं संगताः सन्तः ᵛसम्यक् ᵛअहेषत सोमं सम्यक् प्रेरयन्ति अभिषुण्वन्तीति यावत्। 'हि गतौ वृद्धौ च'। लुङि सिचि रूपम्। ततः ᵛवेनाः। 'वेनतेः कान्तिकर्मणः' (निरु. १०. ३८) इति यास्कः। स्वर्गादिफलं कामयमाना ऋत्विजः ᵛसिन्धोः स्यन्दमानस्योदकस्य ᵛऊर्मौ ᵛअधि संघे वसतीवर्यादिषु जलेषु सोमम् ᵛअवीविपन् कम्पयन्ति। तत्र प्रेरयन्तीत्यर्थः। वपतेर्ण्यन्तस्य[2] लुङि चङि 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वः। किंच ᵛअर्कम् अर्चनीयं स्तोत्रं ᵛजनयन्तः कुर्वन्तस्ते ᵛप्रियां प्रियतमाम् ᵛइन्द्रस्य ᵛतन्वं धाम च ᵛमधोः मदकरस्य सोमस्य ᵛधाराभिः ᵛअवीवृधन् वर्धितवन्तः। वर्धतेर्लुङि चङि रूपम् ॥

पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम्।
महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥ ३ ॥

पवित्रऽवन्तः। परि। वाचम्। आसते। पिता। एषाम्। प्रत्नः। अभि। रक्षति। व्रतम्।
महः। समुद्रम्। वरुणः। तिरः। दधे। धीराः। इत्। शेकुः। धरुणेषु। आऽरभम् ॥३॥

ᵛपवित्रवन्तः पवित्रेण शोधकेन सामर्थ्येन युक्ताः सोमस्य रश्मयः ᵛवाचं सोमस्थितां माध्यमिकां वाचं ᵛपरि ᵛआसते पर्युपविशन्ति। सोमोऽन्तरिक्षे तिष्ठति खलु 'सोमो वै राजा गन्धर्वेष्वासीत्' (ऐ. ब्रा. १.२७). इत्याम्नानात्। ततः ᵛप्रत्नः पुराणः ᵛएषां रश्मीनां[3] ᵛपिता अयं सोमश्च ᵛव्रतं प्रकाशनात्मकं कर्म ᵛअभि ᵛरक्षति अवितं करोति। किंच ᵛवरुणः सर्वस्य स्वतेजसाच्छादकः सोऽयं सोमः ᵛमहः महत् ᵛसमुद्रम्। अन्तरिक्षनामैतत्। महदन्तरिक्षं तैः[4] रश्मिभिः ᵛतिरो ᵛदधे अन्तर्हितमकरोत्। सर्वं व्याप्नोदिति यावत्। तमिमं सोमं ᵛधीराः। ᵛइत् अवधारणे। कर्मणि कुशलाः प्राज्ञा एवर्त्विजः ᵛधरुणेषु सर्वस्य धारकेषु वसतीवर्याख्येषूदकेषु ᵛआरभम् आरब्धुं ᵛशेकुः शक्नुवन्ति च। रभेस्तुमर्थे 'शकि णमुल्कमुलौ' (पा. सू. ३. ४. १२)' इति कमुल्। लित्स्वरेण मध्योदात्तः ॥

सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः।
अस्य स्पशो न नि मिषन्ति भूर्णयः पदेपदे पाशिनः सन्ति सेतवः ॥४॥

सहस्रऽधारे। अव। ते। सम्। अस्वरन्। दिवः। नाके। मधुऽजिह्वाः। असश्चतः।
अस्य। स्पशः। न। नि। मिषन्ति। भूर्णयः। पदेऽपदे। पाशिनः। सन्ति। सेतवः ॥४॥

---

१. ग–पूरयंति। २. ग–वेपते°; त-भ४.६–पतते°; भ२–कंपते°; भ७–वतपते°। ३. ग–अंशूनां। ४. ग–स्तै।

ᵛसहस्रधारे । बहूदकधारा यस्माद्भवन्ति तत्तथोक्तमन्तरिक्षम् । तस्मिन् वर्तमानाः ᵛते सोमरश्मयः ᵛअव अवस्तात् स्थिताः ᵛसमस्वरन् । पृथिवीं वृष्ट्या संयोजयन्तीत्यर्थः । किंच ᵛदिवः द्युलोकस्य ᵛनाके समुच्छ्रिते देशे वर्तमानाः ᵛमधुजिह्वाः मध्वग्राः । सोमतेजसाग्रेभ्यो[1] हि मधूत्पन्नं भवति । अतो मधुजिह्वाः । ᵛअसश्चतः संगतवर्जिताः[2] पृथक्पृथग्दिक्ष्ववस्थिताः ᵛअस्य सोमस्य स्वभूताः ᵛस्पशः सारभूता रश्मयः ᵛभूर्णयः क्षिप्रगामिनः सन्तः ᵛन ᵛनि ᵛमिषन्ति निमेषं न कुर्वन्ति । किंतु पापिनः सुकृतिनश्च ज्ञातुं सर्वदा जाग्रतीत्यर्थः । अथवा । राजभृत्या यथा दुष्टान् विचारयितुं सर्वदा जागरणं कुर्वन्ति तद्वदेते रश्मयः ᵛपदेपदे स्थाने स्थाने ᵛसेतवः संबद्धाः सन्तः ᵛपाशिनः पापकृतां बाधकाः ᵛसन्ति भवन्ति ॥

पितुर्मातुरध्या ये समस्वरन्नृचा शोचन्तः संदहन्तो अव्रतान् ।
इन्द्रद्विष्टामप धमन्ति मायया त्वचमसिक्नीं भूमनो दिवस्परि ॥ ५ ॥

पितुः । मातुः । अधि । आ । ये । सम्ऽअस्वरन् । ऋचा । शोचन्तः । सम्ऽदहन्तः । अव्रतान् ।
इन्द्रऽद्विष्टाम् । अप । धमन्ति । मायया । त्वचम् । असिक्नीम् । भूमनः । दिवः । परि ॥५॥

ᵛपितुर्मातुः द्यावापृथिव्योः । ' द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ' ( ऋ. सं. १.१६४.३३ ) इत्यादिषु द्यावापृथिव्योर्मातापितृत्वाम्नानात् । द्यावापृथिवीभ्यां ᵛये सोमरश्मयः ᵛअध्या ᵛसमस्वरन् अधिकं प्रादुर्भूता अभवन् ते ᵛऋचा ऋत्विग्भिः क्रियमाणया स्तुत्या ᵛशोचन्तः दीप्यमानाः ᵛअव्रतान् कर्मरहितान् यजमानान् ᵛसंदहन्तः सम्यग्विनाशयन्तस्ते रश्मयः ᵛइन्द्रद्विष्टाम् इन्द्राय द्वेषकारिणीम् । ' के च ' ( पा. सू. ६. २. ४५ ) इति पूर्वपदप्रकृतिस्वरः । इन्द्रेण द्विष्टां वा । ᵛअसिक्नीम् । रात्रिनामैतत् । रात्रिवत्कृष्णरूपां ᵛत्वचम् । राक्षसमित्यर्थः[3] । ᵛमायया कर्मणा प्रज्ञया वा ᵛभूमनः विस्तृताद्भूलोकात् ᵛदिवस्परि द्युलोकाच्च ᵛअप ᵛधमन्ति अपगतं कुर्वन्ति । अपघ्नन्तीत्यर्थः ॥ ॥ २९ ॥

प्रत्नान्मानादध्या ये समस्वरञ्छ्लोकयन्त्रासो रभसस्य मन्तवः ।
अपानक्षासो बधिरा अहासत ऋतस्य पन्थां न तरन्ति दुष्कृतः ॥ ६ ॥

प्रत्नात् । मानात् । अधि । आ । ये । सम्ऽअस्वरन् । श्लोकऽयन्त्रासः । रभसस्य । मन्तवः ।
अप । अनक्षासः । बधिराः । अहासत । ऋतस्य । पन्थाम् । न । तरन्ति । दुःऽकृतः ॥६॥

ᵛश्लोकयन्त्रासः । श्लोकाः स्तुतयः । स्तुतिर्नियमना: ᵛरभसस्य ᵛमन्तवः वेगमभिमन्यमानाः एतादृशाः ᵛये सोमरश्मयः ᵛप्रत्नात् पुराणात्[4] ᵛमानात् अन्तरिक्षात् ᵛअध्या ᵛसमस्वरन् सह प्रादुर्भूता अभवन् तान्रश्मीन् ᵛअनक्षासः चक्षुर्वर्जिताः साधु पदार्थानामद्रष्टारो नराः ᵛबधिराः देवतास्तुतिश्रवणवर्जिताः पापकृतो[5] नराश्च ᵛअप ᵛअहासत तान् परित्यजन्ति । दर्शिनः श्रवणवन्तो मेधाविनस्तु न परिजहति किंतु स्तुवन्ति । तदेवाह । ᵛऋतस्य सत्यस्य ᵛपन्थां मार्गभूतमेषां गणं ᵛदुष्कृतः पापकृतो नराः ᵛन ᵛतरन्ति नोत्तारयन्ति । सुकृतस्तु तरन्तीत्यभिप्रायः ॥

सहस्रधारे वितते पवित्र आ वाचं पुनन्ति कवयो मनीषिणः ।
रुद्रास एषामिषिरासो अद्रुहः स्पशः स्वञ्चः सुदृशो नृचक्षसः ॥ ७ ॥

१. ग-सोमतेजसामग्रेभ्यो । २. ग-त४-भ६-संगवर्जिताः; भ७-संगतावर्जिताः । ३. भ१(२)-राक्षसी° । ४. भ६-पुरातनात् । ५. भ१(२)-दुष्कृतः पापकृतः ।

सहस्रऽधारे । विऽतते । पवित्रे । आ । वाचम् । पुनन्ति । कवयः । मनीषिणः ।
रुद्रासः । एषाम् । इषिरासः । अद्रुहः । स्पशः । सुऽअञ्चः । सुऽदृशः । नृऽचक्षसः ॥ ७ ॥

ᵛकवयः क्रान्तकर्माणः अत एव ᵛमनीषिणः प्राज्ञा ऋत्विजः ᵛसहस्रधारे अनेकधारोपेते ᵛविितते कर्मणि विस्तृते ᵛपवित्रे शुद्ध्युत्पादके सोमे वर्तमानां ᵛवाचं माध्यमिकाम्। सोमः खलु विश्वावसुप्रभृतिगन्धर्वेष्वन्तरिक्षेऽवतिष्ठते 'सोमो वै राजा गन्धर्वेष्वासीत्' (ऐ. ब्रा.१.२७) इति श्रवणात्। तत्र वर्तमानं सोमं देवा गोरूपया वाचा क्रीतवन्तः। तदा सोमे वाक्तिष्ठतीति शक्यते वक्तुम्। तस्मात्सोमे स्थितां माध्यमिकां वाचम् ᵛआ ᵛपुनन्ति संस्कुर्वन्ति। स्तुवन्तीति यावत्। य उक्तगुणा मरुतां मातरं माध्यमिकां वाचं स्तुवन्ति तेषां ᵛरुद्रासः रुद्रपुत्रा मरुतः ᵛस्पशः मध्यमया वाचा वशिनो भवन्ति। कीदृशाः। ᵛइषिराः गमनशीलाः ᵛअद्रुहः स्तोतॄणामद्रोग्धारः। यद्वा। द्रुहः कर्मणि क्विबौणादिकः। परैरहिंस्याः। ᵛस्वञ्चः शोभनाञ्चनाः अत एव ᵛसुदृशः सुदर्शनाः ᵛनृचक्षसः नृणां कर्मनेतॄणां द्रष्टारः॥

ऋतस्य गोपा न दभाय सुक्रतुस्त्री ष पवित्रा हृद्य१न्तरा दधे ।
विद्वान्त्स विश्वा भुवनाभि पश्यत्यवाजुष्टान् विध्यति कर्ते अव्रतान् ॥ ८ ॥

ऋतस्य । गोपाः । न । दभाय । सुऽक्रतुः । त्री । सः । पवित्रा । हृदि । अन्तः । आ । दधे ।
विद्वान् । सः । विश्वा । भुवना । अभि । पश्यति । अव । अजुष्टान् । विध्यति । कर्ते । अव्रतान् ॥८॥

ᵛऋतस्य सत्यभूतस्य यज्ञस्य ᵛगोपाः गोपायिता अत एव ᵛसुक्रतुः शोभनकर्मा सोमः ᵛन ᵛदभाय दम्भाय[1] स्तम्भनाय न भवति। परैर्दम्भयितुं न शक्यत इत्यर्थः। किंच ᵛसः सोमः ᵛत्री। 'शेश्छन्दसि बहुलम्' इति लुक्। त्रीणि ᵛपवित्रा अग्निवायुसूर्यात्मकानि त्रीणि पवित्राणि ᵛहृद्यन्तः हृदयस्यान्तः ᵛआ ᵛदधे आदधाति। स्वस्मिन् संगमयतीत्यर्थः। अपि च ᵛविद्वान् सर्वं जानानः ᵛसः सोमः ᵛविश्वा ᵛभुवना सर्वाणि भुवनानि ᵛअभि ᵛपश्यति। ततः ᵛकर्ते। करोतेरौणादिकः तप्रत्ययः। कर्मणि ᵛअजुष्टान् अप्रियान् अत एव ᵛअव्रतान् अयजमानान् ᵛअव ᵛविध्यति अवाङ्मुखान् कृत्वा ताडयति। हिनस्तीति यावत्॥

ऋतस्य तन्तुर्विततः पवित्र आ जिह्वाया अग्रे वरुणस्य मायया ।
धीराश्चित्तत्समिनक्षन्त आशतात्रा कर्तमव पदात्यप्रभुः ॥ ९ ॥

ऋतस्य । तन्तुः । विऽततः । पवित्रे । आ । जिह्वायाः । अग्रे । वरुणस्य । मायया ।
धीराः । चित् । तत् । सम्ऽइनक्षन्तः । आशत । अत्र । कर्तम् । अव । पदाति । अप्रऽभुः ॥९॥

ᵛऋतस्य सत्यभूतस्य यज्ञस्य ᵛतन्तुः तनिता[2] ᵛपवित्रे अविवालमये दशापवित्रे ᵛविततः विस्तृतः। यद्वा। पवित्रेऽन्तरिक्षे विस्तृतः सोमः ᵛवरुणस्य ᵛजिह्वाया ᵛअग्रे ᵛमायया कर्मणा ᵛआ[3] आस्थितः[3]। वरुणजिह्वाग्र आपस्तिष्ठन्ति। तासु[4] सोमो वसतीति वसतीवर्याख्युदकेषु[5] स्थित इत्यर्थः।

१. ग-न दंभाय। २. ग-तनिता अयं। ३. ग-त३-भ७-दुरास्थितः; त१-दरास्थित; त२.४.५.६ दुरास्थित; त७-दूरास्थित; भ१.२-दुरा दुरास्थितः; भ४-दुरस्थितः; भ६-दुरस्थित। ४. त-भ६-तेषु। ५. त-भ२-ख्युदके।

ततः ᵛधीराश्चित् कर्मणि प्राज्ञा एव ᵛतत् वरुणजिह्वाग्रस्थानं ᵛसमिनक्षन्तः। इनक्षतिर्गतिकर्मा। संव्याप्नुवन्तः सन्तः ᵛआशत स्तुतिभिर्हविर्भिर्वा प्राप्नुवन्। यः पुनः ᵛकर्तम्। 'कालाध्वनोः°' इति द्वितीया। कर्मणि ᵛअप्रभुः समर्थो न भवति सोऽयम् ᵛअत्र अस्मिन्नेव लोके ᵛअव ᵛपदाति अवस्तान्नरके पतति नोपरि गच्छति। 'पद गतौ'। लेट्याडागमः। तस्मात्सर्वैरग्निष्टोमादिकर्म कर्तव्यमित्येषोऽर्थोऽभिहितो भवति ॥　　॥ ३० ॥

'शिशुर्न' इति नवर्चं सप्तमं सूक्तं दैर्घतमसस्य कक्षीवत आर्षं पवमानसोमदेवताकम्। अष्टमी त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रम्यते–' शिशुर्न कक्षीवांस्त्रिष्टुबष्टमी ' इति। गतः सूक्तविनियोगः॥

**शिशुर्न जातोऽव॑ चक्रद॒द्वने स्व१॒र्यद्वाज्य॑रु॒षः सिषा॑सति।**
**दि॒वो रेत॑सा सचते प॒यो॒वृधा॒ तमी॑महे सुम॒ती शर्म॑ स॒प्रथः॑ ॥ १ ॥**

शिशुः। न। जा॒तः। अव॑। च॒क्र॒द॒त्। वने॑। स्व॑रिति॑ स्वः॑। यत्। वा॒जी। अ॒रु॒षः। सिसा॑सति।
दि॒वः। रेत॑सा। स॒च॒ते॒। प॒यः॒ऽवृधा॑। तम्। ईम॒हे॒। सु॒ऽम॒ती। शर्म॑। स॒ऽप्रथः॑ ॥ १ ॥

स पवमानः सोमः ᵛवने वननीये वसतीवर्याख्य उदके ᵛजातः उत्पन्नः ᵛशिशुर्न शिशुरिव ᵛअव ᵛचक्रदत् अवाङ्मुखं क्रन्दति। तदोदकमध्ये पतञ्छब्दं करोति खलु। ᵛयत् यदा ᵛवाजी बलवानन्नवान् वा ᵛअरुषः आरोचमानः। यद्वा। वाज्यश्व इव अरुषः। अर्तेरुषच्। गमनशीलः सोमः ᵛस्वः स्वर्गलोकं ᵛसिषासति संभक्तुमिच्छति। सनोतेः सनीडभाव आत्वम्। 'सनोतेः°' इति सांहितिकं षत्वम्। सोऽयं ᵛपयोवृधा गवामोषधीनां च क्षीरस्य वर्धकेन[1] ᵛरेतसा उदकेन सह ᵛदिवः द्युलोकात् ᵛसचते पार्थिवं लोकं समवैति। ᵛतं तादृशं प्रसिद्धं सोमं ᵛसप्रथः सर्वतः पृथुतरं[2] धनादिना युक्तं ᵛशर्म गृहं तद्वयं ᵛसुमती। 'सुपां सुलुक्°' इति तृतीयायाः पूर्वसवर्णदीर्घः। सुमत्या शोभनया स्तुत्या ᵛईमहे याचामहे। ईमह इति याच्ञाकर्मा। 'ईङ् गतौ'। दैवादिकः। छान्दसः श्यनो लुक्॥

**दि॒वो यः स्क॒म्भो ध॒रुणः॒ स्वा॑तत॒ आपू॑र्णो अं॒शुः प॒र्येति॑ वि॒श्वतः॑।**
**सेमे म॒ही रोद॑सी यक्षदा॒वृता॑ समी॒ची॒ने दा॑धार॒ समिषः॑ क॒विः ॥ २ ॥**

दि॒वः। यः। स्क॒म्भः। ध॒रुणः॑। सु॒ऽआ॑ततः। आऽपू॑र्णः। अं॒शुः। प॒रि॒ऽएति॑। वि॒श्वतः॑।
सः। इ॒मे इति॑। म॒ही इति॑। रोद॑सी इति॑। य॒क्ष॒त्। आ॒ऽवृता॑।
स॒मी॒ची॒ने इति॑ स॒म्ऽई॒ची॒ने। दा॒धार॑। सम्। इषः॑। क॒विः ॥ २ ॥

ᵛदिवः द्युलोकस्य ᵛस्कम्भः विष्कम्भयिता संरोद्धा ᵛधरुणः सर्वस्य धारकः। यद्वा। पृथिव्या धारकः। 'विष्टम्भो दिवो धरुणः पृथिव्याः' ( ऋ. सं. ९.८९.६ ) इत्याम्नानात्। तादृशः ᵛस्वाततः सुष्ठु सर्वत्र ᵛविततः विस्तृतः अत एव ᵛआपूर्णः[3] पात्रेषु संपूर्णः ᵛयः ᵛअंशुः सोमात्मकः ᵛविश्वतः सर्वतः ᵛपर्येति परिगच्छति। 'तिङि चोदात्तवति' इति गतेर्निघातः। ᵛसः सोमः ᵛइमे ᵛरोदसी द्यावापृथिव्यौ ᵛआवृता संभजनीयेन कर्मणा ᵛयक्षत् यजतु। स्वबलेन संयोजयत्वित्यर्थः। ततः सोऽयं ᵛसमीचीने परस्परं संगते द्यावापृथिव्यौ ᵛदाधार धारयांचकार। 'तुजादीनाम्°' इत्यभ्यासस्य दीर्घः। अनन्तरं ᵛकविः क्रान्तकर्मा ᵛइषः अन्नानि स्तोतृभ्यः ᵛसं प्रयच्छतु। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥

---

१. त१.२.५.६.७-म६–' वर्धकेन ' नास्ति। २. ग-त३-म–पृथुतमं। ३. म१.२.७–पूर्णः।

महि प्सरः सुकृतं सोम्यं मधूर्वी गव्यूतिरदितेर्ऋतं यते।
ईशे यो वृष्टेरित उस्रियो वृषापां नेता य इतऊतिर्ऋग्मियः॥ ३॥

महि। प्सरः। सुऽकृतम्। सोम्यम्। मधु। उर्वी। गव्यूतिः। अदितेः। ऋतम्। यते।
ईशे। यः। वृष्टेः। इतः। उस्रियः। वृषा। अपाम्। नेता। यः। इतःऽऊतिः। ऋग्मियः॥३॥

ऋतं सत्यभूतं यज्ञं यते गच्छते तस्मा इन्द्राय सुकृतं सुष्ठु संस्कृतं सोम्यं सोममयं महि महत् प्रभूतं मधु मधुररसं प्सरः भक्षणं[1] पानीयं भवति। 'प्सा भक्षणे'। किंच अस्मद्यज्ञं प्रत्यागच्छतामिन्द्रादीनाम् अदितेः[2] पृथिव्याः गव्यूतिः मार्गश्च उर्वी विस्तीर्णो भवति। इन्द्रस्य शतसहस्रसंख्याकैर्हरिभिः सह गन्तुं मार्गो विस्तीर्णोऽभवदित्यर्थः। यः इन्द्रः इतः इमं लोकं प्रत्यापतन्त्याः वृष्टेः ईशे ईश्वरो भवति। तथा उस्रियः। उस्रेति गोनाम। गोभ्यो हितः अपाम् उदकानां वृषा वर्षकः यज्ञस्य[3] नेता[3] नायकः[4] इतऊतिः इममस्मदीयं यज्ञं प्रत्यूतिर्गमनं यस्य स तथोक्तः। इतो गच्छन् यः इन्द्रः ऋग्मियः ऋगर्हः स्तोतव्यो भवति। तस्मा अयं सोमः पातव्यो[5] भवतीति॥

प्रवर्ग्येऽभिष्टवे 'आत्मन्वन्नभः' इत्येषा। सूत्रितं च–'तदु प्रयक्षतममस्य कर्मात्मन्वन्नभो दुह्यते घृतं पयः' (आश्व. श्रौ. ४. ७) इति॥

आत्मन्वन्नभो दुह्यते घृतं पय ऋतस्य नाभिरमृतं वि जायते।
समीचीनाः सुदानवः प्रीणन्ति तं नरो हितमव मेहन्ति पेरवः॥ ४॥

आत्मन्ऽवत्। नभः। दुह्यते। घृतम्। पयः। ऋतस्य। नाभिः। अमृतम्। वि। जायते।
सम्ऽईचीनाः। सुऽदानवः। प्रीणन्ति। तम्। नरः। हितम्। अव। मेहन्ति। पेरवः॥४॥

आत्मन्वत्। 'अनो नुट्' इति नुडागमः। आत्मवत् सारवत् घृतं पयः च नभः नभस आदित्यरूपात्सोमः दुह्यते। किंच ऋतस्य यज्ञस्य नाभिः। 'णह बन्धने'। 'स्वमोर्नपुंसकात्' (पा. सू. ७. १. २३) इति सोर्लुग्न भवति सर्वविधीनां छन्दसि विकल्पितत्वात्। नाभि[6] यज्ञस्य बन्धकम् अमृतम् उदकं च वि जायते तस्मादेव प्रादुर्भवति। ततः सुदानवः शोभनस्तुतिहविर्दानवन्तो यजमानाः समीचीनाः परस्परं संगताः सन्तः तम् इमं सोमं प्रीणयन्ति[7] स्तुतिभिस्तर्पयन्ति। अथ नरः नेतारः पेरवः। 'पा रक्षणे'। 'मापोरिच्वे रुन्' इति रुन्प्रत्ययः। सर्वस्य रक्षकाः सोमरश्मयः हितं निहितम् अव अवस्ताद्वर्तमानं पार्थिवमुदकं मेहन्ति वर्षन्ति। 'मिह सेचने'। भौवादिकः। यद्वा। हितमुदकं पृथिवीं प्रति मेहन्ति॥

अरावीदंशुः सचमान ऊर्मिणा देवाव्यं मनुषे पिन्वति त्वचम्।
दधाति गर्भमदितेरुपस्थ आ येन तोकं च तनयं च धामहे॥ ५॥

अरावीत्। अंशुः। सचमानः। ऊर्मिणा। देवऽअव्यम्। मनुषे। पिन्वति। त्वचम्।
दधाति। गर्भम्। अदितेः। उपऽस्थे। आ। येन। तोकम्। च। तनयम्। च। धामहे॥५॥

---

१. ग-त३-भ१.२.४.७–भक्षणीयं। २. त-भ२–थां; भ६–या द्यावा; मु–अदितेः अदीनायाः। ३. ग-त३-भ१.२.४.५.७–नेता सर्वस्य। ४. ग–जगतः। ५. ग–दातव्यो। ६. ग-भ१.६.७–नाभिः; त४–नाभिं। ७. भ१(२)–स्तुतिभिः प्रीणंति प्रीणयंति स्तुतिभिः प्रीणयंति।

ᵛऊर्मिणा वसतीवर्यादीनामुदकानां संघेन ᵛसचमानः ᵛअंशुः सोमः ᵛअरावीत् शब्दं करोति। किंच स सोमः ᵛदेवाव्यम्। 'अव रक्षणे'। 'अवितॄस्तृतन्त्रिभ्य ईः' इति ईप्रत्ययः। देवानां पालयित्रीं ᵛत्वचम् आत्मनः शरीरं ᵛमनुषे मनुष्याय यजमानाय ᵛपिन्वति सिञ्चति। पात्रेषु क्षरतीति यावत्। अपि च ᵛअदितेः अदीनायाः पृथिव्याः ᵛउपस्थे समीपे ओषधीषु तं ᵛगर्भम् ᵛआ ᵛदधाति सुधामयैः किरणैर्विदधाति। ᵛयेन गर्भेण वयं ᵛतोकं दुःखनाशकं पुत्रं ᵛच ᵛतनयम्। तनोति कुलमिति तनयः पौत्रः। तं ᵛच ᵛधामहे दध्महे धारयामः। दधातेर्लटि 'बहुलं छन्दसि' इति शपो लुक्॥ ॥ ११ ॥

सहस्रधारेऽव ता असश्चतस्तृतीये सन्तु रजसि प्रजावतीः।
चतस्रो नाभो निहिता अवो दिवो हविर्भरन्त्यमृतं घृतश्चुतः॥ ६ ॥

सहस्रऽधारे। अव। ताः। असश्चतः। तृतीये। सन्तु। रजसि। प्रजाऽवतीः।
चतस्रः। नाभः। निऽहिताः। अवः। दिवः। हविः। भरन्ति। अमृतम्। घृतऽश्चुतः॥६॥

ᵛसहस्रधारे बहूदकधारे ᵛतृतीये ᵛरजसि लोके स्वर्गे वर्तमानाः ᵛअसश्चतः परस्परमसक्ताः ᵛप्रजावतीः उत्पादितप्रजास्त्रयः सोमस्य स्वभूताः ᵛताः ᵛअव ᵛसन्तु अधस्तात्पृथिव्यां पतन्तु। कास्ता इत्याह। ᵛचतस्रो ᵛनाभः तपसो[1] बाधिकाः सोमस्य संबन्धिन्यश्चतस्रो दीप्तयः कलाः ᵛदिवः द्युलोकात् ᵛअवः अवस्तात् ᵛनिहिताः सोमेन स्थापिताः ताः ᵛघृतश्चुतः घृतस्योदकस्य च्यावयित्र्यः सत्यः ᵛहविः सोमादिलक्षणं ᵛभरन्ति'देवानां प्रयच्छन्ति। तथा[2] ᵛअमृतं गोष्वोषधीषु च पयोरूपं सुधारूपं च भरन्ति प्रक्षिपन्ति॥

श्वेतं रूपं कृणुते यत्सिषासति सोमो मीढ्वाँ असुरो वेद भूमनः।
धिया शमी सचते सेमभि प्रवद्दिवस्कवन्धमव दर्षदुद्रिणम्॥ ७ ॥

श्वेतम्। रूपम्। कृणुते। यत्। सिसासति। सोमः। मीढ्वान्। असुरः। वेद। भूमनः।
धिया। शमी। सचते। सः। ईम्। अभि। प्रऽवत्। दिवः। कवन्धम्। अव। दर्षत्। उद्रिणम्॥७॥

ᵛश्वेतं दीप्यमानं शुक्लं ᵛरूपं ᵛकृणुते तदा करोति ᵛयत् यदा ᵛसिषासति स्वर्गं संभक्तुमिच्छति। सोमे पात्राण्यागते सति तत्तेजसानुरञ्जितानां तेषां श्वेतं रूपं भवति। ततः ᵛमीढ्वान्। 'मिह सेचने'। अस्मात् कर्तरि 'दाश्वान्साह्वान्मीढ्वांश्च' इति निपातनादभिमतरूपसिद्धिः। कामानां सेक्ता ᵛअसुरः प्राज्ञो बलवान् वा ᵛसोमः ᵛभूमनः बहुधनानि ᵛवेद स्तोतृभ्यो[3] दातुं जानाति। प्रयच्छतीति यावत्। ᵛस ᵛईम्। 'सोऽचि लोपे चेत्' इति सुलोपः। सोऽयं ᵛधिया प्रज्ञानेन ᵛप्रवत् प्रकृष्टानि ᵛशमी। द्वितीयायाः पूर्वसवर्णदीर्घः। कर्माणि ᵛअभि ᵛसचते अभितः समवैति। किंच ᵛदिवः अन्तरिक्षात् ᵛउद्रिणम् उदकवन्तं ᵛकवन्धं[4] मेघम्। कवन्धशब्देन[5] मेघोऽभिधीयते। तात्स्थ्यात्ताच्छब्द्यमिति। मेघम् ᵛअव ᵛदर्षत् अवदारयति। विवृतद्वारं करोति। मेघं विदार्यान्तरिक्षात् वृष्टिं करोतीत्यर्थः॥

अध श्वेतं कलशं गोभिरक्तं कार्ष्मन्ना वाज्यक्रमीत् ससवान्।
आ हिन्विरे मनसा देवयन्तः कक्षीवते शतहिमाय गोनाम्॥ ८ ॥

---

१. ग-मु—नभसो; त३-भ१.२.४.६—तमसो; भ७—नमसो। २. त-भ६—यथा। ३. ग—पातृभ्यः। ४. त३.५-भ—कबंधं। ५. त-भ—कबंध॰।

अर्ध । श्वेनम् । कुलशम् । गोभिः । अक्तम् । कार्ष्मन् । आ । वाजी । अक्रमीत् । ससऽवान् ।
आ । हिन्विरे । मनसा । देवऽयन्तः । कक्षीवते । शतऽहिमाय । गोनाम् ॥ ८ ॥

"अध अथानन्तरं "श्वेतं संप्रति सोमसंसर्गात् श्वेतवर्णं "गोभिः उदकैः "अक्तं संपृक्तं द्रोणकलशं "ससवान् संभजन् सोमः[1] "आ "अक्रमीत् आक्रमते । "कार्ष्मन्[2] । कार्ष्मशब्दः काष्ठावचनः । आजिं धावन्तो योद्धारो यां गन्तुमिच्छन्ति तस्यां काष्ठायां "वाजी कश्चिदश्वो युद्धं भजमान आक्रमीत् आक्रमते । सोमः काष्ठायां द्रोणकलशे पततीत्यर्थः । ततस्तस्मै सोमाय "देवयन्तः देवानिच्छन्त ऋत्विजः "मनसा "आ "हिन्विरे स्तुतीराभिमुख्येन प्रेरयन्ति । तत्र "शतहिमाय बहुगमनाय "कक्षीवते स्तोत्रकारिण एतन्नामकायर्षये सोमः "गोनां गाः पशून् प्रेरयति । 'गोः पादान्ते' (पा. सू. ७. १. ५७) इति नुडागमः । 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानसंज्ञा । चतुर्थ्यर्थे षष्ठी ॥

**अद्भिः सोम पपृचानस्य ते रसोऽव्यो वारं वि पवमान धावति ।**
**स मृज्यमानः कविभिर्मदिन्तम स्वदस्वेन्द्राय पवमान पीतये ॥ ९ ॥**

अत्ऽभिः । सोम । पपृचानस्य । ते । रसः । अव्यः । वारम् । वि । पवमान । धावति ।
सः । मृज्यमानः । कविऽभिः । मदिन्ऽतम । स्वदस्व । इन्द्राय । पवमान । पीतये ॥ ९ ॥

हे "पवमान पवित्रेण पूयमान हे "सोम "अद्भिः वसतीवर्यादिभिरुदकैः "पपृचानस्य संपृच्यमानस्य "ते तव "रसः "अव्यः अवेः "वारं वालं दशापवित्रं "वि "धावति विविधं प्राप्नोति । ततो हे "मदिन्तम मादयितृतम हे "पवमान सोम त्वं "कविभिः क्रान्तकर्मभिर्ऋत्विग्भिः "मृज्यमानः पूयमानः सन् "इन्द्राय "पीतये इन्द्रस्य पानार्थं "स्वदस्व प्रियरसो[3] भव ॥ ॥ ३२ ॥

'अभि प्रियाणि' इति पञ्चर्चमष्टमं सूक्तं भार्गवस्य कवेरार्षं जागतं पवमानसोमदेवताकम् । तथानुक्रम्यते-'अभि प्रियाणि पञ्च कविः' इति । गतो विनियोगः ॥

**अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।**
**आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ १ ॥**

अभि । प्रियाणि । पवते । चनःऽहितः । नामानि । यह्वः । अधि । येषु । वर्धते ।
आ । सूर्यस्य । बृहतः । बृहन् । अधि । रथम् । विष्वञ्चम् । अरुहत् । विऽचक्षणः ॥ १ ॥

"चनोहितः । चन इत्यन्ननाम । चायतेरसुनि चन इत्यौणादिकसूत्रेण निपातितः । चनसेऽन्नाय हितः यद्वा हितान्नः सोमः "प्रियाणि जगतः प्रीणयितृणि "नामानि नमनशीलानि तान्युदकानि "अभि "पवते अभितः करोति । "येषु अन्तरिक्षस्थितेषूदकेषु "यह्वः महानयं सोमः "अधि "वर्धते अधिकं प्रवृद्धो भवति । अपां मध्ये सोमो वसति । ततः "बृहन् महान् सोमः "बृहतः महतः परिवृढस्य "सूर्यस्य "विष्वञ्चं विष्वग्गमनम्[4] "अधि उपरि "रथं "विचक्षणः सर्वस्य विद्रष्टा सन् "आ "अरुहत् आरोहति । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' इति ॥

१. भ१(२)-सोमः कार्ष्मन् । २. त२-भ१-७-'कार्ष्मन्' नास्ति । ३. भ६-प्रियतमो । ४. ग-भ२-विष्वग्गामिनं रथं; त४-भ१-विष्वग्गामनरथं; भ७-विष्वंगांचनं वृथ; भ१(२)-गमनसाधनं रथं ।

ऋतस्य॑ जि॒ह्वा प॑वते॒ मधु॑ प्रि॒यं व॒क्ता पति॑र्धि॒यो अ॒स्या अदा॑भ्यः ।
दधा॑ति पु॒त्रः पि॒त्रोर॑पी॒च्यं॑[1] नाम॑ तृ॒तीय॒मधि॑ रोच॒ने दि॒वः ॥ २ ॥

ऋतस्य॑ । जि॒ह्वा । प॒व॒ते॒ । मधु॑ । प्रि॒यम् । व॒क्ता । पति॑ः । धि॒यः । अ॒स्याः । अदा॑भ्यः ।
दधा॑ति । पु॒त्रः । पि॒त्रोः । अ॒पी॒च्य॑म् । नाम॑ । तृ॒तीय॑म् । अधि॑ । रो॒च॒ने । दि॒वः ॥ २ ॥

ᵛऋतस्य सत्यभूतस्य यज्ञस्य ᵛजिह्वा मुख्यत्वेन जिह्वास्थानीयः सोमः ᵛप्रियं प्रियकरं ᵛमधु मदकरं रसं ᵛपवते क्षरति । कीदृशः । ᵛवक्ता शब्दकृत् । यद्वा । स्तोतृभिः क्रियमाणाः स्तुतयः[1] साधीयस्य इति प्रतिश्रवणस्य कर्ता । ᵛअस्याः ᵛधियः एतस्य कर्मणः ᵛपतिः पालयिता ᵛअदाभ्यः रक्षोभिर्हिंसितुमशक्यः ᵛपुत्रः यजमानः ᵛपित्रोः मातापित्रोः ᵛअपीच्यम् अन्तर्हितं यत् ᵛनाम । तौ न जानीतो नामकरणवेलायाम् । तस्मात्तयोरपरिज्ञायमानं तत् ᵛतृतीयं नाम ᵛदिवः द्युलोकस्य ᵛरोचने दीप्यमाने सोमेऽभिषूयमाणे सति ᵛअधि ᵛदधाति अत्यन्तं धारयति । नक्षत्रव्यावहारिकनाम्नी प्रभाष्य सोमयाजीति तृतीयमस्य नाम इति भगवता बौधायनेनोक्तम् ( बौ. गृह्यशेष. १.११.४-७ ) ॥

अव॑ द्युता॒नः क॒लशाँ॑ अचिक्रद॒न्नृभि॑र्येमा॒नः कोश॒ आ हि॑र॒ण्यये॑ ।
अ॒भीमृ॒तस्य॑ दो॒हना॑ अनूष॒ताधि॑ त्रिपृ॒ष्ठ उ॒षसो॒ वि रा॑जति ॥ ३ ॥

अव॑ । द्यु॒ता॒नः । क॒लशा॑न् । अ॒चि॒क्र॒द॒त् । नृऽभि॑ः । ये॒मा॒नः । कोशे॑ । आ । हि॒र॒ण्यये॑ ।
अ॒भि । ई॒म् । ऋ॒तस्य॑ । दो॒हना॑ः । अ॒नू॒ष॒त॒ । अधि॑ । त्रि॒ऽपृ॒ष्ठः । उ॒षस॑ः । वि । रा॒ज॒ति॒ ॥ ३ ॥

ᵛद्युतानः । ' द्युत दीप्तौ ' । दीप्यमानः ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛहिरण्यये हिरण्मये ᵛकोशे अधिषवणचर्मणि[2] । तस्य हिरण्मयत्वं ' हिरण्यपाणिरभिषुणोति ' इति हिरण्यसंबन्धात् । तादृशे कोशे ᵛयेमानः । छान्दसे कर्मणि लिटि कानचि रूपम् । नियम्यमानः सोमः । ततः[3] ᵛऋतस्य सत्यभूतस्य यज्ञस्य ᵛदोहनाः दोग्धार ऋत्विजः ᵛईम् एनं सोमम् ᵛअभि ᵛअनूषत अभिष्टुवन्ति । ' ग्रावाणो वत्सा ऋत्विजो दुहन्ति ' ( तै. सं. ६.२.११.४ ) इति तैत्तिरीयब्राह्मण एषां दोग्धृत्वमभिहितम् । सोमः ᵛकलशान् द्रोणाभिधानान्[4] प्रति ᵛअव ᵛअचिक्रदत् अवक्रन्दति शब्दायते । ततः ᵛत्रिपृष्ठः । त्रीणि सवनान्येव पृष्ठानि यस्य स तथोक्तः त्रिषु सवनेषु सोमस्य विद्यमानत्वात् । त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । तादृशः सोमः ᵛउषसः ᵛअधि यागाहनि ᵛवि ᵛराजति । ' अधिशीङ्स्थासां° ' ( पा. सू. १. ४. ४६ ) इति द्वितीया । तेष्वहःसु विशेषेण दीप्यते । यद्वा । राजतिरन्तर्णीतण्यर्थः । अहानि प्रकाशयति ॥

अद्रि॑भिः सु॒तो म॒तिभि॒श्चनो॑हितः प्ररो॒चय॒न्रोद॑सी मा॒तरा॒ शुचि॑ः ।
रोमा॒ण्यव्या॑ स॒मया॒ वि धा॑वति॒ मधो॒र्धारा॒ पिन्व॑माना दि॒वेदि॑वे ॥ ४ ॥

अद्रि॑ऽभिः । सु॒तः । म॒तिऽभि॑ः । चन॑ःऽहितः । प्र॒ऽरो॒चय॑न् । रोद॑सी॒ इति॑ । मा॒तरा॑ । शुचि॑ः ।
रोमा॑णि । अव्या॑ । स॒मया॑ । वि । धा॒व॒ति॒ । मधो॑ः । धारा॑ । पिन्व॑माना । दि॒वेऽदि॑वे ॥ ४ ॥

१. त१.२.५.७–स्तुतः; त३.४-भ१.५.७–स्तुतीः; भ६–स्तुतिः । २. ग–अभिषव°; त३-भ१.२–अधिषव° । ३. ग–पवमानः; त३-भ१.२.६.७–ते तवं; त४–तेनाव; भ१(२)–तेन च । ४. त३.४–द्रोणानभिधानान्; भ६–द्रोणकलशाभिधानान् ।

ᵛमतिभिः। 'मन ज्ञाने'। 'मन्त्रे वृषेषपचमन°' इति क्तिमुदात्तः। स्तुतिभिः ᵛअद्रिभिः ग्रावभिश्च ᵛसुतः अभिषुतः ᵛचनोहितः चनसे अन्नाय हितः हितान्नो वा ᵛमातरा मातरौ जगतो निर्मात्र्यौ ᵛरोदसी द्यावापृथिव्यौ ᵛप्ररोचयन् स्वतेजसा प्रकाशयन् अत एव ᵛशुचिः दीप्यमानः एवंविधः सोमः अव्यानि[1] अविभवानि ᵛरोमाणि तैः कृतानि पवित्राणि ᵛसमया अभितः समीपे ᵛवि ᵛधावति विशेषेण क्षरति। किंच ᵛपिन्वमाना अद्भिः सिच्यमाना ᵛमधोः मदकरस्य सोमस्य ᵛधारा ᵛदिवेदिवे अन्वहं दीर्घसत्रेषु पवित्राण्युभयतः पवते ॥

परि॑ सोम॒ प्र ध॑न्वा स्व॒स्तये॒ नृभि॑: पुना॒नो अ॒भि वा॑सया॒शिर॑म्।
ये ते॒ मदा॑ आह॒नसो॒ विहा॑यस॒स्तेभि॒रिन्द्रं॑ चोदय॒ दात॑वे म॒घम् ॥ ५ ॥

परि॑। सो॒म॒। प्र। ध॒न्व॒। स्व॒स्तये॑। नृऽभि॑:। पु॒ना॒नः। अ॒भि। वा॒स॒य॒। आ॒ऽशिर॑म्।
ये। ते॒। मदा॑:। आ॒ह॒नस॑:। विऽहा॑यसः। तेभि॑:। इन्द्र॑म्। चो॒द॒य॒। दात॑वे। म॒घम् ॥ ५ ॥

हे ᵛसोम ᵛस्वस्तये अविनाशाय ᵛपरि ᵛप्र ᵛधन्व पात्राणि परितः प्रगच्छ[2]। धविर्गत्यर्थः। किंच ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛपुनानः पूयमानस्त्वम् ᵛआशिरम् आश्रयणं क्षीरादिकम् ᵛअभि ᵛवासय आच्छादय। संयोजयेति यावत्। ᵛआहनसः। 'आहननवन्तो वचनवन्तः' (निरु. ४.१५) इति यास्कः। शत्रूणामाभिमुख्येन हन्तारोऽभिहन्यमाना अभिपूयमाणाः स्तुतिमन्तः शब्दवन्तो वा ᵛविहायसः। महन्नामैतत्। महान्तः ᵛते त्वदीयाः ᵛये ᵛमदाः मदहेतवो रसाः सन्ति ᵛतेभिः तैः सोमैरस्माभिर्दीयमानैः[3] ᵛमघं मंहनीयं धनमस्मभ्यं ᵛदातवे दातुम् ᵛइन्द्रं ᵛचोदय प्रेरय ॥ ॥ ३३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
सप्तमाष्टके द्वितीयोऽध्यायः संपूर्णः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
व्याख्याताव्याहतप्रज्ञः सप्तमस्य द्वितीयकम्।
अध्यायं सायणामात्यस्तृतीयं व्याकरोत्यथ ॥

तत्र 'धर्ता' इति पञ्चर्चं नवमं सूक्तं भार्गवस्य कवेरार्षं जागतं पवमानसोमदेवताकम्। 'धर्ता' इत्यनुक्रान्तम्। गतो विनियोगः ॥

ध॒र्ता दि॒वः प॑वते॒ कृत्व्यो॒ रसो॒ दक्षो॑ दे॒वाना॑मनु॒माद्यो॒ नृभि॑:।
हरि॑: सृजा॒नो अत्यो॒ न सत्व॑भि॒र्वृथा॒ पाजां॑सि कृणुते न॒दीष्वा ॥ १ ॥

ध॒र्ता। दि॒वः। प॒व॒ते॒। कृत्व्य॑:। रस॑:। दक्ष॑:। दे॒वाना॑म्। अ॒नु॒ऽमाद्य॑:। नृऽभि॑:।
हरि॑:। सृ॒जा॒नः। अत्य॑:। न। सत्व॑ऽभिः। वृथा॑। पाजां॑सि। कृ॒णु॒ते॒। न॒दीषु॑। आ ॥ १ ॥

---

१. त७—अव्या। २. भ१.७—आगच्छ। ३. त-भ२.६—सोमैररिमभिर्दीयमानैः।

ᵛधर्ता सर्वस्य धारकः सोमः ᵛदिवः अन्तरिक्षात् अन्तरिक्षस्थिताद्दशापवित्रात् ᵛपवते पूयते । कीदृशः सोमः । ᵛकृत्व्यः कर्तव्यः । शोध्य इत्यर्थः । ᵛरसः रसात्मको ᵛदेवानां ᵛदक्षः बलप्रदः । यद्वा । दक्षः प्रवर्धनीयो देवानामर्थाय । तथा ᵛनृभिः नेतृभिर्ऋत्विग्भिः ᵛअनुमाद्यः अनुमदनीयः स्तुत्यो वा ᵛहरिः हरितवर्णः ᵛसत्वभिः प्राणिभिः सादिभिः ᵛसृजानः सृज्यमानः ᵛअत्यो ᵛन अश्व इव स यथा शिक्षितो ᵛवृथा अनायासेन गच्छति तद्वत् वृथा अप्रयत्नेन ᵛपाजांसि बलानि स्वीयान् वेगान् ᵛकृणुते कुरुते । ᵛनदीषु वसतीवरीषु । ताभिरित्यर्थः । ᵛआ सिक्त इति शेषः । अयम् अभिषवसमयाभिप्रायः ॥

शूरो न धत्त आयुधा गभस्त्योः स्वः सिषासन्रथिरो गविष्टिषु ।
इन्द्रस्य शुष्ममीरयन्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः ॥ २ ॥

शूरः । न । धत्ते । आयुधा । गभस्त्योः । स्व१रिति स्वः । सिसासन् । रथिरः । गोऽइष्टिषु ।
इन्द्रस्य । शुष्मम् । ईरयन् । अपस्युऽभिः । इन्दुः । हिन्वानः । अज्यते । मनीषिऽभिः ॥२॥

अयं सोमः ᵛगभस्त्योः हस्तयोः ᵛआयुधा आयुधानि ᵛशूरो ᵛन शूर इव ᵛधत्ते धारयति । ᵛस्वः स्वर्गसुखसाधनं यज्ञं वा ᵛसिषासन् संभक्तुमिच्छन् ᵛरथिरः रथवान् । रथादिरच्प्रत्ययः । ᵛगविष्टिषु यजमानस्य गवामेषणेषु सत्सु । यजमानार्थं गोसंभजनाय रथवानित्यर्थः । ᵛइन्द्रस्य ᵛशुष्मं बलम् ᵛईरयन् प्रेरयन् ᵛइन्दुः सोमो देवः ᵛअपस्युभिः कर्मेच्छुभिः ᵛमनीषिभिः मेधाविभिर्ऋत्विग्भिः ᵛहिन्वानः प्रेर्यमाणः ᵛअज्यते गोभिः ॥

इन्द्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश ।
प्र णः पिन्व विद्युदभ्रेव रोदसी धिया न वाजाँ उप मासि शश्वतः ॥ ३ ॥

इन्द्रस्य । सोम । पवमानः । ऊर्मिणा । तविष्यमाणः । जठरेषु । आ । विश ।
प्र । नः । पिन्व । विऽद्युत् । अभ्राऽइव । रोदसी इति ।
धिया । न । वाजान् । उप । मासि । शश्वतः ॥ ३ ॥

हे ᵛसोम ᵛपवमानः पूयमानस्त्वं ᵛतविष्यमाणः वर्धयिष्यमाणः सन् ᵛइन्द्रस्य ᵛजठरेषु ᵛऊर्मिणा प्रभूतया धारया ᵛआ ᵛविश । जठरप्रदेशस्य बाहुल्याद्बहुवचनम् । ᵛनः अस्मदर्थं ᵛविद्युदभ्रेव अभ्राणीव सा यथा दोग्ध्यभ्राणि तद्वत् ᵛप्र ᵛपिन्व धुक्ष्व ᵛरोदसी द्यावापृथिव्यौ । किंच ᵛधिया कर्मणा ᵛन इदानीम् । नेति संप्रत्यर्थे । ᵛशश्वतः । बहुनामैतत् । बहून् ᵛवाजान् अन्नानि ᵛउप समीपे ᵛमासि निर्मासि[१] ॥

विश्वस्य राजा पवते स्वर्दृशं ऋतस्य धीतिमृषिषाळवीवशत् ।
यः सूर्यस्यासिरेण मृज्यते पिता मतीनामसमष्टकाव्यः ॥ ४ ॥

विश्वस्य । राजा । पवते । स्वःऽदृशः । ऋतस्य । धीतिम् । ऋषिषाट् । अवीवशत् ।
यः । सूर्यस्य । असिरेण । मृज्यते । पिता । मतीनाम् । असमष्टऽकाव्यः ॥ ४ ॥

---

१. ग–ददासि ।

$^{v}$विश्वस्य जगतः $^{v}$राजा स्वामी सोमः $^{v}$स्वर्दृशः स्वर्गद्रष्टुः सर्वद्रष्टुर्वा $^{v}$ऋतस्य सत्यभूतस्येन्द्रस्य। मनुष्यवाच्यनृतशब्दप्रतियोगिकस्य ऋतशब्दस्य[1] देवार्थः[1]। तत्रापि औचित्येनेन्द्रः परिगृह्यते[2]। तस्य $^{v}$धीतिं मतिं कर्म वा $^{v}$ऋषिषाट् ऋषीणामतीन्द्रियद्रष्टृणामभिभविता। महत्त्वेन स्वयमपि[3] ऋषिश्रेष्ठत्वादिति[3] भावः। तथा च मन्त्रान्तरं—'ब्रह्मा देवानां पदवीः कवीनामृषिः' (ऋ. सं.९.९६.६) इति। ईदृशः सोमः $^{v}$अवीवशत् अकामयत[4] इन्द्रस्य[4] कर्म। $^{v}$यः सोमः $^{v}$सूर्यस्य देवस्य $^{v}$असिरेण क्षेपकेण रश्मिना $^{v}$मृज्यते। $^{v}$असमष्टकाव्यः अन्यैः कविभिरव्याप्तकर्मा सोमः $^{v}$मतीनाम् अस्मदीयानां स्तुतीनां $^{v}$पिता पालकः स्वामी भवतीति शेषः। यद्वा। यो मतीनां पिता असमष्टकाव्यश्च सन् मृज्यते सः $^{v}$पवते इति संबन्धः॥

**वृषे॑व यू॒था परि॒ कोश॒मर्ष॒स्यपामु॒पस्थे॑ वृष॒भः कनि॑क्रदत्।**
**स इन्द्रा॑य पवसे मत्स॒रिन्त॑मो॒ यथा॒ जेषा॑म समि॒थे त्वोत॑यः॥ ५॥**

वृषा॑ऽइव। यू॒था। परि॑। कोश॑म्। अर्ष॑सि। अ॒पाम्। उ॒पऽस्थे॑। वृ॒ष॒भः। कनि॑क्रदत्।
सः। इन्द्रा॑य। प॒व॒से॒। म॒त्स॒रिन्ऽत॑मः। यथा॑। जेषा॑म। स॒म्ऽइ॒थे। त्वाऽऊ॑तयः॥ ५॥

हे सोम त्वं $^{v}$वृषेव $^{v}$यूथा[5] यूथानि वृषभ इव स यथा तानि प्रविशति तद्वत् $^{v}$कोशं कोशवत् रसधारकं[6] कलशं $^{v}$परि $^{v}$अर्षसि परिगच्छसि। कुत्रस्थः सन्। $^{v}$अपामुपस्थे अन्तरिक्षे। कीदृशः सन्। $^{v}$वृषभः वर्षिता $^{v}$कनिक्रदत् शब्दं कुर्वन्। $^{v}$सः त्वं हे सोम $^{v}$इन्द्राय इन्द्रार्थं $^{v}$पवसे पूयसे। $^{v}$मत्सरिन्तमः मादयितृतमस्त्वम्। $^{v}$यथा वयं $^{v}$जेषाम जयेम $^{v}$समिथे संग्रामे $^{v}$त्वोतयः त्वया रक्षिताः सन्तः॥ ॥ १ ॥

'एष प्र कोशे' इति पञ्चर्चं दशमं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'एषः' इत्यनुक्रान्तम्। गतो विनियोगः॥

**ए॒ष प्र कोशे॒ मधु॑माँ अचिक्रद॒दिन्द्र॑स्य॒ वज्रो॒ वपु॑षो॒ वपु॑ष्टरः।**
**अ॒भीमृ॒तस्य॑ सु॒दुघा॑ घृत॒श्चुतो॑ वा॒श्रा अ॑र्षन्ति॒ पय॑सेव धे॒नवः॑॥ १॥**

ए॒षः। प्र। कोशे॑। मधु॑ऽमान्। अ॒चि॒क्र॒द॒त्। इन्द्र॑स्य। वज्रः॑। वपु॑षः। वपुः॑ऽतरः।
अ॒भि। ई॒म्। ऋ॒तस्य॑। सु॒ऽदुघाः॑। घृ॒त॒ऽश्चुतः॑। वा॒श्राः। अ॒र्ष॒न्ति॒। पय॑साऽइव। धे॒नवः॑॥१॥

$^{v}$एषः अयं सोमः $^{v}$मधुमान् मधुररसः $^{v}$कोशे द्रोणकलशे $^{v}$प्र $^{v}$अचिक्रदत् प्रकर्षेण शब्दायते। कीदृश एषः। $^{v}$इन्द्रस्य $^{v}$वज्रः वज्रस्थानीयः। बलकरत्वेन वज्रवत् प्रहरणसाधनत्वात् वज्रत्वोपचारः। एष एव हि सोमो वज्रे इन्द्रस्य साधने। तथा $^{v}$वपुषः बीजानां वप्तुः अन्यस्मात् $^{v}$वपुष्टरः अतिशयेन वप्ता। बीजावापस्य सोमकर्तृकत्वात् 'सोमो वै रेतोधाः' (तै. सं. २. १. १. ६) इति श्रुतेः। $^{v}$ईम् अस्य $^{v}$ऋतस्य सत्यफलस्य सोमस्य। धारा इति शेषः। ताः $^{v}$अभि $^{v}$अर्षन्ति अभिगच्छन्ति। कीदृश्यस्ताः। $^{v}$सुदुघाः सुष्ठु दोग्ध्र्यः फलानां $^{v}$घृतश्चुतः उदकस्य रसस्य वा क्षारयित्र्यः $^{v}$वाश्राः शब्दयन्त्यः। किमिव। $^{v}$पयसा युक्ता वाश्राः $^{v}$धेनवः $^{v}$इव इति॥

---

१. त३.भ७–°शब्दस्य देवोर्थः; भ६–°शब्दस्यैवार्थः। २. त-मु–प्रतिगृह्यते। ३. ग–स्वयं ऋषिष्वपि श्रेष्ठत्वादिति। ४. ग–कामयते। ५. ग-त१.५.७-भ१.२.७–'यूथा' नास्ति। ६. ग–हविषः संधारकं; त-भ६–रसं धारकं; भ१.७–रवधारकं।

स पूर्व्यः पवते यं दिवस्परि श्येनो मथायदिषितस्तिरो रजः ।
स मध्व आ युवते वेविजान इत्कृशानोरस्तुर्मनसाह बिभ्युषा ॥ २ ॥

सः । पूर्व्यः । पवते । यम् । दिवः । परि । श्येनः । मथायत् । इषितः । तिरः । रजः ।
सः । मध्वः । आ । युवते । वेविजानः । इत् । कृशानोः । अस्तुः । मनसा । अह । बिभ्युषा ॥२॥

ᵛसः सोमः ᵛपूर्व्यः प्रत्नः ᵛपवते पूयते । अभिपूयत इत्यर्थः । ᵛयं सोमं ᵛदिवः द्युलोकात् ᵛश्येनः ᵛइषितः स्वमात्रा प्रेषितः[1] सन् ᵛपरि ᵛमथायत् पर्यमथ्नात् ᵛतिरः तीर्णं तिरस्कुर्वन् । किम् । ᵛरजः तृतीयं लोकम् । ᵛसः एव सोमः ᵛमध्वः मधुररसं सोमम् ᵛआ ᵛयुवते यौति पृथक्करोति द्युलोकात् । स्वयं ᵛवेविजान ᵛइत् चलन् अधो गच्छन् ᵛकृशानोः सोमपालस्य ᵛअस्तुः शरक्षेप्तुः सकाशात् ᵛबिभ्युषा भीतेन ᵛमनसाह[2] । मध्व आ युवत इति संबन्धः । कृशानोः सोमपालत्वं ब्राह्मणे स्पष्टमुक्तं–'कृशानुः सोमपालः सव्यस्य पदः' (ऐ. ब्रा. ३. २६) ॥

ते नः पूर्वास उपरास इन्दवो महे वाजाय धन्वन्तु गोमते ।
ईक्षेण्यासो अह्यो न चारवो ब्रह्मब्रह्म ये जुजुषुर्हविर्हविः ॥ ३ ॥

ते । नः । पूर्वासः । उपरासः । इन्दवः । महे । वाजाय । धन्वन्तु । गोऽमते ।
ईक्षेण्यासः । अह्यः । न । चारवः । ब्रह्मऽब्रह्म । ये । जुजुषुः । हविःऽहविः ॥ ३ ॥

ᵛते वक्ष्यमाणाः ᵛपूर्वासः पूर्वे ᵛउपरासः । उपरता अन्येद्युपराः । तादृशाः ᵛइन्दवः सोमाः ᵛमहे महते ᵛगोमते ᵛनः मह्यं ᵛवाजाय अन्नाय अन्नलाभार्थं ᵛधन्वन्तु गच्छन्तु प्राप्नुवन्तु । कीदृशा इन्दवः । ᵛईक्षेण्यासः ईक्षणीयाः[3] संदर्शनीयाः ᵛअह्यो ᵛन । अह्यः स्त्रिय आहननात् । ता इव सुवेषाः स्त्रिय इव ᵛचारवः रमणीयाः । त[4] इत्युक्तं क इत्याह । ᵛये इन्दवः ᵛब्रह्मब्रह्म सर्वमपि स्तावकमन्त्रजातं ᵛहविर्हविः सर्वमपि हविर्जातं च ᵛजुजुषुः सेवन्ते ॥

अयं नो विद्वान् वनवद्वनुष्यत इन्दुः सत्राचा मनसा पुरुष्टुतः ।
इनस्य यः सदने गर्भमादधे गवामुरुब्जमभ्यर्षति व्रजम् ॥ ४ ॥

अयम् । नः । विद्वान् । वनवत् । वनुष्यतः । इन्दुः । सत्राचा । मनसा । पुरुऽस्तुतः ।
इनस्य । यः । सदने । गर्भम् । आऽदधे । गवाम् । उरुब्जम् । अभि । अर्षति । व्रजम् ॥४॥

ᵛअयम् ᵛइन्दुः सोमः ᵛनः अस्मान् ᵛवनुष्यतः हन्तुमिच्छतः शत्रून् ᵛविद्वान् जानन् हन्तुं ᵛवनवत् हन्तु तान् । केन साधनेन । ᵛसत्राचा सहाञ्चता ᵛमनसा । कीदृशः । ᵛपुरुष्टुतः बहुभिः स्तुतः । ᵛयः सोमः ᵛइनस्य ईश्वरस्याग्नेः ᵛसदने स्थाने भूमौ वेद्यां वा वर्तमानः ᵛगर्भमादधे धारयत्योषधीषु । ᵛयश्च ᵛगवाम् अस्मदीयानां शत्रुभिरपहृतानाम् ᵛउरुब्जं प्रभूतानामपां पयसां जनकं ᵛव्रजम् ᵛअभ्यर्षति गच्छति । स वनवदिति ॥

चक्रिर्दिवः पवते कृत्व्यो रसो महाँ अदब्धो वरुणो हुरुग्यते ।
असावि मित्रो वृजनेषु यज्ञियोऽत्यो न यूथे वृषयुः कनिक्रदत् ॥ ५ ॥

---

१. ग-भ१.७–प्रेरितः । २. त–नभसा सह; त३-भ२.७–मनसा सह; भ६–नमसा सह; मु–मनसा अह सह । ३. ग-त१.३.४.७-भ१.४.७–'ईक्षणीयाः' नास्ति । ४. त१.२.४.५–यत ।

चक्रिः । दिवः । पवते । कृत्व्यः । रसः । महान् । अदब्धः । वरुणः । हुरुक् । यते ।
असावि । मित्रः । वृजनेषु । यज्ञियः । अत्यः । न । यूथे । वृषऽयुः । कनिक्रदत् ॥ ५ ॥

चक्रिः सर्वस्य कर्ता कृत्व्यः कर्मण्यः रसः रसात्मकः महान् गुणैरधिकः अदब्धः अहिंस्यः हुरुक् कुटिलं यते गच्छते । इतस्ततः परिचरन इत्यर्थः । तदर्थं दिवः सकाशात् पवते पूयते । अन्तरिक्षस्थाद्दशापवित्रादित्यर्थः । किंचासौ सोमः असावि सूयते । कदा । वृजनेषु अरिष्टेषु सत्सु तत्परिहारार्थम् । कीदृशः सः । मित्रः सर्वेषां मित्रभूतः यज्ञियः यष्टव्यः अत्यो न अश्व इव यूथे वडवायूथे स यथा वृषयुः सन् शब्दं करोति तद्वदसौ वृषभो रसस्य वर्षिता कनिक्रदत् शब्दं कुर्वन् असावीति ॥ ॥ २ ॥

'प्र राजा वाचम्' इति पञ्चर्चमेकादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'प्र राजा' इत्यनुक्रान्तम् । गतो विनियोगः ॥

प्र राजा वाचं जनयन्नसिष्यददपो वसानो अभि गा इयक्षति ।
गृभ्णाति रिप्रमविरस्य तान्वा शुद्धो देवानामुप याति निष्कृतम् ॥ १ ॥

प्र । राजा । वाचम् । जनयन् । असिस्यदत् । अपः । वसानः । अभि । गाः । इयक्षति ।
गृभ्णाति । रिप्रम् । अविः । अस्य । तान्वा । शुद्धः । देवानाम् । उप । याति । निःऽकृतम् ॥ १ ॥

राजा राजमानोऽयं सोमोऽभिपूयमाणः सन् वाचं शब्दं जनयन् उत्पादयन् असिष्यदत् प्रस्यन्दते । तथा अपः वसतीवरीः वसानः आच्छादयन् गाः स्तुतीः अभि इयक्षति अभिगच्छति । इयक्षतिर्गतिकर्मसु पठितः । अस्य सोमस्य रिप्रम्[1] अनुपादेयत्वेन पापरूपम् अभिषुतवल्लीशकलादिरूपम् अविः अविरोमनिर्मितं दशापवित्रं तान्वा स्वीयेन वस्त्रेण गृभ्णाति गृह्णाति शोधनसमये । पश्चात् शुद्धः देवानां निष्कृतं संस्कृतं स्थानम् उप याति उपगच्छति ॥

इन्द्राय सोम परि षिच्यसे नृभिर्नृचक्षा ऊर्मिः कविरज्यसे वने ।
पूर्वीर्हि ते स्रुतयः सन्ति यातवे सहस्रमश्वा हरयश्चमूषदः ॥ २ ॥

इन्द्राय । सोम । परि । सिच्यसे । नृऽभिः । नृऽचक्षाः । ऊर्मिः । कविः । अज्यसे । वने ।
पूर्वीः । हि । ते । स्रुतयः । सन्ति । यातवे । सहस्रम् । अश्वाः । हरयः । चमूऽसदः ॥ २ ॥

हे सोम त्वम् इन्द्राय इन्द्रार्थं नृभिः नेतृभिर्ऋत्विग्भिः परि षिच्यसे अभिपूयसे । तथा हे सोम नृचक्षाः नृणां यष्टॄणामनुग्रहेण द्रष्टा ऊर्मिः प्रेर्यमाणः प्रवृद्धो वा कविः मेधावी च त्वं वने उदके अज्यसे प्रेर्यसे । पूर्वीः बह्व्यः हि ते स्रुतयः मार्गाश्छिद्राणि सन्ति यातवे यातुम् । अल्पस्य सोमस्य अपरिमितस्रुतिगमनासंभवात्तस्य बाहुल्यमाह । चमूषदः अभिषवणफलकयोः सीदतः सहस्रम् अपरिमिताः अश्वाः व्याप्ताः हरयः हरितवर्णा अंशवः सन्ति । अथवा । इन्द्राय परिषिच्यस इत्युक्तत्वादिन्द्रप्राप्तौ मार्गसाधनयोः सद्भाव उत्तरार्धेन प्रतिपादितः । ते पुरातन्यः सरण्यः सन्तीन्द्रं प्रति यातुम् । तथा सहस्रसंख्याका हरितवर्णा अश्वाश्च[2] सन्ति[3] चमूषदस्तवेति ॥

१. त१.२.५–ऋत्वं; भ६–क्रतुं । २. त१.२.७–अंशवः; त५–अशवः । ३. त१.७–संति अथ चेंद्राय; त२.४.५–संति अथ च ।

समुद्रियां अप्सरसो मनीषिणमासीना अन्तरभि सोममक्षरन् ।
ता ईं हिन्वन्ति हर्म्यस्य सक्षणिं याचन्ते सुम्नं पवमानमक्षितम् ॥ ३ ॥

समुद्रियाः । अप्सरसः । मनीषिणम् । आसीनाः । अन्तः । अभि । सोमम् । अक्षरन् ।
ताः । ईम् । हिन्वन्ति । हर्म्यस्य । सक्षणिम् । याचन्ते । सुम्नम् । पवमानम् । अक्षितम् ॥३॥

ᵛसमुद्रियाः । समुद्रसाधनत्वात् समुद्रमन्तरिक्षम् । तत्संबन्धिन्यः ᵛअप्सरसः काश्चन ᵛअन्तः यज्ञमध्ये ᵛआसीनाः पात्रेषु वर्तमाना वसतीवर्यः ᵛमनीषिणं मेधाविनं ᵛसोमम् ᵛअभि ᵛअक्षरन् अभिपूयमाणं सोममभिक्षरन्ति । ᵛताः एता आपः ᵛईम् एनं ᵛहर्म्यस्य हर्म्यवत्सुखकरस्य यागगृहस्य ᵛसक्षणिं सेचनशीलं[1] ᵛहिन्वन्ति वर्धयन्ति पोषयन्ति । ता एव स्तोतारो वा ᵛपवमानं सोमम् ᵛअक्षितम् अक्षीणं ᵛसुम्नं सुखं ᵛयाचन्ते प्रार्थयन्ते । तत्रार्थं[2] भावः । काश्चनाप्सरसः सोमं राजानं मनीषिणं कामयमाना देवानपि परित्यज्य स्वर्गादागत्य राज्ञः समीपे स्थित्वा तस्य रसानाददते । स्वरसेन वर्धयन्ति तं सुखं च याचन्त इति ॥

गोजिन्नः सोमो रथजिद्धिरण्यजित्स्वर्जिदब्जित्पवते सहस्रजित् ।
यं देवासश्चक्रिरे पीतये मदं स्वादिष्ठं द्रप्समरुणं मयोभुवम् ॥ ४ ॥

गोऽजित् । नः । सोमः । रथऽजित् । हिरण्यऽजित् । स्वःऽजित् । अप्ऽजित् । पवते । सहस्रऽजित् ।
यम् । देवासः । चक्रिरे । पीतये । मदम् । स्वादिष्ठम् । द्रप्सम् । अरुणम् । मयःऽभुवम् ॥ ४ ॥

ᵛनः अस्माकं ᵛगोजित् गवां जेता तथा ᵛरथजित् रथस्य जेता ᵛहिरण्यजित् हिरण्यस्य जेता तथा ᵛस्वर्जित् स्वर्गस्य सुखस्य जेता ᵛअब्जित् अपां जेता ᵛसहस्रजित् सहस्रसंख्याकस्य धनस्य जेता ᵛसोमः ᵛपवते पूयते । ᵛयं ᵛदेवासः देवाः ᵛचक्रिरे कृतवन्तः । किमर्थम् । ᵛपीतये पानाय । कीदृशं सोमम् । ᵛमदं मदकरं ᵛस्वादिष्ठं स्वादुतमं ᵛद्रप्सं रसात्मकम् ᵛअरुणम् अरुणवर्णं ᵛमयोभुवं सुखस्य भावयितारम् ॥

एतानि सोम पवमानो अस्मयुः सत्यानि कृण्वन् द्रविणान्यर्षसि ।
जहि शत्रुमन्तिके दूरके च य उर्वीं गव्यूतिमभयं च नस्कृधि ॥ ५ ॥

एतानि । सोम । पवमानः । अस्मऽयुः । सत्यानि । कृण्वन् । द्रविणानि । अर्षसि ।
जहि । शत्रुम् । अन्तिके । दूरके । च । यः । उर्वीम् । गव्यूतिम् । अभयम् । च । नः । कृधि ॥५॥

हे ᵛसोम ᵛएतानि पूर्वमन्त्रोक्तानि गवादीनि ᵛद्रविणानि धनानि ᵛसत्यानि ᵛकृण्वन् कुर्वन् ᵛपवमानः पूयमानः ᵛअर्षसि पवसे । ᵛजहि च ᵛशत्रुं ᵛयः अस्मच्छत्रुः ᵛअन्तिके समीपे ᵛदूरके अत्यन्तं दूरे देशे ᵛच वर्तते तं जहि । तथा ᵛउर्वीं ᵛगव्यूतिं विस्तीर्णं मार्गम् ᵛअभयं ᵛच ᵛनः अस्माकं ᵛकृधि कुरु ॥ ॥ ३ ॥

'अचोदसः' इति पञ्चर्चं द्वादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'अचोदसः' इत्यनुक्रान्तम् । गतो विनियोगः ॥

---

१. ग–सेवनशीलं । २. ग-भ५–अत्रार्थं ।

अचोदसो नो धन्वन्त्विन्दवः प्र सुवानासो बृहद्दिवेषु हरयः ।
वि च नशन्न इषो अरातयोऽर्यो नशन्त सनिषन्त नो धियः ॥ १ ॥

अचोदसः । नः । धन्वन्तु । इन्दवः । प्र । सुवानासः । बृहत्ऽदिवेषु । हरयः ।
वि । च । नशन् । नः । इषः । अरातयः । अर्यः । नशन्त । सनिषन्त । नः । धियः ॥१॥

ᵛअचोदसः अचोदना अनन्यप्रेरिताः ᵛइन्दवः सोमाः ᵛनः अस्माकं ᵛप्र ᵛधन्वन्तु प्रगच्छन्तु । धन्वतिर्गतिकर्मा । कुत्र । ᵛबृहद्दिवेषु प्रभूतदीप्तिषु यागेषु निमित्तेषु । अथवा बृहद्दिवकुलजेषु मध्ये । न इति संबन्धः । कीदृशा इन्दवः । ᵛसुवानासः सूयमानाः ᵛहरयः हरितवर्णाः । किंच ᵛनः[१] अस्मभ्यं[१] ये च ᵛइषः अन्नस्य ᵛअरातयः अदातारः सन्ति ते ᵛच ᵛवि ᵛनशन् विनश्यन्तु । तथा ᵛअर्यः अरयोऽपि ᵛनशन्त[२] विनश्यन्तु[२] । ᵛसनिषन्त संभजन्तु च ᵛनो ᵛधियः अस्मदीयानि कर्माणि देवा अस्मत्प्रियभूता वा ॥

प्र णो धन्वन्त्विन्दवो मदच्युतो धना वा येभिरर्वतो जुनीमसि ।
तिरो मर्तस्य कस्य चित्परिह्वृतिं वयं धनानि विश्वधा भरेमहि ॥ २ ॥

प्र । नः । धन्वन्तु । इन्दवः । मदऽच्युतः । धना । वा । येभिः । अर्वतः । जुनीमसि ।
तिरः । मर्तस्य । कस्य । चित् । परिऽह्वृतिम् । वयम् । धनानि । विश्वधा । भरेमहि ॥२॥

ᵛप्र[३] ᵛधन्वन्तु प्रगच्छन्तु[३] ᵛनः अस्माकम् ᵛइन्दवः सोमाः ᵛमदच्युतः मदस्राविणः । ᵛवा अथवा[४] । किंचेत्यर्थः[५] । ᵛधना धनान्यपि प्र धन्वन्तु । ᵛयेभिः यैः सोमैः ᵛअर्वतः बलवतः शत्रोः समीपं ᵛजुनीमसि जुनीमः प्राप्नुमः । ᵛकस्य ᵛचित् कस्यापि ᵛमर्तस्य मनुष्यस्य प्रबलस्य ᵛपरिह्वृतिं परितो बाधां ᵛतिरः तिरस्कुर्वन्तो ᵛवयं ᵛधनानि गवादिरूपाणि ᵛविश्वधा सर्वदा ᵛभरेमहि बिभृयाम ॥

उत स्वस्या अरात्या अरिर्हि ष उतान्यस्या अरात्या वृको हि षः ।
धन्वन्न तृष्णा समरीत ताँ अभि सोम जहि पवमान दुराध्यः ॥ ३ ॥

उत । स्वस्याः । अरात्याः । अरिः । हि । सः । उत । अन्यस्याः । अरात्याः । वृकः । हि । सः ।
धन्वन् । न । तृष्णा । सम् । अरीत । तान् । अभि । सोम । जहि । पवमान । दुःऽआध्यः ॥३॥

ᵛउत अपि च ᵛसः सोमः ᵛस्वस्याः ᵛअरात्याः स्वीयस्य शत्रोः[६] ᵛअरिः अभिगन्ता हननाय । ᵛउत अपि च ᵛसः सोमः ᵛअन्यस्याः अस्मदीयायाः ᵛअरात्याः अस्मच्छत्रोः ᵛवृको ᵛहि हिंसकः खलु । अरातिशब्दः स्त्रीलिङ्गोऽप्यस्ति । अथ प्रत्यक्षकृतः । ᵛधन्वन्न ᵛतृष्णा । धन्व निरुदको देशः । तस्मिन् स्थितस्य तृष्णेव सा यथा तं ᵛसमरीत प्राप्नोति तद्वत् ᵛतान् उभयविधान्[७] शत्रून् ᵛजहि[७] ॥

---

१. त५–नोस्मात्यं; भ६–नोस्माकं । २. ग-त१.२.५.७-भ२.६–नश्यंतु; त३.४–नशंत नश्यंतु । ३. भ१.७–'प्र धन्वन्तु प्रगच्छन्तु' नास्ति । ४. ग-भ१(२)–'अथवा' नास्ति । ५. त-मु–किंचिदित्यर्थः । ६. त-भ६-मु–शत्रोः समीपं । ७. ग–तान् शत्रूनभि समरीत अज्ञानं प्राप्नोतु हे पवमान सोम दुर्बुद्धींस्तान् शत्रून् जहि ।

दिवि ते नाभा परमो य आददे पृथिव्यास्ते रुरुहुः सानवि क्षिपः ।
अद्रयस्त्वा बप्सति गोरधि त्वच्य१प्सु त्वा हस्तैर्दुदुहुर्मनीषिणः ॥ ४ ॥

दिवि । ते । नाभा । परमः । यः । आऽददे । पृथिव्याः । ते । रुरुहुः । सानवि । क्षिपः ।
अद्रयः । त्वा । बप्सति । गोः । अधि । त्वचि । अप्ऽसु । त्वा । हस्तैः । दुदुहुः । मनीषिणः ॥ ४ ॥

हे सोम ते तव सः परमः उत्तमोंऽशो दिवि दिवः नाभा नाभौ द्युलोकस्य नाभिस्थानीये देशे । अथवा नाभौ वृष्ट्यादेर्बन्धके दिवि द्युलोके । वर्तते य आददे आदत्ते हविर्देवतारूपः सन् । ते तव द्युलोकस्थांशस्यावयवाः पृथिव्याः सानवि समुच्छ्रिते देशे पर्वतादिप्रदेशे क्षिपः क्षिप्ताः सन्तः रुरुहुः रोहन्ति । त्वा त्वां द्युलोकस्थसोमांशभूतम् अद्रयः ग्रावाणः बप्सति भक्षयन्ति । बप्सतिरत्तिकर्मा । कुत्र । गोरधि त्वचि । अधीति सप्तम्यर्थानुवादी । आनडुहेऽधिषवणचर्मणीत्यर्थः । यद्यपि इदानींतनाः कृष्णाजिनेऽभिषुण्वन्ति न गोचर्मणि तथापि तस्मिन् सोमो मीयते क्रयार्थम् । तथा च सति यस्मिन् मिमीते तस्याधिषवणचर्म इति सूत्रात् मानसाधनस्यैव गोचर्मणः अधिषवण-चर्मत्वाभिधानादविरोधः । त्वा त्वां तथा अप्सु वसतीवरीषु दुदुहुः दुहन्ति । अद्भिराप्लाव्य दुहन्तीत्यर्थः । यद्वा । अप्सूदकेषु रसेषु निमित्तेषु दुदुहुः । कैः साधनैः । हस्तैः । 'हस्तो हन्तेः' ( निरु. १. ७ ) इति निरुक्तम् । के । मनीषिणः मेधाविनोऽध्वर्य्वादयः ॥

एवा त इन्दो सुभ्वं सुपेशसं रसं तुञ्जन्ति प्रथमा अभिश्रियः ।
निदंनिदं पवमान नि तारिष आविस्ते शुष्मो भवतु प्रियो मदः ॥ ५ ॥

एव । ते । इन्दो इति । सुऽभ्वम् । सुऽपेशसम् । रसम् । तुञ्जन्ति । प्रथमाः । अभिऽश्रियः ।
निदम्ऽनिदम् । पवमान । नि । तारिषः । आविः । ते । शुष्मः । भवतु । प्रियः । मदः ॥ ५ ॥

पूर्वत्र 'अद्रयस्त्वां बप्सति' इत्युक्तं तदेवोच्यते । हे इन्दो सोम एव एवमिदानीं-क्रियमाणप्रकारेण ते तव सुभ्वं शोभनभवनं सुपेशसम् । पेश इति रूपनाम । सुरूपं रसं प्रथमाः प्रथममेव । यद्वा । प्रथम इति मुख्यनाम । प्रथमाः मुख्याः । ग्रावाणोऽध्वर्यवो वा अभिश्रियः अभिश्रयन्तः सन्तः तुञ्जन्ति प्रेरयन्ति । हे पवमान निदंनिदम् अस्मन्निन्दकं सर्व-मपि शत्रुं नि तारिषः विनाशय । ते तव शुष्मः बलकरः प्रियः प्रियभूतः मदः मदकरो रसः आविः भवतु ॥ ॥ ४ ॥

'सोमस्य धारा' इति पञ्चर्चं त्रयोदशं सूक्तं भारद्वाजस्य वसुनाम्न आर्षं जागतं पवमानसोम-देवताकम् । तथा चानुक्रान्तं— 'सोमस्य वसुर्भारद्वाजः' इति । गतो विनियोगः ॥

सोमस्य धारा पवते नृचक्षस ऋतेन देवान् हवते दिवस्परि ।
बृहस्पते रवथेना वि दिद्युते समुद्रासो न सवनानि विव्यचुः ॥ १ ॥

सोमस्य । धारा । पवते । नृऽचक्षसः । ऋतेन । देवान् । हवते । दिवः । परि ।
बृहस्पतेः । रवथेन । वि । दिद्युते । समुद्रासः । न । सवनानि । विव्यचुः ॥ १ ॥

सोमस्य अभिषूयमाणस्य धारा पवते क्षोतते । कीदृशस्य सोमस्य । नृचक्षसः नृणां यजमानानां द्रष्टुः । स च ऋतेन यज्ञेन देवान् सोमभाज इन्द्रादीन् हवते । कुत्र । दिवस्परि

द्युलोकस्योपरि वर्तमानान्। बृहस्पतेः मन्त्रपालकस्य स्तोतुः रवथेन शब्देन स्तोत्रेण वि दिद्युते विद्योतते। समुद्रासो न समुद्रा इव पृथिवीं सवनानि यज्ञसंबन्धीनि विव्यचुः व्याप्नुवन्ति ॥

**यं त्वा वाजिन्नघ्न्या अभ्यनूषतायोहतं योनिमा रोहसि द्युमान्।**
**मघोनामायुः प्रतिरन् महि श्रव इन्द्राय सोम पवसे वृषा मदः ॥ २ ॥**

यम्। त्वा। वाजिन्। अघ्न्याः। अभि। अनूषत। अयःऽहतम्। योनिम्। आ। रोहसि। द्युऽमान्।
मघोनाम्। आयुः। प्रऽतिरन्। महि। श्रवः। इन्द्राय। सोम। पवसे। वृषा। मदः ॥ २ ॥

हे वाजिन् अन्नवन् सोम यं त्वा त्वाम् अघ्न्याः अहननीया गावः अभ्यनूषत अभिष्टुवन्ति। आशिरार्थं स्थिताः शब्दायन्त इत्यर्थः। स त्वम् अयोहतम्। अय इति हिरण्यनाम। तेन तद्वान् पाणिर्लक्ष्यते। हिरण्मयेन पाणिना हतं संस्कृतं योनिं स्थानम् आ रोहसि द्युमान् दीप्तः सन्। 'अभि योनिमयोहतम्' (ऋ. सं. ९. १. २) इति ह्युक्तम्। किंच हे सोम मघोनां हविष्मतां यजमानानाम् आयुः आयुष्यं महि महत् श्रवः अन्नं यशो वा प्रतिरन् वर्धयन् इन्द्राय इन्द्रार्थं पवसे पूयसे। वृषा वर्षको मदः मदकरश्च त्वम् ॥

**एन्द्रस्य कुक्षा पवते मदिन्तम ऊर्जं वसानः श्रवसे सुमङ्गलः।**
**प्रत्यङ् स विश्वा भुवनाभि पप्रथे क्रीळन् हरिरत्यः स्यन्दते वृषा ॥ ३ ॥**

आ। इन्द्रस्य। कुक्षा। पवते। मदिन्ऽतमः। ऊर्जम्। वसानः। श्रवसे। सुऽमङ्गलः।
प्रत्यङ्। सः। विश्वा। भुवना। अभि। पप्रथे। क्रीळन्। हरिः। अत्यः। स्यन्दते। वृषा ॥ ३ ॥

अयं सोमः इन्द्रस्य कुक्षा कुक्षौ आ पवते आसिच्यते। किमर्थम्। श्रवसे तस्याश्नाय यष्टुर्वा अन्नसिद्ध्यर्थम्। सोमो विशेष्यते। मदिन्तमः मादयितृतमः ऊर्जं वसानः बलकरं रसमाच्छादयन्। 'अपो वसानः' (ऋ. सं. ९. ७८. १) इति ह्युक्तम्। सुमङ्गलः शोभनमङ्गलप्रदः। सः सोमः प्रत्यङ् विश्वा भुवना सर्वाणि भूतजातानि अभि पप्रथे अभिप्रथयति। दिवि उदितः सन् क्रीळन् वेद्यां संक्रीडमानः हरिः हरितवर्णः अत्यः अतनकुशलः वृषा वर्षकः स्यन्दते रसरूपेण ॥

**तं त्वा देवेभ्यो मधुमत्तमं नरः सहस्रधारं दुहते दश क्षिपः।**
**नृभिः सोम प्रच्युतो ग्रावभिः सुतो विश्वान् देवाँ आ पवस्वा सहस्रजित् ॥ ४ ॥**

तम्। त्वा। देवेभ्यः। मधुमत्ऽतमम्। नरः। सहस्रऽधारम्। दुहते। दश। क्षिपः।
नृऽभिः। सोम। प्रऽच्युतः। ग्रावऽभिः। सुतः। विश्वान्। देवान्। आ। पवस्व। सहस्रऽजित् ॥ ४ ॥

हे सोम तं तादृशं त्वा त्वां देवेभ्यः इन्द्राद्यर्थं मधुमत्तमम् अतिशयेन मधुमन्तं सहस्रधारं बहुधारायुक्तं दुहते दुहन्ति। के। नरः नेतार ऋत्विजः दश क्षिपः तेषां दशसंख्याका अङ्गुलयश्च। हे सोम नृभिः मनुष्यैः प्रच्युतः ग्रावभिः सुतः अभिषुतस्त्वं सहस्रजित् सहस्रसंख्याकधनस्य जेता सन् विश्वान् देवान् आ पवस्व ॥

**तं त्वा हस्तिनो मधुमन्तमद्रिभिर्दुहन्त्यप्सु वृषभं दश क्षिपः।**
**इन्द्रं सोम मादयन् दैव्यं जनं सिन्धोरिवोर्मिः पवमानो अर्षसि ॥ ५ ॥**

तम् । त्वा । हस्तिनः । मधुऽमन्तम् । अद्रिऽभिः । दुहन्ति । अप्ऽसु । वृषभम् । दश । क्षिपः ।
इन्द्रम् । सोम । मादयन् । दैव्यम् । जनम् । सिन्धोःऽइव । ऊर्मिः । पवमानः । अर्षसि ॥५॥

ᵛतं तादृशं ᵛमधुमन्तं मधुररसं ᵛवृषभं कामानां वर्षकं ᵛत्वा त्वां ᵛहस्तिनः सुहस्तस्य ᵛदश ᵛक्षिपः अङ्गुलयः ᵛअद्रिभिः ग्रावभिः ᵛअप्सु ᵛदुहन्ति । तादृश हे ᵛसोम ᵛइन्द्रम् अन्यं ᵛदैव्यं ᵛजनं देवसंबन्धिनं संघं ᵛमादयन् ᵛसिन्धोरूर्मिरिव ᵛपवमानः पूयमानः सन् ᵛअर्षसि गच्छसि॥ ॥५॥

'प्र सोमस्य' इति पञ्चर्चं चतुर्दशं सूक्तम् । ऋषिदेवते पूर्ववत् । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । 'प्र सोमस्य' इत्यनुक्रान्तम् । गतो विनियोगः ॥

**प्र सोमस्य पवमानस्योर्मय इन्द्रस्य यन्ति जठरं सुपेशसः ।**
**दध्ना यदीमुन्नीता यशसा गवां दानाय शूरमुदमन्दिषुः सुताः ॥ १ ॥**

प्र । सोमस्य । पवमानस्य । ऊर्मयः । इन्द्रस्य । यन्ति । जठरम् । सुऽपेशसः ।
दध्ना । यत् । ईम् । उत्ऽनीताः । यशसा । गवाम् । दानाय । शूरम् । उत्ऽअमन्दिषुः । सुताः ॥ १ ॥

ᵛपवमानस्य पूयमानस्य ᵛऊर्मयः रसप्रवाहाः ᵛइन्द्रस्य ᵛजठरं ᵛप्र ᵛयन्ति प्रगच्छन्ति । ᵛसुपेशसः सुरूपा ऊर्मय इति संबन्धः । ᵛयत् यदा ᵛईम् एते ᵛसुताः अभिषुताः सोमाः ᵛगवां ᵛयशसा बलभूतेन[1] ᵛदध्ना सह ᵛउन्नीताः सन्तः ᵛदानाय यजमानविषयाभिमतदानाय ᵛशूरं विक्रान्तमिन्द्रम् ᵛउदमन्दिषुः उन्मादयन्ति तदा जठरं यन्ति ॥

**अच्छा हि सोमः कलशाँ असिष्यददत्यो न वोळ्हा रघुवर्तनिर्वृषा ।**
**अथा देवानामुभयस्य जन्मनो विद्वाँ अश्नोत्यमुत इतश्च यत् ॥ २ ॥**

अच्छ । हि । सोमः । कलशान् । असिस्यदत । अत्यः । न । वोळ्हा । रघुऽवर्तनिः । वृषा ।
अथ । देवानाम् । उभयस्य । जन्मनः । विद्वान् । अश्नोति । अमुतः । इतः । च । यत् ॥ २ ॥

असौ[2] ᵛसोमः ᵛकलशान् ᵛअच्छ अभिमुखम् ᵛअसिष्यदत् स्यन्दते । क इव । ᵛअत्यो ᵛन ᵛवोळ्हा रथस्य वाहकोऽश्व इव । स यथा स्वगन्तव्यमभिगच्छति तद्वत् । यद्वा । अयमुत्तरत्र दृष्टान्तः । ᵛवोळ्हा अश्व इव ᵛरघुवर्तनिः लघुगमनः ᵛवृषा वर्षकश्च । ᵛअथ अपि च ᵛदेवानां सोमसजुषाम् ᵛउभयस्य उभयविधं ᵛजन्मनः जातं ᵛविद्वान् जानन् असिष्यदत् कलशान् । किं तदुभयं जन्मेति उच्यते । यद्देवजातम् ᵛअमुतः द्युलोकात् ᵛइतश्च अस्माद्भूलोकाच्च ᵛअश्नोति व्याप्नोति यज्ञम् । तस्योभयस्य जातं विद्वानिति संबन्धः ॥

**आ नः सोम पवमानः किरा वस्विन्दो भव मघवा राधसो महः ।**
**शिक्षा वयोधो वसवे सु चेतुना मा नो गयमारे अस्मत्परा सिचः ॥ ३ ॥**

आ । नः । सोम । पवमानः । किर । वसु । इन्दो इति । भव । मघऽवा । राधसः । महः ।
शिक्ष । वयःऽधः । वसवे । सु । चेतुना । मा । नः । गयम् । आरे । अस्मत् । परा । सिचः ॥३॥

---

१. ग–बलकरेण । २. भ६–अयं ।

ᵛआ ᵛकिर सर्वतो ᵛविक्षिप ᵛनः अस्मभ्यं हे ᵛसोम ᵛपवमानः पूयमानस्त्वम्। किम्। ᵛवसु वासकं धनं गवादिरूपम्। किंच ᵛइन्दो दीप्त हे सोम ᵛमघवा धनवांस्त्वं ᵛमहः महतः ᵛराधसः धनस्य ᵛभव दातेति शेषः। तथा हे ᵛवयोधः अन्नस्य धातः सोम ᵛवसवे वासकाय परिचरते मह्यं ᵛचेतुना[1] प्रकृष्टेन प्रज्ञानेन ᵛसु सुखं कल्याणं ᵛशिक्ष देहि। ᵛनः अस्मभ्यं प्रदेयं ᵛगयं धनम् ᵛअस्मत् ᵛआरे अस्मत्तो दूरं ᵛमा ᵛपरा ᵛसिचः मा प्रेरय ॥

**आ नः पूषा पवमानः सुरातयो मित्रो गच्छन्तु वरुणः सजोषसः।**
**बृहस्पतिर्मरुतो वायुरश्विना त्वष्टा सविता सुयमा सरस्वती ॥ ४ ॥**

आ। नः। पूषा। पवमानः। सुऽरातयः। मित्रः। गच्छन्तु। वरुणः। सऽजोषसः।
बृहस्पतिः। मरुतः। वायुः। अश्विना। त्वष्टा। सविता। सुऽयमा। सरस्वती ॥ ४ ॥

ᵛसुरातयः सुदानाः ᵛसजोषसः संगताः पूषादयो देवाः ᵛआ ᵛगच्छन्तु ᵛनः अस्मान् अस्माकं यज्ञं वा। तथा ᵛसुयमा। यम्यते नियम्यत इति यमो विग्रहः। सुविग्रहा ᵛसरस्वती चागच्छतु ॥

**उभे द्यावापृथिवी विश्वमिन्वे अर्यमा देवो अदितिर्विधाता।**
**भगो नृशंस उर्व१न्तरिक्षं विश्वे देवाः पवमानं जुषन्त ॥ ५ ॥**

उभे इति। द्यावापृथिवी इति। विश्वमिन्वे इति विश्वम्ऽइन्वे। अर्यमा। देवः। अदितिः। विऽधाता।
भगः। नृऽशंसः। उरु। अन्तरिक्षम्। विश्वे। देवाः। पवमानम्। जुषन्त ॥ ५ ॥

ᵛविश्वमिन्वे। इन्वतिर्व्याप्तिकर्मा। सर्वव्यापिन्यौ ᵛउभे ᵛद्यावापृथिवी द्यावापृथिव्यौ अर्यमादयस्त्रयश्च भगश्च ᵛनृशंसः नृभिः शंसनीयः ᵛउर्वन्तरिक्षं च ᵛविश्वे ᵛदेवाः च ᵛपवमानं पूयमानं सोमं ᵛजुषन्त सेवन्ते ॥ ॥ ६ ॥

'असावि' इति पञ्चर्चं पञ्चदशं सूक्तम्। ऋष्याद्याः पूर्ववत्। अत्रानुक्रमणिका—'असावीति त्रिष्टुबन्ते' इति। अनेन द्विवचनेन प्रकृतयोः 'प्र सोमस्य' इत्यादिकयोर्द्वयोरपि त्रिष्टुबन्तता प्रतिपादिता। गतो विनियोगः ॥

**असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत्।**
**पुनानो वारं पर्येत्यव्ययं श्येनो न योनिं घृतवन्तमासदम् ॥ १ ॥**

असावि। सोमः। अरुषः। वृषा। हरिः। राजाऽइव। दस्मः। अभि। गाः। अचिक्रदत्।
पुनानः। वारम्। परि। एति। अव्ययम्। श्येनः। न। योनिम्। घृतऽवन्तम्। आऽसदम् ॥ १ ॥

ᵛसोमः ᵛअसावि अभिषुतोऽभूत्। कीदृशः सोमः। ᵛअरुषः आरोचमानः ᵛवृषा वर्षकः ᵛहरिः हरितवर्णः। स च ᵛराजेव ᵛदस्मः दर्शनीयः सन् ᵛगाः उदकानि अभिलक्ष्य ᵛअचिक्रदत् शब्दं करोति स्वरसनिर्मोकसमये। पश्चात् ᵛपुनानः पूयमानः ᵛअव्ययम् अविमयं ᵛवारं वालं दशापवित्रं ᵛपर्येति। ततः ᵛश्येनो ᵛन श्येन इव ᵛयोनिं स्वकीयं स्थानं ᵛघृतवन्तम् उदकवन्तम् ᵛआसदम् आसदनाय पवत इति शेषः ॥

---

१. ग-सुचेतुना।

**कविर्वेधस्या पर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि ।**
**अपसेधन्दुरिता सोम मृळय घृतं वसानः परि यासि निर्णिजम् ॥ २ ॥**

कविः । वेधस्या । परि । एषि । माहिनम् । अत्यः । न । मृष्टः । अभि । वाजम् । अर्षसि ।
अपऽसेधन् । दुःऽइता । सोम । मृळय । घृतम् । वसानः । परि । यासि । निःऽनिर्जम् ॥२॥

हे सोम ᵛकविः क्रान्तदर्शी सन् ᵛवेधस्या यागविधानेच्छया ᵛमाहिनं मंहनीयं पवित्रं ᵛपर्येषि परिगच्छसि । पश्चात् ᵛमृष्टः प्रक्षालितः ᵛअत्यो ᵛन अश्व इव ᵛवाजं संग्रामम् ᵛअभि ᵛअर्षसि । हे ᵛसोम ᵛदुरिता अस्माकं दुरितानि ᵛअपसेधन् परिहरन् ᵛमृळय सुखय । ᵛघृतम् उदकं ᵛवसानः आच्छादयन् ᵛपरि ᵛयासि अभिगच्छसि । किम् । ᵛनिर्णिजं निर्णेजकं पवित्रम् ॥

**पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या गिरिषु क्षयं दधे ।**
**स्वसार आपो अभि गा उतासरन्त्सं ग्रावभिर्नसते वीते अध्वरे ॥ ३ ॥**

पर्जन्यः । पिता । महिषस्य । पर्णिनः । नाभा । पृथिव्याः । गिरिषु । क्षयम् । दधे ।
स्वसारः । आपः । अभि । गाः । उत । असरन् । सम् । ग्रावऽभिः । नसते । वीते । अध्वरे ॥३॥

यस्य ᵛमहिषस्य महतः ᵛपर्णिनः पर्णवतः पतनवतो वा सोमस्य ᵛपर्जन्यः ᵛपिता जनकः स सोमः ᵛपृथिव्याः ᵛनाभा नाभौ नाभिस्थानीये हविर्धाने ᵛगिरिषु गिरिसंबन्धिग्रावसु[1] ᵛक्षयं निवासं ᵛदधे धारयत्यभिपवसमये । ᵛउत अपि च ᵛस्वसारः अङ्गुलयः ᵛआपः वसतीवर्यः ᵛगाः आशिरार्थाः स्तुतयो वा ᵛअभि[2] ᵛअसरन्[2] अभिसरन्ति । ᵛसं ᵛनसते संगच्छते च ᵛग्रावभिः साकम् । कुत्र । ᵛवीते कान्ते ᵛअध्वरे यज्ञे ॥

**जायेव पत्यावधि शेव मंहसे पज्राया गर्भ शृणुहि ब्रवीमि ते ।**
**अन्तर्वाणीषु प्र चरा सु जीवसेऽनिन्द्यो वृजने सोम जागृहि ॥ ४ ॥**

जायाऽइव । पत्यौ । अधि । शेव । मंहसे । पज्रायाः । गर्भ । शृणुहि । ब्रवीमि । ते ।
अन्तः । वाणीषु । प्र । चर । सु । जीवसे । अनिन्द्यः । वृजने । सोम । जागृहि ॥ ४ ॥

ᵛजायेव ᵛपत्यौ जाया यथा स्वभार्या भर्तरि सुखं प्रयच्छति तद्वत् ᵛशेव शेवम् । द्वितीयाया अम्भावाभावश्छान्दसः । सुखं ᵛमंहसे प्रयच्छसि यजमाने । हे ᵛपज्राया ᵛगर्भ सोम ᵛशृणुहि शृणु स्तुतीर्याः ᵛते तुभ्यं ᵛब्रवीमि । पजिर्गतिकर्मा । पज्रा पृथिवीत्याहुः । अपि वा माध्यमिका वाक् पज्रा । भूमावोषधिरूपेण जातत्वात्तद्गर्भत्वम् । माध्यमिकाया वाचोऽपि वृष्टिसाधनत्वात् तत्पुत्रत्वम् । स त्वं ᵛवाणीषु वाक्षु स्तुतिषु ᵛअन्तः मध्ये ᵛसु सुष्ठु ᵛप्र ᵛचर ᵛजीवसे अस्माकं जीवनाय । हे ᵛसोम ᵛअनिन्द्यः स्तुत्यस्त्वं ᵛवृजने अस्माकं शत्रुबले ᵛजागृहि प्रबुद्धो भव ॥

**यथा पूर्वेभ्यः शतसा अमृध्रः सहस्रसाः पर्यया वाजमिन्दो ।**
**एवा पवस्व सुविताय नव्यसे तव व्रतमन्वापः सचन्ते ॥ ५ ॥**

---

१. ग–गिरिसंबंधिप्रदेशेषु । २. त१.२.४.५-भ२–' अभ्यसरन् ' नास्ति ।

यथा । पूर्वेभ्यः । शतऽसाः । अमृध्रः । सहस्रऽसाः । परिऽअयाः । वाजम् । इन्दो इति ।
एव । पवस्व । सुविताय । नव्यसे । तव । व्रतम् । अनु । आपः । सचन्ते ॥ ५ ॥

हे इन्दो सोम त्वं यथा पूर्वेभ्यः महर्षिभ्यः स्तोतृभ्यः शतसाः शतसंख्याकस्य धनस्य दाता तथा सहस्रसाः च सन्[१] पर्ययाः परिगच्छेः एव[२] एवमिदानीमपि[२] नव्यसे नवतराय सुविताय अभ्युदयाय पवस्व क्षर । तव व्रतं कर्म अन्वापः वसतीवर्यः सचन्ते[३] । अतः पवस्व ॥ ॥ ७ ॥

'पवित्रं ते' इति पञ्चर्चं षोडशं सूक्तमाङ्गिरसस्य पवित्रस्यार्षं जागतं पवमानसोमदेवताकम् । तथा चानुक्रान्तं–'पवित्रं ते पवित्रः' इति । अभिप्लव आद्ये ऋचौ वक्तव्ये । सूत्रितं च—'पवित्रं ते विततं ब्रह्मणस्पत इति द्वे वि यत्पवित्रं धिषणा अतन्वत' (आश्व. श्रौ. ४. ६) इति ॥

**पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।**
**अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत ॥ १ ॥**

पवित्रम् । ते । विऽततम् । ब्रह्मणः । पते । प्रऽभुः । गात्राणि । परि । एषि । विश्वतः ।
अतप्तऽतनूः । न । तत् । आमः । अश्नुते । शृतासः । इत् । वहन्तः । तत् । सम् । आशत ॥ १ ॥

हे ब्रह्मणस्पते मन्त्रस्य स्वामिन् सोम ते[४] पवित्रं शोधकमङ्गं विततं सर्वत्र विस्तृतम् । स प्रभुः प्रभविता त्वं गात्राणि पातुरङ्गानि पर्येषि परिगच्छसि विश्वतः सर्वतः । तव तत् पवित्रम् अतप्ततनूः पयोव्रतादिना[५] असंतप्तगात्रः आमः अपरिपक्को न अश्नुते न व्याप्नोति । शृतास इत् शृता एव परिपक्का एव वहन्तः[६] यागं निर्वहन्तः तत् पवित्रं समाशत व्याप्नुवन्ति[७]॥

**तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् ।**
**अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसा ॥ २ ॥**

तपोः । पवित्रम् । विऽततम् । दिवः । पदे । शोचन्तः । अस्य । तन्तवः । वि । अस्थिरन् ।
अवन्ति । अस्य । पवितारम् । आशवः । दिवः । पृष्ठम् । अधि । तिष्ठन्ति । चेतसा ॥२॥

तपोः शत्रूणां तापकस्य[८] सोमस्य[९] पवित्रं शोधकमङ्गं तेजो वा दिवस्पदे द्युलोकस्य उच्छ्रिते स्थाने विततं विस्तृतम् । 'तृतीयस्यामितो दिवि सोम आसीत्' (तै. ब्रा. ३. २. १. १) इति ब्राह्मणम् । अस्य तन्तवः अंशवः शोचन्तः दीप्यमानाः व्यस्थिरन् विविधं तिष्ठन्ति । पृथिव्यां हविर्धाने वा । अस्य सोमस्य आशवः शीघ्रगामिनो रसाः अवन्ति रक्षन्ति । कम् । पवितारं पावयितारम् । यजमानमवन्ति रक्षन्ति होमद्वारा[१०] पश्चाद्धुताः[१०] दिवः द्युलोकस्य पृष्ठं पृष्ठभागमुन्नतदेशं चेतसा बुद्ध्या देवगमनेच्छावत्या अधि तिष्ठन्ति आश्रयन्ते ॥

अभिप्लवे 'अरूरुचत्' इत्येषावपनीया । सूत्रितं च—'ईळे द्यावापृथिवी इति प्रागुत्तमाया अरूरुचदुषसः पृश्निरग्रिय इत्यावपेत' (आश्व. श्रौ. ४. ६) इति ॥

१. ग–यथा अमृध्रः वाजं संग्रामं । २. ग–एवा एवमि°; घ-त-भ–एवमेवमि° । ३. ग-त३.४–सचंते सेवंते । ४. भ६–ते तव । ५. भ६–पयोऽग्न्यादिना । ६. ग१-त३-भ१.२.७–'वहंतः' नास्ति । ७. भ६–व्याप्नुवंति यः श्रृतः स रौद्रः यः शृतः स स देवः यो विदग्धः स नैर्ऋतः इति श्रुतेः । ८. त–व्यापकस्य । ९. ग–शोषकस्य । १०. ग–सोमधाराश्वामौ हुताः; भ६–होमद्वारेण पश्चाद्धुताः ।

**अरूरुचदुषसः पृश्निरग्रिय उक्षा बिभर्ति भुवनानि वाजयुः ।**
**मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः ॥ ३ ॥**

अरूरुचत् । उषसः । पृश्निः । अग्रियः । उक्षा । बिभर्ति । भुवनानि । वाजऽयुः ।
मायाऽविनः । ममिरे । अस्य । मायया । नृऽचक्षसः । पितरः । गर्भम् । आ । दधुः ॥ ३ ॥

ᵛउषसः संबन्धी ᵛपृश्निः आदित्यः । 'पृश्निरादित्यो भवति प्राश्नुत एनं वर्णः' ( निरु. २.१४ ) इति निरुक्तम् । ᵛअग्रियः मुख्यः सोऽयं सोमः ᵛअरूरुचत् रोचयति । सः ᵛउक्षा जलस्य सेक्ता ᵛबिभर्ति पुष्णात्युदकेन ᵛभुवनानि भूतजातानि ᵛवाजयुः तेषामन्नमिच्छन् । ᵛमायाविनः । माया प्रज्ञा । प्रज्ञावन्तो देवाः ᵛअस्य सोमस्य ᵛमायया प्रज्ञया ᵛममिरे निर्मान्ति । सोमस्यैकैकांशपानेन जातबला अग्न्यादयः स्वस्वव्यापारेण जगत्सृजन्तीत्यर्थः । तथास्य मायया ᵛनृचक्षसः नृणां द्रष्टारः ᵛपितरः पालका देवा अङ्गिरसः पितरो वा ᵛगर्भमा ᵛदधुः धारयन्ति । ओषधीषु वात्र सूर्यात्मा सोमः स्तूयते सूर्यरश्म्यनुगमाधीनवर्धनाच्चन्द्रस्य । अथमुषसः पृश्निः सवितारूरुचत् रोचयति सर्वं रोचते वा । शिष्टं समानम् । तत्संबन्धिनो नृचक्षसो नृणां द्रष्टारः पितरो जगद्रक्षका रश्मयो गर्भमा दधुर्वृष्ट्यर्थम् ॥

अभिष्टवे खरमवेक्षमाणः ' गन्धर्व इत्था ' इत्येतां पठेत् । सूत्रितं च—' गन्धर्व इत्था पदमस्य रक्षतीति खरमवेक्ष्य ' ( आश्व. श्रौ. ४. ७ ) इति ॥

**गन्धर्व इत्था पदमस्य रक्षति पाति देवानां जनिमान्यद्भुतः ।**
**गृभ्णाति रिपुं निधया निधापतिः सुकृत्तमा मधुनो भक्षमाशत ॥ ४ ॥**

गन्धर्वः । इत्था । पदम् । अस्य । रक्षति । पाति । देवानाम् । जनिमानि । अद्भुतः ।
गृभ्णाति । रिपुम् । निऽधया । निधाऽपतिः । सुकृत्ऽतमाः । मधुनः । भक्षम् । आशत ॥ ४ ॥

ᵛगन्धर्वः उदकानां स्तुतीनां वा धारक आदित्यः ᵛअस्य सोमस्य ᵛपदं स्थानं द्युसंबन्धि[1] ᵛइत्था सत्यं ᵛरक्षति । सोऽयं सोमः ᵛदेवानां ᵛजनिमानि जन्मानि । देवानित्यर्थः । ᵛपाति रक्षति ᵛअद्भुतः महान् । किंचायं ᵛरिपुम् अस्मद्वैरिणं ᵛनिधया । निधा पाश्या । पाशसमूहेन ᵛगृभ्णाति गृह्णाति । ᵛनिधापतिः पाशसमूहस्वामी । तस्यास्य ᵛमधुनः मधुररसस्य ᵛभक्षं ᵛसुकृत्तमाः अतिशयेन सुकृतकर्तार एव, ᵛआशत प्राप्नुवन्ति ॥

अन्तिमे प्रवर्ग्ये परिधानीयायाः पूर्वं ' हविर्हविष्मः ' इत्येषावपनीया । सूत्रितं च—' उत्तमे प्रागुत्तमाया हविर्हविष्मो महि सद्म दैव्यमित्यावपेत ' ( आश्व. श्रौ. ४. ७ ) इति ॥

**हविर्हविष्मो महि सद्म दैव्यं नभो वसानः परि यास्यध्वरम् ।**
**राजा पवित्ररथो वाजमारुहः सहस्रभृष्टिर्जयसि श्रवो बृहत् ॥ ५ ॥**

हविः । हविष्मः । महि । सद्म । दैव्यम् । नभः । वसानः । परि । यासि । अध्वरम् ।
राजा । पवित्रऽरथः । वाजम् । आ । अरुहः । सहस्रऽभृष्टिः । जयसि । श्रवः । बृहत् ॥५॥

---

१. त१.३.७-भ२.६–द्युसंबंधिनः ।

हे ^v^हविष्मः। हविरित्युदकनाम। उदकवन् सोम हविर्भूतं ^v^नभः। उदकनामैतत्। उदकरसमित्यर्थः। ^v^वसानः आच्छादयन् ^v^महि महत् ^v^दैव्यं ^v^सद्म यागगृहं ^v^परि ^v^यासि परिगच्छसि ^v^अध्वरं निर्वोढुम्। किंच हे सोम ^v^राजा ^v^पवित्ररथः च ^v^वाजं संग्रामम् ^v^आरुहः आरोहसि। यद्वा। तत्र तत्र संग्रामवाचकेन शब्देन यज्ञव्यवहारदर्शनादत्र वाजो यज्ञाख्यसंग्रामः। तमारुहः। यथा कश्चिद्राजा रथमारुह्य स्वस्थानं प्रविशति तद्वदिति भावः। किंच ^v^सहस्रभृष्टिः बहुभ्रंशः। अपरिमितगमन इत्यर्थः। अथवा भृष्टिरायुधम्। असंख्यातायुधः सन्। ^v^बृहत् ^v^श्रवः महदन्नं ^v^जयसि अस्माकम्॥ ॥ ८॥

'पवस्व देवमादनः' इति पञ्चर्चं सप्तदशं सूक्तं वाचः पुत्रस्य प्रजापतेरार्षं जागतं पवमानसोमदेवताकम्। तथा चानुक्रान्तं—'पवस्व वाच्यः प्रजापतिः' इति। गतो विनियोगः॥

पवस्व देवमादनो विचर्षणिरप्सा इन्द्राय वरुणाय वायवे।
कृधी नो अद्य वरिवः स्वस्तिमदुरुक्षितौ गृणीहि दैव्यं जनम्॥ १॥

पवस्व। देवऽमादनः। विऽचर्षणिः। अप्साः। इन्द्राय। वरुणाय। वायवे।
कृधि। नः। अद्य। वरिवः। स्वस्तिऽमत्। उरुऽक्षितौ। गृणीहि। दैव्यम्। जनम्॥१॥

हे सोम ^v^देवमादनः देवानां मादयिता ^v^विचर्षणिः विद्रष्टा ^v^अप्साः अपां दाता[1] त्वं ^v^पवस्व क्षर। कस्मै। ^v^इन्द्राय ^v^वरुणाय ^v^वायवे च। ^v^नः अस्माकं ^v^वरिवः धनं ^v^स्वस्तिमत्। स्वस्तीत्यविनाशनाम। तद्वद्धनं ^v^कृधि कुरु। ^v^उरुक्षितौ विस्तीर्णायां भूमौ यज्ञसंबन्धिन्यां ^v^दैव्यं ^v^जनं देवसंबन्धिनं संघम्। जनशब्दः संघवाची। तं ^v^गृणीहि। गृणातिः शब्दकर्मा। शब्दय। यथा त्वदीयाभिषवशब्दं श्रुत्वा देवा आगच्छन्ति तथा गृणीहीत्यर्थः। अथवा दैव्यं जनमित्यृषिः स्वात्मानमाह। देवसंबन्धिनं जनं मां गृणीहि साधुसंभक्ता इति शब्दय॥

आ यस्तस्थौ भुवनान्यमर्त्यो विश्वानि सोमः परि तान्यर्षति।
कृण्वन्त्संचृतं विचृतमभिष्टय इन्दुः सिषक्त्युषसं न सूर्यः॥ २॥

आ। यः। तस्थौ। भुवनानि। अमर्त्यः। विश्वानि। सोमः। परि। तानि। अर्षति।
कृण्वन्। सम्ऽचृतम्। विऽचृतम्। अभिष्टये। इन्दुः। सिसक्ति। उषसम्। न। सूर्यः॥२॥

^v^यः ^v^अमर्त्यः देवः ^v^सोमः ^v^भुवनानि लोकान् ^v^आ ^v^तस्थौ आस्थितवान् ^v^तानि ^v^विश्वानि सर्वाणि भुवनानि ^v^परि ^v^अर्षति परितो गच्छति। परितो रक्षतीत्यर्थः। सोऽयम् ^v^इन्दुः यज्ञं यजमानं वा ^v^संचृतं देवैः फलैर्वा[2] संबद्धं ^v^कृण्वन् कुर्वन् ^v^विचृतम् असुरादिभिर्दुःखैर्वा विमुक्तं[3] ^v^कृण्वन् अभितो यागाय ^v^सिषक्ति सेवते यज्ञम्। ^v^उषसं ^v^न ^v^सूर्यः। सूर्य उषसमिव यथा ^v^अभिष्टये अभितो गमनाय प्राणिनां संचृतं प्रकाशैः संयुक्तं विचृतं तमोभिर्विमुक्तं च लोकं कुर्वन्नुषसं सेवते तद्वत्॥

आ यो गोभिः सृज्यत ओषधीष्वा देवानां सुम्न इषयन्नुपावसुः।
आ विद्युता पवते धारया सुत इन्द्रं सोमो मादयन्दैव्यं जनम्॥ ३॥

---

१. ग–साता। २. ग–सुखैर्वा। ३. ग–वियुक्तं।

आ । यः । गोभिः । सृज्यते । ओषधीषु । आ । देवानाम् । सुम्ने । इषयन् । उपऽवसुः ।
आ । विऽद्युता । पवते । धारया । सुतः । इन्द्रम् । सोमः । मादयन् । दैव्यम् । जनम् ॥३॥

यः सोमः गोभिः रश्मिभिः आ सृज्यते ओषधीषु। यं सोमं स्थापयन्तीत्यर्थः। किमर्थम्। देवानां सुम्ने सुखे निमित्ते सति। कीदृशोऽयम्। इषयन् देवान् प्राप्तुमिच्छन्। 'इष गतौ'। धनमिच्छन् वा। तथा उपावसुः शत्रुभ्यः सकाशात् प्राप्तधनः। सः सोमः विद्युता विद्योतमानया धारया आ पवते सुतः सन्। किं कुर्वन्। दैव्यं[1] देवस्वामिनम् इन्द्रं मादयन् ॥

एष स्य सोमः पवते सहस्रजिद्धिन्वानो वाचमिषिरामुषर्बुधम् ।
इन्दुः समुद्रमुदियर्ति वायुभिरेन्द्रस्य हार्दि कलशेषु सीदति ॥ ४ ॥

एषः । स्यः । सोमः । पवते । सहस्रऽजित् । हिन्वानः । वाचम् । इषिराम् । उषःऽबुधम् ।
इन्दुः । समुद्रम् । उत् । इयर्ति । वायुऽभिः । आ । इन्द्रस्य । हार्दि । कलशेषु । सीदति ॥४॥

एष स्यः सः सोमः पवते पूयते। कीदृश एषः। सहस्रजित् सहस्रस्य जेता। किं कुर्वन्। वाचम् ऋत्विजां स्तुतिरूपां वाचं हिन्वानः प्रेरयन्। कीदृशीं वाचम्। इषिरां गमनशीलां स्तुत्यं प्रति गन्त्रीम् उषर्बुधम् उषसि प्रबुद्धाम्। सोऽयम् इन्दुः सोमः समुद्रं समुद्रियं रसम् उदियर्ति उद्गमयति वायुभिः गन्तृभिरध्वर्य्वादिभिः वायुभिरेव वा प्रेर्यमाणः सन्। तथा इन्द्रस्य हार्दि। हार्दं प्रियम्। तद्धार्दि इन्द्रस्य प्रियवद्यथा भवति तथा कलशेषु द्रोणकलशप्रभृतिषु आ सीदति ॥

अभि त्यं गावः पयसा पयोवृधं सोमं श्रीणन्ति मतिभिः स्वर्विदम् ।
धनंजयः पवते कृत्व्यो रसो विप्रः कविः काव्येना स्वर्चनाः ॥ ५ ॥

अभि । त्यम् । गावः । पयसा । पयःऽवृधम् । सोमम् । श्रीणन्ति । मतिऽभिः । स्वःऽविदम् ।
धनम्ऽजयः । पवते । कृत्व्यः । रसः । विप्रः । कविः । काव्येन । स्वःऽचनाः ॥ ५ ॥

त्यं[2] तं पयोवृधं पयसो वर्धकं सोमं गावः पयसा स्वकीयेन क्षीरेण श्रीणन्ति श्रयणं कुर्वन्ति। यः मतिभिः स्तुतिभिः सर्वं प्रयच्छति तं स्वर्विदं सोमं श्रीणन्ति। सः धनंजयः शत्रुधनानां जेता सोमः काव्येन कर्मणा पवते पूयते। कीदृशः सः। कृत्व्यः कर्मण्यः रसः रसरूपः विप्रः मेधावी कविः क्रान्तप्रज्ञः स्वचनाः सर्वान्नः। चन इत्यन्ननाम[2] ॥ ॥ ९ ॥

'इन्द्राय' इति द्वादशर्चमष्टादशं सूक्तं भृगुगोत्रस्य वेनस्यार्षं पवमानसोमदेवताकम्। एकादशीद्वादश्यौ त्रिष्टुभौ शिष्टा जगत्यः। तथा चानुक्रान्तम्—'इन्द्राय द्वादश वेनो भार्गवो द्वित्रिष्टुबन्तम्' इति। गतो विनियोगः ॥

इन्द्राय सोम सुषुतः परि स्रवापामीवा भवतु रक्षसा सह ।
मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह सन्त्विन्दवः ॥ १ ॥

१. भर२–दैव्यं जनं। २. ग–त्यं तं सोमं गावः पयसा अभिश्रीणंति। कीदृशं। पयोवृधं पयोवर्धकं मतिभिः स्तुतिभिः स्वर्विदं सर्वस्य लंभयितारं। धनानां जेता कृत्व्यः कर्मण्यः रसरूपः विप्रः मेधावी कविः काव्येन कविकर्मणा स्वर्चनाः सर्वान्नः। य एवंभूतस्तं सोममभिश्रीणंतीत्यन्वयः।

इन्द्राय । सोम । सुऽसुतः । परि । स्रव । अप । अमीवा । भवतु । रक्षसा । सह ।
मा । ते । रसस्य । मत्सत । द्वयाविनः । द्रविणस्वन्तः । इह । सन्तु । इन्दवः ॥ १ ॥

हे सोम त्वं सुषुतः सुष्ठु अभिषुतः सन् इन्द्रार्थं परि स्रव परितः स्रव । गच्छ । रसं मुञ्च । अमीवा रोगः रक्षसा सह अप भवतु अपगतो वियुक्तो भवतु । ते तव रसस्य स्वांशं रसं पीत्वा मा मत्सत मा माद्यन्तु । के । द्वयाविनः । द्वयं सत्यानृतम् । तेन युक्ताः । पापिन इत्यर्थः । किंच इन्दवः ते रसाः इह अस्मिन् यज्ञे द्रविणस्वन्तः धनवन्तः सन्तु भवन्तु ॥

**अस्मान्त्समर्ये पवमान चोदय दक्षो देवानामसि हि प्रियो मदः ।**
**जहि शत्रूँरभ्या भन्दनायतः पिबेन्द्र सोममव नो मृधो जहि ॥ २ ॥**

अस्मान् । सऽमर्ये । पवमान । चोदय । दक्षः । देवानाम् । असि । हि । प्रियः । मदः ।
जहि । शत्रून् । अभि । आ । भन्दनाऽयतः । पिब । इन्द्र । सोमम् । अव । नः । मृधः । जहि ॥२॥

हे पवमान सोम अस्मान् समर्ये संग्रामे चोदय प्रेरय । दक्षः हि असि समर्थः खलु भवसि देवानां मध्ये । यद्वा । देवानां प्रीणनाय दक्षोऽसि । यद्वा । दक्षस्त्वं देवानां प्रियः प्रियकरो मदः मादयितासि हि । जहि च शत्रून् अस्माकम् । अभ्या गच्छ चास्मान् प्रति भन्दनायतः । भन्दनाः स्तुतयः । भन्दतेः स्तुतिकर्मणः । ता इच्छतः । पिब च इन्द्र सोमम् अव जहि च नः अस्माकं मृधः संग्रामात् ॥

**अदब्ध इन्दो पवसे मदिन्तम आत्मेन्द्रस्य भवसि धासिरुत्तमः ।**
**अभि स्वरन्ति बहवो मनीषिणो राजानमस्य भुवनस्य निंसते ॥ ३ ॥**

अदब्धः । इन्दो इति । पवसे । मदिन्ऽतमः । आत्मा । इन्द्रस्य । भवसि । धासिः । उत्ऽतमः ।
अभि । स्वरन्ति । बहवः । मनीषिणः । राजानम् । अस्य । भुवनस्य । निंसते ॥ ३ ॥

हे इन्दो क्रियमान सोम अदब्धः अहिंसितः मदिन्तमः मादयितृतमस्त्वं पवसे पूयसे । आत्मा स्वयमेव उत्तमः त्वम् इन्द्रस्य धासिः अन्नं भवसि । अस्य भुवनस्य राजानं सोमं बहवो मनीषिणः स्तोतारः अभि स्वरन्ति अभिष्टुवन्ति । निंसते गच्छन्ति[1] च[1] ॥

**सहस्रणीथः शतधारो अद्भुत इन्द्रायेन्दुः पवते काम्यं मधु ।**
**जयन्क्षेत्रमभ्यर्षा जयन्नप उरुं नो गातुं कृणु सोम मीढ्वः ॥ ४ ॥**

सहस्रऽनीथः । शतऽधारः । अद्भुतः । इन्द्राय । इन्दुः । पवते । काम्यम् । मधु ।
जयन् । क्षेत्रम् । अभि । अर्ष । जयन् । अपः । उरुम् । नः । गातुम् । कृणु । सोम । मीढ्वः ॥४॥

सहस्रनीथः बहुप्रकारनयनः शतधारः अपरिमितधारोपेतः अद्भुतः आश्चर्यकरो महान् इन्दुः इन्द्राय काम्यं मधु पवते । किंच क्षेत्रम् अस्मभ्यम् अपः च जयन् अभ्यर्ष अभिगच्छ पवित्रम् । हे सोम मीढ्वः सेक्तः गातुं मार्गं नः अस्माकम् उरुं विस्तीर्णं कृणु कुरु ॥

१. ग-भ५-संगच्छंते च; त१.२.४.५.६-मु-गच्छंति वा; त३-संगच्छते च; भ१.७-गच्छंते च ।

कनिक्रदत्कलशे गोभिरज्यसे व्य१व्ययं समया वारमर्षसि ।
मर्मृज्यमानो अत्यो न सानसिरिन्द्रस्य सोम जठरे समक्षरः ॥ ५ ॥

कनिक्रदत् । कलशे । गोभिः । अज्यसे । वि । अव्ययम् । समया । वारम् । अर्षसि ।
मर्मृज्यमानः । अत्यः । न । सानसिः । इन्द्रस्य । सोम । जठरे । सम् । अक्षरः ॥ ५ ॥

हे सोम ᵛकनिक्रदत् शब्दं कुर्वन् ᵛकलशे वर्तमानः ᵛगोभिः पयोभिः ᵛअज्यसे सिक्तो भवसि । ᵛअव्ययम् अविमयं ᵛवारं वालं दशापवित्रं ᵛसमया तत्समीपे ᵛवि ᵛअर्षसि विविधं गच्छसि । ᵛमर्मृज्यमानः शोध्यमानः ᵛअत्यो ᵛन अश्व इव ᵛसानसिः संभजनशीलस्त्वं हे ᵛसोम ᵛइन्द्रस्य ᵛजठरे ᵛसमक्षरः सम्यक् क्षरसि ॥

स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्ने ।
स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः ॥ ६ ॥

स्वादुः । पवस्व । दिव्याय । जन्मने । स्वादुः । इन्द्राय । सुहवीतुऽनाम्ने ।
स्वादुः । मित्राय । वरुणाय । वायवे । बृहस्पतये । मधुऽमान् । अदाभ्यः ॥ ६ ॥

हे सोम ᵛस्वादुः त्वं ᵛदिव्याय ᵛजन्मने[1] देवगणाय ᵛपवस्व । तथा ᵛसुहवीतुनाम्ने शोभनाह्वाननामधेयाय ᵛइन्द्राय ᵛस्वादुः त्वं पवस्व । ᵛमित्राय ᵛवरुणाय ᵛवायवे ᵛबृहस्पतये च पवस्व ᵛमधुमान् मधुररसः ᵛअदाभ्यः अन्यैरहिंस्यस्त्वम् ॥ ॥ १० ॥

अत्यं मृजन्ति कलशे दश क्षिपः प्र विप्राणां मतयो वाच ईरते ।
पवमाना अभ्यर्षन्ति सुष्टुतिमेन्द्रं विशन्ति मदिरास इन्दवः ॥ ७ ॥

अत्यम् । मृजन्ति । कलशे । दश । क्षिपः । प्र । विप्राणाम् । मतयः । वाचः । ईरते ।
पवमानाः । अभि । अर्षन्ति । सुऽस्तुतिम् । आ । इन्द्रम् । विशन्ति । मदिरासः । इन्दवः ॥७॥

ᵛअत्यम् अतनवन्तमश्वस्थानीयं वा सोमं ᵛकलशे ᵛदश ᵛक्षिपः दशाङ्गुलयोऽध्वर्युसंबन्धिन्यः ᵛमृजन्ति शोधयन्ति । तथा ᵛविप्राणां मध्ये ᵛमतयः स्तोतारः ᵛवाचः स्तुतीः ᵛईरते प्रेरयन्ति । ᵛपवमानाः सोमाः ᵛअभ्यर्षन्ति अभिगच्छन्ति ᵛसुष्टुतिं शोभनस्तुतिम् । ᵛइन्द्रं ᵛमदिरासः मदकराः ᵛइन्दवः सोमाः ᵛआ ᵛविशन्ति प्रविशन्ति ॥

पवमानो अभ्यर्षा सुवीर्यमुर्वीं गव्यूतिं महि शर्म सप्रथः ।
माकिर्नो अस्य परिषूतिरीशतेन्दो जयेम त्वया धनंधनम् ॥ ८ ॥

पवमानः । अभि । अर्ष । सुऽवीर्यम् । उर्वीम् । गव्यूतिम् । महि । शर्म । सऽप्रथः ।
माकिः । नः । अस्य । परिऽसूतिः । ईशत । इन्दो इति । जयेम । त्वया । धनम्ऽधनम् ॥८॥

हे सोम ᵛपवमानः पूयमानस्त्वं ᵛसुवीर्यमुर्वीं महतीं ᵛगव्यूतिं गोमार्गं च ᵛमहि महत् ᵛसप्रथः सर्वतः पृथु ᵛशर्म गृहं सुखं वा ᵛअभ्यर्ष अभिगमय । ᵛनः अस्माकम् ᵛअस्य कर्मणः

१. ग–जन्मने जन्मवते; त–जन्मने जन्मदेवते; त३-भ४.६–जन्मने जन्मदेवते; भ१–जन्मने जन्म; भ५–जन्मने जन्मदेवतो ।

ᵛपरिपूतिः हिंसायाः परिप्रेरको द्वेषी ᵛमाकिः ᵛईशत मेश्वरो भवतु । हे ᵛइन्दो सोम ᵛत्वया साधनेन ᵛधनंधनं सर्वमपि धनं ᵛजयेम ॥

अधि द्यामस्थाद्वृषभो विचक्षणोऽरूरुचद्वि दिवो रोचना कविः ।
राजा पवित्रमत्येति रोरुवद्दिवः पीयूषं दुहते नृचक्षसः ॥ ९ ॥

अधि । द्याम् । अस्थात् । वृषभः । विऽचक्षणः । अरूरुचत् । वि । दिवः । रोचना । कविः ।
राजा । पवित्रम् । अति । एति । रोरुवत् । दिवः । पीयूषम् । दुहते । नृऽचक्षसः ॥ ९ ॥

ᵛअधि ᵛअस्थात् ᵛद्यां द्युलोकं ᵛवृषभः वर्षिता ᵛविचक्षणः विद्रष्टा अयं सोमः । तथा कृत्वा ᵛदिवः द्युलोकसंबन्धीनि ᵛरोचना रोचमानानि नक्षत्रादीनि ᵛवि ᵛअरूरुचत् विविधं रोचयति । ᵛकविः क्रान्तप्रज्ञः सन् ᵛराजा सोमः ᵛपवित्रं दशापवित्रम् ᵛअत्येति अतिक्रम्य गच्छति । ᵛरोरुवत् शब्दं कुर्वन् । ᵛदिवः द्युलोकस्य ᵛपीयूषं सारं रसं ᵛनृचक्षसः नृणां द्रष्टारः सोमाः ᵛदुहते स्रवन्ति । स्वकीयं रसमान्तरिक्ष्यमुदकं वा दुहन्तीत्यर्थः ॥

दिवो नाके मधुजिह्वा असश्चतो वेना दुहन्त्युक्षणं गिरिष्ठाम् ।
अप्सु द्रप्सं वावृधानं समुद्र आ सिन्धोरूर्मा मधुमन्तं पवित्र आ ॥ १० ॥

दिवः । नाके । मधुऽजिह्वाः । असश्चतः । वेनाः । दुहन्ति । उक्षणम् । गिरिऽस्थाम् ।
अप्ऽसु । द्रप्सम् । ववृधानम् । समुद्रे । आ । सिन्धोः । ऊर्मा । मधुऽमन्तम् । पवित्रे । आ ॥ १० ॥

ᵛदिवः द्योतमानस्य यज्ञस्य संबन्धिनि ᵛनाके दुःखरहिते हविर्धानाख्ये स्थाने ᵛमधुजिह्वाः मधुरवाचः ᵛअसश्चतः असंसक्ताः । पृथक्पृथगित्यर्थः । यद्वा चिरमकृत्वा[1] शीघ्रमभिषुण्वन्तः ᵛवेनाः एतन्नामका महर्षयः ᵛदुहन्ति अभिषुण्वन्ति । यद्वा द्युलोक एव वेनाः कान्ता देवा दुहन्ति । तं सोमम् ᵛउक्षणं सेक्तारं ᵛगिरिष्ठां गिरावुन्नते देशे वर्तमानम् ᵛअप्सु उदकेषु वसतीवरीष्वन्तः[2] ᵛववृधानं[2] वर्धमानं ᵛद्रप्सं रसरूपं ᵛसमुद्रे समुद्रवत् प्रवृद्धे द्रोणकलशे ᵛसिन्धोः उदकस्य ᵛऊर्मा ऊर्मौ पूरे ᵛआ सिञ्चन्तीति शेषः । तदर्थं ᵛमधुमन्तं माधुर्योपेतं रसं ᵛपवित्रे दशापवित्रे ᵛआ सिञ्चन्तीति शेषः ॥

नाके सुपर्णमुपपप्तिवांसं गिरो वेनानामकृपन्त पूर्वीः ।
शिशुं रिहन्ति मतयः पनिप्नतं हिरण्ययं शकुनं क्षामणि स्थाम् ॥ ११ ॥

नाके । सुऽपर्णम् । उपपप्तिऽवांसम् । गिरः । वेनानाम् । अकृपन्त । पूर्वीः ।
शिशुम् । रिहन्ति । मतयः । पनिप्नतम् । हिरण्ययम् । शकुनम् । क्षामणि । स्थाम् ॥ ११ ॥

ᵛनाके द्युलोके वर्तमानं पश्चादुत्पतन्तं सोमं ᵛवेनानाम् अस्माकं संबन्धिन्यः ᵛपूर्वीः बह्व्यः ᵛगिरः स्तुतयः ᵛउप ᵛअकृपन्त उपकल्पन्ते । अभिष्टुवन्तीत्यर्थः । तं ᵛशिशुं शिशुवत् संस्कर्तव्यं सोमं ᵛमतयः स्तुतयः ᵛरिहन्ति[3] लिहन्ति संस्पृशन्ति । प्राप्नुवन्तीत्यर्थः । कीदृशं शिशुम् । ᵛपनिप्नतं शब्दायन्तम् । पनतेर्यङ्लुगन्तात् शतरि अभ्यासस्य निगागम उपधालोपश्च । ᵛहिरण्ययं हिरण्मयं ᵛशकुनं पक्षिणं ᵛक्षामणि क्षमायां ᵛस्थां हविर्धाने स्थां वर्तमानम् ॥

---

१. ग—चिरप्रवृत्ताः; त-भ१.२.६—चिरमभृत्वा; भ४—चिरसभृत्वा । २. ग—वसतीवरीषु वव्र°; त१.२.४.५-भ७—वसतीवरीषु तैर्वव्र°; त३-भ१.२.४—वसतीवरीषु तैर्ववृ°; त७-भ६—वसतीवरीषु ते वावृ° । ३. त—परिहंति ।

**ऊर्ध्वो गन्धर्वो अधि नाके अस्थाद्विश्वा रूपा प्रतिचक्षाणो अस्य ।**
**भानुः शुक्रेण शोचिषा व्यद्यौत्प्रारूरुचद्रोदसी मातरा शुचिः ॥ १२ ॥**

ऊर्ध्वः । गन्धर्वः । अधि । नाके । अस्थात् । विश्वा । रूपा । प्रतिऽचक्षाणः । अस्य ।
भानुः । शुक्रेण । शोचिषा । वि । अद्यौत् । प्र । अरूरुचत् । रोदसी इति । मातरा । शुचिः ॥ १२ ॥

ᵛऊर्ध्वः उन्नतः ᵛगन्धर्वः रश्मीनां धारकः सोमः ᵛनाके आदित्ये ᵛअधि ᵛअस्थात् अधितिष्ठति । किं कुर्वन् । ᵛअस्य आदित्यस्य ᵛविश्वा विश्वानि रूपाणि ᵛप्रतिचक्षाणः प्रतिपश्यन् । ᵛभानुः आदित्यः सोमाधिष्ठितः सन् ᵛशुक्रेण दीप्तेन ᵛशोचिषा तेजसा ᵛव्यद्यौत् विद्योतते । न केवलं स्वयमेव अपि तु ᵛमातरा निर्मात्र्यौ ᵛरोदसी द्यावापृथिव्यौ ᵛप्रारूरुचत् प्ररोचयति[1] । ᵛशुचिः दीप्तः सूर्यः ॥ ११ ॥ ॥ ४ ॥

अथ पञ्चमेऽनुवाक एकादश सूक्तानि । तत्र 'प्र ते' इत्यष्टाचत्वारिंशदृचं प्रथमं सूक्तम् । प्रथमदशर्चस्य आकृष्टा[2] इति माषा इति च द्विनामान ऋषिगणा[2] द्रष्टारः । द्वितीयस्य दशर्चस्य सिकता इति नीवावरी इति द्विनामान ऋषिगणाः । तृतीयस्य दशर्चस्य पृश्नय इत्यजा इति च नामद्वयोपेता ऋषिगणाः । अदृष्टार्थमेषां द्विनामत्वमवगन्तव्यम् । चतुर्थस्य दशर्चस्य आकृष्टा माषा इत्यादिद्विनामानस्त्रयो गणा द्रष्टारः । एवं चत्वारिंशदृतः । अथ पञ्चानां भौमोऽत्रिर्ऋषिः । ततस्तिसृणां गृत्समदः । जगती छन्दः । पवमानः सोमो देवता । तथा चानुक्रान्तं—'प्र तेऽष्टाचत्वारिंशदृषिगणा दशर्चा आकृष्टा माषाः प्रथमे सिकता निवावरी द्वितीये पृश्नयोऽजास्तृतीये त्रयश्चतुर्थेऽत्रिः पञ्चान्त्यास्तिस्रो गृत्समदः' इति । गतो विनियोगः ॥

**प्र त आशवः पवमान धीजवो मदा अर्षन्ति रघुजाइव त्मना ।**
**दिव्याः सुपर्णा मधुमन्त इन्दवो मदिन्तमासः परि कोशमासते ॥ १ ॥**

प्र । ते । आशवः । पवमान । धीऽजवः । मदाः । अर्षन्ति । रघुजाःऽइव । त्मना ।
दिव्याः । सुऽपर्णाः । मधुऽमन्तः । इन्दवः । मदिनऽतमासः । परि । कोशम् । आसते ॥ १ ॥

हे ᵛपवमान पूयमान सोम ᵛते तव ᵛआशवः व्याप्ताः ᵛधीजवः मनोवेगाः ᵛमदाः मदकरा रसाः ᵛअर्षन्ति गच्छन्ति । ᵛत्मना आत्मनैव । अनायासेनेत्यर्थः । क 'इव । ᵛरघुजाइव । रघुः[3] शीघ्रगा वडवा[3] । तत्र जाता रघुजाः । तं इव निर्गतास्ते ᵛदिव्याः दिवि भवाः । अन्तरिक्षे दशापवित्रे धार्यमाणा इत्यर्थः । ᵛसुपर्णाः सुपतनाः ᵛमधुमन्तः माधुर्योपेताः ᵛमदिन्तमासः अतिशयेन मादयितृतमाः ᵛइन्दवः दीप्ता रसाः ᵛकोशं द्रोणकलशं ᵛपरि ᵛआसते पर्युपविशन्ति ॥

**प्र ते मदासो मदिरास आशवोऽसृक्षत रथ्यासो यथा पृथक् ।**
**धेनुर्न वत्सं पयसाभि वज्रिणमिन्द्रमिन्दवो मधुमन्त ऊर्मयः ॥ २ ॥**

प्र । ते । मदासः । मदिरासः । आशवः । असृक्षत । रथ्यासः । यथा । पृथक् ।
धेनुः । न । वत्सम् । पयसा । अभि । वज्रिणम् । इन्द्रम् । इन्दवः । मधुऽमन्तः । ऊर्मयः ॥ २ ॥

1. ग-प्रादीपयद्धि । 2. ग-भ५.६-पृश्नय इति याजा ( भ६-यजा ) इति च नामगणाः ।
3. ग-रघवः शीघ्रवेगा अश्वाः; त६-रघुः शीघ्रवाडवा ।

vप्र vअसृक्षत प्रसृज्यन्ते vते तव vमदिरासः मदकराः vआशवः व्याप्ताः vमदासः मदा रसाः। क इव। vरथ्यासः रथ्या अश्वाः ते vयथा तथा vपृथक् प्रसृज्यन्ते। ते vमधुमन्तः माधुर्योपेताः vऊर्मयः प्रवृद्धरसाः vइन्दवः सोमाः vधेनुः vपयसा vवत्सम् इव स्वरसेन vवज्रिणमिन्द्रम् vअभि गच्छन्ति॥

**अत्यो न हियानो अभि वाजमर्ष स्वर्वित्कोशं दिवो अद्रिमातरम्।**
**वृषा पवित्रे अधि सानो अव्यये सोमः पुनान इन्द्रियाय धायसे॥ ३॥**

अत्यः। न। हियानः। अभि। वाजम्। अर्ष। स्वःऽवित्। कोशम्। दिवः। अद्रिऽमातरम्।
वृषा। पवित्रे। अधि। सानौ। अव्यये। सोमः। पुनानः। इन्द्रियाय। धायसे॥ ३॥

vअत्यो vन अश्व इव vहियानः प्रेर्यमाणः vवाजं संग्रामम् vअभि vअर्ष अभिगच्छ। तथा vस्वर्वित् सर्ववित् vकोशं द्रोणकलशं vदिवः द्युलोकात् vअद्रिमातरम्। अद्रिर्मेघः। तेन तज्जन्यमुदकं लक्ष्यते। तस्य निर्मातारमभ्यर्ष। अथ प्रत्यक्षकृतः। vवृषा वर्षकः vसोमः vअव्यये अविमये vअधि[1] vसानौ[1]। अधीति सप्तम्यर्थानुवादी। समुच्छ्रिते तस्मिन् vपुनानः पूयमानो भवति। किमर्थम्। vधायसे धारकाय vइन्द्रियाय तदर्थम्॥

**प्र त आश्विनीः पवमान धीजुवो दिव्या असृग्रन् पयसा धरीमणि।**
**प्रान्तर्ऋषयः स्थाविरीरसृक्षत ये त्वा मृजन्त्यृषिषाण वेधसः॥ ४॥**

प्र। ते। आश्विनीः। पवमान। धीऽजुवः। दिव्याः। असृग्रन्। पयसा। धरीमणि।
प्र। अन्तः। ऋषयः। स्थाविरीः। असृक्षत। ये। त्वा। मृजन्ति। ऋषिऽसान। वेधसः॥४॥

हे vपवमान सोम vते तव vआश्विनीः व्याप्ताः॥ 'अशू व्याप्तौ' इत्यस्मादौणादिको विनिः। ततोऽण्। व्यत्ययेनाद्युदात्तः॥ vधीजुवः मनोवेगाः vदिव्याः दिवि भवा दिवः[2] पतन्त्यो धाराः vपयसा युक्ताः vधरीमणि धारके द्रोणकलशे vप्र vअसृग्रन् गच्छन्ति। vये vवेधसः विधातारः vऋषयः हे सोम vऋषिषाण ऋषिभिः संभक्त vत्वा त्वां vमृजन्ति अभिषुण्वन्ति ते ऋषयः vस्थाविरीः स्थविरा धाराः vअन्तः मध्ये पात्रस्यान्तः vप्र vअसृक्षत प्रसृजन्ति॥

**विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोस्ते सतः परि यन्ति केतवः।**
**व्यानशिः पवसे सोम धर्मभिः पतिर्विश्वस्य भुवनस्य राजसि॥ ५॥**

विश्वा। धामानि। विश्वऽचक्षः। ऋभ्वसः। प्रऽभोः। ते। सतः। परि। यन्ति। केतवः।
विऽआनशिः। पवसे। सोम। धर्मऽभिः। पतिः। विश्वस्य। भुवनस्य। राजसि॥ ५॥

हे vविश्वचक्षः सर्वस्य द्रष्टः सोम vप्रभोः परिवृढस्य vसतः vते तव vऋभ्वसः। ऋभ्वा इति महन्नाम। महान्तः vकेतवः रश्मयः vविश्वा सर्वाणि vधामानि तेजःस्थानानि देवशरीराणि vपरि vयन्ति परिगच्छन्ति। प्रकाशयन्तीत्यर्थः। हे vसोम vव्यानशिः व्यापनशीलश्च त्वं vधर्मभिः धारकैः रसनिस्यन्दैः vपवसे पूयसे। vविश्वस्य vभुवनस्य च vपतिः स्वामी त्वं vराजसि ईश्वरो भवसि॥ ॥१२॥

**उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परि यन्ति केतवः।**
**यदी पवित्रे अधि मृज्यते हरिः सत्ता नि योना कलशेषु सीदति॥ ६॥**

१. ग–पवित्रे सानौ; त१.७–पवित्रे पृशापवित्रे। २. त१.२.४.७-भर२–'दिवः' नास्ति।

उभयतः । पर्वमानस्य । रश्मयः । ध्रुवस्य । सतः । परि । यन्ति । केतवः ।
यदि । पवित्रे । अधि । मृज्यते । हरिः । सत्ता । नि । योना । कलशेषु । सीदति ॥६॥

vपवमानस्य पूयमानस्य vध्रुवस्य स्वयमविचलितस्य vसतः विद्यमानस्य सोमस्य vकेतवः प्रज्ञापकाः vरश्मयः vउभयतः इतश्चामुतश्च vपरि vयन्ति परिगच्छन्ति । अभिषवसमय एवं भवति । vयदि यदा vपवित्रे दशापवित्रे vहरिः हरितवर्णोऽयम् vअधि vमृज्यते तदानीं vसत्ता सदनशीलोऽयं योनौ स्वीये स्थाने vकलशेषु द्रोणकलशादिषु vनि vषीदति ॥

**यज्ञस्य केतुः पवते स्वध्वरः सोमो देवानामुप याति निष्कृतम् ।**
**सहस्रधारः परि कोशमर्षति वृषा पवित्रमत्येति रोरुवत् ॥ ७ ॥**

यज्ञस्य । केतुः । पवते । सुऽअध्वरः । सोमः । देवानाम् । उप । याति । निःऽकृतम् ।
सहस्रऽधारः । परि । कोशम् । अर्षति । वृषा । पवित्रम् । अति । एति । रोरुवत् ॥ ७ ॥

vयज्ञस्य vकेतुः प्रज्ञापकः vस्वध्वरः शोभनयागः vसोमः vपवते पूयते अभिपूयते । तादृशः सोमः vदेवानां vनिष्कृतं[1] संस्कृतं स्थानम् vउप vयाति उपगच्छति । तदर्थं vसहस्रधारः vकोशं द्रोणकलशं vपरि vअर्षति । ततस्तदर्थं vवृषा सेक्तायं vरोरुवत् शब्दयन् vपवित्रम् अतिक्रम्य[2] गच्छत्यधोदेशम् ॥

**राजा समुद्रं नद्यो३ वि गाहतेऽपामूर्मिं सचते सिन्धुषु श्रितः ।**
**अध्यस्थात्सानु पवमानो अव्ययं नाभा पृथिव्या धरुणो महो दिवः ॥ ८ ॥**

राजा । समुद्रम् । नद्यः । वि । गाहते । अपाम् । ऊर्मिम् । सचते । सिन्धुषु । श्रितः ।
अधि । अस्थात् । सानु । पवमानः । अव्ययम् । नाभा । पृथिव्याः । धरुणः । महः । दिवः ॥८॥

अयं सोमः vराजा vसमुद्रम् अन्तरिक्षं vनद्यः तत्रत्या अपश्च vवि vगाहते । विगाह्य च vअपामूर्मिं vसचते उदकपूरं स्रवति । vसिन्धुषु उदकेषु ग्रहेषु वा vश्रितः सन् । हूयमानः सन् रश्मिद्वारा सूर्यं प्राप्य अन्तरिक्षे मेघेषु वर्तत इत्यर्थः । अस्यैव[3] वृष्टिसाधनत्वात् । यद्वा । लुप्तोपममेतत् । समुद्रं नद्य इव सिन्धुषु वसतीवरीषु श्रित आश्रितः सन् समुद्रम् अभिषुतसोमरसाधारपात्रं वि गाहते अभिषवात्पूर्वम् । पश्चात् vपवमानः पूयमानः vअव्ययं vसानु समुच्छ्रितं दशापवित्रम् vअध्यस्थात् अधितिष्ठति । कुत्र देशे । vनाभा vपृथिव्याः नाभिस्थानीये यज्ञे । तत्संबन्धिनि हविर्धाने इत्यर्थः । ' यज्ञमाहुर्भुवनस्य नाभिम् ' ( तै. सं. ७.४,१८.२ ) इति श्रुतेः । कीदृशः । vमहो vदिवः द्युलोकस्य vधरुणः धर्ता ॥

**दिवो न सानु स्तनयन्नचिक्रदद् द्यौश्च यस्य पृथिवी च धर्मभिः ।**
**इन्द्रस्य सख्यं पवते विवेविदत्सोमः पुनानः कलशेषु सीदति ॥ ९ ॥**

दिवः । न । सानु । स्तनयन् । अचिक्रदत् । द्यौः । च । यस्य । पृथिवी । च । धर्मऽभिः ।
इन्द्रस्य । सख्यम् । पवते । विऽवेविदत् । सोमः । पुनानः । कलशेषु । सीदति ॥ ९ ॥

१. ग-त-भ-' निष्कृतं ' नास्ति । २. भ१(२)-अतिक्रम्य एति । ३. ग-तस्यैव ।

दिवो न सानु स्तनयन् द्युलोकस्य समुच्छ्रितं स्थानं शब्दयन्निव अचिक्रदत् क्रन्दते। यस्य सोमस्य धर्मभिः[1] धारणैः द्यौश्च पृथिवी च धृते स्याताम्। वृष्टिप्रदानद्वारौषध्याद्युत्पादनेन देवानां हविर्भावेन[2] चोभयधारकत्वं प्रसिद्धम्। तादृशः सोमः महानुभावः सोमः पुनानः पूयमानः इन्द्रस्य सख्यं विवेविदत्[3] पवते पूयते पवित्रे। सः पुनानः सोमः[4] कलशेषु सीदति निवसति॥

**ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः।**
**दधाति रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः॥ १०॥**

ज्योतिः। यज्ञस्य। पवते। मधु। प्रियम्। पिता। देवानाम्। जनिता। विभुऽवसुः।
दधाति। रत्नम्। स्वधयोः। अपीच्यम्। मदिन्ऽतमः। मत्सरः। इन्द्रियः। रसः॥ १०॥

यज्ञस्य ज्योतिः प्रकाशकः सोमः प्रियं देवानां मधु मधुरं रसं पवते क्षरति। यद्वा। ज्योतिर्यज्ञस्येत्येतदपि मधुविशेषणम्। तथा सति उक्तलक्षणं मधु पवते पूयत इत्यर्थः। सोमरसो विशेष्यते। पिता रक्षिता देवानां जनिता उत्पादयिता सर्वस्य विभूवसुः प्रभूतधनः। ईदृशः सः स्वधयोः द्यावापृथिव्योः। 'स्वधे पुरंधी' इति द्यावापृथिवीनामसु पठितः। तयोः अपीच्यम् अन्तर्हितं रत्नं रमणीयं धनं दधाति स्थापयति स्तोतृषु। पुनः स एव विशेष्यते। मदिन्तमः मादयितृतमः मत्सरः सोमः इन्द्रियः इन्द्रेण जुष्ट इन्द्रस्य वर्धको वा रसः रसरूपः॥ ॥ १३॥

**अभिक्रन्दन् कलशं वाज्यर्षति पतिर्दिवः शतधारो विचक्षणः।**
**हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिः सिन्धुभिर्वृषा॥ ११॥**

अभिऽक्रन्दन्। कलशम्। वाजी। अर्षति। पतिः। दिवः। शतऽधारः। विऽचक्षणः।
हरिः। मित्रस्य। सदनेषु। सीदति। मर्मृजानः। अविऽभिः। सिन्धुऽभिः। वृषा॥ ११॥

वाजी वेजनवान् गमनवान् अश्वसदृशो वा सोमः अभिक्रन्दन् शब्दं कुर्वन् कलशम् अभि अर्षति गच्छति। कीदृशो वाजी। दिवः पतिः द्युलोकस्य स्वामी शतधारः शतसंख्याकधारः विचक्षणः विद्रष्टा। हरिः हरितवर्णो रसात्मकः सोमः मित्रस्य देवानां मित्रभूतस्य यज्ञस्य वा सदनेषु स्थानेषु सीदति पात्रेषु धृतः सन्। कीदृशो हरिः। सिन्धुभिः स्यन्दनसाधनैः अविभिः दशापवित्रच्छिद्रैः मर्मृजानः शोध्यमानः वृषा वर्षकः॥

**अग्रे सिन्धूनां पवमानो अर्षत्यग्रे वाचो अग्रियो गोषु गच्छति।**
**अग्रे वाजस्य भजते महाधनं स्वायुधः सोतृभिः पूयते वृषा॥ १२॥**

अग्रे। सिन्धूनाम्। पवमानः। अर्षति। अग्रे। वाचः। अग्रियः। गोषु। गच्छति।
अग्रे। वाजस्य। भजते। महाऽधनम्। सुऽआयुधः। सोतृऽभिः। पूयते। वृषा॥ १२॥

यः सोमः पवमानः सिन्धूनां स्यन्दमानानामुदकानाम् अग्रे अर्षति गच्छति। तथा अग्रियः अग्रार्हः श्रेष्ठः[5] अग्रे वाचः माध्यमिकाया अग्रे अर्षति। तथा गोषु रश्मिषु गच्छति।

1. त–'धर्मभिः' नास्ति। 2. ग–हविर्दानेन। 3. ग-त३-भ४–विवेविदत् जानन्। 4. त-भ–सोमः। 5. ग-त३-भ१.२.४.७–श्रेष्ठाग्रे; त१.२.४.५.७–श्रेष्ठोये; भ६–श्रेष्ठोयो।

तथा vवाजस्य अन्नस्य बलस्य वा लाभाय vमहाधनं संग्रामं vभजते । सः vस्वायुधः vवृषा वर्षकः सोमः vसोतृभिः अभिषवकर्तृभिः vपूयते ॥

अयं मतवाञ्छकुनो यथा हितोऽव्ये ससार पवमान ऊर्मिणा ।
तव क्रत्वा रोदसी अन्तरा कवे शुचिर्धिया पवते सोम इन्द्र ते ॥ १३ ॥

अयम् । मतऽवान् । शकुनः । यथा । हितः । अव्ये । ससार । पवमानः । ऊर्मिणा ।
तव । क्रत्वा । रोदसी इति । अन्तरा । कवे । शुचिः । धिया । पवते । सोमः । इन्द्र । ते ॥ १३ ॥

vअयं सोमः vमतवान् । मतं संमतं प्रियं रतंत्रिम् । तद्वान् vपवमानः पूयमानः शोध्यमानश्च सन् vहितः प्रेरितः vशकुनः पक्षी vयथा शीघ्रं गच्छति तथा vअव्ये पवित्रे vऊर्मिणा रसेन vससार गच्छति । हे vकवे क्रान्तप्रज्ञ अनूचान वा । 'ये वा अनूचानास्ते कवयः' ( ऐ. ब्रा. २. ३८ ) इति श्रुतेः । तादृश यजमान यद्वा उक्तलक्षण vइन्द्र vते तव vक्रत्वा कर्मणा vधिया प्रज्ञया च । यद्वा । विशेषणविशेष्यभावः । धिया धारकेण क्रत्वा कर्मणा vरोदसी vअन्तरा रोदस्योर्द्यावापृथिव्योरन्तरा vशुचिः vसोमः vपवते पूयते ॥

द्रापिं वसानो यजतो दिविस्पृशमन्तरिक्षप्रा भुवनेष्वर्पितः ।
स्वर्जज्ञानो नभसाभ्यक्रमीत्प्रत्नमस्य पितरमा विवासति ॥ १४ ॥

द्रापिम् । वसानः । यजतः । दिविऽस्पृशम् । अन्तरिक्षऽप्राः । भुवनेषु । अर्पितः ।
स्वः । जज्ञानः । नभसा । अभि । अक्रमीत् । प्रत्नम् । अस्य । पितरम् । आ । विवासति ॥ १४ ॥

vदिविस्पृशं दिविस्प्रष्टारं vद्रापिं कवचं तेजोरूपं vवसानः आच्छादयन् vयजतः यष्टव्यः vअन्तरिक्षप्राः अन्तरिक्षस्य पूरक उदकेन तादृशः सोमः vभुवनेषु उदकेषु vअर्पितः vस्वः सर्वं स्वेन पाययितव्यं देवसंघं स्वर्गं वा vजज्ञानः जनयन् । अथवा । स्वरुदकम् । तज्जनयन् । vनभसा उदकेन vअभ्यक्रमीत् अभिक्रामति । vअस्य उदकस्य vपितरं पालकं vप्रत्नं पुराणमिन्द्रम् vआ vविवासति परिचरति ॥

सो अस्य विशे महि शर्म यच्छति यो अस्य धाम प्रथमं व्यानशे ।
पदं यदस्य परमे व्योमन्यतो विश्वा अभि सं याति संयतः ॥ १५ ॥

सः । अस्य । विशे । महि । शर्म । यच्छति । यः । अस्य । धाम । प्रथमम् । विऽआनशे ।
पदम् । यत् । अस्य । परमे । विऽओमनि । अतः । विश्वाः । अभि । सम् । याति । सम्ऽयतः ॥ १५ ॥

vसः सोमः vअस्य इन्द्रस्य vविशे प्रवेशनाय vमहि महत् vशर्म सुखं vयच्छति[1] । vयः सोमः vअस्य इन्द्रस्य vधाम[2] तेजोयुक्तं शरीरं vप्रथमम्[3] इतरदेवप्राप्तेः पूर्वं vव्यानशे प्राप्तवान् । vयत् यस्य vअस्य सोमस्य vपरमे उत्कृष्टे vव्योमन् विशेषेण रक्षके द्युलोके वेद्यां वा[4] vपदं[5] भवति । vयतः यस्मात् सोमात् तृप्त इन्द्रः सोमः स्वयं वा vविश्वाः vसंयतः सर्वान् संग्रामान् vअभि vयाति[5] सम्यगभिगच्छति । स सोमो महि शर्म यच्छतीति संबन्धः ॥　　॥ १४ ॥

१. ग-त३.४-भ४–यच्छति प्रयच्छति; भ१.७–प्रयच्छति । २. त–सोम । ३. ग-त-भ१.२.४.६–'प्रथमं' नास्ति । ४. त-भ६–'वा पदं' नास्ति । ५. ग-त३.४-भ१.२.४-मु–संयाति ।

प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं सखा सख्युर्न प्र मिनाति संगिरम् ।
मर्यइव युवतिभिः समर्षति सोमः कलशे शतयाम्ना पथा ॥ १६ ॥

प्रो इति । अयासीत् । इन्दुः । इन्द्रस्य । निःऽकृतम् । सखा । सख्युः । न । प्र । मिनाति । समऽगिरम् ॥ मर्यःऽइव । युवतिऽभिः । सम् । अर्षति । सोमः । कलशे । शतऽयाम्ना । पथा ॥ १६ ॥

^इन्दुः सोमः ^इन्द्रस्य ^निष्कृतं[1] स्थानमुदरं ^प्रो ^अयासीत् प्रैव गच्छति । गत्वा च ^सखा सखिभूतः सोमः ^सख्युः इन्द्रस्य ^संगिरं सम्यग्गिरणाधारभूतमुदरं[2] ^न ^प्र ^मिनाति न हिनस्ति । किंच[3] ^मर्यइव ^युवतिभिः[3] मर्त्यो यथा युवतिभिः सह संगतो भवति तद्वदयमपि सोमः युवतिभिर्मिश्रणशीलाभिर्वसतीवरीभिरद्भिः सह ^समर्षति संगच्छतेऽभिषवकाले । पश्चात् ^सोमः ^शतयाम्ना अनेकयानसाधनच्छिद्रोपेतेन ^पथा मार्गेण दशापवित्रसंबन्धिनि ^कलशे द्रोणकलशे गच्छतीति शेषः । यद्वा एकमेव वाक्यम् । यथा मर्यो युवतिभिः सह संगच्छते एवं[4] कलशे शतयाम्ना पथा संगच्छतेऽद्भिः[4] ॥

प्र वो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवसनेष्वक्रमुः ।
सोमं मनीषा अभ्यनूषत स्तुभोऽभि धेनवः पयसेमशिश्रयुः ॥ १७ ॥

प्र । वः । धियः । मन्द्रऽयुवः । विपन्युवः । पनस्युवः । समऽवसनेषु । अक्रमुः । सोमम् । मनीषाः । अभि । अनूषत । स्तुभः । अभि । धेनवः । पयसा । ईम् । अशिश्रयुः ॥ १७ ॥

हे सोम ^वः युष्माकं ^धियः ध्यातारः ^मन्द्रयुवः मदकरं शब्दं कामयमानाः ^पनस्युवः स्तुतिं कामयमानाः ^विपन्युवः । स्तोतॄनामैतत् । स्तोतारः ^संवसनेषु संवासयोग्येषु यागगृहेषु ^प्र ^अक्रमुः प्रक्रमन्ते । तदेवाह । ^सोमं ^मनीषाः मनस ईश्वराः ^स्तुभः स्तोतारः ^अभ्यनूषत अभिष्टुवन्ति । ^धेनवः अपि ^पयसा स्वीयेन ^ईम् एनं सोमम् ^अभि ^अशिश्रयुः अभिश्रीणन्ति ॥

आ नः सोम संयतं पिप्युषीमिषमिन्दो पवस्व पवमानो अस्रिधम् ।
या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यम् ॥ १८ ॥

आ । नः । सोम । समऽयतम् । पिप्युषीम् । इषम् । इन्दो इति । पवस्व । पवमानः । अस्रिधम् । या । नः । दोहते । त्रिः । अहन् । असश्चुषी । क्षुऽमत् । वाजऽवत् । मधुऽमत् । सुऽवीर्यम् ॥ १८ ॥

हे ^इन्दो दीप्त ^सोम ^पवमानः त्वं ^नः अस्माकं ^संयतं संगृहीतं ^पिप्युषीं प्रवृद्धम् ^इषम् अन्नम् ^अस्रिधम् अक्षीणं ^पवस्व । प्रयच्छेत्यर्थः । ^या यादृशी ^नः अस्माकम् ^अहन् अहनि अह्नः ^त्रिः त्रिषु सवनेषु ^असश्चुषी अप्रतिबन्धा ^दोहते क्षरति । किम् । ^क्षुमत् शब्दोपेतं सर्वत्र श्रूयमाणं ^वाजवत्[5] ^मधुमत् माधुर्योपेतं ^सुवीर्यं शोभनसामर्थ्यं पुत्रं दोहते । तामिषं पवस्वेति समन्वयः ॥

१. ग-भ४–निष्कृतं संस्कृतं । २. ग–सम्यग्गिरामाधार°; त१.५–सम्यग्गिरणाधार°; त२.४.५. ६-भ६–सम्यग्जिरणाधार° । ३. ग–तत्र दृष्टान्तः । मर्यो । ४. ग–तथा वसतीवरीसंपृक्तः सन् कलशे समर्षतीति संबंधः । ५. ग-त३-भ१.४.७–वाजवत् बलवत् ।

वृषा॑ मती॒नां प॑वते विचक्ष॒णः सोमो॒ अह्नः॑ प्रतरी॒तोषसो॑ दि॒वः ।
क्रा॒णा सिन्धू॑नां क॒लशाँ॑ अवीवश॒दिन्द्र॑स्य हार्द्या॑वि॒शन्म॑नी॒षिभिः॑ ॥ १९ ॥

वृषा॑ । म॒ती॒नाम् । प॒व॒ते॒ । वि॒ऽच॒क्ष॒णः । सोमः॑ । अह्नः॑ । प्र॒ऽत॒री॒ता । उ॒षसः॑ । दि॒वः ।
क्रा॒णा । सिन्धू॑नाम् । क॒लशा॑न् । अ॒वी॒व॒श॒त् । इन्द्र॑स्य । हार्दि॑ । आ॒ऽवि॒शन् । म॒नी॒षिऽभिः॑ ॥ १९ ॥

अयं ᵛसोमः ᵛपवते अभिपूयते । कीदृशः सोमः । ᵛमतीनाम् । मतयः स्तोतारः । तेषां ᵛवृषा वर्षकः कामानां ᵛविचक्षणः विद्रष्टा ᵛअह्नः ᵛउषसो ᵛदिवः द्युलोकस्यादित्यस्य वा ᵛप्रतरीता प्रवर्धयिता[1] । किंच ᵛसिन्धूनां स्यन्दमानानामुदकानां ᵛक्राणा कर्ता ॥ करोतेः शानचि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । सुः[2] । ' सुपां सुलुक्' ' इत्याकारः ॥ ᵛकलशानवीवशत् कामयते प्रवेष्टुम् । किं कुर्वन् । ᵛइन्द्रस्य ᵛहार्दि हृदयम् ᵛआविशन् प्रविशन्[3] ᵛमनीषिभिः स्तुत इति शेषः । यद्वा । व्यवहितमपि मनीषिभिरित्येतत् पवत इत्यनेन संबध्यते ॥

म॒नी॒षिभिः॑ पवते पू॒र्व्यः क॒विर्नृभि॑र्य॒तः परि॒ कोशाँ॑ अचिक्रदत् ।
त्रि॒तस्य॒ नाम॑ ज॒नय॒न्मधु॑ क्षर॒दिन्द्र॑स्य वा॒योः स॒ख्याय॒ कर्त॑वे ॥ २० ॥

म॒नी॒षिऽभिः॑ । प॒व॒ते॒ । पू॒र्व्यः । क॒विः । नृऽभिः॑ । य॒तः । परि॑ । कोशा॑न् । अ॒चि॒क्र॒द॒त् ।
त्रि॒तस्य॑ । नाम॑ । ज॒नय॑न् । मधु॑ । क्ष॒र॒त् । इन्द्र॑स्य । वा॒योः । स॒ख्याय॑ । कर्त॑वे ॥ २० ॥

अयं सोमः ᵛमनीषिभिः मेधाविभिरध्वर्य्वादिभिः ᵛपवते पूयते । यद्वा । अयं मनीषिभिर्मनीषिणीभिर्धाराभिः पवते क्षरति । कीदृशोऽयम् । ᵛपूर्व्यः पुराणः ᵛकविः मेधावी ᵛनृभिः नेतृभिरध्वर्य्वादिभिः ᵛयतः नियमितः सन् ᵛकोशान् कलशान् प्राप्तुं ᵛपरि ᵛअचिक्रदत् परिक्रन्दते शब्दं करोति । ᵛत्रितस्य त्रिषु स्थानेषु विस्तृतस्येन्द्रस्य[4] संबन्धि ᵛनाम नामकमुदकं ᵛजनयन् उत्पादयन् ᵛमधु मधुरं रसं ᵛक्षरत् क्षरति । किमर्थम् । ᵛइन्द्रस्य ᵛवायोः च ᵛसख्याय ᵛकर्तवे सख्यं कर्तुम् ॥ ॥१५॥

अ॒यं पु॑ना॒न उ॒षसो॒ वि रो॑चय॒दयं॒ सिन्धु॑भ्यो अभवदु लोक॒कृत् ।
अ॒यं त्रिः स॒प्त दु॑दुहा॒न आ॒शिरं॒ सोमो॑ हृ॒दे प॑वते॒ चारु॑ मत्स॒रः ॥ २१ ॥

अ॒यम् । पु॒ना॒नः । उ॒षसः॑ । वि । रो॒च॒य॒त् । अ॒यम् । सिन्धु॑ऽभ्यः । अ॒भ॒व॒त् । ऊँ इति॑ ।
लो॒क॒ऽकृत् ॥ अ॒यम् । त्रिः । स॒प्त । दु॒दु॒हा॒नः । आ॒ऽशिर॑म् ।
सोमः॑ । हृ॒दे । प॒व॒ते॒ । चारु॑ । म॒त्स॒रः ॥ २१ ॥

ᵛअयं सोमः ᵛपुनानः पूयमानः ᵛउषसो ᵛवि ᵛरोचयत् विविधं रोचयति । ᵛअयं ᵛसिन्धुभ्यः स्यन्दमानाभ्योऽद्भ्यो वसतीवरीभ्यः ᵛअभवत् समृद्धो भवति । ᵛउ इति पूरणः । कीदृशोऽयम् । ᵛलोककृत् लोकानां कर्ता । वर्षकत्वात् रेतोधारकत्वाच्चास्य लोककृत्त्वम् । ᵛअयं ᵛसोमः ᵛत्रिः ᵛसप्त एकविंशतिं[5] गा ऋत्विङ्मुखेन[5] ᵛआशिरं ᵛदुदुहानः दुहानः । दोहस्य प्रयोजकत्वात्[6] कर्त्रुपचारः[7] । ᵛमत्सरः मदकरः ᵛचारु रमणीयं ᵛपवते क्षरति । किमर्थम् । ᵛहृदे हृदयाय हृदयगमनाय ॥

---

१. त-वर्धयिता । २. ग-त१.७-भ६-मु-' सुः ' नास्ति । ३. ग-त४-भ६.७-' प्रविशन् ' नास्ति । ४. ग-त-भ५.६-मु-°स्येंद्रस्य यजमानस्य । ५. त५-भं६-एकविंशतिवारान् त्वङ्मुखेन; भ४-एकविंशतिवारं ऋत्विग्मुखेन; मु-एकविंशतिं वा ऋत्विङ्मुखेन । ६. भ६-पूरकत्वात् । ७. ग-कर्तृत्वोपचारः; त१.२.७-मु-कर्तुरुपचारः; त३-कृत्वोपचारः; त४.५-कर्तुपचारः; भ१.२.७-उपचारः; भ६-कर्तृपचारः ।

पव॑स्व सोम दि॒व्येषु॒ धाम॑सु सृजा॒न इ॑न्दो क॒लशे॑ प॒वित्र॒ आ ।
सीद॒न्निन्द्र॑स्य ज॒ठरे॒ कनि॑क्रद॒न्नृभि॒र्य॒तः सूर्य॒मारो॑हयो दि॒वि ॥ २२ ॥

पव॑स्व । सोम॑ । दि॒व्येषु॑ । धाम॑ऽसु । सृ॒जा॒नः । इ॒न्दो॒ इति॑ । क॒लशे॑ । प॒वित्रे॑ । आ ।
सीद॑न् । इन्द्र॑स्य । ज॒ठरे॑ । कनि॑क्रदत् । नृऽभिः॑ । य॒तः । सूर्य॑म् । आ । अ॒रो॒ह॒यः॒ । दि॒वि ॥२२॥

हे ᵛसोम ᵛदिव्येषु ᵛधामसु स्थानेषु । देवानां संबन्धिषूदरेष्वित्यर्थः[1] । तेषु ᵛपवस्व क्षर । कीदृशः[2] सन्[2] । हे ᵛइन्दो दीप्त सोम ᵛकलशे ᵛपवित्र ᵛआ दशापवित्रे च । आ इति चार्थे । ᵛसृजानः सृज्यमानः । अत्र 'अग्निहोत्रं जुहोति यवागूं पचति' इतिवदार्थिकः क्रमोऽवगन्तव्यः । किंच ᵛइन्द्रस्य ᵛजठरे ᵛसीदन् जठरं गच्छन् ᵛकनिक्रदत् शब्दं कुर्वन् ᵛनृभिः नेतृभिर्ऋत्विग्भिः ᵛयतः परिगृहीतः । हुत इत्यर्थः । तथाभूतः सन् ᵛदिवि ᵛसूर्यम् ᵛआरोहयः प्रादुर्भूतमकरोः[3] ॥

अद्रि॑भिः सु॒तः प॑वसे प॒वित्र॒ आँ इन्द॒विन्द्र॑स्य ज॒ठरे॑ष्वावि॒शन् ।
त्वं नृ॒चक्षा॑ अभवो विचक्षण॒ सोम॑ गो॒त्रमङ्गि॑रोभ्योऽवृणो॒रप॑ ॥ २३ ॥

अद्रि॑ऽभिः । सु॒तः । प॒व॒से॒ । प॒वित्रे॑ । आ । इन्दो॒ इति॑ । इन्द्र॑स्य । ज॒ठरे॑षु । आ॒ऽवि॒शन् ।
त्वम् । नृ॒ऽचक्षाः॑ । अ॒भ॒वः॒ । वि॒ऽच॒क्ष॒ण॒ । सोम॑ । गो॒त्रम् । अङ्गि॑रःऽभ्यः । अ॒वृ॒णोः॒ । अप॑ ॥२३॥

हे ᵛइन्दो सोम ᵛअद्रिभिः ग्रावभिः ᵛसुतः अभिषुतस्त्वं ᵛपवसे क्षरसि पूयसे वा । ᵛपवित्र ᵛआ दशापवित्रे । आ इति पूरणः । यद्वा । अभिषुतो भवसि पवसे चेति चार्थ आकारः । किं कुर्वन् । ᵛइन्द्रस्य ᵛजठरेषु जठरप्रदेशेषु ᵛआविशन् । जठरप्रवेशायेत्यर्थः । किंच हे ᵛविचक्षण विद्रष्टः सोम ᵛत्वं ᵛनृचक्षा ᵛअभवः नृणां मनुष्याणामनुग्रहेण द्रष्टा भवसि । किंच हे ᵛसोम त्वम् ᵛअङ्गिरोभ्यः ᵛगोत्रं मेघमुदकं क्षारयितुं पणिभिरपहृतानां गवामावरकं पर्वतं वा ᵛअप ᵛअवृणोः ॥

त्वां सो॑म॒ पव॑मानं स्वा॒ध्योऽनु॒ विप्रा॑सो अमद॒न्नव॒स्यव॑ः ।
त्वां सु॑प॒र्ण आभ॑रद्दि॒वस्परी॑न्दो॒ विश्वा॑भिर्म॒तिभि॒ः परि॑ष्कृतम् ॥ २४ ॥

त्वाम् । सो॒म॒ । पव॑मानम् । सु॒ऽआ॒ध्यः॑ । अनु॑ । विप्रा॑सः । अ॒म॒द॒न् । अ॒व॒स्यव॑ः ।
त्वाम् । सु॒ऽप॒र्णः । आ । अ॒भ॒र॒त् । दि॒वः । परि॑ ।
इन्दो॒ इति॑ । विश्वा॑भिः । म॒तिऽभिः॑ । परि॑ऽकृतम् ॥ २४ ॥

हे ᵛसोम ᵛपवमानं ᵛत्वां ᵛस्वाध्यः सुमतयः सुकर्माणो वा ᵛविप्रासः विप्रा मेधाविनः स्तोतारः ᵛअवस्यवः रक्षाकामाः ᵛअनु ᵛअमदन् अनुष्टुवन्ति । हे ᵛइन्दो ᵛत्वां ᵛसुपर्णः श्येनः ᵛआभरत् आहरत् । ᵛदिवस्परि द्युलोकस्योपरि । द्युलोकादित्यर्थः । कीदृशं त्वाम् । ᵛविश्वाभिर्मतिभिः सर्वाभिः स्तुतिभिः ᵛपरिष्कृतम् अलंकृतम् ॥

अव्ये॑ पुना॒नं परि॒ वार॑ ऊ॒र्मिणा॒ हरिं॑ नवन्ते अ॒भि स॒प्त धे॒नव॑ः ।
अ॒पामु॒पस्थे॑ अध्या॒यव॑ः क॒विमृ॒तस्य॒ योना॑ महि॒षा अ॑हेषत ॥ २५ ॥

---

१. भ६–संबधिषु देवेष्वित्यर्थः । २. ग–कीदृशस्त्वं; त-भ१.२.६-मु–कीदृशान्; भ४.७–कीदृशः । ३. त-भ६–°मकरोत् ।

अव्ये । पुनानम् । परि । वारे । ऊर्मिणा । हरिम् । नवन्ते । अभि । सप्त । धेनवः ।
अपाम् । उपऽस्थे । अधि । आयवः । कविम् । ऋतस्य । योना । महिषाः । अहेषत ॥२५॥

अव्ये अविमये वारे वाले दशापवित्रे ऊर्मिणा रसेन परि परितः पुनानं पवमानं हरिं हरितवर्णं सोमम् अभि नवन्ते अभिगच्छन्ति सप्त धेनवः प्रीणयित्र्यः सप्त गायत्र्याद्याः सप्त गङ्गाद्या नद्यो वा । 'नवते क्षोदते' इति गतिकर्मस्वयं पठितः । किंच कविं त्वाम् अपामुपस्थे अन्तरिक्षस्योत्सङ्गे ऋतस्य योनौ । उदकनामैतत् 'ऋतं योनिर्ऋतस्य योनिः' इति तन्नामसु पाठात् । उदके महिषाः महान्तः आयवः मनुष्याः अधि अहेषत अधिकं प्रेरयन्ति ॥ ॥ १६ ॥

इन्दुः पुनानो अति गाहते मृधो विश्वानि कृण्वन्सुपथानि यज्यवे ।
गाः कृण्वानो निर्णिजं हर्यतः कविरत्यो न क्रीळन् परि वारमर्षति ॥ २६ ॥

इन्दुः । पुनानः । अति । गाहते । मृधः । विश्वानि । कृण्वन् । सुऽपथानि । यज्यवे ।
गाः । कृण्वानः । निःऽनिर्जम् । हर्यतः । कविः ।
अत्यः । न । क्रीळन् । परि । वारम् । अर्षति ॥ २६ ॥

अयम् इन्दुः दीप्तः सोमः पुनानः पूयमानः अति गाहते अतिक्रम्य गच्छति मृधः शत्रून् । किं कुर्वन् । विश्वानि गन्तव्यानि सुवर्त्मानि वैदिकानि लौकिकानि च सुपथानि कृण्वन् कुर्वन् । कस्मै । यज्यवे यागकर्त्रे । यजमानाय शत्रून् परिहरन् मार्गान् सुपथान् कुर्वन् कलशं प्रविशतीत्यर्थः । किंच निर्णिजम् आत्मीयं रूपं गाः कृण्वानः । रसमयान् कुर्वाण इत्यर्थः[1] । हर्यतः कान्तः । 'हर्य गतिकान्त्योः' । औणादिकोऽतच् । कविः क्रान्तप्रज्ञः एवंभूतः सोमः अत्यो न अश्व इव क्रीळन् वारं दशापवित्रं परि अर्षति परिगच्छति ॥

असश्चतः शतधारा अभिश्रियो हरिं नवन्तेऽव ता उदन्युवः ।
क्षिपो मृजन्ति परि गोभिरावृतं तृतीये पृष्ठे अधि रोचने दिवः ॥ २७ ॥

असश्चतः । शतऽधाराः । अभिऽश्रियः । हरिम् । नवन्ते । अव । ताः । उदन्युवः ।
क्षिपः । मृजन्ति । परि । गोभिः । आऽवृतम् । तृतीये । पृष्ठे । अधि । रोचने । दिवः ॥२७॥

असश्चतः परस्परमसंगताः शतधाराः अभिश्रियः अभितः सोमं श्रयन्त्यः ताः प्रसिद्धाः सूर्यस्य दीप्तयः हरिम्[2] अव नवन्ते गच्छन्ति । उदन्युवः उदकेच्छावत्यः सत्यः । यद्वा । धाराशब्देनात्र सोमधारा अभिप्रेताः । असश्चतोऽसंबद्धा अभिश्रियोऽभितो गाः श्रयन्त्यो गोभिः श्रितास्ताः प्रसिद्धा उदन्युव इन्द्रसंबन्धिवृष्टिकामा हरिमिन्द्रमव नवन्ते संगच्छन्ते । क्षिपः अङ्गुलयोऽपि गोभिः दीप्तिपक्षे गोभी रश्मिभिः आवृतं सोमधारापक्षे गोभिः परि आवृतं व्याप्तं सोमं मृजन्ति अवशोधयन्ति । दिवः आदित्यात् रोचने रोचमाने यमादित्यो रोचयति तस्मिन् तृतीये[3] क्षित्यपेक्षायां तृतीयभूते[4] द्युलोके अधि वसन्तं सोमं मृजन्ति ॥

---

१. ग-त३.४-म१.२.४.७-इत्यर्थः । यद्वा गाः तद्विकाराणि क्षीराणि कुर्वाण इत्यर्थः । २. ग-हरिं हरितं । ३. मु-तृतीये पृष्ठे । ४. म१(२)-तृतीयभूते पृष्ठे ।

तवेमाः प्रजा दिव्यस्य रेतसस्त्वं विश्वस्य भुवनस्य राजसि ।
अथेदं विश्वं पवमान ते वशे त्वमिन्दो प्रथमो धामधा असि ॥ २८ ॥

तव । इमाः । प्रऽजाः । दिव्यस्य । रेतसः । त्वम् । विश्वस्य । भुवनस्य । राजसि ।
अथ । इदम् । विश्वम् । पवमान । ते । वशे ।
त्वम् । इन्दो इति । प्रथमः । धामऽधाः । असि ॥ २८ ॥

ᵛतव ᵛदिव्यस्य ᵛरेतसः सकाशात् ᵛइमाः ᵛप्रजाः उत्पद्यमानाः प्राणिन उत्पन्नाः । ' सोमो वै रेतोधाः ' ( तै. सं. २.१.१.६ ) इति श्रुतेः । ᵛत्वं[1] ᵛविश्वस्य ᵛभुवनस्य ᵛराजसि ईश्वरो भवसि । ᵛअथ अपि च ᵛइदं ᵛविश्वं हे ᵛपवमान ᵛते[2] ᵛवशे त्वदधीनं वर्तते । हे ᵛइन्दो ᵛप्रथमः मुख्यः ᵛत्वं ᵛधामधाः धाम्नो धर्ता ᵛअसि भवसि ॥

त्वं समुद्रो असि विश्ववित्कवे तवेमाः पञ्च प्रदिशो विधर्मणि ।
त्वं द्यां च पृथिवीं चाति जभ्रिषे तव ज्योतींषि पवमान सूर्यः ॥ २९ ॥

त्वम् । समुद्रः । असि । विश्वऽवित् । कवे । तव । इमाः । पञ्च । प्रऽदिशः । विऽधर्मणि ।
त्वम् । द्याम् । च । पृथिवीम् । च । अति । जभ्रिषे । तव । ज्योतींषि । पवमान । सूर्यः ॥ २९ ॥

हे ᵛकवे क्रान्तप्रज्ञ ᵛत्वं यस्मात् ᵛसमुद्रः वर्षसाधनोऽपाम्[3] अतः ᵛविश्ववित् ᵛअसि । यद्वा । समुद्रो द्रवात्मकोऽसि विश्वविच्चासि । किंच ᵛतव ᵛविधर्मणि विधारणे ᵛपञ्च ᵛप्रदिशः प्रकृष्टा दिशो भवन्तीति शेषः । ᵛत्वं ᵛद्यां ᵛच दिवं च ᵛपृथिवीं ᵛच ᵛअति ᵛजभ्रिषे बिभर्षि । हे ᵛपवमान ᵛसूर्यः देवः ᵛतव ᵛज्योतींषि आप्याययति ॥

त्वं पवित्रे रजसो विधर्मणि देवेभ्यः सोम पवमान पूयसे ।
त्वामुशिजः प्रथमा अगृभ्णत तुभ्येमा विश्वा भुवनानि येमिरे ॥ ३० ॥

त्वम् । पवित्रे । रजसः । विऽधर्मणि । देवेभ्यः । सोम । पवमान । पूयसे ।
त्वाम् । उशिजः । प्रथमाः । अगृभ्णत । तुभ्य । इमा । विश्वा । भुवनानि । येमिरे ॥ ३० ॥

हे ᵛसोम ᵛपवमान ᵛत्वं ᵛरजसः लोकस्य रसस्य वा ᵛविधर्मणि विधारके दशापवित्रे ᵛदेवेभ्यः देवार्थं ᵛपूयसे । ᵛत्वाम् ᵛउशिजः कामयमाना ऋत्विजः ᵛप्रथमाः प्रतमा[4] मुख्याः ᵛअगृभ्णत गृह्णन्ति । ᵛतुभ्य तुभ्यम् ᵛइमा इमानि ᵛविश्वा सर्वाणि ᵛभुवनानि भूतजातानि ᵛयेमिरे यच्छन्त्यात्मानम् ॥ १७ ॥

प्र रेभ एत्यति वारमव्ययं वृषा वनेष्वव चक्रदद्धरिः ।
सं धीतयो वावशाना अनूषत शिशुं रिहन्ति मतयः पनिप्नतम् ॥ ३१ ॥

प्र । रेभः । एति । अति । वारम् । अव्ययम् । वृषा । वनेषु । अव । चक्रदत् । हरिः ।
सम् । धीतयः । वावशानाः । अनूषत । शिशुम् । रिहन्ति । मतयः । पनिप्नतम् ॥ ३१ ॥

---

१. भ१.२.७–त्वं सोम । २. भ१–ते व; भ२–ते तव । ३. ग–द्रविणसाधनोपां । ४. ग-त४-भ– ' प्रतमा ' नास्ति ।

रेभः शब्दयिता । 'रेभृ शब्दे'। सोमः वारमव्ययम् अविमयं वालं प्र[1] अति एति[1] प्रकर्षेणातिगच्छति । वृषा सेक्ता सोमः वनेषु उदकेषु अव चक्रदत् अवक्रन्दत् हरिः हरितवर्णः सोमः । सम् अनूषत संस्तुवन्ति । के । धीतयः ध्यातारः वावशानाः यागं सोमं वा कामयमानाः। शिशुं शिशुवत् संस्कर्तव्यं सोमं मतयः स्तुतयः रिहन्ति लिहन्ति स्पृशन्ति । स्वविषयीकुर्वन्तीत्यर्थः । कीदृशम्[2] । पनिप्नतं शब्दयन्तम्[2] ॥

**स सूर्यस्य रश्मिभिः परि व्यत तन्तुं तन्वानस्त्रिवृतं यथा विदे ।**
**नयन्नृतस्य प्रशिषो नवीयसीः पतिर्जनीनामुप याति निष्कृतम् ॥ ३२ ॥**

सः । सूर्यस्य । रश्मिऽभिः । परि । व्यत । तन्तुम् । तन्वानः । त्रिऽवृतम् । यथा । विदे ।
नयन् । ऋतस्य । प्रऽशिषः । नवीयसीः । पतिः । जनीनाम् । उप । याति । निःऽकृतम् ॥ ३२ ॥

सः सोमः सूर्यस्य रश्मिभिः परि व्यत परिवेष्टयत्यात्मानम् । किं कुर्वन् । त्रिवृतं सवनैर्देवैर्वा त्रिवृतं तन्तुं यज्ञं तन्वानः विस्तारयन् यथा विदे जानाति । येन प्रकारेण संपूर्णमवगच्छति तथा तन्वानः । ऋतस्य सत्यभूतस्य यजमानस्य नवीयसीः नवतराः प्रशिषः प्रशंसना अभिमतानि नयन् प्रापयन् । तस्मा[3] एव[3] जनीनां पतिः पालकः स्वामी निष्कृतं संस्कृतं पात्रम् उप याति गच्छति[4] ॥

**राजा सिन्धूनां पवते पतिर्दिव ऋतस्य याति पथिभिः कनिक्रदत् ।**
**सहस्रधारः परि षिच्यते हरिः पुनानो वाचं जनयन्नुपावसुः ॥ ३३ ॥**

राजा । सिन्धूनाम् । पवते । पतिः । दिवः । ऋतस्य । याति । पथिऽभिः । कनिक्रदत् ।
सहस्रऽधारः । परि । सिच्यते । हरिः । पुनानः । वाचम् । जनयन् । उपऽवसुः ॥ ३३ ॥

सिन्धूनां नदीनामुदकानां राजा ईश्वरः[5] दिवः[6] पतिः द्युलोकस्य स्वामी[7] ऋतस्य यज्ञस्य पथिभिः मार्गैः कनिक्रदत् शब्दं कुर्वन् याति । सहस्रधारः बहुधारायुक्तः सोमो नृभिर्नेतृभिर्ऋत्विग्भिः परि षिच्यते पात्रेषु । पुनानः पूयमानः वाचं शब्दं जनयन् उत्पादयन् उपावसुः उपागच्छद्धनः[8] परि षिच्यत इति समन्वयः ॥

**पवमान मह्यर्णो वि धावसि सूरो न चित्रो अव्ययानि पव्यया ।**
**गभस्तिपूतो नृभिरद्रिभिः सुतो महे वाजाय धन्याय धन्वसि ॥ ३४ ॥**

पवमान । महि । अर्णः । वि । धावसि । सूरः । न । चित्रः । अव्ययानि । पव्यया ।
गभस्तिऽपूतः । नृऽभिः । अद्रिऽभिः । सुतः । महे । वाजाय । धन्याय । धन्वसि ॥ ३४ ॥

हे पवमान सोम मह्यर्णः बहूदकम् । अर्ण इत्युदकनाम । रसं वा वि धावसि गमयसि[9] । 'धावु गतिशुद्ध्योः'। किंच[9] सूरो न चित्रः सूर्य इव चित्रः चायनीयः पूज्यः सन् अव्ययानि

---

१. त-भ२-मु–प्रत्येति । २. ग-त३-भ४.५–'कीदृशं...शब्दयन्तं' नास्ति; त-भ६–कीदृशं शब्दयंतं । ३. ग–तस्मादेव; मु–तस्मा एवं । ४. भ६–उपगच्छति । ५. ग–ईश्वरः पवते । ६. त–'दिवः' नास्ति । ७. मु–स्वामी सोमः पवते पूयते । ८. ग-भ१.४.६.७–उपगच्छद्धनः । ९. ग–शोधयसि । तत्र दृष्टांतः ।

अविमयानि पव्यया पात्राणि गच्छसि । किंच गभस्तिपूतः बाहुभिरभिशोधितः नृभिः ऋत्विग्भिः ग्रावभिश्च[1] सुतः अभिषुतः[1] महे महते वाजाय संग्रामाय धन्याय[2] धनेभ्यो[3] हिताय धन्वसि गच्छसि । धन्वतिर्गतिकर्मा ॥

इषमूर्जं पवमानाभ्यर्षसि श्येनो न वंसु कलशेषु सीदसि ।
इन्द्राय मद्वा मद्यो मदः सुतो दिवो विष्टम्भ उपमो विचक्षणः ॥ ३५ ॥

इषम् । ऊर्जम् । पवमान । अभि । अर्षसि । श्येनः । न । वंसु । कलशेषु । सीदसि ।
इन्द्राय । मद्वा । मद्यः । मदः । सुतः । दिवः । विष्टम्भः । उपऽमः । विऽचक्षणः ॥३५॥

हे पवमान पूयमान सोम इषम् अन्नम् ऊर्जं बलं च अभ्यर्षसि । श्येनो न श्येन इव वंसु वननीयेषु कुलायेषु[4] कलशेषु सीदसि[5] निषण्णो भवसि[5] । अथ परोक्षकृतः । इन्द्राय मद्वा मदकरः मद्यः मदहेतुः मदः रसः सुतः अभिषुतः । कीदृशः । दिवः द्युलोकस्य उपमः उपमीयमानः विष्टम्भः विशेषेण स्तम्भयिता । स्थूणा यथा गृहं तथा[6] । विचक्षणः विद्रष्टा । 'स्थूणेव जनाँ उपमित्' ( ऋ. सं. १.५९.१ ) इत्युक्तम् ॥ ॥ १८ ॥

सप्त स्वसारो अभि मातरः शिशुं नवं जज्ञानं जेन्यं विपश्चितम् ।
अपां गन्धर्वं दिव्यं नृचक्षसं सोमं विश्वस्य भुवनस्य राजसे ॥ ३६ ॥

सप्त । स्वसारः । अभि । मातरः । शिशुम् । नवम् । जज्ञानम् । जेन्यम् । विपःऽचितम् ।
अपाम् । गन्धर्वम् । दिव्यम् । नृऽचक्षसम् । सोमम् । विश्वस्य । भुवनस्य । राजसे ॥ ३६ ॥

सप्त सर्पणस्वभावाः सप्तसंख्याका वा मातरः मातृस्थानीया गङ्गायमुनाद्याः शिशुं शिशुस्थानीयम् अभि गच्छन्तीति शेषः । स्वकार्यैः पयोभिराच्छादयन्तीति शेषः । कीदृशं शिशुम् । नवं जज्ञानं जायमानं जेन्यं जयशीलं विपश्चितं विद्वांसम् अपां जनकं तेषां मध्ये वर्तमानं वा गन्धर्वम् उदकस्य धातारं दिव्यं दिवि भवं नृचक्षसं नृणां द्रष्टारं सोमम् अभिगच्छन्ति । किमर्थम् । विश्वस्य भुवनस्य विराजसे[7] विराजनार्थम् ॥

ईशान इमा भुवनानि वीयसे युजान इन्दो हरितः सुपर्ण्यः ।
तास्ते क्षरन्तु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठन्तु कृष्टयः ॥ ३७ ॥

ईशानः । इमा । भुवनानि । वि । ईयसे । युजानः । इन्दो इति । हरितः । सुऽपर्ण्यः ।
ताः । ते । क्षरन्तु । मधुऽमत् । घृतम् । पयः । तव । व्रते । सोम । तिष्ठन्तु । कृष्टयः ॥३७॥

हे इन्दो सोम ईशानः सर्वस्य स्वामी त्वम् इमा इमानि भुवनानि भूतजातानि वीयसे गच्छसि । वी गत्यादिषु । किं कुर्वन् । हरितः हरितवर्णाः सुपर्ण्यः सुपतनाश्चाश्वाः रथे युजानः योजयन् । ताः सुपर्ण्यः ते तव संबन्धिन्यः मधुमत् माधुर्योपेतं घृतं दीप्तं पयः उदकं क्षरन्तु । हे सोम तव व्रते कर्मणि तिष्ठन्तु कृष्टयः मनुष्याः सर्वे ॥

---

१. भ१(२)–अद्रिभिः ग्रावभिस्त्वं सुतोभिषुतश्च । २. भ१(२)–जन्याय । ३. त-भ१.२.५.६–जनेभ्यो । ४. भ६–कूपेषु । ५. त–सीदति निषण्णो भवति । ६. त-भ-मु–तथा तद्वत् । ७. भ१(२)-मु–राजसे ।

त्वं नृचक्षा असि सोम विश्वतः पर्वमान वृषभ ता वि धावसि ।
स नः पवस्व वसुमद्धिरण्यवद्वयं स्याम भुवनेषु जीवसे ॥ ३८ ॥

त्वम् । नृऽचक्षाः । असि । सोम । विश्वतः । पवमान । वृषभ । ता । वि । धावसि ।
सः । नः । पवस्व । वसुऽमत् । हिरण्यऽवत् । वयम् । स्याम । भुवनेषु । जीवसे ॥ ३८ ॥

हे सोम त्वं विश्वतः सर्वतः सर्वेषु भुवनेषु नृचक्षाः नृणां द्रष्टा असि भवसि । हे पवमान वृषभ अपां वर्षक ताः अपः वि धावसि विविधं गच्छसि । सः त्वं नः अस्माकं पवस्व क्षर । किम्[1] । वसुमत् बहुभिर्वसुभिर्वासकैर्गवादिद्रव्यैर्युक्तं तथा हिरण्यवत् बहुभिर्हिरण्यैर्युक्तं धनम् । वयं च वसुभिर्हिरण्यैर्युक्ताः भुवनेषु लोकेषु जीवसे जीवितुं प्रभवः स्याम भवेम ॥

गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इन्दो भुवनेष्वर्पितः ।
त्वं सुवीरो असि सोम विश्ववित्तं त्वा विप्रा उप गिरेम आसते ॥ ३९ ॥

गोऽवित् । पवस्व । वसुऽवित् । हिरण्यऽवित् । रेतःऽधाः । इन्दो इति । भुवनेषु । अर्पितः ।
त्वम् । सुऽवीरः । असि । सोम । विश्वऽवित ।
तम् । त्वा । विप्राः । उप । गिरा । इमे । आसते ॥ ३९ ॥

हे सोम त्वं पवस्व क्षर । कीदृशः । गोवित् गवां लम्भकः वसुवित् धनस्य लम्भकः हिरण्यवित् हिरण्यस्य लम्भकः रेतोधाः । रेत उदकम् । तस्य धातौषधीनाम् । यद्वा । रेतः प्रजननसामर्थ्यम् । तस्य धारयिता । भुवनेषु उदकेषु अर्पितः । हे इन्दो सोम त्वं सुवीरः सुवीर्यः असि भवसि । विश्ववित् सर्वस्य वेत्ता । तं त्वा त्वाम् इमे विप्राः गिरा स्तुत्या उप आसते ॥

उन्मध्व ऊर्मिर्वननां अतिष्ठिपदपो वसानो महिषो वि गाहते ।
राजा पवित्ररथो वाजमारुहत्सहस्रभृष्टिर्जयति श्रवो बृहत् ॥ ४० ॥

उत् । मध्वः । ऊर्मिः । वननाः । अतिस्थिपत् । अपः । वसानः । महिषः । वि । गाहते ।
राजा । पवित्रऽरथः । वाजम् । आ । अरुहत् । सहस्रऽभृष्टिः । जयति । श्रवः । बृहत् ॥ ४० ॥

मध्वः मधुरस्य ऊर्मिः रसः वननाः वननीया वाचः उत् अतिष्ठिपत् उत्थापयति । सोमाभिषवकाले स्तुतिवाचः प्रवृत्तेः । अपः वसानः आच्छादयन् महिषः महान् वि गाहते प्रविशति कलशम् । राजा सोमः पवित्ररथः । दशापवित्रमेव रथो यस्य स तथोक्तः । तादृशः सोमः वाजं संग्रामम् आरुहत् आरोहति । सहस्रभृष्टिः बहुभ्रंशोऽपरिमितगमनः बृहत् श्रवः महदन्नं जयति अस्मदर्थम् ॥ ॥ १९ ॥

स भन्दना उदियर्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिवि ।
ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत इन्दविन्द्रमस्मभ्यं याचतात् ॥ ४१ ॥

1. ग-भ६-किंच ।

सः । मन्दनाः । उत् । इयर्ति । प्रजाऽवतीः । विश्वऽआयुः । विश्वाः । सुऽभराः । अहःऽदिवि ।
ब्रह्म । प्रजाऽवत् । रयिम् । अश्वऽपस्त्यम् ।
पीतः । इन्दो इति । इन्द्रम् । अस्मभ्यम् । याचतात् ॥ ४१ ॥

सः सोमः विश्वायुः सर्वस्य गन्ता सोमः प्रजावतीः प्रजारूपफलदात्रीः[1] सुभराः सुष्ठु ह्रियमाणाः विश्वाः सर्वाः मन्दनाः स्तुतीः उदियर्ति उत्कृष्टं प्रेरयति। कस्मिन् काले उच्यते। अहर्दिवि अहोरात्रयोश्च। अथ प्रत्यक्षकृतः। ब्रह्म परिवृढं कर्म प्रजावत् प्रजाभिर्युक्तम्। प्रजाफलकमित्यर्थः। यद्वा। अन्नं तच्च प्रजावत् प्रजाद्युपेतम्। तथा रयिं धनम्। कीदृशम्। अश्वपस्त्यं[2] व्याप्तगृहम्। तदुभयं हे इन्दो दीप्त सोम पीतः इन्द्रेण पीतस्त्वं तमेव इन्द्रमस्मभ्यं याचतात् याचस्व ॥

**सो अग्रे अह्नां हरिर्हर्यतो मदः प्र चेतसा चेतयते अनु द्युभिः ।**
**द्वा जना यातयन्नन्तरीयते नरा च शंसं दैव्यं च धर्तरि ॥ ४२ ॥**

सः । अग्रे । अह्नाम् । हरिः । हर्यतः । मदः । प्र । चेतसा । चेतयते । अनु । द्युऽभिः ।
द्वा । जना । यातयन् । अन्तः । ईयते । नराशंसम् । च । दैव्यम् । च । धर्तरि ॥ ४२ ॥

सः सोमः अग्रे सर्वेषां संमुखं चेतसा प्राणिनां चेतनेन सह अह्नां द्युभिः दीप्तिभिः अनु प्र चेतयते अनुप्रज्ञायते। यद्वा। अह्नामग्रे अग्रभागे। प्रातरित्यर्थः। स्तोतॄणां चेतसा प्रज्ञानेन द्युभिर्दीप्ताभिः स्तुतिभिश्चानु प्र चेतयते। कीदृशः सः। हरिः हरितवर्णः हर्यतः कान्तः मदः मदकरः। किंच द्वा जना द्वौ जनौ स्तोतारं यष्टारं च यातयन् प्रापयन् स्वविहितेन कर्मणा। लौकिकवैदिकौ द्वौ जनौ द्रष्टव्यौ। एवं कुर्वन् अन्तः द्यावापृथिव्योर्मध्ये ईयते गच्छति। ‘ईङ् गतौ’। किं कुर्वन्। नराशंसं नरैः शंसनीयम्। मानुषमित्यर्थः। दैव्यं च दिवि[3] भवम्[3] उभयविधं धनं धर्तरि धारके यजमाने प्रेरयन्निति शेषः ॥

**अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुनाभ्यञ्जते ।**
**सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमासु गृभ्णते ॥ ४३ ॥**

अञ्जते । वि । अञ्जते । सम् । अञ्जते । क्रतुम् । रिहन्ति । मधुना । अभि । अञ्जते ।
सिन्धोः । उतऽश्वासे । पतयन्तम् । उक्षणम् । हिरण्यऽपावाः । पशुम् । आसु । गृभ्णते ॥ ४३ ॥

सोममृत्विजः अञ्जते गोभिः। तथा व्यञ्जते विविधमञ्जन्ति। समञ्जते सम्यगञ्जन्ति। स्तुत्यर्थत्वादपुनरुक्तिः। तथा क्रतुं बलकर्तारं रिहन्ति लिहन्ति। आस्वादयन्ति देवाः। तथा पुनः मधुना गव्येन अभ्यञ्जते। तमेव सोमं सिन्धोः उदकस्य रसस्याधारभूते उच्छ्वासे उच्छ्रिते देशे पतयन्तं गच्छन्तम् ॥ ‘पतॢ गतौ’ इत्यस्मात्स्वार्थे णिचि वृद्ध्यभावश्छान्दसः ॥ उक्षणं सेक्तारं हिरण्यपावाः हिरण्येन पुनन्तः पशुं द्रष्टारम्। ‘पशुः पश्यतेः’ (निरु. ३.१६) इति निरुक्तम्। आसु वसतीवरीषु गृभ्णते गृह्णन्ति ॥

**विपश्चिते पवमानाय गायत मही न धारात्यन्धो अर्षति ।**
**अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीळन्नसरद्वृषा हरिः ॥ ४४ ॥**

---

१. त-भ-मु–°फलदात्र्यः। २. त१.२.५–विश्वपस्त्यं। ३. ग-त-भ-मु–‘दिवि भवं’ नास्ति।

विपःऽचिते । पर्वमानाय । गायत । मही । न । धारा । अति । अन्धः । अर्षति ।
अहिः । न । जूर्णाम् । अति । सर्पति । त्वचम् ।
अत्यः । न । क्रीळन् । असरत् । वृषा । हरिः ॥ ४४ ॥

हे[1] ऋत्विजः[1] ᵛविपश्चिते मेधाविने ᵛपवमानाय पूयमानाय ᵛगायत स्तुतिं कुरुत। स च विपश्चित्सोमः ᵛमही ᵛन ᵛधारा महती वर्षधारेव ᵛअन्धः अन्नं रसात्मकम्[2] ᵛअति ᵛअर्षति। ᵛअहिर्न अहिरिव ᵛजूर्णां जीर्णां ᵛत्वचम् ᵛअति ᵛसर्पति अतिमुञ्चति। अभिषवादिकर्मणा[3] त्वचं मुञ्चतीत्यर्थः[3]। तद्वदतिसर्पति धारा दशापवित्रात्। ᵛअत्यो ᵛन अश्व इव ᵛक्रीळन् ᵛअसरत् सरति गच्छति द्रोणकलशम्[4]। ᵛवृषा वर्षकः कामानां ᵛहरिः हरितवर्णः रसः ॥

**अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः ।**
**हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः ॥ ४५ ॥**

अग्रेऽगः । राजा । अप्यः । तविष्यते । विऽमानः । अह्नाम् । भुवनेषु । अर्पितः ।
हरिः । घृतऽस्नुः । सुऽदृशीकः । अर्णवः । ज्योतिःऽरथः । पवते । राये । ओक्यः ॥४५॥

ᵛअग्रेगः अग्रे गन्ता ᵛराजा राजमानः ᵛअप्यः अप्सु संस्कृतः सोमः ᵛतविष्यते स्तूयते। यः ᵛअह्नां दिनानां ᵛविमानः निर्माता चन्द्रकलाह्रासवृद्ध्यधीनत्वादहर्व्यवहारस्य। ᵛभुवनेषु उदकेषु वसतीवरीसंबन्धिषु ᵛअर्पितः स्थापितः स राजा तविष्यते। किंच ᵛहरिः हरितवर्णः ᵛघृतस्नुः प्रसृतोदकः ᵛसुदृशीकः शोभनदर्शनः ᵛअर्णवः उदकवान्। अर्ण इत्युदकनाम। ᵛज्योतीरथः ज्योतिर्मयरथः ᵛराये धनस्य प्रापयिता। ᵛओक्यः। ओक इति निवासनाम। तस्य हितः ॥ ॥ २० ॥

**असर्जि स्कम्भो दिव उद्यतो मदः परि त्रिधातुर्भुवनान्यर्षति ।**
**अंशुं रिहन्ति मतयः पनिप्नतं गिरा यदि निर्णिजमृग्मिणो ययुः ॥ ४६ ॥**

असर्जि । स्कम्भः । दिवः । उत्ऽयतः । मदः । परि । त्रिऽधातुः । भुवनानि । अर्षति ।
अंशुम् । रिहन्ति । मतयः । पनिप्नतम् । गिरा । यदि । निःऽनिजम् । ऋग्मिणः । ययुः ॥४६॥

ᵛदिवः द्युलोकस्य ᵛस्कम्भः स्कम्भयिता धारकः ᵛउद्यतः सोमः ᵛअसर्जि सृज्यते। अभिषूयत इत्यर्थः। किंच ᵛत्रिधातुः। द्रोणकलशाधवनीयपूतभृदाख्यास्त्रयो धातवो यस्य स तथोक्तः। तादृशो ᵛभुवनानि उदकानि ᵛअर्षति गच्छति। ᵛअंशुं सोमं ᵛपनिप्नतं शब्दायमानं ᵛमतयः पूजकाः ᵛरिहन्ति लिहन्ति आस्वादयन्ति। कदा। ᵛयदि ᵛनिर्णिजं निर्णिक्तम्। यद्वा। निर्णिगिति रूपनाम। रूपवन्तमित्यर्थः। तम् ᵛऋग्मिणः स्तोतारः ᵛगिरा स्तुत्या ᵛययुः गच्छन्ति तदा ॥

**प्र ते धारा अत्यण्वानि मेष्यः पुनानस्य संयतो यन्ति रंहयः ।**
**यद्गोभिरिन्दो चम्वोः समज्यस आ सुवानः सोम कलशेषु सीदसि ॥४७॥**

प्र । ते । धाराः । अति । अण्वानि । मेष्यः । पुनानस्य । सम्ऽयतः । यन्ति । रंहयः ।
यत् । गोभिः । इन्दो इति । चम्वोः । सम्ऽअज्यसे । आ । सुवानः । सोम । कलशेषु । सीदसि॥४७॥

१. ग-त३-म१.२.७–'हे ऋत्विजः' नास्ति। २. ग-त३-म५–सोमात्मकं; त१.२.४–रथात्मकं; म६–सोमात्मकं रसात्मकं। ३. ग-त३-म१.५.७–'अभिषवा...°त्यर्थः' नास्ति। ४. ग-त३-म१.५.७–'द्रोणकलशं' नास्ति।

<sup>v</sup>पुनानस्य पूयमानस्य <sup>v</sup>संयतः संगृह्यमाणाः <sup>v</sup>रंहयः रंहणस्वभावाः <sup>v</sup>धाराः <sup>v</sup>मेष्यः <sup>v</sup>अण्वानि अणूनि लोमानि <sup>v</sup>अति <sup>v</sup>यन्ति अतिक्रम्य गच्छन्ति । हे <sup>v</sup>इन्दो सोम <sup>v</sup>यत् यदा <sup>v</sup>गोभिः उदकैः <sup>v</sup>चम्वोः अधिषवणफलकयोरुपरि <sup>v</sup>समज्यसे तदानीं हे <sup>v</sup>सोम <sup>v</sup>सुवानः सूयमानस्त्वं <sup>v</sup>कलशेषु <sup>v</sup>आ <sup>v</sup>सीदसि ॥

पवस्व सोम क्रतुविन्न उक्थ्योऽव्यो वारे परि धाव मधु प्रियम् ।
जहि विश्वान्रक्षस इन्दो अत्रिणो बृहद्वदेम विदथे सुवीराः ॥ ४८ ॥

पवस्व । सोम । क्रतुऽवित । नः । उक्थ्यः । अव्यः । वारे । परि । धाव । मधु । प्रियम् ।
जहि । विश्वान् । रक्षसः । इन्दो इति । अत्रिणः । बृहत् । वदेम । विदथे । सुऽवीराः ॥४८॥

हे <sup>v</sup>सोम <sup>v</sup>नः अस्माकं <sup>v</sup>क्रतुवित् कर्मज्ञः । स्तुतिज्ञ इत्यर्थः । <sup>v</sup>उक्थ्यः स्तुत्यः । यतः स्तुत्योऽतः क्रतुविदित्यभिप्रायः । ईदृशस्त्वं नोऽस्माकं यागाय <sup>v</sup>पवस्व स्रव रसम् । <sup>v</sup>अव्यो <sup>v</sup>वारे दशापवित्रे <sup>v</sup>प्रियं <sup>v</sup>मधु <sup>v</sup>परि <sup>v</sup>धाव परिक्षर । हे <sup>v</sup>इन्दो दीप्त सोम <sup>v</sup>अत्रिणः भक्षकान् <sup>v</sup>विश्वान् <sup>v</sup>रक्षसः <sup>v</sup>जहि । <sup>v</sup>सुवीराः सुपुत्रा वयं <sup>v</sup>विदथे यज्ञे <sup>v</sup>बृहत् महद्धनं <sup>v</sup>वदेम उच्चारयेम । याचेमेत्यर्थः । यद्वा प्रभूतं स्तोत्रं वदेम ॥ ॥ २१ ॥

'प्र तु द्रव' इति नवर्चं द्वितीयं सूक्तं काव्यस्योशनस आर्षमनादेशपरिभाषया त्रैष्टुभं पवमानसोमदेवताकम् । तथा चानुक्रान्तं—'प्र तु नवोशना' इति । 'जागतमूर्ध्वं प्रागुशनसः' (अनु. ९. ६७) इति वचनाज्जगत्यधिकारो निवृत्तः । गतो विनियोगः ॥

प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥ १ ॥

प्र । तु । द्रव । परि । कोशम् । नि । सीद । नृऽभिः । पुनानः । अभि । वाजम् । अर्ष ।
अश्वम् । न । त्वा । वाजिनम् । मर्जयन्तः । अच्छ । बर्हिः । रशनाभिः । नयन्ति ॥ १ ॥

हे सोम <sup>v</sup>तु क्षिप्रं <sup>v</sup>प्र <sup>v</sup>द्रव प्रगच्छ । गत्वा च <sup>v</sup>कोशं द्रोणकलशं <sup>v</sup>परि <sup>v</sup>नि <sup>v</sup>षीद निषण्णो भव । <sup>v</sup>नृभिः नेतृभिः <sup>v</sup>पुनानः पूयमानः <sup>v</sup>वाजम् अन्नं यजमानार्थमुद्दिश्य <sup>v</sup>अभि <sup>v</sup>अर्ष अभिगच्छ । <sup>v</sup>वाजिनं बलवन्तम् <sup>v</sup>अश्वं <sup>v</sup>न अश्वमिव तं यथा मार्जयन्ति[3] तद्वत् वाजिनं त्वां <sup>v</sup>मार्जयन्तः[4] शोधयन्तः <sup>v</sup>बर्हिः यज्ञम् <sup>v</sup>अच्छ प्रति <sup>v</sup>रशनाभिः रशनावदायताभिरङ्गुलीभिः <sup>v</sup>नयन्ति अध्वर्युप्रमुखाः ॥

स्वायुधः पवते देव इन्दुरशस्तिहा वृजनं रक्षमाणः ।
पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥ २ ॥

सुऽआयुधः । पवते । देवः । इन्दुः । अशस्तिऽहा । वृजनम् । रक्षमाणः ।
पिता । देवानाम् । जनिता । सुऽदक्षः । विऽस्तम्भः । दिवः । धरुणः । पृथिव्याः ॥ २ ॥

<sup>v</sup>स्वायुधः शोभनायुधः <sup>v</sup>इन्दुः सोमः <sup>v</sup>देवः <sup>v</sup>पवते । स च देवः <sup>v</sup>अशस्तिहा रक्षोहा <sup>v</sup>वृजनम् उपद्रवं <sup>v</sup>रक्षमाणः <sup>v</sup>पिता पालकः <sup>v</sup>देवानां तथा <sup>v</sup>जनिता उत्पादकः <sup>v</sup>सुदक्षः सुबलः <sup>v</sup>दिवः <sup>v</sup>विष्टम्भः विशेषेण स्तम्भयिता <sup>v</sup>पृथिव्याः च <sup>v</sup>धरुणः धारकः । एवंमहानुभावः पवते ॥

३. ग–मर्जयंति । ४. ग–मर्जयंतः ।

**ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन ।**
**स चिद्विवेद निहितं यदासामपीच्यं१ गुह्यं नाम गोनाम् ॥ ३ ॥**

ऋषिः । विप्रः । पुरःऽएता । जनानाम् । ऋभुः । धीरः । उशना । काव्येन ।
सः । चित् । विवेद । निऽहितम् । यत् । आसाम् । अपीच्यम् । गुह्यम् । नाम । गोनाम् ॥ ३ ॥

ऋषिः अतीन्द्रियद्रष्टा विप्रः मेधावी पुरएता पुरतो गन्ता जनानां मनुष्याणाम् ऋभुः उरु भासमानः धीरः धीमान् उशना एतन्नामर्षिः यः स चित् स एव काव्येन कवित्वेन स्तोत्रेण विवेद लभते । किम् । यदासां गोनां गवाम् अपीच्यम् । अन्तर्हितनामैतत् । अन्तर्हितं गुह्यं गोपनीयं नाम नामकमुदकं पयोलक्षणम् ॥

**एष स्य ते मधुमाँ इन्द्र सोमो वृषा वृष्णे परि पवित्रे अक्षाः ।**
**सहस्रसाः शतसा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ४ ॥**

एषः । स्यः । ते । मधुऽमान् । इन्द्र । सोमः । वृषा । वृष्णे । परि । पवित्रे । अक्षारिति ।
सहस्रऽसाः । शतऽसाः । भूरिऽदावा । शश्वत्ऽतमम् । बर्हिः । आ । वाजी । अस्थात् ॥ ४ ॥

हे इन्द्र वृष्णे वर्षकाय ते तुभ्यम् एष स्यः सः सोमः मधुमान् माधुर्योपेतः वृषा वर्षकः पवित्रे परि अक्षाः परिक्षरति । क्षरतेर्लुङि रूपम् । स एव सहस्रसाः सहस्रसंख्याकधनस्य दाता शतसाः शतसंख्याकस्य दाता भूरिदावा ततोऽपि भूरेर्दाता वाजी बलवान् शश्वत्तमं नित्यं बर्हिः यज्ञम् आ अस्थात् आतिष्ठति ॥

**एते सोमा अभि गव्या सहस्रा महे वाजायामृताय श्रवांसि ।**
**पवित्रेभिः पवमाना असृग्रञ्छ्रवस्यवो न पृतनाजो अत्याः ॥ ५ ॥**

एते । सोमाः । अभि । गव्या । सहस्रा । महे । वाजाय । अमृताय । श्रवांसि ।
पवित्रेभिः । पवमानाः । असृग्रन् । श्रवस्यवः । न । पृतनाजः । अत्याः ॥ ५ ॥

एते सोमाः गव्या गव्यानि सहस्रा सहस्राणि श्रवांसि अन्नानि आशिरलक्षणानि लक्षीकृत्य पवित्रेभिः पवित्रच्छिद्रैः पवमानाः पूयमानाः महे महते वाजाय अन्नाय अमृताय अमृतत्वाय अभि असृग्रन् सृज्यन्ते । किमिव । श्रवस्यवः अन्नेच्छवः पृतनाजः सेनाजेतारः अत्याः न अश्वा इव ॥ ॥ २२ ॥

**परि हि ष्मा पुरुहूतो जनानां विश्वासरद्भोजना पूयमानः ।**
**अथा भर श्येनभृत प्रयांसि रयिं तुञ्जानो अभि वाजमर्ष ॥ ६ ॥**

परि । हि । स्म । पुरुऽहूतः । जनानाम् । विश्वा । असरत् । भोजना । पूयमानः ।
अथ । आ । भर । श्येनऽभृत । प्रयांसि । रयिम् । तुञ्जानः । अभि । वाजम् । अर्ष ॥ ६ ॥

अयं परि असरत् परिसरति जनानाम्[1] अर्थाय विश्वा सर्वाणि भोजना भोजनान्यन्नानि धनानि वा । कीदृशः । पुरुहूतः बहुभिराहूतः पूयमानः शोध्यमानः । अथ प्रत्यक्षकृतः । अथ

१. त३-भ१.२.६.७–जनानां यजमानानां ।

इदानीं हे ᵛश्येनभृत श्येनेनाहृत सोम त्वं ᵛप्रयांसि अन्नानि ᵛआ ᵛभर आहर। ᵛरयिं धनं ᵛतुञ्जानः ददानः ᵛवाजम् अन्नं रसम् ᵛअभि ᵛअर्ष अभिगच्छ ॥

**एष सुवानः परि सोमः पवित्रे सर्गो न सृष्टो अदधावदर्वा ।**
**तिग्मे शिशानो महिषो न शृङ्गे गा गव्यन्नभि शूरो न सत्वा ॥ ७ ॥**

एषः । सुवानः । परि । सोमः । पवित्रे । सर्गः । न । सृष्टः । अदधावत् । अर्वा ।
तिग्मे इति । शिशानः । महिषः । न । शृङ्गे इति ।
गाः । गव्यन् । अभि । शूरः । न । सत्वा ॥ ७ ॥

ᵛएष ᵛसुवानः सूयमानः ᵛअर्वा अरणकुशलः ᵛसोमः ᵛसर्गो ᵛन ᵛसृष्टः विसृष्टोऽश्व इव ᵛपवित्रे ᵛपरि ᵛअदधावत् परिधावति। किंच ᵛतिग्मे तीक्ष्णे ᵛशृङ्गे ᵛशिशानः तीक्ष्णीकुर्वन् ᵛमहिषो ᵛन महान्[1] महिषाख्यो मृग इव[2]। तथान्यदृष्टान्तः। ᵛगा ᵛगव्यन् प्रभूता गा इच्छन् ᵛशूरो ᵛन शूर इव। एतौ महिषशूरौ यथा प्रतिकूलौ शीघ्रं धावतः तद्वत् ᵛसत्वा सदनशीलोऽयं गच्छतीति शेषः ॥

**एषा ययौ परमादन्तरद्रेः कूचित्सतीरूर्वे गा विवेद ।**
**दिवो न विद्युत्स्तनयन्त्यभ्रैः सोमस्य ते पवत इन्द्र धारा ॥ ८ ॥**

एषा । आ । ययौ । परमात् । अन्तः । अद्रेः । कूऽचित् । सतीः । ऊर्वे । गाः । विवेद ।
दिवः । न । विऽद्युत् । स्तनयन्ती । अभ्रैः । सोमस्य । ते । पवते । इन्द्र । धारा ॥ ८ ॥

ᵛएषा सोमधारा ᵛपरमात् उच्छ्रितात् स्थानात् ᵛययौ जगाम पात्रं स्वयंप्राप्तव्यं देशं वा। किंच ᵛअद्रेः पर्णानां निवासस्थानस्य पर्वतस्य ᵛअन्तः ᵛकूचित् क्वचित् कुत्रचिद्रूढे ᵛऊर्वे देशे ᵛसतीः वर्तमानाः पणिभिरपहृताः ᵛगाः ᵛविवेद लब्धवती। यत्र पणयो गा अपहृत्य स्थापितवन्तः स देश ऊर्वः। 'ऊर्वं गव्यं महि गृणानः' (ऋ. सं. ६.१७.१) इति हि मन्त्रान्तरम्। ᵛदिवो ᵛन ᵛविद्युत् दिवः सकाशाद्विद्युदिव ᵛस्तनयन्ती शब्दयन्ती। विद्युत् विशेष्यते। ᵛअभ्रैः प्रेरितेति शेषः। सा यथा शब्दं करोति तद्वच्छब्दं कुर्वती। ᵛसोमस्य संबन्धिनी सेयं ᵛधारा हे ᵛइन्द्र ᵛते त्वदर्थं त्वत्पानाय ᵛपवते पूयते। क्षरति वा ॥

**उत स्म राशिं परि यासि गोनामिन्द्रेण सोम सरथं पुनानः ।**
**पूर्वीरिषो बृहतीर्जीरदानो शिक्षा शचीवस्तव ता उपष्टुत् ॥ ९ ॥**

उत । स्म । राशिम् । परि । यासि । गोनाम् । इन्द्रेण । सोम । सऽरथम् । पुनानः ।
पूर्वीः । इषः । बृहतीः । जीरदानो इति जीरऽदानो ।
शिक्ष । शचीऽवः । तव । ताः । उपऽस्तुत् ॥ ९ ॥

ᵛउत ᵛस्म अपि च खलु हे ᵛसोम ᵛपुनानः पूयमानः ᵛगोनां गवां ᵛराशिं समूहं पणिभिरपहृतं ᵛपरि ᵛयासि परिगच्छसि। कथंभूतः सन् उच्यते। ᵛइन्द्रेण सह ᵛसरथम् एकमेव रथमास्थाय। हे

१. ग–'महान्' नास्ति। २. ग–इव पवित्रे पर्यदधावत् परिधावति।

ᵛजीरदानो क्षिप्रदान सोम ᵛउपस्तुत् उपस्तूयमानस्त्वं ᵛपूर्वीः बह्वीः ᵛबृहतीः महतीः ᵛइषः उक्तलक्षणान्यन्नानि ᵛशिक्ष देहि । हे ᵛशचीवः अन्नवन् ᵛताः इषः ᵛतव स्वभूता इति शेषः ॥ ॥२३॥

'अयं सोमः' इत्यष्टर्चं तृतीयं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'अयं सोमोऽष्टौ' इत्यनुक्रान्तम्। गतो विनियोगः ॥

अयं सोम इन्द्र तुभ्यं सुन्वे तुभ्यं पवते त्वमस्य पाहि ।
त्वं ह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सोमम् ॥ १ ॥

अयम् । सोमः । इन्द्र । तुभ्यम् । सुन्वे । तुभ्यम् । पवते । त्वम् । अस्य । पाहि ।
त्वम् । ह । यम् । चकृषे । त्वम् । ववृषे । इन्दुम् । मदाय । युज्याय । सोमम् ॥ १ ॥

हे ᵛइन्द्र ᵛअयं ᵛसोमः ᵛतुभ्यं त्वदर्थं ᵛसुन्वे सूयते ॥ सुनोतेः कर्मार्थे लटि 'लोपस्त आत्मनेपदेषु' इति तल्लोपः ॥ ᵛतुभ्यं त्वदर्थमेव ᵛपवते पूयते। ᵛत्वं च ᵛअस्य अमुं ᵛपाहि पिब। ᵛत्वं ᵛह ᵛयम् ᵛइन्दुं ᵛसोमं ᵛचकृषे करोषि। ᵛत्वं च यं ᵛववृषे वृतवानसि। किमर्थम्। ᵛमदाय ᵛयुज्याय सहायाय। सोम इन्द्राय बलकरत्वात् सहाय इति प्रसिद्धम्। यमेवं करोषि त्वं तं पाहीति समन्वयः॥

स ईं रथो न भुरिषाळयोजि महः पुरूणि सातये वसूनि ।
आदीं विश्वा नहुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवन्त ॥ २ ॥

सः । ईम् । रथः । न । भुरिषाट् । अयोजि । महः । पुरूणि । सातये । वसूनि ।
आत् । ईम् । विश्वा । नहुष्याणि । जाता । स्वःऽसाता । वने । ऊर्ध्वा । नवन्त ॥ २ ॥

ᵛस ᵛईं सोऽयं सोमः ᵛभुरिषाट् भूरिभारस्य सोढा ᵛरथो ᵛन रथ इव भुरिषाट् प्रभूतस्य भारस्य सोढा ᵛअयोजि युज्यते। कीदृशः सः। ᵛमहः महान्। किमर्थमयोजि। ᵛपुरूणि बहूनि ᵛवसूनि धनानि ᵛसातये अस्मभ्यं दानुम्। ᵛआदीं योगानन्तरं ᵛविश्वा विश्वानि सर्वाणि ᵛनहुष्याणि। नहुषो[1] मनुष्याः। तेषां संबन्धीनि[1] ᵛजाता जातान्यस्मद्विरोधीनि ᵛऊर्ध्वा उन्मुखानि ᵛवने वननीये ᵛस्वर्षाता स्वर्षातौ। संग्रामनामैतत्। स्वर्गलाभयुक्ते संग्रामे ᵛनवन्त गच्छन्तु। नवतिर्गतिकर्मा। यद्वा। सोमं संग्रामे युद्धार्थिनः संगच्छन्ति ॥

वायुर्न यो नियुत्वाँ इष्टयामा नासत्येव हव आ शंभविष्ठः ।
विश्ववारो द्रविणोदाइव त्मन्पूषेव धीजवनोऽसि सोम ॥ ३ ॥

वायुः । न । यः । नियुत्वान् । इष्टऽयामा । नासत्याऽइव । हवे । आ । शम्ऽभविष्ठः ।
विश्वऽवारः । द्रविणोदाःऽइव । त्मन् । पूषाऽइव । धीऽजवनः । असि । सोम ॥ ३ ॥

ᵛयः सोमः ᵛनियुत्वान्। नियुतो वायोरश्वाः। तद्वान् ᵛवायुर्न वायुरिव ᵛइष्टयामा इष्टगमनः। ᵛनासत्येव अश्विनाविव ᵛहवम् आह्वानमाकर्ण्य ᵛआ सर्वतः ᵛशंभविष्ठः सुखस्य भावयितृतमः। ᵛद्रविणोदाइव धनदातेव ᵛत्मन् आत्मनि ᵛविश्ववारः विश्वैर्वरणीयो भवति तद्वद्विश्ववारोऽसि। ᵛपूषेव पोषकः सवितेव ᵛधीजवनः मनोवेगः ᵛअसि। यद्वा कर्मणां प्रवर्तयितासि हे ᵛसोम ॥

---

१. ग–मनुष्यसंबंधीनि ।

इन्द्रो न यो महा कर्माणि चक्रिर्हन्ता वृत्राणामसि सोम पूर्भित् ।
पैद्वो न हि त्वमहिनाम्नां हन्ता विश्वस्यासि सोम दस्योः ॥ ४ ॥

इन्द्रः । न । यः । महा । कर्माणि । चक्रिः । हन्ता । वृत्राणाम् । असि । सोम । पुःऽभित् ।
पैद्वः । न । हि । त्वम् । अहिऽनाम्नाम् । हन्ता । विश्वस्य । असि । सोम । दस्योः ॥ ४ ॥

"इन्द्रो "न इन्द्र इव "यः त्वं "महा महान्ति "कर्माणि "चक्रिः ताच्छील्येन करोषि स त्वं हे "सोम "वृत्राणां शत्रूणां "हन्ता "असि भवसि । तथा "पूर्भित् पुरां भेत्तासि । किंच "पैद्वो "न अश्व इव खलु "अहिनाम्नां "हन्ता भवसि । आगत्य हन्तीत्यहिः । तन्नामकानामित्यर्थः । न केवलं तेषामेव अपि तु "विश्वस्य अपि सर्वस्यापि "दस्योः उपक्षपयितुः शत्रोर्हन्ता "असि ॥

अग्निर्न यो वन आ सृज्यमानो वृथा पाजांसि कृणुते नदीषु ।
जनो न युध्वा महत उपब्दिरियर्ति सोमः पवमान ऊर्मिम् ॥ ५ ॥

अग्निः । न । यः । वने । आ । सृज्यमानः । वृथा । पाजांसि । कृणुते । नदीषु ।
जनः । न । युध्वा । महतः । उपब्दिः । इयर्ति । सोमः । पवमानः । ऊर्मिम् ॥ ५ ॥

"अग्निर्न अग्निरिव "यः सोमः "वने अरण्ये "आ "सृज्यमानः वनसंबन्ध्यग्निर्यथा बलानि[1] कुरुते[1] एवं यः सोमः "वृथा अनायासेन "नदीषु आन्तरिक्षाणि "पाजांसि "कृणुते कुरुते । किंच "युध्वा युद्धस्य कर्ता "जनो "न शूरो मनुष्य इव "महतः शत्रोः "उपब्दिः । वाङ्नामैतत् । शब्दयिता सन् "पवमानः पूयमानः "सोमः "ऊर्मिं प्रवृद्धं रसम् "इयर्ति प्रेरयति ॥

एते सोमा अति वाराण्यव्या दिव्या न कोशासो अभ्रवर्षाः ।
वृथा समुद्रं सिन्धवो न नीचीः सुतासो अभि कलशाँ असृग्रन् ॥ ६ ॥

एते । सोमाः । अति । वाराणि । अव्या । दिव्याः । न । कोशासः । अभ्रऽवर्षाः ।
वृथा । समुद्रम् । सिन्धवः । न । नीचीः । सुतासः । अभि । कलशान् । असृग्रन् ॥ ६ ॥

"एते पूयमानाः "सोमाः "अव्या अविमयानि "वाराणि वालानि "अति गच्छन्तीति शेषः । तत्र दृष्टान्तः । "दिव्या "न "कोशासः दिवि भवाः कोशा आप इव । ता विशेष्यन्ते । "अभ्रवर्षाः अभ्रैर्वृष्यमाणाः । किंच "वृथा अनायासेन "समुद्रं "सिन्धवो "न नद्य इव "नीचीः नीचीनाग्राः "सुतासः अभिषुताः सोमाः "कलशान् "अभि "असृग्रन् अभिगच्छन्ति ॥

शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट् ।
आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाण्न यज्ञः ॥ ७ ॥

शुष्मी । शर्धः । न । मारुतम् । पवस्व । अनभिऽशस्ता । दिव्या । यथा । विट् ।
आपः । न । मक्षु । सुऽमतिः । भव । नः । सहस्रऽअप्साः । पृतनाषाट् । न । यज्ञः ॥ ७ ॥

हे सोम "शुष्मी । शुष्मं बलं शोषणात् । बलवांस्त्वं "मारुतं "शर्धो "न मरुतां बलमिव "पवस्व । तत्र दृष्टान्तमेव स्पष्टयति । "यथा "दिव्या "विट् प्रजा "अनभिशस्ता । अभिशासो निन्दा ।

१. ग–ज्वाला विकुरुते ।

अनिन्दिता पवते । 'मरुतो वै देवानां विशः' ( तै. सं. २. २. ५. ७ ) इति हि ब्राह्मणम् । किंच ᵛआपो ᵛन उदकानीव ᵛमक्षु क्षिप्रं पवमानस्त्वं ᵛसुमतिः ᵛभव ᵛनः अस्माकम् । किंच ᵛसहस्राप्साः। अप्स इति रूपनाम । बहुरूपस्त्वं ᵛपृतनाषाट् पृतनानामभिभवितेन्द्र इव ᵛयज्ञः यष्टव्यो भवसीति ॥

राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम ।
शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥ ८ ॥

राज्ञः । नु । ते । वरुणस्य । व्रतानि । बृहत् । गभीरम् । तव । सोम । धाम ।
शुचिः । त्वम् । असि । प्रियः । न । मित्रः । दक्षाय्यः । अर्यमाऽइव । असि । सोम ॥ ८ ॥

हे ᵛसोम ᵛवरुणस्य वारकस्य ᵛते तव ᵛव्रतानि कर्माणि ᵛनु क्षिप्रं करोमीति शेषः । हे ᵛसोम ᵛतव ᵛधाम तेजःस्थानं ᵛबृहत् महत् ᵛगभीरं च । ᵛप्रियः ᵛमित्रः इव ᵛत्वं ᵛशुचिः दीप्तः शुद्धो वा ᵛअसि । ᵛअर्यमेव अर्यमा देव इव त्वं ᵛदक्षाय्यः ᵛअसि ॥  ॥ २४ ॥

'प्रो स्य वह्निः' इति सप्तर्चं चतुर्थं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'प्रो स्य सप्त' इत्यनुक्रान्तम् । गतो विनियोगः ॥

प्रो स्य वह्निः पथ्याभिरस्यान्दिवो न वृष्टिः पवमानो अक्षाः ।
सहस्रधारो असदन्न्यस्मे मातुरुपस्थे वन आ च सोमः ॥ १ ॥

प्रो इति । स्यः । वह्निः । पथ्याभिः । अस्यान् । दिवः । न । वृष्टिः । पवमानः । अक्षारिति ।
सहस्रऽधारः । असदत् । नि । अस्मे इति । मातुः । उपऽस्थे । वने । आ । च । सोमः ॥ १ ॥

प्र उ इति निपातद्वयसमुदाय एको निपातितः । ᵛप्रो ᵛअस्यान् प्रस्यन्दते ᵛस्यः सः ᵛवह्निः वोढा ᵛपथ्याभिः यज्ञमार्गैः । ᵛदिवो ᵛन ᵛवृष्टिः दिवः सकाशात् वृष्टिरिव ᵛपवमानः पूयमानः सन् ᵛअक्षाः व्याप्नोति । सोऽयं ᵛसोमः ᵛसहस्रधारः बहुधारः सन् ᵛअस्मे अस्मासु ᵛनि ᵛअसदत् निषीदति ॥

राजा सिन्धूनामवसिष्ट वास ऋतस्य नावमारुहद्रजिष्ठाम् ।
अप्सु द्रप्सो वावृधे श्येनजूतो दुह ईं पिता दुह ईं पितुर्जाम् ॥ २ ॥

राजा । सिन्धूनाम् । अवसिष्ट । वासः । ऋतस्य । नावम् । आ । अरुहत् । रजिष्ठाम् ।
अप्ऽसु । द्रप्सः । ववृधे । श्येनऽजूतः । दुहे । ईम् । पिता । दुहे । ईम् । पितुः । जाम् ॥ २ ॥

अयं ᵛराजा सोमः ᵛसिन्धूनाम् उदकानां क्षीरादिस्यन्दिनीनां गवां वा ᵛवासः वसनस्थानीयं क्षीराख्यं श्रयणद्रव्यम् ᵛअवसिष्ट आच्छादयति । तथा कृत्वा ᵛरजिष्ठाम् ऋजुतराम् ᵛऋतस्य यज्ञस्य ᵛनावमारुहत् आरोहति । सः ᵛद्रप्सः सोमरसः ᵛश्येनजूतः श्येनेनापहृतो रसः[1] ᵛअप्सु वसतीवरीषु ᵛववृधे वर्धते । ᵛईं तमिमं ᵛपितुः पालकात् पितृस्थानीयात् द्युलोकात् ᵛजां जातमपत्यं सोमम् ᵛईम् अयं ᵛपिता पालको लोकः ᵛदुहे दोग्धि रसम् । तथाध्वर्युरपि ᵛदुहे दोग्धि । अथवा । उक्तलक्षणमेतं सोमं पिता पालकः स्वामी यजमानो दोग्धि फलं तथा दुहेऽध्वर्युरपि रसं दुहे । यद्वा । दुह ईमिति पुनरुक्तिरादरार्था ॥

---

१. ग—यः ।

सिंहं नसन्त मध्वो अयासं हरिमरुषं दिवो अस्य पतिम् ।
शूरो युत्सु प्रथमः पृच्छते गा अस्य चक्षसा परि पात्युक्षा ॥ ३ ॥

सिंहम् । नसन्त । मध्वः । अयासम् । हरिम् । अरुषम् । दिवः । अस्य । पतिम् ।
शूरः । युत्ऽसु । प्रथमः । पृच्छते । गाः । अस्य । चक्षसा । परि । पाति । उक्षा ॥ ३ ॥

ᐯसिंहं शत्रूणां हिंसकं सिंहसदृशं ᐯमध्वः उदकस्य ᐯअयासं प्रेरकं ᐯहरिं हरितवर्णम् ᐯअस्य ᐯदिवः द्युलोकस्य ᐯपतिं पालकं सोमं ᐯनसन्त व्याप्नुवन्ति यजमानाः । ᐯयुत्सु संग्रामेषु ᐯशूरः ᐯप्रथमः देवानां मध्ये मुख्यः सोमः ᐯगाः पणिभिरपहृताः ᐯपृच्छते मार्गज्ञान् । पणीन् हत्वा गा लब्धुं गोमार्गं पृच्छतीत्यर्थः । किंच ᐯअस्य ᐯचक्षसा सामर्थ्येन ᐯउक्षा सेक्ता देवेन्द्रः ᐯपरि ᐯपाति विश्वम् ॥

मधुपृष्ठं घोरमयासमश्वं रथे युञ्जन्त्युरुचक्र ऋष्वम् ।
स्वसार ईं जामयो मर्जयन्ति सनाभयो वाजिनमूर्जयन्ति ॥ ४ ॥

मधुऽपृष्ठम् । घोरम् । अयासम् । अश्वम् । रथे । युञ्जन्ति । उरुऽचक्रे । ऋष्वम् ।
स्वसारः । ईम् । जामयः । मर्जयन्ति । सऽनाभयः । वाजिनम् । ऊर्जयन्ति ॥ ४ ॥

ᐯमधुपृष्ठं मधुरपृष्ठभागं ᐯघोरं भयानकम् ᐯअयासं गन्तारम् ᐯऋष्वं दर्शनीयमुक्तलक्षणाश्वस्थानीयं व्याप्तं सोमम् ᐯउरुचक्रे प्रभूतचक्रे ᐯरथे यथाश्वं रथे ᐯयुञ्जन्ति रथिकास्तद्वत् प्रभूतचरणे रथे रंहणस्य साधने यज्ञाख्ये रथे युञ्जन्ति । योजयन्त्यध्वर्य्वादयः । किंच ᐯईम् एनं सोमं ᐯस्वसारः स्वयंसारिण्यः परस्परं स्वसृभूता वा ᐯजामयः बन्धुभूता अङ्गुलयः । एकहस्तनिष्पन्नत्वात् स्वसृत्वं जामित्वं च । एवंभूताः ᐯमार्जयन्ति शोधयन्ति । तदेवाह । ᐯसनाभयः समानबन्धनाः ᐯवाजिनं बलवन्तं सोमम् ᐯऊर्जयन्ति बलिनं कुर्वन्ति ॥

चतस्र ईं घृतदुहः सचन्ते समाने अन्तर्धरुणे निषत्ताः ।
ता ईमर्षन्ति नमसा पुनानास्ता ईं विश्वतः परि षन्ति पूर्वीः ॥ ५ ॥

चतस्रः । ईम् । घृतऽदुहः । सचन्ते । समाने । अन्तः । धरुणे । निऽसत्ताः ।
ताः । ईम् । अर्षन्ति । नमसा । पुनानाः । ताः । ईम् । विश्वतः । परि । सन्ति । पूर्वीः ॥ ५ ॥

ᐯचतस्रः ᐯघृतदुहः घृतदोग्ध्र्यो गावः[1] ᐯईम् एनं सोमं ᐯसचन्ते सेवन्ते । कीदृश्यस्ताः । ᐯसमाने एकस्मिन् ᐯधरुणे सर्वेषां धारकेऽन्तरिक्षे ᐯनिषत्ताः निषण्णाः । ᐯताः घृतदुहः ᐯईम् एनम् ᐯअर्षन्ति प्राप्नुवन्ति ᐯनमसा अन्नेन ᐯपुनानाः पूयमानाः सत्यः । ᐯताः ᐯपूर्वीः बह्व्यः प्रभूता गावः[2] ᐯविश्वतः सर्वतः ᐯपरि ᐯषन्ति परिभवन्ति ॥

विष्टम्भो दिवो धरुणः पृथिव्या विश्वा उत क्षितयो हस्ते अस्य ।
असत्त उत्सो गृणते नियुत्वान्मध्वो अंशुः पवत इन्द्रियाय ॥ ६ ॥

विष्टम्भः । दिवः । धरुणः । पृथिव्याः । विश्वाः । उत । क्षितयः । हस्ते । अस्य ।
असत् । ते । उत्सः । गृणते । नियुत्वान् । मध्वः । अंशुः । पवते । इन्द्रियाय ॥ ६ ॥

---

१. त१.२.३.४.५.६-म१.२.६—नावः; म७—नागावः । २. त१.२.३.४.५.६-म१.२.६—नावः; म७—नागावः ।

अयं सोमः ᵛदिवः द्युलोकस्य विष्टम्भभूतः। यथा गृहस्य स्तम्भस्तद्वत्। तथा ᵛपृथिव्याः ᵛधरुणः धारकः। ᵛउत अपि च ᵛविश्वाः सर्वाः ᵛक्षितयः प्रजाः ᵛअस्य सोमस्य ᵛहस्ते अवन्ति। ᵛउत्सः। उत्सरन्त्यस्मात् कामा इत्युत्सः सोमः। सः ᵛगृणते स्तुवते ᵛते हर्म्यं ᵛनियुत्वान् अश्ववान् ᵛअसत् भवतु। स सोमः ᵛमध्वः मधु। कर्मणि षष्ठी। मधुररसः ᵛअंशुः सोमः। 'अंशुः शमष्टमात्रो भवति' (निरु. २. ५) इति यास्कः। ᵛइन्द्रियाय[1] ᵛपवते पूयते अभिषूयते[2] ॥

वन्वन्नवातो अभि देववीतिमिन्द्राय सोम वृत्रहा पवस्व।
शग्धि महः पुरुश्चन्द्रस्य रायः सुवीर्यस्य पतयः स्याम ॥ ७ ॥

वन्वन्। अवातः। अभि। देवऽवीतिम्। इन्द्राय। सोम। वृत्रऽहा। पवस्व।
शग्धि। महः। पुरुऽचन्द्रस्य। रायः। सुऽवीर्यस्य। पतयः। स्याम ॥ ७ ॥* ॥ २५ ॥

'प्र हिन्वानः' इति षड्ऋचं पञ्चमं सूक्तं मैत्रावरुणेर्वसिष्ठस्यार्षं त्रैष्टुभं पवमानसोमदेवताकम्। तथा चानुक्रान्तं—'प्र हिन्वानः षडूनमिष्टुः' इति। गतो विनियोगः ॥

प्र हिन्वानो जनिता रोदस्यो रथो न वाजं सनिष्यन्नयासीत्।
इन्द्रं गच्छन्नायुधा संशिशानो विश्वा वसु हस्तयोरादधानः ॥ १ ॥

प्र। हिन्वानः। जनिता। रोदस्योः। रथः। न। वाजम्। सनिष्यन्। अयासीत्।
इन्द्रम्। गच्छन्। आयुधा। सम्ऽशिशानः। विश्वा। वसु। हस्तयोः। आऽदधानः ॥ १ ॥

ᵛहिन्वानः[3] प्रेर्यमाणोऽध्वर्य्वादिभिः ᵛजनिता उत्पादयिता ᵛरोदस्योः द्यावापृथिव्योः। तयोः[4] जनयितृत्वं वृष्टिप्रदानहविष्प्रापणाभ्याम्। तादृक्सोमः ᵛवाजम् अन्नं ᵛसनिष्यन् दास्यन् ᵛप्र ᵛअयासीत् प्रगच्छति। ᵛइन्द्रं ᵛगच्छन् प्राप्नुवन् ᵛआयुधा आयुधानि ᵛसंशिशानः सम्यक् तीक्ष्णी-कुर्वन्निन्द्रसाहाय्यगमनार्थं तीक्ष्णायुधः सन् ᵛविश्वा सर्वाणि ᵛवसु वसूनि ᵛहस्तयोरादधानः अस्मभ्यं दानाय। एवं कुर्वन् प्रायासीत् ॥

अभि त्रिपृष्ठं वृषणं वयोधामाङ्गूषाणामवावशन्त वाणीः।
वना वसानो वरुणो न सिन्धून्वि रत्नधा दयते वार्याणि ॥ २ ॥

१. ग-इंद्रियार्थं; त-म-मु-य इंद्रियाय। २. त३-म६-अभिपूयते। त्यक्तं किंचित्। ग-हे सोम वन्वन्नवातः शत्रुभिरनभिभूतः देववीतिं यज्ञमभिगच्छ। शत्रुहंता रसन् इंद्राय पवस्व। बहुभिः स्पृहणीयं धनं देहि। वयं च सुवीर्यस्य पतयः स्याम; त१.२.६.७-म२-वन्वन् स (त१-सन्) देववीतिं देवानां पानार्थं हे सोम इंद्राय इंद्रार्थं वृत्रहा वृत्रस्य हंता (म२-वृत्रहंता) त्वं पवस्व क्षर। कथंभूत-स्त्वं। शग्धि शक्तिमानासि (त१-'मानसि)। त्वत्प्रसादाद्वयं पुरुश्चंद्रस्य रायः बह्वाल्हादकस्य रायः सुवीर्यस्य शोभनवीरा (त१.२-शोभना वीरा) यस्मिन् तादृशस्य धनस्य पतयः स्याम; म४-उक्तोर्थः; मु-वन्वन् सन् देववीतिं देवानां पानार्थं हे सोम इंद्राय इंद्रार्थं वृत्रहा वृत्रस्य हंता अवातः त्वं अभिपवस्व क्षर। कथंभूतस्त्वं। शग्धि शक्तिमान् महो महानसि। त्वत्प्रसादात् वयं पुरुश्चंद्रस्य बह्वाल्हादकस्य सुवीर्यस्य, शोभना वीरा यस्मिन् तादृशस्य राये धनस्य पतयः स्याम। ३. त३-म- प्र हिन्वानः। ४. ग-त३-म१.२.४.७-'तयोः' नास्ति।

अभि । त्रिऽपृष्ठम् । वृषणम् । वयःऽधाम् । आङ्गूषाणाम् । अवावशन्त । वाणीः ।
वना । वसानः । वरुणः । न । सिन्धून् । वि । रत्नऽधाः । दयते । वार्याणि ॥ २ ॥

ᵛत्रिपृष्ठम्। त्रीणि पृष्ठानि स्तोत्राणि द्रोणकलशादिस्थानानि[1] वा[1] सवनानि वा यस्य स तथोक्तः। तं ᵛवृषणं वर्षकं ᵛवयोधाम् अन्नस्य दातारं सोमम् ᵛआङ्गूषाणाम् आघोषवतां स्तोतॄणां ᵛवाणीः वाचः ᵛअभि ᵛअवावशन्त शब्दयन्ते। ᵛवना वनान्युदकानि ᵛवसानः आच्छादयन् ᵛवरुणो ᵛन वरुण इव ᵛसिन्धून् आच्छादयति तद्वत्। ᵛरत्नधाः रत्नानां दाता सोमः ᵛवार्याणि धनानि ᵛदयते प्रयच्छति स्तोतृभ्यः ॥

शूरग्रामः सर्ववीरः सहावाञ्जेता पवस्व सनिता धनानि ।
तिग्मायुधः क्षिप्रधन्वा समत्स्वषाळ्हः साह्वान्पृतनासु शत्रून् ॥ ३ ॥

शूरऽग्रामः । सर्वऽवीरः । सहावान् । जेता । पवस्व । सनिता । धनानि ।
तिग्मऽआयुधः । क्षिप्रऽधन्वा । समत्ऽसु । अषाळ्हः । सह्वान् । पृतनासु । शत्रून् ॥ ३ ॥

हे सोम ᵛपवस्व त्वम्। कीदृशस्त्वम्। ᵛशूरग्रामः शूराणां ग्रामः संघो यस्य सः। ᵛसर्ववीरः। सर्वे वीरा यस्य स तथोक्तः। ᵛसहावान् सहनवान् ᵛजेता जयशीलः ᵛसनिता संभक्ता ᵛधनानि ᵛतिग्मायुधः तीक्ष्णप्रहरणसाधनः ᵛक्षिप्रधन्वा क्षिप्रसहनशीलधन्वा ᵛसमत्सु संग्रामेषु ᵛअषाळ्हः असोढः[2] ᵛसाह्वान् अभिभवन्। कुत्र। ᵛपृतनासु शत्रुसेनासु। कान्। ᵛशत्रून् ॥

उरुगव्यूतिरभयानि कृण्वन्त्समीचीने आ पवस्वा पुरंधी ।
अपः सिषासन्नुषसः स्वर्गाः सं चिक्रदो महो अस्मभ्यं वाजान् ॥ ४ ॥

उरुऽगव्यूतिः । अभयानि । कृण्वन् ।
समीचीने इति सम्ऽईचीने । आ । पवस्व । पुरंधी इति पुरम्ऽधी ।
अपः । सिसासन् । उषसः । स्वः । गाः । सम् । चिक्रदः । महः । अस्मभ्यम् । वाजान् ॥४॥

हे सोम ᵛउरुगव्यूतिः विस्तीर्णमार्गस्त्वम् ᵛअभयानि स्तोतृभ्यः ᵛकृण्वन् कुर्वन् ᵛपुरंधी। इदं द्यावापृथिव्योर्नाम। ते[3] ᵛसमीचीने संगते कुर्वन् ᵛआ ᵛपवस्व आक्षर[4]। ᵛअपः ᵛउषसः ᵛस्वः आदित्यं ᵛगा रश्मींश्च ᵛसिषासन् पुष्ट्यर्थं संभक्तुमिच्छन् ᵛसं ᵛचिक्रदः संक्रन्दसे। ᵛमहः महतो महान्ति ᵛवाजान् अन्नानि ᵛअस्मभ्यं दातुमिति शेषः ॥

मत्सि सोम वरुणं मत्सि मित्रं मत्सीन्द्रमिन्दो पवमान विष्णुम् ।
मत्सि शर्धो मारुतं मत्सि देवान्मत्सि महामिन्द्रमिन्दो मदाय ॥ ५ ॥

मत्सि । सोम । वरुणम् । मत्सि । मित्रम् । मत्सि । इन्द्रम् । इन्दो इति । पवमान । विष्णुम् ।
मत्सि । शर्धः । मारुतम् । मत्सि । देवान् । मत्सि । महाम् । इन्द्रम् । इन्दो इति । मदाय ॥५॥

---

१. ग-त३-भ१.२.४.७-'द्रोण'...वा' नास्ति। २. ग-त-भ-असोढा। ३. ग-त१.२.३-भ-'ते' नास्ति। ४. भ१(२)-क्षर।

हे ᵛपवमान पूयमान ᵛइन्दो ᵛसोम त्वं वरुणादीन् ᵛमरुत्ः तर्पय तेषां ᵛमदाय । इन्द्रस्य प्राधान्यात् द्विरभिधानम् ॥

एवा राजेव क्रतुमाँ अमेन विश्वा घनिंघ्नद्दुरिता पवस्व ।
इन्दो सूक्ताय वचसे वयो धा यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

एव । राजाऽइव । क्रतुऽमान् । अमेन । विश्वा । घनिघ्नत् । दुःऽइता । पवस्व ।
इन्दो इति । सुऽउक्ताय । वचसे । वयः । धाः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥६॥

अनया स्तुतिमुपसंहरन् फलमाशास्ते । हे सोम ᵛएव एवं स्तुत इति शेषः । ᵛक्रतुमान् त्वं ᵛराजेव ᵛअमेन बलेन ᵛविश्वा सर्वाणि ᵛदुरिता दुरितानि ᵛघनिघ्नत् विनाशयन् ᵛपवस्व । हे ᵛइन्दो दीप्त सोम ᵛसूक्ताय शोभनमुदिताय ᵛवचसे अस्माकं स्तोत्राय तद्वचो विमृश्यार्थंवदवगत्य ᵛवयो ᵛधाः अन्नं धेहि । अन्नलाभस्य स्तुतिनिमित्तकत्वात्तस्य स्तुतिवचसः प्राधान्येनोक्तिः । शिष्टं सिद्धम् ॥ ॥२६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
सप्तमाष्टके तृतीयोऽध्यायः समाप्तः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
तृतीयं श्रुतितत्त्वज्ञः सप्तमस्याष्टकस्य सः ।
व्याख्याय सायणामात्यश्चतुर्थं व्याचिकीर्षति ॥

तत्र ' असर्जि ' इति षड्चं षष्ठं सूक्तं मारीचस्य कश्यपस्यार्षं त्रैष्टुभं पवमानसोमदेवताकम् । ' असर्जि कश्यपः ' इत्यनुक्रान्तम् । गतो विनियोगः ॥

असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमो मनीषी ।
दश स्वसारो अधि सानो अव्येऽजन्ति वह्निं सदनान्यच्छ ॥ १ ॥

असर्जि । वक्वा । रथ्ये । यथा । आजौ । धिया । मनोता । प्रथमः । मनीषी ।
दश । स्वसारः । अधि । सानौ । अव्ये । अजन्ति । वह्निम् । सदनानि । अच्छ ॥ १ ॥

ᵛवक्वा शब्दायमानः । ' वच परिभाषणे ' । वनिप् । एतादृशः[1] पवमानः सोमः ᵛआजौ । अजन्ति कर्मार्थमृत्विज इत्याजिर्यज्ञः । तस्मिन् ᵛधिया कर्मणा स्तोत्रेण वा साकम् ᵛअसर्जि सृज्यते पात्रेष्विति । तत्र दृष्टान्तः । ᵛरथ्ये ᵛयथा रथार्हं आजौ । संग्रामनामैतत् अजन्ति प्रक्षिपन्ति आयुधान्यत्रेति[2] । तस्मिन्नश्वो यथा धियाङ्गुल्या सृज्यते[3] तद्वत् । कीदृशः । ᵛमनोता यस्मिन् देवानां

१. ग-त३.४-म१.२.४.७-तादृशः । २. ग-आयूंष्यत्रेति । ३. त१.२.४.५.७-म२-मु-मृज्यते ।

मनांस्योतानि प्रोतानि सः। तथा च ब्राह्मणं—‘तस्मिन् हि तेषां मनांस्योतानि’ (ऐ. ब्रा. २.१०) इति। Vप्रथमः सर्वेषां देवानां मुख्यः Vमनीषी। मनस ईषा मनीषा स्तुतिः। तद्वान्। Vदश Vस्वसारः दशसंख्याका अङ्गुलयः Vसदनानि यज्ञगृहाणि Vअच्छ अभिमुखीकृत्य Vवह्निं वोढारं सोमं Vसानौ समुच्छ्रिते। अधिः सप्तम्यर्थानुवादकः। Vअव्ये अविमये अविवालेन कृते पवित्रे Vअजन्ति प्रेरयन्ति। ‘अज गतिक्षेपणयोः’॥

वीती जनस्य दिव्यस्य कव्यैरधि सुवानो नहुष्येभिरिन्दुः।
प्र यो नृभिरमृतो मर्त्येभिर्मर्मृजानोऽविभिर्गोभिरद्भिः ॥ २ ॥

वीती। जनस्य। दिव्यस्य। कव्यैः। अधि। सुवानः। नहुष्येभिः। इन्दुः।
प्र। यः। नृऽभिः। अमृतः। मर्त्येभिः। मर्मृजानः। अविऽभिः। गोभिः। अत्ऽभिः ॥२॥

Vकव्यैः साधुभिः स्तोतृभिः Vनहुष्येभिः मनुष्यैः Vसुवानः अभिषूयमाणः Vइन्दुः सोमः Vदिव्यस्य दिवि भवस्य Vजनस्य देवगणस्य Vवीती। ‘सुपां सुलुक्’’ इति चतुर्थ्याः पूर्वसवर्णदीर्घः। सोमभक्षणार्थं यज्ञम् Vअधि गच्छति। किंच Vअमृतः मरणधर्मरहितः Vयः सोमः Vनृभिः कर्मनेतृभिः Vमर्त्येभिः मर्त्यैः Vअविभिः अविमयैः पवित्रैस्तथा Vगोभिः आनडुहैरभिषवणचर्मभिः यद्वा गोविकारैः क्षीरादिभिः Vअद्भिः वसतीवर्यादिभिरुदकैश्च Vमर्मृजानः भृशं शोध्यमानः सन् यज्ञं प्रति गच्छति। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥

वृषा वृष्णे रोरुवदंशुरस्मै पवमानो रुशदीर्ते पयो गोः।
सहस्रमृक्वा पथिभिर्वचोविदध्वस्मभिः सूरो अण्वं वि याति ॥ ३ ॥

वृषा। वृष्णे। रोरुवत्। अंशुः। अस्मै। पवमानः। रुशत्। ईर्ते। पयः। गोः।
सहस्रम्। ऋक्वा। पथिऽभिः। वचःऽवित्। अध्वस्मऽभिः। सूरः। अण्वम्। वि। याति ॥३॥

Vवृषा कामानां वर्षको वृषेवाचरन् वा Vरोरुवत् भृशं शब्दायमानः Vअंशुः सोमः Vपवमानः पूयमानः सन् Vअस्मै Vवृष्णे वर्षकायेन्द्राय तदर्थं Vरुशत्। रोचतेरिदं रूपम्। आरोचमानं श्वेतं Vगोः Vपयः आश्रयणद्रव्यम् Vईर्ते गच्छति। ‘ईर गतौ’। आदादिकः। किंच Vऋक्वा। ‘छन्दसीवनिपौ’ इति मत्वर्थीयो वनिप्। स्तोत्रवानत एव Vवचोवित् स्तुतीनां ज्ञाता Vसूरः सुवीर्यः सर्वेषामग्निष्टोमादिकर्मणि प्रेरकः सोमः Vअध्वस्मभिः ध्वंसनवर्जितैर्हिंसारहितैः Vसहस्रं Vपथिभिः बहुभिर्मार्गैः Vअण्वं सूक्ष्मच्छिद्रं पवित्रं Vवि Vयाति। अतीत्य द्रोणकलशं गच्छति॥

रुजा दृळ्हा चिद्रक्षसः सदांसि पुनान इन्द ऊर्णुहि वि वाजान्।
वृश्चोपरिष्टात्तुजता वधेन ये अन्ति दूरादुपनायमेषाम् ॥ ४ ॥

रुज। दृळ्हा। चित्। रक्षसः। सदांसि। पुनानः। इन्दो इति। ऊर्णुहि। वि। वाजान्।
वृश्च। उपरिष्टात्। तुजता। वधेन। ये। अन्ति। दूरात्। उपऽनायम्। एषाम् ॥ ४ ॥

हे सोम Vदृळ्हा Vचित् दृढान्यपि परैरगन्तव्यत्वेन Vरक्षसः राक्षसस्य Vसदांसि स्थानानि पुराणि Vरुज विनाशय। ‘रुजो भङ्गे’ तौदादिकः। किंच हे Vइन्दो पवमान Vपुनानः पवित्रादिभिः पूयमानस्त्वं Vवाजान् तस्यान्नानि तस्य बलानि वा Vऊर्णुहि आच्छादय। आहरेत्यर्थः। तथा Vये

राक्षसाः ᐯउपरिष्टात् ऊर्ध्वदेशादागच्छन्ति ये वा ᐯअन्ति[1] अन्तिके समीप आगच्छन्ति ये च ᐯदूरात् दूरदेशाद्वागच्छन्ति तेषां राक्षसानाम् ᐯउपनायम् उपनेतारं स्वामिनं ᐯतुजता। तुजतिर्हिंसाकर्मा। हिंसकेन ᐯवधेन हननसाधनेनायुधेन त्वं ᐯवृश्च छिन्धि। 'ओव्रश्चू छेदने' तौदादिकः॥

स प्रत्नवन्नव्यसे विश्ववार सूक्ताय पथः कृणुहि प्राचः।
ये दुष्षहासो वनुषा बृहन्तस्ताँस्ते अश्याम पुरुकृत्पुरुक्षो ॥ ५ ॥

सः। प्रत्नऽवत्। नव्यसे। विश्वऽवार। सुऽउक्ताय। पथः। कृणुहि। प्राचः।
ये। दुःऽसहासः। वनुषा। बृहन्तः। तान्। ते। अश्याम। पुरुऽकृत्। पुरुक्षो इति पुरुऽक्षो ॥५॥

हे ᐯविश्ववार विश्वैः सर्वैर्वरणीय हे सोम ᐯसः तादृशस्त्वं ᐯप्रत्नवत् पुराण इव स्थितरत्वं ᐯनव्यसे नवीयसे नवतराय। नवशब्दादीयसुनीकारलोपश्छान्दसः। तस्मै ᐯसूक्ताय शोभनस्तुतिकाय मह्यं ᐯपथः मार्गान् ᐯप्राचः प्राचीनान् ᐯकृणुहि कुरु। सर्वत्र गमनं प्रयच्छेत्यर्थः। 'कृवि हिंसाकरणयोः'। 'धिन्विकृण्व्योरच्च' इत्युप्रत्ययः। हे ᐯपुरुकृत् बहुकर्मन् हे ᐯपुरुक्षो। 'टुक्षु शब्दे'। मितद्र्वादित्वाड्डुप्रत्ययः ( पा. सू. ३. २.१८०.१ )। बहुविधं शब्दायमान हे सोम ᐯदुःसहासः रक्षोभिः सोढुमशक्याः अत एव ᐯवनुषा। वनतिर्हिंसार्थः। हिंसया युक्ताः ᐯबृहन्तः महान्तः ᐯये त्वदीया अंशाः सन्ति ᐯतांस्ते तव स्वभूतानंशान् वयं यज्ञे ᐯअश्याम प्राप्नुयाम ॥

एवा पुनानो अपः स्व१र्गा अस्मभ्यं तोका तनयानि भूरि।
शं नः क्षेत्रमुरु ज्योतींषि सोम ज्योङ्नः सूर्यं दृशये रिरीहि ॥ ६ ॥

एव। पुनानः। अपः। स्वः। गाः। अस्मभ्यम्। तोका। तनयानि। भूरि।
शम्। नः। क्षेत्रम्। उरु। ज्योतींषि। सोम। ज्योक्। नः। सूर्यम्। दृशये। रिरीहि ॥६॥

हे सोम ᐯएव एवं ᐯपुनानः पूयमानः पवित्रादिभिः ᐯअस्मभ्यं ᐯरिरीहि प्रापय प्रयच्छ। किं तत्। ᐯअपः। अप इत्यन्तरिक्षनाम। आप्नोति सर्वमपि। अन्तरिक्षं ᐯस्वः स्वर्गं द्युलोकं ᐯगाः। सर्वैर्गम्यतेऽत्रेति गावः पृथिव्यः। ताः पृथिवीश्च ᐯभूरि। 'सुपां सुलुक्' इति द्वितीयाया लुक्। बहून् ᐯतोका पुत्रान् ᐯतनयानि। तन्वन्ति कुलमिति तनयाः पौत्राः। तांश्च तथा ᐯनः अस्मभ्यं ᐯक्षेत्रं ᐯशं सुखकरं कुरु। हे ᐯसोम ᐯज्योतींषि नक्षत्राणि ᐯउरु उरूणि अन्तरिक्षे विस्तीर्णानि कुरु। तथा ᐯनः अस्मभ्यं ᐯसूर्यम् आदित्यं ᐯज्योक्। चिरनामैतत्। चिरकालं ᐯदृशये द्रष्टुं[2] कुरु[3] ॥ ॥ १ ॥

'परि सुवानः' इति षळृचं सप्तमं सूक्तं मारीचस्य कश्यपस्यार्षं त्रैष्टुभं पवमानसोमदेवताकम्। 'परि सुवानः' इत्यनुक्रान्तम्। गतो विनियोगः॥

परि सुवानो हरिरंशुः पवित्रे रथो न सर्जि सनये हियानः।
आपच्छ्लोकमिन्द्रियं पूयमानः प्रति देवाँ अजुषत प्रयोभिः ॥ १ ॥

परि। सुवानः। हरिः। अंशुः। पवित्रे। रथः। न। सर्जि। सनये। हियानः।
आपत्। श्लोकम्। इन्द्रियम्। पूयमानः। प्रति। देवान्। अजुषत। प्रयःऽभिः ॥ १ ॥

१. त-'अन्ति' नास्ति। २. ग-द्रष्टुं शक्तं। ३. त-भ१.२.६-कुर्विति कुरु; भ४-कुर्विति।

सुवानः[1] अभिपूयमाणः हियानः ऋत्विग्भिः प्रेर्यमाणः हरिः हरितवर्णः अंशुः सोमः पवित्रे अविवालेन कृते दशापवित्रे परि सर्जि परिसृज्यते । किमर्थम् । सनये धनलाभाय देवानां संभजनाय वा । तत्र दृष्टान्तः । रथो न । रथो यथा युद्धे शत्रुवधार्थं शत्रुधनहरणार्थं[2] वा सृज्यते तद्वत् । किंच पूयमानः पवित्रेण सोऽयं सोमः इन्द्रियम् इन्द्रलिङ्गमिन्द्रस्य पर्याप्तं वा श्लोकं स्तोत्रम् आपत् आप्नोति । 'आप्लृ व्याप्तौ' । लृदित्वाद‍ङागमः । तथा स सोमः प्रयोभिः प्रीणयितृभिः हवीरूपैरन्नैः देवान् प्रति अजुषत प्रतिसेवते । 'जुषी प्रीतिसेवनयोः' ॥

अच्छा नृचक्षा असरत्पवित्रे नाम दधानः कविरस्य योनौ ।
सीदन् होतेव सदने चमूषूपेमग्मन्नृषयः सप्त विप्राः ॥ २ ॥

अच्छ । नृऽचक्षाः । असरत् । पवित्रे । नाम । दधानः । कविः । अस्य । योनौ ।
सीदन् । होताऽइव । सदने । चमूषु । उप । ईम् । अग्मन् । ऋषयः । सप्त । विप्राः ॥ २ ॥

नृचक्षाः नृणां द्रष्टा कविः क्रान्तप्रज्ञः सोमः नाम वसतीवर्याख्यमुदकं दधानः धारयन् अस्य एतादृशस्यात्मनः योनौ स्थाने पवित्रे अच्छ असरत् अभितः सरति । ततः सदने । सीदन्त्यत्रेति सदनो यज्ञः । तस्मिन् होतेव होता यथा देवान् स्तोतुमुपविशति तद्वद्देवानागन्तु- मुपविशन् सोमः चमूषु । चमन्ति[3] चम्वो ग्रहादयः । तेष्वभिसरति । अनन्तरं सप्तसंख्याकाः विप्राः मेधाविनो भरद्वाजः कश्यपो गोतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठ इत्येते ऋषयः ईम् एनं सोमम् उप अग्मन् स्तोत्रैरुपगच्छन्ति ॥

प्र सुमेधा गातुविद्विश्वदेवः सोमः पुनानः सद एति नित्यम् ।
भुवद्विश्वेषु काव्येषु रन्तानु जनान्यतते पञ्च धीरः ॥ ३ ॥

प्र । सुऽमेधाः । गातुऽवित् । विश्वऽदेवः । सोमः । पुनानः । सदः । एति । नित्यम् ।
भुवत् । विश्वेषु । काव्येषु । रन्ता । अनु । जनान् । यतते । पञ्च । धीरः ॥ ३ ॥

सुमेधाः । 'नित्यमसिच् प्रजामेधयोः' (पा. सू. ५. ४. १२२) इत्यसिच्समासान्तः । शोभनप्रज्ञः गातुवित् मार्गस्य वेत्ता । यद्वा । गातवः स्तोतारः । तेषां धनस्य लम्भयिता । विश्वदेवः सर्वदेवोपगतः । यद्वा । देवो देवनं दीप्तिः । व्यापकदीप्तियुक्तः । एतादृशः सोमः पुनानः पूयमानः सन् नित्यम् अविनश्वरं सदः स्थानं द्रोणकलशं प्र एति प्रगच्छति । ततः विश्वेषु सर्वेषु काव्येषु कविकर्मसु स्तोत्रेषु रन्ता भुवत् रमणशीलो भवति । रमेस्ताच्छीलिकस्तृन् । तथा धीरः प्राज्ञः सोऽयं पञ्च जनान् निषादपञ्चमांश्चतुरो वर्णान् अनु यतते अनुगन्तुं प्रयत्नं करोति । अनुगच्छतीति यावत् ॥

तव त्ये सोम पवमान निण्ये विश्वे देवास्त्रय एकादशासः ।
दश स्वधाभिरधि सानो अव्ये मृजन्ति त्वा नद्यः सप्त यह्वीः ॥ ४ ॥

तव । त्ये । सोम । पवमान । निण्ये । विश्वे । देवाः । त्रयः । एकादशासः ।
दश । स्वधाभिः । अधि । सानौ । अव्ये । मृजन्ति । त्वा । नद्यः । सप्त । यह्वीः ॥ ४ ॥

१. त-भ२– 'सुवानः' नास्ति । २. ग-त-भ६–°धनाहरणार्थं; भ४–°धनाय हरणार्थं । ३. ग–चमंतीति ।

हे पवमान पूयमान हे सोम तव स्वभूताः त्ये[1] ते प्रसिद्धाः[1] त्रय एकादशासः। पूरणार्थे डट्प्रत्ययः। त्रयस्त्रिंशत्संख्याकाः विश्वे सर्वे देवाः निण्ये। अन्तर्हितनामैतत्। अन्तर्हिते स्थाने द्युलोके वर्तन्ते। तादृशं त्वां दशसंख्याका अङ्गुलयः अधि सानौ अधिकं समुच्छ्रिते अव्ये अविमये पवित्रे स्वधाभिः उदकैः मृजन्ति शोधयन्ति। किंच यह्वीः। 'वा छन्दसि' इति पूर्वसवर्णदीर्घः। यह्व्यो महत्यः सप्त सप्तसंख्याका गङ्गाद्याः नद्यः त्वा त्वां मृजन्ति। वसतीवर्यात्मकैरेकधनात्मकैश्च स्वीयैरुदकैस्त्वां मार्जयन्तीत्यर्थः ॥

तन्नु सत्यं पवमानस्यास्तु यत्र विश्वे कारवः संनसन्त।
ज्योतिर्यदह्ने अकृणोदु लोकं प्रावन्मनुं दस्यवे करभीकम् ॥ ५ ॥

तत्। नु। सत्यम्। पवमानस्य। अस्तु। यत्र। विश्वे। कारवः। सम्ऽनसन्त।
ज्योतिः। यत्। अह्ने। अकृणोत्। ऊँ इति। लोकम्।
प्र। आवत्। मनुम्। दस्यवे। करिति कः। अभीकम् ॥ ५ ॥

सत्यं सत्यभूतं तत् प्रसिद्धं पवमानस्य सोमस्य स्थानं नु क्षिप्रमस्माकम् अस्तु। यत्र यस्मिन् स्थाने विश्वे सर्वे कारवः स्तोतारः संनसन्त स्तोतुं संगच्छन्ते तत्स्थानमस्तु। अस्य सोमस्य यत् ज्योतिः अह्ने दिवसाय लोकम् आलोकं प्रकाशम् अकृणोत् करोति। उ इत्यवधारणे। तज्ज्योतिः मनुम् एतन्नामानं राजर्षिं प्रावत् प्रकर्षेणारक्षत्। तथा सोमः स्वीयं तेजः दस्यवे सर्वस्योपक्षपयित्रेऽसुराय अभीकम् अभिगमनशीलं कः अकार्षीत्। करोतेर्लुङि 'मन्त्रे घस०' इति च्लेर्लुक् ॥

परि सद्मेव पशुमान्ति होता राजा न सत्यः समितीरियानः।
सोमः पुनानः कलशाँ अयासीत्सीदन्मृगो न महिषो वनेषु ॥ ६ ॥

परि। सद्मऽइव। पशुऽमन्ति। होता। राजा। न। सत्यः। सम्ऽइतीः। इयानः।
सोमः। पुनानः। कलशान्। अयासीत्। सीदन्। मृगः। न। महिषः। वनेषु ॥ ६ ॥

होता देवानामाह्वातर्त्विक् पशुमन्ति पशुमतः सद्मेव यज्ञगृहान्[2] यथोपगच्छति[3]। किंच राजा न यथा राजा सत्यः सत्यकर्मा सन् समितीः। संग्रामनामैतत् सम्यक् प्राप्यते योद्धृभिरत्रेति। तान् संग्रामान् इयानः गच्छन् भवति तथा पुनानः[4] सोमः वनेषु वननीयेषु वसतीवर्याख्येषूदकेषु सीदन् मृगो न महिषः महिषाख्यो मृग इवोदकेषु तिष्ठन् कलशान् द्रोणाभिधानान् अयासीत् परियाति। यद्वा। महिषो महान् पूज्यो वा सोमः कलशान् परिगच्छतीति ॥ ॥२॥

'साकमुक्षः' इति पञ्चर्चमष्टमं सूक्तं गौतमस्य नोधस आर्षम्। पूर्ववच्छन्दोदेवते। तथा चानुक्रम्यते—'साकमुक्षः पञ्च नोधाः' इति। गतो विनियोगः ॥

साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः।
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ १ ॥

१. त–'त्ये ते प्रसिद्धाः' नास्ति। २. ग–यज्ञगृहान् परि याति। ३. त१–°गच्छंते; त२.४.५.७. भ६–°गच्छंत; त३.६-भ१.२.४.७–°गच्छंति; मु–यथा परिगच्छते। ४. ग-त३-भ५.६–पुनानः पूयमानः; भ४–पुनानः पूयमानाः।

साकम्ऽउक्षः । मर्जयन्त । स्वसारः । दश । धीरस्य । धीतयः । धनुत्रीः ।
हरिः । परि । अद्रवत् । जाः । सूर्यस्य । द्रोणम् । ननक्षे । अत्यः । न । वाजी ॥ १ ॥

ᵛसाकमुक्षः सह युगपत् सिञ्चन्त्यः । 'उक्ष सेचने'। क्विपि रूपम्। तादृश्यः ᵛस्वसारः कर्मकरणार्थमितस्ततः सुष्ठु गच्छन्त्योऽङ्गुलयः ᵛमर्जयन्त सोमं शोधयन्ति। 'मृजू शौचालंकारयोः'। तथा ᵛदश दशसंख्याकाः ᵛधीतयः। अङ्गुलिनामैतत्। अङ्गुलयः ᵛधीरस्य समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य ᵛधनुत्रीः प्रेरयित्र्यो भवन्ति। ततः ᵛहरिः हरितवर्णः सोमः ᵛसूर्यस्य ᵛजाः प्रादुर्भूता जाया दिशस्ताः ᵛपर्यद्रवत् परितो गच्छति। सूर्यतेजसा ह्याविर्भवन्तीति दिशां तस्य जात्वम्। ᵛअत्यः अतनशीलः ᵛवाजी ᵛन अश्व इव स्थितः सोमः ᵛद्रोणं कलशं ᵛननक्षे व्याप्नोति। नक्षतिर्व्याप्तिकर्मा ॥

**सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः ।**
**मर्यो न योषामभि निष्कृतं यन्त्सं गच्छते कलश उस्रियाभिः ॥ २ ॥**

सम् । मातृऽभिः । न । शिशुः । वावशानः । वृषा । दधन्वे । पुरुऽवारः । अत्ऽभिः ।
मर्यः । न । योषाम् । अभि । निःऽकृतम् । यन् । सम् । गच्छते । कलशे । उस्रियाभिः ॥ २ ॥

ᵛवावशानः देवान् कामयमानः ᵛवृषा कामानां वर्षकोऽत एव ᵛपुरुवारः बहुभिर्वरणीयः सोमः ᵛअद्भिः मातृभूताभिर्वसतीवरीभिः ᵛसं ᵛदधन्वे संधार्यते। तत्र दृष्टान्तः। ᵛमातृभिर्न ᵛशिशुः। कामयमानः पुत्रो यथा मातृभिः पयःप्रदानेन संधार्यते। धविर्गत्यर्थः। कर्मणि लिटि रूपम्। ᵛमर्यो ᵛन मनुष्यो यथा ᵛयोषां युवतिमभिगच्छति तद्वत् ᵛनिष्कृतं संस्कृतं स्वस्थानम् ᵛअभि ᵛयन् अभिगच्छन् ᵛकलशे द्रोणाभिधाने ᵛउस्रियाभिः अद्भिर्गोविकारैः क्षीरादिभिर्वा ᵛसं ᵛगच्छते। गमेरकर्मकात् 'समो गम्यृच्छि' इत्यात्मनेपदम् ॥

**उत प्र पिप्य ऊधरघ्न्याया इन्दुर्धाराभिः सचते सुमेधाः ।**
**मूर्धानं गावः पयसा चमूष्वभि श्रीणन्ति वसुभिर्न निक्तैः ॥ ३ ॥**

उत । प्र । पिप्ये । ऊधः । अघ्न्यायाः । इन्दुः । धाराभिः । सचते । सुऽमेधाः ।
मूर्धानम् । गावः । पयसा । चमूषु । अभि । श्रीणन्ति । वसुऽभिः । न । निक्तैः ॥ ३ ॥

ᵛउत अपि च ᵛअघ्न्यायाः। अघ्न्येति गोनाम। अहन्तव्याया गोः ᵛऊधः पयःस्थानं सोमः ᵛप्र ᵛपिप्ये। ओषध्यादिषु सोमः प्रविश्य प्रकर्षेणाप्याययति। प्यायतेर्लिटि 'लिड्यङोश्च' इति पीभावः। ᵛसुमेधाः शोभनप्रज्ञः सोऽयम् ᵛइन्दुः सोमः ᵛधाराभिः ᵛसचते समवैति संगच्छते। ततः ᵛगावः ᵛचमूषु। चमन्ति भक्षयन्त्यत्र सोममिति चम्वो ग्रहादयः। तेषु स्थितं ᵛमूर्धानं समुच्छ्रितमिमं सोमं ᵛपयसा श्वेतेन ᵛअभि ᵛश्रीणन्ति अभित आच्छादयन्ति। तत्र दृष्टान्तः। ᵛनिक्तैः प्रक्षालितैः ᵛवसुभिर्न वस्त्रैर्यथाच्छादयन्ति तद्वत् ॥

**स नो देवेभिः पवमान रदेन्दो रयिमश्विनं वावशानः ।**
**रथिरायतामुशती पुरंधिरस्मद्र्य१गा दावने वसूनाम् ॥ ४ ॥**

सः । नः । देवेभिः । पवमान । रद । इन्दो इति । रयिम् । अश्विनम् । वावशानः ।
रथिरायताम् । उशती । पुरम्ऽधिः । अस्मद्र्यक् । आ । दावने । वसूनाम् ॥ ४ ॥

हे पवमान पूयमान सोम सः तादृशस्त्वं नः अस्मभ्यं देवेभिः देवैः सह रद प्रयच्छ । किं तत् उच्यते । हे इन्दो पात्रेषु क्षरन् सोम वावशानः कामयमानः सन् अश्विनम् अश्ववन्तं रयिं धनं प्रयच्छेति । किंच रथिरायताम् । रथो येषामस्तीति रथिराः । 'मेधारथाभ्याम्॰' इतीरच्-प्रत्ययः । तद्वदाचरतस्तानिच्छतो वा पुरुषान् उशती कामयमाना पुरंधिः त्वदीया बहुविधा धीः वसूनां धनानां दावने दानाय अस्मद्र्यक् अस्मदभिमुखी आ आगच्छतु । यद्वा । रथिरायतामिति धनानां विशेषणम् । बलवतां धनानामिति । अस्मद्र्यक् । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (पा. सू. ६. ३. ९२) इत्यद्र्यादेशः । अद्रिमध्योरन्तोदात्तत्वनिपातनात् 'उदात्तस्वरितयोर्यणः॰' इति स्वरितः[1] ॥

नू नो रयिमुप मास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम् ।
प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ५ ॥

नु । नः । रयिम् । उप । मास्व । नृऽवन्तम् । पुनानः । वाताप्यम् । विश्वऽचन्द्रम् ।
प्र । वन्दितुः । इन्दो इति । तारि । आयुः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ ५ ॥

हे सोम पुनानः पूयमानस्त्वं नः अस्मभ्यं नु क्षिप्रं नृवन्तं मनुष्यैर्युक्तम् । छान्दसं मतुपो वत्वम् । तादृशं रयिं धनम् उप मास्व उपनिर्मिमीष्व । उपकुर्वित्यर्थः । किंच विश्वचन्द्रं सर्वेषामाह्लादकं वाताप्यम् । उदकनामैतत् । उदकं च कुरु । तथा हे इन्दो सोम वन्दितुः तव स्तोतुः आयुः जीवनं प्र तारि त्वया वर्धितमस्तु । सोऽयं सोमः धियावसुः बुद्ध्या कर्मणा वा प्राप्तधनः प्रातः काले वा सवने वा[2] मक्षु शीघ्रमस्मदीयं यज्ञं प्रति जगम्यात् आगच्छेत् । गमेर्लिङि 'बहुलं छन्दसि' इति शपः श्लुः ॥ ॥ ३ ॥

'अधि यत्' इति पञ्चर्चं नवमं सूक्तमाङ्गिरसस्य कण्वस्यार्षम्[3] । तथानुक्रम्यते—'अधि यत्कण्वः' इति । पूर्ववच्छन्दोदेवते । गतो विनियोगः ॥

अधि यदस्मिन्वाजिनीव शुभः स्पर्धन्ते धियः सूर्ये न विशः ।
अपो वृणानः पवते कवीयन्व्रजं न पशुवर्धनाय मन्म ॥ १ ॥

अधि । यत् । अस्मिन् । वाजिनिऽइव । शुभः । स्पर्धन्ते । धियः । सूर्ये । न । विशः ।
अपः । वृणानः । पवते । कविऽयन् । व्रजम् । न । पशुऽवर्धनाय । मन्म ॥ १ ॥

यत् यदा अस्मिन् सोमे वाजिनीव शुभः अश्वे यथा वस्त्रप्रभृत्यलंकारा भवन्ति । यदा वास्मिन् सोमे सूर्ये न यथा सूर्ये विशः रश्मय उदिता भवन्ति । तदा[4] धियः अङ्गुलयः अधि स्पर्धन्ते । अहं पुरस्ताच्छोधयाम्यहं पुरः शोधयामीत्यहमहमिकयोपतिष्ठन्ति । ततोऽयं सोमः अपः वसतीवरीः वृणानः आच्छादयन् पवते पात्रेषु क्षरति । कलशानभिगच्छति[5] । कीदृशः ।

१. त-भ२.६-मु-तित्स्वरितः । २. त-भ-'वा' नास्ति । ३. त-भ-काण्वस्यार्षं । ४. त३-भ२. ६.७-तथा । ५. भ१(२)-कलशानभिगच्छाति ।

ˇकवीयन् कविरिवाचरन्। यद्वा। कवयः स्तोतारः। तानिच्छन्। तत्र दृष्टान्तः। ˇव्रजं ˇन ˇमन्म मननीयं[1] गवां गोष्ठं ˇपशुवर्धनाय पशूनां वर्धनाय गोपालः परिगच्छति। तथा देवानां प्रीणनाय पात्राणि प्रति पवत इति ॥

द्विता व्यूर्ण्वन्नमृतस्य धाम स्वर्विदे भुवनानि प्रथन्त।
धियः पिन्वानाः स्वसरे न गाव ऋतायन्तीरभि वावश्र इन्दुम् ॥ २ ॥

द्विता। विऽऊर्ण्वन्। अमृतस्य। धाम। स्वःऽविदे। भुवनानि। प्रथन्त।
धियः। पिन्वानाः। स्वसरे। न। गावः। ऋतऽयन्तीः। अभि। वावश्रे। इन्दुम् ॥ २ ॥

ˇअमृतस्य उदकस्य ˇधाम धारकं स्थानमन्तरिक्षं सोमः ˇद्विता द्विधा ˇव्यूर्ण्वन् उभयतः स्वतेजसाच्छादयन् मध्येन गच्छति। ततः ˇस्वर्विदे सर्वज्ञाय तस्मै सोमाय ˇभुवनानि ˇप्रथन्त विस्तीर्णानि भवन्ति। तस्य रश्मीनां संचरणार्थं प्रथन्त इत्यर्थः। अथ ˇपिन्वानाः प्रीणयित्र्यः ˇधियः स्तुतिलक्षणा वाचः ˇऋतायन्तीः यज्ञमिच्छन्त्यः सत्यस्तमिमम् ˇइन्दुं सोममभिलक्ष्य स्वसरे यागाहनि ˇवावश्रे शब्दायन्ते। यद्वा। सोमं कामयन्ते। तत्र दृष्टान्तः। ˇगावो ˇन यथा पिन्वमानाः पयः क्षरन्त्यो गावः ˇस्वसरे। सुष्ठु अस्यन्ते प्रेर्यन्ते गावोऽत्रेति स्वसरो गोष्ठम्। तस्मिन्नच्छाभिलक्ष्य शब्दं कुर्वन्ति तद्वत् ॥

परि यत्कविः काव्या भरते शूरो न रथो भुवनानि विश्वा।
देवेषु यशो मर्ताय भूषन्दक्षाय रायः पुरुभूषु नव्यः ॥ ३ ॥

परि। यत्। कविः। काव्या। भरते। शूरः। न। रथः। भुवनानि। विश्वा।
देवेषु। यशः। मर्ताय। भूषन्। दक्षाय। रायः। पुरुऽभूषु। नव्यः ॥ ३ ॥

ˇकविः क्रान्तप्रज्ञः सोमः ˇकाव्या काव्यानि कवेः' कर्माणि स्तोत्राणि ˇयत् यदा ˇपरि ˇभरते परितो बिभर्ति। परिगच्छतीति यावत्। कथमिव। ˇशूरो ˇन यथा शूरः शत्रूणां बाधकः ˇरथः तदीयः ˇविश्वा ˇभुवनानि सांग्रामिकाणि भूतानि परियाति तद्वत्। तदानीं ˇदेवेषु स्थितं ˇयशः व्यापकं धनं ˇमर्ताय मनुष्याय स्तोत्रे ˇभूषन्। भवतेरन्तर्भावितण्यर्थात् सनि रूपम्। भावयितुमिच्छन् सोमः ˇरायः आत्मना दत्तस्य धनस्य ˇदक्षाय वृद्ध्यर्थं ˇपुरुभूषु बहुषु यज्ञभवनेषु ˇनव्यः स्तोतव्यो भवति। 'णु स्तुतौ'। अचो यत् ॥

श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति।
श्रियं वसाना अमृतत्वमायन्भवन्ति सत्या समिथा मितद्रौ ॥ ४ ॥

श्रिये। जातः। श्रिये। आ। निः। इयाय। श्रियम्। वयः। जरितृऽभ्यः। दधाति।
श्रियम्। वसानाः। अमृतऽत्वम्। आयन्। भवन्ति। सत्या। सम्ऽइथा। मितऽद्रौ ॥ ४ ॥

स सोमः ˇश्रिये ˇजातः संपदर्थं प्रादुर्भूतो भवति। तदेवाह। ˇश्रिये श्र्यर्थमेव ˇआ ˇनिरियाय। अंशुभ्य आभिमुख्येन निर्गच्छति। निर्गतश्च स सोमः ˇजरितृभ्यः स्तोतृभ्यः ˇश्रियं

---

१. ग-त३.४-भ४.५.६—मननीयं बोद्धव्यं रक्षितव्यं; भ१.७—बोद्धव्यं गव्यं; भ२—बोद्धव्यं।

वयः अन्नं जीवनं वा दधाति विदधाति प्रयच्छति। तेन दत्तां श्रियं वसानाः आच्छादयन्तः स्तोतारः अमृतत्वं देवत्वममरणं[1] वा आयन् प्राप्नुवन्। तस्मिन् मितद्रौ मितगमने सोमे समिथा। युद्धनामैतत् सम्यक् प्राप्यतेऽत्रेति। 'समीणः' (उ. सू. २. ११) इत्येतेः सपूर्वस्य थक्प्रत्ययः। तानि युद्धानि सत्या सत्यानि यथार्थानि भवन्ति न तु वितथानि। तेन सोमेन पराजितानि भवन्तीत्यर्थः॥

इषमूर्जमभ्य१र्षाश्वं गामुरु ज्योतिः कृणुहि मत्सि देवान्।
विश्वानि हि सुषहा तानि तुभ्यं पवमान बाधसे सोम शत्रून्॥ ५॥

इषम्। ऊर्जम्। अभि। अर्ष। अश्वम्। गाम्। उरु। ज्योतिः। कृणुहि। मत्सि। देवान्।
विश्वानि। हि। सुऽसहा। तानि। तुभ्यम्। पवमान। बाधसे। सोम। शत्रून्॥ ५॥

हे सोम इषम् अन्नम् ऊर्जम् अन्नरसं च अस्मभ्यम् अभ्यर्ष अभिगमय। किंच अश्वं वाहनं गां पयःप्रदानेन यज्ञस्य साधनभूतां गां च। तथा उरु महत् ज्योतिः सूर्याख्यं कृणुहि जगदालोकनार्थं कुरु। किंच देवान् इन्द्रादीन् मत्सि सोमेन तर्पय। मदेर्लेटि 'बहुलं छन्दसि' इति विकरणस्य लुक्। वाक्यभेदादनिघातः। अपि च हे सोम तुभ्यं विश्वानि सर्वाणि रक्षांसि सुषहा सुसहान्यनायासेनैवाभिभवितुं शक्यानि भवन्ति। हिरवधारणे। अत एव हे पवमान पूयमान हे सोम सर्वान् शत्रून् बाधसे जहि॥ ॥ ४॥

'कनिक्रन्ति' इति पञ्चर्चं दशमं सूक्तं कण्वपुत्रस्य प्रस्कण्वस्यार्षम्। तथानुक्रम्यते—'कनिक्रन्ति प्रस्कण्वः' इति। पूर्ववच्छन्दोदेवते। गतो विनियोगः॥

कनिक्रन्ति हरिरा सृज्यमानः सीदन्वनस्य जठरे पुनानः।
नृभिर्यतः कृणुते निर्णिजं गा अतो मतीर्जनयत स्वधाभिः॥ १॥

कनिक्रन्ति। हरिः। आ। सृज्यमानः। सीदन्। वनस्य। जठरे। पुनानः।
नृऽभिः। यतः। कृणुते। निःऽनिजम्। गाः। अतः। मतीः। जनयत। स्वधाभिः॥ १॥

सृज्यमानः आ समन्तात् सृज्यमानोऽभिषूयमाणः हरिः हरितवर्णः सोमः कनिक्रन्ति पुनःपुनः शब्दायते। क्रन्दतेर्यङ्लुकि तिपीडभावे 'दाधर्ति दर्धर्ति' इत्यादिना निपातनादभ्यासस्य निगागमः। अभ्यस्तस्वरः। तथा पुनानः पूयमानः वनस्य वननीयस्य द्रोणकलशस्य जठरे सीदन् उपविशन् शब्दायते। किंच नृभिः कर्मनेतृभिर्ऋत्विग्भिः यतः संयतः सोमः गाः गोविकारान् क्षीरादीन्याच्छादयन् निर्णिजम् आत्मनो रूपं कृणुते ग्रहादिषु करोति। अतः अस्मै सोमाय मतीः मननीयाः स्तुतीः स्वधाभिः हविर्भिः सह जनयत स्तोतारः अजनयन्[2]। अस्यान्तादेशाभावः छान्दसः[3]। यद्वा। हे स्तोतारः अस्मै सोमाय स्तुतीर्जनयत उत्पादयत। कुरुतेति यावत्॥

हरिः सृजानः पथ्यामृतस्येयर्ति वाचमरितेव नावम्।
देवो देवानां गुह्यानि नामाविष्कृणोति बर्हिषि प्रवाचे॥ २॥

१. ग–देवत्वगमरणत्वं। २. ग–जनयंतु। ३. ग–छांदसस्तादेशः; ग१–छांदादेशः; ग२.४–छांदसोदादेशः।

हरिः । सृजानः । पथ्याम् । ऋतस्य । इयर्ति । वाचम् । अरिताऽइव । नावम् ।
देवः । देवानाम् । गुह्यानि । नाम । आविः । कृणोति । बर्हिषि । प्रऽवाचे ॥ २ ॥

ᵛसृजानः सृज्यमानः ᵛहरिः हरितवर्णः सोमः ᵛऋतस्य सत्यभूतस्य[1] ᵛपथ्यां पथि भवां ᵛवाचं दैवीम् ᵛइयर्ति प्रेरयति। तत्र दृष्टान्तः। ᵛअरितेव जनांस्तीरं प्रापयन्नाविकः ᵛनावं यथा प्रेरयति तद्वत्। 'ऋ गतौ'। जौहोत्यादिकः। 'अर्तिपिपर्त्योः॰' इत्यभ्यासस्येत्वम्। ततः ᵛदेवः दीप्यमानः सोमः ᵛदेवानाम् इन्द्रादीनां ᵛगुह्यानि अन्तर्हितानि ᵛनाम नामानि शरीराणि ᵛप्रवाचे प्रकर्षेण वाचयित्रे स्तोत्रे ᵛबर्हिषि यज्ञे ᵛआविष्कृणोति स्तोतुमाविष्करोति ॥

अपामिवेदूर्मयस्तर्तुराणाः प्र मनीषा ईरते सोममच्छ ।
नमस्यन्तीरुप च यन्ति सं चा च विशन्त्युशतीरुशन्तम् ॥ ३ ॥

अपाम्ऽइव । इत् । ऊर्मयः । तर्तुराणाः । प्र । मनीषाः । ईरते । सोमम् । अच्छ ।
नमस्यन्तीः । उप । च । यन्ति । सम् । च । आ । च । विशन्ति । उशतीः । उशन्तम् ॥३॥

ᵛअपामिव यथोदकानाम् ᵛऊर्मयः त्वरन्ते[2]। ᵛइत् इति पूरणः। तद्वत् ᵛतर्तुराणाः कर्मणि देवान् स्तोतुं त्वरमाणाः। 'तुर त्वरणे'। जौहोत्यादिकः। यङ्लुगन्तस्य शानचि रूपम्। अभ्यासस्यावर्णश्च रेफादेशश्छान्दसः। अभ्यस्तस्वरः। तादृशा ऋत्विजः ᵛमनीषाः मनस ईशित्रीः स्तुतीः ᵛसोममच्छ सोमं प्रति ᵛप्र ᵛईरते प्रेरयन्ति[3]। ᵛनमस्यन्तीः नमस्यन्त्यः सोमं पूजयन्त्यः सत्यः तम् ᵛउप ᵛयन्ति ᵛच उपगच्छन्ति तमेव ᵛसं यन्ति ᵛच। 'चवायोगे प्रथमा' इति न निघातः। ततः ᵛउशतीः कामयमानाः स्तुतयः ᵛउशन्तं कामयमानं सोमम् ᵛआ ᵛविशन्ति ᵛच[4] ॥

तं मर्मृजानं महिषं न सानावंशुं दुहन्त्युक्षणं गिरिष्ठाम् ।
तं वावशानं मतयः सचन्ते त्रितो बिभर्ति वरुणं समुद्रे ॥ ४ ॥

तम् । मर्मृजानम् । महिषम् । न । सानौ । अंशुम् । दुहन्ति । उक्षणम् । गिरिऽस्थाम् ।
तम् । वावशानम् । मतयः । सचन्ते । त्रितः । बिभर्ति । वरुणम् । समुद्रे ॥ ४ ॥

ᵛमर्मृजानं यष्टृभिः परिचर्यमाणं ᵛमहिषं ᵛन महिषाख्यं मृगमिवं ᵛसानौ समुच्छ्रिते देशे वर्तमानम् ᵛउक्षणं कामानां सेक्तारं ᵛगिरिष्ठाम् अभिषवार्थं ग्रावसु निष्ठितं[5] ᵛतं तादृशं प्रसिद्धम् ᵛअंशुं सोमं ᵛदुहन्ति ऋत्विजो दुहते। 'ग्रावाणो वत्सा ऋत्विजो दुहन्ति' (तै. सं. ६.२.११.४) इति तैत्तिरीयब्राह्मणम्। ᵛतं तादृशं ᵛवावशानं कामयमानं सोमं ᵛमतयः मन्तव्याः स्तुतयः ᵛसचन्ते समवयन्ति। सेवन्त इति यावत्। ततः ᵛत्रितः त्रिषु स्थानेषु वर्तमान इन्द्रः ᵛवरुणं शत्रूणां निवारकमेनं सोमं ᵛसमुद्रे अन्तरिक्षे ᵛबिभर्ति शत्रुवधार्थं धारयति। यद्वा। त्रितस्त्रिषु स्थानेषु द्रोणाधवनीयपूतभृदाख्येषु कलशेषु ततो[6] विततः[6] सोमः शत्रूणां निवारकमिन्द्रं द्युलोके बिभर्ति पोषयति ॥

---

१. भ१(२)–सत्यभूतस्य यज्ञस्य। २. ग–तरंगाः। ३. ग–प्रेरयंति नो स्तुतिः; त३-भ५–प्रेरयंति ता स्तुतिः। ४. ग-त२.३.४-भ१.२.४.५.७–च प्रविशंति च। ५. ग-त३-भ१.२.४.७–तिष्ठंतं। ६. त१–स्थितः लताः; त७-मु–स्थितः।

इष्यन्वाचमुपवक्तेव होतुः पुनान इन्दो वि ष्या मनीषाम् ।
इन्द्रश्च यत्क्षयथः सौभगाय सुवीर्यस्य पतयः स्याम ॥ ५ ॥

इष्यन् । वाचम् । उपवक्ताऽइव । होतुः । पुनानः । इन्दो इति । वि । स्य । मनीषाम् ।
इन्द्रः । च । यत् । क्षयथः । सौभगाय । सुऽवीर्यस्य । पतयः । स्याम ॥ ५ ॥

हे इन्दो सोम वाचं स्तुतिम् इष्यन् प्रेरयन् होतुः उपवक्तेव यथाध्वर्युः प्रतिगरं कुर्वन् प्रोत्साहयति तद्वत् स्तोतॄणां शंसनाय प्रोत्साहं कुर्वन् पुनानः पूयमानस्त्वं मनीषां बुद्धिं वि ष्य विमुञ्च। किंतु बुद्धिं धनप्रदानाभिमुखीं कुरु। किंच यत् यदा इन्द्रश्च त्वं च सह यज्ञे क्षयथः निवसथः तदा स्तोतारो वयं सौभगाय सौभाग्याय स्याम। किंच सुवीर्यस्य शोभनवीर्योपेतस्य धनस्य पतयः स्वामिनः स्याम भवेम ॥ ॥ ५ ॥

'प्र सेनानीः' इति चतुर्विंशत्यृचमेकादशं सूक्तं दिवोदासपुत्रस्य प्रतर्दनाख्यस्य राजर्षेरिदं त्रैष्टुभं पवमानसोमदेवताकम्। तथा चानुक्रम्यते-'प्र सेनानीश्चतुर्विंशतिर्दैवोदासिः प्रतर्दनः' इति। गतः सूक्तविनियोगः ॥

प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना ।
भद्रान्कृण्वन्निन्द्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते ॥ १ ॥

प्र । सेनाऽनीः । शूरः । अग्रे । रथानाम् । गव्यन् । एति । हर्षते । अस्य । सेना ।
भद्रान् । कृण्वन् । इन्द्रऽहवान् । सखिऽभ्यः । आ । सोमः । वस्त्रा । रभसानि । दत्ते ॥ १ ॥

सेनानीः सेनानामग्र उपनेता शूरः शत्रूणां बाधकः सोमः गव्यन् शत्रूणां गा इच्छन्। यद्वा। यजमानानां पश्वादिकमिच्छन्। रथानाम् अग्रे रथानां पुरतः प्र एति प्रकर्षेण संग्रामं गच्छति। अस्य[1] सोमस्य सेना च हर्षते हृष्यति। वाक्यभेदादनिघातः। किंच सखिभ्यः समानख्यानेभ्यो यजमानेभ्यः इन्द्रहवान् तैः कृतानीन्द्रस्याह्वानानि भद्रान् कल्याणानि यथार्थानि कृण्वन् कुर्वन्। आहूतो हीन्द्रः सोमं पीत्वा कामान् प्रयच्छतीति। रभसानि इन्द्रस्य वेगेनागमने निमित्तानि[2] वस्त्राण्याच्छादकानि पयःप्रभृतीन्याश्रयणानि आ दत्ते आगृह्णाति ॥

समस्य हरिं हरयो मृजन्त्यश्वहयैरनिशितं नमोभिः ।
आ तिष्ठति रथमिन्द्रस्य सखा विद्वाँ एना सुमतिं यात्यच्छ ॥ २ ॥

सम् । अस्य । हरिम् । हरयः । मृजन्ति । अश्वऽहयैः । अनिऽशितम् । नमःऽभिः ।
आ । तिष्ठति । रथम् । इन्द्रस्य । सखा । विद्वान् । एना । सुऽमतिम् । याति । अच्छ ॥ २ ॥

हरयः हरन्त्यभिपुण्वन्ति सोममित्यृत्विजोऽङ्गुलयो वा[3] हरिं हरितवर्णम् अस्य सोमस्य कारणमंशुं सं मृजन्ति सम्यगभिपुण्वन्ति। ततः सोमः नमोभिः नामयितृभिः अश्वहयैः व्याप्तैरपि[4] अनिशितम् असंस्कृतमयुक्तमननुगतं रथं रमणसाधनमात्मीयं दशापवित्रम् आ

---

१. त-भ६-तस्य। २. भ६-मु-निमित्तानि वस्त्रा। ३. ग-त३-भ-वा हरयः। ४. ग-व्याप्तैरश्वैरपि; त१.२.६.७-व्याप्तैर्गमनैरपि।

ᐯतिष्ठति आसीदति । अनन्तरम् ᐯइन्द्रस्य ᐯसखा सखिभूतः ᐯविद्वान् प्राज्ञः सोमः ᐯएना एतेन रथेन पवित्रेण ᐯसुमतिं शोभनस्तुतिकं स्तोतारम् ᐯअच्छ ᐯयाति अभिगच्छति । तस्मिन्[1] काले तेन क्रियमाणां स्तुतिमभिगच्छतीत्यर्थः ॥

स नो देव देवताते पवस्व महे सोम प्सरस इन्द्रपानः ।
कृण्वन्नपो वर्षयन्द्यामुतेमामुरोरा नो वरिवस्या पुनानः ॥ ३ ॥

सः । नः । देव । देवऽताते । पवस्व । महे । सोम । प्सरसे । इन्द्रऽपानः ।
कृण्वन् । अपः । वर्षयन् । द्याम् । उत । इमाम् । उरोः । आ । नः । वरिवस्य । पुनानः ॥३॥

हे ᐯदेव द्योतमान हे ᐯसोम ᐯसः तादृशः ᐯइन्द्रपानः इन्द्रेण पानव्यस्त्वं ᐯनः अस्माकं स्वभूते ᐯदेवताते देवैस्तते वितते यज्ञे ᐯमहे[2] महते ᐯप्सरसे भक्षणायेन्द्रस्य पानाय ᐯपवस्व ग्रहादिपु क्षर । किंच ᐯअपः उदकानि ᐯकृण्वन् कुर्वन् ᐯउत अपि च ᐯद्याम् ᐯइमां द्यावापृथिव्यौ ᐯवर्षयन् । भूमिं पर्जन्यरूपेण तर्पयति द्युलोकमग्निरूपेणेति । 'भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः' ( ऋ. सं. १.१६४.५१ ) इति श्रवणात् । ᐯउरोः विस्तीर्णादन्तरिक्षात् ᐯआ आगच्छंस्त्वं ᐯपुनानः पूयमानः सन् ᐯनः अस्मान् ᐯवरिवस्य धनादिप्रदानेन परिचरेति ॥

अजीतयेऽहतये पवस्व स्वस्तये सर्वतातये बृहते ।
तदुशन्ति विश्व इमे सखायस्तदहं वश्मि पवमान सोम ॥ ४ ॥

अजीतये । अहतये । पवस्व । स्वस्तये । सर्वऽतातये । बृहते ।
तत् । उशन्ति । विश्वे । इमे । सखायः । तत् । अहम् । वश्मि । पवमान । सोम ॥ ४ ॥

हे सोम ᐯअजीतये यथा वयं शत्रुभिरजिता भवेम तथा तेषामजयाय[3] ᐯअहतये यथा तैरहताः स्याम[3] तस्यै[4] च अत एव ᐯस्वस्तये अविनाशाय किंच ᐯबृहते[5] ᐯसर्वतातये सर्वैरिन्द्रादिभिर्देवैः तायमानाय यज्ञाय एतदर्थं ᐯपवस्व अस्मदभिमुखमागच्छ । पविर्गतिकर्मा । ᐯविश्वे सर्वे ᐯइमे मदीयाः ᐯसखायः स्तोतारः ᐯतत् त्वदीयं रक्षणम् ᐯउशन्ति कामयन्ते । हे ᐯपवमान ᐯसोम ᐯतत् रक्षणम् ᐯअहम् अपि ᐯवश्मि कामये ॥

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ५ ॥

सोमः । पवते । जनिता । मतीनाम् । जनिता । दिवः । जनिता । पृथिव्याः ।
जनिता । अग्नेः । जनिता । सूर्यस्य । जनिता । इन्द्रस्य । जनिता । उत । विष्णोः ॥ ५ ॥

ᐯसोमः अभिपूयमाणः ᐯपवते पात्रेपु क्षरति । कीदृशः । ᐯमतीनां बुद्धीनां यद्वा मननीयानां स्तुतीनां ᐯजनिता जनयिता । 'जनिता मन्त्रे' ( पा. सू. ६.४.५३) इति निपातनाण्णिलोपः । किंच ᐯदिवः द्युलोकस्य ᐯजनिता प्रादुर्भावयिता तथा ᐯपृथिव्याः जनयिता ᐯअग्नेः जनयिता प्रकाशयिता ᐯसूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य ᐯजनिता ᐯइन्द्रस्य ᐯजनिता पानेन मदस्य जनयिता ᐯउत अपि

१. त-भ६–अस्मिन् । २. ग-त-भ–'महे' नास्ति । ३. ग–पवस्व । अहतिरहननं । ४. त१.३.७-भ२–तस्मै । ५. त३-भ४.५–बृहते महते ।

च ᵛविष्णोः व्यापकस्य ᵛजनिता जनयिता। एतत् सर्वं सोमेऽभिषूयमाणे भवतीति। सोमो हि देवानाप्याययतीति ॥ ॥ ६ ॥

देवसुवां हविःषु सोमस्य वनस्पतेः ‘ ब्रह्मा देवानाम् ’ इति याज्या। सूत्रितं च–‘ त्वं च सोम नो वशो ब्रह्मा देवानां पदवीः कवीनाम् ’ ( आश्व. श्रौ. ४. ११ ) इति ॥

**ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्।**
**श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ ६ ॥**

ब्रह्मा। देवानाम्। पदऽवीः। कवीनाम्। ऋषिः। विप्राणाम्। महिषः। मृगाणाम्।
श्येनः। गृध्राणाम्। स्वऽधितिः। वनानाम्। सोमः। पवित्रम्। अति। एति। रेभन् ॥६॥

सोम एवंरूपो भवति। ᵛदेवानां स्तोत्रकारिणामृत्विजां ᵛब्रह्मा ब्रह्माख्यर्त्विक्स्थानीयो भवति। यद्वा। देवानां द्योतमानानामिन्द्रादीनां ब्रह्मा राजा भवति। तथा ᵛकवीनां क्रान्तप्रज्ञानां ᵛपदवीः। स्खलन्ति पदानि साधुत्वेन यो योजयति स पदवीः। वी गत्यादिष्वित्येतस्मात् क्विपि रूपम्। तथा ᵛविप्राणां मेधाविनां मध्ये ᵛऋषिः भवति। यः परोक्षं पश्यति स ऋषिः ‘ ऋषिर्दर्शनात् ’ ( निरु. २. ११ ) इति। ᵛमृगाणां ᵛमहिषः भवति। महिषाख्यो बलवान् राजा भवति। तथा ᵛगृध्राणां पक्षिविशेषाणां ᵛश्येनः शंसनीयः पक्षिराजो भवति। ᵛवनानाम्। वनतिर्हिंसाकर्मा। हिंसकानां छेदकानां मध्ये ᵛस्वधितिः एतन्नामकश्छेदकोऽसि। एवंप्रभावः ᵛसोमः ᵛरेभन् शब्दायमानः सन् ᵛपवित्रम् ऊर्णास्तुकेन कृतम् ᵛअत्येति अतिगच्छति ॥

**प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिरः सोमः पवमानो मनीषाः।**
**अन्तः पश्यन्वृजनेमावराण्या तिष्ठति वृषभो गोषु जानन् ॥ ७ ॥**

प्र। अवीविपत। वाचः। ऊर्मिम्। न। सिन्धुः। गिरः। सोमः। पवमानः। मनीषाः।
अन्तरिति। पश्यन्। वृजना। इमा। अवराणि। आ। तिष्ठति। वृषभः। गोषु। जानन् ॥७॥

ᵛपवमानः ᵛसोमः ᵛमनीषाः मनस ईशिता[1] हृदयंगमाः ᵛगिरः स्तुतीः ᵛप्रावीविपत् प्रकर्षेण वेपयति प्रेरयति। कथमिव। ᵛसिन्धुः स्यन्दमाना नदीव ᵛवाचः शब्दस्य ᵛऊर्मिं ᵛन संघं यथा प्रेरयति तद्वत्। किंच ᵛवृषभः कामानामुदकानां वा वर्षकः सोमः ᵛअन्तः अन्तर्हितं वस्तुजातं ᵛपश्यन् ᵛअवराणि दुर्बलैर्वारयितुमशक्यानि ᵛइमा ᵛवृजना इमानि बलानि ᵛआ ᵛतिष्ठति आसीदति। किं कुर्वन्। ᵛगोषु ᵛजानन् गवां[2] जनानः सन् परबलानि प्रविशति ॥

**स मत्सरः पृत्सु वन्वन्नवातः सहस्ररेता अभि वाजमर्ष।**
**इन्द्रायेन्दो पवमानो मनीष्यं१शोरूर्मिमीरय गा इषण्यन् ॥ ८ ॥**

सः। मत्सरः। पृत्ऽसु। वन्वन्। अवातः। सहस्रऽरेताः। अभि। वाजम्। अर्ष।
इन्द्राय। इन्दो इति। पवमानः। मनीषी। अंशोः। ऊर्मिम्। ईरय। गाः। इषण्यन् ॥८॥

१. ग–ईप्सिता। २. त१.२.४.५.६–गवां जसाय; त३.७-म२.६–गवां जनाय।

ᐯमत्सरः मदकरः ᐯपृत्सु संग्रामेषु ᐯवन्वन् शत्रून् हिंसन् अत एव ᐯअवातः अन्यैर्गन्तुमशक्यः ᐯसहस्ररेताः सहस्रोदकधारोपेतः ᐯसः सोमः ᐯवाजं शत्रूणां बलम् ᐯअभि ᐯअर्ष अभिगच्छ। हे ᐯइन्दो सोम ᐯपवमानः पूयमानः ᐯमनीषी प्राज्ञस्त्वं ᐯगाः ᐯइषण्यन् शब्दान् प्रेरयन्। यद्वा। यजमानानां यज्ञसाधनभूता गाः प्रेरयन्। ᐯइन्द्राय इन्द्रार्थम् ᐯअंशोः अभिषूयमाणस्य सोमस्य ᐯऊर्मिं संघम् ᐯईरय प्रेरय ॥

**परि॑ प्रि॒यः क॒लशे॑ दे॒ववा॑त॒ इन्द्रा॑य॒ सोमो॒ रण्यो॒ मदा॑य।**
**स॒हस्र॑धारः श॒तवा॑ज॒ इन्दु॑र्वा॒जी न सप्तिः॒ सम॑ना जिगाति ॥ ९ ॥**

परि॑। प्रि॒यः। क॒लशे॑। दे॒वऽवा॑तः। इन्द्रा॑य। सोमः॑। रण्यः॑। मदा॑य।
स॒हस्र॑ऽधारः। श॒तऽवा॑जः। इन्दुः॑। वा॒जी। न। सप्तिः॑। सम॑ना। जि॒गा॒ति॒ ॥ ९ ॥

ᐯप्रियः प्रीणयिता अत एव ᐯदेववातः देवैरभिगतः ᐯरण्यः रमणीयः ᐯसोमः ᐯइन्द्राय इन्द्रस्य ᐯमदाय मदार्थं ᐯकलशे द्रोणाभिधाने ᐯपरि ᐯजिगाति परिगच्छति। कीदृशः। ᐯसहस्रधारः बहुविधधारोपेतः ᐯशतवाजः बहुबलः ᐯइन्दुः पात्रेषु क्षरन्। तत्र दृष्टान्तः। ᐯवाजी ᐯन यथा वाजी बलवान् ᐯसप्तिः अश्वः ᐯसमना। संग्रामनामैतत्। 'सम इम अवैक्रव्ये'। समन्ति हृष्टा भवन्ति योद्धारोऽत्रेति। तस्मिन् संग्रामे यथाश्वः जिगाति गच्छति तद्वत् ॥

**स पू॒र्व्यो व॑सु॒विज्जाय॑मानो मृजा॒नो अ॒प्सु दु॑दुहा॒नो अद्रौ॑।**
**अ॒भि॒श॒स्ति॒पा भुव॑नस्य॒ राजा॑ वि॒दद्गा॒तुं ब्रह्म॑णे पू॒यमा॑नः ॥ १० ॥**

सः। पू॒र्व्यः। व॒सु॒ऽवित्। जाय॑मानः। मृ॒जा॒नः। अ॒प्ऽसु। दु॒दु॒हा॒नः। अद्रौ॑।
अ॒भि॒श॒स्ति॒ऽपाः। भुव॑नस्य। राजा॑। वि॒दत्। गा॒तुम्। ब्रह्म॑णे। पू॒यमा॑नः ॥ १० ॥

ᐯपूर्व्यः पुराणो यद्वा पूर्वैः कृतोऽभिषुतः ᐯवसुवित् धनानां लम्भकः ᐯजायमानः ᐯअप्सु वसतीवर्याख्येषूदकेषु ᐯमृजानः मृज्यमानः ᐯअद्रौ अभिषवग्रावणि ᐯदुदुहानः दुह्यमानः ᐯअभिशस्तिपाः। अभितः शस्तिर्हिंसा येषां तेऽभिशस्तयः शत्रवः। तेभ्यः परिरक्षकः ᐯभुवनस्य भूतजातस्य ᐯराजा स्वामी एवंविधः ᐯसः तादृशः सोमः ᐯब्रह्मणे कर्मार्थं ᐯपूयमानः सन् ᐯगातुं मार्गं समीचीनं ᐯविदत् यजमानेभ्यः प्रयच्छति ॥ ॥ ७ ॥

महापितृयज्ञे पितरः सोमवन्तः इत्यस्य द्वितीयानुवाक्या 'त्वया हि नः पितरः' इत्येषा। सूत्रितं च—'पितरोऽग्निष्वात्ता यम उदीरतामवर उत्परासस्त्वया हि नः पितरः सोम पूर्वे' (आश्व. श्रौ. २. १९) इति ॥

**त्वया॒ हि नः॑ पि॒तरः॑ सोम॒ पूर्वे॒ कर्मा॑णि च॒क्रुः प॑वमान॒ धीराः॑।**
**व॒न्वन्नवा॑तः परि॒धीँरपो॑र्णु वी॒रेभि॒रश्वै॑र्म॒घवा॑ भवा नः ॥ ११ ॥**

त्वया॑। हि। नः॒। पि॒तरः॑। सोम॒। पूर्वे॑। कर्मा॑णि। च॒क्रुः। प॒व॒मा॒न॒। धीराः॑।
व॒न्वन्। अवा॑तः। प॒रि॒ऽधीन्। अप॑। ऊ॒र्णु॒। वी॒रेभिः॑। अश्वैः॑। म॒घऽवा॑। भ॒व॒। नः॒ ॥ ११ ॥

हे ᵛपवमान पूयमान ᵛसोम ᵛधीराः कर्मणि कुशलाः प्राज्ञाः ᵛनः अस्माकं ᵛपितरः ᵛपूर्वे पुरातना अङ्गिरसः ᵛत्वया। हिरवधारणे। त्वया[1] सहायेनैव ᵛकर्माणि अग्निष्टोमादीनि ᵛचक्रुः कृतवन्तः। किंच ᵛवन्वन् स्तोतॄन् संभजन्। यद्वा। वनतिर्हिंसार्थः। शत्रून् हिंसन्[*]। ᵛअवातः तैरभिगतस्त्वं ᵛपरिधीन्। परिधीयत एभिः सर्वमिति परिधयो राक्षसाः। तान् ᵛअपोर्णु अपोर्णुहि अपच्छादय। जहीति यावत्। ऊर्णोतेर्लोटि[1] छान्दसो हेर्लुक्। एतादृशस्त्वं ᵛनः अस्माकं[2] पुत्रादियुक्तं धनं प्रयच्छेत्यर्थः॥

यथापवथा मनवे वयोधा अमित्रहा वरिवोविद्धविष्मान्।
एवा पवस्व द्रविणं दधान इन्द्रे सं तिष्ठ जनयायुधानि॥ १२॥

यथा। अपवथाः। मनवे। वयःऽधाः। अमित्रऽहा। वरिवःऽवित्। हविष्मान्।
एव। पवस्व। द्रविणम्। दधानः। इन्द्रे। सम्। तिष्ठ। जनय। आयुधानि॥ १२॥

हे सोम ᵛयथा पुरा त्वं ᵛमनवे राज्ञे ᵛवयोधाः अन्नस्य धाता तथा ᵛअमित्रहा शत्रूणां हन्ता ᵛवरिवोवित् धनस्य लम्भयिता ᵛहविष्मान् पुरोडाशादियुक्तः सन् ᵛअपवथाः तस्मै धनादिकं प्रदातुं यथागच्छः एवमस्मभ्यमपि ᵛद्रविणं धनं ᵛदधानः प्रयच्छन् ᵛपवस्व अस्मदभिमुखमागच्छ। किंच अस्माभिर्दीयमानस्त्वम् ᵛइन्द्रे ᵛसं ᵛतिष्ठ सम्यक् तिष्ठ। अपि च ᵛआयुधानि त्वदीयानि ᵛजनय तस्मै प्रकाशय। वाक्यभेदादनिघातः॥

पवस्व सोम मधुमाँ ऋतावापो वसानो अधि सानो अव्ये।
अव द्रोणानि घृतवान्ति सीद मदिन्तमो मत्सर इन्द्रपानः॥ १३॥

पवस्व। सोम। मधुऽमान्। ऋतऽवा। अपः। वसानः। अधि। सानौ। अव्ये।
अव। द्रोणानि। घृतऽवन्ति। सीद। मदिन्ऽतमः। मत्सरः। इन्द्रऽपानः॥ १३॥

हे ᵛसोम ᵛमधुमान् मदकररसोपेतः ᵛऋतावा यज्ञवान्। 'छन्दसीवनिपौ' इति वनिब्मत्वर्थीयः। तादृशस्त्वम् ᵛअपः वसतीवरीरेकधनाश्च ᵛवसानः आच्छादयन् ᵛअधि अधिकं ᵛसानौ समुच्छ्रिते ᵛअव्ये अविभवे पवित्रे ᵛपवस्व क्षर। ततः ᵛमदिन्तमः अतिशयेन मदकरः ᵛइन्द्रपानः इन्द्रेण पातव्यः ᵛमत्सरः मादयिता सोमः ᵛघृतवन्ति उदकवतः ᵛद्रोणानि द्रोणकलशान् ᵛअव ᵛसीद अवतिष्ठस्व॥

वृष्टिं दिवः शतधारः पवस्व सहस्रसा वाजयुर्देववीतौ।
सं सिन्धुभिः कलशे वावशानः समुस्रियाभिः प्रतिरन्न आयुः॥ १४॥

वृष्टिम्। दिवः। शतऽधारः। पवस्व। सहस्रऽसाः। वाजऽयुः। देवऽवीतौ।
सम्। सिन्धुऽभिः। कलशे। वावशानः। सम्। उस्रियाभिः। प्रऽतिरन्। नः। आयुः॥ १४॥

---

१. ग–त्वया एव कर्माणि चक्रुः। वन्वन् रक्षांसि संभजन् अवातः तैरनभिगतः राक्षसान् परिधीन् ऊर्णुहि लिटि। * ग-त३-भ६–हिंसन्नत एव। २. ग-त३.४-भ–अस्माकं वीरैरभिवीरैः कर्मप्राज्ञैः (भ६–कर्मणि प्राज्ञैः) पुत्रैरश्वैश्च सह मघवा धनवान् भव। यस्मात् (भ२–त्वं च) मम पितरः त्वया (भ२–यया) सह कर्म अकार्षुः तस्मादस्माकं (भ१.६.७–नोस्माकं)।

हे सोम ᵛशतधारः बहुधारोपेतः[१] त्वं ᵛदिवः अन्तरिक्षादादित्याद्वा ᵛवृष्टिं ᵛपवस्व कुरु। यद्वा। शतधारो बहुधात्मीयधारोपेतस्त्वं[२] ᵛदिवो द्योतमानात् पवित्रात् वृष्टिमविच्छिन्नधारां पवस्व पात्रेषु कुरु[३]। कीदृशः। ᵛदेववीतौ। देवानां वीतिर्हविर्भक्षणं यस्मिन् स देववीतिर्यज्ञः। तस्मिन् ᵛसहस्रसाः यजमानानां सहस्रस्य धनस्य दाता ᵛवाजयुः तेषामन्नं कामयमानस्त्वं[४] ᵛसिन्धुभिः स्यन्दमानाभिः वसतीवरीभिः ᵛकलशे द्रोणाभिधाने ᵛसं गच्छस्व। तथा त्वं ᵛनः अस्माकम् ᵛआयुः जीवनं ᵛप्रतिरन् वर्धयन्[५] ᵛउस्रियाभिः गोविकारैः क्षीरादिभिश्च[६] कलशे[६] ᵛसं गच्छस्व ॥

**एष स्य सोमो मतिभिः पुनानोऽत्यो न वाजी तरतीदरातीः।**
**पयो न दुग्धमदितेरिषिरमुर्विव गातुः सुयमो न वोळ्हा ॥ १५ ॥**

एषः। स्यः। सोमः। मतिऽभिः। पुनानः। अत्यः। न। वाजी। तरति। इत्। अरातीः।
पयः। न। दुग्धम्। अदितेः। इषिरम्। उरुऽइव। गातुः। सुऽयमः। न। वोळ्हा ॥ १५ ॥

ᵛएष[७] एतादृशः ᵛस्यः सः[७] ᵛसोमः ᵛमतिभिः मननसाधनैः स्तोत्रैः ᵛपुनानः पूयमानो भवति। यः सोमः ᵛअत्यो ᵛन अतनशीलः ᵛवाजी अश्व इव संग्रामे ᵛअरातीः अरातीन् शत्रून् ᵛतरति। ᵛइत् अवधारणे। तरत्येव हिनस्त्येव। यद्वृत्तयोगादनिघातः। किंच ᵛअदितेः। गोनामैतत्। अदीनाया गोः ᵛइषिरम् अन्वेषणीयं ᵛदुग्धं ᵛपयो ᵛन क्षीरं यथा पूतं भवति एवं सोमः परिशुद्धः। अपि च ᵛउर्विव। 'सुपां सुलुक्' इति सोर्लुक्। उरुर्विस्तीर्णः ᵛगातुः मार्ग इव सर्वैः समाश्रयणीयस्तथा ᵛवोळ्हा वोढाश्वः ᵛसुयमः सुष्ठु नियन्तुं शक्यो यथा भवति तद्वदयं सोमः स्तोतृभिः नियन्तव्यो भवति ॥ ॥ ८ ॥

**स्वायुधः सोतृभिः पूयमानोऽभ्यर्ष गुह्यं चारु नाम।**
**अभि वाजं सप्तिरिव श्रवस्याभि वायुमभि गा देव सोम ॥ १६ ॥**

सुऽआयुधः। सोतृऽभिः। पूयमानः। अभि। अर्ष। गुह्यम्। चारु। नाम।
अभि। वाजम्। सप्तिःऽइव। श्रवस्या। अभि। वायुम्। अभि। गाः। देव। सोम ॥ १६ ॥

ᵛस्वायुधः शोभनायुधोपेतः। यद्वा। यज्ञे स्फ्यकपालादीनि दशायुधानि सन्ति। तद्वान्। ᵛसोतृभिः[८] अभिषुण्वद्भिः ᵛपूयमानः त्वं ᵛगुह्यं गुहायां निहितं ᵛचारु कमनीयं ᵛनाम त्वदीयं रसात्मकं शरीरं स्तुतिभिः सह ᵛअभ्यर्ष कलशादीन्यभिगमय। किंच ᵛसप्तिरिव अश्व इव वर्तमानस्त्वं ᵛश्रवस्या। 'सुपां सुलुक्' इति सप्तम्या आजादेशः[९]। अस्मदीयायामन्नेच्छायां ᵛवाजम्[१०] अन्नमस्मभ्यम् ᵛअभि गमय। अपि च हे ᵛदेव स्तोतव्य हे ᵛसोम ᵛवायुं प्राणं जीवनम् ᵛअभि गमय। ᵛगाः पशूंश्चास्मभ्यम् ᵛअभि गमय ॥

---

१. ग-त-भ४.६-मु–बहुधोदकधारोपेतः; भ१–बहुकधारोपेतः; भ२–बहुदकधारोपेतः। २. ग-भ१.४.७–बहुविधात्मीय॰। ३. भ६–क्षर। ४. ग-त३-भ१.२.५.६.७–कामयमानः किंच वावशानः कामयमानस्त्वं। ५. ग-त३-भ२.४.५.६–प्रवर्धयन्; त१.२.५.७–'वर्धयन्' नास्ति। ६. भ६–क्षीरादिभिः स्वकलशे। ७. त१.२.७–एष स्य एतादृश; त४.५–एष स्य एतादृशस्य। ८. त१.२.४.५.६-भ६–स्तोतृभिः। ९. ग-भ४-याजादेशः; त७–अजादेशः। १०. त-भ२–'वाजं' नास्ति।

शिशुं जज्ञानं हर्यतं मृजन्ति शुम्भन्ति वह्निं मरुतो गणेन ।
कविर्गीर्भिः काव्येना कविः सन्त्सोमः पवित्रमत्येति रेभन् ॥ १७ ॥

शिशुम् । जज्ञानम् । हर्यतम् । मृजन्ति । शुम्भन्ति । वह्निम् । मरुतः । गणेन ।
कविः । गीःऽभिः । काव्येन । कविः । सन् । सोमः । पवित्रम् । अति । एति । रेभन् ॥ १७ ॥

शिशुम् इदानीमुत्पन्नत्वाच्छिशुवत्तिष्ठन्तम् । यद्वा । पापानि तनूकुर्वन्तं विनाशयन्तम् । जज्ञानं प्रादुर्भूतमत एव हर्यतम् । 'हर्य गतिकान्त्योः' । 'भृमृदृशि°' इत्यादिनातच् । सर्वैः काम्यमानं सोमं मृजन्ति मरुतः शोधयन्ति । किंच वह्निं वोढारं सोमं गणेन आत्मीयेन सप्तसंख्याकेन गणेन शुम्भन्ति अलंकुर्वन्ति । ततः कविः क्रान्तप्रज्ञः सोमः काव्येन कविकर्मणैव कविः शब्दोपेतः[1] सन् रेभन् शब्दायमानः गीर्भिः स्तुतिभिः सह पवित्रमत्येति अतीत्य गच्छति ॥

ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रणीथः पदवीः कवीनाम् ।
तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ॥ १८ ॥

ऋषिऽमनाः । यः । ऋषिऽकृत् । स्वःऽसाः । सहस्रऽनीथः । पदऽवीः । कवीनाम् ।
तृतीयम् । धाम । महिषः । सिसासन् । सोमः । विऽराजम् । अनु । राजति । स्तुप् ॥ १८ ॥

ऋषिमनाः सर्वदर्शनशीलमनस्कः अत एव ऋषिकृत् सर्वस्य दर्शनकर्ता प्रकाशनस्य कर्ता स्वर्षाः सर्वस्य सूर्यस्य वा संभक्ता सहस्रणीथः । नीथा स्तुतिः । बहुविधस्तुतिकः कवीनां क्रान्तप्रज्ञानां मध्ये पदवीः स्खलतां पदानां साधुत्वेन संयोजयिता यः सोमो विद्यते सः महिषः महान् पूज्यो वा सोमः तृतीयं धाम द्युलोकं सिषासन् संभक्तुमिच्छन् स्तुप् स्तूयमानः सन् विराजं विशेषेण राजन्तं दीप्यमानमिन्द्रम् अनु राजति प्रकाशयति ॥

चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ।
अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥ १९ ॥

चमूऽसत् । श्येनः । शकुनः । विऽभृत्वा । गोऽविन्दुः । द्रप्सः । आयुधानि । बिभ्रत् ।
अपाम् । ऊर्मिम् । सचमानः । समुद्रम् । तुरीयम् । धाम । महिषः । विवक्ति ॥ १९ ॥

चमूषत् । चमन्ति भक्षयन्त्यत्रेति चम्वश्चमसाः । तेषु सीदन् । यद्वा । चम्वावधिषवणफलके । तयोर्वर्तमानः । श्येनः शंसनीयः शकुनः शक्तः सामर्थ्यकारी विभृत्वा । हरतेः 'आतो मनिन्°' इत्यादिना क्वनिप् । पात्रेषु विहरणशीलः गोविन्दुः यजमानानां गवां लम्भकः । 'विन्दुरिच्छुः' (पा. सू. ३. २. १६९) इत्युप्रत्ययान्तत्वेन निपातितः । द्रप्सः द्रवणशीलः आयुधानि स्फ्यकपालादीनि बिभ्रत् धारयन् अपाम् उदकानाम् ऊर्मिं प्रेरकं समुद्रम् । अन्तरिक्षनामैतत् । अन्तरिक्षलोकं सचमानः सेवमानः महिषः महान् य एवंविधः सोमः स सोमः तुरीयं चतुर्थं धाम चान्द्रमसं स्थानं विवक्ति सेवते । सूर्यलोकस्योपरि चन्द्रमसो लोको विद्यत इति यमः पृथिव्या

१. त-भ—शब्दयितव्यः ।

अधिपतिः स मावतु इत्यादिभिः चन्द्रमा नक्षत्राणामधिपतिः स मावतु इत्यन्तैर्मन्त्रैर्ज्ञायते ( तै. सं. ३. ४. ५. १ ) ॥

मर्यो न शुभ्रस्तन्वं मृजानोऽत्यो न सृत्वा सनये धनानाम् ।
वृषेव यूथा परि कोशमर्षन्कनिक्रदच्चम्वोरा विवेश ॥ २० ॥

मर्यः । न । शुभ्रः । तन्वम् । मृजानः । अत्यः । न । सृत्वा । सनये । धनानाम् ।
वृषाऽइव । यूथा । परि । कोशम् । अर्षन् । कनिक्रदत् । चम्वोः । आ । विवेश ॥ २० ॥

शुभ्रः दीप्यमानोऽलंकृतः मर्यो न मनुष्य इव तन्वम् आत्मीयं शरीरं मृजानः वसतीवरीभिः शोधयन् किंच धनानां सनये संभजनाय लाभाय अत्यो न अतनशीलोऽश्व इव सृत्वा सरणशीलः अपि च वृषेव वृषा यथा यूथानि प्रतिगच्छन् शब्दं करोति तद्वत् कोशम् अधिषवणचर्मणा कृतं पात्रं परि अर्षन् प्रतिगच्छन् सोमः कनिक्रदत् पुनःपुनः शब्दं कुर्वन् चम्वोः अधिषवणफलकयोः आ विवेश आविशति ॥ कनिक्रदत् । क्रदेर्यङ्लुकि ' दाधर्ति दर्धर्ति० ' इत्यादिना निपातनादभ्यासस्य निगागमः । तस्य शतरि ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् ॥ ॥ ९ ॥

पवस्वेन्दो पवमानो महोभिः कनिक्रदत्परि वाराण्यर्ष ।
क्रीळञ्चम्वोरा विश पूयमान इन्द्रं ते रसो मदिरो ममत्तु ॥ २१ ॥

पवस्व । इन्दो इति । पवमानः । महःऽभिः । कनिक्रदत् । परि । वाराणि । अर्ष ।
क्रीळन् । चम्वोः । आ । विश । पूयमानः । इन्द्रम् । ते । रसः । मदिरः । ममत्तु ॥ २१ ॥

हे इन्दो सोम महोभिः पूजकैर्ऋत्विग्भिः पवमानः पूयमानस्त्वं पवस्व क्षर । ततः कनिक्रदत् भृशं शब्दं कुर्वन् वाराणि अवेर्वालानि पवित्राणि परि अर्ष परिगच्छ । किंच पूयमानः त्वं चम्वोः अधिषवणफलकयोः क्रीळन् संक्रीडमानः सन् आ विश पात्राणि प्रविश । अनन्तरं मदिरः मदकरः ते त्वदीयः रसः इन्द्रं ममत्तु मोदयतु[1] । मादयतेः ' बहुलं छन्दसि ' इति श्लुः ॥

प्रास्य धारा बृहतीरसृग्रन्नक्तो गोभिः कलशाँ आ विवेश ।
साम कृण्वन्त्सामन्यो विपश्चित्क्रन्दन्नेत्यभि सख्युर्न जामिम् ॥ २२ ॥

प्र । अस्य । धाराः । बृहतीः । असृग्रन् । अक्तः । गोभिः । कलशान् । आ । विवेश ।
साम । कृण्वन् । सामन्यः । विपःऽचित् । क्रन्दन् । एति । अभि । सख्युः । न । जामिम् ॥ २२ ॥

अस्य सोमस्य बृहतीः बृहत्यो महत्यः धाराः प्र असृग्रन् प्रसृज्यन्ते । सृजेः कर्मार्थे लङि व्यत्ययेन झेरनादेशः । ' बहुलं छन्दसि ' इति रुडागमः । ततः सोऽयं सोमः गोभिः गोविकारैः क्षीरादिभिः अक्तः[2] सन् कलशान् द्रोणाभिधानान् आ विवेश आविशति । साम सामानि कृण्वन् कुर्वन् सामन्यः सामगानकुशलः । सुष्ठु शब्दायमान इत्यर्थः । विपश्चित् सर्वं जानानः सोमः क्रन्दन् देवानाह्वयन् अभि एति । ग्रहादीनि त्वरयाभिगच्छति । तत्र दृष्टान्तः । सख्युर्न सख्युः जामिं जायां यथेतरो लम्पटो वेगेनाभिगच्छति तद्वत् ॥

---

१. ग-त३-भ५.६-मादयतु । २. ग-त३-भ४.५-अक्तः सिक्तः ।

अपघ्नन्नेषि पवमान शत्रून् प्रियां न जारो अभिगीत इन्दुः ।
सीदन्वनेषु शकुनो न पत्वा सोमः पुनानः कलशेषु सत्ता ॥ २३ ॥

अपऽघ्नन् । एषि । पवमान । शत्रून् । प्रियाम् । न । जारः । अभिऽगीतः । इन्दुः ।
सीदन् । वनेषु । शकुनः । न । पत्वा । सोमः । पुनानः । कलशेषु । सत्ता ॥ २३ ॥

हे ᵛपवमान पूयमान सोम ᵛअभिगीतः स्तोतृभिरभिष्टुतः ᵛइन्दुः पात्रेषु क्षरंस्त्वं ᵛशत्रून् ᵛअपघ्नन् अपहिंसन् ᵛएषि आगच्छसि । कथमिव । ᵛजारः ᵛप्रियां ᵛन प्रियतमामसतीं स्त्रीमन्यान् बाधमानः सन् यथाभिगच्छति तद्वत् । ᵛपत्वा पतनशीलः ᵛशकुनो ᵛन यथा शकुनः ᵛवनेषु वृक्षेषु ᵛसीदन् भवति तद्वत् पतनशीलः । ᵛपुनानः पूयमानः ᵛसोमः ᵛकलशेषु ᵛसत्ता सदनशीलो निषण्णो भवति । सदेस्ताच्छीलिकस्तृन् । 'एकाचः°' इतीट्प्रतिषेधः ॥

आ ते रुचः पवमानस्य सोम योषेव यन्ति सुदुघाः सुधाराः ।
हरिरानीतः पुरुवारो अप्स्वचिक्रदत्कलशे देवयूनाम् ॥ २४ ॥

आ । ते । रुचः । पवमानस्य । सोम । योषाऽइव । यन्ति । सुऽदुघाः । सुऽधाराः ।
हरिः । आऽनीतः । पुरुऽवारः । अप्ऽसु । अचिक्रदत् । कलशे । देवऽयूनाम् ॥ २४ ॥

हे ᵛसोम ᵛपवमानस्य पूयमानस्य ᵛते तव स्वभूता ᵛयोषेव स्त्री यथा पुत्राणां पयो दोग्धि तद्वद्यजमानानां धनादिकस्य सुष्ठु दोग्ध्र्यः ᵛसुधाराः शोभनधारोपेताः ᵛरुचः दीप्तयः ᵛआ ᵛयन्ति पात्रादीन्यागच्छन्ति । किंच ᵛहरिः हरितवर्णः ᵛआनीतः ऋत्विग्भिः ᵛपुरुवारः बहुधा वरणीयः सोमः ᵛअप्सु वसतीवरीषु ᵛदेवयूनां देवानिच्छतां यजमानानां स्वभूते ᵛकलशे द्रोणाख्ये च ᵛअचिक्रदत् पुनःपुनः क्रन्दते शब्दायते ॥ ॥ १० ॥ ॥ ५ ॥

षष्ठेऽनुवाके सप्त सूक्तानि । तत्र 'अस्य प्रेषा' इत्यष्टापञ्चाशदृचं प्रथमं सूक्तं त्रैष्टुभं पवमानसोमदेवताकम् । तत्राद्यस्य तृचस्य मैत्रावरुणो वसिष्ठ ऋषिः । द्वितीयस्येन्द्रप्रमतिर्नाम । तृतीयस्य वृषगणः । चतुर्थस्य मन्युः । पञ्चमस्योपमन्युः । षष्ठस्य व्याघ्रपात् । सप्तमस्य शक्तिः । अष्टमस्य कर्णश्रुत् । नवमस्य मृळीकः । दशमस्य वसुक्रः । एते सर्वे वसिष्ठगोत्राः । एवं त्रिंशदृचो गताः । अथ चतुर्दशानामृचां शक्तिपुत्रः पराशर ऋषिः । शिष्टानामाङ्गिरसः कुत्सः । तथानुक्रम्यते—'अस्य प्रेषाष्टापञ्चाशदाद्यं तृचं वसिष्ठोऽपश्यदुत्तरान्नव पृथक्त्रमिष्टा इन्द्रप्रमतिर्वृषगणो मन्युरुपमन्युर्व्याघ्रपाच्छक्तिः कर्णश्रुन्मृळीको वसुक्र इति चतुर्दश पराशरोऽन्त्याः कुत्सः' इति । गतो विनियोगः ॥

अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम् ।
सुतः पवित्रं पर्येति रेभन् मितेव सद्म पशुमान्ति होता ॥ १ ॥

अस्य । प्रेषा । हेमना । पूयमानः । देवः । देवेभिः । सम् । अपृक्त । रसम् ।
सुतः । पवित्रम् । परि । एति । रेभन् । मिताऽइव । सद्म । पशुऽमन्ति । होता ॥ १ ॥

ᵛअस्य सोमस्य ᵛप्रेषा । प्रेषतिर्गत्यर्थः । क्विपि रूपम् । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । प्रेषा प्रेरकेण ᵛहेमना हिरण्येन ᵛपूयमानः । ''हिरण्यपाणिरभिषुणोति' इति हिरण्यसंबन्धः । तादृशः ᵛदेवः दीप्यमानांशुः ᵛरसम् आत्मीयं ᵛदेवेभिः देवैः सह ᵛसमपृक्त संपर्चयति संयोजयति । 'पृची

संपर्के'। ततः ^सुतः अभिषुतः सोमः ^रेभन् शब्दायमानः सन् ^पवित्रम् ऊर्णास्तुकेन निर्मितं ^पर्येति परिगच्छति। कथमिव। ^होता देवानामाह्वातर्त्विक् ^मितेव निर्मितान् ^पशुमन्ति बद्धपशून् ^सद्म सदनानि यज्ञगृहान् यथा पर्येति तद्वत्॥

**भद्रा वस्त्रा समन्या३ वसानो महान् कविर्निवचनानि शंसन्।**
**आ वच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देववीतौ॥ २॥**

भद्रा। वस्त्रा। समन्या। वसानः। महान्। कविः। निऽवचनानि। शंसन्।
आ। वच्यस्व। चम्वोः। पूयमानः। विऽचक्षणः। जागृविः। देवऽवीतौ॥ २॥

^भद्रा भद्राणि कल्याणानि ^समन्या। 'समनम्' इति संग्रामनाम। 'तत्र साधुः' इति यत्। संग्रामयोग्यानि ^वस्त्रा वस्त्राण्याच्छादकानि तेजांसि ^वसानः आच्छादयन् ^महान् ^कविः क्रान्तदर्शी अत एव ^निवचनानि नितरां वक्तव्यान्यृत्विक्कृतानि स्तोत्राणि ^शंसन् ^विचक्षणः विशेषेण सर्वस्य द्रष्टा ^जागृविः जागरणशीलः सोमस्त्वं ^देववीतौ। देवानां वीतिर्भक्षणं यस्मिन् स देववीतिर्यज्ञः। तस्मिन् ^चम्वोः अधिषवणफलकयोः ^आ ^वच्यस्व पात्राण्याविश। वचिर्गत्यर्थः। व्यत्ययेन श्यन्। ^पूयमानः[1] सन्[1]॥

**समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे।**
**अभि स्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः॥ ३॥**

सम्। ऊँ इति। प्रियः। मृज्यते। सानौ। अव्ये। यशःऽतरः। यशसाम्। क्षैतः। अस्मे इति।
अभि। स्वर। धन्व। पूयमानः। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ३॥

^यशसां यशस्विनां मध्ये ^यशस्तरः अतिशयेन यशस्वी ^क्षैतः क्षितौ भवः ^प्रियः प्रीणयिता सोमः ^सानौ समुच्छ्रिते ^अव्ये अविभवे पवित्रे ^अस्मे अस्मदर्थं ^सं ^मृज्यते ऋत्विग्भिः परिपूयते। ^उ अवधारणे। ^पूयमानः त्वं ^धन्व अन्तरिक्षे ^अभि ^स्वर अभितः शब्दय। ^यूयम्। पूजायां बहुवचनम्। हे सोम त्वं ^नः अस्मान् ^स्वस्तिभिः कल्याणतमैः पालनैः ^सदा सर्वदा ^पात रक्षत पालयत॥

**प्र गायताभ्यर्चाम देवान्त्सोमं हिनोत महते धनाय।**
**स्वादुः पवाते अति वारमव्यमा सीदाति कलशं देवयुर्नः॥ ४॥**

प्र। गायत। अभि। अर्चाम। देवान्। सोमम्। हिनोत। महते। धनाय।
स्वादुः। पवाते। अति। वारम्। अव्यम्। आ। सीदाति। कलशम्। देवऽयुः। नः॥ ४॥

हे स्तोतारः ^प्र ^गायत। सोमं प्रकर्षेणाभिष्टुत। तथा ^देवान् ^अभ्यर्चाम अभ्यर्चत। पुरुषव्यत्ययः। यद्वा। वयं देवानभिष्टुमः यूयं सोमं स्तुतेति। किंच ^महते महत् प्रभूतं ^धनाय धनं प्राप्तुं सोमं ^हिनोत अभिषवार्थं प्रेरयत। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति धनशब्दस्य चतुर्थी। ततः ^स्वादुः स्वादुकरः[2] सोमः ^अव्यम् अविभवं ^वारं वालं पवित्रम् ^अति

१. त-भ२.६-'पूयमानः सन्' नास्ति। २. त३-भ१.२-स्वादुकारी; भ४.७-स्वादुकारि।

पवाते अतीव पवते । किंच देवयुः देवान् कामयमानः नः अस्मदीयः सोमः कलशं पात्रम् आ सीदाति आसीदति प्रविशति । उभयत्र लेटयाडागमः ॥

इन्दुर्देवानामुप सख्यमायन्त्सहस्रधारः पवते मदाय ।
नृभिः स्तवानो अनु धाम पूर्वमगन्निन्द्रं महते सौभगाय ॥ ५ ॥

इन्दुः । देवानाम् । उप । सख्यम् । आऽयन् । सहस्रऽधारः । पवते । मदाय ।
नृऽभिः । स्तवानः । अनु । धाम । पूर्वम् । अगन् । इन्द्रम् । महते । सौभगाय ॥ ५ ॥

देवानाम् इन्द्रादीनां सख्यं सखिभावम् उप आयन् उपगच्छन्[1] सहस्रधारः बहुविध-धारोपेतः इन्दुः सोमः मदाय देवानां मदार्थं पवते कलशादिषु क्षरति । नृभिः कर्मनेतृभिः स्तवानः स्तूयमानः सोमः पूर्वं पुरातनं धाम द्युलोकम् अनु गच्छति । तदेवाह । महते प्रभूताय सौभगाय सौभाग्याय इन्द्रम् अगन् गच्छति । सोम इन्द्रेण पीते सति यजमानानां महत् सौभाग्यं भवति खलु ॥ अगन् । गमेर्लुङि ‘ मन्त्रे घस’ ’ इति च्लेर्लुक् । ‘ मो नो धातोः ’ इति नत्वम् ॥ ॥ ११ ॥

स्तोत्रे राये हरिरर्षा पुनान इन्द्रं मदो गच्छतु ते भराय ।
देवैर्याहि सरथं राधो अच्छा यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

स्तोत्रे । राये । हरिः । अर्ष । पुनानः । इन्द्रम् । मदः । गच्छतु । ते । भराय ।
देवैः । याहि । सऽरथम् । राधः । अच्छ । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

हे सोम हरिः हरितवर्णः पुनानः पूयमानस्त्वं स्तोत्रे अस्माभिः क्रियमाणे सति राये धनार्थम् अर्ष आगच्छ । ततः ते त्वदीयः मदः मदकरः रसः भराय । ‘ भृ भर्त्सने ’ । भर्त्स-यन्ति शत्रूनत्र योद्धार इति भरः संग्रामः । तदर्थम् इन्द्रं गच्छतु । किंच सरथं देवैः समानं रथमास्थाय राधः अच्छ अस्माकं धनार्थं याहि आगच्छ । यूयं नः अस्मान् स्वस्तिभिः सदा पात । गतं मन्त्रः ॥

प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ ७ ॥

प्र । काव्यम् । उशनाऽइव । ब्रुवाणः । देवः । देवानाम् । जनिम । विवक्ति ।
महिऽव्रतः । शुचिऽबन्धुः । पावकः । पदा । वराहः । अभि । एति । रेभन् ॥ ७ ॥

उशनेव एतन्नामक ऋषिरिव काव्यं कविकर्म स्तोत्रं ब्रुवाणः उच्चारयन् देवः स्तोताग्र-भूर्विंर्भृषगणो नाम देवानाम् इन्द्रादीनां जनिम जन्मानि प्र विवक्ति प्रकर्षेण ब्रवीति । ‘ वच परिभाषणे ’ । व्यत्ययेन विकरणस्य श्लुः । ‘ बहुलं छन्दसि ’ इत्यभ्यासस्येत्वम् । महिव्रतः प्रभूत-कर्मा शुचिबन्धुः । बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा । दीप्ततेजस्कः पावकः पापानां शोधकः वराहः । वरं च तदहश्च वराहः । ‘ राजाहःसखिभ्यष्टच् ’ इति टच् समासान्तः । तस्मिन्नहनि

1. ग—उपागच्छन् ।

अभिपूयमाणत्वेन तद्वान् । अर्शआदित्वात् मत्वर्थीयोऽच् । तादृशः सोमः ᵛरेभन् शब्दं कुर्वन् ᵛपदा पदानि स्थानानि पात्राणि ᵛअभ्येति अभिगच्छति । यद्वा । यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत् ॥

प्र हंसासस्तृपलं मन्युमच्छामादस्तं वृषगणा अयासुः ।
आङ्गूष्यं१ पवमानं सखायो दुर्मर्षं साकं प्र वदन्ति वाणम् ॥ ८ ॥

प्र । हंसासः । तृपलम् । मन्युम् । अच्छ । अमात् । अस्तम् । वृषऽगणाः । अयासुः ।
आङ्गूष्यम् । पवमानम् । सखायः । दुःऽमर्षम् । साकम् । प्र । वदन्ति । वाणम् ॥ ८ ॥

ᵛहंसासः शत्रुभिर्हन्यमाना हंसा इवाचरन्तो वा ᵛवृषगणाः एतन्नामका ऋषयः ᵛअमात् शत्रूणां बलात् त्रासिताः सन्तः ᵛतृपलम् । तृपलशब्दः क्षिप्रवाची । तदुक्तं यास्केन—' तृपलप्रभर्मा क्षिप्रप्रहारी ' ( निरु. ५. १२ ) इति । क्षिप्रप्रहारिणं ᵛमन्युं शत्रूनभिमन्यमानं सोमम् ᵛअच्छ अभिलक्ष्य ᵛअस्तं यज्ञगृहं ᵛप्र ᵛअयासुः प्रायासिषुः प्रगच्छन्ति । ततः ᵛसखायः स्तुत्यस्तोतृत्वलक्षणेन संबन्धेन सखिभूताः स्तोतारः ᵛआङ्गूष्यं सर्वैरभिगन्तव्यम् । यद्वा । घोषशब्दस्य पृषोदरादित्वात् गू इत्यादेशः । आङोऽनुनासिकश्छान्दसः । स्तोत्रार्हं ᵛदुर्मर्षं शत्रुभिर्दुर्धरं दुःसहमेवंविधं सोमं ᵛपवमानम् उद्दिश्य ᵛवाणं वाद्यविशेषं ᵛसाकं सहैव ᵛप्र ᵛवदन्ति प्रवादयन्ति । तदुपलक्षितं गानं कुर्वन्तीत्यर्थः ॥

स रंहत उरुगायस्य जूतिं वृथा क्रीळन्तं मिमते न गावः ।
परीणसं कृणुते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः ॥ ९ ॥

सः । रंहते । उरुऽगायस्य । जूतिम् । वृथा । क्रीळन्तम् । मिमते । न । गावः ।
परीणसम् । कृणुते । तिग्मऽशृङ्गः । दिवा । हरिः । ददृशे । नक्तम् । ऋज्रः ॥ ९ ॥

ᵛसः सोमः ᵛरंहते । अतिशीघ्रं गच्छतीत्यर्थः । ᵛउरुगायस्य बहुभिः स्तुत्यस्यात्मनः ᵛजूतिं गतिमनुसरन् । तं ᵛवृथा अनायासेन ᵛक्रीळन्तं विहरन्तं गच्छन्तं सोमं ᵛगावः अन्ये गन्तारः ᵛन ᵛमिमते न परिच्छिन्दन्ति । तमनुगन्तुं न शक्नुवन्तीत्यर्थः । किंच ᵛतिग्मशृङ्गः । शृणन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि । तीक्ष्णतेजस्कः ᵛपरीणसम् । बहुनामैतत् । बहुविधं तेजः ᵛकृणुते करोति । अन्तरिक्षे वर्तमानो यः सोमः ᵛदिवा अहनि ᵛहरिः हरितवर्णः ᵛददृशे दृश्यते । न प्रकाशत इत्यर्थः । ᵛनक्तं रात्रौ तु ᵛऋज्रः ऋजुगामी विस्पष्टः प्रकाशयुक्तो दृश्यते । दृशेः कर्मणि लिटि रूपम्[१] ॥

इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय ।
हन्ति रक्षो बाधते पर्यरातीर्वरिवः कृण्वन् वृजनस्य राजा ॥ १० ॥

इन्दुः । वाजी । पवते । गोऽन्योघाः । इन्द्रे । सोमः । सहः । इन्वन् । मदाय ।
हन्ति । रक्षः । बाधते । परि । अरातीः । वरिवः । कृण्वन् । वृजनस्य । राजा ॥ १० ॥

---

१. ग-त३.४-म४.५–रूपं । यद्वृत्तयोगादनिघातः ।

vइन्दुः क्षरणशीलः vवाजी बलवान् vगोन्योघाः गमनशीलनीचीनाग्ररससंघातः vइन्द्रे vसहः बलकररसम् vइन्वन् प्रेरयन् vसोमः vमदाय तस्य मदार्थं vपवते क्षरति[1] । किंच vरक्षः रक्षःकुलं vहन्ति हिनस्ति । किंच vअरातीः अरातीन् शत्रून् vपरि vबाधते परितः संहरति । कीदृशः । vवरिवः वरणीयं धनं vकृण्वन् स्तोतॄणां कुर्वन् vवृजनस्य बलस्य vराजा ईशिता सोम इति ॥ ॥१२॥

अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः ।
इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय ॥ ११ ॥

अध । धारया । मध्वा । पृचानः । तिरः । रोम । पवते । अद्रिऽदुग्धः ।
इन्दुः । इन्द्रस्य । सख्यम् । जुषाणः । देवः । देवस्य । मत्सरः । मदाय ॥ ११ ॥

vअध अथानन्तरम् vअद्रिदुग्धः ग्रावभिर्दुग्धोऽभिषुतः सोमः vमध्वा मदकारिण्या vधारया vपृचानः देवान् संपर्चयन् संयोजयन् vरोम अविरोमभिः कृतं पवित्रं vतिरः तिरस्कृत्य व्यवधायकं कृत्वा vपवते कलशेषु क्षरति । किंच vइन्द्रस्य vसख्यं सखिभावं कर्म वा vजुषाणः सेवमानः vदेवः द्योतमानः vमत्सरः मदकरः vइन्दुः सोमः vदेवस्य इन्द्रस्य vमदाय मदार्थं पवते ॥

अभि प्रियाणि पवते पुनानो देवो देवान्त्स्वेन रसेन पृञ्चन् ।
इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥ १२ ॥

अभि । प्रियाणि । पवते । पुनानः । देवः । देवान् । स्वेन । रसेन । पृञ्चन् ।
इन्दुः । धर्माणि । ऋतुऽथा । वसानः । दश । क्षिपः । अव्यत । सानौ । अव्ये ॥ १२ ॥

vप्रियाणि प्रीणयितॄणि vधर्माणि धारकाणि तेजांसि vऋतुथा काले काले vवसानः आच्छादयन् vइन्दुः सोमः vपुनानः पूयमानः सन् vअभि vपवते कलशानभिलक्ष्य क्षरति । कीदृशः । vदेवः संक्रीडनशीलः vस्वेन आत्मीयेन vरसेन vदेवान् इन्द्रादीन् vपृञ्चन् संपर्चयन् संयोजयन् । तमिमं vदश दशसंख्याकाः vक्षिपः । अङ्गुलिनामैतत् । कर्मार्थं प्रेर्यन्त इति । तत्संख्याका अङ्गुलयः vसानौ समुच्छ्रिते vअव्ये अविमये पवित्रे vअव्यत गमयन्ति । यद्वा । तत्र पवित्रे पूयमानं सोममव्यत गच्छन्ति । वी गत्यादिषु । लङि व्यत्ययेनात्मनेपदम् ॥

वृषा शोणो अभिकनिक्रदद्गा नदयन्नेति पृथिवीमुत द्याम् ।
इन्द्रस्येव वग्नुरा शृण्व आजौ प्रचेतयन्नर्षति वाचमेमाम् ॥ १३ ॥

वृषा । शोणः । अभिऽकनिक्रदत् । गाः । नदयन् । एति । पृथिवीम् । उत । द्याम् ।
इन्द्रस्यऽइव । वग्नुः । आ । शृण्वे । आजौ । प्रऽचेतयन् । अर्षति । वाचम् । आ । इमाम् ॥ १३ ॥

vशोणः शोणवर्णः vवृषा कश्चिद्वृषभः vगाः पशून् vअभिकनिक्रदत् अभिलक्ष्य शब्दं करोति । एवं गाः स्तुतीर्विश्रयणार्थं पयसो दोग्ध्रीर्धेनूर्वा अभिकनिक्रददभिशब्दायमानः । तदेवाह । vनदयन् शब्दमुत्पादयन् सोमः vपृथिवीमुत अपि च vद्याम् एतौ लोकौ vएति गच्छति । किंच vवग्नुः । वाङ्नामैतत् । तस्य वाक् शब्दः vआजौ संग्रामे vइन्द्रस्येव इन्द्रस्य शब्द इव vआ vशृण्वे सर्वैः

१. ग-त१.३.६.७-भ–' क्षरति ' नास्ति ।

श्रूयते । ततः प्रचेतयन् आत्मानं सर्वेषां प्रज्ञापयन् इमां वाचम् अर्षति समन्तादृमयति । उच्चैः शब्दायत इत्यर्थः ॥

**रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमन्तमंशुम् ।**
**पवमानः संतनिमेषि कृण्वन्निन्द्राय सोम परिषिच्यमानः ॥ १४ ॥**

रसाय्यः । पयसा । पिन्वमानः । ईरयन् । एषि । मधुऽमन्तम् । अंशुम् ।
पवमानः । सम्ऽतनिम् । एषि । कृण्वन् । इन्द्राय । सोम । परिऽसिच्यमानः ॥ १४ ॥

हे सोम रसाय्यः । रसेरौणादिक आय्यप्रत्ययः । आस्वाद्यः पयसा[1] पिन्वमानः क्षरंस्त्वम् ईरयन् शब्दं प्रेरयन् मधुमन्तं माधुर्योपेतम् अंशुं रसभावम्[2] एषि प्राप्नोषि[3]। 'अंशुः शमष्टमात्रो भवति' (निरु. २.५) इति यास्कः । अनेन सोमरसोऽभिधीयते । किंच हे सोम परिषिच्यमानः अद्भिः परिषिक्तस्त्वं पवमानः पवित्रे पूयमानः सन् संतनिम् । 'तनु विस्तारे'। इप्रत्ययः । संततां धारां कृण्वन् कुर्वन् इन्द्राय इन्द्रार्थम् एषि गच्छसि ॥

**एवा पवस्व मदिरो मदायोदग्राभस्य नमयन्वधस्नैः ।**
**परि वर्णं भरमाणो रुशन्तं गव्युर्नो अर्ष परि सोम सिक्तः ॥ १५ ॥**

एव । पवस्व । मदिरः । मदाय । उदऽग्राभस्य । नमयन् । वधऽस्नैः ।
परि । वर्णम् । भरमाणः । रुशन्तम् । गव्युः । नः । अर्ष । परि । सोम । सिक्तः ॥ १५ ॥

हे सोम मदिरः मदकरस्त्वम् उदग्राभस्य । 'क्रियाग्रहणं कर्तव्यम्' (पा. सू. १.४.३२.१) इति कर्मणः संप्रदानसंज्ञा । 'चतुर्थ्यर्थे बहुलम्' (पा. सू. २.३.६२) इति षष्ठी । उदग्राभमुदकग्राहिणं मेघं वधस्नैः हननसाधनैरायुधैः नमयन् वृष्ट्यर्थं प्रह्वीकुर्वन् मदाय मदार्थम् एव पवस्व । एवं पात्रेषु क्षर । किंच रुशन्तम् आरोचमानं श्वेतं वर्णं परि भरमाणः परितो बिभ्रत् सिक्तः पवित्रे सिच्यमानस्त्वं गव्युः नः[4] अस्माकं गा इच्छन् परि अर्ष परिगच्छ ॥ ॥ १३ ॥

**जुष्ट्वी न इन्दो सुपथा सुगान्युरौ पवस्व वरिवांसि कृण्वन् ।**
**घनेव विष्वग्दुरितानि विघ्नन्नधि ष्णुना धन्व सानो अव्ये ॥ १६ ॥**

जुष्ट्वी । नः । इन्दो इति । सुऽपथा । सुऽगानि । उरौ । पवस्व । वरिवांसि । कृण्वन् ।
घनाऽइव । विष्वक् । दुःऽइतानि । विऽघ्नन् । अधि । स्नुना । धन्व । सानौ । अव्ये ॥ १६ ॥

हे इन्दो दीप्त पवमान जुष्ट्वी । 'स्नात्व्यादयश्च' इति निपातितः । स्तुतिभिः प्रीतो[5] भूत्वा नः अस्माकं सुपथानि वैदिकमार्गान् तथा वरिवांसि वरणीयानि धनानि सुगा सुगमनानि सुप्रापाण्यानि कृण्वन् कुर्वन् उरौ विस्तीर्णे द्रोणकलशे पवस्व क्षर । किंच घनेव घनीभूतेन लोहमयेनायुधेनेव विष्वक् सर्वतः दुरितानि दुष्प्रापाण्यानि रक्षांसि विघ्नन् हिंसन् सानौ समुच्छ्रिते[6] अव्ये अविमये स्नुना स्रवता धारासंघेन अधि धन्व अधिगच्छ । धविर्गत्यर्थः ॥

---

१. त१.७-मु—पयसा युक्तः । २. त—भर्त । ३.-त१.२.३.४.५-प्राप्नोति । ४. ग-त-भ१.२.४.६—'नः' नास्ति । ५. भ६—प्रीतस्त्वं । ६. त१-मु—समुच्छ्रिते देशे ।

वृष्टिं नो अर्ष दिव्यां जिगत्नुमिळावतीं शंगयीं जीरदानुम् ।
स्तुकेव वीता धन्वा विचिन्वन्बन्धूँरिमाँ अवराँ इन्दो वायून् ॥ १७ ॥

वृष्टिम् । नः । अर्ष । दिव्याम् । जिगत्नुम् । इळाऽवतीम् । शम्ऽगयीम् । जीरऽदानुम् ।
स्तुकाऽइव । वीता । धन्व । विऽचिन्वन् । बन्धून् । इमान् । अवरान् । इन्दो इति । वायून् ॥ १७ ॥

हे सोम ᵛनः अस्माकं ᵛवृष्टिम् ᵛअर्ष गमय । कीदृशीम् । ᵛदिव्यां दिवि भवां ᵛजिगत्नुं गमनशीलाम् ᵛइळावतीम् अन्नवतीं ᵛशंगयीं सुखस्य निवासभूतां ᵛजीरदानुं क्षिप्रदानोपेताम् । किंच हे ᵛइन्दो त्वं ᵛस्तुकेव ᵛवीता कान्तानि । स्तुकशब्दोऽपत्यवचनः । अपत्यानि यथा विचिनोषि तद्वत् ᵛबन्धून् स्तुत्यस्तोतृत्वेन बन्धुभूतान् ᵛअवरान् अवरदेशे स्थितान् पार्थिवान् ᵛवायून् त्वामभिगच्छतः ᵛइमान् अस्मान् ᵛविचिन्वन् धनादिप्रदानार्थं गवेषमाणः सन् ᵛधन्व गच्छ ॥

ग्रन्थिं न वि ष्य ग्रथितं पुनान ऋजुं च गातुं वृजिनं च सोम ।
अत्यो न क्रदो हरिरा सृजानो मर्यो देव धन्व पस्त्यावान् ॥ १८ ॥

ग्रन्थिम् । न । वि । स्य । ग्रथितम् । पुनानः । ऋजुम् । च । गातुम् । वृजिनम् । च । सोम ।
अत्यः । न । क्रदः । हरिः । आ । सृजानः । मर्यः । देव । धन्व । पस्त्यऽवान् ॥ १८ ॥

ᵛपुनानः पूयमानस्त्वं ᵛग्रथितं पापैर्बद्धं मां ᵛवि ᵛष्य मुञ्च[1] । पापेभ्यो विश्लेषय । कथमिव । ᵛग्रन्थिं ᵛन यथा कश्चित् ग्रन्थिं विश्लेषयति । 'षो अन्तकर्मणि' इत्यस्य लोटि रूपम् । किंच हे ᵛसोम त्वम् ᵛऋजुम् अवक्रं ᵛगातुं मार्गं ᵛच ᵛवृजिनं बलं ᵛच मह्यं देहि । ᵛहरिः हरितवर्णस्त्वम् ᵛआ ᵛसृजानः पात्रेष्वासृज्यमानः सन् ᵛअत्यो ᵛन अतनशीलोऽश्व इव ᵛक्रदः क्रन्दसि शब्दायसे । किंच हे ᵛदेव ᵛमर्यः मनुष्यहितो मारको हिंसको वा शत्रूणां ᵛपस्त्यवान् । पस्त्यं गृहम् । तद्वांस्त्वं ᵛधन्व मामभिगच्छ कलशान् वा ॥

जुष्टो मदाय देवतात इन्दो परि ष्णुना धन्व सानो अव्ये ।
सहस्रधारः सुरभिरदब्धः परि स्रव वाजसातौ नृषह्ये ॥ १९ ॥

जुष्टः । मदाय । देवऽताते । इन्दो इति । परि । स्नुना । धन्व । सानौ । अव्ये ।
सहस्रऽधारः । सुरभिः । अदब्धः । परि । स्रव । वाजऽसातौ । नृऽसह्ये ॥ १९ ॥

हे ᵛइन्दो ᵛमदाय ᵛजुष्टः पर्याप्तस्त्वं ᵛदेवताते देवैस्तते यज्ञे ᵛसानौ समुच्छ्रिते ᵛअव्ये अविमये[2] पवित्रे[3] ᵛस्नुना स्रवणशीलेन[4] धारासंघेन सह ᵛपरि ᵛधन्व परिगच्छ । ᵛसहस्रधारः बहुविधधारोपेतः ᵛसुरभिः सुगन्धिस्त्वम् ᵛअदब्धः न कैश्चिद्धिंसितः सन् ᵛवाजसातौ अन्नलाभनिमित्ते[5] ᵛनृसह्ये नृभिः सोढव्ये युद्धे ᵛपरि ᵛस्रव परितो गच्छ ॥

अश्मानो येऽरथा अयुक्ता अत्यासो न ससृजानास आजौ ।
एते शुक्रासो धन्वन्ति सोमा देवासस्ताँ उप याता पिबध्यै ॥ २० ॥

---

१. त३-भ४.५-विमुंच । २. ग-त३-भ१.४.७-'अविमये' नास्ति । ३. त१.७-भ२-मु-'पवित्रे' नास्ति । ४. त१-भ६-मु-श्रवण° । ५. ग-अन्नलाभे धननिमित्ते; त१.३.४.५.६.७-भ२-मु-अन्नलाभाय निमित्ते; भ१.४-अन्नलाभाय निर्मितो ।

अरश्मानः । ये । अरथाः । अयुक्ताः । अत्यासः । न । ससृजानासः । आजौ ।
एते । शुक्रासः । धन्वन्ति । सोमाः । देवासः । तान् । उप । यात । पिबध्यै ॥ २० ॥

अरश्मानः रश्मिवर्जिताः । रज्जुरहिता[1] इति यावत् । अरथाः रथवर्जिताः अयुक्ताः कुत्रापि न नियुक्ताः । अबद्धा इत्यर्थः । एतादृशाः ये आजौ युद्धे ससृजानासः सृज्यमानाः अत्यासो न अश्वा यथा त्वरया लक्ष्यं गच्छन्ति तद्वदाजौ । अजन्ति कर्मकरणार्थमृत्विजोऽत्र इत्याजिर्यज्ञः । तस्मिन् सृज्यमानाः शुक्रा[2] दीप्यमानाः एते सोमाः धन्वन्ति क्षिप्रं कलशानभिगच्छन्ति । अथ प्रत्यक्षः । हे देवासः देवाः तान् आगच्छतः सोमान् पिबध्यै पानाय उप यात उपगच्छत ॥ ॥ १४ ॥

एवा न इन्दो अभि देववीतिं परि स्रव नभो अर्णश्चमूषु ।
सोमो अस्मभ्यं काम्यं बृहन्तं रयिं ददातु वीरवन्तमुग्रम् ॥ २१ ॥

एव । नः । इन्दो इति । अभि । देवऽवीतिम् । परि । स्रव । नभः । अर्णः । चमूषु ।
सोमः । अस्मभ्यम् । काम्यम् । बृहन्तम् । रयिम् । ददातु । वीरऽवन्तम् । उग्रम् ॥ २१ ॥

हे इन्दो सोम नः अस्मदीयम् एव देववीतिम् । देवानां वीतिर्भक्षणं गमनं वा यस्मिन् स देववीतिर्यज्ञः । तमभिलक्ष्य नभः नभसो द्युलोकात् अर्णः उदकम् । अनेन पवित्रान्निर्गतः सोमरसोऽभिधीयते । तं रसं चमूषु चमसेषु परि स्रव परितः क्षर । ततः सोमः काम्यं काम्यमानं बृहन्तं प्रवृद्धं वीरवन्तं पुत्रयुक्तम् उग्रम् उद्गूर्णबलं रयिं धनम् अस्मभ्यं ददातु प्रयच्छतु ॥

तक्षद्यदी मनसो वेनतो वाग्ज्येष्ठस्य वा धर्मणि क्षोरनीके ।
आदीमायन्वरमा वावशाना जुष्टं पतिं कलशे गाव इन्दुम् ॥ २२ ॥

तक्षत् । यदि । मनसः । वेनतः । वाक् । ज्येष्ठस्य । वा । धर्मणि । क्षोः । अनीके ।
आत् । ईम् । आयन् । वरम् । आ । वावशानाः । जुष्टम् । पतिम् । कलशे । गावः । इन्दुम् ॥ २२ ॥

वेनतः । 'वेनो वेनतेः कान्तिकर्मणः' ( निरु. १०. ३८ ) इति यास्कः । कामयमानस्य मनसः । मन्यतेः स्तुतिकर्मणः । स्तोतुः वाक् स्तुतिलक्षणा यदि एनं तक्षत् संस्करोति । वाशब्द उपमार्थे । यथा धर्मणि । 'निमित्तात्कर्मसंयोगे[3]' ( पा. सू. २. ३. ३६. ६ ) इति सप्तमी । धारकं योगक्षेमविषयं कर्मोद्दिश्य[4] क्षोः शब्दायमानस्य अनीके मुखे तत्र स्थितस्य जानपदिकस्य वाक् ज्येष्ठस्य । द्वितीयार्थे षष्ठी । प्रशस्यतमं राजानं यथा स्तौति तथा स्तोतुर्वाक् सोमं स्तौतीत्यर्थः । आत् अनन्तरमेव वरं वरणीयं जुष्टं देवानां मदाय पर्याप्तं पतिं सर्वस्य पालकं कलशे स्थितम् इन्दुम् ईम् एनं सोमं वावशानाः कामयमानाः गावः आ आयन् । पयसा स्वीयेन मिश्रयितुमागच्छन्ति ॥

१. त-मु—रज्जुवर्जिता; भ२—रज्जुता । २. भ३(२)—शुक्रासः शुक्रा । ३. त-भ६—निमित्तत्वात् कर्मसंयोग; भ१.२—निमित्तत्वात् कर्मसंयोगः; भ४—निमित्तत्वात् कर्मयोगः । ४. त-भ२.६—धर्मोद्दिश्य ।

प्र दा॑नु॒दो दि॒व्यो दा॑नुपि॒न्व ऋ॒तमृ॒ताय॑ पवते सुमे॒धाः ।
ध॒र्मा भु॑वद्वृज॒न्य॑स्य॒ राजा॒ प्र र॒श्मिभि॑र्द॒शभि॑र्भारि॒ भूम॑ ॥ २३ ॥

प्र । दा॒नु॒ऽदः । दि॒व्यः । दा॒नु॒ऽपि॒न्वः । ऋ॒तम् । ऋ॒ताय॑ । पव॑ते । सु॒ऽमे॒धाः ।
ध॒र्मा । भु॒व॒त् । वृ॒ज॒न्य॑स्य । राजा॑ । प्र । र॒श्मिऽभिः॑ । द॒शऽभिः॑ । भा॒रि॒ । भूम॑ ॥ २३ ॥

ᵛदिव्यः दिवि भवः ᵛदानुदः दातृभ्यो धनादीनां दाता । तदेवाह । ᵛदानुपिन्वः । ' पिवि सेचने' । ' कर्मण्यण् ' ( पा. सू. ३. २. १ ) इत्यण् । दातृभ्यः कामानां क्षारयिता ᵛसुमेधाः शोभनप्रज्ञः सोमः ᵛऋताय सत्यभूतायेन्द्राय ᵛऋतं सत्यभूतमात्मीयं रसं ᵛप्र ᵛपवते प्रकर्षेण क्षरति । ᵛराजा दीप्यमानः सोमः ᵛवृजन्यस्य साधुबलस्य ᵛधर्मा धारयिता ᵛभुवत् भवति । किंच ᵛदशभिः एतत्संख्याकाभिः ᵛरश्मिभिः कर्मकरणार्थमश्नुवानाभिरङ्गुलिभिः ᵛभूम प्रभूतं ᵛप्र ᵛभारि प्रधार्यते । चिणि रूपम् ॥

प॒वित्रे॑भिः॒ पव॑मानो नृ॒चक्षा॒ राजा॑ दे॒वाना॑मु॒त मर्त्या॑नाम् ।
द्वि॒ता भु॑वद्रयि॒पती॑ रयी॒णामृ॒तं भर॒त्सुभृ॑तं॒ चार्विन्दुः॑ ॥ २४ ॥

प॒वित्रे॑भिः । पव॑मानः । नृ॒ऽचक्षाः॑ । राजा॑ । दे॒वाना॑म् । उ॒त । मर्त्या॑नाम् ।
द्वि॒ता । भु॒व॒त् । र॒यि॒ऽपतिः॑ । र॒यी॒णाम् । ऋ॒तम् । भर॑त् । सुऽभृ॑तम् । चारु॑ । इन्दुः॑ ॥ २४ ॥

ᵛपवित्रेभिः पवित्रैः ᵛपवमानः पूयमानः ᵛनृचक्षाः नृणां फलाफलयोर्द्रष्टा तथा[1] ᵛदेवानाम् इन्द्रादीनाम् ᵛउत अपि च ᵛमर्त्यानां मनुष्याणामेवमुभयेषां जनानां ᵛराजा ᵛरयिपतिः धनस्य पतिः न स्वल्पस्य पतिः किंतु ᵛरयीणां बहूनां धनानां स्वामी । व्यत्ययवृत्तिभ्यां स्वामित्वं बाहुल्यं च विवक्ष्यते । ईदृशः सोमः ᵛद्विता द्विधा देवेष्वपि च मनुष्येषु ᵛभुवत् भवति । सोऽयम् ᵛइन्दुः सोमः ᵛसुभृतं सुष्ठु संभृतं ᵛचारु कल्याणम् ᵛऋतम् उदकं ᵛभरत् बिभर्ति ॥

अर्वाँ॑इव॒ श्रव॑से सा॒तिमच्छेन्द्र॑स्य वा॒योर॒भि वी॒तिम॑र्ष ।
स नः॑ स॒हस्रा॑ बृह॒तीरिषो॑ दा॒ भवा॑ सोम द्रविणो॒वित्पु॑ना॒नः ॥ २५ ॥

अर्वा॑न्ऽइव । श्रव॑से । सा॒तिम् । अच्छ॑ । इन्द्र॑स्य । वा॒योः । अ॒भि । वी॒तिम् । अ॒र्ष॒ ।
सः । नः॒ । स॒हस्रा॑ । बृ॒ह॒तीः । इषः॑ । दाः॒ । भव॑ । सो॒म॒ । द्र॒वि॒णः॒ऽवित् । पु॒ना॒नः ॥ २५ ॥

हे सोम अन्नार्थं युद्धे ᵛअर्वानिव अश्वो यथा गच्छति तद्वत् त्वं ᵛश्रवसे अस्माकमन्नार्थं तथा ᵛसातिमच्छ धनलाभं प्रति ᵛइन्द्रस्य ᵛवायोः च ᵛवीतिं पानम् ᵛअभि ᵛअर्ष अभिगच्छ । ऐन्द्रवायवग्रहे हीन्द्रवायू सह सोमं पिबत इत्यत्र सहोपादानम् । ᵛसः त्वं ᵛसहस्रा सहस्राणि बहुविधानि ᵛबृहतीः बृंहितानि प्रवृद्धानि ᵛइषः अन्नानि ᵛनः अस्मभ्यं ᵛदाः प्रयच्छ । हे ᵛसोम ᵛपुनानः पूयमानस्त्वं नोऽस्मभ्यं ᵛद्रविणोवित् धनस्य[2] लम्भयिता ᵛभव । द्रविणशब्दात् ' सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः ' ( का. ७. १. ५१. ३ ) इति सुगागमः ॥ ॥ १५ ॥

---

१. त१.२.७–अथा; त३.४.५.६-भ१.२.४.७–' तथा ' नास्ति; भ६–यथा; मु–अथ ।
२. त–अस्य ।

देवाव्यो नः परिषिच्यमानाः क्षयं सुवीरं धन्वन्तु सोमाः ।
आयज्यवः सुमतिं विश्ववारा होतारो न दिवियजो मन्द्रतमाः ॥ २६ ॥

देवऽअव्यः । नः । परिऽसिच्यमानाः । क्षयम् । सुऽवीरम् । धन्वन्तु । सोमाः ।
आऽयज्यवः । सुऽमतिम् । विश्वऽवाराः । होतारः । न । दिविऽयजः । मन्द्रऽतमाः ॥२६॥

<sup>v</sup>देवाव्यः । अवतेस्तर्पणार्थस्य ' अवितृस्तृतन्त्रिभ्य ईः ' इतीप्रत्ययः । ' उदात्तस्वरितयोर्यणः० ' इति जसः स्वरितत्वम् । देवानां तर्पयितारः <sup>v</sup>परिषिच्यमानाः परितः पात्रेषु सिच्यमानाः <sup>v</sup>सोमाः <sup>v</sup>नः अस्माकं <sup>v</sup>सुवीरं शोभनपुत्रं <sup>v</sup>क्षयं गृहं <sup>v</sup>धन्वन्तु प्रेरयन्तु । तथा <sup>v</sup>आयज्यवः आभिमुख्येन यष्टव्या आभिमुख्येन प्रयच्छन्तो वा अत एव <sup>v</sup>विश्ववाराः सर्वैर्वरणीयाः <sup>v</sup>सुमतिम् अनुग्रहबुद्धिं च प्रेरयन्तु । कीदृशाः । <sup>v</sup>होतारो <sup>v</sup>न होतारो यथा देवानिन्द्रादीन् स्तुवन्ति एवं <sup>v</sup>दिवियजः दिवि द्युलोके[1] स्थितानिन्द्रादीन् देवान् यजन्तः । दिवशब्दे ' तत्पुरुषे कृति बहुलम् ' इति सप्तम्या अलुक् । <sup>v</sup>मन्द्रतमाः अत्यन्तं मदकराः ॥

एवा देव देवताते पवस्व महे सोम प्सरसे देवपानः ।
महश्चिद्धि ष्मसि हिताः समर्ये कृधि सुष्ठाने रोदसी पुनानः ॥ २७ ॥

एव । देव । देवऽताते । पवस्व । महे । सोम । प्सरसे । देवऽपानः ।
महः । चित् । हि । स्मसि । हिताः । सुऽमर्ये ।
कृधि । सुस्थाने इति सुऽस्थाने । रोदसी इति । पुनानः ॥ २७ ॥

हे <sup>v</sup>देव द्योतमान स्तोतव्य वा हे <sup>v</sup>सोम <sup>v</sup>देवपानः देवैः पातव्यस्त्वं <sup>v</sup>देवताते देवैस्तते विनते यज्ञे <sup>v</sup>महे महते <sup>v</sup>प्सरसे भक्षणाय देवानां पानाय <sup>v</sup>एव एवं <sup>v</sup>पवस्व क्षर । ततो वयं <sup>v</sup>हिताः त्वया प्रेरिताः सन्तः <sup>v</sup>समर्ये मरणधर्मसहिते संग्रामे <sup>v</sup>महश्चित् महतो बलाधिकानपि शत्रून् <sup>v</sup>स्मसि <sup>v</sup>हि अभिभवेम खलु । किंच <sup>v</sup>पुनानः पूयमानस्त्वं <sup>v</sup>रोदसी द्यावापृथिव्यौ <sup>v</sup>सुस्थाने अस्माकं शोभनावासस्थाने सत्यौ <sup>v</sup>कृधि कुरु ॥

अश्वो न क्रदो वृषभिर्युजानः सिंहो न भीमो मनसो जवीयान् ।
अर्वाचीनैः पथिभिर्ये रजिष्ठा आ पवस्व सौमनसं न इन्दो ॥ २८ ॥

अश्वः । न । क्रदः । वृषऽभिः । युजानः । सिंहः । न । भीमः । मनसः । जवीयान् ।
अर्वाचीनैः । पथिऽभिः । ये । रजिष्ठाः । आ । पवस्व । सौमनसम् । नः । इन्दो इति ॥२८॥

हे सोम <sup>v</sup>वृषभिः ऋत्विग्भिः सोममभिषुण्वद्भिः <sup>v</sup>युजानः योज्यमानस्त्वम् <sup>v</sup>अश्वो <sup>v</sup>न अश्व इव <sup>v</sup>क्रदः क्रन्दसि शब्दायसे । कीदृशः । <sup>v</sup>सिंहो <sup>v</sup>न सिंह इव <sup>v</sup>भीमः शत्रूणां भयंकरः तथा <sup>v</sup>मनसः अपि <sup>v</sup>जवीयान् वेगवत्तरः । <sup>v</sup>अर्वाचीनैः अभिमुखैः <sup>v</sup>पथिभिः मार्गैः <sup>v</sup>ये मार्गाः <sup>v</sup>रजिष्ठाः अत्यन्तमृजवो भवन्ति । ' विभाषर्जोश्छन्दसि ' इत्यृकारस्य रादेशः । हे <sup>v</sup>इन्दो दीप्यमान सोम तैर्मार्गैः <sup>v</sup>नः अस्माकं <sup>v</sup>सौमनसं सौमनस्यम् <sup>v</sup>आ <sup>v</sup>पवस्व आप्रापय ॥

१. न-भ६-मु-द्युलोक' ।

शतं धारा देवजाता असृग्रन्त्सहस्रमेनाः कवयो मृजन्ति ।
इन्दो सनित्रं दिव आ पवस्व पुरएतासि महतो धनस्य ॥ २९ ॥

शतम् । धाराः । देवऽजाताः । असृग्रन् । सहस्रम् । एनाः । कवयः । मृजन्ति ।
इन्दो इति । सनित्रम् । दिवः । आ । पवस्व । पुरःऽएता । असि । महतः । धनस्य ॥२९॥

हे सोम ^v^देवजाताः देवार्थं प्रादुर्भूताः ^v^शतं शतसंख्याकास्त्वदीयाः ^v^धाराः ^v^असृग्रन् सृज्यन्ते । ततः ^v^कवयः क्रान्तदर्शिन ऋत्विजः ^v^सहस्रं बहुविधाः ^v^एनाः त्वदीया धाराः ^v^मृजन्ति अलंकुर्वन्ति । यद्वा । सहस्रमनेकधा मृजन्ति शोधयन्ति । हे ^v^इन्दो ^v^सनित्रं भजनसाधनं धनं ^v^दिवः द्युलोकादस्माकं पुत्रादीनां च ^v^आ ^v^पवस्व आप्रापय । कुतोऽस्य धनमिति चेत् तत्राह । ^v^महतः प्रभूतस्य[1] ^v^धनस्य ^v^पुरएता पुरतो गन्ता ^v^असि भवसि । तस्माद्देहीति ॥

दिवो न सर्गा असमृग्रमह्नां राजा न मित्रं प्र मिनाति धीरः ।
पितुर्न पुत्रः क्रतुभिर्यतान आ पवस्व विशे अस्या अजीतिम् ॥ ३० ॥

दिवः । न । सर्गाः । अससृग्रम् । अह्नाम् । राजा । न । मित्रम् । प्र । मिनाति । धीरः ।
पितुः । न । पुत्रः । क्रतुऽभिः । यतानः । आ । पवस्व । विशे । अस्यै । अजीतिम् ॥३०॥

^v^दिवो ^v^न यथा दिवो द्योतमानस्यादित्यस्य[2] ^v^अह्नां संबन्धिनः ^v^सर्गाः रश्मयः ^v^अससृग्रं विसृज्यन्ते तद्वत् सोमस्य सर्गाः । सृज्यन्त इति सर्गा धाराः । विसृज्यन्ते । सृजेर्व्यत्ययेन कर्मार्थे लङि 'बहुलं छन्दसि' इति शस्य श्लुः । झेरमादेशश्छान्दसः । ^v^धीरः प्राज्ञः ^v^राजा अयं सोमः ^v^मित्रं सखायं ^v^न ^v^प्र ^v^मिनाति न हिनस्ति । ^v^क्रतुभिः कर्मभिः ^v^यतानः यतमानः ^v^पुत्रः ^v^पितुर्न पितुर्यथापराभवं[3] करोति तद्वत् कर्मभिर्यतमानस्त्वम् ^v^अस्यै ^v^विशे प्रजायै ^v^अजीतिम्* अपराभवम् ^v^आ ^v^पवस्व आप्रापय । यथा न पराजिता भवन्ति तथा कुर्वित्यर्थः[3] ॥ ॥ १६ ॥

प्र ते धारा मधुमतीरसृग्रन्वारान्यत्पूतो अत्येष्यव्यान् ।
पवमान पवसे धाम गोनां जज्ञानः सूर्यमपिन्वो अर्कैः ॥ ३१ ॥

प्र । ते । धाराः । मधुऽमतीः । असृग्रन् । वारान् । यत् । पूतः । अतिऽएषि । अव्यान् ।
पवमान । पवसे । धाम । गोनाम् । जज्ञानः । सूर्यम् । अपिन्वः । अर्कैः ॥ ३१ ॥

^v^ते तव स्वभूताः ^v^मधुमतीः मधुमत्यः ^v^धाराः ^v^प्र ^v^असृग्रन् तदा प्रसृज्यन्ते ^v^यत् यदा ^v^पूतः वसतीवरीभिस्त्वम् ^v^अव्यान् अविभवान् ^v^वारान् वालान् पवित्राणि ^v^अत्येषि अतीत्य गच्छसि । किंच हे ^v^पवमान ^v^धाम धारकं ^v^गोनां गवां पयो लक्षीकृत्य ^v^पवसे । ततः ^v^जज्ञानः जायमानस्त्वम् ^v^अर्कैः अर्चनीयैः स्वतेजोभिः ^v^सूर्यम् आदित्यम् ^v^अपिन्वः पूरयसि ॥

---

१. त-भ६ मु-प्रभूत° । २. त-भ६–द्योतमानस्त्वमादित्यस्य । ३. ग–पितुर्यथा पुत्रः पराभवं न करोति तथा अस्यै विशे यथा न पराजयो भवति तथा ॰आपवस्व रक्षणं कुर्वतीत्यर्थः । *त-भ१.२.४.५- मु–अजीतिमपराजितिं ।

**कनिक्रदृदनु पन्थामृतस्य शुक्रो वि भास्यमृतस्य धाम ।**
**स इन्द्राय पवसे मत्सरवान् हिन्वानो वाचं मतिभिः कवीनाम् ॥ ३२ ॥**

कनिक्रदत् । अनु । पन्थाम् । ऋतस्य । शुक्रः । वि । भासि । अमृतस्य । धाम ।
सः । इन्द्राय । पवसे । मत्सरऽवान् । हिन्वानः । वाचम् । मतिऽभिः । कवीनाम् ॥ ३२ ॥

अभिपूयमाणः स सोमः ᵛऋतस्य सत्यभूतस्य यज्ञस्य पन्थानं मार्गमभि ᵛकनिक्रदत् पुनः-पुनः शब्दायते । अथ प्रत्यक्षः । ᵛअमृतस्य अमरणधर्मस्य ᵛधाम स्थानभूतः । मरणरहित इत्यर्थः । तादृशः ᵛशुक्रः शुक्लवर्णस्त्वं ᵛवि ᵛभासि विशेषेण राजसि । ᵛमत्सरवान् मदकररसयुक्तः ᵛसः त्वम् ᵛइन्द्राय इन्द्रार्थं ᵛपवसे क्षरसि । कीदृशः । ᵛकवीनां स्तोतृणां ᵛमतिभिः[1] सह ᵛवाचं शब्दं ᵛहिन्वानः प्रेरयन् पवसे ॥

**दिव्यः सुपर्णोऽव चक्षि सोम पिन्वन्धाराः कर्मणा देववीतौ ।**
**एन्दो विश कलशं सोमधानं क्रन्दन्निहि सूर्यस्योप रश्मिम् ॥ ३३ ॥**

दिव्यः । सुऽपर्णः । अव । चक्षि । सोम । पिन्वन् । धाराः । कर्मणा । देवऽवीतौ ।
आ । इन्दो इति । विश । कलशम् । सोमऽधानम् । क्रन्दन् । इहि । सूर्यस्य । उप । रश्मिम् ॥ ३३ ॥

हे ᵛसोम ᵛदिव्यः दिवि भवः ᵛसुपर्णः सुपतनस्त्वम् ᵛअव ᵛचक्षि अवस्तात् पश्य[2] । चष्टेर्लेटि सिपि व्यत्ययेन परस्मैपदम् । किं कुर्वन् । ᵛदेववीतौ देवानां हविर्भक्षणस्थाने यज्ञे ᵛकर्मणा ᵛधाराः ᵛपिन्वन् क्षरन् । किंच हे ᵛइन्दो ᵛसोमधानं ᵛकलशम् ᵛआ ᵛविश । ᵛक्रन्दन् शब्दायमानस्त्वं ᵛसूर्यस्य[3] प्रेरकस्यादित्यस्य ᵛरश्मिं कान्तिम् ᵛउप ᵛइहि उपगच्छ ॥

**तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।**
**गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ३४ ॥**

तिस्रः । वाचः । ईरयति । प्र । वह्निः । ऋतस्य । धीतिम् । ब्रह्मणः । मनीषाम् ।
गावः । यन्ति । गोऽपतिम् । पृच्छमानाः । सोमम् । यन्ति । मतयः । वावशानाः ॥ ३४ ॥

ᵛवह्निः वोढा यजमानः ᵛतिस्रो ᵛवाचः ऋग्यजुःसामात्मिकाः स्तुतीः ᵛप्रेरयति । तथा ᵛऋतस्य यज्ञस्य ᵛधीतिं धारयित्रीं ᵛब्रह्मणः परिवृढस्य सोमस्य ᵛमनीषां मनस ईशित्रीं कल्याणीं वाचं च प्रेरयति । किंच ᵛगोपतिं वृषभं यथा गावोऽभिगच्छन्ति तद्वद्गवां स्वामिनं सोमं ᵛगावः ᵛपृच्छमानाः पृच्छन्त्यः सत्यः ᵛयन्ति । स्वपयसा मिश्रयितुमभिगच्छन्ति । तथा ᵛवावशानाः कामयमानाः ᵛमतयः स्तोतारः ᵛसोमं ᵛयन्ति स्तोतुमभिगच्छन्ति ॥

**सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।**
**सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥ ३५ ॥**

सोमम् । गावः । धेनवः । वावशानाः । सोमम् । विप्राः । मतिऽभिः । पृच्छमानाः ।
सोमः । सुतः । पूयते । अज्यमानः । सोमे । अर्काः । त्रिऽस्तुभः । सम् । नवन्ते ॥ ३५ ॥

---

१. भ१(२)-मतिभिः स्तुतिभिः । २. त-भ६-मु-पश्य च । ३. ग-त३-भ५-सूर्यस्य सर्वस्य ।

ᵛधेनवः प्रीणयित्र्यः ᵛगावः ᵛसोमं ᵛवावशानाः कामयमाना भवन्ति। ᵛविप्राः मेधाविनः स्तोतारः ᵛमतिभिः[1] ᵛपृच्छमानाः पृच्छन्तो भवन्ति। ᵛअज्यमानः गोभिः सिच्यमानः ᵛसुतः अभिषुतः ᵛसोमः ऋत्विग्भिः परिपूयते। तथा ᵛत्रिष्टुभः त्रिष्टुब्रूपाः ᵛअर्काः अस्माभिः क्रियमाणा एते मन्त्राः ᵛसोमे ᵛसं ᵛनवन्ते संगच्छन्ते ॥ ॥ १७ ॥

एवा नः सोम परिषिच्यमान आ पवस्व पूयमानः स्वस्ति।
इन्द्रमा विश बृहता रवेण वर्धया वाचं जनया पुरंधिम् ॥ ३६ ॥

एव। नः। सोम। परिऽसिच्यमानः। आ। पवस्व। पूयमानः। स्वस्ति।
इन्द्रम्। आ। विश। बृहता। रवेण। वर्धय। वाचम्। जनय। पुरम्ऽधिम् ॥ ३६ ॥

हे ᵛसोम ᵛपरिषिच्यमानः परितः पात्रेषु सिच्यमानः ᵛपूयमानः त्वं ᵛनः अस्माकम् ᵛएव ᵛस्वस्ति अविनाशम् ᵛआ ᵛपवस्व आप्रापय। किंच ᵛबृहता महता ᵛरवेण शब्देन सह ᵛइन्द्रमा ᵛविश प्रविश। तथा[2] ᵛवाचं स्तुतिलक्षणां ᵛवर्धय। किंच ᵛपुरंधिं बहुधि प्रज्ञानं ᵛजनय अस्मभ्यमुत्पादय। वाक्यभेदादनिघातः ॥

आ जागृविर्विप्र ऋता मतीनां सोमः पुनानो असदच्चमूषु।
सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः ॥ ३७ ॥

आ। जागृविः। विप्रः। ऋता। मतीनाम्। सोमः। पुनानः। असदत्। चमूषु।
सपन्ति। यम्। मिथुनासः। निऽकामाः। अध्वर्यवः। रथिरासः। सुऽहस्ताः ॥ ३७ ॥

ᵛजागृविः जागरणशीलः ᵛऋता। 'सुपां सुलुक्' इति षष्ठ्या आकारः। ऋतानां सत्यानां ᵛमतीनां स्तुतीनां ᵛविप्रः ज्ञाता सः ᵛसोमः ᵛपुनानः पूयमानः सन् ᵛचमूषु चमसेषु ᵛआ ᵛअसदत् आसीदति। ᵛमिथुनासः परस्परं संगताः ᵛनिकामाः नितरां कामयमानाः ᵛरथिरासः यज्ञस्य नेतारः ᵛसुहस्ताः कल्याणपाणयः ᵛअध्वर्यवः पवित्रे ᵛयं सोमं ᵛसपन्ति स्पृशन्ति। 'षप समवाये'। 'सपतिः स्पृशतिकर्मा' ( निरु. ५.१६ ) इति नैरुक्ताः ॥

स पुनान उप सूरे न धातोभे अप्रा रोदसी वि ष आवः।
प्रिया चिद्यस्य प्रियसास ऊती स तू धनं कारिणे न प्र यंसत् ॥ ३८ ॥

सः। पुनानः। उप। सूरे। न। धाता।
आ। उभे इति। अप्राः। रोदसी इति। वि। सः। आवरित्यावः।
प्रिया। चित्। यस्य। प्रियसासः। ऊती। सः। तु। धनम्। कारिणे। न। प्र। यंसत् ॥ ३८ ॥

ᵛपुनानः पूयमानः ᵛसः सोम इन्द्रे ᵛउप गच्छति। तत्र दृष्टान्तः। ᵛसूरे ᵛन यथा सूर्ये ᵛधाता संवत्सर उपगच्छति। 'संवत्सरो वै धाता संवत्सरेणैवास्मै प्रजाः प्रजनयति' ( तै. ब्रा. १.७.२.१ ) इत्याम्नानात्। किंच ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛअप्राः स्वमहिम्ना आपूरयति। तथा ᵛसः सोमः ᵛवि ᵛआवः स्वतेजसा तमांसि विवृणोति। वृणोतेः 'मन्त्रे घस' इति

१. म१(२)–मतिभिः स्तुतिभिः। २. ग-त३.४.६-म१.६.७–तथा वर्धया;त१.२.७-म२–तथा वर्धय।

च्लेर्लुक् । 'छन्दस्यपि दृश्यते' इत्याडागमः[1] । 'पूर्वपदात्' इति स इत्यस्य सांहितिकं षत्वम् । प्रिया । षष्ठ्या आकारः । प्रियस्य यस्य सोमस्य यद्वा[2] प्रिया प्रियाणि प्रयच्छतो यस्य सोमस्य[2] प्रियसासः अत्यन्तं प्रियतमा धाराः ऊती ऊत्यै रक्षणाय भवन्ति । सः तु क्षिप्रमस्मभ्यं धनं प्र यंसत् प्रयच्छतु । यच्छतेर्लेटि सिप्यडागमः । तत्र दृष्टान्तः । कारिणे न भृतकाय भृतिं यथा प्रयच्छन्ति तद्वत् ॥

स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाँ अभि नो ज्योतिषावीत् ।
येना नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमुष्णन् ॥ ३९ ॥

सः । वर्धिता । वर्धनः । पूयमानः । सोमः । मीढ्वान् । अभि । नः । ज्योतिषा । आवीत् ।
येन । नः । पूर्वे । पितरः । पदऽज्ञाः । स्वःऽविदः । अभि । गाः । अद्रिम् । उष्णन् ॥ ३९ ॥

वर्धिता देवानां स्वकलाप्रदानेन वर्धयिता वर्धनः स्वयं वर्धमानः पवित्रेण पूयमानः मीढ्वान् कामानां सेक्ता सः सोमः नः अस्मान् ज्योतिषा स्वतेजसा अभि आवीत् अभिरक्षतु । येन सोमेन पदज्ञाः पणिभिरपहृतानां गवां पदानि जानन्तः स्वर्विदः सर्वज्ञाः[3] सूर्यं जानन्तो वा[3] नः अस्माकं पूर्वे चिरंतनाः पितरः अङ्गिरसः गाः पशूनभिलक्ष्य अद्रिमुष्णन् शिलोच्चयमुष्णन् । सोमतेजसान्धकारावृतं शिलोच्चयं गत्वा पशूनाहरन्नित्यर्थः । उषिरिह मुष्णातिमम्मानकर्मा । यद्वा । मुष्णातेर्लङि वर्णलोपः ॥

अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥ ४० ॥

अक्रान् । समुद्रः । प्रथमे । विऽधर्मन् । जनयन् । प्रऽजाः । भुवनस्य । राजा ।
वृषा । पवित्रे । अधि । सानौ । अव्ये । बृहत् । सोमः । ववृधे । सुवानः । इन्दुः ॥ ४० ॥

समुद्रः । यस्मादापः[4] समुद्द्रवन्ति स समुद्रः । अपां वर्षकः[4] राजा सोमः प्रथमे विस्तृते भुवनस्य उदकस्य विधर्मन् विधारकेऽन्तरिक्षे प्रजाः जनयन् उत्पादयन् अक्रान् सर्वमतिक्रामति । क्रमतेर्लुङि तिपीडभावे वृद्धौ च कृतायां सिज्लोपे मकारस्य 'मो नो धातोः' इति नकारे रूपम् । वृषा कामानां वर्षिता सुवानः अभिपूयमाणः इन्दुः दीप्तः सः सोमः अधि अधिकं सानौ समुच्छ्रिते अव्ये अविमये[5] पवित्रे बृहत् प्रभूतं ववृधे वर्धते ॥ ॥ १८ ॥

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ ४१ ॥

महत् । तत् । सोमः । महिषः । चकार । अपाम् । यत् । गर्भः । अवृणीत । देवान् ।
अदधात् । इन्द्रे । पवमानः । ओजः । अजनयत् । सूर्ये । ज्योतिः । इन्दुः ॥ ४१ ॥

---

१. त-भ६-मु-इत्यडागमः । २. त१.२.५.६.७-'यद्वा ...सोमस्य' नास्ति । ३. त-सर्वं जानंतो वा; भ६-सर्वं जानंतो । ४. ग-समुद्द्रवंत्यस्मादाप इति । ५. त१.२.५.६.७-अविमये; त४-अविसये ।

ᵛमहिषः महान् पूज्यो वा ᵛसोमः ᵛमहत् प्रभूतं ᵛतत् कर्म ᵛचकार अकरोत्। किं तत्। ᵛअपां ᵛगर्भः उदकानां गर्भभूतो जनयितृत्वाज्जन्यत्वाच्च स सोमः ᵛदेवान् ᵛअवृणीत समभजतेति ᵛयत् ᵛतत् कृतवानिति। किंच ᵛपवमानः पूयमानः सोमः ᵛओजः सोमपानेन[1] जन्यं बलम् ᵛइन्द्रे ᵛअदधात् व्यदधात्। तथा ᵛइन्दुः सोमः ᵛसूर्ये ᵛज्योतिः तेजः ᵛअजनयत्॥

**मत्सि वायुमिष्टये राधसे च मत्सि मित्रावरुणा पूयमानः।**
**मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम ॥ ४२ ॥**

मत्सि। वायुम्। इष्टये। राधसे। च। मत्सि। मित्रावरुणा। पूयमानः।
मत्सि। शर्धः। मारुतम्। मत्सि। देवान्। मत्सि। द्यावापृथिवी इति। देव। सोम॥ ४२ ॥

हे सोम त्वं ᵛवायुं ᵛमत्सि मादय[2]। किमर्थम्। ᵛइष्टये अस्माकमेषणायाग्नाय[3] ᵛराधसे धनाय ᵛच। तथा ᵛपूयमानः पवित्रेण त्वं ᵛमित्रावरुणा मित्रावरुणौ च ᵛमत्सि तर्पयसि। किंच ᵛमारुतं मरुतां स्वभूतं ᵛशर्धः बलं च ᵛमत्सि। तथा ᵛदेवान् इन्द्रादीन् ᵛमत्सि हर्षयसि। हे ᵛदेव स्तोतव्य[4] हे ᵛसोम द्यावापृथिव्यौ च ᵛमत्सि मादय। एतान् हर्षयुक्तान् कृत्वास्मभ्यं धनं प्रयच्छेत्यर्थः॥

**ऋजुः पवस्व वृजिनस्य हन्तापामीवां बाधमानो मृधश्च।**
**अभिश्रीणन्पयः पयसाभि गोनामिन्द्रस्य त्वं तव वयं सखायः॥ ४३ ॥**

ऋजुः। पवस्व। वृजिनस्य। हन्ता। अप। अमीवाम्। बाधमानः। मृधः। च।
अभिऽश्रीणन्। पयः। पयसा। अभि। गोनाम्। इन्द्रस्य। त्वम्। तव। वयम्। सखायः॥४३॥

हे सोम ᵛऋजुः ऋजुगमनः[5] सन् ᵛपवस्व क्षर। किं कुर्वन्। ᵛवृजिनस्य उपद्रवस्य ᵛहन्ता। ᵛअमीवां रोगरूपं राक्षसम् ᵛअप ᵛबाधमानः। तथा अस्मदीयान् ᵛमृधः हिंसकान् शत्रून् ᵛच बाधमानः सन् पवस्व। ततः ᵛपयः आत्मीयं रसं ᵛगोनां गवां ᵛपयसा क्षीरेण ᵛअभिश्रीणन् अभिसंयोजयन् पात्राणि ᵛअभि गच्छसि। अपि च ᵛत्वम् ᵛइन्द्रस्य सखासि हे सोम ᵛतव ᵛवयं ᵛसखायः स्तुत्यस्तोतृत्वयष्टृयष्टव्यत्वलक्षणेन सखिभूताः स्मः॥

**मध्वः सूदं पवस्व वस्व उत्सं वीरं च न आ पवस्वा भगं च।**
**स्वदस्वेन्द्राय पवमान इन्दो रयिं च न आ पवस्वा समुद्रात्॥ ४४ ॥**

मध्वः। सूदम्। पवस्व। वस्वः। उत्सम्। वीरम्। च। नः। आ। पवस्व। भगम्। च।
स्वदस्व। इन्द्राय। पवमानः। इन्दो इति। रयिम्। च। नः। आ। पवस्व। समुद्रात्॥४४॥

हे सोम ᵛमध्वः माधुर्यस्य ᵛसूदं क्षारयितारं घनीभूतं वा ᵛवस्वः वसुनो धनस्य ᵛउत्सम् उत्स्यन्दकं रसं ᵛपवस्व। किंच ᵛनः अस्मभ्यं ᵛवीरं पुत्रम् ᵛआ ᵛपवस्व आप्रापय। तथा ᵛभगं भजनीयं धनं ᵛच देहि। हे ᵛइन्दो ᵛपवमानः पूयमानः सन् ᵛइन्द्राय ᵛस्वदस्व रुचितो भव।

---

१. भ६–सोमपान॰। २. भ१(२) मादयसि। ३. भ१(२)–॰मेषणीयायाग्नाय। ४. ग–द्योतमान। ५. त४–शीघ्रगमनः।

ततस्त्वं ᵛनः अस्मभ्यं ᵛसमुद्रात् अन्तरिक्षात् ᵛरयिं धनं पुत्रं वा। राति ददाति क्षीरमिति रयिर्गौर्वा। तां[1] वा ᵛआ[1] ᵛपवस्व देहि॥

**सोमः सुतो धारयात्यो न हित्वा सिन्धुर्न निम्नमभि वाज्यक्षाः।**
**आ योनिं वन्यमसदत्पुनानः समिन्दुर्गोभिरसरत्समद्भिः॥ ४५॥**

सोमः। सुतः। धारया। अत्यः। न। हित्वा। सिन्धुः। न। निम्नम्। अभि। वाजी। अक्षारिति।
आ। योनिम्। वन्यम्। असदत्। पुनानः। सम्। इन्दुः। गोभिः। असरत्। सम्। अत्ऽभिः॥४५॥

ᵛसुतः अभिषुतः ᵛसोमः ᵛधारया स्वीयया ᵛअत्यो ᵛन अतनशीलोऽश्व इव ᵛहित्वा गत्वा। हिनोतेः क्तिनिपि[2] रूपम्। किंच ᵛवाजी बलवान् सोमः ᵛसिन्धुर्न यथा सिन्धुः स्यन्दमाना नदी ᵛनिम्नं प्रदेशमभिगच्छति तद्वन्निम्नमधरभाविनं कलशम् ᵛअभि ᵛअक्षाः अभिक्षरति। ततः ᵛपुनानः पूयमानः सोमः ᵛवन्यं वृक्षभवं ᵛयोनिं स्थानं कलशम् ᵛआ ᵛअसदत् आसीदति। सोऽयम् ᵛइन्दुः सोमः ᵛगोभिः गोविकारैः क्षीरादिभिः श्रयणैः ᵛसम् ᵛअसरत् संसरति। तथा ᵛअद्भिः वसतीवरीभिश्च संगच्छते॥ ॥१९॥

**एष स्य ते पवत इन्द्र सोमश्चमूषु धीर उशते तवस्वान्।**
**स्वर्चक्षा रथिरः सत्यशुष्मः कामो न यो देवयतामसर्जि॥ ४६॥**

एषः। स्यः। ते। पवते। इन्द्र। सोमः। चमूषु। धीरः। उशते। तवस्वान्।
स्वःऽचक्षाः। रथिरः। सत्यऽशुष्मः। कामः। न। यः। देवऽयताम्। असर्जि॥ ४६॥

हे ᵛइन्द्र ᵛउशते कामयमानाय ᵛते तुभ्यं त्वदर्थं ᵛधीरः प्राज्ञः ᵛतवस्वान् वेगवान् ᵛस्यः सः ᵛएषः ᵛसोमः ᵛचमूषु चमसेषु ᵛपवते क्षरति। ᵛस्वर्चक्षाः सर्वदर्शनः ᵛरथिरः रथवान् ᵛसत्यशुष्मः यथार्थबलः ᵛयः सोमः ᵛदेवयतां देवानिच्छतां यजमानानां ᵛकामो ᵛन काम इव ᵛअसर्जि असृज्यत। अदीयतेत्यर्थः॥

**एष प्रत्नेन वयसा पुनानस्तिरो वर्पांसि दुहितुर्दधानः।**
**वसानः शर्म त्रिवरूथमप्सु होतेव याति समनेषु रेभन्॥ ४७॥**

एषः। प्रत्नेन। वयसा। पुनानः। तिरः। वर्पांसि। दुहितुः। दधानः।
वसानः। शर्म। त्रिऽवरूथम्। अप्ऽसु। होताऽइव। याति। समनेषु। रेभन्॥ ४७॥

ᵛप्रत्नेन पूर्वकालीनेन ᵛवयसा अन्नेन ᵛपुनानः पूयमानः। अन्नात्मिकया धारया क्षरन्नित्यर्थः। तादृशः ᵛदुहितुः सर्वस्य दोग्ध्र्याः पृथिव्याः ᵛवर्पांसि। वर्प इति रूपनाम वृणोति शरीरमिति। रूपाणि ᵛतिरः ᵛदधानः स्वतेजसा तिरस्कुर्वन्नाच्छादयन् तथा ᵛत्रिवरूथं त्रिभूमिकोपेतम्। यद्वा। त्रयः शीतातपवर्षाः। तेषां निवारकम्। ᵛशर्म यज्ञगृहं ᵛवसानः आच्छादयन् ᵛअप्सु वसतीवरीषु स्थितः ᵛएषः सोमः ᵛहोतेव यथा होता स्तुतिध्वनिं कुर्वन् यज्ञेषु याति तद्वत् ᵛरेभन् शब्दायमानः सन् ᵛसमनेषु। समग्ति कर्माणि धृष्टाः प्रगल्भा यन्त्यत्रेति समना यज्ञाः। तेषु ᵛयाति गच्छति॥

१. त१.२.३.५.६.७-म२.६-तं आ; त४-तां आ। २. त१.२.५.६.७-म६-क्तिपि; त४-क्तिनिपि।

नू नस्त्वं रथिरो देव सोम परि स्रव चम्वोः पूयमानः ।
अप्सु स्वादिष्ठो मधुमाँ ऋतावा देवो न यः सविता सत्यमन्मा ॥ ४८ ॥

नु । नः । त्वम् । रथिरः । देव । सोम । परि । स्रव । चम्वोः । पूयमानः ।
अप्ऽसु । स्वादिष्ठः । मधुऽमान् । ऋतऽवा । देवः । न । यः । सविता । सत्यऽमन्मा ॥ ४८ ॥

हे ᵛदेव काम्यमान हे ᵛसोम ᵛरथिरः रथवान् ᵛत्वं ᵛनः अस्माकं स्वभूते यज्ञे ᵛचम्वोः अधिषवणफलकयोः ᵛपूयमानः सन् ᵛअप्सु वसतीवरीषु ᵛनु क्षिप्रं ᵛपरि ᵛस्रव परितः क्षर। ᵛस्वादिष्ठः स्वादुतमोऽत एव ᵛमधुमान् माधुर्ययुक्तः ᵛऋतावा यज्ञवान् ᵛसविता सर्वस्य प्रेरकः ᵛयः त्वं ᵛदेवो ᵛन देव इव ᵛसत्यमन्मा सत्यस्तुतिको भवसि स त्वं परिस्रवेति ॥

अभि वायुं वीत्यर्षा गृणानो३भि मित्रावरुणा पूयमानः ।
अभी नरं धीजवनं रथेष्ठामभीन्द्रं वृषणं वज्रबाहुम् ॥ ४९ ॥

अभि । वायुम् । वीती । अर्ष । गृणानः । अभि । मित्रावरुणा । पूयमानः ।
अभि । नरम् । धीऽजवनम् । रथेऽस्थाम् । अभि । इन्द्रम् । वृषणम् । वज्रऽबाहुम् ॥ ४९ ॥

हे सोम ᵛगृणानः स्तूयमानस्त्वं ᵛवीती। 'सुपां सुलुक्' इति चतुर्थ्याः पूर्वसवर्णदीर्घः। वीत्यै पानाय ᵛवायुम् ᵛअभि ᵛअर्ष अभिगच्छ। तथा पवित्रेण[1] ᵛपूयमानः त्वं ᵛमित्रावरुणा मित्रावरुणौ च पानायाभिगच्छ। किंच ᵛनरं सर्वस्य नेतारं ᵛधीजवनं बुद्ध्या समं वेगं कुर्वाणं ᵛरथेष्ठां रथेस्थां रथे तिष्ठन्तम्। अनेनाश्विनावभिधीयेते। एकवचनं प्रत्येकविवक्षया समुदायविवक्षया[2] वा। एतादृशावश्विनौ च ᵛअभि गच्छ। तथा ᵛवृषणं कामानां वर्षकं ᵛवज्रबाहुं वज्रयुक्तबाहुम् ᵛइन्द्रं च त्वं पानाय ᵛअभि गच्छ ॥

अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः ।
अभि चन्द्रा भर्तवे नो हिरण्याभ्यश्वान्रथिनो देव सोम ॥ ५० ॥

अभि । वस्त्रा । सुऽवसनानि । अर्ष । अभि । धेनूः । सुऽदुघाः । पूयमानः ।
अभि । चन्द्रा । भर्तवे । नः । हिरण्या । अभि । अश्वान् । रथिनः । देव । सोम ॥ ५० ॥

हे ᵛसोम त्वमस्माकं[3] ᵛसुवसनानि सुपरिधानानि ᵛवस्त्रा वस्त्राणि ᵛअभि ᵛअर्ष अभिगमय। यद्वा। सुवसनानि शोभनवस्त्रसहितानि वस्त्रा आच्छादकानि धनान्यभिगमय। किंच ᵛपूयमानः पवित्रेण त्वं ᵛसुदुघाः सुष्ठु पयसो दोग्ध्रीः ᵛधेनूः नवप्रसूतिका गाः ᵛअभि प्रापय। अपि च ᵛचन्द्रा चन्द्राण्याह्लादकानि ᵛहिरण्या हिरण्यानि ᵛभर्तवे भरणाय पोषणाय ᵛनः अस्माकम् ᵛअभि गमय। तथा हे ᵛदेव स्तोतव्य हे ᵛसोम ᵛरथिनः रथवतः ᵛअश्वान् अस्माकम् ᵛअभि प्रापय ॥ ॥ २० ॥

अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः ।
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः ॥ ५१ ॥

---

१. त-भ६-पवित्रे । २. त-'समुदायविवक्षया' नास्ति । ३. ग-त-भ१.२.४.६-अस्माकं ।

अभि । नः । अर्ष । दिव्या । वसूनि । अभि । विश्वा । पार्थिवा । पूयमानः ।
अभि । येन । द्रविणम् । अश्नवाम । अभि । आर्षेयम् । जमदग्निऽवत् । नः ॥ ५१ ॥

हे सोम पवित्रेण ᵛपूयमानः त्वं ᵛदिव्या दिव्यानि दिवि भवानि ᵛवसूनि धनानि ᵛनः अस्माकम् ᵛअभि ᵛअर्ष अभिगमय । तथा ᵛपार्थिवा पार्थिवानि पृथिव्यां भवानि ᵛविश्वा सर्वाणि[1] धनानि ᵛअभि गमय । तथा ᵛयेन त्वदीयेन सामर्थ्येन ᵛद्रविणं धनं वयम् ᵛअभि ᵛअश्नवाम अभिव्याप्नुयाम तत् सामर्थ्यमभिगमय । किंच ᵛआर्षेयम् आर्षाणामृषिपुत्राणां योग्यं धनं ᵛजमदग्निवत् जमदग्नेर्यथा त्वं प्रापयः एवं ᵛनः अस्माकमपि ᵛअभि अर्ष । यद्वा । आर्षेयमार्षाणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतममकार्षीः एवमस्माकं तादृशं मन्त्रं स्वादुतमं कुर्विति कुत्सो नामर्षिः प्रार्थयते ॥

अया पवा पवस्वैना वसूनि माँश्चत्व इन्दो सरसि प्र धन्व ।
ब्रध्नश्चिदत्र वातो न जूतः पुरुमेधश्चित्तकवे नरं दात् ॥ ५२ ॥

अया । पवा । पवस्व । एना । वसूनि । माँश्चत्वे । इन्दो इति । सरसि । प्र । धन्व ।
ब्रध्नः । चित् । अत्र । वातः । न । जूतः । पुरुऽमेधः । चित् । तकवे । नरम् । दात् ॥ ५२ ॥

हे सोम ᵛअया अनया ᵛपवा पवमानया धारया सह ᵛएना एनानि ᵛवसूनि धनानि ᵛपवस्व क्षर । पवा । 'पूङ् पवने'। 'अन्येभ्योऽपि दृश्यन्ते' इति विच्प्रत्ययः । आर्धधातुकलक्षणो गुणः । 'सावेकाचः°' इति तृतीयाया उदात्तत्वम् । तथा हे ᵛइन्दो त्वं ᵛमाँश्चत्वे मन्यमानानां[2] चातके ᵛसरसि उदके वसतीवर्याख्ये ᵛप्र ᵛधन्व प्रगच्छ । ततः ᵛअत्र अस्मिन् सोमे पूयमाने सति ᵛब्रध्नश्चित् सर्वेषां प्रज्ञापको मूलभूतो वादित्योऽपि ᵛवातो ᵛन वात इव ᵛजूतः वेगितः सन् किंच ᵛपुरुमेधश्चित् बहुविधयज्ञ इन्द्रश्चिदिन्द्रोऽपि ᵛतकवे । तकतिर्गतिकर्मसु पठितः । अस्मादौणादिक उन्प्रत्ययः । सोममभिगच्छते स्तुतिभिर्मह्यं ᵛनरं कर्मनेतारं पुत्रं ᵛदात प्रयच्छतु । हे[3] सोम त्वया तर्पितौ सन्ताविन्द्रादित्यौ* मह्यं पुत्रं प्रयच्छतामित्यर्थः[3] ॥

उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे ।
षष्टिं सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय ॥ ५३ ॥

उत । नः । एना । पवया । पवस्व । अधि । श्रुते । श्रवाय्यस्य । तीर्थे ।
षष्टिम् । सहस्रा । नैगुतः । वसूनि । वृक्षम् । न । पक्वम् । धूनवत् । रणाय ॥ ५३ ॥

हे सोम ᵛउत अपि च ᵛश्रवाय्यस्य सर्वैः श्रवणीयस्य सोमस्य तव ᵛश्रुते प्रसिद्धे । यद्वा । षष्ठ्यर्थे चतुर्थी । श्रुतस्य[4] शब्दस्य ᵛतीर्थे स्थाने ᵛनः अस्माकं स्वभूते यज्ञे ᵛएना अनया ᵛपवया पूयमानया धारया ᵛअधि[5] अधिकं ᵛपवस्व क्षर । ᵛनैगुतः । नीचीनं गवन्ते[6] शब्दायन्त इति निगुतः शत्रवः । तेषां हन्तृत्वेन संबन्धी सोऽयं सोमः ᵛषष्टिं ᵛसहस्रा षष्टिसंख्याकानि सहस्राणि

१. भ७–सर्वाणि वसूनि । २. त-भ६–वर्तमानानां । ३. ग-त३-भ१.५.७–' हे...°मित्यर्थः ' नास्ति । * त–संतौ चंद्रादित्यौ । ४. ग-त-भ-मु–श्रुतः । ५. ग-त-भ–' अधि ' नास्ति । ६. त१.२.४.५–गंतात; त६–गंता; त७–गच्छन्; भ६–गच्छंते ।

ᐯवसूनि धनानि ᐯरणाय शत्रूणां जयार्थं ᐯधूनवत् अस्माकमकम्पयत्। प्रायच्छदिति यावत्। कथमिव। ᐯवृक्षं ᐯन ᐯपक्वं पक्वफलं वृक्षं यथा कम्पयति फलार्थी तद्वत्॥

महीमे अस्य वृषनाम शूषे माँश्चत्वे वा पृशने वा वधत्रे।
अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः॥ ५४॥

महि। इमे इति। अस्य। वृषनाम। शूषे इति। माँश्चत्वे। वा। पृशने। वा। वधत्रे इति।
अस्वापयत्। निऽगुतः। स्नेहयत्। च। अप। अमित्रान्। अप। अचितः। अच। इतः॥५४॥

ᐯमहि महती[१] प्रभूते ᐯवृषनाम। 'सुपां सुलुक्०' इति सुपो लुक्। वृषनामनी वर्षणनमने। शराणां वर्षणं शत्रूणां नमनम्। ᐯइमे एते द्वे कर्मणी ᐯअस्य सोमस्य ᐯशूषे सुखकरे भवतः। ये च कर्मणी ᐯमाँश्चत्वे। अश्वनामैतत् मश्नु चरतीति। अश्वैः क्रियमाणे युद्धे। तत्साध्यत्वाद्युद्धमिह गृह्यते। ᐯवा अपि वा ᐯपृशने स्पर्शनसाध्ये बाहुयुद्धे ᐯवधत्रे शत्रूणां हिंसनशीले भवतः। सोऽयं ᐯनिगुतः नीचैः शब्दायमानान् शत्रून् ᐯअस्वापयत् ताभ्यामसूषुपत्। अवधीदित्यर्थः। किंच ᐯस्नेहयत् प्राद्रवयत् संग्रामाच्छत्रून्। अथ प्रत्यक्षकृतः। हे सोम स त्वम् ᐯअमित्रान् शत्रून् ᐯअप ᐯअच अपगमय। तथा ᐯअचितः अग्निचयनमकुर्वतो नास्तिकांश्च ᐯइतः अस्मत्सकाशात् ᐯअप अच अपगमय। अञ्चतिर्गतिकर्मा॥

सं त्री पवित्रा विततान्येष्यन्वेकं धावसि पूयमानः।
असि भगो असि दात्रस्य दातासि मघवा मघवद्भ्य इन्दो॥ ५५॥

सम्। त्री। पवित्रा। विऽततानि। एषि। अनु। एकम्। धावसि। पूयमानः।
असि। भगः। असि। दात्रस्य। दाता। असि। मघऽवा। मघवत्ऽभ्यः। इन्दो इति॥ ५५॥

हे सोम ᐯविततानि विस्तृतानि ᐯत्री त्रीणि पवित्राणि[२] अग्निवायुसूर्यात्मकानि पवित्राणि ᐯसम् ᐯएषि सम्यक् प्राप्नोषि। किंच ᐯपूयमानः त्वम् ᐯएकम् अविवालकृतं पवित्रम् ᐯअनु ᐯधावसि अनुगच्छसि। किंच त्वं ᐯभगः भजनीयः ᐯअसि। तथा ᐯदात्रस्य देयस्य धनस्य ᐯदाता ᐯअसि। कथमस्य[३] धनदत्वमिति* चेत् तदुच्यते। हे ᐯइन्दो सोम[३] ᐯमघवद्भ्यः धनवद्भ्योऽन्येभ्योऽपि त्वं ᐯमघवा ᐯअसि अतिशयेन धनवान् भवसि॥ ॥ २१॥

एष विश्ववित्पवते मनीषी सोमो विश्वस्य भुवनस्य राजा।
द्रप्साँ ईरयन्विदथेष्विन्दुर्वि वारमव्यं समयाति याति॥ ५६॥

एषः। विश्वऽवित्। पवते। मनीषी। सोमः। विश्वस्य। भुवनस्य। राजा।
द्रप्सान्। ईरयन्। विदथेषु। इन्दुः। वि। वारम्। अव्यम्। समया। अति। याति॥ ५६॥

ᐯविश्ववित् सर्वस्य वेत्ता अत एव ᐯमनीषी मेधावी ᐯविश्वस्य ᐯभुवनस्य सर्वस्य लोकस्य ᐯराजा स्वामी ᐯएषः ᐯसोमः ᐯपवते क्षरति। एतदेव विवृणोति। ᐯविदथेषु। विदन्ति जानन्त्यत्र

१. त-म-महते। २. म१(२)-पवित्रा पवित्राणि; मु-पवित्रा। ३. ग-भवसि; किंच।
* त१-म१.४-धनत्वमिति; त२.३.४.५.६.७-म२.५.६-धनवत्त्वमिति।

देवानिति यद्वा विन्दन्ति लभन्त इति विदथा यज्ञाः । तेषु ^v^द्रप्सान् रसकणान् ^v^ईरयन् प्रेरयन् ^v^इन्दुः सोमः ^v^अव्यम् अविभवं ^v^वारं वालं पवित्रं ^v^समया उभयतः ^v^वि ^v^अति ^v^याति व्यतीत्य गच्छति ॥

**इन्दुं रिहन्ति महिषा अदब्धाः पदे रेभन्ति कवयो न गृध्राः ।**
**हिन्वन्ति धीरा दशभिः क्षिपाभिः समञ्जते रूपमपां रसेन ॥ ५७ ॥**

इन्दुम् । रिहन्ति । महिषाः । अदब्धाः । पदे । रेभन्ति । कवयः । न । गृध्राः ।
हिन्वन्ति । धीराः । दशऽभिः । क्षिपाभिः । सम् । अञ्जते । रूपम् । अपाम् । रसेन ॥ ५७ ॥

^v^महिषाः महान्तः पूज्या वा अत एव ^v^अदब्धाः कैश्चिदप्यहिंसिता देवाः ^v^इन्दुं सोमं ^v^रिहन्ति लिहन्ति आस्वादयन्ति । किंच देवाः सोममुशन्तः सन्तः ^v^पदे तस्यास्य सोमस्य धारास्थाने ^v^रेभन्ति शब्दायन्ते । तत्र दृष्टान्तः । ^v^कवयो ^v^न ^v^गृध्राः । धनमभिकाङ्क्षमाणाः कवयः स्तोतारो यथा स्तुवन्तः शब्दायन्ते[1] तद्वत् । ^v^धीराः कर्मणि कुशला ऋत्विजः ^v^दशभिः एतत्संख्याकाभिः ^v^क्षिपाभिः अङ्गुलीभिस्तमिमं सोमं ^v^हिन्वन्ति अभिषवार्थं प्रेरयन्ति । अपि च ^v^रूपं सोमस्य[2] ^v^रूपम्[2] अंशुम् ^v^अपां वसतीवर्याख्यानां ^v^रसेन ^v^समञ्जते सम्यक् सेवयन्ति ॥

**त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् ।**
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५८ ॥**

त्वया । वयम् । पवमानेन । सोम । भरे । कृतम् । वि । चिनुयाम । शश्वत् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥५८॥

हे ^v^सोम ^v^पवमानेन पवित्रेण पूयमानेन ^v^त्वया सहायेन ^v^भरे । संग्रामनाम । संग्रामे ^v^शश्वत् बहु ^v^कृतं कर्तव्यं ^v^वयं ^v^वि ^v^चिनुयाम विशेषेण कुर्याम । यस्मात्तव साहाय्येन कर्माणि कुर्मः ^v^तत् तस्मात् ^v^नः अस्मान् ^v^मित्रः ^v^वरुणः ^v^अदितिः एतन्नामिका ^v^सिन्धुः एतदभिधाना च ^v^पृथिवी ^v^उत अपि च ^v^द्यौः एते मित्रादयो नोऽस्मान् ^v^मामहन्तां पूजयन्तु धनादिदानेन ॥ ॥ २२ ॥

'अभि नः' इति द्वादशर्चं द्वितीयं सूक्तम् । वृषागिरो राज्ञः पुत्रोऽम्बरीषो भरद्वाजपुत्र ऋजिश्वोभौ महितावस्यर्षी । इदमुत्तराणि च त्रीण्यानुष्टुभानि । अत्र त्वेकादशी बृहती । पवमानः सोमो देवता । तथा चानुक्रम्यते—'अभि नो द्वादशाम्बरीष ऋजिश्वा चानुष्टुभं ह बृहत्युपान्त्या' इति । गतो विनियोगः ॥

**अभि नो वाजसातमं रयिमर्ष पुरुस्पृहम् ।**
**इन्दो सहस्रभर्णसं तुविद्युम्नं विभ्वासहम् ॥ १ ॥**

अभि । नः । वाजऽसातमम् । रयिम् । अर्ष । पुरुऽस्पृहम् ।
इन्दो इति । सहस्रऽभर्णसम् । तुविऽद्युम्नम् । विभ्वऽसहम् ॥ १ ॥

हे ^v^इन्दो दीप्त[3] ^v^वाजसातमम् अत्यन्तं बलप्रदमन्नप्रदं वा ^v^रयिं धनं पुत्रं वा ^v^नः अस्माकम् ^v^अभि ^v^अर्ष अभिगमय । कीदृशम् । ^v^पुरुस्पृहं बहुभिः स्पृहणीयं ^v^सहस्रभर्णसं

१. त–शब्दायंति; भ६–शब्दयंति । २. त१.२.५.६.७–'सोमस्य रूपं' नास्ति; भ६–सोमस्य ।
३. ग-त३-भ१.२.६.७–'दीप्त' नास्ति ।

बहुविधभरणम्। अनेकपोषणयुक्तमित्यर्थः। तुविद्युम्नम्। ' द्युम्नं द्योततेर्यशो वान्नं वा ' (निरु. ५.५) इति यास्कः। बह्वन्नं बहुयशोयुक्तं वा विभ्वासहम्। विभ्व इति महन्नाम। महतोऽभिभवितारम्॥

**परि॒ ष्य सु॑वा॒नो अ॒व्ययं॒ रथे॒ न वर्मा॑व्यत।**
**इन्दु॑र॒भि द्रुणा॑ हि॒तो हि॑या॒नो धारा॑भिरक्षाः॥ २॥**

परि॑। स्यः। सु॒वा॒नः। अ॒व्यय॑म्। रथे॑। न। वर्म॑। अ॒व्य॒त।
इन्दु॑ः। अ॒भि। द्रुणा॑। हि॒तः। हि॒या॒नः। धारा॑भिः। अ॒क्षा॒रिति॑॥ २॥

सुवानः सूयमानः[1] स्यः स सोमः अव्ययम् अविमयं पवित्रं परि पवते। तत्र दृष्टान्तः। रथे न यथा रथे स्थितः[2] पुरुषः वर्म कवचम् अव्यत परिव्ययति। व्ययतेर्लुङि वर्णलोपश्छान्दसः। अभि हितः अभितः प्रेरितः यद्वा स्तोतृभिरभिष्टुतः सः इन्दुः सोमः द्रुणा द्रुममयेन द्रोणकलशेन हियानः। ' हि गतौ वृद्धौ च '। तेन पूर्यमाणः सन् धाराभिः अक्षाः क्षरति। क्षरतेर्लुङि रूपम॥

**परि॒ ष्य सु॑वा॒नो अ॑क्षा॒ इन्दु॑र॒व्ये मद॑च्युतः।**
**धारा॒ य ऊ॒र्ध्वो अ॑ध्व॒रे भ्रा॒जा नैति॑ गव्य॒युः॥ ३॥**

परि॑। स्यः। सु॒वा॒नः। अ॒क्षा॒रिति॑। इन्दु॑ः। अव्ये॑। मद॑ऽच्युतः।
धारा॑। यः। ऊ॒र्ध्वः। अ॒ध्व॒रे। भ्रा॒जा। न। एति॑। ग॒व्य॒ऽयुः॥ ३॥

सुवानः सूयमानः स्यः सः इन्दुः सोमः मदच्युतः मदार्थं देवैः प्रेरितः सन् अव्ये अविभवे पवित्रे परि अक्षाः परितः क्षरति। अध्वरे ऊर्ध्वः समुच्छ्रितः सर्वेषां मुख्यः यः सोमः गव्ययुः गोकामः यद्वा क्षीरादिकं कामयमानः सन् धारा धारया सह एति गच्छति। भ्राजा न भ्राजमानया दीप्त्या यथान्तरिक्षे गच्छति तद्वत्॥

**स हि त्वं दे॑व॒ शश्व॑ते॒ वसु॒ मर्ता॑य दा॒शुषे॑।**
**इन्दो॑ सह॒स्रिणं॑ र॒यिं श॒तात्मा॑नं विवाससि॥ ४॥**

सः। हि। त्वम्। दे॒व॒। शश्व॑ते। वसु॑। मर्ता॑य। दा॒शुषे॑।
इन्दो॒ इति॑। स॒ह॒स्रिण॑म्। र॒यिम्। श॒तऽआ॑त्मानम्। वि॒वा॒स॒सि॥ ४॥

हे देव सोम सः त्वं शश्वते पुत्रादिमत्त्वेन बहवे मर्त्याय मनुष्याय दाशुषे हविर्दत्तवते यजमानाय वसु धनं[3] मह्यं च विवाससि प्रेरयसि। एकवाक्यतापक्षे हि तिङन्तस्य हियोगादनिघातः स्यात्॥

**व॒यं ते॑ अ॒स्य वृ॑त्रह॒न्वसो॒ वस्वः॑ पुरु॒स्पृहः॑।**
**नि नेदि॑ष्ठतमा इ॒षः स्याम॑ सु॒म्नस्या॑ध्रिगो॥ ५॥**

---

१. त१.२.५–पूयमानः; त४–पूयमानः। २. स१.२.७–अवस्थितः। ३. ग–धनं प्रयच्छति तथा मति हे इंदो सहस्रसंख्याकं बहुरूपं धनं।

वयम् । ते । अस्य । वृत्रऽहन् । वसो इति । वस्वः । पुरुऽस्पृहः ।
नि । नेदिष्ठऽतमाः । इषः । स्याम । सुम्नस्य । अध्रिगो इत्यध्रिऽगो ॥ ५ ॥

हे vवृत्रहन् शत्रूणां हन्तः सोम vअस्य एतादृशस्य vते तव स्वभूताः vवयं स्मः । ततो हे vवसो वासयितः vपुरुस्पृहः बहुभिः स्पृहणीयस्य vवस्वः वसुनः धनस्य त्वया दीयमानस्य वयं vनि नितरां vनेदिष्ठतमाः अत्यन्तमन्तिकतमाः स्याम । तथा vइषः अन्नस्य किंच हे vअध्रिगो अधृतगमन सोम vसुम्नस्य सुखस्य वयमन्तिकतमाः vस्याम भवेम ॥

**द्विर्यं पञ्च स्वयशसं स्वसारो अद्रिसंहतम् ।**
**प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त्यूर्मिणम् ॥ ६ ॥**

द्विः । यम् । पञ्च । स्वऽयशसम् । स्वसारः । अद्रिऽसंहतम् ।
प्रियम् । इन्द्रस्य । काम्यम् । प्रऽस्नापयन्ति । ऊर्मिणम् ॥ ६ ॥

vद्विः vपञ्च दशसंख्याकाः vस्वसारः कर्मकरणार्थमितस्ततो गच्छन्त्योऽङ्गुलयः vस्वयशसं स्वभूतयशस्कम् vअद्रिसंहतं ग्रावभिरभिषुतम् vइन्द्रस्य vप्रियं vकाम्यं सर्वैः काम्यमानम् vऊर्मिणं धाराभिस्तद्वन्तं vयं सोमं vप्रस्नापयन्ति वसतीवरीभिः प्रकर्षेण सेचयन्ति यजमानाः तं पुनन्तीत्युत्तरत्र संबन्धः ॥ ॥ २३ ॥

**परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण ।**
**यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ॥ ७ ॥**

परि । त्यम् । हर्यतम् । हरिम् । बभ्रुम् । पुनन्ति । वारेण ।
यः । देवान् । विश्वान् । इत् । परि । मदेन । सह । गच्छति ॥ ७ ॥

vहर्यतं सर्वैः स्पृहणीयं vहरिं हरितवर्णं vबभ्रुं बभ्रुवर्णं च vत्यं तं सोमं vवारेण वालेन पवित्रेण vपरि vपुनन्ति परिशोधयन्ति । vयः सोमः विश्वान् सर्वानिन्द्रादीन् vदेवान् vइत् देवानेव vमदेन मादकेन रसेन vसह vपरि vगच्छति ॥

**अस्य वो ह्यवसा पान्तो दक्षसाधनम् । यः सूरिषु श्रवो बृहद्दधे स्वर्ण हर्यतः ॥ ८ ॥**

अस्य । वः । हि । अवसा । पान्तः । दक्षऽसाधनम् ।
यः । सूरिषु । श्रवः । बृहत् । दधे । स्वः । न । हर्यतः ॥ ८ ॥

vवः । छान्दसो वसादेशः । हिरवधारणे । वो यूयम् vअस्य सोमस्य vअवसा रक्षणेन vदक्षसाधनं बलस्य साधनं रसं vपान्तः पिबन्तो भवथ । vस्वर्ण आदित्य इव vहर्यतः सर्वैः काम्यमानः vयः अयं सोमः vसूरिषु स्तोत्राणि प्रेरयत्सु स्तोतृषु vबृहत् महत् प्रभूतं vश्रवः अन्नं vदधे विदधे । स्थापयतीति यावत् ॥

**स वां यज्ञेषु मानवी इन्दुर्जनिष्ट रोदसी ।**
**देवो देवी गिरिष्ठा अस्रेधन्तं तुविष्वणि ॥ ९ ॥**

सः । वाम् । यज्ञेषु । मानवी इति । इन्दुः । जनिष्ट । रोदसी इति ।
देवः । देवी इति । गिरिऽस्थाः । अस्रेधन् । तम् । तुविऽस्वनि ॥ ९ ॥

हे ^मानवी मानव्यौ मनोः स्वभूते हे ^देवी द्योतमाने हे ^रोदसी द्यावापृथिव्यौ ^वां युवयोः ^यज्ञेषु ^सः ^इन्दुः सोमः ^जनिष्ट अजनि अन्तरिक्षे ^देवः स्वतेजसा सर्वं प्रकाशयन् पृथिव्यां ^गिरिष्ठाः ग्रावसु तिष्ठन् । ^तं जातं सोमं ^तुविष्वणि बहुस्वने उपरे यज्ञे वा ^अस्रेधन् ऋत्विजो ग्रावभिरघ्नन् । अभ्यपुणन्निति यावत् ॥

**इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।**
**नरे च दक्षिणावते देवाय सदनासदे ॥ १० ॥**

इन्द्राय । सोम । पातवे । वृत्रऽघ्ने । परि । सिच्यसे ।
नरे । च । दक्षिणाऽवते । देवाय । सदनऽसदे ॥ १० ॥

हे ^सोम ^वृत्रघ्ने वृत्रस्य हन्त्रे ^इन्द्राय । षष्ठ्यर्थे चतुर्थी । इन्द्रस्य ^पातवे पानार्थं ^परि ^षिच्यसे परितः पात्रेषु सिच्यसे । वसतीवरीभिर्वा । किंच ^दक्षिणावते ऋत्विग्भ्यो दक्षिणादानेन तद्वते ^देवाय देवार्थं हवींषि दातुं ^सदनसदे यज्ञगृहे सीदते ^नरे मनुष्याय यजमानाय तस्मै फलप्रदानार्थं परिषिच्यसे ॥

**ते प्रत्नासो व्युष्टिषु सोमाः पवित्रे अक्षरन् ।**
**अपप्रोथन्तः सनुतर्हुरश्चितः प्रातस्ताँ अप्रचेतसः ॥ ११ ॥**

ते । प्रत्नासः । विऽउष्टिषु । सोमाः । पवित्रे । अक्षरन् ।
अपऽप्रोथन्तः । सनुतः । हुरःऽचितः । प्रातरिति । तान् । अप्रऽचेतसः ॥ ११ ॥

^व्युष्टिषु उषसां व्युच्छनेषु प्रकाशनेषु ^प्रत्नासः प्रत्नाः ^ते ^सोमाः ^पवित्रे ^अक्षरन् क्षरन्ति । ये सोमाः ^सनुतः अन्तर्हितान् ^अप्रचेतसः प्रज्ञानरहितान्[1] ^हुरश्चितः । स्तेननामैतत् । कौटिल्येन चिन्वन्तीति । ^तान् मायाविनः स्तेनान् ^प्रातः प्रातःकाल एव ^अपप्रोथन्तः । अपप्रोथनं चापप्रेरणम् । अपप्रेरयन्तः शब्देन निराकुर्वन्तो भवन्ति । ते क्षरन्तीति समन्वयः ॥

**तं सखायः पुरोरुचं यूयं वयं च सूरयः ।**
**अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम् ॥ १२ ॥**

तम् । सखायः । पुरःऽरुचम् । यूयम् । वयम् । च । सूरयः ।
अश्याम । वाजऽगन्ध्यम् । सनेम । वाजऽपस्त्यम् ॥ १२ ॥

हे ^सखायः स्तोतारः ^सूरयः प्राज्ञाः ^यूयं ^वयं ^च यजमानाः ^पुरोरुचं पुरतो रोचमानं ^वाजगन्ध्यं बलकरसाधुगन्धोपेतं सोमम् ^अश्याम अश्नीयाम पिबेम । किंच ^वाजपस्त्यम् अन्नयुक्तगृहसहितं यद्वा बलकरं सोमं ^सनेम संभजेमहि । सोमेन बलान्नगृहादीनि भवन्तीत्यर्थः ॥　॥२४॥

1. ग-भ६-मु–प्रज्ञारहितान् ।

'आ हर्यताय' इत्यष्टर्चं तृतीयं सूक्तम्। कश्यपगोत्रौ रेभसूनू एतत्संज्ञौ द्वावृषी। आद्या बृहती सप्तानुष्टुभः। पवमानसोमो देवता। तथा चानुक्रान्तम्—'आ हर्यतायाष्टौ रेभसूनू काश्यपौ बृहत्याद्या' इति। गतो विनियोगः॥

आ हर्यताय धृष्णवे धनुस्तन्वन्ति पौंस्यम्।
शुक्रां वयन्त्यसुराय निर्णिजं विपामग्रे महीयुवः॥ १॥

आ। हर्यताय। धृष्णवे। धनुः। तन्वन्ति। पौंस्यम्।
शुक्राम्। वयन्ति। असुराय। निःऽनिजम्। विपाम्। अग्रे। महीयुवः॥ १॥

ᐯहर्यताय सर्वैः स्पृहणीयाय ᐯधृष्णवे शत्रूणां धर्षणशीलाय सोमाय ᐯपौंस्यं पुंस्त्वस्याभिव्यञ्जकं ᐯधनुः ᐯआ ᐯतन्वन्ति। धनुषि ज्यां कुर्वन्तीति। सोमस्य धाराविसर्गार्थं वितायमानं पवित्रमभिधीयते। तदेव[1] विवृणोति[2]। ᐯमहीयुवः पूजाकामा ऋत्विजः ᐯविपां मेधाविनां देवानाम् ᐯअग्रे पुरस्तात् ᐯशुक्रां शुक्लवर्णां ᐯनिर्णिजं यया सोमो निर्णिज्यते ताम् ᐯअसुराय बलवते[3] ᐯवयन्ति वितन्वन्ति। दशापवित्रं विस्तारयन्तीत्यर्थः। वयतिर्गतिकर्मा॥

अध क्षपा परिष्कृतो वाजाँ अभि प्र गाहते।
यदी विवस्वतो धियो हरिं हिन्वन्ति यातवे॥ २॥

अध। क्षपा। परिऽकृतः। वाजान्। अभि। प्र। गाहते।
यदि। विवस्वतः। धियः। हरिम्। हिन्वन्ति। यातवे॥ २॥

ᐯक्षपा। 'सुपां सुलुक्' इति पञ्चम्या आकारः। क्षपाया रात्रेः ᐯअध अनन्तरं प्रातःकाले ᐯपरिष्कृतः। भूषणार्थे 'संपर्युपेभ्यः' इति करोतेः सुडागमः। अद्भिरलंकृतः। यद्वा। क्षपयित्र्यां सेनायामलंकृतः। सोमः[4] ᐯवाजान् अन्नानि बलानि वाभिलक्ष्य ᐯप्र ᐯगाहते प्रगच्छति। ᐯविवस्वतः परिचरणवतो यजमानस्य ᐯधियः कर्मसाधनभूता अङ्गुलयः ᐯहरिं हरितवर्णमेतमंशुं ᐯयातवे पात्राण्यभिगमनाय ᐯयदि ᐯहिन्वन्ति प्रेरयन्ति तर्हि सवनानि गच्छतीति॥

तमस्य मर्जयामसि मदो य इन्द्रपातमः।
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः॥ ३॥

तम्। अस्य। मर्जयामसि। मदः। यः। इन्द्रऽपातमः।
यम्। गावः। आसऽभिः। दधुः। पुरा। नूनम्। च। सूरयः॥ ३॥

ᐯअस्य सोमस्य ᐯतं रसं ᐯमर्जयामसि मर्जयामः शोधयामः। अलंकुर्मो वा। ᐯयः ᐯमदः मदकरो रसः ᐯइन्द्रपातमः इन्द्रेणात्यन्तं पातव्यो भवति। किंच ᐯगावः गन्तारः ᐯसूरयः स्तोतारः ᐯपुरा ᐯच ᐯनूनम् इदानीं च ᐯयं सोमरसम् ᐯआसभिः आस्यैः ᐯदधुः धारयन्ति। पिबन्तीति यावत्। यद्वा। गावो धेनवो यं सोमं तृणादिष्ववस्थितमासभिरास्यैर्दधुर्धारयन्ति तृणरूपेण भक्षयन्ति॥

---

१. त१.२–तादृश च; त५-भ६–तादृक्। २. त१.२.३.४.५.६-भ१.२.४.६–विवृणोतीति। ३. गत३-भ५.६–बलवते सोमाय। ४. ग–तदनंतरं प्रातःसवने।

**तं गार्थया पुराण्या पुनानमभ्यनूषत ।**
**उतो कृपन्त धीतयो देवानां नाम बिभ्रतीः ॥ ४ ॥**

तम् । गार्थया । पुराण्या । पुनानम् । अभि । अनूषत ।
उतो इति । कृपन्त । धीतयः । देवानाम् । नाम । बिभ्रतीः ॥ ४ ॥

vपुनानं पूयमानं vतं सोमं vपुराण्या पुरा कृतया vगाथया स्तुत्या vअभ्यनूषत स्तोतारः अभिष्टुवन्ति । ‘ नू स्तवने ’। लुङि रूपम् । vउतो अपि च vनाम कर्मार्थं नमनं vबिभ्रतीः बिभ्राणाः vधीतयः अङ्गुलयः vदेवानां सोमरूपहविष्प्रदानाय vकृपन्त कल्पयन्ति समर्था भवन्ति । ‘ कृपू सामर्थ्ये ’ ॥

**तमुक्षमाणमव्यये वारे पुनन्ति धर्णसिम् ।**
**दूतं न पूर्वचित्तय आ शासते मनीषिणः ॥ ५ ॥**

तम् । उक्षमाणम् । अव्यये । वारे । पुनन्ति । धर्णसिम् ।
दूतम् । न । पूर्वऽचित्तये । आ । शासते । मनीषिणः ॥ ५ ॥

vउक्षमाणम् अद्भिः सिच्यमानं vधर्णसिं सर्वस्य धारकं vतं सोमम् vअव्यये अविमये vवारे वाले पवित्रे vपुनन्ति शोधयन्ति । ततः vमनीषिणः मेधाविनो यजमानाः तमिमं सोमं vदूतं vन दूतमिव vपूर्वचित्तये देवानां पूर्वमेव प्रज्ञापनाय vआ vशासते प्रार्थयन्ते ॥ ॥ २५ ॥

**स पुनानो मदिन्तमः सोमश्चमूषु सीदति ।**
**पशौ न रेत आदधत्पतिर्वचस्यते धियः ॥ ६ ॥**

सः । पुनानः । मदिन्ऽतमः । सोमः । चमूषु । सीदति ।
पशौ । न । रेतः । आऽदधत् । पतिः । वचस्यते । धियः ॥ ६ ॥

vमदिन्तमः अत्यन्तं मादयिता[1] vसः vसोमः vपुनानः पूयमानः सन् vचमूषु चमसेषु vसीदति । ततः vपशौ vन यथा पशौ कश्चिद्वृषभो रेत आदधाति तद्वच्चमसादिषु vरेतः स्वीयं रसम् vआदधत् आदधानः vधियः कर्मणः vपतिः पालयितायं सोमः vवचस्यते अभिष्टूयते[2] ॥

**स मृज्यते सुकर्मभिर्देवो देवेभ्यः सुतः ।**
**विदे यदासु संददिर्महीरपो वि गाहते ॥ ७ ॥**

सः । मृज्यते । सुकर्मऽभिः । देवः । देवेभ्यः । सुतः ।
विदे । यत् । आसु । सम्ऽददिः । महीः । अपः । वि । गाहते ॥ ७ ॥

vदेवेभ्यः देवार्थं vसुतः अभिषुतः vदेवः द्योतमानः स्तोतव्यो वा vसः सोमः vसुकर्मभिः ऋत्विग्भिः vमृज्यते परिपूयते । vयत् यदायं सोमः vआसु प्रजासु vसंददिः सम्यग्धनदानशील इति vविदे ज्ञायते तदानीं vमहीः महतीः vअपः वसतीवरीः vवि vगाहते विशेषेणाभिगच्छति । यदा सोममभिषुण्वन्ति तदा तेभ्यो धनं प्रयच्छतीत्यर्थः ॥

---

१. त१.२.३.४.५.६-भ-मदयिता । २. त-भ२.४.६-मु-अभिषूयते; भ१.७-अभिसूयते ।

सुत इन्दो पवित्र आ नृभिर्यतो वि नीयसे ।
इन्द्राय मत्सरिन्तमश्चमूष्वा नि षीदसि ॥ ८ ॥

सुतः । इन्दो इति । पवित्रे । आ । नृऽभिः । यतः । वि । नीयसे ।
इन्द्राय । मत्सरिन्ऽतमः । चमूषु । आ । नि । सीदसि ॥ ८ ॥

हे इन्दो सुतः अभिषुतः यतः आयतः सर्वतो विस्तृतस्त्वं नृभिः कर्मनेतृभिर्ऋत्विग्भिः पवित्रे वि नीयसे विशेषेण नीयमानो भवसि । ततः मत्सरिन्तमः अतिशयेन मादयिता त्वम् इन्द्राय इन्द्रार्थं चमूषु चमसेषु आ नि षीदसि[1] ॥ ॥ २६ ॥

'अभी नवन्ते' इति नवर्चं चतुर्थं सूक्तम् । पूर्ववदृषिदेवते । सर्वा अनुष्टुभः । तथा चानुक्रम्यते— 'अभी नवन्ते नव' इति । गतो विनियोगः ॥

अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् ।
वत्सं न पूर्व आयुनि जातं रिहन्ति मातरः ॥ १ ॥

अभि । नवन्ते । अद्रुहः । प्रियम् । इन्द्रस्य । काम्यम् ।
वत्सम् । न । पूर्वे । आयुनि । जातम् । रिहन्ति । मातरः ॥ १ ॥

यथा मातरः गावः पूर्वे प्रथमे आयुनि वयसि जातं वत्सं रिहन्ति लिहन्ति तथा अद्रुहः अद्रोग्ध्रा वसतीवर्याख्या आपः इन्द्रस्य प्रियं काम्यं सर्वैः काम्यमानं सोमम् अभि नवन्ते अभिगच्छन्ति ॥

पुनान इन्दवा भर सोम द्विबर्हसं रयिम् ।
त्वं वसूनि पुष्यसि विश्वानि दाशुषो गृहे ॥ २ ॥

पुनानः । इन्दो इति । आ । भर । सोम । द्विऽबर्हसम् । रयिम् ।
त्वम् । वसूनि । पुष्यसि । विश्वानि । दाशुषः । गृहे ॥ २ ॥

हे इन्दो दीप्यमान हे सोम पुनानः पूयमानस्त्वं द्विबर्हसं द्वयोः स्थानयोः परिबृंहणशीलं रयिं धनमस्मभ्यम् आ भर आहर देहि । त्वं हि दाशुषः हविर्दत्तवतो यजमानस्य गृहे स्थित्वा विश्वानि सर्वाणि वसूनि धनानि पुष्यसि पोषयसि ॥

त्वं धियं मनोयुजं सृजा वृष्टिं न तन्यतुः ।
त्वं वसूनि पार्थिवा दिव्या च सोम पुष्यसि ॥ ३ ॥

त्वम् । धियम् । मनःऽयुजम् । सृज । वृष्टिम् । न । तन्यतुः ।
त्वम् । वसूनि । पार्थिवा । दिव्या । च । सोम । पुष्यसि ॥ ३ ॥

हे सोम त्वं मनोयुजं मनसा युज्यमानां मनोवेगां धियं ध्यातव्यां धारां सृज पात्रेषु विसृज । तत्र दृष्टान्तः । वृष्टिं न तन्यतुः । '' तनु विस्तारे ' । ' ऋतन्यञ्जि'' इत्यादिना यतुच्प्रत्ययः । तनोति विस्तारयतीति तन्यतुर्मेघः । यथा मेघो वृष्टिं सृजति तद्वत् । ततो हे सोम त्वं

१. त१.२.५-षीदति ।

ᐯपार्थिवा पृथिव्यां भवानि ᐯवसूनि धनानि तथा दिव्यानि दिवि भवानि धनानि ᐯच ᐯपुष्यसि अस्मभ्यं पोषयसि । प्रयच्छसीत्यर्थः ॥

**परि॑ ते जि॒ग्युषो॑ यथा॒ धारा॑ सु॒तस्य॑ धावति ।**
**रंह॑माणा॒ व्य१॒॑व्ययं॒ वारं॑ वा॒जीव॑ सान॒सिः ॥ ४ ॥**

परि॑ । ते॒ । जि॒ग्युषः॑ । य॒था॒ । धारा॑ । सु॒तस्य॑ । धा॒व॒ति॒ ।
रंह॑माणा । वि । अ॒व्यय॑म् । वार॑म् । वा॒जीऽइ॑व । सा॒न॒सिः ॥ ४ ॥

ᐯसुतस्य ᐯते त्वदीया ᐯसानसिः संभजनशीला यद्वा स्तोतृभिः संभजनीया ᐯरंहमाणा वेगं कुर्वाणा ᐯधारा ᐯअव्ययम् अविमयं ᐯवारं वालं पवित्रं ᐯवि ᐯपरि ᐯधावति विशेषेण परितो गच्छति । तत्र दृष्टान्तः । ᐯजिग्युषः शत्रूणां जेतुर्वीरस्य ᐯवाजीव अश्वो यथा युद्धं परितो धावति तद्वत् । जयतेः क्वसौ ‘ सन्लिटोर्जेः ’ इति कुत्वम् । ᐯयथा इति पूरकः ॥

**क्रत्वे॒ दक्षा॑य नः कवे॒ पव॑स्व सोम॒ धार॑या ।**
**इन्द्रा॑य॒ पात॑वे सु॒तो मि॒त्राय॒ वरु॑णाय च ॥ ५ ॥**

क्रत्वे॑ । दक्षा॑य । नः॒ । क॒वे॒ । पव॑स्व । सो॒म॒ । धार॑या ।
इन्द्रा॑य । पात॑वे । सु॒तः । मि॒त्राय॑ । वरु॑णाय । च॒ ॥ ५ ॥

हे ᐯकवे क्रान्तदर्शिन् हे ᐯसोम ᐯनः अस्माकं ᐯक्रत्वे प्रज्ञानाय ᐯदक्षाय बलाय च त्वं ᐯधारया ᐯपवस्व क्षर । कीदृशः । ᐯइन्द्राय ᐯपातवे पानार्थं तथा ᐯमित्राय ᐯवरुणाय ᐯच ᐯसुतः अभिषुतः खलु ॥　　॥ २७ ॥

**पव॑स्व वाज॒सात॑मः प॒वित्रे॒ धार॑या सु॒तः ।**
**इन्द्रा॑य सोम॒ विष्ण॑वे दे॒वेभ्यो॒ मधु॑मत्तमः ॥ ६ ॥**

पव॑स्व । वा॒ज॒ऽसात॑मः । प॒वित्रे॑ । धार॑या । सु॒तः ।
इन्द्रा॑य । सोम॒ । विष्ण॑वे । दे॒वेभ्यः॑ । मधु॑मत्ऽतमः ॥ ६ ॥

हे ᐯसोम ᐯवाजसातमः अतिशयेनान्नस्य दाता ᐯसुतः अभिषुतस्त्वं ᐯपवित्रे ᐯधारया सह[1] ᐯपवस्व क्षर । ततो हे सोम त्वम् ᐯइन्द्राय ᐯविष्णवे चान्येभ्यो मित्रादिभ्यः ᐯदेवेभ्यः च ᐯमधुमत्तमः अतिशयेन माधुर्योपेतो भव ॥

**त्वां रि॑हन्ति मा॒तरो॒ हरिं॑ प॒वित्रे॑ अ॒द्रुहः॑ ।**
**व॒त्सं जा॒तं न धे॒नवः॒ पव॑मान॒ विध॑र्मणि ॥ ७ ॥**

त्वाम् । रि॒ह॒न्ति॒ । मा॒तरः॑ । हरि॑म् । प॒वित्रे॑ । अ॒द्रुहः॑ ।
व॒त्सम् । जा॒तम् । न । धे॒नवः॑ । पव॑मान । विऽध॑र्मणि ॥ ७ ॥

---

१. ग-स्रवंत्या ।

हे ᵛपवमान सोम ᵛविधर्मणि विविधं हविषां धारके यज्ञे ᵛअद्रुहः द्रोहवर्जिताः ᵛमातरः मातृभूता वसतीवर्यः ᵛहरिं हरितवर्णं ᵛत्वां ᵛपवित्रे[1] स्थितं ᵛरिहन्ति लिहन्ति आस्वादयन्ति । कथमिव । यथा ᵛधेनवः ᵛजातं ᵛवत्सं लिहन्ति तथा ॥

पवमान महि श्रवश्चित्रेभिर्यासि रश्मिभिः ।
शर्धन् तमांसि जिघ्नसे विश्वानि दाशुषो गृहे ॥ ८ ॥

पवमान । महि । श्रवः । चित्रेभिः । यासि । रश्मिऽभिः ।
शर्धन् । तमांसि । जिघ्नसे । विश्वानि । दाशुषः । गृहे ॥ ८ ॥

हे ᵛपवमान ᵛमहि महत् ᵛश्रवः श्रवणीयमन्तरिक्षं ᵛचित्रेभिः चित्रैर्नानाविधैश्चायनीयैर्वा ᵛरश्मिभिः परि ᵛयासि परिगच्छसि । तथा ᵛशर्धन् वेगं कुर्वंस्त्वं ᵛदाशुषः हविर्दत्तवतो यजमानस्य ᵛगृहे स्थित्वा ᵛविश्वानि सर्वाणि ᵛतमांसि तमोरूपाणि रक्षांसि ᵛजिघ्नसे हंसि । एवं द्यावापृथिव्योः वर्तस इत्यर्थः ॥

त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे ।
प्रति द्रापिममुञ्चथाः पवमान महित्वना ॥ ९ ॥

त्वम् । द्याम् । च । महिऽव्रत । पृथिवीम् । च । अति । जभ्रिषे ।
प्रति । द्रापिम् । अमुञ्चथाः । पवमान । महिऽत्वना ॥ ९ ॥

हे ᵛमहिव्रत महाकर्मन् बहुविधकर्मन् सोम ᵛत्वं ᵛद्यां द्युलोकं ᵛच ᵛपृथिवीं ᵛच ᵛअति ᵛजभ्रिषे अत्यन्तं बिभर्षि । ' डुभृञ् धारणपोषणयोः ' । तस्य छान्दसे लिटि सर्वविधीनां छन्दसि विकल्पितत्वादत्रेडागमः । अन्तरिक्षे सोमात्मनेति पृथिव्यां लतारूपेणेत्येवं लोकद्वयवर्तित्वम् । हे ᵛपवमान क्षरन् सोम त्वं ᵛमहित्वना महत्त्वेन युक्तः सन् ᵛद्रापिं कवचं ᵛप्रति ᵛअमुञ्चथाः प्रतिमुञ्चसि संवृणोषि ॥ ॥ २८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल-
साम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके
चतुर्थोऽध्यायः समाप्तः ॥

---

१. त१.२.५.७-म६-दशापवित्रे

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
विज्ञातवेदगाम्भीर्यस्तुर्यं व्याख्याय सप्तमे ।
सायणार्यस्ततोऽध्यायं पञ्चमं व्याचिकीर्षति ॥

तत्र ‘ पुरोजिती वः ’ इति षोडशर्चमनुवाकापेक्षया पञ्चमं सूक्तम् । आद्यस्य तृचस्य श्यावाश्वपुत्रोऽन्धीगुर्नामर्षिः । द्वितीयस्य नहुषस्य राज्ञः पुत्रो ययातिर्नाम । तृतीयस्य मनोः पुत्रो नहुषो नाम राजर्षिः । चतुर्थस्य संवरणाख्यस्य राज्ञः पुत्रो मनुः । एवं द्वादश गताः । शिष्टस्य चतुर्ऋचस्य वाचः पुत्रो वैश्वामित्रो वा प्रजापतिर्ऋषिः । द्वितीयातृतीये गायत्र्यौ शिष्टाश्चतुर्दशानुष्टुभः । तथा चानुक्रम्यते— ‘ पुरोजिती षोळश श्यावाश्विरन्धीगुर्ययातिर्नाहुषो नहुषो[1] मानवो मनुः सांवरण इति तृचाः शेषे प्रजापतिरुपाद्ये गायत्र्यौ ’ इति । गतः सूक्तविनियोगः ॥

**पुरोजिती वो अन्धसः सुताय मादयित्नवे ।**
**अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥**

पुरःऽजिती । वः । अन्धसः । सुताय । मादयित्नवे ।
अप । श्वानम् । श्नथिष्टन । सखायः । दीर्घऽजिह्व्यम् ॥ १ ॥

हे सखायः सखिभूताः समानख्याना वा हे स्तोतारः वः यूयं पुरोजिती । षष्ठ्याः पूर्वसवर्णदीर्घः । पुरःस्थितजयस्य अन्धसः अदनीयस्य सोमस्य स्वभूताय सुताय अभिषुताय मादयित्नवे अत्यन्तं मदकराय रसाय दीर्घजिह्व्यम् । दीर्घा जिह्वा यस्य[2] सः । ‘दीर्घजिह्वी च च्छन्दसि ’ ( पा. सू. ४. १. ५९ ) इति ङीषन्तत्वेन निपातितः । तादृशं श्वानम्[3] अप श्नथिष्टन अपश्नथयत अपबाधध्वम् । यथा श्वा राक्षसा वा सुतं सोमं न लिहन्ति तथा कुरुतेत्यर्थः ॥

पवित्रेष्ट्यां द्वितीयस्याज्यभागस्य ‘ यो धारया ’ इत्येषानुवाक्या । सूत्रितं च—‘ पावकवन्तावाज्यभागावग्नी रक्षांसि सेधति यो धारया पावकया ’ ( आश्व. श्रौ. २. १२ ) इति ॥

**यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥ २ ॥**

यः । धारया । पावकया । परिऽप्रस्यन्दते । सुतः । इन्दुः । अश्वः । न । कृत्व्यः ॥ २ ॥

सुतः अभिषुतः कृत्व्यः । कृत्वीति कर्मनाम । कर्मणि साधुः यः इन्दुः सोमः पावकया पापानां शोधयित्र्या[4] धारया परिप्रस्यन्दते परितः प्रक्षरति । कथमिव । अश्वो न अश्वो यथा वेगेन प्रगच्छति तद्वत् ॥

**तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञं हिन्वन्त्यद्रिभिः ॥ ३ ॥**

तम् । दुरोषम् । अभि । नरः । सोमम् । विश्वाच्या । धिया । यज्ञम् । हिन्वन्ति । अद्रिऽभिः ॥ ३ ॥

नरः कर्मनेतार ऋत्विजः दुरोषम् । रोषतेर्हिंसार्थस्य रेफलोपे दीर्घाभाव ओषतेर्दाहार्थस्य[5] वा खलि[5] रूपमिति संदेहादनवग्रहः । तं दुर्दहं दुर्वधं वा यज्ञं यष्टव्यं तं[6] सोमं विश्वाच्या

---

१. त१.२.४.५-मु—नहुषो नाम । २. त-भ१.४.५.६—अस्य । ३. त१.२.४.५.७-भ६-मु—श्वानं च । ५. ग—अषतेर्वा दुष्पूर्वस्य वा णमुलि । ६. त१.२.४.५.७-भ६-मु—तं वा ।

सर्वान् कामानश्निया ᵛधिया बुद्ध्या ᵛअद्रिभिः ग्रावभिः ᵛअभि ᵛहिन्वन्ति अभिप्रेरयन्ति। अभिषुण्वन्तीति यावत्॥

पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिशस्त्रे 'सुतासः' इति तिस्रः। सूत्रितं च-'दधिक्राव्णोऽकारिषमित्यनुष्टुप् सुतासो मधुमत्तमा इति च तिस्रः' (आश्व. श्रौ. ८. ३) इति॥

**सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः।**
**पवित्रवन्तो अक्षरन्देवान्गच्छन्तु वो मदाः॥ ४॥**

सुतासः। मधुमत्ऽतमाः। सोमाः। इन्द्राय। मन्दिनः।
पवित्रऽवन्तः। अक्षरन्। देवान्। गच्छन्तु। वः। मदाः॥ ४॥

ᵛमधुमत्तमाः अतिशयेन माधुर्योपेता अत एव ᵛमन्दिनः मदकराः ᵛसुतासः अभिषुताः ᵛसोमाः ᵛपवित्रवन्तः पवित्रे वर्तमानाः सन्तः ᵛइन्द्राय इन्द्रार्थम् ᵛअक्षरन् पात्रेषु क्षरन्ति। अथ प्रत्यक्षकृतः। ᵛवः युष्माकं ᵛमदाः मदहेतवो[१] रसाः ᵛदेवान् इन्द्रादीन् ᵛगच्छन्तु॥

**इन्दुरिन्द्राय पवत इति देवासो अब्रुवन्।**
**वाचस्पतिर्मखस्यते विश्वस्येशान ओजसा॥ ५॥**

इन्दुः। इन्द्राय। पवते। इति। देवासः। अब्रुवन्।
वाचः। पतिः। मखस्यते। विश्वस्य। ईशानः। ओजसा॥ ५॥

ᵛइन्दुः सोमः ᵛइन्द्राय इन्द्रार्थं ᵛपवते कलशे क्षरति ᵛइति ᵛदेवासः स्तुतिकारिणः स्तोतारः ᵛअब्रुवन् वदन्ति। यदा स्तोतार एवं वदन्ति तदानीं ᵛवाचः स्तुतेः ᵛपतिः पालयिता। यद्वा। शब्दस्य स्वामी अत्यन्तं शब्दायमान इत्यर्थः। तादृशः सोमः ᵛमखस्यते स्तुतिभिः पूजामिच्छति। लालसायां सुगागमः। कीदृशः। ᵛओजसा बलेन[२] ᵛविश्वस्य सर्वस्य ᵛईशानः प्रभुः॥ ॥ १॥

**सहस्रधारः पवते समुद्रो वाचमीङ्खयः।**
**सोमः पती रयीणां सखेन्द्रस्य दिवेदिवे॥ ६॥**

सहस्रऽधारः। पवते। समुद्रः। वाचम्ऽईङ्खयः।
सोमः। पतिः। रयीणाम्। सखा। इन्द्रस्य। दिवेऽदिवे॥ ६॥

ᵛसहस्रधारः बहुविधधाराभिः ᵛसोमः ᵛपवते क्षरति। कीदृशः। ᵛसमुद्रः। यस्मात्समुद्रवन्ति रसाः। सरःस्थानीयः[३] ᵛवाचमीङ्खयः। ईङ्खतेर्ण्यन्तस्य सुप्युपपदे खच्प्रत्ययः। स्तुतीनां प्रेरयिता ᵛरयीणां धनानां ᵛपतिः प्रभुः। यद्वा। रयीणां हविषो दातॄणां यजमानानां पतिः पालयिता। ᵛदिवेदिवे प्रत्यहम् ᵛइन्द्रस्य ᵛसखा मित्रभूतः सोमः पवते॥

**अयं पूषा रयिर्भगः सोमः पुनानो अर्षति।**
**पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे॥ ७॥**

१. त१.२.४.५.७-म६-मु-मदकरा। २. ग-त३-म२.४-स्वबलेन; त६-म७-स्वबलात्; म१-स्वबालान्। ३. ग-त३.६-म-मु-रसस्थानीयः; त१.२.४.५-सरस्थानीयः।

अयम् । पूषा । रयिः । भर्गः । सोर्मः । पुनानः । अर्षति ।
पतिः । विश्वस्य । भूमनः । वि । अख्यत् । रोदसी इति । उभे इति ॥ ७ ॥

ᵛपूषा पोषकः सर्वेषां ᵛभगः भजनीयः ᵛरयिः धनहेतुः ᵛअयं ᵛसोमः ᵛपुनानः पवित्रेण पूयमानः सन् ᵛअर्षति कलशमभिगच्छति[1]। तथा ᵛविश्वस्य सर्वस्य ᵛभूमनः भूतजातस्य ᵛपतिः पालयिता सोमः ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛव्यख्यत् स्वतेजसा प्रकाशयति। अनेन लोकद्वय-वर्तित्वं सूचितम् ॥

**समु प्रिया अनूषत गावो मदाय घृष्वयः ।**
**सोमासः कृण्वते पथः पवमानास इन्दवः ॥ ८ ॥**

सम् । ऊँ इति । प्रियाः । अनूषत । गावः । मदाय । घृष्वयः ।
सोमासः । कृण्वते । पथः । पर्वमानासः । इन्दवः ॥ ८ ॥

ᵛप्रियाः प्रियतमाः ᵛघृष्वयः अत्यन्तं दीप्ताः। यद्वा। अहं प्रथमतः स्तौमि अहं पुरस्तात् स्तौमीति परस्परं स्पर्धमानाः। ᵛगावः स्तुतिलक्षणा वाचः सोमस्य मदार्थं ᵛसम् ᵛअनूषत संस्तुवन्ति। उः प्रसिद्धौ। यद्वा। गावो धेनवः सोमस्य मदाय शब्दायन्ते। ततः ᵛपवमानासः पूयमानाः ᵛइन्दवः दीप्ताः ᵛसोमासः सोमाः ᵛपथः मार्गान् ᵛकृण्वते क्षरणार्थं कुर्वन्ति ॥

**य ओजिष्ठस्तमा भर पवमान श्रवाय्यम् ।**
**यः पञ्च चर्षणीरभि रयिं येन वनामहै ॥ ९ ॥**

यः । ओजिष्ठः । तम् । आ । भर । पर्वमान । श्रवाय्यम् ।
यः । पञ्च । चर्षणीः । अभि । रयिम् । येन । वनामहै ॥ ९ ॥

हे ᵛपवमान पूयमान सोम ᵛओजिष्ठः ओजस्वितमः ᵛयः त्वदीयो रसोऽस्ति ᵛतं ᵛश्रवाय्यं श्रवणीयं रसम् ᵛआ ᵛभर अस्मभ्यमाहर। किंच ᵛयः रसः ᵛपञ्च ᵛचर्षणीः पञ्च जनान्निषाद-पञ्चमांश्चतुरो वर्णान् ᵛअभि तिष्ठति[2]। अपि च ᵛयेन रसेन वयं ᵛरयिं धनं च ᵛवनामहै संभजामहै। यद्वा। येन त्वां रयिं याचामहै तमा भर ॥

**सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।**
**मित्राः सुवाना अरेपसः स्वाध्यः स्वर्विदः ॥ १० ॥**

सोमाः । पवन्ते । इन्दवः । अस्मभ्यम् । गातुवित्ऽतमाः ।
मित्राः । सुवानाः । अरेपसः । सुऽआध्यः । स्वःऽविदः ॥ १० ॥

ᵛगातुवित्तमाः अतिशयेन मार्गस्य लम्भकाः ᵛइन्दवः दीप्ताः ᵛसोमाः ᵛपवन्ते ᵛअस्मभ्यम् अस्मदर्थं क्षरन्त्यागच्छन्ति वा। कीदृशाः। ᵛमित्राः देवानां सखिभूताः ᵛसुवानाः अभिषूयमाणाः ᵛअरेपसः पापरहिताः अत एव ᵛस्वाध्यः शोभनध्यानाः[3] ᵛस्वर्विदः सर्वज्ञाः स्वर्गप्रापका वा ॥ ॥२॥

१. त१.२.४.७-कलशेभि°; त५-कलशभि°; मं६-कलशानभि°। २. ग-गच्छति। ३. ग-त३. ४-शोभनाध्यानाः।

सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥ ११ ॥

सुस्वानासः । वि । अद्रिऽभिः । चितानाः । गोः । अधि । त्वचि ।
इषम् । अस्मभ्यम् । अभितः । सम् । अस्वरन् । वसुऽविदः ॥ ११ ॥

ᵛगोः अनडुहः ᵛअधि ᵛत्वचि अधिषवणचर्मणि ᵛचितानाः ज्ञायमानाः ᵛअद्रिभिः ग्रावभिर्विविधं ᵛसुष्वाणासः सूयमानाः ᵛवसुविदः वसुनो लम्भका एते सोमाः ᵛअस्मभ्यम् ᵛइषम् अन्नम् ᵛअभितः ᵛसमस्वरन् सम्यक् शब्दयन्ति । प्रयच्छन्तीति यावत् ॥

एते पूता विपश्चितः सोमासो दध्याशिरः ।
सूर्यासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥ १२ ॥

एते । पूताः । विपःऽचितः । सोमासः । दधिऽआशिरः ।
सूर्यासः । न । दर्शतासः । जिगत्नवः । ध्रुवाः । घृते ॥ १२ ॥

ᵛपूताः पवित्रेण परिपूताः ᵛविपश्चितः मेधाविनः ᵛदध्याशिरः दध्यामिश्रणाः ᵛघृते वसतीवर्याख्य उदके ᵛजिगत्नवः गमनशीलाः ᵛध्रुवाः तत्र स्थैर्येण वर्तमानाः ᵛएते ᵛसोमासः सोमाः ᵛसूर्यासो ᵛन सूर्या इव ᵛदर्शतासः पात्रेषु सर्वैर्दर्शनीया भवन्ति ॥

प्र सुन्वानस्यान्धसो मर्तो न वृत तद्वचः ।
अप श्वानमराधसं हता मखं न भृगवः ॥ १३ ॥

प्र । सुन्वानस्य । अन्धसः । मर्तः । न । वृत । तत् । वचः ।
अप । श्वानम् । अराधसम् । हत । मखम् । न । भृगवः ॥ १३ ॥

ᵛसुन्वानस्य अभिषूयमाणस्य ᵛअन्धसः अदनीयस्य सोमस्य ᵛतत् प्रसिद्धं ᵛवचः वचनं घोषं ᵛमर्तः मारकः कर्मविघ्नकारी श्वा ᵛन ᵛप्र ᵛवृत न भजताम् । न शृणोत्विति यावत् । तथा हे स्तोतारः ᵛअराधसं संसाधककर्मरहितं तं ᵛश्वानम् ᵛअप ᵛहत । तत्र दृष्टान्तः । ᵛमखं ᵛन । यथा पुरापराद्धं मखमेतन्नामानं ᵛभृगवः अपहतवन्तः तथापहतेत्यर्थः ॥

आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः ।
सरज्जारो न योषणां वरो न योनिमासदम् ॥ १४ ॥

आ । जामिः । अत्के । अव्यत । भुजे । न । पुत्रः । ओण्योः ।
सरत् । जारः । न । योषणाम् । वरः । न । योनिम् । आऽसदम् ॥ १४ ॥

ᵛजामिः बन्धुभूतो[1] देवानां[1] सोमः ᵛअत्के आच्छादके पवित्रे ᵛआ ᵛअव्यत आवृणोति । संबद्धो भवति । तत्र दृष्टान्तः । ᵛभुजे ᵛन यथा ᵛओण्योः रक्षकयोर्मातापित्रोः भुजे ᵛपुत्रः आवृणोति तद्वत् । ततः सोऽयं सोमः ᵛयोनिं स्वस्थानभूतं कलशम् ᵛआसदम् आसत्तुं ᵛसरत् सरति ।

१. ग–बंधुर्यजमानानां ।

तत्र दृष्टान्तद्वयम्। ᵛजारो ᵛन यथा जारः ᵛयोषणाम् असतीं स्त्रियं प्राप्तुं सरति। यथा वा ᵛवरः कन्यां प्राप्तुं गच्छति तद्वत्॥

स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी।
हरिः पवित्रे अव्यत वेधा न योनिमासदम्॥ १५॥

सः। वीरः। दक्षऽसाधनः। वि। यः। तस्तम्भ। रोदसी इति।
हरिः। पवित्रे। अव्यत। वेधाः। न। योनिम्। आऽसदम्॥ १५॥

ᵛदक्षसाधनः बलसाधनः ᵛसः सोमः ᵛवीरः समर्थो भवति। ᵛयः सोमः ᵛरोदसी द्यावापृथिव्यौ ᵛवि ᵛतस्तम्भ स्वतेजसा व्यस्तभ्नात्। आच्छादयतीत्यर्थः। किंच ᵛहरिः हरितवर्णः सोमः ᵛवेधा ᵛन विधाता यजमानो यथा स्वगृहमासीदति तद्वत् ᵛयोनिं स्वस्थानं कलशम् ᵛआसदम् आसत्तुं ᵛपवित्रे ᵛअव्यत आवृणोति। संबद्धो भवति॥

अव्यो वारेभिः पवते सोमो गव्ये अधि त्वचि।
कनिक्रदद्वृषा हरिरिन्द्रस्याभ्येति निष्कृतम्॥ १६॥

अव्यः। वारेभिः। पवते। सोमः। गव्ये। अधि। त्वचि।
कनिक्रदत्। वृषा। हरिः। इन्द्रस्य। अभि। एति। निःऽकृतम्॥ १६॥

अयं ᵛसोमः ᵛअव्यः अवेः ᵛवारेभिः वालैः पवित्रैः तेभ्यः ᵛपवते कलशं प्रति क्षरति। किंच ᵛगव्ये आनडुहे ᵛअधि ᵛत्वचि चर्मणि ᵛकनिक्रदत् शब्दायमानः ᵛवृषा कामानां वर्षकः ᵛहरिः हरितवर्णः सोमः ᵛइन्द्रस्य स्वभूतं ᵛनिष्कृतं संस्कृतं स्थानम् ᵛअभ्येति अभिगच्छति॥ ॥ ३॥

'क्राणा शिशुः' इत्यष्टर्चं षष्ठं सूक्तमाप्त्यस्य त्रितस्यार्षम्। इदमुत्तराणि चत्वारि सूक्तान्यौष्णिहानि। पवमानः सोमो देवता। तथा चानुक्रम्यते—'क्राणाष्टौ त्रित औष्णिहं वै' इति। गतो विनियोगः॥

क्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम्। विश्वा परि प्रिया भुवदध द्विता॥१॥

क्राणा। शिशुः। महीनाम्। हिन्वन्। ऋतस्य। दीधितिम्।
विश्वा। परि। प्रिया। भुवत्। अध। द्विता॥ १॥

ᵛक्राणा। करोतेः शानचि 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'सुपां सुलुक्' इति सुप आकारादेशः। यज्ञं कुर्वाणः ᵛमहीनां महतीनां मंहनीयानां वा अपां ᵛशिशुः पुत्रस्थानीयः सोमः ᵛऋतस्य यज्ञस्य ᵛदीधितिं प्रकाशकं धारकं वा स्वीयं रसं ᵛहिन्वन् प्रेरयन् ᵛविश्वा सर्वाणि ᵛप्रिया प्रियाणि हवींषि ᵛपरि ᵛभुवत् परिभवति व्याप्नोति। ᵛअध अपि च ᵛद्विता द्विधा भवति। दिवि च पृथिव्यां च वर्तत इत्यर्थः॥

उप त्रितस्य पाष्यो३रभक्त यद्गुहा पदम्। यज्ञस्य सप्त धामभिरध प्रियम्॥२॥

उप। त्रितस्य। पाष्योः। अभक्त। यत्। गुहा। पदम्।
यज्ञस्य। सप्त। धामऽभिः। अध। प्रियम्॥ २॥

ᵛत्रितस्य मम यज्ञे ᵛगुहा गुहायां हविर्धाने वर्तमानयोः ᵛपार्ष्योः पाषाणवद्दृढयोरधिषवणफलकयोः ᵛपदं स्थानं सोमः ᵛयत् यदा ᵛउप ᵛअभक्त समभजत ᵛअध अनन्तरं ᵛयज्ञस्य ᵛधामभिः धारकैः ᵛसप्त सप्तभिश्छन्दोभिर्गायत्र्यादिभिः ᵛप्रियं प्रीणयितारं सोममभिष्टुवन्ति ऋत्विजः[1]। अपि वा। सप्त सर्पणशीलैर्वसतीवर्यादिभिरुदकैः सोममभिपुण्वन्ति ॥

**त्रीणि त्रितस्य धारया पृष्ठेष्वेरया रयिम्। मिमीते अस्य योजना वि सुक्रतुः ॥३॥**

त्रीणि। त्रितस्य। धारया। पृष्ठेषु। आ। ईरय। रयिम्।

मिमीते। अस्य। योजना। वि। सुऽक्रतुः ॥ ३ ॥

हे सोम ᵛत्रितस्य मम यज्ञस्य स्वभूतानि ᵛत्रीणि सवनानि ᵛधारया आत्मीयया विधारय। किंच ᵛपृष्ठेषु सामसु ᵛरयिं दातारमिन्द्रम् ᵛआ ᵛईरय आगमय। ᵛसुक्रतुः सुप्रज्ञः स्तोता ᵛअस्य इन्द्रस्य ᵛयोजना योजनानि योजनकारीणि[2] स्तोत्राणि ᵛवि ᵛमिमीते करोति। यस्मादेवं तस्मादिन्द्रं सामसु प्रेरयेत्यर्थः ॥

**जज्ञानं सप्त मातरो वेधामशासत श्रिये। अयं ध्रुवो रयीणां चिकेत यत् ॥ ४ ॥**

जज्ञानम्। सप्त। मातरः। वेधाम्। अशासत। श्रिये। अयम्। ध्रुवः। रयीणाम्। चिकेत। यत् ॥४॥

ᵛजज्ञानं प्रादुर्भूतं ᵛवेधां कर्मणो विधातारं सोमं ᵛसप्त सप्तसंख्याकाः ᵛमातरः गङ्गाद्या नद्यः सप्त छन्दांसि वा ᵛश्रिये यजमानानामैश्वर्यार्थम् ᵛअशासत अनुशासति अनुशासनं कुर्वन्ति। शास्तेर्लङि व्यत्ययेनात्मनेपदम्। ᵛयत् यस्मात् ᵛध्रुवः ᵛअयं सोमः[3] ᵛरयीणां धनानि ᵛचिकेत जानाति तस्मादस्यानुशासने कृते यजमानानां धनादिसमृद्धिर्भवति ॥

**अस्य व्रते सजोषसो विश्वे देवासो अद्रुहः। स्पार्हा भवन्ति रन्तयो जुषन्त यत् ॥५॥**

अस्य। व्रते। सऽजोषसः। विश्वे। देवासः। अद्रुहः। स्पार्हाः। भवन्ति। रन्तयः। जुषन्त। यत् ॥५॥

ᵛअद्रुहः द्रोहवर्जिताः ᵛविश्वे सर्वे ᵛदेवासः देवाः ᵛअस्य सोमस्य ᵛव्रते कर्मणि ᵛसजोषसः संगताः सन्तः ᵛस्पार्हाः स्पृहणीयाः ᵛभवन्ति। ᵛरन्तयः रमणशीला देवाः सुतमेनं सोमं ᵛयत् यदि ᵛजुषन्त सेवन्ते तर्हि स्पृहणीया भवन्ति ॥ ॥ ५ ॥

**यमी गर्भमृतावृधो दृशे चारुमजीजनन्। कविं मंहिष्ठमध्वरे पुरुस्पृहम् ॥ ६ ॥**

यम्। ईम्। इति। गर्भम्। ऋतऽवृधः। दृशे। चारुम्। अजीजनन्।

कविम्। मंहिष्ठम्। अध्वरे। पुरुऽस्पृहम् ॥ ६ ॥

ᵛऋतावृधः यज्ञस्य वर्धयित्र्यो वसतीवर्याख्या आपः ᵛगर्भं गर्भस्थानीयम् ᵛईम् एनं ᵛयं सोमम् ᵛअध्वरे यज्ञे ᵛदृशे दर्शनाय ᵛअजीजनन् उदपादयन्। कीदृशम्। ᵛचारुं सर्वेषां कल्याणरूपं ᵛकविं क्रान्तप्रज्ञं ᵛमंहिष्ठं पूज्यतमं दातृतमं वा अत एव ᵛपुरुस्पृहं बहुभिः स्पृहणीयं सोमं देवाः सेवन्त इति पूर्वेण समन्वयः ॥

१. ग-त३.६-भ१.२.७–' ऋत्विजः ' नास्ति। २. ग-त३-भ४.५–संयोजन॰। ३. ग-त१.२.३.४.५.७-भ१.२.४.६–सोयं सोमः।

समीचीने अभि त्मना यह्वी ऋतस्य मातरा । तन्वाना यज्ञमानुषग्यदञ्जते ॥७॥

समीचीने इति सम्ऽईचीने । अभि । त्मना । यह्वी इति । ऋतस्य । मातरा ।

तन्वानाः । यज्ञम् । आनुषक् । यत् । अञ्जते ॥ ७ ॥

स सोमः √समीचीने परस्परं संगते √यह्वी महत्यौ √ऋतस्य यज्ञस्य √मातरा निर्मात्र्यौ द्यावापृथिव्यौ √त्मना आत्मना स्वयमेव तदा √अभि गच्छति । √यत् यदा √यज्ञं √तन्वानाः अध्वर्यवः √आनुषक् अनुषक्तं[1] वसतीवरीभिः √अञ्जते सोमं मिश्रयन्ति तदा स्वयमभिगच्छति ॥

क्रत्वा शुक्रेभिरक्षभिर्ऋणोरप व्रजं दिवः । हिन्वन्नृतस्य दीधितिं प्राध्वरे ॥ ८ ॥

क्रत्वा । शुक्रेभिः । अक्षऽभिः । ऋणोः । अप । व्रजम् । दिवः ।

हिन्वन् । ऋतस्य । दीधितिम् । प्र । अध्वरे ॥ ८ ॥

हे सोम त्वं √क्रत्वा कर्मणा ज्ञानेन वा √शुक्रेभिः शुक्रैर्दीप्यमानैः √अक्षभिः अक्षैरिन्द्रियैरिवाश्नुवानैः स्वतेजोभिः √व्रजम् अन्धकारसमूहं √दिवः अन्तरिक्षात् √अप √ऋणोः अपगमय विनाशय । 'ऋणु गतौ' । तानादिकः । किं कुर्वन् । √अध्वरे हिंसारहिते यज्ञे √ऋतस्य यज्ञस्य √दीधितिं धारकं स्वीयं रसं √प्र √हिन्वन् प्रेरयन्[2] । अनेन लोकद्वयवर्तित्वमभिहितम् ॥ ॥ ५ ॥

'प्र पुनानाय' इति षड्चं सप्तमं सूक्तमाप्त्यस्य द्वितस्यार्षम् । पूर्ववच्छन्दोदेवते । तथा चानुक्रम्यते—'प्र पुनानाय षड् द्वित आप्त्यः' इति । गतो विनियोगः ॥

प्र पुनानाय वेधसे सोमाय वच उद्यतम् । भृतिं न भरा मतिभिर्जुजोषते ॥ १ ॥

प्र । पुनानाय । वेधसे । सोमाय । वचः । उत्ऽयतम् ।

भृतिम् । न । भर । मतिऽभिः । जुजोषते ॥ १ ॥

द्वितो नामर्षिः स्वात्मानं प्रत्याह । √पुनानाय पवित्रेण पूयमानाय √वेधसे कर्मणो विधात्रे √मतिभिः स्तुतिभिः √जुजोषते प्रीयमाणाय । यद्वा मतिभिः स्तोतृभिः सह जुजोषते प्रीणयित्रे । √सोमाय √उद्यतम् उद्युक्तं √वचः √प्र √भर प्रकर्षेण संपादय । अभिष्टुहीत्यर्थः । तत्र दृष्टान्तः । √भृतिं √न । यथा भृतका भृतिं संपादयन्ति तद्वत् ॥

परि वाराण्यव्यया गोभिरञ्जानो अर्षति । त्री षधस्था पुनानः कृणुते हरिः ॥२॥

परि । वाराणि । अव्यया । गोभिः । अञ्जानः । अर्षति ।

त्री । सधऽस्था । पुनानः । कृणुते । हरिः ॥ २ ॥

√गोभिः गोविकारैः क्षीरादिभिः √अञ्जानः अज्यमानः सोमः √अव्यया अविमयानि √वाराणि वालानि पवित्राणि √परि √अर्षति परिगच्छति । अपि च √हरिः हरितवर्णः सोमः √पुनानः पूयमानः सन् √त्री त्रीणि √सधस्था । सह तिष्ठन्त्यत्रेति सधस्थं स्थानम् । द्रोणकलशाधवनीयपूतभृदात्मकानि त्रीणि स्थानानि √कृणुते करोति ॥

१. त१.२.४.५.७-भ६-मु-अनुषक्तं च । २. ग-त६-भ१.४.७-प्रेरयन् अपगमयन्; त१.२.३.४.५.७-भ२.६-प्रेरयन् अपगमय ।

**परि कोशं मधुश्चुतमव्यये वारे अर्षति । अभि वाणीर्ऋषीणां सप्त नूषत ॥ ३ ॥**

परि । कोशम् । मधुऽश्चुतम् । अव्यये । वारे । अर्षति ।
अभि । वाणीः । ऋषीणाम् । सप्त । नूषत ॥ ३ ॥

स सोमः ᵛअव्यये अविमये ᵛवारे वाले पवित्रे ᵛमधुश्चुतं मधुररसस्य च्यावयितारं[1] द्रोणकलशं प्रत्यात्मीयं रसं ᵛपरि ᵛअर्षति गमयति । तमिमं सोमं ᵛऋषीणां ᵛसप्त ᵛवाणीः छन्दांसि ᵛअभि ᵛनूषत अभिष्टुवन्ति । 'नू स्तवने' । कुटादिः ॥

**परि णेता मतीनां विश्वदेवो अदाभ्यः । सोमः पुनानश्चम्वोर्विशद्धरिः ॥ ४ ॥**

परि । नेता । मतीनाम् । विश्वऽदेवः । अदाभ्यः । सोमः । पुनानः । चम्वोः । विशत् । हरिः ॥ ४ ॥

ᵛहरिः हरितवर्णः सः ᵛसोमः ᵛपुनानः पूयमानः सन् ᵛचम्वोः अधिषवणफलकयोः ᵛपरि ᵛविशत् परिविशति । कीदृशः । ᵛमतीनां स्तुतीनां ᵛनेता यद्वा मतीनां स्तोतॄणां स्वकर्मण्युपनेता ᵛविश्वदेवः सर्वदेवः । सोमेऽभिषूयमाणे सतीन्द्रादयः सर्वे देवाः सोमं प्रत्यागच्छन्ति खलु । तस्मात् सर्वदेवोपेतः अत एव ᵛअदाभ्यः अहिंसितः कैश्चिदपि ॥

**परि दैवीरनु स्वधा इन्द्रेण याहि सरथम् । पुनानो वाघद्वाघद्भिरमर्त्यः ॥ ५ ॥**

परि । दैवीः । अनु । स्वधाः । इन्द्रेण । याहि । सऽरथम् । पुनानः । वाघत् । वाघत्ऽभिः । अमर्त्यः ॥ ५ ॥

हे सोम त्वम् ᵛइन्द्रेण ᵛसरथं समानं रथमारुह्य ᵛदैवीः देवानां संबन्धीनि[2] ᵛस्वधाः बलानि ᵛअनु देवसेनाः ᵛपरि ᵛयाहि परिगच्छ । कीदृशः । ᵛपुनानः पूयमानः ᵛवाघद्भिः । वाघत इति ऋत्विङ्नाम । हविषां प्रेरकैर्ऋत्विग्भिः ᵛवाघत् ऊह्यमानः ᵛअमर्त्यः मनुष्यधर्मरहितः । यद्वा । वाघद्भिर्ऋत्विग्भिः पुनानः पूयमानो वाघत् स्तोतॄणां यष्टॄणां धनादीनि प्रापयन् परिगच्छ ॥

**परि सप्तिर्न वाजयुर्देवो देवेभ्यः सुतः । व्यानशिः पवमानो वि धावति ॥ ६ ॥**

परि । सप्तिः । न । वाजऽयुः । देवः । देवेभ्यः । सुतः । विऽआनशिः । पवमानः । वि । धावति ॥ ६ ॥

ᵛसप्तिर्न अश्व इव ᵛवाजयुः युद्धमिच्छन् ᵛदेवः दीप्यमानः ᵛदेवेभ्यः देवार्थं ᵛसुतः अभिषुतः ᵛव्यानशिः पात्रेषु व्यापी ᵛपवमानः पवित्रेण पूयमानः एतादृशः सोमः ᵛपरि ᵛधावति परितः पात्राण्यभिगच्छति ॥ व्यानशिः । 'अशू व्याप्तौ' । 'आदृगमहन०' इत्यत्र 'उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्' इति किप्रत्ययः । 'अश्नोतेश्च' इति नुडागमः ॥ ॥ ६ ॥ ॥ ६ ॥

सप्तमेऽनुवाक एकादश सूक्तानि । तत्र 'सखायः' इति षड्टचं प्रथमं सूक्तम् । काण्वौ पर्वतनारदावृषी । अथवा कश्यपस्य पुत्र्यौ शिखण्डिन्याख्ये द्वे अप्सरसावस्य सूक्तस्य द्रष्ट्र्यौ । पूर्ववच्छन्दोदेवते । तथा चानुक्रम्यते—'सखायः पर्वतनारदौ काश्यप्यौ द्वे शिखण्डिन्यौ वाप्सरसौ' इति । गतः सूक्तविनियोगः ॥

**सखाय आ नि षीदत पुनानाय प्र गायत । शिशुं न यज्ञैः परि भूषत श्रिये ॥ १ ॥**

सखायः । आ । नि । सीदत । पुनानाय । प्र । गायत ।
शिशुम् । न । यज्ञैः । परि । भूषत । श्रिये ॥ १ ॥

---

१. ग-त-३.६-भ१.२.४.७—क्षारयितारं । २. ग—संबंधिनीः ।

हे ᵛसखायः सखिभूताः स्तोतार ऋत्विजः ᵛआ ᵛनि ᵛषीदत स्तोतुमुपविशत। अथ ᵛपुनानाय पूयमानाय सोमाय ᵛप्र ᵛगायत प्रकर्षेण गायत। तमभिष्टुत। ततोऽभिपुतं सोमं ᵛयज्ञैः यजनीयैः हविर्भिः मिश्रणैश्च ᵛश्रिये शोभार्थं ᵛपरि ᵛभूषत परितोऽलंकुरुत। तत्र दृष्टान्तः। ᵛशिशुं ᵛन यथा शिशुं बालं पुत्रं पितर आभरणैरलंकुर्वन्ति तद्वत्॥

प्रवर्ग्येऽभिष्टवे 'समी वत्सम्' इत्येका। सूत्रितं च—'समी वत्सं न मातृभिः सं वत्स इव मातृभिः' (आश्व. श्रौ. ४. ७) इति॥

**समीं वृत्सं न मातृभिः सृजता गयसाधनम्। देवाव्यं१ मदमभि द्विशवसम्॥२॥**

सम्। ईमिति। वृत्सम्। न। मातृऽभिः। सृजत। गयऽसाधनम्।

देवऽअव्यम्। मदम्। अभि। द्विऽशवसम्॥ २॥

हे ऋत्विजः ᵛगयसाधनं गृहस्य साधनम् ᵛईम् एनं सोमं ᵛमातृभिः[1] मातृभूताभिर्वसतीवरीभिः ᵛसं ᵛसृजत संमिश्रयत। कथमिव। ᵛवत्सं ᵛन यथा वत्सं ᵛमातृभिः गोभिः संयोजयन्ति तद्वत्। कीदृशम्। ᵛदेवाव्यं देवानां रक्षकं ᵛमदं मदनहेतुं ᵛद्विशवसं द्विगुणवेगमतिशयितबलं वा। यद्वा द्वयोर्लोकयोस्तत्र स्थिता देवमनुष्या इत्यर्थः। तेषां हविर्धनप्रदानेन वर्धयितारम्। तं सोमम् ᵛअभि सं सृजत॥

**पुनाता दक्षसाधनं यथा शर्धाय वीतये। यथा मित्राय वरुणाय शंतमः॥३॥**

पुनात। दक्षऽसाधनम्। यथा। शर्धाय। वीतये। यथा। मित्राय। वरुणाय। शम्ऽतमः॥३॥

ᵛदक्षसाधनं बलस्य साधनं धनादिवृद्धेर्वा साधकं सोमं ᵛपुनात पवित्रेण पुनीत॥ 'पूञ् पवने' क्र्यादिः। तस्माल्लोटि 'तप्तनप्तनथनाश्च' इति तस्य तबादेशः। पित्त्वाद्ङित्वाभावः। असौ सोमः ᵛशर्धाय वेगार्थं ᵛवीतये देवानां पानार्थं ᵛयथा भवति ᵛयथा वा ᵛमित्राय ᵛवरुणाय च ᵛशंतमः अतिशयेन सुखं करोति तथा पुनीतेत्यर्थः॥

**अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत। गोभिष्टे वर्णमभि वासयामसि॥४॥**

अस्मभ्यम्। त्वा। वसुऽविदम्। अभि। वाणीः। अनूषत।

गोभिः। ते। वर्णम्। अभि। वासयामसि॥ ४॥

हे सोम ᵛवसुविदं धनस्य दातारं ᵛत्वा त्वाम् ᵛअस्मभ्यं धनादिप्रदानार्थं ᵛवाणीः अस्मदीया वाचः ᵛअभि ᵛअनूषत अभिष्टुवन्ति। 'नू स्तवने'। वयं ᵛते तव ᵛवर्णम् आवरकं रसं ᵛगोभिः गोविकारैः क्षीरादिभिः ᵛअभि ᵛवासयामसि अभिवासयामः। अभित आच्छादयामः॥

**स नो मदानां पत इन्दो देवप्सरा असि। सखेव सख्ये गातुवित्तमो भव॥५॥**

सः। नः। मदानाम्। पते। इन्दो इति। देवऽप्सराः। असि।

सखाऽइव। सख्ये। गातुवित्ऽतमः। भव॥ ५॥

---

१. ग-त-भ—'मातृभिः' नास्ति।

˅नः अस्मदीयानां ˅मदानां[1] मदकानां[1] ˅पते स्वामिन् हे ˅इन्दो सोम ˅सः त्वं ˅देवप्सरा ˅असि। प्सर इति रूपनाम। दीप्तरूपो भवसि। स त्वं ˅सखेव यथा सखा सुहृत् ˅सख्ये मित्राय सत्यं मार्गं ज्ञापयति तद्वदस्माकमपि ˅गातुवित्तमः अत्यन्तं मार्गस्य लम्भकः ˅भव ज्ञापको भव॥

**सनेमि कृध्यस्मदा रक्षसं कं चिदत्रिणम्। अपादेवं द्वयुमंहो युयोधि नः॥६॥**

सनेमि। कृधि। अस्मत्। आ। रक्षसम्। कम्। चित्। अत्रिणम्।

अप। अदेवम्। द्वयुम्। अंहः। युयोधि। नः॥ ६॥

हे सोम ˅अस्मत् अस्मासु ˅सनेमि। पुराणनामैतत्। पुराणं सख्यं ˅कृधि कुरु। ˅आ अपि च ˅अत्रिणम् अदनशीलं ˅कं ˅चित् ˅रक्षसम् ˅अप युध्यस्व। कीदृशम्। ˅अदेवम् अदेवनशीलं ˅द्वयुं द्वयवन्तं सत्यानृतयुक्तं बाह्याभ्यन्तरमायायुक्तं वा। किंच ˅नः अस्माकम् ˅अंहः पापं चाप ˅युयोधि संप्रहर। युध्यतेः 'बहुलं छन्दसि' इति शपः श्लुः। 'वा छन्दसि' इति हेर्ङित्त्वाभावाद्गुणः[2]। धलोपश्छान्दसः। यौतेर्वा श्लौ पूर्ववद्रूपम्॥ ॥ ७॥

'तं वः' इति षडृचं द्वितीयं सूक्तं पर्वतनारदयोरार्षम्। अन्यत् पूर्ववत्। 'तं वः' इत्यनुक्रान्तम्। गतः सूक्तविनियोगः॥

**तं वः सखायो मदाय पुनानमभि गायत। शिशुं न यज्ञैः स्वदयन्त गूर्तिभिः॥१॥**

तम्। वः। सखायः। मदाय। पुनानम्। अभि। गायत।

शिशुम्। न। यज्ञैः। स्वदयन्त। गूर्तिऽभिः॥ १॥

हे ˅सखायः ऋत्विजः ˅वः यूयं ˅मदाय देवानां मदार्थं ˅पुनानं पूयमानं ˅तं सोमम् ˅अभि ˅गायत अभिष्टुत। तमिमं सोमं ˅शिशुं ˅न शिशुमिवालंकारैः क्षीरादिभिश्च यथा[3] स्वादूकुर्वन्ति तद्वत् ˅यज्ञैः हविर्भिर्मिश्रणैः ˅गूर्तिभिः स्तुतिभिश्च ˅स्वदयन्त स्वादूकुर्वन्ति॥

प्रवर्ग्येऽभिष्टवे 'सं वत्स इव मातृभिः' इत्येका[4]। सूत्रं च 'समी वत्सम्' इत्यनया महोक्तम्॥

**सं वत्सइव मातृभिरिन्दुर्हिन्वानो अज्यते। देवावीर्मदो मतिभिः परिष्कृतः॥२॥**

सम्। वत्सःऽइव। मातृऽभिः। इन्दुः। हिन्वानः। अज्यते।

देवऽअवीः। मदः। मतिऽभिः। परिऽकृतः॥ २॥

˅हिन्वानः प्रेर्यमाणः ˅इन्दुः सोमो वसतीवरीभिः ˅सम् ˅अज्यते। सम्यक् सिक्तो[5] भवति। तत्र दृष्टान्तः। ˅वत्सइव वत्सो यथा ˅मातृभिः गोभिः समक्तो भवति तद्वत्। कीदृशः। ˅देवावीः देवानां रक्षकः ˅मदः मदकरः ˅मतिभिः स्तुतिभिः ˅परिष्कृतः अलंकृतः॥ भूषणार्थे 'संपर्युपेभ्यः°' इति सुडागमः। 'परिनिविभ्यः°' (पा. सू. ८. ३. ७०) इति सुटः षत्वम्॥

**अयं दक्षाय साधनोऽयं शर्धाय वीतये। अयं देवेभ्यो मधुमत्तमः सुतः॥ ३॥**

अयम्। दक्षाय। साधनः। अयम्। शर्धाय। वीतये। अयम्। देवेभ्यः। मधुमत्ऽतमः। सुतः॥३॥

१. भ६–मादकानां; भ७–मदानां। २. त१.२.३.४.५.७-भ१.२.४.५.६-मु–हेर्ङित्त्वाद्गुणः। ३. त-भ–'यथा' नास्ति। ४. भ६–इत्येषा। ५. भ६–अक्तो।

ᵛअयं सोमः ᵛदक्षाय बलाय वर्धनाय वा ᵛसाधनः साधयिता भवति। तथा ᵛअयं सोमः ᵛशर्धाय वेगार्थं ᵛवीतये देवानां भक्षणार्थं च भवति। ᵛसुतः अभिषुतः ᵛअयं सोमः ᵛदेवेभ्यः इन्द्रादिभ्यः ᵛमधुमत्तमः अतिशयेन माधुर्ययुक्तो भवति। अत्यन्तं मदकरो भवतीति वा ॥

**गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धन्व। शुचिं ते वर्णमधि गोषु दीधरम् ॥४॥**

गोऽमत्। नः। इन्दो इति। अश्वऽवत्। सुतः। सुऽदक्ष। धन्व।
शुचिम्। ते। वर्णम्। अधि। गोषु। दीधरम् ॥ ४ ॥

हे ᵛसुदक्ष सुबल हे ᵛइन्दो सोम ᵛसुतः अभिषुतस्त्वं ᵛनः अस्माकं ᵛगोमत् यज्ञसाधनगोयुक्तम् ᵛअश्ववत् अश्वयुक्तं धनं ᵛधन्व गमय। धविर्गत्यर्थो भ्वादिः। ततोऽहं ᵛशुचिं पूतं दीप्यमानं वा ᵛते तव ᵛवर्णं रसं ᵛगोषु गव्येषु क्षीरादिषु ᵛअधि ᵛदीधरम् अधिधारयामि मिश्रयामि ॥

**स नो हरीणां पत इन्दो देवप्सरस्तमः। सखेव सख्ये नर्यो रुचे भव ॥ ५ ॥**

सः। नः। हरीणाम्। पते। इन्दो इति। देवप्सरःऽतमः।
सखाऽइव। सख्ये। नर्यः। रुचे। भव ॥ ५ ॥

हे ᵛहरीणां ᵛपते ᵛनः अस्मदीयानां हरितवर्णानां पशूनां[1] स्वामिन् हे ᵛइन्दो सोम ᵛदेवप्सरस्तमः अतिशयेन दीप्तरूपोपेतः ᵛसः त्वं ᵛनर्यः कर्मनेतृभ्य ऋत्विग्भ्यो हितः स त्वं ᵛनः अस्माकं ᵛरुचे ᵛभव दीप्तिकरो भव। किमिव। ᵛसखेव यथा सखा ᵛसख्ये मित्राय दीप्तिकरो भवति तद्वत् ॥

**सनेमि त्वमस्मदाँ अदेवं कं चिदत्रिणम्। साह्वाँ इन्दो परि बाधो अप द्वयुम् ॥६॥**

सनेमि। त्वम्। अस्मत्। आ। अदेवम्। कम्। चित्। अत्रिणम्।
सह्वान्। इन्दो इति। परि। बाधः। अप। द्वयुम् ॥ ६ ॥

हे सोम ᵛत्वं ᵛसनेमि पुराणं सख्यम् ᵛअस्मत् अस्मासु कुरु। ᵛआ अपि च ᵛअदेवम् अदेवनशीलं ᵛकं ᵛचित् अपि ᵛअत्रिणम् अदनशीलं राक्षसमस्मदस्मत्तोऽपगमय। किंच हे ᵛइन्दो ᵛसाह्वान् शत्रूनभिभवन् ᵛबाधः बाधमानान् ᵛपरि जहि। तथा ᵛद्वयुं द्वयवन्तं सत्यानृतयुक्तं बाह्याभ्यन्तरमायाद्वयोपेतं वा राक्षसमस्मत्तोऽपगमय ॥ ॥ ८ ॥

'इन्द्रमच्छ' इति चतुर्दशर्चं तृतीयं सूक्तमौष्णिहं पवमानसोमदेवताकम्। प्रथमस्य तृचस्य चक्षुराख्यपुत्रोऽग्निर्ऋषिः। द्वितीयस्य मनुपुत्रश्चक्षुर्नामा। अप्सुनाम्नः पुत्रो मनुस्तृतीयस्य। एवं नवर्चो गताः। शिष्टानामपि पञ्चानां चाक्षुषोऽग्निः। तथा चानुक्रम्यते—'इन्द्रमच्छ पञ्चनाग्निश्चाक्षुषश्चक्षुर्मानवो मनुराप्सव इति तृचाः पञ्चाग्निः' इति। गतो विनियोगः ॥

**इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः। श्रुष्टी जातास इन्दवः स्वर्विदः ॥ १ ॥**

इन्द्रम्। अच्छ। सुताः। इमे। वृषणम्। यन्तु। हरयः।
श्रुष्टी। जातासः। इन्दवः। स्वःऽविदः ॥ १ ॥

ᵛश्रुष्टी। श्रुष्टीति क्षिप्रनाम। क्षिप्रं ᵛजातासः जाताः ᵛइन्दवः पात्रेषु क्षरन्तः ᵛस्वर्विदः सर्वज्ञाः ᵛहरयः हरितवर्णाः ᵛसुताः अभिषुताः ᵛइमे सोमाः ᵛवृषणं कामानां सेक्तारम् ᵛइन्द्रमच्छ ᵛयन्तु अभिगच्छन्तु ॥

---

१. त६-भ७-पते पशूनां; भ६-पशूनां पते।

**अयं भराय सानसिरिन्द्राय पवते सुतः । सोमो जैत्रस्य चेतति यथा विदे ॥२॥**

अयम् । भराय । सानसिः । इन्द्राय । पवते । सुतः । सोमः । जैत्रस्य । चेतति । यथा । विदे ॥२॥

vभराय संग्रामाय तदर्थं vसानसिः भजनीयः vसुतः अभिषुतः vअयं vसोमः vइन्द्राय इन्द्रार्थं vपवते ग्रहादिषु क्षरति । ततः vसोमः vजैत्रस्य ॥ 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानसंज्ञा । 'चतुर्थ्यर्थे बहुलम्°' इति षष्ठी ॥ जयशीलमिन्द्रं vचेतति जानाति । vयथा इन्द्रः vविदे लोकैर्ज्ञायते तथा जानाति ॥

**अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णीत सानसिम् । वज्रं च वृषणं भरत्समप्सुजित् ॥३॥**

अस्य । इत् । इन्द्रः । मदेषु । आ । ग्राभम् । गृभ्णीत । सानसिम् ।

वज्रम् । च । वृषणम् । भरत् । सम् । अप्सुऽजित् ॥ ३ ॥

vआ अनन्तरम् vइन्द्रः vअस्येत् अस्य सोमस्यैव vमदेषु संजातेषु vसानसिं सर्वैः संभजनीयं vग्राभं ग्राहं ग्रहीतव्यं धनुः vगृभ्णीत गृह्णाति । 'हृग्रहोर्भः°' इति भत्वम् । किंच vअप्सुजित् उदकार्थं वृत्रस्य जेता । यद्वा आप इत्यन्तरिक्षनाम । अन्तरिक्षेऽहिनामकस्य जेता । इन्द्रः vवृषणं वर्षितारं vवज्रं vच vसं vभरत् संबिभर्तु । बिभर्तेर्लेट्यडागमः ॥

**प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव । द्युमन्तं शुष्ममा भरा स्वर्विदम् ॥४॥**

प्र । धन्व । सोम । जागृविः । इन्द्राय । इन्दो इति । परि । स्रव ।

द्युऽमन्तम् । शुष्मम् । आ । भर । स्वःऽविदम् ॥ ४ ॥

हे vसोम vजागृविः जागरणशीलस्त्वं vप्र vधन्व प्रक्षर । हे vइन्दो सोम vइन्द्राय vपरि vस्रव परितः पात्रेषु क्षर । किंच vद्युमन्तं दीप्तियुक्तं vस्वर्विदं सर्वस्य लम्भकं vशुष्मं शत्रूणां शोषकं बलम् vआ vभर आहर ॥

**इन्द्राय वृषणं मदं पवस्व विश्वदर्शतः । सहस्रयामा पथिकृद्विचक्षणः ॥ ५ ॥**

इन्द्राय । वृषणम् । मदम् । पवस्व । विश्वऽदर्शतः । सहस्रऽयामा । पथिऽकृत् । विऽचक्षणः ॥५॥

हे सोम त्वं vवृषणं वर्षितारं vमदं मदहेतुं रसम् vइन्द्राय इन्द्रार्थं vपवस्व क्षर । कीदृशः । vविश्वदर्शतः सर्वैर्दर्शनीयः vसहस्रयामा बहुमार्गः vपथिकृत् यजमानानां सन्मार्गकरणशीलः vविचक्षणः सर्वस्य विद्रष्टा ॥ ॥ ९ ॥

**अस्मभ्यं गातुवित्तमो देवेभ्यो मधुमत्तमः । सहस्रं याहि पथिभिः कनिक्रदत् ॥६॥**

अस्मभ्यम् । गातुवित्ऽतमः । देवेभ्यः । मधुमत्ऽतमः ।

सहस्रम् । याहि । पथिऽभिः । कनिक्रदत् ॥ ६ ॥

हे सोम vअस्मभ्यं vगातुवित्तमः अत्यन्तं मार्गस्य लम्भकः तथा vदेवेभ्यः च vमधुमत्तमः अत्यन्तं स्वादुकारी त्वं vकनिक्रदत् शब्दं कुर्वन् vसहस्रं vपथिभिः बहुभिर्मार्गैः vयाहि कलशमागच्छ ॥

**पवस्व देववीतय इन्दो धाराभिरोजसा । आ कलशं मधुमान्त्सोम नः सदः ॥७॥**

पव॑स्व । दे॒व॒ऽवी॑तये । इन्दो॒ इति॑ । धारा॑भिः । ओज॑सा ।
आ । क॒लश॑म् । मधु॑ऽमान् । सो॒म॒ । नः॒ । स॒दः॒ ॥ ७ ॥

हे ᵛइन्दो सोम ᵛदेववीतये देवानां भक्षणाय ᵛओजसा बलेन ᵛधाराभिः आत्मीयाभिः ᵛपवस्व क्षर । हे ᵛसोम ᵛमधुमान् मदकररसवांस्त्वं ᵛनः अस्मदीयं ᵛकलशं द्रोणाभिधानम् ᵛआ ᵛसदः । सदेर्लुङि रूपम् । आसीद ॥

**तव॑ द्र॒प्सा उ॑द॒प्रुत॒ इन्द्रं॒ मदा॑य वावृधुः । त्वां दे॒वासो॑ अ॒मृता॑य॒ कं प॑पुः ॥ ८ ॥**

तव॑ । द्र॒प्साः । उ॒द॒ऽप्रुतः॑ । इन्द्र॑म् । मदा॑य । व॒वृ॒धुः॒ । त्वाम् । दे॒वासः॑ । अ॒मृता॑य । कम् । प॒पुः॒ ॥ ८ ॥

ᵛउदप्रुतः वसतीवर्याख्यमुदकं प्रति गच्छन्तः । यद्वा । उदकस्य निर्गमयितारः । ᵛतव त्वभूताः ᵛद्रप्साः द्रुतगामिनो रसाः ᵛमदाय मदार्थम् ᵛइन्द्रं ᵛवावृधुः वर्धयन्ति । ततः ᵛदेवासः देवा इन्द्रादयः ᵛकं सुखकरं ᵛत्वाम् ᵛअमृताय अमरणार्थं ᵛपपुः पिबन्ति ॥

**आ नः॑ सुतास इन्दवः पुना॒ना धा॑वता र॒यिम् । वृ॒ष्टिद्या॑वो रीत्यापः स्व॒र्विदः॑ ॥ ९ ॥**

आ । नः॒ । सु॒ता॒सः॒ । इ॒न्द॒वः॒ । पु॒ना॒नाः॒ । धा॒व॒त॒ । र॒यिम् ।
वृ॒ष्टिऽद्या॑वः । री॒ति॒ऽआ॒पः॒ । स्वः॒ऽविदः॑ ॥ ९ ॥

हे ᵛसुतासः अभिपूयमाणा हे ᵛइन्दवः दीप्ताः पात्रेषु क्षरन्तो वा हे ᵛरीत्यापः यैः पृथिवीं प्रति स्रवणशीला आपः कृताः तादृशा हे सोमाः ᵛपुनानाः पूयमाना यूयं ᵛनः अस्मभ्यं ᵛरयिम् ᵛआ ᵛधावत आगमयत । कीदृशाः । ᵛवृष्टिद्यावः । वृष्टिमभि द्यौर्यैः क्रियते । वृष्ट्यभिमुखद्युलोकवन्तः ᵛस्वर्विदः सर्वस्य लम्भकाः ॥

**सोमः॑ पुना॒न ऊ॒र्मिणाव्यो॒ वारं॒ वि धा॑वति । अग्रे॑ वा॒चः पव॑मानः॒ कनि॑क्रदत् ॥ १० ॥**

सोमः॑ । पु॒ना॒नः । ऊ॒र्मिणा॑ । अव्यः॑ । वार॑म् । वि । धा॒व॒ति॒ ।
अग्रे॑ । वा॒चः । पव॑मानः । कनि॑क्रदत् ॥ १० ॥

ᵛपुनानः पूयमानः ᵛसोमः ᵛऊर्मिणा स्वीयया धारया ᵛअव्यः अवेः ᵛवारं वालं पवित्रं ᵛवि ᵛधावति विविधं गच्छति । कीदृशः सोमः[1] । ᵛपवमानः पूतः ᵛवाचः स्तोत्रस्य ᵛअग्रे ᵛकनिक्रदत् पुनःपुनः शब्दं कुर्वन् वि धावति ॥　　॥ १० ॥

**धी॒भिर्हि॑न्वन्ति वा॒जिनं॒ वने॒ क्रीळ॑न्तमत्य॑विम् ।**
**अ॒भि त्रि॑पृ॒ष्ठं म॒तयः॒ सम॑स्वरन् ॥ ११ ॥**

धी॒भिः । हि॒न्व॒न्ति॒ । वा॒जिन॑म् । वने॑ । क्रीळ॑न्तम् । अति॑ऽअविम् ।
अ॒भि । त्रि॒ऽपृ॒ष्ठम् । म॒तयः॑ । सम् । अ॒स्व॒र॒न् ॥ ११ ॥

ᵛवाजिनं बलवन्तं ᵛवने वननीये वसतीवर्याख्य उदके ᵛक्रीळन्तं संक्रीडमानम् ᵛअत्यविम् । अविशब्देन तद्रोमकृतं पवित्रमभिधीयते । अतिक्रान्तपवित्रं सोममृत्विजः ᵛधीभिः स्तुतिभिः

---

१. त१.२.३.४.५.७-म२.६-मु-' सोमः ' नास्ति ।

ᵛहिन्वन्ति वर्धयन्ति । यद्वा । धीभिः । वर्णलोपश्छान्दसः । धीतिभिरङ्गुलीभिर्हिन्वन्ति प्रेरयन्ति । 'हि गतौ वृद्धौ च' स्वादिः । किंच ᵛत्रिपृष्ठम् । त्रीणि पवित्राणि द्रोणकलशाधवनीयपूतभृदाख्यानि[1] पात्राणि स्पृशतीति त्रीणि सवनानि वा स्पृशतीति स तथोक्तः । तं सोमं ᵛमतयः स्तुतयः ᵛअभि ᵛसमस्वरन् अभितः संस्तुवन्ति ॥

**असर्जि कलशाँ अभि मीळ्हे सप्तिर्न वाजयुः । पुनानो वाचं जनयन्नसिष्यदत् ॥ १२ ॥**

असर्जि । कलशान् । अभि । मीळ्हे । सप्तिः । न । वाजऽयुः ।
पुनानः । वाचम् । जनयन् । असिस्यदत् ॥ १२ ॥

ᵛवाजयुः यजमानानामन्नमिच्छन् स सोमः ᵛकलशान् अभिलक्ष्य कलशेषु ᵛअसर्जि सृज्यते । तत्र दृष्टान्तः । ᵛसप्तिर्न यथाश्वः ᵛमीळ्हे । संग्रामनामैतत् । संग्रामे सृज्यते तद्वत् । ततः ᵛपुनानः पूयमानः सोमः ᵛवाचं शब्दं ᵛजनयन् उत्पादयन् ᵛअसिष्यदत् पात्रेषु स्यन्दते ॥

**पवते हर्यतो हरिरति ह्वरांसि रंह्या । अभ्यर्षन्स्तोतृभ्यो वीरवद्यशः ॥ १३ ॥**

पवते । हर्यतः । हरिः । अति । ह्वरांसि । रंह्या । अभिऽअर्षन् । स्तोतृऽभ्यः । वीरऽवत् । यशः ॥ १३ ॥

ᵛहर्यतः स्पृहणीयः ᵛहरिः हरितवर्णः सोमः ᵛरंह्या । तृतीयाया आकारः । साधुवेगेन ᵛह्वरांसि कुटिलान्यनृजूनि पवित्राणि ᵛअति ᵛपवते अतीत्य गच्छति । किं कुर्वन् । ᵛस्तोतृभ्यो ᵛवीरवत् पुत्रयुक्तं ᵛयशः ᵛअभ्यर्षन् अभिगमयन् पवते ॥

**अया पवस्व देवयुर्मधोर्धारा असृक्षत । रेभन्पवित्रं पर्येषि विश्वतः ॥ १४ ॥**

अया । पवस्व । देवऽयुः । मधोः । धाराः । असृक्षत । रेभन् । पवित्रम् । परि । एषि । विश्वतः ॥ १४ ॥

हे सोम ᵛदेवयुः देवान् कामयमानस्त्वम् ᵛअया अनया धारया ᵛपवस्व क्षर । ततः ᵛमधोः मदकरस्य तव ᵛधाराः आत्मीयाः ᵛअसृक्षत सृज्यन्ते । अनन्तरं ᵛरेभन् शब्दायमानः ᵛपवित्रं ᵛविश्वतः ᵛपर्येषि सर्वतः परिगच्छसि ॥ ॥ १२ ॥

'परीतः' इति षड्विंशत्यृचं चतुर्थं सूक्तम् । 'त्वं सोमासि' (ऋ. सं. ९. ६७) इत्यत्रोक्ता भरद्वाजकश्यपाद्याः सप्तर्षयः । आद्या बृहती द्वितीया सतोबृहती । अयमेकः प्रगाथः । 'परि सुवानः' इत्येषा तृतीयैकविंशत्यक्षरा भुरिग्विराड् द्विपदा । 'नृभिर्येमानः' इति षोडशी विंशत्यक्षरा द्विपदा विराट् । चतुर्थ्यादिद्वौ प्रगाथौ । दशम्यादित्रयः सप्तदश्यादिपञ्च प्रगाथाः । पवमानः सोमो देवता । तथा चानुक्रम्यते—'परीतः षड्विंशतिः सप्तर्षयः प्रागाथं तृतीयाषोळश्यौ द्विपदे अष्टम्याद्ये बृहत्यौ' इति । गतः सूक्तविनियोगः ॥

**परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।**
**दधन्वाँ यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥ १ ॥**

परि । इतः । सिञ्चत । सुतम् । सोमः । यः । उत्ऽतमम् । हविः ।
दधन्वान् । यः । नर्यः । अप्ऽसु । अन्तः । आ । सुसाव । सोमम् । अद्रिऽभिः ॥ १ ॥

१. त-१.२.३.४.५.७-भ१.२.४.६—[1]पूतभृदात्मकानि ।

हे ऋत्विजः ᵛसुतम् अभिषुतं सोमम् ᵛइतः अस्मात् कर्मण ऊर्ध्वमथवास्मात्प्रदेशादूर्ध्वं ᵛपरि ᵛषिञ्चत वसतीवरीभिः ॥ 'इतो षिञ्चत' इत्यत्र संहितायां 'छन्दसि'[1] 'इति'[1] रोत्वम् । 'आदेशप्रत्यययोः' इति षत्वम् ॥ ᵛयः ᵛसोमः देवानाम् ᵛउत्तमं प्रशस्यं ᵛहविः भवति ᵛआ अपि च ᵛनर्यः मनुष्यहितः ᵛयः च सोमः ᵛअप्सु वसतीवरीष्वन्तरिक्षे वा ᵛअन्तः ᵛदधन्वान् गच्छन् भवति तं ᵛसोममद्रिभिः ग्रावभिरध्वर्युः ᵛसुषाव अभिषुतं चकार । तं परि षिञ्चतेति समन्वयः ॥

नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिंतरः ।
सुते चित्त्वाप्सु मदामो अन्धसा श्रीणन्तो गोभिरुत्तरम् ॥ २ ॥

नूनम् । पुनानः । अविऽभिः । परि । स्रव । अदब्धः । सुरभिम्ऽतरः ।
सुते । चित् । त्वा । अप्ऽसु । मदामः । अन्धसा । श्रीणन्तः । गोभिः । उत्ऽतरम् ॥ २ ॥

हे सोम ᵛअदब्धः कैश्चिदप्यहिंसितः ᵛसुरभिंतरः अत्यन्तं सुगन्धिस्त्वं ᵛनूनम् इदानीं ᵛपुनानः पूयमानः सन् ᵛअविभिः अविवालकृतैः पवित्रैस्तेभ्यः ᵛपरि ᵛस्रव परितः क्षर । ᵛसुते ᵛचित् अभिषुते सति ᵛअन्धसा सक्तुलक्षणेनान्नेन ᵛगोभिः गोविकारैः क्षीरैः क्षीरादिभिः ᵛश्रीणन्तः मिश्रयन्तो वयम् ᵛउत्तरम् उद्गततरम् ᵛअप्सु वसतीवरीषु संस्थितं त्वां ᵛमदामः मन्दामहे स्तुमः ॥

परि सुवानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ॥ ३ ॥

परि । सुवानः । चक्षसे । देवऽमादनः । क्रतुः । इन्दुः । विऽचक्षणः ॥ ३ ॥

ᵛसुवानः अभिपूयमाणः सोमः ᵛचक्षसे सर्वेषां दर्शनाय ᵛपरि स्रवति । कीदृशः । ᵛदेवमादनः देवानां तर्पयिता ᵛक्रतुः कर्ता ᵛइन्दुः पात्रेषु क्षरणशीलो दीप्तो वा ᵛविचक्षणः सर्वस्य विद्रष्टा ॥

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः ॥ ४ ॥

पुनानः । सोम । धारया । अपः । वसानः । अर्षसि ।
आ । रत्नऽधाः । योनिम् । ऋतस्य । सीदसि । उत्सः । देव । हिरण्ययः ॥ ४ ॥

हे ᵛसोम ᵛपुनानः पूयमानस्त्वम् ᵛअपः उदकानि वसतीवर्याख्यानि ᵛवसानः आच्छादयन् ᵛधारया ᵛअर्षसि पवित्रं गच्छसि । ततः ᵛरत्नधाः रत्नानां दाता त्वम् ᵛऋतस्य सत्यभूतस्य यज्ञस्य ᵛयोनिं स्थानम् ᵛआ ᵛसीदसि । हे ᵛदेव द्योतमान सोम ᵛउत्सः प्रस्यन्दनशीलस्त्वं ᵛहिरण्ययः हिरण्मयो हिरण्यस्योत्पत्तिस्थानं खलु । यद्वा देवानां हितरमणीयो भवसि ॥

दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षति नृभिर्धूतो विचक्षणः ॥ ५ ॥

दुहानः । ऊधः । दिव्यम् । मधु । प्रियम् । प्रत्नम् । सधऽस्थम् । आ । असदत् ।
आऽपृच्छ्यम् । धरुणम् । वाजी । अर्षति । नृऽभिः । धूतः । विऽचक्षणः ॥ ५ ॥

---

१. त३.६-म१.२.४.७–छांदसं ।

ᵛमधु मदकरं ᵛप्रियं प्रीणनकारि ᵛदिव्यं दिवि भवम् ᵛऊधः सोमवल्लीलक्षणं[1] ᵛदुहानः सोमः ᵛप्रत्नं पुरातनं ᵛसधस्थम्। सह तिष्ठन्त्यत्रेति सधस्थं स्थानम्। अन्तरिक्षम् ᵛआसदत् आसीदति। सदेर्लुङि रूपम्। ततः ᵛआपृच्छ्यं कर्मण्याप्रष्टव्यं ᵛधरुणं कर्मणो धारयितारं यजमानं ᵛवाजी अन्नवान् सोमः ᵛअर्षति। तस्मा अन्नं दातुमभिगच्छति। कीदृशः। ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛधूतः अदाभ्यगृहे परिशोधितः। 'तैरेनं चतुराधूनोति पञ्चकृत्वः सप्तकृत्वो वा' इत्यापस्तम्बेन सूत्रितम्। ᵛविचक्षणः सर्वस्य विद्रष्टा ॥ ॥ १२ ॥

पुनानः सोम जागृविरव्यो वारे परि प्रियः।
त्वं विप्रो अभवोऽङ्गिरस्तमो मध्वा यज्ञं मिमिक्ष नः ॥ ६ ॥

पुनानः। सोम। जागृविः। अव्यः। वारे। परि। प्रियः।
त्वम्। विप्रः। अभवः। अङ्गिरःऽतमः। मध्वा। यज्ञम्। मिमिक्ष। नः ॥ ६ ॥

हे ᵛसोम ᵛजागृविः जागरणशीलः ᵛप्रियः प्रीणयिता त्वं ᵛपुनानः पूयमानः सन् ᵛअव्यः अवेः ᵛवारे वाले पवित्रे ᵛपरि क्षरसि। किंच ᵛविप्रः मेधावी ᵛत्वम् ᵛअङ्गिरस्तमः अङ्गिरसां वरिष्ठः पितॄणां नेता ᵛअभवः[2] भवसि। स त्वं ᵛनः अस्मदीयं ᵛयज्ञं ᵛमध्वा मधुनात्मीयेन रसेन ᵛमिमिक्ष सिञ्च। मिहेः सेचनार्थस्य सनि रूपम् ॥

सोमो मीढ्वान्पवते गातुवित्तम ऋषिर्विप्रो विचक्षणः।
त्वं कविरभवो देववीतम आ सूर्यं रोहयो दिवि ॥ ७ ॥

सोमः। मीढ्वान्। पवते। गातुवित्ऽतमः। ऋषिः। विप्रः। विऽचक्षणः।
त्वम्। कविः। अभवः। देवऽवीतमः। आ। सूर्यम्। रोहयः। दिवि ॥ ७ ॥

ᵛमीढ्वान् कामानां सेक्ता ᵛसोमः ᵛपवते क्षरति। कीदृशः। ᵛगातुवित्तमः अत्यन्तं मार्गस्य लम्भकः ᵛऋषिः सर्वस्य प्रदर्शकः ᵛविप्रः मेधावी ᵛविचक्षणः विद्रष्टा। किंच ᵛकविः क्रान्तप्रज्ञः ᵛत्वं ᵛदेववीतमः अत्यन्तं देवकामः ᵛअभवः भवसि। अपि च ᵛदिवि द्युलोके ᵛसूर्यम् ᵛआ ᵛरोहयः प्रादुर्भावयसि ॥

सोम उ षुवाणः सोतृभिरधि ष्णुभिरवीनाम्।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ८ ॥

सोमः। ऊँ इति। सुवानः। सोतृऽभिः। अधि। स्नुऽभिः। अवीनाम्।
अश्वयाऽइव। हरिता। याति। धारया। मन्द्रया। याति। धारया ॥ ८ ॥

ᵛसोतृभिः अभिषुण्वद्भिर्ऋत्विग्भिः ᵛसुवानः अभिषूयमाणः ᵛसोमः ᵛअवीनां ᵛस्नुभिः। 'मांस्पृत्स्नूनामुपसंख्यानम्' (पा. सू. ६. १. ६३. १) इति सानुशब्दस्य स्नुभावः। समुच्छ्रितैर्वालैः पवित्रैः ᵛअधि ᵛयाति अधिकं गच्छति। ᵛउ इति प्रसिद्धौ। ᵛअश्वयेव वडवयेव ᵛहरिता हरितवर्णया ᵛधारया ᵛयाति। ᵛमन्द्रया मदकारिण्या ᵛधारया द्रोणकलशमभिगच्छति[3] ॥

---

१. ग-त३.६-भ१.७—सोमलक्षणं। २. त६-भ१.२.७—वा। ३. त१.२.३.४.५.७-भ२.६-मु—°मधिगच्छति।

अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते ॥ ९ ॥

अनूपे । गोऽमान् । गोभिः । अक्षारिति । सोमः । दुग्धाभिः । अक्षारिति ।
समुद्रम् । न । सम्ऽवरणानि । अग्मन् । मन्दी । मदाय । तोशते ॥ ९ ॥

गोमान् गोयुक्तः सोमः अनूपे निम्ने देशे कलशे गोभिः गोविकारैः क्षीरादिभिः सह अक्षाः क्षरति । तदेवोच्यते । सः सोमः आत्मनो मिश्रणार्थं दुग्धाभिः गोभिः सह अक्षाः क्षरति । क्षरतेर्लुङि रूपम् । किंच समुद्रं न यथा समुद्रमुदकानि गच्छन्ति तद्वत् संवरणानि संभजनीयानि रसरूपाण्यन्नानि द्रोणकलशम् अग्मन् गच्छन्ति । गमेर्लुङि च्लेर्लुकि रूपम् । किंच मन्दी मदकरः सोमः मदाय मदार्थं तोशते हन्यतेऽभिपूयते । तोशतिर्वधकर्मा ॥

आ सोम सुवानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दधिषे ॥ १० ॥

आ । सोम । सुवानः । अद्रिऽभिः । तिरः । वाराणि । अव्यया ।
जनः । न । पुरि । चम्वोः । विशत् । हरिः । सदः । वनेषु । दधिषे ॥ १० ॥

हे सोम अद्रिभिः ग्रावभिः सुवानः अभिषूयमाणस्त्वम् अव्यया अविमयानि वाराणि वालानि पवित्राणि तिरः कुर्वन् व्यवधायकानि कुर्वाणः सन् आ पवस[1] इति शेषः । हरिः हरितवर्णः स सोमः चम्वोः अधिषवणफलकयोः उपरि[2] स्थिते कलशे[2] विशत् प्रविशति । तत्र दृष्टान्तः । जनो न यथा जनः पुरि पुरे प्रविशति । स त्वं वनेषु काष्ठनिर्मितेषु पात्रेषु सदः स्थानं दधिषे करोषि ॥ ॥ १३ ॥

स मामृजे तिरो अण्वानि मेष्यो मीळ्हे सप्तिर्न वाजयुः ।
अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः ॥ ११ ॥

सः । ममृजे । तिरः । अण्वानि । मेष्यः । मीळ्हे । सप्तिः । न । वाजऽयुः ।
अनुऽमाद्यः । पवमानः । मनीषिऽभिः । सोमः । विप्रेभिः । ऋक्वऽभिः ॥ ११ ॥

वाजयुः अन्नकामः अण्वानि अणूनि सूक्ष्माणि मेष्यः मेष्या अवे रोमाणि पवित्राणि तिरः कुर्वन् सः सोमः ममृजे परिशोध्यते । अलंक्रियते वा । तत्र दृष्टान्तः । सप्तिर्न यथा जयकामैरश्वो मीळ्हे संग्रामेऽलंक्रियते तद्वत् । कीदृशः । अनुमाद्यः अनुमोदनीयः सर्वैः पवमानो मनीषिभिः ऋत्विग्भिः पूयमानः तथा ऋक्वभिः । 'छन्दसीवनिपौ' इति वनिप् । स्तुतिमद्भिर्विप्रैर्मेधाविभिः अभिष्टुतो मृज्यते ॥

प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ १२ ॥

१. त६-भ१.७-पवस्व । २. ग-त३.६-भ१.७-'उपरि स्थिते कलशे' नास्ति ।

उताहं नक्तमुत सोम ते दिवा सख्याय बभ्र ऊधनि ।
घृणा तपन्तमति सूर्यं परः शकुनाइव पप्तिम ॥ २० ॥

उत । अहम् । नक्तम् । उत । सोम । ते । दिवा । सख्याय । बभ्रो इति । ऊधनि ।
घृणा । तपन्तम् । अति । सूर्यम् । परः । शकुनाःऽइव । पप्तिम ॥ २० ॥

हे ᵛबभ्रो बभ्रुवर्ण हे ᵛसोम ᵛउत अपि च ᵛनक्तम् ᵛउत अपि च ᵛदिवा अहोरात्रयोः ᵛसख्याय सख्यार्थं तव ᵛऊधनि समीपे ᵛअहं रम इति[१] शेषः[१]। ते वयं ᵛघृणा दीप्त्या ᵛतपन्तं ज्वलन्तं ᵛपरः परमस्थानस्थितं[२] ᵛसूर्यं तदात्मकं त्वाम् ᵛअति ᵛपप्तिम। तत्र स्थितं त्वां प्राप्तुमतिपेतिम[३]। कथमिव। ᵛशकुनाइव। यथा सुपर्णादयः पक्षिणः सूर्यमतिगच्छन्ति तद्वत् ॥ 'पत्लृ गतौ'। अस्माच्छान्दसे लिटि 'तनिपत्योश्छन्दसि' इत्युपधालोपः ॥ ॥ १५ ॥

ग्रावस्तोत्रेऽभिरूपकरणे सोमे मृज्यमान एकस्तृचः। तत्र 'मृज्यमानः' इत्येषा तृतीया। सूत्रितं च—'मृज्यमानः सुहस्त्या दशभिर्विवस्वतः' (आश्व. श्रौ. ५. १२) इति ॥

मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ २१ ॥

मृज्यमानः । सुऽहस्त्य । समुद्रे । वाचम् । इन्वसि ।
रयिम् । पिशङ्गम् । बहुलम् । पुरुऽस्पृहम् । पवमान । अभि । अर्षसि ॥ २१ ॥

हे ᵛसुहस्त्य। हस्ते भवा हस्त्या अङ्गुलयः। शोभनाङ्गुलिक सोम ᵛमृज्यमानः शोध्यमानस्त्वं ᵛसमुद्रे अन्तरिक्षे कलशे वा ᵛवाचं शब्दम् ᵛइन्वसि प्रेरयसि। किंच हे ᵛपवमान पूयमान सोम ᵛपिशङ्गं हिरण्यैः पिशङ्गवर्णं ᵛबहुलं प्रभूतं ᵛपुरुस्पृहं बहुभिः स्पृहणीयं ᵛरयिं धनम् ᵛअभ्यर्षसि स्तोतृणामभिक्षरसि प्रयच्छसि ॥

मृजानो वारे पवमानो अव्यये वृषाव चक्रदो वने ।
देवानां सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥ २२ ॥

मृजानः । वारे । पवमानः । अव्यये । वृषा । अव । चक्रदः । वने ।
देवानाम् । सोम । पवमान । निःऽकृतम् । गोभिः । अञ्जानः । अर्षसि ॥ २२ ॥

हे ᵛसोम ᵛवृषा वर्षिता त्वं ᵛमृजानः वसतीवरीभिर्मृज्यमानोऽलंक्रियमाणः ᵛअव्यये अविमये ᵛवारे वाले पवित्रे ᵛपवमानः पूयमानः सन् ᵛवने वननीय उदके काष्ठे कलशे वा ᵛअव ᵛचक्रदः अवक्रन्दसि शब्दायसे। ततो हे ᵛसोम हे ᵛपवमान त्वं ᵛगोभिः गव्यैः क्षीरादिभिः ᵛअञ्जानः अज्यमानः सन् ᵛनिष्कृतं संस्कृतं ᵛदेवानां स्थानम् ᵛअर्षसि गच्छसि ॥

पवस्व वाजसातयेऽभि विश्वानि काव्या ।
त्वं समुद्रं प्रथमो वि धारयो देवेभ्यः सोम मत्सरः ॥ २३ ॥

१. ग-त३.६-भ१.७–'इति शेषः' नास्ति। २. त-भ२–परस्थान°। ३. त६–°मतिपेतिम अतिगच्छेम; भ१.२–°मतिपेतिम इति शेषः।

पव॑स्व । वाज॑ऽसातये । अ॒भि । विश्वा॑नि । काव्या॑ ।

त्वम् । स॒मु॒द्रम् । प्र॒थ॒मः । वि । धा॒र॒यः । दे॒वेभ्यः॑ । सो॒म॒ । म॒त्स॒रः ॥ २३ ॥

हे सोम ᵛविश्वानि सर्वाणि ᵛकाव्या कविकर्माणि स्तोत्राण्यभिलक्ष्य ᵛवाजसातये अन्नलाभाय ᵛपवस्व क्षर । हे ᵛसोम ᵛदेवेभ्यः देवानां ᵛमत्सरः मदकरः ᵛप्रथमः सर्वदेवानां मुख्यः ᵛत्वं ᵛसमुद्रम् अन्तरिक्षं कलशं वा ᵛवि ᵛधारयः विशेषेण धारयसि ॥

**स तू प॑वस्व॒ परि॒ पार्थि॑वं॒ रजो॑ दि॒व्या च॑ सोम॒ धर्म॑भिः ।**

**त्वां विप्रा॑सो म॒तिभि॑र्विचक्षण शु॒भ्रं हि॑न्वन्ति धी॒तिभिः॑ ॥ २४ ॥**

सः । तु । प॒व॒स्व॒ । परि॑ । पार्थि॑वम् । रजः॑ । दि॒व्या । च॒ । सो॒म॒ । धर्म॑ऽभिः ।

त्वाम् । विप्रा॑सः । म॒तिऽभिः॑ । वि॒ऽच॒क्ष॒ण॒ । शु॒भ्रम् । हि॒न्व॒न्ति॒ । धी॒तिऽभिः॑ ॥ २४ ॥

हे ᵛसोम ᵛसः तादृशस्त्वं ᵛपार्थिवं ᵛरजः लोकं प्रति दिव्यानि ᵛच रजांसि[6] प्रति ᵛधर्मभिः धारकैः[7] सह ᵛतु क्षिप्रं ᵛपरि ᵛपवस्व परितः क्षर । हे ᵛविचक्षण विद्रष्टः सोम ᵛविप्रासः विप्रा मेधाविनः ᵛमतिभिः स्तुतिभिः ᵛधीतिभिः अङ्गुलीभिश्च ᵛशुभ्रं श्वेतवर्णं ᵛत्वां ᵛहिन्वन्ति प्रेरयन्ति ॥

**पव॑माना असृक्षत प॒वित्र॒मति॒ धार॑या ।**

**म॒रुत्व॑न्तो मत्स॒रा इ॑न्द्रि॒या हया॑ मे॒धाम॒भि प्रयां॑सि च ॥ २५ ॥**

पव॑मानाः । अ॒सृ॒क्ष॒त॒ । प॒वित्र॑म् । अति॑ । धार॑या ।

म॒रुत्व॑न्तः । म॒त्स॒राः । इ॒न्द्रि॒याः । हयाः॑ । मे॒धाम् । अ॒भि । प्रयां॑सि । च॒ ॥ २५ ॥

ᵛपवमानाः पूयमानाः सोमाः ᵛधारया आत्मीयया ᵛपवित्रम् अतीत्य ᵛअसृक्षत सृज्यन्ते । कीदृशाः । ᵛमरुत्वन्तः मरुद्भिर्युक्ताः ᵛमत्सराः मदकराः ᵛइन्द्रियाः इन्द्रजुष्टाः । ᵛमेधां स्तुतिं ᵛप्रयांसि अन्नानि ᵛच अभिलक्ष्य स्तोतृभ्यः उभयं[8] कर्तुं वा ᵛहयाः गन्तार एते सृज्यन्ते ॥

**अ॒पो वसा॑नः॒ परि॒ कोश॑मर्षती॒न्दुर्हि॑या॒नः सो॒तृभिः॑ ।**

**ज॒नय॒ञ्ज्योति॑र्म॒न्दना॑ अवीवश॒द्गाः कृ॑ण्वा॒नो न नि॒र्णिज॑म् ॥ २६ ॥**

अ॒पः । वसा॑नः । परि॑ । कोश॑म् । अ॒र्ष॒ति॒ । इन्दुः॑ । हि॒या॒नः । सो॒तृऽभिः॑ ।

ज॒नय॑न् । ज्योतिः॑ । म॒न्दनाः॑ । अ॒वी॒व॒श॒त् । गाः । कृ॒ण्वा॒नः । न । निः॒ऽनिज॑म् ॥ २६ ॥

ᵛअपः वसतीवरीः ᵛवसानः आच्छादयन् ᵛसोतृभिः अभिषुण्वद्भिः ᵛहियानः प्रेर्यमाणः ᵛइन्दुः सोमः ᵛकोशं कलशं ᵛपरि ᵛअर्षति प्रति गच्छति । किंच ᵛज्योतिः दीप्तिं ᵛजनयन् उत्पादयन् ᵛगाः गव्यानि क्षीरादीनि ᵛनिर्णिजम् आत्मनो रूपं ᵛकृण्वानः कुर्वन् मिश्रयन् सोऽयं सोमः । नः संप्रत्यर्थे । इदानीं ᵛमन्दनाः स्तुतीः ᵛअवीवशत् कामयते । 'वश कान्तौ' । लुङि चङि रूपम् ॥ ॥१६॥

'पवस्व' इति षोडशर्चं पञ्चमं सूक्तम् । आद्यतृचस्य गौरिवीतिनाम शक्तिपुत्र ऋषिः । तृतीयायाः शक्तिर्नाम वासिष्ठः । ततः पञ्चानां तृचानामूर्ध्वानामाङ्गिरस ऋजिश्वा नाम भारद्वाज

---

६. त-भ-मु—रक्षांसि । ७. ग-त३-भ५.६—धारकैर्दकैः । ८. भ६—अभयं ।

ऊर्ध्वसद्मा नामाङ्गिरसः कृतयशा नाम कश्चित् सोऽप्याङ्गिरस ऋणंचयो नाम राजर्षिरित्येते क्रमेणर्षयः। एवं त्रयोदश गताः। ततस्तिसृणां वासिष्ठः शक्तिः। प्रथमातृतीयाद्या अयुजः ककुभः। द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः। 'स सुन्वे यो वसूनाम्' इत्येषा तु यवमध्या गायत्री। पवमानः सोमो देवता। तथा चानुक्रम्यते—'पवस्व षोळश गौरिवीतिर्द्वृचं शक्तिरेकामूरुर्ऋजिश्वोर्ध्वसद्मा कृतयशा ऋणंचय इत्यृषयो द्वृचास्तिस्रः शक्तिः काकुभाः प्रगाथाः स सुन्वे गायत्री यवमध्या' इति। गतो विनियोगः॥

**पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः। महि द्युक्षतमो मदः॥ १॥**

पवस्व। मधुमत्ऽतमः। इन्द्राय। सोम। क्रतुवित्ऽतमः। मदः। महि। द्युक्षऽतमः। मदः॥ १॥

हे सोम मधुमत्तमः अतिशयेन माधुर्योपेतस्त्वम् इन्द्राय इन्द्रार्थं मदः मदकरः सन् पवस्व क्षर। कीदृशः। क्रतुवित्तमः अत्यन्तं प्रज्ञायाः कर्मणो वा लम्भकः महि महान् मंहनीयो वा द्युक्षतमः अत्यन्तं दीप्तः मदः मदहेतुः॥

**यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीता स्वर्विदः।**
**स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः॥ २॥**

यस्य। ते। पीत्वा। वृषभः। वृषऽयते। अस्य। पीता। स्वःऽविदः।
सः। सुऽप्रकेतः। अभि। अक्रमीत। इषः। अच्छ। वाजम्। न। एतशः॥ २॥

वृषभः कामानां वर्षक इन्द्रः यस्य यं ते त्वां पीत्वा वृषायते वृषभ इवाचरति। किंच स्वर्विदः सर्वस्य दर्शकस्य अस्य ते तव पीता पाने सति सुप्रकेतः सुप्रज्ञः सः इन्द्रः इषः शत्रूणामन्नानि अभ्यक्रमीत् अभिक्रामति। तत्र दृष्टान्तः। वाजं[1] नैतशः। एतश इत्यश्वनाम। यथाश्वो वाजं संग्राममभिगच्छति तद्वत्॥

**त्वं ह्य१ङ्ग दैव्या पवमान जनिमानि द्युमत्तमः। अमृतत्वाय घोषयः॥ ३॥**

त्वम्। हि। अङ्ग। दैव्या। पवमान। जनिमानि। द्युमत्ऽतमः। अमृतऽत्वाय। घोषयः॥ ३॥

हे पवमान पूयमान सोम द्युमत्तमः अतिशयेन दीप्तिमान् त्वं हि त्वमेव दैव्या देवसंबन्धीनि जनिमानि जन्मानि। देवानित्यर्थः[2]। तानभिलक्ष्य अमृतत्वाय तेषाममरणाय अङ्ग क्षिप्रं घोषयः शब्दायसे॥ 'घुषिर् विशब्दने'। ण्यन्तस्य लेटि रूपम्। हियोगादनिघातः॥

**येना नवग्वो दध्यङ्ङपोर्णुते येन विप्रास आपिरे।**
**देवानां सुम्ने अमृतस्य चारुणो येन श्रवांस्यानशुः॥ ४॥**

येन। नवऽग्वः। दध्यङ्। अपऽऊर्णुते। येन। विप्रासः। आपिरे।
देवानाम्। सुम्ने। अमृतस्य। चारुणः। येन। श्रवांसि। आनशुः॥ ४॥

नवग्वः नवनीयगतिः यद्वा नवभिर्मासैः सत्रस्यानुष्ठाता दध्यङ् एतन्नामकोऽङ्गिराः येन सोमेन पणिभिरपहृतानां गवां द्वारम् अपोर्णुते अपाच्छादयति विवृतमकार्षीत्। विप्रासः तन्मुखाः

---

१. त-भ-'वाजं' नास्ति। २. त१.२.४.५.७-म२.६-देवानित्यर्थः जानासीत्यर्थः।

सर्वे मेधाविनोऽङ्गिरसः ᵛयेन च¹ सोमेन ᵛआपिरे एतैरपहृता गा आप्नुवन् । किंच ᵛदेवानाम् इन्द्रादीनां ᵛसुम्ने सुखे यज्ञेन संजाते सति ᵛचारुणः कल्याणस्य ᵛअमृतस्य उदकस्य संबन्धीनि ᵛश्रवांसि अन्नानि ᵛयेन च सोमेन यजमानाः ᵛआनशुः व्याप्नुवन् अलभन्त । स त्वं देवानाममृतत्वाय शब्दायस इति पूर्वेण समन्वयः ॥

**एष स्य धारया सुतोऽव्यो वारेभिः पवते मदिन्तमः । क्रीळन्नूर्मिरपामिव ॥५॥**

एषः । स्यः । धारया । सुतः । अव्यः । वारेभिः । पवते । मदिन्ऽतमः ।
क्रीळन् । ऊर्मिः । अपाम्ऽइव ॥ ५ ॥

ᵛस्यः सः ᵛएषः ᵛसुतः अभिषुतः सोमः ᵛअव्यः अवेः ᵛवारेभिः वालेस्तेभ्यः पवित्रेभ्यः ᵛधारया आत्मीयया ᵛपवते कलशमभिलक्ष्य क्षरति । कीदृशः । ᵛमदिन्तमः मादयितृतमः ᵛअपामिव उदकानाम् ᵛऊर्मिः संघात इव ᵛक्रीळन् इतस्ततः संक्रीडमानः पवते ॥ ॥ १७ ॥

**य उस्रिया अप्या अन्तरश्मनो निर्गा अकृन्तदोजसा ।**
**अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज ॥ ६ ॥**

यः । उस्रियाः । अप्याः । अन्तः । अश्मनः । निः । गाः । अकृन्तत् । ओजसा ।
अभि । व्रजम् । तत्निषे । गव्यम् । अश्व्यम् । वर्मीऽइव । धृष्णो इति । आ । रुज ॥ ६ ॥

ᵛयः सोमः ᵛउस्रियाः उत्सरणशीलाः ᵛअप्याः । अप इत्यन्तरिक्षनाम । तस्मात् 'भवे छन्दसि' इति यत् । अन्तरिक्षस्था अहिप्रभृतिभिरसुरैरपहृत्य निहिताः ᵛगाः अपः ᵛअश्मनः । मेघनामैतत् । मेघात् ᵛअन्तः ᵛओजसा बलेन ᵛनिः ᵛअकृन्तत् निरच्छिनत् निरगमयत् । अन्तरिक्षात् वृष्टिमकार्षीदित्यर्थः । स त्वमसुरैरपहृतं ᵛगव्यं गोसंबन्धिनम् ᵛअश्व्यम् अश्वेषु भवं ᵛव्रजं समूहम् ᵛअभि ᵛतत्निषे अभितो व्याप्नोषि ॥ 'तनु विस्तारे' । छान्दसे लिटि 'तनिपत्योश्छन्दसि' इत्युपधालोपः । किंच हे ᵛधृष्णो शत्रुधर्षणशील सोम स त्वं ᵛवर्मीव कवचीव शूरः ᵛआ ᵛरुज असुरानाजहि ॥

**आ सोता परि षिञ्चताश्वं न स्तोममप्तुरं रजस्तुरम् । वनक्रक्षमुदप्रुतम् ॥ ७ ॥**

आ । सोत । परि । सिञ्चत । अश्वम् । न । स्तोमम् । अप्ऽतुरम् । रजःऽतुरम् ।
वनऽक्रक्षम् । उदऽप्रुतम् ॥ ७ ॥

हे ऋत्विजः ᵛआ ᵛसोत सोममभिषुणुत ॥ 'षुञ् अभिषवे' । लोटि छान्दसो विकरणस्य लुक् । 'तप्तनप्तनथनाश्च' इति तस्य तबादेशः ॥ किंच ᵛपरि ᵛषिञ्चत परितस्तं वसतीवर्यादिभिः सिञ्चत । कीदृशम् । ᵛअश्वं ᵛन अश्वमिव वेगिनं ᵛस्तोमं स्तोतव्यम् ᵛअप्तुरम् अन्तरिक्षस्थितानामुदकानां प्रेरकं ᵛरजस्तुरं तेजसां च प्रेरकम् । ᵛवनक्रक्षम् उदकानां कर्षकम् । यद्वा । काष्ठेषु पात्रेषु विप्रकीर्णम् । ᵛउदप्रुतम् उदके गच्छन्तं प्लवमानं सोममभिषुणुताभिषिञ्चत च² ॥

**सहस्रधारं वृषभं पयोवृधं प्रियं देवाय जन्मने ।**
**ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत् ॥ ८ ॥**

१. त१.२.४.५.७-म६-मु-वा । २. त१.२.३.६.७-म२.६.७-'च' नास्ति ।

सहस्रऽधारम् । वृषभम् । पयःऽवृधम् । प्रियम् । देवाय । जन्मने ।
ऋतेन । यः । ऋतऽजातः । विऽववृधे । राजा । देवः । ऋतम् । बृहत् ॥ ८ ॥

ᵛसहस्रधारं बहुधारोपेतं ᵛवृषभं कामानां वर्षकं ᵛपयोवृधम् उदकानां वर्धकं ᵛप्रियं प्रीणयितारं तं सोमं ᵛदेवाय देवसंबन्धिने ᵛजन्मने देवेभ्यस्तदर्थमभिषुणुत । ᵛऋतजातः उदकाज्जातः ᵛयः ᵛराजा सोमः ᵛऋतेन वसतीवर्याख्येनोदकेन ᵛविववृधे विशेषेण वर्धते । कीदृशः । ᵛदेवः द्योतमानः स्तोतव्यो वा[1] ᵛऋतं सत्यभूतः सन् ᵛबृहत् महान् । तमासुनुतेति पूर्वेण समन्वयः ॥

अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुः । वि कोशं मध्यमं युव ॥ ९ ॥
अभि । द्युम्नम् । बृहत् । यशः । इषः । पते । दिदीहि । देव । देवऽयुः ।
वि । कोशम् । मध्यमम् । युव ॥ ९ ॥

हे ᵛइषस्पते अन्नस्य पते हे ᵛदेव स्तोतव्य सोम ᵛदेवयुः देवकामस्त्वं ᵛद्युम्नं द्योतमानं ᵛबृहत् प्रभूतं ᵛयशः अन्नमस्मभ्यम् ᵛअभि ᵛदिदीहि आभिमुख्येन प्रकाशय । प्रयच्छेत्यर्थः । आमन्त्रितस्याविद्यमानवत्त्वेन[2] पादादित्वादनिघातः । किंच ᵛमध्यमम् अन्तरिक्षस्थितं ᵛकोशं मेघं ᵛवि ᵛयुव वृष्ट्यर्थं विगमय विश्लेषय ॥

आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः ।
वृष्टिं दिवः पवस्व रीतिमपां जिन्वा गविष्टये धियः ॥ १० ॥
आ । वच्यस्व । सुऽदक्ष । चम्वोः । सुतः । विशाम् । वह्निः । न । विश्पतिः ।
वृष्टिम् । दिवः । पवस्व । रीतिम् । अपाम् । जिन्व । गोऽइष्टये । धियः ॥ १० ॥

हे ᵛसुदक्ष सुबल सोम ᵛचम्वोः अधिषवणफलकयोः ᵛसुतः अभिषुतः ᵛविशां प्रजानां ᵛवह्निर्न वोढा ᵛविश्पतिः राजेव सर्वासां प्रजानां वोढा त्वम् ᵛआ ᵛवच्यस्व आगच्छ । कलशमापवस्व । वचेर्गत्यर्थस्य व्यत्ययेन श्यनि रूपम् । किंच त्वं ᵛवृष्टिं वृष्यमाणाम् ᵛअपाम् उदकानां ᵛरीतिं गतिं ᵛदिवः द्युलोकात् ᵛपवस्व कुरु । ततः ᵛगविष्टये गामात्मन इच्छते यजमानाय ᵛधियः कर्माणि ᵛजिन्व आपूरय[3] ॥ ॥ १८ ॥

एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवो दुहुः । विश्वा वसूनि बिभ्रतम् ॥ ११ ॥
एतम् । ऊँ इति । त्यम् । मदऽच्युतम् । सहस्रऽधारम् । वृषभम् । दिवः । दुहुः ।
विश्वा । वसूनि । बिभ्रतम् ॥ ११ ॥

ᵛदिवः देवान् कामयमाना ऋत्विजः ᵛएतं ᵛत्यं तमिमं सोममेव ᵛदुहुः दुदुहुः दुहन्ति । 'ग्रावाणो वत्सा ऋत्विजो दुहन्ति' (तै. सं. ६. २. ११. ४) इति तैत्तिरीयकब्राह्मणम् । कीदृशं सोमम् । ᵛमदच्युतं मदस्य प्रेरकं ᵛसहस्रधारं बहुधारं ᵛवृषभं कामानां वर्षकं ᵛविश्वा सर्वाणि ᵛवसूनि धनानि ᵛबिभ्रतं धारयन्तं सोमं दुहन्ति ॥

---

१. त१.२.४.५.७-म६-'वा' नास्ति । २. त१.२.३.४.५.७-म-मु-°विद्यमानत्वेन । ३. त१.२.४.५.७-म६-पूरय ।

वृषा वि जज्ञे जनयन्नमर्त्यः प्रतपञ्ज्योतिषा तमः ।
स सुष्टुतः कविभिर्निर्णिजं दधे त्रिधात्वस्य दंससा ॥ १२ ॥

वृषा । वि । जज्ञे । जनयन् । अमर्त्यः । प्रऽतपन् । ज्योतिषा । तमः ।
सः । सुऽस्तुतः । कविऽभिः । निःऽनिजम् । दधे । त्रिऽधातु । अस्य । दंससा ॥ १२ ॥

ᵛवृषा कामानां वर्षकः ᵛअमर्त्यः मनुष्यधर्मरहितः सोमः ᵛवि ᵛजज्ञे विजायते । किं कुर्वन् । ᵛजनयन् शब्दं ज्योतिर्वोत्पादयन् ᵛज्योतिषा स्वीयेन ᵛतमः ᵛप्रतपन् प्रज्वलयन् विनाशयन् प्रादुर्भवति । ततः ᵛकविभिः मेधाविभिः स्तोतृभिः ᵛसुष्टुतः ᵛसः सोमः ᵛनिर्णिजं निर्णेजनहेतुं मिश्रणं गव्यं ᵛदधे धारयति । अथ ᵛत्रिधातु त्रिषु सवनेषु देवानां पोषकम् । यद्वा । त्रयः सोमधारका द्रोणकलशादयो यस्मिन् । तद्यज्ञार्थं कर्म ᵛअस्य सोमस्य ᵛदंससा कर्मणा ध्रियते खलु ॥

स सुन्वे यो वसूनां यो रायामानेता य इळानाम् । सोमो यः सुक्षितीनाम् ॥ १३ ॥

सः । सुन्वे । यः । वसूनाम् । यः । रायाम् । आऽनेता । यः । इळानाम् ।
सोमः । यः । सुऽक्षितीनाम् ॥ १३ ॥

ᵛसः सोमः ᵛसुन्वे अभिसुषुवे[1] ऋत्विग्भिः । ᵛयः सोमः ᵛवसूनां धनानाम् ᵛआनेता ᵛयः च ᵛरायाम् । रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावः । तेषामानेता ᵛयः च ᵛइळानाम् अन्नानां च ᵛयः च ᵛसोमः ᵛसुक्षितीनां सुनिवासानां शोभनमनुष्ययुक्तानां गृहाणामानेता विद्यते सोऽभिषुतोऽभूदिति ॥

यस्य न इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः ।
आ येन मित्रावरुणा करामह एन्द्रमवसे महे ॥ १४ ॥

यस्य । नः । इन्द्रः । पिबात् । यस्य । मरुतः । यस्य । वा । अर्यमणा । भगः ।
आ । येन । मित्रावरुणा । करामहे । आ । इन्द्रम् । अवसे । महे ॥ १४ ॥

ᵛनः अस्मदीयं ᵛयस्य यं सोमम् ᵛइन्द्रः ᵛपिबात् पिबति । 'पा पाने' । लेट्याडागमः । यं च सोमं ᵛमरुतः पिबन्ति ᵛवा अपि च ᵛअर्यमणा एतन्नामकेन देवेन सह ᵛभगः देवः यं सोमं पिबति ᵛयेन सोमेन ᵛमित्रावरुणा मित्रावरुणौ वयम् ᵛआ ᵛकरामहे अभिमुखीकुर्महे तथा ᵛमहे महते ᵛअवसे रक्षणाय येन च सोमेन ᵛइन्द्रम् अभिमुखीकुर्महे स सोमोऽभिषूयते[2] ॥

इन्द्राय सोम पातवे नृभिर्यतः स्वायुधो मदिन्तमः । पवस्व मधुमत्तमः ॥ १५ ॥

इन्द्राय । सोम । पातवे । नृऽभिः । यतः । सुऽआयुधः । मदिन्ऽतमः ।
पवस्व । मधुमत्ऽतमः ॥ १५ ॥

हे ᵛसोम ᵛमधुमत्तमः अतिशयेन माधुर्योपेतस्त्वम् ᵛइन्द्राय ᵛपातवे पानार्थं ᵛपवस्व कलशे क्षर । कीदृशः । ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛयतः संयतः ᵛस्वायुधः शोभनस्फ्यकपालाद्यायुधोपेतः ᵛमदिन्तमः मादयितृतमः ॥

---

१. ग–अभिषूयते । २. ग–सोमोभिषुतः ।

इन्द्र॑स्य॒ हार्दि॑ सोम॒धान॒मा वि॑श समु॒द्रमि॑व॒ सिन्ध॑वः ।
जुष्टो॑ मि॒त्राय॒ वरु॑णाय वा॒यवे॑ दि॒वो वि॑ष्ट॒म्भ उ॑त्त॒मः ॥ १९ ॥

इन्द्र॑स्य । हार्दि॑ । सो॒म॒ऽधान॑म् । आ । वि॒श॒ । स॒मु॒द्रम्ऽइ॑व । सिन्ध॑वः ।
जुष्टः॑ । मि॒त्राय॑ । वरु॑णाय । वा॒यवे॑ । दि॒वः । वि॒ष्ट॒म्भः । उ॒त्ऽत॒मः ॥ १९ ॥

हे सोम त्वम् ᐯइन्द्रस्य ᐯहार्दि हृदयंगमं हृदयभूतं वा ᐯसोमधानम् । सोमो निधीयते अस्मिन्निति[1] सोमधानः कलशः । तम् ᐯआ ᐯविश प्रविश[2] । तत्र दृष्टान्तः । ᐯसमुद्रमिव यथा समुद्रं ᐯसिन्धवः नद्यः प्रविशन्ति तद्वत् । कीदृशस्त्वम् । ᐯमित्राय ᐯवरुणाय ᐯवायवे एतेभ्यः ᐯजुष्टः पर्याप्तः ᐯदिवः द्युलोकस्य ᐯविष्टम्भः विष्टम्भयिता स्थापयिता ᐯउत्तमः सर्वेषामुत्कृष्टतमस्त्वं कलशमाविश ॥ ॥ १९ ॥

'परि प्र' इति द्वाविंशत्यृचं द्वैपदं षष्ठं सूक्तम् । यज्ञे सदस्यवस्थितहोत्रीयादिधिष्ण्योपेता अग्नयो नामेश्वरपुत्रा ऋषयः । विंशतिका द्विपदा विराजः । पवमानः सोमो देवता । तथा चानुक्रान्तं– 'परि प्र द्व्यधिकाग्नयो धिष्ण्या ऐश्वरा द्वैपदम्' इति । गतो विनियोगः ॥

परि॒ प्र ध॒न्वेन्द्रा॑य सोम स्वा॒दुर्मि॒त्राय॑ पू॒ष्णे भगा॑य ॥ १ ॥

परि॑ । प्र । ध॒न्व॒ । इन्द्रा॑य । सो॒म॒ । स्वा॒दुः । मि॒त्राय॑ । पू॒ष्णे । भगा॑य ॥ १ ॥

हे ᐯसोम ᐯस्वादुः स्वादुरसस्त्वम् ᐯइन्द्राय ᐯमित्राय ᐯपूष्णे ᐯभगाय एतेभ्यो देवेभ्यः ᐯपरि ᐯप्र ᐯधन्व परितः पात्रेषु प्रक्षर[3] ॥

इन्द्र॑स्ते सोम सु॒तस्य॑ पेयाः॒ क्रत्वे॒ दक्षा॑य॒ विश्वे॑ च दे॒वाः ॥ २ ॥

इन्द्रः॑ । ते॒ । सो॒म॒ । सु॒तस्य॑ । पे॒याः॒ । क्रत्वे॑ । दक्षा॑य । विश्वे॑ । च॒ । दे॒वाः ॥ २ ॥

हे ᐯसोम ᐯसुतस्य अभिषुतस्य ᐯते तव स्वं भागम् ᐯइन्द्रः ᐯपेयाः पेयात् पिबतु ॥ पातेराशीर्लिङि रूपम् । पुरुषव्यत्ययः ॥ किमर्थम् । ᐯक्रत्वे क्रतवे प्रज्ञानाय ᐯदक्षाय बलाय च । किंच अमी ᐯविश्वे सर्वे ᐯदेवाः ᐯच त्वदीयमंशं पिबन्तु ॥

ए॒वामृता॑य म॒हे क्षया॑य॒ स शु॒क्रो अ॑र्ष दि॒व्यः पी॒यूषः॑ ॥ ३ ॥

ए॒व । अ॒मृता॑य । म॒हे । क्षया॑य । सः । शु॒क्रः । अ॒र्ष॒ । दि॒व्यः । पी॒यूषः॑ ॥ ३ ॥

हे सोम ᐯशुक्रः दीप्तः ᐯदिव्यः दिवि भवः ᐯपीयूषः देवैः पातव्यः ᐯसः त्वम् ᐯअमृताय अमरणाय ᐯमहे महते ᐯक्षयाय निवासाय च ᐯएव ᐯअर्ष एवं पवस्व क्षर ॥

पव॑स्व सोम म॒हान्त्स॑मु॒द्रः पि॒ता दे॒वानां॒ विश्वा॒भि धाम॑ ॥ ४ ॥

पव॑स्व । सो॒म॒ । म॒हान् । स॒मु॒द्रः । पि॒ता । दे॒वाना॑म् । विश्वा॑ । अ॒भि । धाम॑ ॥ ४ ॥

हे ᐯसोम ᐯमहान् देवेभ्यो दीयमानत्वेन महत्त्वयुक्तः ᐯसमुद्रः समुन्दनः । यस्मात् समुद्रवन्ति रसास्तादृशः । ᐯपिता सर्वेषां पालयिता त्वं ᐯदेवानां ᐯविश्वा विश्वानि सर्वाणि ᐯधाम धामानि शरीराण्यभिलक्ष्य ᐯपवस्व ॥

---

१. ग-त३.६.भ१.२.४.७–निधीय अत्रेति । २. ग–प्रविशेति; त१.२.४.५–प्रविशते । ३. ग-त३. ४.७-भ१.४.७–क्षर ।

**शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजायै ॥ ५ ॥**

शुक्रः । पवस्व । देवेभ्यः । सोम । दिवे । पृथिव्यै । शम् । च । प्रऽजायै ॥ ५ ॥

हे ᵛसोम ᵛशुक्रः दीप्तस्त्वं ᵛदेवेभ्यः देवार्थं ᵛपवस्व क्षर । किंच ᵛदिवे ᵛपृथिव्यै च द्यावापृथिवीभ्यां च ततः ᵛप्रजायै प्रजाभ्यश्च ᵛशं सुखं ᵛच कुरु ॥

**दिवो धर्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व ॥ ६ ॥**

दिवः । धर्ता । असि । शुक्रः । पीयूषः । सत्ये । विऽधर्मन् । वाजी । पवस्व ॥ ६ ॥

हे सोम ᵛशुक्रः दीप्तः ᵛपीयूषः पातव्यस्त्वं ᵛदिवः द्युलोकस्य ᵛधर्ता धारकः ᵛअसि । ᵛवाजी बलवान् स त्वं ᵛसत्ये सत्यभूते ᵛविधर्मन् विधर्मणि । विविधकर्माणि[1] ऋत्विजो यस्मिन् । यद्वा । विविधसोमादिहविषां धारके । अस्मिन् यज्ञे ᵛपवस्व क्षर ॥

**पवस्व सोम द्युम्नी सुधारो महामवीनामनु पूर्व्यः ॥ ७ ॥**

पवस्व । सोम । द्युम्नी । सुऽधारः । महाम् । अवीनाम् । अनु । पूर्व्यः ॥ ७ ॥

हे ᵛसोम ᵛद्युम्नी । 'द्युम्नं द्योततेर्यशो वान्नं वा' इति यास्कः । अन्नवान् यशस्वी वा ᵛसुधारः शोभनधारायुक्तः ᵛपूर्व्यः पुरातनस्त्वं ᵛमहां महताम् ᵛअवीनां रोम्णां रोमभ्यः[2] सकाशादनुक्रमेण ᵛपवस्व क्षर ॥

**नृभिर्येमानो जज्ञानः पूतः क्षरद्विश्वानि मन्द्रः स्वर्वित् ॥ ८ ॥**

नृऽभिः । येमानः । जज्ञानः । पूतः । क्षरत् । विश्वानि । मन्द्रः । स्वःऽवित् ॥ ८ ॥

ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛयेमानः नियम्यमानः ᵛजज्ञानः जायमानः ᵛपूतः पवित्रेण शोधितः ᵛमन्द्रः मोदमानः ᵛस्वर्वित् सर्वज्ञः एतादृशः सोमः ᵛविश्वानि सर्वाणि धनान्यस्मभ्यं ᵛक्षरत् क्षरतु ददातु ॥

**इन्दुः पुनानः प्रजामुराणः करद्विश्वानि द्रविणानि नः ॥ ९ ॥**

इन्दुः । पुनानः । प्रऽजाम् । उराणः । करत् । विश्वानि । द्रविणानि । नः ॥ ९ ॥

ᵛपुनानः पूयमानः ᵛउराणः । 'उराण उरु कुर्वाणः' ( निरु. ६. १७ ) इति यास्कः । देवान् बहु कुर्वाणः ᵛइन्दुः सोमः ᵛनः अस्माकं ᵛप्रजाम् अपत्यादिकां ᵛविश्वानि व्याप्तानि ᵛद्रविणानि धनानि च ᵛकरत् करोतु । करोतेर्लेङि रूपम् ॥

**पवस्व सोम क्रत्वे दक्षायाश्वो न निक्तो वाजी धनाय ॥ १० ॥**

पवस्व । सोम । क्रत्वे । दक्षाय । अश्वः । न । निक्तः । वाजी । धनाय ॥ १० ॥

हे ᵛसोम ᵛअश्वो ᵛन अश्व इव ᵛनिक्तः वसतीवरीभिरद्भिर्निक्तः[3] ᵛवाजी वेगवांस्त्वं ᵛक्रत्वे क्रतवे प्रज्ञानाय ᵛदक्षाय बलाय ᵛधनाय धनार्थं च ᵛपवस्व क्षर ॥ ॥ २० ॥

**तं ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय ॥ ११ ॥**

तम् । ते । सोतारः । रसम् । मदाय । पुनन्ति । सोमम् । महे । द्युम्नाय ॥ ११ ॥

---

१. त१.२.३.४.५-म२–विविधाः कर्मण; त६-म७–विधाः कर्म; त७–विविधः कर्मणा; म६–विविधकर्मणां । २. ग-त३.६-म१.७–'रोमभ्यः' नास्ति । ३. ग-त३–°र्निर्निक्तः ।

ᵛसोतारः अभिषोतार ऋत्विजो हे सोम ᵛते तव स्वभूतं ᵛरसं ᵛमदाय मदार्थं ᵛपुनन्ति। तदेवोच्यते। ᵛमहे महते ᵛद्युम्नाय। 'द्युम्नं द्योततेर्यशो वान्नं वा'। अन्नाय यशसे वा ᵛसोमं पुनन्ति शोधयन्ति। यद्वा। सोममभिषूयमाणं तं रसं पुनन्तीत्येकवाक्यतया योजनीयम्॥

**शिशुं जज्ञानं हरिं मृजन्ति पवित्रे सोमं देवेभ्य इन्दुम्॥ १२॥**

शिशुम्। जज्ञानम्। हरिम्। मृजन्ति। पवित्रे। सोमम्। देवेभ्यः। इन्दुम्॥ १२॥

ᵛशिशुम् अपां पुत्रभूतं ᵛजज्ञानं जायमानं ᵛहरिं हरितवर्णम् ᵛइन्दुं दीप्तं ᵛसोमं ᵛदेवेभ्यः देवार्थं ᵛपवित्रे ᵛमृजन्ति ऋत्विजो मार्जयन्ति॥

**इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय॥ १३॥**

इन्दुः। पविष्ट। चारुः। मदाय। अपाम्। उपऽस्थे। कविः। भगाय॥ १३॥

ᵛचारुः कल्याणरूपः ᵛकविः क्रान्तप्रज्ञः ᵛइन्दुः सोमः ᵛअपाम् उदकानाम् ᵛउपस्थे उपस्थानेऽन्तरिक्षे पवित्रे वा ᵛमदाय मदार्थं ᵛभगाय भजनीयधनार्थं च ᵛपविष्ट पवते॥

**बिभर्ति चार्विन्द्रस्य नाम येन विश्वानि वृत्रा जघान॥ १४॥**

बिभर्ति। चारु। इन्द्रस्य। नाम। येन। विश्वानि। वृत्रा। जघान॥ १४॥

स सोमः ᵛचारु कल्याणम् ᵛइन्द्रस्य ᵛनाम शरीरं ᵛबिभर्ति धारयति पोषयति। ᵛयेन शरीरेणेन्द्रः ᵛविश्वानि सर्वाणि वृत्राणि पापरूपाणि रक्षांसि ᵛजघान हतवान्॥

**पिबन्त्यस्य विश्वे देवासो गोभिः श्रीतस्य नृभिः सुतस्य॥ १५॥**

पिबन्ति। अस्य। विश्वे। देवासः। गोभिः। श्रीतस्य। नृऽभिः। सुतस्य॥ १५॥

ᵛविश्वे सर्वे ᵛदेवासः देवाः ᵛगोभिः गोविकारैः ᵛश्रीतस्य मिश्रितं ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛसुतस्य अभिषुतम् ᵛअस्य अमुं सोमं ᵛपिबन्ति। द्वितीयार्थे षष्ठ्यः[1]॥

**प्र सुवानो अक्षाः सहस्रधारस्तिरः पवित्रं वि वारमव्यम्॥ १६॥**

प्र। सुवानः। अक्षारिति। सहस्रऽधारः। तिरः। पवित्रम्। वि। वारम्। अव्यम्॥ १६॥

ᵛसुवानः अभिषूयमाणः अत एव ᵛसहस्रधारः बहुधारायुक्तः सोमः ᵛअव्यम् अविभवं ᵛवारं वालं ᵛपवित्रं ᵛतिरः व्यवधायकं कुर्वन् ᵛप्र ᵛअक्षाः विविधं प्रक्षरति। क्षरतेर्लुङि रूपम्॥

**स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः॥ १७॥**

सः। वाजी। अक्षारिति। सहस्रऽरेताः। अत्ऽभिः। मृजानः। गोभिः। श्रीणानः॥ १७॥

ᵛवाजी वेगवान् बलवान् वा ᵛसः सोमः ᵛअक्षाः क्षरति। कीदृशः। ᵛसहस्ररेताः बहुरेतस्को बहूदकः ᵛअद्भिः वसतीवरीभिः ᵛमृजानः मृज्यमानः ᵛगोभिः गोविकारैः क्षीरादिभिः ᵛश्रीणानः श्रीयमाणः॥

**प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमानो अद्रिभिः सुतः॥ १८॥**

प्र। सोम। याहि। इन्द्रस्य। कुक्षा। नृऽभिः। येमानः। अद्रिऽभिः। सुतः॥ १८॥

---

१. तै३.४.६-भ२.६.७-षष्ठ्यः।

हे ᵛसोम ᵛनृभिः ऋत्विग्भिः ᵛयेमानः[1] नियम्यमानः ᵛअद्रिभिः ग्रावभिः ᵛसुतः अभिषुतः त्वम् ᵛइन्द्रस्य ᵛकुक्षा ॥ सप्तम्या डादेशः ॥ कुक्षावुदरभूते कलशे वा ᵛप्र ᵛयाहि प्रकर्षेण गच्छ ॥

अस॑र्जि वा॒जी ति॒रः प॒वित्र॒मिन्द्रा॑य॒ सोमः॑ स॒हस्र॑धारः ॥ १९ ॥

अस॑र्जि । वा॒जी । ति॒रः । प॒वित्र॑म् । इन्द्रा॑य । सोमः॑ । स॒हस्र॑ऽधारः ॥ १९ ॥

ᵛवाजी बलवान् वेगवान् वा ᵛपवित्रं तिरस्कुर्वन् ᵛसहस्रधारः बहुधारः ᵛसोमः ᵛइन्द्राय इन्द्रार्थम् ᵛअसर्जि सृज्यते ॥

अ॒ञ्जन्त्ये॑नं॒ मध्वो॒ रसे॑ने॒न्द्रा॑य॒ वृष्ण॒ इन्दुं॒ मदा॑य ॥ २० ॥

अ॒ञ्जन्ति॑ । ए॒न॒म् । मध्वः॑ । रसे॑न । इन्द्रा॑य । वृष्णे॑ । इन्दु॑म् । मदा॑य ॥ २० ॥

ᵛवृष्णे कामानां वर्षित्रे ᵛइन्द्राय इन्द्रस्य ᵛमदाय मदार्थं ᵛमध्वः मधुनः ᵛरसेन गव्येन ᵛएनम् ᵛइन्दुं सोममृत्विजः ᵛअञ्जन्ति संयोजयन्ति ॥

दे॒वेभ्य॑स्त्वा॒ वृथा॒ पाज॑से॒ऽपो वसा॑नं॒ हरिं॑ मृजन्ति ॥ २१ ॥

दे॒वेभ्यः॑ । त्वा॒ । वृथा॑ । पाज॑से । अ॒पः । वसा॑नम् । हरि॑म् । मृ॒ज॒न्ति॒ ॥ २१ ॥

हे सोम ᵛअपः उदकानि ᵛवसानम् आच्छादयन्तं ᵛहरिं हरितवर्णं ᵛत्वा त्वां ᵛवृथा अनायासेन ऋत्विजः ᵛमृजन्ति शोधयन्ति। किमर्थम्। ᵛदेवेभ्यः देवानां पानार्थं ᵛपाजसे तेषां बलार्थम् ॥

इन्दु॒रिन्द्रा॑य तोशते॒ नि तो॑शते श्री॒णन्नु॒ग्रो रि॒णन्न॒पः ॥ २२ ॥

इन्दुः॑ । इन्द्रा॑य । तो॒श॒ते॒ । नि । तो॒श॒ते॒ । श्री॒णन् । उ॒ग्रः । रि॒णन् । अ॒पः ॥ २२ ॥

ᵛइन्दुः सोमः ᵛइन्द्राय इन्द्रार्थं ᵛतोशते हन्यते अभिषूयते। ᵛनि ᵛतोशते नितरामभिषूयते। तोशतिर्वधकर्मा। कीदृशः। ᵛश्रीणन् गव्यैः क्षीरादिभिः श्रीयमाणः तानि मिश्रयन् वा ᵛउग्रः उद्गूर्णबलः ᵛअपः उदकानि वसतीवरीः ᵛरिणन् प्रेरयन् सोमोऽभिषूयते ॥ ॥ २१ ॥

'पर्यू षु' इति द्वादशर्चं सप्तमं सूक्तम्। त्र्यरुणत्रसदस्यू राजर्षी अस्य सूक्तस्य द्रष्टारौ। आदितस्तिस्रः पिपीलिकमध्या अनुष्टुभो द्वादशकाष्टकद्वादशकवत्यः। ततः षडूर्ध्वबृहत्यो द्वादशकत्रयवत्यः। अथ दशम्याद्यास्तिस्रो विराजः। पवमानः सोमो देवता। तथा चानुक्रान्तं—'पर्यू षु द्वादश त्र्यरुणत्रसदस्यू[2] तिस्रोऽनुष्टुभः पिपीलिकमध्याः षळूर्ध्वबृहत्यस्तिस्रश्च विराजः' इति। गतो विनियोगः ॥

पर्यू॒ षु प्र ध॑न्व॒ वाज॑सातये॒ परि॑ वृ॒त्राणि॑ स॒क्षणिः॑ ।
द्वि॒षस्त॒रध्या॑ ऋण॒या न॑ ईयसे ॥ १ ॥

परि॑ । ऊँ इति॑ । सु । प्र । ध॒न्व॒ । वाज॑ऽसातये । परि॑ । वृ॒त्राणि॑ । स॒क्षणिः॑ ।
द्वि॒षः । त॒रध्यै॑ । ऋ॒ण॒ऽयाः । नः॒ । ई॒य॒से॒ ॥ १ ॥

हे सोम ᵛसु[3] सुष्ठु ᵛवाजसातये अस्मभ्यमन्नदानायैव ᵛपरि ᵛप्र ᵛधन्व परितः प्रगच्छ। यद्वा। वाजसातयेऽन्नलाभाय संग्रामं प्रगच्छ। किंच ᵛसक्षणिः सहनशीलस्त्वं ᵛवृत्राणि शत्रून् ᵛपरि

१. त१.२.४.५.७-म६—पवमानो। २. त७-म६-अनु.—°त्रसदस्यू राजानौ। ३. त—'सु' नास्ति।

गच्छ। तदेवोच्यते। ᐯनः अस्माकम् ᐯऋणयाः ऋणानां यापयिता विनाशयिता त्वं ᐯद्विषः शत्रून् ᐯतरध्यै तरीतुं हन्तुम् ᐯईयसे परिगच्छसि[1] ॥

अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये ।
वाजाँ अभि पवमान प्र गाहसे ॥ २ ॥

अनु । हि । त्वा । सुतम् । सोम । मदामसि । महे । समर्यऽराज्ये ।
वाजान् । अभि । पवमान । प्र । गाहसे ॥ २ ॥

हे ᐯसोम ᐯसुतम् अभिषुतं ᐯत्वा त्वां वयम् ᐯअनु ᐯमदामसि ᐯहि अनुमदामः । अनुक्रमेणाभिष्टुमः खलु । हे ᐯपवमान सोम स त्वं ᐯमहे महति ᐯसमर्यराज्ये महत् समनुष्यं त्वदीयं राज्यमनुपालयितुं ᐯवाजान् शत्रुबलान्यभिलक्ष्य[2] ᐯप्र ᐯगाहसे प्रगच्छसि ॥

अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
गोजीरया रंहमाणः पुरंध्या ॥ ३ ॥

अजीजनः । हि । पवमान । सूर्यम् । विऽधारे । शक्मना । पयः ।
गोऽजीरया । रंहमाणः । पुरम्ऽध्या ॥ ३ ॥

हे ᐯपवमान सोम त्वं ᐯपयः पयसः उदकस्य ᐯविधारे विधारकेऽन्तरिक्षे ᐯशक्मना समर्थेन बलेन ᐯसूर्यम् ᐯअजीजनो ᐯहि उत्पादितवान् भवसि खलु । कीदृशः । ᐯगोजीरया स्तोतृभ्यो गवां प्रेरकेण । स्तोतृणां प्रेरितपशुकेनेत्यर्थः । तादृशेन ᐯपुरंध्या बहुविधप्रज्ञानेन युक्तः ᐯरंहमाणः वेगं कुर्वाणस्त्वं सूर्यमजीजनः ॥

अजीजनो अमृत मर्त्येष्वाँ ऋतस्य धर्मन्नमृतस्य चारुणः ।
सदासरो वाजमच्छा सनिष्यदत् ॥ ४ ॥

अजीजनः । अमृत । मर्त्येषु । आ । ऋतस्य । धर्मन् । अमृतस्य । चारुणः ।
सदा । असरः । वाजम् । अच्छ । सनिस्यदत् ॥ ४ ॥

हे ᐯअमृत मरणधर्मरहित सोम त्वम् ᐯऋतस्य सत्यभूतस्य ᐯचारुणः कल्याणस्य ᐯअमृतस्य उदकस्य ᐯधर्मन् धारकेऽन्तरिक्षे सूर्यम् ᐯअजीजनः । किमर्थम् । ᐯमर्त्येष्वा मनुष्येष्वभिमुखीभवनाय । किंच ᐯसनिष्यदत् संभजन् स त्वं ᐯवाजमच्छ संग्राममभिलक्ष्य ᐯसदा ᐯअसरः सरसि गच्छसि ॥

अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम् ।
शर्याभिर्न भरमाणो गभस्त्योः ॥ ५ ॥

अभिऽअभि । हि । श्रवसा । ततर्दिथ । उत्सम् । न । कम् । चित् । जनऽपानम् । अक्षितम् ।
शर्याभिः । न । भरमाणः । गभस्त्योः ॥ ५ ॥

---

१. भ६-परिगच्छ । २. त१.२.५.७-भ६—शत्रुवतोन्य°; त६—बलान्य° ।

हे सोम त्वं vश्रवसा अन्नेन हेतुना vअभ्यभि vततर्दिथ vहि पवित्रमभितृण्णवानसि छिन्न-वानसि । तत्र दृष्टान्तद्वयम्[1] । vउत्सं vन यथा कश्चित् vजनपानम् । अस्मिन् जना उदकं पिबन्ति । तम् vअक्षितम् अक्षीणं vकं vचित् कंचन उत्समुत्स्रवणशीलं वाप्यादिकमभितृणत्ति । अथवा कश्चित् vगभस्त्योः बाह्वोः vशर्याभिः अङ्गुलीभिः vभरमाणः उदकं संभरन् कंचिदभितृणत्ति तद्वत् ॥

आर्दीं के चित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत ।
वारं न देवः सविता व्यूर्णुते ॥ ६ ॥

आत् । ईम् । के । चित् । पश्यमानासः । आप्यम् । वसुऽरुचः । दिव्याः । अभि । अनूषत ।
वारम् । न । देवः । सविता । वि । ऊर्णुते ॥ ६ ॥

vआत् अनन्तरं vपश्यमानासः एनं पश्यन्तः vदिव्याः दिवि भवाः vवसुरुचः नाम vके vचित् vआप्यं बन्धुं साधुम् vईम् एनं सोमम् vअभ्यनूषत अभ्यस्तुवन् । कस्मादनन्तरमिति उच्यते । vदेवः द्योतमानः vसविता सर्वस्य प्रेरकः सूर्यः vवारम् आवरकमन्धकारं vन vव्यूर्णुते नापगमयति तदैनमस्तुवन् । सूर्योदयात् प्रागेव हि सोमं स्तुवन्ति खलु ॥ ॥ २२ ॥

त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियं दधुः ।
स त्वं नो वीर वीर्याय चोदय ॥ ७ ॥

त्वे इति । सोम । प्रथमाः । वृक्तऽबर्हिषः । महे । वाजाय । श्रवसे । धियम् । दधुः ।
सः । त्वम् । नः । वीर । वीर्याय । चोदय ॥ ७ ॥

हे vसोम vप्रथमाः पुरातनाः । यद्वा । यष्टृत्वेन सर्वेषां जनानां मुख्याः । vवृक्तबर्हिषः । वृक्तं छिन्नं बर्हिर्यैर्यज्ञार्थमिति वृक्तबर्हिषो यजमानाः । vमहे महते vवाजाय बलाय[2] vश्रवसे अन्नाय[3] च vधियं बुद्धिं vत्वे त्वयि vदधुः निहितवन्तः । तस्मात् हे vवीर समर्थ सोम vसः तादृशः vत्वं vनः अस्मानपि संग्रामे vवीर्याय सामर्थ्याय vचोदय प्रेरय । यद्वा । वीर्याय वीरे पुत्रे भवाय सुखाया-स्मान् प्रेरय ॥

दिवः पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आ निरधुक्षत ।
इन्द्रमभि जायमानं समस्वरन् ॥ ८ ॥

दिवः । पीयूषम् । पूर्व्यम् । यत् । उक्थ्यम् । महः । गाहात् । दिवः । आ । निः । अधुक्षत ।
इन्द्रम् । अभि । जायमानम् । सम् । अस्वरन् ॥ ८ ॥

vदिवः द्युलोकात् तत्र स्थितैर्देवैः vपीयूषं पातव्यं vपूर्व्यं प्रत्नं vयत् सोमरूपमन्नम् vउक्थ्यं प्रशस्यमस्ति तं सोमं vमहः महतः vगाहात् गहनात् vदिवः द्युलोकात् vनिरधुक्षत आभिमुख्येन[4] निर्दुहन्ति[5] । ततो दुग्धम् vइन्द्रम् अभिलक्ष्य vजायमानं तं सोमं vसमस्वरन् स्तोतारः संस्तुवन्ति ॥

---

१. त३.६-भ१.२.४.७-दृष्टांतः । २. ग-अन्नाय । ३. ग-कीर्त्यै । ४. ग-धारया आभिमुख्येन; त३-भ५-वावय आभिमुख्येन; भ६-वारय आभिमुख्येन ।५. त१.२.४.५-हविर्दुहंति; भ६-हविर्निर्दुहंति ।

अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना ।
यूथे न निःष्ठा वृषभो वि तिष्ठसे ॥ ९ ॥

अध । यत् । इमे इति । पवमान । रोदसी इति । इमा । च । विश्वा । भुवना । अभि । मज्मना ।
यूथे । न । निःऽस्थाः । वृषभः । वि । तिष्ठसे ॥ ९ ॥

हे पवमान सोम अध अनन्तरं यत् यथा इमे रोदसी द्यावापृथिव्यौ इमा इमानि विश्वा विश्वानि भुवना भूतजातानि च मज्मना बलेन अभि तिष्ठसि स त्वं तथा कुर्वन् भुवनेषु वि तिष्ठसे । तत्र दृष्टान्तः । यूथे न यथा कश्चित् वृषभः गवां[1] यूथे[1] वृन्दे निःष्ठाः निःष्ठितो वर्तते तद्वद्यूथस्थानीयेषु भूतजातेषु निःष्ठितो भवसि ॥

सोमः पुनानो अव्यये वारे शिशुर्न क्रीळन्पवमानो अक्षाः ।
सहस्रधारः शतवाज इन्दुः ॥ १० ॥

सोमः । पुनानः । अव्यये । वारे । शिशुः । न । क्रीळन् । पवमानः । अक्षारिति ।
सहस्रऽधारः । शतऽवाजः । इन्दुः ॥ १० ॥

पुनानः पूयमानः पवमानः पूतः सोमः अव्यये अविमये वारे वाले पवित्रे शिशुर्न शिशुरिव क्रीळन् इतस्ततः संक्रीडमानः सन् अक्षाः क्षरति । कीदृशः । सहस्रधारः बहुधारायुक्तः शतवाजः बहुबलः इन्दुः दीप्तः ॥

एष पुनानो मधुमाँ ऋतावेन्द्रायेन्दुः पवते स्वादुरूर्मिः ।
वाजसनिर्वरिवोविद्वयोधाः ॥ ११ ॥

एषः । पुनानः । मधुऽमान् । ऋतऽवा । इन्द्राय । इन्दुः । पवते । स्वादुः । ऊर्मिः ।
वाजऽसनिः । वरिवःऽवित् । वयःऽधाः ॥ ११ ॥

पुनानः पूयमानः मधुमान् माधुर्योपेतः ऋतवा[2] ऋतवान् यज्ञवान्[3] इन्दुः क्षरणशीलः स्वादुः स्वादुकरः ऊर्मिः एषः रसधारासंघः इन्द्राय इन्द्रार्थं पवते क्षरति । कीदृशः । वाजसनिः अन्नस्य दाता वरिवोवित् धनस्य लम्भकः वयोधाः आयुषो दाता ॥

स पवस्व सहमानः पृतन्यून्त्सेधन्रक्षांस्यप दुर्गहाणि ।
स्वायुधः सासह्वान्त्सोम शत्रून् ॥ १२ ॥

सः । पवस्व । सहमानः । पृतन्यून् । सेधन् । रक्षांसि । अप । दुःऽगहानि ।
सुऽआयुधः । ससह्वान् । सोम । शत्रून् ॥ १२ ॥

हे सोम सः तादृशस्त्वं पवस्व । किं कुर्वन् । पृतन्यून् ॥ 'कव्यध्वरपृतनस्यर्चि लोपः' इति क्यचि परतोऽकारलोपः ॥ संग्रामकामान् शत्रून् सहमानः अभिभवन् तथा दुर्गहाणि

---

१. ग-त३.६-भ१.२.४.७–यूथे गवां; त१.२.४.५-भ६–गवां यूथेन । २. भ२.६–ऋतावा ।
३. त-भ–यजमानः ।

कैश्चिदपि दुर्गमाणि ᵛरक्षांसि ᵛअप ᵛसेधन् अपगमयन् हिंसन्। किंच ᵛस्वायुधः शोभनायुधः सन् ᵛशत्रून् ᵛसासह्वान् अभिभवन्नभितपन् पवस्व ॥ ॥ २३ ॥

'अया रुचा' इति तृचमष्टमं सूक्तं परुच्छेपपुत्रस्यानानताख्यस्यार्षमत्यष्टिच्छन्दस्कं पवमानसोमदेवताकम्। तथा चानुक्रम्यते–'अया रुचा तृचमनानतः पारुच्छेपिरात्यष्टम्' इति। गतो विनियोगः ॥

**अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति स्वयुग्वभिः सूरो न स्वयुग्वभिः।**
**धारा सुतस्य रोचते पुनानो अरुषो हरिः।**
**विश्वा यद्रूपा परियात्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ १ ॥**

अया। रुचा। हरिण्या। पुनानः। विश्वा। द्वेषांसि। तरति। स्वयुग्वऽभिः। सूरः। न। स्वयुग्वऽभिः।
धारा। सुतस्य। रोचते। पुनानः। अरुषः। हरिः।
विश्वा। यत्। रूपा। परिऽयाति। ऋक्वऽभिः। सप्तऽआस्येभिः। ऋक्वऽभिः ॥ १ ॥

ᵛपुनानः पूयमानः सोमः ᵛहरिण्या हरितवर्णया ᵛअया अनया ᵛरुचा रोचमानया धारया ᵛविश्वा सर्वाणि ᵛद्वेषांसि द्वेष्टॄणि रक्षांसि ᵛतरति विनाशयति। तत्र दृष्टान्तः। ᵛसूरो ᵛन यथा सूर्यः ᵛस्वयुग्वभिः स्वयं युक्तै रश्मिभिस्तमांसि हिनस्ति तद्वत्। ᵛस्वयुग्वभिः इति द्विरुक्तिरादरार्था। यद्वा। धारया युक्तः सोमः स्वीयैर्युक्तैस्तेजोभी रक्षांसि तरति। तस्य ᵛसुतस्य[1] अभिषुतस्य सोमस्य ᵛधारा[2] ᵛरोचते दीप्यते। ᵛपुनानः पूयमानः ᵛहरिः हरितवर्णः सोमः ᵛअरुषः आरोचमानो भवति। ᵛयत्[3] यः[3] सोमः ᵛसप्तास्येभिः रसहरणशीलास्यैः ᵛऋक्वभिः स्तुतिमद्भिः ᵛऋक्वभिः तेजोभिः ᵛविश्वा विश्वानि व्याप्तानि ᵛरूपा रूपाणि नक्षत्राणि ᵛपरियाति गच्छति व्याप्नोति ॥

**त्वं त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आ दम ऋतस्य धीतिभिर्दमे।**
**परावतो न साम तद्यत्रा रणन्ति धीतयः।**
**त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥ २ ॥**

त्वम्। त्यत्। पणीनाम्। विदः। वसु। सम्। मातृऽभिः। मर्जयसि। स्वे। आ। दमे।
ऋतस्य। धीतिऽभिः। दमे। पराऽवतः। न। साम। तत्। यत्र। रणन्ति। धीतयः।
त्रिधातुऽभिः। अरुषीभिः। वयः। दधे। रोचमानः। वयः। दधे ॥ २ ॥

हे सोम ᵛत्वं ᵛत्यत् ᵛपणीनां ᵛवसु पणिभिरपहृतं गवात्मकं धनं ᵛविदः अलभथाः। ᵛआ अपि च ᵛऋतस्य यज्ञस्य ᵛधीतिभिः धात्रीभिः ᵛमातृभिः वसतीवरीभिः ᵛस्वे आत्मीये ᵛदमे गृहभूते ᵛदमे यज्ञे ᵛसं ᵛमर्जयसि सम्यक् शुद्धो भवसि। ᵛपरावतो ᵛन दूरस्थादेशाद्यथा ᵛसाम सामध्वनिः श्रूयते तथा तव ᵛतत् सामध्वनिः सर्वैः श्रूयते। असौ सोमाभिषवाभिप्रायेणोक्तः। ᵛयत्र यस्मिन् शब्दे ᵛधीतयः कर्मणो धर्तारो यजमानाः ᵛरणन्ति रमन्ते। ᵛरोचमानः सोमः ᵛत्रिधातुभिः त्रयाणां लोकानां धारयित्रीभिर्मातृभिर्वसतीवरीभिः ᵛअरुषीभिः आरोचमानाभिर्दीप्तिभिः ᵛवयः अन्नं ᵛदधे स्तोतृभ्यः प्रयच्छति। पुनः ᵛवयो ᵛदधे इत्यादरार्थम् ॥

---

१. त४.५–तसुतस्य; भ६–तत्सुतस्य। २. त५-भ२.६–धारा पर्वति। ३. त१.२.४.७–यतयः; भ६–यतः यः।

**पूर्वामनु प्रदिशं याति चेकितत्सं रश्मिभिर्यतते दर्शतो रथो दैव्यो दर्शतो रथः ।**
**अग्मन्नुक्थानि पौंस्येन्द्रं जैत्राय हर्षयन् ।**
**वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता ॥ ३ ॥**

पूर्वाम् । अनु । प्रऽदिशम् । याति । चेकितत् । सम् । रश्मिऽभिः । यतते । दर्शतः । रथः ।
दैव्यः । दर्शतः । रथः । अग्मन् । उक्थानि । पौंस्या । इन्द्रम् । जैत्राय । हर्षयन् ।
वज्रः । च । यत् । भवथः । अनपऽच्युता । समत्ऽसु । अनपऽच्युता ॥ ३ ॥

चेकितत् जानानः सोमः पूर्वां प्राचीं प्रदिशं प्रकृष्टां दिशम् अनु याति अनुगच्छति । किंच दर्शनः सर्वैर्दर्शनीयः दैव्यः देवेषु भवस्तव रथः सूर्यरश्मिभिः सं यतते संगच्छते । पुनः दर्शतो रथः इत्यादरार्थम् । ततः पौंस्या पुंस्त्वावगमानि उक्थानि स्तोत्राणि अग्मन् इन्द्रं गच्छन्ति । तथा जैत्राय जयार्थं तानि स्तोत्राणि इन्द्रं हर्षयन् हर्षयन्ति । तथा तस्य वज्रश्च तमिन्द्रं गच्छति । यत् यदा समत्सु संग्रामेषु अनपच्युता अनपच्युतौ शत्रुभिरपराजितौ सोम त्वं चेन्द्रश्च युवां[1] सह भवथः तदा स्तोत्रागमनादीनि भवन्ति । पुनः अनपच्युता इत्यादरार्थम् ॥ ॥ २४ ॥

'नानानम्' इति चतुर्ऋचं नवमं सूक्तमाङ्गिरसस्य शिशुनाम्न आर्षम् । पञ्चपदा पङ्क्तिश्छन्दः । पवमानः सोमो देवता । तथा चानुक्रान्तं—'नानानं चतुष्कं शिशुः पाङ्क्तं हि' इति । गतो विनियोगः ॥

**नानानं वा उ नो धियो वि व्रतानि जनानाम् ।**
**तक्षा रिष्टं रुतं भिषग्ब्रह्मा सुन्वन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥ १ ॥**

नानानम् । वै । ऊं इति । नः । धियः । वि । व्रतानि । जनानाम् ।
तक्षा । रिष्टम् । रुतम् । भिषक् । ब्रह्मा । सुन्वन्तम् । इच्छति । इन्द्राय । इन्दो इति । परि । स्रव ॥ १ ॥

ऋषिरेतदादिभिस्त्रिभिः सूक्तैः अपरिस्रवतः[2] सोमस्याजामित्वाय मनसो विनोदनं कुर्वन्नाह । हे सोम नः अस्माकं धियः कर्माणि नानानं नानाजातीयकानि बहूनि भवन्ति । वैशब्दः प्रसिद्ध्यर्थद्योतनार्थः । उ इति पूरणः । तथान्येषामपि जनानां व्रतानि कर्माणि विविधानि भवन्ति । तक्षा त्वष्टा रिष्टं दारुतक्षणम् इच्छति । तथा भिषक् वैद्यश्चिकित्सकः रुतं रोगमिच्छति । ब्रह्मा ब्राह्मणः सुन्वन्तं सोमाभिषवं कुर्वन्तं यजमानमिच्छति । तथाहं त्वत्परिस्रवणमिच्छामि । तस्माद्धे इन्दो सोम इन्द्राय इन्द्रार्थं परि स्रव परितः क्षर ॥

**जरतीभिरोषधीभिः पर्णेभिः शकुनानाम् ।**
**कार्मारो अश्मभिर्द्युभिर्हिरण्यवन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥ २ ॥**

जरतीभिः । ओषधीभिः । पर्णेभिः । शकुनानाम् ।
कार्मारः । अश्मऽभिः । द्युऽभिः । हिरण्यऽवन्तम् । इच्छति । इन्द्राय । इन्दो इति । परि । स्रव ॥ २ ॥

१. ग-त-म—युवां समत्सु संग्रामेषु । २. ग-त३—परिस्रवतः; म२—आपरिस्रवतः ।

जरतीभिः जीर्णाभिः[1] ओषधीभिः इषवः क्रियन्ते। तथा शकुनानां पर्णेभिः इषूणां पक्षभूतैः पर्णैश्च क्रियन्ते। तथा द्युभिः दीप्ताभिरिषूणां तेजनार्थाभिः[2] अश्मभिः[2] शिलाभिश्च क्रियन्ते। एतैः कार्मारः अयस्कारः हिरण्यवन्तम् आढ्यं पुरुषम् इच्छति। तथाहं त्वत्परिस्रवणमिच्छामि। तस्मात् इन्दो इन्द्राय परि स्रव॥

कारुरहं ततो भिषगुपलप्रक्षिणी नना।
नानाधियो वसूयवोऽनु गाइव तस्थिमेन्द्रायेन्दो परि स्रव॥ ३॥

कारुः। अहम्। ततः। भिषक्। उपलऽप्रक्षिणी। नना।
नानाऽधियः। वसुऽयवः। अनु। गाःऽइव। तस्थिम। इन्द्राय। इन्दो इति। परि। स्रव॥३॥

ऋषिः प्रवृत्तसोमयागः सन् दशापवित्रात् सोमे क्षरति प्रतिबन्धकपापापनुत्तये पुरश्चरितानुकीर्तनपुरःसरमध्येषणां चकार। तावत् अहं कारुः स्तोमानां कर्तास्मि। ततः इति संताननाम। तन्यतेऽस्मादिति ततः पिता। तन्यतेऽसाविति वा ततः पुत्रः। भिषक् भेषजकृत्। यज्ञस्य ब्रह्मेत्यर्थः। 'सर्वं[3] त्रय्या विद्यया भिषज्यति' इति श्रुतेः। तथा उपलप्रक्षिणी। उपलेषु वालुकासु[4] प्रक्षिणोति यवान् हिनस्ति भृज्जतीति। यद्वा। दृषदादिषूपलेषु भृष्टान् यवान् हिनस्ति चूर्णयतीति। अथवा धानासक्तुकरम्भादीनां कारिका वा। असौ नना माता दुहिता वा। नमनक्रियायोग्यत्वात्। माता खल्वपत्यं प्रति स्तनपानादिना नमनशीला भवति। दुहिता वा शुश्रूषार्थम्। एवं सर्वेषां परिचरणेन नानाधियः नानाकर्माणः वसूयवः धनकामा वयम् अनु तस्थिम लोकमन्वास्थिताः स्मः। तत्र दृष्टान्तः। गाइव। छान्दसो जसः शसादेशः। गावो यथा गोष्ठमनुतिष्ठन्ति स्वपयःप्रदानेन परिचरन्ति वा एवं वयमपि परिचरामः। एतज्ज्ञात्वा हे इन्दो सोम इन्द्राय परि स्रव दशापवित्रात् क्षर। एवमेषाध्येषणा सत्कारपूर्विका व्यापारणा। अत्र निरुक्तम्—'उपलप्रक्षिणीत्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणी[5] वा। कारुरहमस्मि कर्ता स्तोमानां ततो भिषक्। तत इति संताननाम पितुर्वा पुत्रस्य वा। उपलप्रक्षिणी[6] सक्तुकारिका नना नमतेर्माता वा[7] दुहिता वा। नानाधियो नानाकर्माणो वसूयवो वसुकामा अन्वास्थिताः स्मो गाव इव लोकम्' ( निरु. ६. ५-६ ) इति॥

अश्वो वोळ्हा सुखं रथं हसनामुपमन्त्रिणः।
शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव॥ ४॥

अश्वः। वोळ्हा। सुऽखम्। रथम्। हसनाम्। उपऽमन्त्रिणः।
शेपः। रोमण्ऽवन्तौ। भेदौ। वाः। इत्। मण्डूकः। इच्छति। इन्द्राय। इन्दो इति। परि। स्रव॥४॥

वोळ्हा लक्ष्यं[8] देशं[8] प्रापयन् अश्वः सुखं कल्याणं रथम् इच्छति। उपमन्त्रिणः उपमन्त्रवन्तो नर्मसचिवाः हसनाम् उपहसनां वाचमिच्छन्ति। तथा शेपः। 'शेपो वैतस इति पुंस्प्रजननस्य' ( निरु. ३.२१ ) इति यास्कः। यथा शेपः रोमण्वन्तौ भेदौ इच्छति। मण्डूकः

---

१. त१.२.३.४.५.७-म६—जीर्णाभिर्याभिः। २. त-म२.६—तेजनार्थाभि रश्मिभिः। ३. त१.३.७-म२—स च। ४. म६—उलूखलासु। ५. त—प्रक्षिणोत्युपलेषु प्रक्षेपणा; म१.७—प्रक्षिणात्यपलेषु प्रक्षिणा; म२—प्रक्षिणात्युपलेषु प्रक्षेपणि; म६—प्रक्षिणोत्युपलेषु प्रक्षपणा। ६. त१.२.४.५.७-म२.६.७—भिषगुपलप्रक्षेपिणी; त३—भिषगुपलप्रक्षिणी। ७. त१.२.४.५-म६—च। ८. ग—रथं स्वदेशं; त१.२.४.५.७—रक्षं देशं; त३-म१.२.४—रक्ष्यं देशं; म६—रथं देशं; मु—लक्षं देशं।

वारित्[1]। इदवधारणे[2]। उदकमेवेच्छति। तथाहं त्वत्परिस्रवणमिच्छामि। तस्मात् इन्द्रायेन्दो परि स्रव इति॥ ॥ २५॥

'शर्यणावति' इत्येकादशर्चं दशमं सूक्तं मारीचस्य कश्यपस्यार्षम्। पूर्वत्र 'हि' इत्युक्तत्वादिदमुत्तरं च पाङ्क्तम्। पवमानसोमदेवताकम्। तथा चानुक्रम्यते—'शर्यणावत्येकादश कश्यपः' इति। गतो विनियोगः॥

**शर्यणावति सोममिन्द्रः पिबतु वृत्रहा।**
**बलं दधान आत्मनि करिष्यन्वीर्यं महदिन्द्रायेन्दो परि स्रव॥ १॥**

शर्यणाऽवति। सोमम्। इन्द्रः। पिबतु। वृत्रऽहा।
बलम्। दधानः। आत्मनि। करिष्यन्। वीर्यम्। महत्। इन्द्राय। इन्दो इति। परि। स्रव॥१॥

शर्यणावति। शर्यणावन्नाम कुरुक्षेत्रस्य जघनार्धे सरः। तत्र स्थितं सोमं वृत्रहा इन्द्रः पिबतु। कीदृशः। आत्मनि बलं दधानः बलं निदधानः अत एव महत् वीर्यं करिष्यन् शत्रून् प्रति। तस्मात् इन्द्रायेन्दो परि स्रव॥

**आ पवस्व दिशां पत आर्जीकात्सोम मीढ्वः।**
**ऋतवाकेन सत्येन श्रद्धया तपसा सुत इन्द्रायेन्दो परि स्रव॥ २॥**

आ। पवस्व। दिशाम्। पते। आर्जीकात्। सोम। मीढ्वः।
ऋतऽवाकेन। सत्येन। श्रद्धया। तपसा। सुतः। इन्द्राय। इन्दो इति। परि। स्रव॥ २॥

हे दिशां पते प्राच्यादीनां दिशां प्रकाशकत्वेन स्वामिन् हे मीढ्वः कामानां सेक्तर्हे सोम आर्जीकात्। ऋजीकानामदूरभव आर्जीको जनपदः। तस्मात् आ पवस्व अस्मद्यज्ञं प्रत्यागच्छ। यद्वा। आर्जीकादृजोरकुटिलात् पवित्रात् क्षर। कीदृशः। ऋतवाकेन ऋतस्य वचनेन सत्येन। सत्यर्तयोरल्पो भेदो द्रष्टव्यः। श्रद्धया तपसा युक्तैर्दीक्षितैः सुतः अभिषुतस्त्वं पवस्व॥

**पर्जन्यवृद्धं महिषं तं सूर्यस्य दुहिताभरत्।**
**तं गन्धर्वाः प्रत्यगृभ्णन्तं सोमे रसमादधुरिन्द्रायेन्दो परि स्रव॥ ३॥**

पर्जन्यऽवृद्धम्। महिषम्। तम्। सूर्यस्य। दुहिता। आ। अभरत्।
तम्। गन्धर्वाः। प्रति। अगृभ्णन्। तम्। सोमे। रसम्। आ। अदधुः।
इन्द्राय। इन्दो इति। परि। स्रव॥ ३॥

सूर्यस्य दुहिता श्रद्धा नाम। 'श्रद्धा वै सूर्यस्य दुहिता' (श. ब्रा. १२. ७. ३. ११) इति वाजसनेयकम्। सा पर्जन्यवृद्धं पर्जन्यवत् समर्थम्। यद्वा। पर्जन्येन तत्कार्यत्वेनोदकेन प्रवृद्धम्। महिषं महान्तं पूज्यं वा तं सोमम् आभरत् आहरत्। द्युलोकादाहृतवती। तम् आह्रियमाणं सोमं गन्धर्वाः विश्वावसुप्रभृतयः प्रत्यगृभ्णन् प्रत्यगृह्णन्। प्रतिगृहीतवन्तः। हृग्रहोर्भः। ततो गन्धर्वाः प्रतिगृहीतं रसं सोमे प्रत्यक्षम् आदधुः। दधातेर्लङि। तस्मात् परि स्रव॥

---

१. त४.५.७—मारि; त३.६-भ१.२.४.७—वाः; भ६—वारिद। २. त२-भ६—इव धारणे।

ऋतं वदन्नृतद्युम्न सत्यं वदन्त्सत्यकर्मन् ।
श्रद्धां वदन्त्सोम राजन्धात्रा सोम परिष्कृत इन्द्रायेन्दो परि स्रव ॥ ४ ॥

ऋतम् । वदन् । ऋतऽद्युम्न । सत्यम् । वदन् । सत्यऽकर्मन् ।
श्रद्धाम् । वदन् । सोम । राजन् । धात्रा । सोम । परिऽकृतः । इन्द्राय । इन्दो इति । परि । स्रव ॥ ४ ॥

हे ऋतद्युम्न ऋतेन द्योतमान सत्ययशस्क वा सत्यकर्मन् यथार्थकर्मन्[1] हे सोम अभिषूयमाण राजन् सर्वेषां यज्ञनिष्पादकत्वेन स्वामिन् हे सोम ऋतं यज्ञं वदन् सत्यं वदन् उच्चारयन् श्रद्धां यजमानानामात्मनोपेक्षितां वदन् धात्रा कर्मणां धारकेण देवानां पोषकेण वा यजमानेन परिष्कृतः अलंकृतस्त्वम् इन्द्राय परि स्रव । 'संपर्युपेभ्यः' इति भूषणार्थे करोतेः सुट् ॥

सत्यमुग्रस्य बृहतः सं स्रवन्ति संस्रवाः ।
सं यन्ति रसिनो रसाः पुनानो ब्रह्मणा हर इन्द्रायेन्दो परि स्रव ॥ ५ ॥

सत्यम्ऽउग्रस्य । बृहतः । सम् । स्रवन्ति । सम्ऽस्रवाः ।
सम् । यन्ति । रसिनः । रसाः । पुनानः । ब्रह्मणा । हरे । इन्द्राय । इन्दो इति । परि । स्रव ॥ ५ ॥

सत्यमुग्रस्य संग्रामे सत्येन शत्रूणामुद्गारयितुः । यद्वा उद्गूर्णसत्यस्य । यद्वा । यथार्थभूतमुद्गूर्णं बलं यस्य तस्य । पृषोदरादित्वादिष्टरूपसिद्धिः । बृहतः महतः सोमस्य तव संस्रवाः सम्यक्स्रवणशीला[2] धाराः सं स्रवन्ति सम्यक् गच्छन्ति । किंच रसिनः रसवतस्तव स्वभूताः रसाः सं यन्ति संगच्छन्ते । तस्माद्धे हरे हरितवर्ण सोम ब्रह्मणा ब्राह्मणेन मन्त्रेण वा पुनानः पूयमानः स त्वमिन्द्रार्थं परि स्रव ॥ ॥ २६ ॥

यत्र ब्रह्मा पवमान छन्दस्यां३ वाचं वदन् ।
ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्निन्द्रायेन्दो परि स्रव ॥ ६ ॥

यत्र । ब्रह्मा । पवमान । छन्दस्याम् । वाचम् । वदन् ।
ग्राव्णा । सोमे । महीयते । सोमेन । आऽनन्दम् । जनयन् । इन्द्राय । इन्दो इति । परि । स्रव ॥ ६ ॥

हे पवमान पूयमान सोम त्वदर्थं छन्दस्यां सप्तच्छन्दोभिः कृतां तेषु भवां वाचं स्तुतिं वदन् उच्चारयन् सोमे सोमाभिषवार्थं ग्राव्णा अभिषवं कुर्वता युक्तस्तेनाभिषुतेन सोमेन देवानाम् आनन्दं संतोषं जनयन् उत्पादयन् ब्रह्मा ब्राह्मणः यत्र यस्मिन् देशे महीयते देवैः पूज्यते तत्र हे सोम त्वं परि स्रव ॥

यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितम् ।
तस्मिन्मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परि स्रव ॥ ७ ॥

यत्र । ज्योतिः । अजस्रम् । यस्मिन् । लोके । स्वः । हितम् ।
तस्मिन् । माम् । धेहि । पवमान । अमृते । लोके । अक्षिते । इन्द्राय । इन्दो इति । परि । स्रव ॥ ७ ॥

---

१. ग-त–'यथार्थकर्मन्' नास्ति । २. त१.२.४.५.७-म६–°सरणशीला ।

हे ᵛपवमान ᵛयत्र यस्मिँल्लोके ᵛज्योतिः सर्वं तेजः ᵛअजस्रं सर्वदाविनश्वरं वर्तते । ᵛयस्मिन् च ᵛलोके ᵛस्वः आदित्याख्यं ज्योतिः ᵛहितं निहितमस्ति । ᵛतस्मिन् ᵛअमृते मरणधर्मरहिते अत एव ᵛअक्षिते अक्षीणे ᵛलोके ᵛमां सोमाभिषवं कुर्वन्तं ᵛधेहि निधेहि[1] । तस्मात् मामुत्तमलोकं प्रापयितुं त्वम् ᵛइन्द्राय ᵛपरि ᵛस्रव ॥

**यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।**

**यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ८ ॥**

यत्र । राजा । वैवस्वतः । यत्र । अवऽरोधनम् । दिवः ।

यत्र । अमूः । यह्वतीः । आपः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥८॥

ᵛयत्र यस्मिँल्लोके ᵛवैवस्वतः विवस्वत्पुत्रः ᵛराजा भवति । ᵛयत्र च लोके ᵛदिवः आदित्यस्य ᵛअवरोधनं भूतानां प्रवेशनम् । किंच ᵛयत्र लोके ᵛयह्वतीः महत्यः ᵛअमूः इमा गङ्गाद्याः ᵛआपः तिष्ठन्ति । ᵛतत्र तादृशे लोके ᵛमाममृतं मरणधर्मरहितं ᵛकृधि कुरु । मम देवत्वं प्रापयेत्यर्थः । ततः कारणात्[2] ᵛपरि ᵛस्रव ॥

**यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।**

**लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ९ ॥**

यत्र । अनुऽकामम् । चरणम् । त्रिऽनाके । त्रिऽदिवे । दिवः ।

लोकाः । यत्र । ज्योतिष्मन्तः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥९॥

ᵛयत्र ᵛत्रिदिवे तृतीयस्यां दिवि द्युलोके ᵛत्रिनाके । तत्राधरमध्यमोत्तमभावेन त्रीणि स्थानानि सन्ति । तत्र तृतीये नाके उत्तमे स्थाने ᵛदिवः आदित्यस्य ᵛअनुकामं कामानुगुणं ᵛचरणम् अस्ति । किंच ᵛयत्र यस्मिँल्लोके ᵛलोकाः ᵛज्योतिष्मन्तः ज्योतिर्युक्तास्तिष्ठन्ति । ᵛतत्र तादृशे लोके ᵛमाममृतं ᵛकृधि । यथा ममोत्तमलोको भवति तथा त्वम् ᵛइन्द्राय ᵛपरि ᵛस्रव ॥

**यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् ।**

**स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ १० ॥**

यत्र । कामाः । निऽकामाः । च । यत्र । ब्रध्नस्य । विष्टपम् ।

स्वधा । च । यत्र । तृप्तिः । च । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥ १० ॥

ᵛयत्र यस्मिँल्लोके ᵛकामाः काम्यमाना देवाः ᵛनिकामाः नितरामवश्यं प्रार्थ्यमाना इन्द्रादयः ᵛच विद्यन्ते । यद्वा कामा निकामा अभिलाषा निकामाश्च यत्र विद्यन्ते । ᵛयत्र लोके ᵛब्रध्नस्य सर्वेषां प्रज्ञापकस्य । यद्वा । सूर्येण विना कर्माणि[3] न घटन्त[3] इति सर्वेषां कर्मणां मूलभूतस्यादित्यस्य ᵛविष्टपं सहस्थानं यत्र विद्यते तत्र लोके । ᵛस्वधा अन्नं स्वधाकारेण वा दत्तमन्नं ᵛतृप्तिः तर्पणं हर्षणं हर्षः ᵛच ᵛयत्र विद्यते ᵛतत्र लोके ᵛमाममृतं ᵛकृधि ॥

---

१. त३.४-विधेहि । २. ग-त३-भ५—कारणात्त्वं । ३. ग—कर्माणि न प्रवर्तते ।

**यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।**
**कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ११ ॥**

यत्र । आऽनन्दाः । च । मोदाः । च । मुदः । प्रऽमुदः । आसते ।
कामस्य । यत्र । आप्ताः । कामाः । तत्र । माम् । अमृतम् । कृधि ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ ११ ॥

यत्र यस्मिँल्लोके आनन्दादयः आसते । तेषामल्पो भेदो द्रष्टव्यः । यत्र च लोके कामस्य काम्यमानस्य देवस्य सर्वे कामाः आप्ताः प्राप्ता भवन्ति तत्र माममृतं कृधि । एतत्तु त्वया विना न घटत इति हे सोम त्वं परि स्रव ॥  ॥ २७ ॥

'य इन्दोः' इति चतुर्ऋचमेकादशं सूक्तम् । ऋष्याद्याः पूर्ववत् । तथा चानुक्रम्यते—'य इन्दोश्चतुष्कम्' इति । गतः सूक्तविनियोगः ॥

**य इन्दोः पवमानस्यानु धामान्यक्रमीत् ।**
**तमाहुः सुप्रजा इति यस्ते सोमाविधन्मन इन्द्रायेन्दो परि स्रव ॥ १ ॥**

यः । इन्दोः । पवमानस्य । अनु । धामानि । अक्रमीत् ॥ तम् । आहुः । सुऽप्रजाः ।
इति । यः । ते । सोम । अविधत् । मनः । इन्द्राय । इन्दो इति । परि । स्रव ॥ १ ॥

पवमानस्य पूयमानस्य इन्दोः सोमस्य धामानि स्थानानि द्रोणकलशादीनि यद्वा धामानि तेजांसि यः ब्राह्मणः अनु अक्रमीत् अनुक्रामति अनुगच्छति तं जनं सुप्रजाः शोभनप्रजननः[1] कल्याणपुत्रादिप्रजायुक्त इत्याहुः । 'नित्यमसिच् प्रजामेधयोः' इत्यसिच् समासान्तः । यः सोममभिषुणोति स पुत्रादियुक्तो भवतीत्यर्थः । किंच हे सोम यः मनुष्यः ते त्वदर्थं मनः अविधत् करोति । यद्वा । ते त्वदीयं मनोऽविधत् परिचरति । विधतिः परिचरणकर्मा । तमपि कल्याणजननमित्याहुः[2] । तस्मात्त्वं परि स्रव ॥

**ऋषे मन्त्रकृतां स्तोमैः कश्यपोद्वर्धयन्गिरः ।**
**सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिरिन्द्रायेन्दो परि स्रव ॥ २ ॥**

ऋषे । मन्त्रऽकृताम् । स्तोमैः । कश्यप । उत्ऽवर्धयन् । गिरः ।
सोमम् । नमस्य । राजानम् । यः । जज्ञे । वीरुधाम् । पतिः ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ २ ॥

ऋषिः स्वात्मानं प्रत्याह । हे ऋषे सूक्तद्रष्टः हे कश्यप आत्मन् त्वं मन्त्रकृतां ऋषीणां स्तोमैः स्तोत्रैः गिरः स्तुतिरूपा वाचः उद्वर्धयन् उपर्युपरि वर्धयन् राजानं सर्वेषां स्वामिनं तं सोमं नमस्य पूजय[3] । नमसः पूजायां 'नमोवरिव°' इति क्यच् । यः सोमः वीरुधां वनस्पतीनां पतिः पालकः जज्ञे जातः तं नमस्य । हे सोम यथात्मना सुतो भवसि तथा परि स्रव ॥

---

१. त-भ२—°प्रजनः । २. त२.३-भ४—°जनमित्याहुः; भ१.२—°जनयिन्याहुः; भ६—°जनमित्यर्थं । ३. त१.२.५.६.७-भ६-मु—मनसा पूजय; भ७—नमसा पूजय ।

सप्त दिशो नानासूर्याः सप्त होतार ऋत्विजः ।
देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष न इन्द्रायेन्दो परि स्रव ॥ ३ ॥

सप्त । दिशः । नानाऽसूर्याः । सप्त । होतारः । ऋत्विजः ।
देवाः । आदित्याः । ये । सप्त । तेभिः । सोम । अभि । रक्ष । नः ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ ३ ॥

ᵛसप्त ᵛदिशः । सोमो यस्यां दिशि वर्तते तद्व्यतिरिक्ताः सप्त भवन्ति । ᵛनानासूर्याः नानाविधैः सूर्यैरधिष्ठिता ऋतवो भवन्ति । 'नानालिङ्गत्वादृतूनां नानासूर्यत्वम्' (तै. आ. १.७) इत्याम्नानात् । यद्वा । नानासूर्या इति दिग्विशेषणम् । तथा ᵛहोतारः वषट्कर्तारो होत्रादयः ᵛसप्त ᵛऋत्विजः भवन्ति । किंच ᵛआदित्याः अदितेः पुत्रा धात्रादयो मार्ताण्डवर्जिताः ᵛये ᵛसप्त ᵛदेवाः सन्ति । एतत्तु 'अष्टौ पुत्रासो अदितेः' (ऋ. सं. १०. ७२. ८) इत्यत्र प्रपञ्चयिष्यते । हे ᵛसोम ᵛतेभिः तैर्दिगादिभिः सर्वैः ᵛनः अस्मान् ᵛअभि ᵛरक्ष । एतत्तु त्वया विना न घटत इति तस्मात् ᵛइन्द्राय ᵛइन्दो ᵛपरि ᵛस्रव ॥

उपाकरणोत्सर्जनयोर्मण्डलाद्यन्तहोमे 'यत्ते राजन्' इत्येषा । सूत्रितं च—'यत्ते राजञ्छृतं[1] हविरिति[2] द्वृचाः समानी व आकूतिरित्येका' (आश्व. गृ. ३. ५. ७-८) इति ॥

यत्ते राजञ्छृतं हविस्तेन सोमाभि रक्ष नः ।
अरातीवा मा नस्तारीन्मो च नः किं चनाममदिन्द्रायेन्दो परि स्रव ॥ ४ ॥

यत् । ते । राजन् । शृतम् । हविः । तेन । सोम । अभि । रक्ष । नः ।
अरातिऽवा । मा । नः । तारीत् । मो इति । च । नः । किम् । चन । आममत् ।
इन्द्राय । इन्दो इति । परि । स्रव ॥ ४ ॥

हे ᵛराजन् सर्वेषां कर्मसाधनत्वेन स्वामिन् हे ᵛसोम ᵛते त्वदर्थं ᵛशृतं पक्वं ᵛयत् ᵛहविः अस्ति । 'शृतं पाके' (पा. सू. ६. १. २७) इति निष्ठायां निपातितः । ᵛतेन हविषा ᵛनः अस्मान् ᵛअभि ᵛरक्ष । अभिपालय । तस्मात्त्वदभिरक्षितानस्मान् ᵛअरातीवा अरातित्ववाञ्शत्रुः ᵛनः अस्मान् ᵛमा ᵛतारीत् मा वधीत् । किंच ᵛनः अस्माकं ᵛकिं ᵛचन किंचिदपि धनादिकं शत्रुः ᵛमो ᵛआममत् मा हिंसीत् । यदेतदेतैः सूक्तैरुक्तं तद्यथास्माकं भवति तथा हे ᵛइन्दो ᵛइन्द्राय ᵛपरि ᵛस्रव । एवं 'स्वादिष्ठया' इत्यादिभिरेतदन्तैः सूक्तैर्बहुविधं सोममाहात्म्यमभ्यधायि तस्मादैहिकामुष्मिकफलसिद्धये सोमयागः करणीय इत्युक्तं भवति ॥ ॥ २८ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे दाशतय्या नवमे मण्डले सप्तमोऽनुवाकः समाप्तं च नवमं मण्डलम् ॥

१. त-भ-मु—राजन्निति । २. त१.२.४.५.७—शृतं शृतं ।

॥ श्रीः ॥

# ॥ अथ दशमं मण्डलम् ॥

दशमे मण्डले द्वादशानुवाकाः। तत्र प्रथमानुवाके षोडश सूक्तानि। तत्र 'अग्ने बृहन्' इति सप्तर्चं प्रथमं सूक्तमाप्त्यस्य त्रितस्यार्षम्। अनादेशपरिभाषया त्रिष्टुप्। मण्डलादिपरिभाषयाग्निर्देवता। तथा चानुक्रम्यते—'अग्ने सप्त त्रितः' इति। प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसीदमादीन्यष्ट सूक्तान्यष्टमस्यान्त्यास्तिस्रो वर्जयित्वा। सूत्र्यते हि—'अग्ने नयाग्ने बृहन्नित्यष्टानामुत्तमादुत्तमास्तिस्र[1] उद्धरेदिति त्रैष्टुभम्' (आश्व. श्रौ. ४. १३) इति। 'प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्रावममोदेतोः शंसेत्' (आश्व. श्रौ. ६. ५) इति च। होमार्थं प्रणीत आहवनीये प्राग्घोमादुपशान्ते ज्योतिष्मद्गुणकाग्निदेवताका काचिदिष्टिः। तत्राद्या याज्या। सूत्रितं च—'इष्टिरग्निर्ज्योतिष्मान् वरुण उदग्ने शुचयस्तवाग्ने बृहन्नुषसामूर्ध्वो अस्थात्' (आश्व. श्रौ. ३. १२) इति। उपाकरणोत्सर्जनयोर्मण्डलादिहोमेऽप्येषा। सूत्रमुदाहृतम्॥

**अ॒ग्ने बृ॒हन्नु॒षसा॑मू॒र्ध्वो अ॑स्थान्निर्ज॒गन्वा॒न्तम॑सो॒ ज्योति॒षागा॑त्।**
**अ॒ग्निर्भा॒नुना॒ रुश॑ता॒ स्वङ्ग॒ आ जा॒तो विश्वा॒ सद्मा॑न्यप्राः॥ १॥**

अग्ने॑। बृ॒हन्। उ॒षसा॑म्। ऊ॒र्ध्वः। अ॒स्था॒त्। निः॒ऽज॒ग॒न्वान्। तम॑सः। ज्योति॑षा। आ। अ॒गा॒त्। अ॒ग्निः। भा॒नुना॑। रुश॑ता। सु॒ऽअङ्गः॑। आ। जा॒तः। विश्वा॑। सद्मा॑नि। अ॒प्राः॥ १॥

^v^बृहन् महानेषोऽग्निः ^v^उषसाम् ^v^अग्रे उषसामुपर्युषःकाले ^v^ऊर्ध्वः प्रज्वलितः सन् ज्वालारूपेण ^v^अस्थात् तिष्ठति। ततः ^v^तमसः। रात्रिनामैतत्। रात्रेः ^v^निर्जगन्वान् निर्गतः॥ गमेः क्वसाविडभावे रूपम्॥ निर्गतो निष्क्रान्तवान् सोऽग्निः ^v^ज्योतिषा स्वीयेन तेजसा लक्षितः सन् ^v^आगात्। गार्हपत्याद्ध्रियमाण आहवनीयं प्रत्यागच्छति। अनन्तरं ^v^स्वङ्गः शोभनज्वालावयवः[2] ^v^जातः कर्मार्थं समुत्पन्न एषः ^v^अग्निः ^v^रुशता। रोचतेर्ज्वलतिकर्मण इदं रूपम्। आरोचमानेन। यद्वा। रुशतिर्हिंसार्थः। तमसां हिंसकेन। ^v^भानुना तेजसा ^v^विश्वा ^v^सद्मानि सर्वांल्लोकान् यद्वा सदनानि यज्ञगृहाणि ^v^आ ^v^अप्राः आपूरयति। 'प्रा पूरणे'। 'तिङां तिङो भवन्ति' इति तिपः सिबादेशः। अत्र वाजसनेयकम्—'अग्ने बृहन्नुषसामूर्ध्वो अस्थादित्यग्ने ह्येष बृहन्नुषसामूर्ध्वस्तिष्ठति। निर्जगन्वान्तमसो ज्योतिषागादिति निर्जगन्वान् रात्रेस्तमसो ज्योतिषैति। अग्निर्भानुना रुशता स्वङ्ग इत्यग्निर्वा एष भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्रा इतीमे वै लोका विश्वा सद्मानि तानेष जात आपूरयति' (श. ब्रा. ६. ७. ३. १०) इति॥

**स जा॒तो गर्भो॑ असि॒ रोद॑स्यो॒रग्ने॒ चारु॒र्विभृ॑त॒ ओष॑धीषु।**
**चि॒त्रः शिशुः॒ परि॒ तमां॑स्य॒क्तून्प्र मा॒तृभ्यो॒ अधि॒ कनि॑क्रदद्गाः॥ २॥**

---

१. ग-त६-म१. ७—°मुत्तमास्तिस्र; त१. २. ३. ४. ५-म२. ४. ६—°मुत्तमोत्तमास्तिस्र। २. ग—शोभमानावयवः।

सः । जातः । गर्भः । असि । रोदस्योः । अग्ने । चारुः । विऽभृतः । ओषधीषु ।
चित्रः । शिशुः । परि । तमांसि । अक्तून् । प्र । मातृऽभ्यः । अधि । कनिक्रदत् । गाः ॥२॥

हे ᵛअग्ने ᵛजातः उत्पन्नः ᵛचारुः कल्याणरूपः ᵛओषधीषु ओषधिविकारेष्वरणीषु ᵛविभृतः विशेषेण मथितो यद्वा विभृतः आहवनीयाद्यात्मना विविधं ह्रियमाण ओषधीषु वर्तमानः ᵛसः त्वं ᵛरोदस्योः द्यावापृथिव्योः ᵛगर्भोऽसि गर्भो भवसि । अग्निरूप आदित्यरूपश्चेति । किंच ᵛचित्रः चित्रवर्णः 'काली कराली च मनोजवा' (मु. उ. १. २. ४) इत्यादिसप्तजिह्वाभिः[1] नानारूपः यद्वा चित्रश्रायनीयः ᵛशिशुः ओषधीनां शिशुरग्निः ᵛतमांसि ᵛअक्तून् रात्रिवत् कृष्णान् शत्रूंश्च ᵛपरि भवसि । स्वतेजसाभिभवसि । स त्वं ᵛमातृभ्यः मातृभूताभ्य ओषधीभ्यः । अधिः पञ्चम्यर्थद्योतकः । ताभ्यः ᵛकनिक्रदत् पुनःपुनः शब्दं कुर्वन् ᵛप्र ᵛगाः प्रगच्छसि प्रजायसे ॥

**विष्णुरित्था परममस्य विद्वाञ्जातो बृहन्नभि पाति तृतीयम् ।**
**आसा यदस्य पयो अक्रत स्वं सचेतसो अभ्यर्चन्त्यत्र ॥ ३ ॥**

विष्णुः । इत्था । परमम् । अस्य । विद्वान् । जातः । बृहन् । अभि । पाति । तृतीयम् ।
आसा । यत् । अस्य । पयः । अक्रत । स्वम् । सऽचेतसः । अभि । अर्चन्ति । अत्र ॥ ३ ॥

ᵛविद्वान् जानानः ᵛजातः प्रादुर्भूतः ᵛबृहन् महान् ᵛविष्णुः[2] ᵛइत्था इत्थमनेन प्रकारेण विष्णुः व्यापनशीलो ज्ञानादिगुणयुक्तोऽग्निः ᵛअस्य इमं ᵛतृतीयं त्रयाणां पूरकं त्रितं माम् ᵛअभि ᵛपाति अभिरक्षतु । 'एकतो द्वितस्त्रित इति त्रयो बभूवुः' (निरु. ४. ६) इति यास्केनोक्तम् । किंच ᵛअस्य अग्नेः ᵛस्वम् आत्मीयं ᵛपयः उदकम् ᵛआसा आस्येन ᵛयत् यदा ᵛअक्रत कुर्वन्ति यजमाना याचन्ते तदानीम् ᵛअत्र अस्मिँल्लोके स्थिताः स्तोतारः ᵛसचेतसः समानमनस्का भूत्वैनम् ᵛअभ्यर्चन्ति अभिष्टुवन्ति ॥

**अत उ त्वा पितुभृतो जनित्रीरन्नावृधं प्रति चरन्त्यन्नैः ।**
**ता ईं प्रत्येषि पुनरन्यरूपा असि त्वं विक्षु मानुषीषु होता ॥ ४ ॥**

अतः । ऊँ इति । त्वा । पितुऽभृतः । जनित्रीः । अन्नऽवृधम् । प्रति । चरन्ति । अन्नैः ।
ताः । ईम् । प्रति । एषि । पुनः । अन्यऽरूपाः । असि । त्वम् । विक्षु । मानुषीषु । होता ॥४॥

हे अग्ने ᵛअतः । ᵛउ इत्यवधारणे । अस्मादेव कारणात्[3] ᵛपितुभृतः पितुनान्नेन सर्वस्य जगतो धारयित्र्यः पोषयित्र्यो वा ᵛजनित्रीः जनयित्र्य ओषधयः ᵛअन्नावृधम् अन्नस्य वर्धकं ᵛत्वा त्वाम् ᵛअन्नैः हेतुभिः ᵛप्रति ᵛचरन्ति परिचरन्ति अभिगच्छन्ति । ततस्त्वम् ᵛईम् एनाः ᵛताः ओषधीः ᵛप्रत्येषि प्रतिगच्छसि । पुनरपि ᵛअन्यरूपाः जीर्णा ओषधीर्दावभूतस्त्वं गच्छसि । किंच ᵛमानुषीषु मनुष्यजातिषु ᵛविक्षु प्रजासु । यद्वा । विक्षु अग्निहोत्रादिक्रियास्वभिनिविशन्तीषु मानुषीषु मनुष्यजातिषु । ᵛहोता देवानामाह्वाता होमनिष्पादको वा ᵛअसि भवसि । मनुष्येषु स्थित इत्यर्थे ब्राह्मणं— 'देवो ह्येष मर्त्येषु' (तै. सं. ६. १. ४. ६-७) इति ॥

---

१. त१.२.५.७-भ६-'जिह्वादिभिः । २. ग-त३-भ५.६-विष्णुः इत्था अमुत्र लोके स्थितमस्याग्नेः स्वभूतं परममुत्तमं तृतीयं दिविष्ठमंशुं अभिपाति अभिरक्षति यद्वा । ३. त१.२.५.७-कारात् ।

आतिथ्यायां स्विष्टकृतोऽनुवाक्या 'होतारम्' इत्येषा। सूत्रितं च—'होतारं चित्ररथमध्वरस्य प्रप्रायमग्निर्भरतस्य शृण्व इति संयाज्ये' (आश्व. श्रौ. ४. ५) इति॥

होतारं चित्ररथमध्वरस्य यज्ञस्ययज्ञस्य केतुं रुशन्तम्।
प्रत्यर्धिं देवस्यदेवस्य मह्ना श्रिया त्व१ग्निमतिथिं जनानाम्॥ ५॥

होतारम्। चित्रऽरथम्। अध्वरस्य। यज्ञस्यऽयज्ञस्य। केतुम्। रुशन्तम्।
प्रतिऽअर्धिम्। देवस्यऽदेवस्य। मह्ना। श्रिया। तु। अग्निम्। अतिथिम्। जनानाम्॥ ५॥

^vअध्वरस्य यज्ञस्य ^vहोतारम् एतन्नामानमृत्विजं यद्वा होतारं देवानामाह्वातारं ^vचित्ररथं नानारूपरथमध्वरस्य रक्षोभिरहिंसितस्य ^vयज्ञस्य सर्वस्य यज्ञस्य ^vकेतुं प्रज्ञापकं पताकास्थानीयं वा ^vरुशन्तं श्वेतवर्णं ^vमह्ना स्वमहत्त्वेन ^vदेवस्यदेवस्य[1] सर्वेषां देवानाम् ^vअर्धिम् इन्द्रं ^vप्रति भवन्तम्। 'यत्सर्वेषामर्धिमिन्द्रं प्रति' इति ब्राह्मणम्। तादृशं ^vजनानां यजमानानाम् ^vअतिथिम् अतिथिवत् पूज्यम् ^vअग्निं ^vतु क्षिप्रं ^vश्रिया श्रियोऽर्थं[2] वयं स्तुमः॥

स तु वस्त्राण्यध पेशनानि वसानो अग्निर्नाभा पृथिव्याः।
अरुषो जातः पद इळायाः पुरोहितो राजन्यक्षीह देवान्॥ ६॥

सः। तु। वस्त्राणि। अध। पेशनानि। वसानः। अग्निः। नाभा। पृथिव्याः।
अरुषः। जातः। पदे। इळायाः। पुरःऽहितः। राजन्। यक्षि। इह। देवान्॥ ६॥

हे ^vराजन् दीप्यमानाग्ने ^vवस्त्राणि आच्छादकानि तेजांसि ^vअध अपि च ^vपेशनानि तेषां तेजसां कार्ष्ण्यशौक्ल्यादीनि[3] रूपाणि। यद्वा। अथानन्तरं पेशनानि। पेश इति हिरण्यनाम। हिरण्यवत् हिरण्यसदृशानि भास्वराणि तेजांसि। ^vवसानः आच्छादयन् ^vपृथिव्याः ^vनाभा नाभौ नाभिस्थानीये ^vइळायाः ^vपदे उत्तरवेद्याम्। 'एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः' (ऐ. ब्रा. १. २८) इत्याम्नानात्। तस्यां ^vजातः समुत्पन्नः ^vअरुषः आरोचमानो यः ^vअग्निः एवंविधोऽसि स त्वं ^vपुरोहितः पुरतो निहितः पूर्वस्यां दिशि आहवनीयायतने[4] स्थापितः सन् ^vइह अस्मिन् यज्ञे ^vदेवान् इन्द्रादीन् ^vयक्षि यज पूजय॥

आ हि द्यावापृथिवी अग्न उभे सदा पुत्रो न मातरा ततन्थ।
प्र याह्यच्छोशतो यविष्ठाथा वह सहस्येह देवान्॥ ७॥

आ। हि। द्यावापृथिवी इति। अग्ने। उभे इति। सदा। पुत्रः। न। मातरा। ततन्थ।
प्र। याहि। अच्छ। उशतः। यविष्ठ। अथ। आ। वह। सहस्य। इह। देवान्॥ ७॥

हे ^vअग्ने त्वम् ^vउभे ^vद्यावापृथिवी द्यावापृथिव्यौ ^vसदा सर्वदा ^vआ ^vततन्थ आतेनिथ। स्वतेजोभिर्विस्तारयसि खलु॥ 'बभूथा ततन्थ°' इति थलि निपातितः॥ तत्र दृष्टान्तः। ^vपुत्रो ^vन यथा पुत्रः ^vमातरा मातापितरौ क्षीणौ धनैस्तनोति तद्वत्। किंच हे ^vयविष्ठ युवतम स[5] त्वम्[5]

१. त-भ२.४.६–देवस्य। २. त-भ१.४.६.७–श्रियेर्थं। ३. त१.२.३.५.७-भ१–°शौक्त्यादीनि; त४–°शौक्तादीनि; भ२–°शौल्कादीनि। ४. ग-त१.२.३.७-भ१.२.४–आहवनीयात्मना; त४–आहवनीयायतनो; त५–आहवनीयातने। ५. ग–स तादृश; त१.२.४.५.७–तन्वं; मु–त्वं।

ᵛउशतः कामयमानान् ᵛअच्छ अभिलक्ष्य ᵛप्र ᵛयाहि प्रकर्षेणागच्छ[1]। ᵛअथ अनन्तरं हे ᵛसहस्य सहसो बलस्य पुत्र हे अग्ने त्वम् ᵛइह अस्मदीये यज्ञे ᵛदेवान् इन्द्रादीन् ᵛआ ᵛवह प्रापय ॥ ॥२९॥

'पिप्रीहि' इति सप्तर्चं द्वितीयं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'पिप्रीहि' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः। दर्शपूर्णमासयोराद्या स्विष्टकृतोऽनुवाक्या। सूत्रितं च—'अथ स्विष्टकृतः पिप्रीहि देवाँ उशतो यविष्ठेत्यनुवाक्या' (आश्व. श्रौ. १. ६) इति ॥

**पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँऋतुपते यजेह।**
**ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥ १ ॥**

पिप्रीहि। देवान्। उशतः। यविष्ठ। विद्वान्। ऋतून्। ऋतुऽपते। यज। इह।
ये। दैव्याः। ऋत्विजः। तेभिः। अग्ने। त्वम्। होतॄणाम्। असि। आऽयजिष्ठः ॥ १ ॥

हे ᵛयविष्ठ युवतमाग्ने ᵛउशतः स्तुतीः श्रोतुं[2] कामयमानान् ᵛदेवान् ᵛपिप्रीहि हविर्भिः प्रीणय। हे ᵛऋतुपते ऋतूनां देवयागकालानां स्वामिन्नग्ने ᵛऋतून् यागकालान् ᵛविद्वान् जानानस्त्वम् ᵛइह अस्मिन्[3] यज्ञे तान् ᵛयज पूजय। किंच हे ᵛअग्ने ᵛदैव्याः देवेषु भवाः 'अग्निर्होताश्विनावध्वर्यू त्वष्टाग्नीन्मित्र उपवक्ता' (तै. आ. ३. ३) इत्यत्रोक्ताः ᵛये ᵛऋत्विजः सन्ति ᵛतेभिः तैः सह देवान् यज। यद्वा। दैव्या देवेषु भवा ऋत्विज आश्वलायनेनोक्ताः चन्द्रमा ब्रह्मादित्योऽध्वर्युः पर्जन्य उद्गाता (आश्व. गृ. १. २३. ८-९) इति। तैः सह यज। यस्मात् ᵛत्वं ᵛहोतॄणां मध्ये ᵛआयजिष्ठः आभिमुख्येन देवानां यष्टृतमः ᵛअसि भवसि ॥

**वेषि होत्रमुत पोत्रं जनानां मन्धातासि द्रविणोदा ऋतावा।**
**स्वाहा वयं कृणवामा हवींषि देवो देवान्यजत्वग्निरर्हन् ॥ २ ॥**

वेषि। होत्रम्। उत। पोत्रम्। जनानाम्। मन्धाता। असि। द्रविणःऽदाः। ऋतऽवा।
स्वाहा। वयम्। कृणवाम। हवींषि। देवः। देवान्। यजतु। अग्निः। अर्हन् ॥ २ ॥

हे अग्ने ᵛजनानां यजमानार्थं ᵛहोत्रं होतुः कर्म तेन क्रियमाणं स्तोत्रं ᵛवेषि कामयसे। ᵛउत अपि च ᵛपोत्रं पोतुः कर्म तेन क्रियमाणां स्तुतिं कामयसे। किंच ᵛमन्धाता मेधावी ᵛऋतवा[4] सत्यवांस्त्वं ᵛद्रविणोदाः ᵛअसि धनस्य प्रदाता भवसि। अथ परोक्षकृतः। ᵛवयं देवेभ्यः ᵛहवींषि ᵛस्वाहा ᵛकृणवाम स्वाहा करवाम। प्रयच्छाम। ततः ᵛदेवः दीप्यमानः ᵛअर्हन् प्रशंस्यो[5] यजमानयोग्यो वा ᵛअग्निः ᵛदेवान् ᵛयजतु। तैर्हविर्भिः पूजयतु ॥

दर्शपूर्णमासातिपत्त्यादौ निमित्ते पाथिकृतीष्टिः कर्तव्या। तत्र 'आ देवानाम्' इत्येषा याज्या। सूत्रितं च—'वेत्था हि वेधो अध्वन आ देवानामपि पन्थामगन्म' (आश्व. श्रौ. ३. १०) इति। प्रायणीयायामाग्नेयस्यैषैव याज्योदयनीयायां सैवानुवाक्या। सूत्रितं च—'अग्ने नय सुपथा राये अस्मान आ देवानामपि पन्थामगन्म' (आश्व. श्रौ. ४. ३) इति। विपरीताश्च याज्यानुवाक्या इति ॥

---

१. ग-त१.२.४.५-भ६–प्रकर्षेण गच्छ। २. ग-त३-भ१.४.५.६.७–श्रोतुं हवींषि चात्तुं। ३. ग-त३-भ२.४.७–अस्मदीये। ४. ग-ऋतावा; त१.२.४.५.७-भ६–ऋतवान्। ५. ग–नमस्यो; त-भ४.६-मु–प्रशस्यो।

आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोळ्हुम् ।
अग्निर्विद्वान्त्स यजात्सेदु होता सो अध्वरान्त्स ऋतून्कल्पयाति ॥ ३ ॥

आ । देवानाम् । अपि । पन्थाम् । अगन्म । यत् । शक्नवाम । तत् । अनु । प्रऽवोळ्हुम् ।
अग्निः । विद्वान् । सः । यजात् । सः । इत् । ऊँ इति । होता ।
सः । अध्वरान् । सः । ऋतून् । कल्पयाति ॥ ३ ॥

ᵛदेवानां देवलोकादिगमनसाधनं देवानां स्वभूतं ᵛपन्थां पन्थानं तम् ᵛअपि वैदिकमार्गं वयम् ᵛआ ᵛअगन्म आगतवन्तो भवेम येन देवान् प्राप्नुमः । तथा वयं ᵛयत् कर्म अनुष्ठातुं ᵛशक्नवाम शक्नुमः समर्था भवामः ᵛतत्[1] कर्म अनुक्रमेण ᵛप्रवोळ्हुं प्रकर्षेण वोढुं समाप्तिं प्रापयितुं समर्था भवेम[2] । अनन्तरं ᵛविद्वान् तं पन्थानं जानानः ᵛसः ᵛअग्निः ᵛयजात् देवान् यजतु । ᵛसेदु स एव खलु ᵛहोता मनुष्याणां होमनिष्पादकः । ततः ᵛसः एवाग्निः ᵛअध्वरान् यज्ञान् किंच ᵛऋतून् कालान्[3] ᵛकल्पयाति कल्पयतु करोतु ॥

व्रतातिपत्तौ व्रातपतीष्टिः कर्तव्या । तत्र 'यद्वो वयम्' इत्येषा याज्या । सूत्रितं च—'त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानि' ( आश्व. श्रौ. ३. १३ ) इति ॥

यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद्विश्वमा पृणाति विद्वान्येभिर्देवाँ ऋतुभिः कल्पयाति ॥ ४ ॥

यत् । वः । वयम् । प्रऽमिनाम । व्रतानि । विदुषाम् । देवाः । अविदुःऽतरासः ।
अग्निः । तत् । विश्वम् । आ । पृणाति । विद्वान् । येभिः । देवान् । ऋतुऽभिः । कल्पयाति ॥४॥

हे ᵛदेवाः ᵛअविदुष्टरासः अविद्वत्तरा अत्यन्तमजानन्तः ᵛवयं ᵛवः युष्माकं ᵛयत् यत्किंचित् ᵛव्रतानि कर्माणि ᵛविदुषां भवतां जानतामेव ᵛप्रमिनाम प्रहिंसितवन्तः । भवत्सु जानत्सु नित्यनैमित्तिककर्माणि विलोपितवन्त इत्यर्थः । ᵛविद्वान् एतत् सर्वं ᵛजानानः ᵛअग्निः स्विष्टकृत् ᵛतत् एतत् ᵛविश्वं सर्वं कर्मजातम् ᵛआ ᵛपृणाति आपूरयतु । फलसहितं करोत्वित्यर्थः । केनापूरयतु तत्राह । ᵛयेभिः ᵛऋतुभिः यागयोग्यैः कालैः ᵛदेवान् ᵛकल्पयाति कल्पयति कर्माङ्गभावाय[4] समर्थयति तैरापूरयतु ॥

यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः ।
अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति ॥ ५ ॥

यत् । पाकऽत्रा । मनसा । दीनऽदक्षाः । न । यज्ञस्य । मन्वते । मर्त्यासः ।
अग्निः । तत् । होता । क्रतुऽवित् । विऽजानन् । यजिष्ठः । देवान् । ऋतुऽशः । यजाति ॥५॥

ᵛदीनदक्षाः सततयाजनेन दीनबला दीनोत्साहा वा ᵛमर्त्यासः मर्त्या मनुष्या ऋत्विजः ᵛपाकत्रा पाकेन । बहुलग्रहणादस्मादपि तृतीयार्थे त्राप्रत्ययः । पाकेन पक्तव्येन[5] विशिष्टज्ञानरहिते-

१. त-भ६—यत् । २. ग-त५.६-मु—भवामः; त१.२.३.४.७-भ१.२.४.६—भवाम । ३. ग-त३-भ५—यज्ञकालान् । ४. त१.२.४.५.७-भ६—कर्मांगभावेन । ५. त-भ६—पोषकेन ।

नाल्पेन वा मनसा युक्ताः सन्तो यज्ञसंबन्धि यत् कर्म न मन्वते न जानन्ति तत् कर्म विजानन् होता देवानामाह्वाता होमनिष्पादको वा क्रतुवित् कर्मवित् यजिष्ठः देवानामतिशयेन यष्टा सः अग्निः स्विष्टकृत् ऋतुशः ऋतावृतौ स्वे स्वे यागयोग्ये काले देवान् यजाति यजतु हविर्भिः पूजयतु ॥

विश्वेषां ह्यध्वराणामनीकं चित्रं केतुं जनिता त्वा जजान ।
स आ यजस्व नृवतीरनु क्षाः स्पार्हा इषः क्षुमतीर्विश्वजन्याः ॥ ६ ॥

विश्वेषाम् । हि । अध्वराणाम् । अनीकम् । चित्रम् । केतुम् । जनिता । त्वा । जजान ।
सः । आ । यजस्व । नृऽवतीः । अनु । क्षाः । स्पार्हाः । इषः । क्षुऽमतीः । विश्वऽजन्याः ॥ ६ ॥

हे अग्ने विश्वेषां सर्वेषाम् अध्वराणां यज्ञानाम् अनीकं मुखं[1] प्रधानं चित्रं चायनीयं नानारूपं वा केतुं प्रज्ञापकं त्वा त्वां जनिता जनयिता प्रजापतिर्यजमानो वा जजान जनयामास । उत्पादितः सः त्वं नृवतीः दासादियुक्ताः क्षाः । पृथिवीनामैतत् । क्षयन्त्यत्रेति क्षा[2] भूमिः[2] । अनु आ यजस्व अनुप्रयच्छ । यद्वा । नृवतीर्नृभिः संस्कृतानि क्षा अनु पृथिवीं वेदिलक्षणामनुगतानि वेद्यामासादितानि स्पार्हाः स्पृहणीयानि क्षुमतीः स्तुतिमन्त्रलक्षणशब्दवन्ति विश्वजन्याः सर्वजनहितानि वृष्ट्यन्नहेतुत्वात् तानि इषः अन्नानि हविर्लक्षणानि यजस्व[3] देवेभ्यः प्रयच्छ ॥

यं त्वा द्यावापृथिवी यं त्वापस्त्वष्टा यं त्वा सुजनिमा जजान ।
पन्थामनु प्रविद्वान्पितृयाणं द्युमदग्ने समिधानो वि भाहि ॥ ७ ॥

यम् । त्वा । द्यावापृथिवी इति । यम् । त्वा । आपः । त्वष्टा । यम् । त्वा । सुऽजनिमा । जजान ।
पन्थाम् । अनु । प्रऽविद्वान् । पितृऽयानम् । द्युऽमत् । अग्ने । सम्ऽइधानः । वि । भाहि ॥ ७ ॥

हे अग्ने यं त्वा त्वां द्यावापृथिवी जनितवत्यौ आदित्यात्मनाग्न्यात्मना वा[4] । तथा यं त्वाम् आपः मेघोदरगता विद्युदात्मना स्थितं जनितवत्यः । यद्वा । आप इत्यन्तरिक्षनाम । द्यावापृथिवी अन्तरिक्षं चेमे त्रयो लोका यं त्वामजीजनन् । किंच सुजनिमा शोभनजननः त्वष्टा प्रजापतिः यं त्वां जजान जनयामास हे अग्ने पितृयाणं पितरो येन मार्गेण गच्छन्ति तं पन्थां हविर्वहनमार्गम् अनु प्रविद्वान् प्रजानंस्त्वं समिधानः समिध्यमानः सन् द्युमत् दीप्तियुक्तं यथा भवति तथा वि भाहि विशेषेण दीप्यसे ॥ ॥ ३० ॥

'इनो राजन्' इति सप्तर्चं तृतीयं सूक्तम् । ऋष्याद्याः पूर्ववत् । 'इनः' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्शि ।
चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥ १ ॥

इनः । राजन् । अरतिः । सम्ऽइद्धः । रौद्रः । दक्षाय । सुसुऽमान् । अदर्शि ।
चिकित् । वि । भाति । भासा । बृहता । असिक्नीम् । एति । रुशतीम् । अपऽअजन् ॥ १ ॥

---

१. त१.२.४.५-भ४.६–सुखं; त६-भ७–मुख्यं । २. त१.२.४.५-भ१.४.६–ता भूमीः; त३.७–ता भूमिः । ३. त१.२.७–आयजस्व । ४. त-भ-मु– च ।

हे vराजन् दीप्यमानाग्ने त्वम् vइनः ईश्वरः सर्वस्य भवसि। अथ परोक्षः। vअरतिः हविरादाय देवान् प्रति गन्ता[1] vसमिद्धः संदीप्तः vरौद्रः शत्रूणां भयंकरः vसुषुमान्। ओषध्यात्मना स्थितोंऽशुः[2] सुष्ठु सूयत इति सुषुः सोमः। तेन तद्वान् शोभनप्रसवो वा सोऽग्निः vदक्षाय यजमानानां धनादिवृद्ध्यर्थम्[3] vअदर्शि सर्वैर्दृश्यते। किंच vचिकित् सर्वं जानानोऽग्निः vवि vभाति विशेषेण दीप्यते। तथा vबृहता महता vभासा तेजसा ज्वालालक्षणेन vअसिक्नीं रात्रिम् vएति। सायंहोमसिद्ध्यर्थमेव[4] गच्छति। किं कुर्वन्। vरुशतीं श्वेतवर्णां दीप्तिम् vअपाजन् अपगमयन्[5] रात्रिं गच्छति। सामर्थ्याद्रात्रिं परित्यजन्नुषसं प्रातर्होमसिद्ध्यर्थं गच्छतीत्यर्थो लभ्यते॥

**कृष्णां यदेनीमभि वर्पसा भूज्जनयन्योषां बृहतः पितुर्जाम्।**
**ऊर्ध्वं भानुं सूर्यस्य स्तभायन्दिवो वसुभिररतिर्वि भाति॥ २॥**

कृष्णाम्। यत्। एनीम्। अभि। वर्पसा। भूत्। जनयन्। योषाम्। बृहतः। पितुः। जाम्।
ऊर्ध्वम्। भानुम्। सूर्यस्य। स्तभायन्। दिवः। वसुऽभिः। अरतिः। वि। भाति॥ २॥

सोऽग्निः vयत् यदा vकृष्णां कृष्णवर्णाम् vएनीं गच्छन्तीं रात्रिं vवर्पसा आत्मीयेन ज्वालालक्षणेन रूपेण vअभि vभूत् अभिभवति। किं कुर्वन्। vबृहतः महतः vपितुः सर्वस्य जगतः पालयितुः पितृभूताद्वादित्यात् vजां जायमानां vयोषाम् उषसं vजनयन् अभिव्यञ्जयन्[6]। तदानीम् vअरतिः गमनशीलोऽग्निः vदिवः द्युलोकस्य vवसुभिः वासयितृभिराच्छादकैः संधुक्षणसमर्थैरात्मीयैस्तेजोभिः vसूर्यस्य vभानुं दीप्तिम् vऊर्ध्वम् उपरिष्टात् vस्तभायन् स्तम्भयन् vवि vभाति विशेषेण दीप्यते॥

**भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात्।**
**सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात्॥ ३॥**

भद्रः। भद्रया। सचमानः। आ। अगात्। स्वसारम्। जारः। अभि। एति। पश्चात्।
सुऽप्रकेतैः। द्युऽभिः। अग्निः। विऽतिष्ठन्। रुशत्ऽभिः। वर्णैः। अभि। रामम्। अस्थात्॥ ३॥

vभद्रः भजनीयः कल्याणः vभद्रया भजनीयया दीप्त्योषसा वा vसचमानः सेव्यमानः संगच्छमानो वाग्निः vआगात् आजगाम। गार्हपत्यादाहवनीयमागच्छति। ततः vपश्चात् vजारः जरयिता शत्रूणां सः vअग्निः vस्वसारं स्वयंसारिणीं भगिनीं वा आगतामुषसम्[7] vअभ्येति अभिगच्छति। तथा vसुप्रकेतैः सुप्रज्ञानैः vद्युभिः दीप्तैस्तेजोभिः सह vवितिष्ठन् सर्वतो वर्तमानः सः vअग्निः vरुशद्भिः श्वेतैः[8] vवर्णैः[8] वारकैरात्मीयैस्तेजोभिः vरामं कृष्णं शार्वरं तमः vअभि vअस्थात् सायंहोमकालेऽभिभूय तिष्ठति॥

---

१. त४.५–हंता; त६.७–गतः। २. त-भ१.२.६.७–स्थितेरंशुः। ३. ग-त३-भ२.५.६–°शृद्ध्यर्थं कर्मवृद्ध्यर्थं वा; त-मु–°वृद्ध्यर्थं वा। ४. त-भ१.२.४.६-मु–°सिद्ध्यर्थमेति; त३–°सिद्ध्यर्थं येन। ५. ग-त१-भ–अपगमयन् सर्वतो विकिरन् यद्वा रुशतीं दीप्तामुषसं अपाजन् अपक्षिपन् परित्यजन् ( ग–‘ परित्यजन् ’ नास्ति ); त–अपागमयन्। ६. ग-त-भ-मु–अभिव्यंजयन् रात्रिमभ्यभूत्। ७. त४–अगत्य उषसं; त५–अगत्यमुषसं; त७–आ अगात् आगतामुषसं; भ६-आगात् त्वमुषसं। ८. त-भ६-मु–श्वेतवर्णैः।

अस्य यामा॑सो बृह॒तो न व॒ग्नूनिन्धा॑ना अ॒ग्नेः सख्यु॑ः शि॒वस्य॑ ।
ईड्य॑स्य॒ वृष्णो॑ बृह॒तः स्वासो॑ भामा॑सो॒ याम॑न्न॒क्तव॑श्चिकित्रे ॥ ४ ॥

अ॒स्य । यामा॑सः । बृ॒ह॒तः । न । व॒ग्नून् । इन्धा॑नाः । अ॒ग्नेः । सख्यु॑ः । शि॒वस्य॑ ।
ईड्य॑स्य । वृष्णः॑ । बृ॒ह॒तः । सु॒ऽआसः॑ । भामा॑सः । याम॑न् । अ॒क्तवः॑ । चि॒कि॒त्रे ॥ ४ ॥

बृहतः महतः अस्य अग्नेः संबन्धिनः इन्धानाः दीप्यमानाः यामासः । यान्ति गच्छन्तीति यामा रश्मयः । वग्नून् स्तुतिकारिणो जनान् न बाधन्ते । किंच सख्युः स्तुत्यस्तोतृत्व-यष्टृयष्टव्यत्वलक्षणेन सख्येन सखिभूतस्य शिवस्य कल्याणस्य भक्तानां सुखकरस्य ईड्यस्य स्तोतव्यस्य वृष्णः कामानां वर्षितुः बृहतः महतः स्वासः शोभनास्यस्य अस्याग्नेः स्वभूताः अक्तवः तमांस्यञ्जन्तोऽपगमयन्त आहुतिभिः संगता वा भामासः । ‘भाम क्रोधे’। तीक्ष्णा अप्रसह्या रश्मयः यामन् । याति देवान् प्रति तर्पणाय यान्ति वा देवा एतं प्रत्यङ्गभावायेति यामा यज्ञः । तस्मिन् चिकित्रे सर्वतो जज्ञिरे । प्रथिता अभूवन् ॥

स्व॒ना न यस्य॒ भामा॑सः॒ पव॑न्ते॒ रोच॑मानस्य बृह॒तः सु॒दिवः॑ ।
ज्येष्ठे॑भि॒र्यस्तेजि॑ष्ठैः क्रीळु॒मद्भि॒र्वर्षि॑ष्ठेभि॒र्भा॒नुभि॒र्नक्ष॑ति॒ द्याम् ॥ ५ ॥

स्व॒नाः । न । यस्य॑ । भामा॑सः । पव॑न्ते । रोच॑मानस्य । बृ॒ह॒तः । सु॒ऽदिवः॑ ।
ज्येष्ठे॑भिः । यः । तेजि॑ष्ठैः । क्री॒ळु॒मत्ऽभिः॑ । वर्षि॑ष्ठेभिः । भा॒नुऽभिः॑ । नक्ष॑ति । द्याम् ॥ ५ ॥

रोचमानस्य दीप्यमानस्य बृहतः महतः सुदिवः शोभनदीप्तेर्वा[1] यस्य अग्नेः स्वभूताः भामासः । ‘भा दीप्तौ’। दीप्ता रश्मयः स्वना न स्वनन्तो मरुत इव पवन्ते सर्वतः शब्दं कुर्वन्तो गच्छन्ति । किंच यः अग्निः ज्येष्ठेभिः अत्यन्तं प्रशस्तैः तेजिष्ठैः तेजस्वितमैः क्रीळुमद्भिः क्रीडनवद्भिः वर्षिष्ठेभिः वृद्धतमैः भानुभिः[2] आत्मीयैस्तेजोभिः द्यां द्युलोकं नक्षति व्याप्नोतीति । स त्वं देवानावहेत्युत्तरेण संबन्धः ॥

अ॒स्य शुष्मा॑सो ददृ॒शा॒नप॑वे॒र्जेह॑मानस्य स्वनयन्नि॒युद्भिः॑ ।
प्र॒त्नेभि॒र्यो रुश॑द्भि॒र्दे॒वत॑मो॒ वि रेभ॑द्भिरर॒तिर्भाति॒ विभ्वा॑ ॥ ६ ॥

अ॒स्य । शुष्मा॑सः । द॒दृ॒शा॒नऽप॑वेः । जेह॑मानस्य । स्व॒न॒यन् । नि॒युत्ऽभिः॑ ।
प्र॒त्नेभिः॑ । यः । रुश॑त्ऽभिः । दे॒वऽत॑मः । वि । रेभ॑त्ऽभिः । अ॒र॒तिः । भाति॑ । वि॒ऽभ्वा॑ ॥ ६ ॥

ददृशानपवेः दर्शनीयज्वालाग्नेः । यद्वा । पविर्वज्र आयुधम् । दृश्यमानायुधस्य । जेहमानस्य । जेहतिर्गतिकर्मा । हविरादाय देवान् प्रति गच्छतः अस्य अग्नेः स्वभूताः शुष्मासः शोषकाः नियुद्भिः । ‘नियुतो वायोः’ इति वायोरश्वा नियुतः । तद्युक्तैः वायुभिः[3] संयुक्ता रश्मयः स्वनयन् शब्दायन्ते । किंच देवतमः देवानां मुख्यः अरतिः गन्ता विभ्वा विभवनशीलो महान् यः[4] अग्निः[4] प्रत्नेभिः पुराणैः रुशद्भिः श्वेतवर्णैः रेभद्भिः शब्दायमानैस्तेजोभिः वि भाति विविधं दीप्यते ॥

---

१. ग–शोभनदीप्तेः । २. त-भ-मु–भानुमद्भिः । ३. ग-भ२–वा नियुद्भिः; त३-भ१–वायुद्भिः । त-भ६–वा द्युभिः । ४. त१.२.५–श्यामिः; त४–सोम्भिः ।

स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः ।
अग्निः सुतुकः सुतुकेभिरश्वै रभस्वद्भी रभस्वाँ एह गम्याः ॥ ७ ॥

सः । आ । वक्षि । महि । नः । आ । च । सत्सि । दिवःपृथिव्योः । अरतिः । युवत्योः ।
अग्निः । सुऽतुकः । सुऽतुकेभिः । अश्वैः । रभस्वत्ऽभिः । रभस्वान् । आ । इह । गम्याः ॥७॥

हे अग्ने ˇसः तादृशस्त्वं ˇनः अस्मदीये यज्ञे ˇमहि महान्[1] देवान् ˇआ ˇवक्षि आवह प्रापय । किंच ˇयुवत्योः परस्परं मिश्रितयोः तरुण्योर्वा[2] ˇदिवस्पृथिव्योः द्यावापृथिव्योर्मध्ये ˇअरतिः अग्निः सूर्यात्मना गन्ता त्वम् ˇआ[3] ˇसत्सि अस्माकं यज्ञमासीद । तथा ˇसुतुकः । तुकिर्गत्यर्थः । सुगमः स्तोतृभिः यष्टृभिश्च सुखेन प्राप्तव्यः ˇरभस्वान् वेगवान् ˇअग्निः अङ्गनादिगुणयुक्तस्त्वं ˇसुतुकेभिः सुगमैः ˇरभस्वद्भिः वेगवद्भिः ˇअश्वैः रोहिदाख्यैः सह ˇइह अस्मदीये यज्ञे ˇआ ˇगम्याः आगच्छ ॥ ॥ ३१ ॥

' प्र ते ' इति सप्तर्चं चतुर्थं सूक्तम् । ऋष्याद्याः पूर्ववत् । ' प्र ते ' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु ।
धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥ १ ॥

प्र । ते । यक्षि । प्र । ते । इयर्मि । मन्म । भुवः । यथा । वन्द्यः । नः । हवेषु ।
धन्वन्ऽइव । प्रऽपा । असि । त्वम् । अग्ने । इयक्षवे । पूरवे । प्रत्न । राजन् ॥ १ ॥

हे अग्ने ˇते तुभ्यं हविः ˇप्र ˇयक्षि प्रयच्छामि । यजिर्दानार्थः । तथा ˇमन्म मननीयां स्तुतिं ˇते त्वदर्थं ˇप्र ˇइयर्मि प्रेरयामि प्रोच्चारयामि । ˇवन्द्यः सर्वैर्वन्दनीयस्त्वं ˇनः अस्मदीयेषु ˇहवेषु देवाह्वानेषु ˇयथा[4] त्वं संनिहितः ˇभुवः भवसि तथा हविः प्रयच्छामि स्तौमि च । हे ˇप्रत्न पुराण ˇराजन् सर्वस्य जगतः स्वामिन् हे ˇअग्ने सः ˇत्वम् ˇइयक्षवे यष्टुमिच्छते ˇपूरवे । पूरुरिति मनुष्यनाम[5] । मनुष्याय यजमानाय हविर्भिर्देवान् पूरयित्रे जनाय ˇधन्वन्निव ˇप्रपा ˇअसि । यथा धन्वन् धन्वनि मरौ निरुदकप्रदेशे प्रपा । प्रपिबन्त्यत्रेति प्रपा । सा यथोदकप्रदानेन जनेभ्यः सुखदा भवति एवं त्वं धनदानेन तस्मै सुखदाता भवसि ॥

यं त्वा जनासो अभि संचरन्ति गाव उष्णमिव व्रजं यविष्ठ ।
दूतो देवानामसि मर्त्यानामन्तर्महाँश्चरसि रोचनेन ॥ २ ॥

यम् । त्वा । जनासः । अभि । सम्ऽचरन्ति । गावः । उष्णम्ऽइव । व्रजम् । यविष्ठ ।
दूतः । देवानाम् । असि । मर्त्यानाम् । अन्तः । महान् । चरसि । रोचनेन ॥ २ ॥

हे ˇयविष्ठ युवतम अग्ने ˇयं[6] ˇत्वा त्वां ˇजनासः जना यजमानाः फलप्राप्त्यर्थम् ˇअभि ˇसंचरन्ति अभितः[7] परिचरन्ति[7] सेवन्ते । तत्र दृष्टान्तः । ˇगावः ˇउष्णमिव यथा गावः शीतार्ता उष्णं शीतजनितदुःखापनोदनार्थमुष्णं ˇव्रजं गोष्ठमभिगच्छन्ति तद्वत्[8] । स त्वं ˇदेवानाम् इन्द्रादीनां

१. ग३.६-भ-महतो । २. त-तरुण्योर्वा । ३. त४-आ च । ४. त-भ६-तथा । ५. त-' मनुष्यनाम ' नास्ति । ६. त-' यं ' नास्ति । ७. त-'अभितः परिचरंति ' नास्ति । ८. त-भ१-मु-' तद्वत् ' नास्ति ।

मर्त्यानां मनुष्याणां च दूतः असि हविष्प्रापणद्वारा । ततः महान् त्वम् अन्तः द्यावापृथिव्योर्मध्ये हवींष्यादाय रोचनेन अन्तरिक्षेण लोकेन चरसि गच्छसि । तं त्वां स्तुम इति शेषः ॥

शिशुं न त्वा जेन्यं वर्धयन्ती माता बिभर्ति सचनस्यमाना ।
धनोरधि प्रवता यासि हर्यञ्जिगीषसे पशुरिवावसृष्टः ॥ ३ ॥

शिशुम् । न । त्वा । जेन्यम् । वर्धयन्ती । माता । बिभर्ति । सचनस्यमाना ।
धनोः । अधि । प्रऽवता । यासि । हर्यन् । जिगीषसे । पशुःऽइव । अवऽसृष्टः ॥ ३ ॥

हे अग्ने जेन्यं जयशीलं त्वा त्वां शिशुं न पुत्रमिव वर्धयन्ती[1] पोषयन्ती माता पृथिवी सचनस्यमाना संपर्कमिच्छन्ती सती बिभर्ति धारयति । स त्वं हर्यन् कामयमानः[2] सन्नस्मिँल्लोके धनोरधि । अधिः सप्तम्यर्थद्योतकः । अन्तरिक्षात् प्रवता प्रवणेन मार्गेण यासि यज्ञं प्रत्यागच्छसि । किंच त्वम् अवसृष्टः यष्टृभिर्हविरादाय जिगीषसे देवान् प्रति गन्तुमिच्छसि । कथमिव । पशुरिव । यथा विमुक्तः पशुर्गोष्ठं प्रत्यागच्छति तद्वत् ॥

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ।
शये वव्रिश्चरति जिह्वयादन्रेरिह्यते युवतिं विश्पतिः सन् ॥ ४ ॥

मूराः । अमूर । न । वयम् । चिकित्वः । महिऽत्वम् । अग्ने । त्वम् । अङ्ग । वित्से ।
शये । वव्रिः । चरति । जिह्वया । अदन् । रेरिह्यते । युवतिम् । विश्पतिः । सन् ॥ ४ ॥

हे अमूर अमूढ अत एव चिकित्वः चेतनवन् हे अग्ने मूराः मूढाः वयं तव माहात्म्यं न जानीमः । किंतु हे अग्ने त्वमङ्ग । अङ्गेति निपात एवार्थे । त्वमेव तव महित्वं माहात्म्यं वित्से जानासि । त्वत्तः कोऽन्यो वेदितुमर्हति । किंच वव्रिः जीर्णः ओषधीसङ्घः शये शेते तिष्ठति । यद्वा । वव्रिरिति रूपनाम सामर्थ्याच्चान्तर्णीतमत्वर्थं द्रष्टव्यम् । आहवनीयाख्येन रूपेण रूपवान् शये चरति । अथ जिह्वया[3] ज्वालाख्यया अदन् हवींषि भक्षयन् चरति । वाक्यभेदादनिघातः । किंच विश्पतिः विशां स्वामी सन् अग्निः युवतिम् आत्मनो मिश्रयित्रीमाहुतिं दीर्घं-प्रसृतया[4] ज्वालया जिह्वया रेरिह्यते अत्यर्थं लेढि आस्वादयति ॥ 'लिह आस्वादने'। यङि रूपम् । यद्वा । सोऽग्निर्युवतिं तरुणीं जीर्णौषधिकां[5] पृथिवीमास्वादयति ॥

कूचिज्जायते सनयासु नव्यो वने तस्थौ पलितो धूमकेतुः ।
अस्नातापो वृषभो न प्र वेति सचेतसो यं प्रणयन्त मर्ताः ॥ ५ ॥

कूऽचित् । जायते । सनयासु । नव्यः । वने । तस्थौ । पलितः । धूमऽकेतुः ।
अस्नाता । आपः । वृषभः । न । प्र । वेति । सऽचेतसः । यम् । प्रऽनयन्त । मर्ताः ॥५॥

नव्यः नवतरः स्तुत्यो वाग्निः कूचित् क्वचित् प्रदेशे जायते । कुत्र । सनयासु पुराणीषु जीर्णास्वोषधीष्वरण्योः । तथा पलितः पालयिता श्वेतवर्णः धूमकेतुः धूमप्रज्ञानोऽग्निः वने सर्व-

---

१. त-म६-'वर्धयंती' नास्ति । २. त-म६-कामानान् । ३. त१.४.५-म६-जिह्वा; त२.४.७-मु-जिह्वया जिह्वा । ४. त-°प्रमृतया । ५. त१.२.६.७-म६-जीर्णास्वधिकां; त४.५-जीर्णोस्वाधिकां

स्मिन्नरण्ये vतस्थौ तिष्ठति। यद्वा। वन उदके मेघगते विद्युदात्मना तिष्ठति च। vअस्नाता स्नानमकुर्वन्ननपेक्षितस्नानः सर्वदा शुद्धः सोऽग्निः vआपः। सुब्व्यत्ययः। अप उदकानि शान्त्यर्थं vप्र vवेति प्रगच्छति। तत्र दृष्टान्तः। vवृषभो vन। यथा वृषभस्तृष्णोपशमनार्थमरण्यमध्यस्थान्युदकानि प्रगच्छति तद्वत्। vमर्ताः मनुष्या ऋत्विजः vसचेतसः समानमनस्काः समानप्रज्ञानाः सन्तः vयम् अग्निं vप्रणयन्त हविर्भिः प्रीणयन्ति॥

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम्।
इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः॥ ६॥

तनूत्यजाऽइव। तस्करा। वनर्गू इति। रशनाभिः। दशऽभिः। अभि। अधीताम्।
इयम्। ते। अग्ने। नव्यसी। मनीषा। युक्ष्व। रथम्। न। शुचयत्ऽभिः। अङ्गैः॥ ६॥

हे अग्ने vवनर्गू वनगामिनौ vतनूत्यजा[1] चौर्ये मर्तुं कृतनिश्चयौ धृष्टौ vतस्करा तस्करौ यथा पथिकं मोषणार्थं रज्ज्वा बद्ध्वाकृष्य च क्वचित् प्रदेशे स्थापयतः तद्वत्[2]। तथा यास्कः—'तनूत्यक् तनूत्यक्ता वनर्गू वनगामिनावग्निमन्थनौ बाहू तस्कराभ्यामुपमिमीते' (निरु. ३. १४) इत्यादि[3]। अधीताम्॥ दधातेर्लुङि सिचो लुकि 'छन्दस्युभयथा' इति तस आर्धधातुकत्वेन ङित्वात् 'घुमास्था॰' इतीकारः। ततो हे vअग्ने vते त्वदर्थं vनव्यसी नवतरा vइयं vमनीषा स्तुतिर्मया क्रियते। एतज्ज्ञात्वा vशुचयद्भिः सर्वं प्रकाशयद्भिरात्मीयैः vअङ्गैः तेजोभिः आत्मानं मदीयं यज्ञं प्रति vयुक्ष्व योजय। कथमिव। vरथं vन। यथा[4] रथमश्वैः संयोजयन्ति तद्वत्॥

उखासंभरणीयेष्टावग्नेर्ब्रह्मण्वतो याज्या 'ब्रह्म च ते' इत्येषा। सूत्रितं च—'ब्रह्म च ते जातवेदो नमश्च पुरूण्यग्ने पुरुधा त्वाया' (आश्व. श्रौ. ४. १) इति॥

ब्रह्म च ते जातवेदो नमश्चेयं च गीः सदमिद्वर्धनी भूत्।
रक्षा णो अग्ने तनयानि तोका रक्षोत नस्तन्वो३ अप्रयुच्छन्॥ ७॥

ब्रह्म। च। ते। जातऽवेदः। नमः। च। इयम्। च। गीः। सदम्। इत्। वर्धनी। भूत्।
रक्ष। नः। अग्ने। तनयानि। तोका। रक्ष। उत। नः। तन्वः। अप्रऽयुच्छन्॥ ७॥

हे vजातवेदः जातप्रज्ञाग्ने vते त्वदर्थं vब्रह्म अस्माभिर्दीयमानं हवीरूपमन्नं[5] vवर्धनी वर्धनं vभूत् भवतु। तथा vनमः नमस्कारश्च। किंच vइयम् इदानीं क्रियमाणैषा स्तुतिः vसदमित् सदैव vवर्धनी वर्धयित्री vभूत् भवतु। तस्माद्धे vअग्ने vनः अस्माकं vतनयानि पुत्रान् vतोका पौत्रांश्च vरक्ष पालय। vउत अपि च vअप्रयुच्छन् अप्रमाद्यंस्त्वं vनः अस्माकं vतन्वः अङ्गानि vरक्ष॥　॥ ३२॥

'एकः समुद्रः' इति सप्तर्चं पञ्चमं सूक्तम्। ऋष्याद्याः पूर्ववत्। विनियोगश्च। 'एकः' इत्यनुक्रान्तम्॥

---

१. त१.२.६–तनूत्यजेव; भ६–तनूत्यजे। २. ग–तद्वत् अंगुलिभिर्दशभिः मम बाहू त्वामबध्नीतां। ३. त१.२.६.७-मु–इत्यादि रशनाभिर्दशभिरंगुलिभिः कृत्वा रज्जुभिः अभ्यधीतां अभ्यधायि। ४. त१.२.६.७–यथा रथिकः रथं अश्वैर्योजयति तद्वत् यज्ञं प्रति लक्ष योजय। कथमिव रथं न यथा। ५. त१.२.७-भ६–हवीरूपमद्भुतमन्नं।

एकः समुद्रो धरुणो रयीणामस्मद्धृदो भूरिजन्मा वि चष्टे ।
सिषक्त्यूधर्निण्योरुपस्थ उत्सस्य मध्ये निहितं पदं वेः ॥ १ ॥

एकः । समुद्रः । धरुणः । रयीणाम् । अस्मत् । हृदः । भूरिऽजन्मा । वि । चष्टे ।
सिसक्ति । ऊधः । निण्योः । उपऽस्थे । उत्सस्य । मध्ये । निऽहितम् । पदम् । वेरिति वेः ॥ १ ॥

ᵛसमुद्रः यस्माद्धनान्युदकानि वा समुद्रवन्तीति तादृशः ᵛरयीणां धनानां ᵛधरुणः धारयिता ᵛएकः असहायः ᵛभूरिजन्मा बहुविधजननो नानायज्ञेष्वाहवनीयादिभावेन बहुजननः सोऽग्निः ᵛअस्मत् ॥ 'सुपां सुलुक्' इति षष्ठ्या लुक् । अस्माकं ᵛहृदः हृदयान्यभिलषितानि ᵛवि ᵛचष्टे विपश्यति[1] जानाति । उक्तं च—'मनो वै देवा मनुष्यस्य जानन्ति[2]' इति । किंच ᵛनिण्योः । अन्तर्हितनामैतत् । अन्तर्हितयोर्ज्योतिस्तमोभ्यामाच्छादितयोः प्रातःसायंकालयोः ᵛउपस्थे उपस्थाने समीपे वर्तमानम् ᵛऊधः रात्रिं ᵛसिषक्ति सेवते उपजीवति । यद्वा । निण्योरन्तर्हितस्यान्तरिक्षस्य समीपे वर्तमानमूधो मेघं सेवते । अथ प्रत्यक्षः । हे अग्ने ᵛउत्सस्य उदकधारकस्य[3] लोकस्य ᵛमध्ये ᵛपदम् अपां स्थानं ᵛनिहितम् । तत् माध्यमिकां वाचं ᵛवेः गच्छ । यद्वा । उत्सस्य मेघस्य मध्ये निहितं पदं विद्युदाख्यं तत् स्वात्मतया[4] गच्छ ॥ वेः । वी गत्यादिषु । लङि सिपि रूपम् । वाक्यभेदादनिघातः ॥

समानं नीळं वृषणो वसानाः सं जग्मिरे महिषा अर्वतीभिः ।
ऋतस्य पदं कवयो नि पान्ति गुहा नामानि दधिरे पराणि ॥ २ ॥

समानम् । नीळम् । वृषणः । वसानाः । सम् । जग्मिरे । महिषाः । अर्वतीभिः ।
ऋतस्य । पदम् । कवयः । नि । पान्ति । गुहा । नामानि । दधिरे । पराणि ॥ २ ॥

ᵛवृषणः आहुतीनां सेक्तारः ᵛसमानम् एकं ᵛनीळं स्थानमग्निं ᵛवसानाः मन्त्रैः आच्छादयन्तः ᵛमहिषाः महान्तो यजमानाः ᵛअर्वतीभिः वडवाभिः ᵛसं ᵛजग्मिरे समगच्छन्त । अश्ववन्तोऽभूवन् । यद्वा । अग्निमेवात्मीययज्ञं प्रत्यागन्तुं रोहिदाख्याभिर्वडवाभिः संयोजितवन्तः । तथा ᵛकवयः मेधाविनः ᵛऋतस्य उदकस्य ᵛपदम् आवासस्थानमग्निं ᵛनि ᵛपान्ति नितरां रक्षन्ति । हविर्भिः स्तुतिभिश्च आराधयन्तीत्यर्थः[5] । ततः ᵛगुहा गुहायामन्तरिक्षे स्थितानि दिव्यानि ᵛनामानि उदकानि ᵛदधिरे धारयन्ति । यद्वा । गुहा गृहे संवृते हृदये ᵛपराणि प्रधानान्यग्निर्जातवेदा वैश्वानर इत्यादीनि नामानि दधिरे कुर्वन्ति । स्तुवन्तीत्यर्थः ॥

ऋतायिनी मायिनी सं दधाते मित्वा शिशुं जज्ञतुर्वर्धयन्ती ।
विश्वस्य नाभिं चरतो ध्रुवस्य कवेश्चित्तन्तुं मनसा वियन्तः ॥ ३ ॥

ऋतयिनी इत्यृतऽयिनी । मायिनी इति । सम् । दधाते इति ।
मित्वा । शिशुम् । जज्ञतुः । वर्धयन्ती इति ।
विश्वस्य । नाभिम् । चरतः । ध्रुवस्य । कवेः । चित् । तन्तुम् । मनसा । विऽयन्तः ॥ ३ ॥

---

१. त–विनश्यति । २. त-भ२–जानाति । ३. त३-भ२–उदकधारस्य; भ१.४.७–उदकाधारस्य लोकधारस्य; भ६–उदकाधारकस्य । ४. ग–स्वात्मनोप; त१.२.५.७–स्वान्यतया; त४–स्वात्यंततया; भ२–स्वात्म्यतया । ५. त-भ१.४.६–रोधयंतीत्यर्थः ।

ᐯऋतायिनी ऋतवत्यौ सत्यवत्यौ अत एव ᐯमायिनी प्रज्ञावत्यौ कर्मयुक्ते वा[1] द्यावापृथिव्यौ यज्ञसाधनभूते[2] अरणी वा इममग्निं ᐯसं ᐯदधाते सम्यक् धारयतः। अग्निसूर्यात्मना केवलाग्न्यात्मना वा संदधाते। ᐯमित्वा कालपरिमाणं कृत्वा यद्वा संपरिच्छिद्य ᐯशिशुं शंसनीयं बालमग्निं ᐯजज्ञतुः जनयतः। ᐯवर्धयन्ती वर्धयन्त्यौ द्यावापृथिव्यौ लोके यथा परिच्छेदाय पुत्रं पितरौ जनयतस्तद्वत्। ततः ᐯविश्वस्य सर्वस्य ᐯचरतः जङ्गमस्य ᐯध्रुवस्य स्थावरस्य च जगतः ᐯनाभिं नाभिभूतं मध्यं प्रधानभूतं वा ᐯकवेः मेधाविनोऽग्नेः ᐯतन्तुं तनितारं वैश्वानराख्यमंशमेव ᐯमनसा ᐯवियन्तः विविधं गच्छन्तो मनुष्याः सुखेन युज्यन्त इति शेषः। तं वयं यजाम इति[3] ॥

**ऋतस्य हि वर्तनयः सुजातमिषो वाजाय प्रदिवः सचन्ते।**
**अधीवासं रोदसी वावसाने घृतैरन्नैर्वावृधाते मधूनाम् ॥ ४ ॥**

ऋतस्य। हि। वर्तनयः। सुऽजातम्। इषः। वाजाय। प्रऽदिवः। सचन्ते।
अधीवासम्। रोदसी इति। ववसाने इति। घृतैः। अन्नैः। ववृधाते इति। मधूनाम् ॥ ४ ॥

ᐯऋतस्य यज्ञस्य ᐯवर्तनयः प्रवर्तकाः[4] ᐯइषः अभिलषितानीच्छन्तः ᐯप्रदिवः पुरातना ऋत्विग्यजमानाः ᐯसुजातम् आधानकाले सुष्ठूत्पन्नमग्निं ᐯवाजाय बलार्थमन्नार्थं वा ᐯसचन्ते ᐯहि सेवन्ते खलु। अपि च ᐯवावसाने सर्वस्य जगत आच्छादयित्र्यौ ᐯरोदसी द्यावापृथिव्यौ ᐯअधीवासम् ओषधिनक्षत्राद्यात्मना निवसन्तम्। यद्वा। अधिरुपर्यर्थे। त्रयाणां लोकानामुपर्यग्निविद्युदादित्यात्मना निवसन्तम्। अग्निं ᐯमधूनाम् उदकानां जन्यत्वेन संबन्धिभिः ᐯघृतैरन्नैः पुरोडाशादिभिश्च ᐯवावृधाते वर्धयां चक्रतुः। वर्धयतः। तस्माद्वयमपि तमग्निमभिष्टुम इत्यभिप्रायः ॥

**सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम्।**
**अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥ ५ ॥**

सप्त। स्वसॄः। अरुषीः। वावशानः। विद्वान्। मध्वः। उत्। जभार। दृशे। कम्।
अन्तः। येमे। अन्तरिक्षे। पुराऽजाः। इच्छन्। वव्रिम्। अविदत्। पूषणस्य ॥ ५ ॥

ᐯवावशानः कामयमानो वाश्यमानः[5] स्तोतृभिः स्तूयमानो वा ᐯविद्वान् सर्वं जानानः सोऽग्निः ᐯअरुषीः आरोचमानाः ᐯसप्त सप्तसंख्याकाः ᐯस्वसॄः स्वयंसारिणीः ‘काली कराली च’ (मु. उ. १. २. ४) इत्यादिकाः सप्त जिह्वाः ᐯमध्वः मदकरात् यज्ञात् ᐯउज्जभार उज्जहार। ऊर्ध्वं हृतवान्। यज्ञे स्वतेजसा प्रादुर्भूत इत्यर्थः। किमर्थम्। ᐯकं सुखेन ᐯदृशे सर्वेषामेव पदार्थानां दर्शनार्थम्। किंच ᐯपुराजाः पुराजातः सोऽग्निर्द्यावापृथिव्योः ᐯअन्तः मध्ये ᐯअन्तरिक्षे स्थितः[6] ता जिह्वाः ᐯयेमे नियमितवान्। सर्वत्र तेजोयुक्तो वर्तत इत्यर्थः। अपि च ᐯइच्छन् यजमानान् कामयमानोऽग्निः ᐯपूषणस्य। पूषेति पृथिवीनाम। पार्थिवस्य लोकस्य ᐯवव्रिं रूपं पृश्निवर्णम् ᐯअविदत् प्रायच्छत्। यद्वा। ‘मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्’ (ऋ. सं. १०.८८.६) इति मन्त्रान्तरे दर्शनादादित्यात्मनाग्निः स्तूयते। कामयमानः सूर्यात्माग्निः सप्तसंख्याकान् स्वसॄ रश्मीन् मध्वः समुद्रोदकादुद्धृतवान्। ततोऽन्तरिक्षे विद्युदात्मना स्थित्वा वृष्टिलक्षणं रूपं पृथिव्याः प्रायच्छदिति ॥

१. त-भ६-‘वा’ नास्ति। २. त-°भूतौ। ३. त-भ१.२.४.६-मु-इति वा। ४. त-भ२.४.६-प्रवर्तनकाः। ५. ग-शब्द्यमानः; त-भ२.६-मु-वाश्यमानः वेष्टयमानः; भ५-शब्द्यमानः। ६. त-भ२.६-मु-तस्मिन्; भ१.४-वस्मिन्; भ७-च स्थितः।

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥ ६ ॥

सप्त । मर्यादाः । कवयः । ततक्षुः । तासाम् । एकाम् । इत् । अभि । अंहुरः । गात् ।
आयोः । ह । स्कम्भः । उपऽमस्य । नीळे । पथाम् । विऽसर्गे । धरुणेषु । तस्थौ ॥ ६ ॥

ᐯकवयः मेधाविन ऋषयः ᐯसप्त ᐯमर्यादाः । कामजेभ्यः क्रोधजेभ्यश्चोद्धृताः पानमक्षाः स्त्रियो मृगया दण्डः पारुष्यमन्यदूषणमिति सप्त मर्यादाः । यद्वा । ' स्तेयं गुरुतल्पारोहणं ब्रह्महत्यां सुरापानं दुष्कृतकर्मणः पुनःपुनः सेवां पातकेऽनृतोद्यम् ' ( निरु. ६. २७ ) इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः । अवस्थिताः ᐯततक्षुः । तक्षतिः करोतिकर्मा । सुष्ठु लङ्घनीयाश्चक्रुः । त्यक्तवन्त इत्यर्थः । ᐯतासां मर्यादानाम् ᐯएकामित् एकामेव ᐯअंहुरः पापवान् पुरुषः ᐯअभि ᐯगात् अभिगच्छति । यस्त्वेवं करोति स पापवान् भवतीत्यर्थः । किंच ᐯआयोः तस्य मनुष्यस्य ᐯस्कम्भः स्कम्भयिता निरोधकोऽग्निः ᐯउपमस्य समीपभूतस्यायोः ᐯनीळे स्थाने ᐯपथाम् आदित्यरूपस्य स्वस्य रश्मीनां ᐯविसर्गे विसर्जनस्थानेऽन्तरिक्षमध्ये वर्तमानेषु ᐯधरुणेषु उदकेषु ᐯतस्थौ विद्युदात्मना तिष्ठति । अनेन लोकत्रयवर्तित्वमिति ॥

असच्च सच्च परमे व्योमन्दक्षस्य जन्मन्नदितेरुपस्थे ।
अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः ॥ ७ ॥

असत् । च । सत् । च । परमे । विऽओमन् । दक्षस्य । जन्मन् । अदितेः । उपऽस्थे ।
अग्निः । ह । नः । प्रथमऽजाः । ऋतस्य । पूर्वे । आयुनि । वृषभः । च । धेनुः ॥ ७ ॥

ᐯअसत् अव्याकृतं ᐯसच्च व्याकृतम् । ' असदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत् ' ( छा. उ. ३. १९. १ ) इति श्रुतेः । सदसदात्मकं जगत् सर्वं ᐯपरमे उत्तमे ज्ञानसहिते ᐯव्योमन् व्योमनि कारणात्मनि जातमभूत् सदा । ᐯअदितेः पृथिव्याः ᐯउपस्थे उपस्थाने समीपे ᐯदक्षस्य प्रजापतेः । यद्वा दक्षस्य । ' स त्रेधात्मानं व्यभजतादित्यं तृतीयं वायुं तृतीयम् ' (श. ब्रा. १०. ६. ५. ३ ) इति श्रुतेः तृतीयस्य द्युलोकस्याभिष्ठातृत्वादादित्यस्य । ᐯजन्मन् जन्मनि । तत एवं सति मनुष्यस्य सृष्टिक्रमात् पूर्वम् ᐯअग्निर्ह अग्निरेव ᐯऋतस्य[1] कर्मफलस्य भोक्तॄणां ᐯनः अस्माकं ᐯप्रथमजाः प्रथममेव जातः समुत्पन्नः । ' तेजो रसो निरवर्तताग्निः ' ( श. ब्रा. १०. ६. ५. २; बृ. उ. १. १. २. २ ) इति श्रवणात् । पश्चात् तत्प्रकरणे ' ततो मनुष्या अजायन्त ' इति प्रथमत एव मनुष्यसृष्टेरभिहितत्वात् अनन्तरं ᐯपूर्वे उत्तरसृष्टिमपेक्ष्य पूर्वस्मिन् ᐯआयुनि कालेऽयमग्निरेव ᐯवृषभश्च आसीत् । ᐯधेनुः च अभवत् । स्त्रीपुंसवत् स्त्रीपुंसात्मकोऽभवदित्यर्थः ॥ ॥ ३३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल-
साम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके पञ्चमोऽध्यायः ॥

---

१. ग–ऋतस्य सत्यभूतस्य; त१–ऋतस्य भूतस्य ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
सप्तमस्याष्टकस्येत्थं व्याकार्षीत् पञ्चमं सुधीः।
सायणाह्वस्ततः षष्ठमध्यायं व्याचिकीर्षति ॥

दशमे मण्डले प्रथमेऽनुवाके षोडश सूक्तानि। तत्र 'अयं स यस्य' इति सप्तर्चं षष्ठं सूक्तमाप्त्यस्य त्रितस्यार्षं त्रैष्टुभमाग्नेयम्। 'अयम्' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

**अयं स यस्य शर्मन्नवोभिरग्नेरेधते जरिताभिष्टौ।**
**ज्येष्ठेभिर्यो भानुभिर्ऋषूणां पर्येति परिवीतो विभावा ॥ १ ॥**

अयम्। सः। यस्य। शर्मन्। अवःऽभिः। अग्नेः। एधते। जरिता। अभिष्टौ।
ज्येष्ठेभिः। यः। भानुऽभिः। ऋषूणाम्। परिऽएति। परिऽवीतः। विभाऽवा ॥ १ ॥

ˇजरिता स्तोता ˇअभिष्टौ यागे कृते[1] ˇयस्य. ˇअग्नेः ˇअवोभिः पालनैः[2] ˇशर्मन् शर्मणि स्वगृहे ˇएधते वर्धते ˇसः ˇअयम् अग्निर्यागार्थमस्माभिराहूत इति शेषः। ˇविभावा दीप्तिमान् ˇयः अग्निः ˇऋषूणां सूर्यरश्मीनां ˇज्येष्ठेभिः प्रशस्तैः ˇभानुभिः तेजोभिः ˇपरिवीतः परिवृतः ˇपर्येति सर्वतो गच्छति। यत्र यत्र गन्तव्यं तत्र तत्राप्रतिहतगतिर्गच्छतीत्यर्थः ॥

**यो भानुभिर्विभावा विभात्यग्निर्देवेभिर्ऋतावाजस्रः।**
**आ यो विवाय सख्या सखिभ्योऽपरिह्वृतो अत्यो न सप्तिः ॥ २ ॥**

यः। भानुऽभिः। विभाऽवा। विऽभाति। अग्निः। देवेभिः। ऋतऽवा। अजस्रः।
आ। यः। विवाय। सख्या। सखिऽभ्यः। अपरिऽह्वृतः। अत्यः। न। सप्तिः ॥ २ ॥

ˇऋतवा सत्यवानुदकवान्[3] यज्ञवान् वा ˇअजस्रः अनुपक्षीणोऽहिंसितो वा। केनचिदनभिभूत इत्यर्थः। ˇविभावा दीप्तिमान् ˇयः ˇअग्निर्देवेभिः देवैर्द्योतमानैः ˇभानुभिः तेजोभिः ˇविभाति विविधं दीप्यते किंच ˇयः अग्निः ˇसख्या सख्यानि सखिभिः कर्तव्यानि कर्माणि हविरादीनि। कर्तुमिति शेषः। ˇसखिभ्यः सखिभूतानां यजमानानामर्थाय ˇअपरिह्वृतः अपरिहिंसितः। अपरिश्रान्त इत्यर्थः। ˇआ ˇविवाय आभिमुख्येन गच्छति। तत्र दृष्टान्तः। ˇसप्तिः। सदासर्पण[4] इत्यर्थः। ˇअत्यो ˇन यथा सततगमनसमर्थोऽश्वोऽपरिश्रान्तो गच्छति तद्वत्। सोऽयमग्निरस्माभिर्यागार्थमाहूत इति पूर्ववद्योज्यम् ॥

**ईशे यो विश्वस्या देववीतेरीशे विश्वायुरुषसो व्युष्टौ।**
**आ यस्मिन्मना हवींष्यग्नावरिष्टरथः स्कभ्नाति शूषैः ॥ ३ ॥**

---

१. ग-त३भ-कृते सति। २. त-पालकैः। ३. त१.२.५.६-भ६-सत्यवाकवान्; त४-सत्यवाक्यवान्; त७-सत्यवाक्वान्; मु-सत्यवान्। ४. ग-सदासर्पणशील; त२.४.६.७-सदामर्पण; त५-सदासर्षण; भ१.४-सदापर्वण।

ईशे । यः । विश्वस्याः । देवऽवीतेः । ईशे । विश्वऽआयुः । उषसः । विऽउष्टौ ।
आ । यस्मिन् । मना । हवींषि । अग्नौ । अरिष्टऽरथः । स्कभ्नाति । शूषैः ॥ ३ ॥

ᵛयः अग्निः ᵛविश्वस्याः ᵛदेववीतेः सर्वस्य यज्ञस्य ᵛईशे ईष्टे । अपि च ᵛविश्वायुः सर्वत्राप्रतिहतगमनः ᵛउषसो ᵛव्युष्टौ विवासन उदयकाले[1] होमार्थं यजमानानाम् ᵛईशे ईष्टे । ᵛशूषैः शत्रुबलैः ᵛअरिष्टरथः अहिंसितयज्ञरथः सर्व एव यजमानः ᵛयस्मिन् ᵛअग्नौ ᵛमना मननीयानि ᵛहवींषि ᵛआ ᵛस्कभ्नाति आदरेण प्रतिबध्नाति प्रक्षिपति । सोऽयमग्निरस्माभिर्यागार्थमाहूत इत्यर्थः ॥

**शूषेभिर्वृधो जुषाणो अर्कैर्देवाँ अच्छा रघुपत्वा जिगाति ।**
**मन्द्रो होता स जुह्वा३ यजिष्ठः संमिश्लो अग्निरा जिघर्ति देवान् ॥ ४ ॥**

शूषेभिः । वृधः । जुषाणः । अर्कैः । देवान् । अच्छ । रघुऽपत्वा । जिगाति ।
मन्द्रः । होता । सः । जुह्वा । यजिष्ठः । सम्ऽमिश्लः । अग्निः । आ । जिघर्ति । देवान् ॥ ४ ॥

ᵛवृधः वर्धितोऽग्निः[2] ᵛशूषेभिः हविर्लक्षणैर्बलैः[3] । बलनिमित्तैर्हविर्भिरित्यर्थः । ᵛअर्कैः स्तोत्रैश्च ᵛजुषाणः सेव्यमानः सन् ᵛदेवान् इन्द्रादीन् ᵛअच्छ आप्तुं ᵛरघुपत्वा लघुपतनः शीघ्रगामी ᵛजिगाति गच्छति[4] । गत्वा च ᵛमन्द्रः स्तुत्यः ᵛहोता देवानामाह्वाता[5] होमनिष्पादको वा ᵛयजिष्ठः यष्टृतमः ᵛसंमिश्लः स्वगुणैर्देवैर्वा संप्रयुक्तः ᵛसः ᵛअग्निः ᵛदेवान् प्रति हविः ᵛआ ᵛजिघर्ति आहारयति । देवेभ्यो हविर्ददातीत्यर्थः[5] ॥

**तमुस्रामिन्द्रं न रेजमानमग्निं गीर्भिर्नमोभिरा कृणुध्वम् ।**
**आ यं विप्रासो मतिभिर्गृणन्ति जातवेदसं जुह्वं सहानाम् ॥ ५ ॥**

तम् । उस्राम् । इन्द्रम् । न । रेजमानम् । अग्निम् । गीःऽभिः । नमःऽभिः । आ । कृणुध्वम् ।
आ । यम् । विप्रासः । मतिऽभिः । गृणन्ति । जातऽवेदसम् । जुह्वम् । सहानाम् ॥ ५ ॥

हे ऋत्विजो यूयम् ᵛउस्रां भोगानामुत्स्राविणं दातारं ᵛरेजमानं ज्वालात्मना कम्पमानं ᵛतम् ᵛअग्निम् ᵛइन्द्रं ᵛन इन्द्रमिव ᵛगीर्भिः स्तुतिभिः ᵛनमोभिः हविर्भिश्च ᵛआ ᵛकृणुध्वम् । अस्मदभिमुखं कुरुत[6] । ᵛविप्रासः मेधाविनः स्तोतारः ᵛसहानां शत्रुबलाद्यभिभवितॄणां देवानां ᵛजुह्वम् आह्वातारं ᵛजातवेदसं जातधनं जातप्रज्ञं वा ᵛयम् अग्निम् ᵛआ ᵛगृणन्ति आदरेण स्तुवन्ति । तमा कृणुध्वमिति पूर्वेण संबन्धः ॥

**सं यस्मिन्विश्वा वसूनि जग्मुर्वाजे नाश्वाः सप्तीवन्त एवैः ।**
**अस्मे ऊतीरिन्द्रवाततमा अर्वाचीना अग्न आ कृणुष्व ॥ ६ ॥**

सम् । यस्मिन् । विश्वा । वसूनि । जग्मुः । वाजे । न । अश्वाः । सप्तिऽवन्तः । एवैः ।
अस्मे इति । ऊतीः । इन्द्रवातऽतमाः । अर्वाचीनाः । अग्ने । आ । कृणुष्व ॥ ६ ॥

---

१. भ२–उषःकाले । २. त-भ२.६–पंडितोग्निः; भ१–पिंडितोग्निः । ३. त-भ६–हविर्युक्तैर्बलैः । ४. त-मु–'गच्छति' नास्ति । ५. ग–यष्टृतमः होमसाधनज्वालया संगतः अग्निः देवानिंद्रादीनाजुहोति । ६. त-भ६–कुरुध्वं ।

हे अग्ने ᐯयस्मिन् त्वयि विश्वानि[1] ᐯवसूनि धनानि ᐯसं ᐯजग्मुः स्वत्वेन संगतानि भवन्ति। तत्र दृष्टान्तः। ᐯएवैः[2] गमनैः ᐯसस्नीवन्तः सर्पणवन्तः शीघ्रगमनसमर्थाः[3] ᐯअश्वाः ᐯवाजे ᐯन यथा संग्रामे संगतास्तद्वत्। हे ᐯअग्ने स त्वम् ᐯइन्द्रवाततमाः इन्द्रेणाभिगमाः ᐯऊतीः रक्षाः ᐯअस्मे अस्मासु ᐯअर्वाचीनाः अभिमुखीः ᐯआ ᐯकृणुष्व आदरेण कुरु॥

अधा ह्यग्ने मह्ना निषद्या सद्यो जज्ञानो हव्यो बभूथ।
तं ते देवासो अनु केतमायन्नधावर्धन्त प्रथमास ऊमाः॥ ७॥

अध। हि। अग्ने। मह्ना। निऽसद्य। सद्यः। जज्ञानः। हव्यः। बभूथ।
तम्। ते। देवासः। अनु। केतम्। आयन्। अध। अवर्धन्त। प्रथमासः। ऊमाः॥ ७॥

ᐯअध[4] अनन्तरं ᐯहि यस्माद्धे ᐯअग्ने त्वं ᐯमह्ना महत्त्वेन ᐯजज्ञानः जायमानो ज्वलन् ᐯनिषद्य उपविश्य ᐯसद्यः तस्मिन् प्रजननकाल एव ᐯहव्यः हवनार्हं आहुतिप्रक्षेपार्हः ᐯबभूथ भवसि तस्मात् कारणात् ᐯदेवासः हविषां दातारः ऋत्विग्यजमानाः ᐯते तव स्वभूतं ᐯतं तादृशं ᐯकेतं प्रज्ञानलक्षणम् ᐯअनु ᐯआयन् अनुगच्छन्ति। दीप्ते त्वयि हवींषि जुह्वतीत्यर्थः। ᐯअध[5] अनन्तरमृत्विगादयः ᐯप्रथमासः क्रियाभिजनविद्यागुणैरुत्कृष्टाः ᐯऊमाः त्वया रक्षिताः सन्तः ᐯअवर्धन्त वर्धन्ते॥ ॥१॥

'स्वस्ति नः' इति सप्तर्चं सप्तमं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'स्वस्ति' इत्यनुक्रान्तम्। उक्तः सूक्तविनियोगः। स्वस्त्ययन्यां प्रधानस्य 'स्वस्ति नः' इत्येषानुवाक्या। सूत्रितं च—'अग्निः स्वस्तिमान् स्वस्ति नो दिवो अग्ने पृथिव्याः' (आश्व. श्रौ. २. १०) इति॥

स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव।
सचेमहि तव दस्म प्रकेतैरुरुष्या ण उरुभिर्देव शंसैः॥ १॥

स्वस्ति। नः। दिवः। अग्ने। पृथिव्याः। विश्वऽआयुः। धेहि। यजथाय। देव।
सचेमहि। तव। दस्म। प्रऽकेतैः। उरुष्य। नः। उरुऽभिः। देव। शंसैः॥ १॥

हे ᐯदेव दानादिगुणविशिष्ट ᐯअग्ने त्वं ᐯदिवः ᐯपृथिव्याः द्यावापृथिव्योः सकाशात् ᐯनः अस्मभ्यं ᐯविश्वायुः सर्वान्नं ᐯस्वस्ति पुत्रादि[6] ᐯयजथाय देवयागार्थं ᐯधेहि प्रयच्छ। सर्वोपद्रवरहिताः सर्वान्नपुत्रयुक्ताश्च[7] सन्तो वयं यथा यज्वानो भवेम तथास्मान् कुर्विति वाक्यशेषः। अपि च वयं ᐯसचेमहि[8]। हे ᐯदस्म दर्शनीय ᐯदेव अग्ने ᐯउरुभिः बहुभिः ᐯशंसैः शंसनीयैः ᐯतव संबन्धिभिः ᐯप्रकेतैः पालनोपायप्रज्ञानैः ᐯनः अस्मान् ᐯउरुष्य रक्ष॥

इमा अग्ने मतयस्तुभ्यं जाता गोभिरश्वैरभि गृणन्ति राधः।
यदा ते मर्तो अनु भोगमानड्वसो दधानो मतिभिः सुजात॥ २॥

१. ग-त३.७-भ५.६-मु—विश्वा विश्वानि; त१—विश्वा। २. त—एतैः। ३. त-भ६-मु—शीघ्रगमनशीलाः समर्थाः। ४. त२—अथ; भ१.४.७—अधाथ; भ६—अधा। ५. त१.२.५.७-भ६—अथ; त३-भ१.२.४.७—अधाथ। ६. ग—पुत्राद्यविनाशाय; त—पुत्रा; त३-भ५.६—पुत्राद्यविनाशं। ७. त-भ२.६—सर्वान्नयुक्ताश्च; त३-भ१.४.७—सर्वान्नपुत्राश्च। ८. भ५—सचेमहि त्वां सेवेमहि।

इमाः । अग्ने । मतर्यः । तुभ्यम् । जाताः । गोभिः । अश्वैः । अभि । गृणन्ति । राधः ।
यदा । ते । मर्तः । अनु । भोगम् । आनट् । वसो इति । दधानः । मतिऽभिः । सुऽजात ॥२॥

हे अग्ने इमाः ईदृश्यः मतयः स्तुतयः तुभ्यं त्वदर्थं जाताः अस्मदादिस्तोतृमुखादुत्पन्नाः[1] । उच्चारिता इत्यर्थः । गोभिरश्वैः च सहितं राधः त्वया दीयमानं हिरण्यादिकं धनम् अभि गृणन्ति अभिष्टुवन्ति । अस्मत्स्तुत्यनुरूपान्नमस्मभ्यं त्वया दत्तमिति प्रशंसन्ति । यदा मर्तः अस्मदादिको मनुष्यः ते त्वया दीयमानं भोगं भोगार्हं धनम् अनु आनट् प्राप्नोति लभते तदा हे वसो प्रशस्यवसुमन् । यद्वा । स्वेन तेजसा सर्वस्याच्छादयितः । हे सुजात शोभनकर्मार्थमुत्पन्नाग्ने[2] त्वं दधानः अस्मभ्यं धनं प्रयच्छन् मतिभिः अस्मदीयाभिः स्तूयस इति शेषः ॥

**अ॒ग्निं म॑न्ये पि॒तर॑म॒ग्निमा॒पिम॒ग्निं भ्रात॑रं॒ सद॒मित्सखा॑यम् ।**
**अ॒ग्नेरनी॑कं बृह॒तः स॑पर्यं दि॒वि शु॒क्रं य॑ज॒तं सूर्य॑स्य ॥ ३ ॥**

अग्निम् । मन्ये । पितरम् । अग्निम् । आपिम् । अग्निम् । भ्रातरम् । सदम् । इत् । सखायम् ।
अग्नेः । अनीकम् । बृहतः । सपर्यम् । दिवि । शुक्रम् । यजतम् । सूर्यस्य ॥ ३ ॥

अहं स्तोता पितरम् अग्निम् एव मन्ये जाने । आपिं बन्धुम् अग्निम् एव मन्ये । भ्रातरम् अग्निम् एव मन्ये । सदमित् सदैवाविसंवादिनं सखायम् अग्निमेव जानामि । बृहतः महतः अग्नेः अनीकम् आहवनीयाख्यं मुखं सपर्यं परिचरामि । तत्र लुप्तोपममेतत् । दिवि द्युलोके स्थितं यजतं यष्टव्यं पूजनीयं सूर्यस्य संबन्धि शुक्रं दीप्तिमत् मण्डलं यथा कश्चिदभिप्रेतार्थसिद्ध्ये आराधयति तद्वत् ॥

**सि॒ध्रा अ॑ग्ने॒ धियो॑ अ॒स्मे सनु॑त्री॒र्यं त्राय॑से॒ दम॒ आ नित्य॑होता ।**
**ऋ॒तावा॒ स रो॒हिद॑श्वः पुरु॒क्षुर्द्युभि॑रस्मा॒ अह॑भिर्वा॒मम॑स्तु ॥ ४ ॥**

सिध्राः । अग्ने । धियः । अस्मे इति । सनुत्रीः । यम् । त्रायसे । दमे । आ । नित्यऽहोता ।
ऋतऽवा । सः । रोहित्ऽअश्वः । पुरुऽक्षुः । द्युऽभिः । अस्मै । अहऽभिः । वामम् । अस्तु ॥४॥

हे अग्ने सनुत्रीः संभक्त्र्यः अस्मे अस्माकं सबन्धिन्यः धियः स्तुतयः सिध्राः सिद्धा निष्पन्नाः । त्वदर्थमस्माभिः कृता इत्यर्थः । दमे आ अस्मद्यज्ञगृहे मर्यादयावस्थितस्त्वं नित्यहोता सततं होमनिष्पादको देवानामाह्वाता वा सन् यं मां त्रायसे कर्मवैगुण्यात् रक्षसि सः अहं त्वत्प्रसादात् त्वत्सायुज्यं गतः सन् ऋतवा यज्ञवान् सत्यवान् वा स्यामिति शेषः । रोहिदश्वः रोहित्संज्ञकाश्वः पुरुक्षुः बह्वन्नश्च स्याम् । किंच अस्मै ईदृग्भूताय तुभ्यं द्युभिः दीप्तेषु अहभिः अहःसु दिवसेषु वामं वननीयं हविः अस्तु ॥

---

१. त१.२.४.५–°स्तोत्रमुवोचदुत्पन्नाः; त२–°स्तोत्रे मुखादुत्पन्नाः; त६-७–°स्तोत्रमुखादुत्पन्नाः; भ६–°स्तोत्रमवोचन्मुखादुत्पन्नाः । २. ग–°कर्मणोत्पन्नाग्ने; त२.४.५–°कर्मार्थ्युत्पन्नाग्ने; त३.७-भ–°कर्मादुत्पन्नाग्ने; त६–°कर्मोत्पन्नाग्ने ।

द्युभिर्हितं मित्रमिव प्रयोगं प्रत्नमृत्विजमध्वरस्य जारम् ।
बाहुभ्यामग्निमायवोऽजनन्त विक्षु होतारं न्यसादयन्त ॥ ५ ॥

द्युऽभिः । हितम् । मित्रम्ऽइव । प्रऽयोगम् । प्रत्नम् । ऋत्विजम् । अध्वरस्य । जारम् ।
बाहुऽभ्याम् । अग्निम् । आयवः । अजनन्त । विक्षु । होतारम् । नि । असादयन्त ॥ ५ ॥

ᵛद्युभिर्हितं दीप्तिराहितं ᵛमित्रमिव स्निग्धमिव ᵛप्रयोगं प्रयोक्तव्यं ᵛप्रत्नं पुराणम् ᵛऋत्विजं होतृसंज्ञकम् । 'अग्निर्वै देवानां होतासीत्' ( ऐ. ब्रा. २. ७; ३. १४ ) इति श्रुतेः । ᵛअध्वरस्य यज्ञस्य ᵛजारं समापयितारम् एवंभूतम् ᵛअग्निमायवः यजमाना मनुष्याः ᵛबाहुभ्याम् ᵛअजनन्त जनितवन्तः । किंच ᵛविक्षु मनुष्येषु[1] । तदाकारेषु देवेष्वित्यर्थः । ᵛहोतारम् आह्वातारं ᵛन्यसादयन्त नियमेन सादितवन्तः । देवानां यागार्थं निरूपितवन्त इत्यर्थः ॥

स्वयं यजस्व दिवि देव देवान् किं ते पाकः कृणवदप्रचेताः ।
यथायज ऋतुभिर्देव देवानेवा यजस्व तन्वं सुजात ॥ ६ ॥

स्वयम् । यजस्व । दिवि । देव । देवान् । किम् । ते । पाकः । कृणवत् । अप्रऽचेताः ।
यथा । अयजः । ऋतुऽभिः । देव । देवान् । एव । यजस्व । तन्वम् । सुऽजात ॥ ६ ॥

हे ᵛदेव द्योतमानाग्ने त्वं ᵛदिवि द्युलोके स्थितान् ᵛदेवान् इन्द्रादीन् ᵛस्वयम् आत्मनैव ᵛयजस्व । ᵛपाकः पक्तव्यप्रज्ञः ᵛअप्रचेताः अप्रकृष्टज्ञानो[2] मनुष्यः ᵛते तव ᵛकिं ᵛकृणवत् किं करोति । त्वयानधिष्ठितः[3] किंचिदपि न जानातीत्यर्थः । किंच हे ᵛदेव त्वम् ᵛऋतुभिः कालविशेषैः ᵛदेवान् ᵛयथायजः इष्टवानसि ᵛएव एवं हे ᵛसुजात शोभनजन्मन्नग्ने ᵛतन्वम् आत्मानमपि ᵛयजस्व ॥

भवा नो अग्नेऽवितोत गोपा भवा वयस्कृदुत नो वयोधाः ।
रास्वा च नः सुमहो हव्यदातिं त्रास्वोत नस्तन्वो३ अप्रयुच्छन् ॥ ७ ॥

भव । नः । अग्ने । अविता । उत । गोपाः । भव । वयःऽकृत् । उत । नः । वयःऽधाः ।
रास्व । च । नः । सुऽमहः । हव्यऽदातिम् । त्रास्व । उत । नः । तन्वः । अप्रऽयुच्छन् ॥ ७ ॥

हे ᵛअग्ने त्वं ᵛनः अस्माकम् ᵛअविता दृष्टभयेभ्यो रक्षकः ᵛभव भूयाः । ᵛउत अपि च ᵛगोपाः अदृष्टभयेभ्यो गोप्ता रक्षको भव । ᵛउत अपि च ᵛवयस्कृत् अन्नस्य कर्ता ᵛभव । ᵛवयोधाः अन्नस्य दाता भव । हे ᵛसुमहः सुष्ठु पूजनीयाग्ने त्वं स्वभूतां ᵛहव्यदातिं हविषो दातिं ᵛनः अस्मभ्यं ᵛरास्व ᵛच प्रयच्छ । ᵛउत अपि च ᵛनः अस्माकं स्वभूताः ᵛतन्वः शरीराणि ᵛअप्रयुच्छन् अप्रमाद्यन् ᵛत्रास्व पालय ॥ ॥२॥

'प्र केतुना' इति नवर्चमष्टमं सूक्तं त्रैष्टुभम् । त्वष्टृपुत्रस्त्रिशिरा नामर्षिः । आदितः षडाग्नेय्यस्ततस्तिस्र ऐन्द्र्यः । तथा चानुक्रान्तं—'प्र केतुना नव त्रिशिरास्त्वाष्ट्रस्तृचोऽन्त्य ऐन्द्रः'। इति । आदितः षण्णां प्रातरनुवाकाश्विनशस्त्रयोराग्नेयक्रतावुक्तो विनियोगः ॥

१. ग-त३-भ२.५-मु-विशो मनुष्याः; त१.२.६-भ१.४-विशो मनु; त७-भ७-विशो मनुः; भ६-विशेषो मनुष्याः । २. त-प्रकृष्टज्ञानो । ३. ग-त३-भ-॰धिष्ठितः सन् ।

प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।
दिवश्चिदन्ताँ उपमाँ उदानळपामुपस्थे महिषो ववर्ध ॥ १ ॥

प्र । केतुना । बृहता । याति । अग्निः । आ । रोदसी इति । वृषभः । रोरवीति ।
दिवः । चित् । अन्तान् । उपऽमान् । उत् । आनट् । अपाम् । उपऽस्थे । महिषः । ववर्ध ॥ १ ॥

अग्निः बृहता महता केतुना प्रज्ञानेन युक्तः सन् आ इदानीं रोदसी द्यावापृथिव्यौ प्र याति प्रकर्षेण गच्छति । किंच देवानामाह्वानकाले वृषभः इव रोरवीति अत्यर्थं शब्दं करोति । दिवश्चित् द्युलोकस्यापि अन्तान् अवसानान् उपमान् समीपांश्च प्रदेशान् ज्वलनात्मनादित्यात्मना वा स्थितः उदानट् ऊर्ध्वं व्याप्नोति । अपां वृष्टिलक्षणानामुदकानाम् उपस्थे उपस्थानेऽन्तरिक्षे वैद्युतात्मना महिषः महान् ववर्ध वर्धते ॥

मुमोद गर्भो वृषभः ककुद्मानस्रेमा वत्सः शिमीवाँ अरावीत् ।
स देवतात्युद्यतानि कृण्वन्त्स्वेषु क्षयेषु प्रथमो जिगाति ॥ २ ॥

मुमोद । गर्भः । वृषभः । ककुत्ऽमान् । अस्रेमा । वत्सः । शिमीऽवान् । अरावीत् ।
सः । देवऽताति । उत्ऽयतानि । कृण्वन् । स्वेषु । क्षयेषु । प्रथमः । जिगाति ॥ २ ॥

गर्भः द्यावापृथिव्योरन्तर्गतः वृषभः कामानां वर्षिताग्निः ककुद्मान् उन्नततेजस्कः मुमोद मोदते । किंच अस्रेमा । प्रशस्यनामैतत् । प्रशस्तः वत्सः नक्तोषसोर्वत्सभूतः सायंप्रातराहुत्युपजीवनात् शिमीवान्[1] हविर्वहनदेवाह्वानादिकर्मवानग्निः[1] अरावीत् देवाह्वानादिशब्दं करोति । सः अग्निः देवताति यज्ञे उद्यतानि उद्यमान्युत्साहकर्माणि कृण्वन् कुर्वन् स्वेषु क्षयेषु आत्मीयेष्वाहवनीयादिस्थानेषु स्थितः प्रथमः देवानां स्थानेषु मुख्यः जिगाति गच्छति ॥

आ यो मूर्धानं पित्रोररब्ध न्यध्वरे दधिरे सूरो अर्णः ।
अस्य पत्मन्नरुषीरश्वबुध्ना ऋतस्य योनौ तन्वो जुषन्त ॥ ३ ॥

आ । यः । मूर्धानम् । पित्रोः । अरब्ध । नि । अध्वरे । दधिरे । सूरः । अर्णः ।
अस्य । पत्मन् । अरुषीः । अश्वऽबुध्नाः । ऋतस्य । योनौ । तन्वः । जुषन्त ॥ ३ ॥

यः अग्निः पित्रोः मातापितृभूतयोर्द्यावापृथिव्योः मूर्धानम् आ अरब्ध स्वतेजोभिरारभते । यद्वा । मातापितृभूतयोररण्योर्मूर्धानं शिरोवत् प्रधानभूतं मन्थनप्रदेशम् । आङीषदर्थे । आरब्ध ईषद्भिनत्ति । निर्मथनकालेऽपि दाहेन दग्धुं समर्थः । सूरः सुवीर्यस्याग्नेः अर्णः गमनशीलं तेजः अध्वरे यज्ञे नि दधिरे । यष्टारो नियमेन धारयन्ति । अस्य अग्नेः पत्मन् पतने अरुषीः आरोचमानाः ऋतस्य यज्ञस्य योनौ स्थाने अश्वबुध्नाः व्याप्तमूला अशनबन्धना वा । हविराहारान्विता इत्यर्थः । तन्वः तदीयास्तनूः जुषन्त कवयः सेवन्ते ॥

उषउषो हि वसो अग्रमेषि त्वं यमयोरभवो विभावा ।
ऋताय सप्त दधिषे पदानि जनयन्मित्रं तन्वे स्वायै ॥ ४ ॥

---

१. ग—हविर्वहनात् देवानां आह्वानादिकर्मवेगत्वात् शिमीवानग्निः ।

उषःऽउषः । हि । वसो इति । अग्रम् । एषि । त्वम् । यमयोः । अभवः । विभाऽवा ।
ऋताय । सप्त । दधिषे । पदानि । जनयन् । मित्रम् । तन्वे । स्वायै ॥ ४ ॥

हे ᵛवसो स्वेन तेजसा सर्वस्याच्छादयितर्वसुमन् वा प्रशस्य वा अग्ने ᵛत्वम् ᵛउषउषः सर्वस्या एवोषसः ᵛअग्रं पूर्वम् ᵛएषि प्राप्नोषि । अपि च ᵛयमयोः युग्मयोः परस्परमवियुक्तयोरहोरात्रयोः ᵛविभावा दीप्तिमान् ᵛअभवः भवसि । ᵛतन्वे ᵛस्वायै आत्मीयाच्छरीरात् ᵛमित्रम् आदित्यं ᵛजनयन् उत्पादयन् ᵛसप्त ᵛपदानि सप्तसंख्याकानि धिष्ण्यादिस्थानानि ᵛऋताय यज्ञार्थं ᵛदधिषे धारयसि ॥

भुवश्चक्षुर्मह ऋतस्य गोपा भुवो वरुणो यदृताय वेषि ।
भुवो अपां नपाज्जातवेदो भुवो दूतो यस्य हव्यं जुजोषः ॥ ५ ॥

भुवः । चक्षुः । महः । ऋतस्य । गोपाः । भुवः । वरुणः । यत् । ऋताय । वेषि ।
भुवः । अपाम् । नपात् । जातऽवेदः । भुवः । दूतः । यस्य । हव्यम् । जुजोषः ॥ ५ ॥

ᵛमहः महतः ᵛऋतस्य यज्ञस्य हे अग्ने त्वं ᵛचक्षुः इव प्रकाशकः ᵛभुवः भवसि । ᵛगोपाः यज्ञस्य रक्षकस्त्वमेव भवसि । ᵛयत् यदा ᵛऋताय सोमरसलक्षणस्योदकस्यादानार्थं ᵛवरुणः आदित्यः ᵛवेषि गच्छसि तदा त्वमेव ᵛभुवः भवसि । हे ᵛजातवेदः जातप्रज्ञाग्ने ᵛअपां वृष्टिलक्षणानामुदकानां ᵛनपात् पौत्रस्त्वमेव ᵛभुवः भवसि । अद्भ्यो हि मेघो जायते मेघादग्निर्विद्युद्रूपो जायत इत्यपां पौत्रत्वमुच्यते । ᵛयस्य[१] यजमानस्य ᵛहव्यं हविः ᵛजुजोषः सेवसे तस्य ᵛदूतः ᵛभुवः भवसि ॥ ॥३॥

दर्शपूर्णमासयोराग्नेयस्य याज्या ' भुवो यज्ञस्य ' इत्येषा । सूत्रितं च—' तासां याज्यानुवाक्या अग्निर्मूर्धा भुवो यज्ञस्य ' (आश्व. श्रौ. १.६ ) इति । आग्नेयी काचित् काम्येष्टिः । तस्यामेषैव याज्या । सूत्रितं च—' आग्नेय्या उत्तरे नित्ये मूर्धन्वतः ' ( आश्व. श्रौ. २. १० ) इति ॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ ६ ॥

भुवः । यज्ञस्य । रजसः । च । नेता । यत्र । नियुतऽभिः । सचसे । शिवाभिः ।
दिवि । मूर्धानम् । दधिषे । स्वःऽसाम् । जिह्वाम् । अग्ने । चकृषे । हव्यऽवाहम् ॥ ६ ॥

हे अग्ने त्वं ᵛयत्र यस्मिन्नन्तरिक्षे ᵛशिवाभिः कल्याणीभिः ᵛनियुद्भिः नियुत्संज्ञकाभिरश्वजातिभिः संबद्धं वायुं ᵛसचसे संगच्छसे तस्मिन्नन्तरिक्षे ᵛयज्ञस्य ᵛरजसश्च उदकस्य च ᵛनेता प्रापयिता ᵛभुवः भवसि । ' अग्निर्वा इतो वृष्टिं समीरयति[२] ' ( निरु. ७. २४ ) इति श्रुतेः । किंच ᵛदिवि द्युलोके ᵛमूर्धानं शिरोवत्प्रधानभूतं ᵛस्वर्षां सर्वस्य संभक्तारमादित्यं ᵛदधिषे हविर्वहनद्वारेण धारयसि । हे ᵛअग्ने त्वं ᵛजिह्वां ज्वालां ᵛहव्यवाहं हविषां वोढ्रीं ᵛचकृषे करोषि ॥

अस्य त्रितः क्रतुना वव्रे अन्तरिच्छन्धीतिं पितुरेवैः परस्य ।
सचस्यमानः पित्रोरुपस्थे जामि ब्रुवाण आयुधानि वेति ॥ ७ ॥

१. त–यज्ञस्य । २. ग-मु–तै.सं.२.४.१०.२; का. सं. ११. १०–उदीरयति; मै.सं.२.४.८ द्रष्टव्यम् ।

अस्य । त्रितः । क्रतुना । वव्रे । अन्तः । इच्छन् । धीतिम् । पितुः । एवैः । परस्य ।
सचस्यमानः । पित्रोः । उपऽस्थे । जामि । ब्रुवाणः । आयुधानि । वेति ॥ ७॥

अस्मिंस्तृच इममर्थं ब्रवीति । हे त्रित सर्वेषामायुधानि वेत्ता त्वं त्वष्टृपुत्रस्य त्रिशिरसो वधार्थं मम साहाय्यं कुर्वितीन्द्रेणैवं पृष्टस्त्रितः स्ववीर्यवृद्ध्यर्थं यज्ञभागं वव्रे । स चेन्द्रस्तस्मै पाणिप्रक्षालनार्थं च जलं यज्ञभागं च दत्तवान् । अनेन यज्ञभागेन वृद्धवीर्यः ᵛत्रितः एतत्संज्ञक ऋषिः ᵛएवैः आत्मनो रक्षणैर्युक्तः ᵛअन्तः यज्ञस्य मध्ये ᵛधीतिं भागम् ᵛइच्छन् ᵛपरस्य उत्कृष्टस्य ᵛपितुः सर्वस्य जगतः पालयितुः ᵛअस्य इन्द्रस्य ᵛक्रतुना त्रिशिरसो मम वधार्थं साहाय्यभूतेन कर्मणा निमित्तेन ᵛवव्रे सखायं वृतवान् । किंच ᵛपित्रोः मातापितृभूतयोर्द्यावापृथिव्योः ᵛउपस्थे समीपस्थे यज्ञे ᵛसचस्यमानः ऋत्विग्भिः सेव्यमानस्त्रितः ᵛजामि योग्यमिन्द्रस्यानुरूपं स्तोत्रं ᵛब्रुवाणः इन्द्रस्य बलवृद्ध्यर्थमुच्चारयन् ᵛआयुधानि स्वभूतानि ᵛवेति । त्वष्टृपुत्रस्य मम वधार्थमागच्छति ॥

स पित्र्याण्यायुधानि विद्वानिन्द्रेषित आप्त्यो अभ्ययुध्यत् ।
त्रिशीर्षाणं सप्तरश्मिं जघन्वान्त्वाष्ट्रस्य चिन्निः ससृजे त्रितो गाः ॥ ८ ॥

सः । पित्र्याणि । आयुधानि । विद्वान् । इन्द्रऽइषितः । आप्त्यः । अभि । अयुध्यत् ।
त्रिऽशीर्षाणम् । सप्तऽरश्मिम् । जघन्वान् । त्वाष्ट्रस्य । चित् । निः । ससृजे । त्रितः । गाः ॥८॥

ᵛआप्त्यः आप्त्यस्य पुत्रोऽपां पुत्रो वा । तकारोपजनश्छान्दसः । ᵛसः त्रितः ᵛपित्र्याणि स्वपितृसंबन्धीनि ᵛआयुधानि ᵛविद्वान् जानन् ᵛइन्द्रेषितः त्रिशिरसा मया सह युद्धार्थमिन्द्रेण प्रेषितः सन् ᵛअभ्ययुध्यत् आभिमुख्येन युद्धवान् । तदनन्तरं ᵛसप्तरश्मिं शत्रुनियमनार्थं सप्तप्रग्रहहस्तम् । यद्वा । सप्तरश्मिरादित्यः । तत्सदृशम् । ᵛत्रिशीर्षाणं त्रिशिरस्कं मां ᵛजघन्वान् हतवान् । मूर्छितं कृतवानित्यर्थः । किंच ᵛत्रितः ᵛत्वाष्ट्रस्य ᵛचित् त्वष्टृपुत्रस्य ममापि ᵛगाः पशून् ᵛनिः ᵛससृजे विसृष्टवान् । अपहृतवानित्यर्थः ॥

भूरीदिन्द्र उदिनक्षन्तमोजोऽवाभिनत् सत्पतिर्मन्यमानम् ।
त्वाष्ट्रस्य चिद्विश्वरूपस्य गोनामाचक्राणस्त्रीणि शीर्षा परा वर्क् ॥ ९ ॥

भूरि । इत् । इन्द्रः । उत्ऽइनक्षन्तम् । ओजः । अव । अभिनत् । सत्ऽपतिः । मन्यमानम् ।
त्वाष्ट्रस्य । चित् । विश्वऽरूपस्य । गोनाम् ।
आऽचक्राणः । त्रीणि । शीर्षा । परा । वर्गिति वर्क् ॥ ९ ॥

ᵛसत्पतिः सतां पालकः ᵛइन्द्रः ᵛभूरीत् बह्वेव पूर्वतुल्यमतिरिक्तं वा ᵛओजः बलम् ᵛउदिनक्षन्तं व्याप्नुवन्तं ᵛमन्यमानं शूरमित्यात्मानं चिन्तयन्तम् । यद्वा । मन्यतिर्दीप्तिकर्मा क्रोधकर्मा वा । दीप्यमानं क्रुध्यन्तं वा । त्वष्टृपुत्रं माम् ᵛअवाभिनत् वज्रेण विदारितवान् । विदार्य ᵛत्वाष्ट्रस्य ᵛचित् त्वष्टृपुत्रस्यापि ᵛगोनां गवाम् । स्वामिन इति शेषः । ᵛविश्वरूपस्य मम ᵛत्रीणि ᵛशीर्षा शीर्षाणि ᵛआचक्राणः आ समन्ताच्छब्दं कुर्वन् ᵛपरा ᵛवर्क् पराङ्मुखस्य वृक्णवान्[1] छिन्नवानित्यर्थः । ईदृशं भावि वस्तु विश्वरूपः स्वप्नान्तेऽनेन तृचेन दृष्टवान् ॥ ॥ ४ ॥

१. त-भ—वृणीतवान् ।

'आपो हि' इति नवर्चं नवमं सूक्तम्। अम्बरीषस्य राज्ञः पुत्रः सिन्धुद्वीप ऋषिस्त्वष्टृपुत्रस्त्रिशिरा वा। 'इदमापः' इत्यादिके द्वे अनुष्टुभौ। 'ईशाना[1]' इति वर्धमाना। 'आपः पृणीत' इति प्रतिष्ठा[1]। शिष्टा गायत्र्यः। आपो देवता। तथा चानुक्रान्तम्—'आपो हि सिन्धुद्वीपो वाम्बरीष आपं गायत्रं ह्यनुष्टुबन्तं पञ्चमी[2] वर्धमाना सप्तमी प्रतिष्ठा' इति[2]। गतः सूक्तविनियोगः। आग्निमारुते 'आपो हि ष्ठा' इत्याद्यास्तिस्रः। सूत्रितं च—'आपो हि ष्ठेति तिस्रो वियतमप उपस्पृशन्' (आश्व. श्रौ. ५. २०) इति॥

आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन। म॒हे रणा॑य॒ चक्ष॑से॥ १॥

आप॑:। हि। स्थ। म॒य॒:ऽभुव॑:। ता:। न॒:। ऊ॒र्जे। द॒धा॒त॒न॒। म॒हे। रणा॑य। चक्ष॑से॥१॥

ᵛहि यस्मात् कारणात् ᵛआपः या यूयं ᵛमयोभुवः सुखस्य भावयित्र्यः ᵛस्थ भवथ ᵛताः तादृश्यो यूयं ᵛनः अस्मान् ᵛऊर्जे अन्नाय ᵛदधातन धत्त। अन्नप्राप्तियोग्यानस्मान् कुरुत। अन्नमस्मभ्यं दत्तेत्यर्थः। ᵛमहे महते ᵛरणाय रमणीयाय[3] ᵛचक्षसे दर्शनाय सम्यग्ज्ञानाय च धत्त। अस्मान् सम्यग्ज्ञानं प्रति योग्यान् कुरुतेत्यर्थः॥

यो व॑: शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह न॑:। उ॒श॒तीरि॑व मा॒तर॑:॥ २॥

य:। व॒:। शि॒वऽत॑म:। रस॑:। तस्य॑। भा॒ज॒य॒त॒। इ॒ह। न॒:। उ॒श॒ती:ऽइ॑व। मा॒तर॑:॥२॥

हे आपः ᵛवः युष्माकं स्वभूतः ᵛयः ᵛरसः ᵛशिवतमः सुखतमः ᵛइह अस्मिँल्लोके ᵛतस्य तं रसं ᵛनः अस्मान् ᵛभाजयत सेवयत। उपयोजयतेत्यर्थः। तत्र दृष्टान्तः। ᵛउशतीरिव उशत्य इव पुत्रसमृद्धिं कामयमानाः ᵛमातरः स्तन्यरसं यथा भाजयन्ति प्रापयन्ति तद्वत्।

तस्मा॒ अरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ। आपो॑ ज॒नय॑था च नः॥ ३॥

तस्मै॑। अर॑म्। ग॒मा॒म॒। व॒:। यस्य॑। क्षया॑य। जिन्व॑थ। आप॑:। ज॒नय॑थ। च॒। न॒:॥३॥

हे आपः यूयं ᵛयस्य पापस्य ᵛक्षयाय विनाशाय अस्मान् ᵛजिन्वथ प्रीणयथ ᵛतस्मै तादृशाय पापक्षयाय ᵛअरं क्षिप्रं ᵛवः युष्मान् ᵛगमाम गमयाम। वयं शिरसि प्रक्षिपामेत्यर्थः। यद्वा। यस्यान्नस्य क्षयाय निवासार्थं यूयमोषधीर्जिन्वथ तर्पयथ तस्मै तदन्नमुद्दिश्य वयमरमलं पर्याप्तं यथा भवति तथा वो युष्मान् गमाम गच्छाम। किंच हे ᵛआपः ᵛनः अस्मान् ᵛजनयथ ᵛच। पुत्रपौत्रादिजनने प्रयोजयतेत्यर्थः॥

शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑। शं योर॒भि स्र॑वन्तु नः॥ ४॥

शम्। न॒:। दे॒वी:। अ॒भिष्ट॑ये। आप॑:। भ॒व॒न्तु॒। पी॒तये॑। शम्। यो:। अ॒भि। स्र॒व॒न्तु॒। न॒:॥४॥

ᵛनः अस्माकं पापापनोदद्वारेण ᵛशं सुखं ᵛभवन्तु ᵛदेवीः देव्यः ᵛआपः[4]। ᵛअभिष्टये अस्मद्यज्ञाय भवन्तु। यज्ञाङ्गभावाय च भवन्त्वित्यर्थः। ᵛपीतये पानाय च भवन्तु। तथा ᵛशम् उत्पन्नानां रोगाणां शमनं ᵛयोः यावनमनुत्पन्नानां पृथक्करणं च कुर्वन्तु। अपि च ᵛनः अस्माकम् ᵛअभि उपरि ᵛस्रवन्तु शुद्ध्यर्थं सिञ्चन्तु॥

१. ग-त-भ-'ईशाना...प्रतिष्ठा' नास्ति। २. ग-त१.२.३.४.५.६-भ१.४.६.७-'पंचमी...प्रतिष्ठेति' नास्ति। ३. ग--संग्रामाय। ४. त--'आपः' नास्ति।

ईशा॑ना॒ वार्या॑णां॒ क्षय॑न्तीश्चर्षणी॒नाम्। अ॒पो या॑चामि भेष॒जम् ॥ ५ ॥

ईशा॑नाः । वार्या॑णाम् । क्षय॑न्तीः । च॒र्ष॒णी॒नाम् । अ॒पः । या॒चा॒मि॒ । भे॒ष॒जम् ॥ ५ ॥

वार्याणां वारिप्रभवानां व्रीहियवादीनां यद्वा वरणीयानां धनानाम् ईशानाः ईश्वराः चर्षणीनां मनुष्याणां क्षयन्तीः निवासयित्रीः अपः उदकानि भेषजम्। सुखनामैतत् । पापापनोदनं[1] सुखं याचामि अहं प्रार्थये ॥

अ॒प्सु मे॒ सोमो॑ अब्रवीद॒न्तर्विश्वा॑नि भेष॒जा । अ॒ग्निं च॑ वि॒श्वश॑म्भुवम् ॥ ६ ॥

अ॒प्ऽसु । मे॒ । सोमः॑ । अ॒ब्र॒वी॒त् । अ॒न्तः । विश्वा॑नि । भे॒ष॒जा । अ॒ग्निम् । च॒ । वि॒श्वऽश॑म्भुवम् ॥ ६ ॥

आपः॑ पृणी॒त भे॑ष॒जं वरू॑थं त॒न्वे॒३॒॑ मम॑ । ज्योक्च॒ सूर्यं॑ दृ॒शे ॥ ७ ॥

आपः॑ । पृ॒णी॒त । भे॒ष॒जम् । वरू॑थम् । त॒न्वे॑ । मम॑ । ज्योक् । च॒ । सूर्य॑म् । दृ॒शे ॥ ७ ॥

इ॒दमा॑पः॒ प्र व॑हत॒ यत्किं च॑ दुरि॒तं मयि॑ । यद्वा॒हम॑भिदु॒द्रोह॒ यद्वा॑ शे॒प उ॒तानृ॑तम् ॥ ८ ॥

इ॒दम् । आ॒पः॒ । प्र । व॒ह॒त॒ । यत् । किम् । च॒ । दुः॒ऽइ॒तम् । मयि॑ ।

यत् । वा॒ । अ॒हम् । अ॒भि॒ऽदु॒द्रोह॑ । यत् । वा॒ । शे॒पे । उ॒त । अनृ॑तम् ॥ ८ ॥

आपो॑ अ॒द्यान्व॑चारिषं॒ रसे॑न॒ सम॑गस्महि ।
पय॑स्वानग्न॒ आ ग॑हि॒ तं मा॒ सं सृ॑ज॒ वर्च॑सा ॥ ९ ॥

आपः॑ । अ॒द्य । अनु॑ । अ॒चा॒रि॒ष॒म् । रसे॑न । सम् । अ॒ग॒स्म॒हि॒ ।

पय॑स्वान् । अ॒ग्ने॒ । आ । ग॒हि॒ । तम् । मा॒ । सम् । सृ॒ज॒ । वर्च॑सा ॥ ९ ॥

' अप्सु मे सोमो अब्रवीत् ' इत्यादिकाश्चतस्र ऋचः प्रथमाष्टके द्वितीयाध्याये विनियोगपुरःसरं व्याख्याताः ( ऋ. सं. १. २३. २०–२३ )[2] ॥ ॥ ५ ॥

' ओ चित् ' इति चतुर्दशर्चं दशमं सूक्तम् । अत्रानुक्रम्यते—' ओ चित् पञ्चना वैवस्वतयोर्यमयम्योः संवादः षष्ठ्ययुग्भिर्यमी मिथुनार्थं यमं प्रोवाच स तां नवमीयुग्भिरनिच्छन् प्रत्याचष्टे ' इति । ततः षष्ठ्यां प्रथमातृतीयाद्ययुक्षु विवस्वतः पुत्री यम्यृषिर्यमो देवता । ' यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवता ' इति न्यायात् । तथा नवम्यां द्वितीयाचतुर्थीप्रभृतिषु युक्षु वैवस्वतो यम ऋषिर्यमी देवता । अनादेशपरिभाषया त्रिष्टुप् । गतो विनियोगः ॥

ओ चि॒त्सखा॑यं स॒ख्या व॑वृत्यां ति॒रः पु॒रू चि॑दर्ण॒वं ज॑ग॒न्वान् ।
पि॒तुर्नपा॑त॒मा द॑धीत वे॒धा अधि॒ क्षमि॑ प्रत॒रं दीध्या॑नः ॥ १ ॥

ओ इति॑ । चि॒त् । सखा॑यम् । स॒ख्या । व॒वृ॒त्याम् । ति॒रः । पु॒रु । चि॒त् । अ॒र्ण॒वम् । ज॒ग॒न्वान् ।

पि॒तुः । नपा॑तम् । आ । द॒धी॒त॒ । वे॒धाः । अधि॑ । क्षमि॑ । प्र॒ऽत॒रम् । दीध्या॑नः ॥ १ ॥

---

१. ग–पापापनोदनात्मकं; भ–पापापनोदकं । २. त७–पुस्तके ऋ. सं. १.२३.२०-२३ मन्त्राणां भाष्यं व्याकरणप्रक्रियां वर्जयित्वा षष्ठसप्तमाष्टमनवममन्त्रभाष्यत्वेनोद्धृतम् । उद्गीथाचार्येणापि स्वकीय ऋग्भाष्य एते मंत्रा न व्याख्याताः ।

अत्रास्मिन् सूक्ते वैवस्वतयोर्यमयम्योः संवाद उच्यते। अस्यामृचि यमं प्रति यमी प्रोवाच। ᵛतिरः अन्तर्हितमप्रकाशमानम्। निर्जनप्रदेशमित्यर्थः। ᵛपुरु ᵛचित् बह्वपि विस्तीर्णं च ᵛअर्णवं समुद्रैकदेशमवान्तरद्वीपं ᵛजगन्वान् गतवती यमी। ᵛचित् इति पूजार्थे। पूजितमिष्टम्। श्रेष्ठमित्यर्थः। ᵛसखायं गर्भवासादारभ्य सखीभूतं यमं ᵛसख्या सख्याय स्त्रीपुरुषसंपर्कजनितमित्रत्वाय ᵛओ ᵛववृत्याम् आवर्तयामि। आभिमुख्येन स्थित्वा लज्जां परित्यज्य त्वत्संभोगं करोमीत्यर्थः। 'धर्मस्य त्वरिता गतिः' इति न्यायेन कामस्य त्वरितत्वात्। अपि च ᵛपितुः आवयोर्भविष्यतः पुत्रस्य पितृभूतस्य तवार्थाय ᵛअधि ᵛक्षमि अधि पृथिव्याम्। पृथिवीस्थानीये ममोदर इत्यर्थः। ᵛप्रतरं प्रकृष्टम्। सर्वगुणोपेतमित्यर्थः। ᵛनपातं गर्भलक्षणमपत्यं ᵛवेधाः विधाता प्रजापतिः ᵛदीध्यानः आवयोरनुरूपस्य पुत्रस्य जननार्थमावां ध्यायन् ᵛआ ᵛदधीत[1]। 'प्रजापतिर्धाता गर्भं दधातु ते' (ऋ. सं. १०. १८४. १) इत्युक्तत्वात्॥

न ते सखा सख्यं वष्ट्येतत्सलक्ष्मा यद्विषुरूपा भवाति।
महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परि ख्यन्॥ २॥

न। ते। सखा। सख्यम्। वष्टि। एतत्। सऽलक्ष्मा। यत्। विषुऽरूपा। भवाति।
महः। पुत्रासः। असुरस्य। वीराः। दिवः। धर्तारः। उर्विया। परि। ख्यन्॥ २॥

यम आत्मानं परोक्षीकृत्य यमीं प्रत्युवाच। हे यमि ᵛते तव ᵛसखा गर्भवासलक्षणेन सखीभूतो यमः ᵛएतत् ईदृशं त्वयोक्तं स्त्रीपुरुषलक्षणं ᵛसख्यं ᵛन ᵛवष्टि न कामयते। ᵛयत् यस्मात् कारणात् यमी ᵛसलक्ष्मा समानयोनित्वलक्षणा ᵛविषुरूपा भगिनीत्वाद्विषमरूपा ᵛभवाति भवति। तस्मान्न वष्टीत्यर्थः। इदानीं 'तिरः पुरू चिदर्णवं जगन्वान्' इत्यस्य प्रतिवचनमुच्यते। ᵛमहः महतः ᵛअसुरस्य प्राणवतः प्रज्ञावतो वा प्रजापतेः ᵛपुत्रासः पुत्रभूताः ᵛवीराः। 'वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा' (निरु. १. ७) इति निरुक्तम्। शत्रूणां विविधमीरयितारः[2] ᵛधर्तारः धारयितारः[2] ᵛदिवः द्युलोकस्य। प्रदर्शनमेतत्। द्युप्रभृतीनां लोकानामित्यर्थः[3]। – – –॥

उशन्ति घा ते अमृतास एतदेकस्य चित्त्यजसं मर्त्यस्य।
नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्वमा विविश्याः॥ ३॥

उशन्ति। घ। ते। अमृतासः। एतत्। एकस्य। चित्। त्यजसम्। मर्त्यस्य।
नि। ते। मनः। मनसि। धायि। अस्मे इति। जन्युः। पतिः। तन्वम्। आ। विविश्याः॥३॥

पुनरपि यमी यमं प्रत्युवाच। ᵛघ इति निपातोऽप्यर्थे। हे यम ᵛते प्रसिद्धाः ᵛअमृतासः प्रजापत्यादयो[4] देवा अपि ᵛएतत् ईदृशं शास्त्रेणागम्यत्वेनोक्तं ᵛत्यजसम्। त्यज्यते परस्मै प्रदीयत इति त्यजसं दुहितृभगिन्यादिस्त्रीजातम्। ᵛउशन्ति कामयन्ते। ᵛएकस्य ᵛचित् सर्वस्य जगतः मुख्यस्यापि प्रजापत्यादेः स्वदुहितृभगिन्यादीनां संबन्धोऽस्तीति शेषः। अतः कारणात् ᵛते तव ᵛमनः चित्तम्

---

१. ग–दधीत आदधातु; त-भ६–दधीत आदधाव; भ१.२–दधीत अदधात; भ४–दधीत आदधात।
२. त१–विविधारयितारो; त२.४.५.६.७–विविधमाधारयितारो; भ–विविधमीरयितारो। ३. ग–°मित्यर्थः धर्तारः उर्विया उरवः मां परिचक्षते न कर्तव्यमिति वदंति। ४. त-भ६–प्राजापत्यादयो।

अस्मे अस्माकम्। ममेत्यर्थः। मनसि चित्ते नि धायि निधीयताम्। अहं त्वां कामये त्वं मामपि कामयस्वेत्यर्थः। अपि च। जन्युः इति लुप्तोपममेतत्। जन्युरिव यथा जनयिता प्रजापतिः पतिः भर्ता भूत्वा स्वदुहितुः शरीरं संभोगेनाविष्टवान् तथा त्वमपि मम पतिर्भूत्वा तन्वं मदीयं शरीरम् आ विविश्याः संभोगेनाविश। योनौ प्रजननप्रक्षेपोपगूहनचुम्बनादिना मां संभुङ्क्ष्वेत्यर्थः॥

न यत्पुरा चकृमा कद्ध नूनमृता वदन्तो अनृतं रपेम।
गन्धर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ॥ ४॥

न। यत्। पुरा। चकृम। कत्। ह। नूनम्। ऋता। वदन्तः। अनृतम्। रपेम।
गन्धर्वः। अप्ऽसु। अप्या। च। योषा। सा। नः। नाभिः। परमम्। जामि। तत्। नौ॥४॥

यमो यमीं पुनर्ब्रूते। पुरा पूर्वं प्रजापतिः यत् अगम्यागमनमपरिमितसामर्थ्योपेतत्वात् कृतवान् तथा वयं न चकृम नाकुर्म। वयम् ऋता ऋतानि सत्यानि वदन्तः ब्रुवन्तः अनृतम् असत्यं कद्ध कदा खलु नूनं[1] निश्चितं रपेम वदेम। न कदाचिदपीत्यर्थः। अगम्यागमनं न कुर्म इति यावत्। अपि च अप्सु। अन्तरिक्षनामैतत्। अन्तरिक्षे स्थितः गन्धर्वः[2] गवां रश्मीनामुदकानां वा धारयिता[3] आदित्यः अप्या अन्तरिक्षस्था सा प्रसिद्धा योषा आदित्यस्य भार्या सरण्यूः च नः नावावयोः नाभिः उत्पत्तिस्थानम्। मातापितरावित्यर्थः। तत् तस्मात् कारणात् नौ आवयोः जामि बान्धवमुत्कृष्टम्[4]। एवं सत्यावयोरगम्यागमनरूपत्वात् कर्तुमयुक्तं तस्मादेतन्न करोमीत्यभिप्रायः॥

गर्भे नु नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः॥ ५॥

गर्भे। नु। नौ। जनिता। दंपती इति दम्ऽपती। कः। देवः। त्वष्टा। सविता। विश्वऽरूपः।
नकिः। अस्य। प्र। मिनन्ति। व्रतानि। वेद। नौ। अस्य। पृथिवी। उत। द्यौः॥५॥

त्वष्टा रूपाणां कर्ता सविता सर्वेषां शुभाशुभस्य प्रेरकः विश्वरूपः सर्वात्मकः देवः दानादिगुणयुक्तः जनिता जनयिता प्रजापतिः गर्भे नु गर्भावस्थायामेव नौ आवां दंपती जायापती कः कृतवान् एकोदरे सहवासित्वात्। अस्य प्रजापतेः व्रतानि कर्माणि नकिः प्र मिनन्ति न केचिन प्रहिंसन्ति। न लोपयन्तीत्यर्थः। अतः कारणाद्गर्भावस्थायामेवावयोः प्रजापतिकृते दंपतित्वे सति संभोगं कुर्वित्यर्थः। अपि च नौ आवयोः अस्य इदं मातुरुदरे सहवासजनितं दंपतित्वं पृथिवी भूमिः वेद जानाति। उत अपि च द्यौः द्युलोकोऽपि जानाति॥ ॥ ६॥

को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत्।
बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन्॥ ६॥

कः। अस्य। वेद। प्रथमस्य। अह्नः। कः। ईम्। ददर्श। कः। इह। प्र। वोचत्।
बृहत्। मित्रस्य। वरुणस्य। धाम। कत्। ऊँ इति। ब्रवः। आहनः। वीच्या। नॄन्॥६॥

१. ग-त-भ-'नूनं' नास्ति। २. त-भ१.२.४.६-'गन्धर्वः' नास्ति। ३. त-भ६-धारयिता गंधर्वः। ४. ग-बांधवं परममुत्कृष्टं।

ᵛप्रथमस्याह्नः संबन्धि ᵛअस्य इदमन्योन्यसंगमनं ᵛकः ᵛवेद जानाति। प्रथमेऽहनि यत्क्रियते तदनुमानमाश्रित्य न कश्चिदपि ज्ञातुं शक्नोतीत्यर्थः। ᵛइह अस्मिन् प्रदेशे प्रत्यक्षतः ᵛक ᵛईम् इदं संगमनं ᵛददर्श पश्यति ᵛकः ᵛप्र ᵛवोचत् प्रख्यापयति। न कोऽपीत्यर्थः। ᵛमित्रस्य ᵛवरुणस्य मित्रावरुणयोः ᵛबृहत् महत् ᵛधाम स्थानमहोरात्रं यदस्ति तत्र ᵛनॄन्[1] मनुष्यान् ᵛवीच्या नरकेण हे ᵛआहनः आहन्तर्मर्यादया हिंसितः। स्वकृतशुभाशुभकर्मापेक्षया मनुष्यादिप्राणिनां नरकपातेन स्वर्गप्रापणेन निग्रहानुग्रहयोः कर्तरित्यर्थः। एवंभूत हे यम त्वं ᵛकदु ᵛब्रवः किं वा ब्रवीषि॥

यमस्य मा यम्यं१ काम आगन्त्समाने योनौ सहशेय्याय।
जायेव पत्ये तन्वं रिरिच्यां वि चिद्वृहेव रथ्येव चक्रा॥ ७॥

यमस्य। मा। यम्यम्। कामः। आ। अगन्। समाने। योनौ। सहऽशेय्याय।
जायाऽइव। पत्ये। तन्वम्। रिरिच्याम्। वि। चित्। वृहेव। रथ्याऽइव। चक्रा॥ ७॥

ᵛयमस्य तव ᵛकामः अभिलाषः ᵛयम्यं यमीं ᵛमा मां प्रति ᵛआगन् आगच्छतु। ममोपरि तव यमस्य संभोगेच्छा जायतामित्यर्थः। किमर्थम्। ᵛसमाने ᵛयोनौ एकस्मिन् स्थाने शय्याख्ये ᵛसहशेय्याय सहशयनार्थम्। तदनन्तरं पूर्णमनोरथा सती ᵛजायेव ᵛपत्ये यथा भार्या पत्युरर्थाय परया प्रीत्या विश्वस्ता सती रतिकामा स्वशरीरं प्रकाशयति एवं ᵛतन्वम् आत्मीयं शरीरं ᵛरिरिच्यां विविच्याम्। त्वदर्थं प्रकाशयेयमित्यर्थः। किंच। ᵛचित् इति पूरणः। ᵛवि ᵛवृहेव। 'वृहू उद्यमने'। धर्मार्थकामान् विविधमुद्यच्छावः। तत्र दृष्टान्तः। ᵛरथ्येव ᵛचक्रा। रथस्यावयवभूते चक्रे यथा रथमुद्यच्छतस्तद्वत्[2]॥

न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति।
अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा॥ ८॥

न। तिष्ठन्ति। न। नि। मिषन्ति१ एते। देवानाम्। स्पशः। इह। ये। चरन्ति।
अन्येन। मत्। आहनः। याहि। तूयम्। तेन। वि। वृह। रथ्याऽइव। चक्रा॥ ८॥

यम्या प्रख्यातो यमः पुनराह। ᵛइह अस्मिँल्लोके ᵛदेवानां संबन्धिनः ᵛये ᵛस्पशः अहोरात्राद्यश्चाराः ᵛचरन्ति सर्वेषां शुभाशुभलक्षणकर्मप्रत्यवेक्षणार्थं परिभ्रमन्ति ᵛएते चाराः क्षणमात्रमपि चरणव्यापाररहिताः ᵛन ᵛतिष्ठन्ति। ᵛन ᵛनि ᵛमिषन्ति मेषणं[3] न कुर्वन्ति। शुभमशुभं वा यः करोति तं निरीक्षन्ते चेत्यर्थः। हे ᵛआहनः ममापहन्त्रि असद्भाषणेन दुःखयित्रि त्वं ᵛमत् मत्तः ᵛअन्येन त्वत्सदृशेन सह ᵛतूयं क्षिप्रं ᵛयाहि संगच्छ। गत्वा च ᵛतेन ᵛवि ᵛवृह धर्मार्थकामानुद्यच्छ। तत्र दृष्टान्तः। ᵛरथ्येव ᵛचक्रा। यथा रथावयवभूते चक्रे रथमुद्यच्छतस्तद्वत्॥

रात्रीभिरस्मा अहभिर्दशस्येत् सूर्यस्य चक्षुर्मुहुरुन्मिमीयात्।
दिवा पृथिव्या मिथुना सबन्धू यमीर्यमस्य बिभृयादजामि॥ ९॥

रात्रीभिः। अस्मै। अहऽभिः। दशस्येत्। सूर्यस्य। चक्षुः। मुहुः। उत्। मिमीयात्।
दिवा। पृथिव्या। मिथुना। सबन्धू इति सऽबन्धू। यमीः। यमस्य। बिभृयात्। अजामि॥९॥

१. त-म६–नॄन्। २. त-म६–'मुद्यतस्तद्वत्। ३. ग-त४-म६–निमेषणं।

ᵛरात्रिभिः ᵛअहभिः अहोरात्रयोः ᵛअस्मै यमाय कल्पितं भागं सर्वो यजमानः ᵛदशस्येत् प्रयच्छतु। ᵛसूर्यस्य संबन्धि ᵛचक्षुः तेजः ᵛमुहुः मुहुः अस्मै यमाय ᵛउन्मिमीयात् उदेतु। ᵛदिवा ᵛपृथिव्या द्यावापृथिवीभ्यां सह ᵛमिथुना मिथुनौ ᵛसबन्धू समानबन्धू अहोरात्रे अस्मै यमाय[1]। एतज्ज्ञात्वा इयं ᵛयमीः ᵛयमस्य ᵛअजामि अभ्रातरं ᵛबिभृयात् धारयतु। यत्नेन परिगृह्णात्वित्यर्थः॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत्॥ १०॥

आ। घ। ता। गच्छान्। उत्ऽतरा। युगानि। यत्र। जामयः। कृणवन्। अजामि।
उप। बर्बृहि। वृषभाय। बाहुम्। अन्यम्। इच्छस्व। सुऽभगे। पतिम्। मत्॥ १०॥

ᵛयत्र येषु कालेषु ᵛजामयः भगिन्यः ᵛअजामि अभ्रातरं पतिं ᵛकृणवन् करिष्यन्ति ᵛता तानि ᵛउत्तरा उत्तराणि ᵛयुगानि कालविशेषाः ᵛआ ᵛगच्छान् आगमिष्यन्ति। ᵛघ इति पूरणः। यस्मादेवं तस्माद्धे ᵛसुभगे त्वमिदानीं ᵛमत् मत्तः ᵛअन्यं ᵛपतिं भर्तारम् ᵛइच्छस्व कामयस्व। तदनन्तरं ᵛवृषभाय तव योनौ रेतः सेक्त्रे पुरुषाय आत्मीयं ᵛबाहुम् ᵛउप ᵛबर्बृहि। शयनकाल उपबर्हणं कुरु॥ ॥ ७॥

किं भ्रातासद्यदनाथं भवाति किमु स्वसा यन्निर्ऋतिर्निगच्छात्।
काममूता बह्वे३तद्रपामि तन्वा मे तन्वं१ सं पिपृग्धि॥ ११॥

किम्। भ्राता। असत्। यत्। अनाथम्। भवाति।
किम्। ऊँ इति। स्वसा। यत्। निःऽऋतिः। निऽगच्छात्।
कामऽमूता। बहु। एतत्। रपामि। तन्वा। मे। तन्वम्। सम्। पिपृग्धि॥ ११॥

यमी यमेन प्रत्याख्याता पुनराह। ᵛयत् यस्मिन् भ्रातरि सति स्वस्रादिकम् ᵛअनाथं नाथरहितं भवति सः ᵛभ्राता ᵛकिम् ᵛअसत् किं भवति। न भवतीत्यर्थः। किंच यस्यां भगिन्यां सत्यां भ्रातरं ᵛनिर्ऋतिः दुःखं ᵛनिगच्छात् नियमेन गच्छति प्राप्नोति सा ᵛस्वसा ᵛकिमु किं वा भवति। भ्रातृभगिन्योश्च परस्परं प्रीतिर्येन केनचिदुपायेनावश्यं कार्येत्यभिप्रायः। साहं ᵛकाममूता कामेन मूर्छिता सती ᵛबहु नानाप्रकारम् ᵛएतत् ईदृशमुक्तं वक्ष्यमाणं च ᵛरपामि प्रलपामि। एतज्ज्ञात्वा ᵛमे मम ᵛतन्वा शरीरेण ᵛतन्वं शरीरं ᵛसं ᵛपिपृग्धि संपर्चय। संभोगेन संश्लेषय। मां सम्यग्भुङ्क्ष्वेत्यर्थः॥

न वा उ ते तन्वा तन्वं१ सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात्।
अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत्॥ १२॥

न। वै। ऊँ इति। ते। तन्वा। तन्वम्। सम। पपृच्याम्। पापम्। आहुः। यः। स्वसारम्। निऽगच्छात्।
अन्येन। मत्। प्रऽमुदः। कल्पयस्व। न। ते। भ्राता। सुऽभगे। वष्टि। एतत्॥ १२॥

यमो यमीं प्रत्युक्तवान्। हे यमि ᵛते तव ᵛतन्वा शरीरेण ᵛतन्वम् आत्मीयं शरीरं ᵛन ᵛवै ᵛसं ᵛपपृच्यां नैव संपर्चयामि। नैवाहं त्वां संभोक्तुमिच्छामीत्यर्थः। ᵛयः भ्राता ᵛस्वसारं भगिनीं

१. ग-त४-भ१.४–यमाय वद्देतां; भ२–यमाय वद्दंता।

ᐯनिगच्छात् नियमेनोपगच्छति । संभुङ्क्त इत्यर्थः । तं ᐯपापं पापकारिणम् ᐯआहुः । शिष्टा वदन्ति । एतज्ज्ञात्वा हे ᐯसुभगे सुष्ठु भजनीये हे यमि त्वं ᐯमत् मत्तः ᐯअन्येन त्वद्योग्येन पुरुषेण सह ᐯप्रमुदः संभोगलक्षणान् प्रहर्षान् ᐯकल्पयस्व समर्थय । ᐯते तव ᐯभ्राता यमः ᐯएतत् ईदृशं त्वया सह मैथुनं कर्तुं ᐯन ᐯवष्टि न कामयते । नेच्छति ॥

बुतो बतासि यम नैव ते मनो हृदयं चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम् ॥ १३ ॥

बतः । बत । असि । यम । न । एव । ते । मनः । हृदयम् । च । अविदाम ।
अन्या । किल । त्वाम् । कक्ष्याऽइव । युक्तम् । परि । स्वजाते । लिबुजाऽइव । वृक्षम् ॥ १३ ॥

यमी प्रत्युवाच । हे ᐯयम त्वं ᐯबतः दुर्बलः ᐯअसि । ᐯबत इति निपातः खेदानुकम्पयोः । अनुकम्प्यश्चासि । ᐯते त्वदीयं ᐯमनः मनोगतं संकल्पं ᐯहृदयं ᐯच बुद्धिगतमध्यवसायं च ᐯनैव ᐯअविदाम वयं न जानीम एव । मत्तः ᐯअन्या काचित् स्त्री ᐯत्वां ᐯपरि ᐯष्वजाते ᐯकिल । तत्र दृष्टान्तद्वयमुच्यते । ᐯकक्ष्येव ᐯयुक्तम् । यथा कक्ष्या रज्जुर्युक्तमात्मना संबद्धमश्वं परिष्वजते[1] तद्वत् । ᐯलिबुजेव ᐯवृक्षम् । यथा लिबुजा वननिर्गाढं वृक्षं परिष्वजते तद्वच्च । अन्यस्यां स्त्रियामासक्तस्त्वं मां परिष्वक्तुं[2] नेच्छसीत्यर्थः ॥

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजातै लिबुजेव वृक्षम् ।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ॥ १४ ॥

अन्यम् । ऊँ इति । सु । त्वम् । यमि । अन्यः । ऊँ इति । त्वाम् । परि । स्वजाते । लिबुजाऽइव । वृक्षम् ।
तस्य । वा । त्वम् । मनः । इच्छ । सः । वा । तव । अध । कृणुष्व । सम्ऽविदम् । सुऽभद्राम् ॥ १४ ॥

यमः पुनरप्याह । हे ᐯयमि ᐯत्वम् ᐯअन्यमु अन्यं पुरुषमेव ᐯसु सुष्ठु परिष्वज । ᐯअन्य ᐯउ अन्योऽपि पुरुषः ᐯत्वां ᐯपरि ᐯष्वजाते । तत्र दृष्टान्तः । ᐯलिबुजेव ᐯवृक्षम् । यथा वल्ली गाढं वृक्षं परिष्वजते तद्वत् । तथा सति । वाशब्दः समुच्चये । ᐯत्वं ᐯतस्य च पुरुषस्य ᐯमनः ᐯइच्छ कामय । तस्य त्वं वशवर्तिनी भवेत्यर्थः । ᐯसः च पुरुषः ᐯतव मन इच्छतु । ᐯअध अथ परस्परवशवर्तित्वानन्तरं त्वं तेन सह ᐯसुभद्रां सुकल्याणीं ᐯसंविदं परस्परसंभोगसुखसंवित्तिं ᐯकृणुष्व कुरुष्व ॥ ॥८॥

' वृषा ' इति नवर्चमेकादशं सूक्तमाङ्गिरेर्हविर्धानस्यार्षमाग्नेयम्[3] । सप्तम्याद्यास्तिस्त्रस्त्रिष्टुभः शिष्टा जगत्यः । तथा चानुक्रान्तं—' वृषा नवाङ्गिर्हविर्धान आग्नेयं तु त्रिस्त्रिष्टुबन्तम् ' इति । गतः सूक्तविनियोगः ॥

वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वो अदितेरदाभ्यः ।
विश्वं स वेद वरुणो यथा धिया स यज्ञियो यजतु यज्ञियाँ ऋतून् ॥ १ ॥

वृषा । वृष्णे । दुदुहे । दोहसा । दिवः । पयांसि । यह्वः । अदितेः । अदाभ्यः ।
विश्वम् । सः । वेद । वरुणः । यथा । धिया । सः । यज्ञियः । यजतु । यज्ञियान् । ऋतून् ॥ १ ॥

१. त-परिष्वजाते । २. त-भ-मु-परिष्वक्तुं । ३. ग-त-भ-सूक्तमङ्गेर्हविर्धान° ।

ᐯवृषा आहुतिद्वारेण वृष्टेर्वर्षिता[1] ᐯयह्वः महान् ᐯअदाभ्यः केनाप्यहिंस्योऽग्निः ᐯअदितेः अक्षीणयागक्रियस्य ᐯवृष्णः यज्ञद्वारेण स्तुतीनां हविषां वा वर्षितुर्यजमानस्यार्थाय ᐯदोहसा दोहनेन महता प्रक्षारणेन ᐯदिवः सकाशात् ᐯपयांसि वृष्टिलक्षणान्युदकानि ᐯदुदुहे दोग्धि प्रक्षारयति । किंच ᐯयथा ᐯवरुणः आदित्यः ᐯधिया आत्मानुरूपया प्रज्ञया ᐯविश्वं सर्वं ᐯवेद जानाति तथा ᐯसः अयमग्निः जानातीत्यर्थः । ᐯयज्ञियः यज्ञार्हः ᐯसः अग्निः ᐯयज्ञियान् यज्ञार्हान् ᐯऋतून् ᐯयजतु पूजयतु ॥

रप॑द्गन्ध॒र्वीरप्या॑ च॒ योष॑णा न॒दस्य॑ ना॒दे परि॑ पातु मे॒ मनः॑ ।
इ॒ष्टस्य॒ मध्ये॒ अदि॑ति॒र्नि धा॑तु नो॒ भ्राता॑ नो ज्ये॒ष्ठः प्र॑थ॒मो वि वो॑चति ॥२॥

रप॑त् । ग॒न्ध॒र्वीः । अप्या॑ । च॒ । योष॑णा । न॒दस्य॑ । ना॒दे । परि॑ । पा॒तु॒ । मे॒ । मनः॑ ।
इ॒ष्टस्य॑ । मध्ये॑ । अदि॑तिः । नि । धा॒तु॒ । नः॒ । भ्राता॑ । नः॒ । ज्ये॒ष्ठः । प्र॒थ॒मः । वि । वो॒च॒ति॒ ॥२॥

ᐯरपत् रपितवत्यग्निगुणानुक्तवती ᐯगन्धर्वीः गन्धर्वस्य स्त्री ᐯअप्या अद्भिः संस्कृता ᐯयोषणा आहुतिलक्षणा स्त्री ᐯच । अग्निं तर्पितवतीति शेषः । ᐯनदस्य । स्तोतृनामैतत् । स्तोतुः ᐯमे मम स्वभूतं ᐯमनः ᐯनादे स्तुतिलक्षणे शब्दे ᐯपरि ᐯपातु अग्निः सम्यग्रक्षतु । अहं समाहितमना भूत्वा सम्यक् स्तुतिं करोमीत्यर्थः । किंच ᐯअदितिः अखण्डनीयोऽग्निः ᐯनः अस्मान् ᐯइष्टस्य यागस्य ᐯमध्ये ᐯनि ᐯधातु निदधातु नितरां स्थापयतु । ᐯप्रथमः सर्वेषां यजमानानां मुख्यः ᐯनः अस्माकं ᐯज्येष्ठः ᐯभ्राता ᐯवि ᐯवोचति विशेषेण ब्रवीति । स्तौतीत्यर्थः । नाहमेव केवलो यजनशीलः किंतु सर्व एवास्मत्कुलीनो देवयागप्रिय इत्यर्थः ॥

सो चि॒न्नु भ॒द्रा क्षु॒मती॒ यश॑स्वत्यु॒षा उ॑वास॒ मन॑वे॒ स्व॑र्वती ।
यदी॑मु॒शन्त॑मुश॒ताम॑नु॒ क्रतु॑म॒ग्निं होता॑रं वि॒दथा॑य॒ जीज॑नन् ॥ ३ ॥

सो इति॑ । चि॒त् । नु । भ॒द्रा । क्षु॒ऽमती॑ । यश॑स्वती । उ॒षाः । उ॒वा॒स॒ । मन॑वे । स्वः॑ऽवती ।
यत् । ई॒म् । उ॒शन्त॑म् । उ॒श॒ताम् । अनु॑ । क्रतु॑म् । अ॒ग्निम् । होता॑रम् । वि॒दथा॑य । जीज॑नन् ॥३॥

ᐯभद्रा भजनीया ᐯक्षुमती शब्दवती ᐯयशस्वती अन्नवती कीर्तिमती वा ᐯसो ᐯचित् सैव प्रसिद्धा ᐯउषाः ᐯमनवे मनुष्याय यजमानाय ᐯस्वर्वती आदित्यवती सती ᐯनु क्षिप्रम् ᐯउवास उषितवती[2] । उदितवतीत्यर्थः[2]। कदोदितवती इत्युच्यते । ᐯयत् यदा ᐯउशन्तं स्तुतिं हविश्च कामयमानम् ᐯउशतां यष्टुं[3] कामयमानानां[4] संबन्धिनं ᐯहोतारं देवानामाह्वातारं होमनिष्पादकं वा ᐯईम् एनम् ᐯअग्निम् ᐯअनु ᐯक्रतुं स्तुतिकर्मणः पश्चात् ᐯविदथाय यजनीयाय यज्ञार्थं ᐯजीजनन्[5] । ऋत्विग्यजमाना जनयन्तीत्यर्थः । तदोदितवतीति संबन्धः ॥

अध॒ त्यं द्र॒प्सं वि॒भ्वं॑ विचक्ष॒णं विराभ॑रदिषि॒तः श्ये॒नो अ॑ध्व॒रे ।
यदी॒ विशो॑ वृ॒णते॑ द॒स्ममार्या॑ अ॒ग्निं होता॑र॒मध॒ धीर॑जायत ॥ ४ ॥

अध॑ । त्यम् । द्र॒प्सम् । वि॒ऽभ्व॑म् । वि॒ऽच॒क्ष॒णम् । विः । आ । अ॒भ॒र॒त् । इ॒षि॒तः । श्ये॒नः । अ॒ध्व॒रे ।
यदि॑ । विशः॑ । वृ॒णते॑ । द॒स्मम् । आर्याः॑ । अ॒ग्निम् । होता॑रम् । अध॑ । धीः । अ॒जा॒य॒त॒ ॥४॥

१. त-भ६-वर्षिता । २. त-भ६-उषितवतीत्यर्थः । ३. त-भ६-शब्दं । ४. त१-भ२.५-कामयमानानां यजमानानां । ५. ग-त३-भ५-जीजनन् अजीजनन् ।

ᐯअध अथ अनन्तरं ᐯश्येनः श्येनाख्यः ᐯविः[1] पक्षी ᐯअध्वरे यागे ᐯइषितः अग्निप्रेषितः ᐯविभ्वं महान्तं ᐯविचक्षणं सर्वस्य विशेषेण द्रष्टारं ᐯयं तं प्रसिद्धं ᐯद्रप्सं नात्यल्पं नातिबहुलं सोमम् ᐯआभरत् आहृतवान्। अपि च ᐯयदि यदा ᐯआर्याः अभिगमनीयं तं व्रजन्तः ᐯविशः यजमाना मनुष्याः ᐯदस्मं दर्शनीयं शत्रूणामुपक्षपयितारं वा ᐯहोतारम् ᐯअग्निं ᐯवृणते प्रार्थयन्ते ᐯअध तदा ᐯधीः यागादिक्रिया ᐯअजायत। यज्वभिः प्रतायत इत्यर्थः ॥

सदा॑सि र॒ण्वो यव॑सेव॒ पुष्य॑ते॒ होत्रा॑भिरग्ने॒ मनु॑षः स्वध्व॒रः ।
विप्र॑स्य वा॒ यच्छ॑शमान उ॒क्थ्यं१॒॑ वाजं॑ सस॒वाँ उ॑प॒यासि॒ भूरि॑भिः ॥ ५ ॥

सदा॑ । अ॒सि॒ । र॒ण्वः । यव॑साऽइव । पुष्य॑ते । होत्रा॑भिः । अ॒ग्ने॒ । मनु॑षः । सु॒ऽअ॒ध्व॒रः ।
विप्र॑स्य । वा॒ । यत् । श॒श॒मा॒नः । उ॒क्थ्य॑म् । वाज॑म् । स॒स॒ऽवान् । उ॒प॒ऽयासि॑ । भूरि॑ऽभिः ॥ ५ ॥

हे ᐯअग्ने त्वं[2] ᐯसदा सततं ᐯरण्वः ᐯअसि रमणीयो भवसि[3]। तत्र दृष्टान्तः। ᐯयवसेव ᐯपुष्यते। यथा यवसानि तृणानि स्वपुष्टिं कुर्वते हस्त्यश्वगोमहिषादिचतुष्पदाय सर्वदा रमणीयानि भवन्ति तद्वत्। अपि च हे अग्ने ᐯमनुषः मनुष्यस्य स्वभूतैः ᐯहोत्राभिः। होत्रेति यज्ञनामैतत्। यज्ञैः ᐯस्वध्वरः शोभनयज्ञो भवेति शेषः। ᐯविप्रस्य ᐯवा स्तोतुर्वा ᐯयत् यस्य यजमानस्य वा स्वभूतम् ᐯउक्थ्यं स्तोत्रं ᐯशशमानः प्रशंसन् ᐯवाजं हविर्लक्षणमन्नं ᐯससवान् संभजमानश्च ᐯभूरिभिः[4] बहुभिर्देवैः सह ᐯउपयासि उपगच्छसि ॥　　॥ ९ ॥

उदी॑रय पि॒तरा॑ जा॒र आ भग॒मिय॑क्षति हर्य॒तो हृ॒त्त इ॑ष्यति ।
विव॑क्ति॒ वह्निः॑ स्वप॒स्यते॑ म॒खस्त॑वि॒ष्यते॒ असु॑रो॒ वेप॑ते म॒ती ॥ ६ ॥

उत् । ई॒र॒य॒ । पि॒तरा॑ । जा॒रः । आ । भग॑म् । इय॑क्षति । ह॒र्य॒तः । हृ॒त्तः । इ॒ष्य॒ति॒ ।
विव॑क्ति । वह्निः॑ । सु॒ऽअ॒प॒स्यते॑ । म॒खः । त॒वि॒ष्यते॑ । असु॑रः । वेप॑ते । म॒ती ॥ ६ ॥

हे अग्ने त्वदीयं ज्योतिः ᐯपितरा पितरौ सर्वप्राणिनां मातापितृभूते द्यावापृथिव्यौ प्रति ᐯउदीरय उद्गमय। तत्र दृष्टान्तः। आकार उपमार्थे। रात्रेर्नक्षत्रादिदीप्तीनां च जरयितृत्वात् ᐯजारः आदित्यः। स यथा द्यावापृथिव्यौ प्रति ᐯभगं भजनीयं स्वीयं ज्योतिरुद्गमयति तद्वत्। ᐯहर्यतः यागं कामयमानान् प्रति ᐯइयक्षति यजमानो यष्टुमिच्छति। ᐯहृत्तः हृदयेन[5] च ᐯइष्यति। इषिरयं गत्यर्थः शुद्धोऽप्युपसर्गपूर्वो द्रष्टव्यः। अधीष्यति देवान् यष्टुमधिगच्छति। ᐯविवक्ति विवक्षति। शब्दलक्षणाः स्तुतीर्वक्तुमिच्छति च। ᐯवह्निः वोढा स्तुतीनां देवान् प्रति प्रापयिता होता च ᐯस्वपस्यते शोभनमात्मीयं कर्म कर्तुमिच्छति। ᐯमखः। यज्ञनामैतत्। अत्र तत्प्रयोक्ताध्वर्युरुच्यते। स च ᐯतविष्यते। तविषिर्वृद्ध्यर्थः। स चात्रान्तर्णीतसनर्थश्च द्रष्टव्यः। तुतुविषति स्तोत्रलक्षणाः स्तुतीर्वर्धयितुमिच्छतीत्यर्थः। ᐯअसुरः प्राणवान् प्रज्ञावान् वा। ब्रह्मेति शेषः। ᐯमती मत्या बुद्ध्या ᐯवेपते। कर्मवैगुण्यात् बिभ्यत् कम्पते। हे अग्ने यतो यजमानः सर्वर्त्विजश्च स्वस्वकर्म[6] कर्तुं त्वामागच्छन्ति अतस्त्वं शीघ्रमुद्गमयेत्यर्थः॥

यस्ते॑ अग्ने सुम॒तिं मर्तो॑ अक्ष॒त्सह॑सः सूनो अति॒ स प्र शृ॑ण्वे ।
इषं॒ दधा॑नो॒ वह॑मानो॒ अश्वै॒रा स द्यु॒माँ अम॑वान्भूषति॒ द्यून् ॥ ७ ॥

१. ग–कश्चित्। २. त-भ६–'त्वं' नास्ति। ३. त-भ६–असि। ४. ग–त्वं भूरिभिः। ५. त-भ६-मु–हृदयेनेव। ६. त-मु–स्वकर्म।

यः । ते । अग्ने । सुऽमतिम् । मर्तः । अक्षत् । सहसः । सूनो इति । अति । सः । प्र । शृण्वे ।
इषम् । दधानः । वहमानः । अश्वैः । आ । सः । द्युऽमान् । अमऽवान् । भूषति । द्यून् ॥७॥

हे सहसः सूनो बलस्य पुत्र अग्ने ते त्वदीयां सुमतिं शोभनामनुग्राहिकां बुद्धिं यः[1] मर्तः मनुष्यो यजमानः अक्षत् अश्नुते। अनुग्रहशीलं त्वां स्तुतिभिर्हविर्भिश्च परिचरतीत्यर्थः। सः यजमानः अति प्र शृण्वे सर्वांल्लोकानतीत्य प्रकर्षेण श्रूयते। प्रख्यातो भवतीत्यर्थः। कीदृशः। इषम् अन्नं दधानः अर्थिभ्यः प्रयच्छन् अश्वैः वहमानः[2]। किंच सः एव द्युमान् दीप्तिमान् शरीरपतनानन्तरं द्युस्थानवान् वा अमवान् बलवान् आ द्यून्। द्युरित्यहर्नाम। 'कालाध्वनोरत्यन्तसंयोगे' इत्येषा द्वितीया। आदित्यकर्तृकाण्यहानि। आचन्द्रार्कमित्यर्थः। भूषति भवति ॥

महाव्रते संस्थिते मरुत्वतीये 'यदग्न एषा' इत्यनया चतुर्गृहीतमाज्यं जुहुयात्। तथैव पञ्चमारण्यके[3] सूत्रितं—'यदग्न एषा समितिर्भवाति' ( ऐ. आ. ५. १. १ ) इति[3] ॥

यदग्न एषा समितिर्भवाति देवी देवेषु यजता यजत्र ।
रत्ना च यद्विभजासि स्वधावो भागं नो अत्र वसुमन्तं वीतात् ॥ ८ ॥

यत् । अग्ने । एषा । सम्ऽइतिः । भवाति । देवी । देवेषु । यजता । यजत्र ।
रत्ना । च । यत् । विऽभजासि । स्वधाऽवः । भागम् । नः । अत्र । वसुऽमन्तम् । वीतात् ॥८॥

हे यजत्र यष्टव्य अग्ने यत् यदा एषा समितिः अस्मत्कर्तृका स्तुतिसंहतिः[4] यजता यजतेषु यष्टव्येषु देवेषु मध्ये देवी द्योतमाना भवाति। यष्टव्या देवा अस्माभिः स्तूयन्त इज्यन्ते चेत्यर्थः। हे स्वधावः हविर्लक्षणान्नवन्नग्ने त्वं यत् यदा रत्ना च रत्नानि रमणीयानि धनानि स्तोतृभ्यो यष्टृभ्यश्च विभजासि विभजसि अत्र तदानीं तथा नः अस्मान् प्रति वसुमन्तं धनवन्तं नानाधनावयवभूतं भागम् अंशं वीतात्। वी[5] गत्यादिषु[5]। 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' (पा. सू. ७. १. ३५) इति हेः स्थाने तातङ्। अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः। वयय आगमय। अस्मभ्यं प्रयच्छेत्यर्थः ॥

श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुम् ।
आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः ॥ ९ ॥

श्रुधि । नः । अग्ने । सदने । सधऽस्थे । युक्ष्व । रथम् । अमृतस्य । द्रवित्नुम् ।
आ । नः । वह । रोदसी इति । देवपुत्रे इति देवऽपुत्रे । माकिः । देवानाम् । अप । भूः । इह । स्याः ॥९॥

हे अग्ने सधस्थे सहस्थाने सर्वदेवतासाधारणे[6] सदने यज्ञगृहे स्थितः सन् नः अस्मदीयं वचनं श्रुधि शृणु। किं तद्वचनम् उच्यते। अमृतस्य देवपानस्य मधुनः द्रवित्नुं द्रावकं रथम् आत्मीयं युक्ष्व। आह्वानार्थं देवान् प्रति गमनाय अश्वैः संयुक्ष्व। संयुक्तेन रथेन गत्वा नः अस्माकं

१. त-भ-मु-'यः' नास्ति। २. ग-त३-भ५-वहमानः उह्यमानः। ३. त-भ१.२.४-पंचमारण्यकं; भ६-पंचमारण्यकं यदग्न एषा समितिर्भवातीत्यत्र विभजाथ वीथेति। ४. त-स्तुतिमंहतिश्च; भ१.२.४-स्तुतिसंहितत्वं; भ६-स्तुतिर्मंहतिश्च; मु-स्तुतिः संहतिश्च। ५. त१.२.६-भ१-'वी गत्यादिषु' नास्ति; त३.४.५-भ२.४-पुस्तकेषु 'वी गत्यादिषु' इत्यस्य स्थाने कियांश्चिदवकाशो विद्यते; भ६-भक्षयतु। ६. त-सर्वदेवताअधारणे।

यज्ञं प्रति ᵛदेवपुत्रे देवस्य प्रजापतेर्दुहितरौ। यद्वा[1] देवाः पुत्रा ययोस्ते। ᵛरोदसी[2] द्यावापृथिव्यौ ᵛआ ᵛवह प्रापय। ᵛदेवानां मध्ये कश्चिद्देवः ᵛअप ᵛभूः अपभविता अस्मद्यज्ञादपगन्ता ᵛमाकिः स्यात्। त्वं च ᵛइह अस्मिन् यज्ञे ᵛस्याः संनिहितो भव॥ ॥ १० ॥

'द्यावा' इति नवर्चं द्वादशं सूक्तमाङ्गेर्हविर्धानस्यार्षं[3] त्रैष्टुभमाग्नेयम्। 'द्यावा' इत्यनुक्रान्तम्। गतो विनियोगः॥

द्यावा॑ ह॒ क्षामा॑ प्रथ॒मे ऋ॒तेना॑भिश्रा॒वे भ॑वतः सत्य॒वाचा॑।
दे॒वो यन्मर्ता॑न्य॒जथा॑य कृ॒ण्वन्त्सीद॒द्धोता॑ प्र॒त्यङ् स्वमसुं॒ यन् ॥ १ ॥

द्यावा॑। ह॒। क्षामा॑। प्र॒थ॒मे इति॑। ऋ॒तेन॑। अ॒भि॒ऽश्रा॒वे। भ॒व॒तः। स॒त्य॒ऽवाचा॑।
दे॒वः। यत्। मर्ता॑न्। य॒जथा॑य। कृ॒ण्वन्। सीद॑त्। होता॑। प्र॒त्यङ्। स्वम्। असु॑म्। यन् ॥१॥

ᵛसत्यवाचा सत्यवाचौ सत्यवादिन्यौ ᵛप्रथमे प्रधानभूते ᵛद्यावा ᵛक्षामा द्युक्षामे द्यावापृथिव्यौ ᵛऋतेन सत्यभूतेन देवयजनेन सह ᵛअभिश्रावे। आभिमुख्येन श्रूयत इत्यभिश्राव आह्वानम्। तस्मिन् अस्मद्यज्ञनिमित्तेऽग्नेः संबन्धिन्याह्वाने ᵛभवतः। लोडर्थे लट्। भवताम्। ᵛयत् यदा ᵛदेवः द्योतमानोऽग्निः ᵛयजथाय यज्ञाय ᵛमर्तान् मनुष्यान् ᵛकृण्वन् प्रेरयन् ᵛप्रत्यङ् आह्वानार्थं देवानां प्रत्यञ्चिता ᵛस्वम् ᵛअसुम् आत्मीयं ज्वालालक्षणं प्राणं ᵛयन् प्राप्नुवन् ᵛहोता देवानामाह्वाता ᵛसीदत् वेद्यां निषीदति। तदास्मद्यागकाले द्यावापृथिवी प्रमुखोऽग्निः[4] आह्वयत्वित्यर्थः॥

दे॒वो दे॒वान्प॑रि॒भूरृ॒तेन॒ वहा॑ नो ह॒व्यं प्र॑थ॒मश्चि॑कि॒त्वान्।
धू॒मके॑तुः स॒मिधा॒ भाऋ॑जीको म॒न्द्रो होता॒ नित्यो॑ वा॒चा यजी॑यान् ॥ २ ॥

दे॒वः। दे॒वान्। प॒रि॒ऽभूः। ऋ॒तेन॑। वह॑। नः। ह॒व्यम्। प्र॒थ॒मः। चि॒कि॒त्वान्।
धू॒मऽके॑तुः। स॒म्ऽइधा॑। भाःऽऋ॑जीकः। म॒न्द्रः। होता॑। नित्यः॑। वा॒चा। यजी॑यान् ॥२॥

ᵛदेवः द्योतमानोऽग्निस्त्वं ᵛदेवान् इन्द्रादीन् ᵛपरिभूः आह्वानहविर्नयनद्वारेण परिभूः परिगृह्णन्[5] ᵛऋतेन यज्ञेन सह ᵛनः अस्माकं ᵛहव्यं हविः ᵛवह प्रापय। कीदृशस्त्वम्। ᵛप्रथमः देवानां मुख्यः ᵛचिकित्वान् सर्वं जानन् ᵛधूमकेतुः धूमस्य कर्ता वा धूमध्वजो वा धूमप्रज्ञानो वा ᵛसमिधा समिन्धनेन संदीपनेन ᵛभाऋजीकः ऋजुदीप्तिः। ऊर्ध्वज्वलन इत्यर्थः। ᵛमन्द्रः स्तुत्यः ᵛहोता आह्वाता ᵛनित्यः ध्रुवः ᵛवाचा ᵛयजीयान् अतिशयेन यष्टा च॥

स्वावृ॑ग्दे॒वस्या॒मृतं॒ यदी॒ गोरतो॑ जा॒तासो॑ धारयन्त उ॒र्वी।
विश्वे॑ दे॒वा अनु॒ तत्ते॒ यजु॑र्गुर्दु॒हे यदेनी॑ दि॒व्यं घृ॒तं वाः ॥ ३ ॥

स्वावृ॑क्। दे॒वस्य॑। अ॒मृत॑म्। यदि॑। गोः। अतः॑। जा॒तासः॑। धा॒रय॑न्ते। उ॒र्वी इति॑।
विश्वे॑। दे॒वाः। अनु॑। तत्। ते॒। यजुः॑। गुः॒। दु॒हे। यत्। एनी॑। दि॒व्यम्। घृ॒तम्। वारिति॑ वाः॥३॥

१. त–'यद्वा' नास्ति। २. त–'रोदसी' नास्ति। ३. ग-त-भ–सूक्तमग्नेर्हवि°। ४. भ१–प्रमुखोनग्निः; भ४.६–प्रमुखानग्निः; भ७–प्रमुखाग्नि। ५. त-भ२.६–परिगृह्णन्; भ१.४–परिगृ; भ७–परिभूः।

ᵛदेवस्य अग्नेः ᵛस्वावृक् स्वार्जनम् ᵛअमृतम् उदकं स्वतेजसः सकाशात् ᵛयदि यदोत्पद्यते तदा ᵛअतः अस्मात् ᵛगोः उदकात् ᵛजातासः उत्पन्ना ओषधयः ᵛउर्वी द्यावापृथिव्यौ धारयन्ति। ᵛविश्वे ᵛदेवाः सर्वे स्तोतारः ᵛते तव संबन्धि ᵛतत् ᵛयजुः उदकस्य तद्दानम् ᵛअनु ᵛगुः अनुगायन्ति। ᵛएनी श्वेता दीप्तिः ᵛदिव्यं दिवि भवं ᵛघृतं क्षरत्[1] ᵛयत् ᵛवाः वृष्टिलक्षणं यदुदकं ᵛदुहे दोग्धि ॥

अर्चामि वां वर्धायापो घृतस्नू द्यावाभूमी शृणुतं रोदसी मे।
अहा यद् द्यावोऽसुनीतिमयन्मध्वा नो अत्र पितरा शिशीताम् ॥ ४ ॥

अर्चामि। वाम्। वर्धाय। अपः। घृतस्नू इति घृतऽस्नू। द्यावाभूमी इति। शृणुतम्। रोदसी इति। मे। अहा। यत्। द्यावः। असुऽनीतिम्। अयन्। मध्वा। नः। अत्र। पितरा। शिशीताम् ॥४॥

हे अग्ने त्वम् ᵛअपः मदीयं यज्ञरूपं कर्म ᵛवर्धाय। प्रोत्सर्पिते सति हे ᵛघृतस्नू वृष्ट्युदकस्य प्रसविन्यौ हे ᵛद्यावाभूमी द्यावापृथिव्यौ ᵛवां युवाम् ᵛअर्चामि। 'ऋच स्तुतौ'। स्तौमि। हे ᵛरोदसी द्यावापृथिव्यौ युवां ᵛमे मदीयं स्तोत्रं ᵛशृणुतम्। ᵛयत् यस्मिन् ᵛअहा। अहःशब्दसामर्थ्यादहोरात्रसाध्यं कर्मोच्यते। 'सुपां सुलुक्°' इति सप्तम्येकवचनस्याजादेशः। अहनि अहोरात्रसाध्यकर्मणि ᵛद्यावः स्तोतारः ᵛअसुनीतिम्। असुः प्रज्ञा। तया नीयत इत्यसुनीतिः स्तुतिः। ताम् ᵛअयन् गच्छन्ति ᵛअत्र अस्मिन् कर्मणि ᵛपितरा सर्वस्य मातापितृभूते द्यावापृथिव्यौ ᵛनः अस्मान् वृष्ट्युदकेन ᵛशिशीताम्। स्नानपानादिना संस्कुरुताम् ॥

किं स्विन्नो राजा जगृहे कदस्याति व्रतं चकृमा को वि वेद।
मित्रश्चिद्धि ष्मा जुहुराणो देवाञ्छ्लोको न यातामपि वाजो अस्ति ॥ ५ ॥

किम्। स्वित्। नः। राजा। जगृहे। कत्। अस्य। अति। व्रतम्। चकृम। कः। वि। वेद। मित्रः। चित्। हि। स्म। जुहुराणः। देवान्। श्लोकः। न। याताम्। अपि। वाजः। अस्ति ॥५॥

किंस्विच्छब्दो वितर्कार्थे। किंवा[2] ᵛराजा दीप्यमानोऽग्निः ᵛनः अस्माकं स्वभूतानि हवींषि स्तुतीश्च ᵛजगृहे परिगृह्णीयात् किंवा ᵛअस्य अग्नेः ᵛअति ᵛव्रतम् अतिपूजितं परिचरणाख्यं कर्म ᵛचकृम वयं क्रियास्म। कर्मवैगुण्याद्भीतस्य पूर्वार्धे एतद्वचनमुक्तम्। उत्तरार्धं इदानीं तन्निराक्रियते। ᵛहि ᵛस्म इतीमौ पूरणौ। ᵛचित् इत्युपमार्थे। ᵛजुहुराणः स्निग्धेनाहूयमानः ᵛमित्रः स्निग्धो यथा गच्छेत् तथा। ᵛन इति संप्रत्यर्थे। ᵛश्लोकः अस्मदीया स्तुतिलक्षणा वाक् ᵛदेवान् इन्द्रादीन् ᵛयातां गच्छतु। ᵛअपि ᵛवाजः हविराख्यं चान्नं यत् ᵛअस्ति तदपि देवान् प्रति गच्छतु। देवाः स्तुतिं हविश्च प्रतिगृह्णन्त्वित्यर्थः ॥ ॥ ११ ॥

दुर्मन्त्वत्रामृतस्य नाम सलक्ष्मा यद्विषुरूपा भवाति।
यमस्य यो मनवते सुमन्त्वग्ने तमृष्व पाह्यप्रयुच्छन् ॥ ६ ॥

दुःऽमन्तु। अत्र। अमृतस्य। नाम। सऽलक्ष्मा। यत्। विषुऽरूपा। भवाति। यमस्य। यः। मनवते। सुऽमन्तु। अग्ने। तम्। ऋष्व। पाहि। अप्रऽयुच्छन् ॥ ६ ॥*

१. त१.२.४.५.६.भ१.६.७–जरयन्; त३.७–भ२.४–जरयत्। २. ग–क१ किंवा। * ग–अत्रास्मिन् कर्मणि

यस्मिन्देवा विदथे मादयन्ते विवस्वतः सदने धारयन्ते ।
सूर्ये ज्योतिरदधुर्मास्य१क्तून्परि द्योतनिं चरतो अजस्रा ॥ ७ ॥

यस्मिन् । देवाः । विदथे । मादयन्ते । विवस्वतः । सदने । धारयन्ते ।
सूर्ये । ज्योतिः । अदधुः । मासि । अक्तून् । परि । द्योतनिम् । चरतः । अजस्रा ॥ ७ ॥

ᵛयस्मिन् अग्नौ यज्ञस्य प्रधानांशे सति ᵛदेवाः इन्द्रादयः ᵛविदथे यज्ञे ᵛमादयन्ते हविषा आत्मानं तर्पयन्ति तृप्यन्ति वा । अपि च ᵛविवस्वतः मनुष्यस्य यजमानस्य स्वभूते ᵛसदने वेद्याख्ये स्थाने ᵛधारयन्ते आत्मानं स्थापयन्ति च । किंच ᵛसूर्ये ᵛज्योतिः अहराख्यं तेजः ᵛअदधुः स्थापितवन्तः । ᵛमासि चन्द्रमसि ᵛअक्तून् रात्रीः स्थापितवन्तः । तदनन्तरम् ᵛअजस्रा अनुपक्षीणौ सूर्याचन्द्रमसौ ᵛद्योतनिं दीप्तिं ᵛपरि ᵛचरतः परिगच्छतः । सर्वत्र प्राप्नुतः ॥

यस्मिन्देवा मन्मनि संचरन्त्यपीच्ये३ न वयमस्य विद्म ।
मित्रो नो अत्रादितिरनागान्त्सविता देवो वरुणाय वोचत् ॥ ८ ॥

यस्मिन् । देवाः । मन्मनि । सम्ऽचरन्ति । अपीच्ये । न । वयम् । अस्य । विद्म ।
मित्रः । नः । अत्र । अदितिः । अनागान् । सविता । देवः । वरुणाय । वोचत् ॥ ८ ॥

ᵛदेवाः इन्द्रादयः ᵛयस्मिन् अग्नौ ᵛमन्मनि ज्ञानभूते ज्ञानवत्सर्वप्रकाशके सति ᵛसंचरन्ति स्वाधिकारे संप्रवर्तन्ते[1] ᵛअपीच्ये अन्तर्हिते स्थितमग्नेः स्वरूपं ᵛवयं ᵛन ᵛविद्म तत्त्वतो न जानीमः । ᵛअत्र अस्मिन् यज्ञेऽङ्गभावाय वर्तमानः ᵛमित्रः ᵛवरुणाय सर्वेषां पापानां निवारयित्रेऽग्नये ᵛनः अस्मान् ᵛअनागान् अपापान् ᵛवोचत् ब्रवीतु । तथा ᵛअदितिः देवमाता ᵛसविता सर्वस्य प्रेरकः ᵛदेवः च ब्रवीतु ॥

श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुम् ।
आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः ॥ ९ ॥

श्रुधि । नः । अग्ने । सदने । सधऽस्थे । युक्ष्व । रथम् । अमृतस्य । द्रवित्नुम् ।
आ । नः । वह । रोदसी इति । देवपुत्रे इति देवऽपुत्रे ।
माकिः । देवानाम् । अप । भूः । इह । स्याः ॥ ९ ॥

कृतेऽमृतस्य यमस्य नाम दुर्मंतु दुर्वचनं भवति । यद्यस्मै सलक्ष्मा विषमरूपा भगिनी भार्या भवति । तत्तु न तथा इति यमं यः स्तौति सुवचनमस्य नामेति तं स्तोतारं दर्शनीयाग्ने अप्रयुच्छन् अप्रमाद्यन् रक्ष; त७-मु—यद्यस्य अमृतस्य मरणधर्मरहितस्य सूर्यस्य । अस्य मरणधर्मराहित्यं तु सूर्यं विषमा सजामीत्यस्यां ऋचि प्रसिद्धं । तादृशस्य संबंधि नाम नामकमुदकं अत्र अस्यां पृथिव्यां विषुरूपा नानारूपं भवाति भवति । उदकस्य नानारूपत्वं या आपो दिव्या इति मंत्रे स्फुटमुक्तं । कीदृशं तत् । दुर्मंतु निरपराधं प्रह्वस्वभावत्वात् । पुनः कीदृशं । सलक्ष्मा मधुररसरूपलक्षणोपेतं ( मु-'रसलक्षणोपेतं ) । किंच यः सूर्यः यमस्य संयमिनीपतेः सुमंतु सुतरामपराधं मातृताडनरूपं मनवते अवबुध्यते सर्वज्ञत्वात् ( मु-'सर्वज्ञत्वात्'-नास्ति ) । यद्वा धातूनामनेकार्थत्वात् क्षमत इत्यर्थः । तं तादृशं जलजनकं सर्वज्ञं क्षमाशीलं सूर्यं हे ऋष्व महन्नग्ने अप्रयुच्छन् अप्रमाद्यन् त्वं पाहि । आहुतिप्रदानेन रक्षणद्वारात्मरक्षणं प्रार्थयते ऋषिः । १. त-संवर्तते ।

'श्रुधी नः' इत्येषा नवमी पूर्वसूक्ते व्याख्याता ॥ ॥ १२ ॥

'युजे वाम्' इति पञ्चर्चं त्रयोदशं सूक्तमदितेः पुत्रस्य विवस्वत आर्षम्। हविर्धानाख्ये ये द्वे शकटे तद्देवत्यमिदम्। अन्त्या जगती शिष्टास्त्रिष्टुभः। तथा चानुक्रान्तं—'युजे पञ्च विवस्वानादित्यो हाविर्धानं[1] जगत्यन्तम्' इति। गतः सूक्तविनियोगः। हविर्धानप्रवर्तने 'युजे वाम्' इत्येका। सूत्रितं च—'अन्तरा वर्त्म पादयोर्युजे वां ब्रह्म पूर्व्यं नमोभिः' (आश्व. श्रौ. ४. ९) इति ॥

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरेः।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ १ ॥

युजे। वाम्। ब्रह्म। पूर्व्यम्। नमःऽभिः। वि। श्लोकः। एतु। पथ्याऽइव। सूरेः।
शृण्वन्तु। विश्वे। अमृतस्य। पुत्राः। आ। ये। धामानि। दिव्यानि। तस्थुः ॥ १ ॥

हे हविर्धानशकटे वां युवामहं पूर्व्यं पूर्वस्मिन् काले भवम्। अनादिकालप्रवृत्तमित्यर्थः। एवंभूतं ब्रह्म मन्त्रम्। उच्चार्येति शेषः। नमोभिः सोमादिहविर्लक्षणैरन्नैः युजे युनज्मि। युवयोरुपरि सोमादिकमारोप्य पत्नीशालातो हविर्धानं प्रति युवां नयामीत्यर्थः। एवंभूतयोर्युवयोः श्लोकः शब्दः वि एतु विश्वान् देवान् प्रति विविधं गच्छतु। तत्र दृष्टान्तः। पथ्येव सूरेः। यथा स्तोतुः स्वभूता पथ्या परिणामसुखावहा[2] आहुतिः[2] विश्वान् देवान् प्रति विविधं गच्छति तद्वत्। अमृतस्य अमरणधर्मणः प्रजापतेः पुत्राः विश्वे देवाः एवंभूतं शब्दं शृण्वन्तु ये देवाः दिव्यानि दिवि भवानि धामानि स्थानानि आ तस्थुः अधिष्ठितवन्तः[3]। ते शृण्वन्त्वित्यर्थः ॥

अत्रैव हविर्धानप्रवर्तने[4] 'यमेइव' इत्येषा। सूत्रितं च—'यमेइव यतमाने यदैतमधि द्वयोरदधा उक्थ्यं वच इत्यर्धर्च आरमेत्' (आश्व. श्रौ. ४. ९) इति ॥

यमेइव यतमाने यदैतं प्र वां भरन्मानुषा देवयन्तः।
आ सीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः ॥ २ ॥

यमे इवेति यमेऽइव। यतमाने इति। यत्। ऐतम्। प्र। वाम्। भरन्। मानुषाः। देवऽयन्तः।
आ। सीदतम्। स्वम्। ॐ इति। लोकम्। विदाने इति।
स्वासस्थे इति सुऽआसस्थे। भवतम्। इन्दवे। नः ॥ २ ॥

यमेइव यथा सहोत्पन्ने अपत्ये संचरतः तथा यतमाने गमनहविर्धारणादिस्वाधिकारकर्मणि प्रवर्तमाने हविर्धानशकटे युवां[5] यत्[6] यदा एतं[6] हविर्धानस्थानं प्रतिगच्छथः तदा देवयन्तः देवकामाः मानुषाः यजमानाः वां युवां प्र भरन् प्रभरन्ति। किंच युवां स्वमु लोकम् आत्मीयमेव हविर्धानाख्यं स्थानं विदाने जानती आ सीदतम्[7]। ततः नः अस्माकम् इन्दवे सोमार्थं स्वासस्थे शोभननिवासस्थाने भवतम्[8] ॥

---

१. त-भ१.२.४.६-मु—हविर्धानं। २. त२.५.६—°स्तुस्वाहुतिवान्; त४-भ६—°सुखावहा आहुतिर्वान्; त३-भ१.४.७—°सुखावहा आहुतिर्वा; भ२—°सुखावहा आहुतीर्वा। ३. त१.२.४.५.६-भ१.२.४.६—अधितिष्ठितवंतः। ४. त-भ—हविर्धाने। ५. त-भ६—युवयोः। ६. त१.२.३.६.७-भ१.२.६—यद्यदा एतं; त४.५—यद्यदा एत; भ४—यद्यदा एवं; भ७—यद्यदा येतं। ७. ग-त३.४-भ५.६—सीदतं निषीदतं। ८. त-भ४.६—भवतां।

पञ्च॑ प॒दानि॑ रु॒पो अन्व॑रोहं॒ चतु॑ष्पदी॒मन्वे॑मि व्र॒तेन॑ ।
अ॒क्षरे॑ण॒ प्रति॑ मिम ए॒तामृ॒तस्य॒ नाभा॒वधि॒ सं पु॑नामि ॥ ३ ॥

पञ्च॑ । प॒दानि॑ । रु॒पः । अनु॑ । अ॒रो॒ह॒म् । चतु॑ःऽपदीम् । अनु॑ । ए॒मि॒ । व्र॒तेन॑ ।
अ॒क्षरे॑ण । प्रति॑ । मि॒मे॒ । ए॒ताम् । ऋ॒तस्य॑ । नाभौ॑ । अधि॑ । सम् । पु॒ना॒मि॒ ॥ ३ ॥

^v^रुपः यष्टॄणां स्वर्गमारोपयितुर्यज्ञस्याङ्गत्वेन संबन्धीनि पञ्चसंख्याकानि धानासोमपशुपुरोडाशाज्याख्यानि[1] ^v^पदानि पदितॄणि होतृत्वेन देवान् प्रति गन्तॄणि हवींषि ^v^अन्वरोहम् अनुरोहामि। शकटे युवयोः स्थापनवहनानन्तरं करणं करोमीत्यर्थः। किंच ^v^चतुष्पदीं चतुर्भिः पादैर्युक्तां[2] त्रिष्टुबादिच्छन्दस्कां क्रियां[3] ^v^व्रतेन प्रयोगकर्मणा ^v^अन्वेमि अनुगच्छामि। यथाकालं प्रयुनज्मीत्यर्थः। ^v^अक्षरेण प्रणवाख्येन ^v^एताम् उपस्थितां प्रतिगरक्रियां ^v^प्रति ^v^मिमे निर्ममे। अपि च ^v^ऋतस्य यज्ञस्य। ^v^अधि इति सप्तम्यर्थानुवादी। ^v^नाभौ नाभिभूते वेद्याख्ये स्थाने ^v^सं ^v^पुनामि संशोधयामि। दशापवित्रेण सोमं संस्करोमीत्यर्थः ॥

दे॒वेभ्यः॒ कम॑वृणीत मृ॒त्युं प्र॒जायै॒ कम॒मृतं॒ नावृ॑णीत ।
बृह॒स्पतिं॑ य॒ज्ञम॑कृण्वत॒ ऋषिं॑ प्रि॒यां य॒मस्त॒न्वं॑ प्रारि॑रेचीत् ॥ ४ ॥

दे॒वेभ्यः॑ । कम् । अ॒वृ॒णी॒त॒ । मृ॒त्युम् । प्र॒ऽजायै॑ । कम् । अ॒मृत॑म् । न । अ॒वृ॒णी॒त॒ ।
बृ॒ह॒स्पति॑म् । य॒ज्ञम् । अ॒कृ॒ण्व॒त॒ । ऋषि॑म् । प्रि॒याम् । य॒मः । त॒न्व॑म् । प्र । अ॒रि॒रे॒चीत् ॥४॥

^v^देवेभ्यः देवानां ^v^मृत्युं मारयितारं ^v^कं[4] स्वपुरुषम् ^v^अवृणीत प्रार्थयते प्रयुङ्क्ते। किंच ^v^प्रजायै देवव्यतिरिक्ताया मनुष्यादिकायाः प्रजायाः ^v^अमृतम् अमारकमविनाशकं[5] ^v^कं वा स्वपुरुषं ^v^नावृणीत न प्रयुङ्क्ते। हविर्धारणक्रियायां प्रवृत्तायां सत्यां पूर्वोक्तानां सर्वेषां स्थितेरवश्यंभावित्वान्न कंचिदपि विनाशकं स्वपुरुषं यमो निरूपयतीत्यर्थः[6]। अपि च ^v^बृहस्पतिं बृहतां देवानां हविर्धारणे पालकं बृहतां मन्त्राणां स्वामिनं वा ^v^ऋषिं सर्वस्य दृष्टादृष्टफलस्य द्रष्टारं ^v^यज्ञम् ^v^अकृण्वत ऋत्विग्यजमानाः कुर्वन्ति। अपि च ^v^यमः ^v^प्रियां ^v^तन्वम् अस्मदीयमिष्टं शरीरं ^v^प्रारिरेचीत्। धातूनामनेकार्थत्वात् रिचिरत्र[7] परिहारार्थे वर्तते। प्ररेचयति। मृत्योः सकाशात् परिहरति। कर्मवैगुण्यजनितदोषभावादस्माकं जीवितं नापहरतीत्यर्थः ॥

स॒प्त क्ष॑रन्ति॒ शिश॑वे म॒रुत्व॑ते पि॒त्रे पु॒त्रासो॒ अप्य॑वीवतन्नृ॒तम् ।
उ॒भे इद॑स्यो॒भय॑स्य राजत उ॒भे य॑तेते उ॒भय॑स्य पुष्यतः ॥ ५ ॥

स॒प्त । क्ष॒र॒न्ति॒ । शिश॑वे । म॒रुत्व॑ते । पि॒त्रे । पु॒त्रासः॑ । अपि॑ । अ॒वी॒व॒त॒न् । ऋ॒तम् ।
उ॒भे इति॑ । इत् । अ॒स्य॒ । उ॒भय॑स्य । रा॒ज॒तः॒ । उ॒भे इति॑ । य॒तेते॒ इति॑ । उ॒भय॑स्य । पु॒ष्य॒तः॒ ॥५॥

^v^मरुत्वते। मरुतः स्तोतारः। स्तुतिद्वारेण तद्वते ^v^पित्रे ऋत्विजां पितृभूताय ^v^शिशवे शंसनीयाय हविर्धानशकटयोः सुखासीनभूताय सोमाय ^v^सप्त च्छन्दांसि ^v^क्षरन्ति स्तुतित्वेन गच्छन्ति। अपि च

१. त-भ४-धना॰। २. त-मु-पदैर्युक्तां। ३. त-भ-मु-'क्रियां' नास्ति। ४. त२.३.७-भ१.२.४.६-यं कं। ५. त-भ-अमारकं विनाशकं। ६. ग-निवारयति। प्रजायै मनुष्येभ्यो अमृतं अन्नावृणीत कमपि न वारयतीत्यर्थः; त-निरूपयंति; भ१.२.४-न रूपयति। ७. त-रिरिचेरत्र; भ-रिरिचिरत्र।

ᵛपुत्रासः ᵛअपि सोमस्य पुत्रभूता ऋत्विजोऽपि ᵛऋतं सत्यभूतं स्तोत्रम् ᵛअवीवतन् संगमयन्ति। सद्गुणग्राहिणीं स्तुतिं कुर्वन्तीत्यर्थः। ᵛउभे ᵛइत् द्वे एव हविर्धानशकटे ᵛअस्य ᵛउभयस्य देवजातस्य मनुष्यजातस्य च ᵛराजतः ईशाते। ᵛउभे एव शकटे ᵛयतेते कर्मानुष्ठाने प्रयत्नं कुरुतः। ᵛउभयस्य देवजातस्य मनुष्यजातस्य च ᵛपुष्यतः। हविर्धारणद्वारेण पुष्टिं कुरुत इत्यर्थः॥ ॥ १३ ॥

'परेयिवांसम्' इति षोडशर्चं चतुर्दशं सूक्तं विवस्वतः पुत्रस्य यमस्यार्षम्। 'अङ्गिरसो नः पितरो नवग्वाः' इति षष्ठ्या अङ्गिरःपित्रथर्वभृगुलक्षणा लिङ्गोक्ता देवताः। 'प्रेहि' इत्याद्यास्तिस्रो लिङ्गोक्तदेवताकाः पितृदेवताका वा। 'अति द्रव सारमेयौ' इत्यादिकस्तृचः सरमापुत्रौ यौ श्वानौ परलोकमार्गमभितः स्थितौ तद्देवताकः। शिष्टा यमदेवत्याः। 'यमाय सोमम्' इति त्रयोदश्याद्या अनुष्टुभः। 'यमाय मधुमत्तमम्' इत्येषा बृहती। आदितो द्वादश त्रिष्टुभः। तथा चानुक्रान्तं— 'परेयिवांसं षोळश यमो यामं षष्ठी लिङ्गोक्तदेवता पराश्च तिस्रः पित्र्या वा तृचः श्वभ्यां परा अनुष्टुभो बृहत्युपान्त्या' इति। गतः सूक्तविनियोगः। महापितृयज्ञे यमयागाख्या याज्या। सूत्रितं च—'इमं यम प्रस्तरमा हि सीदेति द्वे परेयिवांसं प्रवतो महीरनु' (आश्व. श्रौ. २. १९) इति॥

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥ १ ॥

परेयिऽवांसम्। प्रऽवतः। महीः। अनु। बहुऽभ्यः। पन्थाम्। अनुऽपस्पशानम्।
वैवस्वतम्। सम्ऽगमनम्। जनानाम्। यमम्। राजानम्। हविषा। दुवस्य ॥ १ ॥

हे मदीयान्तरात्मन् यजमान वा त्वं ᵛराजानं पितॄणां स्वामिनं ᵛयमं ᵛहविषा पुरोडाशादिना ᵛदुवस्य परिचर। कीदृशम्। ᵛप्रवतः प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान् ᵛमहीः तत्तद्भोगोचितभूप्रदेशविशेषान् ᵛअनु ᵛपरेयिवांसं क्रमेण मरणादूर्ध्वं प्रापितवन्तं तथा ᵛबहुभ्यः स्वर्गार्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतार्थं ᵛपन्थां स्वर्गस्योचितं मार्गम् ᵛअनुपस्पशानम् अबाधमानम्। पापिन एव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयति[1] न तु पुण्यकृत इत्यर्थः। ᵛवैवस्वतं विवस्वतः सूर्यस्य पुत्रं ᵛजनानां पापिनां ᵛसंगमनं गन्तव्यस्थानरूपम्॥

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ।
यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः ॥ २ ॥

यमः। नः। गातुम्। प्रथमः। विवेद। न। एषा। गव्यूतिः। अपऽभर्तवै। ऊँ इति।
यत्र। नः। पूर्वे। पितरः। पराऽईयुः। एना। जज्ञानाः। पथ्याः। अनु। स्वाः ॥ २ ॥

ᵛप्रथमः सर्वेषां मुख्यः ᵛयमः ᵛनः अस्माकं प्रजानां ᵛगातुं शुभाशुभनिमित्तं ᵛविवेद[2] जानाति। ᵛएषा ᵛगव्यूतिः ᵛन ᵛअपभर्तवा ᵛउ। अतिशयज्ञानयोगात् यमस्य न केनचिदपहर्तुमपनेतुं शक्यत इत्यर्थः। ᵛयत्र यस्मिन् मार्गे ᵛनः अस्माकं ᵛपूर्वे[3] ᵛपितरः ᵛपरेयुः[4] ᵛएना अनेन मार्गेण गच्छन्तः[5] ᵛजज्ञानाः जाताः सर्वे ᵛस्वाः स्वभूताः ᵛपथ्याः स्वकर्ममार्गभूता गतीः ᵛअनु गच्छन्ति॥

---

१. त-भ-मु-प्रापयंति। २. त१.४.५.७-भ१.२.४.६-मा विवेद; त२.६-मां विवेद। ३. त-भ६-'पूर्वे' नास्ति। ४. त३-भ१-पुस्तकयोः 'परेयुः' इत्यस्यानन्तरं कियांश्चिदवकाशो विद्यते; भ२-परेयुः पित्रादयो गताः। ५. भ१-पुस्तके 'गच्छन्तः' इत्यस्यानन्तरं कियांश्चिदवकाशः।

आग्निमारुते 'मातली कव्यैः' इत्येषा धाय्या। सूत्रितं च—'इमं यम प्रस्तरमा हि सीद मातली कव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत्परासः' (आश्व. श्रौ. ५. २०) इति ॥

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः।
यांश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति ॥ ३ ॥

मातली। कव्यैः। यमः। अङ्गिरःऽभिः। बृहस्पतिः। ऋक्वऽभिः। ववृधानः।
यान्। च। देवाः। ववृधुः। ये। च। देवान्। स्वाहा। अन्ये। स्वधया। अन्ये। मदन्ति ॥ ३ ॥

ᵛमातली। मातलिरिन्द्रस्य सारथिः। तद्वानिन्द्रो मातली। स च ᵛकव्यैः कव्यभाग्भिः[1] पितृभिः सह ᵛववृधानः वर्धमानो भवति। ᵛयमः[2] च[2] ᵛअङ्गिरोभिः पितृविशेषैः सह वर्धमानो भवति। – – –। तत्र ᵛदेवाः इन्द्रादयः ᵛयांश्च कव्यभागादीन् पितॄन् ᵛववृधुः वर्धयन्ति ᵛये ᵛच कव्यभागादयः पितरः ᵛदेवान् इन्द्रादीन् वर्धयन्ति तेषां मध्ये ᵛअन्ये इन्द्रादयः ᵛस्वाहा ᵛमदन्ति स्वाहाकारेण हृष्यन्ति। ᵛअन्ये पितरः ᵛस्वधया स्वधाकारेण हृष्यन्ति ॥

महापितृयज्ञे यमस्य 'इमं यम' इत्यादिके द्वे अनुवाक्ये। 'इमं यम प्रस्तरमा[3] हि सीदेति द्वे' (आश्व. श्रौ. २. १९) इति हि सूत्रितम्। सैषाग्निमारुतेऽपि[3] धाय्या। सूत्रं पूर्वमेवोदाहृतम् ॥

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥ ४ ॥

इमम्। यम। प्रऽस्तरम्। आ। हि। सीद। अङ्गिरःऽभिः। पितृऽभिः। सम्ऽविदानः।
आ। त्वा। मन्त्राः। कविऽशस्ताः। वहन्तु। एना। राजन्। हविषा। मादयस्व ॥ ४ ॥

हे ᵛयम ᵛअङ्गिरोभिः एतन्नामकैः ᵛपितृभिः ᵛसंविदानः ऐकमत्यं गतस्त्वम् ᵛइमं ᵛप्रस्तरं विस्तीर्णं यज्ञविशेषम् ᵛआ ᵛसीद आगत्योपविश। ᵛहि यस्मादेवं तस्मात् ᵛकविशस्ताः विद्वद्भिर्ऋत्विग्भिः प्रयुक्ताः ᵛमन्त्राः ᵛत्वा त्वाम् ᵛआ ᵛवहन्तु। हे ᵛराजन् ᵛएना एतेन ᵛहविषा तुष्टः ᵛमादयस्व यजमानं हर्षय ॥

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व।
विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ॥ ५ ॥

अङ्गिरःऽभिः। आ। गहि। यज्ञियेभिः। यम। वैरूपैः। इह। मादयस्व।
विवस्वन्तम्। हुवे। यः। पिता। ते। अस्मिन्। यज्ञे। बर्हिषि। आ। निऽसद्य ॥ ५ ॥

हे ᵛयम ᵛवैरूपैः विविधरूपयुक्तैर्वैरूपसामप्रियैर्वा ᵛयज्ञियेभिः यज्ञयोग्यैः ᵛअङ्गिरोभिः सह ᵛआ ᵛगहि आगच्छ। आगत्य च ᵛइह अस्मिन् यज्ञे ᵛमादयस्व यजमानं हर्षय। ᵛयः विवस्वान् ᵛते तव ᵛपिता अस्ति ᵛअस्मिन् ᵛयज्ञे तं ᵛविवस्वन्तं ᵛहुवे आह्वयामि। स चास्तीर्णे ᵛबर्हिषि ᵛआ ᵛनिषद्य उपविश्य यजमानं हर्षयतु ॥  ॥ १४ ॥

---

१. ग१-उद्गीथ-कव्यनामभिः। २. त-भ-यश्च। ३. ग-त-भ-मु-प्रस्तरमित्येषाग्निमारुतेपि।

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ६ ॥

अङ्गिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः । सोम्यासः ।
तेषाम् । वयम् । सुऽमतौ । यज्ञियानाम् । अपि । भद्रे । सौमनसे । स्याम ॥ ६ ॥

ᵛअङ्गिरसः अङ्गिरोनामकाः ᵛअथर्वाणः अथर्वनामकाः ᵛभृगवः भृगुनामकाश्च ᵛनः अस्माकं ᵛपितरः ᵛनवग्वाः अभिनवगमनयुक्ताः । सदा[१] नूतनवत्प्रीतिजनका इत्यर्थः । ते च ᵛसोम्यासः । सोममर्हन्तीति सोम्याः । ᵛयज्ञियानां यज्ञार्हाणां ᵛतेषां ᵛसुमतौ अनुग्रहयुक्तायां बुद्धौ ᵛवयं ᵛस्याम सर्वदा तिष्ठेम । ᵛअपि च ᵛसौमनसे ᵛभद्रे सौमनसस्य कारणे कल्याणे फले स्याम सर्वदा तिष्ठेम ॥

सत्रमध्ये दीक्षितमरणे 'प्रेहि' इत्याद्याः पञ्चर्चस्तृतीयावर्जिता होत्रा शंसनीयाः । सूत्रितं च—'प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चानां तृतीयामुद्धरेत्' ( आश्व. श्रौ. ६. १० ) इति ॥

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः ।
उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम् ॥ ७ ॥

प्र । इहि । प्र । इहि । पथिऽभिः । पूर्व्येभिः । यत्र । नः । पूर्वे । पितरः । पराऽईयुः ।
उभा । राजाना । स्वधया । मदन्ता । यमम् । पश्यासि । वरुणम् । च । देवम् ॥ ७ ॥

ᵛयत्र यस्मिन् स्थाने ᵛनः अस्माकं ᵛपूर्वे पुरातनाः ᵛपितरः पितामहादयः ᵛपरेयुः[२] ᵛपूर्व्येभिः पूर्वस्मिन् काले भवैः । अनादिकालप्रवृत्तैरित्यर्थः । ᵛपथिभिः मार्गैः हे मत्पितः तत्स्थानं ᵛप्रेहि प्रगच्छ शीघ्रं गच्छ । गत्वा[३] च ᵛस्वधया अमृतान्नेन ᵛमदन्ता मदन्तौ तृप्यन्तौ ᵛराजाना राजानौ ᵛउभा उभौ ᵛयमं ᵛदेवं द्योतमानं ᵛवरुणं ᵛच ᵛपश्यासि पश्य ॥

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् ।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥ ८ ॥

सम् । गच्छस्व । पितृऽभिः । सम् । यमेन । इष्टापूर्तेन । परमे । विऽओमन् ।
हित्वाय । अवद्यम् । पुनः । अस्तम् । आ । इहि । सम् । गच्छस्व । तन्वा । सुऽवर्चाः ॥८॥

हे मदीय पितः ततस्त्वं[४] ᵛपरमे उत्कृष्टे ᵛव्योमन् व्योमनि स्वर्गाख्ये स्थाने स्वभूतैः ᵛपितृभिः सह ᵛसं ᵛगच्छस्व । ᵛइष्टापूर्तेन श्रौतस्मार्तदानफलेन ᵛसं गच्छस्व । तत इष्टापूर्तेन सहगम्य ᵛअवद्यं पापं ᵛहित्वा परित्यज्य ᵛअस्तं ध्रियमाणाख्यं गृहम् ᵛएहि आगच्छ । ततः ᵛसुवर्चाः[५] । तृतीयार्थे प्रथमा । सुवर्चसा शोभनदीप्तियुक्तेन ᵛतन्वा स्वशरीरेण ᵛसं ᵛगच्छस्व ॥

पैतृमेधिके कर्मणि श्मशानायतनं प्रोक्षति 'अपेत वीत' इति । सूत्रितं च—'गर्तोदकेन शमीशाखया[६] त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेत वीत वि च सर्पतातः' (आश्व.गृ.४.२.१०) इति॥

१. त-म१.२.४–तदा । २. ग-त३.४-भ५.६–परेयुः परेताः । ३. त३.४-म१.२.४.५–तत्र गत्वा; त५–तां गत्वा । ४. ग–त्वं; त-भ-मु–अतस्त्वं । ५. ग-त-भ–'सुवर्चाः' नास्ति । ६. त-भ –शाखया ।

अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ९ ॥

अप । इत । वि । इत । वि । च । सर्पत । अतः । अस्मै । एतम् । पितरः । लोकम् । अक्रन् ।
अहःऽभिः । अत्ऽभिः । अक्तुऽभिः । विऽअक्तम् । यमः । ददाति । अवऽसानम् । अस्मै ॥ ९ ॥

श्मशाने पूर्वं स्थिता हे पिशाचादयः अतः अस्मात् प्रमृज्यमानदहनस्थानात् अपेत अपगच्छत । वीत विशेषेण गच्छत । वि सर्पत च । इदं स्थानं परित्यज्य नानाभावेन दूरतरं देशं गच्छतेत्यर्थः । पितरः अस्मै मृतयजमानस्यार्थाय एतं लोकम् इदं दहनस्थानम् अक्रन् । यमस्याज्ञयान्वकुर्वन् । यमः अपि अहोभिः दिवसैः अद्भिः अभ्युक्षणोदकैः अक्तुभिः रात्रिभिः व्यक्तं संगतम् । शुद्धिनिमित्तैः कालोदकादिभिः शोधितमित्यर्थः । अवसानं दहनस्थानम् अस्मै मृतयजमानस्यार्थाय ददाति दत्तवान् ॥

अनुस्तरण्या वृक्कौ पार्श्वयोराम्रफलाकृती । तावुद्धृत्य प्रेतस्य हस्तयोर्निदधाति 'अति द्रव सारमेयौ' इति द्वाभ्याम् । सूत्रितं च—'वृक्कावुद्धृत्य पाण्योरादध्यादति द्रव सारमेयौ श्वानौ' ( आश्व. गृ. ४. ३. २० ) इति ॥

अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।
अथा पितॄन्त्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति ॥ १० ॥

अति । द्रव । सारमेयौ । श्वानौ । चतुःऽअक्षौ । शबलौ । साधुना । पथा ।
अथ । पितॄन् । सुऽविदत्रान् । उप । इहि । यमेन । ये । सधऽमादम् । मदन्ति ॥ १० ॥

हे अग्ने साधुना पथा समीचीनेन मार्गेण श्वानौ उभौ अति द्रव अतिक्रम्य गच्छ । यमसंबन्धिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः । कीदृशौ श्वानौ । सारमेयौ । सरमा नाम काचित् प्रसिद्धा देवशुनी । तस्याः पुत्रौ चतुरक्षौ उपरिभागे पुनरप्यक्षिद्वयं ययोस्तादृशौ । अथ शोभनमार्गेण गमनानन्तरं ये पितरः यमेन सधमादं सहर्षं मदन्ति प्राप्नुवन्ति तान् सुविदत्रान् सुष्ठुभिज्ञान् पितॄन् उपेहि उपगच्छ ॥ ॥ १५ ॥

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।
ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि ॥ ११ ॥

यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ । पथिरक्षी इति पथिऽरक्षी । नृऽचक्षसौ ।
ताभ्याम् । एनम् । परि । देहि । राजन् । स्वस्ति । च । अस्मै । अनमीवम् । च । धेहि ॥ ११ ॥

हे राजन् हे यम ते त्वदीयौ यौ श्वानौ विद्येते ताभ्यां श्वभ्यां हे राजन् यम एनं प्रेतं परि देहि रक्षार्थं प्रयच्छ । कीदृशौ श्वानौ । रक्षितारौ यमगृहस्य रक्षकौ चतुरक्षौ अक्षिचतुष्टययुक्तौ पथिरक्षी मार्गस्य रक्षकौ नृचक्षसौ मनुष्यैः ख्याप्यमानौ । श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषास्तौ प्रख्यापयन्ति । ताभ्यां श्वभ्यां दत्वा अस्मै प्रेताय स्वस्ति च क्षेममपि अनमीवं च रोगाभावमपि धेहि संपादय ॥

उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥ १२ ॥

उरुऽनसौ । असुऽतृपौ । उदुम्बलौ । यमस्य । दूतौ । चरतः । जनान् । अनु ।
तौ । अस्मभ्यम् । दृशये । सूर्याय । पुनः । दाताम् । असुम् । अद्य । इह । भद्रम् ॥ १२ ॥

ᵛयमस्य संबन्धिनौ ᵛदूतौ श्वानौ ᵛजनाँ ᵛअनु प्राणिनो लक्षीकृत्य सर्वत्र ᵛचरतः । कीदृशौ । ᵛउरूणसौ दीर्घनासिकायुक्तौ ᵛअसुतृपौ परकीयान् प्राणान् स्वीकृत्य तैस्तृप्यन्तौ ᵛउदुम्बलौ उरुबलौ विस्तीर्णबलौ । ᵛतौ उभौ दूतौ ᵛसूर्याय ᵛदृशये सूर्यस्य दर्शनार्थम् ᵛअद्य दिने ᵛइह कर्मणि ᵛभद्रम् ᵛअसुं[1] समीचीनं प्राणं ᵛपुनः ᵛअस्मभ्यं ᵛदाताम् अदत्ताम् ॥

यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥ १३ ॥

यमाय । सोमम् । सुनुत । यमाय । जुहुत । हविः ।
यमम् । ह । यज्ञः । गच्छति । अग्निऽदूतः । अरम्ऽकृतः ॥ १३ ॥

हे ऋत्विजः ᵛयमाय यमदेवतार्थं ᵛसोमं ᵛसुनुत । लतात्मकं सोममभिषुणुत । तथा यमार्थं ᵛहविः ᵛजुहुत । अग्निर्दूतो यस्मिन् यज्ञे सोऽयम् ᵛअग्निदूतः । अग्नेर्दूतत्वमन्यत्राम्नातम्—' अग्निर्देवानां दूत आसीत् ' ( तै. सं. २. ५. ८. ५ ) इति । ᵛअरंकृतः बहुभिर्द्रव्यैरलंकाररूपैर्युक्तः तादृशः ᵛयज्ञः ᵛयमं ᵛह यममेव ᵛगच्छति ॥

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे ॥ १४ ॥

यमाय । घृतऽवत् । हविः । जुहोत । प्र । च । तिष्ठत ।
सः । नः । देवेषु । आ । यमत् । दीर्घम् । आयुः । प्र । जीवसे ॥ १४ ॥

हे ऋत्विजः यूयं ᵛयमाय ᵛघृतवत् आज्येन संयुक्तं ᵛहविः पुरोडाशादिकं ᵛजुहोत जुहुत । ᵛप्र ᵛतिष्ठत ᵛच यमं यूयमुपतिष्ठध्वं च । ᵛदेवेषु मध्ये ᵛसः यमो देवः ᵛप्र ᵛजीवसे प्रकृष्टजीवनार्थं ᵛनः अस्माकं ᵛदीर्घमायुः ᵛआ ᵛयमत् प्रयच्छतु ॥

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ १५ ॥

यमाय । मधुमत्ऽतमम् । राज्ञे । हव्यम् । जुहोतन ।
इदम् । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥ १५ ॥

हे ऋत्विजः ᵛयमाय ᵛराज्ञे ᵛमधुमत्तमम् अतिशयेन मधुरं ᵛहव्यं पुरोडाशादिकं हविः ᵛजुहोतन जुहुत । ᵛपूर्वजेभ्यः सृष्ट्यादावुत्पन्नेभ्यः अत एव ᵛपूर्वेभ्यः[2] अस्मत्तः पूर्वभाविभ्यः ᵛपथिकृद्भ्यः शोभनमार्गकारिभ्यः[3] ᵛऋषिभ्यः ᵛइदं[4] प्रत्यक्षं यथा भवति तथा ᵛनमः अस्तु ॥

१. त-भ२.६–अमुं । २. त-भ१.२.४–पूर्वजेभ्यः । ३. त-भ–शोभनमार्गपथिकारिभ्यः । ४. त-भ१. २.४.६–मु–य इदं ।

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत् ।
त्रिष्टुब्गायत्री छन्दांसि सर्वा ता यम आहिता ॥ १६ ॥
त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः । एकम् । इत् । बृहत् ।
त्रिऽस्तुप् । गायत्री । छन्दांसि । सर्वा । ता । यमे । आऽहिता ॥ १६ ॥

ᐯत्रिकद्रुकेभिः । द्वितीयार्थे तृतीयैषा । त्रिकद्रुकान् । ज्योतिर्गौरायुरिति त्रयो यागविशेषास्त्रिकद्रुका[1] उच्यन्ते । तान् प्रत्यङ्गभावाय संरक्षणार्थं च ᐯपतति । यमस्तान् प्राप्नोति । षट्संख्याकाः ᐯउर्वीः भूमीः कृताकृतप्रत्यवेक्षणाय प्राप्नोति । ताश्चोर्व्यः शाखान्तरमन्त्रे[2] समाम्नाताः—' षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चापश्चौषधयश्चोर्क् च सूनृता च ' इति । ᐯएकमित् एकमेव ᐯबृहत् महत् जगत् यमश्च प्रतिपालनीयः प्राप्नोति । किंच यानि त्रिष्टुब्गायत्र्यादीनि ᐯछन्दांसि सन्ति ᐯसर्वा ᐯता सर्वाणि तानि च्छन्दांसि ᐯयमे ᐯआहिता आहितानि ऋत्विग्भिः स्तुतित्वेनावस्थितानि ॥ ॥ १६ ॥

' उदीरताम् ' इति चतुर्दशर्चं पञ्चदशं सूक्तम् । अत्रानुक्रम्यते—'उदीरतां षळूना शङ्खः पित्र्यं जगत्येकादशी ' इति । ' यामायनाः परे पञ्च ' ( अनु. ) इति वचनाद्यमपुत्रः शङ्खाख्य ऋषिः । ' अग्निष्वात्ताः ' इत्येषा जगती शिष्टास्त्रिष्टुभः । पितरो देवता । गतः सूक्तविनियोगः । अष्टकायाम् ' उदीरतामवरे'' इत्याद्या अष्टावृचो होमार्थाः । सूत्रितं च—'उदीरतामवर उत्परास इत्यष्टाभिर्हुत्वा' ( आश्व. गृ. २. ४. ६ ) इति । महापितृयज्ञे ' पितरः सोमवन्तः ' इत्यस्यानुवाक्या ' उदीरताम् ' इत्येषा । सूत्रितं च— ' पितरोऽग्निष्वात्ता यम उदीरतामवर उत्परासः ' ( आश्व. श्रौ. २. १९ ) इति । आग्निमारुतेऽप्येषा धाय्या । सूत्रितं च—' मातली कव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत्परासः ' ( आ. श्रौ. ५. २० ) इति ॥

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ १ ॥
उत् । ईरताम् । अवरे । उत् । परासः । उत् । मध्यमाः । पितरः । सोम्यासः ।
असुम् । ये । ईयुः । अवृकाः । ऋतऽज्ञाः । ते । नः । अवन्तु । पितरः । हवेषु ॥ १ ॥

त्रिविधाः पितर उत्तमा मध्यमा अधमाश्चेति । यथाविधं श्रौतं कर्मानुष्ठाय पितृत्वं प्राप्ता उत्तमाः । स्मार्तकर्ममात्रपरा मध्यमाः । अत्रापि कैश्चित्संस्कारैर्विकला अधमाः । एतदेवाभिप्रेत्य ' ये अग्निदग्धा ये अनग्निदग्धाः' इत्यादिमन्त्रः समाम्नातः । तेषु ᐯअवरे निकृष्टाः ᐯउदीरताम् उत्तमं हविः प्राप्नुवन्तु । ᐯपरासः उत्तमाः ᐯपितरः ᐯउत् ईरताम् । ᐯमध्यमाः पितरश्च ᐯउत् ईरताम् । ते सर्वेऽप्यस्मद्विषये ᐯसोम्यासः सोम्या अनुग्रहपराः सन्तु । ᐯये पितरः ᐯअवृकाः वृकवदरण्यश्ववदस्मासु हिंसामकुर्वन्तः ᐯऋतज्ञाः अस्मदनुष्ठितं यज्ञं जानन्तः ᐯअसुम् अस्मत्प्राणम् ᐯईयुः रक्षितुं प्राप्ताः ᐯते ᐯपितरः ᐯहवेषु अस्मदीयेष्वाह्वानेषु ᐯनः अस्मान् ᐯअवन्तु रक्षन्तु ॥

महापितृयज्ञे ' पितरो बर्हिषदः ' इत्यस्य ' इदं पितृभ्यः ' इति द्वितीयानुवाक्या । सूत्रं तु पूर्वमेवोदाहृतम् ( आश्व. श्रौ. २. १९ ) । आग्निमारुते ' इदं पितृभ्यः ' इत्येषा धाय्या । सूत्रितं च—' आहं पितॄन्त्सुविदत्राँ अवित्सीदं पितृभ्यो नमो अस्त्वद्य स्वादुष्किलायमिति चतस्रः ' ( आश्व. श्रौ. ५. २० ) इति ॥

---

१. त-भ६–यागविशेषा । २. श. ब्रा. १.५.१.२२; ऋ. सं. ६,४७.३ भाष्यं द्रष्टव्यम् ।

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥ २ ॥

इदम् । पितृऽभ्यः । नमः । अस्तु । अद्य । ये । पूर्वासः । ये । उपरासः । ईयुः ।
ये । पार्थिवे । रजसि । आ । निऽसत्ताः । ये । वा । नूनम् । सुऽवृजनासु । विक्षु ॥ २ ॥

ᵛपूर्वासः यजमानोत्पत्तेः पूर्वमुत्पन्ना ज्येष्ठभ्रातृपितामहादयः ᵛये ᵛईयुः पितृलोकं प्राप्ताः। ᵛये चान्ये ᵛउपरासः यजमानजन्मन उपरि उत्पन्नाः कनिष्ठभ्रातृस्वपुत्रादय ईयुः पितृलोकं प्राप्ताः। ᵛये अप्यन्ये ᵛपार्थिवे पृथिवीसंबन्धिनि ᵛरजसि रजोगुणकार्येऽस्मिन् कर्मणि ᵛआ ᵛनिषत्ताः हविः स्वीकर्तुमागत्योपविष्टाः। ᵛये ᵛवा केचिदन्ये बन्धुवर्गरूपाः पितरः ᵛविक्षु बन्धुरूपासु प्रजासु आ निषत्ताः श्राद्धादिस्वीकारायागत्योपविष्टाः। कीदृशीषु विक्षु। ᵛसुवृजनासु। वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनम्। शोभनं वृजनं यासां ताः सुवृजनाः। तादृशीषु। धनसमृद्ध्या श्राद्धादिकर्मपरास्वित्यर्थः। सर्वेभ्य उक्तेभ्यः ᵛपितृभ्यः[1] ᵛअद्य अस्मिन् कर्मणि ᵛइदं ᵛनमः ᵛअस्तु। अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु ॥

आहं पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ ३ ॥

आ । अहम् । पितॄन् । सुऽविदत्रान् । अवित्सि । नपातम् । च । विऽक्रमणम् । च । विष्णोः ।
बर्हिऽसदः । ये । स्वधया । सुतस्य । भजन्त । पित्वः । ते । इह । आऽगमिष्ठाः ॥ ३ ॥

ᵛअहं यजमानः ᵛसुविदत्रान् मदीयां भक्तिं सुष्ठु जानतः ᵛपितॄन् ᵛअवित्सि आभिमुख्येन लब्धवानस्मि। ᵛविष्णोः व्यापिनो यज्ञस्य ᵛनपातं ᵛच विनाशाभावं च ᵛविक्रमणं ᵛच विशेषेण प्रवृत्तिं च लब्धवानस्मि। ᵛये पितरः ᵛबर्हिषदः बर्हिषि[2] सीदन्ति[2] ᵛते ᵛइह अस्मिन् कर्मणि ᵛआगमिष्ठाः अतिशयेनागताः। आदरपूर्वं समागत्य ᵛस्वधया पुरोडाशाद्यन्नेन सह ᵛसुतस्य अभिषुतस्य सोमलक्षणस्य ᵛपित्वः पितोरन्नस्य भागं ᵛभजन्त सेवन्ते उपयुञ्जते ॥

बर्हिषदः पितर ऊत्य१र्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाथा नः शं योररपो दधात ॥ ४ ॥

बर्हिऽसदः । पितरः । ऊती । अर्वाक् । इमा । वः । हव्या । चकृम । जुषध्वम् ।
ते । आ । गत । अवसा । शम्ऽतमेन । अथ । नः । शम् । योः । अरपः । दधात ॥४॥

हे ᵛबर्हिषदः। यज्ञे सीदन्तीति बर्हिषदः। अत्रापि 'ये वै यज्वानस्ते पितरो बर्हिषदः' (तै.ब्रा.१.६.९) इत्यत्र श्रुतत्वाद्यागं कृत्वा प्रेत्य पितृलोकं प्राप्ता बर्हिषदः। तादृशा हे ᵛपितरः ᵛअर्वाक् अर्वाचीनानामस्माकम् ᵛऊती रक्षा भवद्भिः कर्तव्येति शेषः। ᵛवः युष्मदर्थम् ᵛइमा ᵛहव्या एतानि हवींषि ᵛचकृम अतस्तानि ᵛजुषध्वम्[3]। ᵛते हविर्जुष्टवन्तो यूयं ᵛशंतमेन सुखतमेन ᵛअवसा रक्षणेन

१. त-'पितृभ्यः' नास्ति। २. त-भ१-संति। ३. ग-त३.४-भ५-जुषध्वं सेवध्वं।

निमित्तभूतेन ᵛआ[1] ᵛगात[1] आभिमुख्येनास्मान् प्राप्नुत[2]। ᵛअथ अनन्तरं ᵛनः अस्मभ्यं ᵛशं सुखं ᵛयोः दुःखवियोगम् ᵛअरपः पापरहितं च ᵛदधात दत्त ॥

महापितृयज्ञे 'पितरः सोमवन्तः' इत्यस्य याज्या 'उपहूताः पितरः' इत्येषा। सूत्रितं च— 'उपहूताः पितरः सोम्यासस्त्वं सोम प्र चिकितो मनीषा' (आश्व. श्रौ. २. १९) इति ॥

**उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु।**
**त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५ ॥**

उपऽहूताः। पितरः। सोम्यासः। बर्हिष्येषु। निऽधिषु। प्रियेषु।
ते। आ। गमन्तु। ते। इह। श्रुवन्तु। अधि। ब्रुवन्तु। ते। अवन्तु। अस्मान् ॥ ५ ॥

ᵛसोम्यासः सोम्या अस्मदनुग्रहपराः सोमसंपादिनो वा ᵛपितरः ᵛबर्हिष्येषु यागार्हेषु ᵛप्रियेषु तृप्तिकरेषु ᵛनिधिषु निधिसदृशेषु हविःषु निमित्तभूतेषु सत्सु ᵛउपहूताः अस्माभिराहूताः ᵛते पितरः ᵛआ ᵛगमन्तु आगच्छन्तु। आगत्य च ᵛइह अस्मिन् कर्मणि अस्माभिः प्रयुक्ताः स्तुतीः ᵛश्रुवन्तु शृण्वन्तु। श्रुत्वा च ᵛअधि ᵛब्रुवन्तु। साधुरयं यजमान इत्यादरेण कथयन्तु। ᵛते तादृशाः पितरः ᵛअस्मान् ᵛअवन्तु रक्षन्तु ॥ ॥ १७ ॥

**आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे।**
**मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ ६ ॥**

आऽअच्य। जानु। दक्षिणतः। निऽसद्य। इमम्। यज्ञम्। अभि। गृणीत। विश्वे।
मा। हिंसिष्ट। पितरः। केन। चित। नः। यत्। वः। आगः। पुरुषता। कराम ॥ ६ ॥

पितॄणामयं स्वाभाविको धर्मः 'अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्य' (श. ब्रा. २. ४. २. २) इति वचनात्। हे पितरः ᵛविश्वे सर्वे यूयं ᵛजानु ᵛआच्य भूमौ निपात्य ᵛदक्षिणतः दक्षिणपार्श्वे ᵛनिषद्य उपविश्य ᵛइमम् अस्मदीयं ᵛयज्ञमभि ᵛगृणीत अभिष्टुत। विशिष्टतृप्तियोगात् परया प्रीत्या सगुणोऽयं यज्ञ इति प्रशंसतेत्यर्थः। अपि च ᵛवः युष्माकं ᵛयत् किंचित् कर्मवैगुण्यजनितम् ᵛआगः अपराधं ᵛपुरुषता मनुष्यत्वेन हेतुना ᵛकराम वयं कृतवन्तः हे ᵛपितरः तेन ᵛकेन ᵛचित् अल्पापराधेन ᵛनः अस्मान् ᵛमा ᵛहिंसिष्ट ॥

**आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय।**
**पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥ ७ ॥**

आसीनासः। अरुणीनाम्। उपऽस्थे। रयिम्। धत्त। दाशुषे। मर्त्याय।
पुत्रेभ्यः। पितरः। तस्य। वस्वः। प्र। यच्छत। ते। इह। ऊर्जम्। दधात ॥ ७ ॥

ᵛअरुणीनाम् आरोचमानानां ज्वालानां वा देवतानां वा ᵛउपस्थे समीपस्थाने वेद्याख्ये ᵛआसीनासः उपविष्टाः पितरो यूयं ᵛदाशुषे हविर्दत्तवते ᵛमर्त्याय मनुष्याय यजमानाय ᵛरयिं

---

१. त–आगती; भ१.४–आगतान्; भ६–आगता। २. त–प्रापय।

धनं ᵛधत्त दत्त । हे ᵛपितरः यूयं ᵛतस्य यजमानस्य ᵛपुत्रेभ्यः ᵛवस्वः वसु धनं ᵛप्र ᵛयच्छत । ᵛते तादृशा यूयम् ᵛइह अस्मिन् अस्मदीये कर्मणि ᵛऊर्जं धनं ᵛदधात निधत्त ॥

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ८ ॥

ये । नः । पूर्वे । पितरः । सोम्यासः । अनुऽऊहिरे । सोमऽपीथम् । वसिष्ठाः ।
तेभिः । यमः । सम्ऽरराणः । हवींषि । उशन् । उशत्ऽभिः । प्रतिऽकामम् । अत्तु ॥ ८ ॥

ᵛसोम्यासः सोमसंपादिनः ᵛवसिष्ठाः । वस्तृतमाः कृताच्छादना धनवत्तमा वा ᵛनः अस्माकं ᵛये ᵛपूर्वे ᵛपितरः ᵛसोमपीथं सोमपानम् ᵛअनूहिरे आनुपूर्व्येण देवेभ्यश्च पितृभ्यश्च प्राप्नुवन्तः । दत्तवन्त इत्यर्थः । ᵛउशन् पितृभिः सह संभोगं कामयमानः ᵛयमः पितृपतिः ᵛउशद्भिः यमेन सह संभोगं कामयमानैः ᵛतेभिः तैरस्मदीयैः पितृभिः सह ᵛरराणः रममाणः ᵛहवींषि अस्माभिर्दत्तानि ᵛप्रतिकामं कामंकामं[1] प्रति ᵛअत्तु । यानि यानि हवींषि कामयते तानि तानि भक्षयत्वित्यर्थः ॥

महापितृयज्ञे अग्नेः कव्यवाहनस्य 'ये तातृपुः' इत्येषा प्रथमानुवाक्या । सूत्रितं च—'ये तातृपुर्देवत्रा जेहमानास्त्वदग्ने काव्या त्वन्मनीषाः' ( आश्व. श्रौ. २. १९ ) इति ॥

ये तातृपुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।
आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥ ९ ॥

ये । ततृपुः । देवऽत्रा । जेहमानाः । होत्राऽविदः । स्तोमऽतष्टासः । अर्कैः ।
आ । अग्ने । याहि । सुऽविदत्रेभिः । अर्वाङ् । सत्यैः । कव्यैः । पितृऽभिः । घर्मसत्ऽभिः ॥९॥

ᵛदेवत्रा देवान् ᵛजेहमानाः क्रमेण गच्छन्तः । क्रमेण देवत्वं प्राप्ता इत्यर्थः । ᵛहोत्राविदः यज्ञान् सम्यक् कर्तुं वेदितारः ᵛअर्कैः अर्चनीयैः स्तोत्रैः ᵛस्तोमतष्टासः स्तोमानां च सम्यक्कर्तारः ᵛये पितरः ᵛतातृपुः तृप्यन्ति हे ᵛअग्ने त्वं तैः ᵛपितृभिः ᵛअर्वाङ्[2] अस्मदभिमुखः ᵛआ ᵛयाहि आगच्छ । कीदृशैः । ᵛसुविदत्रेभिः सुविदत्रैः ᵛसत्यैः अविसंवादिभिः ᵛकव्यैः । कव्यं नाम पितृदेवत्यं हविः । तत्संबन्धिभिः । यद्वा कव्यैः कविभिर्मेधाविभिः । स्वार्थिको यत् । ᵛघर्मसद्भिः यज्ञसादिभिः ॥

ये सत्यासो हविरदो हविष्पा इन्द्रेण देवैः सरथं दधानाः ।
आग्ने याहि सहस्रं देववन्दैः परैः पूर्वैः पितृभिर्घर्मसद्भिः ॥ १० ॥

ये । सत्यासः । हविःऽअदः । हविःऽपाः । इन्द्रेण । देवैः । सऽरथम् । दधानाः ।
आ । अग्ने । याहि । सहस्रम् । देवऽवन्दैः । परैः । पूर्वैः । पितृऽभिः । घर्मसत्ऽभिः ॥१०॥

ᵛसत्यासः सत्याः ᵛये पितरः ᵛहविरदः भक्षणयोग्यस्य हविषोऽत्तारो भक्षयितारः ᵛहविष्पाः पानयोग्यस्य हविषः पातारः ᵛइन्द्रेण ᵛदेवैः ᵛसरथं समानमेकं तुल्यं वा रथं ᵛदधानाः । लडर्थे शानच् । गमनाय सदा धारयन्ति हे ᵛअग्ने तैः ᵛपितृभिः सह ᵛआ ᵛयाहि आगच्छ । कीदृशः । ᵛसहस्रम् । तृतीयार्थे प्रथमा । सहस्रेण । बहुभिरित्यर्थः । ᵛदेववन्दैः देवसंबन्धिभिः स्तोत्रैर्युक्तः ᵛपरैः परकालीनैः ᵛपूर्वैः पूर्वकालीनैः ᵛघर्मसद्भिः यज्ञसादिभिर्महावीरसादिभिरादित्यसादिभिर्वा ॥ ॥१८॥

---

१. त-भ-मु—कामं । २. त-भ१.२.४-मु—आ अर्वाङ् ।

महापितृयज्ञे 'पितरोऽग्निष्वात्ताः' इत्यस्य 'अग्निष्वात्ताः पितरः' इत्येषा प्रथमानुवाक्या। सूत्रितं च—'अग्निष्वात्ताः पितर एह गच्छत ये चेह पितरो ये च नेह' (आश्व. श्रौ. २.१९) इति॥

अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः।
अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन॥ ११॥

अग्निऽस्वात्ताः। पितरः। आ। इह। गच्छत। सदःऽसदः। सदत। सुऽप्रनीतयः।
अत्त। हवींषि। प्रऽयतानि। बर्हिषि। अथ। रयिम्। सर्वऽवीरम्। दधातन॥ ११॥

हे अग्निष्वात्ताः[1] अग्निना स्वादिता एतन्नामकाः पितरः यूयम् इह अस्मिन् पितृकर्मणि आ गच्छत। आगत्य च हे सुप्रणीतयः अभिपूजितप्रणयनाः यूयं सदःसदः तत्तत्स्थानं[2] सदत सीदत। तत्र तत्र स्थाने यथेष्टमुपविशतेत्यर्थः। उपविश्य च बर्हिषि आसादितानि प्रयतानि शुचीनि हवींषि अत्त भक्षयत। अथ अनन्तरं सर्ववीरं सर्वैर्वीरैः पुत्रपौत्रैरुपेतं रयिं धनं दधातन अस्मभ्यं दत्त॥

महापितृयज्ञे वषट्कारक्रियायां 'त्वमग्न ईळितः' इत्येषा स्विष्टकृतो याज्या। सूत्रितं च—'योऽग्निः कव्यवाहनस्त्वमग्न ईळितो जातवेद इति संयाज्ये' (आश्व. श्रौ. २. १९) इति॥

त्वमग्न ईळितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि॥ १२॥

त्वम्। अग्ने। ईळितः। जातऽवेदः। अवाट्। हव्यानि। सुरभीणि। कृत्वी।
प्र। अदाः। पितृऽभ्यः। स्वधया। ते। अक्षन्। अद्धि। त्वम्। देव। प्रऽयता। हवींषि॥ १२॥

हे जातवेदः। जातं सर्वं जगद्वेत्तीति जातवेदाः। तथाविध हे अग्ने ईळितः अस्माभिः स्तुतः त्वं हव्यानि अस्मदीयानि हवींषि सुरभीणि सुगन्धीनि कृत्वी कृत्वा अवाट् वहनं कृतवानसि। कृत्वा च पितृभ्यः प्रादाः। ते च पितरः स्वधया स्वधाकारेण दत्तं हविः अक्षन् अदन्तु। हे देव त्वम् अपि प्रयता प्रयत्नसंपादितानि हवींषि अद्धि भक्षय॥

महापितृयज्ञे 'ये चेह' इति द्वितीयानुवाक्या। सूत्रमुक्तम्॥

ये चेह पितरो ये च नेह यांश्च विद्म याँ उ च न प्रविद्म।
त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व॥ १३॥

ये। च। इह। पितरः। ये। च। न। इह। यान्। च। विद्म। यान्। ऊँ इति।
च। न। प्रऽविद्म॥ त्वम्। वेत्थ। यति। ते। जातऽवेदः।
स्वधाभिः। यज्ञम्। सुऽकृतम्। जुषस्व॥ १३॥

१. त–'अग्निष्वात्ताः' नास्ति। २. त–स्वतस्थानं; त३-भ१.२.४–सतस्थानं; भ३–स्वस्थानं; मु–स्वस्वस्थानं।

ये च पितरः इह अस्मत्समीपे वर्तन्ते ये च इह न सन्ति। यांश्च पितॄन् विद्म संनिकृष्टत्वाज्जानीमः यान्[1] उ च न अपि[2] च न प्रविद्म विप्रकृष्टत्वाद्वयं न विजानीमः। यति ते यावन्तस्ते[3] भवन्ति तान् सर्वान् यथोक्तान् हे जातवेदः उत्पन्नसर्ववस्तुविषयज्ञानाग्ने त्वं वेत्थ जानासि[4]। स्वधाभिः हविर्लक्षणैरन्नैः सुकृतं साधु कृतं यज्ञं जुषस्व प्रीत्या गृहाण ॥

पूर्वोक्त एव यागे 'ये अग्निदग्धाः' इत्येषा याज्या। सूत्रितं च—'ये अग्निदग्धा ये अनग्निदग्धा इमं यम प्रस्तरमा हि सीदेति द्वे' (आश्व. श्रौ. २. १९) इति ॥

**ये अ॒ग्नि॒द॒ग्धा ये अन॑ग्निदग्धा॒ मध्ये॑ दि॒वः स्व॒धया॑ मा॒दय॑न्ते ।**
**तेभिः॑ स्व॒राळसु॑नीतिमे॒तां य॑थाव॒शं त॒न्वं॑ कल्पयस्व ॥ १४ ॥**

ये । अ॒ग्नि॒ऽद॒ग्धाः । ये । अन॑ग्निऽदग्धाः । मध्ये॑ । दि॒वः । स्व॒धया॑ । मा॒दय॑न्ते ।
तेभिः॑ । स्व॒ऽराट् । असु॑ऽनीतिम् । ए॒ताम् । य॒था॒ऽव॒शम् । त॒न्व॑म् । क॒ल्प॒य॒स्व॒ ॥ १४ ॥

ये पितरः अग्निदग्धाः अग्निना भस्मीकृताः। श्मशानं प्राप्ता इत्यर्थः। ये च पितरः अनग्निदग्धाः श्मशानकर्म न प्राप्ताः मध्ये दिवः द्युलोकस्य मध्ये स्वधया हविर्लक्षणेनान्नेन मादयन्ते तृप्यन्ति[5] हे अग्ने स्वराट् स्वकर्मोपभोगेन दीप्यमानः तेभिः तैः पितृभिः सहितः सन् असुनीतिं प्राणानां विषयेषु नेतारमस्मत्पित्रन्तरात्मानम् एतां तन्वम् एतद्देवताशरीरं यथावशं यथाकामं कल्पयस्व समर्थयस्व। प्रापयेत्यर्थः[6]॥ ॥ १९ ॥

'मैनम्' इति चतुर्दशर्चं षोडशं सूक्तं यमपुत्रस्य दमनस्यार्षम्। आदितो दश त्रिष्टुभः ततश्चतस्रोऽनुष्टुभः। अग्निर्देवता। तथा चानुक्रान्तं—'मैनं दमन आग्नेयं चतुरनुष्टुबन्तम्' इति। दीक्षितमरण आद्याः षड्चः शंसनीयाः। सूत्रितं च—'मैनमग्ने वि दहो माभि शोच इति षट् पूषा त्वेतश्च्यावयतु प्र विद्वान्' (आश्व. श्रौ. ६. १०) इति। दह्यमानस्य प्रेतस्योपस्थानेऽप्येताः शंसनीयाः ॥

**मैन॑मग्ने॒ वि द॑हो॒ माभि शो॑चो॒ मास्य॒ त्वचं॑ चिक्षिपो॒ मा शरी॑रम् ।**
**य॒दा शृ॒तं कृ॒णवो॑ जातवे॒दोऽथे॑मेनं॒ प्र हि॑णुतात्पि॒तृभ्यः॑ ॥ १ ॥**

मा । ए॒न॒म् । अ॒ग्ने॒ । वि । द॒हः॒ । मा । अ॒भि । शो॒चः॒ । मा । अ॒स्य॒ । त्वच॑म् । चि॒क्षि॒पः॒ । मा । शरी॑रम् ।
य॒दा । शृ॒तम् । कृ॒णवः॑ । जा॒त॒ऽवे॒दः॒ । अथ॑ । ई॒म् । ए॒न॒म् । प्र । हि॒णु॒ता॒त् । पि॒तृऽभ्यः॑ ॥ १ ॥

हे अग्ने एनं प्रेतं मा वि दहः। विशेषेण दग्धं मषीभूतं मा कुरु। माभि शोचः अभितः शोकेन संतापेन युक्तं मा कुरु। अस्य त्वचं मा चिक्षिपः इतस्ततो विक्षिप्तां मा[7] कुरु[7]। शरीरम् अपि विक्षिप्तं मा कुरु। हे जातवेदः अग्ने यदा[8] त्वं[8] शृतं पक्वं सुदग्धं कृणवः करिष्यसि अथ तदानीम् ईमेनं प्रेतं पितृभ्यः प्र हिणुतात् पितृसमीपे प्रेरय ॥

**शृ॒तं य॒दा कर॑सि जातवे॒दोऽथे॑मेन॒ं परि॑ दत्तात्पि॒तृभ्यः॑ ।**
**य॒दा गच्छा॒त्यसु॑नीतिमे॒तामथा॑ दे॒वानां॑ वश॒नीर्भ॑वाति ॥ २ ॥**

१. त-भ६–एषां; त३-भ१.२.४–तां। २. उद्गीथ–यानपि। ३. त-भ६–वायंस्तते। ४. त–जानामि। ५. ग–तृप्ते तृथयंतु; त-भ–तृप्यंतु। ६. त-भ६–प्रमायेत्यर्थः; उद्गीथ–गाभयस्वेत्यर्थः। ७. त२.३. ७-भ–'मा कुरु' नास्ति। ८. ग-भ–त्वं यदा।

शृतम्। यदा। करसि। जातऽवेदः। अथ। ईम्। एनम्। परि। दत्तात्। पितृऽभ्यः।
यदा। गच्छाति। असुऽनीतिम्। एताम्। अथ। देवानाम्। वशऽनीः। भवाति ॥ २ ॥

हे ᵛजातवेदः ᵛयदा प्रेतशरीरं ᵛशृतं पक्वं ᵛकरसि करिष्यसि ᵛअथ ᵛईम् तदानीमेव ᵛएनं प्रेतं ᵛपितृभ्यः ᵛपरि ᵛदत्तात् प्रयच्छ। ᵛयदा अयं प्रेतः ᵛएताम् अग्निना कृताम् ᵛअसुनीतिं प्राणस्य नयनं प्राणप्रेरणं ᵛगच्छाति[1] प्राप्नोति ᵛअथ तदानीमेव ᵛदेवानां ᵛवशनीः देवानां वशं प्रापितो भवति[2] ॥

सूर्यं चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा।
अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥ ३ ॥

सूर्यम्। चक्षुः। गच्छतु। वातम्। आत्मा। द्याम्। च। गच्छ। पृथिवीम्। च। धर्मणा।
अपः। वा। गच्छ। यदि। तत्र। ते। हितम्। ओषधीषु। प्रति। तिष्ठ। शरीरैः ॥ ३ ॥

हे प्रेत त्वदीयं ᵛचक्षुः इन्द्रियं ᵛसूर्यं ᵛगच्छतु प्राप्नोतु। ᵛआत्मा प्राणः ᵛवातं बाह्यं वायुं गच्छतु। अपि च त्वमपि ᵛधर्मणा सुकृतेन तत्फलं भोक्तुं ᵛद्यां ᵛच। अत्र चशब्दो विकल्पार्थे। द्युलोकं वा ᵛपृथिवीं ᵛच पृथिवीं वा ᵛगच्छ प्राप्नुहि[3]। ᵛअपो ᵛवा अन्तरिक्षलोकं ᵛगच्छ प्राप्नुहि। ᵛतत्र अन्तरिक्षे ᵛहितं स्थापितं ᵛते तव कर्मफलम्। ᵛओषधीषु ᵛशरीरैः शरीरावयवैः ᵛप्रति ᵛतिष्ठ ॥

अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः।
यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम् ॥ ४ ॥

अजः। भागः। तपसा। तम्। तपस्व। तम्। ते। शोचिः। तपतु। तम्। ते। अर्चिः।
याः। ते। शिवाः। तन्वः। जातऽवेदः।
ताभिः। वह। एनम्। सुऽकृताम्। ऊँ इति। लोकम् ॥ ४ ॥

ᵛअजः जननरहितः शरीरेन्द्रियादिभागव्यतिरिक्तोऽन्तरपुरुषलक्षणो यः ᵛभागः अस्ति हे अग्ने ते त्वदीयेन ᵛतपसा तापनेन ᵛतं तादृशं भागं ᵛतपस्व तप्तं[4] कुरु। तथा ᵛते तव ᵛशोचिः शोकहेतुः[5] ज्वालाविशेषः ᵛतं भागं ᵛतपतु संस्करोतु। अपि[6] च ᵛते तव ᵛअर्चिः भास्वको ज्वालाविशेषः ᵛतं भागं तपतु संस्करोतु[6]। तपःशोचिरर्चिःशब्दानां संतप्ततारतम्येन भेदः। हे ᵛजातवेदः ᵛते तव ᵛयाः ᵛतन्वः मूर्तयः ᵛशिवाः सुखहेतवो न तु तापप्रदाः ᵛताभिः ᵛएनं तनूभिः प्रेतं ᵛसुकृतां शोभनकर्मकारिणां ᵛलोकं स्थानं ᵛवह प्रापय। उशब्दः पूरणः ॥

अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः।
आयुर्वसान उप वेतु शेषः सं गच्छतां तन्वा जातवेदः ॥ ५ ॥

अव। सृज। पुनः। अग्ने। पितृऽभ्यः। यः। ते। आऽहुतः। चरति। स्वधाभिः।
आयुः। वसानः। उप। वेतु। शेषः। सम्। गच्छताम्। तन्वा। जातऽवेदः ॥ ५ ॥

---

१. ग-त-भ६.७-गच्छति; भ१.२ ४-गच्छंति; मु-गच्छाति गच्छति। २. मु-भवाति। ३. त-भ६-प्राप्नुहि याहि। ४. त-भ-तपनं। ५. त४-शोकहेतुत्वात्; त५.६.७-शोकहेतु। ६. त-'अपि च ... ... संस्करोतु' नास्ति।

हे अग्ने यः प्रेतः पुमान् आहुतः चितौ मन्त्रेण समर्पितः सन् स्वधाभिः स्वधाकारसमर्पितैः उदकादिभिः सह चरति तं प्रेतं पितृभ्यः पितृप्राप्त्यर्थं पुनः[1] अव सृज[1] भूयः प्रेरय। अयं प्रेतः आयुः जीवनं वसानः आच्छादयन्। आयुषा युक्त इत्यर्थः। शेषः शिष्यमाणमस्थिलक्षणं यजनीयं शरीरम् उप वेतु उपगच्छतु। हे जातवेदः तव प्रसादात् तन्वा शरीरेण सं गच्छतां स्मंगतो भवतु ॥　　॥ २० ॥

यत्ते॑ कृ॒ष्णः श॑कु॒न आ॑तु॒तोद॑ पि॒पी॒लः स॒र्प उ॒त वा॒ श्वाप॑दः ।
अ॒ग्निष्टद्वि॒श्वाद॑ग॒दं कृ॑णोतु॒ सोम॑श्च॒ यो ब्रा॑ह्म॒णाँ आ॑वि॒वेश॑ ॥ ६ ॥

यत् । ते । कृष्णः । शकुनः । आऽतुतोद॑ । पिपीलः । सर्पः । उत । वा । श्वाप॑दः ।
अग्निः । तत् । विश्वऽअत् । अगदम् । कृणोतु । सोमः । च । यः । ब्राह्मणान् । आऽविवेश॥६॥

हे मृतशरीर ते तव संबन्धि यत् अङ्गं कृष्णः शकुनः काकाख्यः आतुतोद। आङ् ईषदर्थे। ईषत्तुन्नवान्। तथा पिपीलः पिपीलिका वा सर्पः वा उत वा अपि वा श्वापदः श्वशृगालादिः। एतेषामन्यतमो यदि तुन्नवानित्यर्थः। विश्वात् सर्वस्यात्ता अग्निः तत् तादृशमङ्गम् अगदं कृणोतु दोषरहितं करोतु। संस्करोत्वित्यर्थः। तथा सोमश्च[2] देवतारूप ओषधिरूपो वा संस्करोतु। यः सोमः ब्राह्मणान् ऋत्विगादीन् आविवेश प्रविष्टवान् ॥

अनुस्तरण्या वपया प्रेतस्य मुखम् ‘ अग्नेर्वर्म ’ इत्यनया प्रोर्णुयात्। सूत्रितं च—‘अनुस्तरण्या[3] वपामुत्खिद्य शिरोमुखं प्रच्छादयेदग्नेर्वर्म परि गोभिर्व्ययस्वेति ’ ( आश्व. गृ. ४. ३. १९ ) इति[3] ॥

अ॒ग्नेर्वर्म॒ परि॒ गोभि॑र्व्ययस्व॒ सं प्रोर्णु॑ष्व॒ पीव॑सा॒ मेद॑सा च ।
नेत्त्वा॑ धृ॒ष्णुर्हर॑सा॒ जर्हृ॑षाणो द॒धृग्वि॑ध॒क्ष्यन्प॑र्य॒ङ्खया॑ते ॥ ७ ॥

अग्नेः । वर्म॑ । परि॑ । गोभिः । व्ययस्व । सम् । प्र । ऊर्णुष्व । पीव॑सा । मेद॑सा । च ।
न । इत् । त्वा । धृष्णुः । हर॑सा । जर्हृ॑षाणः । दधृक् । विऽधक्ष्यन् । परिऽअङ्खया॑ते ॥७॥

हे प्रेत अग्नेः स्वभूतं वर्म ज्वालालक्षणं कवचं गोभिः अनुस्तरणीगोचर्मणा परि व्ययस्व परितः संवृणु। किंच पीवसा स्थूलेन मेदसा च सं सम्यक् प्रोर्णुष्व आच्छादय। एवं कृते सति हरसा तेजसा धृष्णुः धर्षणशीलः जर्हृषाणः अत्यर्थं हृष्यन् दधृक् धृष्टः प्रगल्भः। ‘ ऋत्विक्° ’ इत्यादिना दधृक्शब्दो निपातितः। विधक्ष्यन् विविधं भस्मीकरिष्यन् एवंभूतोऽग्निः त्वा त्वां नेत् पर्यङ्खयाते नैव सर्वतः विस्तारयति। अखेर्गत्यर्थाल्लेट्याडागमः ॥

‘ इममग्ने चमसम् ’ इत्यनया प्रणीताप्रणयनमनुमन्त्रयते। सूत्रितं च—‘ इममग्ने[4] चमसं मा वि जिह्वर इति प्रणीताप्रणयनमनुमन्त्रयते ’ ( आश्व. गृ. ४. ३. २४ ) इति[4] ॥

इ॒मम॑ग्ने चम॒सं मा वि जि॑ह्वरः प्रि॒यो दे॒वाना॑मु॒त सो॒म्याना॑म् ।
ए॒ष यश्च॑म॒सो दे॑व॒पान॒स्तस्मि॑न्दे॒वा अ॒मृता॑ मादयन्ते ॥ ८ ॥

१. त-भ६-पुनरवासृजः; त३-भ१.२.६.७-पुनरवासृज। २. त-सोम अश्व। ३. ग-त-भ१.२.४.५-‘ अनुस्तरण्या......इति ’ नास्ति; भ६-अग्नेर्वर्म परि गोभिर्व्ययस्वेतीति। ४. ग-त-भ१.२.४.५.७-‘ इममग्ने......इति ’ नास्ति।

इमम् । अग्ने । चमसम् । मा । वि । जिह्वरः । प्रियः । देवानाम् । उत । सोम्यानाम् ।
एषः । यः । चमसः । देवऽपानः । तस्मिन् । देवाः । अमृताः । मादयन्ते ॥ ८ ॥

हे ᵛअग्ने ᵛइमं ᵛचमसं प्रणीताप्रणयनं ᵛमा ᵛवि ᵛजिह्वरः मा विचालीः। यश्चमसः ᵛदेवानाम् इन्द्रादीनां ᵛप्रियः ᵛउत अपि च ᵛसोम्यानां सोमार्हाणां पितॄणां प्रियः। किंच ᵛयः ᵛएषः ᵛचमसः ᵛदेवपानः। देवाः पिबन्त्यस्मिन्निति। देवपानस्थानीयो भवति ᵛतस्मिन्[1] चमसे ᵛअमृताः मरणवर्जिताः ᵛदेवाः पितरश्च ᵛमादयन्ते हव्यैः कव्यैश्च हृष्टा भवन्ति[1] ॥

**क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः ।**
**इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ९ ॥**

क्रव्यऽअदम् । अग्निम् । प्र । हिनोमि । दूरम् । यमऽराज्ञः । गच्छतु । रिप्रऽवाहः ।
इह । एव । अयम् । इतरः । जातऽवेदाः । देवेभ्यः । हव्यम् । वहतु । प्रऽजानन् ॥ ९ ॥

आहिताग्निमरणे[2] एतदादिके[2] द्वे ऋचावौपासनोद्वासने विनियुक्ते। तत्र प्रथमायाः पूर्वार्धेन दक्षिणस्यां दिशि चतुष्पथादावौपासनाग्निं निरस्यति। उत्तरेण शान्तिकर्मार्थमादत्ते (आश्व. गृ.४.६)। ᵛक्रव्यादम्। क्रव्यमामिषम्। तस्यात्तारं तीव्रम् ᵛअग्निं ᵛदूरं विप्रकृष्टदेशे ᵛप्र ᵛहिणोमि प्रगमयामि। 'हि गतौ' स्वादिः। ᵛरिप्रवाहः। रिप्रं पापम्। तस्य वोढा सोऽग्निः ᵛयमराज्ञः यमो राजा येषां तान् यमराजकान् अन्यप्रदेशान् ᵛगच्छतु प्राप्नोतु। ᵛअयं शान्तिकर्मार्थमुपादत्तः ᵛइतरः क्रव्यादादन्यः ᵛजातवेदाः जातानां वेदिता जातधनो वा ᵛप्रजानन् सर्वैर्विज्ञायमानोऽग्निः ᵛइहैव देशे ᵛदेवेभ्यः देवार्थं ᵛहव्यं हवनयोग्यं हविः ᵛवहतु प्रापयतु ॥

**यो अग्निः क्रव्यात्प्रविवेश वो गृहमिमं पश्यन्नितरं जातवेदसम् ।**
**तं हरामि पितृयज्ञाय देवं स घर्ममिन्वात्परमे सधस्थे ॥ १० ॥**

यः । अग्निः । क्रव्यऽअत् । प्रऽविवेश । वः । गृहम् । इमम् । पश्यन् । इतरम् । जातऽवेदसम् ।
तम् । हरामि । पितृऽयज्ञाय । देवम् । सः । घर्मम् । इन्वात् । परमे । सधऽस्थे ॥ १० ॥

ᵛयः क्रव्यादः ᵛअग्निः देवो युष्माकं गृहिणां ᵛगृहं ᵛप्रविवेश प्रविष्टवान् ᵛतं क्रव्यादं ᵛदेवं ᵛहरामि। गृहाद्बहिर्निष्क्रामयामीत्यर्थः। किमर्थम्। ᵛपितृयज्ञाय तदर्थम्। किं कुर्वन्। ᵛइमम् ᵛइतरं तस्मादन्यं हव्यवाहं ᵛजातवेदसं ᵛपश्यन् पर्यालोचयन्। तथा सति क्रव्यादात्परोऽग्निः ᵛपरमे उत्कृष्टे ᵛसधस्थे सहस्थाने ᵛघर्मं यज्ञम् ᵛइन्वात् प्राप्नोतु। पितृभिर्घर्मपैः सहेति शेषः॥ ॥ २१ ॥

महापितृयज्ञे वषट्कारक्रियायां 'यो अग्निः कव्यवाहनः[3]' इत्येषा स्विष्टकृतो याज्या। सूत्रितं च—'यो अग्निः कव्यवाहनस्त्वमग्न[4] ईळितो जातवेद इति संयाज्ये' (आश्व. श्रौ. २. १९) इति ॥

**यो अग्निः क्रव्यवाहनः पितॄन्यक्षदृतावृधः ।**
**प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥ ११ ॥**

---

१. त-'तस्मिन्...भवन्ति' नास्ति। २. त-भ६—अतिक्रमणे एतदादि; त३—अतिमरणे एतदादि; भ१.२.४—अग्निमरणं एतदादि। ३. त१.७-भ६-मु—कव्यवाहनः। ४. त२.७-भ२.६-मु—कव्यवाहन॰।

यः । अग्निः । क्रव्यऽवाहनः । पितॄन् । यक्षत् । ऋतऽवृधः ।
प्र । इत् । ऊँ इति । हव्यानि । वोचति । देवेभ्यः । च । पितृऽभ्यः । आ ॥ ११ ॥

"क्रव्यवाहनः[1] क्रव्यस्य[1] हविषो वोढा "योऽग्निः "पितॄन् "ऋतावृधः ऋतस्य यज्ञस्योदकस्य वा वर्धयितॄन् सत्येन वृद्धान् वा देवान्। एतत्पितृविशेषणं वास्तु। तान् "यक्षत् यजति। यजेर्लेटि सिब्बहुलमागमः। सोऽग्निः "हव्यानि हवींषि "प्र "वोचतु पितृयज्ञे प्रब्रवीतु। युष्मदर्थं मयानीतानीति। इद् पूरणौ। केभ्यः। "देवेभ्यश्च "पितृभ्यः च। आकारः समुच्चये ॥

महापितृयज्ञे ' उशन्तस्त्वा ' इत्येषा सामिधेनी। सूत्र्यते हि—' उशन्तस्त्वा नि धीमहीत्येतां त्रिरनवानं ताः सामिधेन्यः ' ( आश्व. श्रौ. २. १९ ) इति ॥

**उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि ।**
**उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥ १२ ॥**

उशन्तः । त्वा । नि । धीमहि । उशन्तः । सम् । इधीमहि ।
उशन् । उशतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ १२ ॥

हे अग्ने "उशन्तः कामयमाना वयं "त्वा त्वां "नि "धीमहि[2] कर्मार्थं स्थापितवन्तः। "उशन्तः वयं "समिधीमहि संदीपयामः। त्वमपि "उशन् कामयमानः हविरादिकम् "उशतः आगन्तुकामान् "पितॄन् अस्मिन् यज्ञे "आ "वह। किमर्थम्। "हविषे अस्माभिः प्रत्तं हविः "अत्तवे अत्तुम्। अदेस्तुमर्थे तवेन्प्रत्ययः। ' क्रियाग्रहणं कर्तव्यम् ' इति कर्मणः संप्रदानसंज्ञा ॥

**यं त्वमग्ने समदहस्तमु निर्वापया पुनः ।**
**कियाम्ब्वत्र रोहतु पाकदूर्वा व्यल्कशा ॥ १३ ॥**

यम् । त्वम् । अग्ने । सम्ऽअदहः । तम् । ऊँ इति । निः । वापय । पुनरिति ।
कियाम्बु । अत्र । रोहतु । पाकऽदूर्वा । विऽअल्कशा ॥ १३ ॥

हे "अग्ने "त्वं पितृदहनकाले "यं देशं "समदहः पुरा सम्यग्दग्धवानसि। ' तिङि चोदात्तवति ' इति समो निघातः। "तमु तमेव "पुनः "निर्वापय। "अत्र अस्मिन् देशे "कियाम्बु कियत्प्रमाणमुदकं यस्मिन् तत् पुष्करिण्यादिकं[3] "रोहतु उत्पद्यताम्। किंच "व्यल्कशा विविधशाखा "पाकदूर्वा परिपक्वदूर्वा चोत्पद्यताम् ॥

अस्थिसंचयने क्षीरोदकेन शमीशाखया त्रिः प्रसव्यं श्मशानायतनं प्रोक्षति ' शीतिके शीतिकावति ' इत्यनया। सूत्रितं च—' क्षीरोदकेन[4] शमीशाखया त्रिः प्रसव्यं परिव्रजन् प्रोक्षति शीतिके शीतिकावतीति ' ( आश्व. गृ. ४. ५. ३ ) इति[4] ॥

**शीतिके शीतिकावति ह्लादिके ह्लादिकावति ।**
**मण्डूक्या३ सु सं गम इमं स्व१ग्निं हर्षय ॥ १४ ॥**

---

१. त१.२.७-मु-उद्गीथ—क्रव्यवाहनः क्रव्यस्य। २. ग-त४-भ१.२.४.५—धीमहि निदधीमहि; त५—धीमहि निधीमहि। ३. त१-मु—पुष्करिण्यादि। ४. ग-त-भ—' क्षीरोदकेन...इति ' नास्ति।

शीतिके । शीतिकाऽवति । ह्लादिके । ह्लादिकाऽवति ।
मण्डूक्या । सु । सम् । गमः । इमम् । सु । अग्निम् । हर्षय ॥ १४ ॥

हे शीतिके शैत्ययुक्ते हे शीतिकावति । शीतिकाः शैत्ययुक्ता ओषधयः । ताभिस्तद्वति हे ह्लादिके आह्लादयित्रि हे ह्लादिकावति आह्लादकफलयुक्तैर्वृक्षैस्तद्वति हे पृथिवि मण्डूक्या मण्डूकस्त्रिया वृष्टिप्रियया सु सुष्ठु सं गमः संगच्छस्व । गमेर्लुङि व्यत्ययेन परस्मैपदम् । ततः इमम् अग्निं सु सुष्ठु हर्षय ॥   ॥ २२ ॥   ॥ १ ॥

द्वितीयेऽनुवाके त्रयोदशसूक्तानि । तत्र 'त्वष्टा दुहित्रे' इत्येतच्चतुर्दशर्चं प्रथमं सूक्तम् । यमपुत्रो देवश्रवा नामर्षिः । आदितो द्वादश त्रिष्टुभः । त्रयोदशीचतुर्दश्यावनुष्टुभौ । यद्वा । त्रयोदशी पुरस्ताद्बृहती । आदितो द्वयोः सरण्यूर्देवता । 'पूषा त्वेतः' इत्याद्याश्चतस्रः पूषदेवत्याः । 'सरस्वतीं देवयन्तः' इत्याद्यास्तिस्रः सरस्वतीदेवताकाः । 'आपो अस्मान्' इत्याद्याः पञ्चर्चोऽब्देवताकाः । तत्र 'द्रप्सश्चस्कन्द' इत्याद्यास्तिस्रः सोमदेवत्या वा । तथा चानुक्रान्तं—'त्वष्टा देवश्रवा द्वे सरण्यूदेवते पौष्ण्यश्चतस्रः सारस्वत्यस्तिस्रः पञ्चाप्यो द्रप्सस्तिस्रः सौम्यो वान्त्ये अनुष्टुभावुपान्त्या पुरस्ताद्बृहती वा ' इति । गतः सूक्तविनियोगः ॥ अत्रेतिहासमाचक्षते—त्वष्टृनामकस्य देवस्य सरण्यूस्त्रिशिराश्चेति स्त्रीपुंसात्मकमपत्यद्वयमभूत् । ततस्त्वष्टा सरण्यूनामिकां पुत्रीं विवस्वते प्रायच्छत् । ततस्तस्यां विवस्वतश्च सकाशात् यमयम्यौ विजज्ञाते । ततः कदाचित् आत्मसदृश्या[1] देवजनितायाः स्त्रियः समीपे तदपत्यद्वयं निधाय स्वयमाश्वं रूपं कृत्वोत्तरान् कुरून् प्रतिजगाम । अथ विवस्वानेतां स्त्रियं सरण्यूमिति मत्वा तामरंसीत् । तस्यां मनुर्नाम राजर्षिरजायत । ततो विवस्वानेषा सरण्यूर्न भवतीति विज्ञाय स्वयमप्यश्वो भूत्वा तामश्वरूपिणीं प्रायासीत् । ततः संक्रीडमानयोस्तयोः स्वभूतं रेतः पृथिव्यां पपात । अथ सा गर्भकामनया तत् पतितं रेत आजघ्रौ । ततस्तस्याः सकाशान्नासत्यो दस्रश्चेत्युभावश्विनावजायेतामिति ॥

**त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति ।**
**यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥ १ ॥**

त्वष्टा । दुहित्रे । वहतुम् । कृणोति । इति । इदम् । विश्वम् । भुवनम् । सम् । एति ।
यमस्य । माता । परिऽउह्यमाना । महः । जाया । विवस्वतः । ननाश ॥ १ ॥

त्वष्टा एतन्नामको देवः दुहित्रे । षष्ठ्यर्थे चतुर्थी । दुहितुः सरण्यूनामिकायाः वहतुं वहनं विवाहम् । 'पृथिवह्योश्चतुः' ( उ. सू. १. ७९ ) इति वहेश्चतुप्रत्ययः । तं कृणोति करोति । इति एतेन हेतुना इदं विश्वं सर्वं भुवनं भूतजातं समेति तं विवाहं समागमत् । पर्युह्यमाना विवस्वतोढोढव्या यमस्य यम्याश्च माता महः महतः विवस्वतः जाया भार्या सरण्यूः ननाश । उत्तरान् कुरून् प्रति नष्टा । अगच्छदित्यर्थः[2] ॥

**अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदधुर्विवस्वते ।**
**उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥ २ ॥**

अप । अगूहन् । अमृताम् । मर्त्येभ्यः । कृत्वी । सऽवर्णाम् । अदधुः । विवस्वते ।
उत । अश्विनौ । अभरत् । यत् । तत् । आसीत् । अजहात् । ऊँ इति । द्वा । मिथुना । सरण्यूः ॥ २ ॥

१. त१.२.५.६.७-भ६-आत्मसदृशा; त४-आत्मसादृश्यात् ।   २. त-भ६-आगच्छ° ।

ᵛअमृतां मरणधर्मरहितामेतां सरण्यूं ᵛमर्त्येभ्यः मनुष्येभ्यस्तदुत्पत्त्यर्थम् ᵛअपागूहन् अपगूहितवन्तः संवृतवन्तः। देवा उपनीतवन्त इत्यर्थः। किंच ᵛसवर्णां सरण्यूसदृशीमन्यां[1] स्त्रियं ᵛकृत्वी कृत्वा तस्मै ᵛविवस्वते देवाः ᵛअददुः प्रायच्छन्। ᵛउत अपि च साश्वरूपिणी सरण्यूस्तदा ᵛअश्विनावभरत्। स्वोदरे गर्भभूतौ धारितवती। ᵛयत् यदा ᵛतत् जायापतिभ्यामश्वरूपात्मना संभोगकाले रेतः[2] पतितम् ᵛआसीत् तदाश्विनौ जनयामासेत्यर्थः। तथा ᵛसरण्यूः सरणवत्येतन्नामिका ᵛद्वा ᵛमिथुना द्वौ मिथुनौ यमयम्यौ ᵛअजहात् त्यक्तवती। जनितवतीत्यर्थः। यद्वा। सरण्यूरेतन्नामिका मध्यमस्थाना देवता मध्यममग्निं माध्यमिकां वाचं चोत्पादितवती॥

दीक्षितमरणे 'पूषा त्वेतः' इत्याद्याश्चतस्रः शंसनीयाः। सूत्रितं च—'पूषा त्वेतश्च्यावयतु प्र विद्वानिति चतस्रः' (आश्व. श्रौ. ६. १०) इति॥

पूषा त्वेतश्च्यावयतु प्र विद्वानन॑ष्टपशुर्भुव॑नस्य गो॒पाः।
स त्वै॒तेभ्यः॒ परि॑ ददत्पि॒तृभ्यो॒ऽग्निर्दे॒वेभ्यः॑ सुविद॒त्रियेभ्यः॥ ३॥

पू॒षा। त्वा॒। इ॒तः। च्य॒व॒य॒तु॒। प्र। वि॒द्वान्। अन॑ष्टऽपशुः। भुव॑नस्य। गो॒पाः।
सः। त्वा॒। ए॒तेभ्यः॑। परि॑। द॒द॒त्। पि॒तृऽभ्यः॑। अ॒ग्निः। दे॒वेभ्यः॑। सु॒ऽवि॒द॒त्रियेभ्यः॑॥३॥

ᵛपूषा पोषयितैतन्नामको देवः ᵛत्वा त्वाम् ᵛइतः अस्माद्देशाल्लोकात् ᵛप्र ᵛच्यावयतु प्रकर्षेणोत्तमलोकं गमयतु। कीदृशः। ᵛविद्वान् अस्मद्भक्ततां विजानानः ᵛअनष्टपशुः अविनश्वरपशुयुक्तः। यस्मिन्[3] सर्वे पशवस्तिष्ठन्ति न तु नश्यन्तीत्यर्थः। ᵛभुवनस्य भूतजातस्य[4] ᵛगोपाः गोपायिता। किंच प्रक्रमस्य ᵛसः पूषा ᵛएतेभ्यः ᵛपितृभ्यः ᵛत्वा त्वां ᵛपरि ᵛददत् परिप्रयच्छतु। तथा ᵛअग्निः च ᵛसुविदत्रियेभ्यः। सुविदत्रं ज्ञानं धनं वा। तदर्हाः सुविदत्रियाः। छान्दसो घप्रत्ययः। शोभनज्ञानेभ्यः सुधनेभ्यो वा ᵛदेवेभ्यः त्वां प्रयच्छतु। तेषां लोके स्थापयत्वित्यर्थः॥

आयु॑र्वि॒श्वायुः॒ परि॑ पासति त्वा पू॒षा त्वा॑ पातु॒ प्रप॑थे पु॒रस्ता॑त्।
यत्रास॑ते सु॒कृतो॒ यत्र॒ ते य॒युस्तत्र॑ त्वा दे॒वः स॑वि॒ता द॑धातु॥ ४॥

आयुः॑। वि॒श्वऽआ॑युः। परि॑। पा॒स॒ति॒। त्वा॒। पू॒षा। त्वा॒। पा॒तु॒। प्रऽप॑थे। पु॒रस्ता॑त्।
यत्र॑। आस॑ते। सु॒ऽकृतः॑। यत्र॑। ते। य॒युः। तत्र॑। त्वा॒। दे॒वः। स॒वि॒ता। द॒धा॒तु॒॥ ४॥

ᵛविश्वायुः सर्वान्नः सर्वत्र गमनशीलो वा ᵛआयुः। वकारलोपश्छान्दसः। वायुः। यद्वा। 'छन्दसीणः'[5] इत्युण्प्रत्यये वृद्धौ च कृतायां रूपम्। गन्ता वायुः। ᵛत्वा त्वां ᵛपरि ᵛपासति परिपातु। पूषानुज्ञया परितो रक्षतु। 'पा रक्षणे'। लेटि सिप्यडागमः। ᵛप्रपथे प्रकृष्टे मार्गे स्वर्गे ᵛपुरस्तात् सर्वेषां प्रथममेव[6] वर्तमानः ᵛपूषा स्वयमेव ᵛत्वा त्वां प्रमितं यजमानं ᵛपातु रक्षतु। ᵛसुकृतः पुण्यकर्माणः ᵛयत्र यस्मिन् देशे ᵛआसते तिष्ठन्ति ᵛयत्र वा ᵛते ᵛसुकृतः ᵛययुः प्राप्ताः ᵛतत्र[7] तस्मिन्[7] स्थाने ᵛदेवः दीप्यमानः ᵛसविता सर्वस्य स्वस्वकर्मणि प्रेरक एतन्नामको देवः ᵛत्वा त्वां ᵛदधातु निदधातु॥

एकादशिनस्य पौष्णस्य पशोर्हविषः 'पूषेमाः' इत्यनुवाक्या। 'पूषेमा आशा अनु वेद सर्वाः शुक्रं ते अन्यद्यजतं ते अन्यत्' (आश्व. श्रौ. ३. ७) इति हि सूत्रितम्॥

१. त-भ-मु-°सदृशामन्यां। २. त-भ-'रेतः' नास्ति। ३. ग-अस्मिन्। ४. त३.४-भ१.२.४-सर्वस्य भूतजातस्य। ५. त-भ६-छांदसीणः। ६. ग-त१.२.४-प्रथमत एव; त३-प्रथम एव। ७. त-तस्मिंस्तस्मिन्।

पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत् ।
स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रजानन् ॥ ५ ॥

पूषा । इमाः । आशाः । अनु । वेद । सर्वाः । सः । अस्मान् । अभयऽतमेन । नेषत् ।
स्वस्तिऽदाः । आघृणिः । सर्वऽवीरः । अप्रऽयुच्छन् । पुरः । एतु । प्रऽजानन् ॥ ५ ॥

ᵛपूषा देवः ᵛइमाः ᵛसर्वाः ᵛआशाः प्राच्याद्या दिशः ᵛअनु ᵛवेद आनुपूर्व्येण जानाति । इमाः सुखेन गन्तव्या असुखेनेति वैवमनुक्रमेण जानातीत्यर्थः । एवं सति अस्मान् प्रमिते यजमानो ब्रवीति पुत्रमुखेन याजकमुखेन वा । ᵛअस्मान्[1] ᵛअभयतमेन अत्यन्तं भयरहितेन मार्गेण ᵛनेषत् नयतु । कथम् । ᵛस्वस्तिदाः कल्याणस्य दाता ᵛआघृणिः आगतदीप्तियुक्तः ᵛसर्ववीरः सर्वैर्वीरैः कर्मणि समर्थैर्ऋत्विग्भिरुपेतः ᵛअप्रयुच्छन् अप्रमाद्यन् ᵛप्रजानन् अस्माकं फलाफले विजानानः सन् ᵛपुरः ᵛएतु अस्माकं पुरस्ताद्गच्छतु । यथास्माकं भयं न[2] भवति तथा गच्छत्वित्यर्थः ॥ ॥ २३ ॥

एकादशिनस्य पौष्णस्य पशोः पुरोडाशस्य 'प्रपथे पथाम्' इति याज्या । सूत्रितं च—'प्रपथे पथामजनिष्ट पूषा पथस्पथः परिपतिं वचस्या' ( आश्व. श्रौ. ३. ७ ) इति ॥

प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः ।
उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥ ६ ॥

प्रऽपथे । पथाम् । अजनिष्ट । पूषा । प्रऽपथे । दिवः । प्रऽपथे । पृथिव्याः ।
उभे इति । अभि । प्रियतमे इति प्रियऽतमे । सधस्थे इति सधऽस्थे ।
आ । च । परा । च । चरति । प्रऽजानन् ॥ ६ ॥

ᵛपथाम् अन्तरिक्षगमनहेतुभूतानां मार्गाणां मध्ये ᵛप्रपथे यः प्रकृष्टः पन्थास्ति तत्र ᵛपूषा ᵛअजनिष्ट प्रादुरभूत् । पुण्यकर्मणां सुगतिप्रापणार्थमवस्थित इति भावः । तथा ᵛदिवः द्युलोकस्य च मार्गाणां मध्ये ᵛप्रपथे प्रकृष्टे मार्गे जातः । तथा ᵛपृथिव्याः ᵛप्रपथे प्रकृष्टे मार्गे मनुष्याणां तत्तत्कर्मणि प्रवर्तनार्थं प्रादुर्भूत इत्यर्थः । सोऽयं पूषा ᵛप्रियतमे सर्वस्येष्टतमे ᵛसधस्थे सर्वेषां सहावस्थानभूते ᵛउभे द्यावापृथिव्यावभिलक्ष्य ᵛआ ᵛचरति आभिमुख्येन चरति । सुकृतिनां सुकृतफलप्रदर्शनायानुकूलं चरतीत्यर्थः । तथा ᵛपरा चरति । दुष्कर्मणां प्रतिकूलं गच्छति । किं कुर्वन् । ᵛप्रजानन् अनेनेदं कर्म कृतमस्य कर्मण इदं फलमित्यविशेषेण जानानः ॥

व्यूळ्हस्य दशरात्रस्य तृतीये छन्दोमे प्रउगशस्त्रे[3] सारस्वततृचस्य 'सरस्वतीं देवयन्तः' इत्येषाद्या । सूत्र्यते हि—'प्र ब्रह्माणो अङ्गिरसो नक्षन्त सरस्वतीं देवयन्तो हवन्ते' (आश्व. श्रौ. ८. ११) इति ॥

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो अह्वयन्त सरस्वती दाशुषे वार्यं दात् ॥ ७ ॥

सरस्वतीम् । देवऽयन्तः । हवन्ते । सरस्वतीम् । अध्वरे । तायमाने ।
सरस्वतीम् । सुऽकृतः । अह्वयन्त । सरस्वती । दाशुषे । वार्यम् । दात् ॥ ७ ॥

---

१. ग-त३.४–अस्मान् स पूषा; भ६–अस्मान् पूषा । २. त–नर्य । ३. त-भ१.२.४.६-मु–प्रउगे ।

देवयन्तः देवान्[1] यष्टुं स्तोतुं च[1] कामयमाना यजमानाः सरस्वतीम् एतन्नामिकां मध्यमस्थानदेवतां हवन्ते कर्मावयवत्वाय आह्वयन्ति । तथा तायमाने स्तुतिभिर्हविर्भिश्च विस्तीर्यमाणे[2] अध्वरे यज्ञे सरस्वतीं यजन्तीति शेषः । सुकृतः पुण्यकर्माणः सरस्वतीम् अह्वयन्त फलप्रदानाय ह्वयन्ते । यत एवमतः कारणात् सरस्वती देवी दाशुषे हवींषि दत्तवते यजमानाय वार्यं वरणीयं कर्मफलं दात् प्रयच्छतु ॥

**सरस्वति या सरथं ययाथ स्वधाभिर्देवि पितृभिर्मदन्ती ।**
**आसद्यास्मिन्बर्हिषि मादयस्वानमीवा इष आ धेह्यस्मे ॥ ८ ॥**

सरस्वति । या । सऽरथम् । ययाथ । स्वधाभिः । देवि । पितृऽभिः । मदन्ती ।
आऽसद्य । अस्मिन् । बर्हिषि । मादयस्व । अनमीवाः । इषः । आ । धेहि । अस्मे इति ॥ ८ ॥

हे सरस्वति हे देवि या त्वं सरथं पितृभिः सह समानेन रथेन युक्तं यथा भवति तथा ययाथ । अस्मदीयं यज्ञं प्राप्तासि । किं कुर्वती[3] । पितृभिः सह स्वधाभिः हविर्लक्षणैरन्नैः मदन्ती माद्यन्ती यज्ञं गच्छसीति संबन्धः । सा त्वं बर्हिषि अस्मिन् वेदिस्तरणे यज्ञे आसद्य उपविश्य मादयस्व हविर्भिस्तृप्ता भव । आत्मानं तर्पय वा । ततस्तृप्ता सती त्वम् अनमीवाः । अमीवा रोगः । तद्वर्जितान्यारोग्यजननानि इषः अन्नानि अस्मे अस्मभ्यम् आ धेहि पर्याप्तं प्रयच्छ ॥

**सरस्वतीं यां पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः ।**
**सहस्रार्घमिळो अत्र भागं रायस्पोषं यजमानेषु धेहि ॥ ९ ॥**

सरस्वतीम् । याम् । पितरः । हवन्ते । दक्षिणा । यज्ञम् । अभिऽनक्षमाणाः ।
सहस्रऽअर्घम् । इळः । अत्र । भागम् । रायः । पोषम् । यजमानेषु । धेहि ॥ ९ ॥

यां त्वां सरस्वतीं पितरो हवन्ते आह्वयन्ति । कीदृशाः । दक्षिणा ॥ 'दक्षिणादाच्' (पा. सू. ५. ३. ३६) इत्याच्प्रत्ययः ॥ दक्षिणत आगत्य यज्ञमभिनक्षमाणाः अभितो गच्छन्तो व्याप्नुवन्तः । अत्र अस्मिन् यज्ञे सहस्रार्घं बहुभिः पूजनीयमुपयोज्यम् इळः[4] अन्नस्य भागं रायः धनस्य पोषं पुष्टिं च यजमानेषु त्वं धेहि स्थापय ॥

अवभृथस्थाने 'आपो अस्मात्' इत्येषा[5]। सूत्रितं[5] च—'तत आचम्याप्लवन्त आपो अस्मान् मातरः शुन्धयन्तु' (आश्व. श्रौ. ६. १३) इति । दशमेऽहनि वपामार्जनेऽप्येषा[5]। सूत्रितं च—'इदमापः प्र वहतेत्येतस्याः स्थान आपो अस्मान्मातरः शुन्धयन्तु' (आश्व. श्रौ. ८. १२) इति ॥

**आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।**
**विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥ १० ॥**

आपः । अस्मान् । मातरः । शुन्धयन्तु । घृतेन । नः । घृतऽप्वः । पुनन्तु ।
विश्वम् । हि । रिप्रम् । प्रऽवहन्ति । देवीः । उत् । इत् । आभ्यः । शुचिः । आ । पूतः । एमि ॥ १० ॥

---

१. ग–देवानेव यष्टुं स्तोतुं वा । २. ग-त-भ२.४-मु–विस्तार्यमाणे । ३. भ–कुर्वती । ४. त–इषः ।
५. त-भ६–'सूत्रितं...'प्येषा' नास्ति ।

मातरः जगतो मातृस्थानीयाः आपः अस्मान् शुन्धयन्तु प्रोक्षणेन शोधयन्तु। तथा घृतप्वः। घृतमुदकम्। तेनान्यान् पुनन्तीति। तास्तथोक्ता आपः। यद्वा घृतप्वः। घृतं गव्यम्। तेन पुनन्ति। तथा ब्राह्मणं—' घृतेन नो घृतप्वः पुनन्तीति तद्वै सुपूतं यद्घृतेन पूयते ' ( श. ब्रा. ३.१.२.११ ) इति। ता आपः घृतेन प्रत्यक्षेणोदकेन नः अस्मान् पुनन्तु। हि यस्मात् देवीः देव्यो देवनशीला आपः विश्वं सर्वं रिप्रं पापं प्रवहन्ति[1] पुरुषसकाशात्[2] प्रगमयन्ति। अपनयन्तीति यावत्। अनन्तरम् आभ्यः अद्भ्यः आ पूतः आभिमुख्येन शुद्धः सन् स्तोताहम् उत् एमि उद्गच्छामि। ऊर्ध्वं स्वर्गं गच्छामीत्यर्थः ॥　　　॥ २४ ॥

सुत्येऽहनि ' द्रप्सश्चस्कन्द ' इत्यादिके द्वे विप्रुड्ढोमार्थे। सूत्रितं च—' द्रप्सश्चस्कन्देति द्वाभ्यां विप्रुड्ढोमौ हुत्वा ' ( आश्व. श्रौ. ५. २ ) इति। स्कन्नहविरभिमर्शनेऽपि ' द्रप्सः ' इत्येषा। आहुतिर्बहिष्परिधि यदि स्कन्देत् तदानीमाग्नीध्रोऽनया जुहुयात्। स्कन्नमभिमृशेदिति प्रकृत्य सूत्रितं—' द्रप्सश्चस्कन्देत्याहुतिश्चेद्बहिष्परिध्याग्नीध्र एनां जुहुयात् ' ( आश्व. श्रौ. ३. १३ ) इति ॥

द्रप्सश्चस्कन्द प्रथमाँ अनु द्यूनिमं च योनिमनु यश्च पूर्वः।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ ११ ॥

द्रप्सः। चस्कन्द। प्रथमान्। अनु। द्यून्। इमम्। च। योनिम्। अनु। यः। च। पूर्वः।
समानम्। योनिम्। अनु। सम्ऽचरन्तम्। द्रप्सम्। जुहोमि। अनु। सप्त। होत्राः॥ ११॥

द्रप्सः अभिषूयमाणस्य सोमस्य रसः प्रथमान् पूर्वभाविनः पार्थिवाँल्लोकान् द्यून् दीप्यमानान् द्युलोकांश्च अनु लक्षीकृत्य चस्कन्द स्कन्नवान् गतवान्। तदेवाह। इमं परिदृश्यमानं योनिं स्थानभूतं लोकं च यश्च अस्मात् पूर्वः अस्ति तम् अनु गतवान्। समानं साधारणं योनिं द्यावापृथिवीलक्षणं स्थानम् अनु संचरन्तं सम्यग्गच्छन्तं द्रप्सं सोमरसं विप्रुड्लक्षणं सप्त होत्राः सप्तसंख्याका विप्रुड्ढोमस्य कर्तारो होतृप्रभृतयो वयम् अनु आनुपूर्व्येण जुहोमि जुहुमः। यद्वा। होत्राः। सप्तहोतृभिः क्रियमाणा यागक्रिया होत्राः। ता अनु पश्चादध्वर्युरहं जुहोमि। यद्वा। द्रप्सः। द्रुतगामित्वाद्द्रप्स आदित्य उच्यते। स[3] आदित्यः पृथिवीं च दिवं च गच्छति समानं योनिमन्तरिक्षं लक्षीकृत्य। सम्यक्चरन्तं तं द्रप्समादित्यमुद्दिश्य सप्त होत्राः सप्तसंख्याका दिशः। यस्यां दिशि सूर्यो वर्तते तद्व्यतिरिक्ताः सप्तसंख्याका दिशः[4]। अनु पश्चाज्जुहोमि। यत्र यत्र वर्तते तां तां दिशं द्रव्यत्वेन प्रयच्छामि। प्रतिष्ठापयामीत्यर्थः। अत्र वाजसनेयकम्—' असौ वा आदित्यो द्रप्सः स दिवं च पृथिवीं च स्कन्दतीमं च योनिमनु यश्च पूर्व इतीमं च लोकममुं चेत्येतत् समानं योनिमनु संचरन्तमिति समानं ह्येष एतं योनिमनु संचरति[5] द्रप्सं जुहोम्यनु सप्त होत्रा इत्यसौ वा आदित्यो द्रप्सो दिशः सप्त होत्रा अमुं तदादित्यं दिक्षु प्रतिष्ठापयति ' ( श. ब्रा. ७. ४. १. २० ) इति ॥

यस्ते द्रप्सः स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थात्।
अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतम् ॥ १२ ॥

यः। ते। द्रप्सः। स्कन्दति। यः। ते। अंशुः। बाहुऽच्युतः। धिषणायाः। उपऽस्थात्।
अध्वर्योः। वा। परि। वा। यः। पवित्रात्। तम्। ते। जुहोमि। मनसा। वषट्ऽकृतम्॥ १२॥

---

१. त-भ६—वहति। २. त-भ—पुरुषात्सकाशात्। ३. त-भ६—' स ' नास्ति। ४. त-भ६—दिशः सप्त।
५. त-भ१.२.४.६—संचरति।

हे सोम ᵛते त्वदीयः ᵛयः ᵛद्रप्सः रसः ᵛस्कन्दति अधिषवणचर्मणोऽन्यत्र गच्छति । ᵛयः च ᵛते त्वदीयः ᵛअंशुः रसादितरः सन् स्कन्दति । ᵛबाहुच्युतः अध्वर्योर्बाहुभ्यां प्रच्युतः सन् स्कन्दति । यद्वा । बाहुवत्साधनभूता ग्रावाणः । तैः प्रच्युतोऽभिषुतः सन् ᵛधिषणायाः । धिषणेत्यधिषवणफलकनाम । प्रत्येकविवक्षयैकवचनम् । अधिषवणफलकयोः ᵛउपस्थात् समीपस्थात् प्रदेशादन्यत्र गच्छति । तथा ᵛअध्वर्योर्वा अभिषुण्वतोऽध्वर्योर्हस्तात् स्कन्दति । ᵛवा अपि[1] वा[1] ᵛपवित्रात् दशापवित्रात् ᵛपरि स्कन्दति । ᵛतं सर्वं द्रप्सं ᵛते त्वदीयं रसं ᵛमनसा अन्तःकरणेन स्तोत्रेण वा सह ᵛवषट्कृतं वषट्कारेण स्वाहाकारेण कृतं ᵛजुहोमि अग्नौ प्रक्षिपामि ॥

**यस्ते॑ द्र॒प्सः स्क॒न्नो यस्ते॑ अं॒शुर॒वश्च॒ यः प॒रः स्रु॒चा ।**
**अ॒यं दे॒वो बृह॒स्पति॒ः सं तं सि॑ञ्चतु॒ राध॑से ॥ १३ ॥**

यः । ते॒ । द्र॒प्सः । स्क॒न्नः । यः । ते॒ । अं॒शुः । अ॒वः । च॒ । यः । प॒रः । स्रु॒चा ।
अ॒यम् । दे॒वः । बृह॒स्पति॑ः । सम् । तम् । सि॒ञ्च॒तु॒ । राध॑से ॥ १३ ॥

हे सोम ᵛते त्वदीयः ᵛयः ᵛद्रप्सः रसोऽन्यत्र ᵛस्कन्नः गतः ᵛयः च त्वदीयस्तव कारणभूतः ᵛअंशुः लताखण्डो रसादितरो भवति ᵛस्रुचा पात्रविशेषेण गृहीतः सोमः ᵛअवः अवस्तात् स्कन्दते ᵛपरः परस्ताद्वातिरिक्तो भवति ᵛतम् इमं सोमम् ᵛअयं ᵛबृहस्पतिः एतन्नामकः ᵛदेवः ᵛसं ᵛसिञ्चतु सम्यक् प्रक्षारयतु । किमर्थम् । ᵛराधसे अस्माकं धनार्थम् । स्कन्ने हि सोमे प्रजापश्वादिकमपस्कन्नं भवति खलु ॥

**पय॑स्वती॒रोष॑धयः॒ पय॑स्वन्माम॒कं वच॑ः ।**
**अ॒पां पय॑स्व॒दित्पय॒स्तेन॑ मा स॒ह शु॑न्धत ॥ १४ ॥**

पय॑स्वतीः । ओष॑धयः । पय॑स्वत् । मा॒म॒कम् । वच॑ः ।
अ॒पाम् । पय॑स्वत् । इत् । पय॑ः । तेन॑ । मा॒ । स॒ह । शु॒न्ध॒त ॥ १४ ॥

इयं प्रत्यक्षकृता । हे आपः ᵛओषधयः ᵛपयस्वतीः पयस्वत्यो वृष्टिलक्षणेनोदकेन सारवत्यो भवन्ति । ᵛमामकं मदीयं ᵛवचः वचनं वृष्टिप्रार्थनवचनं ᵛपयस्वत् सारवत् भवति । किं बहुना । यच्च इह किंचित् ᵛअपाम् उदकानां ᵛपयः क्षीरवत् सारभूतं[2] यदस्ति[2] तत्सर्वं पयस्वत् सारवदेव । ᵛतेन उदकसारेण ᵛसह ᵛमा मां ᵛशुन्धत यूयं शोधयत । 'आपो अद्यान्वचारिषं रसेन समगस्महि' (ऋ. सं. १. २३. २३) इति निगमान्तरम् ॥ ॥ २५ ॥

'परं मृत्यो' इति चतुर्दशर्चं द्वितीयं सूक्तं यमपुत्रस्य संकुसुकस्यार्षम् । एकादशी प्रस्तारपङ्क्तिः । आद्यौ जागतौ ततो द्वौ गायत्रौ । 'प्रस्तारपङ्क्तिः पुरतः' (पि. सू. ३. ४१) इति । त्रयोदशी जगती चतुर्दश्यनुष्टुप् । शिष्टास्त्रिष्टुभः । तत्रादौ चतस्रो मृत्युदेवत्याः । पञ्चमी धातृदेवताका । षष्ठी त्वष्टृदेवत्या । सप्तम्याद्याः शिष्टाः पितृमेधाभिधायिन्यः । अतस्तद्देवताकाः । अन्त्या त्वनिरुक्तत्वात् प्राजापत्या वा । तथा चानुक्रान्तं—'परं मृत्यो संकुसुकश्चतस्रो मृत्युदेवताः परा धात्री परा त्वाष्ट्री पराः पितृमेधा एकादशी प्रस्तारपङ्क्तिर्जगत्युपान्त्यान्त्यानुष्टुप् प्राजापत्या वा सानिरुक्ता' इति ॥

---

१. त१.५.६.७-भ१.२.४-'अपि वा' नास्ति; त२-वा; त३.४-अपि च; भ६-अथवा ।
२. ग-त-भ-सारभूतो योस्ति ।

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥ १ ॥

परम् । मृत्यो इति । अनु । परा । इहि । पन्थाम् । यः । ते । स्वः । इतरः । देवऽयानात् ।
चक्षुष्मते । शृण्वते । ते । ब्रवीमि । मा । नः । प्रऽजाम् । रिरिषः । मा । उत । वीरान् ॥१॥

हे ^मृत्यो सर्वेषां मारकैतन्नामक देव ^परम् अन्यं ^पन्थां पन्थानम् ^अनु आनुपूर्व्येण ^परेहि पराङ्मुखो गच्छ । यजमानादिति शेषः । कोऽसौ पन्थाः । ^ते तव ^स्वः स्वभूतः ^देवयानात् । देवा अनेन मार्गेण गच्छन्तीति देवयानो देवमार्गः। तस्मात् ^इतरः ^यः पन्थाः तं प्रगच्छ । न केवलमतः परागच्छ अपि तु ^चक्षुष्मते दर्शनवते ^शृण्वते सर्वम् । अप्रतिहतसर्वेन्द्रियविज्ञानायेत्यर्थः । ^ते तुभ्यं ^ब्रवीमि कथयामि । ^नः अस्माकं ^प्रजां दुहितृदौहित्रात्मिकां ^मा ^रिरिषः मा हिंसीः । ^उत अपि च ^वीरान् पुत्रपौत्रादीन् ^मा हिंसीः । तत्परागमनेन रक्षेत्यर्थः ॥

मृत्योः पदं योपयन्तो यदैत द्राघीय आयुः प्रतरं दधानाः ।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥ २ ॥

मृत्योः । पदम् । योपयन्तः । यत् । ऐत । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ।
आऽप्यायमानाः । प्रऽजया । धनेन । शुद्धाः । पूताः । भवत । यज्ञियासः ॥ २ ॥

हे मृतस्य ज्ञातयः ^मृत्योः परागच्छतः तस्य ^पदम् । पद्यतेऽस्मिन्निति पदं पितृयाणः । तं ^योपयन्तः विमोहयन्तः परिवर्जयन्तः ^यत् ^यस्मात् ^ऐत देवयानीयपथा गतवन्तः तस्मात् ^द्राघीयः दीर्घतरम् ^आयुः जीवनं ^प्रतरं प्रकृष्टतरमत्यर्थं ^दधानाः धारयन्तो भवथ । किंच हे ^यज्ञियासः यज्ञार्हा यज्ञसंपादिनो यजमानाः ^प्रजया पुत्रपौत्रादिकया ^धनेन गवाश्वादिकेन च ^आप्यायमानाः वर्धमानाः[1] सन्तः ^शुद्धाः जन्मान्तरसंचितदुरितक्षयात् शुद्धाः ^भवत । ^पूताः वर्तमानजन्मोपचितदुरितक्षयाच्च पूता भवत ॥

पैतृमेधिके कर्मणि अमात्याः ‘ इमे जीवा वि मृतैः ’ इति सव्यावृतो व्रजन्ति । सूत्रितं च— ‘ इमे जीवा वि मृतैरिति सव्यावृतो व्रजन्ति ’ ( आश्व. गृ. ४. ४. ९ ) इति ॥

इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य ।
प्राञ्चो अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः ॥ ३ ॥

इमे । जीवाः । वि । मृतैः । आ । अववृत्रन् । अभूत् । भद्रा । देवऽहूतिः । नः । अद्य ।
प्राञ्चः । अगाम । नृतये । हसाय । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥ ३ ॥

^इमे ^जीवाः जीवन्तः पुरुषाः ^मृतैः पित्रादिभिः । तेभ्य इत्यर्थः । ^वि ^आ ^अववृत्रन् व्यावृत्ता भवन्तु । एते न म्रियन्तामिति भावः । किंच ^अद्य अस्मिन् दिने ^नः अस्माकमशौचे विसृष्टे ^देवहूतिः देवानामाह्वानं यत्र स देवहूतिः पितृमेधाख्यो यज्ञः ^भद्रा कल्याणः ^अभूत्

१. ग-भ—प्रवर्तमानाः; त-मु—वर्तमानाः; उद्गीथ—प्रवर्धमानाः ।

भवतु। तत उत्तरं वयं ᵛप्राञ्चः प्राङ्मुखाञ्चनाः ᵛअगाम[1] गच्छेम। प्रत्यञ्च इति भावः। ᵛनृतये नर्तनाय कर्मणि गात्रविक्षेपाय। स्वकर्मानुष्ठानायेति भावः। ᵛहसाय हसनाय पुत्रादिभिः सह क्रीडनाय। कीदृशा वयम्। ᵛद्राघीय ᵛआयुः ᵛप्रतरं ᵛदधानाः॥

**इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम्।**
**शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ ४ ॥**

इमम्। जीवेभ्यः। परिऽधिम्। दधामि। मा। एषाम्। नु। गात्। अपरः। अर्थम्। एतम्।
शतम्। जीवन्तु। शरदः। पुरूचीः। अन्तः। मृत्युम्। दधताम्। पर्वतेन ॥ ४ ॥

अनया जीवरक्षार्थं पाषाणं परिधिरूपेण स्थापयन्ति। ᵛजीवेभ्यः जीवद्भ्यः पुत्रपौत्रादिभ्यस्तेषां रक्षणार्थमेवं ᵛपरिधिं मृत्योः परिधानभूतं पाषाणं ᵛदधामि निदधामि[2]। ततः ᵛएषां जीवतां मध्ये ᵛअपरः अन्यः ᵛएतम् इमम् ᵛअर्थम्। अर्तेरिदं रूपम्। गन्तव्यं मरणाख्यं मार्गं ᵛनु क्षिप्रं ᵛमा ᵛगात् मा गच्छतु। एतदर्थं परिधिं स्थापयामीति संबन्धः। किंच ᵛपुरूचीः बह्वञ्चना बहुगमनाः ᵛशतं ᵛशरदः एतत्संख्याकान् वर्षान् ᵛजीवन्तु स्वस्वप्राणान् धारयन्तु। तथा ᵛपर्वतेन शिलोच्चयेन ᵛमृत्युं सर्वेषां मारकमेतन्नामकम् ᵛअन्तः ᵛदधताम् अन्तर्हितं कुर्वन्तु। यथा नागच्छति[3] तथा कुर्वतामित्यर्थः॥

**यथाहान्यनुपूर्वं भवन्ति यथ ऋतव ऋतुभिर्यन्ति साधु।**
**यथा न पूर्वमपरो जहात्येवा धातरायूंषि कल्पयैषाम् ॥ ५ ॥**

यथा। अहानि। अनुऽपूर्वम्। भवन्ति। यथा। ऋतवः। ऋतुऽभिः। यन्ति। साधु।
यथा। न। पूर्वम्। अपरः। जहाति। एव। धातः। आयूंषि। कल्पय। एषाम् ॥ ५ ॥

ᵛयथा येन प्रकारेण ᵛअहानि अहोरात्रात्मकानि दिनानि ᵛअनुपूर्वं पूर्वंपूर्वमनुक्रमेण ᵛभवन्ति परिवर्तन्ते। ᵛयथा च ᵛऋतवः वसन्तादयः ᵛऋतुभिः सह ᵛसाधु शोभनमविपर्यासेन ᵛयन्ति गच्छन्ति। ᵛयथा च ᵛपूर्वं पूर्वकालीनं पितरम् ᵛअपरः अर्वाक्कालीनः पुत्रः ᵛन ᵛजहाति न परित्यजति पूर्वमरणेन। ᵛएव एवं[4] तेनैवोक्तप्रकारेण हे ᵛधातः सर्वेषां धारयितरेतन्नामक देव ᵛएषाम् अस्मत्कुलीनानां जीवानाम् ᵛआयूंषि जीवनानि ᵛकल्पय समर्थय। कुर्वित्यर्थः॥ ॥ २६ ॥

**आ रोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति ष्ठ।**
**इह त्वष्टा सुजनिमा सजोषा दीर्घमायुः करति जीवसे वः ॥ ६ ॥**

आ। रोहत। आयुः। जरसम्। वृणानाः। अनुऽपूर्वम्। यतमानाः। यति। स्थ।
इह। त्वष्टा। सुऽजनिमा। सऽजोषाः। दीर्घम्। आयुः। करति। जीवसे। वः ॥ ६ ॥

हे मृतस्य स्वजनाः पुत्रपौत्रादयः ᵛजरसं जरां ᵛवृणानाः संभजमाना यूयम् ᵛआयुः जीवनम् ᵛआ ᵛरोहत अधितिष्ठत। ᵛअनुपूर्वम् आनुपूर्व्येण। अव्ययीभावः। पूर्वो ज्येष्ठः। ज्येष्ठानुपूर्व्या ᵛयतमानाः प्रयत्नं कुर्वन्तो यूयं[5] ᵛयति ᵛस्थ यत्संख्याका भवथ। यच्छब्दाच्छान्दसो डतिः।

१. त१.२.५–जनाम; त३.४-भ–जगाम; मु–अयाम। २. त१.४-भ६.७–'निदधामि' नास्ति; त२.५–दधामि; त७–स्थापयामि। ३. ग-त१.३.४.५.६-भ–गच्छति। ४. त–एवं एवसु; भ१.४–एवं एवसु। ५. त-भ–वयं।

ᵛसुजनिमा शोभनजननः ᵛत्वष्टा एतन्नामको देवः ᵛसजोषाः भवद्भिः संगतः सन् ᵛइह अस्मिन् कर्मणि प्रवृत्तानां ᵛवः युष्माकं ᵛजीवसे जीवनाय ᵛदीर्घं प्रभूतम् ᵛआयुः ᵛकरति करोतु ॥

इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं विशन्तु ।
अनश्रवोऽनमीवाः सुरत्ना आ रोहन्तु जनयो योनिमग्रे ॥ ७ ॥

इमाः । नारीः । अविधवाः । सुऽपत्नीः । आऽअञ्जनेन । सर्पिषा । सम् । विशन्तु ।
अनश्रवः । अनमीवाः । सुऽरत्नाः । आ । रोहन्तु । जनयः । योनिम् । अग्रे ॥ ७ ॥

ᵛअविधवाः । धवः पतिः । अविगतपतिकाः । जीवद्भर्तृका इत्यर्थः । ᵛसुपत्नीः शोभनपतिकाः ᵛइमाः ᵛनारीः नार्यः ᵛआञ्जनेन सर्वतोऽञ्जनसाधनेन ᵛसर्पिषा घृतेन अक्तनेत्राः सत्यः ᵛसं ᵛविशन्तु स्वगृहान् प्रविशन्तु । तथा ᵛअनश्रवः अश्रुवर्जिता अरुदत्यः ᵛअनमीवाः । अमीवा रोगः। तद्वर्जिताः। मानसदुःखवर्जिता इत्यर्थः । ᵛसुरत्नाः शोभनधनसहिताः ᵛजनयः। जनयन्त्यपत्यमिति जनयो भार्याः । ताः ᵛअग्रे सर्वेषां प्रथमत एव ᵛयोनिं गृहम् ᵛआ ᵛरोहन्तु आगच्छन्तु ॥

देवरादिकः प्रेतपत्नीम् 'उदीर्ष्व नारि' इत्यनया भर्तृसकाशादुत्थापयेत्। सूत्रितं च— 'तामुत्थापयेद्देवरः[1] पतिस्थानीयोऽन्तेवासी जरद्दासो वोदीर्ष्व नार्यभि जीवलोकम्' (आश्व. गृ. ४. २. १८) इति[1] ॥

उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥ ८ ॥

उत् । ईर्ष्व । नारि । अभि । जीवऽलोकम् । गतऽअसुम् । एतम् । उप । शेषे । आ । इहि ।
हस्तऽग्राभस्य । दिधिषोः । तव । इदम् । पत्युः । जनिऽत्वम् । अभि । सम् । बभूथ ॥८॥

हे ᵛनारि मृतस्य पत्नि ᵛजीवलोकं जीवानां पुत्रपौत्रादीनां[2] लोकं स्थानं गृहमभिलक्ष्य ᵛउदीर्ष्व अस्मात् स्थानादुत्तिष्ठ । 'ईर गतौ' आदादिकः । ᵛगतासुम् अपक्रान्तप्राणम्[3] ᵛएतं पतिम् ᵛउप ᵛशेषे तस्य समीपे स्वपिषि । तस्मात्त्वम् ᵛएहि आगच्छ यस्मात्त्वं ᵛहस्तग्राभस्य पाणिग्राहं कुर्वतः ᵛदिधिषोः गर्भस्य निधातुः ᵛतव अस्य ᵛपत्युः संबन्धादागतम् ᵛइदं ᵛजनित्वं जायात्वमभिलक्ष्य ᵛसं ᵛबभूथ संभूतासि अनुमरणनिश्चयमकार्षीः तस्मादागच्छ ॥

क्षत्रियस्य 'धनुर्हस्तात्' इत्यनया धनुः प्रहरेत्। सूत्रितं च—'धनुर्हस्तादाददानो[4] मृतस्येति धनुः' (आश्व. गृ. ४. २. २०) इति[4] ॥

धनुर्हस्तादाददानो मृतस्यास्मे क्षत्राय वर्चसे बलाय ।
अत्रैव त्वमिह वयं सुवीरा विश्वाः स्पृधो अभिमातीर्जयेम ॥ ९ ॥

धनुः । हस्तात् । आऽददानः । मृतस्य । अस्मे इति । क्षत्राय । वर्चसे । बलाय ।
अत्र । एव । त्वम् । इह । वयम् । सुऽवीराः । विश्वाः । स्पृधः । अभिऽमातीः । जयेम ॥९॥

---

१. ग-त-भ२.४.७–'तामुत्थापयेद्देवर...इति' नास्ति; भ६–उदीर्ष्व नार्यभि जीवलोकमिति कर्ता वृषले जपेत्। २. त–'पुत्रपौत्रादीनां' नास्ति। ३. त-भ–उपक्रांत°; उद्गीथ–उत्क्रांत°। ४. ग-त-भ१.२.४.५.७–'धनुर्हस्ता°...इति' नास्ति।

^v^मृतस्य क्षत्रियस्य ^v^हस्तात् ^v^धनुः ^v^आददानः। किमर्थम्। ^v^अस्मे अस्माकं ^v^क्षत्राय प्रजापालनसमर्थाय बलाय ^v^वर्चसे तेजसे ^v^बलाय सेनालक्षणाय च धनुराददानोऽहं ब्रवीमीति शेषः। किमिति। ^v^त्वम् ^v^अत्रैव अस्मिन् स्थान एव भव ^v^वयं च ^v^इह अस्मिँल्लोके ^v^सुवीराः सुपुत्रयुक्ता भवन्तः ^v^विश्वाः सर्वान् ^v^अभिमातीः अभिमन्यमानान् ^v^स्पृधः संघर्षयितॄन् बाधकान् शत्रून् ^v^जयेम सहेमहि ॥

दीक्षितमरणे 'उप सर्प मातरम्' इत्याद्याश्चतस्रः शंसनीयाः। सूत्रितं च—'उप सर्प मातरं भूमिमेतामिति चतस्रः सोम एकेभ्यः' (आश्व. श्रौ. ६. १०) इति। 'उप सर्प' इत्यनया संचितान्यस्थीनि गर्ते निदध्युः (आश्व. गृ. ४. ५. ५)॥

**उप॑ सर्प मा॒तरं॒ भूमि॑मे॒तामु॑रु॒व्यच॑सं पृथि॒वीं सु॒शेवा॑म्।**
**ऊर्ण॑म्रदा युव॒तिर्दक्षि॑णावत ए॒षा त्वा॑ पातु॒ निर्ऋ॑तेरु॒पस्था॑त् ॥ १० ॥**

उप॑। स॒र्प। मा॒तर॑म्। भूमि॑म्। ए॒ताम्। उ॒रु॒ऽव्यच॑सम्। पृ॒थि॒वीम्। सु॒ऽशेवा॑म्।
ऊर्ण॑ऽम्रदाः। यु॒व॒तिः। दक्षि॑णाऽवते। ए॒षा। त्वा॒। पा॒तु॒। निः॒ऽऋ॑तेः। उ॒पऽस्था॑त् ॥ १० ॥

^v^मातरं मातृभूतां ^v^भूमिम्[1] अस्माभिर्भूमौ निधीयमानस्त्वम् ^v^उप ^v^सर्प उपगच्छ। अनुप्रविशेत्यर्थः। कीदृशीम्। ^v^उरुव्यचसं बहुव्याप्तिकां ^v^पृथिवीं विस्तीर्णां ^v^सुशेवां सुसुखाम्। सर्वेषां सुखदात्रीमित्यर्थः[2]। तामुपगच्छ। ^v^युवतिः यौवनान्विता स्त्रीरूपेयं भूमिः ^v^दक्षिणावते ऋत्विग्भ्यो देयत्वेन धनवते यजमानाय ^v^ऊर्णम्रदाः। ऊर्णेव ऊर्णास्तुक इव मृद्वी भवति। सुकुमारा भवति। न बाधयित्रीत्यर्थः। सा ^v^एषा पृथिवी ^v^निर्ऋतेः मृत्युदेवतायाः ^v^उपस्थात् समीपस्थानात् ^v^त्वा त्वामस्थिरूपं यजमानं ^v^पातु रक्षतु ॥ ॥ २७ ॥

'उच्छ्वञ्चस्व' इत्येतया पांसूनवकिरेत्। सूत्र्यते हि—'उत्तरया[3] पांसूनवकिरेत्' (आश्व. गृ. ४. ५. ६) इति[3] ॥

**उच्छ्व॑ञ्चस्व पृथिवि॒ मा नि बा॑धथाः सूपाय॒नास्मै॑ भव सूपवञ्च॒ना।**
**मा॒ता पु॒त्रं यथा॑ सि॒चाभ्ये॑नं भूम ऊर्णुहि ॥ ११ ॥**

उत्। श्व॒ञ्च॒स्व॒। पृ॒थि॒वि॒। मा। नि। बा॒ध॒थाः॒। सु॒ऽउ॒पा॒य॒ना। अ॒स्मै॒। भ॒व॒। सु॒ऽउ॒प॒व॒ञ्च॒ना।
मा॒ता। पु॒त्रम्। यथा॑। सि॒चा। अ॒भि। ए॒न॒म्। भू॒मे॒। ऊ॒र्णु॒हि॒ ॥ ११ ॥

हे ^v^पृथिवि ^v^उच्छ्वञ्चस्व। ऊर्ध्वंगतोच्छ्वासमेनं कुरु। अधस्तान्मा कृथा इत्यर्थः। किंच ^v^मा ^v^नि ^v^बाधथाः मा संपीडय। तथा ^v^अस्मै यजमानार्थं ^v^सूपायना शोभनोपगमना सूपचारिका भवेत्यर्थः। ^v^सूपवञ्चना। उपवञ्चनं प्रलम्भनम्। शोभनप्रलम्भा सुप्रतिष्ठा ^v^भव। अपि च ^v^माता ^v^पुत्रम् आत्मीयं बालकं ^v^सिचा वस्त्रान्तेन ^v^यथा आच्छादयति तद्वद्धे भूमि ^v^एनम् अस्थिरूपं यजमानं त्वम् ^v^अभि ^v^ऊर्णुहि आभिमुख्येनाच्छादय ॥

**उ॒च्छ्वञ्च॑माना पृथि॒वी सु ति॑ष्ठतु स॒हस्रं॒ मित॒ उप॒ हि श्रय॑न्ताम्।**
**ते गृ॒हासो॑ घृत॒श्चुतो॑ भवन्तु वि॒श्वाहा॑स्मै शर॒णाः स॒न्त्वत्र॑ ॥ १२ ॥**

---

१. ग–एतां भूमिं। २. त–सुखदायिनीमित्यर्थः। ३. ग-त-भ१.२.४.५.६–'उत्तरया...इति' नास्ति।

उत्ऽश्वञ्चमाना । पृथिवी । सु । तिष्ठतु । सहस्रम् । मितः । उप । हि । श्रयन्ताम् ।
ते । गृहासः । घृतऽश्चुतः । भवन्तु । विश्वाहा । अस्मै । शरणाः । सन्तु । अत्र ॥ १२ ॥

पांसुभिः प्रच्छाद्यैनां पठन्ति । ᵛउच्छ्वञ्चमाना अस्थिकुम्भमवष्टभ्योर्ध्वं गच्छन्ती ᵛपृथिवी ᵛसु ᵛतिष्ठतु प्रतिष्ठिता भवतु । किंच ᵛसहस्रं सहस्रसंख्याकाः ᵛमितः प्रक्षिप्ताः ॥ मिनोतेरौणादिके कर्मणि क्विपि तुगागमः । ततो जस् । यद्वा । सहस्रम् । तृतीयार्थे प्रथमा । मित इति निष्ठान्तं रूपम् । व्यत्ययेन बहुवचनस्यैकवचनम् । स्वरो वृषादित्वाद्द्रष्टव्यः ॥ सहस्रेण संमिता बहुसंख्याकाः । पार्थिवाः पांसवः ᵛउप ᵛश्रयन्ताम् । एनमुपसेवन्ताम् । संपरिवार्य तिष्ठन्त्वित्यर्थः । हिरवधारणे । तथा ᵛते पांसवोऽस्मै ᵛगृहासः गृहा भवन्तः ᵛघृतश्चुतः घृतस्योदकस्य सर्पिषो वा क्षारयितारः ᵛभवन्तु । ᵛअत्र अस्मिँल्लोके ᵛविश्वाहा सर्वेष्वहःसु सर्वदा ᵛअस्मै अस्य ᵛशरणाः ᵛसन्तु आश्रयभूता भवन्तु ॥

'उत्ते स्तभ्नामि' इति कपालेनास्थीन्यपिदध्यात् । सूत्रितं च—'उत्ते[1] स्तभ्नामीति कपालेनापिधाय' (आश्व. गृ. ४. ५. ८) इति[1] ॥

**उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषम् ।**
**एतां स्थूणां पितरो धारयन्तु तेऽत्रा यमः सादना ते मिनोतु ॥ १३ ॥**

उत् । ते । स्तभ्नामि । पृथिवीम् । त्वत् । परि । इमम् । लोगम् । निऽदधत् । मो इति । अहम् । रिषम् ।
एताम् । स्थूणाम् । पितरः । धारयन्तु । ते । अत्र । यमः । सदना । ते । मिनोतु ॥ १३ ॥

हे अस्थिकुम्भ ᵛत्वत्परि । परिशब्दयोगे पञ्चमी । तवोपरि ᵛते त्वदीयेन कपालेन ᵛपृथिवीम् ᵛउत् ᵛस्तभ्नामि प्रतिबध्नामि । यथा पृथिवी तवोपरि मा गच्छति तथापिदधामीत्यर्थः। ᵛइमं ᵛलोगं[2] कपाललक्षणं लोष्टं ᵛनिदधत् उपरि[3] स्थापयन् ᵛअहं ᵛमो ᵛरिषं मा हिंसिषम् । किंच ᵛएतां मया निहितां ᵛस्थूणां ᵛते त्वदीयां पृथिव्या[4] धारयित्रीं कपाललक्षणां ᵛपितरः ᵛधारयन्तु निश्चलां कुर्वन्तु । ततः ᵛते त्वदीये अस्मिन् स्थाने ᵛयमः पितृपतिः सदनानि स्थानानि ᵛमिनोतु परिच्छिनत्तु । करोत्वित्यर्थः ॥

**प्रतीचीने मामहनीष्वाः पर्णमिवा दधुः ।**
**प्रतीचीं जग्रभा वाचमश्वं रशनया यथा ॥ १४ ॥**

प्रतीचीने । माम् । अहनि । इष्वाः । पर्णम्ऽइव । आ । दधुः ।
प्रतीचीम् । जग्रभ । वाचम् । अश्वम् । रशनया । यथा ॥ १४ ॥* ॥ २८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टके षष्ठोऽध्यायः ॥

---

१. त-भ२.४–'उत्ते...इति' नास्ति । २. त-भ६–लोकं । ३. त१.२.६–उपस्थे उपरि । ४. त-भ२. ४–पृथिव्यां । * त७-मु–अनया प्रजापतिः प्रार्थ्यते । हे प्रजापते प्रतीचीने प्रतिपूज्ये अहनि तदुपलक्षिते संवत्सरात्मके मां संकुसुकमृषिं आ दधुः निहितवंतः सर्वे देवाः । किमिव । इष्वाः बाणस्य पर्णमिव पक्षमिव । पक्षं यथा बाणस्य मूले स्थापयंति तद्वज्जगन्मूले त्वयि मां स्थापितवंतः । अतो मदीयां प्रतीचीं प्रतिपूज्यां (मु–पूज्यां) वाचं स्तुतिरूपां जग्रभ गृहाण । कथमित्युच्यते । अश्वं आशुगामिनं हयं रशनया रज्ज्वा यथा गृह्णंति तद्वत्कर्णाभ्यां मत्कृतां स्तुतिं गृहाणेत्यर्थः ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अष्टके सप्तमे षष्ठं व्याख्याय श्रुतिकोविदः।
सायणार्यस्ततोऽध्यायं सप्तमं व्याचिकीर्षति ॥

अथ द्वादशानुवाकात्मकस्य दशममण्डलस्य द्वितीयेऽनुवाके त्रयोदश सूक्तानि। तत्र 'नि वर्तध्वम्' इत्यष्टर्चं तृतीयं सूक्तम्। अस्य यमपुत्रो मथिताख्य ऋषिर्वरुणपुत्रो भृगुर्वाथवा भार्गवश्च्यवनः। षष्ठी गायत्री शिष्टा अनुष्टुभः। इदमब्देवताकं गोदेवताकं वा। 'अग्नीषोमा पुनर्वसू' इत्यर्धर्चोऽग्नीषोमदेवताकः। तथा चानुक्रान्तं—'नि वर्तध्वमष्टौ मथितो भृगुर्वा वारुणिर्भार्गवश्च्यवनो वापं गव्यं वानुष्टुभमग्नीषोमीयो द्वितीयोऽर्धर्चः षष्ठी गायत्री' इति। गतो विनियोगः ॥

नि व॑र्तध्वं॒ मानु॑ गाता॒स्मान्त्सि॑षक्त रेवतीः।
अग्नी॑षोमा पुनर्वसू अ॒स्मे धा॑रयतं र॒यिम् ॥ १ ॥

नि। व॒र्त॒ध्व॒म्। मा। अनु॑। गा॒त॒। अ॒स्मान्। सि॒स॒क्त॒। रे॒व॒तीः।
अग्नी॑षोमा। पु॒न॒र्व॒सू॒ इति॒ पुनः॑ऽवसू। अ॒स्मे इति॑। धा॒र॒य॒त॒म्। र॒यिम् ॥ १ ॥

हे गावो हे आपो वा यूयं ᵛनि ᵛवर्तध्वम् अस्मान् प्रत्यागच्छत। ᵛमानु ᵛगात अस्मद्व्यतिरिक्तं यजमानं मा गच्छत। आगत्य च हे ᵛरेवतीः रेवत्यो धनवत्यो यूयम् ᵛअस्मान् ᵛसिषक्त सेचयत। अवगाहनगोदोहनस्नानपानादिद्वारेण सेवध्वमित्यर्थः। हे ᵛपुनर्वसू पुनःपुनर्वस्तारौ स्तोतॄणां यष्टॄणामाच्छादयितारौ हे ᵛअग्नीषोमा अग्नीषोमौ एतन्नामकौ देवौ युवाम् ᵛअस्मे अस्मासु ᵛरयिं व्रीह्यादिलक्षणं धनं ᵛधारयतं स्थापयतम् ॥

पुन॑रेना॒ नि व॑र्तय॒ पुन॑रेना॒ न्या कु॑रु।
इन्द्र॑ एणा॒ नि य॑च्छत्व॒ग्निरे॑ना उ॒पाज॑तु ॥ २ ॥

पुन॑रिति। ए॒नाः॒। नि। व॒र्त॒य॒। पुनः॑। ए॒नाः॒। नि। आ। कु॒रु॒।
इन्द्रः॑। ए॒नाः॒। नि। य॒च्छ॒तु॒। अ॒ग्निः। ए॒नाः॒। उ॒प॒ऽआज॑तु ॥ २ ॥

अत्र मन्त्रद्रष्टा स्वात्मानं प्रति ब्रूते। हे मदीयात्मन् त्वम् ᵛएनाः एताः अन्यतोऽभिगन्त्रीर्गा अपो वा ᵛपुनः ᵛनि ᵛवर्तय पुनःपुनर्मदभिमुखीकुरु। तदनन्तरम् ᵛएनाः एताः ᵛपुनः भूयो भूयो ᵛन्या ᵛकुरु नियता आत्मायत्ताः कुरु। किंच ᵛइन्द्रः अपि तव सहायभूतः सन् ᵛएनाः एताः ᵛनि ᵛयच्छतु त्वदायत्ताः करोतु। ᵛअग्निः च ᵛएनाः एताः गा अपो वा ᵛउपाजतु उपगमयतु उपक्षिपतु वा। उपभोग्याः करोत्वित्यर्थः ॥

पुन॑रेता॒ नि व॑र्तन्ताम॒स्मिन् पु॑ष्यन्तु॒ गोप॑तौ।
इ॒हैवाग्ने॒ नि धा॑रये॒ह ति॑ष्ठतु॒ या र॒यिः ॥ ३ ॥

पुनः । एताः । नि । वर्तन्ताम् । अस्मिन् । पुष्यन्तु । गोऽपतौ ।
इह । एव । अग्ने । नि । धारय । इह । तिष्ठतु । या । रयिः ॥ ३ ॥

एना एता ईदृश्यो गाव आपो वा ᐯपुनः ᐯनि ᐯवर्तन्तां भूयो भूयो मां प्रत्यागच्छन्तु। आगत्य च ᐯगोपतौ सास्नादिमतीनां धेनूनां वृष्टिलक्षणानामपां पालके[1] ᐯअस्मिन् ईदृशे मयि ᐯपुष्यन्तु आत्मायत्तत्वेन स्थित्वा पुष्टा भवन्तु। पुष्टाः सतीस्ता हे ᐯअग्ने त्वम् ᐯइहैव अस्मिन्नेव मयि ᐯनि ᐯधारय नियमेन स्थापय। ᐯया ᐯरयिः यदपि व्रीह्यादिकं धनमस्ति तदपि धनं गोसहितम् ᐯइह अस्मिन्नेव गोपतौ मयि ᐯतिष्ठतु निवसतु ॥

यन्नियानं न्ययनं संज्ञानं यत्परायणम् ।
आवर्तनं निवर्तनं यो गोपा अपि तं हुवे ॥ ४ ॥

यत् । निऽयानम् । निऽअयनम् । सम्ऽज्ञानम् । यत् । पराऽअयनम् ।
आऽवर्तनम् । निऽवर्तनम् । यः । गोपाः । अपि । तम् । हुवे ॥ ४ ॥

ᐯनियानम्। अधिकरणे ल्युट्। नियमेन यान्त्यागच्छन्ति गावोऽत्रेति नियानं गोष्ठाख्यं स्थानम्। ᐯयत् अस्तीति शेषः। यच्छब्दयोगात्तच्छब्दोऽध्याहर्तव्यः। हुव इति क्रियापदं सर्वत्रानुषज्यते। तत्स्थानं ᐯहुवे आह्वयामि। आह्वानमभिमुखीकरणं तेन चात्र तत्पूर्विका प्रार्थना लक्ष्यते। गोसहितं गोष्ठं प्रार्थय इत्यर्थः। ᐯन्ययनम्। भावे ल्युट्। नियमेन गृहं प्रति प्राप्तिलक्षणं गमनं यदस्ति तदपि प्रार्थये[2]। ᐯनिवर्तनं वने चरित्वा गृहं प्रति यदागमनमस्ति तदपि प्रार्थये। ᐯयः ᐯअपि ᐯगोपाः गवां पालकोऽस्ति ᐯतम् अपि हुवे प्रार्थये। सर्वगुणोपेता गाः प्रार्थय इत्यर्थः ॥

य उदानड् व्ययनं य उदानट् परायणम् ।
आवर्तनं निवर्तनमपि गोपा नि वर्तताम् ॥ ५ ॥

यः । उत्ऽआनट् । विऽअयनम् । यः । उत्ऽआनट् । पराऽअयनम् ।
आऽवर्तनम् । निऽवर्तनम् । अपि । गोपाः । नि । वर्तताम् ॥ ५ ॥

ᐯयः ᐯगोपाः गोपालः ᐯव्ययनं नष्टानां गवामन्वेषणार्थं विविधं गमनम् ᐯउदानट् व्याप्नोति अनुभवति। ᐯयः ᐯपरायणं परागमनम् ᐯउदानट् व्याप्नोति। वनं प्रति गवां चरणाय गमनमित्यर्थः। यश्च ᐯआवर्तनं वनचारिणीभिर्गोभिः सह प्रवर्तनमनुभवति। यः ᐯअपि गोपाः ᐯनिवर्तनं गोभिः सह वनाद्गृहं प्रति निर्गमनमनुभवति। सोऽपि गोपालः ᐯनि ᐯवर्ततां गोभिः सह वनाद्गृहं प्रति क्षेमेणागच्छतु ॥

आ निवर्त नि वर्तय पुनर्न इन्द्र गा देहि । जीवाभिर्भुनजामहै ॥ ६ ॥

आ । निऽवर्त । नि । वर्तय । पुनः । नः । इन्द्र । गाः । देहि । जीवाभिः । भुनजामहै ॥ ६ ॥

१. त१.२.३.७-भ-मु- च पालके। २. ग-प्रार्थये। यत्र संगच्छंते इतरेतरं जानंतस्तत् संज्ञानं। अथ ततश्चरणार्थं पराचीना यत्र यंति तत्परायणं। चरित्वाधा आवर्तते तदावर्तनं; मु-प्रार्थये। संज्ञानं गोभिः सह ऐकमत्यं यदस्ति तदपि प्रार्थये। परायणं परागमनं वनं प्रति गवां चरणाय गमनं यदस्ति तदपि प्रार्थये। आवर्तनं वनचारिणीभिर्गोभिः सह प्रवर्तनं यदस्ति तदपि प्रार्थये।

हे ᐟइन्द्र त्वम् ᐟआ ᐟनिवर्त आनिवर्तस्व अस्मदभिमुखो भव। ततोऽन्यतो गच्छन्तीर्गाः ᐟनि ᐟवर्तय अस्मदभिमुखीः कुरु। एवं कृत्वा च हे इन्द्र त्वं ᐟपुनः पश्चात् ᐟनः अस्मभ्यं ᐟगाः ᐟदेहि प्रयच्छ। त्वया दत्ताभिः ᐟजीवाभिः चिरं जीवन्तीभिः सर्वस्य जीवयित्रीभिर्वा गोभिः ᐟभुनजामहै वयं भुञ्जीमहि। यद्वा। भुजिरत्रान्तर्भावितण्यर्थः। देवपितॄन्[1] संभोजयेमहि ॥

परि॑ वो वि॒श्वतो॑ दध ऊ॒र्जा घृ॒तेन॒ पय॑सा।
ये दे॒वाः के च॑ य॒ज्ञिया॒स्ते र॒य्या सं सृ॑जन्तु नः ॥ ७ ॥

परि॑। व॒ः। वि॒श्वतः॑। द॒धे॒। ऊ॒र्जा। घृ॒तेन॑। पय॑सा।
ये। दे॒वाः। के। च॒। य॒ज्ञियाः॑। ते। र॒य्या। सम्। सृ॒जन्तु॒। न॒ः ॥ ७ ॥

हे देवाः ᐟविश्वतः सर्वतः स्थितान् ᐟवः युष्मान् ᐟऊर्जा गोसंबन्धिना दधिलक्षणेनान्नेन ᐟघृतेन आज्येन[2] ᐟपयसा क्षीरेण च ᐟपरि ᐟदधे संधारयामि। युष्मभ्यं हविर्द्वारेण प्रयच्छामि। न केवलमात्मानं पुष्णामीत्यर्थः। एतज्ज्ञात्वा ᐟये ᐟके ᐟच ᐟदेवाः ᐟयज्ञियाः यज्ञार्हाः सन्ति ᐟते देवाः ᐟनः अस्मान् ᐟरय्या गोलक्षणेन धनेन ᐟसं ᐟसृजन्तु संयोजयन्तु ॥

आ निव॑र्तन वर्तय॒ नि निव॑र्तन वर्तय।
भूम्या॒श्चत॑स्रः प्र॒दिश॒स्ताभ्य॑ एना॒ नि व॑र्तय ॥ ८ ॥

आ। नि॒ऽव॒र्त॒न॒। व॒र्त॒य॒। नि। नि॒ऽव॒र्त॒न॒। व॒र्त॒य॒।
भूम्याः॑। चत॑स्रः। प्र॒ऽदिशः॑। ताभ्यः॑। ए॒नाः॒। नि। व॒र्त॒य॒ ॥ ८ ॥

मन्त्रद्रष्टर्षिः स्वात्मानं गाश्च संबोध्याह। हे मदीयात्मन् त्वं गाः ᐟआ ᐟवर्तय। आकारोऽप्यनेनापि संबध्यते। मदभिमुखीः[3] कुरु। स्तुत्या यागेन च ताः प्रसाद्योपनमयेत्यर्थः। हे गावः यूयमपि प्रसाद्यमानाः ᐟआ ᐟनिवर्तन आनिवर्तध्वम्। आभिमुख्येनागच्छत। पुनरप्याह। हे मदीयात्मन् त्वं ᐟनि ᐟवर्तय गोसंचरणस्थानादपगच्छन्तीर्गा इतोऽभिगन्त्रीः कुरु। यूयमपि हे गावो निवर्त्यमानाः सत्यः ᐟनिवर्तन निवर्तध्वम्। इदानीं स्वात्मा गावश्चापि प्रति ब्रुवते। हे ऋषे अहं कुतो गा निवर्तयामीति कुतो वयं निवर्तयामह इत्यात्मना गोभिश्च पृष्टः सन्नाह। ᐟभूम्याः पृथिव्याः ᐟचतस्रः ᐟप्रदिशः चतुःसंख्यायुक्ताः प्रकृष्टा या दिशः सन्ति ᐟताभ्यः दिग्भ्यः ᐟएनाः गाः ᐟनि ᐟवर्तय हे आत्मन् मदभिमुखीः कुरु। हे गावो यूयमपि ताभ्यो दिग्भ्यो निवर्तध्वमिति सामर्थ्याल्लब्धम्। यद्वा। अब्दैवतपक्षेऽपि सूक्तार्थो यथा घटते तथा योजना कर्तव्या ॥ ॥ १ ॥

'भद्रम्' इति दशर्चं चतुर्थं सूक्तम्। आद्यैकपदा दशाक्षरा विराट्। 'अग्निमीळे भुजाम्' इत्येषानुष्टुप्। नवमी विराट् दशमी त्रिष्टुप् मध्ये षट् गायत्र्यः। इदमादीनां सप्तसूक्तानामिन्द्रपुत्रः प्रजापतिपुत्रो वा विमद ऋषिर्वसुक्रपुत्रो वसुकृदाख्यो वा। इदमुत्तरं चाग्नेयम्। तथा चानुक्रान्तं— 'सप्तोत्तराण्यैन्द्रो विमदः प्राजापत्यो वा वासुक्रो वसुकृद्वा भद्रं दशाग्नेयं तु गायत्रमाद्यैकपदा पाद एव वा शान्त्यर्थः परानुष्टुबन्त्ये विराटत्रिष्टुभौ' इति। गतो विनियोगः ॥

---

१. ग-त३-भ५.६–देवपितृसंधान्। २. त-भ-मु–आज्येन च। ३. त१.२.६.७-भ२.६–मदभिमुखी; त४.५-मु–मदभिमुखीं; ग-त३-भ१.४.७–मदभिमुखं।

भद्रं नो अपि वातय मनः ॥ १ ॥

भद्रं नो अपि वातय मनः ॥ १ ॥

हे अग्ने त्वं ᵛनः अस्माकं ᵛमनः ᵛभद्रं शुभयुक्तम् ᵛअपि ᵛवातय। अपिरत्र धात्वर्थानुवादी। आगमय। त्वत्संबन्धिस्तोत्रकरणे प्रेरयेत्यर्थः ॥

अग्निमीळे भुजां यविष्ठं शासा मित्रं दुर्धरीतुम्।
यस्य धर्मन्त्स्व१रेनीः सपर्यन्ति मातुरूधः ॥ २ ॥

अग्निम्। ईळे। भुजाम्। यविष्ठम्। शासा। मित्रम्। दुःऽधरीतुम्।
यस्य। धर्मन्। स्वः। एनीः। सपर्यन्ति। मातुः। ऊधः ॥ २ ॥

ᵛभुजां हविर्भुजां देवानां मध्ये ᵛयविष्ठम् अहन्यहन्यग्निहोत्रादिकर्मार्थं जायमानत्वादतिशयेन युवानं ᵛशासा अनुशासनेन ᵛमित्रम्। यस्मादिदं कर्तव्यमिदं न[1] कर्तव्यमिति[1] सर्वमनुशास्ति तस्मात्सर्वस्य मित्रभूतमित्यर्थः। ᵛदुर्धरीतुं दुर्धरणीयं संग्रामे शत्रुभिर्दुर्निवारणीयमेवंभूतम् ᵛअग्निम् ᵛईळे स्तौमि। अपि च ᵛयस्य अग्नेः ᵛधर्मन् धर्मण्यग्निहोत्रादिके कर्मणि ᵛस्वः द्युलोकमादित्यं सर्वं देवजातं वा ᵛएनीः एन्यः प्रतिगन्त्र्य आहुतयः स्तुतयश्च ᵛसपर्यन्ति परिचरन्ति सेवन्ते। यद्वा। स्वः सपर्यन्तीत्यनयोः सामानाधिकरण्यम्। अत्र स्वरित्ययं सर्वशब्दो निपातः। स्वः सर्वे देवाः एनीरात्मनः प्रतिगन्त्रीराहुतीः स्तुतीश्च सपर्यन्ति सेवन्ते। उपजीवन्तीत्यर्थः। तत्र दृष्टान्तः। लुप्तोपममेतत्। ᵛमातुः गोः ᵛऊधः क्षीरोपसंहारस्थानं प्रति यथा वत्सा उपजीवन्ति तद्वत्। तमग्निमीळ इति पूर्वेण संबन्धः ॥

यमासा कृपनीळं भासाकेतुं वर्धयन्ति। भ्राजते श्रेणिदन् ॥ ३ ॥

यम्। आसा। कृपऽनीळम्। भासाऽकेतुम्। वर्धयन्ति। भ्राजते। श्रेणिऽदन् ॥ ३ ॥

स्तोतारो यष्टारश्च ᵛआसा स्तुतिहविर्लक्षणेनोपासनेन ᵛयम् अग्निं ᵛवर्धयन्ति। कीदृशम्। ᵛकृपनीळं कर्मस्थानम्। कर्माधारमित्यर्थः। ᵛभासाकेतुं ज्वालालक्षणज्ञापकं दीप्तेः कर्तारं वा। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। सोऽग्निः ᵛश्रेणिदन् स्तोतृभ्यो यष्टृभ्योऽभीष्टफलसमूहप्रदः शत्रुभ्यो ज्वालापङ्क्तिप्रदो वा एवंभूतः सन् ᵛभ्राजते भासते ॥

अर्यो विशां गातुरेति प्र यदानड् दिवो अन्तान्। कविरभ्रं दीद्यानः ॥ ४ ॥

अर्यः। विशाम्। गातुः। एति। प्र। यत्। आनट्। दिवः। अन्तान्।
कविः। अभ्रम्। दीद्यानः ॥ ४ ॥

ᵛविशां यजमानमनुष्याणाम् ᵛअर्यः गन्तव्यः ᵛगातुः गमनशीलोऽग्निः ᵛदीद्यानः दीप्यमानः ᵛयत् यदा ᵛएति ऊर्ध्वं गच्छति तदा ᵛदिवः द्युलोकस्य ᵛअन्तान् पर्यन्तान् ᵛकविः मेधावी सोऽग्निः ᵛप्र ᵛआनट् प्रकर्षेण व्याप्नोति। ᵛअभ्रं मेघोपलक्षितमन्तरिक्षं च व्याप्नोति ॥

---

१. ग–अकर्तव्यमिति; त–कर्तव्यमिति।

जुषद्धव्या मानुषस्योर्ध्वस्तस्थावृभ्वा यज्ञे । मिन्वन्त्सद्म पुर एति ॥ ५ ॥

जुषत् । हव्या । मानुषस्य । ऊर्ध्वः । तस्थौ । ऋभ्वा । यज्ञे । मिन्वन् । सद्म । पुरः । एति ॥५॥

Vमानुषस्य यजमानस्य Vयज्ञे यजनीये यागे Vहव्या हव्यानि हवींषि Vजुषत् सेवमानोऽग्निः[1] Vऋभ्वा उरुभूतो बहुज्वालोपेतः Vऊर्ध्वस्तस्थौ उत्तिष्ठति । ऊर्ध्वं ज्वलतीत्यर्थः । अपि चायमग्निः प्राग्वंशादारभ्य Vसद्म सदनं सौमिकीं वेदिं Vमिन्वन् परिच्छिन्दन् Vपुरः पुरस्तादुत्तरवेदिशालामुखीयात् प्रणीयमानः सन् Vएति गच्छति ॥

स हि क्षेमो हविर्यज्ञः श्रुष्टीदस्य गातुरेति । अग्निं देवा वाशीमन्तम् ॥ ६ ॥

सः । हि । क्षेमः । हविः । यज्ञः । श्रुष्टी । इत् । अस्य । गातुः । एति ।

अग्निम् । देवाः । वाशीऽमन्तम् ॥ ६ ॥

य उक्तगुणविशिष्टोऽग्निः । Vहि इत्येतदवधारणे । Vसः एवाग्निः Vक्षेमः कुशलहेतुः । सर्वस्य परिपालनहेतुरित्यर्थः । Vहविः पुरोडाशादिकं च स एव हविष्यस्तन्निमित्तत्वात् । Vयज्ञः यागोऽपि स एव तस्यापि तद्धेतुत्वात् । किंच Vश्रुष्टीन् क्षिप्रमेव Vअस्य अग्नेः Vगातुः गमनशीलोऽधिष्ठात्रात्मा Vएति देवानामाह्वानार्थं गच्छति । गत्वा च प्रत्यागच्छन्तं Vवाशीमन्तं स्तुतिलक्षणया वाचोपेतम् Vअग्निं प्रति Vदेवाः अपि गच्छन्तीति[2] शेषः ॥ ॥ २ ॥

यज्ञासाहं दुव इषेऽग्निं पूर्वस्य शेवस्य । अद्रेः सूनुमायुमाहुः ॥ ७ ॥

यज्ञऽसहम् । दुवः । इषे । अग्निम् । पूर्वस्य । शेवस्य । अद्रेः । सूनुम् । आयुम् । आहुः ॥७॥

अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । अपरार्धर्चः पूर्वं व्याख्येयः । Vआयुं देवानामाह्वानार्थं दूत्येन गन्तारं यम् Vअग्निम् Vअद्रेः Vसूनुम् अश्मनः पुत्रम् Vआहुः 'त्वमद्भ्यस्त्वमश्मनस्परि' (ऋ. सं. २. १. १) इत्येवमादयो मन्त्रा वदन्ति । Vयज्ञसहं यागस्य वोढारम् । धारयितारमित्यर्थः । तमग्निमभिलक्ष्य Vदुवः परिचरणम् Vइषे इच्छामि । किमर्थम् । Vपूर्वस्य । अत्र पूर्वशब्द उत्कृष्टवाची । उत्कृष्टस्य Vशेवस्य स्वर्गापवर्गलक्षणसुखस्य प्राप्त्यर्थमिति शेषः ॥

नरो ये के चास्मदा विश्वेत्ते वाम आ स्युः । अग्निं हविषा वर्धन्तः ॥ ८ ॥

नरः । ये । के । च । अस्मत् । आ । विश्वा । इत् । ते । वामे । आ । स्युरिति स्युः ।

अग्निम् । हविषा । वर्धन्तः ॥ ८ ॥

Vनरः नेतारः Vये Vके Vच ये केचित् पुत्रपौत्रादयः Vअस्मत् अस्माकं सन्ति । आकारः पूरकः । Vते पुत्रपौत्रादयः Vवामे वननीये संभजनीये Vविश्वेत् विश्वस्मिन्नेव पश्वादिधने Vआ Vस्युः आ समन्ताद्भवेयुः । उपविशेयुरित्याशास्महे । किं कुर्वन्तः । Vअग्निम् अङ्गनादिगुणविशिष्टं देवं Vहविषा पुरोडाशादिकेन Vवर्धन्तः[3] वर्धयन्तः ॥

कृष्णः श्वेतोऽरुषो यामो अस्य ब्रध्न ऋज्र उत शोणो यशस्वान् ।
हिरण्यरूपं जनिता जजान ॥ ९ ॥

---

१. त–पवमानोग्निः । २. ग-त३-भ५.६–आगच्छंतीति । ३. त१.२.३.४.५.६-भ–'वर्धन्तः' नास्ति ।

कृष्णः । श्वेतः । अरुषः । यामः । अस्य । ब्रध्नः । ऋज्रः । उत । शोणः । यशस्वान् ।
हिरण्यऽरूपम् । जनिता । जजान ॥ ९ ॥

अत्र यच्छब्दमध्याहृत्य योज्यम् । ᵛयामः । याति गच्छत्यस्मिन्निति यामो रथः प्रजापतिना निर्मितः । कीदृशः । ᵛकृष्णः असितवर्णः ᵛश्वेतः सितवर्णः ᵛअरुषः आरोचमानः ᵛब्रध्नः महान् ᵛऋज्रः ऋजुगामी ᵛउत अपि च ᵛशोणः रक्तवर्णः ᵛयशस्वान् कीर्तिमान् । यद्वा । यश इति धननाम । हविर्लक्षणेन धनेन युक्तः । ᵛहिरण्यरूपं सुवर्णसदृशं तं रथम् ᵛअस्य अग्नेरर्थाय ᵛजनिता सर्वस्य जगतो जनयिता प्रजापतिः ᵛजजान जनयामास । अस्मै दत्तवानित्यर्थः । कथमेकस्यैव रथस्य कृष्णादिनानारूपत्वं संभवतीति चेत् अग्नेः सामर्थ्यातिशयेन संभवतीत्यर्थः । यद्वा । हिरण्यरूपमिति रथवाचिना शब्देन सह सामानाधिकरण्यात् कृष्णादिशब्दा द्वितीयान्तत्वेन योज्याः । अत्र सर्वगुणोक्तरथवत्तयाग्निः स्तूयत इत्यर्थः ॥

एवा ते अग्ने विमदो मनीषामूर्जो नपादमृतेभिः सजोषाः ।
गिर आ वक्षत्सुमतीरियान इषमूर्जं सुक्षितिं विश्वमाभाः ॥ १० ॥

एव । ते । अग्ने । विऽमदः । मनीषाम् । ऊर्जः । नपात् । अमृतेभिः । सऽजोषाः ।
गिरः । आ । वक्षत् । सुऽमतीः । इयानः ।
इषम् । ऊर्जम् । सुऽक्षितिम् । विश्वम् । आ । अभारित्यभाः ॥ १० ॥

एवमुक्तप्रकारेण हे ᵛऊर्जो ᵛनपात् ओषधिवनस्पतिपितृभूतस्यान्नस्य पौत्र हे ᵛअग्ने ᵛअमृतेभिः अमृतैर्हविर्लक्षणैरन्नैः ᵛसजोषाः संगतः ᵛविमदः नामर्षिः ᵛमनीषां प्रकृष्टां बुद्धिं कामयमानः सन् ᵛते तुभ्यं ᵛगिरः स्तुतिलक्षणा वाचः ᵛआ ᵛवक्षत् आभिमुख्येनोक्तवान् । वक्तेश्छन्दसि लेटि रूपम् । ततस्त्वमेतज्ज्ञात्वा ᵛसुमतीरियानः शोभनलक्षणा बुद्धीः[1] संगमयन्[1] ᵛइषम् अन्नम् ᵛऊर्जं क्षीरादिकं रसं च ᵛसुक्षितिं शोभननिवासम् । यद्वा । क्षितयो मनुष्याः । शोभनपुत्रपौत्रादिकं यत्किंचित् देयमस्ति तत् ᵛविश्वं धनं च ᵛआभाः तस्मै विमदायाहर देहि ॥ ॥ ३ ॥

'अग्निं न' इत्यष्टर्चं पञ्चमं सूक्तमास्तारपङ्क्तिच्छन्दस्कम् । आद्यौ गायत्रौ पादौ ततो द्वौ जागतौ सास्तारपङ्क्तिः । ऋषिदेवते पूर्ववत् । तथा चानुक्रान्तम्—'अग्निं नाष्टावास्तारपाङ्क्तम्' इति । पृष्ठ्यस्य चतुर्थेऽहनि 'अग्निं न स्ववृक्तिभिरित्याज्यम्' (आश्व. श्रौ. ७. ११) इति । महाव्रत आग्निमारुते यावतीष्वृक्षिवळान्दं साम स्तुवीरन् तदानीमादितस्तावत्य ऋचोऽनुरूपार्थाः । सूत्रितं च—'यदीळान्दं भूयसीषु चेत् स्तुवीरन्नग्निं न स्ववृक्तिभिरिति तावतीरनुरूपः' (ऐ. आ. ५. ३. २) इति ॥

आग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
यज्ञाय स्तीर्णबर्हिषे वि वो मदे शीरं पावकशोचिषं विवक्षसे ॥ १ ॥

आ । अग्निम् । न । स्ववृक्तिऽभिः । होतारम् । त्वा । वृणीमहे ।
यज्ञाय । स्तीर्णऽबर्हिषे । वि । वः । मदे । शीरम् । पावकऽशोचिषम् । विवक्षसे ॥ १ ॥

---

१. त१.२–बुद्धीः स्तागमयन्; त३–बुद्धीस्तंगमन; त५–बुद्धीः स्तगमयन्; त७–बुद्धीः तागमयन्; भ१.२.४.७–बुद्धीस्ताः गमयन्; भ६–बुद्धिः अगमयत् ।

हे अग्ने ᵛवः[1] तव स्वभूते ᵛविमदे एतदाख्य ऋषौ मयीयं स्तुतिः प्रवृत्तास्ति। ᵛन इति संप्रत्यर्थे। अतो वयमिदानीं ᵛस्ववृक्तिभिः स्वयंकृताभिर्दोषवर्जिताभिः स्तुतिभिः ᵛहोतारं देवानामाह्वातारं होमनिष्पादकं वा ᵛअग्निं ᵛत्वा त्वाम् ᵛआ ᵛवृणीमहे आभिमुख्येन संभजामहे। किमर्थम्। ᵛस्तीर्णबर्हिषे ᵛयज्ञाय। तादर्थ्ये चतुर्थी। यज्ञार्थम्। कीदृशम्। ᵛशीरम् ओषध्यादिषु सर्वत्रानुशायिनं ᵛपावकशोचिषं शोधकदीप्तिम्। ᵛविवक्षसे[2]। गतमामैतत्[3]। हे अग्ने त्वमपि महान् भवसि। यद्वा। विमदे यज्ञस्य संबन्धिनः सोमस्य पानजन्यनिमित्तमदार्थं त्वामावृणीमह इति योज्यम्॥

**त्वामु ते स्वाभुवः शुम्भन्त्यश्वराधसः।**
**वेति त्वामुपसेचनी वि वो मद ऋजीतिरग्न आहुतिर्विवक्षसे॥ २॥**

त्वाम्। ऊँ इति। ते। सुऽआभुवः। शुम्भन्ति। अश्वऽराधसः।
वेति। त्वाम्। उपऽसेचनी। वि। वः। मदे। ऋजीतिः। अग्ने। आऽहुतिः। विवक्षसे॥२॥

ᵛस्वाभुवः स्वप्रकाशेन दीप्यमानाः ᵛअश्वराधसः व्याप्तधनाः[4] ᵛते यजमानाः हे अग्ने ᵛत्वामु त्वामेव ᵛशुम्भन्ति शोभयन्ति। यज्ञे हविर्भिर्दीपयन्तीत्यर्थः। किंच ᵛउपसेचनी तवोपरि क्षरणशीला ᵛऋजीतिः ऋजुगामिनी हूयमाना ᵛआहुतिः हे ᵛअग्ने ᵛत्वां ᵛवेति गच्छति। किमर्थम्। ᵛवः तव ᵛमदे मदनिमित्ते। तृप्त्यर्थमित्यर्थः। किंच त्वमपि ᵛविवक्षसे महान् भवसि॥

**त्वे धर्माण आसते जुहूभिः सिञ्चतीरिव।**
**कृष्णा रूपाण्यर्जुना वि वो मदे विश्वा अधि श्रियो धिषे विवक्षसे॥ ३॥**

त्वे इति। धर्माणः। आसते। जुहूभिः। सिञ्चतीःऽइव।
कृष्णा। रूपाणि। अर्जुना। वि। वः। मदे। विश्वाः। अधि। श्रियः। धिषे। विवक्षसे॥३॥

ᵛधर्माणः यज्ञस्य धारयितार ऋत्विजः ᵛजुहूभिः संपूर्णाहुतिभिर्होमपात्रैः ᵛत्वे त्वामेव ᵛआसते उपासते सेवन्ते। तत्र दृष्टान्तः। ᵛसिञ्चतीरिव। वृष्टिलक्षणाः पृथिवीं सिञ्चन्त्य[5] आपोऽग्निं[6] यथा स्वपितृत्वेन सेवन्ते तद्वत्। 'अग्नेरापः' (तै. आ. ८.१) इति श्रुतेस्तस्यापां पितृत्वम्। यद्वा। जुहूभिः सिञ्चतीरिव सिच्यमाना आहुतय इव धर्माणस्त्वया धार्यमाणा रश्मयस्त्वे त्वय्यासते निवसन्ति। हे अग्ने त्वं ᵛकृष्णा कृष्णवर्णानि ᵛअर्जुना अर्जुनानि श्वेतवर्णानि ज्वालान्तर्गतरूपाणि च ᵛविश्वाः सर्वाः ᵛश्रियः शोभाः ᵛअधि ᵛधिषे अधिकं यथा भवति तथा धारयसि। किमर्थम्। ᵛवः युष्माकं सर्वेषां देवानां ᵛविमदे विविधसोमपानजन्यमदार्थम्। यत एवमतः ᵛविवक्षसे त्वं महान् भवसि॥

**यमग्ने मन्यसे रयिं सहसावन्नमर्त्य।**
**तमा नो वाजसातये वि वो मदे यज्ञेषु चित्रमा भरा विवक्षसे॥ ४॥**

यम्। अग्ने। मन्यसे। रयिम्। सहसाऽवन्। अमर्त्य।
तम्। आ। नः। वाजऽसातये। वि। वः। मदे। यज्ञेषु। चित्रम्। आ। भर। विवक्षसे॥ ४॥

१. त-'वः' नास्ति। २. त१.२.४.५-विवक्षते। ३. त-अहन्नामैतत्। ४. त-भ-दीप्तधनाः। ५. त-सिंचंति। ६. त३.४.५-भ१.२-आपः अग्नीन्; त१.२.६.७-आप वृष्ट्युदकं पृथिवीं अग्नीन्; भ७-आप इव अग्नीन्।

हे ᵛअमर्त्य अमरणधर्मन् ᵛसहसावन् बलवन् एवंभूत हे ᵛअग्ने त्वं ᵛयं ᵛरयिं ᵛमन्यसे सर्वेषु धनेषु यद्धनं वरिष्ठमिति जानासि ᵛचित्रं चायनीयं ᵛतं रयिं ᵛनः अस्माकं ᵛवाजसातये अन्नलाभाय ᵛआ ᵛभर आहर प्रयच्छ। किमर्थम्। ᵛवः युष्माकं सर्वेषां देवानां ᵛयज्ञेषु ᵛविमदे विविधसोमादिहविर्जन्यमदनिमित्ते। यागेषु नानाप्रकारैर्हविर्भिर्युष्माकं तर्पणायेत्यर्थः। त्वमपि ᵛविवक्षसे महान् भवसि॥

अ॒ग्निर्जा॒तो अथ॑र्वणा वि॒दद्विश्वा॑नि॒ काव्या॑।
भुव॑द्दू॒तो वि॒वस्व॑तो॒ वि वो॒ मदे॑ प्रि॒यो य॒मस्य॒ काम्यो॒ विव॑क्षसे ॥ ५ ॥

अ॒ग्निः। जा॒तः। अथ॑र्वणा। वि॒दत्। विश्वा॑नि। काव्या॑।
भुव॑त्। दू॒तः। वि॒वस्व॑तः। वि। वः॒। मदे॑। प्रि॒यः। य॒मस्य॑। काम्यः॑। विव॑क्षसे ॥ ५ ॥

ᵛअथर्वणा एतन्नाम्नर्षिणा ᵛजातः जनितः ᵛअग्निः। कथमवगम्यते। 'त्वामग्ने पुष्करादध्यथर्वा निरमन्थत' (ऋ. सं. ६. १६. १३) इति मन्त्रान्तरात्। ᵛविश्वानि समस्तानि ᵛकाव्या काव्यानि स्तोतृकर्माणि ᵛविदत् वेत्ति। ᵛविवस्वतः यजमानस्य ᵛदूतः देवानामाह्वानार्थं ᵛभुवत् भवति। किंच ᵛयमस्य संयन्तुर्यजमानस्य ᵛप्रियः इष्टः सन् ᵛकाम्यः कमनीयः प्रार्थनीयो भवतीत्यर्थः। शिष्टं स्पष्टम्॥ ॥ ४ ॥

त्वां य॒ज्ञेष्वी॑ळ॒तेऽग्ने॑ प्रय॒त्य॑ध्व॒रे।
त्वं वसू॑नि॒ काम्या॒ वि वो॒ मदे॒ विश्वा॑ दधासि दा॒शुषे॒ विव॑क्षसे ॥ ६ ॥

त्वाम्। य॒ज्ञेषु॑। ईळ॒ते। अग्ने॑। प्र॒ऽय॒ति। अ॒ध्व॒रे।
त्वम्। वसू॑नि। काम्या॑। वि। वः॒। मदे॑। विश्वा॑। द॒धा॒सि॒। दा॒शुषे॑। विव॑क्षसे ॥ ६ ॥

हे ᵛअग्ने ᵛत्वां ᵛप्रयति प्रकर्षेण गच्छति प्रवर्तमाने ᵛअध्वरे यागे ᵛयज्ञेषु यजनीयेषु हविःष्वासन्नेषु सत्सु ᵛईळते ऋत्विग्यजमानाः स्तुवन्ति। अपि च हे अग्ने ᵛत्वं ᵛविश्वा विश्वानि ᵛकाम्या काम्यानि कमनीयानि ᵛवसूनि धनानि ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛविमदे सोमादिहविर्जन्यतृप्तौ सत्यां ᵛदधासि प्रयच्छसि। अतः कारणात् ᵛविवक्षसे त्वं महान् भवसि॥

त्वां य॒ज्ञेष्वृ॒त्विजं॒ चारु॑मग्ने॒ नि षे॑दिरे।
घृ॒तप्र॑तीकं॒ मनु॑षो॒ वि वो॒ मदे॑ शु॒क्रं चेति॑ष्ठम॒क्षभि॒र्विव॑क्षसे ॥ ७ ॥

त्वाम्। य॒ज्ञेषु॑। ऋ॒त्विज॑म्। चारु॑म्। अ॒ग्ने॒। नि। से॒दि॒रे।
घृ॒तऽप्र॑तीकम्। मनु॑षः। वि। वः॒। मदे॑। शु॒क्रम्। चेति॑ष्ठम्। अ॒क्षऽभिः॑। विव॑क्षसे ॥ ७ ॥

हे ᵛअग्ने ᵛत्वां मनुष्या यजमानाः ᵛयज्ञेषु यागेषु ᵛनि ᵛषेदिरे नियमेन स्थापयन्ति। कीदृशम्। ᵛऋत्विजं होतृनामकं[1] ᵛचारुं रमणीयं ᵛघृतप्रतीकम् आज्याहुतिपूर्णमुखं ᵛशुक्रं ज्वलन्तम् ᵛअक्षभिः व्याप्तैस्तेजोभिः ᵛचेतिष्ठम् अतिशयेन ज्ञातारम्। किमर्थम्। ᵛवि ᵛवो ᵛमदे तव सोमादिहविर्जन्यविविधतृप्त्यर्थम्। यस्मादेवं तस्मात् ᵛविवक्षसे महान्[2] भवसि[3]॥

---

१. त–होम°। २. ग-त३.७-भ–त्वं महान्। ३. त–भवति।

अग्ने॑ शु॒क्रेण॑ शो॒चिषो॒रु प्र॑थयसे बृ॒हत् ।
अ॒भि॒क्रन्द॑न्वृषायसे॒ वि वो॒ मदे॒ गर्भं॑ दधासि जा॒मिषु॒ विव॑क्षसे ॥ ८ ॥

अग्ने॑ । शु॒क्रेण॑ । शो॒चिषा॑ । उ॒रु । प्र॒थ॒यसे॑ । बृ॒हत् ।
अ॒भि॒ऽक्रन्द॑न् । वृ॒ष॒ऽय॒से॒ । वि । वः॒ । मदे॑ । गर्भ॑म् । द॒धा॒सि॒ । जा॒मिषु॑ । विव॑क्षसे ॥ ८ ॥

हे ᵛअग्ने ᵛबृहत् महांस्त्वं ᵛशुक्रेण दीप्तेन ᵛशोचिषा तेजसा ᵛउरु ᵛप्रथयसे विस्तीर्णं यथा भवति तथा प्रख्यातो भवसि। किंच ᵛअभिक्रन्दन् आभिमुख्येन युद्धार्थं शत्रूनाह्वयन् ᵛवृषायसे वृष इवाचरसि। युद्धकाले दर्पितवृष इव रोरुवद्भवसीत्यर्थः। त्वं[1] माध्यमिकः[1] सन् ᵛजामिषु भगिनीभूतास्वोषधीषु ᵛगर्भं बीजलक्षणं ᵛदधासि वृष्टिद्वारेण धारयसि। एकस्मात् प्रजापतेः सकाशादुद्भूतत्वादग्न्योषध्योर्जामित्वमुपचर्यते। कस्मिन् सति। ᵛवि ᵛवो ᵛमदे तव विविधसोमादिहविर्जन्यमदे संजाते सति। यस्मादेवं कृतवानसि तस्मात्त्वं ᵛविवक्षसे महान् भवसि। विवक्षस इति महन्नाम वक्तेर्वा वहतेर्वा सनन्तस्य रूपमिति ॥ ॥ ५ ॥

'कुह' इति पञ्चदशर्चं षष्ठं सूक्तमैन्द्रम्। पञ्चदशी त्रिष्टुप् पञ्चमीसप्तमीनवम्यस्तिस्रोऽनुष्टुभः शिष्टाः पुरस्ताद्बृहत्यः। आद्यद्वादशकाद्यष्टकवती पुरस्ताद्बृहती। पूर्ववदृषिः। तथा चानुक्रान्तं— 'कुह पञ्चोना पुरस्ताद्बार्हतं त्रिष्टुबन्तं त्वं त्या चिदा नस्त्वं नोऽनुष्टुभः' इति। चतुर्थेऽहनि निष्केवल्य एतत्सूक्तम्। सूत्रितं च—'कुह श्रुत इन्द्रो युध्मस्य त इति निष्केवल्यम्' (आश्व. श्रौ. ७. ११) इति ॥

कुह॑ श्रु॒त इन्द्रः॒ कस्मि॑न्न॒द्य जने॑ मि॒त्रो न श्रू॑यते ।
ऋषी॑णां वा॒ यः क्षये॒ गुहा॑ वा॒ चर्कृ॑षे गि॒रा ॥ १ ॥

कुह॑ । श्रु॒तः । इन्द्रः॑ । कस्मि॑न् । अ॒द्य । जने॑ । मि॒त्रः । न । श्रू॒यते॑ ।
ऋषी॑णाम् । वा॒ । यः । क्षये॑ । गुहा॑ । वा॒ । चर्कृ॑षे । गि॒रा ॥ १ ॥

ᵛअद्य अस्मिन् दिने ᵛइन्द्रः ᵛकुह कुत्र स्थाने ᵛश्रुतः विश्रुतः प्रख्यातः। ᵛकस्मिन् ᵛजने यजमान इज्यत्वेन स्तुत्यत्वेनावस्थितः ᵛश्रूयते प्रख्यायते। तत्र दृष्टान्तः। ᵛमित्रो ᵛन सूर्य इव सखेव वा तद्वत्। ᵛयः इन्द्रः ᵛऋषीणां भृग्वादीनां ᵛक्षये निवास आश्रमे ᵛगुहा ᵛवा गुहायामरण्ये वा ᵛगिरा स्तुतिलक्षणया वाचा ᵛचर्कृषे अत्यर्थमाकृष्यते। अत्यर्थं स्तूयत इत्यर्थः। स इन्द्रः कुह श्रुत इति पूर्वेण संबन्धः ॥

इ॒ह श्रु॒त इन्द्रो॑ अ॒स्मे अ॒द्य स्तवे॑ व॒ज्र्यृची॑षमः ।
मि॒त्रो न यो जने॒ष्वा यश॑श्च॒क्रे असा॒म्या ॥ २ ॥

इ॒ह । श्रु॒तः । इन्द्रः॑ । अ॒स्मे इति॑ । अ॒द्य । स्तवे॑ । व॒ज्री । ऋची॑षमः ।
मि॒त्रः । न । यः । जने॑षु । आ । यशः॑ । च॒क्रे । अस॑मि । आ ॥ २ ॥

ᵛइह अस्मिन् यज्ञे ᵛइन्द्रः ᵛश्रुतः प्रख्यातः। ᵛअद्य अस्मिन्दिवसे ᵛअस्मे अस्माभिः ᵛस्तवे स्तूयते। कीदृशः। ᵛवज्री वज्रवान् ᵛऋचीषमः। 'यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः न त्वा

[1] त–त्वां मध्येकिमिकः।

वज्रिन्' ( ऋ. सं. ८. ७०. ५ ) इत्यादिकया स्तुत्या समानगुण इत्यर्थः । Vयः इन्द्रः Vमित्रो Vन सूर्य इव स्निग्ध इव वा Vजनेपु स्तोतृजनेपु Vयशः अन्नं कीर्तिं वा Vचक्रे करोति । कीदृशम् । Vअसामि असाधारणम् । स इन्द्रोऽस्माभिः स्तूयत इति पूर्वेण संबन्धः ॥

**म॒हो यस्पति॒ः शव॑सो॒ असा॒म्या म॒हो नृ॒म्णस्य॑ तू॒तु॒जिः ।**
**भ॒र्ता वज्र॑स्य धृ॒ष्णोः पि॒ता पु॒त्रमि॑व प्रि॒यम् ॥ ३ ॥**

म॒हः । यः । पति॑ः । शव॑सः । असा॑मि । आ । म॒हः । नृ॒म्णस्य॑ । तू॒तु॒जिः ।
भ॒र्ता । वज्र॑स्य । धृ॒ष्णोः । पि॒ता । पु॒त्रम्ऽइ॑व । प्रि॒यम् ॥ ३ ॥

Vयः इन्द्रः Vमहः महतः Vशवसः बलस्य Vपतिः ईश्वरः Vअसाम्या । आङ् मर्यादायाम् । आ समाप्तेः । अनन्तगुण इत्यर्थः । Vमहः महतः Vनृम्णस्य धनस्य च Vतूतुजिः स्तोतृभ्यः प्रेरकः । किंच Vधृष्णोः शत्रूणां धर्षकस्य Vवज्रस्य स्वकीयस्यायुधस्य Vभर्ता य इन्द्रो धारयिता । स इन्द्रोऽस्मान् पात्विति शेषः। तत्र दृष्टान्तः । Vपिता Vपुत्रमिव Vप्रियम् । यथा पितेप्सितं सुतं पाति तद्वत् ॥

**यु॒जा॒नो अश्वा॒ वात॑स्य॒ धुनी॑ दे॒वो दे॒वस्य॑ वज्रिवः ।**
**स्यन्ता॑ प॒था वि॒रुक्म॑ता सृ॒जा॒नः स्तो॒ष्यध्व॑नः ॥ ४ ॥**

यु॒जा॒नः । अश्वा॑ । वात॑स्य । धुनी॒ इति॑ । दे॒वः । दे॒वस्य॑ । व॒ज्रि॒ऽवः॒ ।
स्यन्ता॑ । प॒था । वि॒रुक्म॑ता । सृ॒जा॒नः । स्तो॒षि॒ । अध्व॑नः ॥ ४ ॥

हे Vवज्रिवः वज्रवन्निन्द्र । एको मत्वर्थीयोऽनुवादकः । Vदेवः द्योतमानस्त्वं Vदेवस्य द्योतमानस्य Vवातस्य वायोः Vधुनी प्रेरकौ । वायोरपि शीघ्रगामिनावित्यर्थः । Vअश्वा अश्वौ त्वदीयौ हरिनामकौ Vयुजानः स्वरथे संयोजयन् । कीदृशौ । Vविरुक्मता विरोचनवता Vपथा मार्गेण Vस्यन्ता स्यन्तौ गच्छन्तौ । Vअध्वनः युद्धे गमनमार्गान् Vसृजानः उत्पादयन् Vस्तोषि सततं स्तूयसे ॥

**त्वं त्या चि॒द्वात॑स्याश्वागा॑ ऋ॒ज्रा त्मना॒ वह॑ध्यै ।**
**ययो॑र्दे॒वो न मर्त्यो॑ य॒न्ता नकि॑र्वि॒दाय्य॑ः ॥ ५ ॥**

त्वम् । त्या । चि॑त् । वात॑स्य । अश्वा॑ । आ । अ॒गाः॒ । ऋ॒ज्रा । त्मना॑ । वह॑ध्यै ।
ययो॑ः । दे॒वः । न । मर्त्य॑ः । य॒न्ता । नकि॑ः । वि॒दाय्य॑ः ॥ ५ ॥

यच्छब्दसंबन्धादुत्तरोऽर्धर्चः पूर्वं व्याख्यायते । Vययोः त्वदीययोः Vयन्ता नियन्ता निवारयिता Vदेवो Vन देवानां मध्ये कश्चिदपि देवो नास्ति Vमर्त्यः मनुष्याणां मध्ये कश्चिदपि नास्ति Vनकिः न कश्चिदपि Vविदाय्यः वेत्ता । जवस्य बलस्येति वा शेषः । हे इन्द्र Vत्वं Vवातस्य वायोर्बलेन जवेन च युक्तौ Vऋज्रा ऋजुगामिनौ Vत्या Vचित् तावपि Vअश्वा त्वदीयावश्वौ Vत्मना आत्मनैव । स्वरथिनिरपेक्षेणेत्यर्थः । Vवहध्यै वहनार्थम् । अभिप्रेतदेशप्रापणायेत्यर्थः । Vआगाः आभिमुख्येन गच्छसि[1] ॥   ॥ ६ ॥

१. त-भ६–गच्छति ।

अध ग्मन्तोशना पृच्छते वां कदर्था न आ गृहम् ।
आ जग्मथुः पराकाद्दिवश्च ग्मश्च मर्त्यम् ॥ ६ ॥

अध । ग्मन्ता । उशना । पृच्छते । वाम् । कत्ऽअर्था । नः । आ । गृहम् ।
आ । जग्मथुः । पराकात् । दिवः । च । ग्मः । च । मर्त्यम् ॥ ६ ॥

ᵛअध अथ यज्ञसमाप्त्यनन्तरम् ᵛउशना भार्गव ऋषिः हे इन्द्राग्नी ᵛग्मन्ता स्वस्थानं प्रति गच्छन्तौ ᵛवां युवां ᵛपृच्छते पृच्छति स्म । यद्वा । उशनेति विभक्तिव्यत्ययः । उशनसमिन्द्रस्य सखिभूतं भार्गवमिन्द्रं च युवां सर्वो यजमानः पृच्छति । किं पृष्टवानिति उच्यते । युवां ᵛकदर्था कदर्थौ किंप्रयोजनवन्तौ सन्तौ ᵛनः अस्मदीयम् । आकारः प्रतीत्यस्यार्थे । ᵛगृहं प्रति ᵛपराकात् । दूरनामैतत् । दूरात् ᵛआ ᵛजग्मथुः आगतवन्तौ स्थः । तदेवोक्तम् । ᵛदिवश्च द्युलोकाच्च ᵛग्मश्च भूलोकाच्च ᵛमर्त्यं मनुष्यं मां प्रत्यागतवन्तौ । युवयोः कृतार्थत्वादत्रागमनमस्मदनुग्रहार्थमेव न स्वार्थमिति ब्रुवन्ननुव्रजतीत्यर्थः ॥

आ न इन्द्र पृक्षसेऽस्माकं ब्रह्मोद्यतम् ।
तत्त्वा याचामहेऽवः शुष्णं यद्धन्नमानुषम् ॥ ७ ॥

आ । नः । इन्द्र । पृक्षसे । अस्माकम् । ब्रह्म । उत्ऽयतम् ।
तत् । त्वा । याचामहे । अवः । शुष्णम् । यत् । हन् । अमानुषम् ॥ ७ ॥

हे ᵛइन्द्र त्वम् । न इति तृतीयार्थे षष्ठी । ᵛनः अस्माभिः ᵛउद्यतम् उत्क्षिप्तम् । दत्तमित्यर्थः । ᵛअस्माकम् अस्मदीयं ᵛब्रह्म हविर्लक्षणमन्नम् । आङ् मर्यादायाम् । आ तृप्तेरित्यर्थः । ᵛपृक्षसे आत्मना संपर्चय । 'पृची संपर्के' इति धातो रूपम् । आभक्षयेत्यर्थः । किंच वयमपि ᵛत्वा एवंभूतं त्वां[1] ᵛतत्[1] । यदुत्कृष्टमस्तीति शेषः । तत्तादृशमन्नम् ᵛअवः तद्रक्षणं च ᵛयाचामहे प्रार्थयामहे । तथा ᵛयत् ᵛशुष्णं बलम् ᵛअमानुषं मनुष्यादन्यं राक्षसादिकं ᵛहन् हन्ति तदुत्कृष्टं बलं च याचामहे । यद्वा । हे इन्द्र त्वं शुष्णमेतन्नामानममानुषं मनुष्यव्यतिरिक्तमसुरं हन् हतवानसि । हत्वा च यद्येन रक्षणेन त्रैलोक्यं पालितवानसि तदवः पालनमस्माकमपि भवेदिति त्वां याचामह इति वाक्यार्थः ॥

अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः ।
त्वं तस्यामित्रहन् वधर्दासस्य दम्भय ॥ ८ ॥

अकर्मा । दस्युः । अभि । नः । अमन्तुः । अन्यऽव्रतः । अमानुषः ।
त्वम् । तस्य । अमित्रऽहन् । वधः । दासस्य । दम्भय ॥ ८ ॥

ᵛअकर्मा अविद्यमानयागादिकर्मा ᵛदस्युः उपक्षपयिता ᵛअभि आभिमुख्येन स्वरूपतः ᵛनः अस्मान् ᵛअमन्तुः अज्ञाता । यद्वा । अत्र अवेत्युपसर्गस्य वकारलोपो द्रष्टव्यः । अवमन्तुरवमन्ताभिभविता । ᵛअन्यव्रतः श्रुतिस्मृतिव्यतिरिक्तकर्मा ᵛअमानुषः मनुष्यसंव्यवहाराद्बाह्यः । असुरप्रकृतिरित्यर्थः । य[2] एवंभूतोऽस्ति हे ᵛअमित्रहन् शत्रूणां हन्तरिन्द्र ᵛत्वं ᵛदासस्य उपक्षपयितव्यस्य ᵛवधः हन्ता सन् ᵛदम्भय तं शत्रुं हिन्धि ॥

---

१. त-भ१.२.४.७–त्वां मां; भ६–त्वां । २. त-भ६–'य' नास्ति ।

त्वं न॑ इन्द्र शूर॒ शूरै॑रु॒त त्वोता॑सो ब॒र्हणा॑ ।
पु॒रु॒त्रा ते॒ वि पू॒र्तयो॒ नव॑न्त क्षो॒णयो॑ यथा ॥ ९ ॥

त्वम् । नः॒ । इ॒न्द्र॒ । शू॒र॒ । शूरैः॑ । उ॒त । त्वाऽऊ॑तासः । ब॒र्हणा॑ ।
पु॒रु॒ऽत्रा । ते॒ । वि । पू॒र्तयः॑ । नव॑न्त । क्षो॒णयः॑ । य॒था॒ ॥ ९ ॥

हे ᵛशूर विक्रान्त ᵛइन्द्र ᵛत्वं ᵛशूरैः भटैः मरुद्भिः सहितः सन् ᵛनः अस्मान् पाहीति शेषः । ᵛउत अपि च ᵛत्वोतासः त्वया रक्षिता वयं ᵛबर्हणा परिबर्हणायां शत्रूणां हिंसायां समर्था भवेम । किंच ᵛते त्वदीयाः ᵛपूर्तयः कामानां पूरणानीप्सितार्थप्रदानानि ᵛपुरुत्रा बहून् स्तोतॄन् ᵛवि ᵛनवन्त विविधं व्याप्नुवन्ति । ᵛक्षोणयः । मनुष्यनामैतत् । मनुष्याः स्वकीयं स्वामिनं सेवार्थं ᵛयथा व्याप्नुवन्ति तद्वत् ॥

त्वं तान् वृ॑त्र॒हत्ये॑ चोदयो॒ नॄन् का॑र्पा॒णे शू॑र वज्रिवः ।
गुहा॒ यदी॑ कवी॒नां वि॒शां नक्ष॑त्रशवसाम् ॥ १० ॥

त्वम् । तान् । वृ॒त्र॒ऽहत्ये॑ । चोद॑यः । नॄन् । का॒र्पा॒णे । शू॒र॒ । व॒ज्रि॒ऽवः॒ ।
गुहा॑ । यदि॑ । क॒वी॒नाम् । वि॒शाम् । नक्ष॑त्रऽशवसाम् ॥ १० ॥

हे ᵛवज्रिवः वज्रधर ᵛशूर इन्द्र ᵛत्वं ᵛकार्पाणे । असिः कृपाणः । तेन साध्यं[1] युद्धं कार्पाणम् । तस्मिन् ᵛवृत्रहत्ये शत्रुहननार्थं ᵛनॄन् नरान् ᵛतान् प्रसिद्धान् मरुद्गणान् ᵛचोदयः चोदयसि प्रेरयसि । ᵛयदि यदा त्वं ᵛकवीनां मेधाविनां ᵛनक्षत्रशवसां देवान् प्रतिगच्छत्स्तोतृबलानां ᵛविशां स्तोतृजनानां संबन्धीनि ᵛगुहा गूढानि गुणैः संवृतानि स्तोत्राणि शृणोषीति शेषः । तदा प्रेरयसीति पूर्वेणान्वयः॥ ॥७॥

म॒क्षू ता त॑ इन्द्र दा॒नाप्न॑स आक्षा॒णे शू॑र वज्रिवः ।
यद्ध॒ शुष्ण॑स्य द॒म्भयो॑ जा॒तं विश्वं॑ स॒याव॑भिः ॥ ११ ॥

म॒क्षु । ता । ते॒ । इ॒न्द्र॒ । दा॒नऽअ॑प्नसः । आ॒क्षा॒णे । शू॒र॒ । व॒ज्रि॒ऽवः॒ ।
यत् । ह॒ । शुष्ण॑स्य । द॒म्भयः॑ । जा॒तम् । विश्व॑म् । स॒याव॑ऽभिः ॥ ११ ॥

हे ᵛशूर विक्रान्त ᵛवज्रिवः वज्रोपेत ᵛइन्द्र ᵛदानाप्नसः दानकर्मणः । स्तोतृभ्यः सततमभीष्टफलप्रदस्येत्यर्थः । ᵛते तव स्वभूतानि ᵛमक्षु क्षिप्राणि अविलम्बितानि । क्षिप्रकरणयुक्तानीत्यर्थः । ᵛआक्षाणे योद्धृभिर्व्याप्यमाने त्वय्यवस्थितानि ᵛता तानि कर्माणि स्तोतारः स्तुवन्तीति शेषः । ᵛसयावभिः सहयातृभिर्मरुद्भिः सहितस्त्वं ᵛशुष्णस्य असुरस्य ᵛविश्वं ᵛजातं सर्वमपत्यजातं ᵛदम्भयः अदम्भयः । हिंसितवानसि । यद्वा । एवमादीनि यानि खलु कर्माणि सन्ति तानि स्तुवन्तीति पूर्वेण संबन्धः ॥

माकु॑ध्र्य॒गिन्द्र शूर॒ वस्वी॑र॒स्मे भू॑वन्न॒भिष्ट॑यः ।
व॒यंव॑यं त आसां सु॒म्ने स्या॑म वज्रिवः ॥ १२ ॥

मा । अकु॑ध्र्यक् । इन्द्र॒ । शू॒र॒ । वस्वीः॑ । अ॒स्मे इति॑ । भु॒व॒न् । अ॒भिष्ट॑यः ।
व॒यम्ऽव॑यम् । ते॒ । आ॒सा॒म् । सु॒म्ने । स्या॒म॒ । व॒ज्रि॒ऽवः॒ ॥ १२ ॥

---

१. त—कार्यं ।

हे ᵛशूर विक्रान्त ᵛइन्द्र ᵛअस्मे अस्माकं स्वभूताः ᵛवस्वीः महत्यः ᵛअभिष्टयः आभिमुख्येष्टय इज्याः । यद्वा । आभिमुख्येच्छा अभीप्सितप्रार्थनाः । ᵛकुध्र्यक् कुत्सिताः । विफला इत्यर्थः । ᵛमा ᵛभूवन् । किं तर्हि हे ᵛवज्रिवः वज्रिन्निन्द्र ᵛते तव प्रसादात् ᵛवयंवयम् ऋत्विग्यजमानाः । द्विर्वचनमतित्वराप्रदर्शनार्थम् । ᵛआसाम् इज्यानामिच्छानां वा संबन्धिनि ᵛसुम्ने सुखे अवस्थिताः ᵛस्याम भवेम । वयमभिष्टिजन्येन दृष्टादृष्टसुखेन युक्ताः शीघ्रं भवेमेत्याशास्महे इत्यर्थः ॥

अस्मे ता त इन्द्र सन्तु सत्याहिंसन्तीरुपस्पृशः ।
विद्याम यासां भुजो धेनूनां न वज्रिवः ॥ १३ ॥

अस्मे इति । ता । ते । इन्द्र । सन्तु । सत्या । अहिंसन्तीः । उपऽस्पृशः ।
विद्याम । यासाम् । भुजः । धेनूनाम् । न । वज्रिऽवः ॥ १३ ॥

हे ᵛइन्द्र ᵛअस्मे अस्माकं स्वभूताः । ता सत्या इत्युभयत्र प्रथमाबहुवचनस्य छान्दस आकारः सन्त्विति निर्देशविशेषणत्वात् । ᵛता तास्तादृश्यः ᵛउपस्पृशः। त्वामुपगम्य स्पृशन्तीत्युपस्पृशः स्तुतयः। ᵛते तव प्रसादात् ᵛसत्या सत्याः ᵛसन्तु यथार्था भवन्तु । तव सद्गुणग्राहिण्य इत्यर्थः । अपि च ᵛअहिंसन्तीः त्वामहिंसत्यश्च भवन्तु । सत्स्तुतित्वादनुद्वेजयन्त्यश्च भवन्त्वित्यर्थः । हे ᵛवज्रिवः इन्द्र ᵛयासां स्तुतीनां संबन्धिनः[१] ᵛभुजः दृष्टादृष्टान् भोगान् ᵛविद्याम वयं लभेमहि । तत्र दृष्टान्तः । ᵛधेनूनां ᵛन । गवां क्षीरादिभोगान् यथा गोस्वामी लभते तद्वत् । ताः सत्या भवन्त्विति पूर्वेणान्वयः॥

अहस्ता यदपदी वर्धत क्षाः शचीभिर्वेद्यानाम् ।
शुष्णं परि प्रदक्षिणिद्विश्वायवे नि शिश्नथः ॥ १४ ॥

अहस्ता । यत् । अपदी । वर्धत । क्षाः । शचीभिः । वेद्यानाम् ।
शुष्णम् । परि । प्रऽदक्षिणित् । विश्वऽआयवे । नि । शिश्नथः ॥ १४ ॥

हे इन्द्र ᵛयत् यदा ᵛक्षाः भूमिः ᵛअहस्ता पाणिरहिता ᵛअपदी चरणवर्जिता च । अमनुष्यकर्मकेत्यर्थः । ᵛवेद्यानां स्तोत्रयोग्यानां स्वरप्रभृतीनां देवानां संबन्धिभिः ᵛशचीभिः कर्मभिः ᵛवर्धत अवर्धत । धनधान्यादिभिः समृद्धेत्यर्थः । तदा त्वं ᵛपरि ᵛप्रदक्षिणित् एवंभूतां पृथिवीं परिवेष्ट्य प्रदक्षिणं यथा भवति तथा स्थितं ᵛशुष्णम् असुरं ᵛविश्वायवे । तादर्थ्ये[२] चतुर्थी । सर्वत्राप्रतिहतगामिन एतदाख्यस्यौर्वशेयराज्ञोऽर्थाय ᵛनि ᵛशिश्नथः नितरां ताडितवानसि । यद्वा । यदा शुष्णस्याच्छादनार्थं हस्तपादवर्जिता काचित्पृथिवी वेदिनव्यानामसुराणां मायारूपैः कर्मभिः शुष्णमसुरं परिवेष्ट्य प्रदक्षिणं यथा भवति तथावस्थितावर्धत तदानीं तां मायोत्पादितां पृथिवीं विश्वायवे[२] सर्वव्यापकस्य मरुद्गणस्य प्रवेशनार्थं नि शिश्नथः ॥

पिबापिबेदिन्द्र शूर सोमं मा रिषण्यो वसवान वसुः सन् ।
उत त्रायस्व गृणतो मघोनो महश्च रायो रेवतस्कृधी नः ॥ १५ ॥

पिबऽपिब । इत् । इन्द्र । शूर । सोमम् । मा । रिषण्यः । वसवान । वसुः । सन् ।
उत । त्रायस्व । गृणतः । मघोनः । महः । च । रायः । रेवतः । कृधि । नः ॥ १५ ॥

१. त-वंधेन । २. त-'तादर्थ्ये...विश्वायवे' नास्ति ।

ᵛपिबपिब इति वीप्सातित्वराप्रदर्शनार्थम्। हे ᵛशूर वीर ᵛइन्द्र त्वमभिषुतं ᵛसोमं शीघ्रं पिब। यागकालातिपातो यावन्न भवति तावच्छीघ्रं सोमं पिबेत्यर्थः। ᵛइत् इति पूरणः। हे ᵛवसवान वसूनां धनानामानेतः त्वं ᵛवसुः प्रशस्तः ᵛसन् ᵛमा ᵛरिषण्यः यागकालातिक्रमजातेन दोषेणास्मान्मा हिंसीः। प्रशस्तस्य तव कर्मवैगुण्यकरणेन[1] हिंसितुमयुक्तमित्यर्थः। ᵛउत अपि च हे इन्द्र त्वं ᵛगृणतः त्वां स्तुवतः स्तोतॄन् ᵛमघोनः हविर्लक्षणधनवतो यजमानांश्च ᵛत्रायस्व प्रमादजनितकर्मवैगुण्यदोषात् पालयस्व। किंच महश्च राय इत्युभयत्र तृतीयार्थे षष्ठी। ᵛमहः महता ᵛरायः धनेन च[2] ᵛनः अस्मान् ᵛरेवतः ᵛकृधि धनवतः कुरु ॥　　॥ ८ ॥

'यजामहे' इति सप्तर्चं सप्तमं सूक्तम्। प्रथमासप्तम्यौ त्रिष्टुभौ। पञ्चम्यभिसारिणी। द्विर्दशकद्विर्द्वादशकवतीत्यभिसारिणीत्युच्यते। शिष्टाश्चतस्रो जगत्यः। पूर्ववदृषिदेवते। तथा चानुक्रान्तं—'यजामहे सप्ताद्यान्त्ये त्रिष्टुभौ पञ्चम्यभिसारिणी' इति। चतुर्थेऽहनि माध्यंदिनसवने तृतीयापञ्चम्योरावर्तनेन त्रींस्तृचान् होत्रका एकैकं तृचमावपेरन्। सूत्रितं च—'यजामह इन्द्रं वज्रदक्षिणमिति द्वितीयानेवमेव' ( आश्व. श्रौ. ७. ११ ) इति ॥

**यजामह इन्द्रं वज्रदक्षिणं हरीणां रथ्यं१ विव्रतानाम्।**
**प्र श्मश्रु दोधुवदूर्ध्वथा भूद्वि सेनाभिर्दयमानो वि राधसा ॥ १ ॥**

यजामहे। इन्द्रम्। वज्रऽदक्षिणम्। हरीणाम्। रथ्यम्। विऽव्रतानाम्।
प्र। श्मश्रु। दोधुवत्। ऊर्ध्वऽथा। भूत्। वि। सेनाभिः। दयमानः। वि। राधसा ॥१॥

वयम् ᵛइन्द्रं ᵛयजामहे सोमलक्षणैर्हविर्भिः पूजयामः। कीदृशम्। ᵛवज्रदक्षिणं शत्रुवधाय सततं वज्रो दक्षिणे हस्ते यस्य तं ᵛविव्रतानां रथवहनादिविविधकर्मणां ᵛहरीणाम् एतत्संज्ञकानामश्वानां ᵛरथ्यम् आनेतारम्। स इन्द्रः सोमपानानन्तरं ᵛश्मश्रु स्वकीयानि श्मश्रूणि ᵛदोधुवत् पुनःपुनः धुन्वानः सन् ᵛऊर्ध्वथा ऊर्ध्वं ᵛप्र ᵛभूत् प्रादुरभूत्। किंच ᵛसेनाभिः मरुदादिस्वकीयैः सैन्यैः ᵛवि ᵛदयमानः विविधं शत्रून् हिंसन् ᵛराधसा। द्वितीयार्थे तृतीया। राधो धनम्। वीत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः। विविधं स्तोतृभ्यो ददाति ॥

**हरी न्वस्य या वने विदे वस्विन्द्रो मघैर्मघवा वृत्रहा भुवत्।**
**ऋभुर्वाज ऋभुक्षाः पत्यते शवोऽव क्ष्णौमि दासस्य नाम चित् ॥ २ ॥**

हरी इति। नु। अस्य। या। वने। विदे। वसु। इन्द्रः। मघैः। मघऽवा। वृत्रऽहा। भुवत्।
ऋभुः। वाजः। ऋभुक्षाः। पत्यते। शवः। अव। क्ष्णौमि। दासस्य। नाम। चित् ॥ २ ॥

ᵛअस्य इन्द्रस्य संबन्धिनौ ᵛया यौ ᵛहरी अश्वौ ᵛवने। वन्यन्ते संभज्यन्तेऽस्मिन्[3] देवा इति वनं यज्ञोऽरण्यं वा। तस्मिन् ᵛवसु ऋजीपलक्षणं[4] धनं यवसलक्षणं वा ᵛनु क्षिप्रं ᵛविदे विन्देते लभेते। यद्वा। यौ हरी अस्येन्द्रस्य वने संभजनार्थं वसु[5] वसुनो लाभाय क्षिप्रं भवत इति शेषः। ताभ्यां हरिभ्यां ᵛमघैः धनैः ᵛमघवा धनवान् ᵛइन्द्रः ᵛवृत्रहा वृत्राख्यस्यासुरस्य मेघस्य वा हन्ता ᵛभुवत् भवति। अपि च ᵛऋभुः दीप्तः ᵛवाजः बलवान् ᵛऋभुक्षाः महानिन्द्रः ᵛशवः शवसो

---

१. त–कर्मवैगुण्येन। २. त–'च' नास्ति। ३. त-भ–संभजंतेस्मिन्। ४. त-मु–ऋजीकलक्षणं। ५. त-भ१.२.४–'वसु' नास्ति।

बलस्य धनस्य वा ᵛपत्यते ईष्टे। यद्वा। शत्रूणां बलं प्रति पत्यते प्रतिपद्यते[1] गच्छति। अहमपि तस्य प्रसादात् ᵛदासस्य उपक्षपयितव्यस्य शत्रोः ᵛनाम ᵛचित्। नम्यतेऽनेनेति नाम शिरः। तदपि ᵛअव ᵛक्ष्णामि अव हन्मि। किमुतान्यदङ्गम्। अथवा नामधेयमपि नाशयामि किमुत शत्रुम्॥

यदा वज्रं हिरण्यमिदथा रथं हरी यमस्य वहतो वि सूरिभिः।
आ तिष्ठति मघवा सनश्रुत इन्द्रो वाजस्य दीर्घश्रवसस्पतिः॥ ३॥

यदा। वज्रम्। हिरण्यम्। इत्। अथ। रथम्। हरी इति। यम्। अस्य। वहतः। वि। सूरिऽभिः। आ। तिष्ठति। मघऽवा। सनऽश्रुतः। इन्द्रः। वाजस्य। दीर्घऽश्रवसः। पतिः॥ ३॥

ᵛयदा इन्द्रः ᵛहिरण्यं हितरमणीयं ᵛवज्रं स्वकीयमायुधं शत्रुहननाय गृह्णातीति शेषः। ᵛइत् इति पूरणः। ᵛअथ तदानीम् ᵛअस्य इन्द्रस्य ᵛहरी अश्वौ ᵛयं ᵛरथं ᵛवहतः गन्तृप्रदेशं[2] विशेषेण प्रापयतः ᵛमघवा धनवान् ᵛइन्द्रः ᵛसूरिभिः स्तोतृभिः कुत्सादिभिः सह तं रथम् ᵛआ ᵛतिष्ठति आरोहति। कीदृशः। ᵛसनश्रुतः चिरप्रख्यातः। जगति स्वभावत एव विख्यात इत्यर्थः। ᵛदीर्घश्रवसः बहुकीर्तेः ᵛवाजस्य अन्नस्य ᵛपतिः स्वामी। एवंभूत इन्द्रस्तं रथमारोहतीत्यर्थः॥

सो चिन्नु वृष्टिर्यूथ्या३ स्वा सचाँ इन्द्रः श्मश्रूणि हरिताभि प्रुष्णुते।
अव वेति सुक्षयं सुते मधूदिद्धूनोति वातो यथा वनम्॥ ४॥

सो इति। चित्। नु। वृष्टिः। यूथ्या। स्वा। सचा। इन्द्रः। श्मश्रूणि। हरिता। अभि। प्रुष्णुते। अव। वेति। सुऽक्षयम्। सुते। मधु। उत्। इत्। धूनोति। वातः। यथा। वनम्॥४॥

तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः। या महती वृष्टिरस्ति ᵛसो सा ᵛवृष्टिः ᵛनु क्षिप्रम्। ᵛचित् इत्युपमार्थे। यथा सर्वं सिञ्चति तथा ᵛइन्द्रः ᵛस्वा स्वानि ᵛयूथ्या यूथानि मरुदादिगणलक्षणानि ᵛसचा सह स्वानि ᵛश्मश्रूणि च ᵛहरिता हरिद्वर्णेन सोमेन[3] ᵛअभि ᵛप्रुष्णुते। 'प्रुष प्लुष स्नेहनसेचनपूरणेषु[4]' इति धातुः। आभिमुख्येन स्थित्वा क्षिप्रं सिञ्चति। सोमं पाययति पिबति चेत्यर्थः। अपि च ᵛसुक्षयं शोभनं यज्ञगृहम् ᵛअव ᵛवेति अभिगच्छति। गत्वा च ᵛसुते सोमे अभिषुते सति ᵛमधु मधुररसोपेतं सोमं पीत्वा। मत्तः सन्निति शेषः। ᵛउदिद्धूनोति स्वशरीरमुत्कम्पयति। तत्र दृष्टान्तः। ᵛवातः वायुः ᵛयथा ᵛवनं वृक्षसमूहमुत्कम्पयति तद्वत्॥

यो वाचा विवाचो मृध्रवाचः पुरू सहस्राशिवा जघान।
तत्तदिदस्य पौंस्यं गृणीमसि पितेव यस्तविषीं वावृधे शवः॥ ५॥

यः। वाचा। विऽवाचः। मृध्रऽवाचः। पुरु। सहस्रा। अशिवा। जघान। तत्ऽतत्। इत्। अस्य। पौंस्यम्। गृणीमसि। पिताऽइव। यः। तविषीम्। ववृधे। शवः॥ ५॥

ᵛयः इन्द्रः ᵛवाचा वाङ्मात्रेणैव ᵛविवाचः विविधवाचः स्वशत्रून् ᵛमृध्रवाचः हिंसितवाचः। कृत्वेति शेषः। ᵛपुरु पुरूणि बहूनि ᵛअशिवा अशिवान्यसुखकराणि। दुःखकराणीत्यर्थः। ᵛसहस्रा शत्रूणां सहस्राणि ᵛजघान हन्ति। अपि च ᵛयः च इन्द्रः ᵛपितेव यथा पिता पुत्रस्य ᵛतविषीं

१. त-भ-मु-पद्यते। २. ग-गंतव्यप्रदेशं। ३. त-भ६-सोमेन च। ४. त-भ२-स्नेहनसेवन॰।

बलमन्नप्रदानैः वर्धयति तथा वृष्टिद्वारेण सर्वस्य जगतः ᵛशवः बलं ᵛववृधे वर्धयति ᵛअस्य इन्द्रस्य ᵛतत्तदित् तत्तदेव ᵛपौंस्यं बलं ᵛगृणीमसि वयं स्तुमः । इन्द्रो येन येन बलेन शत्रून् हन्ति तस्य तत्तद्बलं वयं स्तुम इत्यर्थः ॥

स्तोमं॑ त इन्द्र वि॒म॒दा अ॑जीजन॒न्नपू॑र्व्यं पुरु॒तमं॑ सु॒दान॑वे ।
वि॒द्मा ह्य॑स्य॒ भोज॑नमि॒नस्य॒ यदा प॒शुं न गो॒पाः क॑रामहे ॥ ६ ॥

स्तोम॑म् । ते॒ । इ॒न्द्र॒ । वि॒ऽम॒दाः । अ॒जी॒ज॒न॒न् । अपू॑र्व्यम् । पु॒रु॒ऽतम॑म् । सु॒ऽदान॑वे ।
वि॒द्म । हि । अ॒स्य॒ । भोज॑नम् । इ॒नस्य॑ । यत् । आ । प॒शुम् । न । गो॒पाः । क॒रा॒म॒हे॒ ॥६॥

हे ᵛइन्द्र ᵛते तुभ्यं ᵛसुदानवे शोभनदानस्यार्थाय ᵛविमदाः विमदनामानो वयं ᵛस्तोमं स्तोत्रविशेषम् ᵛअजीजनन् जनितवन्तः । कृतवन्त इत्यर्थः । अत्र पूर्वोत्तरयोरेकवाक्ययोः पुरुषव्यत्ययः। कीदृशम् । ᵛअपूर्व्यम् अपूर्वमन्यैः पूर्वमकृतम् । उत्कृष्टमित्यर्थः । ᵛपुरुतमं बहुतमम् । नानाप्रकारोपेतमित्यर्थः । ᵛहि यस्मात्कारणात् हे इन्द्र ᵛइनस्य ईश्वरस्य ᵛअस्य ईदृशस्य तव ᵛयत् ᵛभोजनं धनमस्तीति ᵛविद्म वयं जानीमः तस्मात् कारणात् त्वदीयं तद्धनम् ᵛआ ᵛकरामहे वयमस्मदभिमुखं कुर्महे । तत्र दृष्टान्तः । ᵛपशुं ᵛन ᵛगोपाः । यथा गोपालो धेनुमाह्वयन् स्वस्याभिमुखीं करोति तद्वत् ॥

माकि॑र्न ए॒ना स॒ख्या वि यौ॑षु॒स्तव॑ चेन्द्र विम॒दस्य॑ च॒ ऋषेः॑ ।
वि॒द्मा हि ते॒ प्रम॑तिं देव जामि॒वद॒स्मे ते॑ सन्तु स॒ख्या शि॒वानि॑ ॥ ७ ॥

माकि॑ः । नः॒ । ए॒ना । स॒ख्या । वि । यौ॒षुः॒ । तव॑ । च॒ । इ॒न्द्र॒ । वि॒ऽम॒दस्य॑ । च॒ । ऋषेः॑ ।
वि॒द्म । हि । ते॒ । प्रऽम॑तिम् । दे॒व॒ । जा॒मि॒ऽवत् । अ॒स्मे इति॑ । ते॒ । स॒न्तु॒ । स॒ख्या । शि॒वानि॑ ॥७॥

हे ᵛइन्द्र ᵛतव ᵛच ᵛविमदस्य ᵛऋषेः मम ᵛच ᵛनः । 'अस्मदो द्वयोश्च' ( पा. सू. १. २. ५९ ) इति द्वयोर्बहुवचनम् । आवयोः ᵛएना एनानि ᵛसख्या[1] सख्यानि स्तुत्यस्तोतृत्वेज्ययष्टृत्वलक्षणानि सखिकर्माणि ᵛमाकिः ᵛवि ᵛयौषुः केचिदपि न विश्लथयेयुः । अपि च ᵛहि यस्मात् कारणात् हे ᵛदेव द्योतमानेन्द्र ᵛते तव ᵛप्रमतिं प्रकृष्टां मतिमनुग्राहिकां बुद्धिं ᵛविद्म वयं जानीमः। तत्र दृष्टान्तः । ᵛजामिवत् । यथा भ्राता स्वभगिन्याः स्नेहयुक्तां मतिं जानाति तद्वत् । तस्मात्कारणात् ᵛअस्मे अस्माकं ᵛते तव च[1] ᵛसख्या सख्यानि ᵛशिवानि ᵛसन्तु मङ्गलानि भवन्तु । अनपायानीत्यर्थः ॥ ॥ ९ ॥

'इन्द्र सोमम्' इति पञ्चमष्टमं सूक्तम् । चतुर्थ्याद्यास्तिस्रोऽनुष्टुभोऽश्विदेवत्याः । आदितस्तिस्र ऐन्द्र्य आस्तारपङ्क्तिच्छन्दस्काः । आदितो द्वौ गायत्रौ ततो द्वौ जागतौ सास्तारपङ्क्तिः । ऋषिः पूर्ववत् । तथा चानुक्रान्तम्—'इन्द्र सोमं षळास्तारपाङ्क्तं त्वाश्विन्योऽन्त्यास्तिस्रोऽनुष्टुभः' इति । गतो विनियोगः ॥

इन्द्र॒ सोम॑मि॒मं पि॑ब॒ मधु॑मन्तं च॒मू सु॒तम् ।
अ॒स्मे र॒यिं नि धा॑रय॒ वि वो॒ मदे॑ सह॒स्रिणं॑ पुरूवसो॒ विव॑क्षसे ॥ १ ॥

१. त५-' सख्या...च ' नास्ति ।

इन्द्र । सोमम् । इमम् । पिब । मधुऽमन्तम् । चमू इति । सुतम् ।
अस्मे इति । रयिम् । नि । धारय । वि । वः । मदे ।
सहस्रिणम् । पुरुवसो इति पुरुऽवसो । विवक्षसे ॥ १ ॥

हे इन्द्र त्वम् इमम् ईदृशं सोमं पिब । कीदृशम् । मधुमन्तं मधुररसोपेतं चमू चम्वोः अधिषवणफलकयोः सुतम् अभिषुतम् । तदनन्तरं पुरुवसो बहुधन हे इन्द्र वः तव विमदे विशेषेण सोमजन्यमदे सति अस्मे अस्मासु रयिं धनं नि धारय नितरां स्थापय : कीदृशम् । सहस्रिणं सहस्रसंख्यायुक्तम् । प्रभूतमित्यर्थः । त्वया दत्तेन धनेन यस्माद्वयं पुनरपि त्वदर्थं यागं कुर्मः तस्मादस्मासु धनं निधेहीत्यर्थः । अतः कारणात् विवक्षसे । महन्नामैतत् । त्वं महान् भवसि ॥

**त्वां यज्ञेभिरुक्थैरुप हव्येभिरीमहे ।**
**शचीपते शचीनां वि वो मदे श्रेष्ठं नो धेहि वार्यं विवक्षसे ॥ २ ॥**

त्वाम् । यज्ञेभिः । उक्थैः । उप । हव्येभिः । ईमहे ।
शचीऽपते । शचीनाम् । वि । वः । मदे । श्रेष्ठम् । नः । धेहि । वार्यम् । विवक्षसे ॥ २ ॥

हे इन्द्र वयं यज्ञेभिः यज्ञैः सोमयागादिभिः उक्थैः शस्त्रलक्षणैः[1] स्तोत्रैः हव्येभिः हव्यैः पुरोडाशादिभिश्च । उपेत्युपसर्गश्रुतेर्योग्यपदाध्याहारः । त्वाम् उपेत्य ईमहे अभिलषितं धनं याचामहे । अतो हे शचीपते कर्मणां पालयितः त्वं केषांचित्कर्मणां पालको न भवसीति न किंतु शचीनां सर्वेषां कर्मणां पालको भवसीत्यर्थः । एवं याचितस्त्वं नः अस्मभ्यं वार्यं वरणीयं श्रेष्ठं प्रशस्ततमं[2] पश्वादिधनं धेहि देहि । शिष्टं स्पष्टम् ॥

**यस्पतिर्वार्याणामसि रध्रस्य चोदिता ।**
**इन्द्र स्तोतॄणामविता वि वो मदे द्विषो नः पाह्यंहसो विवक्षसे ॥ ३ ॥**

यः । पतिः । वार्याणाम् । असि । रध्रस्य । चोदिता ।
इन्द्र । स्तोतॄणाम् । अविता । वि । वः । मदे । द्विषः । नः । पाहि । अंहसः । विवक्षसे ॥ ३ ॥

हे इन्द्र यः त्वं वार्याणां वरणीयानां धनानां पतिः असि स्वामी भवसि । रध्रस्य राधकस्य स्तोतुश्च चोदिता धनदानेन कर्मसु नियोक्ता च भवसि । किंच हे इन्द्र यस्त्वं स्तोतॄणामविता रक्षकोऽसि स त्वं वि वो मदे तव विविधे सोमजन्यमदे सति द्विषः द्वेष्टुः सकाशात् नः अस्मान् पाहि रक्ष । अंहसः पापाच्च रक्ष । कस्मादेवमुच्यसे । यस्मात्त्वं विवक्षसे महान् भवसि ॥

**युवं शक्रा मायाविना समीची निरमन्थतम् ।**
**विमदेन यदीळिता नासत्या निरमन्थतम् ॥ ४ ॥**

युवम् । शक्रा । मायाऽविना । समीची इति सम्ऽईची । निः । अमन्थतम् ।
विऽमदेन । यत् । ईळिता । नासत्या । निःऽअमन्थतम् ॥ ४ ॥

१. त-शास्त्रलक्षणैः । २. त१.७-म६-प्रशस्यतमं; त५-प्रशस्यतमं ।

हे ᵛशक्रा शक्रौ शत्रुवधादिकर्मसु समर्थौ हे अश्विनौ ᵛमायाविना मायाविनौ प्रज्ञावन्तौ शत्रुवञ्चनकुशलौ वा ᵛयुवं युवां ᵛसमीची परस्परं संगतौ ᵛनिरमन्थतम् अग्निं निरमथ्नीतम्। 'अश्विनावध्वर्यू' (ऐ. ब्रा. १. १८) इति ब्राह्मणोक्तत्वादग्निमन्थनमप्यश्विनोरुपपन्नमिति। कदाश्विनौ निर्मथितवन्तौ उच्यते। ᵛयत् यदा ᵛनासत्या नासत्यौ युवां ᵛविमदेन मया ᵛईळिता ईळितौ स्तुतौ ᵛनिरमन्थतं निरमथ्नीतं तदानीं युवां परस्परं संगतौ निर्मथितवन्तौ[1] स्थ इत्यर्थः ॥

**विश्वे॑ दे॒वा अ॑कृपन्त समी॒च्योर्नि॒ष्पत॑न्त्योः ।**
**नास॑त्यावब्रुवन् दे॒वाः पुन॒रा व॑हता॒दिति॑ ॥ ५ ॥**

विश्वे॑ । दे॒वाः । अ॒कृ॒प॒न्त॒ । स॒म्ऽई॒च्योः । निः॒ऽपत॑न्त्योः ।
नास॑त्यौ । अ॒ब्रु॒व॒न् । दे॒वाः । पुन॑रिति॑ । आ । व॒ह॒ता॒त् । इति॑ ॥ ५ ॥

हे अश्विनौ युवाभ्यामग्निमन्थनकाले[2] प्रेर्यमाणयोः ᵛसमीच्योः परस्परेण संयुक्तयोररण्योः ᵛनिष्पतन्त्योः विस्फुलिङ्गान् निर्गमयन्त्योः सत्योः ᵛविश्वे सर्वे इन्द्रादयो ᵛदेवाः ᵛअकृपन्त युवामस्तुवन्। किंच ᵛदेवाः ᵛनासत्यौ अश्विनौ युवाम् ᵛअब्रुवन् अवोचन्। किमिति। ᵛपुनरा ᵛवहतादिति। पुनःपुनरीदृशानि जगत्स्थितिहेतुभूतानि कर्माणि युवामाभिमुख्येन स्थिरत्वावहतम्[3]। यद्वा। युवाभ्यामुत्पाद्यमानः पुनश्चायमग्निरस्मदीयानि[4] हवींष्यावहत्विति देवा नासत्यावब्रुवन् ॥

**मधु॑मन्मे प॒राय॑णं॒ मधु॑म॒त्पुन॒राय॑नम् ।**
**ता नो॑ देवा दे॒वत॑या यु॒वं मधु॑मतस्कृतम् ॥ ६ ॥**

मधु॑ऽमत् । मे॒ । प॒रा॒ऽअय॑नम् । मधु॑ऽमत् । पुन॑रिति॑ । आ॒ऽअय॑नम् ।
ता । नः॒ । दे॒वा॒ । दे॒वत॑या । यु॒वम् । मधु॑ऽमतः । कृ॒त॒म् ॥ ६ ॥

हे अश्विनौ ᵛमे मदीयं ᵛपरायणं गृहात्परागमनं ᵛमधुमत्। अत्र रसविशेषवाचिना मधुशब्देन तद्गता प्रीतिर्लक्ष्यते। युवयोः प्रसादात् प्रीतियुक्तं भवत्विति शेषः। ᵛपुनरायनं गृहं प्रत्यागमनं ᵛमधुमत् प्रीतियुक्तं भवतु। अपि च हे ᵛदेवा देवौ द्योतमानौ ᵛता तौ ᵛयुवं युवां ᵛनः अस्मान् ᵛमधुमतः प्रीतियुक्तान् ᵛकृतं कुरुतम्। केनेति उच्यते। ᵛदेवतया देवत्वेन। अणिमादिदेवतैश्वर्ययोगेनेत्यर्थः ॥ ॥ १० ॥

'भद्रम्' इत्येकादशर्चं नवमं सूक्तम्। तुह्यादिपरिभाषयेदमप्यास्तारपाङ्क्तम्। सोमदेवताकम्। 'ऋषिश्चान्यस्मात्' इति परिभाषया प्राजापत्य ऐन्द्रो वा विमदो वा वासुक्रो वसुकृद्वर्षिः। तथा चानुक्रान्तं—'भद्रमेकादश सौम्यम्' इति। गतो विनियोगः ॥

**भ॒द्रं नो॒ अपि॑ वातय॒ मनो॒ दक्ष॑मु॒त क्रतु॑म् ।**
**अधा॑ ते स॒ख्ये अन्ध॑सो॒ वि वो॒ मदे॒ रण॒न् गावो॒ न यव॑से॒ विव॑क्षसे ॥ १ ॥**

भ॒द्रम् । नः॒ । अपि॑ । वा॒त॒य॒ । मनः॑ । दक्ष॑म् । उ॒त । क्रतु॑म् ।
अध॑ । ते॒ । स॒ख्ये । अन्ध॑सः । वि । वः॒ । मदे॑ । रण॑न् । गावः॑ । न । यव॑से । विव॑क्षसे ॥ १ ॥

---

१. त–निर्मथितौ। २. त–सुताभ्यामग्नि°; भ–युवामग्नि°। ३. त-मु–स्थिरत्वावहतां। ४. त–°मग्निमस्मदीयानि।

हे सोम त्वं ᵛनः अस्मदीयं ᵛमनः ᵛभद्रं कल्याणं ᵛवातय गमय । अस्माकं मनः शुभसंकल्पं कुर्वित्यर्थः । तथा ᵛदक्षमुत दक्षमपि । 'दक्ष वृद्धौ' । वृद्धं सर्वव्यापिनमन्तरात्मानमपि भद्रं शुभकारित्वलक्षणं[1] प्रापय । अस्माकमन्तरात्मानं शुभकारिणं कुर्वित्यर्थः । उतापि च ᵛक्रतुं प्रज्ञानं भद्रं शुभाध्यवसायलक्षणं प्रापय । शुभाध्यवसायिनं कुर्वित्यर्थः । ᵛअध अथ स्तोतारः ᵛते तव ᵛसख्ये स्तुत्यस्तोतृत्वेज्ययष्टृत्वलक्षणे सखिकर्मणि ᵛरणन् रमन्ताम् । तत्र दृष्टान्तः । ᵛगावो ᵛन ᵛयवसे । यथा धेनवो घासे रमन्ते प्रीतिं कुर्वन्ति तद्वत् । कस्मिन् सति । ᵛअन्धसः सोमाख्यस्यान्नस्य संबन्धिनि ᵛवः तव ᵛविमदे विविधसोमजन्यमदनिमित्ते सति । कस्मादेवम् । यस्मात् ᵛविवक्षसे महान् भवसि ॥

**हृदिस्पृशस्त आसते विश्वेषु सोम धामसु ।**
**अधा कामा इमे मम वि वो मदे वि तिष्ठन्ते वसूयवो विवक्षसे ॥ २ ॥**

हृदिऽस्पृशः । ते । आसते । विश्वेषु । सोम । धामऽसु ।
अध । कामाः । इमे । मम । वि । वः । मदे । वि । तिष्ठन्ते । वसुऽयवः । विवक्षसे ॥२॥

हे ᵛसोम ᵛते तव ᵛहृदिस्पृशः स्तुतिभिर्हृदयं स्पृशन्त ऋत्विजो ᵛविश्वेषु ᵛधामसु सर्वेषु स्थानेषु ᵛआसते त्वां स्तुवन्तस्तिष्ठन्ति । ᵛअध अथ इदंभूताः[2] ᵛकामाः अभिलाषाः ᵛवि ᵛवो ᵛमदे तव सोमपानजन्यविविधमदनिमित्ते सति । सोमयागार्थमित्यर्थः । ᵛवसूयवः वसुकामाः धनमिच्छन्तः ᵛमम । हृदयादिति शेषः । ᵛवि ᵛतिष्ठन्ते उत्तिष्ठन्ति । कस्मादेवम् । यस्मात् ᵛविवक्षसे महान् भवसि ॥

**उत व्रतानि सोम ते प्राहं मिनामि पाक्या ।**
**अधा पितेव सूनवे वि वो मदे मृळा नो अभि चिद्वधाद्विवक्षसे ॥ ३ ॥**

उत । व्रतानि । सोम । ते । प्र । अहम् । मिनामि । पाक्या ।
अध । पिताऽइव । सूनवे । वि । वः । मदे । मृळ । नः । अभि । चित् । वधात् । विवक्षसे ॥३॥

ᵛउत अपि च हे ᵛसोम ᵛअहं ᵛते तुभ्यं ᵛव्रतानि यागादिकर्माणि ᵛपाक्या परिपक्वया सर्वार्थदर्शिन्या प्रज्ञया । यद्वा । पाक्येति व्रतविशेषणमेतत् । पाक्यानि परिपक्वानि परिनिष्ठितानीत्यर्थः । ᵛप्र ᵛमिनामि प्रहिनस्मि । प्रकर्षेण करोमीत्यर्थः । ᵛअध अथ यागानन्तरं ᵛवि ᵛवो ᵛमदे तव विविधे मदे सति ᵛनः अस्मान् ᵛमृळ सुखय । ᵛअभि ᵛचिद्वधात् आभिमुख्येन स्थित्वा शत्र्वादिवधाच्चास्मान् पालयेति शेषः । तत्र दृष्टान्तः । ᵛपितेव ᵛसूनवे । यथा पिता पुत्रार्थं सुखयति सर्वस्मात्पुत्रमेव पालयति तद्वत् । यस्मात् सुख्यमानः पाल्यमानश्चाहं युष्मदर्थं पुनःपुनः सोमयागं करोमि तस्मान्मां सुखय पालय चेत्यर्थः । कस्मादेवमुच्यसे । यस्मात्त्वं ᵛविवक्षसे महान् भवसि । महान्तश्च भक्तान् सुखयन्ति पालयन्ति चेति यावत् ॥

**समु प्र यन्ति धीतयः सर्गासोऽवताँइव ।**
**क्रतुं नः सोम जीवसे वि वो मदे धारया चमसाँइव विवक्षसे ॥ ४ ॥**

सम् । ॐ इति । प्र । यन्ति । धीतयः । सर्गासः । अवतान्ऽइव ।
क्रतुम् । नः । सोम । जीवसे । वि । वः । मदे । धारय । चमसान्ऽइव । विवक्षसे ॥ ४ ॥

१. त-मु-शुभकारिलक्षणं । २. ग-इमे ।

हे ᵛसोम ᵛधीतयः देवतागुणान् दधति गृह्णन्तीति धीतयः स्तुतयोऽस्मदीयाः ᵛसमु संभूयैव ᵛप्र ᵛयन्ति प्रकृष्टया गत्या त्वां गच्छन्ति। तत्र दृष्टान्तः। ᵛसर्गासोऽवतानिव। विसृज्यन्त उदकपानार्थमिति सर्गा गोसंघा यन्त्रस्था घटसंघा वा। ते यथोदकपानार्थमादानार्थं वा अवतान्। कूपनामैतत्। कूपान् प्रति गच्छन्ति तद्वत्। त्वमप्येतज्ज्ञात्वा ᵛक्रतुं यागादिकं कर्म प्रज्ञां वा ᵛनः अस्माकं ᵛजीवसे चिरंजीवनाय ᵛधारय महतादरेण स्थापय। तत्र दृष्टान्तः। ᵛचमसानिव। यथा ᵛवः तव ᵛविमदे विविधसोमजन्यमदे कर्तव्यत्वेन निमित्तभूते सत्यध्वर्युर्हविर्धाने महता यत्नेन चमसान् सोमपात्राणि स्थापयति तद्वत्। कस्मादेवमुच्यसे। यस्मात्त्वं ᵛविवक्षसे महान्भवसि। यद्वा। धीतयः। अङ्गुलिनामैतत्। धयन्ति पिबन्त्याभिरिति धीतयोऽङ्गुलयः। हे सोम त्वां समु प्र यन्ति सहैव प्रकर्षेण त्वां प्राप्नुवन्ति। किमिव। अवतानिव। जलोद्धरणार्थं विसृज्यन्त इति सर्गा रज्जवः। यथा कूपान् प्रति गच्छन्ति तद्वत्। ततस्त्वं नोऽस्माकं जीवसे चिरंजीवनाय क्रतुं कर्म धारय। यथा संपूर्णं भवति तथा पूरय। किमिव। यथा चमसान् स्वयं पूरयसि[1] तद्वत्॥

तव॒ त्ये सो॑म॒ शक्ति॑भि॒र्निका॑मासो॒ व्यृ॑ण्विरे।
गृत्स॑स्य॒ धीरा॑स्त॒वसो॒ वि वो॒ मदे॑ व्र॒जं गोम॑न्तम॒श्विनं॒ विव॑क्षसे ॥ ५ ॥

तव॑। त्ये। सो॒म॒। शक्ति॑ऽभिः। निऽका॑मासः। वि। ऋ॒ण्वि॒रे॒।
गृत्स॑स्य। धीराः॑। त॒वसः॑। वि। वः॒। मदे॑। व्र॒जम्। गोऽम॑न्तम्। अ॒श्विन॑म्। विव॑क्षसे ॥५॥

ᵛनिकामासः[2] दृष्टादृष्टफले नियतकामाः ᵛत्ये ते प्रसिद्धाः ᵛधीराः मेधाविन ऋत्विजः ᵛशक्तिभिः यागादिकर्मभिः सह हे ᵛसोम ᵛगृत्सस्य मेधाविनः ᵛतवसः महतः ᵛतव ᵛव्यृण्विरे विविधाः स्तुतीर्गमयन्ति[3] प्रापयन्ति[3]। कुर्वन्तीत्यर्थः। अतः कारणात् ᵛवि ᵛवो ᵛमदे तव सोमपानजन्यविविधमदनिमित्तभूते सत्यस्मभ्यं ᵛगोमन्तं गोसहितम् ᵛअश्विनम् अश्वसहितं ᵛव्रजं गोष्ठम्। सामर्थ्यात् मन्दुरा लभ्यते। मन्दुरां च देहीति शेषः। कस्मादेवमुच्यसे। यस्मात् ᵛविवक्षसे महान्भवसि॥ ॥११॥

प॒शुं नः॑ सोम रक्षसि पुरु॒त्रा विष्ठि॑तं॒ जग॑त्।
स॒माकृ॑णोषि जी॒वसे॒ वि वो॒ मदे॒ विश्वा॑ सं॒पश्य॒न्भुव॑ना॒ विव॑क्षसे ॥ ६ ॥

प॒शुम्। नः॒। सो॒म॒। र॒क्ष॒सि॒। पु॒रु॒ऽत्रा। विऽस्थि॑तम्। जग॑त्।
स॒म्ऽआकृ॑णोषि। जी॒वसे॑। वि। वः॒। मदे॑। विश्वा॑। स॒म्ऽपश्य॑न्। भुव॑ना। विव॑क्षसे ॥६॥

हे ᵛसोम त्वं ᵛनः अस्मदीयं ᵛपशुं देवयागार्थमुपाकृतं ᵛरक्षसि पालयसि। न केवलं पशुं किंतु ᵛपुरुत्रा बहुधा ᵛविष्ठितं सुरनरतिर्यग्योन्यादिभावेनावस्थितं ᵛजगत् च रक्षसि। किंच स त्वं ᵛसमाकृणोषि जगतो वृत्तिं सम्यगाकरोषीत्यर्थः। किमर्थम्। ᵛजीवसे जीवनार्थम्। किं कुर्वन्। ᵛविश्वा ᵛभुवना विश्वानि भुवनानि भूतजातानि ᵛसंपश्यन्। किमर्थमेतदादिकं सर्वं करोषि उच्यते। ᵛवि ᵛवो ᵛमदे युष्माकं सर्वेषां देवानां विविधहविर्जन्यतृप्त्यर्थम्। उक्तं हि—'इतः प्रदानमुत देवा उप जीवन्ति अमुतः प्रदानं मनुष्या उप जीवन्ति' (तै. सं. ३. २. ९. ७) इति। अत एव त्वं ᵛविवक्षसे महान् भवसि। महतामेतत्सर्वमुचितमित्यर्थः॥

१. त१.२.६.७–पूरयति। २. ग-भ–निकामासो निकामाः। ३. त–स्तुतीर्गमयति।

त्वं नः सोम विश्वतो गोपा अदाभ्यो भव ।
सेध राजन्नप स्रिधो वि वो मदे मा नो दुःशंस ईशता विवक्षसे ॥ ७ ॥

त्वम् । नः । सोम । विश्वतः । गोपाः । अदाभ्यः । भव ।
सेध । राजन् । अप । स्रिधः । वि । वः । मदे । मा । नः । दुःऽशंसः । ईशत । विवक्षसे ॥७॥

हे सोम अदाभ्यः केनाप्यहिंस्यः त्वं विश्वतः सर्वतः नः अस्माकं गोपाः रक्षिता भव । अपि च हे राजन् राजमान सोम त्वं स्रिधः अस्माकमुपक्षपयितॄन् अप सेध अस्मत्तोऽपगमय अपजहि वा[1] । नः अस्माकं दुःशंसः विद्यमानानामविद्यमानानां कर्मणां शंसिता प्रख्यापयिता मा ईशत ईशिता मा भूत् । तव प्रसादादस्माकमपवक्ता कश्चिदपि मा भूदित्यर्थः । किमर्थमेतत्सर्वं प्रार्थ्यसे । वि वो मदे तव विविधसोमादिहविर्जन्यतृप्त्यर्थम् । अतो विवक्षसे त्वं महान्भवसि ॥

त्वं नः सोम सुक्रतुर्वयोधेयाय जागृहि ।
क्षेत्रवित्तरो मनुषो वि वो मदे द्रुहो नः पाह्यंहसो विवक्षसे ॥ ८ ॥

त्वम् । नः । सोम । सुऽक्रतुः । वयःऽधेयाय । जागृहि ।
क्षेत्रवित्ऽतरः । मनुषः । वि । वः । मदे । द्रुहः । नः । पाहि । अंहसः । विवक्षसे ॥८॥

हे सोम सुक्रतुः शोभनप्रज्ञः क्षेत्रवित्तरः क्षेत्रस्यातिशयेन लम्भकः त्वं नः अस्माकं वयोधेयाय अन्नदानाय जागृहि । किंच द्रुहः द्रोग्धुः मनुषः मनुष्याच्छत्रोः सकाशात् नः अस्मान् पाहि रक्ष । अंहसः पापाच्च नोऽस्मान् पाहि । किमर्थम् । वि वो मदे । तव सोमादिहविर्जन्यतृप्त्यर्थमित्यर्थः । विवक्षसे त्वं महान्भवसि ॥

त्वं नो वृत्रहन्तमेन्द्रस्येन्दो शिवः सखा ।
यत्सीं हवन्ते समिथे वि वो मदे युध्यमानास्तोकसातौ विवक्षसे ॥ ९ ॥

त्वम् । नः । वृत्रहन्ऽतम । इन्द्रस्य । इन्दो इति । शिवः । सखा ।
यत् । सीम् । हवन्ते । समऽइथे । वि । वः । मदे । युध्यमानाः । तोकऽसातौ । विवक्षसे ॥९॥

हे वृत्रहन्तम शत्रूणामतिशयेन हन्तर्हे इन्दो हे सोम यः त्वम् इन्द्रस्य शिवः सुखकरः सखा मित्रभूतोऽसि स त्वं नः अस्मान् पाहीति शेषः । कदेति उच्यते । तोकसातौ । तोक इत्यपत्यनाम । सातिः । 'षणु दाने' इत्यस्माद्धातो क्तिन् । दीयतेऽस्मिन्नपत्यमिति तोकसातिः संग्रामविशेषणम् । तस्मिन् । अतिमहतीत्यर्थः । समिथे संग्रामे युध्यमानाः युद्धं कुर्वाणाः शत्रुजनाः सीं सर्वतः यत्[2] यदा[2] हवन्ते युद्धार्थमस्मानाह्वयन्ति । तदास्माकं रक्षिता भवेत्यर्थः । कस्मिन् निमित्ते । वि वो मदे तव विविधहविर्जन्यहर्षनिमित्ते । विवक्षसे त्वं महान्भवसि । महतां हि पालनं युक्तमेवेति ॥

अयं घ स तुरो मद इन्द्रस्य वर्धत प्रियः ।
अयं कुक्षीवतो महो वि वो मदे मतिं विप्रस्य वर्धयद्विवक्षसे ॥ १० ॥

---

१. त-भ६-च । २. ग-त-भ-'यत् यदा' नास्ति ।

अयम् । घ । सः । तुरः । मदः । इन्द्रस्य । वर्धत । प्रियः ।
अयम् । कक्षीवतः । महः । वि । वः । मदे । मतिम् । विप्रस्य । वर्धयत् । विवक्षसे ॥ १० ॥

ᵛअयं ᵛघ ईदृशः खलु ᵛसः प्रसिद्धः अस्माभिरभिषुतः सोमः ᵛतुरः सर्वकार्येषु त्वरणशीलः[1] ᵛमदः मदकरः ᵛप्रियः ᵛइन्द्रस्य तर्पयिता ᵛवर्धत अस्मदीयां मतिमवर्धयत् । ᵛअयं सोमः ᵛकक्षीवतः एतदाख्यस्यर्षेः । कीदृशस्य । ᵛमहः महतः ᵛविप्रस्य मेधाविनः ᵛमतिं प्रज्ञां ᵛवर्धयत् अवर्धयत् । तद्वदस्माकमपि मतिं वर्धयेदित्यर्थः । शिष्टं गतम् ॥

अयं विप्राय दाशुषे वाजाँ इयर्ति गोमतः ।
अयं सप्तभ्य आ वरं वि वो मदे प्रान्धं श्रोणं च तारिषद्विवक्षसे ॥ ११ ॥

अयम् । विप्राय । दाशुषे । वाजान् । इयर्ति । गोऽमतः ।
अयम् । सप्तऽभ्यः । आ । वरम् । वि । वः । मदे ।
प्र । अन्धम् । श्रोणम् । च । तारिषत् । विवक्षसे ॥ ११ ॥

ᵛअयं सोमः ᵛविप्राय मेधाविने ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛगोमतः पशुयुक्तानि ᵛवाजान्[2] अन्नानि ᵛइयर्ति प्रेरयति । प्रयच्छतीत्यर्थः । किंच ᵛअयम् एव सोमः ᵛसप्तभ्यः होतृभ्यः ᵛवरं वरणीयं धनम् ᵛआ प्रयच्छति । ᵛअन्धं नेत्रहीनं दीर्घतममृषिं चक्षुष्प्रदानेन ᵛश्रोणं ᵛच पङ्गुं परावृजमृषिं चरणप्रदानेन एवमुभावृषी ᵛप्र ᵛतारिषत् प्रकर्षेण वर्धितवान् । शिष्टं स्पष्टम् ॥ ॥१२॥

'प्र हि' इति नवर्चं दशमं सूक्तमानुष्टुभं पूषदेवताकम् । आद्याचतुर्थ्यावुष्णिहौ । ऋषिः पूर्ववत् । तथा चानुक्रान्तं—'प्र हि नव पौष्णमानुष्टुभमाद्याचतुर्थ्यौ उष्णिहौ' इति । गतो विनियोगः ॥

प्र ह्यच्छा मनीषाः स्पार्हा यन्ति नियुतः ।
प्र दस्रा नियुद्रथः पूषा अविष्टु माहिनः ॥ १ ॥

प्र । हि । अच्छ । मनीषाः । स्पार्हाः । यन्ति । निऽयुतः ।
प्र । दस्रा । नियुत्ऽरथः । पूषा । अविष्टु । माहिनः ॥ १ ॥

ᵛहि यस्मात्कारणात् ᵛमनीषाः अस्मदीयाः स्तुतिलक्षणा वाचः ᵛअच्छ गुणग्रहणद्वारेण पूषणमभिप्राप्तुं ᵛप्र ᵛयन्ति प्रकर्षेण गच्छन्ति । कीदृश्यः । ᵛस्पार्हाः सर्वगुणोपेतत्वात्स्पृहणीयाः ᵛनियुतः । नियमनाद्वा नियोजनाद्वेत्येतद्रूपम् । अस्माभिर्नियमिता वा नियुक्ता वा । उच्चारिता इत्यर्थः । एतत् ज्ञात्वोपकारस्य प्रत्युपकारं कर्तुं ᵛदस्रा दर्शनीयः ᵛनियुद्रथः गमनाय सर्वदा नियतरथो[3] नियुक्तरथो वा ᵛमाहिनः महान् ᵛपूषा देवः ᵛप्राविष्टु अस्मान् प्रकर्षेण रक्षतु । यद्वा । दस्रा दंसयितारौ कर्मणामुपक्षपयितारौ । परिसमापयितारावित्यर्थः । एवंभूतौ पत्नीयजमानौ पूषा रक्षत्विति योज्यम् ॥

यस्य त्यन्महित्वं वाताप्यमयं जनः ।
विप्र आ वंसद्धीतिभिश्चिकेत सुष्टुतीनाम् ॥ २ ॥

१. त–रमणशीलः; भ१.२.४–त्वरशरणशीलः । २. त-भ६–वाजानि । ३. भ६-मु–नियुतरथौ ।

यस्य॑ । त्यत् । म॒हि॒ऽत्वम् । वा॒ता॒प्य॑म् । अ॒यम् । जनः॑ ।
विप्रः॑ । आ । वं॒स॒त् । धी॒तिऽभिः॑ । चिके॑त । सु॒ऽस्तु॒ती॒नाम् ॥ २ ॥

विप्रः मेधावी[1] अयं जनः यजमानः[1] यस्य पूष्णः संबन्धि त्यत्[2] तत् प्रसिद्धं महित्वं महत्त्वं वाताप्यं मण्डले संभृतं परिपक्वमुदकं धीतिभिः यागादिकर्मभिः[3] आ वंसत् संभजते स देवः सुष्टुतीनां तदीयाः शोभनाः स्तुतीः चिकेत जानातु ॥

स वे॑द सुष्टुती॒नामिन्दु॒र्न पू॒षा वृषा॑ ।
अ॒भि प्सुरः॑ प्रुषायति व्र॒जं न॒ आ प्रु॑षायति ॥ ३ ॥

सः । वे॒द॒ । सु॒ऽस्तु॒ती॒नाम् । इन्दुः॑ । न । पू॒षा । वृषा॑ ।
अ॒भि । प्सुरः॑ । प्रु॒षा॒य॒ति॒ । व्र॒जम् । नः॒ । आ । प्रु॒षा॒य॒ति॒ ॥ ३ ॥

य उक्तगुणः सः पूषा सुष्टुतीनां शोभनस्तोत्राणाम् । स्वरूपमिति शेषः । वेद जानाति । अपि च इन्दुर्न सोम इव तथायं पूषा वृषा कामानां वर्षिता भवति । प्सुरः रूपवान् सः अभि अस्मानभिलक्ष्य प्रुषायति सिञ्चति । तथा नः अस्माकं व्रजं गोष्ठं च आ प्रुषायति आभिमुख्येन सिञ्चति । अस्मभ्यं हिरण्यपश्वादिकं ददातीत्यर्थः ॥

मं॒सी॒महि॑ त्वा व॒यम॒स्माकं॑ देव पूषन् ।
म॒ती॒नां च॒ साध॑नं॒ विप्रा॑णां चाध॒वम् ॥ ४ ॥

मं॒सी॒महि॑ । त्वा॒ । व॒यम् । अ॒स्माक॑म् । दे॒व॒ । पू॒ष॒न् ।
म॒ती॒नाम् । च॒ । साध॑नम् । विप्रा॑णाम् । च॒ । आ॒ऽध॒वम् ॥ ४ ॥

हे देव द्योतमान पूषन् वयं स्तोतारः त्वा त्वां मंसीमहि स्तुमः । कीदृशम् । अस्माकम् अस्मदीयानां मतीनां च अभिलषितानां च साधनं साधयितारं विप्राणां च मेधाविनामपि आधवं परिचर्याद्वारेण कम्पयितारम् ॥

प्रत्य॑र्धिर्य॒ज्ञाना॑मश्वह॒यो रथा॑नाम् ।
ऋषि॒ः स यो मनु॑र्हितो॒ विप्र॑स्य यावयत्स॒खः ॥ ५ ॥

प्रति॑ऽअर्धिः । य॒ज्ञाना॑म् । अ॒श्व॒ऽह॒यः । रथा॑नाम् ।
ऋषिः॑ । सः । यः । मनुः॑ऽहितः । विप्र॑स्य । य॒व॒य॒त्ऽस॒खः ॥ ५ ॥

ऋषिः सर्वस्य द्रष्टा सः पूषा यज्ञानां प्रत्यर्धिः अर्धभाक् रथानां अश्वहयः । हयतिर्गतिकर्मा । रथानां संबन्धिभिरश्वैर्गमनशीलो भवति । अश्वयुक्तेन रथेन सदा गन्तेत्यर्थः । मनुर्हितः मनुष्यहितः यः विप्रस्य मेधाविनः स्तोतुः यावयत्सखः शत्रूणां पृथक्कर्ता सखा भवति स इति पूर्वेण संबन्धः ॥ ॥ १३ ॥

---

१. त–मेधावीयं यजमानजनः; त३-भ१.२.४–मेधावी अयं यजमानः; भ६-मु–मेधावी अयं यजमानजनः । २. त१.२-भ७–य तत् ; त३.४.५.६.७-भ२–यत् ; भ१.४.६–यत् तत् । ३. त-भ१.२.४–यागादिकर्म ।

**आघीषमाणायाः पतिः शुचायाश्च शुचस्य च ।**
**वासोवायोऽवीनामा वासांसि मर्मृजत् ॥ ६ ॥**

आऽघीषमाणायाः । पतिः । शुचायाः । च । शुचस्य । च ।
वासःऽवायः । अवीनाम् । आ । वासांसि । मर्मृजत् ॥ ६ ॥

ᵛआघीषमाणायाः आत्मार्थं धीयमानायाः ᵛशुचायाश्च दीप्ताया अजायाश्च ᵛपतिः स्वामी । न केवलं स्त्रीमात्रस्य किंतु ᵛशुचस्य दीप्तस्य पुंपशोः ᵛच पतिरित्यर्थः । एवंभूतः पूषा देवः ᵛअवीनाम् उरणानां संबन्धिभी रोमभिः ᵛवासोवायः दशापवित्रादीनि वस्त्राणि प्रेरयन् ᵛवासांसि रजकशोध्यानि तानि वस्त्राणि ᵛआ ᵛमर्मृजत् आ समन्तात् प्रकाशोष्णाभ्यां शोधयन् भवति ॥

**इनो वाजानां पतिरिनः पुष्टीनां सखा ।**
**प्र श्मश्रु हर्यतो दूधोद्वि वृथा यो अदाभ्यः ॥ ७ ॥**

इनः । वाजानाम् । पतिः । इनः । पुष्टीनाम् । सखा ।
प्र । श्मश्रु । हर्यतः । दूधोत् । वि । वृथा । यः । अदाभ्यः ॥ ७ ॥

ᵛइनः ईश्वरः पूषा ᵛवाजानां हविरादीनां सर्वेषामन्नानां ᵛपतिः स्वामी ᵛइनः प्रभुः ᵛपुष्टीनां सर्वेषां प्राणिनां स्वभूतानां पोषणानां[1] करणे[1] ᵛसखा मित्रभूतः । सर्वस्योपकारित्वात् । किंच ᵛहर्यतः कामयमानस्य यजमानस्य स्वभूतं सोमं पिबन्निति शेषः। ᵛश्मश्रु श्मश्रूणि ᵛवृथा अनायासेनाप्रयत्नेन ᵛप्र ᵛवि ᵛअदूधोत् प्रकर्षेण विविधं कम्पयति ᵛयः पूषा ᵛअदाभ्यः शत्रुभिरहिंस्यः स इति पूर्वेण संबन्धः॥

**आ ते रथस्य पूषन्नजा धुरं ववृत्युः ।**
**विश्वस्यार्थिनः सखा सनोजा अनपच्युतः ॥ ८ ॥**

आ । ते । रथस्य । पूषन् । अजाः । धुरम् । ववृत्युः ।
विश्वस्य । अर्थिनः । सखा । सनःऽजाः । अनपऽच्युतः ॥ ८ ॥

हे ᵛपूषन् देव ᵛते त्वदीयस्य ᵛरथस्य ᵛधुरम् ᵛअजाः वाहनत्वेन ᵛआ ᵛववृत्युः आवर्तयन्ति । आवहन्तीत्यर्थः । यस्त्वं ᵛविश्वस्य सर्वस्य ᵛअर्थिनः याचकस्य अभिलषितार्थप्रदातृत्वात्सखिभूतः ᵛसनोजाः चिरं जातः ᵛअनपच्युतः स्वाधिकारादनपगतः[2] तस्य[2] ते रथमिति संबन्धः ॥

**अस्माकमूर्जा रथं पूषा अविष्टु माहिनः ।**
**भुवद्वाजानां वृध इमं नः शृणवद्धवम् ॥ ९ ॥**

अस्माकम् । ऊर्जा । रथम् । पूषा । अविष्टु । माहिनः ।
भुवत् । वाजानाम् । वृधः । इमम् । नः । शृणवत् । हवम् ॥ ९ ॥

ᵛमाहिनः महान् ᵛपूषा ᵛअस्माकं स्वभूतं ᵛरथम्[3] ᵛऊर्जा बलेन[3] अन्नेन वा ᵛअविष्टु अवतु रक्षतु । किंच ᵛवाजानाम् अन्नानां ᵛवृधः वर्धकः ᵛभुवत् भवतु । ᵛनः अस्मदीयम् ᵛइमम् ईदृग्भूतं ᵛहवम् आह्वानं ᵛशृणवत् शृणोतु ॥ ॥ १४ ॥

---

१. ग–पोषकानां रक्षणे; त-मु–पोषकाणां करणे । २. त-भ२–°दनपगतस्य; भ१.२.७–°दन-पच्युतश्च तस्य । ३. त–रसं ऊर्जा वतेन; भ–रसं ऊर्जा बलेन ।

'असत्सु मे' इति चतुर्विंशत्यृचमेकादशं सूक्तमिन्द्रपुत्रस्य वसुक्रस्यार्षं त्रैष्टुभमैन्द्रम्। तथा चानुक्रान्तम्—'असत्सु चतुर्विंशतिरैन्द्रो वसुक्रः' इति। महाव्रते मरुत्वतीयशस्त्र एतत्सूक्तम्। तथैव पञ्चमारण्यके सूत्रितं च—'असत्सु मे जरितः साभिवेगः पिबा सोममभि यमुग्र तर्दः' (ऐ. आ. ५. १. १) इति॥

असत्सु मे जरितः साभिवेगो यत्सुन्वते यजमानाय शिक्षम्।
अनाशीर्दामहमस्मि प्रहन्ता सत्यध्वृतं वृजिनायन्तमाभुम्॥ १॥

असत्। सु। मे। जरितरिति। सः। अभिऽवेगः। यत्। सुन्वते। यजमानाय। शिक्षम्।
अनाशीःऽदाम्। अहम्। अस्मि। प्रऽहन्ता। सत्यऽध्वृतम्। वृजिनऽयन्तम्। आभुम्॥ १॥

वासुक्रेषु सूक्तेषु बाहुल्येनेन्द्रः स्तूयते। इदानीमिन्द्रो वसुक्रं स्तोतुमुद्यतं पुत्रं संबोध्य स्वसामर्थ्यं कथयति येन विज्ञातदेवतारूपः सन् सुखेन स्तोष्यतीति। यद्वा। कार्यकारणयोरेकत्वोपचारात् 'आत्मा वै पुत्रनामासि' (आश्व. गृ. १.१५.११) इति वचनादिन्द्ररूपेणावस्थितो वसुक्र आत्मानं स्तौति। क्वचित् क्वचिदिन्द्रं चेति। हे जरितः स्तोतः मे मम सु शोभनः सः तादृशः अभिवेगः अभिगमनं मनसो वृत्तिविशेषः असत् अस्ति विद्यते। यत् येन अभिवेगेन सुन्वते मदर्थं सोमाभिषवं कुर्वते यजमानाय यज्वने शिक्षम् अभिलषितमर्थं ददामि। किंच अहम् अनाशीर्दाम्। आशीरन्यत्र प्रार्थना इह तु[1] सामर्थ्यात् प्रार्थितं[2] हविरुच्यते। तन्मह्यमददतं जनम्। यद्वा। आशीरिति सोमाश्रयणं दध्युच्यते। तस्यादातारम्। असोमयाजिनमित्यर्थः। प्रहन्ता अस्मि प्रकर्षेण हिंसिता भवामि। कीदृशम्। सत्यध्वृतं सत्यस्य हिंसकम्। अनृतवादिनं चेत्यर्थः। वृजिनायन्तं पापं कर्तुमिच्छन्तम् आभुं व्याप्नुवन्तम्॥

यदीदहं युधये संनयान्यदेवयून्तन्वा३ शूशुजानान्।
अमा ते तुम्रं वृषभं पचानि तीव्रं सुतं पञ्चदशं नि षिञ्चम्॥ २॥

यदि। इत्। अहम्। युधये। सम्ऽनयानि। अदेवऽयून्। तन्वा। शूशुजानान्।
अमा। ते। तुम्रम्। वृषभम्। पचानि। तीव्रम्। सुतम्। पञ्चऽदशम्। नि। सिञ्चम्॥ २॥

यत् यदा अहमित् अहमेव युधये युद्धार्थम् अदेवयून् देवान् यष्टुमनिच्छतोऽयज्वनः[3] संनयानि संगमयामि। कीदृशान्। तन्वा स्वशरीरेण शूशुजानान् आत्मंभरित्वात्पुष्टिलक्षणया दीप्त्या युक्तान्। पुष्टानित्यर्थः। तदा हे इन्द्र अहम् अमा ऋत्विगादिभिः सहितः ते तुभ्यं तुम्रं प्रेरकं बलिनम्। पीवानमित्यर्थः। वृषभं सेचनसमर्थं पुंपशुं पचानि। किंच तीव्रं मदकररसं सुतम् अभिषुतं पञ्चदशम्। प्रतिपत्प्रभृति[4] पञ्चदशसंख्याकासु तिथिषु शुक्लपक्ष एकोत्तरवृद्ध्या पर्णानि जायन्ते। कृष्णपक्षे तु तद्वन्निहीयन्ते। एवंभूतत्वात्पञ्चदशः सोम उच्यते। तम्। यद्वा। त्रिवृत्पञ्चदश-स्तोमोपेतं माध्यंदिनसवनकमित्यर्थः। नि षिञ्चं दशापवित्रे द्रोणकलशे चमसपात्रेऽग्नौ[5] वा[5] सिञ्चामि प्रक्षिपामीत्यर्थः॥

१. त–'तु' नास्ति। २. त–प्रार्थ्यमानं। ३. त–°मिच्छतः अयजनः। ४. ग-त३-भ१.२.४.५–°प्रभृतिषु। ५. त१.२.६.७–चमसपात्रेणाग्नौ च; त४.५–चमसपात्रे अग्नौ व; त३-भ-मु–चमसपात्रे अग्नौ च।

नाहं तं वेद य इति ब्रवीत्यदेवयून्त्समरणे जघन्वान् ।
यदावाख्यत्समरणमृघावदादिद्ध मे वृषभा प्र ब्रुवन्ति ॥ ३ ॥

न । अहम् । तम् । वेद । यः । इति । ब्रवीति । अदेवऽयून् । सम्ऽअरणे । जघन्वान् ।
यदा । अवऽअख्यत् । सम्ऽअरणम् । ऋघावत् । आत् । इत् । ह । मे । वृषभा । प्र । ब्रुवन्ति ॥ ३ ॥

vयः जनः vअदेवयून् देवानकामयमानान्[1] देवद्विषो राक्षसादीन् vसमरणे संग्रामे vजघन्वान् अहं हतवान् vइति vब्रवीति वदति vतं तादृशं मद्यतिरिक्तं जनम् vअहं vन vवेद न जानामि। मत्तोऽन्यः संग्रामे शत्रूणां हन्ता नास्तीत्यर्थः । किंच vयदा यस्मिन्काले vसमरणं संग्रामम् vअवाख्यत् अवाकृतं न्यक्कृतमहं पश्यामि । कीदृशम् । vऋघावत् ऋघावन्तं परस्परं हिंसायुक्तम् । अत्यन्तक्रूरमित्यर्थः । vआत् तदानीं vमे मम स्वभूतानि vवृषभा वृषभकर्माणि दर्पितवृषभस्येव विक्रान्तकर्माणि vप्र[2] vब्रुवन्ति[2] । विद्वज्जना इति शेषः । vइद्ध इतीमौ पदपूरणौ ॥

यदज्ञातेषु वृजनेष्वासं विश्वे सतो मघवानो म आसन् ।
जिनामि वेत्क्षेम आ सन्तमाभुं प्र तं क्षिणां पर्वते पादगृह्य ॥ ४ ॥

यत् । अज्ञातेषु । वृजनेषु । आसम् । विश्वे । सतः । मघऽवानः । मे । आसन् ।
जिनामि । वा । इत् । क्षेमे । आ । सन्तम् । आभुम् ।
प्र । तम् । क्षिणाम् । पर्वते । पादऽगृह्य ॥ ४ ॥

vयत् यदा vअज्ञातेषु शरीरशस्त्रास्त्रबलादिभिरपरिज्ञातेषु vवृजनेषु[3] संग्रामेषु vआसम् अहं युद्धार्थमुपविशामि तदा vविश्वे सर्वे vमघवानः हविर्लक्षणतपोलक्षणधनवन्त ऋषयः vसतः एवं वर्तमानस्य vमे ममेन्द्रस्य समीपे vआसन् उपविशन्ति । मम वीर्यवृद्ध्यर्थं मां स्तुवन्तस्तिष्ठन्तीत्यर्थः । अपि च vक्षेमे जगत्पालने निमित्ते vआ vसन्तम् । आकारोऽभीत्यस्यार्थे वर्तते । सर्वमभिभवन्तम् vआभुं महान्तं शत्रुं vजिनामि vवा विनाशयाम्येव । नात्र विनाशे संशयः । vइत् इति पूरणः । vतं महान्तं शत्रुं vपादगृह्य पादौ गृहीत्वा vपर्वते गिरौ vप्र vक्षिणां प्रहिनस्मि प्रक्षिपामि ॥

न वा उ मां वृजने वारयन्ते न पर्वतासो यदहं मनस्ये ।
मम स्वनात्कृधुकर्णो भयात एवेदनु द्यून्किरणः समेजात् ॥ ५ ॥

न । वै । ऊँ इति । माम् । वृजने । वारयन्ते । न । पर्वतासः । यत् । अहम् । मनस्ये ।
मम । स्वनात् । कृधुऽकर्णः । भयाते । एव । इत् । अनु । द्यून् । किरणः । सम् । एजात् ॥ ५ ॥

vवै vउ इत्येवैव । vवृजने संग्रामे vमां युद्धार्थमुपस्थितं सन्तं vन वारयन्ते केचिन्निवारयितुं समर्था न भवन्ति । vअहं vयत् कर्म vमनस्ये मनसा कर्तुमिच्छामि vपर्वतासः अवितरणक्षमा[4] हिमवदादयो गिरयस्तत्कर्म मनसा प्रोढुं vन शक्नुवन्तीत्यर्थः । किंच vमम इन्द्रस्य vस्वनात् शब्दादेव vकृधुकर्णः नामासुरः यद्वा कृधुकर्णो ह्रस्वकर्णो मन्दश्रवणेन्द्रियो बधिरः स्थावरपिपीलिकादिरपि

---

१. त-भ२-मु—देवान् कामयमानान् । २. ग-भ५—प्रकथयंति; त३-भ६—प्रब्रुवंति प्रकथयंति ।
३. त—' वृजनेषु ' नास्ति । ४. त-भ-मु—अतितरणक्षमा; उद्गीथ—अतिभाक्षमाः ।

ᵛभयाते बिभेति। अपि च ᵛएवेत् एवमेव कुधुकर्णवत् ᵛअनु ᵛद्यून् प्रतिदिनमित्यर्थः। ᵛकिरणः। अन्तर्णीतमत्वर्थमेतत्। किरणवान् रश्मिवानादित्यः ᵛसमेजात् सम्यक्कम्पयते चलति। नियमेन प्रयातीत्यर्थः॥ ॥ १५ ॥

दर्श॒न्न्वत्र॑ शृत॒पाँ अ॑नि॒न्द्रान्बा॑हु॒क्षदः॒ शर॑वे॒ पत्य॑मानान्।
घृषुं॑ वा॒ ये नि॑नि॒दुः सखा॑य॒मध्यू॒ न्वे॑षु प॒वयो॑ ववृत्युः॥ ६॥

दर्शन्। नु। अत्र। शृतऽपान्। अनिन्द्रान्। बाहुऽक्षदः। शरवे। पत्यमानान्।
घृषुम्। वा। ये। निनिदुः। सखायम्। अधि। ॐ इति। नु। एषु। पवयः। ववृत्युः॥ ६॥

ᵛअत्र अस्मिञ्जगति ᵛशृतपान् शृतानि पक्वानि सोमादिहवींष्यपहृत्य पिबतः ᵛअनिन्द्रान् इन्द्रेण मया वर्जितान् ᵛबाहुक्षदः बाहुभिर्यजमानाञ्शकलीकुर्वतः ᵛशरवे हिंसार्थं ᵛपत्यमानान् अभिपततोऽसुरादीन् ᵛनु क्षिप्रं ᵛदर्शन् अहमिन्द्रः पश्यामि। एवंभूतेषु ᵛएषु ᵛअधि उपरि ᵛपवयः मदीयान्यायुधानि ᵛववृत्युः वर्तन्ते। वाशब्दः समुच्चये। ᵛघृषुं महान्तं च ᵛसखायं सखिवत्प्रियं हितस्य कर्तारं मां ᵛये ᵛनिनिदुः निन्दन्ति। ᵛउ इति समुच्चये। एषु चोपरि मदीयान्यायुधानि क्षिप्रं वर्तन्ते॥

अभू॒र्वौक्षी॒र्व्यु॑१॒ आयु॑रान॒ड्दर्ष॒न्नु पूर्वो॒ अप॑रो॒ नु द॑र्षत्।
द्वे प॒वस्ते॒ परि॒ तं न भू॑तो॒ यो अ॒स्य पा॒रे रज॑सो वि॒वेष॑॥ ७॥

अभूः। ॐ इति। औक्षीः। वि। ॐ इति। आयुः। आनट्। दर्षत्। नु। पूर्वः। अपरः। नु। दर्षत्।
द्वे इति। पवस्ते इति। परि। तम्। न। भूतः। यः। अस्य। पारे। रजसः। विवेष॥ ७॥

अत्र मध्यमपुरुषेणेन्द्रस्योच्यमानत्वादृसुक इन्द्रं स्तौति। ᵛउ इत्यवधारणे। हे इन्द्र ᵛअभूः त्वमेव प्रादुर्भवसि। ᵛऔक्षीः काले काले त्वमेव पृथिवीं सिञ्चसि नान्य इत्यर्थः। आनडित्यादौ सर्वत्र परोक्षनिर्देशे प्रत्यक्षीकरणार्थं मध्यमपुरुषेण प्रकृतत्वादेकवाक्यतायै युष्मच्छब्दसमानार्थो भवच्छब्दोऽध्याहर्तव्यः। ᵛवि इति वैविध्ये। ᵛउ इति चार्थे। आयुर्जीवितमुच्यते। इन्द्रो भवान् विविधम् ᵛआयुः च ᵛआनट् व्याप्नोति। आ[1] भूतसंप्लवाज्जीवतीत्यर्थः[1]। किंच ᵛपूर्वः पुरातनो भवानिन्द्रः ᵛनु क्षिप्रं ᵛदर्षत्। 'दॄ विदारणे'। 'सिब्बहुलं लेटि'। वज्रेण शत्रून् विदारयति। ᵛअपरः अन्यः शत्रुः ᵛनु ᵛदर्षत्। नु इति निषेधार्थे। भवन्तमिन्द्रं न विदारयति। भवानेव सर्वं शत्रुजातं हिनस्तीत्यर्थः। अपि च ᵛयः भवानिन्द्रः ᵛअस्य ईदृशस्य ᵛरजसः लोकस्य। त्रैलोक्यस्येत्यर्थः। ᵛपारे परतः। परमसूक्ष्मवायुरूपेण सृष्टिकारणात्मना स्थित्वेति शेषः। ᵛविवेष सर्वतो व्याप्नोति ᵛतं[2] भवन्तमिन्द्रं[2] ᵛद्वे इति सामर्थ्यात् द्यावापृथिव्यौ ᵛन ᵛपरि ᵛभूतः न परिभवतः। अभिभवितुं न शक्नुत इत्यर्थः। कीदृश्यौ। ᵛपवस्ते। पवतिर्गतिकर्मा। अस्मादौणादिकोऽस्तप्रत्ययः। अतः 'अजाद्यतष्टाप्' (पा. सू. ४. १. ४) इति टापि कृते प्रथमाद्विवचने चैतद्रूपं भवति। महत्त्वेन सर्वस्याभिभवनाय गच्छन्त्यौ।

१. ग–आभूतसंप्लवं°; त–अभूत्संप्लवा°; भ१.४–आभूतसंप्ल°; भ१(२)-उद्गीथ–आमहाभूतसंप्लवा°; भ२–अभूतसंपूर्ण°; भ६–अभूतसंप्लवा°; भ७–आभूतं संप्लवं°। २. त१.२.६-मु–तमिंद्रं; त४–तं भद्रं।

गावो यवं प्रयुता अर्यो अक्षन् ता अपश्यं सहगोपाश्चरन्तीः ।
हवा इदर्यो अभितः समायन्कियदासु स्वपतिश्छन्दयाते ॥ ८ ॥

गावः । यवम् । प्रऽयुताः । अर्यः । अक्षन् । ताः । अपश्यम् । सहऽगोपाः । चरन्तीः ।
हवाः । इत् । अर्यः । अभितः । सम् । आयन् । कियत् । आसु । स्वऽपतिः । छन्दयाते ॥८॥

^v^गावः धेनवः ^v^प्रयुताः प्रकर्षेण मिश्रिताः परस्परेण सह भूताः ^v^यवं मद्वृष्टिजनितयवादिघासम् ^v^अक्षन् अदन्ति भक्षयन्ति । ^v^अर्यः सर्वस्य स्वाम्यहं ^v^ताः गाः ^v^अपश्यं पश्यामि । कीदृशीः । ^v^सहगोपाः पशुपालकेन सहिताः ^v^चरन्तीः घासं भक्षयन्तीः । एवंभूतास्ताः परया प्रीत्या पश्यामीत्यर्थः । किंच ^v^हवाः वाहनदोहनार्थमाह्वानार्हा गावः ^v^अर्यः । द्वितीयार्थे प्रथमा । अर्यं स्वामिनं प्रति ^v^अभितः सर्वतः[1] ^v^समायन् । समित्येकीभावे । एकीभूयागच्छन्ति । ^v^इदिति पूरणः । आगतासु ^v^आसु गोषु ^v^स्वपतिः स्वानां गवां स्वामी ^v^कियत् क्षीरं ^v^छन्दयाते दोग्धुं कामयते । मदर्थं दोग्धीत्यर्थः[2] । 'गाव आशिरं दुदुह्रे' ( ऋ. मं. ८. ६९. ६ ) इति वचनात् ॥

सं यद्वयं यवसादो जनानामहं यवाद उर्वज्रे अन्तः ।
अत्रा युक्तोऽवसातारमिच्छादथो अयुक्तं युनजद्ववन्वान् ॥ ९ ॥

सम् । यत् । वयम् । यवसऽअदः । जनानाम् । अहम् । यवऽअदः । उरुऽअज्रे । अन्तरिति ।
अत्र । युक्तः । अवऽसातारम् । इच्छात् । अथो इति । अयुक्तम् । युनजत् । ववन्वान ॥ ९ ॥*

अत्रेदु मे मंससे सत्यमुक्तं द्विपाच्च यच्चतुष्पात्संसृजानि ।
स्त्रीभिर्यो अत्र वृषणं पृतन्यादयुद्धो अस्य वि भजानि वेदः ॥ १० ॥

अत्र । इत् । ऊँ इति । मे । मंससे । सत्यम् । उक्तम् । द्विऽपात् । च । यत् । चतुःऽपात् । सम्ऽसृजानि ।
स्त्रीभिः । यः । अत्र । वृषणम् । पृतन्यात् । अयुद्धः । अस्य । वि । भजानि । वेदः ॥१०॥

^v^मे मम ^v^अत्र अस्मिन् स्तोत्रे ^v^उक्तं मया कथितं ^v^सत्यमित् यथाभूतमेव ^v^मंससे त्वं जानीहि । अर्थवादरूपेण नैतदध्यारोपितगुणमित्यर्थः । ^v^उ इति पूरणः । किंच ^v^द्विपाच्च मनुष्यादिकं च ^v^चतुष्पात् च पश्वादिकं च ^v^यत् स्थावरजङ्गमात्मकं जगत् ^v^संसृजानि अहमुत्पादयानीति त्वं जानीहि । ^v^अत्र अस्मिञ्जगति ^v^स्त्रीभिः स्त्रीसदृशैः बलादिहीनैः पुरुषैः सह ^v^यः शूरंमन्यो जनः ^v^वृषणम् अभिलषितस्य वर्षितारं माम् । परित्यज्येति शेषः । ^v^पृतन्यात् युद्धं कर्तुमिच्छति अहम् ^v^अस्य ईदृशस्य

---

१. त–'सर्वतः' नास्ति । २. तं–भ१.२.४.६–मु–दोग्ध्रीरित्यर्थः । *. त७–मु–अनया ऋषिरिंद्रप्रसादलब्धं स्वस्य सार्वात्म्यं प्रकाशयति । जनानां लोकानां मध्ये ये यवसादः तृणस्यात्तारः पशवः ते वयमिति सं सम्यक् जानीहि । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । ये च यवादः यवोपलक्षितस्यान्नस्य अत्तारो मनुष्यास्तेपि वयमिति संजानीहि । वस्तुतस्तु उर्वज्रे विस्तीर्णे अजिरेंगणे हार्दाकाशरूपे यत् अंतः अंतर्यामिरूपं ब्रह्म तदहमस्मि । अत्रास्मिन् हार्दाकाशे युक्तः समाहितो भवानिंद्रः अवसातारं आत्मनः संभक्तारं इच्छात् इच्छति आत्मसाक्षात्कर्तुं । अथो अपि च अयुक्तं अयोगिनं ववन्वान् । द्वितीयार्थे प्रथमा । वधन्वंतं अतिशयेन विषयान् सेवमानं पुरुषं युनजत् युनक्ति संसारे । शापानुग्रहसमर्थो भवद्रूपोहमेवास्मीति भावः ।

स्वभूतं ^v^वेदः धनम् ^v^अयुद्धः तेन पुरुषेणायोद्धा सन् बलादपहृत्य ^v^वि ^v^भजानि स्तोतृभ्यो यष्टृभ्यश्च ददामीत्यर्थः ॥ ॥ १६ ॥

यस्यानक्षा दुहिता जात्वास कस्तां विद्वाँ अभि मन्याते अन्धाम् ।
कतरो मेनिं प्रति तं मुंचाते य ईं वहाते य ईं वा वरेयात् ॥ ११ ॥

यस्य । अनक्षा । दुहिता । जातु । आस । कः । ताम् । विद्वान् । अभि । मन्याते । अन्धाम् ।
कतरः । मेनिम् । प्रति । तम् । मुचाते । यः । ईम् । वहाते । यः । ईम् । वा । वरेऽयात् ॥ ११ ॥

^v^यस्य इन्द्रस्य मम कारणरूपेणावस्थितस्य ^v^अनक्षा अक्षिवर्जिता दर्शनहीना । अचेतनेत्यर्थः । ^v^दुहिता प्रकृत्याख्या ^v^जातु कदाचित् ^v^आस । असतेर्गत्यर्थस्य[1] लिटि[1] रूपम् । सामर्थ्यात् महाप्रलये मय्येव लीना सती सर्वत्र वर्तते ^v^तां प्रकृतिं ^v^विद्वान् मय्येव लीनां जानन् मत्तोऽन्यो देवः ^v^कः भवति । न कोऽपीत्यर्थः । अपि च ^v^अन्धां दर्शनर्हानामचेतनां ताम् ^v^अभि ^v^मन्याते आत्मन्याश्रयप्रदानेन को देवोऽभिपूजयति । यद्वा । क्षीरोदकवत् घटाकाशवच्च मया सहैकीभूतां तामाभिमुख्येन को जानाति । अहमेव सर्वज्ञः स्वात्मन्याश्रयप्रदानेनाभिपूजयामि । मया सहैकीभूतां तां तत्त्वतोऽहमेव जानामि नान्य इति । किंच ^v^कतरः देवः ^v^मेनिं वज्रं ^v^तं प्रसिद्धं वृत्रादिशत्रुं ^v^प्रति ^v^मुचाते मुञ्चति । स्वयमेव प्रश्नमुत्थाप्येदानीं प्रतिब्रूते । ^v^यः देवः ^v^ईम् एनं शत्रुं ^v^वहाते वहति । अपि ^v^वा ^v^यः ^v^ईम् एनं ^v^वरेयात् वरयितुमिच्छति[2] । स चाहमेव नान्यो मत्सदृशोऽस्तीत्यर्थः ॥

कियती योषा मर्यतो वधूयोः परिप्रीता पन्यसा वार्येण ।
भद्रा वधूर्भवति यत्सुपेशाः स्वयं सा मित्रं वनुते जने चित् ॥ १२ ॥

कियती । योषा । मर्यतः । वधूऽयोः । परिऽप्रीता । पन्यसा । वार्येण ।
भद्रा । वधूः । भवति । यत् । सुऽपेशाः । स्वयम् । सा । मित्रम् । वनुते । जने । चित् ॥ १२ ॥

^v^कियती किंपरिमाणा ^v^योषा स्त्रीजातिः ^v^मर्यतः मनुष्यसंबन्धिनो भोगानाचरतः ^v^वधूयोः स्त्रीकामस्य सर्वात्मकस्यान्तर्यामिरूपेणावस्थितस्येन्द्रस्य ^v^परिप्रीता अनुरक्ता । वशवर्तिनीत्यर्थः । कीदृशस्य । ^v^वार्येण वरणीयेन ^v^पन्यसा स्तोत्रेण स्तुतस्य सत इति शेषः । अपि च ^v^यत् या ^v^वधूः ^v^भद्रा कल्याणी ^v^सुपेशाः शोभनरूपा च ^v^भवति ^v^सा द्रौपदीदमयन्त्यादिका वधूः ^v^स्वयम् आत्मनैव ^v^जने ^v^चित् जनमध्येऽवस्थितमिति ^v^मित्रं प्रियमर्जुननलादिकं पतिं ^v^वनुते याचते । स्वयंवरधर्मेण प्रार्थयते । स च प्रीयमाणो वरजनोऽहमेवेत्यभिप्रायः । 'रूपंरूपं प्रतिरूपो बभूव' (ऋ. सं. ६. ४७. १८) इति मन्त्रलिङ्गात्सर्वात्मकत्वादिति ॥

पत्तो जगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम् ।
आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिम् ॥ १३ ॥

पत्तः । जगार । प्रत्यञ्चम् । अत्ति । शीर्ष्णा । शिरः । प्रति । दधौ । वरूथम् ।
आसीनः । ऊर्ध्वाम् । उपसि । क्षिणाति । न्यङ् । उत्तानाम् । अनु । एति । भूमिम् ॥ १३ ॥

---

१. त-भ४-६–आसतेर्गत्यर्थस्य लेटि । २. त-भ५.६-मु–वारयितुमिच्छति ।

अत्रादित्यात्मनेन्द्रः स्तूयते तदंशत्वात्। आदित्यरूपीन्द्रः ^Vपत्तः रश्म्याख्यैः पादैः ^Vजगार वृष्टिलक्षणमुदकं गिरति[१] गृह्णाति[२] वा। गृहीत्वा च ^Vप्रत्यञ्चम् आत्मानं प्रतिगतमुदकम् ^Vअत्ति भक्षयति। मण्डलेऽवस्थापयतीत्यर्थः। तदनन्तरं ^Vवरूथं वरणीयं वृष्टिलक्षणमुदकं[२] ^Vशीर्ष्णा शिरःस्थानीयेन रश्मिजालेन ^Vशिरः सर्वस्य लोकस्य मस्तकं ^Vप्रति ^Vदधौ दधाति। प्रतिक्षिपतीत्यर्थः। किंच ^Vउपसि उपस्थे स्वसमीपस्थाने मण्डले ^Vआसीनः उपविष्टः सन् ^Vऊर्ध्वाम् उन्नतां स्वदीप्तिं ^Vक्षिणाति हिनस्ति। आलोककरणाय प्रक्षिपतीत्यर्थः। ^Vन्यङ् रश्मिसमूहरूपेण नीचैरञ्चिता गन्ता सन् ^Vउत्तानां विस्तृतां ^Vभूमिम् ^Vअन्वेति अनुगच्छति॥

**बृहन्नच्छायो अपलाशो अर्वा तस्थौ माता विषितो अत्ति गर्भः।**
**अन्यस्या वत्सं रिहती मिमाय कया भुवा नि दधे धेनुरूधः॥ १४॥**

बृहन्। अच्छायः। अपलाशः। अर्वा। तस्थौ। माता। विऽसितः। अत्ति। गर्भः।
अन्यस्याः। वत्सम्। रिहती। मिमाय। कया। भुवा। नि। दधे। धेनुः। ऊधः॥ १४॥

वसुक्रोऽनयादित्यात्मानमिन्द्रं स्तौति[३]। ^Vबृहन् महानादित्यः ^Vअच्छायः छायावर्जितः। तमोरहित इत्यर्थः। ^Vअपलाशः पर्णरहितः पराशदनवर्जितः*। विनाशरहित इत्यर्थः[३]। ^Vअर्वा सततगामी ^Vतस्थौ तिष्ठति। किंच ^Vमाता वृष्टिप्रदानद्वारेण सर्वस्य जगतो निर्माता ^Vविषितः विमुक्तः। निरालम्बन इत्यर्थः। ^Vगर्भः त्रैलोक्यस्य गर्भभूत आदित्यात्मेन्द्रः ^Vअत्ति हवींषि भक्षयति। यद्वा। अनेन[४] विनाशनं[५] लक्ष्यते। पापानि नाशयति। किंच[६] ^Vअन्यस्याः अदित्याख्याया देवमातुः ^Vवत्सम् अपत्यभूतमादित्यं ^Vरिहती आस्वादयन्ती उपजीवन्ती[७] वर्धयन्ती ^Vमिमाय निर्मिमीते। पूर्वस्यां दिश्यहन्यहन्युत्पादयन्तीत्यर्थः। ^Vकया ^Vभुवा केन भावेनाभिप्रायेण। भक्त्या भयेन वेत्यर्थः। ^Vधेनुः द्यौरुदकस्याधारत्वात् क्षरितृत्वाच्च ऊधःस्थानीयमादित्यं[८] ^Vनि ^Vदधे स्थापयति[९]। यद्वा। धेनुर्गौरूधो यथा तद्वदादित्यं द्यौर्धारयति॥

**सप्त वीरासो अधरादुदायन्नष्टोत्तरात्तात्समजग्मिरन् ते।**
**नव पश्चातात्स्थिविमन्त आयन् दश प्राक्सानु वि तिरन्त्यश्नः॥ १५॥**

सप्त। वीरासः। अधरात्। उत्। आयन्। अष्ट। उत्तरात्तात्। सम्। अजग्मिरन्। ते।
नव। पश्चातात्। स्थिविऽमन्तः। आयन्। दश। प्राक्। सानु। वि। तिरन्ति। अश्नः॥१५॥

अनयेन्द्रः प्रजापतिरूपेण स्तूयते। ^Vसप्त सप्तसंख्याकाः ^Vवीरासः प्रजापतेः पुत्रा विश्वामित्रादयः ^Vअधरात् प्रजापतेरधःकायात् ^Vउदायन् उत्पन्ना बभूवुः। ^Vअष्ट अष्टसंख्याकाः ^Vते प्रसिद्धा वालखिल्यादयः ^Vउत्तरात्तात् उत्तरात्कायप्रदेशात् ^Vसमजग्मिरन् संजज्ञिरे। ^Vस्थिविमन्तः स्थानवन्तः ^Vनव नवसंख्याका भृगवः ^Vपश्चातात् पृष्ठतः ^Vआयन् आगताः। उत्पन्ना इत्यर्थः। तथा ^Vदश दशसंख्याका अङ्गिरसः ^Vप्राक् अग्रत उत्पन्नाः सन्तः ^Vअश्नः अशनवतो द्युलोकस्य ^Vसानु उन्नतप्रदेशं

१. त–'गिरति' नास्ति; भ–जिगर्ति। २. त–'गृह्णाति...'मुदकं' नास्ति। ३. ग–तुष्टाव अयमादित्यः बृहन् महान् अच्छायः अपलाशः छायारहितपलाशरहितः। * त५–पराशवदनवर्जितः; भ१.४–परासदनवर्जितः; भ६–पलाशवदनवर्जितः। ४. उद्गीथ–अदनेन। ५. त१.२.७–विलाशं; त३-५-भ-उद्गीथ–विनाशं; मु–विनाशः। ६. त–किं। ७. भ१(२)–उपजीवयंती। ८. भ१(२)ऊधः ऊधःस्थानीय°। ९. भ१(२)स्वोदरे स्थापयति; उद्गीथ–स्वोदरे निदधाति।

ᵛवि ᵛतिरन्ति वर्धयन्ति । अपर आह । सप्तसंख्योपेता वीरा मरुतोऽधरादिन्द्रस्य दक्षिणभागादुद्गमन् । अष्टसंख्याकास्ते मरुत उत्तरभागात् संगच्छन्ते । स्थानवन्तो नवसंख्याकास्ते मरुतः पृष्ठभागादागच्छन्ति । दशसंख्याकास्तेऽश्नाऽशनवत इन्द्रस्य प्राक्प्रदेशे स्थिताः समुच्छ्रितमुदकं तेजो वा ᵛवि ᵛतिरन्ति । मरुतः प्रतिदिशमवस्थायेन्द्रस्य साहाय्यं कुर्वन्तीत्यर्थः ॥ ॥ १७ ॥

दशानामेकं कपिलं समानं तं हिन्वन्ति क्रतवे पार्याय ।
गर्भं माता सुधितं वक्षणास्ववेनन्तं तुषयन्ती बिभर्ति ॥ १६ ॥

दशानाम् । एकम् । कपिलम् । समानम् । तम् । हिन्वन्ति । क्रतवे । पार्याय ।
गर्भम् । माता । सुऽधितम् । वक्षणासु । अवेनन्तम् । तुषयन्ती । बिभर्ति ॥ १६ ॥

ᵛदशानां दशसंख्याकानां पूर्वोक्तानामेवाङ्गिरसां मध्ये ᵛएकं मुख्यं ᵛकपिलम् एतन्नामानं ᵛतं प्रसिद्धमृषिम् । कीदृशम् । ᵛसमानं सदृशम् । केन । सामर्थ्यात् प्रजापतिना । ᵛहिन्वन्ति अवशिष्टा अङ्गिरसः प्रेरयन्ति । किमर्थम् । ᵛक्रतवे यज्ञादिजगत्प्रवर्तनकर्मणे । यद्वा । सम्यग्ज्ञानलक्षणप्रज्ञानाय । कीदृशाय । ᵛपार्याय[1] परिसमापयितव्याय प्रणेतव्याय वा । यज्ञादिकर्मोपदेशनायेत्यर्थः । ᵛमाता प्रकृत्याख्या च ᵛवक्षणासु । वक्षणा इति नद्य उच्यन्ते । ताभिश्चात्रापो लक्ष्यन्ते । प्रकृतिस्थासु सूक्ष्मास्वप्सु ᵛसुधितं सुहितम् । प्रजापतिना स्थापितमित्यर्थः । ᵛअवेनन्तम् । वेनतिः कान्तिकर्मा । तत्र निवासमकामयमानं तादृशं प्रजापतेः ᵛगर्भं ᵛतुषयन्ती तुष्यन्ती सम्यग्ज्ञानादुपदेष्टुं[2] योग्योऽयमिति प्रीता सती ᵛबिभर्ति प्रजापतेर्नियोगाद्धारयति ॥

पीवानं मेषमपचन्त वीरा न्युप्ता अक्षा अनु दीव आसन् ।
द्वा धनुं बृहतीमप्स्व१न्तः पवित्रवन्ता चरतः पुनन्ता ॥ १७ ॥

पीवानम् । मेषम् । अपचन्त । वीराः । निऽउप्ताः । अक्षाः । अनु । दीवे । आसन् ।
द्वा । धनुम् । बृहतीम् । अप्ऽसु । अन्तः । पवित्रऽवन्ता । चरतः । पुनन्ता ॥ १७ ॥

ᵛवीराः प्रजापतेः पुत्रा अङ्गिरसः ᵛपीवानं स्थूलम् । मेदोमांसादियुक्तमित्यर्थः । ᵛमेषम् अजम् ᵛअपचन्त प्रजापतिरूपस्येन्द्रस्यार्थाय पक्वन्तोऽभवन् । पशुयागं कुर्वन्त इत्यर्थः । किंच । लुप्तोपममेतत् । यथा देवानाम् ᵛअक्षाः ᵛदीवे देवने रमणस्थाने ᵛन्युप्ताः निक्षिप्ताः सन्तः ᵛअनु ᵛआसन् संक्रीडमानयोर्द्वयोरेकतरस्यानुगता भवन्ति तथा सर्वेऽङ्गिरसः प्रजापतेरनुगता भवन्ति । ᵛद्वा[3] अङ्गिरसां[3] मध्ये द्वावङ्गिरसौ ᵛधनुम् । धनुशब्दोऽत्र[4] धनुःशब्दपर्यायो धनशब्दपर्यायो वा । धनुर्यथा वधसाधनं तथाज्ञानादिवधसाधनं धनवत्प्रीतिकरं वा । कपिलमित्यर्थः । ᵛबृहतीं प्रजापतेराज्ञया वर्धयित्रीं प्रकृतिम् ᵛअप्स्वन्तः प्रकृतिस्थानां सूक्ष्माणामुदकानां मध्ये ᵛचरतः प्रजापत्यादेशादाराधयतः । कीदृशौ । ᵛपवित्रवन्ता पवित्रवन्तौ । मन्त्रः पवित्रमुच्यते । ध्यानसाधनप्रणवमन्त्रवन्तौ ᵛपुनन्ता शुद्धौ । प्रणवध्यानेनात्मानं संस्कुर्वन्तावित्यर्थः ॥

वि क्रोशनासो विष्वञ्च आयन् पचाति नेमो नहि पक्षदर्धः ।
अयं मे देवः सविता तदाह द्र्वन्न इद्वनवत्सर्पिरन्नः ॥ १८ ॥

---

१. ग-त३-भ५.६–पार्याय प्रापणीयाय । २. ग-त-भ-मु–सम्यग्ज्ञानान्युपदेष्टुं । ३. त-भ१.४.६.७–यद्वा अंगिरसां । ४. त-भ६–धनुःशब्दोत्र ।

वि । क्रोशनासः । विष्वंञ्चः । आयन् । पचाति । नेमः । नहि । पक्षत् । अर्धः ।
अयम् । मे । देवः । सविता । तत् । आह । द्रुऽअंन्नः । इत् । वनवत् । सर्पिःऽअंन्नः ॥ १८ ॥

ᵛवि ᵛक्रोशनासः विविधं प्रजापतिं पितरमाह्वयन्तः ᵛविष्वञ्चः नानागतयो नानापूजना वा सर्वेऽङ्गिरसः ᵛआयन् आगच्छन् । प्रजापतेः सकाशादुत्पन्ना इत्यर्थः । उत्पद्यमानः ᵛनेमः अर्धोऽङ्गिरसां मध्य एको भागः ᵛपचाति प्रजापत्यर्थं हवींषि पचति । ᵛअर्धः अपरो भागः ᵛनहि ᵛपक्षत् नहि पचति । एतत्सर्वं कथमज्ञायि उच्यते । ᵛअयम् ईदृशः ᵛदेवः द्योतमानः ᵛसविता सर्वस्य प्रेरक आदित्यो वा प्रजापतिर्वा ᵛमे मह्यं ᵛतत् सर्वं यथोक्तम् ᵛआह । किंच ᵛसर्पिरन्नः घृतौदनः ᵛद्रुन्न ᵛइत् दार्वोदनः अग्निरपि ᵛवनवत् हविर्द्वारेण प्रजापतिं वनति संभजते ॥

अपश्यं ग्रामं वहमानमारादचक्रया स्वधया वर्तमानम् ।
सिषक्त्यर्यः प्र युगा जनानां सद्यः शिश्ना प्रमिनानो नवीयान् ॥ १९ ॥

अपश्यम् । ग्रामम् । वहमानम् । आरात् । अचक्रया । स्वधया । वर्तमानम् ।
सिसक्ति । अर्यः । प्र । युगा । जनानाम् । सद्यः । शिश्ना । प्रऽमिनानः । नवीयान् ॥ १९ ॥

ᵛअपश्यं वसुक्रोऽहं प्रजापतिरूपमिन्द्रं सम्यग्ज्ञानेन दृष्टवानस्मि । कीदृशम् । ᵛग्रामं भूतसंघं ᵛवहमानं वाहयन्तम् । सृजन्तमित्यर्थः । कुतः । ᵛआरात् दूरात् । उपादानकारणात्प्रकृतित इत्यर्थः । ᵛअचक्रया चक्रवर्जितया रथहीनया ᵛस्वधया स्वयमात्मानं धारयन्त्या सेनया ᵛवर्तमानम् आगच्छन्तम् । एवंभूतमपश्यमित्यर्थः । किंच ᵛअर्यः सर्वस्य स्वामीन्द्रः ᵛजनानां यजमानानां कार्यत्वेन संबन्धिनः ᵛयुगा युगानि यज्ञकालविशेषान् ᵛप्र ᵛसिषक्ति प्रकर्षेण सेवते । कीदृशः । ᵛसद्यः तदानीमेव ᵛशिश्ना शिश्नानि । 'शिश्नं श्नथतेः' ( निरु. ४. १९ ) इति निर्वचनात् श्नथितॄणि ताडयितॄणि राक्षसादिवृन्दानि ᵛप्रमिनानः प्रकर्षेण हिंसन् ᵛनवीयान् शरीरेण च बलपौरुषनयनादिभिश्च[1] नवतरः ॥

एतौ मे गावौ प्रमरस्य युक्तौ मो षु प्र सेधीर्मुहुरिन्ममन्धि ।
आपश्चिदस्य वि नशन्त्यर्थं सूरश्च मर्क उपरो बभूवान् ॥ २० ॥

एतौ । मे । गावौ । प्रऽमरस्य । युक्तौ । मो इति । सु । प्र । सेधीः । मुहुः । इत् । ममन्धि ।
आपः । चित् । अस्य । वि । नशन्ति । अर्थम् । सूरः । च । मर्कः । उपरः । बभूवान् ॥ २० ॥

कार्यकारणयोरभेदोपचारात् 'आत्मा वै पुत्रनामासि' ( आश्व. गृ. १.१५.११ ) इति वचनाच्चेन्द्ररूपेणावस्थितस्य ᵛप्रमरस्य प्रकर्षेण शत्रूणां मारयितुः ᵛमे मम स्वभूतौ ᵛएतौ एतादृशौ ᵛयुक्तौ रथे नियुक्तौ ᵛसु सुष्ठु पूजितौ ᵛगावौ शत्रून् यज्ञांश्च प्रति गन्तारौ हरी ᵛमो ᵛप्र ᵛसेधीः । स्तुत्युपसंहारकरणेनास्मद्यज्ञान्मापगमय । किं तर्हि ᵛमुहुरित् मुहुर्मुहुः ᵛममन्धि पुनःपुनः स्तुहि ममात्मन्नित्यर्थः । ᵛआपश्चित् वृष्टिलक्षणान्युदकान्यपि ᵛअस्य इन्द्रस्य ᵛअर्थं गतिं ᵛवि ᵛनशन्ति । विनशतिर्व्याप्तिकर्मा । व्याप्नुवन्ति । तथा ᵛसूरश्च सूर्यश्च व्याप्नोति । कीदृशः । ᵛमर्कः मार्जयिता सर्वस्य शोधयिता ᵛउपरः मेघसदृशः ᵛबभूवान् भवन् । मेघवच्छीघ्रगतिः सन्नित्यर्थः ॥ ॥ १८ ॥

१. त–बलजुष°; भ६–बलायुष° ।

अयं यो वज्रः पुरुधा विवृत्तोऽवः सूर्यस्य बृहतः पुरीषात् ।
श्रव इदेना परो अन्यदस्ति तदव्यथी जरिमाणस्तरन्ति ॥ २१ ॥

अयम् । यः । वज्रः । पुरुधा । विऽवृत्तः । अवः । सूर्यस्य । बृहतः । पुरीषात् ।
श्रवः । इत् । एना । परः । अन्यत् । अस्ति । तत् । अव्यथी । जरिमाणः । तरन्ति ॥ २१ ॥

यः अयं वज्रः इन्द्रस्य स्वभूतः सूर्यस्य आदित्यस्य बृहतः महतः पुरीषात् पूरकात् मण्डलात् अवः अवस्तादधोभागे स्थितेषु[1] विवृत्तः वृष्ट्यर्थं प्रवृत्तः पतितः । इच्छब्दोऽप्यर्थे । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । परः परस्तादन्तरिक्षलोकस्योपरि स्थिते सूर्यमण्डले स्थितम् एना एनत् । श्रवः इत्यन्ननाम । तद्धेतुत्वादुदकं श्रव इत्युच्यते । यदप्युदकं मेघोदरगतादुदकात् अन्यत् अपि अस्ति अव्यथी व्यथारहिताः जरिमाणः स्तोतारो मरुदादयः तत् तादृशमुदकं तरन्ति अन्तरिक्षलोकं प्रत्यवतारयन्ति ॥

वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः प्र पतान्पूरुषादः ।
अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत् ॥ २२ ॥

वृक्षेऽवृक्षे । निऽयता । मीमयत् । गौः । ततः । वयः । प्र । पतान् । पुरुषऽअदः ।
अथ । इदम् । विश्वम् । भुवनम् । भयाते । इन्द्राय । सुन्वत् । ऋषये । च । शिक्षत् ॥ २२ ॥

वृक्षेवृक्षे सर्वस्मिन् वृक्षमये धनुषि नियता संबद्धा गौः गोसंबन्धिनी स्नायुमयी मौर्वी मीमयत् । मीमयतिः शब्दकर्मा । आकृष्यमाणा सती शब्दं करोति । ततः तस्माद्धनुषः पुरुषादः शत्रुजनानामत्तारः । मारयितार इत्यर्थः । वयः पक्षिसदृशा गन्तारो बाणाः प्र पतान् शत्रून् प्रति प्रपतन्ति । अथ तदानीम् इन्द्राय इन्द्रार्थं सुन्वत् सोमयागं कुर्वत्[2] ऋषये च शिक्षत् कर्मणां द्रष्ट्रे ऋत्विजे च संपूर्णां दक्षिणां ददत्पि इदम् ईदृशं विश्वं समस्तं भुवनं भूतजातं भयाते इन्द्राद्बिभेति । अन्यत्किमुतेत्यर्थः ॥

देवानां माने प्रथमा अतिष्ठन्कृन्तत्रादेषामुपरा उदायन् ।
त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् ॥ २३ ॥

देवानाम् । माने । प्रथमाः । अतिष्ठन् । कृन्तत्रात् । एषाम् । उपराः । उत् । आयन् ।
त्रयः । तपन्ति । पृथिवीम् । अनूपाः । द्वा । बृबूकम् । वहतः । पुरीषम् ॥ २३ ॥

देवानां सर्वेषां माने निर्माणे । सृष्टिकाल इत्यर्थः । जगत्स्थितिहेतुभूतरसानुप्रदानकर्मणि स्रष्टव्यत्वेन प्रथमा अतिष्ठन् इन्द्रादेशादेते पूर्वं स्थिताः । क[3] एते । मेघाः । कुत एतदवगम्यते । परस्मिन् पादे तेषामनुकथनात् । उक्तं हि मेघा एव माध्यमिका देवगणा इति ( निरु. २. २२ ) । एषाम् एवंभूतानां मेघानां कृन्तत्रात् छेदनात् उपराः । मेघनामैतत् । तत्रस्था[4] आप उच्यन्ते । मेघस्था आपः उदायन्[5] उत्पन्नाः । वृष्टिभावेन भूमौ निपातिता[6] इत्यर्थः । पातितास्वप्स्विन्द्रस्याज्ञया पर्जन्यो वायुरादित्य इत्येते त्रयः देवाः पृथिवीं भूमिम् । तत्रस्था ओषधीरित्यर्थः । तपन्ति

---

१. ग-त३.४-भ६-स्थितेषु मेघेषु । २. त-भ-कुर्वन् । ३. त-एका । ४. ग-अतः तत्रस्था; त-तत्र तत्रस्था; त३-भ५-अत्र तत्रस्था । ५. त-भ६-उदारयन् । ६. ग-त३-भ६-निपतिता ।

वृष्टिशीतोष्णैः संतापयन्ति। पावयन्तीत्यर्थः। कीदृशाः। ᵛअनूपाः वर्षादीनामानुपूर्व्येण वप्तारः प्रभावयितारः। प्रक्षेप्तार इत्यर्थः। ᵛद्वा द्वौ वाय्वादित्यौ पाचितास्वोषधीषु स्थितं ᵛपुरीषं सर्वस्य प्रीणयितृ पूरयितृ वा ᵛबृबूकम् उदकमादित्यमण्डलं प्रति ᵛवहतः। वायुः शोषयन्नादित्यो रश्मिभिरादद्रान इत्यर्थः॥

**सा ते॑ जी॒वातु॑रु॒त तस्य॑ विद्धि॒ मा स्मै॑ता॒दृगप॑ गूहः सम॒र्ये।**
**आ॒विः स्वः॑ कृणु॒ते गूह॑ते बु॒सं स पा॒दुर॑स्य नि॒र्णिजो॒ न मु॑च्यते॥ २४॥**

सा। ते॒। जी॒वातुः॑। उ॒त। तस्य॑। वि॒द्धि॒। मा। स्म॒। ए॒ता॒दृक्। अप॑। गु॒हः॒। स॒ऽम॒र्ये॑।
आ॒विः। स्व१॒॑रिति॑ स्वः॑। कृ॒णु॒ते। गूह॑ते। बु॒सम्।
सः। पा॒दुः। अ॒स्य॒। निः॒ऽनिजः॑। न। मु॒च्य॒ते॒॥ २४॥

अत्रान्तरात्मनेन्द्रः स्तूयते। हे अन्तरात्मन् ᵛते तव ᵛसा तादृश्यादित्यात्मिका देवता ᵛजीवातुः जीविका जीवनहेतुः। ᵛउत अपि च ᵛतस्य आदित्यस्य ᵛएतादृक् ईदृशं स्वरूपं ᵛसमर्ये। संग्रामवाची समर्यशब्दोऽत्र यज्ञवाची। यज्ञे ᵛविद्धि जानीहि। स्तुत्यत्वेनेति शेषः। ᵛमा ᵛस्म ᵛअप ᵛगूहः मा खल्वपवृणोः। किंच ᵛनिर्णिजः सर्वस्य शोधयितुरादित्यस्य ᵛस ᵛपादुः तच पादनं गमनं रश्मिद्वारेण गत्वा ᵛस्वः सर्वं त्रैलोक्यम् ᵛआविः ᵛकृणुते प्रकाशीकरोति। ᵛबुसम् उदकं ᵛगूहते संवृणोति। आदत्त इत्यर्थः। अस्मै प्रयोजनद्वयायादित्येन निर्वेदनाच्छ्रमेण वा गमनं ᵛन ᵛमुच्यते। न कदाचित्परित्यज्यत इत्यर्थः॥ ॥ १९॥

'विश्वो हि' इति द्वादशर्चं द्वादशं सूक्तं त्रैष्टुभम्। इन्द्रवसुक्रयोः पितापुत्रयोः संवादोऽत्र क्रियते। पुरा वसुक्रे यज्ञं कुर्वाणे सति इन्द्रः प्रच्छन्नरूप आजगाम। तं वसुक्रपत्नीन्द्रागमनाकाङ्क्षिणी विप्रकृष्टमिवाद्ययास्तौत्। अतस्तस्याः सर्षिः इन्द्रो देवता। अथ तस्याः प्रीत्यै वसुक्रेण सहेन्द्रः संवादमकरोत्। द्वितीयादियुजश्चतुर्थीरहिताः पञ्चर्च इन्द्रवाक्यानि। अतस्तासां स ऋषिः। यद्यप्यासु वसुक्रः संबोध्यत्वाद्देवता तथापि ता ऋच ऐन्द्रे कर्मणि विनियोक्तव्या इन्द्रलिङ्गसद्भावात्। चतुर्थीसहिताः शिष्टास्तृतीयाद्या वसुक्रवाक्यानि। अतः स ऋषिस्तासामिन्द्रो देवता। तथा चानुक्रान्तं—'विश्वो हि द्वादशेन्द्रवसुक्रयोः संवाद ऐन्द्रः सूक्तस्य प्रथमयेन्द्रस्य स्नुषा परोक्षवदिन्द्रमाहेन्द्रस्य युजः शेषा ऋषेश्चतुर्थी च' इति। गतो विनियोगः॥

**विश्वो॒ ह्य१॒॑न्यो अ॒रिरा॑ज॒गाम॒ ममेदह॒ श्वशु॑रो॒ ना ज॑गाम।**
**ज॒क्षीया॒द्धाना॑ उ॒त सोमं॑ पपीया॒त्स्वा॑शितः॒ पुन॒रस्तं॑ जगायात्॥ १॥**

विश्वः॑। हि। अ॒न्यः। अ॒रिः। आ॒ऽज॒गाम॑। मम॑। इत्। अह॑। श्वशु॑रः। न। आ। ज॒गा॒म॒।
ज॒क्षी॒यात्। धा॒नाः। उ॒त। सोम॑म्। प॒पी॒या॒त्। सुऽआ॑शितः। पुनः॑। अस्त॑म्। ज॒गा॒या॒त्॥ १॥

अनया वसुक्रपत्नीन्द्रं स्तौति। ᵛअन्यः इन्द्रव्यतिरिक्तः ᵛअरिः अर्य ईश्वरः ᵛविश्वो ᵛहि सर्व एव देवगणः ᵛआजगाम अस्मद्यज्ञं प्रत्याययौ। ᵛइत् इत्यवधारणे। ᵛअह इत्यद्भुते। सर्वदेवगण आगते सति ᵛमम एव ᵛश्वशुरः इन्द्रः ᵛना ᵛजगाम। स इन्द्रो यद्यागच्छेत् तर्हि ᵛधानाः भृष्टयवान् ᵛजक्षीयात् भक्षयेत्। ᵛउत अपि च ᵛसोमम् अभिषुतं ᵛपपीयात् पिबेत्[1]। ततः ᵛस्वाशितः सुष्ठु भुक्तस्तृप्तः सन् ᵛपुनः भूयः ᵛअस्तं स्वगृहं प्रति ᵛजगायात् गच्छेत्॥

---

१. त-भ६–'पिबेत्' नास्ति।

स रोरुवद्वृषभस्तिग्मशृङ्गो वर्ष्मन्तस्थौ वरिमन्ना पृथिव्याः ।
विश्वेष्वेनं वृजनेषु पामि यो मे कुक्षी सुतसोमः पृणाति ॥ २ ॥

सः । रोरुवत् । वृषभः । तिग्मऽशृङ्गः । वर्ष्मन् । तस्थौ । वरिमन् । आ । पृथिव्याः ।
विश्वेषु । एनम् । वृजनेषु । पामि । यः । मे । कुक्षी इति । सुतऽसोमः । पृणाति ॥ २ ॥

ᵛवृषभः कामानां वर्षिता ᵛतिग्मशृङ्गः तीक्ष्णरश्मिः ᵛसः इन्द्रोऽहं ᵛपृथिव्या. अन्तरिक्षस्य ᵛवर्ष्मन् वर्ष्मणि । वर्ष्मन्शब्द उन्नतवचनः स्थिरवचनो वा । एवंभूते ᵛवरिमन् विस्तीर्णे प्रदेशे ᵛरोरुवत भृशं शब्दायमानः सन् ᵛआ ᵛतस्थौ आतिष्ठामि । एवंभूतोऽहं ᵛविश्वेषु सर्वेषु ᵛवृजनेषु संग्रामेषु ᵛएनम् ईदृशं वसुक्रं यजमानं ᵛपामि रक्षामि । ᵛयः यजमानः ᵛसुतसोमः अभिषुतसोमः ᵛमे मम ᵛकुक्षी उभौ पार्श्वौ ᵛपृणाति सोमरसपुरोडाशादिहविर्भिः पूरयति । ईदृशं रक्षामीति संबन्धः॥

अद्रिणा ते मन्दिन इन्द्र तूयान्त्सुन्वन्ति सोमान्पिबसि त्वमेषाम् ।
पचन्ति ते वृषभाँ अत्सि तेषां पृक्षेण यन्मघवन्हूयमानः ॥ ३ ॥

अद्रिणा । ते । मन्दिनः । इन्द्र । तूयान् । सुन्वन्ति । सोमान् । पिबसि । त्वम् । एषाम् ।
पचन्ति । ते । वृषभान् । अत्सि । तेषाम् । पृक्षेण । यत । मघऽवन् । हूयमानः ॥ ३ ॥

हे ᵛइन्द्र ᵛते त्वदर्थं ᵛमन्दिनः मादयितॄन् ᵛतूयान् अविलम्बितान् सोमान्[1] ᵛअद्रिणा अभिषवग्राव्णा ᵛसुन्वन्ति यजमाना अभिषुण्वन्ति । ᵛएषाम् अस्मदादियजमानानां संबन्धिनः[2] ᵛसोमान् ᵛत्वं ᵛपिबसि । किंच त्वदर्थं[3] ᵛवृषभान् पशून् ये च यजमानाः ᵛपचन्ति ᵛतेषां संबन्धिनो[4] हविर्भूतान् पशून् ᵛअत्सि भक्षयसि । हे ᵛमघवन् धनवन्निन्द्र त्वं यदा ᵛपृक्षेण हविर्भूतेनान्नेन निमित्तेन ᵛहूयमानः यजमानैर्हूयसे तदेति पूर्वेण संबन्धः ॥

इदं सु मे जरितरा चिकिद्धि प्रतीपं शापं नद्यो वहन्ति ।
लोपाशः सिंहं प्रत्यञ्चमत्साः क्रोष्टा वराहं निरतक्त कक्षात् ॥ ४ ॥

इदम् । सु । मे । जरितः । आ । चिकिद्धि । प्रतिऽईपम् । शापम् । नद्यः । वहन्ति ।
लोपाशः । सिंहम् । प्रत्यञ्चम् । अत्सारिति । क्रोष्टा । वराहम् । निः । अतक्त । कक्षात ॥ ४ ॥

हे ᵛजरितः शत्रूणां जरयितरिन्द्र त्वं ᵛमे मम ᵛसु शोभनमपि ᵛइदम् ईदृशं रूपं सामर्थ्यम् ᵛआ ᵛचिकिद्धि आ समन्ताज्जानीहि । कीदृशम् । ᵛनद्यः गङ्गाद्याः सरितः ᵛप्रतीपं प्रतिकूलं ᵛशापम् उदकं ᵛवहन्ति । अपि च ᵛलोपाशः । लुप्यमानं तृणमश्नातीति लोपाशो मृगः । मया प्रेषितः सन् ᵛप्रत्यञ्चम् आत्मानं प्रति गच्छन्तं ᵛसिंहम् ᵛअत्साः अत्सारीत् । आभिमुख्येन गच्छति । तथा ᵛक्रोष्टा शृगालः ᵛवराहं बलवन्तमपि सूकरं ᵛकक्षात् अतिगहनदेशात् ᵛनिरतक्त निर्गमयति । एतदपि सर्वं सामर्थ्यं त्वत्पुत्रे मयि त्वत्प्रसादाल्लब्धमपि जानीहीत्यर्थः ॥

---

१. त-भ६–' सोमान् ' नास्ति । २. त-भ१.२.४.६–संबंधीन् । ३. ग-भ२–ते त्वदर्थं । ४. त-भ२.६–संबंधीन् ।

कुथा तं एतदुहमा चिकेतुं गृत्संस्य पाकस्तुवसो मनीषाम् ।
त्वं नो विद्वाँ ऋतुथा वि वोचो यमर्धं ते मघवन् क्षेम्या धूः ॥ ५ ॥

कुथा । ते । एतत् । अहम् । आ । चिकेतम् । गृत्संस्य । पाकः । तवसः । मनीषाम् ।
त्वम् । नः । विद्वान् । ऋतुऽथा । वि । वोचः । यम् । अर्धम् । ते । मघऽवन् । क्षेम्या । धूः ॥५॥

हे इन्द्र ᵛपाकः पक्तव्यप्रज्ञः ᵛअहं ᵛगृत्सस्य मेधाविनः ᵛतवसः वृद्धस्य ᵛते तव ᵛमनीषां स्तुतिम् । कर्तुमिति शेषः । ᵛएतत् ईदृशं त्वदीयं सामर्थ्यं ᵛकथा कथं केन प्रकारेण ᵛआ ᵛचिकेतम् आ समन्तात् जानामि । त्वदुपदेशं विना न जानामीत्यर्थः । तस्मात्कारणात् ᵛविद्वान् सर्वज्ञः ᵛत्वम् एव ᵛनः अस्मभ्यम् ᵛऋतुथा कालेकाले[1] ᵛवि ᵛवोचः विशेषेण ब्रूहि । हे ᵛमघवन् धनवन्निन्द्र ᵛते तव ᵛअर्धं ᵛयं स्तुत्यवयवं कुर्मः[2] सा स्तुतिः ᵛधूः ᵛक्षेम्या क्षेमे भवा क्लेशरहिता वोढुं शक्यास्ति । यस्मात्तव[3] स्तुत्यवयवमेव वयमक्लेशेन कर्तुं न[4] शक्नुमोऽस्माकं मन्दबुद्धित्वात् तस्मात्त्वमेवास्मभ्यं स्वसामर्थ्यं स्तुतिप्रकारं च पुनरपि कथयेत्यर्थः ॥

एवा हि मां तुवसं वुर्धयन्ति दिवश्चिन्मे बृहत उत्तरा धूः ।
पुरू सहस्रा नि शिशामि साकमशत्रुं हि मा जनिता जजान ॥ ६ ॥

एव । हि । माम् । तवसम् । वर्धयन्ति । दिवः । चित् । मे । बृहतः । उत्ऽतरा । धूः ।
पुरु । सहस्रा । नि । शिशामि । साकम् । अशत्रुम् । हि । मा । जनिता । जजान ॥ ६ ॥

ᵛहि यस्मात्कारणात् ᵛएव एवमुक्तप्रकारेण ᵛतवसं प्रवृद्धं ᵛमां स्तोतारः स्तुतिभिः स्तुवन्तो वीर्येण ᵛवर्धयन्ति तस्मात्कारणात् ᵛबृहतः महतः ᵛमे मम इन्द्रस्य ᵛदिवश्चित् द्युलोकादपि ᵛधूः स्तुतिः ᵛउत्तरा उद्गततराधिकतरा । किंच ᵛपुरु पुरूणि बहूनि[5] ᵛसहस्रा शत्रूणां सहस्राणि ᵛसाकं युगपत् ᵛनि ᵛशिशामि तनूकरोमि । हिनस्मीत्यर्थः[6] । ᵛहि यस्मात्कारणात् ᵛजनिता सर्वस्य जनयिता प्रजापतिः ᵛमा मामिन्द्रम् ᵛअशत्रुम् अविद्यमानशत्रुं[7] ᵛजजान जनितवान् ॥ ॥ २० ॥

एवा हि मां तुवसं जुज्ञुरुग्रं कर्मन्कर्मुन्वृषणमिन्द्र देवाः ।
वधीं वृत्रं वज्रेण मन्दसानोऽपं व्रजं महिना दाशुषे वम् ॥ ७ ॥

एव । हि । माम् । तवसम् । जज्ञुः । उग्रम् । कर्मन्ऽकर्मन् । वृषणम् । इन्द्र । देवाः ।
वधीम् । वृत्रम् । वज्रेण । मन्दसानः । अप । व्रजम् । महिना । दाशुषे । वम् ॥ ७ ॥

ᵛहि यस्मात्कारणात् ᵛएव एवमनेनोक्तप्रकारेण हे ᵛइन्द्र ᵛदेवाः मरुदादयः ऋत्विग्यजमाना वा ᵛतवसं महान्तं त्वत्पुत्रं त्वद्रूपेणावस्थितं[8] सन्तं वसुकं ᵛमां ᵛकर्मन्कर्मन् वृत्रवधाग्निहोत्रादौ सर्वस्मिन् कर्मणि ᵛउग्रं शूरमसह्यं वा ᵛवृषणं वर्षितारं हविषां दातारं ᵛजज्ञुः जानन्ति अतः ᵛमन्दसानः मोदमानोऽहं ᵛवज्रेण आयुधेन ᵛवृत्रं मेघमसुरं वा ᵛवधीं अवधिषम् । किंच ᵛदाशुषे हविर्दत्तवते यजमानाय वृष्टिप्रदानार्थं ᵛमहिना महत्त्वेन ᵛव्रजं मेघसमूहम् ᵛअप ᵛवम् अपावम् अपवृणोमि ॥

---

१. त–काले । २. त-भ-वयं कुर्मः । ३. त–यस्मादत; भ६–यस्मादतः । ४. त-भ–' न ' नास्ति । ५. त१.२.६-भ६-मु–बहूनि मे; त५–बहूनि से । ६. त–हिनस्तीत्यर्थः । ७. त-भ६–' अविद्यमानशत्रुं ' नास्ति । ८. त-भ-मु–त्वद्रूपनिरूपणावस्थितं ।

देवास आयन्परशूँरबिभ्रन् वना वृश्चन्तो अभि विड्भिरायन्।
नि सुद्र्वं१ दधतो वक्षणासु यत्रा कृपीटमनु तद्दहन्ति ॥ ८ ॥

देवासः । आयन् । परशून् । अबिभ्रन् । वना । वृश्चन्तः । अभि । विट्ऽभिः । आयन् ।
नि । सुऽद्र्वम् । दधतः । वक्षणासु । यत्र । कृपीटम् । अनु । तत् । दहन्ति ॥ ८ ॥

देवासः देवाः इन्द्रेण चोदिताः मरुतः आयन् गच्छन्ति। मेघवधार्थं परशून् वज्रान् अबिभ्रन् धारयन्ति च। तदनन्तरं विड्भिः मरुदादिप्रजाभिः सहिताः वृश्चन्तः मेघांश्छिन्दन्तः वना वनानि वृष्टिलक्षणान्युदकानि अभि आयन् आभिमुख्येन गच्छन्ति। ततः सुद्र्वं शोभनद्रवणं वृष्ट्युदकं वक्षणासु नदीषु नि दधतः नियमेन स्थापयन्तः यत्र यस्मिन्मेघजाते कृपीटम्। उदकनामैतत्। निगूढमुदकं तिष्ठति त इमे देवाः तत् मेघजातम् अनु लक्षीकृत्य दहन्ति उदकनिर्गमनार्थं शोषयन्ति ॥

शशः क्षुरं प्रत्यञ्चं जगाराद्रिं लोगेन व्यभेदमारात्।
बृहन्तं चिदृहते रन्धयानि वयद्वत्सो वृषभं शूशुवानः ॥ ९ ॥

शशः । क्षुरम् । प्रत्यञ्चम् । जगार । अद्रिम् । लोगेन । वि । अभेदम् । आरात् ।
बृहन्तम् । चित् । ऋहते । रन्धयानि । वयत् । वत्सः । वृषभम् । शूशुवानः ॥ ९ ॥

वसुक्र इन्द्रं प्रतिब्रूते। शशः एतत्संज्ञितो मया प्रेरितो मृगविशेषः प्रत्यञ्चं वधायात्मानं प्रति गच्छन्तं क्षुरं क्षुरवन्तं दृढदीर्घतीक्ष्णनखं सिंहव्याघ्रादिकम्। बलवत्क्रूरशूरमृगमित्यर्थः। जगार गिरति गृह्णाति वा। किंच लोगेन लोष्टेन अद्रिं हिमवदादिकं पर्वतम् आरात् दूरे स्थितमपि वि अभेदम् अहं भिनद्मि। बृहन्तं चित् महान्तमपि हस्त्यादिकम् ऋहते ह्रस्वकायाल्पाय शशकादिकाय रन्धयानि वशं गमयानि। शूशुवानः वीर्येण वर्धमानः वत्सो वृषभं महोक्षं वयत् युद्धाय गच्छति। हे इन्द्र एतदपि सर्वं त्वत्प्रसादादहं करोमीत्यर्थः ॥

सुपर्ण इत्था नखमा सिषायावरुद्धः परिपदं न सिंहः।
निरुद्धश्चिन्महिषस्तर्ष्यावान् गोधा तस्मा अयथं कर्षदेतत् ॥ १० ॥

सुऽपर्णः । इत्था । नखम् । आ । सिसाय । अवऽरुद्धः । परिऽपदम् । न । सिंहः ।
निऽरुद्धः । चित् । महिषः । तर्ष्याऽवान् । गोधा । तस्मै । अयथम् । कर्षत् । एतत् ॥ १० ॥

सुपर्णः पक्षिरूपा गायत्री इत्था अमुत्र द्युलोके नखम् आत्मीयम् आ सिषाय सोमाहरणकाल इन्द्रार्थमाबबन्ध। इन्द्रस्य प्रसादाद्दिवि पदं न्यस्तवतीत्यर्थः। तत्र दृष्टान्तः। अवरुद्धः पञ्जरेणावृतः परिवेष्टितः सिंहः परिपदं न यथा करस्योपरि सर्वतः पादमवबध्नाति। किंच। चित् इत्युपमार्थे। यथा केनापि बद्धपादो निरुद्धः महिषः तर्ष्यावान् उदकाभावे तृषावान्भवति एवमिन्द्रः सोमाहरणात्पूर्वं सोमाभावे तृषितवानभूदिति शेषः। तस्मै। तादर्थ्ये चतुर्थी। तादृशस्य तृषितस्येन्द्रस्यार्थं गोधा। गमयति वर्णानिति गौर्वाक् तत्र निधीयमानत्वात्[1] गायत्री[2] गोधा।

१. भ–निधीयमानात्। २. त–गा; भ६–गो.।

यद्वा। गुधिर्निष्कर्षणार्थः। निष्कृष्य सोमाहरणाद्गोधा गायत्री। ᵛअयथम् अयत्नेन। लीलयेत्यर्थः। ᵛएतत् सोमजातं ᵛकर्षत् आकृष्टवती। दिवः सकाशादाहृतवतीत्यर्थः॥

तेभ्यो गोधा अयथं कर्षदेतद्ये ब्रह्मणः प्रतिपीयन्त्यन्नैः।
सिम उक्ष्णोऽवसृष्टाँ अदन्ति स्वयं बलानि तन्वः शृणानाः॥ ११॥

तेभ्यः। गोधाः। अयथम्। कर्षत्। एतत्। ये। ब्रह्मणः। प्रतिऽपीयन्ति। अन्नैः।
सिमः। उक्ष्णः। अवऽसृष्टान्। अदन्ति। स्वयम्। बलानि। तन्वः। शृणानाः॥ ११॥

ᵛये मरुदादिदेवगणाः ᵛब्रह्मणः परिवृढस्येन्द्रस्य स्वभूतैः ᵛअन्नैः सोमाख्यैः। तृप्ताः सन्त इति शेषः। ᵛप्रतिपीयन्ति। पीयतिर्हिंसाकर्मा। इन्द्रादेशाद्धिंसकान् प्रतिहिंसन्ति ᵛतेभ्यः तेषां देवगणानामर्थाय ᵛगोधाः पूर्वोक्ता गायत्री ᵛअयथम् अनायासेन ᵛएतत् सोमजातं ᵛकर्षत् आकृष्टवती। किंच ᵛसिमः सिमाञ्श्रेष्ठान्। यद्वा। सिमशब्दः सर्वशब्दपर्यायः। सर्वान्। ᵛउक्ष्णः सिञ्चतः[1] ᵛअवसृष्टान् इन्द्रेण निसृष्टाननुज्ञातान् हविर्भूतान् सोमान् यज्ञेषु ᵛअदन्ति भक्षयन्ति[2]। किं कुर्वन्तः[3]। ᵛस्वयम् आत्मनैव ᵛबलानि शत्रूणां सैन्यानि ᵛतन्वः शरीराणि च ᵛशृणानाः हिंसन्तः। गायत्री इन्द्रादेशाद्देवेभ्यः सोममाहृतवतीत्यर्थः॥

एते शमीभिः सुशमी अभूवन् ये हिन्विरे तन्वः सोम उक्थैः।
नृवद्वदन्नुप नो माहि वाजान् दिवि श्रवो दधिषे नाम वीरः॥ १२॥

एते। शमीभिः। सुऽशमी। अभूवन्। ये। हिन्विरे। तन्वः। सोमे। उक्थैः।
नृऽवत्। वदन्। उप। नः। माहि। वाजान्। दिवि। श्रवः। दधिषे। नाम। वीरः॥ १२॥

ᵛये देवर्ष्यादयः ᵛतन्वः शरीराणि ᵛसोमे सोमयागे ᵛउक्थैः शस्त्रैः ᵛहिन्विरे वर्धयन्ति ᵛएते देवादय इन्द्रादेशात् सोमे आहृते सति ᵛशमीभिः सोमयागकर्मभिः ᵛसुशमी सुकर्माणः ᵛअभूवन्। ᵛनृवत् मनुष्यवत् ᵛवदन् इदं युष्मभ्यं मया दत्तमिति व्यक्तां वाचमुच्चारयन् ᵛनः अस्मभ्यम् ᵛउप ᵛमाहि उपगम्य ᵛवाजान् अन्नानि बलानि वा हे इन्द्र त्वं देहीति शेषः। अतः कारणात् ᵛवीरः दानशूरस्त्वं ᵛदिवि द्युलोके ᵛश्रवः दानपतिरिति कीर्तितं ᵛनाम नामधेयं ᵛदधिषे धारयसि॥॥२१॥

'वने न वा' इत्यष्टर्चं त्रयोदशं सूक्तं वसुक्रस्यार्षं त्रैष्टुभमैन्द्रम्। अनुक्रान्तं च—'वने नाष्टौ' इति। चतुर्थेऽहनि स्तोमवृद्धौ ब्राह्मणाच्छंसिन एतत्सूक्तमावापार्थम्। सूत्रितं च—'स्तोमे वर्धमाने को अद्य नर्यो वने न वा यः' (आश्व. श्रौ. ७. १२) इति। महाव्रते निष्केवल्य एतत्सूक्तम्। सूत्रितं च—'प्र वो महे मन्दमानायान्धस इति निविद्धानं वने न वा यो न्यधायि चाकन्' (ऐ. आ. ५. ३. १) इति॥

वने न वा यो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः।
यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान्॥ १॥

वने। न। वा। यः। नि। अधायि। चाकन्। शुचिः। वाम्। स्तोमः। भुरणौ। अजीगरिति।
यस्य। इत्। इन्द्रः। पुरुऽदिनेषु। होता। नृणाम्। नर्यः। नृऽतमः। क्षपाऽवान्॥ १॥

१. त-भ६-'सिञ्चतः' नास्ति। २. त-भ६-मु-'भक्षयन्ति' नास्ति। ३. भ-कुर्वतः।

वने न वा यो न्यधायीति। वने न वन इव वृक्ष इव शकुनिः स्वे नीडे वायमात्मीयं पुत्रं न्यधायि निदधाति शिशुकमजातपक्षम्। स यथा तत्र निहितः चाकन् पश्यन्[1] भयाद्दिशो निरीक्षमाण आसीत्। अथवा कामयमानस्तदुन्मुकमना आसीत्। एवमयमस्मासु वृक्षस्य नीडभूतेषु शकुनिपुत्रभूतः शुचिः व्यपगतसर्वदोषो युवयोः स्वभूतः स्तोमः हे भुरणौ भर्तारावश्विनौ शीघ्रौ वा। भुरण्युरिति क्षिप्रनामेति। किंच यस्य स्तोमस्य पुरुदिनेषु बहुष्वहःसु इन्द्रः होता इन्द्रोऽप्याह्वाता भवति ममायं स्तोमः स्यादिति। किंलक्षणः[2] पुनरिन्द्र आह्वाता। यः नृणां मनुष्याणां नृतमः मनुष्याणामपि मनुष्यतमः। शूराणामपि मध्ये शूरतम इत्यर्थः। नर्यः च नृभ्यो हितो यः क्षपावान् च रात्रिपर्यायेषु सोमभागः। एवंगुणयुक्तेन यः स्तोम इन्द्रेणापि प्रार्थ्यतेऽस्मासु वर्तमानः स युवां प्रति अजीगः नित्यकालमेव गच्छतीत्यर्थः। एवं तावदेनामृचमाश्विनीमिति कृत्वा व्याचक्षते। तदसाधु। ऐन्द्रे हि सूक्ते प्रथमैवेयं भवति। तच्च पुनः पृष्ठयस्य षष्ठेऽहनि स्तोमे वर्धमाने माध्यंदिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते। हे भुरणौ भर्तारौ देवानां पती य एष स्तोमोऽस्मासु निहितः शुचिर्व्यपगतदोषः शकुनिपुत्र इव वने वनावयवे वृक्षे चाकन् पश्यन्निव कामयमान इव वेन्द्रमास्ते। यस्य स्तोमस्य किमिति। यस्येन्द्रः पुरुदिनेषु बहुष्वहःस्वाह्वाताभूत् अपि नाम मामनेन स्तोमेन स्तुयुरिति। किंलक्षणः पुनराह्वाता। यस्येदिन्द्र इति नृणां नृतमो नर्यश्च क्षपावांश्च समानमेनत्पूर्वेणार्थेन। यमेवमिन्द्रः प्रार्थयते स एव स्तोमस्त्वं प्रत्यजीगः गच्छतीत्यर्थः। अथवा स एष स्तोमोऽस्माभिरुदीर्यमाणस्तस्येन्द्रस्य गुणान्गृह्णातीति स्यात्। 'जिगर्तिर्गृह्णातिकर्मा' (निरु. ६.८) इति ह्युक्तम्। एवमत्र चाकन्नित्यस्य चायन्निति वा कामयमान इति वेत्येतौ विपरिणामावुपपद्येते शब्दसारूप्यादर्थाविरोधाच्च। एतस्मिन्निगमे पदविभागगतः कश्चिद्विचारोऽस्ति। तमाह भाष्यकारः–'वेति च य इति च चकार शाकल्यः' ( निरु. ६. २८ ) इति। वेति य इति च पदे चकार शाकल्यः पदकारः। तदेतद्विचार्यमाणं न साधु भवति। किं कारणम्। 'उदात्तं त्वेवमाख्यानमभविष्यत्'। एवमेतस्मिन् पदद्वये सति यदेतदाख्यातं न्यधायीति तदुदात्तमभविष्यत्। यद्वृत्तात्परस्य नित्यमाख्यातस्य निघातो न भवतीति लक्षणविदो मन्यन्ते। न चेदमुदात्तम्। तस्माद्य इति नेदं यद्वृत्तं किं तर्हि वाय इत्येकमेव पदम्। किंच। 'असुसमाप्तश्चार्थः'। अपुष्कलः। एवमेव तस्मिन्पदद्वये सति मन्त्रस्यार्थोऽसुसमाप्तो भवति ॥[3]

प्र ते॑ अ॒स्या उ॒षसः॒ प्राप॑रस्या नृ॒तौ स्या॑म॒ नृत॑मस्य नृ॒णाम् ।
अनु॑ त्रि॒शोकः॑ श॒तमाव॑हन्नॄ॒न्कुत्से॑न॒ रथो॒ यो अस॑त्सस॒वान् ॥ २ ॥

प्र । ते॒ । अ॒स्याः । उ॒षसः॑ । प्र । अप॑रस्याः । नृ॒तौ । स्या॒म॒ । नृऽत॑मस्य । नृ॒णाम् ।
अनु॑ । त्रि॒ऽशोकः॑ । श॒तम् । आ । अ॒व॒ह॒त् । नॄन् । कुत्से॑न । रथः॑ । यः । अस॑त् । स॒स॒ऽवान् ॥२॥

अस्याः वर्तमानाया ईदृश्याः उषसः नृतौ। 'नृ नये' नयने प्रापणे। उदयकाल इत्यर्थः। नृणां नेतॄणां मध्ये नृतमस्य अतिशयेन नेतुः ते तव इन्द्रस्य स्तुत्या यागेन च प्र स्याम वयं प्रकृष्टा भवेम। तथा हे इन्द्र अपरस्याः आगामिन्याश्चोपसो नृतौ प्रापणे तव स्तुत्या यागेन च वयं प्रकृष्टा भवेमेत्याशास्महे। किंच त्रिशोकः नामर्षिः हे इन्द्र त्वामाराध्य त्वत्प्रसादात् शतं बहून् अनु

१. त१.२.६.७-मु–'पश्यन्' नास्ति। २ त-भ–किंच लक्षणः। ३. ग–पुस्तकस्थमेतन्मन्त्रभाष्यं—वने न वृक्ष इव वा यः पक्षनिहितः कामयमानः शुचिः सोमः तथा स्तोमः भुरणाविंदकृत् सौ वां युवामजीगः निर्गमयति। यस्येत् यस्यैव पानेंद्रः पुरुदिनेषु बहुदिनेषु शत्रूणामाह्वाता नृणां मध्ये नृतमः श्रेष्ठः नर्यः नरहितः क्षपावान् शत्रुक्षपणशीलः; भ१.४.७–पुस्तकेषु अस्य मन्त्रस्य भाष्यं नास्ति।

अनुचरभूतान् ᐡनॄन् मनुष्यान् ᐡआवहत् प्रापितवान्। लब्धवानित्यर्थः। तथा तव कुत्सस्य च ᐡससवान्[1] सनिता युगपदेव संभक्ता ᐡयः ᐡरथः ᐡअसत् अस्ति स रथः ᐡकुत्सेन कुत्सो लब्धवानिति शेषः। तथा च मन्त्रान्तरे श्रूयते—'यासि कुत्सेन सरथमवस्युः' (ऋ. सं. ४. १६. ११) इति। यस्मादेवं तस्मात्त्वत्प्रसादाद्वयं प्रकृष्टा भवेमेत्यर्थः॥

कस्ते मद॑ इन्द्र॒ रन्त्यो॑ भूद्दुरो॒ गिरो॑ अ॒भ्यु१॒॑ग्रो वि धा॑व।
कद्वाहो॑ अ॒र्वागुप॑ मा मनी॒षा आ त्वा॑ शक्यामुप॒मं राधो॒ अन्नैः॑॥ ३॥

कः। ते॒। मदः॑। इ॒न्द्र॒। रन्त्यः॑। भू॒त्। दुरः॑। गिरः॑। अ॒भि। उ॒ग्रः। वि। धा॒व॒।
कत्। वाहः॑। अ॒र्वाक्। उप॑। मा॒। म॒नी॒षा। आ। त्वा॒। श॒क्या॒म्। उ॒प॒ऽमम्। राधः॑। अन्नैः॑॥३॥

हे ᐡइन्द्र ᐡते तवेयन्मध्यमोत्तमानां सोमजन्यानां मदानां मध्ये ᐡकः ᐡमदः ᐡरन्त्यः रमयिता प्रीतिकरः ᐡभूत् भवति। त्वत्प्रीतिकरमदयोग्यसोमदानाभिप्रायेणायं प्रश्नः। ᐡउग्रः ओजस्वी त्वं ᐡदुरः यज्ञगृहद्वाराणि ᐡगिरः स्तुतिलक्षणा वाचश्च ᐡअभि ᐡवि ᐡधाव अभ्यागच्छ। किंच ᐡकत् कदा ᐡवाहः। इन्द्रं प्रत्युह्यत इति वाहः सोम उच्यते। एवंभूतः[2] ᐡअर्वाक् त्वत्प्रसादात्फलदानायास्मदभिमुखो भविष्यतीति शेषः। अपि[3] च कदा ᐡमनीषा सर्वार्थदर्शिनी प्रज्ञा सर्वगुणग्राहिणी स्तुतिर्वा ᐡमा मां त्वत्प्रसादात् ᐡउप गमिष्यतीति शेषः[3]। कदा हे इन्द्र ᐡत्वा त्वाम्। ᐡआ इत्युपसर्गश्रुतेर्योग्यपदाध्याहारः। आराध्य वयम् ᐡअन्नैः सह ᐡराधः धनम् ᐡउपमं मत्समीपं ᐡशक्याम्। शकिरत्र गत्यर्थोऽन्तर्भावितण्यर्थः। संगमयेयम्॥

कदु॑ द्यु॒म्नमि॑न्द्र॒ त्वाव॑तो॒ नॄन्कया॑ धि॒या क॑रसे॒ कन्न॒ आग॑न्।
मि॒त्रो न स॒त्य उ॑रुगाय भृ॒त्या अन्ने॑ सम॒स्य यदस॑न्मनी॒षाः॥ ४॥

कत्। ऊँ इति॑। द्यु॒म्नम्। इ॒न्द्र॒। त्वाऽव॑तः। नॄन्। कया॑। धि॒या। क॒र॒से॒। कत्। नः॒। आ। अ॒ग॒न्।
मि॒त्रः। न। स॒त्यः। उ॒रु॒ऽगा॒य॒। भृ॒त्यै। अन्ने॑। स॒म॒स्य॒। यत्। अस॑न्। म॒नी॒षाः॥ ४॥

हे ᐡइन्द्र त्वं ᐡकदु कदा वा ᐡद्युम्नं हविर्लक्षणमस्मदीयमन्नं भुक्त्वेति शेषः। ᐡकया ᐡधिया केन कर्मणा ᐡनॄन् नेतॄनस्मान् ᐡत्वावतः त्वत्सदृशान् ᐡकरसे करिष्यसि। ᐡकत् कदा ᐡनः अस्मान् प्रति ᐡआगन् आगमिष्यसि। ᐡसत्यः अनवद्य इत्यर्थः। ᐡमित्रो ᐡन सखेव तथा। हे ᐡउरुगाय बहुकीर्त इन्द्र त्वं ᐡभृत्यै भरणाय पोषणाय भवसीति शेषः। ᐡयत् यदा ᐡसमस्य अस्मदादिकस्य सर्वस्य जगतः ᐡअन्ने जगत्स्थितिनिमित्त आहारे ᐡमनीषाः अन्नाभिलक्षणा बुद्धयः ᐡअसन् भवेयुः। तदा सर्वस्य पोषणाय त्वं भवसीत्यर्थः॥

प्रेर॑य॒ सूरो॒ अर्थं॒ न पा॒रं ये अ॑स्य॒ कामं॑ जनि॒धाइ॑व॒ ग्मन्।
गिर॑श्च॒ ये ते॑ तुविजात पू॒र्वीर्नर॑ इन्द्र प्रति॒शिक्ष॒न्त्यन्नैः॑॥ ५॥

प्र। ई॒र॒य॒। सूरः॑। अर्थ॑म्। न। पा॒रम्। ये। अ॒स्य॒। काम॑म्। ज॒नि॒धाःऽइ॑व। ग्मन्।
गिरः॑। च॒। ये। ते॒। तु॒वि॒ऽजा॒त॒। पू॒र्वीः। नरः॑। इ॒न्द्र॒। प्र॒ति॒ऽशिक्ष॑न्ति। अन्नैः॑॥५॥

---

१. त-भ-'ससवान्' नास्ति। २. ग-भ१.२.४.७-एवंभूतः सोमः; त१.२.४.५.६-एवंभूमः। ३. त-भ६-'अपि च ... शेषः' नास्ति।

ᐯसूरः सूर्यः ᐯअर्थं ᐯन यथार्तारं गन्तारं योगिनमनुगृह्णन् ᐯपारं संसारस्यान्तमपवर्गं गमयति तथा हे इन्द्र त्वं यजमानान् संसारस्यान्तं ᐯप्रेरय गमय। ᐯये अस्मदादयो यजमानाः ᐯअस्य तवेन्द्रस्य ᐯकामं सोमपानेच्छां ᐯग्मन्। गमिरत्र विपूर्वोऽन्तर्भावितण्यर्थश्च द्रष्टव्यः। विगमयन्ति महता सोमपानेनापनयन्ति। तत्र दृष्टान्तः। ᐯजनिधाइव। जनीनां जायानां संभोगकाले शय्यासु धारयितारः पतयो यथा प्रभूतसंभोगप्रदानेन मैथुनेच्छामपनयन्ति तद्वत्। किंच ᐯनरः नेतारोऽस्मदादयः ᐯये यजमानाः हे ᐯतुविजात बहुरूप। ' रूपंरूपं प्रतिरूपो बभूव ' ( ऋ. सं. ६.४७.१८ ) इति वचनात्। सर्वस्मिन् ᐯइन्द्र ᐯते तुभ्यं ᐯपूर्वीः अनादिकालप्रवृत्ताः ᐯगिरश्च स्तुतिलक्षणा वाचश्च ᐯअन्नैः पुरोडाशादिहविर्भिः सह ᐯप्रतिशिक्षन्ति प्रतिकालं प्रयच्छन्ति तानस्मदीयान् यजमानान् पारं गमयेति पूर्वेण संबन्धः॥ ॥ २२ ॥

मात्रे॒ नु ते॒ सुमि॑ते इन्द्र पू॒र्वी द्यौर्म॒ज्मना॑ पृथि॒वी काव्ये॑न।
वरा॑य ते घृ॒तव॑न्तः सु॒तासः॒ स्वाद्म॑न्भवन्तु पी॒तये॒ मधू॑नि ॥ ६ ॥

मात्रे॒ इति॑। नु। ते॒। सुमि॑ते॒ इति॒ सुऽमि॑ते। इन्द्र॒। पू॒र्वी इति॑। द्यौः। म॒ज्मना॑। पृ॒थि॒वी। काव्ये॑न। वरा॑य। ते॒। घृ॒तऽव॑न्तः। सु॒तासः॑। स्वाद्म॑न्। भ॒व॒न्तु॒। पी॒तये॑। मधू॑नि ॥ ६ ॥

हे ᐯइन्द्र ᐯते तव स्वभूतेन ᐯमज्मना शत्रूणां मज्जकेन ᐯकाव्येन कर्मणा ᐯद्यौः ᐯपृथिवी द्यावापृथिव्यौ ᐯनु क्षिप्रं ᐯसुमिते निर्मिते। कीदृश्यौ। ᐯमात्रे निर्मात्र्यौ ᐯपूर्वी पूर्व्यौ महत्यौ। यस्मादीदृशेन महत्त्वेन युक्तः तस्मात् ᐯघृतवन्तः अग्निमुखत्वात् त्वां क्षरन्तो दीप्तिमन्तो वा सुसंस्कृतत्वात् यद्वाज्यसंयुक्ताः ᐯसुतासः अभिषुताः सोमाः ᐯवराय श्रेष्ठाय तुभ्यमिन्द्राय ᐯस्वाद्मन् ᐯभवन्तु। अस्माभिर्दत्ताः सन्तु। किमर्थम्। ᐯपीतये पानाय। ᐯमधूनि मधुररसात्मकानि पुरोडाशादीन्यन्नानि हवींषि भक्षणार्थं दत्तानि भवन्तु॥

आ मध्वो॑ अस्मा असिच॒न्नम॑त्र॒मिन्द्रा॑य पू॒र्णं स हि स॒त्यरा॑धाः।
स वा॑वृधे॒ वरि॑म॒न्ना पृ॑थि॒व्या अ॒भि क्रत्वा॒ नर्यः॒ पौंस्यै॑श्च ॥ ७ ॥

आ। मध्वः॑। अ॒स्मै॒। अ॒सि॒च॒न्। अम॑त्रम्। इन्द्रा॑य। पू॒र्णम्। सः। हि। स॒त्यऽरा॑धाः। सः। व॒वृ॒धे॒। वरि॑मन्। आ। पृ॒थि॒व्याः। अ॒भि। क्रत्वा॑। नर्यः॑। पौंस्यैः॑। च॒ ॥ ७ ॥

ᐯअस्मै ᐯइन्द्राय अस्येन्द्रस्यार्थं ᐯमध्वः मधुररसस्य सोमस्य ᐯपूर्णम् ᐯअमत्रं ग्रहचमसादिकं पात्रम् ᐯआ ᐯअसिचन् आभिमुख्येन स्थित्वा परया भक्त्यास्मदीया ऋत्विजः सिक्तवन्तः अग्नौ प्रक्षिप्तवन्तः। ᐯहि यस्मात्कारणात् ᐯसः इन्द्रः ᐯसत्यराधाः सत्यधनः। यजमानेभ्यो दातव्यत्वेनाविसंवादिधन[1] इत्यर्थः। तस्मादसिचन्निति[2] संबन्धः। अग्नावासिक्तेन तेन पात्रेण तृप्तः ᐯसः इन्द्रः ᐯपृथिव्याः अन्तरिक्षस्य ᐯवरिमन् अतिशयेन विस्तीर्णे स्थाने आगत्य ᐯअभि ᐯववृधे अभिवर्धते। कीदृश इन्द्रः। ᐯनर्यः नृभ्यो हितः। ᐯक्रत्वा वृत्रवधादिकर्मणा प्रज्ञानेन वा ᐯपौंस्यैश्च[3] युक्त इति शेषः॥

व्या॑न॒ळिन्द्रः॒ पृत॑ना॒ः स्वोजा॒ आस्मै॑ यतन्ते स॒ख्याय॒ पूर्वीः॑।
आ स्मा॒ रथं॒ न पृत॑नासु तिष्ठ॒ यं भ॒द्रया॑ सुम॒त्या चो॒दया॑से ॥ ८ ॥

---

१. त-भ-मु–दातव्येना°। २. त-भ१.२.४.६-मु–तस्मादसिंचन्निति। ३. ग-त४–पौंस्यैश्च वीर्यैश्च।

वि । आनट् । इन्द्रः । पृतनाः । सुऽओजाः । आ । अस्मै । यतन्ते । सख्याय । पूर्वीः ।
आ । स्म । रथम् । न । पृतनासु । तिष्ठ । यम् । भद्रया । सुऽमत्या । चोदयासे ॥ ८ ॥

ᵛस्वोजाः शोभनबलः ᵛइन्द्रः ᵛपृतनाः शत्रुसेनाः ᵛव्यानट् व्याप्नोति। इन्द्रः संग्रामेषु केनाप्यप्रतिहन्यमानः सन् शत्रून् जयतीत्यर्थः । किंच ᵛपूर्वीः । अत्र पूर्वशब्द उत्कृष्टवाची । उत्कृष्टाः शत्रुसेना अप्रभवन्त्यः सत्यः ᵛअस्मै अस्येन्द्रस्य ᵛसख्याय संधित्वलक्षणाय[1] सखित्वाय ᵛआ ᵛयतन्ते । संधिं कर्तुमिच्छन्तीत्यर्थः । अपरोऽर्धर्चः प्रत्यक्षकृतत्वाद्भिन्नं वाक्यम् । हे इन्द्र त्वं ᵛयं स्वीयं रथं ᵛभद्रया कल्याण्या ᵛसुमत्या शोभनया परानुग्रहया बुद्ध्या ᵛचोदयासे यज्ञान् प्रति प्रेरयसि तं ᵛरथम् अस्मद्यज्ञं प्रत्यागन्तुं महतादरेण ᵛआ ᵛतिष्ठ आरोह। तत्र दृष्टान्तः। ᵛपृतनासु संग्रामेषु ᵛरथं ᵛन यथा[2] स्वरथं महतादरेणातिष्ठसि[3] तद्वत्। ᵛस्म इति पदपूरणः ॥ ॥२३॥ ॥२॥

तृतीयेऽनुवाके त्रयोदश सूक्तानि। तत्र ‘ प्र देवत्रा ’ इति पञ्चदशर्चं प्रथमं सूक्तम्। इलूषपुत्रस्य कवषस्यार्षं त्रैष्टुभमब्देवत्यमपांनपाद्देवताकं वा । तथा चानुक्रान्तं—‘ प्र देवत्रा पञ्चोना कवष ऐलूष आपमपोनप्त्रीयं वा ’ इति। ‘ अप इष्य होतः ’ इत्युक्तः सन् होता ‘ प्र देवत्रा ’ इत्याद्या नवर्चोऽनुब्रूयात्। सूत्रितं च—‘ प्र देवत्रा ब्रह्मणे गातुरेत्विति नव हिनोता नो अध्वरं देवयज्येति दशमीम् ’ ( आश्व. श्रौ. ५. १ ) इति ॥

प्र देवत्रा ब्रह्मणे गातुरेत्वपो अच्छा मनसो न प्रयुक्ति ।
महीं मित्रस्य वरुणस्य धासिं पृथुज्रयसे रीरधा सुवृक्तिम् ॥ १ ॥

प्र । देवऽत्रा । ब्रह्मणे । गातुः । एतु । अपः । अच्छ । मनसः । न । प्रऽयुक्ति ।
महीम् । मित्रस्य । वरुणस्य । धासिम् । पृथुऽज्रयसे । रीरध । सुऽवृक्तिम् ॥ १ ॥

ᵛब्रह्मणे । तृतीयार्थे चतुर्थी । ब्रह्मणा स्तोत्रेण । स्तूयमान इति शेषः । ᵛगातुः देवानपो वा प्रतिगमनशीलः सोमः ᵛदेवत्रा देवीर्द्योतमानाः ᵛअपः वसतीवर्येकधनालक्षणान्युदकानि ᵛअच्छ अभि ᵛप्र ᵛएतु प्रकर्षेण गच्छतु । तत्र दृष्टान्तः। ᵛमनसो ᵛन ᵛप्रयुक्ति । यथा मनसः प्रयुक्तिः प्रयोग उद्योगः शीघ्रं गच्छति तद्वत् । एवं सोमेऽपः प्रतिगते सति हे मदीयात्मन् अध्वर्यो वा ᵛमहीं ᵛधासिं महत्सोमलक्षणमन्नं ᵛमित्रस्य ᵛवरुणस्य चार्थाय ᵛपृथुज्रयसे विस्तीर्णजवाय। महागतेरिन्द्रस्य[4] चार्थायेत्यर्थः[5] । ᵛरीरध संसाधय संस्कुरु। दानयोग्यं कुरु। ᵛसुवृक्तिं सुष्ठु दोषैर्वर्जितां स्तुतिं च कुरु ॥

अध्वर्यवो हविष्मन्तो हि भूताच्छाप इतोशतीरुशन्तः ।
अव याश्चष्टे अरुणः सुपर्णस्तमास्यध्वमूर्मिमद्या सुहस्ताः ॥ २ ॥

अध्वर्यवः । हविष्मन्तः । हि । भूत । अच्छ । अपः । इत । उशतीः । उशन्तः ।
अव । याः । चष्टे । अरुणः । सुऽपर्णः । तम् । आ । अस्यध्वम् । ऊर्मिम् । अद्य । सुऽहस्ताः ॥२॥

हे ᵛअध्वर्यवः यूयं ᵛहविष्मन्तो ᵛहि अभिषोतव्येन सोमलक्षणेन हविषा युक्ताः खलु ᵛभूत भवत । किंच हे ᵛउशन्तः सोमाभिषवं कर्तुं कामयमाना अध्वर्यवो यूयम् ᵛउशतीः सोमाभिषवा-

१. ग-सखित्वलक्षणाय; त-भ२.६-मु-संबंधित्वलक्षणाय ; उद्गीथ-सख्याय सखिभावाय सखित्वलक्षणाय। २. ग-यथा रथी। ३. ग-महतादरेणातिष्ठति। ४. त-भ६-महतेरिंद्रस्य। ५. त-वार्थायेत्यर्थः; भ६-वीर्यायेत्यर्थः।

ऋभावमभिलषन्तीरेकधनालक्षणाः अपः अच्छ आभिमुख्येन इत गच्छत। अरुणः रक्तवर्णः सुपर्णः सुपतनः सोमः अव अधस्तात् अन्तरिक्षे याः मेघोदरगता अपः चष्टे पश्यति हे सुहस्ताः सोमाभिषवादिशोभनकर्मकारित्वात् सुवर्णमयपवित्राद्यलंकृताः। यद्वा शोभनहस्ताः। एतेऽध्वर्यवः यूयम् अद्य इदानीं तं तादृशम् ऊर्मिं सोमसंघातं ताभिरद्भिः सह अस्यध्वम् आभिमुख्येन स्थित्वा महतादरेण दशापवित्रे शोधनार्थं प्रक्षिपत ॥

अध्व॑र्यवोऽप॑ इ॒ता स॑मु॒द्रम॒पां नपा॑तं ह॒विषा॑ यजध्वम्।
स वो॑ ददद्व॒र्मिम॒द्या सुपू॑तं॒ तस्मै॒ सोमं॒ मधु॑मन्तं सुनोत ॥ ३ ॥

अध्व॑र्यवः। अपः। इ॒त। स॒मु॒द्रम्। अ॒पाम्। नपा॑तम्। ह॒विषा॑। य॒ज॒ध्व॒म्।
सः। व॒ः। द॒द॒त्। ऊ॒र्मिम्। अ॒द्य। सु॒ऽपू॑तम्। तस्मै॑। सोम॑म्। मधु॑ऽमन्तम्। सु॒नो॒त ॥ ३ ॥

हे अध्वर्यवः यूयम् अपः एकधनालक्षणान्युदकानि। आहर्तुमिति शेषः। समुद्रम् उदधिस्थानीयं जलाशयम् इत गच्छत। इदानीमुत्तरोऽर्धर्चो व्याख्यायते पश्चात् द्वितीयः पादः। आर्थिकोऽयं क्रमः। अद्य इदानीं सः अपां नपात् वः जलाशयं प्रतिगतेभ्यो युष्मभ्यं सुपूतं सुशुद्धम् ऊर्मिं जलसमूहं ददत् ददातु। यूयमपि तेन समूहेन तस्मै अपां नपाते मधुमन्तं मधुरस्वादूपेतं सोमं सुनोत अभिषुणुत। अभिषुतेन सोमाख्येन हविषा अपां नपातं वृष्टिकर्मण्यधिकृतं[1] देवं यजध्वम्॥

यो अ॑नि॒ध्मो दीद॑यद॒प्स्व१॒॑न्तर्यं विप्रा॑स॒ ईळ॑ते अध्व॒रेषु॑।
अपां॑ नपा॒न्मधु॑मतीर॒पो दा॒ याभि॒रिन्द्रो॑ वावृ॒धे वी॒र्या॑य ॥ ४ ॥

यः। अ॒नि॒ध्मः। दीद॑यत्। अ॒प्ऽसु। अ॒न्तः। यम्। विप्रा॑सः। ईळ॑ते। अ॒ध्व॒रेषु॑।
अपा॑म्। न॒पा॒त्। मधु॑ऽमतीः। अ॒पः। दा॒ः। याभि॑ः। इन्द्र॑ः। व॒वृ॒धे। वी॒र्या॑य ॥ ४ ॥

उत्तरार्धस्य प्रत्यक्षकृतत्वादेकवाक्यतायै युष्मच्छब्देन समानार्थो भवच्छब्दः प्रथमार्धेऽध्याहार्यः। यः भवान् अपां नपात् अप्स्वन्तः अपां मध्ये मेघस्थाने अनिध्मः काष्ठवर्जितः सन् दीदयत् दीप्यते। विप्रासः मेधाविन ऋत्विग्यजमानाः अध्वरेषु यागेषु यं भवन्तम् ईळते स्तुवन्ति हे अपां नपात् स त्वं मधुमतीः मधुररसयुक्ताः अपः वृष्टिलक्षणाः दाः अस्मभ्यं देहि। याभिः वसतीवर्येकधनारूपाभिः सोमेभ मिश्रिताभिरद्भिः[2] इन्द्रः वीर्याय वृत्रवधादिशूरकर्मणे ववृधे वर्धते ता अपो देहीति संबन्धः॥

याभि॒ः सोमो॒ मोद॑ते॒ हर्ष॑ते च कल्या॒णीभि॑र्युव॒तिभि॒र्न मर्यः॑।
ता अ॑ध्वर्यो अ॒पो अच्छा॒ परे॑हि॒ यदा॑सि॒ञ्चा ओष॑धीभिः पुनीतात् ॥ ५ ॥

याभि॑ः। सोम॑ः। मोद॑ते। हर्ष॑ते। च॒। क॒ल्या॒णीभि॑ः। यु॒व॒तिऽभि॑ः। न। मर्यः॑।
ताः। अध्व॒र्यो॒ इति॑। अ॒पः। अच्छ॑। परा॑। इ॒हि॒। यत्। आ॒ऽसि॒ञ्चाः। ओष॑धीभिः। पु॒नी॒ता॒त् ॥५॥

अभिषुतः सोमः याभिः वसतीवर्येकधनाख्याभिरद्भिः सह मोदते मुदितो भवति हर्षते च। पुनरुक्तिरादरार्था। अत्यर्थं हृष्यतीत्यर्थः। तत्र दृष्टान्तः। कल्याणीभिः कमनीयाभिः युवतिभिः तरुणीभिः स्त्रीभिः[3] सह मर्यो न यथा मनुष्यो मोदते तद्वत्। हे अध्वर्यो त्वं ताः तादृशीः अपः

१. त-वृष्टिकर्मणाधिकृतं। २. त-मु-श्रिताभिरद्भिः। ३. त-[M]१-'स्त्रीभिः' नास्ति।

अच्छ अभिप्राप्तुं परेहि जलाशयं प्रतिगच्छ। किंच यत् यदा आहुताभिस्ताभिरद्भिः[1] आसिञ्चाः आ समन्तात्सोमानासिञ्चसि तदा ओषधीभिः सोमैः सहापश्च पुनीतात् दशापवित्रेण पुनीहि॥ ॥२४॥

एवेद्यूने युवतयो नमन्त यदीमुशन्नुशतीरेत्यच्छ।
सं जानते मनसा सं चिकित्रेऽध्वर्यवो धिषणापश्च देवीः ॥ ६ ॥

एव। इत्। यूने। युवतयः। नमन्त। यत्। ईम्। उशन्। उशतीः। एति। अच्छ।
सम्। जानते। मनसा। सम्। चिकित्रे। अध्वर्यवः। धिषणा। आपः। च। देवीः॥ ६॥

युवतयः तरुण्यः स्त्रियः यूने तरुणाय नमन्त यथा प्रह्वीभवन्ति एव[2] एवं वसतीवर्येकधनाख्या आपः सोमाय प्रह्वीभवन्ति[2]। यद्वा। युवतयः सोमेन सह मिश्रयिष्य आपो यूने अभिषवादिकर्मणामात्मना सह मिश्रयित्रे कर्त्रेऽध्वर्यवे नमन्त प्रह्वीभवन्त्येव। इत् इति पूरणः। कदा। यत् यदा उशन् अभिषवार्थं वसतीवरीः कामयमानः सोमः सोमाभिषवं कर्तुं कामयमानः अध्वर्युर्वा उशतीः सोमेन सह मिश्रीभावमभिषवादिकर्माङ्गभावं च कामयमानाः ईम् एना अपः अच्छ प्राप्तुम् एति गच्छति तदोपनमन्ते। अध्वर्यवो धिषणा तदीया स्तुतिलक्षणा वाक् च देवीः देव्यः आपश्च मनसा विशिष्टया बुद्ध्या सं जानते सम्यग्जानन्ति सं चिकित्रे स्वं स्वमधिकारं परस्परोपकारं च चक्षुषा सम्यक् पश्यन्ति॥

यो वो वृताभ्यो अकृणोदु लोकं यो वो मह्या अभिशस्तेरमुञ्चत्।
तस्मा इन्द्राय मधुमन्तमूर्मिं देवमादनं प्र हिणोतनापः ॥ ७ ॥

यः। वः। वृताभ्यः। अकृणोत्। ऊँ इति। लोकम्। यः। वः। मह्याः। अभिऽशस्तेः। अमुञ्चत्।
तस्मै। इन्द्राय। मधुऽमन्तम्। ऊर्मिम्। देवऽमादनम्। प्र। हिणोतन। आपः॥ ७॥

यः इन्द्रः वृताभ्यः मेघैरावृताभ्यः परिवेष्टिताभ्यः वः युष्मभ्यमद्भ्यः लोकं मेघोदरान्निर्गमनमार्गम् अकृणोत् अकरोत्। उ इति पूरणः। किंच यो वः युष्मानपः मह्याः महत्याः अभिशस्तेः मेघपरिवेष्टनाभिर्हिंसनात् अमुञ्चत् मोचितवान्। हे आपः यूयं तस्मै तादृशाय इन्द्राय मधुमन्तं मधुरस्वादुयुक्तं देवमादनम् इन्द्रादिदेवानां सोमेन सह मिश्रीभूय तर्पयितारम् ऊर्मिम् अप्संघातं प्र हिणोतन अस्मद्यज्ञं प्रति गमयत। सोमाभिषवकर्माङ्गभावाय प्रस्थापयत॥

प्रास्मै हिनोत मधुमन्तमूर्मिं गर्भो यो वः सिन्धवो मध्व उत्सः।
घृतपृष्ठमीड्यमध्वरेष्वापो रेवतीः शृणुता हवं मे ॥ ८ ॥

प्र। अस्मै। हिनोत। मधुऽमन्तम्। ऊर्मिम्। गर्भः। यः। वः। सिन्धवः। मध्वः। उत्सः।
घृतऽपृष्ठम्। ईड्यम्। अध्वरेषु। आपः। रेवतीः। शृणुत। हवम्। मे॥ ८॥

अत्र यच्छब्दसंबन्धाद्द्वितीयः पादः[3] पूर्वं व्याख्येयः। हे सिन्धवः स्यन्दनशीला आपः वः युष्माकं यः गर्भः मध्वः मधुररसस्य उत्सः उत्स्यन्दनः प्रस्रवणः। यच्छब्दयोगात्तच्छब्दोऽध्याहार्यः। तं मधुमन्तं मधुररसोपेतम् ऊर्मिम् अप्संघातम्। सारमित्यर्थः। अस्मै अस्येन्द्रस्यार्थाय

१. त–आहुताभिस्ताभिः। २. त–'एव...प्रह्वीभवन्ति' नास्ति। ३. त–'पादः' नास्ति।

प्र हिनोत प्रहिणुत। प्रगमयत। कीदृशम्। अध्वरेषु यज्ञेषु घृतपृष्ठं घृतमाज्यं पृष्ठे यस्य तम्। पश्चाद्घृतपातिनमित्यर्थः। ईड्यं स्तुत्यम्। किंच हे आपः यूयं रेवतीः रेवत्यः अस्मभ्यं यानि धनानि दातव्यानि तैर्धनवत्यः मे मदीयं हवम् आह्वानं शृणुत॥

तं सिन्धवो मत्सरमिन्द्रपानमूर्मिं प्र हेत य उभे इयर्ति।
मदच्युतमौशानं नभोजां परि त्रितन्तुं विचरन्तमुत्सम्॥ ९॥

तम्। सिन्धवः। मत्सरम्। इन्द्रऽपानम्। ऊर्मिम्। प्र। हेत। यः। उभे इति। इयर्ति।
मदऽच्युतम्। औशानम्। नभःऽजाम्। परि। त्रिऽतन्तुम्। विऽचरन्तम्। उत्सम्॥ ९॥

हे सिन्धवः स्यन्दनशीला आपः यः युष्मदीयः सारभूतः समूहः उभे अस्मभ्यं दृष्टादृष्टफले दाता सन् इयर्ति कर्माङ्गभावं प्रतिपद्यते मत्सरं मादयितारमिन्द्रादिदेवानां तर्पयितारम् इन्द्रपानं देवानां प्रमुखेनेन्द्रेण पानीयं तं तादृशम् ऊर्मिम् उदकसमूहं प्र हेत प्रगमयत अस्मद्यज्ञं प्रति प्रेरयत। कीदृशम्। मदच्युतं मदस्य च्यावकम् औशानं सोमेन सह मिश्रीभावं कामयमानं नभोजां नभस्यन्तरिक्षे वृष्टिरूपेण[1] जातं परि सर्वतः त्रितन्तुं त्रयाणां लोकानां तनितारं विस्तारयितारं[2] विचरन्तं यज्ञपात्रेषु गच्छन्तम् उत्सम् उत्स्यन्दनम्। तर्पितारं देवान् प्रत्यूर्ध्वं गन्तारमित्यर्थः॥

अपोनप्त्रीय एकधनास्वावृत्तासु 'आववृततीः' इत्येषा। सूत्रितं च—'आववृततीरध नु द्विधारा इत्यावृत्तास्वेकधनासु' (आश्व. श्रौ. ५. १) इति। तत्रैव 'हिनोता नः' इत्येषा। सूत्रं पूर्वमुदाहृतम्॥

आववृततीरध नु द्विधारा गोषुयुधो न नियवं चरन्तीः।
ऋषे जनित्रीर्भुवनस्य पत्नीरपो वन्दस्व सवृधः सयोनीः॥ १०॥

आऽववृततीः। अध। नु। द्विऽधाराः। गोषुऽयुधः। न। निऽयवम्। चरन्तीः।
ऋषे। जनित्रीः। भुवनस्य। पत्नीः। अपः। वन्दस्व। सऽवृधः। सऽयोनीः॥ १०॥

अध अथानन्तरं गोषुयुधो न। गोष्वप्सु निमित्तभूतासु मेघैः सह युध्यत इति गोषुयुदिन्द्रः। तस्य यथा वृष्टिलक्षणा अपः द्विधाराः। द्विशब्दोऽत्रानेकत्ववाची[3]। अनेकधाराः। अपर्यन्तधारा इत्यर्थः। अस्माकमप्येवंस्थिताः आववृततीः आवृत्ताः नियवं सोमं प्रति निश्चयेन मिश्रीभावं चरन्तीः गच्छन्तीः भुवनस्य लोकस्य जनित्रीः जनयित्रीः पत्नीः पालयित्रीश्च सवृधः सह सोमस्य वर्धयित्रीः सयोनीः सोमेन सह समानस्थानाः हे ऋषे मदीयान्तरात्मन् अध्वर्यो वा त्वमेवंभूताः अपः नु क्षिप्रं वन्दस्व स्तुहीत्यर्थः॥ ॥ २५॥

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम्।
ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः॥ ११॥

हिनोत। नः। अध्वरम्। देवऽयज्या। हिनोत। ब्रह्म। सनये। धनानाम्।
ऋतस्य। योगे। वि। स्यध्वम्। ऊधः। श्रुष्टीऽवरीः। भूतन। अस्मभ्यम्। आपः॥ ११॥

---

१. त१.२.५.७–विश्वरूपेण। २. त१.२.७–तारयितारं विस्तारयितारं। ३. त-भ६–द्विशब्दो-नेकत्ववाची।

हे ᵛऋत्विजः ᵛहिनोत प्रहिणुत प्रगमयत प्रोत्सर्पयतैतम् ᵛअध्वरं यज्ञं ᵛदेवयज्या[1] देवयज्यायै देवयजनार्थम्। किंच प्रहिणुत ᵛब्रह्म स्तुत्याख्यं यथाशास्त्रक्रमेण ᵛसनये लब्धये ᵛनः अस्माकं ᵛधनानाम्। किंच ᵛऋतस्य यज्ञस्य ᵛयोगे संयोगे यदेतदूधरिव सोमपूर्णमधिषवणचर्म वर्तते। अथवा योगसंबन्धाच्छकटं योगः। तद्धि[2] तत्रैव[2] युज्यते। तेनाधिषवणचर्मणा ऊधसोऽधस्तादवस्थितेनेति मन्यमानो निरुक्तकारो ब्रवीति[3]—'याज्ञे शकट इति[3] वा' (निरु. ६. २२) इति। यदेतद्यज्ञशकटस्याधस्तादुपरि वाधिषवणचर्म एतत् ᵛवि ᵛष्यध्वं विमुञ्चध्वम्। ग्रहचमसस्थाल्यादिषु यो निषेकः सोमस्यैतद्विमोचनमधिषवणचर्मोधसः। तद्धि सोम उत्सिच्यमाने श्लथीभवति यथेतरद्गोरूधो दुह्यमानायां गवि। एवमृत्विज उक्त्वाधुनैव सोमसंमिश्रा अपो ब्रवीति। यूयमपि हे ᵛआपः एभिः ऋत्विग्भिरुत्सिच्यमानाः ᵛश्रुष्टीवरीः सुखवत्यः ᵛभूतन भवत ᵛअस्मभ्यम्। एवमत्र प्रशब्देनार्थस्य सुतरां प्रकटता भवतीति भाष्यकारेण प्रशब्दोऽध्याहृतः। प्रहिणुतेति। अध्वरमित्यनेन संबन्धाद्धिनोतेः गत्यर्थत्वमुपपद्यते। एतस्या ऋचो व्याख्यानं निरुक्तटीकाया उद्धृतम्॥[4]

प्रातरनुवाकस्य 'आपो रेवतीः' इत्येषा प्रतिपत्। सूत्रितं च—'आपो रेवतीः क्षयथा हि वस्व उप प्रयन्त इति सूक्ते' (आश्व. श्रौ. ४. १३) इति॥

## आपो॒ रेव॑ती॒: क्षय॑था॒ हि वस्व॒: क्रतुं॑ च भ॒द्रं बि॑भृ॒थामृतं॑ च।
## रा॒यश्च॒ स्थ स्व॑प॒त्यस्य॒ पत्नी॒: सर॑स्वती॒ तद्गृ॑ण॒ते वयो॑ धात्॥ १२॥

आपः। रेवतीः। क्षयथ। हि। वस्वः। क्रतुम्। च। भद्रम्। बिभृथ। अमृतम्। च। रायः। च। स्थ। सुऽअपत्यस्य। पत्नीः। सरस्वती। तत्। गृणते। वयः। धात्॥१२॥

हे ᵛआपो ᵛरेवतीः रेवत्यो धनवत्यः यूयं ᵛवस्वः वसुनः धनस्य ᵛक्षयथ ᵛहि ईशिध्वे खलु। किंच ᵛभद्रं भजनीयं ᵛक्रतुं ᵛच सोमयागादिलक्षणं कर्म च ᵛअमृतं ᵛच अमरणरूपं तज्जन्यफलं च ᵛबिभृथ धारयथ। पुष्णीथ वा। तथा ᵛरायश्च धनस्य च ᵛस्वपत्यस्य शोभनपुत्रस्य च ᵛपत्नीः पत्न्यः पालयित्र्यः ᵛस्थ भवथ। तथा ᵛसरस्वती तदभिमानिनी देवता ᵛगृणते स्तुवते मह्यं ᵛतत् इदं सर्वं ᵛवयः अन्नलक्षणं धनं ᵛधात् ददातु[5]॥

अपोनप्त्रीये 'प्रति यदापः' इत्येषा। सूत्रितं च—'प्रति यदापो अदृश्रमायतीरिति प्रतिदृश्यमानासु' (आश्व. श्रौ. ५. १) इति॥

## प्रति॒ यदापो॒ अदृ॑श्रमाय॒तीर्घृ॒तं पयां॑सि॒ बिभ्र॑ती॒र्मधू॑नि।
## अ॒ध्व॒र्युभि॒र्मन॑सा संवि॒दा॒ना इन्द्रा॑य॒ सोमं॑ सुषु॒तं भर॑न्तीः॥ १३॥

प्रति। यत्। आपः। अदृश्रम्। आऽयतीः। घृतम्। पयांसि। बिभ्रतीः। मधूनि। अध्वर्युऽभिः। मनसा। सम्ऽविदानाः। इन्द्राय। सोमम्। सुऽसुतम्। भरन्तीः॥ १३॥

हे ᵛआपः ᵛआयतीः अस्मद्यज्ञं प्रत्यागच्छन्तीः ᵛयत्। 'सुपां सुलुक्' इति विभक्तेर्लुक्। याः युष्मान् ᵛप्रति ᵛअदृश्रं प्रतिपश्यामि ᵛघृतं सोमसंसृष्टमाज्यं ᵛमधूनि मधुसदृशानि मृष्टरसानि

---

१. त-भ-'देवयज्या' नास्ति। २. त-तद्धि तर्हि; भ-मु-तद्धि तर्हि। ३. त-भ-ब्रवीति शकट इति। ४. ग-पुस्तकस्थमेकादशमन्त्रभाष्यं—नोस्माकं अध्वरं यज्ञं देवयागार्थं हिनोत प्रेरयत। अप्सु हि यज्ञाश्रितः ब्रह्मकर्मधनानां लाभाय हिनोत यज्ञस्य योगार्थं ऊधः आत्मीयं वि ष्यध्वं विमुक्तं कुरुत। हे आपः यूयं श्रुष्टीवरीः सुखवत्यो भूतन भवतास्मभ्यं। ५. त-भ६-दधातु।

vपयांसि उदकानि च[1] संभूय vबिभ्रतीः यागकाले धारयन्तीः तथा[2] vअध्वर्युभिः vमनसा अन्तः-करणेन vसंविदानाः संभाषमाणाः किंच vइन्द्राय इन्द्रार्थं vसुषुतं सुष्ठु सुतं vसोमं vभरन्तीः धारयन्तीः* एवंभूतास्ता युष्मान्स्तौमीति शेषः[2] ॥

अपोनप्त्रीये 'एमा अग्मन्' इति द्वे। सूत्रितं च—'एमा अग्मन्रेवतीर्जीवधन्या इति द्वे सप्तासूत्तरया परिधाय' (आश्व. श्रौ. ५ · १) इति ॥

एमा अ॑ग्मन्रे॒वती॑र्जी॒वध॑न्या॒ अध्व॑र्यवः सा॒दय॑ता सखायः ।
नि ब॒र्हिषि॑ धत्तन सोम्यासो॒ऽपां नप्त्रा॑ संविदा॒नास॑ एनाः ॥ १४ ॥

आ । इ॒माः । अ॒ग्म॒न् । रे॒वतीः॑ । जी॒वऽध॑न्याः । अध्व॑र्यवः । सा॒दय॑त । स॒खा॒यः॒ ।
नि । ब॒र्हिषि॑ । ध॒त्त॒न॒ । सो॒म्या॒सः॒ । अ॒पाम् । नप्त्रा॑ । स॒म्ऽवि॒दा॒नासः॑ । ए॒नाः॒ ॥ १४ ॥

vरेवतीः रेवत्यः धनवत्यः vजीवधन्याः जीवानां पालयित्र्यः[3] प्रीणयित्र्यो वा vइमाः ईदृग्भूता आपः vआ vअग्मन् अस्मद्यज्ञं प्रत्यागच्छन्। एतज्ज्ञात्वा हे vसखायः सखिभूता हे vअध्वर्यवः यूयम् vअपां vनप्त्रा वृष्टिकर्मस्वधिकृतेन[4] देवेन सह vसंविदानाः संमन्त्रयमाणाः vएनाः एता अपः vसादयत स्थापयत। कुत्र सादयाम इति उच्यते। vसोम्यासः सोमसंपादिनोऽध्वर्यवः यूयं vबर्हिषि वेद्यामास्तीर्णे कुशमये vनि vधत्तन नियमेन स्थापयत ॥

आग्म॒न्नाप॑ उश॒तीर्ब॒र्हिरेदं न्य॑ध्व॒रे अ॑सदन्देव॒यन्तीः॑ ।
अध्व॑र्यवः सुनु॒तेन्द्रा॑य॒ सोम॒मभू॑दु वः सु॒शका॑ देवय॒ज्या ॥ १५ ॥

आ । अ॒ग्म॒न् । आपः॑ । उ॒श॒तीः । ब॒र्हिः । आ । इ॒दम् । नि । अ॒ध्व॒रे । अ॒स॒द॒न् । दे॒व॒ऽयन्तीः॑ ।
अध्व॑र्यवः । सु॒नु॒त । इन्द्रा॑य । सोम॑म् । अभू॑त् । ऊँ इति॑ । वः॒ । सु॒ऽशका॑ । दे॒व॒ऽय॒ज्या ॥ १५ ॥

vआपः वसतीवर्येकधनाख्याः vइदम् ईदृशं vबर्हिः वेदिस्तरणम् vउशतीः उशत्यः कामय-मानाः vआग्मन्[5] आगच्छन्। अस्मद्यज्ञं प्रति vआ आगत्य च vअध्वरे अस्मदीये यज्ञे vदेवयन्तीः देवान् कामयमानाः। तर्पयितुमिच्छन्त्य इत्यर्थः। vनि vअसदन् न्यसीदन्[6]। एतज्ज्ञात्वा हे vअध्वर्यवः यूयम् vइन्द्राय इन्द्रार्थं vसोमं vसुनुत अभिषुणुत। इदानीमपां प्रसादात् vवः युष्माकं vदेवयज्या देवानिन्द्रादीनुद्दिश्य क्रियमाणा यागक्रिया vसुशका सुष्ठु कर्तुं शक्या vअभूदु आसीदेव ॥ ॥ २६ ॥

'आ नः' इत्येकादशर्चं द्वितीयं सूक्तं कवषस्यार्षं त्रैष्टुभं वैश्वदेवम्। अनुक्रान्तं च—'आ न एकादश वैश्वदेवम्' इति। गतः सूक्तविनियोगः। एकादशिनस्य वैश्वदेवस्य पशोः पुरोडाशस्य 'आ नः' इत्येषानुवाक्या। सूत्रितं च—'विश्वे अद्य मरुतो विश्व ऊत्या नो देवानामुप वेतु शंसः' (आश्व. श्रौ. ३. ७) इति ॥

१. त-'च' नास्ति। २. ग-एतद्धि सर्वं सरस्वत्या विद्यते। तदुक्तं घृतं पयो दुदुहे नाहुषायेति। तथा अध्वर्युभिः मनसा ऐकमत्यं गता इंद्रार्थं सुष्ठ्वभिषुतं सोमं भरंतीः। एवंभूताः प्रत्यपश्यमिति संबंधः। *. त-भ६-'धारयन्तीः' नास्ति। ३. त१.२.३.४.५.६-भ६-मु-पाययित्र्यः; भ१.४-पायित्र्यः; उद्गीथ-वर्धयित्र्यः। ४. ग-भ५.६-वृष्टिकर्मण्यधिकृतेन। ५. त५.७-भ-उद्गीथ-अग्मन्। ६. ग-न्यषीदन्; त-भ-मु-निषीदन्।

आ नो॑ दे॒वाना॒मुप॑ वेतु॒ शंसो॒ विश्वे॑भिस्तु॒रैरव॑से॒ यज॑त्रः ।
तेभि॑र्व॒यं सु॑ष॒खायो॑ भवेम॒ तर॑न्तो॒ विश्वा॑ दु॒रिता॒ स्या॑म ॥ १ ॥

आ । नः॒ । दे॒वाना॑म् । उप॑ । वे॒तु॒ । शंसः॑ । विश्वे॑भिः । तु॒रैः । अव॑से । यज॑त्रः ।
तेभिः॑ । व॒यम् । सु॒ऽस॒खायः॑ । भ॒वे॒म॒ । तर॑न्तः । विश्वा॑ । दुः॒ऽइ॒ता । स्या॒म॒ ॥ १ ॥

ᵛदेवानां स्तोतॄणां ᵛनः अस्माकं ᵛशंसः स्तोतव्यः ᵛयजत्रः यष्टव्यः एवंभूत इन्द्रः ᵛतुरैः त्वरणशीलैः ᵛविश्वेभिः सर्वैः मरुद्भिः सह ᵛअवसे अस्मद्यज्ञरक्षणार्थम् ᵛआ ᵛउप ᵛवेतु उपागच्छतु । ᵛवयम् अपि ᵛतेभिः तैः सह ᵛसुसखायः शोभनसखायः ᵛभवेम स्याम । किंच ᵛविश्वा ᵛदुरिता[1] विश्वानि[2] दुरितानि पापानि ᵛतरन्तः ᵛस्याम ॥

परि॑ चि॒न्मर्तो॒ द्रवि॑णं ममन्यादृ॒तस्य॑ प॒था नम॒सा वि॑वासेत् ।
उ॒त स्वेन॒ क्रतु॑ना॒ सं व॑देत॒ श्रेयां॑सं॒ दक्षं॒ मन॑सा जगृभ्यात् ॥ २ ॥

परि॑ । चि॒त् । मर्तः॑ । द्रवि॑णम् । म॒म॒न्या॒त् । ऋ॒तस्य॑ । प॒था । नम॑सा । आ । वि॒वा॒से॒त् ।
उ॒त । स्वेन॑ । क्रतु॑ना । सम् । व॒दे॒त॒ । श्रेयां॑सम् । दक्ष॑म् । मन॑सा । ज॒गृ॒भ्या॒त् ॥ २ ॥

ᵛमर्तः मनुष्यः यजमानः ᵛपरि ᵛचित् सर्वतः ᵛद्रविणं विश्वेषां देवानां यागार्थं धनं ᵛममन्यात् । मन्यतिः कान्तिकर्मा । कामयेत लब्धुमिच्छेत् । धनं लब्ध्वा च ᵛऋतस्य यज्ञस्य ᵛपथा मार्गेण ᵛनमसा हविराख्येनान्नेन ᵛआ ᵛविवासेत् परिचरेत् । ᵛउत अपि च ᵛस्वेन आत्मीयेन ᵛक्रतुना[3] प्रज्ञानेन[3] । मनसेत्यर्थः । ᵛसं ᵛवदेत । संवादोऽत्र समाध्यानमुच्यते । हविर्गृहीत्वा वषट्करिष्यन् विश्वान् देवान् मनसाध्यायेदित्यर्थः । विश्वेषां देवानां यागानन्तरं च तत्प्रसादात् ᵛश्रेयांसम् अतिशयेन प्रशस्यमात्मानं ᵛदक्षं[4] प्रवृद्धं सर्वव्यापिनं ᵛमनसा ध्यानसाधनेनान्तःकरणेन ᵛजगृभ्यात् गृह्णीयात् ॥

अधा॑यि धी॒तिरस॑सृग्र॒मंशा॑स्ती॒र्थे न द॒स्ममुप॑ य॒न्त्यूमाः॑ ।
अ॒भ्या॑नश्म सुवि॒तस्य॑ शू॒षं नवे॑दसो अ॒मृता॑नामभूम ॥ ३ ॥

अधा॑यि । धी॒तिः । अस॑सृग्रम् । अंशाः॑ । ती॒र्थे । न । द॒स्मम् । उप॑ । य॒न्ति॒ । ऊमाः॑ ।
अ॒भि । आ॒न॒श्म॒ । सु॒वि॒तस्य॑ । शू॒षम् । नवे॑दसः । अ॒मृता॑नाम् । अ॒भू॒म॒ ॥ ३ ॥

ᵛधीतिः देवयागक्रिया ᵛअधायि निहिता स्थापिता । अस्माभिः प्रवर्तितेत्यर्थः । तदनन्तरम् ᵛऊमाः अवितारस्तर्पयितारः ᵛअंशाः अस्माभिर्दत्ता हविर्भागाः ᵛदस्मं दर्शनीयं शत्रूणामुपक्षपयितारं वा ᵛअससृग्रम् असमानसृष्टिम् । उत्कृष्टजन्मानमित्यर्थः[5] । एवंभूतं देवसंघम् ᵛउप ᵛयन्ति उपगच्छन्ति । तत्र दृष्टान्तः । ᵛतीर्थे ᵛन । यथा गङ्गादितीर्थे तर्पणमुखे विसृष्टा अपामंशाः देवसंघमुपगच्छन्ति तद्वत् । तदनन्तरं वयं ᵛसुवितस्य सु इतस्य सुष्ठु प्राप्तस्य स्वर्गादिकस्य ᵛशूषं सुखम् ᵛअभ्यानश्म अभिप्राप्नवाम । किंच वयम् ᵛअमृतानां देवानां ᵛनवेदसः । न वेदेत्येतस्मिन्नर्थे नवेदः-

१. त–दुरितानि । २. भ–'विश्वानि' नास्ति । ३. त–'क्रतुना प्रज्ञानेन' नास्ति । ४. त–'दक्षं' नास्ति । ५. त मु–उग्रजन्मान' ।

शब्दो 'नभ्राणनपान्नवेदा°' इति निपातितः । न न वेत्तारो वेत्तार एव । स्वरूपतो ज्ञातार एवेत्यर्थः । ᵛअभूम भवेमेत्याशास्महे ॥

नित्यश्चाकन्यात्स्वपतिर्दमूना यस्मा उ देवः सविता जजान ।
भर्गो वा गोभिरर्यमेमनज्यात्सो अस्मै चारुश्छदयदुत स्यात् ॥ ४ ॥

नित्यः । चाकन्यात् । स्वऽपतिः । दमूनाः । यस्मै । ॐ इति । देवः । सविता । जजान ।
भर्गः । वा । गोभिः । अर्यमा । ईम् । अनज्यात् । सः । अस्मै । चारुः । छदयत् । उत । स्यात् ॥ ४ ॥

ᵛनित्यः कल्पावस्थायी प्रजापतिः ᵛचाकन्यात् । तस्मै दृष्टादृष्टफलं दातुं कामयतां । कीदृशः । ᵛस्वपतिः स्वीयानां प्रजानां स्वामी धनपतिर्वा ᵛदमूनाः दानमनाः । कस्मै कामयतामिति उच्यते । ᵛउ उत अपि च ᵛयस्मै यजमानाय मह्यं ᵛसविता सर्वस्य प्रेरको ᵛदेवः ᵛजजान जनितवान् । दृष्टादृष्टफलं दत्तवानित्यर्थः । वाशब्दः समुच्चये । तथा ᵛभगः देवश्च ᵛगोभिः अस्मदीयाभिः स्तुतिरूपाभिः वाग्भिः स्तुतः ᵛअर्यमा देवश्च ᵛईम् ईदृग्भूतं दृष्टादृष्टफलम् ᵛअनज्यात् व्यक्तीकुर्यात् । दद्यादित्यर्थः । ᵛउत अपि च ᵛस्यात् अन्योऽपि ᵛयो देवगणोऽस्ति ᵛचारुः रमणीयः ᵛसः अपि देवगणः ᵛअस्मै यजमानाय मह्यं ᵛछदयत् दृष्टादृष्टफलं दातुं कामयतामित्येतदाशास्महे ॥

इयं सा भूया उषसामिव क्षा यद्ध क्षुमन्तः शवसा समायन् ।
अस्य स्तुतिं जरितुर्भिक्षमाणा आ नः शग्मास उप यन्तु वाजाः ॥ ५ ॥

इयम् । सा । भूयाः । उषसाम्ऽइव । क्षाः । यत् । ह । क्षुऽमन्तः । शवसा । सम्ऽआयन् ।
अस्य । स्तुतिम् । जरितुः । भिक्षमाणाः । आ । नः । शग्मासः । उप । यन्तु । वाजाः ॥ ५ ॥

ᵛक्षुमन्तः । क्षुशब्दोऽन्नवाची शब्दवाची वा । अन्नवन्तः स्तुतिमन्तः कीर्तिमन्तो वेत्यर्थः । एवंभूता देवाः ᵛशवसा बलेन ᵛयत् यामस्मदीयां स्तुतिं प्रति ᵛसमायन् समागच्छन् संप्राप्ताः ᵛसा ᵛइयं स्तुतिर्देवानां प्राप्या ᵛभूयाः भूयात् भवतु । ᵛउषसामिव ᵛक्षाः । यथा पृथिवी उषसां व्याप्त्या सर्वेषां प्राप्या भवति तद्वत् । किंच ᵛजरितुः स्तोतुः ᵛअस्य मम ᵛस्तुतिं ᵛभिक्षमाणाः याचमानाः ᵛशग्मासः । शग्ममिति सुखनाम । सुखाः सुखकराः ᵛवाजाः सुधन्वनः पुत्रास्त्रयोऽप्यृभुर्विभ्वा वाज इत्येते ᵛनः अस्मानाभिमुख्येन ᵛउप ᵛयन्तु उपगच्छन्तु ॥ ॥ २७ ॥

अस्येदेषा सुमतिः पप्रथानाभवत्पूर्व्या भूमना गौः ।
अस्य सनीळा असुरस्य योनौ समान आ भरणे बिभ्रमाणाः ॥ ६ ॥

अस्य । इत् । एषा । सुऽमतिः । पप्रथाना । अभवत् । पूर्व्या । भूमना । गौः ।
अस्य । सऽनीळाः । असुरस्य । योनौ । समाने । आ । भरणे । बिभ्रमाणाः ॥ ६ ॥

ᵛइत् इदानीम् ᵛअस्य देवगणसंबन्धिनी ᵛएषा ᵛसुमतिः सुष्टुतिः ᵛपप्रथानाभवत् विस्तीर्यमाणाभूत् । अस्माभिः क्रियमाणेत्यर्थः । कीदृशी । ᵛपूर्व्या पूर्वकालीना ᵛभूमना भूम्ना बहुत्वेन युक्तेति शेषः । सर्वदेवसंबन्धित्वाद्भृशं जातेत्यर्थः । ᵛगौः देवान्प्रति गन्त्री । एतज्ज्ञात्वा सर्वे देवाः ᵛअसुरस्य प्रजारूपबलवतः ᵛअस्य मम संबन्धिनि ᵛसमाने सर्वदेवसाधारणे ᵛभरणे सर्वेषां देवानां पुष्टिकरे ᵛयोनौ यज्ञाख्ये स्थाने ᵛसनीळाः समानस्थानाः ᵛबिभ्रमाणाः अस्मदर्थं दृष्टादृष्टफलं धारयन्तः ᵛआ गच्छन्त्विति शेषः ॥

किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
संतस्थाने अजरे इतऊती अहानि पूर्वीरुषसो जरन्त ॥ ७ ॥

किम् । स्वित् । वनम् । कः । ऊँ इति । सः । वृक्षः । आस । यतः । द्यावापृथिवी इति । निःऽततक्षुः ॥ संतस्थाने इति सम्ऽतस्थाने । अजरे इति । इतऊती इतीतःऽऊती । अहानि । पूर्वीः । उषसः । जरन्त ॥ ७ ॥

ᵛयतः यस्माद्वृक्षात् ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛनिष्टतक्षुः देवाः निःशेषेण कृतवन्तः ᵛसः तादृशः ᵛवृक्षः ᵛक ᵛउ ᵛआस कीदृग्वा बभूव । तदुत्पादकं ᵛवनम् अरण्यं ᵛकिं ᵛस्वित् । ᵛसंतस्थाने सम्यक्तिष्ठन्त्यौ ᵛअजरे जरावर्जिते ᵛइतऊती इत एतेभ्यो देवेभ्यो रक्षणं ययोस्ते । किंच ᵛअहानि सर्वाणि दिनानि ᵛपूर्वीः बह्वीः ᵛउषसः च देवा निष्टतक्षुः । एवंभूतान् देवान् ᵛजरन्त स्तोतारः स्तुवन्ति ॥

नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति ।
त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहन्ति ॥ ८ ॥

न । एतावत् । एना । परः । अन्यत् । अस्ति । उक्षा । सः । द्यावापृथिवी इति । बिभर्ति । त्वचम् । पवित्रम् । कृणुत । स्वधाऽवान् । यत् । ईम् । सूर्यम् । न । हरितः । वहन्ति ॥८॥

द्यावापृथिव्योर्निर्माणरूपम् ᵛएतावत् देवजातं सामर्थ्येन युक्तमिति ᵛन अपि तु ᵛएना एतेभ्यो देवेभ्यः ᵛपरः उत्कृष्टः ᵛअन्यत् अन्यो हिरण्यगर्भः ᵛअस्ति । ᵛउक्षा सेक्ता । प्रजानां स्रष्टेत्यर्थः । हिरण्यगर्भः परमसूक्ष्मो वायुरूपो लिङ्गात्मा अपः प्रविश्य ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛबिभर्ति धारयति । किंच ᵛस्वधावान् बलवानन्नवान् वा स हिरण्यगर्भः ᵛपवित्रं पवित्रमयं ᵛत्वचम् आत्मीयं शरीरं दीप्तं मन्त्रं वा ᵛकृणुत करोति । कदेति उच्यते । ᵛयत् यदा ᵛईम् इमां त्वचं ᵛहरितः अश्वाः ᵛसूर्यं ᵛन ᵛवहन्ति न प्रापयन्ति तदेति । सृष्टेः प्रागित्यर्थः ॥

स्तेगो न क्षामत्येति पृथ्वीं मिहं न वातो वि ह वाति भूम ।
मित्रो यत्र वरुणो अज्यमानोऽग्निर्वने न व्यसृष्ट शोकम् ॥ ९ ॥

स्तेगः । न । क्षाम् । अति । एति । पृथ्वीम् । मिहम् । न । वातः । वि । ह । वाति । भूम । मित्रः । यत्र । वरुणः । अज्यमानः । अग्निः । वने । न । वि । असृष्ट । शोकम् ॥ ९ ॥

ᵛस्तेगः । ' स्त्यै ष्ट्यै शब्दसंघातयोः ' । रश्मिसंघाती आदित्यः ᵛपृथ्वीं विस्तीर्णां ᵛक्षां भूमिं तेजसा ᵛन ᵛअत्येति नातिगच्छति । मर्यादया तिष्ठतीत्येवमादित्यः स्तूयते । ᵛवातः वायुरपि खलु ᵛभूम भूमिं ᵛमिहं वृष्टिं ᵛन ᵛवि ᵛवाति समर्थोऽपि सन् विविधं न गमयति । भूमिं प्रति सावशेषमेव वर्षयतीति[1] वातः स्तूयते । ᵛयत्र यस्मिन् प्रजापतौ ᵛमित्रः देवः ᵛअज्यमानः व्यज्यमानः व्यक्तीभवन् । उत्पाद्यमान[2] इत्यर्थः । ᵛशोकं स्वीयां दीप्तिं ᵛव्यसृष्ट विसृजति सर्वतो विक्षिपति तथा ᵛवरुणः च व्यक्तीभवन्[2] स्वदीप्तिं विक्षिपति । तत्र दृष्टान्तः । ᵛअग्निः देवः ᵛवने ᵛन यथा वृक्षसंघाते स्वदीप्तिं सर्वतो विसृजति तद्वत् । तादृशं प्रजापतिं स्तौमीति शेषः ॥

---

१. त१.२.६.७– न वर्षतीति; त३.४.५-भ६-मु-उद्गीथ–वर्षन्तीति; भ१.२.४–वर्षयति । २. त– ' उत्पाद्यमान... व्यक्तीभवन् ' नास्ति ।

स्तरीर्यत्सूत सद्यो अज्यमाना व्यथिरव्यथीः कृणुत स्वगोपा ।
पुत्रो यत्पूर्वः पित्रोर्जनिष्ट शम्यां गौर्जगार यद्ध पृच्छान् ॥ १० ॥

स्तरीः । यत् । सूत । सद्यः । अज्यमाना । व्यथिः । अव्यथीः । कृणुत । स्वऽगोपा ।
पुत्रः । यत् । पूर्वः । पित्रोः । जनिष्ट । शम्याम् । गौः । जगार । यत् । ह । पृच्छान् ॥ १० ॥

अरण्योः कारणभूतां शमीं गोत्वेन रूपयति । ᵛस्तरीः निवृत्तप्रसवा गौः ᵛसद्यः शीघ्रम् ᵛअज्यमाना निषिच्यमानरेतस्का सती ᵛयत् यदा ᵛसूत वत्सं प्रसूते तदा ᵛव्यथिः दुःखानां बाधयित्री ᵛस्वगोपा स्वायत्तगोप्तृका स्वभूतरक्षणा वा सती सा गौः ᵛअव्यथीः व्यथारहिताः प्रजाः ᵛकृणुत करोति । यदा शमी पुत्रस्थानीयमश्वत्थं प्रसूते तदानीमरण्याहरणाय तादृशमश्वत्थमन्विष्यतामृत्विजामश्वत्थस्य जनयित्री शमी सुखहेतुर्भवतीत्यर्थः । शमीगर्भादश्वत्थादरणी आहर्तव्ये । श्रूयते हि—'शमीगर्भादग्निं मन्थन्ति' ( तै. ब्रा. १.१.९ ) इति । अपि च ᵛपूर्वः पुरातनः ᵛपुत्रः । पुत्राग्नो नरकात् त्राता । यद्वा । पुत्रस्थानीयोऽग्निः । ᵛपित्रोः जनयित्र्योररण्योः सकाशात् ᵛयत् यदा ᵛजनिष्ट मथनेन प्रादुर्भवति तदानीं ᵛगौः पृथिवी तयोररण्योर्मातृभूतां ᵛशम्याम् अश्वत्थगर्भां तां शमीम् । 'सुपां सुलुक्°' इति सुपो ड्यादेशः । ᵛजगार उद्गिरति । ᵛयद्ध यां खलु शमीं ᵛपृच्छान् ऋत्विजः पृच्छन्ति वीप्सन्ति गवेषयन्ति ॥

उत कण्वं नृषदः पुत्रमाहुरुत श्यावो धनमादत्त वाजी ।
प्र कृष्णाय रुशदपिन्वतोधर्ऋतमत्र नकिरस्मा अपीपेत् ॥ ११ ॥

उत । कण्वम् । नृऽसदः । पुत्रम् । आहुः । उत । श्यावः । धनम् । आ । अदत्त । वाजी ।
प्र । कृष्णाय । रुशत् । अपिन्वत । ऊधः । ऋतम् । अत्र । नकिः । अस्मै । अपीपेत् ॥ ११ ॥

ᵛउत अपि च ᵛकण्वम् ऋषिं ᵛनृषदः ᵛपुत्रमाहुः वेदवादिनो वदन्ति । ᵛउत अपि च ᵛवाजी हविर्लक्षणान्नवान् कण्वः ᵛश्यावः श्यामवर्णः सन्नस्मादग्नेः सकाशात् ᵛधनमादत्त अगृह्णात् । ᵛकृष्णाय श्यामवर्णाय नार्षदाय कण्वायाग्नेः ᵛऊधः ᵛरुशत् रोचमानरूपं ᵛप्र ᵛअपिन्वत प्रासिञ्चत् । ᵛअत्र इत्थमग्निव्यतिरिक्तः कश्चिदपि देवः ᵛअस्मै कण्वाय ᵛऋतं यज्ञं ᵛनकिः ᵛअपीपेत् नावर्धयत् । 'युवं श्यावाय रुशतीमदत्तम्' ( ऋ. सं. १. ११७. ८ ) इत्युक्तम् ॥ ॥ २८ ॥

'प्र सु ग्मन्ता' इति नवर्चं तृतीयं सूक्तम् । आदितः पञ्च जगत्यः । अथ चतस्रस्त्रिष्टुभः । पूर्ववदृषिदेवते । तथा च नुक्रान्तं—'प्र सु ग्मन्ता नव पञ्चाद्या जगत्यः' इति । गतो विनियोगः ॥

प्र सु ग्मन्ता धियसानस्य सक्षणि वरेभिर्वराँ अभि षु प्रसीदतः ।
अस्माकमिन्द्र उभयं जुजोषति यत्सोम्यस्यान्धसो बुबोधति ॥ १ ॥

प्र । सु । ग्मन्ता । धियसानस्य । सक्षणि । वरेभिः । वरान् । अभि । सु । प्रऽसीदतः ।
अस्माकम् । इन्द्रः । उभयम् । जुजोषति । यत् । सोम्यस्य । अन्धसः । बुबोधति ॥ १ ॥

इन्द्रः स्वभूतौ हरी ᵛधियसानस्य इन्द्रागमनं चिन्तयतो यजमानस्य मम संबन्धिनि ᵛसक्षणि सेवायां सद्गुणके¹ सेव्ये यज्ञे निमित्ते ᵛग्मन्ता आगच्छन्तौ ᵛसु सुष्ठु प्रेरयति । ततः स इन्द्रः

१. त-भ६-मु—सद्गुणके; त३—तद्गुणके ।

<sup>v</sup>वरेभिः वरणीयैर्मार्गैः <sup>v</sup>प्रसीदतः हविरासादयतो यजमानस्य <sup>v</sup>वरान् उत्कृष्टान् हविर्विशेषान् स्तुतिविशेषांश्च <sup>v</sup>अभि लक्षीकृत्य <sup>v</sup>सु[1] सुष्ठु आगच्छतु। <sup>v</sup>इन्द्रः आगतः सन् <sup>v</sup>अस्माकं स्वभूतम् <sup>v</sup>उभयं हविश्च स्तुतिश्चेत्येतद्द्वयं <sup>v</sup>जुजोषति सेवताम्। भक्षयतु शृणोतु चेत्यर्थः। <sup>v</sup>यत् यदा <sup>v</sup>सोम्यस्य सोमसंपादिनो मम <sup>v</sup>अन्धसः अन्नरूपस्य सोमस्य। रसमिति शेषः। <sup>v</sup>बुबोधति बुध्यते जिह्वया विजानाति। सोमं पिबतीत्यर्थः। तदा जुजोषतीति पूर्वेण संबन्धः॥

वीन्द्र यासि दिव्यानि रोचना वि पार्थिवानि रजसा पुरुष्टुत।
ये त्वा वहन्ति मुहुरध्वराँ उप ते सु वन्वन्तु वग्वनाँ अराधसः॥ २॥

वि। इन्द्र। यासि। दिव्यानि। रोचना। वि। पार्थिवानि। रजसा। पुरुऽस्तुत।
ये। त्वा। वहन्ति। मुहुः। अध्वरान्। उप। ते। सु। वन्वन्तु। वग्वनान्। अराधसः॥ २॥

हे <sup>v</sup>इन्द्र <sup>v</sup>दिव्यानि दिवि भवानि <sup>v</sup>रोचना रोचनानि दीप्तिस्वभावकानि ज्योतींषि यद्वा दिव्याँल्लोकान् <sup>v</sup>वि <sup>v</sup>यासि व्याप्नोषि। हे <sup>v</sup>पुरुष्टुत बहुभिः स्तुतेन्द्र <sup>v</sup>पार्थिवानि पृथिव्यां भवानि <sup>v</sup>रजसा आत्मीयेन ज्योतिषा विद्युल्लक्षणेन। यद्वा। रजःशब्दाच्छस आकारः। पार्थिवाँल्लोकान्। व्याप्नोषि। <sup>v</sup>ये त्वदीया अश्वाः <sup>v</sup>मुहुः पुनःपुनः <sup>v</sup>अध्वरान् अस्मदीयान् यज्ञान् प्रति <sup>v</sup>त्वा त्वाम् <sup>v</sup>उप[2] <sup>v</sup>वहन्ति समीपे प्रापयन्ति <sup>v</sup>ते अश्वाः <sup>v</sup>वग्वनान् वचनेन स्तुत्या संभक्तॄन् <sup>v</sup>अराधसः धनरहितानस्मान् <sup>v</sup>सु[3] सुष्ठु <sup>v</sup>वन्वन्तु धनप्रदानार्थं संभजन्ताम्॥

तदिन्मे छन्त्सद्वपुषो वपुष्टरं पुत्रो यज्जानं पित्रोरधीयति।
जाया पतिं वहति वग्नुना सुमत्पुंस इद्भद्रो वहतुः परिष्कृतः॥ ३॥

तत्। इत्। मे। छन्त्सत्। वपुषः। वपुःऽतरम्। पुत्रः। यत्। जानम्। पित्रोः। अधिऽइयति।
जाया। पतिम्। वहति। वग्नुना। सुऽमत्। पुंसः। इत्। भद्रः। वहतुः। परिऽकृतः॥३॥

<sup>v</sup>वपुषः। वपुः रूपम्। तद्वाँल्लक्ष्यते। वपुष्मतोऽपि <sup>v</sup>वपुष्टरं रूपवत्तरमत्यन्तं सुरूपं <sup>v</sup>तत् यज्ञकर्म <sup>v</sup>मे मह्यं <sup>v</sup>छन्त्सत् इन्द्रः कामयताम्। <sup>v</sup>यत् यदा <sup>v</sup>पुत्रः <sup>v</sup>जानं जन्म आत्मन उत्पत्तिं <sup>v</sup>पित्रोः मातापित्रोः सकाशात् <sup>v</sup>अधीयति संकीर्तनद्वारेणाधिगच्छति। सुब्रह्मण्याह्वानकालेऽमुकशर्मणः पुत्रो यजत इत्यात्मनो जन्म संकीर्तयति। यद्वा। यजननादागतं धनं पित्रोः सकाशात्पुत्रोऽधिगच्छति तदेव मह्यमिच्छतु। <sup>v</sup>जाया पत्नी <sup>v</sup>पतिं यजमानं <sup>v</sup>सुमत् कल्याणेन <sup>v</sup>वग्नुना वाग्रूपेण शब्देन <sup>v</sup>वहति आत्मसमीपं प्रापयति। <sup>v</sup>भद्रः भजनीयः <sup>v</sup>परिष्कृतः सुसंस्कृतः[4] <sup>v</sup>पुंस <sup>v</sup>इत्[5]। पत्युरेवेत्यर्थः। <sup>v</sup>वहतुः जायायै प्रदातव्यः। तदुक्तं—‘सुभद्रमर्य भोजनं बिभर्षि’ (ऋ. सं. ८. १. ३४) इति। यद्वा। पुंसोऽतिशूरस्येन्द्रस्यार्थाय भद्रो भजनीयो वहतुर्वहनशीलो देवान् प्रति स सोमः परिष्कृतः संस्कृतो भवति। तदेन्द्रः कामयतामित्यर्थः॥

तादित्सधस्थमभि चारु दीधय गावो यच्छासन्वहतुं न धेनवः।
माता यन्मन्तुर्यूथस्य पूर्व्याभि वाणस्य सप्तधातुरिज्जनः॥ ४॥

१. त-भ१.२.४-मु-‘सु’ नास्ति। २. त-भ-मु-उपा। ३. त-भ१.२.४-मु-‘सु’ नास्ति।
४. ग-त-भ२.५.६-मु-संस्कृतः। ५. ग त-भ१.२.४.७-मु-इत् पुंसः।

तत् । इत् । सधऽस्थम् । अभि । चारु । दीधय । गावः । यत् । शासन् । वहतुम् । न । धेनवः ।
माता । यत् । मन्तुः । यूथस्य । पूर्व्या । अभि । वाणस्य । सप्तऽधातुः । इत् । जनः ॥ ४॥

ᵛतदित् तदेव ᵛसधस्थम् । सह तिष्ठन्त्यत्रेति सधस्थं स्थानं यज्ञाख्यम् । ᵛचारु शोभनम् ᵛअभि ᵛदीधय हे इन्द्र अभितो दीप्यस्व । ᵛयत् यत्र ᵛगावः स्तुतिलक्षणा वाचः इन्द्र आगच्छ हरिव आगच्छ इत्येवमाद्याः ᵛशासन् अस्मद्यज्ञं प्रति त्वदागमनमाशासते । तत्र दृष्टान्तः । ᵛवहतुं ᵛन ᵛधेनवः[1] । यथा धेनवो नवप्रसूता गावः प्रापणसाधनं गृहमाशासते तद्वत् । यत आगत्य प्रकाशयेत्यत्र कारणमाह । ᵛयत् यस्मात् ᵛमन्तुः । मन्यतिरर्चतिकर्मा । अर्चकस्य मम स्वभूता[2] ᵛमाता देवतागुणानां[2] निष्पादयित्री स्तुतिः ᵛयूथस्य यष्टृस्तोतृगणस्य ᵛपूर्व्या प्रथमभाविनी खलु । यस्माच्च ᵛसप्तधातुः । धार्यन्ते क्रियन्ते कर्माण्येभिरिति धातवश्छन्दांस्यृतवो वा । सप्तच्छन्दस्कः सप्तर्तुकः सप्तहोत्रात्मको वार्यं ᵛजनः ᵛवाणस्य स्तुतिशब्दस्य ᵛअभि कर्ता खलु । तस्माच्छीघ्रमागच्छेति भावः । यद्वा । यत्कल्याणं[3] तदेव स्थानमस्माकमभिधारय प्रयच्छ । यस्मिन् स्थाने धेनवः पयःप्रदानेन प्रीणयित्र्यो गावो वहतुम् । उह्यते पुरुषोऽनेनेति वहतुरन्नम् । पयोघृताद्यनुशासति । न संप्रत्यर्थे । इदानीं प्रयच्छन्ति । तथा यस्मिन् मन्तुर्मन्तव्या पूजनीया पुत्रसमूहस्य माताभिगच्छति वाणस्य वाद्यस्य सप्तधातुर्निषादादिसप्तस्वरोपेतो जनोऽभिगच्छति तद्वत्तद्गुणोपेतं प्रयच्छेति[4] भावः ॥

प्र वोऽच्छा रिरिचे देवयुष्पदमेको रुद्रेभिर्याति तुर्वणिः ।
जरा वा येष्वमृतेषु दावने परि व ऊमेभ्यः सिञ्चता मधु ॥ ५ ॥

प्र । वः । अच्छ । रिरिचे । देवऽयुः । पदम् । एकः । रुद्रेभिः । याति । तुर्वणिः ।
जरा । वा । येषु । अमृतेषु । दावने । परि । वः । ऊमेभ्यः । सिञ्चत । मधु ॥ ५ ॥

हे यजमानाः ᵛदेवयुः देवान् कामयमानो होता ᵛवः युष्माकं ᵛपदम् ᵛअच्छ स्थानं प्रति ᵛप्र ᵛरिरिचे प्ररिक्तोऽभूत्[5] । अथ[6] होतृभ्यः[6] सकाशात् ᵛएकः मुख्य इन्द्रः ᵛरुद्रेभिः रुद्रपुत्रैः मरुद्भिः सह ᵛतुर्वणिः क्षिप्रगामी सन् ᵛयाति गच्छति युष्मदीयं यज्ञम् । ᵛजरा ᵛवा । वाशब्दोऽप्यर्थे । स्तुतिरपि ᵛयेष्वमृतेषु मरणधर्मरहितेषु देवेषु ᵛदावने धनप्रदानाय समर्था भवति । तस्मात् ᵛवः यूयम् । छान्दसो वसादेशः । ᵛऊमेभ्यः रक्षितृभ्यो देवेभ्यः ᵛमधु मदकरं सोममद्भिः ᵛपरि ᵛषिञ्चत ॥ ॥ २९ ॥

निधीयमानमपगूळ्हमप्सु प्र मे देवानां व्रतपा उवाच ।
इन्द्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगाम् ॥ ६ ॥

निऽधीयमानम् । अपऽगूळ्हम् । अप्ऽसु । प्र । मे । देवानाम् । व्रतऽपाः । उवाच ।
इन्द्रः । विद्वान् । अनु । हि । त्वा । चचक्ष । तेन । अहम् । अग्ने । अनुऽशिष्टः । आ । अगाम् ॥ ६॥

१. ग-त-भ-मु-'धेनवः' नास्ति । २. ग-स्वभूतानां माता देवतागुणानां; त१.२.५.६.७-भ६-स्वभूता नानादेवतागणानां; त३.४-स्वभूता नानादेवतागुणानां; भ१.२.४.७-स्वभूतानां देवतागुणानां । ३. त-भ१.२.४.६-कल्याणं । ४. ग-त३-भ५.६-गृहं प्रयच्छेति । ५. त-प्रतिरिक्तोभूत् । ६. त-भ२.४.६-अन्यहोतृभ्यः; भ१.४-अन्यहोतृभ्यः ।

कुरुश्रवणस्य यज्ञे निधीयमानोऽग्निरभिधीयते। ᵛनिधीयमानम् अध्वर्युणाहवनीयेऽग्नौ ᵛअप्सु मातृभूतासु ᵛअपगूळ्हम् अन्तर्हितं त्वां ᵛदेवानां ᵛव्रतपाः कर्मणो रक्षक इन्द्रः ᵛमे मह्यं ᵛप्र ᵛउवाच। प्रावादीत्। हे ᵛअग्ने ᵛविद्वान् जानानः ᵛइन्द्रः स्वाधिकारमस्मद्भक्ततां वा ᵛत्वा त्वाम् ᵛअनु ᵛहि ᵛचचक्ष अनुगतः पश्चाद्ददर्श। ᵛतेन इन्द्रेण ᵛअनुशिष्टः ᵛअहम् अनेन पथा त्वया स्वर्गो गन्तव्य इत्येवमुपदिष्टः सन् ᵛआगाम् आभिमुख्येन स्वर्गं[1] गच्छेयम् ॥

अक्षे॑त्रवित्क्षेत्र॒विदं॒ ह्यप्रा॒ट् स प्रैति॑ क्षेत्र॒विदा॒नु॑शिष्टः।
ए॒तद्वै॑ भ॒द्रम॑नु॒शास॑नस्यो॒त स्रु॒तिं॑ विन्दत्यञ्ज॒सीना॑म् ॥ ७॥

अक्षे॑त्रऽवित्। क्षेत्र॒ऽविद॑म्। हि। अप्रा॑ट्। सः। प्र। ए॒ति॒। क्षे॒त्र॒ऽवि॒दा॑। अनु॑ऽशिष्टः।
ए॒तत्। वै। भ॒द्रम्। अ॒नु॒ऽशास॑नस्य। उ॒त। स्रु॒तिम्। वि॒न्द॒ति॒। अ॒ञ्ज॒सीना॑म् ॥ ७॥

सेयमनुशासनस्तुतिः प्रासङ्गिकी। ᵛअक्षेत्रवित्। ‘क्षि निवासगत्योः’। क्षीयते गम्यतेऽनेनेति क्षेत्रं पन्थाः। पन्थानमजानन् पुरुषः ᵛक्षेत्रविदं क्षेत्रज्ञं[2] पुरुषम् ᵛअप्राट् पृष्टवान्। ᵛसः[2] ᵛक्षेत्रविदा पथिज्ञेन तेन ᵛअनुशिष्टः प्रदर्शितमार्गः सन् ᵛप्रैति स्वाभिलषितं देशं गच्छति। ᵛअनुशासनस्य मार्गोपदेशरूपस्य[3] ᵛएतद्वै एतत्खलु ᵛभद्रं भजनीयं कल्याणकरम्। किं तत्। ᵛउत अपि च ᵛअञ्जसीनाम् ऋजुना मार्गेण गन्तव्यानामपां ᵛस्रुतिं मार्गं पिपासितः सन् ᵛविन्दति लभते। यद्वा। अञ्जसीनामिति स्रुतेर्विशेषणम्। ऋजुमकुटिलमप्रयासेन गन्तव्यं मार्गं लभते खलु ॥

अ॒द्येदु॒ प्राणी॒दम॑मन्नि॒माहापी॑वृतो अधयन्मा॒तुरूधः॑।
एमे॑नमाप जरि॒मा यु॒वान॒महे॑ळ॒न्वसुः॑ सु॒मना॑ बभूव ॥ ८॥

अ॒द्य। इत्। ऊँ इति॑। प्र। आनी॑त्। अम॑मन्। इ॒मा। अहा॑। अपि॑ऽवृतः। अध॑यत्। मा॒तुः। ऊधः॑।
आ। ई॒म्। ए॒न॒म्। आ॒प॒। ज॒रि॒मा। यु॒वान॑म्। अहे॑ळन्। वसुः॑। सु॒ऽमनाः॑। ब॒भू॒व ॥ ८॥

अयमग्निः ᵛअद्येत् अद्यैवास्मिन्दिने ᵛप्राणीत् मथनेन चेष्टितोऽभवत्। ‘अन प्राणने अन च’ इति धातुः। तदानीमेव ᵛइमा इमानि ᵛअहा अहानि सौमिकानि ᵛअममन् नेतुममन्यत। ‘मन ज्ञाने’। व्यत्ययेन श्लुः। तिङ उत्तरत्वादनिघातः। अपि च ᵛअपीवृतः तेजोभिः परिवृतः सन् ᵛमातुः पृथिव्याः ᵛऊधः सारभूतं सोमादिकं हविः ᵛअधयत् पिबति। तथा ᵛयुवानं नित्यतरुणं देवानां हविषा मिश्रयन्तं वा ᵛएनम् अग्निं ᵛजरिमा। जरतिः स्तुतिकर्मा। तस्मादौणादिक इमनिच्। स्तोतृभिः क्रियमाणा स्तुतिः ᵛआप आभिमुख्येन व्याप्नोति। ᵛईम् इति पूरणः। ततः ᵛअहेळन् अक्रुध्यन् स्तोतॄन्प्रति ᵛवसुः वासयिता सर्वेषां धनदानेनाच्छादयिता तेजोभिः शत्रूणां वा वसुमान् वाग्निः ᵛसुमनाः शोभनमनस्को ᵛबभूव ॥

१. त–‘स्वर्गं’ नास्ति। २. ग–पथिज्ञं हि यस्मात् अप्राट् पृच्छति। प्रच्छ ज्ञीप्सायां। स च पृष्टोभिर्गंतव्यमनेन मार्गेणेति वदति ततः पुरुषः; त–क्षेत्रज्ञं पुरुषमप्राट् पृष्टवान्; त३-भ५.६–पथिज्ञं हि यस्मात् अप्राट् पृच्छति। प्रच्छ ज्ञीप्सायां। स च कदाभिर्गंतव्यमानेन मार्गेण इति ततः स पुरुषः; भ१.२.४.७–‘क्षेत्रज्ञं...सः’ नास्ति। ३. त–सर्गोपदेशरूपस्य।

एतानि भद्रा कलश क्रियाम कुरुश्रवण ददतो मघानि ।
दान इद्वो मघवानः सो अस्त्वयं च सोमो हृदि यं बिभर्मि ॥ ९ ॥

एतानि । भद्रा । कलश । क्रियाम । कुरुऽश्रवण । ददतः । मघानि ।
दानः । इत् । वः । मघऽवानः । सः । अस्तु । अयम् । च । सोमः । हृदि । यम् । बिभर्मि ॥ ९ ॥

हे कलश कलावन् सर्वकलापरिपूर्ण । यद्वा । लुप्तमत्वर्थीयः । द्रोणकलशवन् हे कुरुश्रवण । कुरव ऋत्विजः । तेषां स्वभूतानां स्तुतीनां श्रोतर्हे इन्द्र मघानि धनानि स्तोतृभ्यो यष्टृभ्यश्च ददतः प्रयच्छतस्तवेन्द्रस्यार्थम् एतानि भद्रा भजनीयानि हवींषि स्तोत्राणि च क्रियाम विधेयास्म । करोतेराशीर्लिङि 'रिङ्शयग्लिङ्क्षु' (पा. सू. ७. ४. २८) इति रिङादेशः । अथ स्तोतॄन्प्रत्याह । हे मघवानः महनीयस्तोत्ररूपधनवन्तः वः युष्माकं सः इन्द्रः दान इत् धनादेर्दातैव अस्तु भवतु । अयं च यज्ञे स्थितः सोमः दातास्तु हृदय आत्मीये यं पीतं सोमं बिभर्मि धारयामि । 'डुभृञ् धारणपोषणयोः' । जौहोत्यादिकः । 'भृञामित्' इत्यभ्यासस्येत्वम् । यद्योगादनिघातः । यद्वा । हे कलशकुलजात हे कुरुश्रवणेतन्नामक त्रसदस्योः पुत्र राजन् ऋत्विग्भ्यो धनानि प्रयच्छतः तवार्थं वयं कर्माणि क्रियाम । मघवानः[1] कुरुश्रवणाः । पूजायां बहुवचनम् । एवं यागकर्म कुर्वाणस्य तवेन्द्रो दाता भवतु । अयं सोमश्च धनानि प्रयच्छतु ॥ ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्ये सप्तमाष्टके सप्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथाष्टमोऽध्याय आरभ्यते । तत्र 'प्र मा' इति नवर्चं चतुर्थं सूक्तमैलूषस्य कवषस्यार्षम् । आद्या त्रिष्टुप् सा च वैश्वदेवी । द्वितीयातृतीये बृहतीसतोबृहत्यौ ऐन्द्र्यौ । पराः षड्गायत्र्यः । 'कुरुश्रवणमावृणि' इति द्वाभ्यां त्रसदस्युपुत्रस्य कुरुश्रवणनाम्नो राज्ञो दानं तुष्टाव । अतस्तद्देवताके । अथ 'यस्य प्रस्वादसः' इत्यादिभिश्चतसृभिर्मित्रातिथिनाम्नि राज्ञि परलोकं गते शोकाभिभूतं तस्य पुत्रमुपश्रवोनामानं कवष ऋषिः स्नेहवशादभिगत्य विगतशोकमकरोत् । अतस्तासां तद्देवतात्वम् । तथा चानुक्रान्तं—'प्र माद्या वैश्वदेव्यैन्द्रः प्रगाथः परा गायत्र्यो द्वे कुरुश्रवणस्यं त्रासदस्यवस्य दानस्तुतिः पराभिर्मृते मित्रातिथौ राज्ञि तत्स्नेहादुपश्रवसं पुत्रमस्य व्यशोकयत्' इति । गतो विनियोगः ॥

प्र मा युयुज्रे प्रयुजो जनानां वहामि स्म पूषणमन्तरेण ।
विश्वे देवासो अध मामरक्षन् दुःशासुरागादिति घोष आसीत् ॥ १ ॥

१. त–'मघवानः' नास्ति ।

प्र । मा । युयुज्रे । प्रऽयुजः । जनानाम् । वहामि । स्म । पूषणम् । अन्तरेण ।
विश्वे । देवासः । अध । माम् । अरक्षन् । दुःऽशासुः । आ । अगात् । इति । घोषः । आसीत् ॥ १ ॥

ᵛजनानां यजमानानां ᵛप्रयुजः प्रयोक्तारो देवाः ᵛमा मां कवषमृषिं ᵛप्र ᵛयुयुज्रे कुरुश्रवणं प्रति युक्तवन्तः । ᵛअन्तरेण मार्गे ᵛपूषणं देवम् अध्वनां पतिं सखायमहं ᵛवहामि ᵛस्म ऊढवानस्मि । तथा श्रूयते—'ऐन्द्राग्नमेकादशकपालं निर्वपेज्जनतामेष्यन्' इत्युपक्रम्य 'पौष्णं चरुमनु निर्वपेत्' ( तै. सं. २.२.१.४ ) इति । ᵛअध[1] अथ मार्गे ᵛविश्वे देवाः ᵛमां कवषम् ᵛअरक्षन् रक्षितवन्तः । ᵛदुःशासुः केनापि दुःशासनोऽयमृषिः ᵛआगात् आगच्छति ᵛइति ᵛघोषः शब्दश्च मार्गे ᵛआसीत् अभूत् ॥

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।
नि बाधते अमतिर्नग्नता जसुर्वेर्न वेवीयते मतिः ॥ २ ॥

सम् । मा । तपन्ति । अभितः । सपत्नीःऽइव । पर्शवः ।
नि । बाधते । अमतिः । नग्नता । जसुः । वेः । न । वेवीयते । मतिः ॥ २ ॥

ᵛमा मां देवताप्रसादरहितं कवषं ᵛपर्शवः पार्श्वास्थीनि अन्नाभावाद्दौर्बल्यात् कुशयनाच्च[2] ᵛसपत्नीरिव यथा सपत्न्यस्तद्वत् ᵛअभितः उभयतः ᵛसं ᵛतपन्ति दुःखयन्तीत्यर्थः । किंच ᵛअमतिः दारिद्र्यादागता दुर्मतिः सर्वार्थविषया सा[3] मां[3] ᵛनि ᵛबाधते मां पीडयति । वस्त्राभावादागता ᵛनग्नता च मां नि बाधते । ᵛजसुः अशनाभावादागत उपक्षयोऽपि मां नि बाधते । किंच ᵛवेर्न यथा पक्षिणः मतिः शाकुनिकव्याधभयात्[4] कम्पयते तथा मे ᵛमतिः शत्रोः ᵛवेवीयते भृशं कम्पयते ॥

मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो ।
सकृत्सु नो मघवन्निन्द्र मृळयाधा पितेव नो भव ॥ ३ ॥

मूषः । न । शिश्ना । वि । अदन्ति । मा । आऽध्यः । स्तोतारम् । ते । शतक्रतो इति शतऽक्रतो ।
सकृत् । सु । नः । मघऽवन् । इन्द्र । मृळय । अध । पिताऽइव । नः । भव ॥ ३ ॥

हे ᵛशतक्रतो बहुकर्मन् ᵛमघवन् धनवंश्च[5] ᵛइन्द्र ᵛते तव ᵛस्तोतारं ᵛमा मां कवषम् ᵛआध्यः आधयः ᵛमूषो ᵛन यथा मूषिकाः ᵛशिश्ना आस्नातानि सूत्राणि अश्नन्ति तथा ᵛव्यदन्ति विविधमदन्ति । तथा च यास्कः—'संतपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति । स्वाङ्गाभिधानं वा[6] स्याच्छिश्नानि व्यदन्तीति[7] । संतपन्ति माध्यः कामाः' ( निरु. ४. ६ ) इति । तथा च सति ᵛनः अस्मान् ᵛसकृत् ᵛसु ᵛमृळय अभीष्टप्रदानेन सम्यक् सुखय । ᵛअध अथ ᵛनः अस्माकं ᵛपितेव यथा पिता तद्वद्रक्षिता ᵛभव ॥

कुरुश्रवणमावृणि राजानं त्रासदस्यवम् । मंहिष्ठं वाघतामृषिः ॥ ४ ॥

कुरुऽश्रवणम् । अवृणि । राजानम् । त्रासदस्यवम् । मंहिष्ठम् । वाघताम् । ऋषिः ॥ ४ ॥

---

१. त-भ६-'अध' नास्ति । २. उद्गीथ-कुशशयनाच्च । ३. त-भ६-रसा; भ१.२.७-सं मा; भ२-सरसा । ४. त१.२.५.६.७-°व्याधि°; उद्गीथ-°व्यथादि° । ५. त-'धनवंश्च' नास्ति; भ१.४.६-धनवन् । ६. त-'वा' नास्ति । ७. त-भ-व्यदतीति वा ।

ऋषिः अतीन्द्रियार्थद्रष्टा कवषोऽहं त्रासदस्यवं त्रसदस्योः पुत्रं मंहिष्ठं धनानामतिशयेन दातारं कुरुश्रवणम्। कुरव ऋत्विजः। तदीयानां स्तुतीनां श्रोतारं कुरुश्रवणं तन्नामकं राजानं वाधनाम् ऋत्विजामर्थाय अवृणि धनानि प्रार्थये ॥

**यस्य मा हरितो रथे तिस्रो वहन्ति साधुया। स्तवै सहस्रदक्षिणे ॥ ५ ॥**

यस्य। मा। हरितः। रथे। तिस्रः। वहन्ति। साधुऽया। स्तवै। सहस्रऽदक्षिणे ॥ ५ ॥

यस्य कुरुश्रवणाख्यस्य राज्ञः स्वभूताः तिस्रः हरितः त्रयोऽश्वाः रथे प्रस्थितं मा मां कवषं साधुया साधु वहन्ति कुरुश्रवणं राजानमहं सहस्रदक्षिणे अस्मिन् यागे स्तवै स्तौमि। प्रष्टिवाहिनं रथं परिगृह्य ऋषिराशास्ते ॥　　॥ १ ॥

अतः परं 'यस्य' इत्यादिकेन सूक्तशेषेण मित्रातिथौ राज्ञि मृते तत्पुत्रस्योपमश्रवसः[1] समीपमागत्य कवषः स्नेहाच्छोकं निवारयति ॥

**यस्य प्रस्वादसो गिर उपमश्रवसः पितुः। क्षेत्रं न रण्वमूचुषे ॥ ६ ॥**

यस्य। प्रऽस्वादसः। गिरः। उपमऽश्रवसः। पितुः। क्षेत्रम्। न। रण्वम्। ऊचुषे ॥ ६ ॥

हे राजन् उपमश्रवसः[2] तव पितुः यस्य मित्रातिथेः गिरः वाचः प्रस्वादसः प्रकर्षेण स्वादयित्र्यः। तत्र दृष्टान्तः। ऊचुषे सेवमानाय दरिद्राय दानार्थं प्रकल्पितं रण्वं रमणीयं क्षेत्रं न यथा क्षेत्रं स्वादयितृ[3] तद्वदित्यर्थः। उत्तरत्र संबन्धः ॥

**अधि पुत्रोपमश्रवो नपान्मित्रातिथेरिहि। पितुष्टे अस्मि वन्दिता ॥ ७ ॥**

अधि। पुत्र। उपमऽश्रवः। नपात्। मित्रऽअतिथेः। इहि। पितुः। ते। अस्मि। वन्दिता ॥ ७ ॥

हे पुत्र उपमश्रवः मित्रातिथेः नपात् पुत्र त्वम् अधि इहि मत्समीपमागच्छ। ते तव पितुः तस्य मित्रातिथेरहं वन्दिता स्तोता अस्मि। एतज्ज्ञात्वा शोकं मा कुरु। यद्देयं द्रव्यमस्ति तत्सर्वं मह्यं देहि ॥

**यदीशीयामृतानामुत वा मर्त्यानाम्। जीवेदिन्मघवा मम ॥ ८ ॥**

यत्। ईशीय। अमृतानाम्। उत। वा। मर्त्यानाम्। जीवेत्। इत्। मघऽवा। मम ॥ ८ ॥

उत अपि च यत् यदि अमृतानां देवानां मर्त्यानां मनुष्याणां वा मरणहेतूनाम् ईशीय अहमीश्वरः स्यां तर्हि[4] मम कवषस्य याज्यः मघवा धनवान् मित्रातिथी राजा जीवेत् प्राणान् धारयेत्। तथा च नाहं मरणहेतोरीश्वरः तस्मादयं राजा मृत इत्यर्थः ॥

**न देवानामति व्रतं शतात्मा चन जीवति। तथा युजा वि वावृते ॥ ९ ॥**

न। देवानाम्। अति। व्रतम्। शतऽआत्मा। चन। जीवति। तथा। युजा। वि। ववृते ॥ ९ ॥

देवानां ब्रह्मादीनां व्रतं मर्यादालक्षणं कर्म अति[5] अतिक्रम्य शतात्मा चन शतसंवत्सरः कश्चन न जीवति। तथा युजा सहायादिना वि ववृते विवर्तते वियुक्तो भवतीति ज्ञात्वा शोकं मा कुर्वित्यर्थः ॥　　॥ २ ॥

---

१. त-भ६-°स्योपश्रवसः। २. त-उपश्रवसः। ३. त-मु-स्वदयितृ। ४. त-तस्य। ५. त-भ६-मु-'अति' नास्ति।

'प्रावेपाः' इति चतुर्दशर्चं पञ्चमं सूक्तमैलूषस्य कवषस्यार्षं मुजवतः पुत्रस्याक्षाख्यस्य वा। सप्तमी जगती शिष्टास्त्रयोदश त्रिष्टुभः। अत्र द्वादशी अक्षान् स्तौति नवम्याद्या च सप्तमी। अतस्तास्तद्देवत्याः। त्रयोदशी कृषिं स्तौति। अतस्तस्याः सा देवता। एवं पञ्च गताः। शिष्टाभिर्नवभिः कितवोऽक्षाश्च निन्द्यन्ते। अतस्ता अपि तद्देवत्याः। तथा चानुक्रान्तं—'प्रावेपाः पञ्चना मौजवान्वाक्षोऽक्षकृषिप्रशंसा चाक्षकितवनिन्दा च सप्तमी जगती' इति। गतो विनियोगः॥

**प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः।**
**सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान्॥ १॥**

प्रावेपाः। मा। बृहतः। मादयन्ति। प्रवातेऽजाः। इरिणे। वर्वृतानाः।
सोमस्यऽइव। मौजऽवतस्य। भक्षः। विऽभीदकः। जागृविः। मह्यम्। अच्छान्॥ १॥

ᵛबृहतः महतो विभीतकस्य फलत्वेन संबन्धिनः ᵛप्रवातेजाः प्रवणे देशे जाताः ᵛइरिणे आस्फारे ᵛवर्वृतानाः प्रवर्तमानाः ᵛप्रावेपाः प्रवेपिणः कम्पनशीला अक्षाः ᵛमा मां ᵛमादयन्ति हर्षयन्ति। किंच ᵛजागृविः जयपराजययोर्हर्षशोकाभ्यां कितवानां जागरणस्य कर्ता ᵛविभीदकः विभीतकविकारोऽक्षो ᵛमह्यं माम् ᵛअच्छान् अचच्छदत् अत्यर्थं मादयति। तत्र दृष्टान्तः। ᵛसोमस्येव यथा सोमस्य ᵛमौजवतस्य। मुजवति पर्वते जातो मौजवतः। तस्य। तत्र ह्युत्तमः सोमो जायते। ᵛभक्षः पानं यजमानान् देवांश्च मादयति तद्वदित्यर्थः। तथा च यास्कः—'प्रवेपिणो मा महतो विभीतकस्य फलानि मादयन्ति। प्रवातेजाः प्रवणेजा इरिणे वर्तमाना इरिणं निर्ऋणमृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा। सोमस्येव मौजवतस्य भक्षो मौजवतो मुजवति जातो मुजवान् पर्वतो मुञ्जवान् मुञ्जो विमुच्यत[1] इषीकयेषीकेषतेर्गतिकर्मण[1] इयमपीतरेषीकैतस्मादेव विभीतको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्' (निरु. ९. ८) इति॥

**न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत्।**
**अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम्॥ २॥**

न। मा। मिमेथ। न। जिहीळे। एषा। शिवा। सखिऽभ्यः। उत। मह्यम्। आसीत्।
अक्षस्य। अहम्। एकऽपरस्य। हेतोः। अनुऽव्रताम्। अप। जायाम्। अरोधम्॥ २॥

ᵛएषा अस्मदीया जाया[2] ᵛमा मां कितवं ᵛन ᵛमिमेथ न च चुक्रोध ᵛन ᵛजिहीळे न च लज्जितवती। ᵛसखिभ्यः अस्मदीयेभ्यः कितवेभ्यः ᵛशिवा सुखकरी ᵛआसीत् अभूत्। ᵛउत अपि च ᵛमह्यं शिवासीत्। इत्थम् ᵛअनुव्रताम् अनुकूलां ᵛजायाम् ᵛएकपरस्य एकः परः प्रधानं यस्य तस्य ᵛअक्षस्य ᵛहेतोः कारणात् ᵛअहम् ᵛअप ᵛअरोधं परित्यक्तवानस्मीत्यर्थः॥

**द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम्।**
**अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम्॥ ३॥**

द्वेष्टि। श्वश्रूः। अप। जाया। रुणद्धि। न। नाथितः। विन्दते। मर्डितारम्।
अश्वस्यऽइव। जरतः। वस्न्यस्य। न। अहम्। विन्दामि। कितवस्य। भोगम्॥ ३॥

---

१. त-मु-विमुंचतीषीकामिषीकैषते॰; भ-विमुच्यतेषीकयेषीकेषते॰। २. त-'जाया' नास्ति।

ᵛश्वश्रूः जायाया माता गृहगतं कितवं ᵛद्वेष्टि निन्दतीत्यर्थः। किंच ᵛजाया भार्या ᵛअप ᵛरुणद्धि निरुणद्धि। अपि च ᵛनाथितः याचमानः कितवो[1] धनं ᵛमर्डितारं धनदानेन सुखयितारं ᵛन ᵛविन्दते न लभते। इत्थं बुद्ध्या विमृशन् ᵛअहं ᵛजरतः वृद्धस्य ᵛवस्न्यस्य। वस्नं मूल्यम्। तदर्हस्य ᵛअश्वस्येव ᵛकितवस्य ᵛभोगं ᵛन ᵛविन्दामि न लभे॥

अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्य१क्षः।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम्॥ ४॥

अन्ये। जायाम्। परि। मृशन्ति। अस्य। यस्य। अगृधत्। वेदने। वाजी। अक्षः।
पिता। माता। भ्रातरः। एनम्। आहुः। न। जानीमः। नयत। बद्धम्। एतम्॥ ४॥

ᵛयस्य कितवस्य ᵛवेदने धने ᵛवाजी बलवान् ᵛअक्षः देवः ᵛअगृधत् अभिकाङ्क्षां करोति तस्य ᵛअस्य कितवस्य ᵛजायां भार्याम् ᵛअन्ये प्रतिकितवाः ᵛपरि ᵛमृशन्ति[2] वस्त्रकेशाद्याकर्षणेन संस्पृशन्ति। किंच ᵛपिता[3] जननी च ᵛभ्रातरः सहोदराश्च ᵛएनं कितवम् ᵛआहुः वदन्ति। ᵛन वयमस्मदीयमेनं ᵛजानीमः। रज्ज्वा ᵛबद्धमेतं कितवं हे कितवाः यूयं ᵛनयत यथेष्टदेशं प्रापयतेति॥

यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव॥ ५॥

यत्। आऽदीध्ये। न। दविषाणि। एभिः। परायत्ऽभ्यः। अव। हीये। सखिभ्यः।
निऽउप्ताः। च। बभ्रवः। वाचम्। अक्रत। एमि। इत्। एषाम्। निःऽकृतम्। जारिणीऽइव॥५॥

ᵛयत् यदा अहम् ᵛआदीध्ये ध्यायामि तदानीम् ᵛएभिः अक्षैः ᵛन ᵛदविषाणि न दूषये न परितपामि। यद्वा। न दविषाणि न देविष्यामीत्यर्थः। ᵛपरायद्भ्यः स्वयमेव परागच्छद्भ्यः ᵛसखिभ्यः[4] सखिभूतेभ्यः कितवेभ्यः ᵛअव ᵛहीये अवहितो भवामि। नाहं प्रथममक्षान् विसृजामीति। किंच ᵛबभ्रवः बभ्रुवर्णा अक्षाः ᵛन्युप्ताः कितवैरवक्षिप्ताः सन्तः ᵛवाचमक्रत शब्दं कुर्वन्ति। तदा संकल्पं परित्यज्य अक्षव्यसनेनाभिभूयमानोऽहम् ᵛएषाम् अक्षाणां ᵛनिष्कृतं स्थानं ᵛजारिणीव यथा कामव्यसनेनाभिभूयमाना स्वैरिणी संकेतस्थानं याति तद्वत् ᵛएमीत् गच्छाम्येव॥ ॥ ३॥

सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३ शूशुजानः।
अक्षासो अस्य वि तिरन्ति कामं प्रतिदीव्ने दधत आ कृतानि॥ ६॥

सभाम्। एति। कितवः। पृच्छमानः। जेष्यामि। इति। तन्वा। शूशुजानः।
अक्षासः। अस्य। वि। तिरन्ति। कामम्। प्रतिऽदीव्ने। दधतः। आ। कृतानि॥ ६॥

ᵛतन्वा शरीरेण ᵛशूशुजानः शोशुचानो दीप्यमानः ᵛकितवः कोऽत्रास्ति धनिकस्तं ᵛजेष्यामीति ᵛपृच्छमानः पृच्छन् ᵛसभां कितवसंबन्धिनीम् ᵛएति गच्छति। तत्र ᵛप्रतिदीव्ने प्रतिदेवित्रे कितवाय ᵛकृतानि देवनोपयुक्तानि कर्माणि ᵛआ ᵛदधतः जयार्थमाभिमुख्येन मर्यादया वा दधतः ᵛअस्य कितवस्य ᵛकामम् इच्छाम् ᵛअक्षासः अक्षाः ᵛवि ᵛतिरन्ति वर्धयन्ति॥

---

१. ग-त-भ-'कितवो' नास्ति। २. त-भ६-मृजंति। ३. ग-पिता जनको माता। ४. त-भ६-'सखिभ्यः' नास्ति।

अक्षास इदंकुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा ॥ ७ ॥

अक्षासः । इत । अङ्कुशिनः । निऽतोदिनः । निऽकृत्वानः । तपनाः । तापयिष्णवः ।
कुमारऽदेष्णाः । जयतः । पुनःऽहनः । मध्वा । सम्ऽपृक्ताः । कितवस्य । बर्हणा ॥ ७ ॥

Vअक्षास Vइत् अक्षा एव Vअङ्कुशिनः अङ्कुशवन्तः Vनितोदिनः नितोदितवन्तश्च Vनिकृत्वानः पराजये निकर्तनशीलाश्छेत्तारो वा Vतपनाः पराजये कितवस्य संतापकाः Vतापयिष्णवः सर्वस्वहारकत्वेन कुटुम्बस्य संतापनशीलाश्च भवन्ति । किंच Vजयतः Vकितवस्य Vकुमारदेष्णाः धनदानेन धान्यतां लम्भयन्तः कुमाराणां दातारो भवन्ति। अपि च Vमध्वा मधुना Vसंपृक्ताः प्रतिकितवेन Vबर्हणा परिवृद्धेन सर्वस्वहरणेन कितवस्य Vपुनर्हणः पुनर्हन्तारो भवन्ति ॥

त्रिपञ्चाशः क्रीळति व्रात एषां देवइव सविता सत्यधर्मा ।
उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत्कृणोति ॥ ८ ॥

त्रिऽपञ्चाशः । क्रीळति । व्रातः । एषाम् । देवःऽइव । सविता । सत्यऽधर्मा ।
उग्रस्य । चित् । मन्यवे । न । नमन्ते । राजा । चित् । एभ्यः । नमः । इत् । कृणोति ॥ ८ ॥

Vएषाम् अक्षाणां Vत्रिपञ्चाशः त्र्यधिकपञ्चाशत्संख्याकः Vव्रातः संघः[1] Vक्रीळति आस्फारे विहरति । अक्षिकाः प्रायेण तावद्भिरक्षैर्दीव्यन्ति हि । तत्र दृष्टान्तः । Vसत्यधर्मा Vसविता सर्वस्य जगतः प्रेरकः सूर्यो Vदेवइव । यथा सविता देवो जगति विहरति तद्वदक्षाणां संघ आस्फारे विहरतीत्यर्थः । किंच Vउग्रस्य Vचित् क्रूरस्यापि Vमन्यवे क्रोधाय एते अक्षाः Vन Vनमन्ते न प्रह्वीभवन्ति । न वशे वर्तन्ते । तं[2] नमयन्तीत्यर्थः[2] । Vराजा Vचित् जगत ईश्वरोऽपि Vएभ्यः[3] Vनम Vइत् नमस्कारमेव देवनवेलायां Vकृणोति[4] । नावज्ञां करोतीत्यर्थः ॥

नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते ।
दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥ ९ ॥

नीचा । वर्तन्ते । उपरि । स्फुरन्ति । अहस्तासः । हस्तऽवन्तम् । सहन्ते ।
दिव्याः । अङ्गाराः । इरिणे । निऽउप्ताः । शीताः । सन्तः । हृदयम् । निः । दहन्ति ॥ ९ ॥

अपि चैतेऽक्षाः Vनीचा नीचीनस्थले Vवर्तन्ते । तथापि Vउपरि पराजयात् भीतानां द्यूतकराणां कितवानां हृदयस्योपरि Vस्फुरन्ति । Vअहस्तासः हस्तरहिता अप्यक्षाः Vहस्तवन्तं द्यूतकरं कितवं Vसहन्ते पराजयकरणेनाभिभवन्ति । Vदिव्याः दिवि भवा अपकृताः Vअङ्गाराः अङ्गारसदृशा अक्षाः Vइरिणे इन्धनरहिते आस्फारे Vन्युप्ताः Vशीताः शीतस्पर्शाः Vसन्तः अपि Vहृदयं कितवानामन्तःकरणं Vनिर्दहन्ति पराजयजनितसंतापेन भस्मीकुर्वन्ति ॥

१. त–' संघः ' नास्ति । २. ग-तमपि जयंतीत्यर्थः; त१.२.५.६–तमयंतीत्यर्थः; त४-भ१.२.४.७–तमपि यंतीत्यर्थः; त७–न नमयंतीत्यर्थः; भ६–नमयंतीत्यर्थः । ३. ग-त४-भ२.४–एभ्यः अक्षेभ्यः । ४. ग-भ२.४–कृणोति करोति ।

जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित्।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥ १० ॥

जाया। तप्यते। कितवस्य। हीना। माता। पुत्रस्य। चरतः। क्व। स्वित्।
ऋणऽवा। बिभ्यत्। धनम्। इच्छमानः। अन्येषाम्। अस्तम्। उप। नक्तम्। एति ॥ १० ॥

क्व स्वित् क्वापि चरतः निर्वेदाद्गच्छतः कितवस्य जाया भार्या हीना परित्यक्ता सती तप्यते वियोगजसंतापेन[1] संतप्ता भवति। माता जनन्यपि पुत्रस्य[2] क्वापि चरतः कितवस्य संबन्धाद्धीना[3] तप्यते। पुत्रशोकेन संतप्ता भवति। ऋणावा अक्षपराजयादृणवान् कितवः सर्वतो बिभ्यद्धनं स्तेयजनितम् इच्छमानः कामयमानः अन्येषां ब्राह्मणादीनाम् अस्तं गृहम्। 'अस्तं पस्त्यम्' इति गृहनामसु पाठात्। नक्तं रात्रौ उप एति चौर्यार्थमुपगच्छति ॥ ॥ ४ ॥

स्त्रियं दृष्ट्वाय कितवं तताप अन्येषां जायां सुकृतं च योनिम्।
पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद ॥ ११ ॥

स्त्रियम्। दृष्ट्वाय। कितवम्। तताप। अन्येषाम्। जायाम्। सुऽकृतम्। च। योनिम्।
पूर्वाह्णे। अश्वान्। युयुजे। हि। बभ्रून्। सः। अग्नेः। अन्ते। वृषलः। पपाद ॥ ११ ॥

कितवं कितवः। विभक्तिव्यत्ययः। अन्येषां स्वव्यतिरिक्तानां पुरुषाणां जायां जायाभूतां स्त्रियं नारीं सुखेन वर्तमानां सुकृतं सुष्ठु कृतं योनिं गृहं च[4] दृष्ट्वाय मजाया दुःखिता गृहं चासंस्कृतमिति ज्ञात्वा तताप तप्यते। पुनः[5] पूर्वाह्णे प्रातःकाले बभ्रून् बभ्रुवर्णान् अश्वान् व्यापकानक्षान् युयुजे युनक्ति। पुनश्च वृषलः वृषलकर्मा सः कितवो रात्रौ अग्नेरन्ते समीपे पपाद शीतार्तः सन् शेते ॥

यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव।
तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥ १२ ॥

यः। वः। सेनाऽनीः। महतः। गणस्य। राजा। व्रातस्य। प्रथमः। बभूव।
तस्मै। कृणोमि। न। धना। रुणध्मि। दश। अहम्। प्राचीः। तत्। ऋतम्। वदामि ॥ १२ ॥

हे अक्षाः वः युष्माकं महतो गणस्य संघस्य यः अक्षः सेनानीः नेता बभूव भवति व्रातस्य च। गणव्रातयोरल्पो भेदः। राजा ईश्वरः प्रथमः मुख्यो बभूव तस्मै अक्षाय कृणोमि अहमञ्जलिं करोमि। अतः परं धना धनानि अक्षार्थमहं न रुणध्मि न संपादयामीत्यर्थः। एतदेव दर्शयति। अहं दश दशसंख्याका अङ्गुलीः प्राचीः प्राङ्मुखीः करोमि। तत् एतत् अहम् ऋतं सत्यमेव वदामि। नानृतं ब्रवीमीत्यर्थः ॥

अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥ १३ ॥

---

१. त-भ६-मु-वियोगसंतापेन। २. त-भ-मु-पुत्रस्यापि। ३. ग-त-संबंधिनी; भ-संबंधीनी। ४. त-भ६-मु-'च' नास्ति। ५. त१.२.५.६.७-तः; त४-भ६-ततः।

अक्षैः । मा । दीव्यः । कृषिम् । इत् । कृषस्व । वित्ते । रमस्व । बहु । मन्यमानः ।
तत्र । गावः । कितव । तत्र । जाया । तत् । मे । वि । चष्टे । सविता । अयम् । अर्यः ॥१३॥

हे vकितव vबहु vमन्यमानः मद्वचने विश्वासं कुर्वंस्त्वम् vअक्षैर्मा vदीव्यः द्यूतं मा कुरु। vकृषिमित् कृषिमेव vकृषस्व कुरु। vवित्ते कृष्या संपादिते धने vरमस्व रतिं कुरु। vतत्र कृषौ vगावः भवन्ति। vतत्र vजाया भवति। vतत् एव धर्मरहस्यं श्रुतिस्मृतिकर्ता vसविता सर्वस्य प्रेरकः vअयं दृष्टिगोचरः vअर्यः ईश्वरः vवि vचष्टे विविधमाख्यातवान् ॥

मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥ १४ ॥

मित्रम् । कृणुध्वम् । खलु । मृळत । नः । मा । नः । घोरेण । चरत । अभि । धृष्णु ।
नि । वः । नु । मन्युः । विशताम् । अरातिः । अन्यः । बभ्रूणाम् । प्रऽसितौ । नु । अस्तु ॥१४॥

हे अक्षाः यूयं vमित्रं vकृणुध्वम् अस्मासु मैत्रीं कुरुत। vखलु इति पूरणः। vनः अस्मान् vमृळत सुखयत च। vनः अस्मान् vधृष्णु धृष्णुना। तृतीयार्थे प्रथमा। vघोरेण असह्येन vमा vअभि[1] vचरत मा गच्छत। किंच vवः युष्माकं vमन्युः क्रोधः vअरातिः अस्माकं शत्रुः vनि vविशताम् अस्मच्छत्रुषु तिष्ठतु। vअन्यः[2] अस्माकं[2] शत्रुः कश्चित् vबभ्रूणां बभ्रुवर्णानां युष्माकं vप्रसितौ प्रबन्धने vनु क्षिप्रम् vअस्तु भवतु ॥     ॥ ५ ॥

‘अबुध्रम्’ इति चतुर्दशर्चं षष्ठं सूक्तं धनाकपुत्रस्य लुशस्यार्षम्। इदमुत्तरं च वैश्वदेवम्। त्रयोदशीचतुर्दश्यौ त्रिष्टुभौ शिष्टा द्वादश जगत्यः। तथा चानुक्रान्तम्—‘अबुध्रं लुशो धानाको वैश्वदेवं तु द्वित्रिष्टुबन्तं तु’ इति। गतः सूक्तविनियोगः। एकादशिनस्य वैश्वदेवस्य पशोर्वपायागस्यानुवाक्या ‘विश्वे अद्य’ इत्येषा। सूत्रितं च—‘विश्वे अद्य मरुतो विश्व ऊत्या नो देवानामुप वेतु शंसः’ ( आश्व. श्रौ. ३. ७ ) इति ॥

अबुध्रमु त्य इन्द्रवन्तो अग्नयो ज्योतिर्भरन्त उषसो व्युष्टिषु ।
मही द्यावापृथिवी चेततामपोऽद्या देवानामव आ वृणीमहे ॥ १ ॥

अबुध्रम् । ऊँ इति । त्ये । इन्द्रऽवन्तः । अग्नयः । ज्योतिः । भरन्तः । उषसः । विऽउष्टिषु ।
मही इति । द्यावापृथिवी इति । चेतताम् । अपः । अद्य । देवानाम् । अवः । आ । वृणीमहे ॥१॥

vइन्द्रवन्तः यष्टव्यत्वेनेन्द्रसंबन्धिनः vत्ये ते अमी आहवनीयादयः[3] vअग्नयः vउषसो vव्युष्टिषु व्युच्छनेषु तमसां विवासनकालेषु vज्योतिः तेजः vभरन्तः धारयन्तः vअबुध्रं प्रबुद्धा आसन्। vमही महत्यौ vद्यावापृथिवी द्यावापृथिव्यौ vअपः कर्म। ‘अपोऽग्नः’ इति कर्मनामसु पाठात्। vचेततां जानीताम्। vअद्य अस्मिन्नहनि vदेवानाम् इन्द्रादीनाम् vअवः रक्षणं वयम् vआ vवृणीमहे ॥

दिवस्पृथिव्योरव आ वृणीमहे मातॄन्त्सिन्धून्पर्वताञ्छर्यणावतः ।
अनागास्त्वं सूर्यमुषासमीमहे भद्रं सोमः सुवानो अद्या कृणोतु नः ॥ २ ॥

१. त-भ-‘अभि’ नास्ति। २. त१.२.६-मु-नोस्माकमन्यः; त४.५.७-भ६-नोस्माकं। ३. त-वाहव°।

दि॒वःपृ॒थि॒व्योः । अवः॑ । आ । वृ॒णी॒म॒हे॒ । मा॒तॄन् । सिन्धू॑न् । पर्व॑तान् । श॒र्य॒णाऽव॑तः ।
अ॒ना॒गाःऽत्वम् । सूर्य॑म् । उ॒षस॑म् । ई॒म॒हे॒ । भ॒द्रम् । सोमः॑ । सु॒वा॒नः । अ॒द्य । कृ॒णो॒तु॒ । नः॒ ॥ २ ॥

^v^दिवःपृथिव्योः द्यावापृथिव्योः कार्यत्वेन[1] संबन्धि ^v^अवः रक्षणं वयम् ^v^आ ^v^वृणीमहे । किंच ^v^मातॄन् लोकस्य निर्मातॄन् ^v^सिन्धून् ^v^शर्यणावतः सरसः संबन्धिनः ^v^पर्वतान् शिलोच्चयांश्च तथा ^v^सूर्यमुषसं च ^v^अनागास्त्वं कर्मवैगुण्यजनितपापराहित्यम् ^v^ईमहे वयं याचामहे । किंच ^v^अद्य अस्मिन्नहनि ^v^नः अस्माकं ^v^सुवानः अभिषूयमाणः ^v^सोमः ^v^भद्रं कल्याणं ^v^कृणोतु करोतु ॥

द्यावा॑ नो अ॒द्य पृ॑थि॒वी अना॑गसो म॒ही त्रा॑येतां सु॒वि॒ताय॑ मा॒तरा॑ ।
उ॒षा उ॒च्छन्त्यप॑ बाधताम॒घं स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ३ ॥

द्यावा॑ । नः॒ । अ॒द्य । पृ॒थि॒वी इति॑ । अना॑गसः । म॒ही इति॑ । त्रा॒येता॑म् । सु॒वि॒ताय॑ । मा॒तरा॑ ।
उ॒षाः । उ॒च्छन्ती॑ । अप॑ । बा॒ध॒ता॒म् । अ॒घम् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ३ ॥

^v^मही महत्यौ ^v^मातरा मातरौ सर्वस्य मातृभूते[2] ^v^द्यावा ^v^पृथिवी द्यावापृथिव्यौ ^v^अद्य अस्मिन्नहनि ^v^अनागसः अपराधरहितान् ^v^नः अस्मान् ^v^सुविताय सुखाय ^v^त्रायेतां रक्षेताम्[3] । किंच ^v^उच्छन्ती तमांसि विवासयन्ती ^v^उषाः अस्माकम् ^v^अघं पापम् ^v^अप ^v^बाधताम् अपनयतु । अपि च ^v^समिधानं सम्यग्दीप्यमानं ^v^अग्निं ^v^स्वस्ति सर्वप्रकाराविनाशम् ^v^ईमहे वयं याचामहे ॥

इ॒यं न॑ उ॒स्रा प्र॑थ॒मा सु॑दे॒व्यं॑ रे॒वत्स॒निभ्यो॑ रे॒वती॒ व्यु॑च्छतु ।
आ॒रे म॒न्युं दु॑र्वि॒दत्र॑स्य धीमहि स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ४ ॥

इ॒यम् । नः॒ । उ॒स्रा । प्र॒थ॒मा । सु॒ऽदे॒व्य॑म् । रे॒वत् । स॒निऽभ्यः॑ । रे॒वती॑ । वि । उ॒च्छ॒तु॒ ।
आ॒रे । म॒न्युम् । दुः॒ऽवि॒दत्र॑स्य । धी॒म॒हि॒ । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ४ ॥

^v^रेवती धनवती ^v^प्रथमा मुख्या ^v^इयम् ^v^उस्रा पापानामुत्सारिणी उषाः ^v^सुदेव्यं शोभनदेवार्हं ^v^रेवत् धनवत् प्रधानयागकालत्वं ^v^सनिभ्यः भजमानेभ्यः ^v^नः अस्मभ्यं प्रयच्छन्ती ^v^व्युच्छतु तमांसि विवासयतु । किंच ^v^दुर्विदत्रस्य दुर्धनस्य पुरुषस्य ^v^मन्युं क्रोधम् ^v^आरे दूरे ^v^धीमहि निधीमहि । सिद्धमन्यत् ॥

प्र याः सिस्र॑ते॒ सूर्य॑स्य र॒श्मिभि॒र्ज्योति॒र्भर॑न्तीरु॒षसो॒ व्यु॑ष्टिषु ।
भ॒द्रा नो॑ अ॒द्य श्रव॑से॒ व्यु॑च्छत स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ५ ॥

प्र । याः । सिस्र॑ते । सूर्य॑स्य । र॒श्मिऽभिः॑ । ज्योतिः॑ । भर॑न्तीः । उ॒षसः॑ । विऽउ॑ष्टिषु ।
भ॒द्राः । नः॒ । अ॒द्य । श्रव॑से । वि । उ॒च्छ॒त॒ । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ५ ॥

^v^याः ^v^उषसः ^v^सूर्यस्य ^v^रश्मिभिः किरणैः ^v^प्र ^v^सिस्रते संगच्छन्ते ^v^व्युष्टिषु व्युच्छनेषु तमसां[4] विवासनकालेषु ^v^ज्योतिः आत्मीयं तेजः ^v^भरन्तीः भरन्ति च ता यूयं ^v^नः अस्माकम् ^v^अद्य अस्मिन्नहनि ^v^श्रवसे अन्नाय ^v^भद्राः भजनीया भवत ^v^व्युच्छत तमांसि विवासयत च । सिद्धमन्यत् ॥ ॥६॥

---

१. त-मु-कार्येण । २. त३-भ-मातृभूतौ । ३. त-भ६-मु-रक्षतां । ४. त-तमांसि; भ६-तमस ।

अनमीवा उषस आ चरन्तु न उदग्नयो जिहतां ज्योतिषा बृहत् ।
आयुक्षातामश्विना तूतुजिं रथं स्वस्त्यग्निं समिधानमीमहे ॥ ६ ॥

अनमीवाः । उषसः । आ । चरन्तु । नः । उत् । अग्नयः । जिहताम् । ज्योतिषा । बृहत् ।
अयुक्षाताम् । अश्विना । तूतुजिम् । रथम् । स्वस्ति । अग्निम् । समऽइधानम् । ईमहे ॥ ६ ॥

vअनमीवाः रोगरहिताः vउषसः vनः अस्मान् vआ vचरन्तु आगच्छन्तु । vबृहत् बृहता महता vज्योतिषा तेजसा युक्ताः vअग्नयः अपि vउत् vजिहताम् उद्गच्छन्तु । vअश्विना अश्विनावपि vतूतुजिं क्षिप्रगामिनं vरथम् vआयुक्षाताम् । अस्मान् प्रत्यागन्तुं रासभाभ्यां युङ्क्ताम् । 'हरित आदित्यस्य रासभावश्विनोः' ( नि. १. १५. ३-४ ) इति पाठात् । सिद्धमन्यत् ॥

श्रेष्ठं नो अद्य सवितर्वरेण्यं भागमा सुव स हि रत्नधा असि ।
रायो जनित्रीं धिषणामुप ब्रुवे स्वस्त्यग्निं समिधानमीमहे ॥ ७ ॥

श्रेष्ठम् । नः । अद्य । सवितः । वरेण्यम् । भागम् । आ । सुव । सः । हि । रत्नऽधाः । असि ।
रायः । जनित्रीम् । धिषणाम् । उप । ब्रुवे । स्वस्ति । अग्निम् । समऽइधानम् । ईमहे ॥ ७ ॥

हे vसवितः त्वम् vअद्य अस्मिन्नहनि vनः अस्मभ्यं vवरेण्यं वरणीयं vश्रेष्ठं प्रशस्यतमं vभागं भजनीयं धनम् vआ vसुव प्रेरय । देहीत्यर्थः । vहि यस्मात् vसः प्रार्थितस्त्वं vरत्नधाः श्रेष्ठानां धनानां संविभक्ता vअसि भवसि । तथा च निगमान्तरं—'विभक्तारं हवामहे वसोश्चित्रस्य राधसः सवितारं नृचक्षसम्' ( ऋ. सं. १.२२.७) इति । vरायः धनस्य vजनित्रीं vधिषणां सर्वदेवस्तुतिरूपां वाचम् vउप vब्रुवे अहमुपब्रवीमि । यद्वा । धिषणां देवीमुप ब्रुवे उपस्तौमीत्यर्थः । सिद्धमन्यत् ॥

पिपर्तु मा तदृतस्य प्रवाचनं देवानां यन्मनुष्या अमन्महि ।
विश्वा इदुस्राः स्पळुदेति सूर्यः स्वस्त्यग्निं समिधानमीमहे ॥ ८ ॥

पिपर्तु । मा । तत् । ऋतस्य । प्रऽवाचनम् । देवानाम् । यत् । मनुष्याः । अमन्महि ।
विश्वाः । इत् । उस्राः । स्पट् । उत् । एति । सूर्यः । स्वस्ति । अग्निम् । समऽइधानम् । ईमहे ॥८॥

vयत् vऋतस्य यज्ञस्य सत्यस्य वा संबन्धि vदेवानां vप्रवाचनं प्रकर्षेण गुणानां कथनं स्तोत्रं vमनुष्याः वयम् vअमन्महि कर्तुं जानीमः vतत् प्रवाचनं vमा मां vपिपर्तु पालयतु । किंच vसूर्यः vविश्वाः सर्वाः vउस्राः उषसः vस्पट् स्पृशन्नवगच्छन्[1] वा[2] vउदेति । सिद्धमन्यत् ॥

अद्वेषो अद्य बर्हिषः स्तरीमणि ग्राव्णां योगे मन्मनः साध ईमहे ।
आदित्यानां शर्मणि स्था भुरण्यसि स्वस्त्यग्निं समिधानमीमहे ॥ ९ ॥

अद्वेषः । अद्य । बर्हिषः । स्तरीमणि । ग्राव्णाम् । योगे । मन्मनः । साधे । ईमहे ।
आदित्यानाम् । शर्मणि । स्थाः । भुरण्यसि । स्वस्ति । अग्निम् । समऽइधानम् । ईमहे ॥ ९ ॥

---

१. त-स्पर्शन्नव°; भ-स्पशन्नव° । २. त१.२.६.७-भ६-मु-'वा' नास्ति; त४.५- सा ।

ᵛअद्य अस्मिन्नहनि ᵛबर्हिषः ᵛस्तरीमणि वेद्यां स्तरणे ᵛमन्मनः मननीयस्याभीष्टस्य फलस्य ᵛसाधे साधके ᵛग्रावणाम् अभिषवग्राव्णानां ᵛयोगे सोमेन सह संयोगे च सति ᵛअद्वेषः द्वेषवर्जितानादित्यान् ᵛईमहे वयमभीष्टं याचामहे । हे स्तोतः त्वं तेषाम् ᵛआदित्यानां देवानां ᵛशर्मणि सुखे स्थाने वा[१] ᵛस्थाः तिष्ठ । ᵛभुरण्यसि कर्तव्यानि कर्माणि बिभर्षि गच्छसि वा । सिद्धमन्यत् ॥

**आ नो॑ ब॒र्हिः स॑ध॒मादे॑ बृ॒हद्दि॒वि दे॒वाँ ई॑ळे सा॒दया॑ स॒प्त होतॄ॑न् ।**
**इन्द्रं॑ मि॒त्रं वरु॑णं सा॒तये॒ भगं॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ १० ॥**

आ । नः॒ । ब॒र्हिः । स॒ध॒ऽमादे॑ । बृ॒हत् । दि॒वि । दे॒वान् । ई॒ळे॒ । सा॒दय॑ । स॒प्त । होतॄ॑न् ।
इन्द्र॑म् । मि॒त्रम् । वरु॑णम् । सा॒तये॑ । भग॑म् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ १० ॥

ᵛनः अस्माकं ᵛबृहत् बृहति महति ᵛदिवि दीप्ते ᵛसधमादे । सह माद्यन्ति देवा यत्र तस्मिन् । ᵛबर्हिः बर्हिषि यज्ञे ᵛसप्त सप्तसंख्याकान् ᵛहोतॄन् वषट्कर्तॄन् ᵛइन्द्रं ᵛमित्रं च ᵛवरुणं च ᵛभगं च ᵛदेवान् इतरानपि यष्टव्यान् देवान् हे अग्ने त्वम् ᵛआ ᵛसादय । अग्नेराभिमुख्यकरणम् ' इहाद्य दैव्यं जनं बर्हिरा सादया वसो ' ( ऋ. सं. १. ४५. ९ ) इत्येवमादिमन्त्रैरवगम्यते । तत्र त्वया आसादितांस्तानिन्द्रादीन् देवानहं ᵛसातये धनलाभाय ᵛईळे स्तौमि । सिद्धमन्यत् ॥ ॥ ७ ॥

**त आ॑दित्या॒ आ ग॑ता स॒र्वता॑तये वृ॒धे नो॑ य॒ज्ञम॑वता सजोषसः ।**
**बृह॒स्पतिं॑ पू॒षण॑म॒श्विना॒ भगं॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ११ ॥**

ते । आ॒दि॒त्याः॒ । आ । ग॒त॒ । स॒र्वता॑तये । वृ॒धे । नः॒ । य॒ज्ञम् । अ॒व॒त॒ । स॒ऽजो॒ष॒सः॒ ।
बृह॒स्पति॑म् । पू॒षण॑म् । अ॒श्विना॑ । भग॑म् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ११ ॥

हे ᵛआदित्याः येऽस्माभिराहूताः ᵛते यूयं ᵛसर्वतातये यज्ञार्थम् ᵛआ ᵛगत आगच्छत । आगत्य च हे ᵛसजोषसः संगता यूयं ᵛनः अस्माकं ᵛवृधे वर्धनाय ᵛयज्ञं प्रति ᵛअवत गच्छत । वयं च ᵛबृहस्पतिं ᵛपूषणं च ᵛअश्विना अश्विनौ च ᵛभगं भगाख्यं देवं च ᵛसमिधानं सम्यग्दीप्तम् ᵛअग्निं च ᵛस्वस्ति सर्वप्रकाराविनाशम् ᵛईमहे याचामहे ॥

**तन्नो॑ देवा यच्छत सुप्रवाच॒नं छ॒र्दिरा॑दित्याः सु॒भरं॑ नृ॒पाय्य॑म् ।**
**पश्वे॑ तो॒काय॒ तन॑याय जी॒वसे॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ १२ ॥**

तत । नः॒ । दे॒वाः॒ । य॒च्छ॒त॒ । सु॒ऽप्र॒वा॒च॒नम् । छ॒र्दिः । आ॒दि॒त्याः॒ । सु॒ऽभर॑म् । नृ॒ऽपाय्य॑म् ।
पश्वे॑ । तो॒काय॑ । तन॑याय । जी॒वसे॑ । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ १२ ॥

हे ᵛआदित्याः ᵛदेवाः यूयं ᵛसुप्रवाचनम् अत्यन्तं प्रशस्तं ᵛसुभरं सुसमृद्धं ᵛनृपाय्यं नृणां रक्षकं ᵛतत् अस्मदभिलषितं ᵛछर्दिः गृहं ᵛनः अस्माकं ᵛपश्वे पशवे ᵛतोकाय[१] पुत्राय ᵛतनयाय पौत्राय च ᵛजीवसे जीवनार्थं ᵛयच्छत दत्त । सिद्धमन्यत् ॥

**विश्वे॑ अ॒द्य म॒रुतो॒ विश्व॑ ऊ॒ती विश्वे॑ भवन्त्व॒ग्नयः॒ समि॑द्धाः ।**
**विश्वे॑ नो दे॒वा अव॒सा ग॑मन्तु॒ विश्व॑मस्तु॒ द्रवि॑णं॒ वाजो॑ अ॒स्मे ॥ १३ ॥**

---

१. त–' तोकाय ' नास्ति ।

विश्वे॑ । अ॒द्य । म॒रुतः॑ । विश्वे॑ । ऊ॒ती । विश्वे॑ । भ॒व॒न्तु॒ । अ॒ग्नयः॑ । सम्ऽइ॑द्धाः ।
विश्वे॑ । नः॒ । दे॒वाः । अव॑सा । आ । ग॒म॒न्तु॒ । विश्व॑म् । अ॒स्तु॒ । द्रवि॑णम् । वाजः॑ । अ॒स्मे इति॑ ॥ १३ ॥

ᵛअद्य अस्मिन्नहनि प्रधानयागदिवसे ᵛविश्वे सर्वे ᵛमरुतः ᵛविश्वे सर्वे मरुद्गणसहचरिता[1] रुद्रादयो देवाश्च ᵛऊती ऊत्यै रक्षणाय भवन्तु । अपि च ᵛविश्वे सर्वे ᵛअग्नयः आहवनीयादयः ᵛसमिद्धाः संदीप्ताः ᵛभवन्तु । अपि च ᵛविश्वे सर्वे इन्द्रादयः ᵛदेवाः ᵛनः अस्माकम् ᵛअवसा रक्षणेन ᵛआ ᵛगमन्तु आगच्छन्तु । किंच ᵛअस्मे अस्मासु ᵛविश्वं सर्वं ᵛद्रविणं धनं ᵛवाजः अन्नं च ᵛअस्तु भवतु[2] ॥

यं दे॑वा॒सोऽव॑थ॒ वाज॑साता॒ यं त्राय॑ध्वे॒ यं पि॑पृ॒थात्यंहः॑ ।
यो वो॑ गोपी॒थे न भ॒यस्य॒ वेद॒ ते स्या॑म दे॒ववी॑तये तु॒रासः॑ ॥ १४ ॥

यम् । दे॒वा॒सः॒ । अव॑थ । वाज॑ऽसातौ । यम् । त्राय॑ध्वे । यम् । पि॒पृ॒थ । अति॑ । अंहः॑ ।
यः । वः॒ । गो॒ऽपी॒थे । न । भ॒यस्य॑ । वेद॑ । ते । स्या॒म॒ । दे॒वऽवी॑तये । तु॒रा॒सः॒ ॥ १४ ॥

हे ᵛतुरासः अभीष्टप्रदाने क्षिप्राः ᵛदेवासः देवा यूयं ᵛवाजसातौ संग्रामे ᵛयं मनुष्यम् ᵛअवथ रक्षथ ᵛयं च ᵛत्रायध्वे शत्रोः पालयथ ᵛयं च ᵛअंहः पापम् ᵛअति अतिर्नाय ᵛपिपृथ कामैः पूरयथ ᵛयः चापि मनुष्यः ᵛवः युष्माकं कार्यत्वेन संबन्धिनि ᵛगोपीथे रक्षणे ᵛभयस्य भयं ᵛन ᵛवेद न जानाति ᵛते[3] सर्वे वयं ᵛदेववीतये यज्ञार्थं ᵛस्याम भवेम ॥　　॥ ८ ॥

'उषासानक्ता' इति चतुर्दशर्चं सप्तमं सूक्तं धानाकस्य लुशस्यार्षम् । आदितो द्वादश जगत्यस्ततो द्वे त्रिष्टुभौ । विश्वे देवा देवता । पूर्वसूक्ते 'वैश्वदेवं तु द्वित्रिष्टुबन्तं तु' इत्युक्तत्वात् । 'उषासानक्ता' इत्यनुक्रान्तम् । आभिप्लविके षष्ठेऽहनि वैश्वदेव इदं वैश्वदेवनिविद्धानम् । सूत्रितं च—'कतरा पूर्वोषासानक्तेति वैश्वदेवम्' ( आश्व. श्रौ. ७. ७ ) इति ॥

उ॒षासा॒नक्ता॑ बृह॒ती सु॒पेश॑सा द्यावा॒क्षामा॒ वरु॑णो मि॒त्रो अ॑र्य॒मा ।
इन्द्रं॑ हुवे म॒रुतः॒ पर्व॑ताँ अ॒प आ॑दि॒त्यान्द्यावा॑पृथि॒वी अ॒पः स्वः॑ ॥ १ ॥

उ॒षसा॒नक्ता॑ । बृ॒ह॒ती इति॑ । सु॒ऽपेश॑सा । द्यावा॒क्षामा॑ । वरु॑णः । मि॒त्रः । अ॒र्य॒मा ।
इन्द्र॑म् । हु॒वे॒ । म॒रुतः॑ । पर्व॑तान् । अ॒पः । आ॒दि॒त्यान् । द्यावा॑पृथि॒वी इति॑ । अ॒पः । स्व१रिति॑ स्वः॑ ॥ १ ॥

ᵛबृहती बृहत्यौ महत्यौ ᵛसुपेशसा सुरूपे ᵛउषासानक्ता राज्युषसौ ᵛद्यावाक्षामा[4] द्यावापृथिव्यौ च ᵛवरुणो ᵛमित्रः मित्रावरुणौ च ᵛअर्यमा च येऽत्र विहिता देवाः तानेतान् ᵛइन्द्रं ᵛमरुतः च ᵛपर्वतान् च ᵛअपः[5] उदकानि च ᵛआदित्यान् च ᵛद्यावापृथिवी द्यावापृथिव्यौ च । पुनर्द्यावापृथिव्योर्ग्रहणमादरार्थम् । ᵛअपः अन्तरिक्षं च ᵛस्वः सर्वं च यष्टव्यं देवजातं ᵛहुवे ह्वयामि ॥

द्यौश्च॑ नः पृथि॒वी च॒ प्रचे॑तस ऋ॒ताव॑री रक्षता॒मंह॑सो रि॒षः ।
मा दु॑र्वि॒दत्रा॒ निर्ऋ॑तिर्न ईशत॒ तद्दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥ २ ॥

१. ग-°सहचरा । २. त-भवंतु । ३. त-'ते' नास्ति । ४. त-'द्यावाक्षामा' नास्ति ।
५. ग-त३.४-भ—नोस्माकमपः ।

द्यौः । च । नः । पृथिवी । च । प्रऽचेतसा । ऋतवरी इत्यृतऽवरी । रक्षताम् । अंहसः । रिषः । मा । दुःऽविदत्रा । निःऽऋतिः । नः । ईशत । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥२॥

प्रचेतसा सुबुद्धी ऋतावरी यज्ञवत्यौ सत्यवत्यौ[1] द्यौश्च पृथिवी च द्यावापृथिव्यावुभे नः अस्मान् रिपः हिंसकात्[2] अंहसः पापाच्च[3] रक्षताम्। किंच दुर्विदत्रा कुत्सितज्ञाना निर्ऋतिः मृत्युदेवता नः अस्माकं मा ईशत ईश्वरी मा भूत्। किंच वयं देवानां संबन्धि तत् असाधारणम् अवः रक्षणम् अद्य अस्मिन्नहनि प्रधानयागदिवसे वृणीमहे प्रार्थयामहे ॥

विश्वस्मान्नो अदितिः पात्वंहसो माता मित्रस्य वरुणस्य रेवतः ।
स्वर्वज्ज्योतिरवृकं नशीमहि तद्देवानामवो अद्या वृणीमहे ॥ ३ ॥

विश्वस्मात् । नः । अदितिः । पातु । अंहसः । माता । मित्रस्य । वरुणस्य । रेवतः । स्वःऽवत् । ज्योतिः । अवृकम् । नशीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ३ ॥

रेवतः धनवतः मित्रस्य वरुणस्य च धनवतोर्मित्रावरुणयोः माता जननी अदितिः देवी नः अस्मान् विश्वस्मात् सर्वस्मात् अंहसः पापात् पातु रक्षतु । किंच वयम् अवृकं बाधकरहितं स्ववंत् सर्वं ज्योतिः तेजः नशीमहि । नशिः पलायनकर्मा। पलायनं च शीघ्रगमनम्। शीघ्रं प्राप्नुम इत्यर्थः। सिद्धमन्यत् ॥

ग्रावा वदन्नप रक्षांसि सेधतु दुष्ष्वप्न्यं निर्ऋतिं विश्वमत्रिणम् ।
आदित्यं शर्म मरुतामशीमहि तद्देवानामवो अद्या वृणीमहे ॥ ४ ॥

ग्रावा । वदन् । अप । रक्षांसि । सेधतु । दुःऽस्वप्न्यम् । निःऽऋतिम् । विश्वम् । अत्रिणम् । आदित्यम् । शर्म । मरुताम् । अशीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ४ ॥

ग्रावा अभिषवपाषाणः वदन् अभिषववेलायां शब्दं कुर्वन् रक्षांसि यागविघ्नकारीणि अप सेधतु विनिवारयतु। दुःस्वप्न्यं दुःस्वप्नप्रभवमस्मदीयमनिष्टं चाप सेधतु। निर्ऋतिं मृत्युदेवतां चाप सेधतु। अत्रिणम् अदनशीलं विश्वं सर्वं पिशाचादिकं चाप सेधतु। एवं निर्विघ्नत्वेन[4] निष्पन्ने यागे वयम् आदित्यम् आदित्यानां संबन्धि मरुतां च संबन्धि शर्म सुखम् अशीमहि प्राप्नुयाम। सिद्धमन्यत् ॥

एन्द्रो बर्हिः सीदतु पिन्वतामिळा बृहस्पतिः सामभिर्ऋक्को अर्चतु ।
सुप्रकेतं जीवसे मन्म धीमहि तद्देवानामवो अद्या वृणीमहे ॥ ५ ॥

आ । इन्द्रः । बर्हिः । सीदतु । पिन्वताम् । इळा । बृहस्पतिः । सामऽभिः । ऋक्कः । अर्चतु । सुऽप्रकेतम् । जीवसे । मन्म । धीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ५ ॥

इन्द्रः बर्हिः आ सीदतु। इळा माध्यमिका स्तनयित्नुलक्षणा वागपि पिन्वतां सिञ्चतु। सामभिः गीयमानः[5] ऋक्कः स्तुतिमान् बृहस्पतिः अपि अर्चतु अस्मान् पूजयतु।

---

१. त-भ-मु—सत्यवत्यौ च । २. त२.६—हिंसकमकात्; त५—हिंसकसकाशात् । ३. ग-त३-भ—पापात् । ४. ग—चाविघ्नेन; त-भ-मु—निर्विघ्नेन । ५. त१.२.३.४.५.७-भ—गीयमाने; त६-मु—गायमाने ।

किंच वयं ᵛसुप्रकेतं सुप्रज्ञानं ᵛमन्म मननीयं धनं स्तोत्रं वा ᵛधीमहि निदधीमहि ᵛजीवसे जीवनाय। सिद्धमन्यत्॥ ॥ ९ ॥

दिविस्पृशं यज्ञमस्माकमश्विना जीराध्वरं कृणुतं सुम्नमिष्टये।
प्राचीनरश्मिमाहुतं घृतेन तद्देवानामवो अद्या वृणीमहे ॥ ६ ॥

दिविऽस्पृशम्। यज्ञम्। अस्माकम्। अश्विना। जीरऽअध्वरम्। कृणुतम्। सुम्नम्। इष्टये।
प्राचीनऽरश्मिम्। आऽहुतम्। घृतेन। तत्। देवानाम्। अवः। अद्य। वृणीमहे ॥ ६ ॥

हे अश्विनौ युवां नोऽस्माकं ᵛयज्ञं ᵛदिविस्पृशं दिवि स्प्रष्टारं गन्तारं ᵛकृणुतं कुरुतम्[1]। तथा ᵛजीराध्वरं क्षिप्रं हिंसारहितं च यज्ञमस्माकं ᵛकृणुतं कुरुतम्। ᵛइष्टये अभिलषितसिद्ध्यर्थं ᵛसुम्नं सुखं च कुरुतम्। किंच ᵛघृतेन आज्येन ᵛआहुतम् अग्निं ᵛप्राचीनरश्मिं देवाभिमुखं कुरुतमित्यर्थः। सिद्धमन्यत्॥

उप ह्वये सुहवं मारुतं गणं पावकमृष्वं सख्याय शंभुवम्।
रायस्पोषं सौश्रवसाय धीमहि तद्देवानामवो अद्या वृणीमहे ॥ ७ ॥

उप। ह्वये। सुऽहवम्। मारुतम्। गणम्। पावकम्। ऋष्वम्। सख्याय। शम्ऽभुवम्।
रायः। पोषम्। सौश्रवसाय। धीमहि। तत्। देवानाम्। अवः। अद्य। वृणीमहे ॥ ७ ॥

ᵛसुहवं स्वाह्वानं ᵛपावकं शोधकम् ᵛऋष्वं दर्शनीयं ᵛशंभुवं सुखस्य भावयितारं ᵛरायः धनस्य ᵛपोषं पोषकं ᵛमारुतं मरुतां संबन्धिनं ᵛगणं संघं ᵛसख्याय सखिभावाय ᵛउप ᵛह्वये उपगम्य ह्वयामि। आगतं गणं ᵛसौश्रवसाय शोभनान्नत्वाय सुयशस्त्वाय[2] वा वयं ᵛधीमहि बुद्धौ निदधीमहि। सिद्धमन्यत्॥

अपां पेरुं जीवधन्यं भरामहे देवाव्यं सुहवमध्वरश्रियम्।
सुरश्मिं सोममिन्द्रियं यमीमहि तद्देवानामवो अद्या वृणीमहे ॥ ८ ॥

अपाम्। पेरुम्। जीवऽधन्यम्। भरामहे। देवऽअव्यम्। सुऽहवम्। अध्वरऽश्रियम्।
सुऽरश्मिम्। सोमम्। इन्द्रियम्। यमीमहि। तत्। देवानाम्। अवः। अद्य। वृणीमहे ॥८॥

ᵛअपाम् उदकानां ᵛपेरुं पालकं ᵛजीवधन्यम्। धन्या जीवा यस्मिन्नसौ जीवधन्यः। तं ᵛदेवाव्यं देवानां तर्पकं ᵛसुहवं शोभनाह्वानं शोभनस्तुतिं वा ᵛअध्वरश्रियं ᵛसुरश्मिं शोभनांशुं ᵛसोमं ᵛभरामहे धारयामः। पत्नीशालातो हविर्धानं प्रति प्रापयामो वा। भृतं तं सोमम् ᵛइन्द्रियं वीर्यं[3] ᵛयमीमहि वयं याचामहे। सिद्धमन्यत्॥

सनेम तत्सुसनिता सनित्वभिर्वयं जीवा जीवपुत्रा अनागसः।
ब्रह्मद्विषो विष्वगेनो भरेरत तद्देवानामवो अद्या वृणीमहे ॥ ९ ॥

सनेम। तत्। सुऽसनिता। सनित्वऽभिः। वयम्। जीवाः। जीवऽपुत्राः। अनागसः।
ब्रह्मऽद्विषः। विष्वक्। एनः। भरेरत। तत्। देवानाम्। अवः। अद्य। वृणीमहे ॥ ९ ॥

१. त-भ६-मु-'कुरुतं' नास्ति। २. त-शास्त्वाय। ३. त१.२.६.७-वीर्यं तत्।

<sup>v</sup>जीवाः जीवन्तः <sup>v</sup>जीवपुत्राः जीवनवत्पुत्राश्च[1] <sup>v</sup>अनागसः अपराधवर्जिताश्च <sup>v</sup>वयं धनाकाङ्क्षिणः <sup>v</sup>सनित्वभिः संभक्तृभिः पुत्रपौत्रादिभिः सह <sup>v</sup>सुसनिता शोभनेन भजनेन <sup>v</sup>तत् देवजातं <sup>v</sup>सनेम। स्तुत्या हविष्प्रदानेन च संभजेमहि। किंच <sup>v</sup>ब्रह्मद्विषः ब्राह्मणानामस्माकं द्वेष्टारः <sup>v</sup>विष्वक्[2] नानागच्छत्[2] <sup>v</sup>एनः अस्मदीयं पापं <sup>v</sup>भरेरत आत्मनि धारयन्तु। पोषयन्तु। सिद्धमन्यत्॥

ये स्था मनो॑र्य॒ज्ञिया॒स्ते शृ॑णोतन॒ यद्वो॑ देवा॒ ईम॑हे॒ तद्द॑दातन ।
जैत्रं॒ क्रतुं॑ रयि॒मद्वी॒रव॒द्यश॒स्तद्दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥ १० ॥

ये । स्थ । मनोः॑ । य॒ज्ञियाः॑ । ते । शृ॒णो॒त॒न॒ । यत् । वः॒ । दे॒वाः॒ । ईम॑हे॒ । तत् । द॒दा॒त॒न॒ ।
जैत्र॑म् । क्रतु॑म् । र॒यि॒मत् । वी॒रऽव॑त् । यशः॑ । तत् । दे॒वाना॑म् । अवः॑ । अ॒द्य । वृ॒णी॒म॒हे॒ ॥ १० ॥

हे <sup>v</sup>देवाः <sup>v</sup>ये यूयं <sup>v</sup>मनोः मनुष्यस्य <sup>v</sup>यज्ञियाः यज्ञार्हाः <sup>v</sup>स्थ भवथ <sup>v</sup>ते यूयं <sup>v</sup>शृणोतन अस्मदीयां स्तुतिं <sup>v</sup>शृणुत। किंच हे देवाः <sup>v</sup>वः युष्मान् <sup>v</sup>यत् अभीष्टम् <sup>v</sup>ईमहे याचामहे <sup>v</sup>तत् <sup>v</sup>जैत्रं जयशीलं <sup>v</sup>क्रतुं प्रज्ञानं <sup>v</sup>रयिमत् धनवत <sup>v</sup>वीरवत्[3] पुत्राद्युपेतं <sup>v</sup>यशः च <sup>v</sup>ददातन नोऽस्मभ्यं प्रयच्छत। सिद्धमन्यत्॥ ॥ १० ॥

म॒हद॒द्य म॑ह॒ताना वृ॑णीम॒हेऽवो॑ दे॒वानां॑ बृह॒ताम॑न॒र्वणा॑म् ।
यथा॒ वसु॑ वी॒रजा॑तं॒ नशा॑महै॒ तद्दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥ ११ ॥

म॒ह॒त् । अ॒द्य । म॒ह॒ताम् । आ । वृ॒णी॒म॒हे॒ । अवः॑ । दे॒वाना॑म् । बृ॒ह॒ताम् । अ॒न॒र्वणा॑म् ।
यथा॑ । वसु॑ । वी॒रऽजा॑तम् । नशा॑महै । तत् । दे॒वाना॑म् । अवः॑ । अ॒द्य । वृ॒णी॒म॒हे॒ ॥ ११ ॥

<sup>v</sup>अद्य अस्मिन्नहनि <sup>v</sup>महतां श्रेष्ठानां <sup>v</sup>बृहतां वृद्धानाम् <sup>v</sup>अनर्वणाम् अप्रतिगतानां <sup>v</sup>देवानाम् इन्द्रादीनां संबन्धि <sup>v</sup>महत् अधिकम् <sup>v</sup>अवः रक्षणम् <sup>v</sup>आ <sup>v</sup>वृणीमहे प्रार्थयामहे। किंच वयं <sup>v</sup>यथा <sup>v</sup>वसु धनं <sup>v</sup>वीरजातम् अपत्यजातं च <sup>v</sup>नशामहै प्राप्नुयाम तथा ते देवाः कुर्वन्त्विति शेषः। सिद्धमन्यत्॥

म॒हो अ॒ग्नेः स॑मिधा॒नस्य॒ शर्म॒ण्यना॑गा मि॒त्रे वरु॑णे स्व॒स्तये॑ ।
श्रेष्ठे॑ स्याम सवि॒तुः सवी॑मनि॒ तद्दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥ १२ ॥

म॒हः । अ॒ग्नेः । स॒म्ऽइ॒धा॒नस्य॑ । शर्म॑णि । अना॑गाः । मि॒त्रे । वरु॑णे । स्व॒स्तये॑ ।
श्रेष्ठे॑ । स्या॒म॒ । स॒वि॒तुः । सवी॑मनि । तत् । दे॒वाना॑म् । अवः॑ । अ॒द्य । वृ॒णी॒म॒हे॒ ॥ १२ ॥

<sup>v</sup>समिधानस्य समिध्यमानस्य <sup>v</sup>महः महतः <sup>v</sup>अग्नेः <sup>v</sup>शर्मणि सुखे वयं <sup>v</sup>स्याम भवेम। किंच वयम् <sup>v</sup>अनागाः अनागसः। वचनव्यत्ययः। स्याम। अपि च <sup>v</sup>मित्रे <sup>v</sup>वरुणे मित्रावरुणयोः। षष्ठ्यर्थे सप्तमी। <sup>v</sup>सवितुः च <sup>v</sup>सवीमनि प्रसवे <sup>v</sup>स्वस्तये सर्वप्रकाराविनाशाय स्याम। सिद्धमन्यत्॥

ये स॑वि॒तुः स॒त्यस॑वस्य॒ विश्वे॑ मि॒त्रस्य॑ व्र॒ते वरु॑णस्य दे॒वाः ।
ते सौभ॑गं वी॒रव॒द्गोम॒दप्नो॒ दधा॑तन॒ द्रवि॑णं चि॒त्रम॒स्मे ॥ १३ ॥

---

१. ग–जीवत्पुत्राश्च। २. त७–नानारूपं। ३. त–'वीरवत्' नास्ति।

ये । सवितुः । सत्यऽसवस्य । विश्वे । मित्रस्य । व्रते । वरुणस्य । देवाः ।
ते । सौभगम् । वीरऽवत् । गोऽमत् । अप्नः । दधातन । द्रविणम् । चित्रम् । अस्मे इति ॥१३॥

ये विश्वे देवाः सत्यसवस्य सत्यप्रसवस्य सवितुः मित्रस्य वरुणस्य मित्रावरुणयोश्च व्रते प्रसवाख्ये कर्मणि भवन्ति ते यूयं सौभगं सौभाग्यं वीरवत् पुत्राद्युपेतं गोमत् गोयुक्तं चित्रं पूजनीयं द्रविणं धनं च अप्नः कर्म च अस्मे मह्यं दधातन प्रयच्छत ॥

सविता पश्चातात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ।
सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥ १४ ॥

सविता । पश्चातात् । सविता । पुरस्तात् । सविता । उत्तरात्तात् । सविता । अधरात्तात् ।
सविता । नः । सुवतु । सर्वऽतातिम् । सविता । नः । रासताम् । दीर्घम् । आयुः ॥१४॥

पश्चातात् पश्चिमतः स्थितः सविता पुरस्तात् पूर्वतश्च स्थितः सविता उत्तरात्तात् उत्तरतः स्थितश्च सविता[1] नः अस्माकं सर्वतातिं सर्वमभिलषितं धनादिकं सुवतु प्रेरयतु । किंच सविता एव नः अस्मभ्यं दीर्घं बहुकालीनम् आयुः रासतां ददातु । बहुधा सवितृपदग्रहणमत्यन्तमादरार्थम् ॥ ॥ ११ ॥

'नमो मित्रस्य' इति द्वादशर्चमष्टमं सूक्तम् । अभितपा नाम सूर्यपुत्र ऋषिः । इदमादीनि पञ्च सूक्तानि जागतानि । अस्य सूक्तस्य दशमी त्रिष्टुप् । सूर्यो देवता । तथा चानुक्रान्तं—'नमो द्वादश सौर्योऽभितपाः सौर्यं जागतं वै त्रिष्टुब्दशमी' इति । आश्विनशस्त्रे सूर्योदयादूर्ध्वं सौर्यकाण्ड एतत्सूक्तम् । सूत्रितं च—'चित्रं देवानां नमो मित्रस्य' (आश्व. श्रौ. ६. ५) इति । विषुवति निष्केवल्य आद्यस्तृचोऽनुरूपः । सूत्रितं च—'विभ्राड्बृहत्पिबतु सोम्यं मधु नमो मित्रस्य वरुणस्य चक्षस इति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ८. ६) इति । स्वपन्तमभ्यस्तमये सति रात्रिशेषं स्थित्वा प्रातः 'येन सूर्य ज्योतिषा' इत्यादिभिः पञ्चभिः सूर्यं उपस्थेयः । सूत्रितं च—'अन्याधितं चेत्स्वपन्तमादित्योऽभ्यस्तमियाद्वाग्यतोऽनुपविशन् रात्रिशेषं भूत्वा येन सूर्य ज्योतिषा बाधसे तम इति पञ्चभिरादित्यमुपतिष्ठेत' (आश्व. गृ. ३.७.१) । स्वपन्तमभ्युदिते 'यस्य ते विश्वा' इत्यादिभिश्चतसृभिः सूर्य उपस्थेयः । सूत्रितं च—'अभ्युदियाच्चेदकर्मश्रान्तमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तराभिश्चतसृभिरुपस्थानम्' (आश्व. गृ. ३. ७. २) इति । एकादशिनस्य सौर्यस्य पशोर्हविषो याज्या । सूत्रितं च—'शं नो भव चक्षसा शं नो अह्ना वायो भूष शुचिपाः' (आश्व. श्रौ. ३. ८) इति । होत्रकाणां शकलाधाने 'यद्वो देवाः' इत्येषा (आश्व. श्रौ. ६. १२) । विवाहे कन्यारोदनीये 'जीवं रुदन्ती' इत्येषा जप्या (आश्व. गृ. १. ८. ४) ॥

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ॥ १ ॥

नमः । मित्रस्य । वरुणस्य । चक्षसे । महः । देवाय । तत् । ऋतम् । सपर्यत ।
दूरेऽदृशे । देवऽजाताय । केतवे । दिवः । पुत्राय । सूर्याय । शंसत ॥ १ ॥

१. ग–सविता एवमुपरिष्टात् दक्षिणतश्च स्थितः सविता; त३-भ–सविता अधरात्तात् अधरतश्च स्थितः सविता एवमुपरिष्टात् दक्षिणतश्च स्थितः सविता; त४–एवमुपरिष्टात् दक्षिणतः स्थितः सविता ।

हे ऋत्विजः यूयं मित्रस्य वरुणस्य मित्रावरुणयोः चक्षसे द्रष्ट्रे महः महते देवाय द्योतमानाय दूरेदृशे दूरे सन्तमपि पश्यते देवजाताय देवेषु जाताय केतवे विश्वस्य प्रज्ञापकाय दिवः पुत्राय पुत्रभूताय। दिवि जायमानत्वात् तत्पुत्रत्वव्यपदेशः। सूर्याय सूर्यार्थं नमः कृत्वा तत् विहितम् ऋतं यागादिलक्षणं कर्म सपर्यत पूजयत। शंसत स्तुतिमपि कुरुत॥

सा मा सत्योक्तिः परि पातु विश्वतो द्यावा च यत्र ततनन्नहानि च।
विश्वमन्यन्नि विशते यदेजति विश्वाहापो विश्वाहोदेति सूर्यः॥ २॥

सा। मा। सत्यऽउक्तिः। परि। पातु। विश्वतः। द्यावा। च। यत्र। ततनन्। अहानि। च।
विश्वम्। अन्यत्। नि। विशते। यत्। एजति।
विश्वाहा। आपः। विश्वाहा। उत्। एति। सूर्यः॥ २॥

सा सत्योक्तिः तत्सत्यवचनं मा मां विश्वतः सर्वतः परि पातु परिरक्षतु। यया सत्योक्त्या यत्र यस्मिन् देशे द्यावा च द्यावापृथिव्यौ अहानि रात्रयः च ततनन् अतन्वन् तत्र विश्वं सर्वम् अन्यत् भूतजातं नि विशते विश्राम्यति। यत् एतद्भूतजातम् एजति कम्पते विश्वाहा सर्वदा आपः च स्यन्दन्ते विश्वाहा सर्वदा सूर्यः च उदेति। सा सत्योक्तिर्मां परिपात्वित्यर्थः॥

न ते अदेवः प्रदिवो नि वासते यदेतशेभिः पतरै रथर्यसि।
प्राचीनमन्यदनु वर्तते रज उदन्येन ज्योतिषा यासि सूर्य॥ ३॥

न। ते। अदेवः। प्रऽदिवः। नि। वासते। यत्। एतशेभिः। पतरैः। रथर्यसि।
प्राचीनम्। अन्यत्। अनु। वर्तते। रजः। उत्। अन्येन। ज्योतिषा। यासि। सूर्य॥ ३॥

हे सूर्य ते तव समीपे प्रदिवः प्रत्नः पुरातनः कश्चित् अदेवः असुरो राक्षसो वा न नि वासते न निवसति। कदेत्यत आह। यत् यदा त्वं पतरैः गमनशीलैः एतशेभिः अश्वैः रथर्यसि रथं कामयसे योक्तुम्। किंच प्राचीनमन्यत् त्वदीयं ज्योतिः रजः उदकम् अनु वर्तते। अन्येन तेन ज्योतिषा[1] उत् यासि उदेषि। यद्वा। प्राचीनमन्यत् रजश्चन्द्राख्यं ज्योतिस्त्वामनु वर्तते ततस्त्वमन्येन ज्योतिषा सहोदेषीत्यर्थः॥

येन सूर्य ज्योतिषा बाधसे तमो जगच्च विश्वमुदियर्षि भानुना।
तेनास्मद्विश्वामनिरामनाहुतिमपामीवामप दुष्ष्वप्न्यं सुव॥ ४॥

येन। सूर्य। ज्योतिषा। बाधसे। तमः। जगत्। च। विश्वम्। उत्ऽइयर्षि। भानुना।
तेन। अस्मत्। विश्वाम्। अनिराम्। अनाहुतिम्।
अप। अमीवाम्। अप। दुःऽस्वप्न्यम्। सुव॥ ४॥

हे सूर्य त्वं येन ज्योतिषा तेजसा तमः अन्धकारं बाधसे निवारयसि येन च भानुना तेजसा विश्वं सर्वं जगत् जङ्गमम् उदियर्षि उद्गमयसि तेन ज्योतिषा अस्मत् अस्मत्तः

---

१. ग–ज्योतिषा तेजसा।

ᵛअनिराम् अन्नाभावम् ᵛअनाहुतिम् अहोमं च ᵛअमीवां रोगजातं च ᵛअप ᵛसुव अपगमय। ᵛदुःस्वप्न्यं दुःस्वप्नप्रभवमनिष्टं च ᵛअप सुव ॥

विश्व॑स्य॒ हि प्रेषि॑तो॒ रक्ष॑सि व्र॒तमहे॑ळयन्नु॒च्चर॑सि स्व॒धा अनु॑ ।
यद॒द्य त्वा॑ सूर्योपब्र॒वाम॑है॒ तं नो॑ दे॒वा अनु॑ मंसीरत॒ क्रतु॑म् ॥ ५ ॥

विश्व॑स्य । हि । प्रऽई॑षितः । रक्ष॑सि । व्र॒तम् । अहे॑ळयन् । उ॒त्ऽचर॑सि । स्व॒धाः । अनु॑ ।
यत् । अ॒द्य । त्वा॒ । सू॒र्य॒ । उ॒प॒ऽब्र॒वाम॑है । तम् । न॒ः । दे॒वाः । अनु॑ । मं॒सी॒र॒त॒ । क्रतु॑म् ॥ ५ ॥

हे ᵛसूर्य ᵛप्रेषितः प्रेरितस्त्वम्[1] ᵛअहेळयन् अक्रुध्यन् ᵛविश्वस्य सर्वस्य यजमानस्य ᵛव्रतं कर्म ᵛरक्षसि ᵛहि। यज्ञविध्वंसकेभ्यो राक्षसेभ्यः पालयसि। ᵛस्वधाः हवींषि ᵛअनु ᵛउच्चरसि उद्गच्छसि च। प्रातर्होमे निवृत्ते सति पश्चादुद्गच्छसीत्यर्थः। तथा च यत् ᵛयदा ᵛअद्य अस्मिन्नहनि ᵛत्वा त्वाम् ᵛउपब्रवामहै उपब्रूमः तदा ᵛनः[2] अस्माकं ᵛतं ᵛक्रतुं तत्कर्म ᵛदेवाः इन्द्रादयः ᵛअनु ᵛमंसीरत अनुमन्यन्ताम् ॥

तं नो॒ द्यावा॑पृथि॒वी तन्न॒ आप॒ इन्द्रः॑ शृण्वन्तु म॒रुतो॒ हवं॒ वचः॑ ।
मा शूने॑ भूम॒ सूर्य॑स्य सं॒दृशि॑ भ॒द्रं जीव॑न्तो जर॒णाम॑शीमहि ॥ ६ ॥

तम् । न॒ः । द्यावा॑पृथि॒वी इति॑ । तत् । न॒ः । आप॑ः । इन्द्र॑ः । शृ॒ण्व॒न्तु॒ । म॒रुत॑ः । ह॒व॑म् । वच॑ः ।
मा । शूने॑ । भू॒म॒ । सूर्य॑स्य । स॒म्ऽदृशि॑ । भ॒द्रम् । जीव॑न्तः । ज॒र॒णाम् । अ॒शी॒म॒हि॒ ॥ ६ ॥

ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛआपः च ᵛइन्द्रः च ᵛमरुतः च ᵛनः अस्माकं ᵛतं ᵛहवम् आह्वानं ᵛनः अस्माकं ᵛतत् ᵛवचः स्तुतिरूपं वाक्यं च। न इति द्विरुक्तिरादरार्था। ᵛशृण्वन्तु। किंच वयं ᵛसूर्यस्य ᵛसंदृशि संदर्शने ᵛशूने प्रवृद्धाय दुःखाय ᵛमा ᵛभूम मैव भवेम। किंतु ᵛजीवन्तः चिरं प्राणान् धारयन्तो वयं ᵛभद्रं कल्याणं ᵛजरणां वृद्धत्वममरत्वं च ᵛअशीमहि प्राप्नुयाम ॥　॥ १२ ॥

वि॒श्वाहा॑ त्वा सु॒मन॑सः सु॒चक्ष॑सः प्र॒जाव॑न्तो अनमी॒वा अना॑गसः ।
उ॒द्यन्तं॑ त्वा मित्रमहो दि॒वेदि॑वे॒ ज्योग्जी॒वाः प्रति॑ पश्येम सूर्य ॥ ७ ॥

वि॒श्वाहा॑ । त्वा॒ । सु॒ऽमन॑सः । सु॒ऽचक्ष॑सः । प्र॒जाऽव॑न्तः । अ॒न॒मी॒वाः । अना॑गसः ।
उ॒त्ऽयन्त॑म् । त्वा॒ । मि॒त्र॒ऽम॒ह॒ः । दि॒वेऽदि॑वे । ज्योक् । जी॒वाः । प्रति॑ । प॒श्ये॒म॒ । सू॒र्य॒ ॥ ७ ॥

हे ᵛसूर्य ᵛत्वा त्वां ᵛसुमनसः प्रीतियुक्तमनस्काः ᵛसुचक्षसः सुदर्शनाः ᵛप्रजावन्तः पुत्राद्युपेताः ᵛअनमीवाः रोगरहिताः ᵛअनागसः अपराधवर्जिताश्च वयं ᵛविश्वाहा सर्वदा यजेमेति शेषः। किंच हे ᵛमित्रमहः मित्राणां पूजयितः ᵛसूर्य ᵛदिवेदिवे प्रतिदिनम् ᵛउद्यन्तम् उदयं प्राप्नुवन्तं ᵛत्वा त्वां ᵛज्योक् चिरं ᵛजीवाः जीवन्तो वयं ᵛप्रति ᵛपश्येम ॥

महि॒ ज्योति॒र्बिभ्र॑तं त्वा विचक्षण॒ भास्व॑न्तं॒ चक्षु॑षेचक्षुषे॒ मयः॑ ।
आ॒रोह॑न्तं बृह॒तः पाज॑स॒स्परि॑ व॒यं जी॒वाः प्रति॑ पश्येम सूर्य ॥ ८ ॥

---

१. ग-त३-भ५.६—स्तुतिभिः प्रेरितस्त्वं। २. त-भ१.२.४.७—'नः' नास्ति।

महि । ज्योतिः । बिभ्रंतम् । त्वा । विऽचक्षण । भास्वन्तम् । चक्षुषेऽचक्षुषे । मयः ।
आऽरोहन्तम् । बृहतः । पाजसः । परि । वयम् । जीवाः । प्रति । पश्येम । सूर्य ॥ ८ ॥

हे ᵛविचक्षण विद्रष्टः ᵛसूर्य ᵛमहि महत् ᵛज्योतिः तेजः ᵛबिभ्रतं धारयन्तं ᵛभास्वन्तं दीप्तिमन्तं ᵛचक्षुषेचक्षुषे सर्वेषां द्रष्टृणां चक्षुषे ᵛमयः सुखकरं ᵛबृहतः महतः ᵛपाजसः बलवतः ᵛपरि। महतो बलवतः समुद्रस्योदकस्योपरीत्यर्थः। ᵛआरोहन्तं ᵛत्वा त्वां ᵛजीवाः चिरं जीवन्तः ᵛवयं ᵛप्रति प्रतिदिनं ᵛपश्येम ॥

**यस्य ते विश्वा भुवनानि केतुना प्र चेरते नि च विशन्ते अक्तुभिः ।**
**अनागास्त्वेन हरिकेश सूर्याह्नाह्ना नो वस्यसावस्यसोदिहि ॥ ९ ॥**

यस्य । ते । विश्वा । भुवनानि । केतुना । प्र । च । ईरते । नि । च । विशन्ते । अक्तुऽभिः ।
अनागाःऽत्वेन । हरिऽकेश । सूर्य । अह्नाऽअह्ना । नः । वस्यसाऽवस्यसा । उत् । इहि ॥ ९ ॥

हे ᵛहरिकेश हरितवर्णकेश ᵛसूर्य ᵛयस्य ᵛते तव ᵛकेतुना प्रज्ञानेन ᵛविश्वा विश्वानि ᵛभुवनानि भूतजातानि ᵛप्र ᵛच ᵛईरते प्रकर्षेण गच्छन्ति ᵛअक्तुभिः रात्रिभिः ᵛनि ᵛविशन्ते ᵛच विश्राम्यन्ति च। स्वपन्तीत्यर्थः। स त्वं ᵛनः अस्माकम् ᵛअनागास्त्वेन अपराधवर्जितत्वेन ᵛवस्यसावस्यसा अत्यन्तश्रेयस्करेण वसुमत्तरेण वा ᵛअह्नाह्ना तेन तेन दिवसेन ᵛउदिहि उद्गच्छ ॥

**शं नो भव चक्षसा शं नो अह्ना शं भानुना शं हिमा शं घृणेन ।**
**यथा शमध्वञ्छमसद्दुरोणे तत्सूर्य द्रविणं धेहि चित्रम् ॥ १० ॥**

शम् । नः । भव । चक्षसा । शम् । नः । अह्ना । शम् । भानुना । शम् । हिमा । शम् । घृणेन ।
यथा । शम् । अध्वन् । शम् । असत् । दुरोणे । तत् । सूर्य । द्रविणम् । धेहि । चित्रम् ॥ १० ॥

हे ᵛसूर्य त्वं ᵛचक्षसा तेजसा ᵛनः अस्माकं ᵛशं सुखकरः ᵛभव। ᵛअह्ना दिवसेन च ᵛशं सुखकरः ᵛनः अस्माकं भव। ᵛभानुना रश्मिना च ᵛशं भव अस्माकं सुखकरो भव। ᵛहिमा शैत्येन च ᵛशं भव। ᵛघृणेन औष्ण्येन च शंकरो भव। ᵛयथा यादृशेन ᵛनः अस्माकम् ᵛअध्वन् अध्वनि मार्गे ᵛशं भवति ᵛदुरोणे गृहे च ᵛशं सुखम् ᵛअसत् भवति ᵛतत् ᵛचित्रं पूजनीयं ᵛद्रविणं धनं ᵛधेहि अस्मभ्यं प्रयच्छ ॥

**अस्माकं देवा उभयाय जन्मने शर्म यच्छत द्विपदे चतुष्पदे ।**
**अदत्पिबदूर्जयमानमाशितं तदस्मे शं योररपो दधातन ॥ ११ ॥**

अस्माकम् । देवाः । उभयाय । जन्मने । शर्म । यच्छत । द्विऽपदे । चतुःऽपदे ।
अदत् । पिबत् । ऊर्जयमानम् । आशितम् । तत् । अस्मे इति । शम् । योः । अरपः । दधातन ॥ ११ ॥

हे ᵛदेवाः सूर्येणाभ्यनुज्ञाता यूयम् ᵛअस्माकं ᵛद्विपदे मनुष्यात्मकाय ᵛचतुष्पदे पश्वात्मकाय च ᵛउभयाय उभयविधाय ᵛजन्मने भूतजाताय ᵛशर्म सुखं ᵛयच्छत दत्त। किंच यथास्मत्पुत्रादिकम् ᵛअदत् भक्षणीयं भक्षयत् ᵛपिबत् पानीयं पिबच्च ᵛऊर्जयमानं बलवन्तमिवात्मानमाचरच्च ᵛआशितं

सुहितं च भवति तथा ᵛशं रोगशान्तिनिमित्तकं सुखं ᵛयोः विषययोगजनितं सुखं च ᵛअरपः अपापं च ᵛदधातन प्रयच्छत ॥

यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेळनम् ।
अरावा यो नो अभि दुच्छुनायते तस्मिन्तदेनो वसवो नि धेतन ॥ १२ ॥

यत् । वः । देवाः । चकृम । जिह्वया । गुरु । मनसः । वा । प्रऽयुती । देवऽहेळनम् ।
अरावा । यः । नः । अभि । दुच्छुनऽयते । तस्मिन् । तत् । एनः । वसवः । नि । धेतन ॥१२॥

हे ᵛवसवः वासयितारः ᵛदेवाः ᵛवः युष्माकं वयं ᵛजिह्वया वाचा ᵛमनसः ᵛप्रयुती प्रयुत्या प्रयोगेण ᵛगुरु महत् ᵛदेवहेळनं देवक्रोधनं च ᵛयत् ᵛएनः ᵛचकृम अकार्ष्म ᵛयः अस्मच्छत्रुः ᵛनः अस्मान् ᵛअभि प्रति ᵛअरावा गमनवान् भूत्वा ᵛदुच्छुनायते पापान्याचरति अस्मानुद्वेजयति वा ᵛतस्मिन् अस्मच्छत्रौ ᵛतत् ᵛएनः अस्माभिः कृतं पापं ᵛनि ᵛधेतन सूर्यस्याज्ञया निधत्त । स्थापयते-त्यर्थः ॥ ॥ १३ ॥

‘ अस्मिन्नः ’ इति पञ्चर्चं नवमं सूक्तं जागतमैन्द्रम् । मुष्कविशिष्ट इन्द्राख्य ऋषिः । तथा चानुक्रान्तम्—‘ अस्मिन्नः पञ्च मुष्कवानिन्द्रः ’ इति । गतो विनियोगः । अपरे तु ताण्ड्यशाख्यायनका अस्य सूक्तस्य मुष्कवानिन्द्रो देवता लुश ऋषिरिति वर्णयन्ति ॥

अस्मिन्न इन्द्र पृत्सुतौ यशस्वति शिमीवति क्रन्दसि प्राव सातये ।
यत्र गोषाता धृषितेषु खादिषु विष्वक्पतन्ति दिद्यवो नृषाह्ये ॥ १ ॥

अस्मिन् । नः । इन्द्र । पृत्सुतौ । यशस्वति । शिमीऽवति । क्रन्दसि । प्र । अव । सातये ।
यत्र । गोऽसाता । धृषितेषु । खादिषु । विष्वक् । पतन्ति । दिद्यवः । नृऽसह्ये ॥ १ ॥

हे ᵛइन्द्र त्वं ᵛयशस्वति कीर्तिमति ᵛशिमीवति परस्परप्रहारलक्षणकर्मवति[1] ᵛअस्मिन् उपस्थिते ᵛपृत्सुतौ संग्रामे ᵛक्रन्दसि सिंहनादं करोषि । ᵛसातये धनलाभाय ᵛप्राव ᵛनः अस्मान् प्ररक्षसि च । कस्मिन्नित्यत्राह । ᵛयत्र यस्मिन् ᵛगोषाता गोसातौ लब्धपशुके ᵛनृषाह्ये नृणामभिभावुके च संग्रामे ᵛखादिषु परस्परखादकेषु च योद्धृषु ᵛधृषितेषु धृष्टेषु सत्सु ᵛदिद्यवः आयुधानि ᵛविष्वक् सर्वतः ᵛपतन्ति ॥

स नः क्षुमन्तं सदने व्यूर्णुहि गोअर्णसं रयिमिन्द्र श्रवाय्यम् ।
स्याम ते जयतः शक्र मेदिनो यथा वयमुश्मसि तद्वसो कृधि ॥ २ ॥

सः । नः । क्षुऽमन्तम् । सदने । वि । ऊर्णुहि । गोऽअर्णसम् । रयिम् । इन्द्र । श्रवाय्यम् ।
स्याम । ते । जयतः । शक्र । मेदिनः । यथा । वयम् । उश्मसि । तत् । वसो इति । कृधि ॥२॥

हे ᵛइन्द्र ᵛसः सर्वानुग्राहकत्वेन प्रसिद्धस्त्वं ᵛनः अस्माकं ᵛसदने गृहे ᵛक्षुमन्तम् अन्नवन्तं शब्दवन्तं वा ᵛगोअर्णसम् । गावोऽर्णं उदकमिव प्रवृद्धा यस्मिन् । तं ᵛश्रवाय्यं श्रवणीयं ᵛरयिं धनं ᵛव्यूर्णुहि विविधमाच्छादय । किंच हे ᵛवसो वासक ᵛशक्र इन्द्र ᵛजयतः शत्रुं ᵛते तव प्रसादाद्वयं ᵛमेदिनः मेदसा युक्ता बलवन्तः ᵛस्याम भवेम । किं बहूक्त्या । ᵛयथा यत् ᵛवयमुश्मसि कामयामहे ᵛतत् सर्वं ᵛकृधि कुरु ॥

---

१. ग-त३-म१.४.७—[1]लक्षणवति ।

यो नो दास आर्यो वा पुरुष्टुतादेव इन्द्र युधये चिकेतति ।
अस्माभिष्टे सुषहाः सन्तु शत्रवस्त्वया वयं तान्वनुयाम संगमे ॥ ३ ॥

यः । नः । दासः । आर्यः । वा । पुरुऽस्तुत । अदेवः । इन्द्र । युधये । चिकेतति ।
अस्माभिः । ते । सुऽसहाः । सन्तु । शत्रवः । त्वया । वयम् । तान् । वनुयाम । सम्ऽगमे ॥ ३ ॥

हे ᵛपुरुष्टुत बहुस्तुत ᵛइन्द्र ᵛयः ᵛदासः कर्मकरः शूद्रः ᵛआर्यः त्रैवर्णिको ᵛवा ᵛअदेवः देवादन्योऽसुरो वा ᵛनः अस्मान् ᵛयुधये युद्धाय ᵛचिकेतति जानाति ते सर्वे ᵛशत्रवः अस्मदरयः ᵛते तव प्रसादात् ᵛअस्माभिः ᵛसुसहाः स्वभिभवाः ᵛसन्तु भवन्तु । किंच ᵛवयं ᵛत्वया सहायेन ᵛतान् शत्रून् ᵛसंगमे संग्रामे ᵛवनुयाम हन्याम ॥

यो दभ्रेभिर्हव्यो यश्च भूरिभिर्यो अभीके वरिवोविन्नृषाह्ये ।
तं विखादे सस्निमद्य श्रुतं नरमर्वाञ्चमिन्द्रमवसे करामहे ॥ ४ ॥

यः । दभ्रेभिः । हव्यः । यः । च । भूरिऽभिः । यः । अभीके । वरिवःऽवित् । नृऽसह्ये ।
तम् । विऽखादे । सस्निम् । अद्य । श्रुतम् । नरम् । अर्वाञ्चम् । इन्द्रम् । अवसे । करामहे ॥ ४ ॥

ᵛनृसह्ये नृणामभिभावुके ᵛविखादे विशेषेण भक्षके ᵛअभीके[1] संग्रामे ᵛवरिवोवित् धनस्य लम्भकः ᵛयः इन्द्रः ᵛदभ्रेभिः स्वल्पैः ᵛहव्यः ह्वातव्यः ᵛयश्च ᵛभूरिभिः बहुभिः ᵛहव्यः ᵛतं ᵛसस्निं शुचिं ᵛश्रुतं सर्वत्र विख्यातं ᵛनरं नेतारम् ᵛइन्द्रम् ᵛअद्य अस्मिन्नहनि ᵛअवसे अस्मद्रक्षणाय ᵛअर्वाञ्चम् अस्मदभिमुखं ᵛकरामहे कुर्मः ॥

स्ववृजं हि त्वामहमिन्द्र शुश्रवानानुदं वृषभ रध्रचोदनम् ।
प्र मुञ्चस्व परि कुत्सादिहा गहि किमु त्वावान्मुष्कयोर्बद्ध आसते ॥ ५ ॥

स्वऽवृजम् । हि । त्वाम् । अहम् । इन्द्र । शुश्रव । अनानुऽदम् । वृषभ । रध्रऽचोदनम् ।
प्र । मुञ्चस्व । परि । कुत्सात् । इह । आ । गहि ।
किम् । ऊँ इति । त्वाऽवान् । मुष्कयोः । बद्धः । आसते ॥ ५ ॥

हे ᵛवृषभ कामानां वर्षक ᵛइन्द्र ᵛस्ववृजं स्वयमेव च्छेत्तारम् ᵛअनानुदम् अनपेक्षितबलानुप्रदानं ᵛरध्रचोदनं राधकस्य चोदकं प्रेरकं ᵛत्वाम्[2] ᵛअहं लुशः ᵛशुश्रव अश्रौषं ᵛहि यस्मात् तस्मात् ᵛप्र ᵛमुञ्चस्व । कुत्सेन वार्ध्रीशतेनाण्डयोर्बद्धमात्मानं बन्धनाद्विमुञ्च । अथ ᵛपरि सर्वतः परिवृतस्त्वं ᵛकुत्सात् कुत्साख्यादृषेः ᵛइह अस्मद्यागे ᵛआ ᵛगहि आगच्छ । ᵛकिमु ᵛत्वावान् त्वत्सदृशोऽन्यः कश्चित् ᵛमुष्कयोर्बद्ध ᵛआसते । न कोऽप्येतादृशो निर्लज्जस्त्वत्तोऽन्योऽस्तीत्यभिप्रायः । तत्र शाट्यायनकं— 'कुत्सश्च लुशश्चेन्द्रं[3] व्यह्वयेतां स कुत्सस्याहवमागच्छत् तं शतेन वार्ध्रीभिराण्डयोरबध्नात् तं लुशोऽभ्यवदत् स्ववृजं हि त्वामहमिन्द्र शुश्रवानानुदं वृषभ रध्रचोदनं प्र मुञ्चस्व परि कुत्सादिहा गहि किमु त्वावान्मुष्कयोर्बद्ध आसत इति ताः सर्वाः संलुप्य लुशमभि प्राद्रवत्' इति । छन्दोगब्राह्मणमपि—'कुत्सश्च लुशश्च युगपदिन्द्रमाहूतवन्तौ स्वं स्वं यज्ञं प्रत्यङ्गभावाय सखित्वादिन्द्रः कुत्सं प्रति जगाम तं तु गतं वशित्वात्कुत्सो वार्ध्रीशतेनाण्डयोरबध्नात्[4]' इति ॥ ॥ १४ ॥

---

१. त–'अभीके' नास्ति । २. त१.२.३.६.७-भ–त्वा त्वां । ३. त३.७-भ–लुशश्चेंद्रं । ४. त-भ-मु–वध्रिशतेना° । ता. ब्रा. ९.२.२२ द्रष्टव्यम् ।

'यो वाम्' इति चतुर्दशर्चं दशमं सूक्तम्। कक्षीवतो दुहिता घोषा नाम ब्रह्मवादिन्यृषिः। अन्त्या त्रिष्टुप्। शिष्टा जगत्यः। अश्विनौ देवता। तथा चानुक्रान्तं—'यो वां षळूना काक्षीवती घोषाश्विनं हि त्रिष्टुबन्तम्' इति। प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदमादीनि त्रीणि सूक्तानि। सूत्रितं च—'यो वां परिज्मेति त्रीणि त्रिश्चिन्नो अद्य' (आश्व. श्रौ. ४. १५) इति॥

यो वां परिज्मा सुवृदश्विना रथो दोषामुषासो हव्यो हविष्मता।
शश्वत्तमासस्तमु वामिदं वयं पितुर्न नाम सुहवं हवामहे॥ १॥

यः। वाम्। परिऽज्मा। सुऽवृत्। अश्विना। रथः। दोषाम्। उषसः। हव्यः। हविष्मता।
शश्वत्ऽतमासः। तम्। ऊँ इति। वाम्। इदम्। वयम्।
पितुः। न। नाम। सुऽहवम्। हवामहे॥ १॥

हे अश्विना अश्विनौ वां युवयोः परिज्मा परितो गन्ता सुवृत् सुष्ठु वर्तमानः यः रथः दोषां रात्रिम् उषसः च। अहोरात्रयोरित्यर्थः। हविष्मता यजमानेन हव्यः ह्वातव्यः वां युवयोः स्वभूतं सुहवं शोभनाह्वानं तमु तमेव रथं शश्वत्तमासः अतिशयेन चिरंतना वयं पितुर्न यथा पितुः इदं नाम तथा हवामहे ह्वयामः॥

चोदयतं सूनृताः पिन्वतं धिय उत्पुरंधीरीरयतं तदुश्मसि।
यशसं भागं कृणुतं नो अश्विना सोमं न चारुं मघवत्सु नस्कृतम्॥ २॥

चोदयतम्। सूनृताः। पिन्वतम्। धियः। उत्। पुरम्ऽधीः। ईरयतम्। तत्। उश्मसि।
यशसम्। भागम्। कृणुतम्। नः। अश्विना। सोमम्। न। चारुम्। मघवत्ऽसु। नः। कृतम्॥२॥

हे अश्विना अश्विनौ युवां सूनृताः वाच उषसो वा चोदयतं प्रेरयतम्। अस्माकं धियः कर्माणि च पिन्वतं पूरयतम्। पुरंधीः बह्वीः प्रज्ञाश्च उत् ईरयतम् उद्गमयतं प्रेरयतम्। उत्पादयतमित्यर्थः। तत् एतत्त्रयम् उश्मसि वयं कामयामहे। किंच नः अस्माकं यशसं यशस्विनं भागं भजनीयं धनादिकं कृणुतं कुरुतम्। चारुं कल्याणं सोमं न सोममिव नः अस्मान् मघवत्सु धनवत्सु[1] कृतं कुरुतम्॥

अमाजुरश्चिद्भवथो युवं भगोऽनाशोश्चिदवितारापमस्य चित्।
अन्धस्य चिन्नासत्या कृशस्य चिद्युवामिदाहुर्भिषजा रुतस्य चित्॥ ३॥

अमाऽजुरः। चित्। भवथः। युवम्। भगः। अनाशोः। चित्। अवितारा। अपमस्य। चित्।
अन्धस्य। चित्। नासत्या। कृशस्य। चित्।
युवाम्। इत्। आहुः। भिषजा। रुतस्य। चित्॥ ३॥

हे नासत्या नासत्यौ युवं युवाम् अमाजुरश्चित् पितृगृहे जूर्यन्त्या[2] अपि[2] दुर्भगाया घोषायाः भगः भवथः। शोभनरूपेणात्मानं परिणमय्य पतिं दत्तवन्तौ स्थ इत्यर्थः। तथा च निगमान्तरं—

---

१. त–'धनवत्सु' नास्ति। २. त१.२.५.६.७–जूर्यतामिति; त४–जूर्यतामिति।

'घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम्' (ऋ. सं. १. ११७. ७) इति। ᐯअनाशोश्चित् अनशनस्यापि ᐯअविता रक्षितारौ युवां भवथः। ᐯअपमस्य ᐯचित् जात्यातिनिकृष्टस्यापि[1] रक्षितारौ भवथः। ᐯअन्धस्य ᐯचित् चक्षुर्विकलस्यापि रक्षितारौ भवथः। ᐯकृशस्य ᐯचित् दुर्बलस्यापि रक्षितारौ भवथः। किंच ᐯयुवामित् युवामेव ᐯऋतस्य ᐯचित् यज्ञस्यापि[2] भिषजौ वैद्यौ ᐯआहुः विद्वांसः॥

**युवं च्यवा॑नं स॒नयं॒ यथा॒ रथं॒ पुन॒र्युवा॑नं च॒रथा॑य तक्षथुः।**
**निष्टौ॒ग्र्यमू॑हथुर॒द्भ्यस्परि॒ विश्वेत्ता वां॒ सव॑नेषु प्र॒वाच्या॑ ॥ ४ ॥**

यु॒वम्। च्यवा॑नम्। स॒नय॑म्। यथा॑। रथ॑म्। पुन॑ः। युवा॑नम्। च॒रथा॑य। त॒क्ष॒थु॒ः।
निः। तौ॒ग्र्यम्। ऊ॒ह॒थु॒ः। अ॒त्ऽभ्यः। परि॑। विश्वा॑। इत्। ता। वा॒म्। सव॑नेषु। प्र॒ऽवाच्या॑॥४॥

हे अश्विनौ ᐯयुवं युवां ᐯसनयं पुराणं ᐯच्यवानम् ऋषिं ᐯयथा ᐯरथं जीर्णं रथमिव ᐯपुनर्युवानं तरुणं ᐯचरथाय चरणार्थं ᐯतक्षथुः ततक्षथुः। अकुरुतमित्यर्थः। तथा च यास्कः—'युवं च्यवानं सनयं पुराणं यथा रथं पुनर्युवानं चरणाय ततक्षथुर्युवा प्रयौति कर्माणि तक्षतिः करोतिकर्मा' (निरु. ४. १९) इति। किंच युवां ᐯतौग्र्यं तुग्रपुत्रं भुज्युम् ᐯअद्भ्यः ᐯपरि समुद्रस्योपरि ᐯनिः ᐯऊहथुः। किंच ᐯवां युवयोः ᐯविश्वा विश्वानि ᐯता तानि कर्माणि ᐯसवनेषु यज्ञेषु ᐯप्रवाच्या प्रवाच्यानि प्रकर्षेण वक्तव्यानि॥

**पु॒राणा॑ वां वी॒र्या॒३॑ प्र ब्र॑वा॒ जनेऽथो॑ हासथुर्भि॒षजा॑ मयो॒भुवा॑।**
**ता वां॒ नु नव्या॒वव॑से करामहे॒ऽयं ना॑सत्या॒ श्रद॒रिर्यथा॒ दध॑त् ॥ ५ ॥**

पु॒राणा॑। वा॒म्। वी॒र्या॑। प्र। ब्र॒व॒। जने॑। अथो॒ इति॑। ह॒। आ॒स॒थु॒ः। भि॒षजा॑। म॒यः॒ऽभुवा॑।
ता। वा॒म्। नु। नव्यौ॑। अव॑से। क॒रा॒म॒हे॒। अ॒यम्। ना॒स॒त्या॒। श्रत्। अ॒रिः। यथा॑। दध॑त्॥५॥

हे अश्विनौ ᐯवां युवयोः ᐯपुराणा पुराणानि वीर्याणि ᐯजने लोके ᐯप्र[3] ᐯब्रव[3] प्रब्रवीमि। ᐯअथो अपि च हे ᐯनासत्या नासत्यौ युवां ᐯमयोभुवा सुखस्य भावयितारौ ᐯभिषजा भिषजौ वैद्यौ ᐯआसथुः बभूवथुः। ᐯता[4] तौ[4] युवाम् ᐯअवसे रक्षणाय ᐯनव्यौ स्तुत्यौ ᐯकरामहे कुर्मः। ᐯअयम् ᐯअरिः गन्ता पतिर्यजमानः[5] ᐯयथा ᐯश्रत् ᐯदधत् श्रद्दध्यादिति॥ ॥ १५ ॥

**इ॒यं वा॑मह्वे॒ शृणु॒तं मे॑ अश्विना पु॒त्राये॑व पि॒तरा॒ मह्यं॑ शिक्षतम्।**
**अना॑पि॒रज्ञा॑ असजा॒त्याम॑तिः पु॒रा तस्या॑ अ॒भिश॑स्ते॒रव॑ स्पृतम् ॥ ६ ॥**

इ॒यम्। वा॒म्। अ॒ह्वे॒। शृ॒णु॒तम्। मे॒। अ॒श्विना॒। पु॒त्राय॑ऽइव। पि॒तरा॑। मह्य॑म्। शि॒क्ष॒तम्।
अना॑पिः। अज्ञा॑ः। अ॒स॒जा॒त्या। अम॑तिः। पु॒रा। तस्या॑ः। अ॒भिऽश॑स्तेः। अव॑। स्पृ॒त॒म्॥६॥

हे ᐯअश्विना अश्विनौ ᐯवां युवाम् ᐯइयं घोषा अहम् ᐯअह्वे आह्वयामि। ᐯमे मम संबन्धिनम् इममाह्वानं ᐯशृणुतम्। श्रुत्वा चाह्वानं ᐯमह्यं ᐯपुत्रायेव यथा पुत्राय ᐯपितरा मातापितरौ तद्वत्

---

१. ग—जात्या निकृष्टस्यापि; त-भ६-मु—जात्यादिनिकृष्टस्यापि; त३-भ१.२.४—जात्यादिकृष्टस्यापि; भ७—जात्यादिकृष्वस्यापि। २. त७—रक्षणस्यापि। ३. त-भ—'प्र ब्रव' नास्ति। ४. त—सातौ। ५. ग—एष यजमानः।

${}^{v}$शिक्षतं धनं दत्तम्। ${}^{v}$अनापिः अबन्धुः ${}^{v}$अज्ञा अकृतज्ञा ${}^{v}$असजात्यामतिः अश्रद्धेया चाभिशस्तिः मामागच्छति। ${}^{v}$तस्या ${}^{v}$अभिशस्तेः ${}^{v}$पुरा प्रागेव ${}^{v}$अव ${}^{v}$स्पृतं मामवपारयतम्॥

युवं रथेन विमदाय शुन्ध्युवं न्यूहथुः पुरुमित्रस्य योषणाम्।
युवं हवं वध्रिमत्या अगच्छतं युवं सुषुतिं चक्रथुः पुरंधये॥ ७॥

युवम्। रथेन। विऽमदाय। शुन्ध्युवम्। नि। ऊहथुः। पुरुऽमित्रस्य। योषणाम्।
युवम्। हवम्। वध्रिऽमत्याः। अगच्छतम्। युवम्। सुऽसुतिम्। चक्रथुः। पुरम्ऽधये॥ ७॥

हे अश्विनौ ${}^{v}$युवं युवां ${}^{v}$पुरुमित्रस्य पुरुमित्रनामधेयस्य ${}^{v}$योषणां दुहितरं ${}^{v}$शुन्ध्युवं नाम जायां ${}^{v}$विमदाय विमदनामधेयाय ऋषये ${}^{v}$रथेन स्वसेनापरिवृतेन रथेन ${}^{v}$न्यूहथुः प्रापयतम्। विमदस्य गृहं नीतवन्तौ स्थ इत्यर्थः। तथा च निगमान्तरं—'यावभंगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन' (ऋ. सं. १. ११६. १) इति। किंच ${}^{v}$युवं युवां ${}^{v}$वध्रिमत्याः संग्रामे शत्रुभिश्छिन्नहस्तायाः ${}^{v}$हवम् आह्वानम् ${}^{v}$अगच्छतम्। आगत्य च[1] तस्यै[2] हिरण्मयं हस्तं प्रायच्छतम्[3]। तथा च निगमान्तरम्—'अजोहवीन्नासत्या करा वां महे यामन् पुरुभुजा पुरंधिः। श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम्' (ऋ. सं. १. ११६. १३) इति। किंच ${}^{v}$युवं युवां ${}^{v}$पुरंधये बहुप्रज्ञायै वध्रिमत्यै ${}^{v}$सुषुतिं सुप्रसवं शोभनमैश्वर्यं वा ${}^{v}$चक्रथुः कृतवन्तौ स्थः॥

युवं विप्रस्य जरणामुपेयुषः पुनः कलेरकृणुतं युवद्वयः।
युवं वन्दनमृश्यदादुदूपथुर्युवं सद्यो विश्पलामेतवे कृथः॥ ८॥

युवम्। विप्रस्य। जरणाम्। उपऽईयुषः। पुनरिति। कलेः। अकृणुतम्। युवत्। वयः।
युवम्। वन्दनम्। ऋश्यऽदात्। उत्। ऊपथुः। युवम्। सद्यः। विश्पलाम्। एतवे। कृथः॥८॥

हे अश्विनौ ${}^{v}$युवं युवां ${}^{v}$विप्रस्य मेधाविनः ${}^{v}$जरणां जराम् ${}^{v}$उपेयुषः उपगतवतः ${}^{v}$कलेः कलिनामधेयस्य ऋषेः ${}^{v}$वयः ${}^{v}$पुनः पुनरपि ${}^{v}$युवत् युवत्वयुक्तम् ${}^{v}$अकृणुतम् अकुरुतम्। तथा च निगमान्तरं—'कलिं याभिर्वित्तजानिं दुवस्यथः' (ऋ. सं. १. ११२. १५) इति। किंच ${}^{v}$युवं युवां ${}^{v}$वन्दनं जायावियोगसंतापेन कूपपतितं वन्दनाख्यमृषिम् ${}^{v}$ऋश्यदात् कूपात् ${}^{v}$उदूपथुः उदैरयतम्। तथा निगमान्तरम्—'उद्वन्दनमैरयतं स्वर्दृशे' (ऋ. सं. १. ११२. ५) इति। किंच ${}^{v}$युवं युवां ${}^{v}$विश्पलाम्। खेलस्य राज्ञः सेनायां योद्ध्री विश्पला नाम काचित् स्त्री। तां संग्रामे शत्रुभिश्छिन्नजङ्घां ${}^{v}$सद्यः तदैव ${}^{v}$एतवे गमनाय ${}^{v}$कृथः अकुरुतम्। तथा च निगमान्तरं—'चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम्। सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम्' (ऋ. सं. १. ११६. १५) इति॥

युवं ह रेभं वृषणा गुहा हितमुदैरयतं ममृवांसमश्विना।
युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः सप्तवध्रये॥ ९॥

युवम्। ह। रेभम्। वृषणा। गुहा। हितम्। उत्। ऐरयतम्। ममृऽवांसम्। अश्विना।
युवम्। ऋबीसम्। उत। तप्तम्। अत्रये। ओमन्ऽवन्तम्। चक्रथुः। सप्तऽवध्रये॥ ९॥

---

१. त-भ६-मु-'च' नास्ति। २. त-भ६-मु-तस्मै। ३. त-भ६-मु-प्रयच्छतं; त३-भ१.४-अप्रयच्छतं; भ२-अप्रायच्छतं।

हे वृषणा वर्षितारौ अश्विना अश्विनौ युवं युवां गुहा गुहायां हितम् असुरैर्निहितं ममृवांसं म्रियमाणं रेभं रेभाख्यमृषिम् उदैरयतम् उत्तारितवन्तौ स्थः । तथा च निगमान्तरं— 'दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वन्तः । विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण' ( ऋ. सं. १. ११६. २४ ) इति । उत किंच युवं युवां तप्तम् ऋबीसम् अग्निकुण्डम् अत्रये अत्रेरर्थाय ओमन्वन्तम् अवनवन्तं चक्रथुः । वृष्ट्या निशमय्य शीतं कृतवन्तौ स्थ इत्यर्थः। तथा च निगमान्तरं—'हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् । ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति' ( ऋ. सं. १. ११६. ८ ) इति । किंच युवां सप्तवध्रये अश्वमेधेन राज्ञा केनचिदपराधेन काष्ठमयमञ्जूषायां निहितस्य सप्तवध्रिनामधेयस्य ऋषेरर्थाय चक्रथुः । मञ्जूषोद्घाटनं कृतवन्तौ स्थ इत्यर्थः । तथा च निगमान्तरं—'वि जिहीष्व वनस्पते योनिः सूष्यन्त्या इव । श्रुतं मे अश्विना हवं सप्तवध्रिं च मुञ्चतम्' ( ऋ. सं. ५. ७८. ५ ) इति ॥

युवं श्वेतं पेदवेऽश्विनाश्वं नवभिर्वाजैर्नवती च वाजिनम् ।
चर्कृत्यं ददथुर्द्रावयत्सखं भगं न नृभ्यो हव्यं मयोभुवम् ॥ १० ॥

युवम् । श्वेतम् । पेदवे । अश्विना । अश्वम् । नवऽभिः । वाजैः । नवती । च । वाजिनम् ।
चर्कृत्यम् । ददथुः । द्रवयत्ऽसखम् । भगम् । न । नृऽभ्यः । हव्यम् । मयःऽभुवम् ॥ १० ॥

हे अश्विना अश्विनौ युवं युवां पेदवे पेदुनामधेयाय राज्ञे श्वेतं श्वेतवर्णं वाजिनं बलिनं नवभिः नवती नवत्याश्वैः सहितं चर्कृत्यं संग्रामाणामत्यर्थं कर्तारं शत्रूणां जेतारं वा द्रवयत्सखं शत्रुमर्त्खानां[1] द्रावयितारं[2] हव्यं ह्वातव्यं मयोभुवं सुखस्य भावयितारम् अश्वं नृभ्यः मनुष्येभ्यः भगं न भजनीयं धनमिव ददथुः प्रायच्छतम्[3] ॥ ॥ १६ ॥

न तं राजानावदिते कुतश्चन नांहो अश्नोति दुरितं नकिर्भयम् ।
यमश्विना सुहवा रुद्रवर्तनी पुरोरथं कृणुथः पत्न्या सह ॥ ११ ॥

न । तम् । राजानौ । अदिते । कुतः । चन । न । अंहः । अश्नोति । दुःऽइतम् । नकिः । भयम् ।
यम् । अश्विना । सुऽहवा । रुद्रवर्तनी इति रुद्रऽवर्तनी । पुरःऽरथम् । कृणुथः । पत्न्या । सह ॥ ११ ॥

हे राजानौ ईश्वरौ अदिते अदीनौ सुहवौ स्वाह्वानौ रुद्रवर्तनी स्तोत्रयुक्तमार्गौ हे अश्विना अश्विनौ युवां यं जनं पुरोरथम् अग्रतोरथं पत्न्या सह स्वयंवरे कृणुथः कुरुथः तं जनं कुतश्चन कुतोऽपि अंहः पापं न अश्नोति न व्याप्नोति । दुरितं दुर्गतिरपि न अश्नोति । नकिः न च भयं संसारभयं न प्राप्नोति ॥

आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः ॥ १२ ॥

आ । तेन । यातम् । मनसः । जवीयसा । रथम् । यम् । वाम् । ऋभवः । चक्रुः । अश्विना ।
यस्य । योगे । दुहिता । जायते । दिवः ।
उभे इति । अहनी इति । सुदिने इति सुऽदिने । विवस्वतः ॥ १२ ॥

१. त-मु-'सखानां । २. ग-त१.२.६-भ१.४.७-अभिद्रावयितारं; भ५-अभिप्रावयितारकं । ३. त-भ-अप्रयच्छतं ।

हे ᵛअश्विना अश्विनौ ᵛवां युवयोः ᵛयं ᵛरथम् ᵛऋभवश्चक्रुः अकार्षुः ᵛयस्य रथस्य ᵛयोगे संबन्धे सति ᵛदिवः ᵛदुहिता उषाः ᵛजायते प्रादुर्भवति यस्य च योगे ᵛविवस्वतः भास्करात् ᵛउभे ᵛअहनी अहोरात्रे ᵛसुदिने शोभने जायेते ᵛतेन रथेन ᵛमनसः अपि ᵛजवीयसा वेगवत्तरेण ᵛआ ᵛयातं युवामागच्छतम्[1] ॥

ता वर्तिर्यातं जयुषा वि पर्वतमपिन्वतं शयवे धेनुमश्विना ।
वृकस्य चिद्वर्तिकामन्तरास्याद्युवं शचीभिर्ग्रसिताममुञ्चतम् ॥ १३ ॥

ता । वर्तिः । यातम् । जयुषा । वि । पर्वतम् । अपिन्वतम् । शयवे । धेनुम् । अश्विना ।
वृकस्य । चित् । वर्तिकाम् । अन्तः । आस्यात् । युवम् । शचीभिः । ग्रसिताम् । अमुञ्चतम् ॥ १३ ॥

हे ᵛअश्विना अश्विनौ ᵛता तौ युवां ᵛजयुषा जयशीलेन रथेन ᵛपर्वतम् अद्रिं प्रति ᵛवर्तिः मार्गं ᵛवि ᵛयातं विविधं गच्छथः । तथा च निगमान्तरं—'वि जयुषा रथ्या यातमद्रिं श्रुतं हवं वृषणा वध्रिमत्याः' ( ऋ. सं. ६. ६२. ७ ) इति । किंच युवां ᵛशयवे शयोरर्थाय ᵛधेनुम् ᵛअपिन्वतम् । निवृत्तप्रसवां वृद्धां गां प्रभूतस्य पयसो दोग्ध्रीं कृतवन्तौ स्थ इत्यर्थः । तथा च निगमान्तरं— 'युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय' ( ऋ. सं. १. ११८. ८ ) इति । किंच ᵛयुवं युवां ᵛवृकस्य ᵛअन्तः अनुप्रविष्टां ᵛग्रसितां वृकेण ग्रस्तां ᵛवर्तिकाम् । वर्तिका नाम चटका । ताम् ᵛआस्यात् वृकस्य मुखात् ᵛशचीभिः प्रज्ञाभिः कर्मभिर्वा ᵛअमुञ्चतम् अमोचयतम् । तथा च निगमान्तरम्—'अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य' ( ऋ. सं. १.११७.१६ ) इति ॥

एतं वां स्तोममश्विनावकर्मातक्षाम भृगवो न रथम् ।
न्यमृक्षाम योषणां न मर्ये नित्यं न सूनुं तनयं दधानाः ॥ १४ ॥

एतम् । वाम् । स्तोमम् । अश्विनौ । अकर्म । अतक्षाम । भृगवः । न । रथम् ।
नि । अमृक्षाम । योषणाम् । न । मर्ये । नित्यम् । न । सूनुम् । तनयम् । दधानाः ॥ १४ ॥

हे ᵛअश्विना अश्विनौ ᵛवां युवयोः ᵛएतं यथोक्तं ᵛस्तोमं स्तोत्रम् ᵛअकर्म अकुर्म । तदेवाह । ᵛभृगवो ᵛन भृगव इव ᵛरथम् ᵛअतक्षाम वयं स्तोत्रं संस्कृतवन्तः । कर्मयोगादृभवो भृगव उच्यन्ते । अथवा रथकारा भृगवः । किंच वयं ᵛनित्यं शाश्वतं ᵛतनयं यागादीनां कर्मणां तनितारं ᵛसूनुं ᵛन औरसं पुत्रमिव स्तोमं ᵛदधानाः धारयन्तः ᵛमर्ये मनुष्ये ᵛन्यमृक्षाम । युवयोः स्तुतिं नितरां संस्कृतवन्तः । तत्र दृष्टान्तः । ᵛयोषणां ᵛन । यथा जायां तद्वदित्यर्थः ॥ ॥ १७ ॥

'रथं यान्तम्' इति चतुर्दशर्चमेकादशं सूक्तं काक्षीवत्या घोषाया आर्षं जागतमाश्विनम् । 'रथं यान्तम्' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

रथं यान्तं कुह को ह वां नरा प्रति द्युमन्तं सुविताय भूषति ।
प्रातर्यावाणं विभ्वं विशेविशे वस्तोर्वस्तोर्वहमानं धिया शमि ॥ १ ॥

रथम् । यान्तम् । कुह । कः । ह । वाम् । नरा । प्रति । द्युऽमन्तम् । सुविताय । भूषति ।
प्रातःऽयावानम् । विऽभ्वम् । विशेऽविशे । वस्तोःऽवस्तोः । वहमानम् । धिया । शमि ॥ १ ॥

१. त-भर.६-मु-°मागच्छतमस्मान् ।

हे ᵛनरा कर्मणां नेतारावश्विनौ ᵛवां युवयोः संबन्धिनं ᵛद्युमन्तं दीप्तिमन्तं ᵛप्रातर्यावाणं यज्ञं प्रति[1] प्रातःकाले गन्तारं ᵛविभ्वं विभुं व्यापिनं ᵛविशेविशे सर्वेषु मनुष्येषु ᵛवस्तोर्वस्तोः अन्वहं ᵛवहमानं धनं प्रापयन्तं ᵛयान्तं गच्छन्तं ᵛरथं ᵛकुह कस्मिन् देशे ᵛको ᵛह कः खलु यजमानः ᵛशमि यज्ञरूपे कर्मणि ᵛधिया स्तुतिरूपेण कर्मणा ᵛसुविताय अभ्युदयार्थं ᵛप्रति ᵛभूषति[2] अलंकरोति। कस्मिन् देशे यज्ञे कोऽन्यो यजमानो युवां स्तुतिभिर्हविर्भिश्च पूजितवान् येनास्मद्यज्ञं प्रति विलम्बेनागतवन्तौ स्थ इत्यभिप्रायः॥

कुह॑ स्विद्दो॒षा कुह॒ वस्तो॑र॒श्विना॒ कुहा॑भिपि॒त्वं क॑रत॒ः कुहो॑षतुः।
को वां॑ शयु॒त्रा वि॒धवे॑व दे॒वरं॒ मर्यं॒ न योषा॑ कृणुते स॒धस्थ॒ आ॥ २॥

कुह॑। स्वि॒त्। दो॒षा। कुह॑। वस्तो॑ः। अ॒श्विना॑। कुह॑। अ॒भि॒ऽपि॒त्वम्। क॒र॒तः। कुह॑। ऊ॒ष॒तुः।
कः। वा॒म्। श॒यु॒ऽत्रा। वि॒धवा॑ऽइव। दे॒वर॑म्। मर्य॑म्। न। योषा॑। कृ॒णु॒ते। स॒ध॒ऽस्थे॑। आ॥२॥

हे ᵛअश्विना अश्विनौ ᵛकुह ᵛस्वित् क्व चित् ᵛदोषा रात्रौ भवथ इति शेषः। ᵛकुह ᵛवस्तोः क्व वा दिवा भवथः। ᵛकुह क्व वा ᵛअभिपित्वम् अभिप्राप्तिं ᵛकरतः कुरुथः। ᵛकुह क्व वा ᵛऊषथुः वसथः। किंच ᵛवां युवां ᵛकः यजमानः ᵛसधस्थे सहस्थाने वेद्याख्ये ᵛआ ᵛकृणुते आकुरुते[3]। परिचरणार्थमात्माभिमुखीकरोति। तत्र दृष्टान्तौ दर्शयति। ᵛशयुत्रा शयने ᵛविधवेव यथा मृतभर्तृका नारी ᵛदेवरं भर्तृभ्रातरमभिमुखीकरोति। ᵛमर्यं ᵛन यथा च सर्वं मनुष्यं ᵛयोषा सर्वा नारी संभोगकालेऽभिमुखीकरोति तद्वदित्यर्थः। तथा च यास्कः—'क्व स्विद्रात्रौ भवथः क्व दिवा क्वाभिप्राप्तिं कुरुथः क्व वसथः को वां शयने विधवेव देवरम्। देवरः कस्माद्द्वितीयो वर उच्यते। विधवा विधातृका भवति विधवनाद्वा विधावनाद्वेति चर्मशिरा अपि वा धव इति मनुष्यनाम तद्वियोगाद्विधवा। देवरो दीव्यतिकर्मा। मर्यो मनुष्यो मरणधर्मा। योषा यौतेराकुरुते सधस्थाने' ( निरु. ३. १५ ) इति॥

प्रा॒तर्ज॑रेथे ज॒रणे॑व॒ काप॑या॒ वस्तो॑र्वस्तोर्यज॒ता ग॑च्छथो गृ॒हम्।
कस्य॑ ध्व॒स्रा भ॑वथ॒ः कस्य॑ वा नरा राजपु॒त्रेव॒ सव॒नाव॑ गच्छथः॥ ३॥

प्रा॒तः। ज॒रे॒थे॒ इति॑। ज॒रणा॑ऽइव। काप॑या। वस्तो॑ःऽवस्तोः। य॒ज॒ता। ग॒च्छ॒थः। गृ॒हम्।
कस्य॑। ध्व॒स्रा। भ॒व॒थः। कस्य॑। वा॒। न॒रा॒।
रा॒ज॒पु॒त्राऽइ॑व। सव॑ना। अव॑। ग॒च्छ॒थः॥ ३॥

हे ᵛनरा नेतारावश्विनौ युवां ᵛप्रातः प्रातःकाले ᵛजरेथे स्तोतृभिः स्तूयेथे। तत्र दृष्टान्तः। ᵛजरणेव। यथा जरणौ ऐश्वर्येण वृद्धौ राजानौ ᵛकापया। प्रातःप्रबोधकस्य बन्दिनो वाणी कापा। तया स्तूयेते। तद्वदित्यर्थः। किंच ᵛवस्तोर्वस्तोः अन्वहं ᵛयजता यष्टव्यौ युवां ᵛगृहं यजमानस्य मन्दिरं ᵛगच्छथः प्राप्नुथः। तौ युवां ᵛकस्य यजमानसंबन्धिनो दोषस्य ᵛध्वस्रा ध्वंसकौ विनाशयितारौ ᵛभवथः। ᵛकस्य यजमानस्य ᵛसवना सवनानि ᵛराजपुत्रेव राजकुमाराविव[4] युवाम् ᵛअव ᵛगच्छथः प्राप्नुथः॥

१. त-मु—प्रति विलंबेनग। २. त-भर—भूषति। ३. त—'आकुरुते' नास्ति। ४. त—राजकुमारीव।

युवां मृगेव वारणा मृगण्यवो दोषा वस्तोर्हविषा नि ह्वयामहे ।
युवं होत्रामृतुथा जुह्वते नरेषं जनाय वहथः शुभस्पती ॥ ४ ॥

युवाम् । मृगाऽइव । वारणा । मृगण्यवः । दोषा । वस्तोः । हविषा । नि । ह्वयामहे ।
युवम् । होत्राम् । ऋतुऽथा । जुह्वते । नरा । इषम् । जनाय । वहथः । शुभः । पती इति ॥४॥

हे अश्विनौ ᵛयुवां ᵛवारणा वारणौ ᵛमृगेव यथा शार्दूलौ ᵛमृगण्यवः मृगयवः तद्वद्वयं ᵛदोषा रात्रौ ᵛवस्तोः अहनि च ᵛहविषा ᵛनि ᵛह्वयामहे नियमेन ह्वयामः । किंच हे ᵛनरा नेतारावश्विनौ ᵛयुवं युवाम् ᵛऋतुथा काले काले ᵛहोत्राम् आहुतिं ᵛजुह्वते जुह्वति । यजमाना इति शेषः । किंच युवां ᵛशुभः शुभस्य वृष्ट्युदकस्य ᵛपती स्वामिनौ सन्तौ ᵛजनाय जनार्थम् ᵛइषम् अन्नं ᵛवहथः प्रापयथः॥

युवां ह घोषा पर्यश्विना यती राज्ञ ऊचे दुहिता पृच्छे वां नरा ।
भूतं मे अह्न उत भूतमक्तवेऽश्वावते रथिने शक्तमर्वते ॥ ५ ॥

युवाम् । ह । घोषा । परि । अश्विना । यती । राज्ञः । ऊचे । दुहिता । पृच्छे । वाम् । नरा ।
भूतम् । मे । अह्ने । उत । भूतम् । अक्तवे । अश्वऽवते । रथिने । शक्तम् । अर्वते ॥ ५ ॥

हे ᵛनरा नेतारावश्विनौ ᵛयुवां खलु ᵛपरि परितो ᵛयती गच्छन्ती ᵛराज्ञः दीप्तस्य कक्षीवतः ᵛदुहिता पुत्री ᵛघोषा घोषाख्या अहम् ᵛऊचे संनिहितेभ्यो वृद्धेभ्य उक्तवत्यस्मि । किंच ᵛवां युवां ᵛपृच्छे वृद्धान् संनिहितान् कीदृशावश्विनाविति पृच्छामि । तथा सति ᵛमे मम ᵛअह्ने दिवसाय दिवसनिर्वर्त्यकर्मणे ᵛभूतं भवतम् । ᵛउत अपि च ᵛअक्तवे रात्र्यै रात्रिनिर्वर्त्यकर्मणे ᵛभूतं भवतम् । तथा ᵛअश्ववते अश्वयुक्ताय ᵛरथिने रथवते च ᵛअर्वते भ्रातृव्याय ᵛशक्तं निरमने शक्तौ भवतम्॥ ॥१८॥

युवं कवी ष्ठः पर्यश्विना रथं विशो न कुत्सो जरितुर्नशायथः ।
युवोर्ह मक्षा पर्यश्विना मध्वासा भरत निष्कृतं न योषणा ॥ ६ ॥

युवम् । कवी इति । स्थः । परि । अश्विना । रथम् । विशः । न । कुत्सः । जरितुः । नशायथः ।
युवोः । ह । मक्षा । परि । अश्विना । मधु । आसा । भरत । निःऽकृतम् । न । योषणा ॥६॥

हे ᵛअश्विना अश्विनौ ᵛकवी मेधाविनौ ᵛयुवं युवां ᵛरथं ᵛपरि ᵛष्ठः परितो[1] भवथः[1] । अथ ᵛजरितुः स्तोतुर्यज्ञं प्रति गमनाय ᵛनशायथः रथं[2] प्राप्नुथः[2] । तत्र दृष्टान्तः । ᵛकुत्सः ᵛन । यथा कुत्सश्चेन्द्रश्च सरथमधितिष्ठतः । तथा च मन्त्रान्तरं—'यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः' ( ऋ. सं. ४. १६. ११ ) इति । किंच हे ᵛअश्विना अश्विनौ ᵛयुवोर्ह युवयोः खलु स्वभूतं ᵛमधु ᵛमक्षा मक्षिका ᵛआसा आस्येन ᵛपरि ᵛभरत बिभर्ति । तत्र दृष्टान्तः । ᵛनिष्कृतं ᵛन यथा निष्कृतं संस्कृतं मधु ᵛयोषणा नारी तद्वदित्यर्थः । तथा च मन्त्रान्तरम्—'उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति' ( ऋ. सं. १. ११९. ९ ) इति ॥

युवं ह भुज्युं युवमश्विना वशं युवं शिञ्जारमुशनामुपारथुः ।
युवो ररावा परि सख्यमासते युवोरहमवसा सुम्नमा चके ॥ ७ ॥

१. ग-त३-म१.४.७-परिभवथ । २. त-व्याप्नुथः ।

युवम् । ह । भुज्युम् । युवम् । अश्विना । वशम् । युवम् । शिञ्जारम् । उशनाम् । उप । आरथुः ॥
युवोः । रराँवा । परि । सख्यम् । आसते । युवोः । अहम् । अवसा । सुम्नम् । आ । चके ॥७॥

हे ᵛअश्विना अश्विनौ ᵛयुवं ᵛह युवां खलु ᵛभुज्युं समुद्रमध्ये विपन्ननावं तुग्रपुत्रं भुज्युम् ᵛउपारथुः उत्तारयितुमुपगतवन्तौ भवथः । किंच ᵛयुवं युवां ᵛवशं हस्तिबलेन शत्रुभिः पराजीयमानं वशनामधेयं राजानं रक्षणाय उपारथुः । किंच ᵛयुवं युवां ᵛशिञ्जारम् अत्रिमग्निकूटादुत्तारयितुम् ᵛउशनां कमनीयां स्तुतिं च श्रोतुमुपारथुः । तथा च मन्त्रान्तरम्—‘अत्रिं शिञ्जारमश्विना’ ( ऋ. सं. ८. ५. २५ ) इति । किंच ᵛयुवोः युवयोः ᵛसख्यं मित्रत्वं ᵛरराँवा हविषां प्रदाता यजमानः ᵛपरि ᵛआसते पर्यास्ते । वचनव्यत्ययः । किंच ᵛयुवोः युवयोः ᵛअवसा रक्षणेन ᵛअहं घोषा ᵛसुम्नं सुखम् ᵛआ ᵛचके कामये ॥

**युवं ह॑ कृशं युवम॑श्विना शयुं युवं वि॑धन्तं॑ विधवा॑मुरुष्यथः ।**
**युवं स॒निभ्यः॑ स्तनय॑न्तमश्विनाप॑ व्रजमू॑र्णुथः स॒प्तास्य॑म् ॥ ८ ॥**

युवम् । ह । कृशम् । युवम् । अश्विना । शयुम् । युवम् । विधन्तम् । विधवाम् । उरुष्यथः ।
युवम् । सनिऽभ्यः । स्तनयन्तम् । अश्विना । अप । व्रजम् । ऊर्णुथः । सप्तऽआस्यम् ॥ ८ ॥

हे ᵛअश्विना अश्विनौ ᵛयुवं ᵛह युवां खलु ᵛकृशं दुर्बलं कृशनामधेयं वा ᵛउरुष्यथः रक्षथः । किंच ᵛयुवं युवां ᵛशयुं शयुनामानमृषिमुरुष्यथः । किंच ᵛयुवं युवां ᵛविधन्तं परिचरन्तं मनुष्यं ᵛविधवां च अपतिकां वध्रिमतीं योद्धीं स्त्रियं च उरुष्यथः । किंच हे ᵛअश्विना अश्विनौ ᵛयुवं युवां ᵛस्तनयन्तं शब्दं कुर्वन्तं ᵛसप्तास्यं सर्पणशीलद्वारं ᵛव्रजं मेघम् । ‘ व्रजश्चरुः ’ इति मेघनामसु पाठात् । ᵛसनिभ्यः हविषां दातृभ्यः ᵛअप ᵛऊर्णुथः विवृतद्वारं कृतवन्तौ स्थ इत्यर्थः ॥

**जनि॑ष्ट॒ योषा॑ प॒तय॑त्क॒नीन॒को वि चारु॑हन्वी॒रुधो॑ दं॒सना॒ अनु॑ ।**
**आस्मै॑ रीयन्ते निव॒नेव॒ सिन्ध॑वो॒ऽस्मा अह्ने॑ भवति॒ तत्प॑तित्व॒नम् ॥ ९ ॥**

जनिष्ट । योषा । पतयत् । कनीनकः । वि । च । अरुहन् । वीरुधः । दंसनाः । अनु ।
आ । अस्मै । रीयन्ते । निवनाऽइव । सिन्धवः । अस्मै । अह्ने । भवति । तत् । पतिऽत्वनम् ॥९॥

हे अश्विनौ युवयोः प्रसादादियं घोषा ᵛयोषा स्त्रीगुणोपेता सुभगा ᵛजनिष्ट जाता । अस्याः समीपं ᵛकनीनकः कन्याकामः पतिः ᵛपतयत् पततु । अस्मै कनीनकाय युवयोः ᵛदंसनाः ᵛअनु वृष्टिलक्षणानि कर्माणि लक्षीकृत्य ᵛवीरुधः ओषधयः ᵛवि ᵛचारुहन् विरोहन्तु प्रादुर्भवन्तु । ᵛअस्मै कनीनकाय ᵛनिवनेव प्रवणेनेव ᵛसिन्धवः उदकानि ᵛआ ᵛरीयन्ते । ता वीरुधोऽभिगच्छन्तु । किंच ᵛअह्ने केनाप्यहन्तव्याय ᵛअस्मै कनीनकाय ᵛतत् संभोगसमर्थं ᵛपतित्वनं यौवनं ᵛभवति भवतु ॥

**जीवं रु॑दन्ति॒ वि म॑यन्ते अध्व॒रे दी॒र्घामनु॒ प्रसि॑तिं दीधियु॒र्नरः॑ ।**
**वा॒मं पि॒तृभ्यो॒ य इ॒दं स॑मेरि॒रे मयः॒ पति॑भ्यो॒ जन॑यः परि॒ष्वजे॑ ॥ १० ॥**

जीवम् । रुदन्ति । वि । मयन्ते । अध्वरे । दीर्घाम् । अनु । प्रऽसितिम् । दीधियुः । नरः ।
वामम् । पितृऽभ्यः । ये । इदम् । सम्ऽएरिरे । मयः । पतिऽभ्यः । जनयः । परिऽस्वजे ॥१०॥

हे अश्विनौ युवयोरनुग्रहात् ᵛये ᵛनरः पतयो जायानां ᵛजीवं जीवनमुद्दिश्य ᵛरुदन्ति । रोदनेनापि जायानां जीवनमेवाशासत इत्यर्थः । ता जायाः ᵛअध्वरे यज्ञे ᵛवि ᵛमयन्ते निवेशयन्ति च किंच तासु ᵛदीर्घां महतीं ᵛप्रसितिं भुजयोः प्रबन्धनम् ᵛअनु ᵛदीधियुः अनुदधति । ᵛइदं ᵛवामं वननीयमपत्यं ᵛपितृभ्यः ᵛसमीरिरे संप्रेरयन्ति च[1] । तेभ्यः ᵛपतिभ्यः ᵛजनयः जायाः ᵛपरिष्वजे परिष्वङ्गार्थं ᵛमयः सुखं कुर्वन्तीति शेषः ॥ ॥ १९ ॥

**न तस्य॑ विद्म॒ तदु॒ षु प्र वो॑चत॒ युवा॑ ह॒ यद्यु॑व॒त्याः क्षेति॒ योनि॑षु ।**
**प्रि॒योस्रि॑यस्य वृष॒भस्य॑ रे॒तिनो॑ गृ॒हं ग॑मेमाश्विना॒ तदु॑श्मसि ॥ ११ ॥**

न । तस्य॑ । वि॒द्म । तत् । ॐ इति॑ । सु । प्र । वो॒च॒त॒ । युवा॑ । ह॒ । यत् । यु॒व॒त्याः । क्षेति॑ । योनि॑षु ।

प्रि॒यऽउ॑स्रियस्य । वृ॒ष॒भस्य॑ । रे॒तिनः॑ । गृ॒हम् । ग॒मे॒म॒ । अ॒श्वि॒ना॒ । तत् । उ॒श्म॒सि॒ ॥ ११ ॥

हे ᵛअश्विना अश्विनौ ᵛतस्य ᵛतत् सुखं वयं ᵛन ᵛविद्म न जानीमः । तत्सुखं यूयं[2] ᵛसु[3] सुष्ठु ᵛप्र ᵛवोचत । बहुवचनं पूजार्थम् । ᵛयुवा ᵛह तरुणः खलु मत्पतिः ᵛयुवत्याः यौवनान्वितायाः मम ᵛयोनिषु गृहेषु ᵛयत् ᵛक्षेति निवसतीति । किंच ᵛप्रियोस्रियस्य प्रिययुवतेः ᵛवृषभस्य सेक्तुः ᵛरेतिनः रेतस्विनो मत्पतेः ᵛगृहं ᵛगमेम गच्छेम । वयं ᵛतत् गृहम् ᵛउश्मसि कामयामहे ॥

**आ वा॑मगन्त्सुम॒तिर्वा॑जिनीवसू॒ न्य॑श्विना हृ॒त्सु कामा॑ अयंसत ।**
**अभू॑तं गो॒पा मि॑थु॒ना शु॑भस्पती प्रि॒या अ॑र्य॒म्णो दुर्याँ॑ अशीमहि ॥ १२ ॥**

आ । वा॒म् । अ॒ग॒न् । सु॒ऽम॒तिः । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू ।

नि । अ॒श्वि॒ना॒ । हृ॒त्ऽसु । कामाः॑ । अ॒यं॒स॒त॒ ।

अभू॑तम् । गो॒पा । मि॒थु॒ना । शु॒भः॒ । प॒ती॒ इति॑ । प्रि॒याः । अ॒र्य॒म्णः । दु॒र्यान् । अ॒शी॒म॒हि॒ ॥ १२ ॥

हे ᵛवाजिनीवसू अन्नधनौ ᵛशुभस्पती उदकस्य स्वामिनौ हे ᵛअश्विना अश्विनौ ᵛमिथुना मिथुनौ परस्परं सहितौ ᵛवां युवां ᵛसुमतिः ᵛआ ᵛअगन् आगच्छतु । ᵛहृत्सु अस्मदीयेषु हृदयेषु ᵛकामाः अभिलाषाः ᵛनि ᵛअयंसत नियम्यन्ताम् । किंच युवां ᵛगोपा मम गोपायितारौ ᵛअभूतं भवतम् । अपि च ᵛप्रियाः सत्यो वयम् ᵛअर्यम्णः पत्युः ᵛदुर्यान् गृहान् ᵛअशीमहि प्राप्नुयाम[4] ॥

**ता म॑न्दसा॒ना मनु॑षो दुरो॒ण आ ध॒त्तं र॒यिं स॒हवी॑रं वच॒स्यवे॑ ।**
**कृ॒तं ती॒र्थं सु॑प्रपा॒णं शु॑भस्पती स्था॒णुं प॑थे॒ष्ठामप॑ दु॒र्म॒तिं ह॑तम् ॥ १३ ॥**

ता । म॒न्द॒सा॒ना । मनु॑षः । दु॒रो॒णे । आ । ध॒त्तम् । र॒यिम् । स॒हऽवी॑रम् । व॒च॒स्यवे॑ ।

कृ॒तम् । ती॒र्थम् । सु॒ऽप्र॒पा॒नम् । शु॒भः॒ । प॒ती॒ इति॑ ।

स्था॒णुम् । प॒थे॒ऽस्थाम् । अप॑ । दुः॒ऽम॒तिम् । ह॒त॒म् ॥ १३ ॥

हे अश्विनौ ᵛमन्दसाना मन्दसानौ ᵛता तौ युवां ᵛमनुषः मनुष्यस्य मत्पतेः ᵛदुरोणे गृहे ᵛवचस्यवे युष्मत्स्तुतिकामायै मह्यं ᵛसहवीरं पुत्रादिसहितं ᵛरयिं धनम् ᵛआ ᵛधत्तं स्थापयतम् ।

---

१. त-भ६-मु-'च' नास्ति । २. ग-युवां । ३. त-भ-'सु' नास्ति । ४. त-भ-प्राप्नुयामः ।

किंच हे अश्विनौ ᵛशुभस्पती उदकस्य स्वामिनौ युवां पतिगृहं गच्छन्त्या मम ᵛतीर्थं पानाय ᵛसुप्रपाणं ᵛकृतं कुरुतम्। किंच युवां ᵛपथेष्ठां मार्गस्थं ᵛस्थाणुं वृक्षं ᵛदुर्मतिं दुर्बुद्धिं परिपन्थिनं च ᵛअप ᵛहतम् अपगमयतम् ॥

क्व स्विदद्य कतमास्वश्विना विक्षु दस्रा मादयेते शुभस्पती।
क ईं नि येमे कतमस्य जग्मतुर्विप्रस्य वा यजमानस्य वा गृहम् ॥ १४ ॥

क्व। स्वित्। अद्य। कतमासु। अश्विना। विक्षु। दस्रा। मादयेते इति। शुभः। पती इति।
कः। ईम्। नि। येमे। कतमस्य। जग्मतुः। विप्रस्य। वा। यजमानस्य। वा। गृहम् ॥ १४॥

हे ᵛअश्विना अश्विनौ ᵛदस्रा दर्शनीयौ ᵛशुभस्पती उदकस्य पती स्वामिनौ भवन्तौ ᵛक्व ᵛस्वित् क्व स्थितौ[1] जनपदे ᵛअद्य अस्मिन्नहनि ᵛकतमासु कासु ᵛविक्षु प्रजासु ᵛमादयेते आत्मानं तर्पयतः। किंच ᵛकः यजमानः ᵛईम् एतौ ᵛनि ᵛयेमे नियच्छति। किंच भवन्तौ ᵛकतमस्य ᵛविप्रस्य मेधाविनः स्तोतुः[2] ᵛयजमानस्य ᵛगृहं ᵛवा[2] ᵛजग्मतुः गतवन्तौ ॥ ॥ २०॥

'समानम्' इति तृचं द्वादशं सूक्तं घोषायाः पुत्रस्य सुहस्त्यस्यार्षं जागतमाश्विनम्। अनुक्रान्तं च—'समानं तृचं सुहस्त्यो घौषेयः' इति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

समानमु त्यं पुरुहूतमुक्थ्यं१ रथं त्रिचक्रं सवना गनिग्मतम्।
परिज्मानं विदथ्यं सुवृक्तिभिर्वयं व्युष्टा उषसो हवामहे ॥ १ ॥

समानम्। ऊँ इति। त्यम्। पुरुऽहूतम्। उक्थ्यम्। रथम्। त्रिऽचक्रम्। सवना। गनिग्मतम्।
परिऽज्मानम्। विदथ्यम्। सुवृक्तिऽभिः। वयम्। विऽउष्टौ। उषसः। हवामहे ॥ १ ॥

हे अश्विनौ युवयोः ᵛसमानमु साधारणमेव ᵛत्यं तं ᵛपुरुहूतं बहुभिराहूतम् ᵛउक्थ्यं प्रशस्यं ᵛत्रिचक्रं ᵛसवना सवनानि यज्ञान् ᵛगनिग्मतं प्रतिगच्छन्तं ᵛपरिज्मानं परितो गन्तारं ᵛविदथ्यं यज्ञहितं ᵛरथम् ᵛउषसः ᵛव्युष्टौ ᵛसुवृक्तिभिः सुष्ठु दोषवर्जिताभिः स्तुतिभिः ᵛवयं ᵛहवामहे आह्वयामः ॥

प्रातर्युजं नासत्याधि तिष्ठथः प्रातर्यावाणं मधुवाहनं रथम्।
विशो येन गच्छथो यज्वरीर्नरा कीरेश्चिद्यज्ञं होतृमन्तमश्विना ॥ २ ॥

प्रातःऽयुजम्। नासत्या। अधि। तिष्ठथः। प्रातःऽयावानम्। मधुऽवाहनम्। रथम्।
विशः। येन। गच्छथः। यज्वरीः। नरा। कीरेः। चित्। यज्ञम्। होतृऽमन्तम्। अश्विना ॥२॥

हे ᵛनासत्या नासत्यभूतौ[3] सत्यस्य प्रणेतारौ वा ᵛनरा नेतारावश्विनौ युवां ᵛप्रातर्युजं प्रातःकालेऽश्वैर्युज्यमानं ᵛप्रातर्यावाणं प्रातर्गन्तारं ᵛमधुवाहनं मधुनोऽमृतस्य वाहकं तं ᵛरथम् ᵛअधि ᵛतिष्ठथः[4]। आरोहतमित्यर्थः। ᵛयज्वरीः यजनशीलाः ᵛविशः प्रजाः ᵛयेन रथेन ᵛगच्छथः। ᵛयेन च ᵛकीरेश्चित् स्तोतुरपि ᵛहोतृमन्तम् ऋत्विग्युक्तं ᵛयज्ञं गच्छथः ॥

---

१. ग-त३—स्थितवा; भ१.४.७—स्थिता। २. भ-मु—स्तोतुर्वा यजमानस्य वा गृहं। ३. ग-त३-भ६—सत्यभूतौ। ४. ग-त३-भ—तिष्ठथः अधितिष्ठतं।

अध्वर्युं वा मधुपाणिं सुहस्त्यमग्निधं वा धृतदक्षं दमूनसम् ।
विप्रस्य वा यत्सवनानि गच्छथोऽत आ यातं मधुपेयमश्विना ॥ ३ ॥

अध्वर्युम् । वा । मधुऽपाणिम् । सुऽहस्त्यम् । अग्निधम् । वा । धृतऽदक्षम् । दमूनसम् ।
विप्रस्य । वा । यत् । सवनानि । गच्छथः । अतः । आ । यातम् । मधुऽपेयम् । अश्विना ॥ ३ ॥

हे अश्विनौ युवां मधुपाणिं सोमपाणिम् अध्वर्युं वा सुहस्त्यं सुहस्त्यनामानमृषिं मां धृतदक्षं धृतबलं दमूनसं दानमनसम् अग्निधं वा ऋत्विग्विशेषं समायातम्[1] । तदेव दर्शयति । यत् यद्यपि विप्रस्य अन्यस्य मेधाविनः सवनानि यज्ञान् गच्छथः तथापि अतः तेभ्यो यज्ञेभ्यः मधुपेयम् अस्माकं सोमात्मकं पेयम् आ यातम् अन्वागच्छतम् ॥     ॥ २१ ॥

'अस्तेव' इत्येकादशर्चं त्रयोदशं सूक्तमाङ्गिरसस्य कृष्णाख्यस्यार्षं त्रैष्टुभमैन्द्रम् । अनुक्रान्तं च—'अस्तेवैकादश कृष्णः' इति । आभिप्लविकेषूक्थ्येषु स्तोमवृद्धाविदं सूक्तं ब्राह्मणाच्छंसिन आवापार्थम् । सूत्रितं च—'यज्ञे दिव इति सूक्ते अस्तेव सु प्रतरम्' ( आश्व. श्रौ. ७. ९ ) इति ॥

अस्तेव सु प्रतरं लायमस्यन्भूषन्निव प्र भरा स्तोममस्मै ।
वाचा विप्रास्तरत वाचमर्यो नि रामय जरितः सोम इन्द्रम् ॥ १ ॥

अस्ताऽइव । सु । प्रऽतरम् । लायम् । अस्यन् । भूषन्ऽइव । प्र । भर । स्तोमम् । अस्मै ।
वाचा । विप्राः । तरत । वाचम् । अर्यः । नि । रमय । जरितरिति । सोमे । इन्द्रम् ॥ १ ॥

प्रतरं प्रवृद्धतरं लायं संश्लेषणं हृदयवेधिनं शरं सु सुष्ठु अस्यन् क्षिपन् अस्तेव यथा क्षेप्ता धानुष्कः भूषन्निव यथा च अलंकारमलंकुर्वन् अलंकर्ता तद्वत् स्तोममस्मै इन्द्राय प्र भर प्रापय । हे अन्तरात्मन् त्वमिति शेषः । किंच हे विप्राः मेधाविनः यूयं वाचा स्तुत्या अर्यः अरेः शत्रोः वाचं तरत नितरां[2] तरत[2] । निराकुरुतेत्यर्थः[3] । हे जरितः स्तोतः त्वं सोमे सोमयागे इन्द्रं नि रमय क्रीडय ॥

दोहेन गामुप शिक्षा सखायं प्र बोधय जरितर्जारमिन्द्रम् ।
कोशं न पूर्णं वसुना न्यृष्टमा च्यावय मघदेयाय शूरम् ॥ २ ॥

दोहेन । गाम् । उप । शिक्ष । सखायम् । प्र । बोधय । जरितः । जारम् । इन्द्रम् ।
कोशम् । न । पूर्णम् । वसुना । निऽऋष्टम् । आ । च्यवय । मघऽदेयाय । शूरम् ॥ २ ॥

हे जरितः त्वं दोहेन कामानां दोहनार्थं गां गोरूपं सखायं प्रियम् इन्द्रम् उप शिक्ष वशं नय । किंच जारं भूतानां जरयितारमिन्द्रं प्र बोधय स्तुतिभिः प्रबुद्धं कुरु । किंच पूर्णम् उदकेन पूरितं कोशं न पात्रमिव[4] वसुना हिरण्यादिना धनेन न्यृष्टं नीचैर्गतं शूरं वीरमिन्द्रं मघदेयाय धनदानाय आ च्यवय । अभिमुखं कुर्वित्यर्थः ॥

---

१. ग–मामागतं; त–मामायातं । २. ग-त-भ–'नितरां तरत' नास्ति । ३. त१.२.६.७–नितरां कुरुतेत्यर्थः । ४. ग–पात्रमिव वीतिविभिः; त-भ२–पात्रमिव वाचिभिः; त३-भ१.४.६.७–पात्रमिव वीचोभिः; भ५–पात्रमिव वीधिभिः; मु–पात्रमिव वारिभिः ।

किमङ्ग त्वा मघवन्भोजमाहुः शिशीहि मा शिशयं त्वा शृणोमि ।
अप्नस्वती मम धीरस्तु शक्र वसुविदं भगमिन्द्रा भरा नः ॥ ३ ॥

किम् । अङ्ग । त्वा । मघऽवन् । भोजम् । आहुः । शिशीहि । मा । शिशयम् । त्वा । शृणोमि ।
अप्नस्वती । मम । धीः । अस्तु । शक्र । वसुऽविदम् । भगम् । इन्द्र । आ । भर । नः ॥ ३ ॥

अङ्गेति सामान्याह्वानम् । ᵛअङ्ग हे ᵛमघवन् धनवन् ᵛशक्र इन्द्र ᵛत्वा त्वां ᵛकिं[1] किमर्थं ᵛभोजं स्तोतॄणां भोजकमभीष्टम् ᵛआहुः सर्वे विद्वांसः । यदि न ददासीत्यध्याहारः । तस्माद्ददास्येव स्तोतृभ्यो धनानीत्यर्थः । तथा सति ᵛमा[2] स्तोतारं ᵛशिशीहि धनदानेन तीक्ष्णीकुरु । ᵛत्वा त्वां ᵛशिशयं स्तोतॄणां संस्कर्तारं ᵛशृणोमि । किंच ᵛमम ᵛधीः बुद्धिः ᵛअप्नस्वती कर्मवती ᵛअस्तु भवतु । किंच ᵛनः अस्माकं ᵛवसुविदं धनस्य लम्भकं ᵛभगं भाग्यम् ᵛआ ᵛभर आहर ॥

त्वां जना ममसत्येष्विन्द्र संतस्थाना वि ह्वयन्ते समीके ।
अत्रा युजं कृणुते यो हविष्मान्नासुन्वता सख्यं वष्टि शूरः ॥ ४ ॥

त्वाम् । जनाः । ममऽसत्येषु । इन्द्र । सम्ऽतस्थानाः । वि । ह्वयन्ते । सम्ऽईके ।
अत्र । युजम् । कृणुते । यः । हविष्मान् । न । असुन्वता । सख्यम् । वष्टि । शूरः ॥ ४ ॥

हे ᵛइन्द्र ᵛत्वां ᵛजनाः ᵛममसत्येषु संग्रामेषु ᵛवि ᵛह्वयन्ते विविधमाह्वयन्ति साहाय्यार्थम् । एतदेव दर्शयति । ᵛसमीके युद्धे ᵛसंतस्थानाः सह तिष्ठन्तो जना वि ह्वयन्त इति । ᵛअत्र अस्मिन्नाह्वाने सः ᵛशूरः वीर इन्द्रः तं[3] ᵛयुजं सखायं ᵛकृणुते कुरुते ᵛयो[4] ᵛहविष्मान् भवति । ᵛअसुन्वता सोमाभिषवमकुर्वता पुरुषेण सह ᵛसख्यं सखित्वं ᵛन ᵛवष्टि न कामयते ॥

धनं न स्पन्द्रं बहुलं यो अस्मै तीव्रान्त्सोमाँ आसुनोति प्रयस्वान् ।
तस्मै शत्रून्त्सुतुकान्प्रातरह्नो नि स्वष्ट्रान्युवति हन्ति वृत्रम् ॥ ५ ॥

धनम् । न । स्पन्द्रम् । बहुलम् । यः । अस्मै । तीव्रान् । सोमान् । आऽसुनोति । प्रयस्वान् ।
तस्मै । शत्रून् । सुऽतुकान् । प्रातः । अह्नः । नि । सुऽअष्ट्रान् । युवति । हन्ति । वृत्रम् ॥५॥

ᵛप्रयस्वान् हविष्मान् ᵛयः यजमानः ᵛस्पन्द्रं स्पन्दनशीलं गवाश्वादिकं ᵛबहुलं प्रभूतं ᵛधनं ᵛन यथा धनं दरिद्राय पात्रभूताय दातुं संस्करोति तद्वत् ᵛअस्मै इन्द्राय ᵛतीव्रान् तीव्ररसान् ᵛसोमान् ᵛआसुनोति अभिषुणोति । अभिषवाख्येन संस्कारेण संस्करोतीत्यर्थः । ᵛतस्मै यजमानाय ᵛप्रातरह्नः पूर्वाह्णे ᵛसुतुकान् सुप्रेरणान् शोभनपुत्रसहितान्[5] वा[5] ᵛस्वष्ट्रान् शोभनायुधान्[6] ᵛशत्रून् ᵛनि ᵛयुवति स इन्द्रः पृथक्करोति । किंच ᵛवृत्रं तदीयमुपद्रवं ᵛहन्ति हिनस्ति ॥ ॥ २२ ॥

---

१. त-भ६-'किं' नास्ति । २. ग-भ७-मां; भ६-मा मां । ३. त-भ१.२.४.७-त्वं; भ६-'तं' नास्ति । ४. त-'यो' नास्ति । ५. ग-शोभनपुत्रान्; त-शोभनसहिताः पुत्रान् वा; त३-शोभनसहितपुत्रान् वा; भ१.४-शोभनरहितपुत्रान् वा; भ२-शोभनसहिता पुत्रान् वा; भ६-शोभनरहितान् पुत्रान् वा; मु-शोभनपुत्रान् वा । ६. त-भ२-ज्ञानायुधान्; त३-भ१.४-शोभायुधान् ।

यस्मिन्वयं दधिमा शंसमिन्द्रे यः शिश्राय मघवा काममस्मे ।
आराच्चित्सन्भयतामस्य शत्रुर्न्यस्मै द्युम्ना जन्या नमन्ताम् ॥ ६ ॥

यस्मिन् । वयम् । दधिम । शंसम् । इन्द्रे । यः । शिश्राय । मघऽवा । कामम् । अस्मे इति ।
आरात् । चित् । सन् । भयताम् । अस्य । शत्रुः । नि । अस्मै । द्युम्ना । जन्या । नमन्ताम् ॥ ६ ॥

यस्मिन् इन्द्रे वयं घौपेयाः सुहस्त्याः शंसं स्तुतिं दधिम विदध्मः[1] । यः च मघवा धनवानिन्द्रः अस्मे अस्मासु कामम् अभिलाषं शिश्राय श्राययति । अस्य इन्द्रस्य शत्रुः आरात् दूर एव सन् चित् सन्नपि भयतां बिभेतु । किंच अस्मै इन्द्राय जन्या जन्यानि शत्रुजनपदभवानि द्युम्ना द्युम्नान्यन्नानि नि नमन्तां प्रह्वीभवन्तु । भोजनीयानि भवन्त्वित्यर्थः ॥

आराच्छत्रुमप बाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन ।
अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम् ॥ ७ ॥

आरात् । शत्रुम् । अप । बाधस्व । दूरम् । उग्रः । यः । शम्बः । पुरुऽहूत । तेन ।
अस्मे इति । धेहि । यवऽमत् । गोऽमत् । इन्द्र । कृधि । धियम् । जरित्रे । वाजऽरत्नाम् ॥ ७ ॥

हे पुरुहूत बहुभिराहूत इन्द्र तव यः उग्रः उद्गूर्णः शम्बः वज्रः । तथा च यास्कः— 'शम्ब इति वज्रनाम शमयतेर्वा शातयतेर्वा' ( निरु. ५. २४ ) इति । तेन वज्रेण शत्रुम् अस्मदरिम् आरात् अस्मत्समीपात् दूरम् अप बाधस्व त्वमपगमय । किंच अस्मे[2] अस्मासु यवमत् यवयुक्तं गोमत् गोयुक्तं च धनं धेहि निधेहि । किंच जरित्रे स्तोत्रे मह्यं वाजरत्नां रमणीयान्नं धियं कर्म कृधि कुरु ॥

प्र यमन्तर्वृषसवासो अग्मन् तीव्राः सोमा बहुलान्तास इन्द्रम् ।
नाह दामानं मघवा नि यंसन्नि सुन्वते वहति भूरि वामम् ॥ ८ ॥

प्र । यम् । अन्तः । वृषऽसवासः । अग्मन् । तीव्राः । सोमाः । बहुलऽअन्तासः । इन्द्रम् ।
न । अह । दामानम् । मघऽवा । नि । यंसत् । नि । सुन्वते । वहति । भूरि । वामम् ॥ ८ ॥

अन्तः जठरे यम् इन्द्रं वृषसवासः वृषसवा अन्नौ सोमस्य वर्षितृभिरध्वर्युभिरभिषुताः तीव्राः तीव्ररसाः बहुलान्तासः बहुलमन्नादिकमन्ते येभ्यस्ते बहुलान्ताः सोमाः प्र अग्मन् प्रगच्छन्ति स मघवा धनवानिन्द्रः दामानं दातारं यजमानं नाह नैव नि यंसत् नियच्छति । किंतु सुन्वते सोमाभिषवं कुर्वते यजमानाय भूरि अधिकं वामं वननीयं धनं नि वहति नितरां प्रापयति ॥

उत प्रहामतिदीव्या जयाति कृतं यच्छ्वघ्नी विचिनोति काले ।
यो देवकामो न धना रुणद्धि समित्तं राया सृजति स्वधावान् ॥ ९ ॥

उत । प्रऽहाम् । अतिऽदीव्य । जयाति । कृतम् । यत् । श्वऽघ्नी । विऽचिनोति । काले ।
यः । देवऽकामः । न । धना । रुणद्धि । सम् । इत् । तम् । राया । सृजति । स्वधाऽवान् ॥ ९ ॥

१. ग–निदधामः; त-भ-मु–विदधीमः । २. त-भ–' अस्मे ' नास्ति ।

ᵛउत अपि चेन्द्रः ᵛप्रहां प्रहन्तारम् ᵛअतिदीव्य । अतिरभिपूजितार्थे वर्तते । दीव्यतिर्गत्यर्थे । अभिपूजितं गमयित्वा ᵛजयाति जयति । किंच ᵛयत् यथा । अत्र प्रकारवचनप्रत्ययस्य लोपो द्रष्टव्यः। ᵛश्वघ्नी कितवः ᵛकृतं कृतममयं प्रतिकितवं कितवानां मध्ये ᵛविचिनोति परीक्ष्य गृह्णाति तद्वदिन्द्रः ᵛकाले युद्धकाले बलवन्तं शत्रुं परीक्ष्य वधार्थं गृह्णातीत्यर्थः । किंच ᵛयः मनुष्यः ᵛदेवकामः देवान् यष्टुं स्तोतुं वा अभिलाषवान् भवति तस्यार्थाय ᵛधना धनानि ᵛन ᵛरुणद्धि नावृणोति । नाच्छादयतीत्यर्थः । किंतु ᵛस्वधावान् बलवानिन्द्रः ᵛतं देवकामं ᵛराया धनेन ᵛसं ᵛसृजति संयोजयत्येव ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् । पुरुऽहूत । विश्वाम् ।
वयम् । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

हे ᵛपुरुहूत बहुभिराहूतेन्द्र तव प्रसादात् ᵛदुरेवां दुष्टागमनां दारिद्र्यादागताम् ᵛअमतिं दुर्बुद्धिं ᵛवयं घांपेयाः सुहस्त्याः ᵛगोभिः पशुभिः ᵛतरेम निस्तरेम । किंच ᵛयवेन ᵛविश्वां व्याप्तां ᵛक्षुधं तरेम । किंच ᵛप्रथमाः मुख्यानि ᵛधनानि ᵛराजभिः धनानामीश्वरैः । लभेमहीति शेषः । यद्वा । प्रथमा वयमिति संबन्धः । किंच ᵛअस्माकेन अस्मदीयेन ᵛवृजनेन बलेन ᵛजयेम । शत्रूनिति शेषः ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥

ᵛपश्चात् पश्चिमतो योऽघायुरागच्छति तस्मात् ᵛअघायोः पापकाच्छत्रोः ᵛनः अस्मान् ᵛबृहस्पतिः ᵛपरि[1] ᵛपातु रक्षतु । ᵛउत अपि च ᵛउत्तरस्मात् उत्तरतः ᵛअधरात् अधस्ताच्च योऽघायुरागच्छति तस्मादघायोः नोऽस्मान्[1] परि[2] पातु[2] । ᵛउत अपि च ᵛइन्द्रः ᵛपुरस्तात् पूर्वतः ᵛमध्यतः च योऽघायुरागच्छति तस्मादघायोः ᵛनः अस्मान् परि पातु । किंच ᵛसखा सखिभूतेन्द्रः ᵛसखिभ्यः प्रियेभ्योऽस्मभ्यं ᵛवरिवः धनं ᵛकृणोतु करोतु ॥ ॥ २३ ॥ ॥ ३ ॥

चतुर्थेऽनुवाकेऽष्टादश सूक्तानि । तत्र 'अच्छा मे' इत्येकादशर्चं प्रथमं सूक्तम् । दशम्येकादश्यौ त्रिष्टुभौ । शिष्टा जगत्यः । पूर्ववदपि देवते । तथा चानुक्रान्तम्—'अच्छा मे द्वित्रिष्टुबन्तम्' इति । उक्थ्ये ब्राह्मणाच्छंसिनस्तृतीयसवन एतत्सूक्तम् । सूत्रितं च—'अच्छा म इन्द्रं बृहस्पते युवमिन्द्रश्च वस्व इति याज्ये' (आश्व. श्रौ. ६. १) इति । षष्ठेऽहन्यप्यस्यैतत्सूक्तम् । सूत्रितं च—'अच्छा म इन्द्रमिति नित्यमैकाहिकम्' (आश्व. श्रौ. ८. ३) इति ॥

अच्छा म इन्द्रं मतयः स्वर्विदः सध्रीचीर्विश्वा उशतीरनूषत ।
परि ष्वजन्ते जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ॥ १ ॥

---

१. त-भ६-'परि...नोऽस्मान्' नास्ति । २. त३-भ१.२.४-बृहस्पतिः परिपातु ।

अच्छ । मे । इन्द्रम् । मतयः । स्वःऽविदः । सध्रीचीः । विश्वाः । उशतीः । अनूषत ।
परि । स्वजन्ते । जनयः । यथा । पतिम् । मर्यम् । न । शुन्ध्युम् । मघऽवानम् । ऊतये ॥ १ ॥

आङ्गिरसस्य[1] कृष्णस्य[1] मे मम स्वर्विदः सर्वस्य लम्भयित्र्यः सध्रीचीः संगताः विश्वाः व्याप्ताः उशतीः कामयमानाः मतयः स्तुतयः इन्द्रम् अच्छ अनूषत अभिष्टुवन्ति । किंच जनयः जायाः यथा पतिं भर्तारं मर्यं न यथा च मनुष्यं शुन्ध्युं शुद्धं दोषरहितं मघवानं धनवन्तम् ऊतये रक्षणार्थं परि ष्वजन्ते आलिङ्गन्ति तद्वदिन्द्रं मे स्तुतयः परि ष्वजन्ते ॥

**न घा त्वद्रिगप वेति मे मनस्त्वे इत्कामं पुरुहूत शिश्रय ।**
**राजेव दस्म नि षदोऽधि बर्हिष्यस्मिन्त्सु सोमेऽवपानमस्तु ते ॥ २ ॥**

न । घ । त्वद्रिक् । अप । वेति । मे । मनः । त्वे इति । इत् । कामम् । पुरुऽहूत । शिश्रय ।
राजाऽइव । दस्म । नि । सदः । अधि । बर्हिषि । अस्मिन् । सु । सोमे । अवऽपानम् । अस्तु । ते ॥ २ ॥

हे पुरुहूत बहुभिराहूत दस्म दर्शनीयेन्द्र त्वद्रिक् त्वदभिमुखं मे मदीयं मनः न घ न खलु अप वेति त्वत्तोऽपगच्छति । किंच त्वे इत् त्वय्येव कामम् अभिलाषं शिश्रय स्थापयामि । किंच राजेव ईश्वर इव बर्हिषि अधि नि षदः निषीद । किंच ते तव अस्मिन् सोमे अवपानमस्तु भवतु ॥

**विषूवृदिन्द्रो अमतेरुत क्षुधः स इद्रायो मघवा वस्व ईशते ।**
**तस्येदिमे प्रवणे सप्त सिन्धवो वयो वर्धन्ति वृषभस्य शुष्मिणः ॥ ३ ॥**

विषुऽवृत् । इन्द्रः । अमतेः । उत । क्षुधः । सः । इत् । रायः । मघऽवा । वस्वः । ईशते ।
तस्य । इत् । इमे । प्रवणे । सप्त । सिन्धवः । वयः । वर्धन्ति । वृषभस्य । शुष्मिणः ॥ ३ ॥

इन्द्रः अमतेः अस्माकं दुर्बुद्धेः प्रज्ञापहारिण्याः पिपासाया वा विषूवृत् विप्रवर्तनको भवतु । उत अपि च क्षुधः बुभुक्षाया विषूवृत् भवतु । किंच सः इत् स एव मघवा धनवानिन्द्रः वस्वः वासयितुः रायः धनस्य ईशते ईष्टे । किंच वृषभस्य वर्षितुः तस्येत् इन्द्रस्यैव इमे प्रसिद्धाः सप्त सप्तसंख्याकाः सिन्धवः नद्यः प्रवणे देशे वयः अन्नं वर्धन्ति वर्धयन्ति ॥

**वयो न वृक्षं सुपलाशमासदन्त्सोमास इन्द्रं मन्दिनश्चमूषदः ।**
**प्रैषामनीकं शवसा दविद्युतद्विदत्स्व१र्मनवे ज्योतिरार्यम् ॥ ४ ॥**

वयः । न । वृक्षम् । सुऽपलाशम् । आ । असदन् । सोमासः । इन्द्रम् । मन्दिनः । चमूऽसदः ।
प्र । एषाम् । अनीकम् । शवसा । दविद्युतत् । विदत् । स्वः । मनवे । ज्योतिः । आर्यम् ॥ ४ ॥

वयो न यथा पक्षिणः सुपलाशं शोभनपर्णं वृक्षम् आसीदन्ति[2] तद्वत् मन्दिनः मदकराः चमूषदः चमसपात्रेषु स्थातारः सोमासः सोमाः इन्द्रम् आ असदन् आसीदन्ति । अधितिष्ठन्तीत्यर्थः । एषाम् इन्द्रमधितिष्ठतां सोमानां शवसा वेगेन युक्तम् अनीकम् अग्रं प्र दविद्युतत्

---

१. ग–हे इंद्र यस्य सुहस्त्यस्य; त३-म१.४.५.७–हे घोषे यस्य सुहस्त्यस्य । २. त१.२.६.७–आसदन् आसीदंति ।

प्रद्योतते । किंचायमिन्द्रः ᵛस्वः स्वात्मना ᵛआर्य प्रेर्यं ᵛज्योतिः आदित्याख्यं तेजः ᵛमनवे मनुष्येभ्यः ᵛविदत् प्रयच्छतु ॥

कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् ।
न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥ ५ ॥

कृतम् । न । श्वऽघ्नी । वि । चिनोति । देवने । सम्ऽवर्गम् । यत् । मघऽवा । सूर्यम् । जयत् ।
न । तत् । ते । अन्यः । अनु । वीर्यम् । शकत् । न । पुराणः । मघऽवन् । न । उत । नूतनः ॥५॥

ᵛश्वघ्नी परस्वानां हन्ता कितवः ᵛदेवने द्यूते ᵛकृतं ᵛन यथा कृतं ᵛवि ᵛचिनोति तद्वदिन्द्रः सूर्यं मृगयते । कदेत्यत आह । ᵛयत् यदा ᵛमघवा धनवानिन्द्रः ᵛसंवर्गं सम्यग्वृष्टेर्वर्जयितारं ᵛसूर्यम् आदित्यं ᵛजयत् तदीयरसापहरणद्वारेण जयति । अथ प्रत्यक्षस्तुतिः । हे ᵛमघवन् धनवन्निन्द्र ᵛते[1] तव ᵛतत्[1] सूर्यजयलक्षणं ᵛवीर्यं वीरत्वम् ᵛअन्यः त्वत्तोऽन्यो भविष्यत्कालीनः पुमान् ᵛअनु अनुकर्तुं ᵛन ᵛशकत् न शक्नोति । ᵛपुराणः पूर्वोऽपि त्वद्वीर्यमनुकर्तुं ᵛन[2] शकत्[2] न शक्नोति[3] । ᵛउत अपि च ᵛनूतनः वर्तमानकालीनोऽपि त्वदीयं वीर्यमनुकर्तुं ᵛन शक्नोति ॥ ॥ २४ ॥

विशंविशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा ।
यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः ॥ ६ ॥

विशम्ऽविशम् । मघऽवा । परि । अशायत । जनानाम् । धेनाः । अवऽचाकशत् । वृषा ।
यस्य । अह । शक्रः । सवनेषु । रण्यति । सः । तीव्रैः । सोमैः । सहते । पृतन्यतः ॥ ६ ॥

ᵛवृषा कामानां वर्षिता ᵛमघवा धनवानिन्द्रः ᵛविशंविशं सर्वान् मनुष्यान् ᵛपर्यशायत परिशेते । किंच ᵛजनानां स्तोतृजनानां ᵛधेनाः स्तुतीः ᵛअवचाकशत् अभिपश्यति । किंच ᵛशक्रः इन्द्रः ᵛयस्याह यस्यैव यजमानस्य ᵛसवनेषु ᵛरण्यति रमते ᵛसः यजमानः ᵛतीव्रैः तीव्रकरैः प्रदीयमानैः ᵛसोमैः ᵛपृतन्यतः संग्राममिच्छतः शत्रून् ᵛसहते अभिभवति ॥

आपो न सिन्धुमभि यत्समक्षरन्त्सोमास इन्द्रं कुल्याइव ह्रदम् ।
वर्धन्ति विप्रा महो अस्य सादने यवं न वृष्टिर्दिव्येन दानुना ॥ ७ ॥

आपः । न । सिन्धुम् । अभि । यत् । सम्ऽअक्षरन् । सोमासः । इन्द्रम् । कुल्याःऽइव । ह्रदम् ।
वर्धन्ति । विप्राः । महः । अस्य । सदने । यवम् । न । वृष्टिः । दिव्येन । दानुना ॥ ७ ॥

ᵛयत् यदा ᵛसोमासः सोमाः ᵛइन्द्रम् ᵛअभि ᵛसमक्षरन् अभिक्षरन्ति । अभिगच्छन्तीत्यर्थः । तत्र दृष्टान्तौ दर्शयति । ᵛआपो ᵛन यथा आपः ᵛसिन्धुं समुद्रमभिसंक्षरन्ति । ᵛकुल्याइव यथा च कुल्याः ᵛह्रदम् अभिसंक्षरन्ति तद्वदित्यर्थः । तदानीम् ᵛअस्य इन्द्रस्य ᵛमहः महत्त्वं ᵛसदने यज्ञगृहे[4] ᵛविप्राः मेधाविनः ᵛवर्धन्ति । तत्र दृष्टान्तमाह । ᵛयवं ᵛन यथा यवं यवसस्यं ᵛवृष्टिः । कर्तरि क्तिन् । वर्षिता पर्जन्यः ᵛदिव्येन दिवि भवेन ᵛदानुना दानेन वर्षणेन वर्धयति[5] तद्वदित्यर्थः ॥

१. ग–तत्प्रकृतं; त-भ–ते तव । २. त–' न शकत् ' नास्ति । ३. त-भ२–शक्नोति क्त् । ४. त-भ–यज्ञे । ५. त-भ–वर्षयति ।

**वृषा न क्रुद्धः पतयद्रजःस्वा यो अर्यपत्नीरकृणोदिमा अपः ।**
**स सुन्वते मघवा जीरदानवेऽविन्दज्ज्योतिर्मनवे हविष्मते ॥ ८ ॥**

वृषा । न । क्रुद्धः । पतयत् । रजःऽसु । आ । यः । अर्यऽपत्नीः । अकृणोत् । इमाः । अपः ।
सः । सुन्वते । मघऽवा । जीरऽदानवे । अविन्दत् । ज्योतिः । मनवे । हविष्मते ॥ ८ ॥

ᵛरजःसु लोकेषु ᵛवृषा ᵛन यथा वृषभः ᵛक्रुद्धः सन् प्रतिवृषभवधाय ᵛपतयत् गच्छति तद्वत् ᵛयः इन्द्रः क्रुद्धः सन् मेघवधाय पतयति हत्वा च मेघम् ᵛअर्यपत्नीः सर्वस्य जगतः स्वामिन इन्द्रस्य पालयितव्याः ᵛइमाः प्रसिद्धाः ᵛअपः वृष्ट्युदकानि ᵛआ ᵛअकृणोत् आकृणोति अस्मदभिमुखं करोति ᵛसः ᵛमघवा[1] धनवानिन्द्रः[1] ᵛसुन्वते सोमाभिषवं कुर्वते ᵛजीरदानवे क्षिप्रदानाय ᵛहविष्मते ᵛमनवे मनुष्याय । यजमानायेत्यर्थः । ᵛज्योतिः तेजः ᵛअविन्दत् प्रायच्छत् ॥

**उज्जायतां परशुर्ज्योतिषा सह भूया ऋतस्य सुदुघा पुराणवत् ।**
**वि रोचतामरुषो भानुना शुचिः स्व१र्ण शुक्रं शुशुचीत सत्पतिः ॥ ९ ॥**

उत् । जायताम् । परशुः । ज्योतिषा । सह । भूयाः । ऋतस्य । सुऽदुघा । पुराणऽवत् ।
वि । रोचताम् । अरुषः । भानुना । शुचिः । स्वः । न । शुक्रम् । शुशुचीत । सत्ऽपतिः ॥ ९ ॥

ᵛपरशुः इन्द्रस्य वज्रः ᵛज्योतिषा तेजसा ᵛसह ᵛउज्जायताम् । अस्मच्छत्रुवधे मेघवधे च व्याप्रियतामित्यर्थः । किंच ᵛऋतस्य सत्यस्य ᵛसुदुघा माध्यमिका वाक् ᵛपुराणवत् प्रत्नवत् काले ᵛभूयाः भूयात् । पुरुषव्यत्ययः । किंच इन्द्रः ᵛअरुषः आरोचमानः ᵛभानुना दीप्त्या ᵛशुचिः ज्वलन् ᵛवि ᵛरोचतां प्रकाशताम् । किंच ᵛसत्पतिः सतां पतिरिन्द्रः ᵛस्वर्न आदित्य इव ᵛशुक्रं ज्वलन् ᵛशुशुचीत ᵛअत्यन्तं दीप्यताम् ॥

**गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।**
**वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥**

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् । पुरुऽहूत । विश्वाम् ।
वयम् । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

**बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।**
**इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥**

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥

एतदृग्द्वयं प्रागेव व्याख्यातम् ॥　　॥ २५ ॥

'आ यातु' इत्येकादशर्चं द्वितीयं सूक्तमाङ्गिरसस्य कृष्णस्यार्षमैन्द्रम् । आदितस्तिस्त्रस्त्रिष्टुभः । ततः षट् जगत्यः । ततो द्वे त्रिष्टुभौ । तथा चानुक्रान्तम्—'आ यातु त्रिस्त्रिष्टुबादि' इति । आभि-

---

१. त—मघवानिंद्रः ।

प्लविकेपृक्थ्येषु ब्राह्मणाच्छंसिनः स्तोमवृद्धाविदमावापार्थम्। सूत्रितं च—'आ यात्विन्द्रः स्वपतिरिमां धियमिति ब्राह्मणाच्छंसी' (आश्व. श्रौ. ७. ९) इति ॥

आ यात्विन्द्रः स्वपतिर्मदाय यो धर्मणा तूतुजानस्तुविष्मान्।
प्रत्वक्षाणो अति विश्वा सहांस्यपारेण महता वृष्ण्येन ॥ १ ॥

आ। यातु। इन्द्रः। स्वऽपतिः। मदाय। यः। धर्मणा। तूतुजानः। तुविष्मान्।
प्रऽत्वक्षाणः। अति। विश्वा। सहांसि। अपारेण। महता। वृष्ण्येन ॥ १ ॥

ᵛयः इन्द्रः ᵛतूतुजानः त्वरमाणः ᵛतुविष्मान् वृद्धिमान् ᵛविश्वा विश्वानि ᵛसहांसि शत्रुबलानि ᵛअपारेण ᵛमहता अधिकेन ᵛवृष्ण्येन बलेन ᵛप्रत्वक्षाणः प्रकर्षेण तनूकुर्वन् ᵛअति गच्छतीति शेषः। ᵛस्वपतिः धनपतिः ᵛइन्द्रः ᵛमदाय मदार्थं ᵛधर्मणा धारकेण रथेन ᵛआ ᵛयातु अस्मद्यज्ञं प्रत्यागच्छतु ॥

सुष्ठामा रथः सुयमा हरी ते मिम्यक्ष वज्रो नृपते गभस्तौ।
शीभं राजन्त्सुपथा याह्यर्वाङ् वर्धाम ते पपुषो वृष्ण्यानि ॥ २ ॥

सुऽस्थामा। रथः। सुऽयमा। हरी इति। ते। मिम्यक्ष। वज्रः। नृऽपते। गभस्तौ।
शीभम्। राजन्। सुऽपथा। आ। याहि। अर्वाङ्। वर्धाम। ते। पपुषः। वृष्ण्यानि ॥ २ ॥

हे ᵛनृपते नृणां पालकेन्द्र ᵛते तव ᵛरथः ᵛसुष्ठामा शोभनावस्थानः ᵛहरी अश्वावपि ᵛसुयमा सुयमौ। सुबद्धावित्यर्थः। किंच तव ᵛगभस्तौ बाहौ ᵛवज्रः ᵛमिम्यक्ष संहतो भवति। तथा सति हे ᵛराजन् सर्वस्येश्वरेन्द्र ᵛशीभं[1] शीघ्रं ᵛसुपथा शोभनेन मार्गेण ᵛअर्वाङ् अस्मदभिमुखम् ᵛआ ᵛयाहि आगच्छ। आगत्य ᵛपपुषः सोमं पीतवतः ᵛते तव ᵛवृष्ण्यानि बलानि ᵛवर्धाम वयं वर्धयामः ॥

एन्द्रवाहो नृपतिं वज्रबाहुमुग्रमुग्रासस्तविषास एनम्।
प्रत्वक्षसं वृषभं सत्यशुष्ममेमस्मत्रा सधमादो वहन्तु ॥ ३ ॥

आ। इन्द्रऽवाहः। नृऽपतिम्। वज्रऽबाहुम्। उग्रम्। उग्रासः। तविषासः। एनम्।
प्रऽत्वक्षसम्। वृषभम्। सत्यऽशुष्मम्। आ। ईम्। अस्मऽत्रा। सधऽमादः। वहन्तु ॥ ३ ॥

ᵛनृपतिं नृणां पालकं ᵛवज्रबाहुं वज्रहस्तम् ᵛउग्रम् उद्गूर्णं ᵛप्रत्वक्षसं शत्रुबलानां प्रकर्षेण तनूकर्तारं ᵛवृषभं कामानां वर्षितारं ᵛसत्यशुष्मम् अविसंवादिबलम् ᵛएनम् इन्द्रम्। ᵛआ, ᵛईम् इति पूरणौ। ᵛउग्रासः उद्गूर्णाः ᵛतविषासः प्रवृद्धाः ᵛसधमादः सह माद्यन्तः ᵛइन्द्रवाहः इन्द्रस्य वोढारः ᵛअस्मत्रा अस्मासु ᵛआ ᵛवहन्तु ॥

एवा पतिं द्रोणसाचं सचेतसमूर्जः स्कम्भं धरुण आ वृषायसे।
ओजः कृष्व सं गृभाय त्वे अप्यसो यथा केनिपानामिनो वृधे ॥ ४ ॥

१. त-भ६.७–'शीभं' नास्ति।

एव। पतिम्। द्रोणऽसाचम्। सऽचेतसम्। ऊर्जः। स्कम्भम्। धरुणे। आ। वृषऽयसे।
ओजः। कृष्व। सम्। गृभाय। त्वे इति। अपि। असः। यथा। केऽनिपानाम्। इनः। वृधे॥ ४॥

हे इन्द्र त्वम् ^एव एवं ^पतिं पालकं ^द्रोणसाचं द्रोणकलशस्य सेवितारं ^सचेतसं सप्रज्ञम् ^ऊर्जः ^स्कम्भं बलस्य धारकं सोमं ^धरुणे धारके जठरे ^आ ^वृषायसे आसिञ्चसे। धारयसीत्यर्थः। किंच मह्यम् ^ओजः बलं ^कृष्व कुरुष्व। ^त्वे त्वयि अस्मान् ^अपि ^सं ^गृभाय संगृहाण च। किंच ^केनिपानां मेधाविनामस्माकम्। 'केनिप उशिजः' इति मेधाविनामसु पाठात्। ^वृधे वर्धनाय ^यथा यथावत् सर्वथा[1] ^इनः स्वामी ^असः भवसि॥

**गमन्नस्मे वसून्या हि शंसिषं स्वाशिषं भरमा याहि सोमिनः।**
**त्वमीशिषे सास्मिन्ना सत्सि बर्हिष्यनाधृष्या तव पात्राणि धर्मणा॥ ५॥**

गमन्। अस्मे इति। वसूनि। आ। हि। शंसिषम्। सुऽआशिषम्। भरम्। आ। याहि। सोमिनः।
त्वम्। ईशिषे। सः। अस्मिन्। आ। सत्सि। बर्हिषि।
अनाधृष्या। तव। पात्राणि। धर्मणा॥ ५॥

हे इन्द्र ^वसूनि त्वद्देयानि धनानि ^अस्मे मयि[2] ^आ[2] ^गमन् आगच्छन्तु। ^हि यस्मात् त्वामहं ^शंसिषं स्तौमि। किंच ^सोमिनः सोमवतो मम ^स्वाशिषं शोभना आशिषो यस्मिंस्तं ^भरं यज्ञम् ^आ ^याहि त्वमागच्छ। किंच ^त्वमीशिषे धनस्येश्वरोऽसि। एवंविधः ^सः त्वम् ^अस्मिन् अस्मदीये वेद्यास्तृते ^बर्हिषि ^आ ^सत्सि आसीद। किंच ^तव सोमपात्राणि ^धर्मणा राक्षसानां कर्मणा अनाधृष्याणि धर्षयितुमशक्यानि[3]॥ ॥ २६ ॥

**पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा।**
**न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः॥ ६॥**

पृथक्। प्र। आयन्। प्रथमाः। देवऽहूतयः। अकृण्वत। श्रवस्यानि। दुस्तरा।
न। ये। शेकुः। यज्ञियाम्। नावम्। आऽरुहम्। ईर्मा। एव। ते। नि। अविशन्त। केपयः॥६॥

हे इन्द्र तव प्रसादात् ते ^पृथक् ^प्रायन् देवलोकान् पृथग्गच्छन्ति ये ^प्रथमाः पूर्वे मुख्या वा ^देवहूतयः देवानामाह्वातारः। कर्तरि कृत्। किंच ^दुष्टरा अन्यैर्दुस्तराणि ^श्रवस्यानि श्रवणीयानि यशांसि ^अकृण्वत[4] अकुर्वत। किंच ^ये त्वत्प्रसादरहिता जनाः ^यज्ञियां यज्ञसंबन्धिनीम्। यज्ञमयीमित्यर्थः। ^नावम् ^आरुहम् आरोढुं ^न ^शेकुः न शक्नुवन्ति ^ते ^केपयः कुत्सितपूयकर्माणः पापकर्माणो जनाः ^ईर्मैव ऋणेनैव ^न्यविशन्त नीचैरविशन्त। अधोगतिं प्राप्ता इत्यर्थः। तथा च यास्कः—'पृथक् प्रायन् पृथक् प्रथतेः प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन्यज्ञियां नावमारोढुमथ ये नाशक्नुवन्यज्ञियां नावमारोढुमीर्मैव ते न्यविशन्त ऋणेनैव ते न्यविशन्तास्मिन्नेव लोक इति वा' (निरु. ५. २५) इति॥

---

१. त-'सर्वथा' नास्ति। २. त१.२.६.७–अस्मासु। ३. त१.२.६.७–'मशक्यानि भवति शेषः। ४. त–कृण्वत।

एवैवापागपरे सन्तु दूढ्योऽश्वा येषां दुर्युजं आयुयुज्रे ।
इत्था ये प्रागुपरे सन्ति दावने पुरूणि यत्र वयुनानि भोजना ॥ ७ ॥

एव । एव । अपाक् । अपरे । सन्तु । दुःऽध्यः । अश्वाः । येषाम् । दुःऽयुजः । आऽयुयुज्रे ।
इत्था । ये । प्राक् । उपरे । सन्ति । दावने । पुरूणि । यत्र । वयुनानि । भोजना ॥ ७ ॥

एवैव एवमेव दूढ्यः दुर्बुद्धयः अपरे अन्ये । अयज्वान इत्यर्थः । अपाक् अपाचीना अधोगन्तारः सन्तु भवन्तु येषां यज्ञमकुर्वताम्[1] अश्वाः दुर्युजः दुर्योजाः प्रबलाः अश्वाः आयुयुज्रे रथेषु युज्यन्ते । ये सत्यपि सामर्थ्ये न यजन्ति ते नरकं गच्छन्तीति भावः । किंच इत्था इत्थं ते स्वर्गगामिनो भवन्ति[2] ये उपरे यज्वानः प्राक् मरणात्पूर्वमेव दावने देवानां हविर्दानाय सन्ति[3] भवन्ति[3] । यत्र येषु च यज्ञकारिषु वयुनानि प्रज्ञानानि कान्तानि वा भोजना भोग्यानि धनानि पुरूणि बहूनि देवेभ्यो दानाय सन्ति ॥

गिरीँरज्रान्रेजमानाँ अधारयद् द्यौः क्रन्ददन्तरिक्षाणि कोपयत् ।
समीचीने धिषणे वि ष्कभायति वृष्णः पीत्वा मद उक्थानि शंसति ॥८॥

गिरीन् । अज्रान् । रेजमानान् । अधारयत् । द्यौः । क्रन्दत् । अन्तरिक्षाणि । कोपयत् ।
समीचीने इति सम्ऽईचीने । धिषणे इति । वि । स्कभायति ।
वृष्णः । पीत्वा । मदे । उक्थानि । शंसति ॥ ८ ॥

गिरीन् मेघान् अज्रान् गमनशीलान् रेजमानान् कम्पमानान् अधारयत् इन्द्रो[4] धारितवान्[4] । निश्चलान्[5] कृतवानित्यर्थः । किंच द्यौः द्युलोकस्तन्निवासी वा जनोऽसुरराक्षसेभ्यो भीतः सन् क्रन्दत् क्रन्दति । इन्द्रमाह्वयत्यात्मनः परित्राणार्थम् । किंचेन्द्रः अन्तरिक्षाणि कोपयत् कोपयति । संक्षोभयतीत्यर्थः । किंचेन्द्रः समीचीने परस्परं संगते धिषणे द्यावापृथिव्यौ वि ष्कभायति अन्तरिक्षेण स्तभ्नाति । स्तम्भयतीत्यर्थः । किंचेन्द्रः वृष्णः स्वोदरस्यासेक्तॄन् सोमान् पीत्वा मदे सति उक्थानि प्रशस्यानि वचनानि शंसति प्रब्रवीति ॥

इमं बिभर्मि सुकृतं ते अङ्कुशं येनारुजासि मघवञ्छफारुजः ।
अस्मिन्त्सु ते सवने अस्त्वोक्यं सुत इष्टौ मघवन्बोध्याभगः ॥ ९ ॥

इमम् । बिभर्मि । सुऽकृतम् । ते । अङ्कुशम् । येन । आऽरुजासि । मघऽवन् । शफऽआरुजः ।
अस्मिन् । सु । ते । सवने । अस्तु । ओक्यम् । सुते । इष्टौ । मघऽवन् । बोधि । आऽभगः ॥९॥

हे मघवन् धनवन्निन्द्र ते तव सुकृतं संस्कृतम् इमम् अङ्कुशं बिभर्मि धारयामि । अत्राङ्कुशशब्देन प्रेरकत्वगुणयोगात् स्तुतिरुच्यते । स्तुतिं धारयामीत्यर्थः । येन स्तुतिलक्षणाङ्कुशेन[6] स्तुतः सन् त्वं शफारुजः आभिमुख्येन परबलानां हन्तॄनैरावतादीन् गजान् आरुजासि

१. त१.२.६.७-भ१.२.४–यज्ञकुर्वतां; त४.५–यज्ञं कुर्वतां । २. त–'भवन्ति' नास्ति । ३. त-भ६–संभवंति । ४. त–'इन्द्रो धारितवान्' नास्ति । ५. त-भ६–निश्चितान् । ६. ग-त३-भ१.४.५.७–स्तुतिरूपेणांकुशेन ।

आभिमुख्येन रुजसि । पीडयसीत्यर्थः। किंच ᵛते तव ᵛअस्मिन् अस्मदीये ᵛसवने ᵛओक्यम् ओको निवासः ᵛअस्तु भवतु। किंच हे ᵛमघवन् धनवन्निन्द्र ᵛआभगः आभजनीयस्त्वं ᵛसुते सुतसोमे ᵛइष्टौ यज्ञे ᵛबोधि अस्मदीयाः स्तुतीर्बुध्यस्व ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् । पुरुऽहूत । विश्वाम् ।
वयम् । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥

इदमृग्द्वयं व्याख्यातचरम् ॥ ॥ २७ ॥

'दिवस्परि' इति द्वादशर्चं तृतीयं सूक्तं भालन्दनस्य वत्सप्रेरार्षं त्रैष्टुभमाग्नेयम्। तथा चानुक्रान्तं—'दिवस्परि द्वादश वत्सप्रिराग्नेयं तु' इति। प्रातरनुवाकाश्विनशस्त्रयोरिदमादिके द्वे सूक्ते अस्य सूक्तस्यान्त्यां वर्जयित्वा। सूत्रितं च—'दिवस्परीति सूक्तयोः पूर्वस्योत्तमामुद्धरेत्' (आश्व. श्रौ. ४. १३) इति। क्षामवत्याम् 'अक्रन्ददग्निः' इत्येषा याज्या। सूत्रितं च—'अग्ने त्वमस्मद्युयोध्यमीवा अक्रन्ददग्निः स्तनयन्निव द्यौः' (आश्व. श्रौ. ३. १३) इति॥

दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ १ ॥

दिवः । परि । प्रथमम् । जज्ञे । अग्निः । अस्मत् । द्वितीयम् । परि । जातऽवेदाः ।
तृतीयम् । अप्ऽसु । नृऽमनाः । अजस्रम् । इन्धानः । एनम् । जरते । सुऽआधीः ॥ १ ॥

ᵛअग्निः ᵛप्रथमं पूर्वं ᵛदिवः द्युलोकस्य ᵛपरि उपरि आदित्यात्मना ᵛजज्ञे जातः। ᵛजातवेदाः जातप्रज्ञो जातधनो वाग्निः ᵛद्वितीयम् ᵛअस्मत् अस्माकं ᵛपरि उपरि पार्थिवात्मना जज्ञे। ᵛनृमणाः नृषु मनुष्येष्वनुग्राहकतयासक्तचित्तोऽग्निः ᵛतृतीयमप्सु अन्तरिक्षे वैद्युतात्मना जज्ञे। एवंविधम् ᵛएनम् अग्निं ᵛस्वाधीः सुप्रज्ञाता[1] ᵛअजस्रम् अनवरतम् ᵛइन्धानः दीपयन् ᵛजरते स्तौति। यद्वा। वाजसनेयकोक्तप्रकारेणास्य मन्त्रस्यार्थो द्रष्टव्यः। तद्यथा—'दिवस्परि प्रथमं जज्ञे अग्निरिति। प्राणो वै द्यौः प्राणाद्वा एष प्रथममजायतास्मद्द्वितीयं परि जातवेदा इति यदेनमदो द्वितीयं पुरुषविधोऽजनयत्तृतीयमप्स्विति यदेनमदस्तृतीयमद्भ्योऽजनयन्नृमणा अजस्रमिति प्रजापतिर्वै नृमणा अग्निरजस्रमिन्धान एनं जरते स्वाधीरिति यो[2] वा एनमिन्धे स एनं जनयते स्वाधीः' (श. ब्रा. ६. ७. ४. ३) इति[2]॥

विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥ २ ॥

१. त-म६-मु-सुप्रज्ञो नेता; म१.२.४.७-सुप्राज्ञो नेता। २. त-'यो वा...इति' नास्ति।

वि॒द्म । ते॒ । अ॒ग्ने॒ । त्रे॒धा । त्र॒याणि॑ । वि॒द्म । ते॒ । धाम॑ । विऽभृ॑ता । पु॒रु॒ऽत्रा ।
वि॒द्म । ते॒ । नाम॑ । प॒र॒मम् । गुहा॑ । यत् । वि॒द्म । तम् । उत्स॑म् । यतः॑ । आ॒ऽज॒गन्थ॑ ॥२॥

हे ᵛअग्ने ᵛते तव ᵛत्रेधा त्रिपु स्थानेपु पृथिव्यन्तरिक्षद्युलोकेपु स्थितानि ᵛत्रयाणि अग्निवाय्वादित्याख्यानि त्रीणि रूपाणि ᵛविद्म वयं जानीमः । किंच हे अग्ने ᵛते तव ᵛधाम[1] धामानि स्थानानि ᵛविभृता विभृतानि ᵛपुरुत्रा बहुधा बहूनि वा गार्हपत्याहवनीयान्वाहार्यपचनादीनि ᵛविद्म । किंच ᵛते तव ᵛगुहा गूढम् अवेदविद्भिरविज्ञातं[2] ᵛपरमम् उत्कृष्टं वेदे प्रसिद्धं ᵛयत् ᵛनाम अस्ति तत् ᵛविद्म वेदविदो वयं विजानीमः । किंच त्वं ᵛयतः यस्मात् ᵛआजगन्थ आगतवानसि । उत्पन्नवानित्यर्थः । ᵛतम् ᵛउत्सम् उत्स्यन्दयितारमुत्पादयितारं कारणात्मानं ᵛविद्म जानीमः ॥

**स॒मु॒द्रे त्वा॑ नृ॒मणा॑ अ॒प्स्व१॒॑न्तर्नृ॒चक्षा॑ ईधे दि॒वो अ॑ग्न॒ ऊध॑न् ।**
**तृ॒तीये॑ त्वा॒ रज॑सि तस्थि॒वांस॑म॒पामु॒पस्थे॑ महि॒षा अ॑वर्धन् ॥ ३ ॥**

स॒मु॒द्रे । त्वा॒ । नृ॒ऽमनाः॑ । अ॒प्ऽसु । अ॒न्तः । नृ॒ऽचक्षाः॑ । ई॒धे॒ । दि॒वः । अ॒ग्ने॒ । ऊध॑न् ।
तृ॒तीये॑ । त्वा॒ । रज॑सि । त॒स्थि॒ऽवांस॑म् । अ॒पाम् । उ॒पऽस्थे॑ । म॒हि॒षाः । अ॒व॒र्ध॒न् ॥ ३ ॥

हे ᵛअग्ने ᵛसमुद्रे महोदधौ जायमानम् ᵛअप्स्वन्तः अपां मध्ये वडवात्मना स्थितं ᵛत्वा त्वां ᵛनृमणाः नृपु मनुष्येष्वनुग्राहकतयासक्तचित्तो वरुणः ᵛईधे संदीपितवान् । किंच ᵛनृचक्षाः नृणां प्रत्यक्षेण द्रष्टादित्यः ᵛदिवः द्युलोकस्य संबन्धिनि ᵛऊधन् ऊधसि ऊधःस्थानीय आदित्यमण्डले यज्ञे वा ᵛईधे संदीपितवान् । किंच ᵛतृतीये त्रयाणां पूरके ᵛअपां वृष्ट्युदकानाम् ᵛउपस्थे स्थाने ᵛरजसि अन्तरिक्षलोके ᵛतस्थिवांसं विद्युद्रूपेणावस्थितं ᵛत्वा त्वां ᵛमहिषाः महान्तो माध्यमिका देवगणा मरुदादयः स्तोतारः ᵛअवर्धन् स्तुतिभिरवर्धयन् । यद्वा । वाजसनेयकोक्तप्रकारेणार्थो द्रष्टव्यः । तद्यथा—' समुद्रे त्वा नृमणा अप्स्वन्तरिति । प्रजापतिर्वै नृमणा अप्सु त्वा[3] प्रजापतिरित्येतन्नृचक्षा ईधे दिवो अग्न ऊधन्निति प्रजापतिर्वै नृचक्षा आपो[4] दिव[4] ऊधस्तृतीये त्वा रजसि तस्थिवांसमिति द्यौर्वै तृतीयं रजोऽपामुपस्थे[5] महिषा अवर्धन्निति प्राणा वै महिषा दिवि त्वा प्राणा अवर्धन्नित्येतत् ' ( श. ब्रा. ६. ७. ४. ५ ) इति ॥

**अक्र॑न्दद॒ग्निः स्त॒नय॑न्निव॒ द्यौः क्षामा॒ रेरि॑हद्वी॒रुधः॑ सम॒ञ्जन् ।**
**स॒द्यो ज॑ज्ञा॒नो वि हीमि॒द्धो अख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः ॥ ४ ॥**

अक्र॑न्दत् । अ॒ग्निः । स्त॒नय॑न्ऽइव । द्यौः । क्षाम॑ । रेरि॑हत् । वी॒रुधः॑ । स॒म्ऽअ॒ञ्जन् ।
स॒द्यः । ज॒ज्ञा॒नः । वि । हि । ई॒म् । इ॒द्धः । अख्य॑त् ।
आ । रोद॑सी॒ इति॑ । भा॒नुना॑ । भा॒ति॒ । अ॒न्तरिति॑ ॥ ४ ॥

दावरूपोऽग्निः स्तूयते[6] । ᵛअग्निः दावाग्निः ᵛस्तनयन्निव ᵛद्यौः यथा दीप्तो विद्युद्रूपः पर्जन्यो महान्तं शब्दं करोति तद्वत् ᵛअक्रन्दत् महान्तं शब्दं करोति । किं कुर्वन्नित्यत्राह । ᵛक्षाम क्षामां

१. त३-भ-सद्म । २. त-भ-मु-अवेदविद्वद्भि॰ । ३. त-भ-मु-तदा । ४. त-भ-मु-आप इव । ५. त१.३.७-भ२-रजो द्यामुपस्थे । ६. ग-त३-भ५.६-अत्र स्तूयते ।

पृथिवीं vरेरिहत् आस्वादयन् vवीरुधः ओषधीश्च vसमञ्जन् म्रक्षयन्। संतापयन्नित्यर्थः। किंच vसद्यः तत्क्षणे[1] समाने काले vजज्ञानः जायमानः vइद्धः दीप्तः vईम् इदं स्वेन दग्धं वस्तुजातं vवि vअख्यत् विविधं पश्यति। vहि इति पादपूरणः। किंच vरोदसी द्यावापृथिव्यौ vअन्तः अन्तरेण vभानुना स्वदीप्त्या vभाति प्रकाशते। यद्वा। वाजसनेयकोक्तार्थो द्रष्टव्यः। तद्यथा—'अक्रन्ददग्निः स्तनयन्निव द्यौरिति। क्रन्दतीव हि पर्जन्यः स्तनयन्[2] क्षामा[2] रेरिहद्वीरुधः समञ्जन्निति क्षामा वै रेरिह्यमाणो वीरुधः समनक्ति[3] सद्यो जज्ञानो वि हीमिद्धो अख्यदिति सद्यो वा[4] एष जज्ञान इदं सर्वं विख्यापयत्या[5] रोदसी भानुना भात्यन्तरितीमे वै द्यावापृथिवी रोदसी ते एष भानुना भात्यन्तः' (श. ब्रा. ६. ७. ३. २) इति वैद्युतस्य स्तुतिः[6]। यद्वा। इयं[6] दावाग्नेः स्तुतिरिति॥

श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः।
वसुः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः॥ ५॥

श्रीणाम्। उत्ऽआरः। धरुणः। रयीणाम्। मनीषाणाम्। प्रऽअर्पणः। सोमऽगोपाः।
वसुः। सूनुः। सहसः। अप्ऽसु। राजा। वि। भाति। अग्रे। उषसाम्। इधानः॥ ५॥

vश्रीणां विभूतीनाम् vउदारः उद्गमयिता दाता vरयीणां धनानां vधरुणः धारकः vमनीषाणाम् ईप्सितार्थानां vप्रार्पणः प्रापयिता vसोमगोपाः सोमस्य गोपा vवसुः सर्वस्य लोकस्य वासकः vसहसः बलस्य vसूनुः vअप्सु उदकेषु स्थितः vराजा सर्वस्येश्वरः[7] vउषसाम् vअग्रे प्रभातकाले vइधानः अग्निहोत्रार्थं समिध्यमानोऽग्निः vवि vभाति प्रकाशते॥

विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः।
वीळुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च॥ ६॥

विश्वस्य। केतुः। भुवनस्य। गर्भः। आ। रोदसी इति। अपृणात्। जायमानः।
वीळुम्। चित्। अद्रिम्। अभिनत्। पराऽयन्। जनाः। यत्। अग्निम्। अयजन्त। पञ्च॥ ६॥

vविश्वस्य सर्वस्य vकेतुः प्रज्ञापकः vभुवनस्य उदकस्य vगर्भः गर्भभूतोऽग्निः vजायमानः प्रादुर्भवन्नेव vरोदसी द्यावापृथिव्यौ vआ vअपृणात् आपूरयति। vपरायन् परागच्छन् vवीळुं vचित् दृढमपि vअद्रिं मेघम् vअभिनत् भिनत्ति च। कदेत्यत्राह। vयत् यदा vपञ्च vजनाः मनुष्याः vअग्निमयजन्त यजन्ते॥      ॥ २८॥

उशिक्पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि।
इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन्॥ ७॥

उशिक्। पावकः। अरतिः। सुऽमेधाः। मर्तेषु। अग्निः। अमृतः। नि। धायि।
इयर्ति। धूमम्। अरुषम्। भरिभ्रत्। उत्। शुक्रेण। शोचिषा। द्याम्। इनक्षन्॥ ७॥

१. ग-त-भ१.२.४.५.६-ईक्षणेन; भ७-तत्क्षणोन। २. त-भ-मु-स्तनयन्निव द्यौः क्षामा। ३. ग-शन्यंततकषा; त-भ-शम्यं व्यनक्ति; मु-सम्यग्व्यनक्ति। ४. त-हवां; भ-हवा। ५. त-भ-विज्ञापयत्या। ६. त-भ२.६-स्तुतिभिरियंद्वेयं; भ१.४.७-स्तुतिभिरिति यद्वा यद्वयं। ७. त-सर्वस्येश्वरस्य।

ᵛउशिक् हवींषि कामयमानः ᵛपावकः सर्वस्य लोकस्य शोधकः ᵛअरतिः गन्ता भूतानामारयिता[1] वा ᵛसुमेधाः सुप्रज्ञः ᵛअमृतः मरणधर्मरहितः ᵛअग्निः ᵛमर्तेषु मनुष्येषु ᵛनि ᵛधायि निहितः। सोऽयमग्निः ᵛधूमम् ᵛइयर्ति प्रेरयति। किंच ᵛअरुषम् आरोचमानं रूपं ᵛभरिभ्रत् धारयन् ᵛशुक्रेण शुक्लेन ᵛशोचिषा रोचिषा ᵛद्यां दिवम् ᵛइनक्षन् व्याप्नुवन् गच्छतीति शेषः ॥

दृशानो रुक्म उर्विया व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौर्जनयत्सुरेताः ॥ ८ ॥

दृशानः। रुक्मः। उर्विया। वि। अद्यौत्। दुःऽमर्षम्। आयुः। श्रिये। रुचानः।
अग्निः। अमृतः। अभवत्। वयःऽभिः। यत्। एनम्। द्यौः। जनयत्। सुऽरेताः ॥८॥

ᵛदृशानः प्रत्यक्षेण दृश्यमानः ᵛरुक्मः रोचमानोऽग्निः ᵛउर्विया उरु अत्यन्तं ᵛव्यद्यौत् विद्योतते। किंच ᵛआयुः गन्ता स सर्वतोऽयमग्निः ᵛश्रिये ᵛविभूत्यै ᵛदुर्मर्षं दुरभिभवं यथा भवति तथा ᵛरुचानः रोचमानो भवति। सोऽयम् ᵛअग्निः ᵛवयोभिः अन्नैर्वनस्पतिभिः ᵛअमृतः मरणरहितः ᵛअभवत्। ᵛयत् यस्मात् कारणात् ᵛएनम् अग्निं ᵛसुरेताः शोभनरेतस्कः ᵛद्यौः प्राण आदित्यो वा ᵛजनयत् जनयति ॥

यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने।
प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥ ९ ॥

यः। ते। अद्य। कृणवत्। भद्रऽशोचे। अपूपम्। देव। घृतऽवन्तम्। अग्ने।
प्र। तम्। नय। प्रऽतरम्। वस्यः। अच्छ। अभि। सुम्नम्। देवऽभक्तम्। यविष्ठ ॥ ९ ॥

हे ᵛभद्रशोचे कल्याणदीप्ते हे ᵛदेव द्योतमान ᵛयविष्ठ युवतम ᵛअग्ने ᵛते तुभ्यं ᵛयः यजमानः ᵛअद्य अस्मिन्नहनि ᵛघृतवन्तं घृतेन युक्तम् ᵛअपूपं पुरोडाशं ᵛकृणवत् करोति ᵛप्रतरं प्रकृष्टतरं यजमानं ᵛवस्यः वसीयः ᵛअच्छ प्रति ᵛप्र ᵛनय अत्यर्थं प्रापय। तथा ᵛदेवभक्तं स्तुतिभिर्हविर्भिश्च देवानां संभक्तारं सेवितारं ᵛतं यजमानं ᵛसुम्नं सुखम् ᵛअभि ᵛप्रति ᵛप्र ᵛनय ॥

आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने।
प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ १० ॥

आ। तम्। भज। सौश्रवसेषु। अग्ने। उक्थेऽउक्थे। आ। भज। शस्यमाने।
प्रियः। सूर्ये। प्रियः। अग्ना। भवाति। उत्। जातेन। भिनदत्। उत्। जनिऽत्वैः ॥१०॥

हे ᵛअग्ने त्वं ᵛसौश्रवसेषु। शोभनानि श्रवांस्यन्नानि हवींषि येषु कर्मसु तानि सौश्रवसानि। तेषु क्रियमाणेषु ᵛतं यजमानं स्तोतारं वा ᵛआ ᵛभज अभीष्टफलप्रदानेन[2] सेवस्व। किंच ᵛउक्थे[3] शस्त्रे ᵛशस्यमाने पठ्यमाने सति ᵛतम् ᵛआ ᵛभज अभीष्टफलप्रदानेनैव सेवस्व। सोऽयं यजमानः स्तोता

---

१. ग-भूतानामीरयिता; त१.२.६-भ१.४.७-भूतानां मारयिता। २. त-भ१.२.४-अभीष्टप्रदानेन। ३. ग-त३-उक्थे उक्थे शस्त्रे शस्त्रे; त१.२.६-भ६-उक्थे उक्थे शस्त्रे; भ२-उक्थे शस्त्रे शस्त्रे।

वा ᵛसूर्ये ᵛप्रियो ᵛभवाति भवतु। तथा ᵛअग्ना अग्नावपि ᵛप्रियो भवाति[१]। किंच सोऽयं ᵛजातेन उत्पन्नेन पुत्रेण ᵛउत् ᵛभिनदत् शत्रून् विदारयतु। तथा ᵛजनित्वैः जनिष्यमाणैश्च पुत्रैः शत्रून् ᵛउत् भिनदत्॥

त्वाम॑ग्ने॒ यज॑माना॒ अनु॒ द्यून्विश्वा॒ वसु॑ दधिरे॒ वार्या॑णि।
त्वया॑ स॒ह द्रवि॑णमि॒च्छमा॑ना व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः॥ ११॥

त्वाम्। अ॒ग्ने॒। यज॑मानाः। अनु॑। द्यून्। विश्वा॑। वसु॑। द॒धि॒रे॒। वार्या॑णि।
त्वया॑। स॒ह। द्रवि॑णम्। इ॒च्छमा॑नाः। व्र॒जम्। गोऽम॑न्तम्। उ॒शिजः॑। वि। व॒व्रुः॥ ११॥

हे ᵛअग्ने ᵛत्वां प्रति ᵛयजमानाः ᵛअनु ᵛद्यून् प्रत्यहं ᵛविश्वा विश्वानि ᵛवार्याणि वरणीयानि ᵛवसु वसूनि धनानि ᵛदधिरे धारयन्ति। किंच ᵛत्वया ᵛसह ᵛद्रविणम् असुरैरपहृतं गोरूपं धनम् ᵛइच्छमानाः कामयमानाः ᵛउशिजः मेधाविनो देवाः ᵛगोमन्तं पशुमन्तं ᵛव्रजं ᵛवि ᵛवव्रुः विवृतद्वारं कृतवन्तः॥

अस्ता॑व्य॒ग्निर्न॒रां सु॒शेवो॑ वैश्वान॒र ऋषि॑भिः॒ सोम॑गोपाः।
अ॒द्वे॒षे द्यावा॑पृथि॒वी हु॑वेम॒ देवा॑ ध॒त्त र॒यिम॒स्मे सु॒वीर॑म्॥ १२॥

अस्ता॑वि। अ॒ग्निः। न॒राम्। सु॒ऽशेवः॑। वै॒श्वा॒न॒रः। ऋषि॑ऽभिः। सोम॑ऽगोपाः।
अ॒द्वे॒षे इति॑। द्यावा॑पृथि॒वी इति॑। हु॒वे॒म॒। दे॒वाः॑। ध॒त्त। र॒यिम्। अ॒स्मे इति॑। सु॒ऽवीर॑म्॥ १२॥

ᵛअद्वेषे[२] ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛहुवेम वयं ह्वयेम। किंच हे ᵛदेवाः यूयं ᵛसुवीरं शोभनपुत्राद्युपेतं ᵛरयिं धनम् ᵛअस्मे अस्मासु ᵛधत्त धारयत[२]॥ ॥ २९॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये सप्तमाष्टकेऽष्टमोऽध्यायः समाप्तः॥

१. त२.३.४.६-भ१.२.४.७-भवति। २. ग-अग्निरस्तावि स्तुतः ऋषिभिरस्माभिः। कीदृशः। नरां मनुष्याणां सुशेवः सुसुखः वैश्वानरः विश्वनरहितः सोमगोपाः सोमेनारक्ष्यमाणः। अद्वेषे द्वेषरहिते द्यावापृथिवी हुवेमाह्वयामः। देवा यूयं सुवीरं शोभनपुत्रयुतं रयिं धनमस्मासु धत्त धारयत दत्तेत्यर्थः; त७-ऋषिभिर्मन्त्रैः अग्निर्दानादिगुणयुक्तो देवः अस्तावि स्तुतः। कीदृशोऽग्निः। नरां नृणां सुशेवः सुतरां सुखरूपः। शेवमिति सुखनाम शेवं शिवमिति तन्नामसु पाठात्। पुनः कीदृशः। वैश्वानरः विश्वेषु सर्वेषु नरेषु वर्तमानः। अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित इति स्मृतः। पुनः के भूतः। सोमगोपाः सोमस्य रक्षकः। अतः अद्वेषे द्वेषरहिते द्यावापृथिवी अग्न्याधारभूते द्यावापृथिव्यौ हुवेम आह्वयेम। तयोरग्न्याधारभूतत्वं तु द्यावापृथिवीभ्यामेतं जातं देवा इत्यस्मिन् ब्राह्मणवाक्ये स्फुटमुक्तं। हे देवा अग्निप्रमुखा यूयं सर्वे सुवीरं शोभनपुत्राद्युपेतं रयिं धनं अस्मे अस्मासु स्तोतृषु धत्तं धारयतं; सु-नरां कर्मनेतॄणां पुंसां सुशेवः सुखसेव्यो वैश्वानरोऽग्निः ऋषिभिः मंत्रैः अस्तावि स्तुतः। कीदृशः। सोमगोपाः सोमस्य गोप्ता रक्षिता अद्वेषे द्यावापृथिवी द्यावापृथिव्यौ हुवेम वयं ह्वयेम। किंच हे देवाः यूयं सुवीरं शोभनपुत्राद्युपेतं रयिं धनमस्मे अस्मासु धत्त धारयत।

ॐ

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
सप्तमेऽष्टममध्यायं व्याख्यायाचार्यवंशजः ।
अष्टमे सायणाचार्य आदिमं व्याकरोत्यथ ॥

'अच्छा म' इति चतुर्थेऽनुवाकेऽष्टादश सूक्तानि। तत्र 'प्र होता' इति दशर्चं चतुर्थं सूक्तम्। 'प्र होता दश' इत्यनुक्रान्तम्। अनुवर्तनाद्भालन्दनस्य वत्सप्रेरार्षम्। अनादेशपरिभाषया त्रैष्टुभमाग्नेयम्[1]। पूर्वसूक्तेन सहोक्तो विनियोगः ॥

**प्र होता जातो महान्नभोविन्नृषद्वा सीददपामुपस्थे।**
**दधिर्यो धायि स ते वयांसि यन्ता वसूनि विधते तनूपाः ॥ १ ॥**

प्र। होता। जातः। महान्। नभःऽवित्। नृऽसद्वा। सीदत्। अपाम्। उपऽस्थे।
दधिः। यः। धायि। सः। ते। वयांसि। यन्ता। वसूनि। विधते। तनूऽपाः ॥ १ ॥

यः ᵛनृषद्वा अग्निः ᵛअपाम्। अन्तरिक्षनामैतत्। अन्तरिक्षस्य ᵛउपस्थे उत्सङ्गे वैद्युतरूपेण निषण्णोऽभूत् स इदानीं ᵛहोता यजमानानां होमनिष्पादकः ᵛजातः प्रादुर्भूतः ᵛमहान् गुणैः पूज्यः ᵛनभोवित् अन्तरिक्षस्य वेत्ता। यतस्तत्रोत्पन्नः अतस्तस्य ज्ञाता। ᵛनृषद्वा नृषु सीदन्। सदेः क्वनिप् कृत्स्वरः। ᵛप्र ᵛसीदत् वेद्यां प्रसीदति। 'अपामुपस्थे महिषा अगृभ्णत' (ऋ. सं. ६. ८. ४) इति हि निगमः। यद्वा। अपाम्। अपसामित्यर्थः। कर्मणामुपस्थ उपस्थाने समीपे वेद्यामुक्तलक्षणः सन्। अथवा। अपामुदकानामुपस्थे मध्ये योऽग्निर्हविर्वोढुमसहमानो निगूढः स देवैः पुनः प्रार्थितः उक्तविधः सन् वेद्यां प्रसीदति। ᵛयः अग्निः ᵛदधिः धाता यज्ञस्य धारकः सन् ᵛधायि वेद्यां निहितोऽभूत् ᵛसः अग्निः हे वत्सप्रे ᵛविधते परिचरते ᵛते तुभ्यं ᵛवयांसि अन्नानि ᵛवसूनि धनानि च ᵛयन्ता नियमिता भवतु। किंच ᵛतनूपाः ते तन्वः पाता च भवत्विति शेषः ॥

**इमं विधन्तो अपां सधस्थे पशुं न नष्टं पदैरनु ग्मन्।**
**गुहा चतन्तमुशिजो नमोभिरिच्छन्तो धीरा भृगवोऽविन्दन् ॥ २ ॥**

इमम्। विधन्तः। अपाम्। सधऽस्थे। पशुम्। न। नष्टम्। पदैः। अनु। ग्मन्।
गुहा। चतन्तम्। उशिजः। नमःऽभिः। इच्छन्तः। धीराः। भृगवः। अविन्दन् ॥ २ ॥

ᵛइमम् अग्निम् ᵛअपाम् उदकानां ᵛसधस्थे[2] सहस्थाने मध्ये निगूढं ᵛविधन्तः[2] परिचरन्त उपचारं वदन्तो वा ऋषयश्च ᵛपदैः पलायनमार्गव्यञ्जकैः ᵛनष्टं चोरादिभिरपहृतं ᵛपशुम् इव ᵛअनु ᵛग्मन् अनुजग्मुः। गमेर्लुङि 'मन्त्रे घस°' इति च्लेर्लुक्। तेषु मध्ये ᵛगुहा गुहायां ᵛचतन्तम्।

---

१. ग४-त४.६.८-म१.२.४.५.६-'माग्नेयं त्वित्युक्तत्वादाग्नेयं। २. त१.२.३.७-मु-मध्ये निगूढं विधंतः; भ-मध्ये विधंतः।

चततिर्गतिकर्मा। अप्सु विलीनमित्यर्थः। ᐯउशिजः कामयमानाः ᐯनमोभिः नमस्कारैः स्तोत्रैर्वा ᐯइच्छन्तः आत्मन इच्छन्तः ᐯधीराः धीमन्तः ᐯभृगवः ᐯअविन्दन् लब्धवन्तः। अग्नेर्हविर्वोढुमसहमानस्य पलाय्याप्सु प्रवेशो देवानामन्वेषणं च 'अग्नेस्त्रयो ज्यायांसः' (तै. सं. २. ६. ६) इत्यत्र स्पष्टमाम्नातम्। अन्वेषणं कुर्वतां मध्ये भृगूणामभिलाभः 'इमं विधन्तो अपां सधस्थे द्वितादधुर्भृगवः' (ऋ. सं. २. ४. २) इत्यत्रोक्तम्॥

इमं त्रितो भूर्यविन्ददिच्छन्वैभूवसो मूर्धन्यघ्न्यायाः।
स शेवृधो जात आ हर्म्येषु नाभिर्युवा भवति रोचनस्य॥ ३॥

इमम्। त्रितः। भूरि। अविन्दत्। इच्छन्। वैभुऽवसः। मूर्धनि। अघ्न्यायाः।
सः। शेऽवृधः। जातः। आ। हर्म्येषु। नाभिः। युवा। भवति। रोचनस्य॥ ३॥

ᐯइमं ᐯभूरि महान्तमग्निं ᐯवैभूवसः विभूवसः[1] पुत्रः ᐯत्रितः ऋषिः ᐯइच्छन् लब्धुमिच्छन् ᐯअघ्न्यायाः। अघ्न्या[2] भूमिः। तस्या[2] भूम्याः[3] ᐯमूर्धनि[3]। भूम्यामित्यर्थः। तत्र ᐯअविन्दत् लब्धवान्[4]। ᐯसः अग्निः ᐯशेवृधः सुखस्य[5] वर्धयिता सन्[5] ᐯहर्म्येषु यजमानगृहेषु ᐯआ सर्वतः ᐯजातः प्रादुर्भूतः सन्[6] ᐯरोचनस्य[7] रोचमानस्य स्वर्गाख्यस्य फलस्योक्तलक्षणस्य यज्ञस्य आदित्यस्य[8] वा ᐯनाभिः बन्धकः ᐯभवति॥

मन्द्रं होतारमुशिजो नमोभिः प्राञ्चं यज्ञं नेतारमध्वराणाम्।
विशामकृण्वन्नरतिं पावकं हव्यवाहं दधतो मानुषेषु॥ ४॥

मन्द्रम्। होतारम्। उशिजः। नमःऽभिः। प्राञ्चम्। यज्ञम्। नेतारम्। अध्वराणाम्।
विशाम्। अकृण्वन्। अरतिम्। पावकम्। हव्यऽवाहम्। दधतः। मानुषेषु॥ ४॥

ᐯउशिजः कामयमाना ऋत्विजः ᐯमन्द्रं मादनीयं ᐯहोतारं होमनिष्पादकं ᐯप्राञ्चं गार्हपत्यादाहवनीयं प्रति प्रागञ्चन्तं[9] ᐯयज्ञं यजनीयम् ᐯअध्वराणां यागानां ᐯनेतारं प्रापयितारम् ᐯअरतिं गन्तारं सर्वदा यागगृहे वर्तमानं ᐯपावकं शोधकं ᐯहव्यवाहं हविषो वोढारं ᐯमानुषेषु मनुष्येषु मध्ये ᐯदधतः दधाना ऋत्विजः ᐯविशां यजमानानामर्थाय। यद्वा। विशां प्रजानामरतिमर्यम्। स्वामिनमित्यर्थः। ᐯनमोभिः नमस्कारैः। स्तुतिभिरित्यर्थः। ᐯअकृण्वन् अकुर्वन्। सुप्रीतं कृतवन्तः॥

प्र भूर्जयन्तं महां विपोधां मूरा अमूरं पुरां दर्माणम्।
नयन्तो गर्भं वनां धियं धुर्हिरिश्मश्रुं नार्वाणं धनर्चम्॥ ५॥

प्र। भूः। जयन्तम्। महाम्। विपःऽधाम्। मूराः। अमूरम्। पुराम्। दर्माणम्।
नयन्तः। गर्भम्। वनाम्। धियम्। धुः। हिरिऽश्मश्रुम्। न। अर्वाणम्। धनऽअर्चम्॥ ५॥

हे स्तोतः[10] त्वं ᐯजयन्तं जेतव्याञ्छत्रूञ्जयन्तं ᐯमहां महान्तं ᐯविपोधां मेधाविनो धर्तारमग्निं ᐯप्र ᐯभूः प्रभव समर्थो भव। स्तोतुमिति शेषः। उद्गीथस्तु भूर्जयन्तमित्येकपदं मत्वा भूरादीँल्लोका-

---

१. त-मु-विभुवसः। २. ग-भर.२.८-आगंत्र्याः; त१.२.३-अंत्या; त७-मु-अर्हतव्यायाः। ३. भ१.४.७-गोमूर्धनि। ४. भ१.६.७-प्राप ततः। ५. भ१.४.७-सुखरूपः। ६. त-भ-स च। ७. ग-त४-युवा तेजसा मिश्रयिता अग्निः रोचनस्य। ८. भ-आदित्यस्य यज्ञस्य। ९. ग-कामंतं। १०. भ-होतः।

अयमृतमिति व्याचकार। न केवलं त्वमेक एव अपि तु ᵛमूराः मूढाः सर्वेऽपि[1] पुरुषाः ᵛअमूरम् अमूढं ᵛपुरां ᵛदर्माणं दारकम्। औणादिको मनिः। प्रत्ययस्वरः। ᵛगर्भम् अरण्योर्गर्भभूतं ᵛवनां वननीयम्। 'वा छन्दसि' (पा. सू. ६. १. १०६-१०७) इति वचनादमि पूर्वाभावः। ᵛहिरिश्मश्रुं ᵛनार्वाणम्। नेत्युपमार्थीयः। श्मश्रुशब्दोऽत्र रोमसामान्यवचनः। हरिनरोमोपेतमर्वाणमरणशीलमश्वमिव। उक्तलक्षणाश्ववद्धरितकेशस्थानीयज्वालोपेतं ᵛधनर्चं प्रीणनस्तुतिम्। शकन्ध्वादित्वात् पररूपत्वम्। ईदृशमग्निं ᵛनयन्तः हविर्भिः प्रापयन्तः[2] ᵛधियं कर्म स्तोत्रं वा ᵛधुः प्रापयन्ति। 'गातिस्था' इति सिचो लुक्॥ ॥ ५ ॥

नि प॒स्त्या॑सु त्रि॒तः स्त॑भू॒यन्परि॑वीतो॒ योनौ॑ सीद॒दन्तः।
अतः॑ सं॒गृभ्या॑ वि॒शां दमू॑ना॒ विध॑र्मणाय॒न्त्रैरी॑यते॒ नॄन्॥ ६॥

नि। प॒स्त्या॑सु। त्रि॒तः। स्त॒भु॒ऽयन्। परि॑ऽवीतः। योनौ॑। सी॒द॒त्। अ॒न्तरिति॑।
अतः॑। स॒म्ऽगृभ्य॑। वि॒शाम्। दमू॑नाः। विऽध॑र्मणा। अ॒य॒न्त्रैः। ई॒य॒ते॒। नॄन्॥ ६॥

ᵛत्रितः त्रिषु स्थानेषु गार्हपत्यादिषु तायमानः ᵛस्तभूयन् यजमानगृहान् स्तम्भयितुमिच्छन्। इच्छार्थे क्यचि तदन्ताच्छतरि रूपम्। ᵛपरिवीतः परितो ज्वालाभिर्व्याप्तः सन् ᵛपस्त्यासु यागगृहेषु ᵛयोनौ ᵛअन्तः स्वीये वेद्यात्मके स्थाने ᵛनि ᵛषीदत् निषीदति। ᵛअतः अस्मात्स्थानात् ᵛविशां प्रजानां संबन्धीनि हवींषि ᵛसंगृभ्य[3] संगृह्य इन्द्रादीनुद्दिश्य प्रत्तानि[4] चरुपुरोडाशादीनि स्वीकृत्य ᵛदमूनाः देवेभ्यो दानमना यजमानाय वाभिमतप्रदानमनाः[5] ᵛविधर्मणा तासां विविधेन कर्मणा[6] निमित्तेन दानमना देवेभ्यो दानपक्षे विविधगमनरूपेण कर्मणा ᵛयन्त्रैः शत्रूणां नियमनैः सह ᵛनॄन्[7] देवान् ᵛईयते गच्छति॥

अ॒स्याजरा॑सो द॒माम॒रित्रा॑ अ॒र्चद्धू॑मासो अ॒ग्नयः॑ पाव॒काः।
श्वि॒ती॒चयः॑ श्वा॒त्रासो॑ भुर॒ण्यवो॑ वन॒र्षदो॑ वा॒यवो॒ न सोमाः॑॥ ७॥

अ॒स्य। अ॒जरा॑सः। द॒माम्। अ॒रित्राः॑। अ॒र्चत्ऽधू॑मासः। अ॒ग्नयः॑। पा॒व॒काः।
श्वि॒ती॒चयः॑। श्वा॒त्रासः॑। भु॒र॒ण्यवः॑। व॒न॒ऽसदः॑। वा॒यवः॑। न। सोमाः॑॥ ७॥

अत्र बहुत्वेन स्तूयते। ᵛअस्य[8] यजमानस्य संबन्धिनः ᵛअजरासः जरारहिताः ᵛदमां दमनीयानां रक्षःप्रभृतीनाम्। दमेः क्विपि 'सावेकाचः' इति विभक्तेरुदात्तत्वम्। तेषाम् ᵛअरित्राः तारकाः ᵛअर्चद्धूमासः अर्चन्तः अर्चनीया धूमा धूमोपलक्षिता ज्वाला वा येषां ते तथोक्ताः ᵛपावकाः शोधकाः ᵛश्वितीचयः श्वेतिमानमञ्चन्तः। श्वितिः श्वेतम्। औणादिक इः। ᵛश्वात्रासः। क्षिप्रनामैतत्। क्षिप्रधर्मकाः ᵛभुरण्यवः भरणशीलाः ᵛवनर्षदः वनेषु सीदन्तः। संहितायां छान्दसं षत्वम्। ᵛवायवो ᵛन ᵛसोमाः गन्तारः सोमा इव। हविर्दातुर्यजमानस्य शीघ्रा भवन्तीति॥

---

१. ग-भ-पूर्वेपि। २. भ१.४.७-पुष्टिं प्रापयंतः। ३. ग-भ-'संगृभ्य' नास्ति। ४. भ२.५.६.८-प्रत्ता प्रत्तानि। ५. त६-वाभिमतफल°। ६. भ२-कर्मणा अकारोधिवाचकः तेनायमर्थः आवां शत्रूणां यंत्राः नियमनानि तैः सह शत्रुनिग्रहं कुर्वन् इत्यर्थः। ७. ग-भ२.६.८-मु-नृन् नेतृन्; त-नेतृन्; भ१-नृणां नेतृन्। ८. भ-यस्य।

प्र जि॒ह्वया॑ भरते॒ वेपो॑ अ॒ग्निः प्र व॒युना॑नि॒ चेत॑सा पृथि॒व्याः ।
तमा॒यवः॑ शु॒चय॑न्तं पाव॒कं म॒न्द्रं होता॑रं दधिरे॒ यजि॑ष्ठम् ॥ ८ ॥

प्र । जि॒ह्वया॑ । भ॒र॒ते॒ । वेपः॑ । अ॒ग्निः । प्र । व॒युना॑नि । चेत॑सा । पृ॒थि॒व्याः ।
तम् । आ॒यवः॑ । शु॒चय॑न्तम् । पा॒व॒कम् । म॒न्द्रम् । होता॑रम् । द॒धि॒रे॒ । यजि॑ष्ठम् ॥ ८ ॥

यः ᵛअग्निः ᵛजिह्वया ज्वालया ᵛवेपः । कर्मनामैतत् । कर्म ᵛप्र ᵛभरते तथा योऽग्निः ᵛवयुनानि प्रज्ञानानि स्तोत्राणि ᵛपृथिव्याः रक्षणाय ᵛचेतसा अनुग्रहयुक्तेन मनसा ᵛप्र भरते ᵛतम् अग्निम् ᵛआयवः गन्तारो मनुष्याः ᵛशुचयन्तं दीप्यमानं ᵛपावकं शोधकं ᵛमन्द्रं स्तुत्यं[1] ᵛहोतारम् आह्वातारं होमनिष्पादकं वा ᵛयजिष्ठम् अतिशयेन यष्टव्यं[2] यष्टृतमं वा[2] ᵛदधिरे धारयन्ति ॥

द्यावा॒ यम॒ग्निं पृ॑थि॒वी जनि॑ष्टा॒मापस्त्वष्टा॒ भृग॑वो॒ यं सहो॑भिः ।
ई॒ळेन्यं॑ प्रथ॒मं मा॑त॒रिश्वा॑ दे॒वास्त॑तक्षु॒र्मन॑वे॒ यज॑त्रम् ॥ ९ ॥

द्यावा॑ । यम् । अ॒ग्निम् । पृ॒थि॒वी इति॑ । जनि॑ष्टाम् । आपः॑ । त्वष्टा॑ । भृग॑वः । यम् । सहः॑ऽभिः ।
ई॒ळेन्य॑म् । प्र॒थ॒मम् । मा॒त॒रिश्वा॑ । दे॒वाः । त॒त॒क्षुः । मन॑वे । यज॑त्रम् ॥ ९ ॥

ᵛयमग्निं ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛजनिष्टाम् अजनिषाताम् । जनेर्लुङि व्यत्ययेन परस्मैपदम् । ᵛआपः च ᵛयम् उदपादयन् वैद्युतरूपेण ᵛत्वष्टा च यमजनयत् ᵛभृगवः च यं ᵛसहोभिः बलैः स्तोत्रादिसाधनैर्लब्धवन्तः । ' भृगवोऽविन्दन् ' ( ऋ. सं. १०. ४६. २ ) इति ह्युक्तम् । किंच ᵛईळेन्यं स्तुत्यं यं ᵛप्रथमं ᵛमातरिश्वा वायुरुदपादयत् अन्ये ᵛदेवाः च ᵛमनवे राज्ञे मनोरर्थाय ᵛयजत्रं यष्टव्यं यमग्निं ᵛततक्षुः निष्पादितवन्तः ॥

यं त्वा॑ दे॒वा द॑धि॒रे ह॑व्य॒वाहं॑ पुरु॒स्पृहो॒ मानु॑षासो॒ यज॑त्रम् ।
स याम॑न्नग्ने स्तुव॒ते वयो॑ धाः॒ प्र दे॑व॒यन् य॒शसः॒ सं हि पू॒र्वीः ॥ १० ॥

यम् । त्वा॒ । दे॒वाः । द॒धि॒रे । ह॒व्य॒ऽवाह॑म् । पु॒रु॒ऽस्पृहः॑ । मानु॑षासः । यज॑त्रम् ।
सः । याम॑न् । अ॒ग्ने॒ । स्तु॒व॒ते । वयः॑ । धाः॒ । प्र । दे॒व॒ऽयन् । य॒शसः॑ । सम् । हि । पू॒र्वीः ॥ १० ॥

हे अग्ने ᵛहव्यवाहं ᵛयं ᵛत्वा त्वां ᵛदेवा ᵛदधिरे धारितवन्तः ᵛमानुषासः मनुष्याश्च ᵛपुरुस्पृहः बहुकामान् स्पृहयन्तः ᵛयजत्रं यष्टव्यं ᵛदधिरे धारितवन्तः हे ᵛअग्ने ᵛसः त्वं ᵛयामन् यामनि यज्ञे ᵛस्तुवते मह्यं ᵛवयः अन्नं ᵛधाः देहि । हे अग्ने त्वत्तः ᵛदेवयन् देवकामो यजमानः ᵛपूर्वीः बह्वीः बहूनि ᵛयशसः यशांसि । ᵛसं ᵛहि इत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः । संप्राप्नोति खलु ॥ ॥ २ ॥

' जगृभ्मा ते ' इत्यष्टर्चं पञ्चमं सूक्तमाङ्गिरसस्य सप्तगुनाम्न आर्षं त्रैष्टुभम् । विकुण्ठा नाम असुरस्त्री । सा चेन्द्रसदृशं पुत्रं कामयमाना कृच्छ्रचान्द्रायणादिकं तपस्तेपे । मत्सदृशोऽन्यः कश्चिन्मा जनिष्टेति बुद्ध्येन्द्र एव तस्याः पुत्रोऽजायत[3] । तादृशो वैकुण्ठ इन्द्रो देवता । तथा चानुक्रान्तं— ' जगृभ्माष्टौ सप्तगुर्वैकुण्ठमिन्द्रं तुष्टाव ' इत्यादि । गतो विनियोगः ॥

---

१. भ१.४.७–मादनीयं । २. त–यष्टव्यं यजमाना धातुमिवा । ३. त–पुत्रो जातः ।

जगृभ्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ १ ॥

जगृभ्म । ते । दक्षिणम् । इन्द्र । हस्तम् । वसुऽयवः । वसुऽपते । वसूनाम् ।
विद्म । हि । त्वा । गोऽपतिम् । शूर । गोनाम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ १ ॥

vवसूनां vवसुपते बहूनां धनानां[1] स्वामिन् हे vइन्द्र vते तव vदक्षिणं vहस्तं vवसूयवः वसुकामा वयं vजगृभ्म गृह्णीमः । यथा बहुप्रदस्यार्थिनो[2] मह्यमदत्वा न गन्तव्यमिति हस्तं गृह्णन्ति तद्वत् । हे vशूर विक्रान्तेन्द्र vत्वा त्वां vगोनां vगोपतिम् । अत्र वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते । बह्वीनां गवां गोपतिं vविद्म जानीमः । अतः vअस्मभ्यं vचित्रं चायनीयं vवृषणं वर्षकं vरयिं धनं vदाः देहि ॥

स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणाम् ।
चर्कृत्यं शंस्यं भूरिवारमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ २ ॥

सुऽआयुधम् । सुऽअवसम् । सुऽनीथम् । चतुःऽसमुद्रम् । धरुणम् । रयीणाम् ।
चर्कृत्यम् । शंस्यम् । भूरिऽवारम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ २ ॥

vस्वायुधं शोभनवज्राद्यायुधं vस्ववसं शोभनरक्षणं सुगमनं वा vसुनीथं सुनयनं vचतुःसमुद्रं चतुरः[3] समुद्रान्[3] यो यशसा व्याप्नोति तं vधरुणं धारकम् । केषाम्[4] । vरयीणां धनानाम् । vचर्कृत्यं पुनःपुनः कर्तव्यं vशंस्यं स्तुत्यं vभूरिवारं भूरीणां दुःखानां वारकं बहुभिर्वरणीयं वा त्वां विशेषेति शेषः । तादृशोऽस्मभ्यमित्यादि[5] पूर्ववत् । यद्वा । हे इन्द्र उक्तगुणविशिष्टं पुत्राख्यं रयिं दाः देहि ॥

सुब्रह्माणं देववन्तं बृहन्तमुरुं गभीरं पृथुबुध्नमिन्द्र ।
श्रुतऋषिमुग्रमभिमातिषाहमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ३ ॥

सुऽब्रह्माणम् । देवऽवन्तम् । बृहन्तम् । उरुम् । गभीरम् । पृथुऽबुध्नम् । इन्द्र ।
श्रुतऽऋषिम् । उग्रम् । अभिमातिऽसहम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ३ ॥

हे vइन्द्र त्वं vसुब्रह्माणम् । ब्रह्म परिवृढं स्तुतिलक्षणं कर्म । शोभनस्तुतिकमित्यर्थः । vदेववन्तं vबृहन्तं महान्तम् vउरुं विस्तीर्णं vगभीरम् असुरादिभिरगम्यं vपृथुबुध्नं विस्तृतमूलं[6] vश्रुतऋषिं श्रुता ऋषयो येन तादृशमृषीणां स्थापयितारं प्रथितज्ञानं वा vउग्रम् उद्गूर्णबलमत एव vअभिमातिषाहम् अभिमातीनां शत्रूणामभिभवितारं हन्तारम् vअस्मभ्यं vचित्रं पूज्यं vवृषणं वर्षकं पुत्रं vरयिं धनं च vदाः देहि[7] । अथवा विशेषणविशेष्यभावः । उक्तलक्षणं पुत्राख्यं रयिं दाः ॥

---

१. त२.८–धनानां पते । २. त१.२.३–बहुवेदयमर्थितो; त७–बहुवदान्यस्यार्थिनो; भ१.२.४.८–बहुपदमर्थिनो; भ६.७–बहुप्रदमर्थिनो । ३. ग-भ–चतुःसमुद्रान् । ४. त-मु–तेषां । ५. ग-त४–तादृशस्त्वमस्मभ्य°; भ–तादृशायास्मभ्य° । ६. त-मु–विततमूलं । ७. ग-त१.२.३-भ–'देहि' नास्ति ।

सनद्वाजं विप्रवीरं तरुत्रं धनस्पृतं शूशुवांसं सुदक्षम् ।
दस्युहनं पूर्भिदमिन्द्र सत्यमस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ४ ॥

सनत्ऽवाजम् । विप्रऽवीरम् । तरुत्रम् । धनऽस्पृतम् । शूशुऽवांसम् । सुऽदक्षम् ।
दस्युऽहनम् । पूःऽभिदम् । इन्द्र । सत्यम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥४॥

सनद्वाजं[1] लब्धान्नं विप्रवीरं मेधाविनं पुत्रं तरुत्रं तारकं धनस्पृतं धनानां पूरकं स्प्रष्टारं वा । स्पृणोतेः स्पृशतेर्वोत्तरपदम् । शूशुवांसं वर्धमानं सुदक्षं शोभनबलं दस्युहनं शत्रूणां हन्तारं पूर्भिदं शत्रूणां पुरां भेत्तारं सत्यं सत्यकर्माणम् । शिष्टमुक्तम् ॥

अश्वावन्तं रथिनं वीरवन्तं सहस्रिणं शतिनं वाजमिन्द्र ।
भद्रव्रातं विप्रवीरं स्वर्षामस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ५ ॥

अश्वऽवन्तम् । रथिनम् । वीरऽवन्तम् । सहस्रिणम् । शतिनम् । वाजम् । इन्द्र ।
भद्रऽव्रातम् । विप्रऽवीरम् । स्वःऽसाम् । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ५ ॥

अश्वावन्तं बहुभिरश्वैरुपेतं रथिनं रथवन्तं वीरवन्तं वीरैः पुरुषैरुपेतं सहस्रिणं सहस्रवन्तं शतिनं[2] शतवन्तम्[2] । असंख्यातगवादियुक्तमित्यर्थः । भद्रव्रातं भद्रगणं कल्याणसेवकैः परिवृतं विप्रवीरं विप्रैर्वीरैश्चोपेतं स्वर्षां सर्वस्य संभक्तारं वाजं[3] बलवन्तं हे इन्द्र[3] । शिष्टमुक्तम् ॥ ॥३॥

प्र सप्तगुमृतधीतिं सुमेधां बृहस्पतिं मतिरच्छा जिगाति ।
य आङ्गिरसो नमसोपसद्योऽस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ६ ॥

प्र । सप्तऽगुम् । ऋतऽधीतिम् । सुऽमेधाम् । बृहस्पतिम् । मतिः । अच्छ । जिगाति ।
यः । आङ्गिरसः । नमसा । उपऽसद्यः । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ६ ॥

सप्तगुं मां मतिः स्तुतिर्देवविषया अच्छा जिगाति अभिगच्छति । कीदृशं सप्तगुम् । ऋतधीतिं सत्यकर्माणं सुमेधां शोभनप्रज्ञं बृहस्पतिं बृहतो मन्त्रस्य स्वामिनम् । यः सप्तगुः आङ्गिरसः अङ्गिरोगोत्रोत्पन्नोऽहं नमसा नमस्कारेण देवान् उपसद्यः उपगतः[4] । यद्वा । नमसान्नेनोपसद्य उपसदनीयः । देवैरनुग्राह्य इत्यर्थः । तादृशाय अस्मभ्यं मह्यं चित्रं वृषणं रयिं दाः ॥

वनीवानो मम दूतास इन्द्रं स्तोमाश्चरन्ति सुमतीरियानाः ।
हृदिस्पृशो मनसा वच्यमाना अस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ७ ॥

वनीवानः । मम । दूतासः । इन्द्रम् । स्तोमाः । चरन्ति । सुऽमतीः । इयानाः ।
हृदिऽस्पृशः । मनसा । वच्यमानाः । अस्मभ्यम् । चित्रम् । वृषणम् । रयिम् । दाः ॥ ७ ॥

---

१. ग-त-भ-मु–हे इंद्र सनद्वाजं । २. भ–' शतिनं शतवन्तं ' नास्ति । ३. ग४-त३-मु–' वाजं... हे इन्द्र ' नास्ति । ४. त१.२.३.७–उपगंतव्यः ।

॰वनीवानः वननवन्तः[१]। 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप्। ॰मम सप्तगोः ॰दूतासः दूतसदृशा दूता यथा भर्तुरभिमतार्थं प्रापणीयं प्रापयन्ति तद्वत्स्तुत्यान् गुणान्[२] प्रापयन्तः ॰स्तोमाः स्तवाः ॰सुमतीः तस्येन्द्रस्यास्मद्विषया अनुकूला बुद्धीः ॰इयानाः याचमानाः ॰इन्द्रं ॰चरन्ति प्राप्नुवन्ति। पुनश्च त एव विशेष्यन्ते। ॰हृदिस्पृशः हृदये स्पृशन्तः। स्तुत्यस्य प्रियभूता इत्यर्थः। 'हृद्द्युभ्यां ङेरुपसंख्यानम्' इति सप्तम्या अलुक्। ॰मनसा सत्त्वोद्रिक्तेन ॰वच्यमानाः उच्यमानाः। अस्मभ्यमित्यादि गतम्॥

**यत्त्वा यामि॑ द॒द्धि तन्न॑ इन्द्र बृ॒हन्तं॒ क्षय॒मस॑मं॒ जना॑नाम्।**
**अ॒भि तद्द्यावा॑पृथि॒वी गृ॑णीताम॒स्मभ्यं॑ चि॒त्रं वृष॑णं र॒यिं दाः॥ ८॥**

यत्। त्वा। यामि॑। द॒द्धि। तत्। नः॒। इ॒न्द्र॒। बृ॒हन्त॑म्। क्षय॑म्। अस॑मम्। जना॑नाम्।
अ॒भि। तत्। द्यावा॑पृथि॒वी इति॑। गृ॒णी॒ताम्। अ॒स्मभ्य॑म्। चि॒त्रम्। वृष॑णम्। र॒यिम्। दा॒ः॥ ८॥

हे ॰इन्द्र ॰त्वा त्वां ॰यत् वक्ष्यमाणं ॰यामि याचामि। वर्णलोपश्छान्दसः। याच्यमानं ॰तत् ॰दद्धि देहि। 'दद दाने'। लोटि व्यत्ययेन परस्मैपदम्। 'बहुलं छन्दसि' इति शपो लुक्। तदिति सामान्येन निर्दिष्टं विशेषयति। ॰बृहन्तं महान्तं ॰क्षयं निवासं ॰जनानाम् अन्येषाम् ॰असमम् असाधारणं देहि। त्वया दातव्यं ॰द्यावापृथिवी ॰अभि ॰गृणीताम्। अस्मभ्यमित्यादि[३] गतम्[३]॥ ॥४॥

'अहं भुवम्' इत्येकादशर्चं षष्ठं सूक्तम्। पूर्वसूक्तेन सप्तगुना स्तुतो हृष्टः सन्निदमादिसूक्तत्रयेण स्वयमात्मानमस्तौत्। तस्माद्वैकुण्ठस्येन्द्रस्य वाक्यत्वात् 'यस्य वाक्यं स ऋषिः' इति परिभाषया इन्द्र ऋषिः। वैकुण्ठस्येन्द्रस्य[४] च स्तूयमानत्वात् 'या तेनोच्यते सा[५] देवता[५]' इति परिभाषया इन्द्र एव देवता। दशम्येकादश्यौ सप्तम्यस्त्रिष्टुभः। शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः। तथा चानुक्रान्तं—'स[६] सप्तगुस्तुतिसंहृष्ट आत्मानमुत्तरैस्त्रिभिरतुष्टावाहं भुवमेकादशान्त्ये त्रिष्टुभौ सप्तमी च' इति। अतिरात्रे द्वितीयपर्याये होतुः शस्त्र एतत्सूक्तम्। सूत्रितं च—'अहं भुवमपाय्यस्यान्धसो मदायेति याज्या' (आश्व. श्रौ. ६. ४) इति। समूळ्हस्य दशरात्रस्य तृतीये छन्दोमे निष्केवल्येऽप्येतत्सूक्तम्। 'अहं भुवं तव त्यदिन्द्रियमिति निष्केवल्यम्' (आश्व. श्रौ. ८.७) इति हि सूत्रितम्॥

**अ॒हं भु॑वं॒ वसु॑नः पू॒र्व्यस्पति॑र॒हं धना॑नि॒ सं ज॑यामि॒ शश्व॑तः।**
**मां ह॑वन्ते पि॒तरं॒ न ज॒न्तवो॒ऽहं दा॒शुषे॒ वि भ॑जामि॒ भोज॑नम्॥ १॥**

अ॒हम्। भु॒व॒म्। वसु॑नः। पू॒र्व्यः। पति॑ः। अ॒हम्। धना॑नि। सम्। ज॒या॒मि॒। शश्व॑तः।
माम्। ह॒व॒न्ते॒। पि॒तर॑म्। न। ज॒न्तव॑ः। अ॒हम्। दा॒शुषे॑। वि। भ॒जा॒मि॒। भोज॑नम्॥ १॥

॰अहम् इन्द्रः ॰वसुनः धनस्य ॰पूर्व्यः मुख्योऽसाधारणः ॰पतिः स्वामी ॰भुवम् अभवम्। भवतेर्लङि 'बहुलं छन्दसि' इति शपो लुक्। 'अचि श्नुधातुभ्रुवाम्' इत्यादिना उवङादेशः। अडभावश्छान्दसः। तथा ॰अहं ॰शश्वतः। बहुनामैतत्। बहोः शत्रोः संबन्धीनि ॰धनानि। ॰सम्

१. ग-भ४–वननवंतः वननं वनिः; त१.२.३.५–वननवंतः वननं वनिः; भ१.२.८–वननवंतः वननं विः; भ७–वननवंतः वनतेश्छंदसि क्वनिब्वनिपाविति। २. त-मु–गुणेन। ३. ग-त१.२.३.६.७.८-भ-मु–अभिमन्येतां; त४–अनुमन्येतां। ४. त-मु–वैकुंठाख्यस्येंद्रस्य। ५. ग-त-भ–'सा देवता' नास्ति। ६. ग-त-मु–'स' नास्ति।

इत्येकीभावे। मह्य ᵛजयामि। किंच ᵛमाम् एव ᵛजन्तवः प्राणिनो यजमानाः ᵛह्वन्ते आह्वयन्ति। ᵛपितरं ᵛन पितरमिव पुत्राः। ᵛअहं ᵛदाशुषे हविषो दात्रे यजमानाय ᵛभोजनम् अन्नं ᵛवि ᵛभजामि ददामि ॥

अहमिन्द्रो रोधो वक्षो अथर्वणस्त्रिताय गा अंजनयमहेरधि।
अहं दस्युभ्यः परि नृम्णमा ददे गोत्रा शिक्षन् दधीचे मातरिश्वने ॥ २ ॥

अहम्। इन्द्रः। रोधः। वक्षः। अथर्वणः। त्रिताय। गाः। अजनयम्। अहेः। अधि।
अहम्। दस्युऽभ्यः। परि। नृम्णम्। आ। ददे। गोत्रा। शिक्षन्। दधीचे। मातरिश्वने ॥२॥

आद्यपादस्येतिहासमाहुः। आथर्वणं दध्यञ्चं मधुविद्यावन्तमिन्द्र आगत्य मधुविद्यां कस्यचिन्न ब्रूया इति नियमितवान्। यदि ब्रूयास्ते शिरो हरामीत्युक्तवान्। स चाथर्वणोऽश्विभ्यामुवाच। 'इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच' (श. ब्रा. १४.२.५.१६) 'अश्वस्य शीर्ष्णा प्र यदीमुवाच' (ऋ. सं. १. ११६. १२) इति हि श्रुतिः। स चेन्द्र आगत्य दधीचः शिरोऽहरदिति तदत्रोच्यते। ᵛइन्द्रः ᵛअहम् ᵛअथर्वणः अथर्वणः पुत्रस्य दधीचः ᵛवक्षः। तदुपलक्षितं शिर इत्यर्थः। तस्य ᵛरोधः रोधको हर्तास्मि। तथा ᵛत्रिताय एतन्नामकायाप्त्याय कूपपतितायोद्धरणार्थम्[1] ᵛअहेः मेघस्य ᵛअधि उपरि ᵛगाः उदकानि ᵛअजनयम् उदपादयम्। त्रितस्य कूपपतितस्येन्द्रं प्रत्युद्धरणप्रार्थनं 'सं मा तपन्त्यभितः' (ऋ. सं. १०.३३.२) इत्यत्र प्रतिपादितम्। तथा ᵛअहं ᵛदस्युभ्यः उपक्षपयितृभ्यः[2] शत्रुभ्यः सकाशात् ᵛनृम्णं धनम् ᵛआ ᵛददे आदत्तवानस्मि। किं कुर्वन्। ᵛगोत्रा गवामुदकानां रक्षकान् मेघान् ᵛशिक्षन् विनयन्। किमर्थम्। ᵛमातरिश्वने मातरिश्वनः पुत्राय ᵛदधीचे एतन्नामकायर्षये वर्षकामाय प्रवर्षयितुमिच्छन् ॥

मह्यं त्वष्टा वज्रमतक्षदायसं मयि देवासोऽवृजन्नपि क्रतुम्।
ममानीकं सूर्यस्येव दुष्टरं मामार्यन्ति कृतेन कर्त्वेन च ॥ ३ ॥

मह्यम्। त्वष्टा। वज्रम्। अतक्षत्। आयसम्। मयि। देवासः। अवृजन्। अपि। क्रतुम्।
मम। अनीकम्। सूर्यस्यऽइव। दुस्तरम्। माम्। आर्यन्ति। कृतेन। कर्त्वेन। च ॥ ३ ॥

ᵛमह्यं मदर्थं ᵛत्वष्टा देवः ᵛआयसम् अयोमयं ᵛवज्रम् आयुधम् ᵛअतक्षत्[3] संपादितवान्[4]। देवाः ᵛमयि विषये ᵛक्रतुं स्वविरोधिहननरूपं कर्म ᵛअपि ᵛअवृजन् समपादयन्। ᵛमम ᵛअनीकं सेनासमूहं सूर्यानीकमिव ᵛदुष्टरम् अन्येन तरीतुमशक्यम्। ᵛमाम् एव ᵛकृतेन कर्मणा ᵛकर्त्वेन इतः परं कर्तव्येन वृत्रवधादिरूपेण[4] ᵛआर्यन्ति[5] गच्छन्ति। आर्यतिर्गतिकर्मा। यद्वा। अर्यमीश्वरं कुर्वन्ति ॥

१. ग-त-मु-कूपपतिताय तदुद्धरणार्थं। २. ग-भ-उपक्षयितृभ्यः; त-उपलक्षयितृभ्यः। ३. ग-त१. २.४.६.७.८-भ-अतक्षत् साधु। ४. त२.३.५-संपादितवान्। देवा मयि विषये क्रतुं यज्ञं कुर्वंति। मम अनीकं अश्वादि सूर्यस्य रवेरिव दुस्तरं दुरवगाहं वृत्रादिवधादिरूपेण; त७-संपादितवान्। अवृजन् कुर्वंति। मम अनीकं अश्वादि सूर्यस्येव रवेरिव दुष्टरं दुरवगाहं वृत्रादिवधादिरूपेण; भ७-संपादितवान्। उतापि च देवासो देवाः मयि विषये क्रतुं यज्ञं अवृजन् कुर्वंति। मम अनीकं अश्वादि च सूर्यस्येव रवेरिव दुष्टरं दुरवगाहं वृत्रादिशत्रूणां दारयित्रेति निरुक्तं। ईदृशं मां बलिनं वृत्रादिवधादिरूपेण; ग-त४-वृत्रवधाय मयि देवासो देवाः क्रतुं स्वविरोधिहननरूपं कर्मापिवृजन् मम तेजसानीकं सेनासमूहं वा सूर्यस्येव सूर्यानीकमिव दुष्टरमन्येन तरीतुमशक्यं मामेव कृतेन कर्मणा परं कर्तव्येन वृत्रवधादिरूपेण ५. त-भ-कर्मणा आर्यंति।

अहमेतं गव्ययमश्व्यं पशुं पुरीषिणं सायकेना हिरण्ययम् ।
पुरू सहस्रा नि शिशामि दाशुषे यन्मा सोमास उक्थिनो अमन्दिषुः ॥४॥

अहम् । एतम् । गव्ययम् । अश्व्यम् । पशुम् । पुरीषिणम् । सायकेन । हिरण्ययम् ।
पुरु । सहस्रा । नि । शिशामि । दाशुषे । यत् । मा । सोमासः । उक्थिनः । अमन्दिषुः ॥४॥

vअहमेतं vगव्ययं गोमयम् vअश्व्यम् अश्वमयं[1] vहिरण्ययं[2] हिरण्यालंकारोपेतं vपुरीषिणम् । पुरीषमुदकं क्षीररूपम् । तद्वन्तं vपशुं शत्रुसंबन्धिनम् । जात्येकवचनम् । पशुसंघमित्यर्थः । तं vसायकेन आयुधेन अजयम् । तथा vपुरु पुरूणि vसहस्रा सहस्राणि शस्त्राणि vनि vशिशामि संस्करोमि vदाशुषे हविर्दत्तवते[3] यजमानाय । वैरिविनाशायेत्यर्थः । कदेति उच्यते । vयत् यदा vमा मां vसोमासः सोमाः vउक्थिनः शस्त्रोपेताः सन्तः अथवा[4] सोमेन शस्त्रैश्चोपेता यजमानाः vअमन्दिषुः तर्पयन्ति ॥

अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽव तस्थे कदा चन ।
सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथन ॥ ५ ॥

अहम् । इन्द्रः । न । परा । जिग्ये । इत् । धनम् । न । मृत्यवे । अव । तस्थे । कदा । चन ।
सोमम् । इत् । मा । सुन्वन्तः । याचत । वसु । न । मे । पूरवः । सख्ये । रिषाथन ॥ ५ ॥

vइन्द्रः सर्वस्य धनस्य स्वामी vअहं vधनम् आत्मीयं vन vपरा vजिग्य vइत् नैव पराभावयामि । मदीयं धनं न पराभूयत इत्यर्थः । किंचाहं vमृत्यवे सर्वेषां मारकाय vकदा vचन कदापि vन vअव vतस्थे नावस्थितो भवामि । इन्द्रभक्ता न मृत्युभाजो भवन्ति किल किमु वक्तव्यमिन्द्रस्य मृत्युविरहे । यस्मादेवं तस्मात् vसोमं vसुन्वन्तः हे यजमानाः vवसु युष्मदपेक्षितं धनं vमा vइत् मामेव vयाचत । हे vपूरवः मनुष्याः vमे vसख्ये vन vरिषाथन मा रिष्टा भवथ । मत्सख्यं मा विनाशयत ॥    ॥ ५ ॥

अहमेताञ्छाश्वसतो द्वाद्वेन्द्रं ये वज्रं युधयेऽकृण्वत ।
आह्वयमानाँ अव हन्मनाहनं दृळ्हा वदन्ननमस्युर्नमस्विनः ॥ ६ ॥

अहम् । एतान् । शाश्वसतः । द्वाऽद्वा । इन्द्रम् । ये । वज्रम् । युधये । अकृण्वत ।
आऽह्वयमानान् । अव । हन्मना । अहनम् । दृळ्हा । वदन् । अनमस्युः । नमस्विनः ॥ ६ ॥

vअहम् इन्द्रः vएतान् वक्ष्यमाणान् vशाश्वसतः भृशं प्राणतः[5] प्रवृद्धबलान् शत्रून् vद्वाद्वा द्वौ द्वौ । युग्मभूतानित्यर्थः[6] । तानहनमिति[7] संबन्धः । एतानित्युक्तं कानित्याह । vये शत्रवः vइन्द्रं शत्रूणां दारकम् । इन्द्रः शत्रूणां दारयिता इति निरुक्तम् ( निरु. १०. ८ ) । ईदृशं vवज्रं बलिनं यद्वा वज्रवन्तं[8] vयुधये युद्धाय vअकृण्वत अकुर्वत तानेतानित्यर्थः । पुनः कीदृशान् । vआह्वयमानान् एहि

---

१. त–एतद्गोलक्षणकर्मायमक्षमश्वमयं । २. त६.८-भ४.५.६–हिरण्ययं हिरण्मयं । ३. त–दत्तवते । ४. त–मह्यमथवा । ५. त-भ१.४.६.७–प्रीणतः । ६. त–युग्मभूतावित्यर्थः । ७. त–तानेतानिति । ८. ग–वज्रवंतं मां ।

युध्यस्वेत्याह्वयतः शत्रून् ᵛनमस्विनः नमनवतो बलान्नामयित्वा ᵛअनमस्युः अप्रणतिशीलः सन् ᵛदृळ्हा दृढानि भयजनकानि स्थिराणि वचनानि ᵛवदन् ᵛअहनं हतवानस्मि ॥

अभी३दमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति ।
खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥ ७ ॥

अभि । इदम् । एकम् । एकः । अस्मि । निष्षाट् । अभि । द्वा । किम् । ऊँ इति । त्रयः । करन्ति ।
खले । न । पर्षान् । प्रति । हन्मि । भूरि । किम् । मा । निन्दन्ति । शत्रवः । अनिन्द्राः ॥७॥

अहम् ᵛइदम् इदानीम् ᵛएकं शत्रुम् ᵛएकः असहाय एव सन् ᵛअभि ᵛअस्मि अभिभवामि । किंच ᵛनिष्षाट्[1] सपत्नान्निःषहमाणोऽहं ᵛद्वा द्वावप्यसह्यौ शत्रू ᵛअभि अस्मि । ᵛकिमु किं वा ᵛत्रयः शत्रवः ᵛकरन्ति कुर्वन्ति । तानप्यभिभवामीत्यर्थः । किं बहुना । ᵛखले ᵛन खलनिष्पादने यथा जीर्णव्रीह्यादिरनप्रयाननायासेन प्रतिहन्ति कर्षकः तद्वत् ᵛपर्षान् निष्ठुरान् ᵛभूरि बहून् शत्रून् ᵛप्रति ᵛहन्मि । ᵛमा माम् ᵛअनिन्द्राः इन्द्ररहिता इन्द्रमजानन्त इन्द्रविरोधिनः ᵛशत्रवः मामिन्द्रं ᵛकिं ᵛनिन्दन्ति । निन्दितुमशक्ता इत्यर्थः । अत्र 'अभिभवामि' ( निरु. ३. १० ) इत्यादि निरुक्तं द्रष्टव्यम् ॥

अहं गुङ्गुभ्यो अतिथिग्वमिष्करमिषं न वृत्रतुरं विक्षु धारयम् ।
यत्पर्णयघ्न उत वा करञ्जहे प्राहं महे वृत्रहत्ये अशुश्रवि ॥ ८ ॥

अहम् । गुङ्गुऽभ्यः । अतिथिऽग्वम् । इष्करम् । इषम् । न । वृत्रऽतुरम् । विक्षु । धारयम् ।
यत् । पर्णयऽघ्ने । उत । वा । करञ्जऽहे । प्र । अहम् । महे । वृत्रऽहत्ये । अशुश्रवि ॥ ८ ॥

ᵛअहम् इन्द्रः ᵛगुङ्गुभ्यः एतन्नामकेभ्यो जनपदेभ्यो रक्षणाय ᵛअतिथिग्वम् अतिथिगोः पुत्रं दिवोदासमृषिम् ᵛइष्करं निष्कर्तारं ᵛवृत्रतुरं शत्रूणां हिंसकं ᵛविक्षु प्रजासु मध्ये ᵛइषं ᵛन अन्नमिव तासामन्नं यथा भोगाय भवति तद्वदन्नस्थानीयं ᵛधारयं धारितवानस्मि । कदेति उच्यते । ᵛयत् यदा ᵛपर्णयघ्ने पर्णयनामकस्यासुरस्य हननवति ᵛउत ᵛवा अपि च ᵛकरञ्जहे एतन्नामकस्य हननोपेते ᵛमहे महति ᵛवृत्रहत्ये संग्रामे ᵛअशुश्रवि श्रुतोऽभवम्[2] ॥

प्र मे नमी साप्य इषे भुजे भूद्गवामेषे सख्या कृणुत द्विता ।
दिद्युं यदस्य समिथेषु मंहयमादिदेनं शंस्यमुक्थ्यं करम् ॥ ९ ॥

प्र । मे । नमी । साप्यः । इषे । भुजे । भूत् । गवाम् । एषे । सख्या । कृणुत । द्विता ।
दिद्युम् । यत् । अस्य । सम्ऽइथेषु । मंहयम् । आत् । इत् । एनम् । शंस्यम् । उक्थ्यम् । करम् ॥ ९ ॥

ᵛमे मम मत्संबन्धी ᵛनमी । नामकत्वान्नमः स्तोत्रम् । तदस्यास्तीति नमी स्तोता ᵛसाप्यः सर्वैराश्रयणीयः सन् ᵛइषे अन्नाय ᵛभुजे भोगाय ᵛप्र ᵛभूत् प्रभवति । तं मत्स्तोतारं मनुष्याः ᵛगवामेषे अन्वेषणाय ᵛसख्या सख्याय च ᵛद्विता द्विविधं द्विप्रकाराय ᵛकृणुत कृण्वन्ति । गवां

१. त-भ—स निष्षाट् । २. ग१-त-भ१.४.६.७—विश्रुतोभवं ।

दातारं[1] सखायं च[1] कुर्वन्तीत्यर्थः। यद्वा। गवामेष एषणे द्विता द्वैधाय सख्याय शारीराय[2] सैनिकाय च सख्याय कृण्वन्ति। कदेति उच्यते। ᵛयत् यदा ᵛअस्य मत्संबन्धिनः स्तोतुर्जयार्थं ᵛसमिथेषु संग्रामेषु ᵛदिद्युम् आयुधं ᵛमंहयं स्वीकुर्यामित्यर्थः। ᵛआदित् अनन्तरमेव ᵛनुनं स्तोतारं ᵛशंस्यं स्तुत्यम् ᵛउक्थ्यम् उक्थार्हं ᵛकरम् अकरं करोमि ॥

**प्र नेमस्मिन्ददृशे सोमो अन्तर्गोपा नेममाविरस्था कृणोति।**
**स तिग्मशृङ्गं वृषभं युयुत्सन् द्रुहस्तस्थौ बहुले बद्धो अन्तः ॥ १० ॥**

प्र। नेमस्मिन्। ददृशे। सोमः। अन्तः। गोपाः। नेमम्। आविः। अस्था। कृणोति।
सः। तिग्मऽशृङ्गम्। वृषभम्। युयुत्सन्। द्रुहः। तस्थौ। बहुले। बद्धः। अन्तरिति ॥ १० ॥

ᵛनेमस्मिन्। नेमशब्दोऽर्धपर्यायः[3]। यष्टा अयष्टा च द्वौ पुरुषौ युध्यन्तौ। तयोरेकस्मिन् यष्टरीत्यर्थः। तस्मिन् ᵛअन्तः ᵛसोमः ᵛददृशे दृश्यते। तं ᵛनेमम् अर्धमेकं[4] ᵛगोपाः गोपायितेन्द्रः ᵛअस्था क्षेपणसाधनेन वज्रेण ᵛआविः ᵛकृणोति प्रकटयति। शत्रुभिरनभिभूतं करोतीत्यर्थः। ᵛसः यत्र सोमो न दृश्यते सः ᵛतिग्मशृङ्गं तीक्ष्णायुधं ᵛवृषभं बाणान् वर्षयन्तमिन्द्रेणानुगृहीतं प्रति ᵛयुयुत्सन् योद्धुमिच्छन् ᵛद्रुहः द्रोग्धा ᵛबद्धः सन् ᵛबहुले अन्धकारे ᵛअन्तः तस्य मध्ये ᵛतस्थौ तिष्ठति। यद्वा एवं व्याख्येयम्। नेमस्मिन्निन्द्रभक्तेऽन्तः सोमो ददृशे। नेममन्यं गोपाः स्वभक्तरक्षक इन्द्रोऽस्था अस्थ्ना वज्रेणाविष्कृणोति। आविष्करोति। वज्रेण पीडयतीत्यर्थः। स नेमो द्रुहस्तिग्मशृङ्गं वृषभमिन्द्रं युयुत्सन्। शिष्टं समानम् ॥

**आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनामि धाम।**
**ते मा भद्राय शवसे ततक्षुरपराजितमस्तृतमषाळ्हम् ॥ ११ ॥**

आदित्यानाम्। वसूनाम्। रुद्रियाणाम्। देवः। देवानाम्। न। मिनामि। धाम।
ते। मा। भद्राय। शवसे। ततक्षुः। अपराऽजितम्। अस्तृतम्। अषाळ्हम् ॥ ११ ॥

ᵛआदित्यानां ᵛवसूनां ᵛरुद्रियाणां रुद्राणां यद्वा रुद्रपुत्राणां मरुतां च ᵛदेवानां ᵛधाम स्थानं ᵛदेवः इन्द्रः ᵛन ᵛमिनाति न हिनस्ति। ᵛते[5] आदित्यादयः ᵛमा मां ᵛभद्राय ᵛशवसे ᵛततक्षुः अनुगृह्णन्तु। ᵛअपराजितमस्तृतम् अहिंसितम् ᵛअषाळ्हम् अनभिभूतम् ॥ ॥ ६ ॥

'अहं दाम्' इत्येकादशर्चं सप्तमं सूक्तम्। वैकुण्ठ[6] एवर्षिर्देवता च। द्वितीयैकादश्यौ[7] त्रिष्टुभौ। शिष्टा जगत्यः। अनुक्रान्तं च—'अहं दामन्त्योपाद्ये च' इति। द्वितीये[8] रात्रिपर्याये[8] मैत्रावरुणस्येदं सूक्तम्। सूत्रितं च—'अहं दां पाता सुतमिन्द्रो अस्तु सोमम्' (आश्व. श्रौ. ६. ४) इति ॥

**अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम्।**
**अहं भुवं यजमानस्य चोदितायज्वनः साक्षि विश्वस्मिन्भरे ॥ १ ॥**

---

१. त-भ-दातारः सखायश्च। २. ग-त-भ-मु-शरीराय। ३. भ-नेमशब्दोर्धशब्दपर्यायः। ४. ग-अर्धमेव; त१.२.७.८-भ-अर्धमेकः। ५. त-'ते' नास्ति। ६. ग-त१.२.६.७.८-भ-वैकुंठ इंद्र। ७. ग-त-भ-तृतीयैकादश्यौ। ८. ग-अतिरात्रे द्वितीयेपर्याये; त-मु-द्वितीये पर्याये; भ-द्वितीये।

अहम् । दाम् । गृणते । पूर्व्यम् । वसु । अहम् । ब्रह्म । कृणवम् । मह्यम् । वर्धनम् ।
अहम् । भुवम् । यजमानस्य । चोदिता । अयज्वनः । साक्षि । विश्वस्मिन् । भरे ॥ १ ॥

ᵛअहम् इन्द्रः ᵛगृणते स्तुवते ᵛपूर्व्यं मुख्यं ᵛवसु धनं ᵛदाम् अदाम् । ᵛअहम् एव ᵛब्रह्म परिवृढं कर्म स्तुतिलक्षणं ᵛमह्यं ᵛवर्धनं ᵛकृणवं करोमि । स्तोतुः संबन्धि स्तोत्रं तस्मै धनं प्रयच्छन् मह्यमेव वर्धनं करोमीत्यर्थः । तथा ᵛअहं ᵛयजमानस्य मामुद्दिश्य यष्टुर्धनस्य ᵛचोदिता प्रेरकः ᵛभुवं भवामि । ᵛअयज्वनः अयष्टुः । अयष्टारमित्यर्थः । तं ᵛविश्वस्मिन् ᵛभरे सर्वस्मिन्नपि संग्रामे ᵛसाक्षि अभिभवामि ॥

**मां धुरिन्द्रं नाम देवता दिवश्च ग्मश्चापां च जन्तवः ।**
**अहं हरी वृषणा विव्रता रघू अहं वज्रं शवसे धृष्ण्वा ददे ॥ २ ॥**

माम् । धुः । इन्द्रम् । नाम । देवता । दिवः । च । ग्मः । च । अपाम् । च । जन्तवः ।
अहम् । हरी इति । वृषणा । विऽव्रता । रघू इति । अहम् । वज्रम् । शवसे । धृष्णु । आ । ददे ॥२॥

ᵛइन्द्रं ᵛनाम इन्द्रनामानं ᵛमां ᵛदेवता देवानां मध्ये ᵛदिवः द्युलोकस्य । ग्मा पृथिव्यापोऽन्तरिक्षम् । एतेषु लोकेषु ᵛजन्तवः जाताः ᵛमा मामेव ᵛधुः दधुः[1] धारयन्ति हविर्भिः स्तुतिभिश्च । ᵛअहं यज्ञगमनाय संग्रामगमनाय वा ᵛहरी हरितवर्णौ ᵛवृषणा पुंस्त्वोपेतौ ᵛविव्रता विविधकर्माणौ ᵛरघू लघू शीघ्रगतौ अश्वौ नियोजयामि रथे । तथा ᵛअहं ᵛधृष्णु धर्षकं ᵛवज्रम् आयुधं ᵛशवसे बलाय ᵛआ ᵛददे स्वीकरोमि[2] ॥

**अहमत्कं कवये शिश्नथं हथैरहं कुत्समावमाभिरूतिभिः ।**
**अहं शुष्णस्य श्नथिता वधर्यमं न यो रर आर्यं नाम दस्यवे ॥ ३ ॥**

अहम् । अत्कम् । कवये । शिश्नथम् । हथैः । अहम् । कुत्सम् । आवम् । आभिः । ऊतिऽभिः ।
अहम् । शुष्णस्य । श्नथिता । वधः । यमम् । न । यः । ररे । आर्यम् । नाम । दस्यवे ॥३॥

ᵛअहम् इन्द्रः ᵛअत्कम् आच्छादकं शत्रुपुत्रं ᵛकवये उशनस ऋषये तस्य सुखवासाय ᵛहथैः बहुप्रकारैः प्रहारैः[3] तत्साधनैरायुधैर्वा ᵛशिश्नथं ताडितवानस्मि । श्नथतिर्वधकर्मा । किंच ᵛअहं ᵛकुत्सम् एतन्नामकमृषिम् ᵛआभिः ᵛऊतिभिः वधादिरूपैः[4] । 'कुत्साय शुष्णमशुषं नि बर्हीः' ( ऋ. सं. ४. १६. १२ ) इत्यादि मन्त्रान्तरम् । रक्षणैः ᵛआवम् अरक्षम् । पूर्वमेव कृतान्यपि रक्षणानीदानीमिव कृतानीत्यनुवदति । कुत्सार्थं ᵛशुष्णस्य एतन्नामकस्यासुरस्य ᵛश्नथिता हिंसिता । तस्य हननायेत्यर्थः । ᵛवधः वज्रं ᵛयमं प्रहरणाय नियमितवानस्मि । अपि[5] च[5] ᵛअहम् ᵛआर्यम् आर्यसंबन्धि । आर्याणां देयमित्यर्थः । तादृशं ᵛनाम । उदकनामैतत् । नामकमुदकं ᵛदस्यवे शत्रवे उपक्षपयित्रे ᵛन ᵛररे न दत्तवानस्मि । यद्वा । आर्यं पूज्यमित्यसाधारणं नाम दस्यवे न दत्तवानस्मि । अत्रेन्द्रस्यात्मस्तुतौ कुत्सरक्षणशुष्णवधादिकम् 'आवः कुत्समिन्द्र यस्मिञ्चाकन्' ( ऋ. सं. १. ३३. १४ ) 'शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र' ( ऋ. सं. १. १०३. ८ ) इत्यादिषु बहुधा प्रपञ्चितम् । अतोऽत्र ग्रन्थविस्तरभयान्न वक्ष्यते ॥

---

१. ग-त-भ५.६.८-मु-अधुः;भ१.२.४.७-'दधुः' नास्ति । २. भ१.२.७-स्वीकरिष्ये । ३. ग-भ४. ६.७-'प्रहारैः' नास्ति । ४. ग-त-भ-कुत्सवधादिरूपैः । ५. त-भ२.८-'अपि च' नास्ति ।

अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रन्धयम् ।
अहं भुवं यजमानस्य राजनि प्र यद्भरे तुजये न प्रियाधृषे ॥ ४ ॥

अहम् । पिताऽइव । वेतसून् । अभिष्टये । तुग्रम् । कुत्साय । स्मत्ऽइभम् । च । रन्धयम् ।
अहम् । भुवम् । यजमानस्य । राजनि । प्र । यत् । भरे । तुजये । न । प्रिया । आऽधृषे ॥ ४ ॥

ᵛअहम् इन्द्रः ᵛपितेव पिता पुत्रायेव स यथा तस्मै निर्वाहार्थमभिमतं देशं प्रसाधयति तद्वत् ᵛवेतसून् एतन्नामकान् जनपदान्[1] ᵛअभिष्टये अभीच्छते ᵛकुत्साय महर्षये ᵛतुग्रं ᵛस्मदिभं ᵛच ᵛरन्धयं वशमनयम् । ᵛअहं ᵛयजमानस्य ᵛराजनि राजनार्थं ᵛभुवम् अभवम् । समर्थ इति शेषः । ᵛयत् यस्मात् ᵛतुजये ᵛन पुत्रायेव पिता तस्मै यजमानाय ᵛआधृषे शत्रूणां धर्षणाय ᵛप्रिया प्रियाणि ᵛप्र ᵛभरे प्रभरामि[2] तस्माद्यजमानस्य राजनि भुवमिति संबन्धः ॥

अहं रन्धयं मृगयं श्रुतर्वणे यन्माजिहीत वयुना चनानुषक् ।
अहं वेशं नम्रमायवेऽकरमहं सव्याय पड्गृभिमरन्धयम् ॥ ५ ॥

अहम् । रन्धयम् । मृगयम् । श्रुतर्वणे । यत् । मा । अजिहीत । वयुना । चन । आनुषक् ।
अहम् । वेशम् । नम्रम् । आयवे । अकरम् । अहम् । सव्याय । पट्ऽगृभिम् । अरन्धयम् ॥५॥

ᵛअहम् इन्द्रः ᵛमृगयम् एतन्नामकमसुरं ᵛश्रुतर्वणे एतन्नामकाय महर्षये ᵛरन्धयम् । रध्यतिर्वशगमने । वशमनयम् । ᵛयत् यस्मात् श्रुतर्वा ᵛमा माम् ᵛअजिहीत । ' ओहाङ् गतौ '। आगच्छत् । तदेवोच्यते । ᵛवयुना प्रज्ञानेन स्तोत्रेण ᵛआनुषक् अनुषक्तोऽभूत् । ᵛचन इति पूरणः । ᵛअहं ᵛवेशम् एतन्नामानं ᵛनम्रं प्रह्वं ᵛकरम्[3] अकार्षम् । करोतेर्लुङि ' कृमृदृरुहिभ्यः ' इति च्लेरङ् । अडभावश्छान्दसः । ᵛअहं ᵛसव्याय एतन्नामकाय ᵛपड्गृभिम् एतन्नामकम् ᵛअरन्धयं वशमनयम् ॥ ॥ ७ ॥

अहं स यो नववास्त्वं बृहद्रथं सं वृत्रेव दासं वृत्रहारुजम् ।
यद्वर्धयन्तं प्रथयन्तमानुषग्दूरे पारे रजसो रोचनाकरम् ॥ ६ ॥

अहम् । सः । यः । नवऽवास्त्वम् । बृहत्ऽरथम् । सम् । वृत्राऽइव । दासम् । वृत्रऽहा । अरुजम् ।
यत् । वर्धयन्तम् । प्रथयन्तम् । आनुषक् । दूरे । पारे । रजसः । रोचना । अकरम् ॥ ६ ॥

ᵛअहम् इन्द्रः ᵛसः[4] अस्मि[4] ᵛयः अहं ᵛनववास्त्वं ᵛबृहद्रथं च ᵛवृत्रेव वृत्रमिव ᵛदासम् उपक्षपयितारमिव नववास्त्वं बृहद्रथं च ᵛअरुजम् अहं भग्नमकरवम् । 'रुजो भङ्गे' । ᵛयत् यदा ᵛवर्धयन्तं वर्धमानं ᵛप्रथयन्तं प्रथमानं चोभौ शत्रू ᵛआनुषक् अनुषक्तः सन् ᵛरोचना रोचनस्य ᵛरजसः लोकस्य ᵛदूरे ᵛपारे ᵛअकरं कृतवानस्मि ॥

अहं सूर्यस्य परि याम्याशुभिः प्रैतशेभिर्वहमान ओजसा ।
यन्मा सावो मनुष आह निर्णिज ऋधक्कृषे दासं कृत्व्यं हथैः ॥ ७ ॥

---

१. भ–' जनपदान् ' नास्ति । २. भ–प्रभराणि । ३. त-भ१.४–अकरं । ४. त१.२.७-भ–' सः अस्मि ' नास्ति ।

अहम् । सूर्यस्य । परि । यामि । आशुऽभिः । प्र । एतशेभिः । वहमानः । ओजसा ।
यत् । मा । सावः । मनुषः । आह । निःऽनिजे । ऋधक् । कृषे । दासम् । कृत्व्यम् । हथैः ॥७॥

ᵛअहं ᵛसूर्यस्य देवस्य ᵛआशुभिः शीघ्रगामिभिः ᵛएतशेभिः[1] एतशवर्णैरश्वैः ᵛवहमानः उह्यमानः ᵛओजसा आत्मीयेन बलेन प्रकर्षेण ᵛपरि ᵛयामि परिगच्छामि सूर्यात्मना । किंच ᵛयत् यदा ᵛमा मां ᵛमनुषः मनुष्यस्य ᵛसावः सोमाभिषवः ᵛआह ब्रूते । आह्वयतीत्यर्थः । किमर्थमाह । ᵛनिर्णिजे । निर्णिगिति रूपनाम । यजमानस्वरूपायेत्यर्थः । तदानीं ᵛकृत्व्यं कर्तव्यम् । हन्तव्यमित्यर्थः । ᵛदासम् उपक्षपयितारं शत्रुं ᵛहथैः हननसाधनैः[2] ᵛऋधक्कृषे पृथक्करोमि । ऋधगित्ययं पृथगर्थे ॥

**अहं सप्तहा नहुषो नहुष्टरः प्राश्रावयं शवसा तुर्वशं यदुम् ।**
**अहं न्य१न्यं सहसा सहस्करं नव व्राधतो नवतिं च वक्षयम् ॥ ८ ॥**

अहम् । सप्तऽहा । नहुषः । नहुःऽतरः । प्र । अश्रवयम् । शवसा । तुर्वशम् । यदुम् ।
अहम् । नि । अन्यम् । सहसा । सहः । करम् । नव । व्राधतः । नवतिम् । च । वक्षयम् ॥८॥

ᵛअहं ᵛसप्तहा सप्तसंख्याकानां शत्रुपुरां हन्ता । ‘ सप्त यत्पुरः शर्म शारदीः ’ ( ऋ. सं. १. १७४. २ ) इत्युक्तम् । यद्वा । सप्त नमुच्यादीन् हतवान् । किंच ᵛनहुषः बन्धकस्यापि ᵛनहुष्टरः बन्धकतरोऽहं ᵛशवसा बलेन ᵛतुर्वशं ᵛयदुं च ᵛप्राश्रावयं शत्रुसंबन्धिगवादिप्रदानेन श्रावितवानस्मि । तौ यथा लोके श्रुतौ भवतः तथाकार्षमित्यर्थः । किंच ᵛअहम् ᵛअन्यं चास्मत्स्तोतारं ᵛसहसा बलेन ᵛसहः बलिनं ᵛकरम् ᵛअकार्षम् । करोतेर्लुङि ‘ कृमृदृरुहि० ’ इति च्लेरङ् । अडभावः । किंच ᵛनव नवसंख्याकाः ᵛनवतिं ᵛच नवतिसंख्याकाश्च । नवोत्तरनवतिमित्यर्थः । कथंभूताः । ᵛव्राधतः वर्धमानाः ᵛवक्षयम् अवहम् । व्यनाशयमित्यर्थः ॥

**अहं सप्त स्रवतो धारयं वृषा द्रवित्न्वः पृथिव्यां सीरा अधि ।**
**अहमर्णांसि वि तिरामि सुक्रतुर्युधा विदं मनवे गातुमिष्टये ॥ ९ ॥**

अहम् । सप्त । स्रवतः । धारयम् । वृषा । द्रवित्न्वः । पृथिव्याम् । सीराः । अधि ।
अहम् । अर्णांसि । वि । तिरामि । सुऽक्रतुः । युधा । विदम् । मनवे । गातुम् । इष्टये ॥ ९ ॥

ᵛवृषा वर्षकः ᵛअहं ᵛसप्त ᵛस्रवतः स्रवतीर्नदीः ᵛधारयम् अधारयम् । कीदृश्यस्ताः । ᵛद्रवित्न्वः द्रवन्तीः । ‘ वा छन्दसि ’ इति पूर्वसवर्णदीर्घाभावः । ᵛसीराः सरणशीलाः । कुत्र । ᵛपृथिव्याम् । ᵛसुक्रतुः शोभनकर्मा ᵛअहम् ᵛअर्णांसि उदकानि ᵛवि ᵛतिरामि प्रयच्छामि । किंच ᵛमनवे मनुष्याय ᵛइष्टये तस्य गमनाय ᵛगातुं मार्गं ᵛयुधा संप्रहारेण । निरोधपरिहारेणेत्यर्थः । ᵛविदम् अलम्भयम् । प्रायच्छमित्यर्थः । विदेर्लाभार्थस्य ‘ पुषादि० ’ ( पा. सू. ३. १. ५५ ) इत्यादिना च्लेरङ् ॥

**अहं तदासु धारयं यदासु न देवश्चन त्वष्टाधारयद्रुशत् ।**
**स्पार्हं गवामूधःसु वक्षणास्वा मधोर्मधु श्वात्र्यं सोममाशिरम् ॥ १० ॥**

अहम् । तत् । आसु । धारयम् । यत् । आसु । न । देवः । चन । त्वष्टा । अधारयत् । रुशत् ।
स्पार्हम् । गवाम् । ऊधःऽसु । वक्षणासु । आ । मधोः । मधु । श्वात्र्यम् । सोमम् । आऽशिरम् ॥१०॥

१. त१.२.३-भ-प्रैतशेभिः । २. त२.४.६.७-भ-हननैः ।

अहं तत् प्रसिद्धं पयः आसु गोषु धारयं धृतवानस्मि । 'धृञ्[1] धारणे' । ण्यन्तस्य लङि रूपम् । यत् पयः आसु गोषु देवश्चन त्वष्टा देवशिल्पी सूर्यो वा देवः न चन अधारयत् धर्तुं नाशक्नोत् । कीदृक् पयोऽधारयमिति चेत् उच्यते । रुशत् दीप्तं स्पार्हं स्पृहणीयम् । केषु प्रदेशेष्विति उच्यते । गवामूधःसु उद्धततरेषु गवां पयोधारणप्रदेशेषु । किंच मधु[2] उदकं वक्षणासु । नदीनामैतत् । वहनशीलासु नदीषु धारयामीत्यनुषज्यते । नद्युदकधारणस्यावधिरुच्यते । आ मधोः आ उदकोत्पत्तेः । आगामिवर्षासमयपर्यन्तमित्यर्थः । कीदृशं मध्विति तदुच्यते । श्वात्र्यम् । श्वात्रमिति क्षिप्रनाम । क्षिप्रगमनार्हम् । यद्वा । श्वात्र्यमित्युत्तरत्र संबध्यते । श्वात्र्यं सुखावहं सोमं प्रति आशिरं धारयम् ॥

**एवा देवाँ इन्द्रो विव्ये नॄन् प्र च्यौत्नेन मघवा सत्यराधाः ।**
**विश्वेत्ता ते हरिवः शचीवोऽभि तुरासः स्वयशो गृणन्ति ॥ ११ ॥**

एव । देवान् । इन्द्रः । विव्ये । नॄन् । प्र । च्यौत्नेन । मघऽवा । सत्यऽराधाः ।
विश्वा । इत् । ता । ते । हरिऽवः । शचीऽवः । अभि । तुरासः । स्वऽयशः । गृणन्ति ॥ ११ ॥

अथानयेन्द्र इन्द्रभावं परित्यज्य ऋषिभावेनाह । एव एवमुक्तप्रकारेण देवान् नॄन् च इन्द्रः देवः प्र विव्ये प्रकर्षेण गमयति । 'तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते' ( तै. सं. ६. ३. १. ४ ) इति ब्राह्मणम् । किमन्यसहायेन नेत्याह । च्यौत्नेन स्वीयेन बलेन । कीदृश इन्द्रः । मघवा धनवान् सत्यराधाः सत्यधनः । अथ प्रत्यक्षेणाह । हे हरिवः हरिभ्यां तद्वन् शचीवः कर्मवन् हे स्वयशः स्वायत्तकीर्तेऽन्नवन् वेन्द्र ता तानि विश्वा सर्वाणि कर्माणि ते तव संबन्धीनि येषु कर्मसु तुरासः त्वरमाणा ऋत्विजः अभि गृणन्ति अभिष्टुवन्ति ॥ ॥ ८ ॥

'प्र वो महे' इति सप्तर्चमष्टमं सूक्तम् । आदितो द्वे जगत्यौ । 'के ते नरः' इत्यादिके द्वे अभिसारिण्यौ । आदितो द्वौ दशाक्षरौ ततो द्वौ द्वादशकौ साभिसारिणी । तदुक्तं—'वैराजौ जागतौ चाभिसारिणी' ( अनु. ९. ४ ) इति । ततस्त्रिष्टुबेका । ततो द्वे जगत्यौ । पूर्ववदृषिदेवते । तथा चानुक्रान्तं—'प्र वो महे सप्त द्विजगत्याद्यन्तं के तेऽभिसारिण्यौ' इति । महाव्रते निष्केवल्य एतत्सूक्तं निविद्धानम् । सूत्रितं च—'प्र वो महे मन्दमानायान्धस इति निविद्धानम्' ( ऐ. आ. ५. ३. १ ) इति ॥

**प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे ।**
**इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥ १ ॥**

प्र । वः । महे । मन्दमानाय । अन्धसः । अर्च । विश्वानराय । विश्वऽभुवे ।
इन्द्रस्य । यस्य । सुऽमखम् । सहः । महि । श्रवः । नृम्णम् । च । रोदसी इति । सपर्यतः ॥ १ ॥

हे स्तोतः वः त्वम्[3] । पूजार्थं बहुवचनम् । महे महते अन्धसः । अन्धसेत्यर्थः । सोमेन मन्दमानाय मोदमानाय विश्वानराय सर्वस्य नेत्रे[4] । 'नरे संज्ञायाम्' इति सांहितिको दीर्घः । विश्वाभुवे सर्वस्य भावयित्रे मह्यमिन्द्राय प्र अर्च । अर्चतिः स्तुतिकर्मा । प्रोच्चारय । यस्य मम

---

१. ग-त-भ-मु-धृ । २. ग-मधुरसं; त-भ-मधु मधुरं । ३. त-भ६-मु-त्वमित्यर्थः; भ१.४-त्वर्थः; भ२-त्वदर्थः । ४. त१.२.३-भ-नेत्रे विश्वाभुवे ।

ᵛइन्द्रस्य ᵛसुमखं सुष्ठु मंहनीयं ᵛसहः बलं ᵛमहि महत् ᵛश्रवः अन्नं ᵛनृम्णं सुखं[1] ᵛच ᵛरोदसी द्यावापृथिव्यौ ᵛसपर्यतः पूजयतः। तस्मा इन्द्राय प्रार्चेति समन्वयः ॥

सो चिन्नु सख्या नर्य इनः स्तुतश्चर्कृत्य इन्द्रो मावते नरे ।
विश्वासु धूर्षु वाजकृत्येषु सत्पते वृत्रे वाप्स्व१भि शूर मन्दसे ॥ २ ॥

सः । चित् । नु । सख्या । नर्यः । इनः । स्तुतः । चर्कृत्यः । इन्द्रः । माऽवते । नरे ।
विश्वासु । धूःऽसु । वाजऽकृत्येषु । सत्ऽपते । वृत्रे । वा । अप्ऽसु । अभि । शूर । मन्दसे ॥२॥

ᵛसो ᵛचिन्नु स खलु ᵛइन्द्रः ᵛसख्या सखिभूतेन निमित्तेन ᵛनर्यः नृभ्यो हितः ᵛइनः सर्वस्येश्वरः ᵛस्तुतः सर्वैरभिष्टुतः। सख्या स्तुत इति वा संबन्धः । ᵛमावते मत्सदृशाय ᵛनरे नराय[2] ᵛचर्कृत्यः[3] पुनःपुनः कर्तव्यः। परिचरणीय इत्यर्थः। अथ प्रत्यक्षवादः। हे ᵛसत्पते सतां पालकेन्द्र स त्वं ᵛविश्वासु सर्वासु ᵛधूर्षु वोढव्येषु[4] कार्यभारेषु ᵛवाजकृत्येषु च बलकृत्येषु च ᵛवृत्रे ᵛवाप्सु मेघे वर्तमानेषूदकेषु च निमित्तेषु हे ᵛशूर त्वम् ᵛअभि ᵛमन्दसे अभिष्टूयसे ॥

के ते नर इन्द्र ये त इषे ये ते सुम्नं सधन्य१मियक्षान् ।
के ते वाजायासुर्याय हिन्विरे के अप्सु स्वासूर्वरासु पौंस्ये ॥ ३ ॥

के । ते । नरः । इन्द्र । ये । ते । इषे । ये । ते । सुम्नम् । सऽधन्यम् । इयक्षान् ।
के । ते । वाजाय । असुर्याय । हिन्विरे । के । अप्ऽसु । स्वासु । उर्वरासु । पौंस्ये ॥ ३ ॥

हे ᵛइन्द्र ᵛते ᵛके ᵛनरः के मनुष्या इति प्रश्नः। ते महान्तो मया ज्ञातव्या इत्यभिप्रायः। प्रष्टव्यानाह। ᵛये नराः ᵛते तव ᵛइषे अन्नाय प्रभवन्तीति शेषः। ᵛये च ᵛते ᵛसुम्नं सुखं त्वदीयं ᵛसधन्यं धनयुक्तम् ᵛइयक्षान् गच्छन्ति। इयक्षतिर्गतिकर्मा। त्वदीयमन्नं सुखं धनं च ये लभन्ते ते के महात्मान इति। किंच ᵛके[6] ᵛते तव ᵛअसुर्याय असुरसंबन्धिने तेषां वधनिमित्ताय ᵛवाजाय बलाय ᵛहिन्विरे[6] प्रेरयन्ति सोमादि हविः। ᵛके वा ᵛअप्सु ᵛस्वासु स्वापेक्षितेषूदकेषु ᵛउर्वरासु सर्वसस्याढ्यासु भूमिषु ᵛपौंस्ये पुंस्त्वे चेति[7] तेषु[7] निमित्तभूतेषु हविः प्रेरयन्तीत्यनुवर्तते। उक्तविधा महान्तो दुर्लभा इति भावः ॥

'भुवस्त्वमिन्द्र' इति दर्शपूर्णमासयोर्माहेन्द्रस्य हविषो याज्या। सूत्रितं च—'महाँ इन्द्रो य ओजसा भुवस्त्वमिन्द्र ब्रह्मणा महान्' (आश्व. श्रौ. १. ६) इति। देवसुवां हविःष्विन्द्रस्य ज्येष्ठस्यैषैव[8] याज्या। 'भुवस्त्वमिन्द्र ब्रह्मणा महाननमीवास इळया' (आश्व. श्रौ. ४. ११) इति हि सूत्रितम्। एषैव भूनाम्न्येकाहे निष्केवल्ये सूक्तमुखीया। सूत्रितं च—'शस्यमुक्तं बृहस्पतिसवेन त्वं भुवः प्रतिमानं पृथिव्या भुवस्त्वमिन्द्र ब्रह्मणा महान्' (आश्व. श्रौ. ९. ५) इति ॥

भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः ।
भुवो नॄँश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे ॥ ४ ॥

---

१. त-भ-'सुखं' नास्ति; मु-धनं। २. ग-जंगमाय; त-भ-मु-जनाय। ३. ग-त-भ२.५.६.८-मु-चर्कृत्यः कर्तव्यैः। ४. त-भ-बोढव्येषु। ५. ग-त-भ-मु-'के' नास्ति। ६. ग-त-भ-के हिन्विरे। ७. ग-त४.६.भ६-मु-च एतेषु; त१.२.३.७-भ४.८-चेतिषु। ८ ग-त१.२-भ-ज्येष्ठस्यैवमेव।

भुवः । त्वम् । इन्द्र । ब्रह्मणा । महान् । भुवः । विश्वेषु । सवनेषु । यज्ञियः ।
भुवः । नॄन् । च्यौत्नः । विश्वस्मिन् । भरे । ज्येष्ठः । च । मन्त्रः । विश्वऽचर्षणे ॥ ४ ॥

हे ᵛइन्द्र ᵛत्वं ᵛब्रह्मणा अस्मत्कृतेन परिवृढेन स्तोत्रेण ᵛमहान् ᵛभुवः अभवः । भवतेर्लेटि 'भूसुवोस्तिङि' इति गुणप्रतिषेध उवङादेशः । तथा ᵛविश्वेषु सर्वेषु ᵛसवनेषु ᵛयज्ञियः यष्टव्यः ᵛभुवः अभवः । तथा ᵛविश्वस्मिन् सर्वस्मिन् ᵛभरे संग्रामे ᵛनॄन् नेतॄणां शत्रूणां ᵛच्यौत्नः च्यावयिता भुवः । हे ᵛविश्वचर्षणे सर्वस्य द्रष्टरिन्द्र ᵛमन्त्रः मन्त्रयितव्यस्त्वं ᵛज्येष्ठश्च अभवः सर्वेषां मध्ये ॥

अवा नु कं ज्यायान् यज्ञवनसो महीं त ओमात्रां कृष्टयो विदुः ।
असो नु कमजरो वर्धाश्च विश्वेदेता सवना तूतुमा कृषे ॥ ५ ॥

अव । नु । कम् । ज्यायान् । यज्ञऽवनसः । महीम् । ते । ओमात्राम् । कृष्टयः । विदुः ।
असः । नु । कम् । अजरः । वर्धाः । च । विश्वा । इत् । एता । सवना । तूतुमा । कृषे ॥ ५ ॥

हे इन्द्र त्वं ᵛज्यायान् प्रशस्यतरस्त्वं ᵛयज्ञवनसः संभक्तयज्ञान् स्तोतॄन् ᵛनु ᵛकं क्षिप्रम् ᵛअव रक्ष । अध्येतारो नु कमिति पदद्वयं कुर्वन्ति तथापि हिकं नुकमित्यादीनि नवोत्तराणि पदान्यित्युक्तवान् यास्काचार्यः ( नि. ३. १२ )। अतः केवलानां हिकं[1] नुकमित्येवमादीनां[1] यावानर्थः स एव[2] विशिष्टानामपि । तैत्तिरीया ( तै. सं. १.२.१३.३ ) अप्येकमेव पदं कुर्वन्ति । अवेत्युक्तम् । इन्द्रस्यावनप्रसिद्धिं दर्शयति । हे इन्द्र ᵛते तव ᵛओमात्रां[3] रक्षणं ᵛमहीं महत् ᵛविदुः ᵛकृष्टयः मनुष्या ऋषयः । ओमात्राम् । अम गत्यादिषु । औणादिक आत्रन्प्रत्ययः । छान्दस उमादेशः । किंच त्वम् ᵛअजरः जरारहितः ᵛअसः भव । ᵛनु ᵛकं क्षिप्रं ᵛवर्धाश्च वर्धस्व च हविराज्यादिना[4] । किंच ᵛविश्वेत् सर्वाण्यपि ᵛएता एतानि ᵛसवना सवनानि ᵛतूतुमा तूर्णानि ᵛकृषे करोषि ॥ कृषे । छान्दसे लिटि 'छन्दसि वा' इति द्विर्वचनाभावः ॥

एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे ।
वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः ॥ ६ ॥

एता । विश्वा । सवना । तूतुमा । कृषे । स्वयम् । सूनो इति । सहसः । यानि । दधिषे ।
वराय । ते । पात्रम् । धर्मणे । तना । यज्ञः । मन्त्रः । ब्रह्म । उत्ऽयतम् । वचः ॥ ६ ॥

हे इन्द्र ᵛएता एतानि ᵛविश्वा सर्वाणि ᵛसवना[5] सवनानि ᵛतूतुमा तूर्णानि ᵛकृषे करोषि । एतानीत्युक्तं कानीति तत्राह । हे ᵛसहसः बलस्य ᵛसूनो पुत्र । बलवन्नित्यर्थः । ᵛस्वयं ᵛयानि[6] ᵛदधिषे धारयसि । हे इन्द्र ᵛते तव ᵛवराय शत्रूणां वारकाय ते तव स्वभूतं ᵛपात्रं रक्षणं भवत्वस्माकम् । किंच ᵛधर्मणे धारणाय ᵛतना धनं भवत्विति शेषः । किंच तुभ्यं[7] ᵛयज्ञो ᵛमन्त्रः । इज्यतेऽनेनेति यज्ञकरणसाधनभूतो मन्त्रः । यजुरित्यर्थः । ᵛब्रह्म परिवृढम् । शस्त्रमित्यर्थः । तदुभयात्मकं ᵛवचः ᵛउद्यतं भवतीति शेषः ॥

---

१. त-भ४.६.८-हिनुसु इत्येवमादीनां । २. त३.४.५.६-भ-च । ३. ग-त-भ१.२.४.६.८-'ओमात्रां' नास्ति । ४. ग-°राज्यादिना । वृधु वृद्धौ । लेटिरूपं; त३-भ१.२-पुस्तकेषु '°राज्यादिना' इत्यस्यानंतरं कियांश्चिदवकाशोऽस्ति । ५. ग-भ-'सवना' नास्ति । ६. त-भ-मु-यानि सवनानि । ७. त१.२.३.८-भ१.२.६.७.८-'तुभ्यं' नास्ति ।

**ये ते विप्र ब्रह्मकृतः सुते सचा वसूनां च वसुनश्च दावने ।**
**प्र ते सुम्नस्य मनसा पथा भुवन्मदे सुतस्य सोम्यस्यान्धसः ॥ ७ ॥**

ये । ते । विप्र । ब्रह्मऽकृतः । सुते । सचा । वसूनाम् । च । वसुनः । च । दावने ।
प्र । ते । सुम्नस्य । मनसा । पथा । भुवन् । मदे । सुतस्य । सोम्यस्य । अन्धसः ॥ ७ ॥

हे विप्र मेधाविन्निन्द्र ते तुभ्यं ये ब्रह्मकृतः स्तोत्रकर्तारो हविष्कर्तारो वा स्तोतारः सचा संघीभूताः सुते सोमेऽभिषुते वसूनां बहूनां धनानां वसुनश्च एकस्य निवासयोग्यस्य धनस्य च दावने दानाय परिचरन्तीति शेषः । अत्र वसूनामिति बहुवचनेन ऐहिकभोगसाधनानि[1] धनानि[2] अभिप्रेतानि । एकवचनान्तेन च निवासयोग्यं स्वर्गाख्यं धनमभिप्रेतमित्यवगन्तव्यम् । ते अनुष्ठातारः सुम्नस्य सुखस्य लाभाय मनसा पथा मनोमार्गेण । स्तोत्रवर्त्मनेत्यर्थः[2] । प्र भुवन् प्रभवन्तु । उक्तवसुदानाय योग्या भवन्त्वित्यर्थः । कदेति उच्यते । सुतस्य अभिषुतस्य सोम्यस्य सोमसंबन्धिनः अन्धसः अन्नस्य मदे मति ॥ ॥ ९ ॥

'महत्तत्' इति नवर्चं नवमं सूक्तम् । वज्रभूतेन वषट्कारेण देवानां हविर्वहनेन च हतेषु भ्रातृषु कनिष्ठः सौचीको नामाग्निर्वषट्कारहविर्वहनाभ्यां भीतो देवेभ्यो निर्गत्यापः प्राविशत् । स च मत्स्यैः प्रदर्शितः सन्नन्वेष्टुमागतैर्देवैः सहेदमादिसूक्तत्रयेण संवादं कृतवान् । अस्य सूक्तस्य द्वितीयादि-युजश्चतस्रो 'विश्वे देवाः शास्तन' इति षड्चमुत्तरसूक्तं चेति दशर्चोऽग्निवाक्यम् । अयुजः प्रथमाद्याः पञ्चर्चो 'यमैच्छाम मनसा' इत्येकादशर्चमुत्तरसूक्तं च देवानां वाक्यम् । तत्र 'तदद्य वाचः प्रथमं मसीय' इति द्व्यृचस्त्वग्नेर्वाक्यम् । अतोऽग्निवाक्येषु देवा देवताग्निर्ऋषिः । देवोक्तिष्वग्निर्देवता देवा ऋषयः । अनादेशपरिभाषयेदमुत्तरं च द्वे त्रैष्टुभे विशेषानभिधानात्[3] । तथा चानुक्रान्तं—'वषट्कारेण वृक्णेषु भ्रातृषु सौचीकोऽग्निरपः प्रविश्य देवैः समवददुत्तरैस्त्रिभिर्महत्तन्नव तत्र[4] युजोऽग्निवाक्यं विश्व इत्युत्तरं षट्कमयुजो देवानां यमैच्छामेत्युत्तरं चैकादशकं तदद्येति तु द्व्यृचोऽग्नेः[5]' इति । गतो विनियोगः । सूक्तत्रयोक्तार्थे तैत्तिरीयब्राह्मणम्—'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति स निलायत सोऽपः प्राविशत्तं देवताः[6] प्रैषमैच्छन्' (तै. सं. २. ६. ६) इत्यादि । तत्राद्यया देवा अग्निमाहुः ॥

**महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः ।**
**विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥ १ ॥**

महत् । तत् । उल्बम् । स्थविरम् । तत् । आसीत् । येन । आऽविष्टितः । प्रऽविवेशिथ । अपः ।
विश्वाः । अपश्यत् । बहुधा । ते । अग्ने । जातऽवेदः । तन्वः । देवः । एकः ॥ १ ॥

तदुल्बं वक्ष्यमाणं तत् प्रावरणं महत् स्थविरम् अत्यन्तं स्थूलं च तत् तत् आसीत् येन उल्बेन आविष्टितः आवेष्टितः सन् हे अग्ने प्रविवेशिथापः उदकानि प्रविष्टवानसि । हे अग्ने

---

१. ग-त१.२.३.६.७.८-भ१.२.४.७—भोगसाधनधनानि; त४.५-भ६—भोगसाधनानि । २. ग-त-भ-मु—स्तोत्रेण वर्त्मनेत्यर्थः । ३. ग—°भिधानात् उत्तरसूक्ते अष्टमीवर्जं षष्ठाद्याः पंचर्चो जगत्यः । ४. ग-त७-अनु—अत्र । ५. ग—द्व्यृचोग्नेस्तंतुमाद्यजगत्याष्टमीवर्जं; अनु—द्व्यृचोऽग्नेस्तन्तुमाद्या जगत्योऽष्टमीवर्जम् । ६. त१.२.३.७-भ१.२.४.८—देवाः ।

ᵛजातवेदः जातप्रज्ञ ᵛते ᵛविश्वाः सर्वाः ᵛतन्वः तनूः सर्वाण्यङ्गानि ᵛबहुधा बहुप्रकारम् ᵛएकः देवः ᵛअपश्यत् दृष्टवान् ॥

को मा ददर्श कतमः स देवो यो मे तन्वो बहुधा पर्यपश्यत् ।
क्वाह मित्रावरुणा क्षियन्त्यग्नेर्विश्वाः समिधो देवयानीः ॥ २ ॥

कः । मा । ददर्श । कतमः । सः । देवः । यः । मे । तन्वः । बहुधा । परिऽअपश्यत ।
क्व । अह । मित्रावरुणा । क्षियन्ति । अग्नेः । विश्वाः । सम्ऽइधः । देवऽयानीः ॥ २ ॥

इदमग्नेर्वाक्यम् । एको देवोऽपश्यदित्युक्ते पृच्छति । ᵛको ᵛमा मां ᵛददर्श दृष्टवान् । ᵛस ᵛदेवः ᵛकतमः ᵛयो ᵛमे मम ᵛतन्वः तनूः ᵛबहुधा बहुप्रकारं स्थिताः ᵛपर्यपश्यत् परिदृष्टवान् । हे ᵛमित्रा-वरुणा मित्रावरुणौ ᵛअग्नेः मम ᵛविश्वाः सर्वाः ᵛसमिधः दीप्ताः ᵛदेवयानीः देवयानसाधनभूताः तन्वो दृष्टा इत्युक्तं यदि दृष्टाश्चेत्तर्हि ᵛक्व ᵛक्षियन्ति क्व निवसन्तीत्येवं देवानां पुरतो वर्तमानौ मित्रावरुणावाहाग्निः ॥

ऐच्छाम त्वा बहुधा जातवेदः प्रविष्टमग्ने अप्स्वोषधीषु ।
तं त्वा यमो अचिकेच्चित्रभानो दशान्तरुष्यादतिरोचमानम् ॥ ३ ॥

ऐच्छाम । त्वा । बहुधा । जातऽवेदः । प्रऽविष्टम् । अग्ने । अप्ऽसु । ओषधीषु ।
तम् । त्वा । यमः । अचिकेत । चित्रभानो इति चित्रऽभानो ।
दशऽअन्तरुष्यात । अतिऽरोचमानम् ॥ ३ ॥

एवमग्निना पृष्टा देवा अग्निं ब्रुवन्ति । हे ᵛजातवेदः जातप्रज्ञ ᵛअग्ने ᵛत्वा त्वाम् अनु ᵛऐच्छाम । कीदृशं त्वाम् ᵛअप्सु उदकेषु ᵛओषधीषु च ᵛबहुधा ᵛप्रविष्टम् । अन्विष्य च ᵛतं तादृशमप्प्रविष्टं ᵛत्वा त्वां ᵛयमः देवः ᵛअचिकेत् ज्ञातवान् हे ᵛचित्रभानो चायनीयरश्मे । कुत्र स्थितं ज्ञातवानिति तदुच्यते । ᵛदशान्तरुष्यात् । अन्तरुष्यं गूढमावासस्थानं तच्च स्थानं दशसंख्योपेतम् । तादृशं स्थानम् ᵛअतिरोचमानम् अतीव प्रकाशमानम् । अग्नेर्हि गूढानि दश स्थानानि भवन्ति । पृथिव्यादयस्त्रयो लोका अग्निवाय्वादित्यास्त्रयो देवा आप ओषधयो वनस्पतयः प्राणिशरीरमिति दश स्थानानि ॥

होत्रादहं वरुण बिभ्यदायं नेदेव मा युनजन्नत्र देवाः ।
तस्य मे तन्वो बहुधा निविष्टा एतमर्थं न चिकेताहमग्निः ॥ ४ ॥

होत्रात् । अहम् । वरुण । बिभ्यत् । आयम् । न । इत् । एव । मा । युनजन् । अत्र । देवाः ।
तस्य । मे । तन्वः । बहुधा । निऽविष्टाः । एतम् । अर्थम् । न । चिकेत । अहम् । अग्निः ॥४॥

अनया देवा मां ज्ञातवन्त इति निश्चित्य गूहनस्य प्रयोजनमाह । हे ᵛवरुण देव ᵛअहं ᵛहोत्रात् होतव्यात्[1] । हविर्वहनादित्यर्थः । तस्मात् ᵛबिभ्यत् ᵛआयम् आगतवानस्मि । अतः ᵛमा माम् ᵛएव एवं पूर्वप्रकारेण ᵛअत्र अस्मिन् हविर्वहने ᵛनेत् ᵛयुनजन् नैव योजयन्तु ᵛदेवाः । ᵛतस्य

१. त४.५.६.८-भ४.५.६.८–हव्यात् ।

तादृशस्य बिभ्यतः ᵛमे ᵛतन्वो ᵛबहुधा ᵛनिविष्टाः अप्सु। ᵛएतमर्थम् एतद्धविर्वहनकार्यम् ᵛअग्निः ᵛअहं ᵛन ᵛचिकेत न बुध्ये नाङ्गीकरोमि ॥

एहि मनुर्देवयुर्यज्ञकामोऽरंकृत्या तमसि क्षेष्यग्ने।
सुगान्पथः कृणुहि देवयानान्वह हव्यानि सुमनस्यमानः ॥ ५ ॥

आ। इहि। मनुः। देवऽयुः। यज्ञऽकामः। अरम्ऽकृत्य। तमसि। क्षेषि। अग्ने।
सुऽगान्। पथः। कृणुहि। देवऽयानान्। वह। हव्यानि। सुऽमनस्यमानः ॥ ५ ॥

अग्निरेवमुक्ता देवाः पुनरग्निमाह्वयन्ति। हे ᵛअग्ने ᵛएहि आगच्छ। ᵛमनुः मनुष्यो यष्टा मननीयो मनू राजा वा ᵛदेवयुः देवान् यष्टुमिच्छन् ᵛयज्ञकामश्च भवति। अत एहि। किं कुर्वन् यज्ञकामो भवतीति चेदुच्यते। ᵛअरंकृत्य केवलं तेजःपुञ्जमेवालंकुर्वन्। यद्वेदमुत्तरत्र संबध्यते। त्वं तु अलंकृत्यात्मानमलंकुर्वन् ᵛतमसि अन्यैर्ज्ञातुमशक्येऽन्धकारे ᵛक्षेषि निवससि। हे अग्ने आगत्य च ᵛदेवयानान् देवान् प्रति यैर्मनुष्या गच्छन्ति तान् ᵛपथः मार्गान् ᵛसुगान् ᵛकृणुहि कुरु। ‘कृवि हिंसाकरणयोश्च’। ‘धिन्विकृण्व्योरच’ इत्युप्रत्ययः। संमत्या नो यज्ञनिष्पत्तेर्देवयानाः सुपथा भवन्ति। ᵛवह च ᵛहव्यानि अस्मदीयानि ᵛसुमनस्यमानः सौमनस्यमाचरंस्त्वम् ॥ ॥ १० ॥

अग्नेः पूर्वे भ्रातरो अर्थमेतं रथीवाध्वानमन्वावरीवुः।
तस्माद्भिया वरुण दूरमायं गौरो न क्षेप्नोरविजे ज्यायाः ॥ ६ ॥

अग्नेः। पूर्वे। भ्रातरः। अर्थम्। एतम्। रथीऽइव। अध्वानम्। अनु। आ। अवरीवुरिति।
तस्मात्। भिया। वरुण। दूरम्। आयम्। गौरः। न। क्षेप्नोः। अविजे। ज्यायाः ॥ ६ ॥

अनयाग्निः स्वपलायननिमित्तमाह। हे देवाः ᵛअग्नेः मम ᵛपूर्वे पूर्वमुत्पन्नाः ᵛभ्रातरः भूपतिर्भुवनपतिर्भूतानां पतिरिति त्रयोऽग्रजाः ᵛएतम् ᵛअर्थं हविर्वहनाख्यमर्थम् ᵛअन्वावरीवुः अनुक्रमेण वृतवन्तः[1]। तत्र वृणोतेर्यङ्लुगन्तात्लुङि च्लेश्छान्दसो लुक्। ‘बहुलं छन्दसि’ इत्युक्तम्। आवरणे दृष्टान्तः। ᵛरथीवाध्वानम्। अध्वानं यथा रथी वृणोति तद्वत्। ते भ्रातरस्तथा कुर्वन्तो हताः। ᵛतस्मात् मरणात् ᵛभिया भीत्या हे ᵛवरुण ᵛदूरं देशम् ᵛआयम्। किंच ᵛक्षेप्नोः इषुक्षेप्तुः धनुषः ᵛज्यायाः सकाशात ᵛगौरो ᵛन गौरमृग इव स यथा बिभेति चलति वा तद्वत् ᵛअविजे अकम्पे। ‘ओविजी भयचलनयोः’। अनुदात्तेत्तौदादिकः। तस्य लङ्युत्तमे रूपम् ॥

कुर्मस्त आयुरजरं यदग्ने यथा युक्तो जातवेदो न रिष्याः।
अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजात ॥ ७ ॥

कुर्मः। ते। आयुः। अजरम्। यत्। अग्ने। यथा। युक्तः। जातऽवेदः। न। रिष्याः।
अथ। वहासि। सुऽमनस्यमानः। भागम्। देवेभ्यः। हविषः। सुऽजात ॥ ७ ॥

इदं देवानां वाक्यम्। हे ᵛअग्ने ᵛयत् ᵛआयुः आयुष्यम् ᵛअजरं जरारहितमस्ति तत् ᵛते ᵛकुर्मः। ᵛयुक्तः तेनायुषा संयुक्तस्त्वं हे ᵛजातवेदः जातप्रज्ञ ᵛयथा ᵛन ᵛरिष्याः न म्रियसे तथा

१. त१.२.३.७–आद्दतवंतः; त४.६.८-म४.५.८–आवृतवंतः।

कुर्मः। ᵛअथ ᵛवहासि वह ᵛसुमनस्यमानः सौमनस्यं कुर्वन् वोढव्यं वहन्[1]। तदेव दर्शयति। ᵛहविषः यजमानप्रत्तस्य ᵛभागम्। केभ्यः। ᵛदेवेभ्यः। हे ᵛसुजात शोभनजन्मन्नग्ने ॥

**प्रयाजान्मे अनुयाजाँश्च केवलानूर्जस्वन्तं हविषो दत्त भागम्।**
**घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥ ८ ॥**

प्रऽयाजान्। मे। अनुऽयाजान्। च। केवलान्। ऊर्जस्वन्तम्। हविषः। दत्त। भागम्।
घृतम्। च। अपाम्। पुरुषम्। च। ओषधीनाम्।
अग्नेः। च। दीर्घम्। आयुः। अस्तु। देवाः ॥ ८ ॥

अनेनाग्निर्हविर्वहने दातव्यान्युक्त्वा दत्तेति[2] प्रतिजानाति। हे देवाः ᵛमे मह्यं ᵛप्रयाजान् प्रधानस्य प्रमुखे यष्टव्यानेतन्नामकान् हविर्भागान् तथा ᵛअनुयाजान् अनु प्रधानात्पश्चाद्यष्टव्यानेतन्नामकान् ᵛकेवलान् असाधारणान् ᵛदत्त प्रयच्छत। तथा ᵛऊर्जस्वन्तं प्रत्यभिघारणात्सारवन्तं ᵛहविषः सर्वस्यापि चरुपुरोडाशादेः ᵛभागं स्विष्टकृदाख्यं भागं दत्त। अथवोर्जस्वन्तं हविषो भागं प्रयाजानुयाजाख्यं[3] दत्तेति योज्यम्। किंच ᵛअपां सारभूतं ताभ्य उत्पन्नं वा ᵛघृतम् आज्यभागादिसाधनम् ᵛओषधीनाम् ओषधीभ्य उत्पन्नं ᵛपुरुषं ᵛच भागं दत्त। किंच ᵛअग्नेः मम ᵛदीर्घमायुः ᵛच ᵛअस्तु। वषट्कारकृतवधभयं मा भूदित्यर्थः। अमुमितिहासं प्रस्तुत्य कौषीतकिब्राह्मणं—'तस्मादाहुराग्नेयाः प्रयाजा आग्नेया अनुयाजा आग्नेयमाज्यमाग्नेयः पुरोडाशः' इति। 'शरीरदाया ह वा अग्नयो भवन्ति' इति च ब्राह्मणं 'पुरुषाहुतिर्ह्यस्य प्रियतमा' इति च ॥

**तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः।**
**तवाग्ने यज्ञो३यमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥ ९ ॥**

तव। प्रऽयाजाः। अनुऽयाजाः। च। केवले। ऊर्जस्वन्तः। हविषः। सन्तु। भागाः।
तव। अग्ने। यज्ञः। अयम्। अस्तु। सर्वः। तुभ्यम्। नमन्ताम्। प्रऽदिशः। चतस्रः ॥ ९ ॥

एवमग्निना[4] याच्यमाना देवाः प्रतिब्रुवते। हे अग्ने ᵛतव ᵛप्रयाजा ᵛअनुयाजाश्च ᵛकेवले असाधारणाः ᵛऊर्जस्वन्तः बलवन्तः ᵛहविषः ᵛभागाः ᵛसन्तु। हे अग्ने ᵛअयं ᵛसर्वः ᵛयज्ञः च ᵛतव ᵛअस्तु। तथा ᵛप्रदिशः प्रकृष्टा मुख्याः ᵛचतस्रः दिशः ᵛतुभ्यं ᵛनमन्ताम्। अत एहि हविर्वहेति शेषः ॥  ॥ ११ ॥

'विश्वे देवाः शास्तन' इति षड्टचं दशमं सूक्तं सौचीकस्याग्नेरार्षं वैश्वदेवम्। गतः सूक्तविनियोगः। स्रुगादापनात्पूर्वभाविनि जपे विनियुक्ता। सूत्रितं च—'विश्वे देवाः शास्तन मा यथेहाराधि होता निषदा यजीयान्' (आश्व. श्रौ. १. ४) इति ॥

**विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य।**
**प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि ॥ १ ॥**

विश्वे। देवाः। शास्तन। मा। यथा। इह। होता। वृतः। मनवै। यत्। निऽसद्य।
प्र। मे। ब्रूत। भागऽधेयम्। यथा। वः। येन। पथा। हव्यम्। आ। वः। वहानि ॥ १ ॥

---

१. त-भ—कुर्वन्। २. ग—तान्; त१.२.३.४.५.८-भ१.४.६—वाति; त६-भ२.४.८—चाति; मु—चानि। ३. भ१.२.७—प्रयाजाख्यं। ४. त१.२.३.६.७.८-भ—एवमग्निभिः।

एतत्सूक्तं कृत्स्नमाग्नेयम्। हे ᵛविश्वे ᵛदेवाः यूयं ᵛमा मां ᵛशास्तन अनुज्ञां दत्त। ᵛयथेह यज्ञे ᵛहोता देवानामाह्वाता सन् ᵛवृतः होतृत्वेन वृतोऽहं ᵛमनवै स्तौमि भवतः। ᵛयत् यस्मात् ᵛनिषद्य स्तौमि तस्माच्छास्तन। ᵛमे मम ᵛभागधेयं ᵛप्र ᵛब्रूत ᵛयथा ᵛवः यूयं भागं कल्पितवन्तः तथा[1] तं भागं प्र ब्रूत। ᵛयेन च ᵛपथा ᵛवः ᵛहव्यमा ᵛवहानि वहनं करोमि॥

अहं होता न्यसीदं यजीयान् विश्वे देवा मरुतो मा जुनन्ति।
अहरहरश्विनाध्वर्यवं वां ब्रह्मा समिद्भवति साहुतिर्वाम्॥ २॥

अहम्। होता। नि। असीदम्। यजीयान्। विश्वे। देवाः। मरुतः। मा। जुनन्ति।
अहःऽअहः। अश्विना। आध्वर्यवम्। वाम्।
ब्रह्मा। समऽइत्। भवति। सा। आऽहुतिः। वाम्॥ २॥

ᵛयजीयान् यष्टृतमः ᵛअहं ᵛहोता सन् ᵛन्यसीदं निषण्णोऽस्मि। निषदने तं निषण्णं ᵛविश्वे व्याप्ताः ᵛमरुतः ᵛदेवाः ᵛजुनन्ति प्रेरयन्ति हविर्वहनाय। हे ᵛअश्विना[2] ᵛवां युवयोः ᵛआध्वर्यवम् ᵛअहरहः प्रतिदिनं कर्तव्यमिति शेषः। आध्वर्यवं भवद्भ्यामनुज्ञातव्यमित्यर्थः। ᵛब्रह्मा ᵛभवति भवतु। कः। ᵛसमित् समिद्धश्चन्द्रमाः। चन्द्रमा ब्रह्मा भवतु। किंच ᵛसा[3]। स[3] इत्यर्थः। स च समित् समिद्धश्चन्द्रमाः ᵛवां युवयोर्होमार्थं वां[4] युवाभ्यां क्रियमाणायाध्वर्यवकर्मणे ᵛआहुतिः भवति भवत्वित्यर्थः। सोमात्मको हि चन्द्रमा हूयते। 'एष वै सोमो राजा' इत्युपक्रम्य 'तदेवोभयं भवति' इति हि छन्दोगब्राह्मणम्। अथवैवं योजना। याहुतिराध्वर्यवमनुष्ठितवद्भ्यां होतव्या सा वां युवयोः युवाभ्यां भवति भवतु। आध्वर्यवं वामित्यस्यैव विवरणमेतत्॥

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः।
अहरहर्जायते मासिमास्यथा देवा दधिरे हव्यवाहम्॥ ३॥

अयम्। यः। होता। किः। ऊँ इति। सः। यमस्य।
कम्। अपि। ऊहे। यत्। समऽअञ्जन्ति। देवाः।
अहःऽअहः। जायते। मासिऽमासि। अथ। देवाः। दधिरे। हव्यऽवाहम्॥ ३॥

ᵛयः ᵛअयं ᵛहोता ᵛसः ᵛकिः को भवति। कीदृशो भवति। तस्य को व्यापार इत्यर्थः। तस्योत्तरमुच्यते। ᵛयमस्य मृत्योः[5] भीतः सन्निति शेषः। ᵛकमपि हुतम् ᵛऊहे वहति। यद्वा सर्वमृत्विग्जातं नियमयतीति यमो यजमानः। तस्य कमपि हुतमूहे वहति देवान्प्रति। ᵛयत्समञ्जन्ति यद्धविः प्राप्नुवन्ति ᵛदेवाः। किंचाग्निः ᵛअहरहः प्रतिदिनमग्निहोत्रार्थं[6] ᵛजायते प्रादुर्भवति। तथा ᵛमासिमासि प्रतिमासं जायते पितृयज्ञार्थम्[7]। एतत्कालद्वयमुपलक्षणं पक्षचतुर्मासषण्माससंवत्सरादीनाम्। अपरे पुनरेवमाहुः। अहरहः[8] सूर्यात्मना जायते मासिमासि चन्द्रात्मनेति। ᵛअथ तमिममग्निं ᵛदेवा[9] ᵛदधिरे ᵛहव्यवाहं हविषां वोढारम्। एवमग्निः स्वात्मानं स्वयमेवोक्तवान्॥

---

१. ग-त-भ-'तथा' नास्ति। २. त१.२.७-मु-अश्विनाश्विनौ। ३. ग१-भ६-सोम; ग४-त१.२.३.७-सामं; मु-सा स सोम। ४. त१.२.३.६.७.८-भ१.२.६.८-'वां' नास्ति। ५. ग-त-भ-मु-मृतेः। ६. ग-त४.५-भ४-°होत्राद्यर्थं। ७. ग-त४.५-भ४-°यज्ञाद्यर्थं। ८. त१.२.३.७-भ-'अहरहः' नास्ति। ९. त-भ-'देवा' नाति।

मां देवा दधिरे हव्यवाहमपम्लुक्तं बहु कृच्छ्रा चरन्तम् ।
अग्निर्विद्वान्यज्ञं नः कल्पयाति पञ्चयामं त्रिवृतं सप्ततन्तुम् ॥ ४ ॥

माम् । देवाः । दधिरे । हव्यऽवाहम् । अपऽम्लुक्तम् । बहु । कृच्छ्रा । चरन्तम् ।
अग्निः । विद्वान् । यज्ञम् । नः । कल्पयाति । पञ्चऽयामम् । त्रिऽवृतम् । सप्तऽतन्तुम् ॥४॥

ᵛमाम् अग्निं ᵛदेवाः ᵛहव्यवाहं हविर्वोढारं ᵛदधिरे कृतवन्तः । कीदृशं माम् । ᵛअपम्लुक्तम् अपक्रम्यागतं ᵛबहु ᵛकृच्छ्रा बहूनि कृच्छ्राणि स्थानानि ᵛचरन्तं गच्छन्तम् । कया मनीषया दधिर इत्युच्यते । अयम् ᵛअग्निर्विद्वान् सर्वं जानन् ᵛनः अस्माकं ᵛयज्ञं ᵛकल्पयाति कल्पयति । कीदृशं यज्ञम् । ᵛपञ्चयामं पञ्चविधगमनम् । पाङ्क्तो हि यज्ञः । ᵛत्रिवृतं सवनत्रयभेदेन त्रिप्रकारं ᵛसप्ततन्तुं सप्तभिश्छन्दोमयैः स्तुतिभिर्विस्तृतम् ॥

आ वो यक्ष्यमृतत्वं सुवीरं यथा वो देवा वरिवः कराणि ।
आ बाह्वोर्वज्रमिन्द्रस्य धेयामथेमा विश्वाः पृतना जयाति ॥ ५ ॥

आ । वः । यक्षि । अमृतऽत्वम् । सुऽवीरम् । यथा । वः । देवाः । वरिवः । कराणि ।
आ । बाह्वोः । वज्रम् । इन्द्रस्य । धेयाम् । अथ । इमाः । विश्वाः । पृतनाः । जयाति ॥५॥

हे देवाः ᵛवः युष्मान् ᵛआ ᵛयक्षि आयाचे । किम् । ᵛअमृतत्वम् अविनाशित्वं ᵛसुवीरं सुपुत्रं च । हे ᵛदेवाः ᵛवः युष्माकं ᵛवरिवः परिचर्यां हवीरूपं धनं वा ᵛयथा ᵛकराणि करवाणि तदर्थमित्यर्थः । किंच ᵛइन्द्रस्य ᵛबाह्वोः ᵛवज्रम् ᵛआ ᵛधेयाम् । ग्राहयामीत्यर्थः । अग्नेर्होतृत्वाभावे इन्द्रस्य सोमाद्यभावादुर्बलत्वेन वज्रधारणं नोपपद्यते । अतस्तत्कृत्वा वज्रं ग्राहयामीत्यर्थः । ᵛअथ एवं सति ᵛइमाः ᵛविश्वाः सर्वाः ᵛपृतनाः शत्रुसेनाः ᵛजयाति जयति । जयतु वा ॥

त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ॥ ६ ॥

त्रीणि । शता । त्री । सहस्राणि । अग्निम् । त्रिंशत् । च । देवाः । नव । च । असपर्यन् ।
औक्षन् । घृतैः । अस्तृणन् । बर्हिः । अस्मै । आत् । इत् । होतारम् । नि । असादयन्त ॥६॥

ᵛत्रीणि ᵛशता शतानि त्रीणि ᵛसहस्राणि ᵛत्रिंशच्च ᵛनव ᵛच एतत्संख्याकाः ᵛदेवाः ᵛअग्निं माम् ᵛअसपर्यन् पर्यचरन् । परिचर्याप्रकार[1] उच्यते । ᵛघृतैः क्षरद्भिराज्यैः ᵛऔक्षन् सिक्तवन्तः । ᵛअस्मै अग्नये मह्यं ᵛबर्हिः ᵛअस्तृणन् आस्तृतवन्तः । ᵛआदित् आस्तरणानन्तरं ᵛहोतारम् आह्वातारं ᵛन्यसादयन्त नियमेनासादितवन्तः ॥ ॥ १२ ॥

'यमैच्छाम' इत्येकादशर्चमेकादशं सूक्तम् । देवानां वाक्यत्वाद्देवा ऋषयः । 'तदद्य' इति तृचस्य सौचीकोऽग्निर्ऋषिः । 'तन्तुं तन्वन्' इत्याद्या अष्टमीवर्जिता जगत्यः । अष्टमी शिष्टाश्च त्रिष्टुभः । तथा चानुक्रान्तं—'तन्तुमाद्या जगत्योऽष्टमीवर्जम्' इति । शिष्टमुक्तम् । गतः सूक्तविनियोगः ॥

---

१. ग-त१.२.३.७.८-भ१.२.५.६.७.८-मु-परिचार°; भ४-परिचरण° ।

यमैच्छा॑म॒ मन॑सा॒ सो॒३॑ऽयमागा॑द्य॒ज्ञस्य॑ वि॒द्वान् परु॑षश्चिकि॒त्वान् ।
स नो॑ यक्षद्दे॒वता॑ता॒ यजी॑यान्नि॒ हि षत्स॒दन्त॑रः॒ पूर्वो॑ अ॒स्मत् ॥ १ ॥

यम् । ऐच्छा॑म । मन॑सा । सः । अ॒यम् । आ । अ॒गा॒त् । य॒ज्ञस्य॑ । वि॒द्वान् । परु॑षः । चि॒कि॒त्वान् ।
सः । न॒ः । य॒क्ष॒त् । दे॒वऽता॑ता । यजी॑यान् । नि । हि । सत्स॑त् । अन्त॑रः । पूर्वः॑ । अ॒स्मत् ॥ १ ॥

^v^यम् अग्निम् ^v^ऐच्छाम अन्विष्टवन्तो वयं ^v^मनसा हविष्प्रापणबुद्ध्या मह्यं हविः प्रापयत्विति बुद्ध्येत्यर्थः । ^v^सोऽयम् अग्निः ^v^आगात् आजगाम । कीदृशोऽग्निः । ^v^यज्ञस्य यज्ञं ^v^विद्वान् जानंस्तथा ^v^परुषः परूंषि संधातव्यान्यङ्गानि ^v^चिकित्वान् अभिगच्छन् । ^v^सः अग्निः ^v^यजीयान् यष्टृतमः ^v^नः अस्मान् ^v^देवताता देवतातौ यज्ञे ^v^यक्षत् यजतु । ^v^नि ^v^षत्सद्धि न्यसीदत् खलु वेद्यामिति शेषः । कीदृशः सन् । ^v^अन्तरः ऋत्विजां यष्टव्यानां देवानां च मध्ये संचरन् ^v^अस्मत् ^v^पूर्वः अस्मत्तो देवेभ्यः पूर्वभावी सन् । अग्निं समिध्य पश्चाद्धि देवा आहूयन्ते ॥

दर्शपूर्णमासयोः पुरा ‘ अराधि ’ इत्येषा जप्या । सूत्रमुदाहृतम् ॥

अरा॑धि॒ होता॑ नि॒षदा॒ यजी॑यान॒भि प्रयां॑सि॒ सुधि॑तानि॒ हि ख्यत् ।
यजा॑महै॒ य॒ज्ञिया॒न् हन्त॑ दे॒वाँ ईळा॑महा॒ ईड्याँ॒ आज्ये॑न ॥ २ ॥

अरा॑धि । होता॑ । नि॒ऽसदा॑ । यजी॑यान् । अ॒भि । प्रयां॑सि । सु॒ऽधि॑तानि । हि । ख्यत् ।
यजा॑महै । य॒ज्ञिया॑न् । हन्त॑ । दे॒वान् । ईळा॑महै । ईड्या॑न् । आज्ये॑न ॥ २ ॥

अयमग्निः ^v^होता होमनिष्पादकः ^v^यजीयान् यष्टृतमश्च सन् ^v^निषदा वेद्यां निषदनेन ^v^अराधि सिद्धोऽभूत् । आहुतियोग्योऽभूदित्यर्थः । तथाभूतोऽयं ^v^सुधितानि सुष्ठु निहितानि ^v^प्रयांसि चरुपुरोडाशाद्यन्नानि ^v^अभि ^v^हि ^v^ख्यत् अभिचष्टे सर्वतः पश्यति । हीति पूरणः । कया बुद्ध्येति । ^v^यज्ञियान् यष्टव्यान् आहुतिभाजः ^v^देवान् ^v^हन्त शीघ्रम् ^v^आज्येन ^v^यजामहै[1] तथा ^v^ईड्यान् स्तुतिभाजो देवान् स्तुत्या ^v^ईळामहै इति बुद्ध्येति शेषः ॥

यस्मिन्यजमाने जीवति मृतशब्दो जायते तस्य सुरभिमतीष्टिः कर्तव्या । ‘ साध्वीमकः ’ इत्येषा तत्र याज्या । सूत्रितं च—‘ अग्निर्होता न्यसीदद्यजीयान् साध्वीमकर्देववीतिं नो अद्य ’ ( आश्व. श्रौ. ३. १३ ) इति ॥

सा॒ध्वीम॑कर्दे॒ववी॑तिं नो अ॒द्य य॒ज्ञस्य॑ जि॒ह्वाम॑विदाम॒ गुह्या॑म् ।
स आयु॒रागा॑त्सुर॒भिर्वसा॑नो भ॒द्राम॑कर्दे॒वहू॑तिं नो अ॒द्य ॥ ३ ॥

सा॒ध्वीम् । अ॒कः॒ । दे॒वऽवी॑तिम् । न॒ः । अ॒द्य । य॒ज्ञस्य॑ । जि॒ह्वाम् । अ॒वि॒दा॒म॒ । गुह्या॑म् ।
सः । आयु॑ः । आ । अ॒गा॒त् । सु॒र॒भिः । वसा॑नः । भ॒द्राम् । अ॒कः॒ । दे॒वऽहू॑तिम् । न॒ः । अ॒द्य ॥ ३ ॥

अयमग्निः ^v^अद्य ^v^नः अस्माकं ^v^देववीतिं देवानामागमनवन्तं देवानां हविर्भक्षणोपेतं वा यज्ञं ^v^साध्वीमकः साधुमकरोत् । वयं च ^v^यज्ञस्य ^v^गुह्यां गूढतरां ^v^जिह्वामविदाम लब्धवन्तः स्म । अग्निर्हि यज्ञस्य जिह्वा तेन देवानां पानाज्जिह्वात्वेनोपचारः । ^v^सः तादृशोऽग्निः ^v^सुरभिः सुगन्धः

---

१. ग-त१.२.३.६.७.८-भ-मु-यजामहै इति ।

ᵛआयुः देवैः दत्तमायुष्यं ᵛवसानः आच्छादयन् ᵛआगात् आगच्छति। आगत्य च ᵛनः अस्मदर्थं ᵛदेवहूतिं देवानामाह्वानवन्तं[1] यज्ञं ᵛभद्रामकः कल्याणं कृतवान् ᵛअद्य इदानीम् ॥

दर्शपूर्णमासयोः सामिधेन्यर्थं प्रेषितेन होत्रा 'तदद्य वाचः' इत्येषा जप्या। स्रुगादापनात् पूर्वमपि[2] जप्या। सूत्रितं च—'तदद्य वाचः प्रथमं मसीयेति समाप्य' (आश्व.श्रौ. १.२) इति ॥

**तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम।**
**ऊर्जाद उत यज्ञियासः पञ्च जना मम होत्रं जुषध्वम् ॥ ४ ॥**

तत्। अद्य। वाचः। प्रथमम्। मसीय। येन। असुरान्। अभि। देवाः। असाम।
ऊर्जऽअदः। उत। यज्ञियासः। पञ्च। जनाः। मम। होत्रम्। जुषध्वम् ॥ ४ ॥

इदमुत्तरं चाग्नेर्वाक्यमित्युक्तम्। ᵛअद्य इदानीं ᵛप्रथमम्। मुख्यनामैतत्। वाचां मुख्यं ᵛतत् ᵛवाचः वचः वचनं ᵛमसीय मंसीय उच्चारयामि। ᵛयेन वचसा अहं ᵛदेवाः च वयम् ᵛअसुरान् ᵛअभि ᵛअसाम अभिभवेम। किं तत् प्रथमं वचनमिति उच्यते। ᵛऊर्जादः हे अन्नादः ᵛउत अपि च ᵛयज्ञियासः यज्ञार्हा हे ᵛपञ्च ᵛजनाः देवमनुष्यादयः यूयं ᵛमम ᵛहोत्रं ᵛजुषध्वं सेवध्वमिति। एवं बहूच्यमानेऽग्निमनूचन्ति सर्वे देवा इत्यभिप्रायः। अत्र 'तदद्य वाचः' (निरु. ३. ८) इत्यादि निरुक्तं द्रष्टव्यम् ॥

**पञ्च जना मम होत्रं जुषन्तां गोजाता उत ये यज्ञियासः।**
**पृथिवी नः पार्थिवात्पात्वंहसोऽन्तरिक्षं दिव्यात्पात्वस्मान् ॥ ५ ॥**

पञ्च। जनाः। मम। होत्रम्। जुषन्ताम्। गोऽजाताः। उत। ये। यज्ञियासः।
पृथिवी। नः। पार्थिवात्। पातु। अंहसः। अन्तरिक्षम्। दिव्यात्। पातु। अस्मान् ॥५॥

ᵛपञ्च ᵛजनाः देवादयः ᵛमम ᵛहोत्रं हवमाह्वानं ᵛजुषन्तां सेवन्ताम्। अपि च ᵛगोजाताः भूम्यामुत्पन्नाः। यद्वा। गोशब्देन तज्जं पय आदिकमुच्यते। हविरर्थं प्रादुर्भूता इत्यर्थः। तादृशा ये सन्ति। ᵛउत अपि च ᵛये ᵛयज्ञियासः यज्ञार्हाः[3] सन्ति ते मम होत्रं[4] जुषन्ताम्[4]। किंच ᵛपृथिवी पृथिवीदेवता ᵛपार्थिवात् पृथिवीसंबन्धात् ᵛनः अस्मान् ᵛअंहसः पापात् ᵛपातु रक्षतु। तथा ᵛअन्तरिक्षम् अन्तरिक्षदेवता ᵛदिव्यात् आन्तरिक्षादंहसः पापसकाशात्[5] ᵛअस्मान् ᵛपातु ॥　　॥१३॥

गार्हपत्यादारभ्याहवनीयाद्वेदिं वेदतृणैरास्तृणाति 'तन्तुम्' इत्यनया। सूत्रितं च—'अविधून्वन् संततं स्तृणन् सव्येन गार्हपत्यादाहवनीयमेति तन्तुं तन्वन्नजसो भानुमन्विहि' (आश्व. श्रौ. १. ११) इति। अग्निहोत्रहोमेऽप्यनयोदकधारा स्रावणीया। सूत्रितं च—'गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्नजसो भानुमन्विहि' (आश्व. श्रौ. २. २) इति। अग्न्यन्तराले श्वातिक्रमणेऽनया गार्हपत्याहवनीययोर्मध्यमुदकेन भस्मना च पूरयेत्। सूत्रितं च—'गार्हपत्याहवनीययोरन्तरं भस्मराज्योदकराज्या च संतनुयात्' (आश्व. श्रौ. ३.१०) इति। आग्निमारुतेऽप्येषा धाय्या। सूत्रितं च—'तन्तुं तन्वन्नजसो भानुमन्विह्येवा न इन्द्रो मघवा विरप्शी' (आश्व. श्रौ.५.२०) इति ॥

---

१ ग-त१.२.८-भ६–देवानां हवनवंतं, भ७–देवानां आह्वातारं। २. ग४–पूर्वमेव। ३. ग-त-भ४. मु–यज्ञार्हा देवाः। ४. त३-भ८–होत्रं हवमाह्वानं जुषंतां सेवंतां। ५. ग-त४.५-भ४–सकाशात्; त१.२.६.७.८-भ१.६.७-मु–पापात् सकाशात्।

तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्।
अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥ ६ ॥

तन्तुम्। तन्वन्। रजसः। भानुम्। अनु। इहि। ज्योतिष्मतः। पथः। रक्ष। धिया। कृतान्। अनुल्बणम्। वयत। जोगुवाम्। अपः। मनुः। भव। जनय। दैव्यम्। जनम् ॥ ६ ॥

हे अग्ने ᵛतन्तुं यज्ञं ᵛतन्वन् विस्तारयन् ᵛरजसः रञ्जनात्मकस्य लोकस्य ᵛभानुं भासकमादित्यम् ᵛअन्विहि अनुगच्छ। रश्मिद्वारा सूर्यमण्डलं प्रविशेत्यर्थः। किंच ᵛज्योतिष्मतः प्रकाशवतो यज्ञस्य ᵛपथः गमनमार्गान्। अथवा ज्योतिष्मतो दीप्तिमतः स्वर्गस्य पथो मार्गान् देवयानान्। ᵛरक्ष पालय। कीदृशान्मार्गान्। ᵛधिया कर्मणा ᵛकृतान् संपादितान्। किंच सोऽग्निः ᵛजोगुवां स्तोतॄणाम् ᵛअपः। कर्मनामैतत्। क्रियया व्याप्यं कर्म ᵛअनुल्बणम् अनतिरिक्तं ᵛवयत करोतु। 'यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शान्तिः' (तै. सं. ३. ४. ३. ७) इति हि ब्राह्मणम्। स त्वं ᵛमनुर्भव मन्तव्यो भव। स्तुत्यो भवेत्यर्थः। किंच ᵛदैव्यं ᵛजनं देवसंघं ᵛजनय उत्पादय। यज्ञाभिगमनवन्तं कुर्वित्यर्थः॥

अक्षानहो नह्यतनोत सोम्या इष्कृणुध्वं रशना ओत पिंशत।
अष्टावन्धुरं वहताभितो रथं येन देवासो अनयन्नभि प्रियम् ॥ ७ ॥

अक्षऽनहः। नह्यतन। उत। सोम्याः। इष्कृणुध्वम्। रशनाः। आ। उत। पिंशत। अष्टाऽवन्धुरम्। वहत। अभितः। रथम्। येन। देवासः। अनयन्। अभि। प्रियम् ॥ ७ ॥

अत्र यज्ञजिगमिषवो देवाः परस्परं ब्रुवते। हे ᵛसोम्याः सोमार्हा देवाः यूयम् ᵛअक्षानहः अक्षेषु नह्यान् बन्धनीयानश्वान् ᵛनह्यतन नह्यत बध्नीत[1] रथे। ᵛउत अपि च ᵛरशनाः अश्वबन्धनप्रग्रहान् ᵛइष्कृणुध्वं निष्कुरुत सम्यक् संस्कुरुत। नकारलोपश्छान्दसः। ᵛउत अपि च ᵛआ ᵛपिंशत। 'पिश अवयवे'। अश्वानलंकुरुतेत्यर्थः। ᵛअष्टावन्धुरम्। वन्धुरं सारथिनिवासस्थानम्। अष्टसंख्याकवन्धुरोपेतं ᵛरथं सूर्यसंबन्धिनम् ᵛअभितः सर्वतः ᵛवहत। सूर्यरथेन साकं युष्मदीयाग्रथान् यज्ञं प्रति गमयतेत्यर्थः। ᵛयेन ᵛदेवासः देवाः ᵛप्रियम् अस्मान्[2] ᵛअनयन् अभिगमयन्ति तं रथमभितो वहतेति संबन्धः। यद्वा। तं यज्ञं प्रति वहतेति योज्यम् ॥

वैवाहिके प्रयाणे यदि नावा तार्या नदी स्यात् तदानीम् 'अश्मन्वती' इत्यर्धर्चेन वधूं नावमारोहयेत्। उत्तरेणार्धर्चेन नदीमुत्क्रमयेत्। सूत्रितं च—'अश्मन्वती रीयते सं रभध्वमित्यर्धर्चेन नावमारोहयेदुत्तरेणोत्क्रमयेत्' (आश्व. गृ. १. ८. २-३) इति॥

अश्मन्वती रीयते सं रभध्वमुत्तिष्ठत प्र तरता सखायः।
अत्रा जहाम ये असन्नशेवाः शिवान्वयमुत्तरेमाभि वाजान् ॥ ८ ॥

अश्मन्ऽवती। रीयते। सम्। रभध्वम्। उत्। तिष्ठत। प्र। तरत। सखायः। अत्र। जहाम। ये। असन्। अशेवाः। शिवान्। वयम्। उत्। तरेम। अभि। वाजान् ॥८॥

---

१. त-भ-मु—बध्नंतु। २. ग-त-भ-मु—आत्मानं।

अनयापि देवा यज्ञजिगमिषवः परस्परं ब्रुवते। ᵛअश्मन्वती नाम नदी ᵛरीयते गच्छति। ‘री गतिरेषणयोः’। तां यज्ञगमनायोत्तरीतुम् ᵛउत्तिष्ठत उद्गच्छत। तथा कृत्वा ᵛप्र ᵛतरत तां नदीमुल्लङ्घयत। हे ᵛसखायः यजमानस्य सखिभूता इति देवानां संबोधनम्। ᵛअत्र अस्यां नद्यां ᵛजहाम परित्यजाम। कानिति उच्यते। ᵛये ᵛअशेवाः। शेवमिति सुखनाम। येऽसुखभूताः ᵛअसन् अभवन् अस्मानाश्रित्य वर्तन्ते ताञ्जहाम। तथा कृत्वा ᵛशिवान् सुखकराणि[1] ᵛवाजान् अन्नानि हवींषि ᵛअभि प्राप्तुम् ᵛउत्तरेम॥

त्वष्टा माया वेदपसामपस्तमो बिभ्रत्पात्रा देवपानानि शंतमा।
शिशीते नूनं परशुं स्वायसं येन वृश्चादेतशो ब्रह्मणस्पतिः॥ ९॥

त्वष्टा। मायाः। वेत्। अपसाम्। अपःऽतमः। बिभ्रत्। पात्रा। देवऽपानानि। शम्ऽतमा।
शिशीते। नूनम्। परशुम्। सुऽआयसम्। येन। वृश्चात्। एतशः। ब्रह्मणः। पतिः॥९॥

अयं ᵛत्वष्टा देवशिल्पी ᵛमायाः। कर्मनामैतत्। कर्माणि पात्रनिर्माणविषयाणि ᵛवेत् वेत्ति जानाति। स च[2] त्वष्टा ᵛअपसां शोभनकर्मवतां मध्ये ᵛअपस्तमः अतिशयेन शोभनकर्मा ᵛदेवपानानि देवाः पिबन्ति येषु तानि ᵛपात्रा सोमपात्राणि ᵛबिभ्रत् धारयन् वर्तत इति शेषः। स च त्वष्टा ᵛनूनम् इदानीमग्नौ हविर्वहनायाङ्गीकृते सति ᵛस्वायसं शोभनायःसारभूतं ᵛपरशुं ᵛशिशीते तीक्ष्णयति। त्वष्टा पात्रसंपादनार्थं ᵛयेन परशुना ᵛएतशः एतशवर्णः ᵛब्रह्मणस्पतिः ब्रह्मणो मन्त्रस्य पाता पात्रादिसंपादनरूपस्य कर्मणः स्वामी वा ᵛवृश्चात् वृश्चति[3]॥

सतो नूनं कवयः सं शिशीत वाशीभिर्याभिरमृताय तक्षथ।
विद्वांसः पदा गुह्यानि कर्तन येन देवासो अमृतत्वमानशुः॥ १०॥

सतः। नूनम्। कवयः। सम्। शिशीत। वाशीभिः। याभिः। अमृताय। तक्षथ।
विद्वांसः। पदा। गुह्यानि। कर्तन। येन। देवासः। अमृतऽत्वम्। आनशुः॥ १०॥

हे ᵛकवयः मेधाविनस्त्वष्टुर्मम शिष्या ऋभवः ᵛसतः। सन्त इत्यर्थः। प्रशस्ता यूयं ᵛनूनम् इदानीं ᵛसं ᵛशिशीत अत्यर्थं तीक्ष्णीकुरुत वाशीः[4]। ᵛयाभिः[5] ᵛवाशीभिः[5] पात्राणि ᵛअमृताय सोमाय। तत्पानायेत्यर्थः। यद्वा युष्माकममृतत्वाय। तदर्थं ᵛतक्षथ संपादयथ। हे कवयः ᵛविद्वांसः यूयं ᵛगुह्यानि गोपनीयानि ᵛपदा पदानि निवासस्थानानि ᵛकर्तन कुरुत। ᵛयेन स्थानकरणेन ᵛदेवासः देवा यूयम् ᵛअमृतत्वमानशुः प्राप्ता यूयम्। एवं स्वशिष्यानाह॥

गर्भे योषामदधुर्वत्समासन्यपीच्येन मनसोत जिह्वया।
स विश्वाहा सुमना योग्या अभि सिषासनिर्वनते कार इज्जितिम्॥ ११॥

गर्भे। योषाम्। अदधुः। वत्सम्। आसनि। अपीच्येन। मनसा। उत। जिह्वया।
सः। विश्वाहा। सुऽमनाः। योग्याः। अभि। सिसासनिः। वनते। कारः। इत्। जितिम्॥ ११॥

---

१. ग-त-भ-मु—सुखकरान्। २. ग-त-भ-मु—‘च’ नास्ति। ३. ग त-भ४-मु—वृश्चति पात्राणि।
४. त१.२.६.७.८-भ—‘वाशीः’ नास्ति। ५. त१.२.६.७.८-भ१.२.६.७.८-वाशीभिर्याभिः।

ते[1] मरुतः[1] गर्भे मृताया गोर्मध्ये ग्राहके चर्मणि मृताया गोः संबन्धिनि योषां कांचिद्गाम् अदधुः धारितवन्तः । ' निश्चर्मणो गामरिणीत धीतिभिः ( ऋ. सं. १. १६१. ७ ) इत्युक्तम् । तथा आसनि मृताया आस्ये वत्सम् अदधुः । केन साधनेन अपीच्येन[2] मनसा देवत्वमाकाङ्क्षता उत अपि च जिह्वया । सादृश्यप्रधानोऽयं निर्देशः । जिह्वावदायतया वाऽयेत्यर्थः । यद्वा[3] । जिह्वया युक्तां योषामिति संबन्धः । सिषासनिः संभजनशीलः सः ऋभुसंघः विश्वाहा सर्वेष्वहःसु[4] सर्वदा योग्याः स्वोचिताः सुमनाः[5] स्तुतीः अभि वनते । स च संघः जिर्तिं शत्रुजयं कामं कार इत् कर्तैव शत्रुजयकर्तैव ॥ ॥ १४ ॥

' तां सु ते ' इति षड्ऋचं द्वादशं सूक्तं वामदेवगोत्रस्य बृहदुक्थस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं—' तां सु षड् बृहदुक्थो वामदेव्यः ' इति । समूळ्हस्य दशरात्रस्य द्वितीये छन्दोम एतत्सूक्तम् । सूत्रितं च—' अपूर्व्या पुरुतमानि तां सु ते कीर्तिं त्वं महाँ इन्द्र ' ( आश्व. श्रौ. ८. ७ ) इति । महाव्रते निष्केवल्य एतत्सूक्तम् । सूत्रितं च—' तां सु ते कीर्तिं मघवन्महित्वा भूय इद्वावृधे वीर्याय ' ( ऐ. आ. ५. १. ६ ) इति ॥

**तां सु ते॑ की॒र्तिं म॑घवन्महि॒त्वा यत्त्वा॑ भी॒ते रोद॑सी॒ अह्व॑येताम् ।**
**प्रावो॑ दे॒वाँ आति॑रो॒ दास॒मोजः॑ प्र॒जायै॑ त्व॒स्यै॒ यदशि॑क्ष इन्द्र ॥ १ ॥**

ताम् । सु । ते॒ । की॒र्तिम् । म॒घ॒ऽव॒न् । म॒हि॒ऽत्वा । यत् । त्वा॒ । भी॒ते इति॑ । रोद॑सी॒ इति॑ । अह्व॑येताम् ।
प्र । आ॒वः॒ । दे॒वान् । आ । अ॒तिरः॑ । दास॑म् । ओजः॑ ।
प्र॒ऽजायै॑ । त्व॒स्यै॑ । यत् । अशि॑क्षः । इ॒न्द्र॒ ॥ १ ॥

हे इन्द्र मघवन् धनवन् ते तव संबन्धिनीं महित्वा महत्त्वेनागतां कीर्तिं सु सुष्टु कीर्तयामीति शेषः । किंच यत् यदा त्वा त्वां प्रति भीते असुरैर्भयं प्राप्ते रोदसी द्यावापृथिव्यौ अह्वयेतां अवेत्यब्रूतां[6] तदानीं देवान् प्रावः प्रारक्षः । तथा दासं देवानामुपक्षयकर्तारमसुरम् आतिरः व्यनाशयः । असुरान् हत्वा देवानां रक्षणेन द्यावापृथिव्योः भीतिं[7] पर्यहर इति यदस्ति किंच त्वस्यै एकस्यै प्रजायै यजमानरूपायै यत्[8] बलम्[8] अशिक्षः प्रायच्छः । तां कीर्तिं कीर्तयामीत्यर्थः ॥

**यदच॑रस्त॒न्वा॑ वावृधा॒नो बला॑नीन्द्र प्रब्रुवा॒णो जने॑षु ।**
**मा॒येत्सा ते॒ यानि॑ यु॒द्धान्या॒हुर्नाद्य शत्रुं॒ न॒नु पु॒रा वि॑वित्से ॥ २ ॥**

यत् । अच॑रः । त॒न्वा॑ । व॒वृ॒धा॒नः । बला॑नि । इ॒न्द्र॒ । प्र॒ऽब्रु॒वा॒णः । जने॑षु ।
मा॒या । इत् । सा । ते॒ । यानि॑ । यु॒द्धानि॑ । आ॒हुः । न । अ॒द्य । शत्रु॑म् । न॒नु । पु॒रा । वि॒वि॒त्से॒ ॥ २ ॥

हे इन्द्र तन्वा शरीरेण स्तोत्रेण वा वावृधानः वर्धमानः जनेषु प्राणिषु बलानि प्रब्रुवाणः वृत्रवधादिरूपाणि सामर्थ्यानि प्रकर्षेण कथयन् अचरः इति यत् संचारं कृतवानिति यदस्ति ते तव सा गतिः मायेत् मायैव । मृषेत्यर्थः[9] । किंच यानि युद्धानि शत्रुविषयाणि आहुः ब्रुवते

---

१. ग-त—तेमी मरुतो । २. ग-त-भ२—' अपीच्येन ' नास्ति । ३. त-भ४.५.६.८—यद्वा अपि च । ४. त१.३.७-मु—सर्वेष्वप्यहःसु । ५. त१.२.३.७—सुमनाः सममाना । ६. ग-त४.५—रक्षेत्यब्रूतां; त१.२.३.८-भ२.४.६.८—अद्देत्यब्रूतां । ७. त१.२.३.७-मु—भारं । ८. त१.२.७-भ—तद्बलं; त३—तद्धनं । ९. त-मु—वृथेत्यर्थः ।

पुराविद[1] ऋषयः तान्यपि मायैव। कुत इति आह। ᵛअद्य इदानीं ᵛशत्रुं हन्तव्यं ᵛन ᵛविवित्से न लभसे। अद्य मा भूत् पूर्वं हतवानस्मीति यत्[2] ब्रूषे तदपि नेत्याह। ᵛननु इति प्रश्ने। किं ᵛपुरा शत्रुमलभथाः। तदपि नेत्यर्थः॥

**क उ नु ते महिमनः समस्यास्मत्पूर्व ऋषयोऽन्तमापुः।**
**यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः॥ ३॥**

कः। ऊँ इति। नु। ते। महिमनः। समस्य। अस्मत्। पूर्वे। ऋषयः। अन्तम्। आपुः।
यत्। मातरम्। च। पितरम्। च। साकम्। अजनयथाः। तन्वः। स्वायाः॥ ३॥

हे इन्द्र ᵛते तव ᵛमहिमनः महिम्नः ᵛसमस्य सर्वस्यापि ᵛअन्तं पारम् ᵛअस्मत्[3] अस्मत्तः ᵛपूर्वे ᵛऋषयः[4] ᵛके[4] ᵛआपुः प्राप्नुवन्। न केऽपीत्यर्थः। यद्यपि महत्त्वं प्रख्यापयन्ति तथापि न कार्त्स्न्येनेति। तत्र कारणमाह। ᵛयत् यस्मात् ᵛमातरं ᵛच ᵛपितरं ᵛच। 'द्यौः पिता पृथिवी माता' (तै. ब्रा. ३.७.५.४-५) इति हि श्रुतम्। अतो द्यावापृथिव्यावित्यर्थः। ते उभे अपि ᵛसाकं सहैव ᵛस्वायाः ᵛतन्वः स्वकीयाच्छरीरात् ᵛअजनयथाः उदपादयः। अतो नापुरिति संबन्धः॥

**चत्वारि ते असुर्याणि नामादाभ्यानि महिषस्य सन्ति।**
**त्वमङ्ग तानि विश्वानि वित्से येभिः कर्माणि मघवञ्चकर्थ॥ ४॥**

चत्वारि। ते। असुर्याणि। नाम। अदाभ्यानि। महिषस्य। सन्ति।
त्वम्। अङ्ग। तानि। विश्वानि। वित्से। येभिः। कर्माणि। मघऽवन्। चकर्थ॥ ४॥

हे इन्द्र ᵛमहिषस्य महतः पूज्यस्य ᵛते तव ᵛचत्वारि ᵛअसुर्याणि असुरविघातीनि ᵛअदाभ्यानि अन्यैरहिंस्यानि उत्तरसूक्त उपान्त्यवर्जिते 'दूरे तन्नाम' इत्यादिषु प्रतिपादितानि यानि ᵛनाम नामकानि शरीराणि ᵛसन्ति ᵛअङ्ग सखे ᵛत्वं ᵛतानि ᵛविश्वानि सर्वाणि ᵛवित्से वेत्सि जानासि। ᵛयेभिः यैः नामभिः ᵛकर्माणि वृत्रवधादिरूपाणि ᵛचकर्थ कुरुषे हे ᵛमघवन् तानि वेत्सीति॥

**त्वं विश्वा दधिषे केवलानि यान्याविर्या च गुहा वसूनि।**
**काममिन्मे मघवन्मा वि तारीस्त्वमाज्ञाता त्वमिन्द्रासि दाता॥ ५॥**

त्वम्। विश्वा। दधिषे। केवलानि। यानि। आविः। या। च। गुहा। वसूनि।
कामम्। इत्। मे। मघऽवन्। मा। वि। तारीः।
त्वम्। आऽज्ञाता। त्वम्। इन्द्र। असि। दाता॥ ५॥

हे इन्द्र ᵛत्वं ᵛविश्वा सर्वाणि ᵛकेवलानि अन्येषामसाधारणानि ᵛवसूनि धनानि ᵛदधिषे धारयसि। विश्वानीत्युक्तं कथं विश्वत्वमित्यत आह। ᵛयान्याविः आविर्भूतानि[5] सर्वैः प्रसिद्धानि वसूनि वासयोग्यानि[6] धनानि सन्ति ᵛया ᵛच ᵛगुहा गुहायां निगूढे प्रदेशे वर्तमानानि वसूनि

१. त१.२.६.७.८-भ-मु-पुराणविदः। २. त-भ-मु-'यत्' नास्ति। ३. ग-अस्मदु। ४. ग२-भ१.२.४.६-के ऋषयः; ग४-त-भ७-ऋषयः। ५. त२.६.७.८-भ२.५.६-आविर्भूतानि तानि। ६. ग-त-मु-निवास°।

सन्ति तानि विश्वानि दधिष इति। यस्मादेवं तस्मात् ᵛमे मम ᵛकामं काङ्क्षितं हे ᵛमघवन् धनवन्निन्द्र ᵛमा ᵛवि ᵛतारीः मा हिंसीः। ᵛइत् इति पूरणः। वर्धयेति शेषः। हे ᵛइन्द्र ᵛत्वमाज्ञाता ᵛअसि प्रापयितासि[1] अभिलषितं धनम्। तथा हे इन्द्र ᵛत्वं ᵛदाता असि॥

**यो अदधाज्ज्योतिषि ज्योतिरन्तर्यो असृजन्मधुना सं मधूनि।**
**अध प्रियं शूषमिन्द्राय मन्म ब्रह्मकृतो बृहदुक्थादवाचि॥ ६॥**

यः। अदधात्। ज्योतिषि। ज्योतिः। अन्तः। यः। असृजत्। मधुना। सम्। मधूनि। अध। प्रियम्। शूषम्। इन्द्राय। मन्म। ब्रह्मऽकृतः। बृहत्ऽउक्थात्। अवाचि॥ ६॥

ᵛयः इन्द्रः ᵛज्योतिषि द्योतमाने आदित्यादिके तेजसि ᵛअन्तः ᵛज्योतिः तेजः ᵛअदधात् धारितवान्। यदादित्याग्न्यादिषु तेजोऽस्ति तदिन्द्रकृतमित्यर्थः। ᵛयः च ᵛमधुना मधुरेण रसेन[2] ᵛमधूनि सोमादिमधुरद्रव्याणि ᵛसम् ᵛअसृजत् समयोजयत्। यद्वा। मधुना। अत्र मधुशब्देन सर्वैः सेव्यमान आदित्य उच्यते। तेन सह मधूनि उदकानि समसृजत्। ᵛअध संप्रति तस्मै ᵛइन्द्राय ᵛप्रियं प्रीतिजनकं[3] ᵛशूषं बलं शत्रूणां शोषकत्वाद्बलकरं ᵛमन्म मननीयं स्तोत्रं ᵛब्रह्मकृतः मन्त्रकृतः ᵛबृहदुक्थात् प्रभूतशस्त्रयुक्तादेतन्नामकादृषेर्मत्तः ᵛअवाचि उक्तमभूत्॥ ॥ १५॥

'दूरे तत्' इत्यष्टर्चं त्रयोदशं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'दूरे' इत्यनुक्रान्तम्। गतः सूक्तविनियोगः॥

**दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै।**
**उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान्मघवन्तित्विषाणः॥ १॥**

दूरे। तत्। नाम। गुह्यम्। पराचैः। यत्। त्वा। भीते इति। अह्वयेताम्। वयःऽधै। उत्। अस्तभ्नाः। पृथिवीम्। द्याम्। अभीके। भ्रातुः। पुत्रान्। मघऽवन्। तित्विषाणः॥ १॥

अनया 'चत्वारि ते असुर्याणि[4] नाम' इत्युक्तस्य आद्यं नाम स्तूयते। हे इन्द्र ᵛते तव ᵛतत् वक्ष्यमाणं ᵛनाम सर्वेषां नामकं शरीरं ᵛपराचैः पराङ्मुखैर्मनुष्यैः। मनुष्याणामित्यर्थः। ᵛगुह्यं गोपनीयमप्रकाशितं सत् ᵛदूरे इतो विप्रकृष्टे दूरदेशे वर्तत इति शेषः। ᵛयत् यदा ᵛत्वा त्वां ᵛरोदसी द्यावापृथिव्यौ ᵛभीते सती ᵛअह्वयेताम् अवेत्यभूताम्। किमर्थम्। ᵛवयोधै अन्नस्य निधानार्थम्। जगतोऽन्नस्य साधनायेत्यर्थः। तदानीं तेन शरीरेण ᵛअभीके। अन्तिकनामैतत्। एव समीप एव ᵛपृथिवीं ᵛद्यां च ᵛउत् ऊर्ध्वं परस्परवियुक्तं यथा भवति तथा ᵛअस्तभ्नाः स्तम्भितवानसि। किं कुर्वन्। हे ᵛमघवन् इन्द्र ᵛभ्रातुः पर्जन्यस्य ᵛपुत्रान् पुत्रस्थानीयानुदकसंस्त्यायान् ᵛतित्विषाणः दीपयन्[5]॥

**महत्तन्नाम गुह्यं पुरुस्पृग्येन भूतं जनयो येन भव्यम्।**
**प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्च॥ २॥**

---

१. त६.८-भ-नियमितासि। २. ग-त-मु-रसेन निमित्तेन। ३. ग-त-भ-मु-प्रियजनकं। ४. ग-त-भ-'असुर्याणि' नास्ति। ५. ग-त१.२.३.७-मु-दीपयन्निति (त७-भूवन्निति) विद्युद्रूपमिंद्रमाह। विद्युदेवेंद्र (त१.२.७-मु-विद्युद्रूपेंद्र) इति च वाजसनेयकं। यद्वा पर्जन्यरूपमाह। तदानीं वायुरस्येंद्रस्य भ्रातावगंतव्यः।

महत् । तत् । नाम॑ । गुह्य॑म् । पुरुऽस्पृक् । येन॑ । भूतम् । जनय॑ः । येन॑ । भव्य॑म् ।
प्रत्नम् । जातम् । ज्योति॑ः । यत् । अस्य । प्रियम् । प्रियाः । सम् । अविशन्त । पञ्च॑ ॥२॥

हे इन्द्र तव ᵛतत् ᵛगुह्यं गोपनीयमन्यैरविज्ञातं ᵛपुरुस्पृक् बहुभिर्वृष्ट्यर्थिभिः स्पृहणीयमाकाशात्मकं ᵛनाम शरीरं ᵛमहत् अत्यन्तं प्रवृद्धं ᵛयेन नाम्ना ᵛभूतं ᵛभव्यं च पूर्वं ᵛजनयः उत्पादितवानसि। भूतभव्योभयान्वयाय येनेत्यस्यावृत्तिः[१] स्यात्। आकाशात्मकाद्धि परमेश्वरस्वरूपात् भूतभव्यात्मकं जगदुत्पद्यते। 'आकाशाद्वायुः' (तै. आ. ८. १) इत्यादिश्रुतेः। किंच ᵛप्रत्नं पुराणं पूर्वकालीनं ᵛयत् ᵛज्योतिः द्योतमानमादित्याख्यमुदकाख्यं वा ᵛअस्य इन्द्रस्य ᵛप्रियं प्रियभूतं तत्त्वं ᵛजातम् उत्पन्नं[२] ᵛप्रियाः प्रीयमाणाः ᵛपञ्च। पञ्च जना इति शेषः। भीमसेनो भीम इतिवदेकदेशलक्षणा। निषादपञ्चमाश्चत्वारो वर्णाः ᵛसमविशन्त संविशन्ते। स्वनिर्वाहार्थं भजन्त इत्यर्थः ॥

आ रोद॑सी अपृणादोत मध्यं॑ पञ्च॑ देवाँ ऋ॑तुशः सप्तस॑प्त ।
चतु॑स्त्रिंशता पुरुधा वि च॑ष्टे सरू॑पेण ज्योति॑षा विव्र॑तेन ॥ ३ ॥

आ । रोद॑सी इति॑ । अपृणात् । आ । उत । मध्य॑म् । पञ्च॑ । देवान् । ऋतुऽशः । सप्तऽस॑प्त ।
चतु॑ःऽत्रिंशता । पुरुधा । वि । चष्टे । सऽरू॑पेण । ज्योति॑षा । विऽव्र॑तेन ॥ ३ ॥

अयमिन्द्र आत्मीयेन शरीरेण तेजसा वा ᵛरोदसी द्यावापृथिव्यौ ᵛआ सर्वतः ᵛअपृणात् पूरयति। ᵛउत अपि च ᵛमध्यं द्युभूम्यपेक्षया मध्यभूतमन्तरिक्षमापृणादिति[३] वर्तते। तदपि स्वशरीरेण तेजसा वा पूरयति। किंच ᵛपञ्च ᵛदेवान् देवमनुष्यपितृसुररक्षःसंज्ञकान् तथा[४] ᵛसप्तसप्त। द्विरुक्त्या सप्तसंख्याकानि तत्त्वानि लोके यानि सन्ति तानि परिगृह्यन्ते। कानि तानीति। सप्त मरुद्गणान् सप्तादित्यरश्मीन् सप्तचेन्द्रियाणि सप्त लोकानन्यानपि सप्तसंख्योपेतान् ᵛऋतुशः काले काले ᵛचतुस्त्रिंशता चतुस्त्रिंशत्संख्याकेन[५] देवगणेन[५] सह ᵛपुरुधा बहुप्रकारं ᵛवि ᵛचष्टे विपश्यति सर्वदेक्षते। अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च विराट् चेति चतुस्त्रिंशत्त्वं देवानाम्। केनेति तदुच्यते। ᵛसरूपेण समानरूपेण ᵛज्योतिषा प्रकाशकेन ᵛविव्रतेन विविधेन कर्मणा ॥

यदु॑ष औच्छः॑ प्रथमा विभानामज॑नयो येन॑ पुष्टस्य॑ पुष्टम् ।
यत्ते॑ जामित्वमव॑रं परस्या महन्महत्या असुरत्वमेकम् ॥ ४ ॥

यत् । उषः । औच्छः । प्रथमा । विऽभानाम् । अज॑नयः । येन॑ । पुष्टस्य॑ । पुष्टम् ।
यत् । ते । जामिऽत्वम् । अव॑रम् । पर॑स्याः । महत् । महत्याः । असुरऽत्वम् । एक॑म् ॥४॥

अत्र प्रसङ्गात्सूर्यात्मकेन्द्रसंबन्धिन्युषाः स्तूयते। हे ᵛउषः उषोदेवते ᵛविभानां विभासकानां ग्रहनक्षत्रादीनां ᵛप्रथमा प्रथमभूता सती ᵛऔच्छः विभासनमकरोः[६]। अग्रे ह्युषसः प्रादुर्भवन्ति पश्चादन्यानि तेजांसि। ᵛयेन च तेजसा ᵛपुष्टस्य पोषयुक्तस्यापि पदार्थस्य ᵛपुष्टम् अतिशयेन पोषयुक्तमादित्यम् ᵛअजनयः उदपादयः। ᵛयत् यच्च ᵛते तव ᵛजामित्वं बान्धवम् ᵛअवरम् अवाङ्मुखम्। अस्मदभिमुखमित्यर्थः। कीदृश्यास्तवेति उच्यते। ᵛपरस्याः। उपरि स्थितायाः इत्यर्थः।

---

१. त६.८-भ-येनेत्यर्थस्यावृत्तिः। २. ग-त-भ२.५.६.८-उत्पन्नं तत्त्वं; मु-उत्पन्नं तत् तत्त्वं। ३. ग-त-भ-मु-मध्यमभूत°। ४. त-भ१.२.४.६.८-ते तथा। ५. त-भ-मु-°संख्याकदेवगणेन। ६. ग-विभानमकरोः; त-मु-विभातमकरोः।

तदिदं <sup>v</sup>महत्याः तव <sup>v</sup>महत् अतिप्रवृद्धम् <sup>v</sup>एकम् असाधारणमेकमेव वा <sup>v</sup>असुरत्वं प्रकृष्टबलवत्त्वम्। तव बलेन कृतमित्यर्थः ॥

महाव्रते निष्केवल्ये 'विधुं दद्राणम्' इत्येषा। सूत्रितं च—'आ याह्यर्वाङुप वन्धुरेष्ठा विधुं दद्राणम्' (ऐ. आ. ५. ३. १) इति ॥

**विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार।**
**देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ ५ ॥**

विऽधुम्। दद्राणम्। समने। बहूनाम्। युवानम्। सन्तम्। पलितः। जगार।
देवस्य। पश्य। काव्यम्। महिऽत्वा। अद्य। ममार। सः। ह्यः। सम्। आन ॥ ५ ॥

अनया कालात्मक इन्द्रः स्तूयते। <sup>v</sup>विधुं विधातारं सर्वस्य युद्धादेः कर्तारम्। विपूर्वो[1] दधातिः[1] करोत्यर्थे। तथा <sup>v</sup>समने। अननमनः प्राणनम्। सम्यगननोपेते संग्रामे <sup>v</sup>बहूनां शत्रूणां <sup>v</sup>दद्राणं द्रावकं ईदृक्सामर्थ्योपेतं <sup>v</sup>युवानं <sup>v</sup>सन्तं पुरुषं <sup>v</sup>पलितः जरा[2] <sup>v</sup>जगार निगिरतीन्द्राज्ञया। एवमुक्तलक्षणं वक्ष्यमाणलक्षणं च <sup>v</sup>देवस्य कालात्मकस्येन्द्रस्य <sup>v</sup>महित्वा महत्त्वेनोपेतं <sup>v</sup>काव्यं सामर्थ्यं <sup>v</sup>पश्य पश्यत हे जनाः। तथा जरसा प्राप्तः <sup>v</sup>अद्य <sup>v</sup>ममार म्रियते। <sup>v</sup>स <sup>v</sup>ह्यः परेद्युः <sup>v</sup>समान सम्यक् चेष्टते। पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः। तदेवं चत्वारि नामानि शरीराण्युक्तानि ॥ ॥ १६ ॥

**शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीळः।**
**यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ ६ ॥**

शाक्मना। शाकः। अरुणः। सुऽपर्णः। आ। यः। महः। शूरः। सनात्। अनीळः।
यत्। चिकेत। सत्यम्। इत्। तत्। न। मोघम्। वसु। स्पार्हम्। उत। जेता। उत। दाता ॥६॥

<sup>v</sup>शाक्मना। शक्मैव शाक्म। शक्मना बलेन <sup>v</sup>शाकः शक्तः। 'शक्लृ[3] शक्तौ[3]'। स्वशक्त्यैव सर्वं कर्तुं शक्तः इत्यर्थः। न हीन्द्रस्य सहायान्तरापेक्षास्तीन्द्रत्वादेव। <sup>v</sup>अरुणः अरुणवर्णः <sup>v</sup>सुपर्णः कश्चिच्छोभनपर्णः पक्षी <sup>v</sup>आ गच्छतीत्यध्याहारः। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। <sup>v</sup>यः <sup>v</sup>महः महान् <sup>v</sup>शूरः विक्रान्तः <sup>v</sup>सनात् पुराणः <sup>v</sup>अनीळः अनीडो नीडस्याकर्ता। नहीन्द्रोऽग्निवत् कुत्रचिदपि यज्ञे निकेतनं करोति। एवं सुपर्णरूपकेणेन्द्रमाह। स पक्षीन्द्रः <sup>v</sup>यच्चिकेत कर्तव्यत्वेन जानाति <sup>v</sup>तत् <sup>v</sup>सत्यमित् सत्यमेव <sup>v</sup>न तु <sup>v</sup>मोघं व्यर्थं भवति। सः <sup>v</sup>स्पार्हं स्पृहणीयं <sup>v</sup>वसु <sup>v</sup>उत[4] <sup>v</sup>जेता जयति शत्रुभ्यः सकाशात् <sup>v</sup>उत अपि[5] <sup>v</sup>दाता प्रयच्छति च स्तोतृभ्यः। 'न लोकाव्यय°' इत्यादिना षष्ठीप्रतिषेधः ॥

**ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद्वृत्रहत्याय वज्री।**
**ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायन्त देवाः ॥ ७ ॥**

आ। एभिः। ददे। वृष्ण्या। पौंस्यानि। येभिः। औक्षत्। वृत्रऽहत्याय। वज्री।
ये। कर्मणः। क्रियमाणस्य। मह्ना। ऋतेऽकर्मम्। उत्ऽअजायन्त। देवाः ॥ ७ ॥

---

१. भ–विदधातिः। २. ग-भ–'जरा' नास्ति। ३. त-भ-मु–'शक्लृ शक्तौ' नास्ति। ४. ग-त-भ–'उत' नास्ति। ५. ग-त-भ-मु–अपि च।

इन्द्रः ᵛएभिः मरुद्भिः सह वृष्ण्यानि[1] वर्षकाणि ᵛपौंस्यानि बलानि ᵛआ ᵛददे आदत्ते। ᵛयेभिः मरुद्भिः सहितः ᵛवृत्रहत्याय। प्राण्युपकारकवृष्ट्यावरकत्वाद्वृत्रः पापम्। तस्य हत्याय। मनुष्याणामुपद्रवशमनायेत्यर्थः। तदर्थं ᵛवज्री वज्रवानिन्द्रः ᵛऔक्षत् वर्षति। ᵛये च मरुतः ᵛदेवाः ᵛमह्ना महतेन्द्रेण[2] ᵛक्रियमाणस्य ᵛकर्मणः वृष्टिप्रदानलक्षणस्य साहाय्यार्थम् ᵛऋतेकर्मम् ऋतकर्म वृष्टिप्रदानकर्म प्रति ᵛउदजायन्त उन्मुखा जायन्ते स्वयमेव तैरेभिर्दद इति समन्वयः ॥

युजा कर्मा॑णि ज॒नय॑न्वि॒श्वौजा॑ अशस्ति॒हा वि॒श्वम॑नास्तुरा॒षाट्।
पी॒त्वी सोम॑स्य दि॒व आ वृ॑धा॒नः शूरो॒ निर्यु॒धाध॑मद्दस्यू॑न् ॥ ८ ॥

यु॒जा। कर्मा॑णि। ज॒नय॑न्। वि॒श्वऽओ॑जाः। अ॒श॒स्ति॒ऽहा। वि॒श्वऽम॑नाः। तु॒रा॒षाट्।
पी॒त्वी। सोम॑स्य। दि॒वः। आ। वृ॒धा॒नः। शूरः॑। निः। यु॒धा। अ॒ध॒म॒त्। दस्यू॑न् ॥ ८ ॥

स इन्द्रः ᵛयुजा मरुतां साहाय्येन ᵛकर्माणि प्रवर्षणादीनि ᵛजनयन् उत्पादयन् ᵛविश्वौजाः व्याप्तबलः ᵛअशस्तिहा रक्षोहा ᵛविश्वमनाः व्याप्तमनाः अत्यन्तं मनस्वी ᵛतुराषाट् तूर्णमभिभविता शत्रूणाम्। एवंमहानुभाव इन्द्रः ᵛसोमस्य सोमं ᵛपीत्वी पीत्वा ᵛदिवः द्युलोकादागत्य सोमं पीत्वा ᵛवृधानः वर्धमानः ᵛशूरः सन् ᵛयुधा आयुधेन प्रहारेण वा ᵛदस्यून् शत्रून् ᵛनिः ᵛअधमत् निर्धमति। युद्धेनासुरानपबाधत इत्यर्थः ॥　　॥ १७ ॥

'इदं ते' इति सप्तर्चं चतुर्दशं सूक्तम्। वामदेवपुत्रो बृहदुक्थ ऋषिः। चतुर्थीपञ्चमीषष्ठ्यो जगत्यः। आदितस्तिस्रः सप्तमी च त्रिष्टुभः। विश्वे देवा देवता। तथा चानुक्रान्तम्—'इदं ते सप्त वैश्वदेवं तु[3] चतुर्थ्याद्यास्तिस्रो जगत्यः' इति। गतः सूक्तविनियोगः। आहवनीये वाय्वादिकारणेनायतनान्निष्क्रम्य शम्यापरामादर्वाचीने देशे दीप्यमाने सति तमग्निमनया पुनरायतने संवपेत्। सूत्रितं च—'आहवनीयमवदीप्यमानमर्वाक् शम्यापरासादिदं त एकं पर ऊ त एकमिति संवपेत्' (आश्व. श्रौ. ३. १०) इति ॥

इ॒दं त॒ एकं॒ प॒र ऊं॑ त॒ एकं॑ तृ॒तीये॑न॒ ज्योति॑षा॒ सं वि॑शस्व।
सं॒वेश॑ने त॒न्व१॒॑श्चारु॑रेधि प्रि॒यो दे॒वानां॑ पर॒मे ज॒नित्रे॑ ॥ १ ॥

इ॒दम्। ते॒। एक॑म्। प॒रः। ऊँ॒ इति॑। ते॒। एक॑म्। तृ॒तीये॑न। ज्योति॑षा। सम्। वि॒श॒स्व॒।
स॒म्ऽवेश॑ने। त॒न्वः॑। चारुः॑। ए॒धि॒। प्रि॒यः। दे॒वाना॑म्। प॒र॒मे। ज॒नित्रे॑ ॥ १ ॥

एतदादिभिर्बृहदुक्थो वाजिनं नाम स्वपुत्रं मृतं वदति। हे मृत पुत्र ᵛते तव ᵛइदम्। उपरि[4] ज्योतिषेति वक्ष्यमाणत्वादत्रेदंशब्देन ज्योतिरभिधीयते। इदं ज्योतिरग्न्याख्यम् ᵛएकम् एकोंऽशः। अतस्तमग्निं तव देहगताग्न्यंशेन बाह्यमग्निं ᵛसं ᵛविशस्व संगच्छस्व। तथा ᵛपर ᵛउ अन्योऽपि ᵛते तव ᵛएकं वाय्वाख्योंऽशः ते तव प्राणवाय्वाख्येनांशेन सं विशस्व। शरीराग्निप्राणवाय्वोर्बाह्याग्निवाय्वोश्चैकत्वादंशत्वमिति भावः। तथा ᵛतृतीयेन ᵛज्योतिषा आदित्याख्येन तेजसा तदात्मना सं विशस्व। सूर्यगतात्मचैतन्यदेहगतात्मचैतन्ययोरभेदादंशत्वम्। तत्[5] 'योऽहं सोऽसौ योऽसौ सोऽहं' 'सूर्य आत्मा जगतस्तस्थुषश्च' (ऋ. सं. १.११५.१) इति श्रुतेरात्मनः सूर्यप्रवेशो युक्तः। ᵛतन्वः तन्वाः[6] ᵛसंवेशने

१. ग-त२.३.७-मु-वृष्ण्या वृष्ण्यानि। २. ग-त१.२.३.६.७.८-भ-महता तंत्रेण। ३. त-'तु' नास्ति। ४. त-भ-पारे। ५. त२.३-भ-'तत्' नास्ति। ६. ग-भ-'तन्वाः' नास्ति।

तस्मिन्सूर्ये संविश्य Vचारुरेधि कल्याणो भव। कीदृशस्त्वम्। Vप्रियः तेन सह प्रीयमाणः। कीदृशे तस्मिन्। Vदेवानां Vपरमे उत्तमे Vजनित्रे जनके। 'देवानां ह्येतत्परमं जनित्रं यत्सूर्यः' इति हि श्रुतिः॥

**तनूष्टे वाजिन्तन्वं१ नयन्ती वाममस्मभ्यं धातु शर्म तुभ्यम्।**
**अह्रुतो महो धरुणाय देवान्दिवीव ज्योतिः स्वमा मिमीयाः॥ २॥**

तनूः। ते। वाजिन्। तन्वम्। नयन्ती। वामम्। अस्मभ्यम्। धातु। शर्म। तुभ्यम्।
अह्रुतः। महः। धरुणाय। देवान्। दिविऽइव। ज्योतिः। स्वम। आ। मिमीयाः॥ २॥

हे Vवाजिन् एतन्नामक पुत्र Vते तव Vतन्वं शरीरं Vनयन्ती स्वशरीरं प्रापयन्ती Vतनूः इयं पृथिवी। उभयोरपि पार्थिवत्वात्तव शरीरस्य पृथिवीप्राप्तौ सत्यां तस्यास्तव शरीरनयनं युक्तम्। तादृशी पृथिवी Vवामं वननीयं धनम् Vअस्मभ्यं Vधातु दधातु Vशर्म च सुखं Vतुभ्यं धातु दधातु। स त्वम् Vअह्रुतः अनवपतितः सन् Vमहः महतः Vदेवान् तव कारणभूतान् Vदिवीव Vज्योतिः द्युलोके वर्तमानं सूर्यं च। इवशब्दश्चार्थे निपातानामनेकार्थत्वात्। तं च Vस्वं तव स्वभूतम् Vआ Vमिमीयाः आविश॥

**वाज्यसि वाजिनेना सुवेनीः सुवितः स्तोमं सुवितो दिवं गाः।**
**सुवितो धर्म प्रथमानु सत्या सुवितो देवान्त्सुवितोऽनु पत्म॥ ३॥**

वाजी। असि। वाजिनेन। सुऽवेनीः। सुवितः। स्तोमम्। सुवितः। दिवम्। गाः।
सुवितः। धर्म। प्रथमा। अनु। सत्या। सुवितः। देवान्। सुवितः। अनु। पत्म॥ ३॥

हे पुत्र त्वं Vवाजिनेन अन्नरसेन बलेन वा Vवाज्यसि तद्वान् भवसि। कीदृशस्त्वम्। Vसुवेनीः सुष्ठु कान्तः। वी गत्यादिषु। तादृशस्त्वं Vसुवितः सुष्ठु प्रेरितस्त्वं Vस्तोमं पूर्वं त्वया कृतं स्तोत्रं तदभिमानिदेवम् Vअनु Vगाः अन्वगाः अनुगच्छ१। तथा Vसुवितो Vदिवं गाः। तथा Vसुवितो Vधर्म त्वया संपादितानि धर्माण्यनुगच्छ२। कीदृशानि। Vप्रथमा मुख्यानि Vसत्या सत्यफलानि। तथा Vसुवितो Vदेवान् इन्द्रादीन्। तथा Vसुवितः Vपत्म पतज्ज्योतिरादित्याख्यम् Vअनु गाः॥

**महिम्न एषां पितरश्चनेशिरे देवा देवेष्वदधुरपि क्रतुम्।**
**समविव्यचुरुत यान्यत्विषुरैषां तनूषु नि विविशुः पुनः॥ ४॥**

महिम्नः। एषाम्। पितरः। चन। ईशिरे। देवाः। देवेषु। अदधुः। अपि। क्रतुम्।
सम्। अविव्यचुः। उत। यानि। अत्विषुः।
आ। एषाम्। तनूषु। नि। विविशुः। पुनरिति॥ ४॥

Vपितरश्चन अस्मत्पितरोऽप्यङ्गिरसः Vएषां देवानां Vमहिम्नः महत्त्वस्य Vईशिरे ईश्वरा अभवन्। ते Vदेवाः Vअपि देवत्वं प्राप्ता अङ्गिरसः Vदेवेषु इन्द्रादिषु Vक्रतुं संकल्पम् Vअदधुः धृतवन्तः। Vउत अपि च Vयानि तेजांसि Vअत्विषुः दीप्यन्ते तानि Vसमविव्यचुः संगता आसन्। Vएषां देवानां Vतनूषु शरीरेषु३ Vनि Vविविशुः निविशन्ति पितरोऽङ्गिरसः। अतस्त्वमपि तथा कुर्वित्यर्थः॥

---

१. त-भ-मु-गच्छ। २. त-भ-°गच्छन्। ३. ग-त४.५-मु-शरीरेषु पुनः; त३.७-शरीरेषु न।

**सहोभिर्विश्वं परि चक्रमू रजः पूर्वा धामान्यमिता मिमानाः ।**
**तनूषु विश्वा भुवना नि येमिरे प्रासारयन्त पुरुध प्रजा अनु ॥ ५ ॥**

सहःऽभिः । विश्वम् । परि । चक्रमुः । रजः । पूर्वा । धामानि । अमिता । मिमानाः । तनूषु । विश्वा । भुवना । नि । येमिरे । प्र । असारयन्त । पुरुध । प्रऽजाः । अनु ॥ ५ ॥

मदीयाः पितरः ᵛसहोभिः बलैः स्वीयैः ᵛविश्वं सर्वं ᵛरजः लोकम् । 'लोका रजांस्युच्यन्ते' इति निरुक्तम् । ᵛपूर्वा पूर्वाणि ᵛधामानि स्थानानि ᵛअमिता अन्यैरमितानि ᵛमिमानाः परिच्छिन्दन्तः ᵛपरि ᵛचक्रमुः पर्यक्रामन् । किंच तथा कुर्वन्तः ᵛविश्वा सर्वाणि ᵛभुवना भूतजातानि ᵛनि ᵛयेमिरे नियमितवन्तः । किंच ᵛपुरुध पुरुधा बहुप्रकारं ᵛप्रजा ᵛअनु ज्योतींष्युदकानि वा ᵛप्रासारयन्त प्रसारितवन्तः । अस्मत्पितरः पूर्वेऽङ्गिरसः स्वसामर्थ्येन सर्वं लोकं व्याप्य पुरातनानि ग्रहनक्षत्रादीनि परिच्छिद्य सर्वभूतानि नियम्य प्रजा अनूदकानि तेजांसि वा प्रसारितवन्त इत्यर्थः । अतस्त्वमप्येवं कुर्विति भावः ॥

**द्विधा सूनवोऽसुरं स्वर्विदमास्थापयन्त तृतीयेन कर्मणा ।**
**स्वां प्रजां पितरः पित्र्यं सह आवरेष्वदधुस्तन्तुमाततम् ॥ ६ ॥**

द्विधा । सूनवः । असुरम् । स्वःऽविदम् । आ । अस्थापयन्त । तृतीयेन । कर्मणा । स्वाम् । प्रऽजाम् । पितरः । पित्र्यम् । सहः । आ । अवरेषु । अदधुः । तन्तुम् । आऽततम् ॥ ६ ॥

ᵛसूनवः आदित्यस्य पुत्रा देवा अङ्गिरसः । 'देवानां ह्येतत्परमं जनित्रं यत्सूर्यः' इति प्रदर्शितत्वादादित्यस्य[1] सूनव[1] इति गम्यते । ᵛअसुरं बलवन्तं ᵛस्वर्विदं सर्वज्ञं स्वर्गस्य लम्भकं वादित्यं ᵛतृतीयेन ᵛकर्मणा प्रजोत्पत्त्याख्येन । 'ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' (तै. सं. ६. ३. १०. ५) इति श्रुतेः प्रजोत्पादनस्य तृतीयकर्मत्वम् । तेन आदित्यं ᵛद्विधा ᵛआस्थापयन्त द्विप्रकारमास्थापयन्ति । उदितं चास्तमितं च कुर्वन्ति । 'उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्' (तै. सं. १. १. १३. १) इति मन्त्रस्य ब्राह्मणे 'असौ वा आदित्य उद्यन्नुद्ग्राभ एष निम्रोचन्निग्राभः' (तै. सं. ५. ४. ६. ६) इति श्रुतत्वाद्देवानामादित्यस्य द्विःस्थापनमुदयास्तमयकरणमिति गम्यते । किंच ᵛपितरः मदीया अङ्गिरसः ᵛस्वां ᵛप्रजाम् । उत्पाद्येति[2] शेषः । ᵛपित्र्यं ᵛसहः पितुरादित्यस्य संबन्धिनमपराभिभवक्षमं बलम् ᵛअवरेषु ᵛआ ᵛदधुः निकृष्टेषु स्वप्रजाभूतेषु[3] मनुष्येषु स्थापितवन्तः । यथा पित्र्यं धनं सम्यक् परिरक्ष्य स्वपुत्रेभ्यः प्रयच्छन्ति तद्वत्पितुरादित्यस्य प्रकाशादिबलं मनुष्येषु न्यदधुरित्यर्थः । किंच ᵛतन्तुं प्रजाम् ᵛआततं विततं कृतवन्त इति शेषः । पुत्रपौत्रादिरूपेणानवच्छिन्नां प्रजामित्यर्थः । 'अयं ह्याततन्तुर्यत्प्रजाः' इति ब्राह्मणं 'प्रजातन्तुं मा व्यवच्छेत्सीः' (तै. आ. ७. ११. १) इति च । 'तन्तुं तन्वन्' (ऋ. सं. १०. ५३. ६) इत्यस्य ब्राह्मणं 'प्रजा वै तन्तुः' (ऐ. ब्रा. ३. ३८) इति ॥

**नावा न क्षोदः प्रदिशः पृथिव्याः स्वस्तिभिरति दुर्गाणि विश्वा ।**
**स्वां प्रजां बृहदुक्थो महित्वावरेष्वदधादा परेषु ॥ ७ ॥**

---

१. त१.२.३.६.७.८-भ-मु-°दादित्यसूनव । २. त१.२.३.७-म४.६.८-उत्पद्येति । ३. त-भ-स्वप्रजाभूतासु ।

नावा । न । क्षोदः । प्रऽदिशः । पृथिव्याः । स्वस्तिऽभिः । अति । दुःऽगानि । विश्वा ।
स्वाम् । प्रऽजाम् । बृहत्ऽउक्थः । महिऽत्वा । आ । अवरेषु । अदधात् । आ । परेषु ॥ ७ ॥

^v^नावा ^v^न उदकोत्तरणसाधनेनेव ^v^क्षोदः उदकं यथा मनुष्या नावोदकमतितरन्ति यथा वा ^v^स्वस्तिभिः क्षेमैः ^v^विश्वा सर्वाणि ^v^दुर्गाणि दुःखेन गन्तव्यान्यतितरन्ति तद्वत् ^v^बृहदुक्थः ^v^स्वां ^v^प्रजां वाजिनं मृतं पुत्रं ^v^महित्वा स्वमहत्त्वेन ^v^अवरेषु अग्न्यादिषु ^v^आ ^v^अदधात् कृतवान्। तदा ^v^परेषु दिव्येषु सूर्यादिष्वादधात्। एवमृषिर्ब्रूते स्वयमेव वा स्वात्मानं परोक्षेणाह ॥ ॥ १८ ॥

'मा प्र गाम' इति षडृचं पञ्चदशं सूक्तं गायत्रं वैश्वदेवम्। ऐक्ष्वाकोऽसमातिर्नाम राजा। तस्य बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चेति चत्वारः पुरोहिता आसन्। ते च गौपायनाः। स च राजा तांस्त्यक्त्वान्यौ मायाविनावृष्यौ पुरोहितत्वेनावृणीत। ततो बन्ध्वादयः क्रुद्धाः सन्त इमं राजानमभिचरितवन्तः। एतज्ज्ञात्वा मायाविनौ पुरोहितौ तेषामन्यतमं सुबन्धुं प्राणैर्वियोजितवन्तौ। मृतस्यास्य भ्रातरो बन्धुः श्रुतबन्धुर्विप्रबन्धुरित्येतेऽविनाशप्राप्तिहेतुभूतमिदं[1] दृष्ट्वा जपन्ति स्म। अतस्तेऽस्य सूक्तस्यर्षयः। प्रतिपाद्यत्वादावर्तमानं मनो देवता। तथा चानुक्रान्तम्—'अथ हैक्ष्वाको राजासमातिर्गौपायनान्बन्ध्वादीन्पुरोहितांस्त्यक्त्वान्यौ मायाविनौ श्रेष्ठतमौ मत्वा पुरोदधे। तमितरे क्रुद्धा अभिचेरुः। अथ तौ मायाविनौ सुबन्धोः प्राणानाचिक्षिपतुरथ हास्य भ्रातरस्त्रयः। मा प्र गामेति षट्कं गायत्रं स्वस्त्ययनं जप्त्वा' इति। अग्निसमीपाद्देशान्तरगमनसमय इदं सूक्तं जप्यम्। सूत्रितं च—'प्रव्रजेदनपेक्षमाणो मा प्र गामेति सूक्तं जपन्' (आश्व. श्रौ. २. ५) इति। महापितृयज्ञेऽप्येतद्धविर्भिर्जप्यम्। सूत्रितं च—'मा प्र गामाग्ने त्वं न इति जपन्तः' (आश्व. श्रौ. २. १९) इति। निविदः स्थानातिपत्ताविदं सूक्तं शस्त्वा सूक्तान्तरे निवित्प्रक्षेप्तव्या। सूत्रितं च—'स्थानं चेन्निविदोऽतिहरेन्मा प्र गामेति पुरस्तात्सूक्तं शस्त्वा' (आश्व. श्रौ. ६. ६) इति ॥

**मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः । मान्तः स्थुर्नो अरातयः ॥ १ ॥**

मा । प्र । गाम । पथः । वयम् । मा । यज्ञात् । इन्द्र । सोमिनः ।
मा । अन्तरिति । स्थुः । नः । अरातयः ॥ १ ॥

अत्रोक्ताख्याने शाट्यायनकम्—'असमातिं राथप्रौष्ठं गौपायना अभ्यगमंस्ते खाण्डवे सत्रमासताथ हासमातौ राथप्रौष्ठे किलाताकुली ऊषतुरसुरमायौ तं ह स्मानग्नौ निधायौदनं पचतोऽग्नौ मांसमथासुरान्नं दग्ध्वेक्ष्वाकवः पराबभूवुः। तमसमातिं राथप्रौष्ठं गौपायनानामाहुतयोऽभ्यतपन् सोऽब्रवीदिमौ किलाताकुली इमा वै मा गौपायनानामाहुतयोऽभितपन्तीति तावब्रूतां तस्य वा आवामेव भिषजौ स्व आवां प्रायश्चित्तिरावां तथा करिष्यावो यथा न्वेता नाभितपन्तीति। तौ परेत्य सुबन्धोर्गौपायनस्य स्वपतः प्रमत्तस्यासुमाहृत्यान्तःपरिधि न्यधत्ताम्' इत्यादि। तं सुबन्धोरसुमादातुं खाण्डवादसमातिं प्रतिगच्छन्तो गौपायना वदन्ति। हे ^v^इन्द्र ^v^वयं गौपायनाः ^v^पथः समीचीनान्मार्गात् ^v^मा ^v^प्र ^v^गाम मा परागच्छाम। असमातिगृहमेव गच्छाम। ^v^मा च ^v^सोमिनः असमातेः ^v^यज्ञात् मा प्र गाम। ^v^मा ^v^स्थुः मा तिष्ठन्तु ^v^नः अस्माकम् ^v^अन्तः मार्गमध्ये ^v^अरातयः शत्रवः। यद्वा। सोमिनः सोमवतो यागान्मा प्र गाम ॥

**यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः । तमाहुतं नशीमहि ॥ २ ॥**

यः । यज्ञस्य । प्रऽसाधनः । तन्तुः । देवेषु । आऽततः । तम् । आऽहुतम् । नशीमहि ॥ २ ॥

---

१. त६-भ-°भूतमिमं ।

ᵛयः अयमग्न्याख्यः ᵛतन्तुः आहवनीयादिरूपेण विस्तृतः ᵛयज्ञस्य ᵛप्रसाधनः प्रकर्षेण साधयिता ᵛदेवेष्वाततः देवैः स्तोतृभिर्ऋत्विग्भिर्विस्तारितो वर्तते वेद्यां ᵛतमाहुतं सर्वतो हूयमानं ᵛनशीमहि प्राप्नुयाम । नशतिर्व्याप्तिकर्मा ॥

पिण्डपितृयज्ञे ' मनो न्वा हुवामहे ' इति तृचेन पिण्डाभिमानिनः पितर उपस्थेयाः । सूत्रितं च—' मनो न्वा हुवामह इति च तिसृभिरथैनान्प्रवाहयेत् ' ( आश्व. श्रौ. २. ७ ) इति ॥

**मनो॒ न्वा हु॑वामहे नाराशं॒सेन॒ सोमे॑न । पि॒तॄणां॑ च॒ मन्म॑भिः ॥ ३ ॥**

मनः॑ । नु । आ । हु॒वा॒म॒हे॒ । ना॒रा॒शं॒सेन॑ । सोमे॑न । पि॒तॄणाम् । च॒ । मन्म॑ऽभिः ॥ ३ ॥

वयं बन्धुश्रुतबन्ध्वादयः ᵛमनः सुबन्धोः संबन्धि मायाविभिरपहृतं ᵛनु क्षिप्रम् ᵛआ ᵛहुवामहे आह्वयामहे । केन साधनेनेति तदुच्यते । ᵛनाराशंसेन नराशंसचमसगतेन ᵛसोमेन । नरैः शस्यन्त इति नराशंसाः पितरः । तेषां चमसानां कम्पनमेव होमः । तथाविधेन सोमेन ᵛपितॄणाम् अङ्गिरसां ᵛमन्मभिः ᵛच मननीयैः स्तोत्रैश्च ॥

**आ त॑ एतु॒ मनः॒ पुनः॒ क्रत्वे॒ दक्षा॑य जी॒वसे॑ । ज्योक् च॒ सूर्यं॑ दृ॒शे ॥ ४ ॥**

आ । ते॒ । ए॒तु॒ । मनः॑ । पुन॒रिति॑ । क्रत्वे॑ । दक्षा॑य । जी॒वसे॑ । ज्योक् । च॒ । सूर्य॑म् । दृ॒शे ॥४॥

हे सुबन्धो ᵛते ᵛमनः ᵛपुनः ᵛआ ᵛएतु अभिचरतः सकाशात् पुनरागच्छतु । किमर्थमिति उच्यते । ᵛक्रत्वे कर्मणे लौकिकवैदिकविषयाय ᵛदक्षाय बलाय च । यद्वा । क्रत्वे अपानाय दक्षाय प्राणाय । ' प्राणो वै दक्षोऽपानः क्रतुः ' इति हि श्रुतिः । ᵛजीवसे जीवनाय च ᵛज्योक् चिरकालं ᵛसूर्यं ᵛच ᵛदृशे सूर्यं द्रष्टुम् । अत्यन्तं चिरजीवनायेत्यर्थः ॥

**पुन॑र्नः पि॒तरो॒ मनो॒ ददा॑तु॒ दैव्यो॒ जनः॑ । जी॒वं व्रातं॑ सचेमहि ॥ ५ ॥**

पुनः॑ । नः॒ । पि॒तरः॑ । मनः॑ । ददा॑तु । दैव्यः॑ । जनः॑ । जी॒वम् । व्रात॑म् । स॒चे॒म॒हि॒ ॥ ५ ॥

ᵛनः अस्माकं ᵛपितरः पितृभूता अङ्गिरसः ᵛजनः । तेषां संघ इत्यर्थः । स च ᵛजीवं ᵛव्रातं प्राणादीन्द्रियसंघातं ᵛपुनः ᵛददातु । तथा ᵛदैव्यो जनः । जनशब्दः संघवचनः । देवानां संघोऽपि जीवं व्रातं च ददातु । वयं च तदुभयं ᵛसचेमहि प्राप्नुयाम[1] ॥

**व॒यं सो॑म व्र॒ते तव॒ मन॑स्त॒नूषु॒ बिभ्र॑तः । प्र॒जाव॑न्तः सचेमहि ॥ ६ ॥**

व॒यम् । सो॒म॒ । व्र॒ते । तव॑ । मनः॑ । त॒नूषु॑ । बिभ्र॑तः । प्र॒जाऽव॑न्तः । स॒चे॒म॒हि॒ ॥ ६ ॥

हे ᵛसोम देव ᵛवयं बन्ध्वादयः ᵛतव ᵛव्रते त्वदीये कर्मणि । व्रतमिति कर्मनाम । तव ᵛतनूषु त्वदीयेष्वङ्गेषु च ᵛमनः[2] ᵛबिभ्रतः तात्पर्ययुक्तां बुद्धिं धारयन्तः ᵛप्रजावन्तः प्रजाभिः पुत्रपौत्रादिभिर्युक्ताः सन्तः ᵛसचेमहि संगच्छेमहि । जीवं व्रातं चेति शेषः ॥　　॥ १९ ॥

' यत्ते यमम् ' इति द्वादशर्चं षोडशं सूक्तमानुष्टुभम् । बन्ध्वादय ऋषयः[3] सुबन्धुदेहान्निर्गतस्येन्द्रियवर्गसहितस्य मनसः पुनस्तस्मिन्प्रवेशनार्थमिदं सूक्तं दृष्ट्वाजपन्[4] । अतस्तेऽस्यर्षयः । प्रतिपाद्यत्वादावर्तमानं मन[5] एव[5] देवता । तथा चानुक्रान्तं—' यत्त इति द्वादशर्चमानुष्टुभं मनआवर्तनं जेपुः ' इति । गतो विनियोगः ॥

---

१. ग-त१.२.३.४.५.७.८-म१.२.४.६.८-प्राप्नुमः; त६-प्राप्नुयाः; भ७-मु-प्राप्नुयामः । २. त-भ-मु-मनः मनो । ३. भ-' ऋषयः ' नास्ति । ४. भ-दृष्ट्वा जपेत् । ५. त-भ-मनो ।

**यत्ते य॒मं वैव॑स्व॒तं मनो॑ ज॒गाम॑ दू॒र॒कम् । तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥१॥**

यत् । ते॒ । य॒मम् । वै॒व॒स्व॒तम् । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ १ ॥

पुरुषस्य म्रियमाणस्य मनो नाम महद्भूतं बहुधा विशीर्णं भवति[1]। तस्य पुनःसंभरणमन्त्रोच्यते। हे म्रियमाण पुरुष ᵛयत्[2] ᵛते तव ᵛमनः ᵛवैवस्वतं विवस्वतः पुत्रं ᵛयमं ᵛदूरकम् अत्यन्तं दूरं यथा भवति तथा ᵛजगाम ᵛते तव ᵛतत् मनः ᵛआ ᵛवर्तयामसि आवर्तयामः। किमर्थम्। ᵛइह ᵛक्षयाय इह लोके निवासाय ᵛजीवसे चिरकालजीवनाय ॥

**यत्ते॒ दिवं॒ यत्पृ॑थि॒वीं मनो॑ ज॒गाम॑ दू॒र॒कम् । तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥२॥**

यत् । ते॒ । दिव॑म् । यत् । पृ॒थि॒वीम् । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ २ ॥

हे सुबन्धो ᵛयत् ᵛमनः ᵛदिवं ᵛजगाम ᵛयत् च ᵛपृथिवीं ᵛदूरकम्। दूरकमिति क्रियाविशेषणम्। ᵛतत् ᵛइह निवासाय जीवनाय चावर्तयामः ॥

**यत्ते॒ भूमिं॒ चतु॑र्भृष्टिं॒ मनो॑ ज॒गाम॑ दू॒र॒कम् ।**
**तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥ ३ ॥**

यत् । ते॒ । भूमि॑म् । चतुः॑ऽभृष्टिम् । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ ३ ॥

हे सुबन्धो ᵛयत् ᵛमनः ᵛभूमिं ᵛचतुर्भृष्टिम्। चतुर्दिक्षु भ्रंशो यस्याः सा। तां ᵛजगाम ᵛतत् आवर्तयामः ॥

**यत्ते॒ चत॑स्रः प्र॒दिशो॒ मनो॑ ज॒गाम॑ दू॒र॒कम् ।**
**तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥ ४ ॥**

यत् । ते॒ । चत॑स्रः । प्र॒ऽदिशः॑ । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ ४ ॥

हे सुबन्धो ᵛयत्ते ᵛमनः ᵛप्रदिशः प्रकृष्टा महादिशः ᵛचतस्रः ᵛजगाम ᵛतत् आवर्तयामः ॥

**यत्ते॑ समु॒द्रम॑र्ण॒वं मनो॑ ज॒गाम॑ दू॒र॒कम् ।**
**तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥ ५ ॥**

यत् । ते॒ । स॒मु॒द्रम् । अ॒र्ण॒वम् । मनः॑ । ज॒गाम॑ । दू॒र॒कम् ।

तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ ५ ॥

---

१. त१.२.३.७-भ-भवतः । २. ग-त-भ४.६.८-मु-' यत् ' नास्ति ।

हे सुबन्धो ᵛयत्ते ᵛमनः ᵛअर्णवम्[1] अर्णांस्युदकानि[1] तद्वन्तं ᵛसमुद्रं मेघं वा ᵛजगाम ᵛतत् इति गतम् ॥

यत्ते मरीचीः प्रवतो मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ६ ॥
यत् । ते । मरीचीः । प्रऽवतः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ६ ॥

हे सुबन्धो ᵛयत्ते ᵛमनः ᵛप्रवतः प्रगच्छन्तीः[2] ᵛमरीचीः दीप्तीः ᵛजगाम ᵛतत् इति गतम् ॥ ॥ २० ॥

यत्ते अपो यदोषधीर्मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ७ ॥
यत् । ते । अपः । यत् । ओषधीः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ७ ॥

यत्ते सूर्यं यदुषसं मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ८ ॥
यत् । ते । सूर्यम् । यत् । उषसम् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ८ ॥

यत्ते पर्वतान्बृहतो मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ९ ॥
यत् । ते । पर्वतान् । बृहतः । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ ९ ॥

यत्ते विश्वमिदं जगन्मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ १० ॥
यत् । ते । विश्वम् । इदम् । जगत् । मनः । जगाम । दूरकम् ।
तत् । ते । आ । वर्तयामसि । इह । क्षयाय । जीवसे ॥ १० ॥

चतस्र ऋचो निगदसिद्धाः ॥

यत्ते पराः परावतो मनो जगाम दूरकम् ।
तत्त आ वर्तयामसीह क्षयाय जीवसे ॥ ११ ॥

---

१. ग४-भ१.७-मु–अर्णवमुदकं; त-भ२.४.६.८–अर्णवः उदकं । २. ग-त-भ–प्रगच्छंत्यो ।

यत् । ते । परा॑: । परा॒ऽवत॑: । मन॑: । ज॒गाम॑ । दू॒र॒कम् ।
तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ ११ ॥

हे सुबन्धो ᐯयत्ते ᐯमनः ᐯपराः ᐯपरावतः अत्यन्तं दूरदेशान् ᐯजगाम ᐯतत् इति गतम् ॥

यत्ते॑ भू॒तं च॒ भव्यं॑ च॒ मनो॑ ज॒गाम॑ दू॒र॒कम् ।
तत्त॒ आ व॑र्तयामसी॒ह क्षया॑य जी॒वसे॑ ॥ १२ ॥

यत् । ते॒ । भू॒तम् । च॒ । भव्य॑म् । च॒ । मन॑: । ज॒गाम॑ । दू॒र॒कम् ।
तत् । ते॒ । आ । व॒र्त॒या॒म॒सि॒ । इ॒ह । क्षया॑य । जी॒वसे॑ ॥ १२ ॥

हे सुबन्धो ᐯयत्ते ᐯमनः ᐯभूतं ᐯच ᐯभव्यं ᐯच इत्यनेन भूतभव्यात्मकव्यतिरेकेण कस्यचिदभावाद्वर्तमानस्य पृथगेवाभिधानात्[1] कृत्स्नं प्रपञ्चमुक्तं भवति। तत्र सर्वत्र गतं मनो जीवनाय निवासाय चावर्तयामः ॥ ॥ २१ ॥

'प्र तारि' इति दशर्चं सप्तदशं सूक्तं बन्ध्वादीनां त्रयाणां गौपायनानामार्षम्। आदितः सप्त त्रिष्टुभः। अष्टमी पञ्चाष्टका पङ्क्तिः। नवमी षडष्टका महापङ्क्तिः। दशमी पङ्क्त्युत्तरा। 'आद्यौ दशकावष्टकास्त्रयः' (अनु. ९. ११) इत्युक्तलक्षणसद्भावात्[2]। एकाक्षराधिक्याद्भूरिग्विशेषणेयं वेदितव्या। सूक्तस्यादितश्चतस्रो देहात्प्राणाश्निर्गमयित्र्या निर्ऋतेर्निवृत्त्यर्थं बन्ध्वादयोऽजपन्। 'मो षु णः सोम' इति चतुर्थ्यामेव मृत्युनिवृत्त्यर्थं सोममस्तुवन्। अतश्चतसृणां निर्ऋतिर्देवता चतुर्थ्याः सोमश्च। 'असुनीते मनः' इति द्वाभ्यामसुनीतिनाम्नीं देवीमस्तुवन् अतस्तयोः सा देवता। 'पुनर्नो असुम्' इत्यस्याः पृथिव्याद्या लिङ्गोक्ता[3] देवताः[3]। ततस्तिसृभिः शिष्टाभिः[4] पङ्क्तिमहापङ्क्तिपङ्क्त्युत्तराभिर्द्यावापृथिव्याविति द्यावापृथिव्यौ देवते। 'समिन्द्र' इत्यर्धर्चस्येन्द्रो देवता। तथा चानुक्रान्तं—'प्र तारीति दशर्चे चतस्रो निर्ऋत्यपनोदनार्थं जेपुश्चतुर्थ्यां सोमं चास्तुवन्मृत्योरपगमायोत्तराभ्यां दैवीमसुनीतिं सप्तम्यां लिङ्गोक्तदेवताः शिष्टाभिः पङ्क्तिमहापङ्क्तिपङ्क्त्युत्तराभिर्द्यावापृथिव्यौ समिन्द्रेतीन्द्रं चार्धर्चेन' इति। गतो विनियोगः ॥

प्र ता॒र्यायु॑: प्रत॒रं नवी॑य॒: स्थाता॑रेव॒ क्रतु॑मता॒ रथ॑स्य ।
अध॒ च्यवा॑न॒ उत्त॑वी॒त्यर्थं॑ परात॒रं सु निर्ऋ॑ति॒र्जिही॑ताम् ॥ १ ॥

प्र । ता॒रि॒ । आयु॑: । प्र॒ऽत॒रम् । नवी॑यः । स्थाता॑राऽइव । क्रतु॑ऽमता । रथ॑स्य ।
अध॑ । च्यवा॑नः । उत् । त॒वी॒ति॒ । अर्थ॑म् । प॒रा॒ऽत॒रम् । सु । निःऽऋ॑तिः । जि॒ही॒ता॒म् ॥ १ ॥

सुबन्धोः ᐯआयुः आयुष्यं ᐯप्र ᐯतारि प्रवर्धतां। प्रपूर्वस्तिरतिर्वर्धनार्थः। कथं प्रवर्धतामिति उच्यते। ᐯप्रतरं प्रवृद्धतरं ᐯनवीयः नवतरम्। यौवनोपेतमित्यर्थः। निर्ऋत्यनुग्रहादेवमायुर्वर्धताम्। तत्र दृष्टान्तः। ᐯक्रतुमता कर्मवता सारथिना ᐯरथस्य ᐯस्थातारेव रथे स्थिताविव[5] वर्धेते[5] तद्वत्। ᐯअध अथ ᐯच्यवानः जीवितात्प्रच्यवमानः ᐯअर्थं स्वाभिलषितमायुर्लक्षणम् ᐯउत्तवीति वर्धयति। सुबन्धुप्राणापहर्त्री[6] ᐯनिर्ऋतिः पापदेवता ᐯपरातरम् अत्यन्तं दूरतरं ᐯजिहीतां[7] परित्यजतु गच्छतु ॥

---

१. भ–पृथगभिधानादेव। २. त१.२.३.७-म१.२.४.६.८–इत्युक्तसद्भावात्। ३. त-म-मु–लिङ्गोक्तदेवताः। ४. ग-त-भ–द्यावापृथिव्यौ अष्टाभिः। ५. ग४-त१.२.३.७–स्थिता वर्धते; भ–स्थिता बध्यते; मु–स्थिता यथा वर्धते। ६. भ–°प्राणापहर्त्री। ७. त१.२.३.६.७.८-म–परिजिहीतां।

सामन्नु राये निधिमन्न्वन्नं करामहे सु पुरुध श्रवांसि ।
ता नो विश्वानि जरिता ममत्तु परातरं सु निर्ऋतिर्जिहीताम् ॥ २ ॥
सामन् । नु । राये । निधिऽमत् । नु । अन्नम् । करामहे । सु । पुरुध । श्रवांसि ।
ता । नः । विश्वानि । जरिता । ममत्तु । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥ २ ॥

ᵛसामन्नु साम्नि गीयमाने सति । नु चार्थे । ᵛराये जीवायूरूपधनार्थं ᵛनिधिमत् निधानवत् ᵛअन्नं हविश्च ᵛकरामहे कुर्मः । अत्रापि ᵛनु इति चार्थे । निर्ऋत्यै[1] स्तुतिं हविश्चोभयं कुर्म इत्यर्थः[2] । तदेवाह । ᵛसु सुष्ठु ᵛपुरुध पुरुधा बहुप्रकारं ᵛश्रवांसि अन्नानि हवींषि करामहे । ᵛता तानि हवींषि ᵛनः अस्माकं संबन्धीनि ᵛविश्वानि सर्वाणि ᵛजरिता जीर्णा स्तुता वा । 'जरा स्तुतिः' ( निरु. १०. ८ ) । ᵛममत्तु स्वदताम् । आस्वाद्य च ᵛनिर्ऋतिः ᵛपरातरम् अत्यन्तं दूरदेशं ᵛजिहीतां गच्छतु ॥

अभी ष्व१र्यः पौंस्यैर्भवेम द्यौर्न भूमिं गिरयो नाज्रान् ।
ता नो विश्वानि जरिता चिकेत परातरं सु निर्ऋतिर्जिहीताम् ॥ ३ ॥
अभि । सु । अर्यः । पौंस्यैः । भवेम । द्यौः । न । भूमिम । गिरयः । न । अज्रान् ।
ता । नः । विश्वानि । जरिता । चिकेत । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥३॥

वयम् ᵛअर्यः अरीन् शत्रून् ᵛपौंस्यैः पुंस्त्वैः बलैः ᵛसु सुष्ठु ᵛअभि ᵛभवेम । ᵛद्यौर्न ᵛभूमिं सूर्यो यथा स्वरश्मिभिर्भूमिमभिभवति तद्वत् । ᵛगिरयो ᵛनाज्रान् । गिरिर्वज्रः । ते यथा अज्रान्[3] अजनशीलान् मेघानभिभवन्ति तद्वत् । ᵛता तानि यानि ᵛनः अस्माभिः कृतानि स्तोत्राणि तानि ᵛविश्वानि सर्वाणि ᵛजरिता स्तुता सती ᵛनिर्ऋतिः ᵛचिकेत जानाति । शिष्टमुक्तम् ॥

मो षु णः सोम मृत्यवे परा दाः पश्येम नु सूर्यमुच्चरन्तम् ।
द्युभिर्हितो जरिमा सू नो अस्तु परातरं सु निर्ऋतिर्जिहीताम् ॥ ४ ॥
मो इति । सु । नः । सोम । मृत्यवे । परा । दाः । पश्येम । नु । सूर्यम् । उत्ऽचरन्तम् ।
द्युऽभिः । हितः । जरिमा । सु । नः । अस्तु । पराऽतरम् । सु । निःऽऋतिः । जिहीताम् ॥४॥

हे ᵛसोम ᵛनः अस्मान् ᵛसु सुष्ठु ᵛमृत्यवे ᵛमो ᵛपरा ᵛदाः मैव परादानं कुरु । मृत्यवधीनान् मा कार्षीः । किंतु ᵛनु इदानीम् ᵛउच्चरन्तम् ऊर्ध्वं गच्छन्तमुदयन्तं ᵛसूर्यं ᵛपश्येम[4] । चिरकालं जीवेमेत्यर्थः । जीवाभावे सूर्यदर्शनासंभवादित्यभिप्रायः । किंच ᵛद्युभिः । अहर्नामैतत् । अहोभिः दिवसैः ᵛहितः प्रेरितः ᵛजरिमा जराभावः ᵛनः अस्माकं ᵛसु सुखकरः ᵛअस्तु । शिष्टमुक्तम् ॥

असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः ।
रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ॥ ५ ॥
असुऽनीते । मनः । अस्मासु । धारय । जीवातवे । सु । प्र । तिर । नः । आयुः ।
ररन्धि । नः । सूर्यस्य । सम्ऽदृशि । घृतेन । त्वम् । तन्वम् । वर्धयस्व ॥ ५ ॥

१. त-भ-' निर्ऋत्यै ' नास्ति । २. त-भ-मु-निर्ऋत्यै इत्यर्थः । ३. ग-त-भ-मु-' अज्रान् ' नास्ति ।
४. त-भ-मु-पश्येम पश्यामः ।

हे ᵛअसुनीते मनुष्याणामसूनां नेत्रि देवि ᵛअस्मासु ᵛमनः पुनः ᵛधारय। किंच ᵛजीवातवे जीवितुं ᵛसु ᵛप्र ᵛतिर सुष्ठु वर्धय ᵛनः अस्माकम् ᵛआयुः। किंच ᵛरन्धि स्थापय ᵛनः अस्मान् ᵛसूर्यस्य ᵛसंदृशि चिरसंदर्शने। ᵛत्वं च ᵛघृतेन अस्माभिर्दत्तेन ᵛतन्वं शरीरं[1] ᵛवर्धयस्व वर्धय ॥॥२२॥

**असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्।**
**ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ॥ ६ ॥**

असुऽनीते। पुनः। अस्मासु। चक्षुः। पुनरिति। प्राणम्। इह। नः। धेहि। भोगम्।
ज्योक्। पश्येम। सूर्यम्। उत्ऽचरन्तम्। अनुऽमते। मृळय। नः। स्वस्ति ॥ ६ ॥

हे ᵛअसुनीते प्राणदायिनि[2] देवि ᵛअस्मासु। अस्मदीये सुबन्धावित्यर्थः। ᵛपुनः ᵛचक्षुः प्रकाशकं नयनम्। ईक्षणसामर्थ्यमित्यर्थः। किंच ᵛप्राणं ᵛपुनः अस्मासु ᵛधेहि स्थापय। वयं च ᵛज्योक् चिरम् ᵛउच्चरन्तम् उद्गच्छन्तं ᵛसूर्यं[3] ᵛपश्येम। हे ᵛअनुमते देवि ᵛस्वस्ति अविनाशं यथा स्यात्तथा[4] ᵛनः अस्मान् ᵛमृळय सुखय॥

**पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम्।**
**पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्यां३ या स्वस्तिः ॥ ७ ॥**

पुनः। नः। असुम्। पृथिवी। ददातु। पुनः। द्यौः। देवी। पुनः। अन्तरिक्षम्।
पुनः। नः। सोमः। तन्वम्। ददातु। पुनरिति। पूषा। पथ्याम्। या। स्वस्तिः ॥ ७ ॥

ᵛपृथिवी देवी ᵛनः अस्मभ्यम् ᵛअसुं प्राणं ᵛददातु। ᵛपुनः ᵛद्यौः देवता असुं ददातु। तथा ᵛअन्तरिक्षम् अन्तरिक्षदेवता असुं ददातु। तथा ᵛसोमः ᵛनः ᵛतन्वं शरीरं ᵛपुनः ᵛददातु[5]। तथा ᵛपूषा पोषाभिमानिनी[6] देवता[7] ᵛपथ्याम्। 'पन्था अन्तरिक्षम्' (निरु. ११.४५)। तत्र भवां वाचम्। वागात्मकः शब्दो ह्याकाशादुत्पद्यते। तां ᵛपुनः ददातु। ᵛकिंच[8] ᵛया ᵛस्वस्तिः या लोके वेदे च स्वस्तिरुच्यते तामपि पूषा प्रयच्छतु[8]। यद्वा। पूषा पापं प्रयच्छतु। या स्वस्तिर्वाग्नाम्नी देव्यस्ति सा पथ्यां वाचं प्रयच्छतु। 'वाग्वै पथ्या स्वस्तिः' (श. ब्रा. ३. २. ३. ८) इति ब्राह्मणम्॥

**शं रोदसी सुबन्धवे यह्वी ऋतस्य मातरा।**
**भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥ ८ ॥**

शम्। रोदसी इति। सुऽबन्धवे। यह्वी इति। ऋतस्य। मातरा।
भरताम्। अप। यत्। रपः। द्यौः। पृथिवि। क्षमा। रपः।
मो इति। सु। ते। किम्। चन। आममत् ॥ ८ ॥

---

१. ग४-त१.२.३.७-स्वशरीरं। २. ग-त१.२.३.७.८-भ-मु-प्राणप्रदायिनि। ३. ग-त-भ५.६.८-मु-सूर्य देवं। ४. ग-त-भ-मु-तथा। ५. भ-ददातु किंच या स्वस्तिर्या लोके वेदे च स्वस्तिरुच्यते तामपि पूषा प्रयच्छतु। ६. त१.२.३.७-भ४.६.८-पोषाभिमानि। ७. त-भ-देवता या। ८. भ-'किंच......प्रयच्छतु' नास्ति।

इदमादिभिस्तिसृभिः[1] द्यावापृथिव्योः स्तुतिः। ᐯरोदसी द्यावापृथिव्यौ ᐯसुबन्धवे ᐯशं सुखं प्रयच्छताम्। कीदृश्यौ ते। ᐯयह्वी महत्यौ ᐯऋतस्य यज्ञस्योदकस्य वा ᐯमातरा निर्मात्र्यौ। ᐯयद्रपः पापं कृच्छ्रमस्ति[2] तत् ᐯअप ᐯभरताम् अपहरताम् अपनयताम्। हे ᐯद्यौः हे ᐯपृथिवि हे द्यावापृथिव्यौ ᐯक्षमा क्षमायां सत्याम्। यद्वा क्षमा पृथगप्युच्यते। क्षमाप्यपहरतु[3]। एवमुक्त्वा सुबन्धुं बन्ध्वादयो ब्रुवते। हे सुबन्धो ᐯते त्वां ᐯमो ᐯषु मैव सुष्ठु ᐯकिं ᐯचन ᐯरपः कृच्छ्रम् ᐯआममत् हिनस्तु॥

अव॑ द्व॒के अव॑ त्रि॒का दि॒वश्च॑रन्ति भेष॒जा।
क्ष॒मा च॑रि॒ष्ण्वे॑क॒कं भर॑ता॒मप॒ यद्रपो॑
द्यौः पृ॑थिवि क्ष॒मा रपो॒ मो षु ते॒ किं च॒नाम॑मत्॥ ९॥

अव॑। द्व॒के इति॑। अव॑। त्रि॒का। दि॒वः। च॒रन्ति॑। भे॒ष॒जा।
क्ष॒मा। च॒रि॒ष्णु। ए॒क॒कम्। भर॑ताम्। अप॑। यत्। रपः॑।
द्यौः। पृ॒थि॒वि॒। क्ष॒मा। रपः॑। मो इति॑। सु। ते॒। किम्। च॒न। आ॒म॒म॒त्॥ ९॥

ᐯदिवः द्युलोकात् ᐯभेषजा भेषजानि ᐯद्वके द्विकं ᐯत्रिका त्रिकं च ᐯअव ᐯचरन्ति। अत्राश्विनौ[4] द्विकमवचरतः। इळा सरस्वती भारती त्रिकमवचरन्ति। ᐯक्षमा क्षमायां ᐯचरिष्णु चरति ᐯएककम् एकं भेषजमित्यभिप्रायमाह। तानि सर्वाणि सुबन्धोः प्राणं परिरक्षन्त्विति शेषः॥

समि॑न्द्रेरय॒ गाम॑न॒ड्वाहं॒ य आव॑हदुशी॒नरा॑ण्या॒ अनः॑।
भर॑ता॒मप॒ यद्रपो॒ द्यौः पृ॑थिवि क्ष॒मा रपो॒ मो षु ते॒ किं च॒नाम॑मत्॥१०॥

सम्। इ॒न्द्र॒। ई॒र॒य॒। गाम्। अ॒न॒ड्वाह॑म्। यः। आ। अव॑हत्। उ॒शी॒नरा॑ण्याः। अनः॑।
भर॑ताम्। अप॑। यत्। रपः॑। द्यौः। पृ॒थि॒वि॒। क्ष॒मा। रपः॑।
मो इति॑। सु। ते॒। किम्। च॒न। आ॒म॒म॒त्॥ १०॥

हे ᐯइन्द्र ᐯसम् ᐯईरय संप्रेरय। किम्। ᐯगां गन्तारम् ᐯअनड्वाहम् अनोवहनसमर्थम्[5]। ᐯयः अनड्वान् ᐯआवहत् आवहत्यस्मान्प्रति। किम्। ᐯअनः शकटम्। कस्य। ᐯउशीनराण्याः एतन्नामिकाया ओषधेः। ययार्तमनुलिम्पन्ति सोशीनराणी। भरतामित्यादि गतम्॥　　॥ २३॥

'आ जनम्' इति द्वादशर्चमष्टादशं सूक्तम्। गौपायना बन्ध्वादय ऋषयः। षष्ठ्यास्त्वगस्त्यस्य स्वसैषां मातर्षिका। आदितः पञ्च गायत्र्यः। अष्टमीनवम्यौ पङ्क्ती। शिष्टा अनुष्टुभः। आदितश्चतसृणामसमातिनाम्नो राज्ञः स्तूयमानत्वात् स एव देवता। पञ्चम्या इन्द्रः। षष्ठ्या अप्यसमातिः। ततः पञ्चानां सुबन्धोर्जीविताह्वानरूपोऽर्थो देवता। 'अयं मे हस्तः' इत्यस्या लब्धसंज्ञस्य सुबन्धोः स्पर्शनहेतुभूतो देवता। तथा चानुक्रमणिका—'आ जनमिति द्वादशर्चमानुष्टुभं चतसृभिरसमातिमस्तुवन्पञ्चम्यैन्द्रं षष्ठ्यागस्त्यस्य स्वसा मातैषां राजानमस्तौत्पराभिः सुबन्धोर्जीवमाह्वयंस्तमन्यया लब्धसंज्ञमस्पृशन् पञ्चाद्या गायत्र्योऽष्टम्याद्ये पङ्क्ती' इति॥

१. त-मु—इदमादिभिस्त्रिभिः। २. त-भ२.४.८-मु—कृच्छ्रं चास्ति। ३. भ१.७—द्यौरप्यपहरतु। ४. त१.२.३.६.७.८ भ-मु—तत्राश्विनौ। ५. त-भ२.८-मु—°समर्थं गां।

**आ जनं त्वेषसंदृशं माहीनानामुपस्तुतम् । अगन्म बिभ्रतो नमः ॥ १ ॥**

आ । जनम् । त्वेषऽसंदृशम् । माहीनानाम् । उपऽस्तुतम् । अगन्म । बिभ्रतः । नमः ॥१॥

इदमादिभिस्तिसृभी राजानं स्तुवन्ति । वयं बन्ध्वादयः ᵛजनं जनपदमसुनीतिस्वभूतम्[1] ᵛआ ᵛअगन्म अभिगताः । गमेर्लुङि 'मन्त्रे घस°' इति च्लेर्लुक् । 'म्वोश्च' इति मकारस्य नकारः । कीदृशं जनम् । ᵛत्वेषसंदृशं दीप्तदर्शनं ᵛमाहीनानां महताम् ᵛउपस्तुतम् उपगतस्तुतिम् । 'तादौ च°' इति गतेः प्रकृतिस्वरः । कीदृशा वयम् । ᵛनमः नमस्कारं ᵛबिभ्रतः धारयन्तः[2] । कुर्वन्त इत्यर्थः । यद्वा । जनमसमातिमित्यर्थः । शिष्टं समानम् । नमो[3] बिभ्रत[3] इति राजकृते नमस्कारं धारयन्त इत्यर्थः ॥

**असमातिं नितोशनं त्वेषं निययिनं रथम् । भजेरथस्य सत्पतिम् ॥ २ ॥**

असमातिम् । निऽतोशनम् । त्वेषम् । निऽययिनम् । रथम् । भजेऽरथस्य । सत्ऽपतिम् ॥२॥

ᵛअसमातिं राजानं ᵛनितोशनं शत्रूणां हन्तारम् । नितोशतिर्वधकर्मा । ᵛत्वेषं दीप्तम् । ᵛनिययिनं ᵛरथम् इत्युपमाप्रधानो निर्देशः । रथवत् सर्वाभिमतप्राप्तिसाधनं ᵛभजेरथस्य एतन्नामकस्य राज्ञो वंशे जातम् । यद्वा । एतन्नामा कश्चिदस्य शत्रुः । तस्य[4] निययिनम् । 'हलदन्तात्°' (पा. सू. ६. ३. ९) इति सप्तम्या अलुक् । ᵛसत्पतिं सतां पालकम् ॥

**यो जनान् महिषाँ इवातितस्थौ पवीरवान् । उतापवीरवान् युधा ॥ ३ ॥**

यः । जनान् । महिषान्ऽइव । अतिऽतस्थौ । पवीरवान् । उत । अपवीरवान् । युधा ॥ ३ ॥

ᵛयः असमातिः ᵛजनान् स्वविरोधिभूतान् ᵛअतितस्थौ अतिक्रम्य तिष्ठति । पराभावयतीत्यर्थः[5] । क[6] इव[6] । ᵛमहिषान् सिंह ᵛइव । कीदृशः सन् । ᵛपवीरवान् । पवीरः पविः । खड्गवान् । ᵛउत अपि च ᵛअपवीरवान् अपगतखड्गः सन् । शस्त्रसाहाय्यमपि कदाचिन्नापेक्षत इत्यर्थः । किं कुर्वन् । ᵛयुधा योधनेन । युद्ध्वेत्यर्थः ॥

**यस्येक्ष्वाकुरुप व्रते रेवान्मराय्येधते दिवीव पञ्च कृष्टयः ॥ ४ ॥**

यस्य । इक्ष्वाकुः । उप । व्रते । रेवान् । मराय़ी । एधते । दिविऽइव । पञ्च । कृष्टयः ॥४॥

ᵛयस्य जनपदस्य ᵛइक्ष्वाकुः राजा ᵛव्रते कर्मणि रक्षणरूपे ᵛउप ᵛएधते प्रवर्धते । कीदृशः सन् । ᵛरेवान् रयिवान् ᵛमरायी शत्रूणां मारकश्च सन् । विशेषणद्वयेन जनानां दानादिरूपेण धनलाभः परराजोपद्रवापत्तिश्चोक्ता भवति । एवं सति तद्विषयस्थाः ᵛपञ्च ᵛकृष्टयः निषादपञ्चमाश्चत्वारो वर्णाः ᵛदिवीव द्युलोके यथा संकल्पसिद्धाः सन्तः सुखिनो भवन्ति तद्वत्सुखिनो भवन्तीति शेषः ॥

**इन्द्र क्षत्रासमातिषु रथप्रोष्ठेषु धारय । दिवीव सूर्यं दृशे ॥ ५ ॥**

इन्द्र । क्षत्रा । असमातिषु । रथऽप्रोष्ठेषु । धारय । दिविऽइव । सूर्यम् । दृशे ॥ ५ ॥

अनयेन्द्रमाह्वयतेऽसमात्यर्थम् । हे ᵛइन्द्र ᵛक्षत्रा क्षत्राणि बलानि ᵛरथप्रोष्ठेषु ᵛअसमातिषु । एकस्मिन् बहुवचनं पूजार्थम् । रथप्रोष्ठेऽसमातौ ᵛधारय । ᵛदिवीव ᵛसूर्यं दिवि यथा सूर्यं ᵛदृशे सर्वेषां दर्शनाय स्थापितवानसि तद्वदत्र बलं धारय ॥

---

१. त१.२.३.७-भ१.२.४.७–°मसुनीतिं असुनीतिस्वभूतं । २. त-भ१.२.४.६.८–धारयतः । ३. त१.२.३.६.७.८-भ–आबिभ्रत । ४. त२.३.७-भ–'तस्य' नास्ति । ५. ग-त-मु–पराभवतीत्यर्थः; भ–पराभवेत्यर्थः । ६. ग-त-भ-मु–किमिव ।

अगस्त्यस्य नद्भ्यः सप्ती युनक्षि रोहिता ।
पणीन्न्यक्रमीरभि विश्वान्राजन्नराधसः ॥ ६ ॥

अगस्त्यस्य । नत्ऽभ्यः । सप्ती इति । युनक्षि । रोहिता ।
पणीन् । नि । अक्रमीः । अभि । विश्वान् । राजन् । अराधसः ॥ ६ ॥

अनयागस्त्यस्य स्वसा बन्ध्वादीनां माता राजानं स्तौति । हे vराजन् असमाते त्वम् vअगस्त्यस्य ऋषेः vनद्भ्यः नन्दयितृभ्यो बन्ध्वादिभ्यो निमित्तभूतेभ्यस्तेषां धनप्राप्तये vसप्ती सर्पणस्वभावावश्वौ vरोहिता रोहितवर्णौ vयुनक्षि योजय रथे । तथा कृत्वा vविश्वान् सर्वान् vअराधसः अदातॄनयजमानान् vपणीन् वणिजः लुब्धकान् vनि निकृष्टं नितरां वा vअभि vअक्रमीः अभिभव ॥ ॥ २४ ॥

अयं मातायं पितायं जीवातुरागमत् । इदं तव प्रसर्पणं सुबन्धवेहि निरिहि ॥७॥

अयम् । माता । अयम् । पिता । अयम् । जीवातुः । आ । अगमत् ।
इदम् । तव । प्रऽसर्पणम् । सुबन्धो इति सुऽबन्धो । आ । इहि । निः । इहि ॥ ७ ॥

अत्र शेषे शाट्यायनकम्—‘ अथाग्निं द्वैपदेन सूक्तेनास्तुवन् । अग्निः स्तुत आजगाम । आगत्य चाह किंकामा मागच्छतेति । सुबन्धोरेवासुं पुनर्वेनुयामेत्यब्रुवन् । एषान्तःपरिधीत्यब्रवीत्तमादद्ध्वमिति । तन्निराह[1] । अयं[1] मातायं पिता ’ इति । शौनकश्च—‘ स्तुतः स राजा सुप्रीतस्तस्थौ गौपायनानभि ॥ सूक्तेन तेऽस्तुवन्नग्निं द्वैपदेन यथाग्निषु । अथाग्निरब्रवीदेतानयमन्तःपरिध्यसुः ॥ सुबन्धोरस्य चेक्ष्वाकोर्मया गुप्तो हितार्थिना । सुबन्धवे प्रदायासुं जीवेत्युक्त्वा च पावकः ॥ स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति । अयं मातेति हृष्टास्ते सुबन्धोरसुमाह्वयन् ॥ शरीरमभिनिर्दिश्य सुबन्धोः पतितं भुवि । सूक्तशेषं जगुश्चास्य चेतसो धारणाय ते’ ( बृहद्दे. ७. ९७. १०१ ) इति ॥ vअयम् अग्निः vमाता । vअयम् एव vपिता । vअयं vजीवातुः जीवयिता vआगमत् आजगाम । अतो हे vसुबन्धो जीवपरिधौ वर्तमान[2] vइदं तव शरीरं vतव vप्रसर्पणं प्रकर्षेण सर्पणसाधनम् । अत इदं प्रति vएहि आगच्छ । vनिरिहि निर्गच्छ परिधेः सकाशात् । अन्य एवं व्याचक्षते । हे निर्गतप्राण सुबन्धो अयम् । विभक्तिव्यत्ययः । इयं मातायं पितायं जीवातुर्जीवनफलभूतः पुत्रश्चागमदिति संबध्यते । सर्वे त्वामागता दुःखिताः सन्तः । शिष्टं समानम् ॥

यथा युगं वरत्रया नह्यन्ति धरुणाय कम् ।
एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥ ८ ॥

यथा । युगम् । वरत्रया । नह्यन्ति । धरुणाय । कम् ।
एव । दाधार । ते । मनः । जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ ८ ॥

vयथा vयुगं vवरत्रया पाशेन vनह्यन्ति बध्नन्ति vधरुणाय रथादिधारणाय । vकम् इति पादपूरणः । vएव एवं vते vमनः vदाधार परिधावग्निः । किमर्थम् । vजीवातवे जीवनाय vन vमृत्यवे मरणाय न vअथो अपि च vअरिष्टतातये अविनाशाय । स्वार्थिकस्तातिः ॥

---

१. त१.२.३.७-भ१.८–तन्निराहन्नयं; भ४–तन्निराहनयं; भ७–तन्निराहंनयं; मु–तं निराहरन्नयं ।
२. त-भ१.२.७–वर्तमानं ।

यथेयं पृथिवी मही दाधारेमान्वनस्पतीन् ।
एवा दाधार ते मनो जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥ ९ ॥

यथा । इयम् । पृथिवी । मही । दाधार । इमान् । वनस्पतीन् ।
एव । दाधार । ते । मनः । जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ ९ ॥

यथेयं पृथिवी मही[1] इमान् वनस्पतीन् वृक्षादीन् दाधार । शिष्टमुक्तम् ॥

यमादहं वैवस्वतात्सुबन्धोर्मन आभरम् ।
जीवातवे न मृत्यवेऽथो अरिष्टतातये ॥ १० ॥

यमात् । अहम् । वैवस्वतात् । सुऽबन्धोः । मनः । आ । अभरम् ।
जीवातवे । न । मृत्यवे । अथो इति । अरिष्टऽतातये ॥ १० ॥

इयं निगदसिद्धा ॥

न्य१ग्वातोऽव वाति न्यक्तपति सूर्यः ।
नीचीनमघ्न्या दुहे न्यग्भवतु ते रपः ॥ ११ ॥

न्यक् । वातः । अव । वाति । न्यक् । तपति । सूर्यः ।
नीचीनम् । अघ्न्या । दुहे । न्यक् । भवतु । ते । रपः ॥ ११ ॥

वातः वायुर्द्युलोकात् न्यक् नीचीनम् अव वाति गच्छति । सूर्यः च न्यक् तपति । अघ्न्या अहननीया गौः नीचीनं दुहे दुग्धे । एवं ते रपः पापं न्यक् नीचीनं भवतु ॥

अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥ १२ ॥

अयम् । मे । हस्तः । भगऽवान् । अयम् । मे । भगवत्ऽतरः ।
अयम् । मे । विश्वऽभेषजः । अयम् । शिवऽअभिमर्शनः ॥ १२ ॥

अनया बन्धवादयो लब्धजीवं सुबन्धुं पाणिभिरस्पृशन् । अयं मे हस्तो भगवान्[2] यस्मात् सजीवं[3] सुबन्धुं स्पृशति तस्मात् । तथा अयं मे हस्तः भगवत्तरः अतिशयेन भगवान् । तथा अयं मे हस्तः विश्वभेषजः जीवचिकित्सासाधनसर्वौषधवान् तत्स्थानीयो वा । अयं शिवाभिमर्शनः मङ्गलस्पर्शनः । यतो जीवन्तं स्पृशत्यत इत्यर्थः ॥ ॥ २५ ॥ ॥ ४ ॥

पञ्चमेऽनुवाकेऽष्टौ सूक्तानि । तत्र 'इदमित्था' इति सप्तविंशत्यृचं प्रथमं सूक्तं मानवस्य नाभानेदिष्ठस्यार्षं त्रैष्टुभम् । इदमादीनि षट् सूक्तानि वैश्वदेवानि । तथा चानुक्रान्तम्—'इदमित्था सप्ताधिका नाभानेदिष्ठो मानवो वैश्वदेवं तत्' इति । पृष्ठ्यस्य षष्ठेऽहनि वैश्वदेवशस्त्र आभिप्लविकाति-

१. ग-त४.५–मह्य महती; त१.२.३.७–महती । २. ग-त-मु–भगवान् भाग्यवान् । ३. त-भ१.६.८–सजीवः; भ२–सजीवि ।

देशप्राप्तस्य उपासानक्ता इत्यस्य स्थाने इदं सूक्तम्। सूत्रितं च—'उद्धृत्य[1] चोत्तमं[1] सूक्तं त्रीणीदमित्था रौद्रमिति ' ( आश्व. श्रौ. ८. १ ) इति[2]। अत्रैतरेयब्राह्मणं—' नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्त्सोऽब्रवीदेत्य किं मह्यमभाक्तेत्येतमेव निष्ठावमववदितारमित्यब्रुवन् ' ( ऐ. ब्रा. ५. १४ ) इत्यादि। तत्र नाभानेदिष्ठो भ्रातृभिर्भागे निराकृतः पितृसामीप्यमागत्य किं मह्यं भागं न कल्पितवानसीत्यपृच्छत्। स च किमनेन भागेन। अङ्गिरसः स्वर्गार्थं सत्रमासीनाः षष्ठाहःपर्यन्तमनुष्ठाय मुह्यन्ति। तान् ' इदमित्था ' इति सूक्ते शंसय ते स्वर्गं यन्तो वस्मिष्ठा गाः[3] सहस्रसंख्याकान् दास्यन्तीति पित्रा प्रेरितोऽङ्गिरसां समीपमागत्य तेभ्यः सत्रपरिवेषणं गोसहस्रमुत्कोचं परिकल्प्य तानेते सूक्ते षष्ठेऽहन्यशंसयत्। ते च तत्सूक्तसामर्थ्याद्यज्ञं पारं प्रापय्य स्वर्जिगमिषवोऽस्मै गोसहस्रं प्रादुः। तं च तद्गोसहस्रं स्वीकुर्वाणं कश्चन कृष्णशवासी पुरुष उत्तरत उत्थाय ब्राह्मण मदीयं[4] यज्ञशेषभागं मा स्वीकुर्वित्यब्रवीत्। स च मह्यमङ्गिरसः प्रादुरिति प्रत्यब्रवीत्। तर्हि ब्राह्मण तव पितरमेव पृच्छ कस्मै भागः प्राप्नुयादित्युक्तः पितृसमीपमागत्य पित्रा रुद्रायायं न्याय्य इति तेनोक्तस्तवैवायं भाग इति मम पिताब्रवीदिति प्रत्युवाच। ततो यथार्थकथनेन तुष्टः पुरुषो नाभानेदिष्ठायैव स्वं भागं प्रादादित्युक्तम्। तथाध्वर्युब्राह्मणेऽपि ' मनुः पुत्रेभ्यो दायं व्यभजत् स नाभानेदिष्ठं[5] ' ( तै. सं. ३. १. ९. ४ ) इत्यादिनायमर्थ उक्तः। तत्सर्वमत्रानुसंधेयम् ॥

**इदमित्था रौद्रं गूर्तवचा ब्रह्म क्रत्वा शच्यामन्तराजौ।**
**क्राणा यदस्य पितरा मंहनेष्ठाः पर्षत्पक्थे अहन्ना सप्त होतॄन् ॥ १ ॥**

इदम्। इत्था। रौद्रम्। गूर्तऽवचाः। ब्रह्म। क्रत्वा। शच्याम्। अन्तः। आजौ।
क्राणा। यत्। अस्य। पितरा। मंहनेऽस्थाः। पर्षत्। पक्थे। अहन्। आ। सप्त। होतॄन् ॥ १ ॥

गूर्तवचाः उद्यतवचनो नाभानेदिष्ठः इदं ब्रह्म स्तोत्रं रौद्रं रुद्रप्रीणनम्[6] इत्था इत्थमिदानींक्रियमाणप्रकारं क्रत्वा प्रज्ञानेन निष्पाद्यं स्तोत्रं शच्यामन्तः कर्मणि सत्रमध्ये आजौ अङ्गिरसां संघे करोतीति शेषः। यत् स्तोत्रं क्राणा भागं कुर्वाणा भागं कुर्वाणौ अस्य पितरा पितरावन्ये च मंहनेष्ठाः भागप्रदाने वर्तमाना[7] भ्रातरश्च गोलाभसाधनत्वेनाकल्पयन्निति[8] शेषः। तेन नाभानेदिष्ठः पक्थे पक्तव्ये अहन् अहनि। षष्ठेऽहनीत्यर्थः। ' ते षष्ठंषष्ठमेवाहरागत्य[9] मुह्यन्ति[10] तानेते[10] सूक्ते षष्ठेऽहनि शंसय ' ( ऐ. ब्रा. ५.१४ ) इत्युक्तत्वात्। सप्त होतॄन् होतृप्रशास्तृब्राह्मणाच्छंस्यादिकान् आ पर्षत् सर्वतोऽपूरयत्। इदमित्थेति सूक्ताभ्यां यज्ञं पारं प्रापयामासेत्यर्थः ॥

**स इद्दानाय दभ्याय वन्वञ्च्यवानः सूदैरमिमीत वेदिम्।**
**तूर्वयाणो गूर्तवचस्तमः क्षोदो न रेत इतऊति सिञ्चत् ॥ २ ॥**

सः। इत्। दानाय। दभ्याय। वन्वन्। च्यवानः। सूदैः। अमिमीत। वेदिम्।
तूर्वयाणः। गूर्तवचःऽतमः। क्षोदः। न। रेतः। इतःऽऊति। सिञ्चत् ॥ २ ॥

स इत् स कृष्णशवासी पुरुषो रुद्राख्यः दानाय स्तोतॄणां धनप्रदानाय दभ्याय शत्रूणां वधाय च वन्वन् स्तोतॄन् संभजन् सूदैः सूदकैर्हिंसकैः[11] शस्त्रैः च्यवानः रक्षांसि च्यावयन् वेदिम्

१. त-भ–उद्धृतं। २. त-भ-मु–' इति ' नास्ति। ३. त-भ–' गाः ' नास्ति। ४. ग-त६.८-भ४. ६-मु–अस्मदीयं; त१.२.३-भ२.८–मस्मदीयं। ५. ग-त-भ१.२.४.६.८–नाभानेदिष्ठं वै मानवं। ६. ग-त-मु–रुद्रप्रीणनं। ७. भ–प्रवर्तमाना। ८. भ–ऋणलाभ°। ९. त-भ-मु–षष्ठमेवा°। १०. त-भ–मुह्यंते। ११. ग-त-भ४.६.८–हिंसकैः; भ१.२.७–सूदकैः।

अभिमीत परिमितवान्। यज्ञवास्त्वधिष्ठितवानित्यर्थः। 'तं कृष्णशवास्युत्तरत[1] उपोत्थाया-ब्रवीन्मम' वा इदं मम वै वास्तुहमिति' (ऐ. ब्रा. ५. १४) इति ब्राह्मणम्। तदेवाह। तूर्वयाणः तूर्णगमनः गूर्तवचस्तमः अत्यन्तमुद्यतवचा[2] रुद्रः क्षोदो न उदकमिव। उदकं यथा घनः सिञ्चति तद्वत् रेतः स्वसामर्थ्यम् इतऊति इतोगमनवद्यथा भवति तथा सिञ्चत् प्रेरितवानित्यर्थः। यद्वा। अनेनोत्तरार्धेनोत्तराभ्यां च प्रासङ्गिक्यश्विनोः स्तुतिः क्रियते। तूर्वयाणस्तूर्णगमनोऽतिशयेनोद्यतवचनो रुद्रः क्षोदो न उदकमिव रेत उत्पादनसामर्थ्योपेतं रेत इतऊति सिञ्चत् जनयामासाश्विनौ। अन्यत्रेतऊतीत्यश्विनोरभिधानादन्यत्र तयो रुद्रपुत्रत्वसिद्धेश्चायमर्थो लभ्यते॥

**मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता।**
**आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्तौ॥ ३॥**

मनः। न। येषु। हवनेषु। तिग्मम्। विपः। शच्या। वनुथः। द्रवन्ता।
आ। यः। शर्याभिः। तुविऽनृम्णः। अस्य। अश्रीणीत। आऽदिशम्। गभस्तौ॥ ३॥

हे अश्विनौ युवां मनो न मन इव यथा मनः तिग्मं तीक्ष्णमाशु धावति आगच्छति[3] एवं येषु हवनेषु आह्वानेषु विपः स्तोतुः शच्या प्रज्ञानेन गन्तव्यमिति बुद्ध्या द्रवन्ता द्रवन्तौ गच्छन्तौ वनुथः संभजथः[4]। यः अध्वर्युः आ आभिमुख्येन तुविनृम्णः प्रभूतहविर्लक्षणधनः सन् अस्य कर्मणि प्रवृत्तस्य मम संबन्धी शर्याभिः अङ्गुलीभिः अश्रीणीत श्रीणाति। किं कृत्वा। गभस्तौ हस्ते धृत्वा आदिशम् आदिश्य। इदमश्विभ्यामिति निर्दिश्येत्यर्थः। तादृशं मदीय-मध्वर्युं येषु हवनेषु वनुथः संभजथः[5] तौ युवां हुव इत्युत्तरत्र संबन्धः॥

**कृष्णा यद्गोष्वरुणीषु सीदद्दिवो नपाताश्विना हुवे वाम्।**
**वीतं मे यज्ञमा गतं मे अन्नं ववन्वांसा नेषमस्मृतध्रू॥ ४॥**

कृष्णा। यत्। गोषु। अरुणीषु। सीदत्। दिवः। नपाता। अश्विना। हुवे। वाम्।
वीतम्। मे। यज्ञम्। आ। गतम्। मे। अन्नम्। ववन्वांसा। न। इषम्। अस्मृतध्रू इत्यस्मृतऽध्रू॥ ४॥

कृष्णा रात्रिः यत् यदा अरुणीषु अरुणवर्णासु गोषु सीदत् निवसति। उषा विभासनाय[6] रथमधितिष्ठतीत्यर्थः। 'अरुण्यो गाव उषसाम्' इति निरुक्तम्। उषःकाले हे दिवो नपाता दीप्यमानस्य स्वर्गस्य प्रकाशात्मकस्य यागस्य[7] वा न पातयितारौ हे अश्विनौ वां हुवे आह्वये। वीतं कामयेथां मे अन्नं हविर्लक्षणम्। तदर्थं मे यज्ञम् आ गतम् आगच्छतम्। इषम् अन्नं ववन्वांसा न संभजमानावश्वाविव। तद्वदागतम्। कीदृशौ युवाम्। अस्मृतध्रू अस्मृतद्रोहौ मयि द्रोहमस्मरन्तौ॥

**प्रथिष्ट यस्य वीरकर्ममिष्णदनुष्ठितं नु नर्यो अपौहत्।**
**पुनस्तदा वृहति यत्कनाया दुहितुरा अनुभृतमनर्वा॥ ५॥**

---

१. त.भ-कृष्णशवास्युपोत्थाया°। २. भ१.२-अत्यंतं गूर्तवचा; भ७-अत्यंतं गूर्भवचा। ३. ग४-त-मु-'आगच्छति' नास्ति; भ१.४.८-एवति; भ२-एजति। ४. ग-त-भ२.४.८-'संभजथः' नास्ति। ५. ग-त-भ६-मु-'संभजथः' नास्ति। ६. ग-त-भ१.२.४.६.८-मु-विभानाय। ७. त१.२.३.७-मु-'यागस्य' नास्ति; भ१.२.४.७.८-स्वर्गस्य।

प्रथिष्ट । यस्य॑ । वीरऽक॑र्मम् । इष्णत् । अनु॑ऽस्थितम् । नु । नर्यः॑ । अप॑ । औहत् ।
पुनः॑ । तत् । आ । वृहति । यत् । कनायाः॑ । दुहितुः । आः । अनु॑ऽभृतम् । अनर्वा ॥५॥

यथा स्वांशेन भगवान् रुद्रः प्रजापतिर्वास्तोष्पतिं रुद्रमसृजत् तदेतदादिभिस्तिसृभिर्वदति । ^यस्य प्रजापतेः ^इष्णत् एषणवत् ^वीरकर्मम् । लिङ्गव्यत्ययः। वीरकर्म[1] । रेत इत्यर्थः[1]। येन रेतसोत्पन्ना वीरा भवन्ति तादृशेतः ^प्रथिष्ट प्रथितमासीत् तद्रेतः ^अनुष्ठितं प्रजापतिनापत्यार्थं निषिक्तं ^नर्यः नरेभ्यो हितो यद्वा नेतृभ्यो देवेभ्यो हितो रुद्रः ^अपौहत् अपोहति । तदेवाह । ^पुनस्तत् रेतः ^आ ^वृहति सर्वत उत्खिदति उद्गमयति पुरुषाकारेण स्वयमुत्पन्नः सन् । कीदृशं रेतः । ^यत् रेतः ^कनायाः कान्तायाः ^दुहितुः स्वपुत्र्याः तस्यामित्यर्थः । तत्र प्रजापतिना ^अनुभृतम् ^आः आसीत् । अस्तेः सिपि ⁻ ⁻ । कीदृशो रुद्रः । ^अनर्वा अन्यस्मिन्नप्रत्यृतः । 'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये' (ऐ. ब्रा. ३. ३३) इति ब्राह्मणम् ॥ ॥ २६ ॥

**मध्या यत्कर्त्व॑मभ॑वदभी॑के कामं॑ कृण्वाने पि॒तरि॑ युव॒त्याम् ।**
**मनानग्रेतो॑ जहतुर्वियन्ता सानौ॒ निषि॑क्तं सुकृतस्य॒ योनौ॑ ॥ ६ ॥**

मध्या । यत् । कर्त्व॑म् । अभ॑वत् । अभीके॑ । काम॑म् । कृण्वाने । पि॒तरि॑ । युवत्याम् ।
मनानक् । रेतः॑ । जहतुः । विऽयन्ता॑ । सानौ॑ । निऽसि॑क्तम् । सुऽकृतस्य॑ । योनौ॑ ॥ ६ ॥

^कामं यथेच्छं ^कृण्वाने कुर्वाणे ^पितरि[2] प्रजापतौ ^युवत्यां दुहितर्युषसि दिवि वा । 'दिवमित्यन्ये' इति हि ब्राह्मणं प्रदर्शितम् । ^मध्या तयोर्मध्येऽन्तरिक्षमध्ये वा ^अभीके समीपे[3] ^यत् ^कर्त्वं कर्म ^अभवत् मिथुनीभावाख्यं तदानीं ^मनानक् अल्पं[4] ^रेतः ^जहतुः त्यक्तवन्तौ । किं कुर्वाणाविति तत्राह । ^वियन्तौ परस्परमभिगच्छन्तौ । प्रजापतिना ^सानौ समुच्छ्रिते स्थाने ^सुकृतस्य यज्ञस्य ^योनौ ^निषिक्तम् आसीदित्यर्थः । ततो रुद्र उत्पन्न इत्यर्थः ॥

**पि॒ता यत्स्वां दु॑हि॒तर॑मधि॒ष्कन् क्ष्म॒या रेतः॑ संजग्मा॒नो नि षि॑ञ्चत् ।**
**स्वा॒ध्यो॑ऽजनयु॒न् ब्रह्म॑ दे॒वा वास्तो॒ष्पतिं॑ व्रत॒पां निर॑तक्षन् ॥ ७ ॥**

पि॒ता । यत् । स्वाम् । दु॒हि॒तर॑म् । अ॒धि॒ऽस्कन् । क्ष्म॒या । रेतः॑ । सम्ऽजग्मा॒नः । नि । सि॒ञ्च॒त् ।
सु॒ऽआ॒ध्यः॑ । अ॒ज॒न॒य॒न् । ब्रह्म॑ । दे॒वाः । वास्तोः॑ । पति॑म् । व्र॒त॒ऽपाम् । निः । अ॒त॒क्ष॒न् ॥७॥

^पिता प्रजापतिः ^यत् यदा ^स्वां ^दुहितरं दिवमुषसं वा ^अधिष्कन् अध्यस्कन्दत् तदानीमेव ^क्ष्मया पृथिव्या सह ^संजग्मानः संगच्छमानः प्रजापतिरस्मिँल्लोके रोहितं भूतामृश्यो भूत्वा ^रेतः ^नि ^षिञ्चत् निषेकमकरोत् । 'तामृश्यो भूत्वा रोहितं भूतामभ्यैत्' (ऐ. ब्रा. ३. ३३) इति ब्राह्मणम् । तदानीं ^स्वाध्यः सुध्यानाः सुकर्माणो वा ^देवाः ^ब्रह्म ^अजनयन् उदपादयन्[5] । किं तद्ब्रह्मेति तदाह । ^वास्तोष्पतिं यज्ञवास्तुस्वामिनं ^व्रतपां व्रतस्य कर्मणः रक्षःप्रभृतिभ्यः पालकं ^निरतक्षन् समुदपादयन्[6] । यज्ञवास्तुस्वामित्वं दत्त्वा कर्मरक्षकत्वेन निर्मितवन्त इत्यर्थः ॥

---

१. भ–'वीरकर्म...इत्यर्थः' नास्ति । २. त-भ-ते पितरि । ३. त१.२.६.७.८-भ४.८-प्रत्ये समीपे; त४.५-पत्ये समीपे; भ१.७-प्रेत्य समीपे; भ२-प्रत्य समीपे; भ६-प्रत्ये समीपे; मु-प्राप्ते समीपे । ४. त-भ-अलं । ५. ग-त-भ-उत्पादयन् । ६. ग-संपादयन्; त-भ४.६.८-मु-समपादयन्; भ१.२.७-समुत्पादयन् ।

स ईं वृषा न फेनमस्यदाजौ स्मदा परैदप दभ्रचेताः ।
सरत्पदा न दक्षिणा परावृङ् न ता नु मे पृशन्यो जगृभ्रे ॥ ८ ॥

सः । ईम् । वृषा । न । फेनम् । अस्यत् । आजौ । स्मत् । आ । परा । ऐत् । अप । दभ्रऽचेताः ।
सरत् । पदा । न । दक्षिणा । पराऽवृक् । न । ताः । नु । मे । पृशन्यः । जगृभ्रे ॥ ८ ॥

अङ्गिरसां सत्रान्ते नाभानेदिष्ठो गोनिरोधायागच्छन्तं वास्तोष्पतिं पुरतः पश्यन् वदति । ᵛस ᵛईम् सोऽयं ᵛवृषा ᵛन वर्षक इन्द्र इव स यथा नमुचिवधार्थम् ᵛआजौ संग्रामे ᵛफेनमस्यत् क्षिप्तवान् तद्वत्क्षेपमना वास्तोष्पतिरिदानीं तवैव वास्तुभागो युक्त इति यथार्थकथनानन्तरं ᵛस्मत् अस्मत्तः ᵛआ ᵛअप ᵛपरैत अपपरागच्छति । ᵛदभ्रचेताः अल्पमनस्को यः कश्चित् ᵛदक्षिणा दक्षिणार्थानां गवां ᵛपरावृक् परावर्जयिता सन् ᵛपदा पदानि ᵛन ᵛसरत् न सरति अस्मदभिमुखमागच्छति । ᵛमे मम संबन्धिन्यः ᵛताः गाः अङ्गिरोभिर्दत्ताः ᵛपृशन्यः पशिकानामभिस्पर्शनकुशलो रुद्रः ᵛन ᵛजगृभ्रे न गृह्णातीत्येवमाशास्ते ॥

मक्षू न वह्निः प्रजाया उपब्दिरग्निं न नग्न उप सीददूधः ।
सनितेध्मं सनितोत वाजं स धर्ता जज्ञे सहसा यवीयुत् ॥ ९ ॥

मक्षु । न । वह्निः । प्रऽजायाः । उपब्दिः । अग्निम् । न । नग्नः । उप । सीदत् । ऊधः ।
सनिता । इध्मम् । सनिता । उत । वाजम् । सः । धर्ता । जज्ञे । सहसा । यविऽयुत् ॥ ९ ॥

वास्तोष्पतिना रुद्रेण गोप्यमानेऽस्मिन् यज्ञे ᵛवह्निः वह्निवद्दाहको राक्षसादिः ᵛमक्षु[1] ᵛन शीघ्रं न ᵛउप ᵛसीदत् नागच्छति[2] । यो वह्निः ᵛप्रजायाः ᵛउपब्दिः उपपीडको भवति । यज्ञविघातार्थमागच्छति । ऋत्विगादिरूपायाः प्रजाया न पीडां करोत्यहनि । तथा ᵛऊधः । रात्रिनामैतत् । रात्रावपि ᵛअग्निं ज्वलन्तं ᵛनग्नः विवसनो राक्षसादिः ᵛन ᵛउप ᵛसीदत् । एवं रुद्रे रक्षितरि सति सः अग्निः ᵛइध्मं ᵛसनिता ᵛजज्ञे उत्पन्नः । ᵛउत अपि च ᵛवाजम् अन्नं हविः ᵛसनिता जज्ञे । ᵛस ᵛधर्ता यज्ञस्य फलस्य वा धारक उत्पन्नः सोऽग्निः ᵛसहसा बलेन[3] ᵛयवीयुत् यज्ञमिश्रयितॄणां रक्षःप्रभृतीनां योद्धा जज्ञे ॥

मक्षू कनायाः सख्यं नवग्वा ऋतं वदन्त ऋतयुक्तिमग्मन् ।
द्विबर्हसो य उप गोपमागुरदक्षिणासो अच्युता दुदुक्षन् ॥ १० ॥

मक्षु । कनायाः । सख्यम् । नवऽग्वाः । ऋतम् । वदन्तः । ऋतऽयुक्तिम् । अग्मन् ।
द्विऽबर्हसः । ये । उप । गोपम् । आ । अगुः । अदक्षिणासः । अच्युता । दुधुक्षन् ॥ १० ॥

ᵛनवग्वाः अङ्गिरसः । गवामयनाख्यं सत्रमनुतिष्ठतामङ्गिरसां मध्ये ये नवसु मासेषु लब्धगावः सन्त उत्थितास्ते नवग्वाः । ते ᵛऋतं ᵛवदन्तः ᵛमक्षु शीघ्रं ᵛकनायाः कमनीयायाः स्तुतेर्नाभानेदिष्ठप्रेरितायाः सकाशात् ᵛऋतयुक्तिम् उक्तयोगपरिसमाप्तिम् ᵛअग्मन् प्राप्ताः । यद्वा । ऋतयुक्तिं यज्ञयोगोपेतमृतं शब्दं स्तुतिं वदन्तोऽङ्गिरसः कनायाः पृश्न्याः सख्यमग्मन्निति योजना । ᵛद्विबर्हसः

---

१. त-भ-' मक्षु ' नास्ति । २. ' त—नागच्छति ' नास्ति; भ- न गच्छति । ३. ग-यस्य बलेन; त१. २.३.६.७.८-भ२.४.५.६.८-यज्ञस्य बलेन; त४.५—जीवस्य बलेन ।

द्वयोः स्थानयोर्द्यावापृथिव्योः परिवृढाः ᵛये अङ्गिरसः ᵛगोपं गोपायितारं नाभानेदिष्ठमिन्द्रं वा ᵛउप ᵛआगुः उपगताः ते ᵛअदक्षिणासः दक्षिणारहिताः । ‘ अदक्षिणानि सत्राणीत्याहुः ’ इति हि वचनं ‘ ये यजमानास्त ऋत्विजः ’ इति । ते च ᵛअच्युता उदकान्यक्षीणानि फलानि वा ᵛदुधुक्षन् ॥ ॥ २७ ॥

**मक्षू कनायाः सख्यं नवीयो राधो न रेत ऋतमित्तुरण्यन् ।**
**शुचि यत्ते रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः ॥ ११ ॥**

मक्षु । कनायाः । सख्यम् । नवीयः । राधः । न । रेतः । ऋतम् । इत् । तुरण्यन् ।
शुचि । यत् । ते । रेक्णः । आ । अयजन्त । सबःऽदुघायाः । पयः । उस्रियायाः ॥ ११ ॥

ᵛमक्षु शीघ्रं ᵛकनायाः कमनीयायाः[1] घर्मदोग्ध्र्याः ᵛनवीयः नवतरं ᵛसख्यम् । प्राप्येति शेषः । अथवा नवीय इति राधोविशेषणम् । नवतरं ᵛराधः धनमिव ᵛरेतः सिच्यमानम् ᵛऋतम् उदकं ᵛतुरण्यन् दिवः सकाशात्प्रेरितवन्तः । हे इन्द्र ᵛते तुभ्यं ᵛयत्[2] यदा[2] ᵛरेक्णः पाथोलक्षणं धनम् ᵛआ अभिमुखम् ᵛअयजन्त अपूजयन् । कीदृशं रेक्णः । ᵛसबर्दुघायाः । सबरित्यमृतनाम । अमृतदोग्ध्र्याः ᵛउस्रियायाः गोः ᵛपयः पानयोग्यं रसम्[3] । तदोदकं तुरण्यन्निति । अत्राध्वर्युब्राह्मणम्—‘ अङ्गिरसो वै सत्रमासत तेषां पृश्निर्घर्मधुगासीत् सर्जीषेणाजीवत् तेऽब्रुवन् कस्मै नु सत्रमास्महे येऽस्या ओषधीर्न जनयाम इति ते दिवां वृष्टिमसृजन्त ’ ( तै. ब्रा. २. १. १. १ ) इति ॥

**पश्वा यत्पश्चा वियुता बुधन्तेति ब्रवीति वक्तरी रराणः ।**
**वसोर्वसुत्वा कारवोऽनेहा विश्वं विवेष्टि द्रविणमुप क्षु ॥ १२॥**

पश्वा । यत् । पश्चा । विऽयुता । बुधन्त । इति । ब्रवीति । वक्तरि । रराणः ।
वसोः । वसुऽत्वा । कारवः । अनेहा । विश्वम् । विवेष्टि । द्रविणम् । उप । क्षु ॥ १२ ॥

ᵛयत् यदा स्तोतारः ᵛपश्वा पशुना । गोसमूहेनेत्यर्थः । तेन ᵛवियुता वियुक्तानि स्वकीयानि गोस्थानानि ᵛपश्चा पश्चात् ᵛबुधन्त अजानन् । तदानीं ᵛकारवः । कारुरित्यर्थः । स्तोता ᵛइति ᵛब्रवीति इत्थं ब्रूते । किमिति । ᵛवक्तरि स्तोतरि ᵛरराणः रममाणः ᵛवसोः वासकात् ᵛवसुत्वा अतिशयेन वासयिता । यद्वा । वसुत्वेति समूहार्थे त्वा[4] नामकरणः । गोरूपधनवतोऽतिशयेन गोसमूहवानित्यर्थः । ᵛअनेहा अपाप इन्द्रः ᵛविश्वं सर्वं[5] ᵛद्रविणं गोरूपं पणिभिरपहृतं धनं ᵛक्षु । मक्षिवत्यर्थः । शीघ्रम् ᵛउप ᵛविवेष्टि उपव्याप्नोति पुनरादातुम् । अयमर्थः । यदेन्द्रस्य स्तोतारोऽसुरैरपहृतमात्मीयं गोधनं जानन्ति[6] ततः प्रागेवागत्येन्द्रस्तं न्यरुधदिति[7] ॥

**तदिन्न्वस्य परिषद्वानो अग्मन्पुरू सदन्तो नार्षदं बिभित्सन् ।**
**वि शुष्णस्य संग्रथितमनर्वा विदत्पुरुप्रजातस्य गुहा यत् ॥ १३ ॥**

तत् । इत् । नु । अस्य । परिऽसद्वानः । अग्मन् । पुरु । सदन्तः । नार्षदम् । बिभित्सन् ।
वि । शुष्णस्य । सम्ऽग्रथितम् । अनर्वा । विदत् । पुरुऽप्रजातस्य । गुहा । यत् ॥ १३ ॥

१. ग-त-मु—कमनीयायाः पृश्न्याः । २. त-भ—यथा । ३. त-भ-मु—रसमयजंत । ४. त-भ-मु—त्वो । ५. ग४-त-भ२.६.८—‘ सर्वं ’ नास्ति । ६. ग-त१.२.३.६.७.८-भ१.२.४.६-मु—न जानंति । ७. ग४—निरुध्यति; त-भ—निरुध्यदिति ।

तदित् तत्रैव नु क्षिप्रम् अस्य इन्द्रस्य परिपद्वानः परितो वर्तमानाः परिचारका रश्मयः अग्मन् प्रकाशनार्थमगच्छन्। पुरु पुरूणि कृत्रिमाणि सदन्तः सीदन्तोऽसुराः नार्षदं नृषदः पुत्रं बिभित्सन् भेत्तुमैच्छन्। किंचायं शुष्णस्य एतन्नामकस्यासुरस्य पुरुप्रजातस्य बहुप्रादुर्भावस्य संग्रथितं मर्म विदत् वेत्ति। अयमिन्द्रः यत् असुरस्य दुर्ज्ञेयं मर्म गुहा गुहायां गोपितं तद्विदत्॥

भर्गो ह नामोत यस्य देवाः स्व१र्ण ये त्रिषधस्थे निषेदुः।
अग्निर्ह नामोत जातवेदाः श्रुधी नो होतर्ऋतस्य होताध्रुक्॥ १४॥

भर्गः। ह। नाम। उत। यस्य। देवाः। स्वः। न। ये। त्रिऽसधस्थे। निऽसेदुः।
अग्निः। ह। नाम। उत। जातऽवेदाः। श्रुधि। नः। होतः। ऋतस्य। होता। अध्रुक्॥ १४॥

उत अपि च भर्गो ह नाम तत्तेजः किल प्रसिद्धं यस्य तेजस आग्नेयस्य संबन्धिनि त्रिषधस्थे बर्हिषि ये देवाः सन्ति ते सर्वे स्वर्ण स्वर्गे यथा तथैव निषेदुः निषीदन्ति। उत अपि च तत्तेजः अग्निर्ह नाम अग्निः किल नाम। उतापि च जातवेदाः जातप्रज्ञो जातानां वेदिता एतदपि तस्य तेजसो नाम। अग्नेर्भर्ग इत्यग्निरिति जातवेदा इति च त्रीणि नामानीत्यर्थः। अथ प्रत्यक्षकृतः। हे होतः होमनिष्पादकोक्तनामाग्ने ऋतस्य होता यज्ञस्य संबन्धिनां देवानामाह्वाता अध्रुक् द्रोहरहितस्त्वं नः अस्माकमाह्वानं श्रुधि शृणु॥

उत त्या मे रौद्रावर्चिमन्ता नासत्याविन्द्र गूर्तये यजध्यै।
मनुष्वद्वृक्तबर्हिषे रराणा मन्दू हितप्रयसा विक्षु यज्यू॥ १५॥

उत। त्या। मे। रौद्रौ। अर्चिऽमन्ता। नासत्यौ। इन्द्र। गूर्तये। यजध्यै।
मनुष्वत्। वृक्तऽबर्हिषे। रराणा। मन्दू इति। हितऽप्रयसा। विक्षु। यज्यू इति॥ १५॥

उत अपि च हे इन्द्र त्या तौ प्रसिद्धौ रौद्रौ[1] रुद्रपुत्रौ। 'क्षोदो न रेत इतऊति सिञ्चत्' (ऋ. सं. १०. ६१. २) इति हि रुद्रपुत्रत्वमुक्तम्। अर्चिमन्ता दीप्तिमन्तौ नासत्यौ अश्विनौ मे गूर्तये स्तुतये यजध्यै यागाय[2] च भवेतामिति शेषः। किंच मनुष्वत् मम पितुर्मनोरिव तस्य यज्ञे यथा तथैव वृक्तबर्हिषे स्तीर्णबर्हिषे मह्यं रराणा रममाणौ मन्दू मदिष्णू हितप्रयसा प्रेरितधनौ विक्षु ऋत्विक्ष्वस्मदीयेषु तथा[3] यज्यू यष्टव्यौ भवतमिति शेषः॥ ॥ २८॥

अयं स्तुतो राजा वन्दि वेधा अपश्च विप्रस्तरति स्वसेतुः।
स कक्षीवन्तं रेजयत्सो अग्निं नेमिं न चक्रमर्वतो रघुद्रु॥ १६॥

अयम्। स्तुतः। राजा। वन्दि। वेधाः। अपः। च। विप्रः। तरति। स्वऽसेतुः।
सः। कक्षीवन्तम्। रेजयत्। सः। अग्निम्। नेमिम्। न। चक्रम्। अर्वतः। रघुऽद्रु॥ १६॥

अयं वेधाः सर्वस्य विधाता राजा सोमः स्तुतः सर्वैः वन्दि स्तूयतेऽस्माभिः। किंच विप्रः विशेषेण पूरको विप्रवच्छुद्धो वा स्वसेतुः यस्य स्वभूता रश्मयो जगद्बन्धकाः सन्ति स सोमः अपश्च अन्तरिक्षं च तरति लङ्घयति प्रतिदिनम्। सः सोमः कक्षीवन्तम् ऋषिं पर्वतमध्ये

१. त-भ-'रौद्रौ' नास्ति। २. त१.२.३.७-भ२.४.६.८-योगाय। ३. त-भ१.२.४.६.८-ते।

सोमार्थं गतं ˅रेजयत् अकम्पयत्। ˅सः स एव ˅अग्निं हविर्वोढुमशक्तं सन्तं पलाय्याप्सु प्रविष्टं रेजयत्। कम्पने दृष्टान्तः। ˅नेमिं[1] नमनशीलं ˅रघुद्रु[2] लघुगमनं ˅चक्रम् ˅अर्वतः अर्वन्तोऽश्वा इव ते यथा तथा रेजयत्। नुमभावश्छान्दसः॥

स द्विबन्धुर्वैतरणो यष्टा सबर्धुं धेनुमस्वं दुहध्यै।
सं यन्मित्रावरुणा वृञ्ज उक्थैर्ज्येष्ठेभिरर्यमणं वरूथैः॥ १७॥

सः। द्विऽबन्धुः। वैतरणः। यष्टा। सबःऽधुम्। धेनुम्। अस्वम्। दुहध्यै।
सम्। यत्। मित्रावरुणा। वृञ्जे। उक्थैः। ज्येष्ठेभिः। अर्यमणम्। वरूथैः॥ १७॥

˅सः अग्निः ˅द्विबन्धुः द्वयोर्लोकयोर्बन्धुभूतः ˅वैतरणः सर्वस्य विशेषेण तारयिता। यद्वा। वितरणार्हो हविष्प्रदानार्हः। ˅यष्टा देवानां याजकोऽग्निः ˅सबर्धुम् अमृतोपमपयोदोग्ध्रीं ˅धेनुम् ˅अस्वम् अप्रसूतां निवृत्तप्रसवां शयवे ˅दुहध्यै दोहायाकरोत्। ˅यत् यदा स शयुः मित्रावरुणौ ˅अर्यमणं च ˅ज्येष्ठेभिः ज्येष्ठैः प्रशस्तैः ˅वरूथैः वरणीयैः ˅उक्थैः शस्त्रैः ˅सं ˅वृञ्जे सम्यक्स्तौति। यदा स शयुर्मित्रावरुणार्यम्णां स्तुतिं करोति तदा तेषामाज्ञयाग्निर्निवृत्तप्रसवां पयोदोग्ध्रीमकरोदिति॥

तद्बन्धुः सूरिर्दिवि ते धियंधा नाभानेदिष्ठो रपति प्र वेनन्।
सा नो नाभिः परमास्य वा घाहं तत्पश्चा कतिथश्चिदास॥ १८॥

तत्ऽबन्धुः। सूरिः। दिवि। ते। धियम्ऽधाः। नाभानेदिष्ठः। रपति। प्र। वेनन्।
सा। नः। नाभिः। परमा। अस्य। वा। घ।
अहम्। तत्। पश्चा। कतिथः। चित्। आस॥ १८॥

˅तद्बन्धुः। सैव पृथिवी बन्धुकोऽपत्यधिष्ठानत्वेन[3] यस्यासौ तद्बन्धुः। तन्मातृक इत्यर्थः। ˅सूरिः स्तुतेः प्रेरकः ˅दिवि वर्तमानस्य ˅ते तव स्वभूत इति शेषः। त्वदपत्यभूत इति यावत्। षष्ठीसामर्थ्यात्संबन्धसामान्यं प्रतीयते। तथादित्यपुत्रो मनुर्मनोः पुत्रो नाभानेदिष्ठ इत्येवं सूर्यापत्यत्वेऽपि पर्यवस्यति। सूर्यनाभानेदिष्ठयोः संबन्धश्चरमपाद उत्तरमन्त्रे च वक्ष्यते। स च ˅धियंधाः कर्मणां धारको ˅नाभानेदिष्ठः ˅वेनन् अङ्गिरोदत्तं गोसहस्रं वेनन् कामयन् ˅प्र ˅रपति प्रलपति। स्तौतीत्यर्थः। ˅वा अपि चेत्यर्थः। ˅सा द्यौः ˅नः अस्माकं ˅परमा उत्कृष्टा ˅नाभिः बन्धिका च ˅अस्य आदित्यस्य अधिष्ठानभूतास्ति। ˅घ इति पूरणः। ˅अहं ˅तत् तस्यादित्यस्य ˅पश्चा[4] पश्चादनन्तरं ˅कतिथः कतिपयानां पूरणः ˅आस अभवम्। अनेन ममादित्येन जन्यजनकभावः संबन्धः संनिकृष्ट इत्युक्तं भवति॥

इयं मे नाभिरिह मे सधस्थमिमे मे देवा अयमस्मि सर्वः।
द्विजा अह प्रथमजा ऋतस्येदं धेनुरदुहज्जायमाना॥ १९॥

इयम्। मे। नाभिः। इह। मे। सधऽस्थम्। इमे। मे। देवाः। अयम्। अस्मि। सर्वः।
द्विऽजाः। अह। प्रथमऽजाः। ऋतस्य। इदम्। धेनुः। अदुहत्। जायमाना॥ १९॥

---

१. ग-त४.५.६-भ-नेमिं न। २. त-भ२.८-रघुद्रु लघुद्रु। ३. ग-त१.२.३.६.७.८-भ-मु-बंधिको-त्पत्त्य॰। ४. भ-'पश्चा' नास्ति।

इयं माध्यमिका वाक् मे नाभिः संनाहिनी। आदित्यस्य तस्याश्चाभेदादस्यपेमांध्यमिका[1] वाग्बन्धिका भवति। तथा च ब्राह्मणं—'सा या वागसौ स आदित्यः' (श. ब्रा. १०.५.१.४) इति ब्राह्मणम्। इह अस्मिन्मण्डले मे मम सधस्थं स्थानम्। इमे मे देवाः द्योतमाना रश्मयः मे मम स्वभूताः। अयम् अहम् अस्मि सर्वः। सूर्यस्य स्वस्योक्तेन प्रकारेणाभेदात्तद्वारा सर्वात्मकत्वम्। अह किंचेत्यर्थः। द्विजाः विप्राः ऋतस्य प्रथमजाः सत्यस्य प्रथमजाः सत्यभूतस्य ब्रह्मणः प्रथमोत्पन्नाः। धेनुः पृश्निदेवता माध्यमिका वाक् जायमाना इदं सर्वम् अदुहत् दुदोह। उदपादयदित्यर्थः॥

अधासु मन्द्रो अरतिर्विभावाव स्यति द्विवर्तनिर्वनेषाट्।
ऊर्ध्वा यच्छ्रेणिर्न शिशुर्दन्मक्षू स्थिरं शेवृधं सूत माता॥ २०॥

अध। आसु। मन्द्रः। अरतिः। विभाऽवा। अव। स्यति। द्विऽवर्तनिः। वनेषाट्।
ऊर्ध्वा। यत्। श्रेणिः। न। शिशुः। दन्। मक्षु। स्थिरम्। शेऽवृधम्। सूत। माता॥२०॥

अध अथ आसु चतसृषु दिक्षु मन्द्रः मोदमानः अरतिः गन्ता विभावा दीप्तिमान् द्विवर्तनिः द्वयोः लोकयोः गन्ता वनेषाट् वने काष्ठानामभिभविताग्निः अव स्यति अवसन्नो भवति यागार्थम्। यत् च योऽग्निः ऊर्ध्वा उन्मुखा श्रेणिर्न शिशुः शंसनीयः सेनेव मक्षु शीघ्रं[2] दन् शत्रून् दमयति तमिमं स्थिरं निश्चलं शेवृधं सुखस्य वर्धकं माता अरणिः सूत यज्ञे जनयामास॥ ॥ २९ ॥

अधा गाव उपमातिं कनाया अनु श्वान्तस्य कस्य चित्परेयुः।
श्रुधि त्वं सुद्रविणो नस्त्वं याळाश्वघ्नस्य वावृधे सूनृताभिः॥ २१॥

अध। गावः। उपऽमातिम्। कनायाः। अनु। श्वान्तस्य। कस्य। चित्। परा। ईयुः।
श्रुधि। त्वम्। सुऽद्रविणः। नः। त्वम्। याट्। आश्वऽघ्नस्य। ववृधे। सूनृताभिः॥ २१॥

अध संप्रति कस्य चित् श्वान्तस्य प्रवृद्धस्य श्रान्तस्य वा[3]। आत्मनो निर्देशः। ईदृशस्य नाभानेदिष्ठस्य कनायाः कमनीयायाः स्तुतेः गावः वाचः। यद्वा। वाचः स्तुतयः कनायाः कमनीयायाः स्तुतेः उपमातिम् उपमानभूतमिन्द्रम् अनु परेयुः अनु परागच्छन्ति। हे सुद्रविणः सुधनाग्ने त्वं श्रुधि शृणु। नः अस्माकमिममिन्द्रं याट् अयाट् यज। त्वं च आश्वघ्नस्य अश्वघ्नोऽश्वमेधयाजी मनुः तस्य पुत्रस्य मम सूनृताभिः स्तुतिभिः ववृधे वर्धसे। पुरुषव्यत्ययः। अथवायं वर्धत इति परोक्षेण निर्देशः॥

अध त्वमिन्द्र विद्ध्य१स्मान्महो राये नृपते वज्रबाहुः।
रक्षा च नो मघोनः पाहि सूरीननेहसस्ते हरिवो अभिष्टौ॥ २२॥

अध। त्वम्। इन्द्र। विद्धि। अस्मान्। महः। राये। नृऽपते। वज्रऽबाहुः।
रक्ष। च। नः। मघोनः। पाहि। सूरीन्। अनेहसः। ते। हरिऽवः। अभिष्टौ॥२२॥

१. ग-त-भ१.२.४.६.८-'माध्यमिकी। २. ग-त-मु-क्षिप्रं। ३. ग-त४.५-मु-वेति; त१.२.३.७.८-भ६.८-वे।

हे[1] ᐯइन्द्र[1] ᐯअध अधुना ᐯवज्रबाहुः त्वम् ᐯअस्मान् ᐯमहः महते ᐯराये धनाय ᐯविद्धि जानीहि। हे इन्द्र ᐯमघोनः हविष्मतः ᐯसूरीन् स्तुतिप्रेरकान् ᐯनः अस्मान् ᐯरक्ष ᐯच। हे ᐯहरिवः हरिभ्यां तद्वन्निन्द्र ᐯते तव ᐯअभिष्टौ अभिगमने ᐯअनेहसः अपापाः स्यामेति शेषः॥

अध यद्राजाना गविष्टौ सरत्सरण्युः कारवे जरण्युः।
विप्रः प्रेष्ठः स ह्येषां बभूव परा च वक्षदुत पर्षदेनान्॥ २३॥

अध। यत्। राजाना। गोऽइष्टौ। सरत्। सरण्युः। कारवे। जरण्युः।
विप्रः। प्रेष्ठः। सः। हि। एषाम्। बभूव। परा। च। वक्षत्। उत। पर्षत्। एनान्॥२३॥

हे ᐯराजाना राजमानौ मित्रावरुणौ ᐯअध अधुना सत्रसमाप्तौ ᐯयत् यस्मात् ᐯगविष्टौ गवामेषणायां सत्यां ᐯसरण्युः सरणशीलो यमः ᐯसरत् गच्छति ᐯकारवे कर्माणि[2] कुर्वतेऽङ्गिरसां गणाय। किमिच्छन्। ᐯजरण्युः तस्मा अङ्गिरसां गणाय स्तुतिमिच्छन्[3]। तस्मात् ᐯसः ᐯविप्रः नाभानेदिष्ठः ᐯएषाम् अङ्गिरसां ᐯप्रेष्ठः प्रियतमः ᐯबभूव भवतु। ᐯहि इति पूरणः। तेषां कर्तव्यं ᐯपरा ᐯच ᐯवक्षत् परावहतु। ᐯउत अपि च ᐯएनान् अङ्गिरसः ᐯपर्षत् पारयतु[4] इत्यात्मन[5] एवाशास्ते[5]॥

अधा न्वस्य जेन्यस्य पुष्टौ वृथा रेभन्त ईमहे तदू नु।
सरण्युरस्य सूनुरश्वो विप्रश्चासि श्रवसश्च सातौ॥ २४॥

अध। नु। अस्य। जेन्यस्य। पुष्टौ। वृथा। रेभन्तः। ईमहे। तत्। ऊँ इति। नु।
सरण्युः। अस्य। सूनुः। अश्वः। विप्रः। च। असि। श्रवसः। च। सातौ॥ २४॥

अनया वरुणं पृथक् स्तौति। ᐯअध अथ ᐯनु क्षिप्रम् ᐯअस्य ᐯजेन्यस्य जयशीलस्य स्तुत्या जेतव्यस्य वा ᐯतत् स्वभूतं गवादिधनं ᐯपुष्टौ पोषे निमित्ते सति तस्य पुष्टयर्थं वा ᐯवृथा अनायासेन ᐯरेभन्तः स्तुवन्तः ᐯनु क्षिप्रम् ᐯईमहे याचामहे। ᐯसरण्युः शीघ्रमरणशीलः ᐯअश्वः ᐯअस्य वरुणस्य ᐯसूनुः पुत्रः। वरुणाद्ध्यश्व उत्पन्नः। अथ प्रत्यक्षकृतः। हे वरुण त्वं ᐯविप्रश्चासि विप्रवत्पूज्यः शुद्धो वा भवसि। ᐯश्रवसश्च अन्नस्य ᐯसातौ लाभे अस्माकमन्नलाभाय प्रवृत्तश्च भवसि[6]॥

युवोर्यदि सख्यायास्मे शर्धाय स्तोमं जुजुषे नमस्वान्।
विश्वत्र यस्मिन्ना गिरः समीचीः पूर्वीव गातुर्दाशत्सूनृतायै॥ २५॥

युवोः। यदि। सख्याय। अस्मे इति। शर्धाय। स्तोमम्। जुजुषे। नमस्वान्।
विश्वत्र। यस्मिन्। आ। गिरः। सम्ऽईचीः। पूर्वीऽइव। गातुः। दाशत्। सूनृतायै॥२५॥

हे मित्रावरुणौ ᐯयुवोः युवयोः ᐯशर्धाय बलवते ᐯअस्मे अस्माकं ᐯसख्याय। यद्वा। युवयोः सख्याय अस्मे अस्माकं शर्धाय बलाय च। ᐯयदि ᐯनमस्वान् अन्नवानध्वर्युः स्तोत्रवान् होता वा ᐯस्तोमं ᐯजुजुषे सेवते। ᐯयस्मिन् सख्ये सिद्धे सति ᐯविश्वत्र विश्वस्मिञ्जनपदे ᐯगिरः अङ्गिरसां

१. ग४–हे नृपते नृणां पालक इंद्र। २. ग-त-भ२.४.६.८-मु–कर्म। ३. त१.२.४.५.६.७.८-भ–स्तुतिमिच्छन् जरण्युः। ४. ग४–प्रापयतु; त-भ-मु–पारयति। ५. ग-त४.५–इत्यात्मानमेवाशास्ते; त१.२.३.६.७.८-भ१–इत्यात्मान एवाशास्ते। ६. त-भ–भवति।

संबन्धिन्यः[1] ᵛसमीचीः समीच्यः ᵛआ गच्छन्तीति शेषः। उदाराणां[2] गृह इदं गृहाण इदं गृहाणेत्येवंरूपाः श्रूयन्त इत्यर्थः। यद्वा। यागानुष्ठातॄणां स्तुतिगिर आगच्छन्तीति। ᵛपूर्वीव ᵛगातुः प्राची दिगिव सा यथा गच्छतां सुखं प्रयच्छति तद्वत्[3]। यद्वा। पूर्वी[4] पुरा[5] प्रसिद्धा पुरातनीव गातुः सरणिरिव सा यथा गच्छतां सुखं प्रयच्छति तद्वत्। ᵛसूनृतायै प्रियसत्यरूपायै स्तुतिवाचे ᵛदाशत्[5] प्रयच्छतु[5] ॥

स गृ॒णा॒नो अ॒द्भिर्दे॒ववा॒निति॑ सु॒बन्धु॒र्नम॑सा सू॒क्तैः।
वर्ध॑दु॒क्थैर्वचो॑भि॒रा हि नू॒नं व्यध्वै॑ति॒ पय॑स उ॒स्रिया॑याः ॥ २६ ॥

सः। गृ॒णा॒नः। अ॒त्ऽभिः। दे॒वऽवा॑न्। इति॑। सु॒ऽबन्धुः॑। नम॑सा। सु॒ऽउ॒क्तैः।
वर्ध॑त्। उ॒क्थैः। वचः॑ऽभिः। आ। हि। नू॒नम्। वि। अध्वा॑। ए॒ति॒। पय॑सः। उ॒स्रिया॑याः ॥ २६ ॥

ᵛअद्भिः देवताभिः ᵛदेववान् ᵛसुबन्धुः शोभनबन्धनः ᵛसः ᵛवरुणः ᵛइति इत्थंकृतप्रकारेण ᵛनमसा नमस्कारेण ᵛसूक्तैः च ᵛगृणानः स्तूयमानः सन् ᵛवर्धत् वर्धताम्। ᵛउक्थैर्वचोभिः उच्यमानैः प्रशस्तैर्वा स्तुतिवचोभिः ᵛनूनम् इदानीम् ᵛआ गच्छत्विति शेषः। ᵛहि इति पूरणः। तस्य यागार्थम् ᵛउस्रियायाः गोः ᵛपयसः ᵛअध्वा मार्गः ᵛवि ᵛएति। स्तनाग्राणि क्षरन्तीत्यर्थः ॥

त ऊ॒ षु णो॑ म॒हो य॑जत्रा भू॒त दे॑वास ऊ॒तये॑ स॒जोषाः॑।
ये वाजा॒ँ अन॑यता वि॒यन्तो॒ ये स्था नि॑चे॒तारो॒ अमू॑राः ॥ २७ ॥

ते। ऊ॒म् इति॑। सु। नः॒। म॒हः। य॒ज॒त्राः॒। भू॒त। दे॒वा॒सः॒। ऊ॒तये॑। स॒ऽजोषाः॑।
ये। वाजा॑न्। अन॑यत। वि॒ऽयन्तः॑। ये। स्थ। नि॒ऽचे॒तारः॑। अमू॑राः ॥ २७ ॥

अनयाऽपिरङ्गिरस आशास्ते। हे ᵛयजत्राः यष्टव्याः ᵛदेवासः देवाः ᵛते यूयम्। ᵛउ इति पूरणः। ᵛमहः महते ᵛनः अस्माकम् ᵛऊतये रक्षणाय ᵛसजोषाः संगताः ᵛभूत भवत। ᵛये च यूयम् अङ्गिरसो मह्यं ᵛवाजान् अन्नानि ᵛअनयत प्रापयथ ᵛवियन्तः सततमुक्थाय[6] विविधं गच्छन्तः सन्तः। ᵛये च यूयम् ᵛअमूराः अमूढाः। पष्ठाहःप्रयोगमौढ्यरहिता इत्यर्थः। तादृशाः ᵛनिचेतारः गवां विवेक्तारः ᵛस्थ भवथ। ते सजोषा भूतेति समन्वयः ॥ ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-
धुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्येऽष्टमाष्टके प्रथमोऽध्यायः ॥

१. ग४-त२.३.७-भ१.२.६.८–संबंधिनि। २. त–उदाहरणं। ३. ग-त-भ१.२.४.६.८–'तद्वत्' नास्ति। ४. ग-त-भ–पुरा पूर्वी। ५. ग-त-भ२.४.६.८–'दाशत् प्रयच्छतु' नास्ति; भ७–दाशत्; मु–दाशत् सुखं प्रयच्छतु। ६. ग४–सततमुधाय; त१.२.३-भ१.२.४.६.८–सा उक्थाय। भ१–सतत उत्थाय।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
व्याख्याय प्रथमं विद्वानष्टमस्याष्टकस्य सः ।
अध्यायं सायणामात्यो[1] द्वितीयं व्याचिकीर्षति ॥

तत्र 'ये यज्ञेन' इत्येकादशर्चमनुवाकापेक्षया द्वितीयं सूक्तं मानवस्य नाभानेदिष्ठस्यार्षम्। आदितश्चतस्रो जगत्यः। पञ्चम्यनुष्टुप्। षष्ठी बृहती। सप्तमी सतोबृहती। अष्टमीनवम्यावनुष्टुभौ। दशमी गायत्री। एकादशी त्रिष्टुप्। आदितः षण्णां विश्वे देवा अङ्गिरसो वा देवता। सप्तमी वैश्वदेवी। अष्टम्याद्यासु चतसृषु सावर्णेर्महाराजस्य दानं स्तूयते। अतस्तास्तद्देवताकाः। तथा चानुक्रम्यते— 'ये यज्ञेनैकादशाद्याः षळङ्गिरसां स्तुतिर्वान्त्या त्रिष्टुप्पञ्चम्यनुष्टुप्प्रगाथोऽनुष्टुभौ गायत्री चतस्रोऽन्त्याः सावर्णेर्दानस्तुतिः' इति। षष्ठेऽहनि वैश्वदेवशस्त्र एतत्सूक्तम्। सूत्रितं च—'इदमित्था रौद्रमिति प्रागुपोत्तमाया ये यज्ञेनेत्यावपते' (आश्व. श्रौ. ८. १) इति ॥

**ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश ।**
**तेभ्यो भद्रमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ १ ॥**

ये । यज्ञेन । दक्षिणया । समऽअक्ताः । इन्द्रस्य । सख्यम् । अमृतऽत्वम् । आनश ।
तेभ्यः । भद्रम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ १ ॥

नाभानेदिष्ठः स्वपित्रा मनुनाभ्यनुज्ञातः सत्रमासीनानङ्गिरसोऽभ्येत्य मां प्रतिगृह्णीत युष्मभ्यं यज्ञं प्रज्ञापयामीति यदुक्तवान् तदुच्यते। इतिहासस्तु इदमित्थेति पूर्वसूक्ते 'नाभानेदिष्ठं शंसति नाभानेदिष्ठं वै मानवम्' (ऐ. ब्रा. ५. १४) इति ब्राह्मणानुसारेण 'मनुः पुत्रेभ्यो दायं व्यभजत्' (तै. सं. ३. १. ९. ४) इति तैत्तिरीयब्राह्मणानुसारेण च सप्रपञ्चमभिहितः। तथा चास्या ऋचोऽयमर्थः। Vयज्ञेन यजनीयेन हविषा Vदक्षिणया ऋत्विग्भ्यो देयया Vसमक्ताः संगताः Vये अहीनैकाहसत्राणि[2] कुर्वन्तो यूयम् Vइन्द्रस्य Vसख्यं सखिकर्म अत एव Vअमृतत्वम् अमरणधर्मं देवत्वम् Vआनश आनशिध्वे प्राप्ताः स्थ। अश्नोतेर्लिटि मध्यमे व्यत्ययेन बहुवचनम्। 'अश्नोतेश्च' इति नुडागमः। यद्वृत्तयोगादनिघातः। हे Vअङ्गिरसः Vतेभ्यः Vवः युष्मभ्यं Vभद्रं कल्याणं कर्म Vअस्तु। हे Vसुमेधसः सुप्रज्ञा हे अङ्गिरसः ते यूयमिदानीमागतं Vमानवं मनोः पुत्रं मां Vप्रति Vगृभ्णीत प्रतिगृह्णीत। मयि प्रतिगृहीते सति यज्ञं साधु करिष्यामीति तदर्थं प्रतिगृह्णीत ॥

**य उदाजन् पितरो गोमयं वस्वृतेनाभिन्दन् परिवत्सरे वलम् ।**
**दीर्घायुत्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ २ ॥**

ये । उत्ऽआजन् । पितरः । गोऽमयम् । वसु । ऋतेन । अभिन्दन् । परिवत्सरे । वलम् ।
दीर्घायुऽत्वम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ २ ॥

---

१. भ–सायणाचार्यो। २. ग४-त१.२.७-भ१–अहैनैकासहस्राणि; त३–अहीनैकासहमहस्राणि; भ२–अहीनैकाहिकसहस्राणि; भ४.६.७.८-मु–अहीनैकाहसहस्राणि।

हे ᐯअङ्गिरसः ᐯपितरः अस्माकं पूर्वजत्वेन पितृभूताः ᐯये यूयं ᐯगोमयं गवात्मकं पणिभिरपहृतं ᐯवसु धनम् ᐯउदाजन् तैरधिष्ठितात्पर्वतादुदगमयन् । किंच ᐯऋतेन सत्यभूतेन यज्ञेन ᐯपरिवत्सरे पर्यागते वत्सरे संपूर्णे । सत्रान्त इत्यर्थः । तत्र ᐯवलं वलनामानं गवामपहर्तारमसुरम् ᐯअभिन्दन् व्यनाशयन् तेभ्यः ᐯवः युष्मभ्यं ᐯदीर्घायुत्वं प्रभूतजीवनम् ᐯअस्तु । शेषं पूर्ववत् ॥

य ऋतेन सूर्यमारोहयन् दिव्यप्रथयन् पृथिवीं मातरं वि ।
सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ ३ ॥

ये । ऋतेन । सूर्यम् । आ । अरोहयन् । दिवि । अप्रथयन् । पृथिवीम् । मातरम् । वि ।
सुप्रजाःऽत्वम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ ३ ॥

हे ᐯअङ्गिरसः ᐯये भवन्तः ᐯऋतेन सत्यभूतेन यज्ञेन ᐯदिवि द्युलोके ᐯसूर्यं सुष्ठु सर्वस्य प्रेरकमादित्यम् ᐯआरोहयन् अस्थापयन् किंच ᐯमातरं सर्वेषां निर्मात्रीं ᐯपृथिवीं ᐯवि ᐯअप्रथयन् प्रसिद्धामकुर्वन् सत्रादिकर्मकरणेन तेभ्यः युष्मभ्यं ᐯसुप्रजास्त्वं सुपुत्रत्वम् ᐯअस्तु ॥ ‘ नित्यमसिच् प्रजामेधयोः ’ इत्यसिच् समासान्तः । तस्माद्भावप्रत्ययः ॥

अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोतन ।
सुब्रह्मण्यमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥ ४ ॥

अयम् । नाभा । वदति । वल्गु । वः । गृहे । देवऽपुत्राः । ऋषयः । तत् । शृणोतन ।
सुऽब्रह्मण्यम् । अङ्गिरसः । वः । अस्तु । प्रति । गृभ्णीत । मानवम् । सुऽमेधसः ॥ ४ ॥

हे ᐯदेवपुत्राः देवानां पुत्रा अग्नेः पुत्राः ᐯऋषयः अतीन्द्रियार्थस्य द्रष्टारो हे ᐯअङ्गिरसः ᐯअयं ᐯनाभा[1] नाभानेदिष्ठः पुरोवर्ती जनः ᐯवः युष्माकं ᐯगृहे गृहभूते यज्ञे ᐯवल्गु कल्याणं वचः ᐯवदति । ᐯतत् वाक्यं यूयं ᐯशृणोतन महतादरेण शृणुत । ‘ श्रु श्रवणे ’ । ‘ तप्तनप्तनथनाश्च ’ इति तनबादेशः । तेभ्यो युष्मभ्यं ᐯसुब्रह्मण्यं शोभनं ब्रह्मवर्चसम् ᐯअस्तु । इदानीमागतं ᐯमानवं मां ᐯप्रति[2] ᐯगृभ्णीत[2] प्रतिगृह्णीत ॥

विरूपास इदृषयस्त इद्गम्भीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥ ५ ॥

विऽरूपासः । इत् । ऋषयः । ते । इत् । गम्भीरऽवेपसः ।
ते । अङ्गिरसः । सूनवः । ते । अग्नेः । परि । जज्ञिरे ॥ ५ ॥

परोक्षकृतर्षिराह । ᐯऋषयः कर्मणां द्रष्टार एत ऋषयः ᐯविरूपास ᐯइत् अन्योन्यं वर्णतो[3] रूपतश्च नानारूपा भवन्ति । ᐯत ᐯइत् त एवामी अङ्गिरसः ᐯगम्भीरवेपसः । वेप इति कर्मनाम । गम्भीरकर्माणो भवन्ति । ᐯते[4] इमे[4] ᐯअङ्गिरसः ᐯसूनवः पुत्राः खलु । तदेवाह । ᐯते इमे अङ्गिरसः ᐯअग्नेः ᐯपरि ᐯजज्ञिरे सर्वतो जाताः प्रादुर्भूताः । ‘ येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् ’ ( ऐ. ब्रा. ३. ३४ ) इति ब्राह्मणम् । अत्र निरुक्तं च द्रष्टव्यम् ( निरु. ३. १७ ) ॥ ॥ १ ॥

---

१. ग-त-भ–‘ नाभा ’ नास्ति । २. ग-त-भ-मु–‘ प्रति गृभ्णीत ’ नास्ति । ३. ग-त४.५–प्रमाणतो; त१.२.६.७.८-भ१.२.४.६.८–प्रणतो । ४. त१.२.३.७-भ२.६.८–ते त इमे ।

**ये अ॒ग्नेः परि॑ जज्ञि॒रे विरू॑पासो दि॒वस्परि॑ ।**
**नव॑ग्वो॒ नु दश॑ग्वो॒ अङ्गि॑रस्तमः॒ सचा॑ दे॒वेषु॒ मंह॑ते ॥ ६ ॥**

ये । अ॒ग्नेः । परि॑ । ज॒ज्ञि॒रे । विऽरू॑पासः । दि॒वः । परि॑ ।
नव॑ऽग्वः । नु । दश॑ऽग्वः । अङ्गि॑रःऽतमः । सचा॑ । दे॒वेषु॑ । मंह॑ते ॥ ६ ॥

v विरूपासः विविधरूपाः v ये अङ्गिरसः v दिवस्परि द्युलोकात् v अग्नेः v परि v जज्ञिरे परितो जाताः । यद्वा । दिवस्परि । परिः पञ्चम्यर्थद्योतकः । स्वतेजसा दीप्यमानादग्नेर्जाताः । तेषां[1] मध्ये v नवग्वः v दशग्वः च v अङ्गिरस्तमः अङ्गिरसां वरिष्ठः । सत्रमासीनानामङ्गिरसां मध्ये केचन नवसु मासेसु कर्म कृत्वोदतिष्ठन् केचन दशसु मासेस्वित्येवमङ्गिरसामयनमुक्तम् । तेषामग्निर्नवग्वश्च दशग्वश्चोक्तः । तादृशः v देवेषु v सचा सहावस्थितः[2] सोऽग्निः v मंहते मह्यं धनं प्रयच्छति । मंहतिर्दानकर्मा ॥

**इन्द्रे॑ण यु॒जा निः सृ॑जन्त वा॒घतो॑ व्र॒जं गोम॑न्तम॒श्विन॑म् ।**
**स॒हस्रं॑ मे॒ दद॑तो अष्टक॒र्ण्य१ः॒ श्रवो॑ दे॒वेष्व॑क्रत ॥ ७ ॥**

इन्द्रे॑ण । यु॒जा । निः । सृ॒ज॒न्त॒ । वा॒घतः॑ । व्र॒जम् । गोऽम॑न्तम् । अ॒श्विन॑म् ।
स॒हस्र॑म् । मे॒ । दद॑तः । अ॒ष्ट॒ऽक॒र्ण्यः॑ । श्रवः॑ । दे॒वेषु॑ । अ॒क्र॒त॒ ॥ ७ ॥

v वाघतः कर्मणां वोढारो विश्वे देवा अङ्गिरसो वा v इन्द्रेण v युजा सहायेन v निः v सृजन्त निरगमयन् । किम् । v गोमन्तं गोयुक्तम् v अश्विनम् अश्ववन्तं पणिभिरपहृतं v व्रजम् । ते v मे मां प्रति v सहस्रं सहस्रसंख्याकं धनं सत्रपरिवेषणम् v अष्टकर्ण्यः । अष्ट इति 'अशू व्याप्तौ' निष्ठायां रूपम् । विस्तृतकर्णाः । उपलक्षणमेतत् । व्याप्तसर्वावयवा गावः v ददतः मह्यं प्रयच्छन्तः v देवेषु इन्द्रादिषु v श्रवः हविर्लक्षणमन्नं कीर्तिं वा v अक्रत अकृषत । करोतेर्लुङि 'मन्त्रे घस०' इति च्लेर्लुक् । एवं नाभानेदिष्ठेनाङ्गिरसः स्तुतास्तस्मै धनं प्रादुः । तदुक्तं शौनकेन—'ऋषयोऽङ्गिरसस्तुष्टा यद्ददुर्मानवाय तु । तत्पुण्याय च कर्माणि ये यज्ञेनेत्यकीर्तयत्[3]' ॥

उत्तराभिश्चतसृभिरस्मै मानवायर्षये सावर्णिना यद्दत्तं तत्प्रशस्यते । तदप्युक्तं शौनकेन—'सावर्णिना च यद्दत्तं मानवाय सहद्वसु । तदुक्तं सूक्तशेषेण प्र नूनं जायतामिति' ॥

**प्र नू॒नं जाय॑ताम॒यं मनु॒स्तोक्म॑ेव रोहतु ।**
**यः स॒हस्रं॑ श॒ताश्वं॑ स॒द्यो दा॒नाय॒ मंह॑ते ॥ ८ ॥**

प्र । नू॒नम् । जा॒य॒ता॒म् । अ॒यम् । मनुः॑ । तोक्म॑ऽइव । रो॒ह॒तु॒ ।
यः । स॒हस्र॑म् । श॒तऽअ॑श्वम् । स॒द्यः । दा॒नाय॑ । मंह॑ते ॥ ८ ॥

v अयं सावर्णिः v मनुः v नूनं क्षिप्रं v प्र v जायतां प्रजातो भवतु । धनादिभिः पुत्रादिभिश्च v रोहतु प्रादुर्भवतु । तत्र दृष्टान्तः । v तोक्मेव । यथा जलक्लिन्नं बीजं प्रादुर्भवति एवं कर्मफलसंयुक्तः स मनुः पुत्रादिभिः रोहतु । v यः अयं मनुः v शताश्वं बह्वश्वसंयुक्तं v सहस्रं गवां v सद्यः तदानीमेव v दानाय v मंहते अस्मा ऋषये दातुं प्रेरयति ॥

१. ग-त१.२.३-म१.२.४.६—तेषामेषां; त६.८-म७—तेषां येषां । २. त-म—सह स्थितः । ३. त-म१.६.८—यज्ञेनेति कीर्तयत्; म२.७-मु—यज्ञेनेति कीर्तयत् ।

न तमश्नोति कश्चन दिवइव सान्वारभम् ।
सावर्ण्यस्य दक्षिणा वि सिन्धुरिव पप्रथे ॥ ९ ॥

न । तम् । अश्नोति । कः । चन । दिवःऽइव । सानु । आऽरभम् ।
सावर्ण्यस्य । दक्षिणा । वि । सिन्धुःऽइव । पप्रथे ॥ ९ ॥

"तं सावर्णि मनुं "कश्चन कश्चिदपि "आरभम् आरब्धुं स्वकर्मणा "न "अश्नोति न व्याप्नोति । यथा मनुः प्रयच्छति तथान्यो दातुं न शक्नोतीत्यर्थः । कथंस्थितम् । "दिवइव द्युलोकस्य "सानु समुच्छ्रितं तेजसा कैश्चिदप्यप्रधृष्यमादित्यमिव स्थितम् । आरभम् । 'शकि णमुल्कमुलौ' (पा. सू. ३. ४. १२) इति कमुल् । तस्य "सावर्ण्यस्य मनोरियं गवादिदक्षिणा "सिन्धुरिव स्यन्दमाना नदीव पृथिव्यां "पप्रथे विप्रथते । विस्तीर्णा भवति ॥

उत दासा परिविषे स्मद्दिष्टी गोपरीणसा । यदुस्तुर्वश्च मामहे ॥ १० ॥

उत । दासा । परिऽविषे । स्मद्दिष्टी इति स्मत्ऽदिष्टी । गोऽपरीणसा ।
यदुः । तुर्वः । च । ममहे ॥ १० ॥

"उत अपि च "स्मद्दिष्टी कल्याणादेशिनौ "गोपरीणसा गोपरीणसौ गोभिः परिवृतौ बहुगवादियुक्तौ "दासा दासवत् प्रेष्यवत् स्थितौ तेनाधिष्ठितौ "यदुः च "तुर्वश्च एतन्नामकौ राजर्षी "परिविषे अस्य सावर्णेर्मनोर्भोजनाय "ममहे पशून्प्रयच्छतः । प्रत्येकमन्वयादेकवचनम् ॥

सहस्रदा ग्रामणीर्मा रिषन्मनुः सूर्येणास्य यतमानैतु दक्षिणा ।
सावर्णेर्देवाः प्र तिरन्त्वायुर्यस्मिन्नश्रान्ता असनाम वाजम् ॥ ११ ॥

सहस्रऽदाः । ग्रामऽनीः । मा । रिषत् । मनुः । सूर्येण । अस्य । यतमाना । एतु । दक्षिणा ।
सावर्णेः । देवाः । प्र । तिरन्तु । आयुः । यस्मिन् । अश्रान्ताः । असनाम । वाजम् ॥ ११ ॥

"सहस्रदाः[1] गवादीनां सहस्रस्य दाता "ग्रामणीः ग्रामाणां नेता कर्ता जनपदानामयं "मनुः "मा "रिषत् न कैश्चिदपि रिष्टो हिंसितो भवतु । यद्वा । कर्मनेतॄनस्मान्मा हिनस्तु किंतु धनादिदानेन पूजयतु । "अस्य "यतमाना गच्छन्ती "दक्षिणा "सूर्येण सह "एतु संगच्छताम् । त्रिषु लोकेषु प्रसिद्धा भवत्वित्यर्थः । तस्यास्य "सावर्णेः सवर्णपुत्रस्य मनोः "देवाः इन्द्रादयः "आयुः जीवनं "प्र "तिरन्तु प्रवर्धयन्तु । "अश्रान्ताः कर्मसु[2] अनलसाः[3] सर्वं कर्म कुर्वन्तो वयं "यस्मिन्[4] मनौ "वाजं गोलक्षणमन्नम् "असनाम संभजेमहि । नाभानेदिष्ठोऽहमलभ इत्याशास्ते ॥ ॥ २ ॥

'परावतो ये' इति सप्तदशर्चं तृतीयं सूक्तं प्लतेः पुत्रस्य गयस्यार्षम् । षोडशीसप्तदश्यौ त्रिष्टुभौ । पञ्चदशी त्रिष्टुब्जगती वा । शिष्टाश्चतुर्दश जगत्यः । 'स्वस्ति नः पथ्यासु' इति द्वे पथ्यास्वस्तिदेवताके । शिष्टा वैश्वदेव्यः । तथा चानुक्रान्तं—'परावतस्प्यूना गयः प्लातो द्वित्रिष्टुबन्तं तु स्वस्ति नस्त्रिष्टुब्वा सह चोत्तरया पथ्यास्वस्तिदेवत्या' इति । पृष्ठ्याभिप्लवषडहयोस्तृतीयेऽहनि

१. ग-त-भ-मु–'सहस्रदाः' नास्ति । २. ग-त-भ–कर्मसु कर्मणि । ३. ग-त२.३.४.५.६-भ–अनलसमानाः । ४. त-भ६.८-मु–अस्मिन् ।

वैश्वदेवशस्त्र एतत्सूक्तं वैश्वदेवनिविद्धानम्। सूत्रितं च—'अनश्वो जातः परावतो य इति वैश्वदेवम्' (आश्व. श्रौ. ७. ७) इति ॥

**परावतो ये दिधिषन्त आप्यं मनुप्रीतासो जनिमा विवस्वतः ।**
**ययातेर्ये नहुष्यस्य बर्हिषि देवा आसते ते अधि ब्रुवन्तु नः ॥ १ ॥**

पराऽवतः । ये । दिधिषन्ते । आप्यम् । मनुऽप्रीतासः । जनिम । विवस्वतः ।
ययातेः । ये । नहुष्यस्य । बर्हिषि । देवाः । आसते । ते । अधि । ब्रुवन्तु । नः ॥ १ ॥

ये देवाः परावतः दूरदेशादागत्य आप्यं ज्ञातेयं मनुष्यैः सह बन्धुत्वं दिधिषन्ते धारयन्ति। यद्वा। हविषां प्रदातृभिर्मनुष्यैः सह सख्यं कुर्म इति परस्परं शब्दायन्ते। 'धिष शब्दे' जौहोत्यादिकः। छान्दसो झस्यान्तादेशः। 'धिष धारणे' इति कैश्चिदप्युपगम्यते। उक्तार्थमेव विशिनष्टि। मनुप्रीतासः मनुष्यैः प्रीता देवाः विवस्वतः विवस्वत्पुत्रस्य मनोः जनिम जन्मानि मनुष्यान् धारयन्ति। किंच ये देवाः नहुष्यस्य[1] नहुषपुत्रस्य ययातेः एतन्नामकस्य राजर्षेः बर्हिषि यज्ञे आसते उपविशन्ति ते देवाः नः अस्मान् अधि ब्रुवन्तु धनादिप्रदानेनास्मानधिकं वदन्तु। पूजयन्त्वित्यर्थः ॥

**विश्वा हि वो नमस्यानि वन्द्या नामानि देवा उत यज्ञियानि वः ।**
**ये स्थ जाता अदितेरद्भ्यस्परि ये पृथिव्यास्ते म इह श्रुता हवम् ॥ २ ॥**

विश्वा । हि । वः । नमस्यानि । वन्द्या । नामानि । देवाः । उत । यज्ञियानि । वः ।
ये । स्थ । जाताः । अदितेः । अत्ऽभ्यः । परि । ये । पृथिव्याः । ते । मे । इह । श्रुत । हवम् ॥ २ ॥

हे देवाः इन्द्रादयः। हिरवधारणे। वः युष्माकमेव नामानि नमनीयानि विश्वा सर्वाणि शरीराणि नमस्यानि नमस्कारार्हाणि भवन्ति वन्द्या वन्द्यानि स्तोतव्यानि च भवन्ति। उत अपि च वः युष्माकं तानि शरीराणि यज्ञियानि यज्ञार्हाणि भवन्ति। ये[2] यूयम् अदितेः अदीनात् द्युलोकात् अद्भ्यः। अन्तरिक्षनामैतत्। अन्तरिक्षात्। परिः पञ्चम्यर्थद्योतकः। पृथिव्याः च जाताः प्रादुर्भूताः स्थ भवथ ते यूयम् इह अस्मिन्यज्ञे आगत्य मे मदीयं हवम् आह्वानं श्रुत शृणुत ॥

अग्निष्टोमे वैश्वदेवशस्त्रे 'येभ्यो माता' इत्येषा धाय्या। सूत्रितं च—'अयं वेनश्चोदयत्पृश्निगर्भा येभ्यो माता मधुमत्' (आश्व. श्रौ. ५. १८) इति ॥

**येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।**
**उक्थशुष्मान्वृषभरान्त्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ॥ ३ ॥**

येभ्यः । माता । मधुऽमत् । पिन्वते । पयः । पीयूषम् । द्यौः । अदितिः । अद्रिऽबर्हाः ।
उक्थऽशुष्मान् । वृषऽभरान् । सुऽअप्नसः । तान् । आदित्यान् । अनु । मद । स्वस्तये ॥ ३ ॥

माता सर्वस्य निर्मात्री पृथिवी येभ्यः देवेभ्यो देवार्थं मधुमत् माधुर्योपेतं पयः सारभूतं क्षीरं पिन्वते क्षरति। तथा अदितिः अदीना अद्रिबर्हाः मेघैः परिवृढा प्रवृद्धा परिवृद्धमेघा[3] वा

---

१. भ–'नहुष्यस्य' नास्ति। २. भ–ते। ३. ग-त-भ–परिवृढमेघा।

द्यौः च पीयूषं पिन्वते । द्यावापृथिव्यौ हविरुत्पादयत इत्यर्थः । ऋषिरात्मानं संबोध्याह । उक्थशुष्मान् स्तुतिबलान् वृषभरान् वृष्टेराहर्तॄन् । 'हृग्रहोर्भः' इति भः । स्वप्नसः सुकर्मणः तानादित्यान् अदितेः पुत्रान् देवान् स्वस्तये अविनाशाय अनु मद अनुस्तुहि । माद्यतेर्लोटि व्यत्ययेन शप् । मन्दतेर्वा स्तुत्यर्थस्य[1] 'अनित्यमागमशासनम्' इति नुमभावः ॥

नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः ।
ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥ ४ ॥

नृऽचक्षसः । अनिऽमिषन्तः । अर्हणा । बृहत् । देवासः । अमृतऽत्वम् । आनशुः ।
ज्योतिःऽरथाः । अहिऽमायाः । अनागसः । दिवः । वर्ष्माणम् । वसते । स्वस्तये ॥ ४ ॥

नृचक्षसः कर्मनेतॄणां मनुष्याणां द्रष्टारः अत एव अनिमिषन्तः निमेषमकुर्वाणाः सर्वदा जागरूकाः देवासः देवाः अर्हणा लोकस्य परिचरणार्थं स्तोतव्यत्वाय बृहत् बृंहितम् अमृतत्वम् अमरणधर्मम् आनशुः प्राप्ताः । देवाः खलु मनुष्यैः पूज्याः । तस्मात्पूजार्हेतुं देवत्वमानशिरे । अत एव ज्योतीरथाः दीप्यमानरथोपेताः अहिमायाः कैश्चिदप्यहन्तव्यप्रज्ञाः अनागसः पापरहिता आदित्याः दिवः द्युलोकस्य वर्ष्माणं नाभिस्थानं समुच्छ्रितं देशं स्वस्तये अविनाशाय लोकस्य क्षेमकरणार्थं वसते अधिवसन्ति । यद्वा स्वतेजसाच्छादयन्ति ॥

सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम् ।
ताँ आ विवास नमसा सुवृक्तिभिर्महो आदित्याँ अदितिं स्वस्तये ॥ ५ ॥

सम्ऽराजः । ये । सुऽवृधः । यज्ञम् । आऽययुः । अपरिऽह्वृताः । दधिरे । दिवि । क्षयम् ।
तान् । आ । विवास । नमसा । सुवृक्तिऽभिः । महः । आदित्यान् । अदितिम् । स्वस्तये ॥५॥

सम्राजः सर्वेषां राजानः स्वतेजोभिः सम्यग्राजमानाः सुवृधः सुवृद्धाः ये देवाः यज्ञमाययुः आयान्ति सोमादिहविर्भक्षणार्थम् । ततः अपरिह्वृताः कैश्चिदप्यहिंसिता ये देवाः दिवि द्युलोके क्षयं निवासं दधिरे विदधति कुर्वन्ति । ऋषिरात्मानमाह । महः महतो गुणाधिक्येन आदित्यान् अदितेः पुत्रान् तान् प्रसिद्धान् देवान् अदितिं तेषां मातरमेतन्नामिकां च स्वस्तये अविनाशाय नमसा हवीरूपेणान्नेन सुवृक्तिभिः शोभनाभिः स्तुतिभिश्च आ विवास आभिमुख्येन परिचर । विवासतिः परिचरणकर्मा ॥ ॥ ३ ॥

को वः स्तोमं राधति यं जुजोषथ विश्वे देवासो मनुषो यति ष्ठन ।
को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥ ६ ॥

कः । वः । स्तोमम् । राधति । यम् । जुजोषथ । विश्वे । देवासः । मनुषः । यति । स्थन ।
कः । वः । अध्वरम् । तुविऽजाताः । अरम् । करत् । यः । नः । पर्षत् । अति । अंहः । स्वस्तये ॥६॥

ऋषिर्देवान् प्रति बहुधा वितर्कयति । हे देवाः वः युष्माकं कः स्तोता स्तोमं त्रिवृत्पञ्चदशादिलक्षणं राधति संसाधयति । न कश्चिदस्तीत्यर्थः । यद्वा । मदन्यः को वो युष्मभ्यं स्तोमं करोति ।

१. ग४-त४–स्तुत्यर्थस्य व्यत्ययेन परस्मैपदं ।

यूयं ^v^यं[1] स्तोतारं ^v^जुजोषथ सेवध्वे । ' जुषी प्रीतिसेवनयोः ' । लेटि शपः श्लुः । अडागमः । किंच हे ^v^मनुषः मन्तारो ज्ञातारो हे ^v^विश्वे ^v^देवासः देवा यूयं ^v^यति यत्संख्याः ^v^स्थन भवथ । यच्छब्दादपि छान्दसो डतिर्द्रष्टव्यः । हे ^v^तुविजाताः धात्रादिविभागेन बहुजनना हे देवा युष्मदर्थं ^v^कः वा यजमानः ^v^अध्वरं यज्ञम् ^v^अरं ^v^करत् अलंकरोति स्तुतिभिर्हविर्भिश्च । मदन्यो नास्तीत्यर्थः । ^v^यः यज्ञः ^v^नः अस्मान् ^v^स्वस्तये अविनाशाय ^v^अंहः पापरूपं मार्गमवैदिकम् ^v^अति ^v^पर्षत् अतिपारयति तं यज्ञं को वालंकरोतीति ॥

## येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्त होतृभिः ।
## त आदित्या अभयं शर्म यच्छत सुगा नः कर्त सुपथा स्वस्तये ॥ ७ ॥

येभ्यः । होत्राम् । प्रथमाम् । आऽयेजे । मनुः । समिद्धऽअग्निः । मनसा । सप्त । होतृऽभिः ।
ते । आदित्याः । अभयम् । शर्म । यच्छत । सुऽगा । नः । कर्त । सुऽपथा । स्वस्तये ॥७॥

^v^समिद्धाग्निः हविर्भिः सम्यग्दीप्ताग्निः ^v^मनुः वैवस्वतो मनुष्याणां प्रथमभावी श्रद्धानेन ^v^मनसा ^v^सप्त सप्तसंख्याकैः ^v^होतृभिः वषट्कर्तृभिर्ऋत्विग्भिश्च सह ^v^येभ्यः युष्मभ्यं ^v^प्रथमां प्रथमं मुख्यं यद्वा सर्वेषां मनुष्याणामग्रे क्रियमाणत्वादाद्यं ^v^होत्राम् । हूयन्ते हवींष्यत्रेति होत्रा यज्ञः । तम् । यद्वा । आहूयन्ते देवाः स्तुतिभिरत्रेति । तं यज्ञम् ^v^आयेजे आभिमुख्येनेष्टवान् । यजेर्लिटि रूपम् । यद्वा । लटि ' लोपस्त आत्मनेपदेषु ' इति तलोपः । ' यजिवप्योरलिट्येवं वक्तव्यम् ' ( का. ६. ४. १२०. ४ ) इति वचनादेकारः । हे ^v^आदित्याः अदितेः पुत्रा हे देवाः ^v^ते यूयं नोऽस्मभ्यम् ^v^अभयं ^v^शर्म च सुखं प्रयच्छत । किंच ^v^नः अस्माकं ^v^स्वस्तये क्षेमाय ^v^सुपथा सुपथानि शोभनान् वैदिकमार्गान् ^v^सुगा सुष्ठु गन्तव्यान् ^v^कर्त कुरुत । करोतेर्लोटि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । तबादेशः[2] ॥

## य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मन्तवः ।
## ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ॥ ८ ॥

ये । ईशिरे । भुवनस्य । प्रऽचेतसः । विश्वस्य । स्थातुः । जगतः । च । मन्तवः ।
ते । नः । कृतात् । अकृतात् । एनसः । परि । अद्य । देवासः । पिपृत । स्वस्तये ॥ ८ ॥

^v^प्रचेतसः प्रकृष्टज्ञानाः ^v^मन्तवः सर्वस्य वेदितारः ^v^ये देवाः ^v^स्थातुः स्थावरस्य ^v^जगतः जङ्गमस्य ^v^विश्वस्य सर्वस्य ^v^भुवनस्य लोकस्य ^v^ईशिरे ईश्वरा भवन्ति । अथ प्रत्यक्षकृतः । हे ^v^देवासः देवा य उक्तगुणाः ^v^ते यूयं ^v^नः अस्मान् ^v^कृतात् कायिकात्पापात् ^v^अकृतात् करचरणादिभिरकृतात् ^v^एनसः किंतु मानसात्पापाच्च ^v^अद्य अस्मिन्दिने ^v^स्वस्तये अविनाशायायुषोऽभिवृद्धये ^v^पिपृत पारयत । पापरहितान् कुरुतेत्यर्थः ॥

## भरेष्विन्द्रं सुहवं हवामहेंऽहोमुचं सुकृतं दैव्यं जनम् ।
## अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥ ९ ॥

भरेषु । इन्द्रम् । सुऽहवम् । हवामहे । अंहःऽमुचम् । सुऽकृतम् । दैव्यम् । जनम् ।
अग्निम् । मित्रम् । वरुणम् । सातये । भगम् । द्यावापृथिवी इति । मरुतः । स्वस्तये ॥ ९ ॥

१. त-भ-'यं' नास्ति । २. ग-त-तस्य तबादेशः ।

ᐯअंहोमुचम् अंहसः पापस्य मोचकं ᐯसुहवं शोभनाह्वानम् ᐯइन्द्रं ᐯभरेषु। भृणन्ति भर्जयन्ति विनाशयन्ति शत्रूनत्रेति भराः संग्रामाः। तेषु ᐯहवामहे रक्षणायाह्वयामः। किंच ᐯसुकृतं सुकर्माणं ᐯदैव्यं देवसंबन्धिनमन्यं ᐯजनं चाह्वयामहे। तं जनमुद्दिशति। ᐯअग्निं ᐯमित्रं ᐯवरुणं ᐯभगं भजनीयमेतन्नामानं देवं ᐯद्यावापृथिवी द्यावापृथिव्यौ ᐯमरुतः च ᐯसातये अन्नलाभाय ᐯस्वस्तये अविनाशाय रक्षणायाह्वयामहे॥

अदितिदेवताकस्य पशोः 'सुत्रामाणम्' इत्येषा वपायागस्य याज्या। सूत्रितं च—'अदितिर्ह्यजनिष्ट सुत्रामाणं पृथिवीं द्यामनेहसम्' (आश्व. श्रौ. ३. ८) इति। प्रायणीयेष्टावादित्यस्य हविष एषैवानुवाक्या सैवोदयनीयायां याज्या। सूत्रितं च—'सुत्रामाणं पृथिवीं द्यामनेहसं महीमू षु मातरं सुव्रतानाम्' (आश्व. श्रौ. ४. ३) इति। प्रयाणेऽनयैव नावमारोहेत्। सूत्रितं च—'सुत्रामाणं पृथिवीं द्यामनेहसमिति नावम्[1]' (आश्व. गृ. २. ६. ८) इति[1]॥

## सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्।
## दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये॥ १०॥

सुऽत्रामाणम्। पृथिवीम्। द्याम्। अनेहसम्। सुऽशर्माणम्। अदितिम्। सुऽप्रनीतिम्। दैवीम्। नावम्। सुऽअरित्राम्। अनागसम्। अस्रवन्तीम्। आ। रुहेम। स्वस्तये॥ १०॥

द्युलोको नौरूपकतया स्तूयते। ᐯसुत्रामाणं सुष्ठु त्रायन्तीं ᐯपृथिवीं विस्तृताम् ᐯअनेहसं पापरहितां ᐯसुशर्माणं शोभनसुखयुक्ताम् ᐯअदितिम् अदीनां ᐯसुप्रणीतिं सुप्रणयनां सुष्ठु प्रणेत्रीं ᐯदैवीं देवसंबन्धिनीं ᐯस्वरित्रां शोभनारित्रां जलाहरणशीलदारुयुक्ताम्[2] ᐯअनागसं पापरहिताम् ᐯअस्रवन्तीं अगच्छन्तीमविनश्वरीं ᐯनावं नावमिव स्थितां ᐯद्यां ᐯस्वस्तये अविनाशाय देवत्वप्राप्तये ᐯआ ᐯरुहेम वयमारोहेम। रोहतेर्लिङि 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः॥ ॥ ४॥

## विश्वे यजत्रा अधि वोचतोतये त्रायध्वं नो दुरेवाया अभिहुतः।
## सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये॥ ११॥

विश्वे। यजत्राः। अधि। वोचत। ऊतये। त्रायध्वम्। नः। दुःऽएवायाः। अभिऽहुतः। सत्यया। वः। देवऽहूत्या। हुवेम। शृण्वतः। देवाः। अवसे। स्वस्तये॥ ११॥

हे ᐯयजत्राः यजनीया हे ᐯविश्वे सर्वे देवा यूयम् ᐯऊतये रक्षणार्थम् ᐯअधि ᐯवोचत अस्मानधिब्रूत। आभाष्य च ᐯअभिहुतः अभिहिंसित्र्याः ᐯदुरेवायाः दुर्गतेः ᐯनः अस्मान् ᐯत्रायध्वम्। यद्येवं कुरुथ तर्हि हे ᐯदेवाः ᐯशृण्वतः स्तोत्राण्यस्माभिरुक्तानि तादृशान् ᐯवः युष्मान् ᐯसत्यया यथार्थभूतया ᐯदेवहूत्या। देवा हूयन्तेऽनयेति[3] देवहूतिः स्तुतिः। तया वयं ᐯहुवेम आह्वयेम। किमर्थम्। ᐯअवसे रक्षणाय शत्रुभ्यः ᐯस्वस्तये क्षेमाय जीवनाभिवृद्धये च॥

१. ग-त१.२.३.७-भ६.७—नावं नवरथेनेति; त४.६.८-भ१.४.५-नावं न रथेनेति; त५-नावमारुहेमेति; भ२-नावं रथेनेति; भ८—नावं न रथेति। २. ग४—अल्पक्षरणशील°; त६.८—जलहेलाहरणशील°; भ१.८—जलाहलाहरणशील°; भ२—जलाहलाहरणशील°; भ५—जलहेलाहारणशील°। ३. ग-त—आहूयंते°।

अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः ।
आरे देवा द्वेषो अस्मद्युयोतनोरु णः शर्म यच्छता स्वस्तये ॥ १२ ॥

अप । अमीवाम् । अप । विश्वाम् । अनाहुतिम् । अप । अरातिम् । दुःऽविदत्राम् । अघऽयतः ।
आरे । देवाः । द्वेषः । अस्मत् । युयोतन । उरु । नः । शर्म । यच्छत । स्वस्तये ॥ १२ ॥

हे ᵛदेवाः ᵛअमीवां रोगादिकं यद्वा रोगवद्बाधकं शत्रुमस्मत्तो दूरे ᵛअप कुरुत पृथक्कुरुत । तथा ᵛविश्वां सर्वाम् ᵛअनाहुतिं देवानामनाह्वानबुद्धिं यद्वा देवानां महाशत्रुं पृथक्कुरुत । किंच ᵛअरातिम् अदानं लोभबुद्धिं यद्वा देवेभ्यो हविषामदातारं शत्रुम् ᵛअप गमयत । अपि च ᵛअघायतः पापमिच्छतः शत्रोः ᵛदुर्विदत्रां दुर्ज्ञानं दुष्टां बुद्धिम् इत्थं च ᵛद्वेषः द्वेष्टॄन् सर्वाञ्छत्रून् ᵛअस्मत् अस्मत्तः ᵛआरे दूरे ᵛयुयोतन पृथक्कुरुत । एवं सति यूयं ᵛनः अस्मभ्यम् ᵛउरु विस्तीर्णं ᵛशर्म सुखं ᵛस्वस्तये कल्याणाय प्रयच्छत ॥

अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि ।
यमादित्यासो नयथा सुनीतिभिरति विश्वानि दुरिता स्वस्तये ॥ १३ ॥

अरिष्टः । सः । मर्तः । विश्वः । एधते । प्र । प्रऽजाभिः । जायते । धर्मणः । परि ।
यम् । आदित्यासः । नयथ । सुनीतिऽभिः । अति । विश्वानि । दुःऽइता । स्वस्तये ॥ १३ ॥

हे देवाः ᵛविश्वः सर्वः ᵛमर्तः ᵛसः मनुष्यः ᵛअरिष्टः कैश्चिदप्यहिंसितः सन् ᵛएधते पश्वादिभिर्वर्धते । तथा ᵛधर्मणस्परि धारकात्कर्मणोऽनन्तरं स मनुष्यः ᵛप्रजाभिः पुत्रादिभिः ᵛप्र ᵛजायते प्रकर्षेणाविर्भूतो भवति । हे ᵛआदित्यासः आदित्या देवाः ᵛयं मनुष्यं ᵛसुनीतिभिः सुनयनैः ᵛविश्वानि सर्वाणि ᵛदुरिता दुरितानि पापानि तद्रूपाञ्छत्रून्वा ᵛस्वस्तये क्षेमाय ᵛअति ᵛनयथ अतीत्य सन्मार्गं नयथ । स वर्धत इति समन्वयः ॥

यं देवासोऽवथ वाजसातौ यं शूरसाता मरुतो हिते धने ।
प्रातर्यावाणं रथमिन्द्र सानसिमरिष्यन्तमा रुहेमा स्वस्तये ॥ १४ ॥

यम् । देवासः । अवथ । वाजऽसातौ । यम् । शूरऽसाता । मरुतः । हिते । धने ।
प्रातःऽयावानम् । रथम् । इन्द्र । सानसिम् । अरिष्यन्तम् । आ । रुहेम । स्वस्तये ॥ १४ ॥

हे ᵛदेवासः देवाः ᵛवाजसातौ अन्नभजनेऽन्नलाभे वा ᵛयं रथम् ᵛअवथ रक्षथ हे ᵛमरुतः ᵛशूरसाता । संग्रामनामैतत् शूराः स्यन्ति खिद्यन्तेऽत्रेति[1] शूराः सीयन्ते विनाश्यन्ते योद्धृभिरत्रेति[2] । तस्मिन्युद्धे ᵛयं रथं ᵛहिते निहिते ᵛधने धनमुद्दिश्य । 'निमित्तात्कर्मसंयोगे' (पा. सू. २. ३. ३६. ६) इति सप्तमी । तदुद्दिश्य रक्षथ । सर्वेषां देवानां मुख्यत्वादिन्द्रमेवाभिलक्ष्य वदत्युत्तरार्धेन[3] । हे ᵛइन्द्र सर्वेषां मुख्य ᵛप्रातर्यावाणं प्रातरेव युद्धं प्रति गन्तारं ᵛसानसिं संभजनीयम् ᵛअरिष्यन्तं कैश्चिदप्यहिंसितम् । यद्वा । इन्द्रसहायानां मरुतामबाधकम् । तं ᵛरथं ᵛस्वस्तये अस्माकं रक्षणाय वयम् ᵛआ ᵛरुहेम आरोहेम ॥

१. ग–खिद्यंतेत्रेति; त-भ–भिद्यंतेत्रेति । २. ग-त-भ–°रस्येति । ३. त-म–वदत्युत्तरार्धेन ।

प्रायणीयेष्टौ पथ्यास्वस्तेर्यागस्य ' स्वस्ति नः पथ्यासु ' इत्येषानुवाक्या । उत्तरा याज्या । सूत्रितं च—' स्वस्ति नः पथ्यासु धन्वस्विति द्वे अग्ने नय सुपथा राये अस्मान् ' ( आश्व. श्रौ. ४. ३ ) इति । उदयनीयायामेत एव विपर्यस्ते याज्यानुवाक्ये । सूत्रितं च—' विपरीताश्च याज्यानुवाक्याः ' इति ॥

स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु वृजने स्वर्वति ।
स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥ १५ ॥

स्वस्ति । नः । पथ्यासु । धन्वऽसु । स्वस्ति । अप्ऽसु । वृजने । स्वःऽवति ।
स्वस्ति । नः । पुत्रऽकृथेषु । योनिषु । स्वस्ति । राये । मरुतः । दधातन ॥ १५ ॥

हे मरुतः सितराविणो देवाः नः अस्माकं पथ्यासु पथियोग्येषु सोदकेषु देशेषु[1] स्वस्ति कल्याणं कुरुत । तथा धन्वसु निरुदकेषु देशेषु[1] स्वस्ति कल्याणमुदकजननलक्षणं कुरुत । तथा अप्सु उदकेषु स्वस्ति । तथा स्वर्वति सर्वैरायुधैर्युक्ते सेनालक्षणे वृजने शत्रूणामावर्जकं बलं च कल्याणं कुरुत । नः[2] अस्माकं[2] पुत्रकृथेषु पुत्राणां कर्तृषूत्पादकेषु स्त्रीणां योनिषु स्वस्ति कल्याणं यथा गर्भा न पतन्ति तथा क्षेमं कुरुत । किंच नोऽस्माकं राये धनाय गवादिलक्षणाय स्वस्ति क्षेमं दधातन धत्त कुरुत ॥

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥ १६ ॥

स्वस्तिः । इत् । हि । प्रऽपथे । श्रेष्ठा । रेक्णस्वती । अभि । या । वामम् । एति ।
सा । नः । अमा । सो इति । अरणे । नि । पातु । सुऽआवेशा । भवतु । देवऽगोपा ॥ १६ ॥

या पृथिवी गन्तुमुद्युक्तानां प्रपथे प्रकृष्टाय मार्गाय स्वस्तिरित् क्षेमकारिण्येव भवति[3] श्रेष्ठा प्रशस्यतमा रेक्णस्वती धनवती या पृथिवी वामं वननीयं यज्ञम् अभि एति उत्तरवेद्यात्मना वाभिप्राप्नोति सा पृथिवी नः अस्माकम्[4] अमा । गृहनामैतत् । गृहं[5] रक्षतु । तथा सो सा उ सैव अरणे गन्तव्ये देशेऽरणेऽरमणेऽरण्यादिके देशे वा नोऽस्मान् नि पातु नितरां रक्षतु । तथा देवगोपा देवा गोपायितारो यस्याः सन्ति सा पृथिव्यस्माकं स्वावेशा शोभननिवासा भवतु ॥

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।
ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥ १७ ॥

एव । प्लतेः । सूनुः । अवीवृधत् । वः । विश्वे । आदित्याः । अदिते । मनीषी ।
ईशानासः । नरः । अमर्त्येन । अस्तावि । जनः । दिव्यः । गयेन ॥ १७ ॥

हे विश्वे आदित्याः सर्वे देवाः हे अदिते देवानां मातरेतन्नामिके[6] देवि वः युष्मान् मनीषी प्राज्ञः स्तोता प्लतेः एतन्नामकस्यर्षेः सूनुः पुत्रो गयो नाम एव एवमुक्तरीत्या अवीवृधत्

१. ग-त१.२.३.७—देशेषु च । २. ग-त-भ१.२.६.७.८—ततो नोऽस्माकं । ३. ग-त-भ—भवतु । ४. ग-त-भ—अस्मान् । ५. त—गृहे । ६. ग-त१.२.३.६.७.८-भ—मातृभूते एतन्नामिके ।

स्तुतिभिरवर्धयत्। वर्धतेर्ण्यन्तस्य लुङि रूपम्। ᵛअमर्त्येन मनुष्यधर्मरहितेन स्तुतेन येन देवजनेन ᵛनरः मनुष्याः ᵛईशानासः धनस्येश्वराः स्वामिनो भवन्ति सः ᵛदिव्यः दिवि भवः ᵛजनः देवगणः ᵛगयेन एतन्नामकेन मया ᵛअस्तावि अभिष्टुतोऽभूत्। स्तौतेः कर्मणि लुङि चङि रूपम्॥ ॥ ५ ॥

'कथा' इति सप्तदशर्चं चतुर्थं सूक्तं प्लातस्य गयस्यार्षं वैश्वदेवम्। 'यां मे धियम्' इत्येषा द्वादशी षोडशीसप्तदश्यौ च त्रिष्टुभः शेषा[1] जगत्यः[1]। तथा चानुक्रान्तं-'कथा यां मे त्रिष्टुप्' इति। गतो विनियोगः॥

**क॒था दे॒वानां॑ कत॒मस्य॒ याम॑नि सु॒मन्तु॒ नाम॑ शृण्व॒तां म॑नामहे।**
**को मृ॑ळाति कत॒मो नो॒ मय॑स्करत्कत॒म ऊ॒ती अ॒भ्या व॑वर्तति ॥ १ ॥**

क॒था। दे॒वाना॑म्। क॒त॒मस्य॑। याम॑नि। सु॒ऽमन्तु॑। नाम॑। शृ॒ण्व॒ताम्। म॒ना॒म॒हे॒।
कः। मृ॒ळा॒ति॒। क॒त॒मः। नः॒। मयः॑। क॒र॒त्। क॒त॒मः। ऊ॒ती। अ॒भि। आ। व॒व॒र्त॒ति॒॥१॥

ऋषिर्बहुधात्मानं वितर्कयति। ᵛयामनि। यान्ति गच्छन्त्यत्रेति यामा यज्ञः। तस्मिन् ᵛशृण्वताम् अस्माभिरुक्तानि स्तोत्राणि ᵛदेवानां मध्ये ᵛकतमस्य देवस्य ᵛसुमन्तु सुष्ठु मननीयं स्तोतव्यं ᵛनाम ᵛकथा कथं ᵛमनामहे उच्चारयामः। अस्मान् ᵛकः वा ᵛमृळाति। 'मृळतिरुपदयाकर्मा' ( निरु. १०. १५ ) इति यास्कः। कृपां करोति। ᵛकतमः वा ᵛनः अस्माकं ᵛमयः सुखं ᵛकरत् करोति। ᵛकतमः वा ᵛऊती। चतुर्थ्याः पूर्वसवर्णदीर्घः। ऊत्यै अस्माकं रक्षणाय ᵛअभ्या ᵛववर्तति अभ्यागच्छतीत्यर्थः॥

**क्र॒तू॒यन्ति॒ क्रत॑वो हृ॒त्सु धी॒तयो॒ वेन॑न्ति वे॒नाः प॒तय॒न्त्या दिशः॑।**
**न म॑र्डि॒ता वि॑द्यते अ॒न्य ए॑भ्यो दे॒वेषु॑ मे॒ अधि॒ कामा॑ अयंसत ॥ २ ॥**

क्र॒तु॒ऽयन्ति॑। क्रत॑वः। हृ॒त्ऽसु। धी॒तयः॑। वेन॑न्ति। वे॒नाः। प॒तय॑न्ति। आ। दिशः॑।
न। म॒र्डि॒ता। वि॒द्य॒ते॒। अ॒न्यः। ए॒भ्यः॒। दे॒वेषु॑। मे॒। अधि॑। कामाः॑। अ॒यं॒स॒त॒॥ २ ॥

ᵛहृत्सु हृदयेषु[2] ᵛधीतयः निधातव्या निहिताः ᵛक्रतवः प्रज्ञाः ᵛक्रतूयन्ति अग्निहोत्रादिकर्म कर्तुमिच्छन्ति। तदेवाह। ᵛवेनाः कान्ताः प्रज्ञाः ᵛवेनन्ति देवान् कामयन्ते। 'वेनो वेनतेः कान्तिकर्मणः' ( निरु. १०. ३८ ) इति यास्कः। तथा ᵛदिशः अस्माभिर्निर्दिश्यमानाः प्रेर्यमाणाः कामाः ᵛआ ᵛपतयन्ति देवान् फलावाप्तय आगच्छन्ति। यतः ᵛएभ्यः देवेभ्यः ᵛअन्यः देवः एषां कामानां ᵛमर्डिता सुखयिता ᵛन ᵛविद्यते। किं बहुना। ᵛदेवेषु ᵛअधि। अधिशब्दः सप्तम्यर्थद्योतकः। इन्द्रादिषु देवेषु ᵛमे मदीयाः ᵛकामाः ᵛअयंसत नियम्यन्ते। यच्छतेः कर्मणि लुङि रूपम्॥

**नरा॒शंसं॑ पू॒षण॒मगो॑ह्यम॒ग्निं दे॒वेद्ध॑म॒भ्य॑र्चसे गि॒रा।**
**सू॒र्या॒मासा॑ च॒न्द्रम॑सा य॒मं दि॒वि त्रि॒तं वात॑मु॒षस॑म॒क्तुम॒श्विना॑ ॥ ३ ॥**

न॒रा॒शंस॑म्। वा॒। पू॒षण॑म्। अगो॑ह्यम्। अ॒ग्निम्। दे॒वऽई॑द्धम्। अ॒भि। अ॒र्च॒से॒। गि॒रा।
सू॒र्या॒मासा॑। च॒न्द्रम॑सा। य॒मम्। दि॒वि। त्रि॒तम्। वात॑म्। उ॒षस॑म्। अ॒क्तुम्। अ॒श्विना॑ ॥३॥

---

१. ग-त-भ-'शेषा जगत्यः' नास्ति। २. ग-त-अस्माकं हृदयेषु।

ऋषिः स्वात्मानं संबोध्याह । ᵛनराशंसम् । ' उभे वनस्पत्यादिषु युगपत् ' इत्युभयपदप्रकृतिस्वरत्वम् । संहितायां विप्रकर्षश्छान्दसः । नरैः शंसनीयमेतन्नामानं ᵛपूषणं स्तोतृणां धनदानेन पोषकमेतन्नामानं तथा ᵛअगोह्यम् अगूहितमन्यैर्गन्तुमशक्यं ᵛदेवेद्धं वामदेवादिभिर्ऋषिभिर्दीपितम् ᵛअग्निं च ᵛगिरा स्तुत्या ᵛअभ्यर्चसे अभिष्टुहि । तथा ᵛसूर्यामासा ᵛचन्द्रमसा[1] । मा इति[1] चन्द्रमसो विशेषणम् । माति पक्षमिति माश्चन्द्रमाः । तौ सूर्याचन्द्रमसौ ᵛदिवि द्युलोके स्थितं ᵛयमं च ᵛत्रितं त्रिषु लोकेषु ततं स्वमहिम्ना विस्तृतं त्रिस्थानं वा तमिन्द्रं ᵛवातं वायुम् ᵛउषसम् उषःकालम् ᵛअक्तुं रात्रिम् ᵛअश्विना अश्विनौ चैतान्देवान् तत्तल्लिङ्गैः स्तोत्रैरभिष्टुहि ॥

## कथा कविस्तुवीरवान् कया गिरा बृहस्पतिर्वावृधते सुवृक्तिभिः । अज एकपात्सुहवेभिर्ऋक्वभिरहिः शृणोतु बुध्न्यो३ हवीमनि ॥ ४ ॥

कथा । कविः । तुविऽरवान् । कया । गिरा । बृहस्पतिः । ववृधते । सुवृक्तिऽभिः ।
अजः । एकऽपात् । सुऽहवेभिः । ऋक्वऽभिः । अहिः । शृणोतु । बुध्न्यः । हवीमनि ॥४॥

ᵛकविः क्रान्तप्रज्ञोऽग्निः ᵛकथा कथं केन प्रकारेण ᵛतुवीरवान् बहुस्तोतृयुक्तो भवति ॥ मत्वर्थीयप्रत्ययावृत्तिः । यद्वा । तुविशब्दस्य रो मत्वर्थीयः । बाहुल्ययुक्तैर्देवैः सहितो भवति ॥ ᵛकया वा ᵛगिरा स्तुत्या बहुमान् भवति । ᵛबृहस्पतिः[2] एतन्नामको देवः ᵛसुवृक्तिभिः शोभनाभिः स्तुतिभिस्तथा ᵛवावृधते[3] । तथा ᵛएकपात् । एकोऽसहाय एव पतति गच्छतीत्येकपात् । तादृशो दिवो धारयिता ᵛअजः एतन्नामको देवश्च ᵛसुहवेभिः शोभनाह्वानैः ᵛऋक्वभिः मन्त्रवद्भिः स्तोत्रैः ᵛवावृधते एते त्रयो देवा वर्धन्ते । त्रित्वापेक्षया बहुवचनम् । ' वृधु वृद्धौ ' । व्यत्ययेन शपः श्लुः । ᵛअहिर्बुध्न्यः च एतन्नामको देवश्च ᵛहवीमनि आह्वाने अस्मान् ᵛशृणोतु ॥

## दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवासति । अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ॥ ५ ॥

दक्षस्य । वा । अदिते । जन्मनि । व्रते । राजाना । मित्रावरुणा । आ । विवाससि ।
अतूर्तऽपन्थाः । पुरुऽरथः । अर्यमा । सप्तऽहोता । विषुऽरूपेषु । जन्मऽसु ॥ ५ ॥

हे ᵛअदिते पृथिवि ᵛदक्षस्य सूर्यस्य ᵛजन्मनि तस्मिञ्जाते ᵛव्रते तस्य यज्ञकर्मणि ᵛराजाना राजन्तौ[4] मित्रावरुणौ[5] ᵛविवाससि । वाशब्द उपमार्थः । यथा त्वं वेदिभूता सती तौ पर्यचरः एवमिदानीमप्यस्मद्यज्ञे कुर्विति पृथिवीमाशास्ते । सः ᵛअर्यमा अरीणां तमसां यन्ता नियन्ता सूर्यः ᵛविषुरूपेषु नानारूपेषु[6] ᵛजन्मसु कर्मसु[7] अन्वहमुद्यन् ᵛसप्तहोता । सप्त रश्मयो यस्मिन् रसान् जुह्वति प्रक्षिपन्ति स एतादृशो भवति । ᵛअतूर्तपन्थाः अतूर्तस्त्वरारहितः पन्था यस्य सः । नियतगतित्वात् त्वरमाणो ह्यनियतगतिर्भवति । ᵛपुरुरथः । रथो रंहतेः । प्रत्यहं भुक्तिभेदाद्बहुरंहणो भवति । यद्वा । हे अदिते प्रातस्तनि संध्ये दक्षस्यादित्यस्य जन्मन्युदयाख्ये जन्मनि कर्मणि । उद्यत्यादित्य इत्यर्थः । वाशब्दः श्रुतिसामर्थ्याद्दक्षस्य वा जन्मनि त्वत्तस्तव वा जन्मनि दक्षादिति । राजाना[8] दीप्यमानौ

१. ग-त३.४.५.७–चंद्रमसा मासेति; त१.२.८-भ–चंद्रमसेति । २. त–बृहस्पतिर्वा बृहस्पतिः; भ१.६.७–बृहस्पतिः बृहस्पतिर्वा । ३. ग-त-भ२.६.८–वावृधते वर्धते । ४. त३-भ१.२.७–राजानौ । ५. ग-त४–मित्रावरुणा मित्रावरुणौ । ६. भ–' नानारूपेषु ' नास्ति । ७. ग-त-भ–' कर्मसु ' नास्ति । ८. ग-त-भ–तव राजाना ।

मित्रावरुणा। ‘ अहर्वै मित्रो रात्रिर्वरुणः ’ ( ऐ. ब्रा. ४.१० ) इति श्रुतेरहोरात्रौ मित्रावरुणावुच्येते। तौ विवाससि परिचरसि। कथम्। तदनुप्रवेशेन। अर्धं हि संध्याया रात्रिमनुप्रविशत्यर्धमहरिति। उत्तरार्धः पूर्ववत्। सप्तहोता। ह्वयतेरर्चतिकर्मण इदं रूपम्। सप्तर्षयो भरद्वाजादयो होतारः स्तोतारः सन्तीति। अथवा सप्तहोता। मलिम्लुचांहसस्पतिसहिताः सप्तर्तवो यस्य होतारो भवन्ति तादृशः। अत्र निरुक्तं—‘ दक्षस्य वादिते जन्मनि कर्मणि[1] व्रते[2] राजानौ ’ ( निरु. ११.२३ ) इत्यादि॥ ॥६॥

ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः।
सहस्रसा मेधसाताविव त्मना महो ये धनं समिथेषु जभ्रिरे॥ ६॥

ते। नः। अर्वन्तः। हवनऽश्रुतः। हवम्। विश्वे। शृण्वन्तु। वाजिनः। मितऽद्रवः।
सहस्रऽसाः। मेधसातौऽइव। त्मना। महः। ये। धनम्। समऽइथेषु। जभ्रिरे॥ ६॥

हवनश्रुतः आह्वानं शृण्वन्तः वाजिनः बलवन्तः मितद्रवः मितमार्गा अध्वानं परिच्छिन्दन्तः विश्वे सर्वे प्रसिद्धाः[2] अर्वन्तः अश्वा इन्द्रादीनां वाहनभूता हर्यादयः नः अस्माकं हवम् आह्वानं शृण्वन्तु। कीदृशाः। मेधसाताविव। मेधाः स्तुतयः सायन्ते संभज्यन्तेऽत्रेति मेधसातिर्यज्ञः। तस्मिन्निव त्मना आत्मनैव सहस्रसाः सहस्रसंख्याकधनस्य दातारः ते शृण्वन्तु ये अश्वाः समिथेषु। संग्रामनामैतत्। संप्राप्यते योद्धृभिरत्रेति। तेषु संग्रामेषु महः महत् धनं जभ्रिरे शत्रुभ्य आहरन्ति। हृग्रहोर्भः॥

प्र वो वायुं रथयुजं पुरंधिं स्तोमैः कृणुध्वं सख्याय पूषणम्।
ते हि देवस्य सवितुः सवीमनि क्रतुं सचन्ते सचितः सचेतसः॥ ७॥

प्र। वः। वायुम्। रथऽयुजम्। पुरम्ऽधिम। स्तोमैः। कृणुध्वम्। सख्याय। पूषणम्।
ते। हि। देवस्य। सवितुः। सवीमनि। क्रतुम्। सचन्ते। सऽचितः। सऽचेतसः॥ ७॥

हे स्तोतारः वः यूयं वायुं रथयुजं रथस्य योक्तारं पुरंधिम् बहुकर्माणमिन्द्रं पूषणम् एतन्नामानं च स्तोमैः त्रिवृत्पञ्चदशादिलक्षणैः सख्याय सखिकर्मणे प्र कृणुध्वं प्रकुरुध्वम्। यथा तेऽस्माकं धनादिप्रदानेन सखायो भवन्ति तथा कुरुत। हि यस्मात् सचितः ज्ञानयुक्ताः ते देवाः सचेतसः परस्परं समानबुद्धयः सन्तः सवितुः सर्वस्य प्रेरकस्य देवस्य आदित्यस्य सवीमनि प्रसवेऽह्नि क्रतुं यज्ञं सचन्ते सेवन्ते तस्मात् प्रकुरुध्वम्॥

त्रिः सप्त सस्रा नद्यो महीरपो वनस्पतीन् पर्वताँ अग्निमूतये।
कृशानुमस्तॄन् तिष्यं सधस्थ आ रुद्रं रुद्रेषु रुद्रियं हवामहे॥ ८॥

त्रिः। सप्त। सस्राः। नद्यः। महीः। अपः। वनस्पतीन्। पर्वतान। अग्निम्। ऊतये।
कृशानुम्। अस्तॄन्। तिष्यम्। सधऽस्थे। आ। रुद्रम्। रुद्रेषु। रुद्रियम्। हवामहे॥ ८॥

त्रिः सप्त एकविंशतिसंख्याकाः सस्राः सरन्तीः नद्यः नदीः। सरस्वती सरयुः सिन्धुरिति त्रयाणां गणानां प्रधानभूताः। तदाद्या नदीः महीः महान्ति अपः तासामुदकानि सोमाभिषेकार्थं

१. त-मु—व्रते कर्मणि। २. न४.५.६.८-म७—प्रवृद्धा।

ᵛवनस्पतीन् दारुमयांश्चमसादीन् ᵛपर्वतान् सोमाभिषवार्थं ग्राव्णः ᵛअग्निं होमनिष्पादकं ᵛकृशानुं सोमपालमेतन्नामानं गन्धर्वम् ᵛअस्तॄन् इषूणां क्षेप्तॄंस्तदनुचरान् गन्धर्वान् ᵛऊतये सोमरक्षणाय ᵛतिष्यं नक्षत्रं च ᵛरुद्रियं रुद्रस्तोमार्हं[1] ᵛरुद्रं हविर्भागिनं रुद्रमेतन्नामानं यद्वा यज्ञपरिशिष्टस्वामिनं रुद्रं च एतान् सर्वान् ᵛसधस्थे । सह तिष्ठन्त्यत्रेति सधस्थो यज्ञः । तस्मिन् ᵛरुद्रेषु स्तोत्रकारिषु तदर्थं ᵛहवामहे स्तुत्यत्वेनाह्वयामहे ॥

**सरस्वती सरयुः सिन्धुरूर्मिभिर्महो महीरवसा यन्तु वक्षणीः ।**
**देवीरापो मातरः सूदयित्न्वो घृतवत्पयो मधुमन्नो अर्चत ॥ ९ ॥**

सरस्वती । सरयुः । सिन्धुः । ऊर्मिऽभिः । महः । महीः । अवसा । आ । यन्तु । वक्षणीः ।
देवीः । आपः । मातरः । सूदयित्न्वः । घृतऽवत् । पयः । मधुऽमत् । नः । अर्चत ॥ ९ ॥

ᵛमहः महतोऽपि ᵛमहीः महत्योऽत्यन्तं महत्यः ᵛऊर्मिभिः सहिताः ᵛसरस्वती ᵛसरयुः ᵛसिन्धुः एतदाद्या एकविंशतिसंख्याकाः ᵛवक्षणीः इमा नद्यः ᵛअवसा रक्षणेन हेतुना ᵛआ ᵛयन्तु अस्मदीयं यज्ञं प्रत्यागच्छन्तु । ततः ᵛदेवीः देवनशीलाः ᵛमातरः मातृभूताः ᵛसूदयित्न्वः प्रेरयित्र्यः तास्ताः ᵛआपः ᵛघृतवत् घृतयुक्तं ᵛमधुमत् मधुसहितमात्मीयं ᵛपयः ᵛनः अस्मभ्यम् ᵛअर्चत प्रयच्छन्तु ॥

**उत माता बृहद्दिवा शृणोतु नस्त्वष्टा देवेभिर्जनिभिः पिता वचः ।**
**ऋभुक्षा वाजो रथस्पतिर्भगो रण्वः शंसः शशमानस्य पातु नः ॥ १० ॥**

उत । माता । बृहत्ऽदिवा । शृणोतु । नः । त्वष्टा । देवेभिः । जनिऽभिः । पिता । वचः ।
ऋभुक्षाः । वाजः । रथःपतिः । भगः । रण्वः । शंसः । शशमानस्य । पातु । नः ॥ १० ॥

ᵛउत अपि च ᵛबृहद्दिवा । ' महद्दिवा ' ( निरु. ११. ४९ ) इति यास्कः । महती दिवा दीप्तिर्यस्याः सा ᵛमाता देवमाता ᵛनः अस्माकमाह्वानं ᵛशृणोतु । तथा ᵛदेवेभिः देवैरिन्द्रादिभिः ᵛजनिभिः देवपत्नीभिश्च ᵛपिता सर्वेषां ᵛत्वष्टा एतन्नामकोऽस्मदीयं ᵛवचः शृणोतु । तथा ᵛऋभुक्षाः इन्द्रः ᵛवाजः तत्सहायो वाजो नाम सौधन्वनः कनीयान् ᵛरथस्पतिः रथस्य पतिः ᵛभगः च तथा ᵛरण्वः रमणीयः ᵛशंसः स्तुत्यो मरुद्गणश्च ततः ᵛशशमानस्य शंसमानस्य स्तोतुः ᵛनः अस्मान् ᵛपातु रक्षतु ॥ ॥ ७ ॥

**रण्वः संदृष्टौ पितुमाँइव क्षयो भद्रा रुद्राणां मरुतामुपस्तुतिः ।**
**गोभिः ष्याम यशसो जनेष्वा सदा देवास इळया सचेमहि ॥ ११ ॥**

रण्वः । सम्ऽदृष्टौ । पितुमान्ऽइव । क्षयः । भद्रा । रुद्राणाम् । मरुताम् । उपऽस्तुतिः ।
गोभिः । स्याम । यशसः । जनेषु । आ । सदा । देवासः । इळया । सचेमहि ॥ ११ ॥

ᵛसंदृष्टौ संदर्शने ᵛरण्वः रमणीयो मरुद्गणः ᵛपितुमानिव अन्नवानिव ᵛक्षयः निवासः स्तोतॄणां भवति । ᵛरुद्राणां रुद्रपुत्राणां तेषां ᵛमरुताम् ᵛउपस्तुतिः अनुग्रहबुद्धिः ᵛभद्रा कल्याणी भवति ।

---

१. ग–रुद्राणां स्तोमार्हं; त२.६.७.८–म१.२.६–रुद्राः स्तोमार्हं ।

तस्मात् ᵛजनेषु जनानां मध्ये वयं ᵛगोभिः गवादिभिः ᵛयशसः यशस्विनः ᵛस्याम भवेम। ᵛआ अनन्तरं हे ᵛदेवासः देवा युष्मान् ᵛसदा सर्वदा ᵛइळया अन्नेन हविर्लक्षणेन ᵛसचेमहि सचेम[1] संगच्छेम[1] ॥

यां मे धियं मरुत इन्द्र देवा अददात वरुण मित्र यूयम्।
तां पीपयत पयसेव धेनुं कुविद्गिरो अधि रथे वहाथ ॥ १२ ॥

याम्। मे। धियम्। मरुतः। इन्द्र। देवाः। अददात। वरुण। मित्र। यूयम्।
ताम्। पीपयत। पयसाऽइव। धेनुम्। कुवित्। गिरः। अधि। रथे। वहाथ ॥ १२ ॥

हे ᵛमरुतः हे ᵛइन्द्र ᵛदेवाः हे ᵛवरुण हे ᵛमित्र ᵛयूयं ᵛयां ᵛधियं यत्कर्म ᵛमे मह्यम् ᵛअददात दत्तवन्तः स्थ। मरुत इत्यत्र वाक्यभेदादनिघातः। पूर्वपूर्वस्याविद्यमानत्वेनाद्युदात्तत्वम्। ᵛतां धियं ᵛपीपयत फलेनाप्याययत। तत्र दृष्टान्तः। ᵛपयसेव[2] ᵛधेनुम्। नवप्रसूतिकां गां क्षीरेण यथाप्याययन्ति तद्वत्। किंच ᵛगिरः अस्मदीयाः स्तुतीः ᵛअधि[3] ᵛरथे[3] आस्मीये रथे ᵛकुवित् बहुवारं ᵛवहाथ प्राप्ताः[4] स्थ[4]। स्तुतेषु सत्सु यज्ञं प्रत्यागमनाय रथारूढा भवथ ॥

कुविदङ्ग प्रति यथा चिदस्य नः सजात्यस्य मरुतो बुबोधथ।
नाभा यत्र प्रथमं संनसामहे तत्र जामित्वमदितिर्दधातु नः ॥ १३ ॥

कुवित्। अङ्ग। प्रति। यथा। चित। अस्य। नः। सऽजात्यस्य। मरुतः। बुबोधथ।
नाभा। यत्र। प्रथमम्। सम्ऽनसामहे। तत्र। जामिऽत्वम्। अदितिः। दधातु। नः ॥ १३ ॥

ᵛअङ्ग इति संबुद्धौ। हे ᵛमरुतः यूयं नोऽस्मान् ᵛकुवित् बहुवारं ᵛप्रति ᵛबुबोधथ तथा प्रतिबुध्यध्वम्। कुविच्छब्दयोगादनिघातः। ᵛयथा ᵛनः अस्मान् ᵛसजात्यस्य ᵛअस्य बान्धवस्य विषयभूतान् कुरुथ तथा जानीथ। ततः ᵛनाभा पृथिव्या नाभिस्थाने ᵛयत्र यस्मिन्नुत्तरवेदिलक्षणे देशे ᵛप्रथमम् एव ᵛसंनसामहे हविषा यत्र संगच्छेमहि ᵛतत्र एव देशे ᵛअदितिः देवानां माता ᵛनः अस्माकं ᵛजामित्वं मनुष्यैः सह बान्धवं ᵛदधातु विदधातु ॥

ते हि द्यावापृथिवी मातरा मही देवी देवाञ्जन्मना यज्ञिये इतः।
उभे बिभृत उभयं भरीमभिः पुरू रेतांसि पितृभिश्च सिञ्चतः ॥ १४ ॥

ते इति। हि। द्यावापृथिवी इति। मातरा। मही इति।
देवी इति। देवान्। जन्मना। यज्ञिये इति। इतः।
उभे इति। बिभृतः। उभयम्। भरीमऽभिः। पुरु। रेतांसि। पितृऽभिः। च। सिञ्चतः ॥ १४ ॥

ᵛमातरा सर्वस्य जगतो निर्मात्र्यौ अत एव ᵛमही महत्यौ ᵛदेवी देवनशीले ᵛयज्ञिये यज्ञार्हे ᵛते ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛदेवान् इन्द्रादीन् ᵛजन्मना एव ᵛइतः ᵛहि प्राप्नुतः खलु।

---

१. ग-त१.३.७-म१.२.४.६.७.८–समवेमः संगच्छामः; त२.६.८-म५–सचेमः संगच्छामः; त४.५–सचेम संगच्छेमः। २. ग-त-म–पयसेव यथा। ३. त-म-मु–रथेधिरथे। ४. त१.२.३.६.७.८-म१.२.६.८–प्राप्ता; त४.५–प्रापयथ; म७–प्राप्त स्तुत।

'इण् गतौ'। लटि रूपम्। किंच ᵛउभे द्यावापृथिव्यौ ᵛभरीमभिः भरणैर्नानाविधैः ᵛउभयं जनं देवान्मनुष्यांश्च ᵛबिभृतः धारयतः पोषयतः। तथा ᵛपितृभिः पालकैर्देवैः संगते ते ᵛपुरु पुरूण्यात्मीयानि ᵛरेतांसि उदकानि ᵛसिञ्चतः क्षरतः। प्रत्यक्षेण धारयतः॥

वि षा होत्रा विश्वमश्नोति वार्यं बृहस्पतिररमतिः पनीयसी।
ग्रावा यत्र मधुषुदुच्यते बृहदवीवशन्त मतिभिर्मनीषिणः॥ १५॥

वि। सा। होत्रा। विश्वम्। अश्नोति। वार्यम्। बृहस्पतिः। अरमतिः। पनीयसी।
ग्रावा। यत्र। मधुऽसुत्। उच्यते। बृहत्। अवीवशन्त। मतिऽभिः। मनीषिणः॥ १५॥

ᵛहोत्रा। वाङ्नामैतत्। आहूयन्तेऽनया देवा इति। ᵛसा वाक् ᵛवार्यं वरणीयं ᵛविश्वं सर्वं पश्वादिसहितं धनं ᵛवि ᵛअश्नोति विविधं व्याप्नुते। कीदृशी। ᵛबृहस्पतिः बृहतां महतां पालयित्री ᵛअरमतिः पर्याप्तस्तुतिः यद्वा कुत्राप्यनुपरता ᵛपनीयसी अत्यन्तं देवानां स्तोत्रकारिणी। ᵛयत्र यस्यां होत्रायां ᵛमधुषुत् सोममभिषुण्वन् ᵛबृहत् महान् ᵛग्रावा ᵛउच्यते अभिधीयते। स्तूयत इत्यर्थः। तं स्तुतिमन्तं यज्ञं ᵛमनीषिणः देवाः ᵛमतिभिः स्तुतिभिः सह ᵛअवीवशन्त कामयन्ते। वष्टेर्ण्यन्तस्य लुङि रूपम्। यद्वा। मनीषिणः स्तोतारः स्तुतिभिर्देवान्यज्ञं कामयमानान् कुर्वन्ति॥

एवा कविस्तुवीरवाँ ऋतज्ञा द्रविणस्युर्द्रविणसश्चकानः।
उक्थेभिरत्र मतिभिश्च विप्रोऽपीपयद्गयो दिव्यानि जन्म॥ १६॥

एव। कविः। तुविऽरवान्। ऋतऽज्ञाः। द्रविणस्युः। द्रविणसः। चकानः।
उक्थेभिः। अत्र। मतिऽभिः। च। विप्रः। अपीपयत्। गयः। दिव्यानि। जन्म॥ १६॥

ᵛकविः क्रान्तप्रज्ञः ᵛतुवीरवान्। मत्वर्थीयप्रत्ययावृत्तिः। बहुस्तुतियुक्तः ᵛऋतज्ञाः यज्ञस्य वेदिता ᵛद्रविणस्युः धनकामः। 'सर्वप्रातिपदिकेभ्यो लालसायाम्' इति सुगागमः। तस्यैव विशदवचनं ᵛद्रविणसश्चकानः इति। पश्वादिधनं कामयमान इत्यर्थः। ᵛविप्रः मेधावी ᵛगयः नामर्षिः एवमुक्तप्रकारेण ᵛअत्र सूक्ते ᵛउक्थेभिः शस्त्रैः ᵛमतिभिः स्तुतिभिः ᵛच ᵛदिव्यानि दिवि जातानि ᵛजन्म जननानि देवान् ᵛअपीपयत् अवर्धयत्[1]। अस्तावीदित्यर्थः॥

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी।
ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन॥ १७॥

एव। प्लतेः। सूनुः। अवीवृधत्। वः। विश्वे। आदित्याः। अदिते। मनीषी।
ईशानासः। नरः। अमर्त्येन। अस्तावि। जनः। दिव्यः। गयेन॥ १७॥

इयं व्याख्याता॥ ॥ ८॥

'अग्निरिन्द्रः' इति पञ्चदशर्चं पञ्चमं सूक्तं वसुक्रपुत्रस्य वसुकर्णस्यार्षं वैश्वदेवम्। पञ्चदशी त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रम्यते—'अग्निरिन्द्रः पञ्चोना वासुक्रो वसुकर्णस्त्रिष्टुबन्तं तु' इति॥

---

१. भ–'अवर्धयत्' नास्ति।

अ॒ग्निरिन्द्रो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा वा॒युः पू॒षा सर॑स्वती स॒जोष॑सः ।
आ॒दि॒त्या विष्णु॑र्म॒रुतः॒ स्व॑र्बृ॒हत्सोमो॑ रु॒द्रो अदि॑ति॒र्ब्रह्म॑ण॒स्पतिः॑ ॥ १ ॥

अ॒ग्निः । इन्द्रः॑ । वरु॑णः । मि॒त्रः । अ॒र्य॒मा । वा॒युः । पू॒षा । सर॑स्वती । स॒ऽजोष॑सः ।
आ॒दि॒त्याः । विष्णुः॑ । म॒रुतः॑ । स्वः॑ । बृ॒हत् । सोमः॑ । रु॒द्रः । अदि॑तिः । ब्रह्म॑णः । पतिः॑ ॥ १ ॥

अग्न्यादय आदित्यादयः बृहत् बृहती स्वः द्यौश्च सोमादय एते देवाः सजोषसः संगताः सन्तोऽन्तरिक्षं स्वमहिम्नापूरयन्तीत्युत्तरेण संबन्धः ॥

इ॒न्द्रा॒ग्नी वृ॑त्र॒हत्ये॑षु॒ सत्प॑ती मि॒थो हि॑न्वा॒ना त॒न्वा॒३॒॑ समो॑कसा ।
अ॒न्तरि॑क्षं॒ मह्या प॑प्रु॒रोज॑सा॒ सोमो॑ घृ॒तश्री॑र्महि॒मान॑मी॒रय॑न् ॥ २ ॥

इ॒न्द्रा॒ग्नी इति॑ । वृ॒त्र॒ऽहत्ये॑षु । सत्प॑ती॒ इति॒ सत्ऽप॑ती । मि॒थः । हि॒न्वा॒ना । त॒न्वा॑ । सम्ऽओ॑कसा ।
अ॒न्तरि॑क्षम् । महि॑ । आ । प॒प्रुः॒ । ओज॑सा । सोमः॑ । घृ॒तऽश्रीः॑ । म॒हि॒मान॑म् । ई॒रय॑न् ॥ २ ॥

वृत्रहत्येषु वृत्रहननेषु युद्धेषु । यद्वा । कर्मणि छान्दसः क्यप् । वृत्राणि शत्रवो हन्यन्तेऽत्रेति वृत्रहत्या युद्धानि । तेषु मिथः परस्परं तन्वा शरीरेण तत्रस्थेन बलेन शत्रून् हिन्वाना प्रेरयन्तौ सत्पती सतां पती समोकसा समानस्थानौ इन्द्राग्नी घृतश्रीः उदकं वसतीवर्याख्यं श्रयमाणः महिमानम् आत्मीयम् ईरयन् सर्वत्रोदीरयन्नुद्गमयन् सोमः च एते सर्वे च महि महत् अन्तरिक्षम् ओजसा स्वबलेन आ पप्रुः आपूरयन्ति । ‘ प्रा पूरणे ’ ॥

तेषां॒ हि म॒ह्ना म॑ह॒ताम॑न॒र्वणां॒ स्तोमाँ॒ इय॑र्म्यृत॒ज्ञा ऋ॑ता॒वृधा॑म् ।
ये अ॑प्स॒वम॑र्ण॒वं चि॒त्ररा॑धस॒स्ते नो॑ रासन्तां म॒हये॑ सुमि॒त्र्याः ॥ ३ ॥

तेषा॑म् । हि । म॒ह्ना । म॒ह॒ताम् । अ॒न॒र्वणा॑म् । स्तोमा॑न् । इय॑र्मि । ऋ॒त॒ऽज्ञाः । ऋ॒त॒ऽवृधा॑म् ।
ये । अ॒प्स॒वम् । अ॒र्ण॒वम् । चि॒त्रऽरा॑धसः । ते । नः॒ । रा॒स॒न्ता॒म् । म॒हये॑ । सु॒ऽमि॒त्र्याः ॥ ३ ॥

मह्ना स्वमहत्त्वेन महतामनर्वणाम् अन्यस्मिन्नप्रत्यृतानां शत्रुभिरनभिगन्तव्यानाम्[1] ऋतावृधां सत्यभूतेन यज्ञेन वृद्धानां तेषाम् अग्न्यादीनां देवानामेव ऋतज्ञाः यज्ञस्य ज्ञाताहं स्तोमान् इयर्मि प्रेरयामि । ‘ ऋ गतिप्रापणयोः ’ । जौहोत्यादिकः । चित्रराधसः चायनीयधनोपेता यद्वा पश्वादि- लक्षणबहुधनाः ये देवाः अप्सवम् । अप्स इति रूपनाम । रूपवन्तम् अर्णवम् । ‘ अर्णसः सलोपश्च ’ ( का. ५. २. १०९. २ ) इति मत्वर्थीयो वप्रत्ययः । उदकवन्तं मेघं वर्षन्ति ते सुमित्र्याः शोभनसखिकर्माणः ते देवाः नः अस्मभ्यं महये जनेषु मध्ये पूजार्थं धनं रासन्तां प्रयच्छन्तु । ‘रासृ दाने ’ ॥

स्व॑र्णर॑म॒न्तरि॑क्षाणि रोच॒ना द्यावा॒भूमी॑ पृथि॒वीं स्क॑म्भु॒रोज॑सा ।
पृ॒क्षाइ॑व म॒हय॑न्तः सु॒रात॑यो दे॒वाः स्त॑वन्ते॒ मनु॑षाय सू॒रयः॑ ॥ ४ ॥

स्वः॑ऽनरम् । अ॒न्तरि॑क्षाणि । रो॒च॒ना । द्यावा॒भूमी॒ इति॑ । पृ॒थि॒वीम् । स्क॒म्भुः॒ । ओज॑सा ।
पृ॒क्षाः॒ऽइ॑व । म॒हय॑न्तः । सु॒ऽरा॒तयः॑ । दे॒वाः । स्त॒व॒न्ते॒ । मनु॑षाय । सू॒रयः॑ ॥ ४ ॥

---

१. ग-त१.२.३.७.८-भ-मु-°रभिगंतव्यानां; त४-५-°रगंतानां; त६-°रगंतव्यानां ।

स्वर्णरं सर्वस्य स्वस्वकर्मणि नेतारमादित्यम् अन्तरिक्षाणि। द्यावापृथिव्योरन्तरा मध्ये क्षियन्ति निवसन्तीत्यन्तरिक्षाणि। मध्यस्थितानि रोचना आरोचमानानि तेजांसि द्यावाभूमी द्यावापृथिव्यौ पृथिवीं विस्तीर्णमन्तरिक्षं च एतानादित्यादीन् ओजसा स्वबलेनैव देवाः स्कम्भुः धारयन्ति। स्कम्भु इति सौत्रो धातुः। लिटि रूपम्। किंच पृक्षाइव दरिद्रेषु धनानि संपर्चयन्त इव अत एव महयन्तः स्तोतॄन् धनादिभिः पूजयन्तः सुरातयः सुदानाः मनुषाय मनुष्याय सूरयः धनानां प्रेरका एते देवाः स्तवन्ते अस्मिन्यज्ञे स्तूयन्ते ॥

मित्राय शिक्ष वरुणाय दाशुषे या सम्राजा मनसा न प्रयुच्छतः।
ययोर्धाम धर्मणा रोचते बृहद्ययोरुभे रोदसी नाधसी वृतौ ॥ ५ ॥

मित्राय। शिक्ष। वरुणाय। दाशुषे। या। सम्ऽराजा। मनसा। न। प्रऽयुच्छतः।
ययोः। धाम। धर्मणा। रोचते। बृहत्।
ययोः। उभे इति। रोदसी इति। नाधसी इति। वृतौ ॥ ५ ॥

दाशुषे धनानि स्तोतृभ्यः प्रयच्छते मित्राय वरुणाय च शिक्ष हवींषि प्रयच्छ। शिक्षतिर्दानकर्मा। सम्राजा सम्राजौ सर्वस्य या यौ मित्रावरुणौ मनसा अन्तःकरणेनापि न प्रयुच्छतः न प्रमाद्यतः किमुत बाह्येन व्यापारेण। 'युच्छ प्रमादे'। भौवादिकः। ययोः मित्रावरुणयोः बृहत् महत् धाम शरीरं धर्मणा आत्मीयेन लोकप्रकाशनादिलक्षणेन कर्मणा रोचते सम्यग्दीप्यते। ययोः च नाधसी। 'णाधृ याच्ञोपतापैश्वर्याशीःषु'। याचमाने उभे रोदसी द्यावापृथिव्यौ वृतौ वर्तमाने भवतः। यद्वा। नाधसी देवमनुष्यैः समृद्धे द्यावापृथिव्यौ[1] तयोर्वृतौ वर्तमाने भवतः। तदधीने भवत इत्यर्थः ॥ ॥ ९ ॥

या गौर्वर्तनिं पर्येति निष्कृतं पयो दुहाना व्रतनीरवारतः।
सा प्रब्रुवाणा वरुणाय दाशुषे देवेभ्यो दाशद्धविषा विवस्वते ॥ ६ ॥

या। गौः। वर्तनिम्। परिऽएति। निःऽकृतम्। पयः। दुहाना। व्रतऽनीः। अवारतः।
सा। प्रऽब्रुवाणा। वरुणाय। दाशुषे। देवेभ्यः। दाशत्। हविषा। विवस्वते ॥ ६ ॥

या इयं मदीया पयः क्षीरादिकं दुहाना व्रतनीः आग्रयणपयःप्रदानेन कर्मणो नेत्री गौः निष्कृतं संस्कृतं वर्तनिम् आवासस्थानं यज्ञम् अवारतः अवरणेन अप्रार्थनेनैव पर्येति परिगच्छति स्वयमेवागच्छति प्रब्रुवाणा मया प्रस्तूयमाना सा गौः दाशुषे हविर्दत्तवते वरुणाय देवेभ्यः अन्येभ्य इन्द्रादिभ्यश्च हविषा अन्नेन विवस्वते देवान् परिचरते मह्यं मां रक्षितुं दाशत् पयः प्रयच्छतु। 'दाशृ दाने'। लेट्यडागमः। यद्वा। गौरिति माध्यमिका वाक् या पय ऊर्जं दुहाना 'सा नो मन्द्रेषमूर्जं दुहाना' (ऋ. सं. ८. १००. ११) इत्यादिषु दृष्टत्वात्। तत्परतया पूर्ववद्योज्यम् ॥

दिवक्षसो अग्निजिह्वा ऋतावृध ऋतस्य योनिं विमृशन्त आसते।
द्यां स्कभित्व्यप आ चक्रुरोजसा यज्ञं जनित्वी तन्वी३ नि मामृजुः ॥ ७ ॥

---

१. ग-त१.२.३.६.७.८-म-द्यावापृथिवी।

दिवक्षसः । अग्निऽजिह्वाः । ऋतऽवृधः । ऋतस्य । योनिम् । विऽमृशन्तः । आसते ।
द्याम् । स्कभित्वी । अपः । आ । चक्रुः । ओजसा । यज्ञम् । जनित्वी । तन्वि । नि । ममृजुः ॥७॥

[v]दिवक्षसः स्वतेजसा दिवं[1] व्याप्नुवन्तः[1]। 'अक्षू व्याप्तौ'। असुनि रूपम्। यद्वा दिवो वोढारः। [v]अग्निजिह्वाः अग्न्यास्याः। अग्निना हवींषि लिहन्त्यास्वादयन्तीति तन्मुखाः। [v]ऋतावृधः यज्ञवृद्धा यज्ञस्य वर्धयितारो वा देवाः [v]ऋतस्य सत्यभूतस्य यज्ञस्य [v]योनिं स्थानं [v]विमृशन्तः विचारयन्तः प्रतीक्षमाणाः सन्तः [v]आसते सर्वत्र तिष्ठन्ति। त इमे [v]द्यां द्युलोकं [v]स्कभित्वी स्कभित्वा तां धारयित्वा [v]ओजसा स्वबलेन [v]अपः अपेक्षितान्युदकानि [v]आ [v]चक्रुः आकुर्वन्ति। ततः [v]यज्ञं यजनीयं हविश्च [v]जनित्वी जनयित्वा [v]तन्वि स्वशरीरे [v]नि [v]माम‍ृजुः निमृजन्ति नितरामलंकुर्वन्ति। हविर्भक्षयन्तीत्यर्थः[2] ॥

परिक्षिता पितरा पूर्वजावरी ऋतस्य योना क्षयतः समोकसा ।
द्यावापृथिवी वरुणाय सव्रते घृतवत्पयो महिषाय पिन्वतः ॥ ८ ॥

परिऽक्षिता । पितरा । पूर्वजावरी इति पूर्वऽजावरी । ऋतस्य । योना । क्षयतः । समऽओकसा ।
द्यावापृथिवी इति । वरुणाय । सव्रते इति सऽव्रते । घृतऽवत् । पयः । महिषाय । पिन्वतः ॥८॥

[v]परिक्षिता परितो नियमन्त्यौ सर्वत्र व्यापिन्यौ [v]पितरा सर्वेषां मातापितृभूते अत एव [v]पूर्वजावरी पूर्वं जाते [v]समोकसा समाननिवासस्थाने एते द्यावापृथिव्यौ [v]ऋतस्य यज्ञस्य [v]योना योनौ स्थाने [v]क्षयतः आहुत्यधिकरणत्वेन नियमतः। हविर्धानरूपे वा क्षियतः। किंच [v]सव्रते समानकर्मणी ते [v]महिषाय महते पूज्याय वा [v]वरुणाय तं यष्टुम्। उपलक्षणमेतत्। अन्यान् देवानपि [v]घृतवत् क्षरणवत्[3] [v]पयः उदकं [v]पिन्वतः सिञ्चतः। उदकेन ह्यन्नं जायते ॥

पर्जन्यावाता वृषभा पुरीषिणेन्द्रवायू वरुणो मित्रो अर्यमा ।
देवाँ आदित्याँ अदितिं हवामहे ये पार्थिवासो दिव्यासो अप्सु ये ॥ ९ ॥

पर्जन्यावाता । वृषभा । पुरीषिणा । इन्द्रवायू इति । वरुणः । मित्रः । अर्यमा ।
देवान् । आदित्यान् । अदितिम् । हवामहे । ये । पार्थिवासः । दिव्यासः । अप्ऽसु । ये ॥९॥

[v]पर्जन्यावाता पर्जन्यावातौ[4] पर्जन्यावायू[5] [v]वृषभा वृषभौ[6] कामानां सेक्तारौ [v]पुरीषिणा पुरीषिणौ। पुरीषमुदकम्। कर्तृत्वेन तद्वन्तौ तौ [v]इन्द्रवायू वरुणादयश्च एते स्वमहिम्ना सर्वत्र वर्तन्ते। वायोः पर्जन्येनेन्द्रेण च तत्कार्यापेक्षया सहोपादानम्। एतान् [v]आदित्यान् [v]देवान् [v]अदितिं तेषां मातरं च [v]हवामहे अस्मिन् यज्ञे वयमाह्वयामः। किंच [v]ये देवाः [v]पार्थिवासः पार्थिवाः पृथिव्यां भवा ये च दिव्या दिवि जाताः [v]ये च [v]अप्सु अन्तरिक्षे समुत्पन्नाः तानाह्वयामहे[7] ॥

---

१. त–यं व्याप्नुतः; भ१.२.४.६.८–इव व्याप्नुतः; भ७–दिवं व्याप्नुतः। २. त-भ१.९.४.६.८–हविर्भजयंतीत्यर्थः; भ७–हविर्भजंत इत्यर्थः। ३. त-भ–लक्षणवत्। ४. ग-त-भ–' पर्जन्यावातौ ' नास्ति। ५. भ–वायूपर्जन्या। ६. त१.२.३.६.७.८-भ–' वृषभौ ' नास्ति। ७. ग-त१.२.३.७–तानप्याह्वयामहे; भ–ते तथाह्वयामहे।

त्वष्टारं वायुमृभवो य ओहते दैव्या होतारा उषसं स्वस्तये।
बृहस्पतिं वृत्रखादं सुमेधसमिन्द्रियं सोमं धनसा उ ईमहे ॥ १० ॥

त्वष्टारम्। वायुम्। ऋभवः। यः। ओहते। दैव्या। होतारा। उषसम्। स्वस्तये।
बृहस्पतिम्। वृत्रऽखादम्। सुऽमेधसम्। इन्द्रियम्। सोमम्। धनऽसाः। ॐ इति। ईमहे ॥ १०॥

हे ऋभवः। ऋतेन सत्येन भान्तीत्यृभवः। उरु प्रभूतं स्वतेजसा भान्तीति वा। हे मेधाविनः यः सोमः स्वस्तये कल्याणाय युष्माकं मदाय त्वष्टृप्रभृतीन् ओहते। ओहिर्गत्यर्थः। भौवादिकः। आवहति प्राप्नोति। तथा[1] बृहस्पतिं सुमेधसं सुप्रज्ञं वृत्रखादं वृत्रस्यासुरस्य खादितारमिन्द्रं च प्राप्नोति धनसाः धनं संभजमाना वयम् इन्द्रियम् इन्द्रजुष्टं तं सोमम् ईमहे धनं याचामहे। ईमह इति याच्ञाकर्मा। 'ईङ् गतौ'। दैवादिकः। 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥ ॥ १० ॥

ब्रह्म गामश्वं जनयन्त ओषधीर्वनस्पतीन् पृथिवीं पर्वताँ अपः।
सूर्यं दिवि रोहयन्तः सुदानव आर्या व्रता विसृजन्तो अधि क्षमि ॥ ११ ॥

ब्रह्म। गाम्। अश्वम्। जनयन्तः। ओषधीः। वनस्पतीन्। पृथिवीम्। पर्वतान्। अपः।
सूर्यम्। दिवि। रोहयन्तः। सुऽदानवः। आर्या। व्रता। विऽसृजन्तः। अधि। क्षमि ॥ ११॥

ब्रह्म वर्धनसाधनमन्नम्। अन्नेन हि सर्वाः प्रजा वर्धन्ते। गामश्वम् एतत्प्रभृतीन् पशून् तथा ओषधीर्वनस्पतीन् च तथा पृथिवीं विस्तीर्णां भूमिं पर्वतान् शिलोच्चयान् वृष्ट्या जगदापूरकान् मेघान्वा अपः उदकानि अन्तरिक्षं वा एतान् जनयन्तः उत्पादयन्तः किंच दिवि द्युलोके सूर्यम् आदित्यं रोहयन्तः सुदानवः शोभनदानास्तेऽमी देवाः अधि क्षमि। आत इति योगविभागात् (पा. सू. ६. ४. १४०) आकारलोपः। क्षमायां पृथिव्याम् आर्या श्रेष्ठानि कल्याणानि व्रता व्रतानि कर्माणि यागादीनि विसृजन्तः प्रसारयन्तः सर्वत्र वर्तन्ते। तान् वयं धनं याचामह इति शेषः ॥

भुज्युमंहसः पिपृथो निरश्विना श्यावं पुत्रं वध्रिमत्या अजिन्वतम्।
कमद्युवं विमदायोहथुर्युवं विष्णाप्वं विश्वकायाव सृजथः ॥ १२ ॥

भुज्युम्। अंहसः। पिपृथः। निः। अश्विना। श्यावम्। पुत्रम्। वध्रिऽमत्याः। अजिन्वतम्।
कमऽद्युवम्। विऽमदाय। ऊहथुः। युवम्। विष्णाप्वम्। विश्वकाय। अव। सृजथः ॥ १२ ॥

हे अश्विना अश्ववन्तौ सर्वं व्याप्नुवन्तौ वैतन्नामकौ हे देवौ अंहसः उपद्रवकारिणः समुद्रात् भुज्युं तुग्रपुत्रमेतन्नामानं निः पिपृथः निष्पारयथः नितरां रक्षथः। 'पॄ पालनपूरणयोः'। जौहोत्यादिकः[2]। 'निष्टौग्र्यं पारयथः समुद्रात्' (ऋ. सं. १. ११८. ६) इति निगमः। तथा श्यावं[3] हिरण्यहस्तनामानं पुत्रं वध्रिमत्याः एतन्नामिकायाः अजिन्वतम् अप्रीणयतम् अदत्तम्। 'हिरण्यहस्तमश्विना रराणा' (ऋ. सं. १. ११७. २४) इत्यादिनिगमः। तथा

१. ग–गथा; त१.२.३.६.७.८-भ–यथा; त४.५–यद्वा। २. ग-त१.२.३.७-भ–'जौहोत्यादिकः' नास्ति। ३. ग-त५–श्यावं श्यामं; त१.२.३.६.७.८-भ१.२.४.८–श्यावं श्या।

᳚कमद्युवं कामस्य दीपनीं वेनपुत्रीं जायां ᳚विमदाय ऋषये ᳚युवम्[1] ᳚ऊहथुः प्रापयथः। 'युवं रथेन विमदाय' (ऋ. सं. १०. ३९. ७) इति निगमः। तथा ᳚विष्णाप्वम् एतन्नामानं विनष्टं पुत्रं ᳚विश्वकाय ऋषये आनीय ᳚अव ᳚सृजथः अदत्तम्। 'पशुं न नष्टमिव दर्शनाय' (ऋ. सं. १. ११६. २३) इति निगमः॥

पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः।
विश्वे देवासः शृणवन् वचांसि मे सरस्वती सह धीभिः पुरंध्या ॥ १३ ॥

पावीरवी। तन्यतुः। एकऽपात्। अजः। दिवः। धर्ता। सिन्धुः। आपः। समुद्रियः।
विश्वे। देवासः। शृणवन्। वचांसि। मे। सरस्वती। सह। धीभिः। पुरम्ऽध्या ॥ १३ ॥

᳚पावीरवी आयुधवती ᳚तन्यतुः स्तनयित्री वाग्माध्यमिका तथा ᳚दिवः द्युलोकस्य ᳚धर्ता धारयिता ᳚अजः ᳚एकपात् एक एव पद्यते गच्छतीति न जायत इत्येतत्संज्ञको देवः ᳚सिन्धुः च ᳚समुद्रियः। समुद्रमन्तरिक्षम्। तत्र भवाः ᳚आपः च। 'समुद्राभ्राद्घः' इति भवार्थे घप्रत्ययः। ᳚विश्वे देवाश्च ᳚धीभिः कर्मभिर्युक्ताः ᳚पुरंध्या बहुविधया प्रज्ञया सहिता ᳚सरस्वती च ᳚मे मदीयानि ᳚वचांसि वक्तव्यानि स्तोत्राणि ᳚शृणवन् शृण्वन्तु। 'पविः शल्यो भवति यद्विपुनाति कायम्' (निरु. १२.३०) इत्यादि निरुक्तमनुसंधेयम्॥

विश्वे देवाः सह धीभिः पुरंध्या मनोर्यजत्रा अमृता ऋतज्ञाः।
रातिषाचो अभिषाचः स्वर्विदः स्वर्गिरो ब्रह्म सूक्तं जुषेरत ॥ १४ ॥

विश्वे। देवाः। सह। धीभिः। पुरम्ऽध्या। मनोः। यजत्राः। अमृताः। ऋतऽज्ञाः।
रातिऽसाचः। अभिऽसाचः। स्वःऽविदः। स्वः। गिरः। ब्रह्म। सुऽउक्तम्। जुषेरत ॥ १४ ॥

᳚धीभिः कर्मभिः सहिताः ᳚पुरंध्या प्रज्ञानेन युक्ताः ᳚मनोः मनुष्यस्य यज्ञे ᳚यजत्राः यष्टव्याः ᳚अमृताः मरणधर्मरहिताः ᳚ऋतज्ञाः सत्यविदः ᳚रातिषाचः दीयमानं हविः सेवमानाः ᳚अभिषाचः आभिमुख्येन यज्ञं समवयन्तः संगतवन्तः ᳚स्वर्विदः सर्वस्य लम्भकाः ᳚विश्वे सर्वे इन्द्रादयः ᳚देवाः ᳚स्वः सर्वाः ᳚गिरः अस्मदीयाः स्तुतीः ᳚ब्रह्म महच्चान्नं ᳚सूक्तं सुष्ठु वक्तव्यं स्तोमं यद्वा सुष्ठु मन्त्रेण सह दत्तमन्नं ᳚जुषेरत सेवन्ताम्। 'जुषी प्रीतिसेवनयोः'। तौदादिकः। अनुदात्तेत्। लिङि[2] झस्य रन्नादेशाभावश्छन्दसः। 'बहुलं छन्दसि' इति रुडागमः॥

देवान्वसिष्ठो अमृतान् ववन्दे ये विश्वा भुवनाभि प्रतस्थुः।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥

देवान्। वसिष्ठः। अमृतान्। ववन्दे। ये। विश्वा। भुवना। अभि। प्रऽतस्थुः।
ते। नः। रासन्ताम्। उरुऽगायम्। अद्य। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ १५ ॥

᳚वसिष्ठः वसिष्ठकुलजोऽयमृषिः ᳚अमृतान् मरणरहितान् ᳚देवान् ᳚ववन्दे एवमस्तावीत्। ᳚ये देवाः ᳚विश्वा[3] विश्वानि भुवनानि[4] लोकान् ᳚अभि ᳚प्रतस्थुः स्वतेजसाभिभवन्ति। अभितः

१. ग-त-भ–युवां। २. त-भ–लिटि। ३. त-भ–'विश्वा' नास्ति। ४. ग-त१.२.३–भुवना भुवनानि।

प्रतिष्ठन्तीति वा। प्रपूर्वात्तिष्ठतेर्लिटि रूपम्। समासस्वरः। ^v^ते देवाः ^v^अद्य अस्मिन्दिने ^v^नः अस्मभ्यम् ^v^उरुगायं प्रभूतयशस्कमन्नं ^v^रासन्तां प्रयच्छन्तु। हे देवाः ^v^यूयं ^v^स्वस्तिभिः कल्याणीभिरूतिभिः ^v^नः अस्मान् ^v^सदा सर्वदा ^v^पात रक्षत ॥ ॥ ११ ॥

'देवान् हुवे' इति पञ्चदशर्चं षष्ठं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'देवान् हुवे' इत्यनुक्रान्तम्। पृष्ठ्याभिप्लवषडहयोः पञ्चमेऽहनीदं वैश्वदेवनिविद्धानम्। सूत्रितं च—'इहेह व इति चतस्रो देवान् हुव इति वैश्वदेवम्' (आश्व. श्रौ. ७.५) इति ॥

**देवान् हुवे बृहच्छ्रवसः स्वस्तये ज्योतिष्कृतो अध्वरस्य प्रचेतसः।**
**ये वावृधुः प्रतरं विश्ववेदस इन्द्रज्येष्ठासो अमृता ऋतावृधः ॥ १ ॥**

देवान्। हुवे। बृहत्ऽश्रवसः। स्वस्तये। ज्योतिःऽकृतः। अध्वरस्य। प्रऽचेतसः।
ये। ववृधुः। प्रऽतरम्। विश्वऽवेदसः। इन्द्रऽज्येष्ठासः। अमृताः। ऋतऽवृधः ॥ १ ॥

^v^बृहच्छ्रवसः प्रभूतान्नान् ^v^ज्योतिष्कृतः आदित्याख्यस्य तेजसः कर्तॄन् ^v^प्रचेतसः प्रकृष्टज्ञानांस्तान् ^v^देवान् ^v^अध्वरस्य अस्य यज्ञस्य ^v^स्वस्तये अविनाशाय निर्विघ्नेन यज्ञपरिसमाप्तये ^v^हुवे आह्वयामि। ^v^विश्ववेदसः सर्वधनाः ^v^इन्द्रज्येष्ठासः। इन्द्रो ज्येष्ठः प्रधानो येषाम्। इन्द्रनेतृका इत्यर्थः। ^v^अमृताः मरणधर्मरहिताः ^v^ऋतावृधः यज्ञेन प्रवृद्धाः ^v^ये[1] देवाः[1] ^v^प्रतरम् अत्यन्तं ^v^ववृधुः वर्धन्ते ॥

**इन्द्रप्रसूता वरुणप्रशिष्टा ये सूर्यस्य ज्योतिषो भागमानशुः।**
**मरुद्गणे वृजने मन्म धीमहि माघोने यज्ञं जनयन्त सूरयः ॥ २ ॥**

इन्द्रऽप्रसूताः। वरुणऽप्रशिष्टाः। ये। सूर्यस्य। ज्योतिषः। भागम्। आनशुः।
मरुत्ऽगणे। वृजने। मन्म। धीमहि। माघोने। यज्ञम्। जनयन्त। सूरयः ॥ २ ॥

^v^इन्द्रप्रसूताः इन्द्रेण तत्तत्कार्येषु प्रेरिताः ^v^वरुणप्रशिष्टाः वरुणेनानुशिष्टा अनुमोदिताः ^v^ये मरुतः ^v^ज्योतिषः द्योतमानस्य ^v^सूर्यस्य स्वस्वकर्मणि सर्वस्य प्रेरकस्यामुष्यादित्यस्य ^v^भागं भजनीयं लोकम् ^v^आनशुः आनशिरे व्याप्तवन्तः। सूर्यमधिष्ठाय वर्तन्त इत्यर्थः। ^v^वृजने शत्रूणां छेदके ^v^माघोने मघवत इन्द्रस्य संबन्धिनि ^v^मरुद्गणे तेषां मरुतां गणे ^v^मन्म मननीयं स्तोत्रं ^v^धीमहि दध्मः। कुर्मः। किंच ^v^सूरयः प्राज्ञा यजमानास्तन्निमित्तमेव ^v^यज्ञं ^v^जनयन्त जनयन्ति। तेषां हविष्प्रदानाय कुर्वन्ति ॥

**इन्द्रो वसुभिः परि पातु नो गयमादित्यैर्नो अदितिः शर्म यच्छतु।**
**रुद्रो रुद्रेभिर्देवो मृळयाति नस्त्वष्टा नो ग्नाभिः सुवितायं जिन्वतु ॥ ३ ॥**

इन्द्रः। वसुऽभिः। परि। पातु। नः। गयम्। आदित्यैः। नः। अदितिः। शर्म। यच्छतु।
रुद्रः। रुद्रेभिः। देवः। मृळयाति। नः। त्वष्टा। नः। ग्नाभिः। सुवितायं। जिन्वतु ॥ ३ ॥

^v^वसुभिः एतन्नामकैरष्टभिर्देवैः सहितः ^v^इन्द्रः ^v^नः अस्मदीयं ^v^गयम्। गृहनामैतत्। प्राणव्यं गायते शब्द्यतेऽत्रेति वा गयं गृहम्। ^v^परि ^v^पातु परिरक्षतु। तथा ^v^अदितिः देवमाता ^v^आदित्यैः

१. त६.८-भ—देवा ये।

देवैः सह ᵛनः अस्मभ्यं ᵛशर्म सुखं प्रयच्छतु । किंच ᵛदेवः दीप्यमानः ᵛरुद्रो ᵛरुद्रेभिः स्वपुत्रैः मरुद्भिः सह ᵛनः अस्मान् ᵛमृळयाति सुखयतु । 'मृड सुखने'। लेट्याडागमः । अपि च ᵛत्वष्टा प्रजापतिः ᵛग्नाभिः देवपत्नीभिश्छन्दोभिः ᵛसुविताय सुष्ठु प्राप्तव्यायाभ्युदयाय ᵛनः अस्मान् ᵛजिन्वतु प्रीणयतु ॥

अदि॑तिर्द्यावा॑पृथि॒वी ऋ॒तं म॒हदिन्द्रा॒विष्णू॑ म॒रुतः॒ स्व॑र्बृ॒हत् ।
दे॒वाँ आ॑दि॒त्याँ अव॑से हवामहे॒ वसू॑न्रु॒द्रान्त्स॑वि॒तारं॑ सु॒दंस॑सम् ॥ ४ ॥

अदि॑तिः । द्यावा॑पृथि॒वी इति॑ । ऋ॒तम् । म॒हत् । इन्द्रा॒विष्णू॒ इति॑ । म॒रुतः॑ । स्व॑१रिति॑ । बृ॒हत् ।
दे॒वान् । आ॒दि॒त्यान् । अव॑से । ह॒वा॒म॒हे॒ । वसू॑न् । रु॒द्रान् । स॒वि॒तार॑म् । सु॒ऽदंस॑सम् ॥ ४ ॥

ᵛअदितिर्द्यावापृथिवी द्यावापृथिव्यौ ᵛमहत् महान् ᵛऋतं सत्यभूतोऽग्निः ᵛइन्द्राविष्णू ᵛमरुतः च ᵛबृहत् परिवृढः ᵛस्वः आदित्यः एते देवाः सर्वत्र स्वमहिम्ना वर्तन्ते । एतान् ᵛदेवान् आदित्यादीन् ᵛसुदंससं सुकर्माणं ᵛसवितारम् एतन्नामानं च ᵛअवसे रक्षणाय ᵛहवामहे वयमाह्वयामहे ॥

सर॑स्वान्धी॒भिर्वरु॑णो धृ॒तव्र॑तः पू॒षा विष्णु॑र्महि॒मा वा॒युर॒श्विना॑ ।
ब्र॒ह्म॒कृतो॑ अ॒मृता॑ वि॒श्ववे॑दसः॒ शर्म॑ नो यंसन्त्रि॒वरू॑थ॒मंह॑सः ॥ ५ ॥

सर॑स्वान् । धी॒भिः । वरु॑णः । धृ॒तऽव्र॑तः । पू॒षा । विष्णुः॑ । म॒हि॒मा । वा॒युः । अ॒श्विना॑ ।
ब्र॒ह्म॒ऽकृतः॑ । अ॒मृताः॑ । वि॒श्वऽवे॑दसः । शर्म॑ । नः॒ । यं॒स॒न् । त्रि॒ऽवरू॑थम् । अंह॑सः ॥ ५ ॥

ᵛधीभिः प्रज्ञाभिर्युक्तः ᵛसरस्वान् एतन्नामा ᵛधृतव्रतः धृतकर्मा ᵛवरुणः च ᵛपूषा ᵛमहिमा महत्त्वेन युक्तः ᵛविष्णुः च ᵛवायुः ᵛअश्विना अश्विनौ ᵛब्रह्मकृतः कर्मकृतः स्तोतॄणामन्नदातारो वा ᵛविश्ववेदसः सर्वधना व्याप्तज्ञाना वा ᵛअंहसः पापरूपाणां शत्रूणां हन्तारः ᵛअमृताः एते देवाः ᵛनः अस्मभ्यं ᵛत्रिवरूथं त्रिष्कम्भं[1] त्रिकक्ष्यं[2] ᵛशर्म गृहम् । यद्वा । त्रिवरूथम् । द्रोणाधवनीयपूतभृत्संज्ञकानि त्रीणि पात्राणि यत्र त्रियन्ते संभज्यन्ते तद्यज्ञसाधनं गृहम् । ᵛयंसन् प्रयच्छन्तु । यच्छतेर्लेटि सिप्यडागमः ॥     ॥ १२ ॥

वृषा॑ य॒ज्ञो वृष॑णः सन्तु य॒ज्ञिया॒ वृष॑णो दे॒वा वृष॑णो ह॒विष्कृतः॑ ।
वृष॑णा॒ द्यावा॑पृथि॒वी ऋ॒ताव॑री॒ वृषा॑ प॒र्जन्यो॒ वृष॑णो वृष॒स्तुभः॑ ॥ ६ ॥

वृषा॑ । य॒ज्ञः । वृष॑णः । स॒न्तु॒ । य॒ज्ञियाः॑ । वृष॑णः । दे॒वाः । वृष॑णः । ह॒विः॒ऽकृतः॑ ।
वृष॑णा । द्यावा॑पृथि॒वी इति॑ । ऋ॒तव॑री॒ इत्यृ॒तऽव॑री । वृषा॑ । प॒र्जन्यः॑ । वृष॑णः । वृ॒ष॒ऽस्तुभः॑ ॥ ६ ॥

ᵛयज्ञः एषोऽस्मदीयः ᵛवृषा कामानां वर्षितास्तु । तथा ᵛयज्ञियाः यज्ञार्हा देवाश्च ᵛवृषणः ᵛसन्तु । किंच ᵛदेवाः स्तुतिकारिण ऋत्विजः ᵛवृषणः धनवर्षणे कारणानि सन्तु साधुस्तुतिकरणेन । तथा ᵛहविष्कृतः हविषां कर्तारोऽध्वर्य्वादयः ᵛवृषणः अव्यग्रतया मन्त्रसाहित्येन च हविष्प्रदानेन । अपि च ᵛऋतावरी यज्ञवत्यौ ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛवृषणा हविरुत्पादनेन कामानां वर्षयित्र्यौ

१. ग–त्रिःभूमिं; त१.२.३.६.७.८-भ–त्रिःक्रमं । २. त१.२.३.७-मु–त्रिकक्षं; त४.५–त्रिकक्षं ।

भवताम्। तथा ᐯपर्जन्यः इन्द्रः ᐯवृषा अपां वर्षिता भवतु। ᐯवृषस्तुभः वर्षणशीलस्तुतिभिर्देवान् स्तुवन्तः सर्वे ऋत्विजः ᐯवृषणः भवन्तु ॥

अ॒ग्नीषोमा॒ वृष॑णा॒ वाज॑सातये पुरुप्रश॒स्ता वृष॑णा॒ उप॑ ब्रुवे।
यावी॑जि॒रे वृष॑णो देवय॒ज्यया॒ ता नः॒ शर्म॑ त्रि॒वरू॑थं॒ वि यं॑सतः ॥ ७ ॥

अ॒ग्नीषोमा॑। वृष॑णा। वाज॑ऽसातये। पु॒रु॒ऽप्र॒श॒स्ता। वृष॑णौ। उप॑। ब्रु॒वे।
यौ। ई॒जि॒रे। वृष॑णः। दे॒व॒ऽय॒ज्यया॑। ता। नः॒। शर्म॑। त्रि॒ऽवरू॑थम्। वि। यं॒स॒तः॒ ॥ ७ ॥

ᐯवृषणा वर्षणशीलौ ᐯपुरुप्रशस्ता बहुभिः प्रशस्तौ[1] ᐯअग्नीषोमा अग्नीषोमौ ᐯवाजसातये अन्नलाभाय ᐯउप ᐯब्रुवे अहमुपस्तौमि। पुनः ᐯवृषणौ इति आदरार्थम्। ᐯयौ देवौ ᐯवृषणः ऋत्विजः ᐯदेवयज्यया। देवा इज्यन्तेऽत्रेति देवयज्या यज्ञः। 'छन्दसि निष्टर्क्य॰' इति निपातितः। तेन ᐯईजिरे यजन्ते हविर्भिः पूजयन्ति ᐯता तौ प्रसिद्धौ ᐯनः अस्मभ्यं ᐯत्रिवरूथं त्रिष्कम्भं[2] ᐯशर्म गृहं ᐯवि ᐯयंसतः विशेषेण प्रयच्छताम्॥

धृ॒तव्र॑ताः क्ष॒त्रिया॑ यज्ञनि॒ष्कृतो॑ बृहद्दि॒वा अ॑ध्व॒राणा॑मभि॒श्रियः॑।
अ॒ग्निहो॑तार ऋ॒तसापो॑ अ॒द्रुहो॒ऽपो अ॑सृज॒न्ननु॑ वृत्र॒तूर्ये॑ ॥ ८ ॥

धृ॒त॒ऽव्र॑ताः। क्ष॒त्रिया॑ः। य॒ज्ञ॒निः॒ऽकृतः॑। बृ॒ह॒त्ऽदि॒वाः। अ॒ध्व॒राणा॑म्। अ॒भि॒ऽश्रियः॑।
अ॒ग्निऽहो॑तारः। ऋ॒त॒ऽसापः॑। अ॒द्रुहः॑। अ॒पः। अ॒सृ॒ज॒न्। अनु॑। वृ॒त्र॒ऽतूर्ये॑ ॥ ८ ॥

ᐯधृतव्रताः धृतकर्माणो जात्या ᐯक्षत्रियाः। यद्वा। क्षत्रं बलं तदर्हाः। ᐯयज्ञनिष्कृतः। यज्ञं प्रति निर्गमनं यज्ञनिः। तस्य कर्तारः ᐯबृहद्दिवाः महातेजस्काः ᐯअध्वराणां रक्षोभिरहिंसितानां यज्ञानाम् ᐯअभिश्रियः अभिसेवकाः ᐯअग्निहोतारः अग्निर्होता आह्वाता येषां तादृशाः ᐯऋतसापः। 'षप समवाये'। सत्यभाजः अत एव ᐯअद्रुहः केषांचिदप्यद्रोग्धारः। यद्वा। द्रुहेः कर्मण्यौणादिकः क्विप्। कैश्चिदप्यहिंस्याः। एवंप्रभावा देवाः ᐯवृत्रतूर्ये। वृत्रस्तूर्यते हिंस्यतेऽत्रेति वृत्रतूर्यः संग्रामः। तस्मिन् अपामावरकशत्रुवधे ᐯअपः उदकानि ᐯअन्वसृजन् अन्वसारयन्॥

द्यावा॑पृथि॒वी ज॒नय॑न्न॒भि व्र॒ताप॒ ओष॑धीर्व॒निना॑नि य॒ज्ञिया॑।
अ॒न्तरि॑क्षं॒ स्व१॒॑रा प॑प्रुरू॒तये॒ वशं॑ दे॒वास॑स्त॒न्वी॒३॒॑ नि मा॑मृजुः ॥ ९ ॥

द्यावा॑पृथि॒वी इति॑। ज॒नय॑न्। अ॒भि। व्र॒ता। आपः॑। ओष॑धीः। व॒निना॑नि। य॒ज्ञिया॑।
अ॒न्तरि॑क्षम्। स्वः॑। आ। प॒प्रुः॒। ऊ॒तये॑। वश॑म्। दे॒वासः॑। त॒न्वि॑। नि। म॒मृ॒जुः॒ ॥ ९ ॥

ᐯदेवासः देवा इन्द्रादयः ᐯद्यावापृथिवी द्यावापृथिव्यौ ᐯअभि[3] अभिलक्ष्य ᐯव्रता व्रतेन स्वेन कर्मणा ᐯआपः। सुब्व्यत्ययः। अप उदकानि ᐯओषधीः च तथा ᐯयज्ञिया यज्ञार्हान् ᐯवनिनानि वने भवान् पलाशादीन् वृक्षान् ᐯजनयन् उदपादयन्। किंच ते देवाः ᐯस्वः सर्वम् ᐯअन्तरिक्षम् ᐯआ ᐯपप्रुः तेजसापूरयन्ति। किमर्थम्। ᐯऊतये रक्षणाय शत्रुभ्यो बाधाभावाय। अपि च ᐯवशं काम्य-

१. त-भ-मु–प्रस्तुतौ। २. ग–त्रिच्छदिष्कं; त१.२.३.६.७.८-भ–त्रिष्कम्भं; त४–त्रिष्टुभं। ३. ग-त-भ-मु–'अभि' नास्ति।

मानम्। 'वशिरण्योरुपसंख्यानम्' ( पा. सू. ३. ३. ५८. ३ ) इत्यकर्तरि कारकेऽप्। तं यज्ञं तन्वि स्वशरीरे नि ममृजुः नितरां शुद्धमलंकृतं चक्रुः ॥

**धर्तारो दिव ऋभवः सुहस्ता वातापर्जन्या महिषस्य तन्यतोः ।**
**आप ओषधीः प्र तिरन्तु नो गिरो भगो रातिर्वाजिनो यन्तु मे हवम् ॥१०॥**

धर्तारः । दिवः । ऋभवः । सुऽहस्ताः । वातापर्जन्या । महिषस्य । तन्यतोः ।
आपः । ओषधीः । प्र । तिरन्तु । नः । गिरः । भगः । रातिः । वाजिनः । यन्तु । मे । हवम् ॥१०॥

दिवः द्युलोकस्य धर्तारः धारयितारः ऋभवः सत्येन भासमानाः सुहस्ताः शोभनवज्राद्यायुधयुक्तहस्ता देवास्तथा महिषस्य महतः तन्यतोः शब्दस्य। 'तनु विस्तारे'। 'ऋतन्यञ्जि°' इति यतुच्प्रत्ययः। शब्दस्य कर्तारौ वातापर्जन्या वातश्च[1] पर्जन्यश्च[1] तत्कार्याः आपः ओषधीः ओषधयश्च नः अस्माकं गिरः स्तुतीः प्र तिरन्तु प्रवर्धयन्तु। प्रपूर्वस्तिरतिर्वृद्ध्यर्थः। तथा रातिः दाता भगः भजनीयोऽर्यमा च वाजिनः। 'अग्निर्वायुः सूर्यस्ते वै वाजिनः' ( तै. ब्रा. १. ६. ३. ९ ) इति तैत्तिरीयब्राह्मणम्। एते देवाश्च मे मदीयं हवम् आह्वानं यन्तु अभिगच्छन्तु ॥ ॥ १३ ॥

**समुद्रः सिन्धू रजो अन्तरिक्षमज एकपात्तनयित्नुरर्णवः ।**
**अहिर्बुध्न्यः शृणवद्वचांसि मे विश्वे देवास उत सूरयो मम ॥ ११ ॥**

समुद्रः । सिन्धुः । रजः । अन्तरिक्षम् । अजः । एकऽपात् । तनयित्नुः । अर्णवः ।
अहिः । बुध्न्यः । शृणवत् । वचांसि । मे । विश्वे । देवासः । उत । सूरयः । मम ॥ ११ ॥

समुद्रः समुन्दनशीलः स्यन्दमानोदकः सिन्धुः एतन्नामकः अन्तरिक्षं द्यावापृथिव्योरन्तरा मध्ये क्षितमुषितं रजः मध्यमलोकम् अज एकपात्। अजायमान एक एव पद्यते। एतत्संज्ञको देवः अर्णवः उदकवान् तनयित्नुः स्तनयित्नुर्मेघः बुध्न्यः अन्तरिक्षे भवः अहिः एतत्संज्ञक एते देवाः मे मम वचांसि वक्तव्यानि स्तोत्राणि शृणवत् प्रत्येकं शृणोतु। उत अपि च सूरयः प्राज्ञाः विश्वे देवासः देवाः मम स्तोत्राणि शृण्वन्तु ॥

**स्याम वो मनवो देववीतये प्राञ्चं नो यज्ञं प्र णयत साधुया ।**
**आदित्या रुद्रा वसवः सुदानव इमा ब्रह्म शस्यमानानि जिन्वत ॥ १२ ॥**

स्याम । वः । मनवः । देवऽवीतये । प्राञ्चम् । नः । यज्ञम् । प्र । नयत । साधुऽया ।
आदित्याः । रुद्राः । वसवः । सुऽदानवः । इमा । ब्रह्म । शस्यमानानि । जिन्वत ॥ १२ ॥

हे देवाः मनवः मनुष्या वयं वः युष्मदीयाय देववीतये। देवानां वीतिर्भक्षणं यस्मिन् स यज्ञः। तस्मै यज्ञाय स्याम यज्ञकर्तारो भवेम। ततः नः अस्मदीयं यज्ञं साधुया। सुपो याजादेशः। साधु कल्याणं प्राञ्चं प्राचीनं प्र णयत प्रकृष्टाञ्चनं कुरुत। हे आदित्याः हे रुद्राः रुद्रपुत्रा मरुतः हे सुदानवः शोभनदाना हे वसवः इमा इमानि शस्यमानानि ब्रह्म ब्रह्माणि स्तोत्राणि जिन्वत प्रीणयत ॥

---

1. ग-त२.३.६.७.८-भ-पर्जन्यवायू च ।

भसोर्यामेऽच्छावाकातिरिक्तोक्थस्य ‘ दैव्या होतारा ’ इत्येषा परिधानीया । सूत्रितं च—‘ उभा उ नूनं दैव्या होतारा प्रथमा पुरोहितेति परिधानीया ’ ( आश्व. श्रौ. ९. ११ ) इति ॥

दैव्या होतारा प्रथमा पुरोहित ऋतस्य पन्थामन्वेमि साधुया ।
क्षेत्रस्य पतिं प्रतिवेशमीमहे विश्वान्देवाँ अमृताँ अप्रयुच्छतः ॥ १३ ॥

दैव्या । होतारा । प्रथमा । पुरःऽहिता । ऋतस्य । पन्थाम् । अनु । एमि । साधुऽया ।
क्षेत्रस्य । पतिम् । प्रतिऽवेशम् । ईमहे । विश्वान् । देवान् । अमृतान् । अप्रऽयुच्छतः ॥ १३ ॥

^v^प्रथमा[1] मुख्यौ ^v^पुरोहिता पुरोहितौ पुरतो निहितौ ^v^दैव्या देवसंबन्धिनौ ^v^होतारा होतारावेनन्नामानौ अग्न्यादित्यौ ^v^अन्वेमि[2] हविर्भिरनुगच्छामि । ततः ^v^ऋतस्य यज्ञस्य ^v^पन्थां पन्थानं ^v^साधुया कल्याणं विघ्नराहित्येन ^v^अन्वेमि अनुगच्छामि । अनन्तरं ^v^प्रतिवेशं समीपे वर्तमानं ^v^क्षेत्रस्य ^v^पतिं पालयितारमेतन्नामानम् ^v^अमृतान् मरणधर्मरहितान् ^v^अप्रयुच्छतः अप्रमाद्यतः ^v^विश्वान् सर्वान् ^v^देवान् च ^v^ईमहे धनं याचामहे ॥

वसिष्ठासः पितृवद्वाचमक्रत देवाँ ईळाना ऋषिवत्स्वस्तये ।
प्रीताइव ज्ञातयः काममेत्यास्मे देवासोऽव धूनुता वसु ॥ १४ ॥

वसिष्ठासः । पितृऽवत् । वाचम् । अक्रत । देवान् । ईळानाः । ऋषिऽवत् । स्वस्तये ।
प्रीताःऽइव । ज्ञातयः । कामम् । आऽइत्य । अस्मे इति । देवासः । अव । धूनुत । वसु ॥ १४ ॥

^v^ऋषिवत् पूर्वे ऋषय इव ^v^देवान् ^v^ईळानाः स्तुवन्तः ^v^वसिष्ठासः वसिष्ठकुलजाता ऋषयः ^v^पितृवत् वसिष्ठवत् ^v^स्वस्तये अविनाशाय ^v^वाचं स्तोत्रम् ^v^अक्रत कुर्वन्ति । करोतेर्लुङि ‘ मन्त्रे घस॰’ इति च्लेर्लुक् । हे ^v^देवासः देवाः यूयं ^v^कामम् अस्मदभिलापम् ^v^एत्य आगत्य ^v^अस्मे अस्मासु ^v^वसु गवादिलक्षणं धनम् ^v^अव ^v^धूनुत अभिमुखं प्रेरयत । तत्र दृष्टान्तः । ^v^प्रीताइव यथा प्रीताः संहृष्टाः ^v^ज्ञातयः बन्धवः स्वजनस्य धनं प्रेरयन्ति तद्वद्बद्धिर्दानेन स्तुतिकरणेन च बन्धुष्वस्मासु धनं प्रेरयतेति भावः ॥

देवान्वसिष्ठो अमृतान्ववन्दे ये विश्वा भुवनाभि प्रतस्थुः ।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥

देवान् । वसिष्ठः । अमृतान् । ववन्दे । ये । विश्वा । भुवना । अभि । प्रऽतस्थुः ।
ते । नः । रासन्ताम् । उरुऽगायम् । अद्य । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १५ ॥

एषा ऋक् पूर्वमेव व्याख्याथि ॥ ॥ १४ ॥

‘ इमां धियम् ’ इति द्वादशर्चं सप्तमं सूक्तमाङ्गिरसस्यायास्यस्यार्षं त्रैष्टुभम् । इदमुत्तरं च बृहस्पतिदेवताकम् । तथा चानुक्रान्तम्—‘ इमां धियं द्वादशायास्यो बार्हस्पत्यं तु ’ इति । आभि-

१. त१.२.३.४.५.६.८-भ१.२.६.७.८–प्रथमौ; त७-मु–प्रथमा प्रथमौ । २. ग४-त१.२.३.६.७.८-भ–‘ अन्वेमि ’ नास्ति ।

प्लविकेषूक्थ्येषु स्तोमवृद्धौ ब्राह्मणाच्छंसिन इदं सूक्तमावापार्थम्। सूत्रितं च—'इमां धियमिति ब्राह्मणाच्छंसी विष्णोर्नु कमिति सूक्ते' (आश्व. श्रौ. ७. ९) इति॥

इमां धियं सप्तशीर्ष्णीं पिता न ऋतप्रजातां बृहतीमविन्दत्।
तुरीयं स्विज्जनयद्विश्वजन्योऽयास्य उक्थमिन्द्राय शंसन्॥ १॥

इमाम्। धियम्। सप्तऽशीर्ष्णीम्। पिता। नः। ऋतऽप्रजाताम्। बृहतीम्। अविन्दत्।
तुरीयम्। स्वित्। जनयत्। विश्वऽजन्यः। अयास्यः। उक्थम्। इन्द्राय। शंसन्॥ १॥

अत्रेतिहासमाचक्षते। पुरा किलाङ्गिरा नामर्षिर्बृहस्पतिं पुत्रमलभत। स तु देवानां हितोपदेशनायेन्द्रस्य पुरोहितोऽभवत्। कदाचित्तस्य गावः पणिनामकैरसुरैरपहृत्य वलपुरं प्रापय्य त्रिषु स्थानेषु तमसावृतेषु स्थापिता आसन्। अथ तासामन्वेषणायेन्द्रेण[1] प्रेरितो बृहस्पतिर्मरुद्भिः सह तत्रागत्य गवां गुहास्थितानां दर्शनाय सूर्यं जनयित्वा वलनामानमसुरं तदनुचरान् पर्णांश्च हत्वा गा आजहारेति। तदत्र दर्शयिष्यते। तथा चास्या ऋचोऽयमर्थः। ᵛधियं कर्मणां धात्रीं ᵛसप्तशीर्ष्णीं सप्तशिरस्कां सप्तभिः शिरःस्थानीयैरनङ्गप्रधानभूतैर्मरुद्गणैरुपेताम्। यद्वा सप्तच्छन्दोमयशिरस्काम्। ᵛऋतप्रजातां यज्ञार्थमुत्पन्नां ᵛबृहतीं महतीम् ᵛइमां तनुं ᵛनः अस्माकं ᵛपिता अङ्गिराः ᵛअविन्दत् लब्धवान्। कर्मणां ध्यातारं बृहस्पतिं पुत्रमलभतेत्यर्थः। 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् यदङ्गाराः पुनरवशान्ता उददीप्यन्त तद्बृहस्पतिरभवत्' (ऐ. ब्रा. ३. ३४) इति ब्राह्मणम्। तथा ᵛतुरीयं ᵛस्वित्[2] नप्तारमपि ᵛजनयत् अजनयत्[3] ᵛविश्वजन्यः सर्वजनहितः ᵛइन्द्राय ईश्वराय बृहस्पतय इन्द्राय वा ᵛउक्थं स्तोत्रं ᵛशंसन् अयम् ᵛअयास्यः नामर्षिः। पूर्वमेव नोऽस्माकं पिताकार्षीदित्याह॥

ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः।
विप्रं पदमङ्गिरसो दधाना यज्ञस्य धाम प्रथमं मनन्त॥ २॥

ऋतम्। शंसन्तः। ऋजु। दीध्यानाः। दिवः। पुत्रासः। असुरस्य। वीराः।
विप्रम्। पदम्। अङ्गिरसः। दधानाः। यज्ञस्य। धाम। प्रथमम्। मनन्त॥ २॥

ᵛऋतं सत्यभूतं स्तोत्रं ᵛशंसन्तः स्तुवन्तः ᵛऋजु कल्याणं ᵛदीध्यानाः कर्माणि ध्यायन्तः ᵛदिवः दीप्तस्य ᵛअसुरस्य प्रज्ञावतः अग्नेः ᵛअङ्गिरसः पुत्राः[4]। अङ्गिरसो ह्यङ्गारेभ्यो जाता इत्युक्तम्। 'अङ्गारेष्वङ्गिराः' (निरु. ३. १७) इति। ᵛवीराः विक्रान्तप्रज्ञा एतेऽङ्गिरसः ᵛविप्रं प्रज्ञापकं ᵛयज्ञस्य ᵛधाम धारकं[5] ᵛपदं बृहस्पत्याख्यं ᵛदधानाः कर्मणा धारयन्तः सन्तः ᵛप्रथमम् आदित एव ᵛमनन्त स्तुवन्ति। प्रज्ञापकं ह्येतत्स्थानं यद्बृहस्पतिरिति॥

देवसुवां हविःषु बृहस्पतये वाचस्पतय इत्यस्य याज्या 'हंसैरिव' इत्येषा। सूत्रितं च—'बृहस्पते प्रथमं वाचो अग्रं हंसैरिव सखिभिर्वावदद्भिः' (आश्व. श्रौ. ४. ११) इति॥

हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन्।
बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाँ अगायत्॥ ३॥

---

१. ग-त-तेषामन्वेष°। २. ग-त-भ-'स्वित्' नास्ति। ३. ग-त-भ२.४.६.८-अजनयदिति; भ१.७-इति। ४. ग४-पुत्रासः। ५. त-भ-कारकं।

हंसैःऽइव । सखिऽभिः । वावदत्ऽभिः । अश्मन्ऽमयानि । नहना । विऽअस्यन् ।
बृहस्पतिः । अभिऽकनिक्रदत् । गाः । उत । प्र । अस्तौत् । उत् । च । विद्वान् । अगायत् ॥ ३ ॥

ᵛहंसैरिव मधुरवाग्भिः ᵛसखिभिः सखिभूतैः ᵛवावदद्भिः अत्यन्तं शब्दायमानैर्मरुद्भिः ᵛअश्मन्मयानि अश्ममयानि[1] ᵛनहना गवां बन्धकान्यावरकाण्यसुराणां स्थानानि ᵛव्यस्यन् विक्षिपन् शिथिलयन् ᵛअभिकनिक्रदत् आभिमुख्येन शब्दयन् ᵛगाः पणिभिरपहृतान् पशूनाजिहीर्षुः सः ᵛबृहस्पतिः वर्तते । यद्वा । वावदद्भिरत्यन्तं स्तुवद्भिः स्तोतृभिः सह गाः स्तोत्रलक्षणा वाचोऽभिकनिक्रदत् आभिमुख्येनोच्चारयन् । ᵛउत अपि च ᵛप्रास्तौत् । कर्मणि प्रवृत्ते यज्ञस्य सखिभिः सहासीनः साम गातुं प्रस्तौति । ᵛविद्वान् सर्वं जानानः स उद्गाता भूत्वा ᵛउत् ᵛअगायत् देवान् उद्गायति अभिष्टौति ॥

अवो द्वाभ्यां पर एकया गा गुहा तिष्ठन्तीरनृतस्य सेतौ ।
बृहस्पतिस्तमसि ज्योतिरिच्छन्नुदुस्रा आकर्वि हि तिस्र आवः ॥ ४ ॥

अवः । द्वाभ्याम् । परः । एकया । गाः । गुहा । तिष्ठन्तीः । अनृतस्य । सेतौ ।
बृहस्पतिः । तमसि । ज्योतिः । इच्छन् ।
उत् । उस्राः । आ । अकः । वि । हि । तिस्रः । आवरित्यावः ॥ ४ ॥

पणयो गा आहृत्य त्रिषु स्थानेषु निदधुः । ᵛअवः अवस्तात्स्थिताः ᵛअनृतस्य तमसः ᵛसेतौ स्थाने ᵛगुहा गुहायां ᵛतिष्ठन्तीः ᵛगाः ᵛद्वाभ्यां स्थानाभ्यामुदाजत् । ततः ᵛपरः परस्तादवस्थिता गाः ᵛएकया एकेन स्थानेन उदगमयत् । तदेवाह । ᵛबृहस्पतिः तस्मिन् ᵛतमसि ᵛज्योतिः कर्तुम् ᵛइच्छन् तत्र स्थिताः ᵛउस्राः गाः ᵛउत् ᵛआकः उदकार्षीत् । प्रादुर्भूता अकार्षीत् । इत्थमयं ᵛतिस्रः असुराणां द्वारः ᵛवि ᵛआवः विवृतवान् खलु । वृणोतेर्लुङि ' मन्त्रे घस° ' इति च्लेर्लुक् । ' बहुलं छन्दसि ' इत्याडागमः ॥

विभिद्या पुरं शयथेमपाचीं निस्त्रीणि साकमुदधेरकृन्तत् ।
बृहस्पतिरुषसं सूर्यं गामर्कं विवेद स्तनयन्निव द्यौः ॥ ५ ॥

विऽभिद्य । पुरम् । शयथा । ईम् । अपाचीम् । निः । त्रीणि । साकम् । उदऽधेः । अकृन्तत् ।
बृहस्पतिः । उषसम् । सूर्यम् । गाम् । अर्कम् । विवेद । स्तनयन्ऽइव । द्यौः ॥ ५ ॥

सः ᵛबृहस्पतिः ᵛशयथा ᵛउपशयेन[2] स्थित्वा[2] ᵛअपाचीं पराङ्मुखीम् ᵛईम् इमाम् असुरपुरीं ᵛविभिद्य विदार्य ᵛउदधेः बलात् मेघरूपादसुरात् ᵛसाकं सह युगपत् ᵛत्रीणि ᵛउषसं ᵛसूर्यं ᵛगाम् एतानि त्रीणि ᵛनिः ᵛअकृन्तत् निर्गतमकार्षीत् । तमसावृतेषु स्थानेषूषःकालं ततः पश्चाद्दिनं सूर्यं च जनयित्वा पशून्निरगमयदित्यर्थः । सोऽयम् ᵛअर्कम् अर्चनीयं मन्त्रं सूर्यं ᵛविवेद प्रज्ञापयति । कथमिव । यथा ᵛस्तनयन् शब्दं कुर्वन् ᵛद्यौः ᵛइव स्थितः ॥

---

१. त१.२.३.६.७.८-भ–' अश्ममयानि ' नास्ति । २. ग-त–उपशयनेन स्थित्या; भ–उप उपशयनेन स्थित्या; मु–उपशयनेन स्थित्वा ।

इन्द्रो वलं रक्षितारं दुघानां करेणेव वि चकर्ता रवेण ।
स्वेदाञ्जिभिराशिरमिच्छमानोऽरोदयत्पणिमा गा अमुष्णात् ॥ ६ ॥

इन्द्रः । वलम् । रक्षितारम् । दुघानाम् । करेणऽइव । वि । चकर्त । रवेण ।
स्वेदाञ्जिऽभिः । आऽशिरम् । इच्छमानः । अरोदयत् । पणिम् । आ । गाः । अमुष्णात् ॥ ६ ॥

इन्द्रः ईश्वरो बृहस्पतिः दुघानां क्षीरस्य दोग्ध्रीणां गवां रक्षितारं वलम् असुरं करेणेव सायुधकर[1] इव स्थितेन रवेण शब्देन वलं वि चकर्त विचिच्छेद । किंच स्वेदाञ्जिभिः[2] । स्वेदाञ्जयो मरुतः क्षरदाभरणाः । तैः सह आशिरम् आश्रयणं संयोगम् इच्छमानः कामयमानः सः पणिं वलस्यानुचरमेतन्नामानमसुरम् अरोदयत् व्यनाशयत् । ततस्तेनापहृताः गाः अमुष्णात् आजहार ॥    ॥ १५ ॥

स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं वि धनसैरदर्दः ।
ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट् ॥ ७ ॥

सः । ईम् । सत्येभिः । सखिऽभिः । शुचत्ऽभिः । गोऽधायसम् । वि । धनऽसैः । अदर्दरित्यदर्दः ।
ब्रह्मणः । पतिः । वृषऽभिः । वराहैः । घर्मऽस्वेदेभिः । द्रविणम् । वि । आनट् ॥ ७ ॥

सः बृहस्पतिः सत्येभिः यथार्थबलैः सखिभिः सखिभूतैः शुचद्भिः दीप्यमानैः धनसैः धनस्य संभक्तृभिर्मरुद्भिः सह गोधायसं गवां धारकम् ईम् एनं वलं वि अदर्दः व्यदारयत् । ततः ब्रह्मणः ऋग्यजुःसामलक्षणस्य स्तोत्रस्य पतिः अधिपतिः सः वृषभिः वर्षितृभिः वराहैः वराहारैर्वरस्य वरणीयस्योदकस्याहर्तृभिः घर्मस्वेदेभिः दीप्तागमनैः । यद्वा क्षरदुदकैः । अथवा घर्मो यज्ञः । तं प्रति गन्तृभिः मरुद्भिः द्रविणं गोलक्षणं धनं व्यानट् व्याप्नोत् ॥

ते सत्येन मनसा गोपतिं गा इयानास इषणयन्त धीभिः ।
बृहस्पतिर्मिथोअवद्यपेभिरुदुस्रिया असृजत स्वयुग्भिः ॥ ८ ॥

ते । सत्येन । मनसा । गोऽपतिम् । गाः । इयानासः । इषणयन्त । धीभिः ।
बृहस्पतिः । मिथःऽअवद्यपेभिः । उत् । उस्रियाः । असृजत । स्वयुक्ऽभिः ॥ ८ ॥

गाः पणिभिरपहृतान् पशून् इयानासः अभिगच्छन्तः सत्येन यथार्थभूतेन मनसा युक्ताः ते मरुतः धीभिः आत्मीयैः कर्मभिरेतं बृहस्पतिं गोपतिं तदाहरणेन गवां स्वामिनं कुर्म इति इषणयन्त ऐच्छन् । बृहस्पतिः च मिथोअवद्यपेभिः । पातेः कर्मण्यौणादिकः कप्रत्ययः । अवद्यरूपादसुराद्रक्षितव्या गावो येषु मरुत्सु परस्परं संगच्छन्त इति ते तथोक्ताः । तैः स्वयुग्भिः स्वयमेव युक्तैर्मरुद्भिः उस्रियाः गाः उत् असृजत पर्वतान्निरगमयत ॥

तं वर्धयन्तो मतिभिः शिवाभिः सिंहमिव नानदतं सधस्थे ।
बृहस्पतिं वृषणं शूरसातौ भरेभरे अनु मदेम जिष्णुम् ॥ ९ ॥

१. त-भ—साधुकर । २. ग-त१.२.३.६.७.८-भ—' स्वेदाञ्जिभिः ' नास्ति ।

तम् । वर्धयन्तः । मतिऽभिः । शिवाभिः । सिंहम्ऽइव । नानदतम् । सधऽस्थे ।
बृहस्पतिम् । वृषभम् । शूरऽसातौ । भरेऽभरे । अनु । मदेम । जिष्णुम् ॥ ९ ॥

$^{\vee}$सधस्थे । सह तिष्ठन्त्यत्र देवा इति सधस्थमन्तरिक्षम् । तस्मिन् $^{\vee}$सिंहमिव $^{\vee}$नानदतं पुनःपुनः शब्दायमानं $^{\vee}$वृषभं कामानां वर्षितारं $^{\vee}$जिष्णुं जयशीलं $^{\vee}$तं $^{\vee}$बृहस्पतिं $^{\vee}$वर्धयन्तः मरुतो वयं $^{\vee}$शूरसातौ शूरैः संभजनीये $^{\vee}$भरेभरे संग्रामे $^{\vee}$शिवाभिः कल्याणीभिः स्तुतिभिः $^{\vee}$अनु $^{\vee}$मदेम अनुष्टुमः । स्तोतृपरत्वेन वा योजनीयम् ॥

यदा वाजमसनद्विश्वरूपमा द्यामरुक्षदुत्तराणि सद्म ।
बृहस्पतिं वृषणं वर्धयन्तो नाना सन्तो बिभ्रतो ज्योतिरासा ॥ १० ॥

यदा । वाजम् । असनत् । विश्वऽरूपम् । आ । द्याम् । अरुक्षत् । उत्ऽतराणि । सद्म ।
बृहस्पतिम् । वृषणम् । वर्धयन्तः । नाना । सन्तः । बिभ्रतः । ज्योतिः । आसा ॥ १० ॥

स बृहस्पतिः $^{\vee}$यदा यस्मिन् काले $^{\vee}$विश्वरूपं नानारूपं $^{\vee}$वाजं गोलक्षणमन्नम् $^{\vee}$असनत् भजते यदा वाहनपशुकः सन् $^{\vee}$द्यां द्युलोकम् $^{\vee}$अरुक्षत् आरोहति अथवा $^{\vee}$उत्तराणि वा $^{\vee}$सद्म स्थानान्यारोहति । रुहेर्लुङि च्लेः ' शल इगुपधादनिटः क्सः ' ( पा. सू. ३. १. ४५ )। तदानीं $^{\vee}$वृषणं वर्षितारं $^{\vee}$बृहस्पतिम् $^{\vee}$आसा आस्येन देवाः $^{\vee}$वर्धयन्तः भवन्ति । तथा $^{\vee}$नाना दिक्षु $^{\vee}$सन्तः भवन्तः $^{\vee}$ज्योतिः $^{\vee}$बिभ्रतः धारयन्तो देवाश्च स्तुवन्ति ॥

सत्यामाशिषं कृणुता वयोधै कीरिं चिद्ध्यवथ स्वेभिरेवैः ।
पश्चा मृधो अप भवन्तु विश्वास्तद्रोदसी शृणुतं विश्वमिन्वे ॥ ११ ॥

सत्याम् । आऽशिषम् । कृणुत । वयःऽधै । कीरिम् । चित् । हि । अवथ । स्वेभिः । एवैः ।
पश्चा । मृधः । अप । भवन्तु । विश्वाः ।
तत् । रोदसी इति । शृणुतम् । विश्वमिन्वे इति विश्वम्ऽइन्वे ॥ ११ ॥

हे बृहस्पतिप्रभृतयो देवाः $^{\vee}$वयोधै अन्नस्य निधानायास्मदीयाम् $^{\vee}$आशिषं स्तुतिं $^{\vee}$सत्यां यथार्थां $^{\vee}$कृणुत कुरुत । तथा यूयं $^{\vee}$स्वेभिः आत्मीयैः $^{\vee}$एवैः गमनैः $^{\vee}$कीरिं स्तोतारं माम् $^{\vee}$अवथ रक्षथ । हिरवधारणे । $^{\vee}$पश्चा[1] । "पश्चा च च्छन्दसि ' ( पा. सू. ५. ३. ३३ ) इति निपातितः । पश्चात् $^{\vee}$विश्वाः सर्वाः $^{\vee}$मृधः हिंसित्र्यः $^{\vee}$अप $^{\vee}$भवन्तु नश्यन्तु । $^{\vee}$तत् इदमस्माभिरुक्तं वचनं हे $^{\vee}$विश्वमिन्वे विश्वस्य प्रीणयित्र्यौ हे $^{\vee}$रोदसी द्यावापृथिव्यौ $^{\vee}$शृणुतम् ॥

इन्द्रो मह्ना महतो अर्णवस्य वि मूर्धानमभिनदर्बुदस्य ।
अहन्नहिमरिणात्सप्त सिन्धून् देवैर्द्यावापृथिवी प्रावतं नः ॥ १२ ॥

इन्द्रः । मह्ना । महतः । अर्णवस्य । वि । मूर्धानम् । अभिनत् । अर्बुदस्य ।
अहन् । अहिम् । अरिणात् । सप्त । सिन्धून् । देवैः । द्यावापृथिवी इति । प्र । अवतम् । नः ॥ १२ ॥

---

१. त१.२.३.६.७.८-म१.२.४.७-मु-पश्च ।

इन्द्रः ईश्वरः मह्ना महत्त्वेन युक्तो बृहस्पतिः महतो अर्णवस्य उदकवतः अर्बुदस्य अम्बुदस्य मेघस्य मूर्धानं शिरः वि अभिनत् व्यच्छिनत्। तदुच्यते। अहिम् अहन्तव्यमपामावरकं शत्रुम् अहन् अवधीत्। ततः सप्त सर्पणशीलाः सिन्धून् स्यन्दमाना अपः। यद्वा। सप्तसंख्याका गङ्गाद्या नदीः। अरिणात् समुद्रं प्रत्यगमयत्। अस्रावयद्वा। अथ प्रत्यक्षकृतः। हे द्यावापृथिव्यौ देवैः सह नः अस्मान् प्रावतं प्ररक्षतम्॥ ॥ १६ ॥

'उदप्रुतः' इति द्वादशर्चमष्टमं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'उदप्रुतः' इत्यनुक्रान्तम्। उक्थे ब्राह्मणाच्छंसिन एतत्सूक्तम्। सूत्रितं च—'प्र मंहिष्ठायोदप्रुतोऽच्छा म इन्द्रम्' (आश्व.श्रौ.६.१) इति॥

उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः।
गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अनावन्॥ १ ॥

उदऽप्रुतः। न। वयः। रक्षमाणाः। वावदतः। अभ्रियस्यऽइव। घोषाः।
गिरिऽभ्रजः। न। ऊर्मयः। मदन्तः। बृहस्पतिम्। अभि। अर्काः। अनावन्॥ १ ॥

उदप्रुतः उदकस्योद्गमयितारः वयः पक्षिणः पक्वात्सस्यात् रक्षमाणाः कृषीवलाः। न उपमार्थे। यथा शब्दायन्ते। यथा च वावदतः पुनःपुनः शब्दायमानस्य अभ्रियस्येव अभ्रसमूहस्य घोषाः शब्दा यथा भवन्ति। किंच गिरिभ्रजः गिरिभ्यो मेघेभ्यो भ्रष्टा निर्गताः ऊर्मयः अप्समूहा यथा मदन्तः शब्दायमाना भवन्ति। तथा अर्काः अर्चकाः स्तोतारः बृहस्पतिम् अभि अनावन् अभिष्टुवन्ति। 'नु स्तवने'॥

सं गोभिराङ्गिरसो नक्षमाणो भग इवेदर्यमणं निनाय।
जने मित्रो न दंपती अनक्ति बृहस्पते वाजयाशूँरिवाजौ॥ २ ॥

सम्। गोभिः। आङ्गिरसः। नक्षमाणः। भगःऽइव। इत्। अर्यमणम्। निनाय।
जने। मित्रः। न। दंपती इति दम्ऽपती। अनक्ति।
बृहस्पते। वाजय। आशून्ऽइव। आजौ॥ २ ॥

आङ्गिरसः अङ्गिरसः पुत्रः नक्षमाणः स्वतेजसा व्याप्नुवन् भगइवेन्[1] भगो देव इव स्थितो बृहस्पतिरेव अर्यमणं स्तुतेः प्रेरकं स्तोतारं गोभिः सह सं॰निनाय संनयति संयोजयति। मित्रो न मित्रो यथा जने जनपदे स्वरश्मीन् संयोजयति तद्वत् दंपती जायापती अनक्ति संगमयति। स्वसामर्थ्येन तत्र स्थापयतीत्यर्थः। हे बृहस्पते आशून् व्याप्तान् स्वरश्मीन् वाजय तव स्तोतृषु गमय स्थापय। आशूनिव[2] व्याप्तानश्वान् आजौ संग्रामे योद्धारो यथा संगमयन्ति तद्वत्॥

साध्वर्या अतिथिनीरिषिराः स्पार्हाः सुवर्णा अनवद्यरूपाः।
बृहस्पतिः पर्वतेभ्यो वितूर्या निर्गा ऊपे यवमिव स्थिविभ्यः॥ ३ ॥

साधुऽअर्याः। अतिथिनीः। इषिराः। स्पार्हाः। सुऽवर्णाः। अनवद्यऽरूपाः।
बृहस्पतिः। पर्वतेभ्यः। विऽतूर्य। निः। गाः। ऊपे। यवम्ऽइव। स्थिविऽभ्यः॥ ३ ॥

१. ग-त-भ-मु—भगइव। २. ग-त-भ-मु—यथा आशूनिव।

ᵛसाध्वर्याः साधूनां कल्याणानां पयसां नेत्रीः ᵛअतिथिनीः सततं गच्छन्तीः ᵛइषिराः एषणीयाः ᵛस्पार्हाः[1] स्पृहणीयाः[1] ᵛसुवर्णाः शोभनशुक्लादिवर्णोपेताः ᵛअनवद्यरूपाः प्रशस्यरूपा एताः ᵛगाः ᵛपर्वतेभ्यः वलसंबन्धिभ्यः ᵛवितूर्य निर्गमय्य ᵛऊपे देवसमीपे निर्वपति प्रापयति। तत्र दृष्टान्तः। ᵛयवमिव। यथा यवं ᵛस्थिविभ्यः कुसीदेभ्य आदाय निर्वपति। 'डुवप् बीजसंताने'। लिटि रूपम्। यद्वा। साधुनयनादिगुणयुक्ता गा अपः पर्वतेभ्यो मेघेभ्य आहृत्य सर्वत्र वर्षति ॥

आप्रुषायन्मधुन ऋतस्य योनिमवक्षिपन्नर्क उल्कामिव द्योः।
बृहस्पतिरुद्धरन्नश्मनो गा भूम्या उद्नेव वि त्वचं बिभेद ॥ ४ ॥

आऽप्रुषायन्। मधुना। ऋतस्य। योनिम्। अवऽक्षिपन्। अर्कः। उल्काम्ऽइव। द्योः।
बृहस्पतिः। उद्धरन्। अश्मनः। गाः। भूम्याः। उद्नाऽइव। वि। त्वचम्। बिभेद ॥४॥

ᵛमधुना[2] उदकेन ᵛआप्रुषायन् पृथिवीमाभिमुख्येन सिञ्चन्। 'प्रुष प्लुष स्नेहनसेचनपूरणेषु'। व्यत्ययेन विकरणस्य शायजादेशः। ᵛऋतस्य उदकस्य ᵛयोनिं मेघम् ᵛअवक्षिपन् वृष्ट्यर्थमवकिरन् ᵛअर्कः अर्चनीयः ᵛबृहस्पतिः ᵛद्योः द्युलोकात् ᵛउल्कामिव उल्कां यथोद्धरति तद्वत् ᵛअश्मनः शिलोच्चयाद्वलेनाधिष्ठितात् ᵛगाः पणिभिरपहृतान् पशून् ᵛउद्धरन् ऊर्ध्वं गमयन् ᵛभूम्याः ᵛत्वचं तेषां शफैः ᵛवि ᵛबिभेद विभिन्नामकार्षीत्। सर्वत्र गा वितता अकार्षीदित्यर्थः। तत्र दृष्टान्तः। ᵛउद्नेव। यथा वृष्ट्युदकेन पर्जन्यो भूमित्वचं विभिनत्ति तद्वत् ॥

अप ज्योतिषा तमो अन्तरिक्षादुद्नः शीपालमिव वात आजत्।
बृहस्पतिरनुमृश्या वलस्याभ्रमिव वात आ चक्र आ गाः ॥ ५ ॥

अप। ज्योतिषा। तमः। अन्तरिक्षात्। उद्नः। शीपालम्ऽइव। वातः। आजत्।
बृहस्पतिः। अनुऽमृश्य। वलस्य। अभ्रम्ऽइव। वातः। आ। चक्रे। आ। गाः ॥ ५ ॥

सः ᵛबृहस्पतिः ᵛज्योतिषा तमसावृते पर्वतविवरे कृतेन सूर्येण ᵛअन्तरिक्षात् ᵛतमः ᵛअप ᵛआजत् अपागमयत। तत्र दृष्टान्तः। ᵛउद्नः ᵛशीपालमिव। यथोदकात् ᵛवातः वायुः शीपालं शैवालमपगमयति तद्वत्। ततः सोऽयम् ᵛअनुमृश्य अत्र गावस्तिष्ठन्तीति विचार्य निश्चित्य ᵛवलस्य स्वभूतस्य पर्वतस्यान्तर्गताः ᵛगाः ᵛआ ᵛचक्रे समन्तादकार्षीत्। कथमिव। ᵛअभ्रमिव। यथा वायुरन्तरिक्षस्थितमभ्रं मेघमाकिरति तद्वत्।

यदा वलस्य पीयतो जसुं भेद्बृहस्पतिरग्नितपोभिरर्कैः।
दद्भिर्न जिह्वा परिविष्टमाददाविर्निधीँरकृणोदुस्रियाणाम् ॥ ६ ॥

यदा। वलस्य। पीयतः। जसुम्। भेत्। बृहस्पतिः। अग्नितपःऽभिः। अर्कैः।
दत्ऽभिः। न। जिह्वा। परिऽविष्टम्। आदत्।
आविः। निऽधीन्। अकृणोत्। उस्रियाणाम् ॥ ६ ॥

---

१. ग४-त४-प्राप्तव्या अत एव स्पार्हाः ( त४-अस्पार्हाः ) सर्वैः स्पृहणीयाः; इतरलिखितपुस्तकेषु 'स्पार्हाः स्पृहणीयाः' नास्ति। २. ग४-त-भ१.२.४.६.८-अधुना।

ᵛपीयतः। पीयतिर्हिंसाकर्मा। हिंसकस्य ᵛवलस्य ᵛजसुम् आयुधं ᵛयदा यस्मिन्काले ᵛभेत् भिनत्ति। केन साधनेन। ᵛअग्नितपोभिः अग्निवत्तपनशीलैः ᵛअर्कैः अर्चनीयै रश्मिभिः अपि वा मन्त्रैर्भिनत्ति। किंच ᵛदद्भिः। 'पद्दन्नोमास्°' इत्यादिना दन्तशब्दस्य दद्भावः। यथा दन्तैः परिविष्टं भक्ष्यं ᵛजिह्वा भक्षयति तद्वत् सः ᵛपरिविष्टं पर्वते पणिभिः परिवृतं वलनामानं यदा ᵛआदत् अभक्षयत् अवधीत् तदानीं तैरपहृतानाम् ᵛउस्रियाणां गवां ᵛनिधीन् ᵛआविः ᵛअकृणोत् आविर्भूतमकरोत्॥　　॥ १७ ॥

बृह॒स्पति॒रम॑त॒ हि त्यदा॑सां॒ नाम॑ स्व॒रीणा॒ं सद॑ने॒ गुहा॒ यत्।
आ॒ण्डेव॑ भि॒त्त्वा श॑कु॒नस्य॒ गर्भ॒मुदु॒स्रियाः॒ पर्व॑तस्य॒ त्मना॑जत् ॥ ७ ॥

बृ॒ह॒स्पतिः॑। अम॑त। हि। त्यत्। आ॒सा॒म्। नाम॑। स्व॒रीणा॑म्। सद॑ने। गुहा॑। यत्।
आ॒ण्डाऽइ॑व। भि॒त्त्वा। श॒कु॒नस्य॑। गर्भ॑म्। उत्। उ॒स्रियाः॑। पर्व॑तस्य। त्मना॑। आ॒ज॒त् ॥७॥

ᵛबृहस्पतिः ᵛगुहा गुहायां ᵛसदने स्थाने ᵛस्वरीणां शब्दायमानानाम् ᵛआसां गवां ᵛत्यत् तत् प्रसिद्धं ᵛनाम नामधेयं ᵛयत् यदा ᵛअमत ᵛहि ज्ञातवान् खलु। 'मनु अवबोधने'। लुङि 'तनादिभ्यस्तथासोः' (पा. सू. २. ४. ७९) इति सिचो लुक्। तदानीं ᵛपर्वतस्य[1] अन्तःस्थिताः[1] ᵛउस्रियाः गाः ᵛत्मना आत्मनैवासहायेन पर्वतं ᵛभित्त्वा ᵛउत् ᵛआजत् उदगमयत्। तत्र दृष्टान्तः। ᵛआण्डेव यथा ᵛशकुनस्य पक्षिण आण्डानि भित्त्वा तत्र स्थितं ᵛगर्भम् उद्गमयति तद्वत्॥

अश्मापि॑नद्धं॒ मधु॒ पर्य॑पश्य॒न्मत्स्यं॒ न दीन॑ उ॒दनि॑ क्षि॒यन्त॑म्।
निष्टज्ज॑भार चम॒सं न वृ॒क्षाद्बृह॒स्पति॑र्वि॒र॒वेणा॑ वि॒कृत्य॑ ॥ ८ ॥

अश्ना॑। अपि॑ऽनद्धम्। मधु॑। परि॑। अ॒प॒श्य॒त्। मत्स्य॑म्। न। दी॒ने। उ॒दनि॑। क्षि॒यन्त॑म्।
निः। तत्। ज॒भा॒र॒। च॒म॒सम्। न। वृ॒क्षात्। बृ॒ह॒स्पतिः॑। वि॒ऽर॒वेण॑। वि॒ऽकृत्य॑ ॥ ८ ॥

ᵛबृहस्पतिः ᵛअश्ना अश्मना व्यापया शिलया ᵛअपिनद्धं पिहितं ᵛमधु गोलक्षणं ᵛपर्यपश्यत् परितोऽद्राक्षीत्। तत्र दृष्टान्तः। ᵛमत्स्यं ᵛन यथा ᵛदीने शुष्के ᵛउदनि। उदकशब्दस्योदन्नादेशः। उदके ᵛक्षियन्तं निवसन्तं मत्स्यं यथा पश्यति तद्वत्। दृष्ट्वा च ᵛतत् गोलक्षणं मधु ᵛविरवेण विविधेन शब्देन ᵛविकृत्य वलं छित्वा ᵛनिः ᵛजभार पर्वतान्निर्जहार। कथमिव। ᵛचमसं ᵛन। चमन्ति भक्षयन्त्यत्रेति चमसः सोमपात्रम्। तं यथा ᵛवृक्षात् निर्हरति तद्वत्। हरतेर्लिटि रूपम्। हृग्रहोर्भः॥

सो॒षाम॑विन्द॒त्स स्वः१॒ः सो अ॒ग्निं सो अ॒र्केण॒ वि ब॑बाधे॒ तमां॑सि।
बृह॒स्पति॒र्गोव॑पुषो व॒लस्य॒ निर्म॒ज्जान॒ं न पर्व॑णो जभार ॥ ९ ॥

सः। उ॒षाम्। अ॒वि॒न्द॒त्। सः। स्वः१रिति॑ स्वः॑। सः। अ॒ग्निम्।
सः। अ॒र्केण॑। वि। ब॒बा॒धे॒। तमां॑सि।
बृ॒ह॒स्पतिः॑। गोऽव॑पुषः। व॒लस्य॑। निः। म॒ज्जान॑म्। न। पर्व॑णः। ज॒भा॒र॒ ॥ ९ ॥

1. भ–पर्वतस्थिताः।

^v^सः ^v^बृहस्पतिः तत्र पर्वतविवरे गवां दर्शनाय ^v^उषां उषसम् ^v^अविन्दत् अलभत। ^v^सः एव ^v^स्वः आदित्यं ^v^सः ^v^अग्निं लब्ध्वा ^v^अर्केण अर्चनीयेन तेजसा ^v^तमांसि ^v^वि ^v^बबाधे अत्यर्थं बाधितवान्। ततः सः ^v^गोवपुषः गोरूपशरीरस्य पशुभिः परिवृतस्य ^v^वलस्य ^v^पर्वणः पर्वतात् ता गाः ^v^निः ^v^जभार बलेन निर्जहार। वलादाहरणे दृष्टान्तः। ^v^मज्जानं ^v^न ^v^पर्वणः[1]। अस्थ्नो मज्जानं यथा अतिक्लेशेन निर्हरन्ति तद्वत्॥

हिमेव पर्णा मुषिता वनानि बृहस्पतिनाकृपयद्वलो गाः।
अनानुकृत्यमपुनश्चकार यात्सूर्यामासा मिथ उच्चरातः॥ १०॥

हिमाऽइव। पर्णा। मुषिता। वनानि। बृहस्पतिना। अकृपयत्। वलः। गाः।
अननुऽकृत्यम्। अपुनरिति। चकार। यात्। सूर्यामासा। मिथः। उत्ऽचरातः॥ १०॥

^v^हिमेव यथा हिमेन ^v^पर्णा पर्णानि पद्मपत्राणि ^v^मुषिता मुषितानि भवन्ति तद्वद्वलेन ^v^वनानि वननीयानि गोधनानि मुषितान्यभूवन्। अथ गवामन्वेषणाय ^v^बृहस्पतिना आगतेन हेतुना ^v^वलः ^v^अकृपयत् अस्मै ता मुषिताः ^v^गाः प्रायच्छत्। तत्र ^v^अननुकृत्यम् अननुकरणीयम् ^v^अपुनः कर्तव्यं च तत्कर्म ^v^चकार। यथा तत्पश्चात्करणीयं न भवति यथा पुनरकरणीयं तथाकार्षी-दित्यर्थः। किं तदिति आह। ^v^सूर्यामासा सूर्याचन्द्रमसौ ^v^मिथः परस्परमहोरात्रयोः ^v^उच्चरातः उच्चरत इति ^v^यात्[2] तच्चकार। यादिति दीर्घश्छान्दसः॥

अभि श्यावं न कृशनेभिरश्वं नक्षत्रेभिः पितरो द्यामपिंशन्।
रात्र्यां तमो अदधुर्ज्योतिरहन्बृहस्पतिर्भिनदद्रिं विदद्गाः॥ ११॥

अभि। श्यावम्। न। कृशनेभिः। अश्वम्। नक्षत्रेभिः। पितरः। द्याम्। अपिंशन्।
रात्र्याम्। तमः। अदधुः। ज्योतिः। अहन्। बृहस्पतिः। भिनत्। अद्रिम्। विदत्। गाः॥ ११॥

^v^पितरः पालयितारो देवाः ^v^द्यां द्युलोकं ^v^नक्षत्रेभिः अश्विन्यादिभिः[3] ^v^अभि ^v^अपिंशन् अभितोऽदीपयन्। 'पिश अवयवे'। अयं दीपनायां वर्तते। तत्र दृष्टान्तः। ^v^श्यावं ^v^न यथा श्याववर्णम् ^v^अश्वं ^v^कृशनेभिः सौवर्णैराभरणैरलंकुर्वन्ति तद्वत्। तथा ^v^रात्र्यां ^v^तमः निहितवन्तः। किंच ^v^अहन् अह्नि ^v^ज्योतिः आदित्याख्यम् ^v^अदधुः। अदधुरित्युत्तरवाक्येन संबन्धः करणीयः। अन्यथा स्वरो न घटेत[4]। अत्र तु वाक्यभेदादनिघातः। यदा ^v^बृहस्पतिः ^v^अद्रिं वलेनाधिष्ठितं शिलोच्चयं ^v^भिनत् अभिनत् विभिद्य च तत्र स्थितान् ^v^गाः पशून् ^v^विदत् अविदत् अलभत। विदेर्लुङि लृदित्वादङ्। तदा देवा एवमकार्षुरित्यर्थः॥

इदमकर्म नमो अभ्रियाय यः पूर्वीरन्वानोनवीति।
बृहस्पतिः स हि गोभिः सो अश्वैः स वीरेभिः स नृभिर्नो वयो धात्॥१२॥

इदम्। अकर्म। नमः। अभ्रियाय। यः। पूर्वीः। अनु। आऽनोनवीति।
बृहस्पतिः। सः। हि। गोभिः। सः। अश्वैः।
सः। वीरेभिः। सः। नृऽभिः। नः। वयः। धात्॥ १२॥

---

१. ग-त-भ—यथा पर्वणः। २. ग४-भ७-यत्; त-भ१.२.४.६.८-मु—यावत्। ३. ग४-त१.२.३.७—आदित्यादिभिः; भ—आदिभिः। ४. ग-त-भ-मु—घटते।

अभ्रियाय अभ्रेषु भवायान्तरिक्षाय मध्यमाय बृहस्पतये इदम् उक्तं नमः स्तोत्रम् अकर्म वयमकार्ष्म। यः बृहस्पतिः पूर्वीः बह्वीर्ऋचः अनु अनुक्रमेण आनोनवीति अत्यर्थमाभिमुख्येन ब्रवीति सः बृहस्पतिः एव गोभिः अश्वैः च युक्तं वीरेभिः पुत्रैः नृभिः भृत्यादिभिश्च सहितं वयः अन्नं नः अस्मभ्यं स्तोतृभ्यः धात् दधातु प्रयच्छतु। तच्छब्दावृत्तिः आदरार्था ॥    ॥ १८ ॥    ॥ ५ ॥

षष्ठेऽनुवाके षोडश सूक्तानि। ‘ भद्राः ’ इति द्वादशर्चं प्रथमं सूक्तं वध्र्यश्वपुत्रस्य सुमित्रस्यार्षम्। आदितो द्वे जगत्यावथ दश त्रिष्टुभः। अग्निर्देवता। तथा चानुक्रम्यते—‘ भद्राः सुमित्रो वाध्र्यश्व आग्नेयं द्विजगत्यादि ’ इति। गतो विनियोगः ॥

भद्रा अग्नेर्वध्र्यश्वस्य संदृशो वामी प्रणीतिः सुरणा उपेतयः।
यदीं सुमित्रा विशो अग्र इन्धते घृतेनाहुतो जरते दविद्युतत् ॥ १ ॥

भद्राः। अग्नेः। वध्रिऽअश्वस्य। सम्ऽदृशः। वामी। प्रऽनीतिः। सुऽरणाः। उपऽइतयः।
यत्। ईम्। सुऽमित्राः। विशः। अग्रे। इन्धते। घृतेन। आऽहुतः। जरते। दविद्युतत् ॥ १ ॥

अग्नेः वक्ष्यमाणगुणस्य संदृशः संदृष्टयः वध्र्यश्वस्य एतन्नामकस्य मम पितुः भद्राः कल्याणकारिण्यो भवन्तु। यद्वा। वध्र्यश्वस्य वध्र्यश्वकुले जातस्याग्नेः संदृष्टयो भजनीया भवन्तु[1]। प्रणीतिः तस्य प्रणयनं वामी कल्याणं[2] च भवतु। तथा उपेतयः यज्ञं प्रत्युपगतयः सुरणाः शोभनरमणा भवन्तु[3]। सुमित्राः एतन्नामधेयाः विशः अमी मनुष्याः ईम् एनमग्निम् अग्रे प्रथमं यत् यदा इन्धते हविर्भिर्दीपयन्ति तदा घृतेनाहुतः हविर्भिश्च दविद्युतत् भृशं द्योतमानः। ‘ दाधर्ति दर्धर्ति° ’ इत्यादिना निपातितः। सोऽग्निः जरते अस्माभिः स्तूयते ॥

घृतमग्नेर्वध्र्यश्वस्य वर्धनं घृतमन्नं घृतम्वस्य मेदनम्।
घृतेनाहुत उर्विया वि पप्रथे सूर्य इव रोचते सर्पिरासुतिः ॥ २ ॥

घृतम्। अग्नेः। वध्रिऽअश्वस्य। वर्धनम्। घृतम्। अन्नम्। घृतम्। ऊँ इति। अस्य। मेदनम्।
घृतेन। आऽहुतः। उर्विया। वि। पप्रथे। सूर्यःऽइव। रोचते। सर्पिःऽआसुतिः ॥ २ ॥

वध्र्यश्वस्य संबन्धिनः अग्नेः घृतं दीयमानं हविः वर्धनं भवतु। तथा घृतमन्नम् अदनीयं भवतु। तथा अस्य अग्नेः घृतमु घृतमेव मेदनं पुष्टिकरं भवतु। येनाग्निः पुष्टो भवति तन्मेदनम्। तेन घृतेनाहुतः अग्निः उर्विया उर्वत्यन्तं वि पप्रथे स्वतेजसा विप्रथितो भवति। तथा सर्पिरासुतिः सर्पिरासूयते यस्मिन्निति सोऽग्निः सूर्य इव रोचते दीप्यते ॥

यत्ते मनुर्यदनीकं सुमित्रः समीधे अग्ने तदिदं नवीयः।
स रेवच्छोच स गिरो जुषस्व स वाजं दर्षि स इह श्रवो धाः ॥ ३ ॥

यत्। ते। मनुः। यत्। अनीकम्। सुऽमित्रः। सम्ऽईधे। अग्ने। तत्। इदम्। नवीयः।
सः। रेवत्। शोच। सः। गिरः। जुषस्व। सः। वाजम्। दर्षि। सः। इह। श्रवः। धाः ॥ ३ ॥

---

१. ग-भवंती; त१.२.३.७-भ-भवंति; त४.५.६-भवतु।  २. ग-त-भ-मु-कल्याणी।  ३. ग-भवंती; त१.२.३.७-भ-मु-भवंति; त४.५.६-भवतु।

हे अग्ने ते त्वदीयं यत् अनीकं रश्मिसंघं मनुः एतन्नामकः यथा समीधे हविर्भिः सम्यग्दीपयति सुमित्रः एतन्नामकोऽहं समीधे सम्यग्दीपयामि । 'ञिइन्धी दीप्तौ' । लिटि 'इन्धिभवतिभ्यां च' इति किरवान्नलोपः । तदिदं सोऽयं रश्मिसंघः नवीयः नवतरो भवतु । सः त्वं रेवत् धनयुक्तं यथा भवति तथा शोच प्रज्वल । सः एव त्वं गिरः अस्मदीयाः स्तुतीः जुषस्व सेवस्व । सः त्वं वाजं शत्रुबलं दर्षि विदारय । तथा इह मयि श्रवः अन्नं धाः धेहि ॥

यं त्वा पूर्वमीळितो वध्र्यश्वः समीधे अग्ने स इदं जुषस्व ।
स नः स्तिपा उत भवा तनूपा दात्रं रक्षस्व यदिदं ते अस्मे ॥ ४ ॥

यम् । त्वा । पूर्वम् । ईळितः । वध्रिऽअश्वः । सम्ऽईधे । अग्ने । सः । इदम् । जुषस्व ।
सः । नः । स्तिऽपाः । उत । भव । तनूऽपाः ।
दात्रम् । रक्षस्व । यत् । इदम् । ते । अस्मे इति ॥ ४ ॥

ईळितः । व्यत्ययेन कर्तरि क्तः । स्तोता वध्र्यश्वः मम पिता पूर्वं पूर्वस्मिन्काले संजातं यं त्वा त्वां समीधे हविर्भिः सम्यगदीपयत्[1] सः त्वमिदानीं मया क्रियमाणम् इदं स्तोत्रं जुषस्व सेवस्व । यद्वा । वध्र्यश्वस्तस्य पुत्रोऽहं सम्यग्दीपितवानस्मि । सः त्वं नः अस्माकं स्तिपाः । पृषोदरादिः । पस्त्यं गृहम् । तस्य रक्षकः भव । यद्वा । उपस्थितान् ज्योतिष्टोमादीन्यागान् पालयतीति स्तिपाः । अस्मदीयानां यज्ञानां पालयिता भव । उत अपि च तनूपाः स्वाङ्गानां रक्षको भव । किंच दात्रं तद्धनं रक्षस्व यदिदं धनं ते तव स्वभूतेषु अस्मे अस्मासु तिष्ठति ॥

भवा द्युम्नी वाध्र्यश्वोत गोपा मा त्वा तारीदभिमातिर्जनानाम् ।
शूरइव धृष्णुश्च्यवनः सुमित्रः प्र नु वोचं वाध्र्यश्वस्य नाम ॥ ५ ॥

भव । द्युम्नी । वाध्रिऽअश्व । उत । गोपाः । मा । त्वा । तारीत् । अभिऽमातिः । जनानाम् ।
शूरःऽइव । धृष्णुः । च्यवनः । सुऽमित्रः । प्र । नु । वोचम् । वाध्रिऽअश्वस्य । नाम ॥ ५ ॥

हे वाध्र्यश्व वध्र्यश्वकुले जाताग्ने द्युम्नी । 'द्युम्नं द्योततेर्यशो वान्नं वा' । तद्वान् भव । उत अपि च गोपाः गोपायिता भव । किंच त्वा त्वाम् कश्चिदपि मा तारीत् मा हिनस्तु । यतः जनानां शत्रूणाम् अभिमातिः अभिभवनशीलमानयुक्तोऽभिभविता[2] भवसि । किंच शूरइव बलवानिव धृष्णुः शत्रुधर्षणशीलः तस्मात् च्यवनः तेषां च्यावयिता भवसि । अथ वाध्र्यश्वस्य अग्नेस्तव नाम अग्निर्जातवेदा वैश्वानर इत्यादीनि नामानि नु क्षिप्रं सुमित्रः अहं प्र वोचं प्रब्रवीमि । तस्मान्मेऽन्नादियुक्तो भव ॥

समज्र्या पर्वत्या३ वसूनि दासा वृत्राण्यार्या जिगेथ ।
शूरइव धृष्णुश्च्यवनो जनानां त्वमग्ने पृतनायूँरभि ष्याः ॥ ६ ॥

सम् । अज्र्या । पर्वत्या । वसूनि । दासा । वृत्राणि । आर्या । जिगेथ ।
शूरःऽइव । धृष्णुः । च्यवनः । जनानाम् । त्वम् । अग्ने । पृतनाऽयून् । अभि । स्याः ॥ ६ ॥

---

१. ग४-त१.२.६.७.८-भ४.६.७-सम्यग्दीपयत; त४.५-सम्यग्दीपयन्, भ१-सम्यग्दीपति ।
२. ग-शीलमनोयुक्तो° ।

हे ᵛअग्ने ᵛअज्या । अजन्ति गच्छन्तीत्यज्रयो जनाः । तेभ्यो हितानि ᵛपर्वत्या पर्वतभवानि ᵛवसूनि गवादिलक्षणानि ᵛसं ᵛजिगेथ शत्रुभ्यः संजितवानसि । तथा ᵛआर्या बलवद्भिः कृतान् ᵛदासा दासैरसुरैः कृतान् ᵛवृत्राणि उपद्रवान् ᵛसं ᵛजिगेथ । तान् हतवानसीत्यर्थः । 'जि जये'। लिटि रूपम् । ᵛशूरइव ᵛधृष्णुः ᵛजनानां ᵛच्यवनः ᵛत्वं ᵛपृतनायून् संग्रामकामान् ᵛअभि ᵛख्याः अभिभव । पृतनायूनित्यत्र लोपाभावश्छान्दसः । 'अश्वाघस्यात्' इत्यात्वं विधीयमानमस्मादपि व्यत्ययेन भवति ॥  ॥ १९ ॥

दीर्घतन्तुर्बृहदुक्षायमग्निः सहस्रस्तरीः शतनीथ ऋभ्वा ।
द्युमान् द्युमत्सु नृभिर्मृज्यमानः सुमित्रेषु दीदयो देवयत्सु ॥ ७ ॥

दीर्घऽतन्तुः । बृहत्ऽउक्षा । अयम् । अग्निः । सहस्रऽस्तरीः । शतऽनीथः । ऋभ्वा ।
द्युऽमान् । द्युमत्ऽसु । नृऽभिः । मृज्यमानः । सुऽमित्रेषु । दीदयः । देवयत्ऽसु ॥ ७ ॥

ᵛदीर्घतन्तुः । यैर्यज्ञं संतनोति ते तन्तवः स्तोत्रादयः । प्रभूतस्तुतिमान् ᵛबृहदुक्षा । उक्षा सेचको रश्मिः । प्रभूतरश्मियुक्तः ᵛसहस्रस्तरीः हवीरूपबह्वाच्छादनः ᵛशतनीथः आहवनीयादिद्वारेण बहुविधनयनः ᵛऋभ्वा महान् ᵛद्युमत्सु दीप्तिमत्सु मध्ये ᵛद्युमान् अतिशयेन दीप्तिमान् ᵛअयमग्निः ᵛनृभिः कर्मनेतृभिर्ऋत्विग्भिः ᵛमृज्यमानः अलंक्रियमाणो भवति । 'मृजू शौचालंकारयोः'। स त्वं ᵛदेवयत्सु देवान् कामयमानेषु ᵛसुमित्रेषु अस्मासु ᵛदीदयः दीप्यस्व । दीदयतिर्दीप्तिकर्मा ॥

त्वे धेनुः सुदुघा जातवेदोऽसश्चतेव समना सबर्धुक् ।
त्वं नृभिर्दक्षिणावद्भिरग्ने सुमित्रेभिरिध्यसे देवयद्भिः ॥ ८ ॥

त्वे इति । धेनुः । सुऽदुघा । जातऽवेदः । असश्चताऽइव । समना । सबःऽधुक् ।
त्वम् । नृऽभिः । दक्षिणावत्ऽभिः । अग्ने । सुऽमित्रेभिः । इध्यसे । देवयत्ऽभिः ॥ ८ ॥

हे ᵛजातवेदः जातप्रज्ञ ᵛअग्ने ᵛत्वे त्वयि ᵛसुदुघा सुष्ठु पयसो दोग्ध्री काचिद्धोमसाधनभूता ᵛधेनुः अस्ति । कीदृशी । ᵛअसश्चतेव संगवर्जितेनेवैकत्र स्थित्यभावात्कुत्रापि न संयुक्तेनादित्येन ᵛसमना संगता ᵛसबर्धुक् अमृतं दुहाना गोरूपा माध्यमिका वाग्वैद्युते त्वय्यस्तीति भावः । तादृशः ᵛत्वं ᵛनृभिः कर्मनेतृभिः ᵛदक्षिणावद्भिः ऋत्विग्भ्यो देयत्वेन तद्वद्भिः ᵛदेवयद्भिः देवकामैः ᵛसुमित्रेभिः अस्माभिः ᵛइध्यसे हविर्भिर्दीप्यसे ॥

देवाश्चित्ते अमृता जातवेदो महिमानं वाध्र्यश्व प्र वोचन् ।
यत्संपृच्छं मानुषीर्विश आयन्त्वं नृभिरजयस्त्वावृधेभिः ॥ ९ ॥

देवाः । चित् । ते । अमृताः । जातऽवेदः । महिमानम् । वाध्रिऽअश्व । प्र । वोचन् ।
यत् । सम्ऽपृच्छम् । मानुषीः । विशः । आयन् । त्वम् । नृऽभिः । अजयः । त्वाऽवृधेभिः ॥ ९ ॥

हे ᵛजातवेदः हे ᵛवाध्र्यश्व अग्ने ᵛते तव ᵛमहिमानम् ᵛअमृताः ᵛदेवाश्चित् देवा अपि ᵛप्र ᵛवोचन् प्रब्रुवन्ति । ᵛयत् यदा ᵛमानुषीः मनुष्यसंबन्धिन्यः ᵛविशः प्रजाः ᵛसंपृच्छं देवैः सह को वा असुरान् हन्तीत्येवमादिकं संप्रश्नम् ᵛआयन् प्राप्तवन्तः तदा ᵛत्वं ᵛनृभिः सर्वस्य नेतृभिः ᵛत्वावृधेभिः त्वया वर्धितैर्देवैः सह कर्मविघ्नकारिणस्तान् ᵛअजयः जितवानसि ॥

पितेवं पुत्रमबिभरुपस्थे त्वामग्ने वध्र्यश्वः सपर्यन् ।
जुषाणो अस्य समिधं यविष्ठोत पूर्वाँ अवनोर्व्राधतश्चित् ॥ १० ॥

पिताऽइव । पुत्रम् । अबिभः । उपऽस्थे । त्वाम् । अग्ने । वध्रिऽअश्वः । सपर्यन् ।
जुषाणः । अस्य । सम्ऽइधम् । यविष्ठ । उत । पूर्वान् । अवनोः । व्राधतः । चित् ॥ १० ॥

हे अग्ने त्वाम् उपस्थे पृथिव्या उपस्थाने उत्तरवेद्यां सपर्यन् । परिचर्याकर्मा । परिचरन् वध्र्यश्वः मम पिता अबिभः धृतवान् हविर्भिः पोषितवान्वा । कथमिव । पितेव यथा पिता समीपे पुत्रं स्थापयति पोषयति वा । 'डुभृञ् धारणपोषणयोः' । लङि[1] तिपि गुणे कृते हल्ङ्यादिना तिपो लोपः । हे यविष्ठ युवतमाग्ने उत अपि च अस्य वध्र्यश्वस्य पितुर्वा मम वा समिधं जुषाणः सेवमानः सन् पूर्वान् प्रत्नान् व्राधतश्चित् बाधकानपि शत्रून् अवनोः अवधीः । वनति-र्हिंसायां भौवादिकः । व्यत्ययेनोप्रत्ययः ॥

शश्वदग्निर्वध्र्यश्वस्य शत्रून्नृभिर्जिगाय सुतसोमवद्भिः ।
समनं चिददहश्चित्रभानोऽव व्राधन्तमभिनद्वृधश्चित् ॥ ११ ॥

शश्वत् । अग्निः । वध्रिऽअश्वस्य । शत्रून् । नृऽभिः । जिगाय । सुतसोमवत्ऽभिः ।
समनम् । चित् । अदहः । चित्रभानो इति चित्रऽभानो ।
अव । व्राधन्तम् । अभिनत् । वृधः । चित् ॥ ११ ॥

सः अग्निः वध्र्यश्वस्य सुतसोमवद्भिः अभिषुतसोमैः । अनुवादको मत्वर्थीयः । तैः नृभिः ऋत्विग्भिः शश्वत् सर्वदा शत्रून् जिगाय जितवान् । अथ प्रत्यक्षः । हे चित्रभानो नानातेजस्क चायनीयदीप्तिमन् वाग्ने त्वं समनं चित् । समनमिति संग्रामनाम । तमपि अदहः स्वतेजोभिः । अथ तत्र स्तोता वाध्र्यश्वः वृधश्चित् स्वयं वृद्धो भवन् व्राधन्तं वर्धमानं हिंसकं वा अव अभिनत् अवाङ्मुखं कृत्वा अच्छिनत् । यद्वा त्वमेव तमवाभिनत् । अवाङ्मुखं कृत्वाभिनः अच्छिनः । प्रथम-मध्यमयोः समानमेतद्रूपम् ॥

अयमग्निर्वध्र्यश्वस्य वृत्रहा सनकात्प्रेद्धो नमसोपवाक्यः ।
स नो अजामीँरुत वा विजामीनभि तिष्ठ शर्धतो वाध्र्यश्व ॥ १२ ॥

अयम् । अग्निः । वध्रिऽअश्वस्य । वृत्रऽहा । सनकात् । प्रऽइद्धः । नमसा । उपऽवाक्यः ।
सः । नः । अजामीन् । उत । वा । विऽजामीन् । अभि । तिष्ठ । शर्धतः । वाध्रिऽअश्व ॥ १२ ॥

वृत्रहा शत्रूणां हन्ता अयमग्निः सनकात् चिरादारभ्य वध्र्यश्वस्य हविषा प्रेद्धः प्रकर्षेण दीपितो भवति । तथा तस्य नमसा नमस्कारेण सह उपवाक्यः उपस्तोतव्यो भवति । हे वाध्र्यश्व वध्र्यश्वकुले मथनेन समुत्पन्नाग्ने सः त्वं नः अस्माकम् अजामीन् अज्ञातीन् शत्रून् उत वा अपि वा शर्धतः हिंसतः विजामीन् विविधान् ज्ञातीनपि अभि तिष्ठ अभिभव ॥ ॥ २० ॥

१. ग४-त-भ१.४.६.७.८-मु-लिङि ।

'इमां मे' इत्येकादशर्चं द्वितीयं सूक्तं वाध्र्यश्वस्य सुमित्रस्यार्षं त्रैष्टुभम्। तनूनपाद्वर्जिताः सनराशंसाः समिदादयः प्रत्यृचं देवताः। तथा चानुक्रान्तम्—'इमां म एकादशाप्रम्' इति। वध्र्यश्वगोत्राणां पशाविदमाप्रीसूक्तम्। सूत्रितं च—'समिद्धो अद्येति सर्वेषां यथर्षि वा' (आश्व. श्रौ. ३. २) इति॥

इमां मे अग्ने समिधं जुषस्वेळस्पदे प्रति हर्या घृताचीम्।
वर्ष्मन् पृथिव्याः सुदिनत्वे अह्नामूर्ध्वो भव सुक्रतो देवयज्या॥ १॥

इमाम्। मे। अग्ने। सम्ऽइधम्। जुषस्व। इळः। पदे। प्रति। हर्य। घृताचीम्।
वर्ष्मन्। पृथिव्याः। सुदिनऽत्वे। अह्नाम्। ऊर्ध्वः। भव। सुक्रतो इति सुऽक्रतो। देवऽयज्या॥ १॥

हे अग्ने इळस्पदे इळायास्पदे। 'एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः' (ऐ. ब्रा. १. २८) इति ब्राह्मणम्। उत्तरवेद्याम् इमां मे मदीयां समिधं जुषस्व सेवस्व। तथा घृताचीं घृतमञ्चन्तीं स्रुचं प्रति हर्य प्रतिकामयस्व। किंच हे सुक्रतो सुप्रज्ञ पृथिव्याः वर्ष्मन् वर्ष्मणि समुच्छ्रिते पूर्वोक्ते देशे अह्नां सुदिनत्वे तन्निमित्तं देवयज्या देवयागेन हेतुना ऊर्ध्वः ज्वालाभिरुन्नतः भव॥

आ देवानामग्रयावेह यातु नराशंसो विश्वरूपेभिरश्वैः।
ऋतस्य पथा नमसा मियेधो देवेभ्यो देवतमः सुषूदत्॥ २॥

आ। देवानाम्। अग्रऽयावा। इह। यातु। नराशंसः। विश्वऽरूपेभिः। अश्वैः।
ऋतस्य। पथा। नमसा। मियेधः। देवेभ्यः। देवऽतमः। सुसूदत्॥ २॥

देवानामग्रयावा अग्रे गन्ता नराशंसः। 'उभे वनस्पत्यादिषु युगपत्' इति पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम्। नरैः शंसनीय एतन्नामकोऽग्निः विश्वरूपेभिः नानारूपैः अश्वैः रोहिदाख्यैः सह इह अस्मिन् यज्ञे आ यातु। आगत्य च मियेधः मेध्यो यज्ञहितः स्तुतियोग्यो वा देवतमः देवानां मुख्यः सोऽग्निः हविर्नयनयोग्येन ऋतस्य यज्ञस्य पथा मार्गेण नमसा स्तोत्रेण सह देवेभ्यः इन्द्रादिभ्यः सुषूदत् हविः प्रेरयतु॥

शश्वत्तममीळते दूत्याय हविष्मन्तो मनुष्यासो अग्निम्।
वहिष्ठैरश्वैः सुवृता रथेना देवान् वक्षि नि षदेह होता॥ ३॥

शश्वत्ऽतमम्। ईळते। दूत्याय। हविष्मन्तः। मनुष्यासः। अग्निम्।
। अश्वैः। सुऽवृता। रथेन। आ। देवान्। वक्षि। नि। सद। इह। होता॥ ३॥

शश्वत्तमम् अत्यन्तं नित्यम् अग्निं हविष्मन्तः संभृतहविष्काः मनुष्यासः मनुष्याः यजमानाः दूत्याय। 'दूतस्य भागकर्मणी' इति यत्प्रत्ययः। दूतकर्मणे हविर्वहनलक्षणाय तन्निमित्तम् ईळते स्तुवन्ति। स त्वमेवं स्तुतः वहिष्ठैः वोढृतमैः अश्वैः सुवृता सुवर्तनेन रथेन च सह देवान् इन्द्रादीन् आ वक्षि अस्मदीयं यज्ञं प्रत्यावह प्रापय। ततस्त्वं होता भवन् इह अस्मिन् यज्ञे नि षद निषीद॥

वि प्र॑थतां दे॒वजु॑ष्टं तिर॒श्चा दी॒र्घं द्रा॒घ्मा सु॑र॒भि भू॑त्व॒स्मे ।
अहे॑ळता॒ मन॑सा देव ब॒र्हि॒रिन्द्र॑ज्येष्ठाँ उश॒तो य॑क्षि दे॒वान् ॥ ४ ॥

वि । प्र॒थ॒ता॒म् । दे॒व॒ऽजु॑ष्टम् । ति॒र॒श्चा । दी॒र्घम् । द्रा॒घ्मा । सु॒र॒भि । भू॒तु॒ । अ॒स्मे इति॑ ।
अहे॑ळता । मन॑सा । दे॒व॒ । ब॒र्हिः॒ । इन्द्र॑ऽज्येष्ठान् । उ॒श॒तः । य॒क्षि॒ । दे॒वान् ॥ ४ ॥

हे बर्हिर्नामकाग्ने ^देवजुष्टं देवैः सेवितं ^तिरश्चा तिरश्चीनं तिर्यगञ्चनमिदं बर्हिः ^वि ^प्रथतां विशेषेण विस्तृतं भवतु । तथा ^दीर्घं चेदं ^द्राघ्मा द्राघिम्ना । दीर्घशब्दस्येमनिचि 'प्रियस्थिर०' इत्यादिना द्राघिरादेशः[1] । अकारस्यैकारो वर्णव्यापत्त्या । पश्चादल्लोपः । द्राघिम्ना युक्तं भवतु । ^अस्मे अस्मदीयं बर्हिः ^सुरभि सोमादिहविर्निधानेन सुगन्धं ^भूतु भवतु । हे ^देव द्योतमान हे ^बर्हिः एतन्नामकाग्ने ^अहेळता । हेळ इति क्रोधनाम । अक्रुध्यता ^मनसा ^उशतः हवींषि कामयमानान् ^इन्द्रज्येष्ठान् इन्द्रप्रधानान् ^देवान् ^यक्षि यज पूजय ॥

दि॒वो वा॒ सानु॑ स्पृ॒शता॒ वरी॑यः पृथि॒व्या वा॒ मात्र॑या॒ वि श्र॑यध्वम् ।
उ॒श॒तीर्द्वा॑रो महि॒ना म॒हद्भि॑र्दे॒वं रथं॑ रथ॒युर्धा॑रयध्वम् ॥ ५ ॥

दि॒वः । वा॒ । सानु॑ । स्पृ॒शत॑ । वरी॑यः । पृ॒थि॒व्या । वा॒ । मात्र॑या । वि॒ । श्र॒य॒ध्व॒म् ।
उ॒श॒तीः । द्वा॒रः॒ । म॒हि॒ना । म॒ह॒त्ऽभिः॑ । दे॒वम् । रथ॑म् । र॒थ॒ऽयुः । धा॒र॒य॒ध्व॒म् ॥ ५ ॥

हे ^द्वारः एतन्नामधेया देव्यः यूयं ^दिवो ^वा[2] । वाशब्दश्चार्थे । दिवश्च ^सानु समुच्छ्रितं ^वरीयः उरुतरं स्थानं ^स्पृशत उन्नता भवतेत्यर्थः । 'चवायोगे प्रथमा' इति न निघातः । ^पृथिव्याः[3] च[3] यावती मात्रास्ति तावत्या ^मात्रया ^वि ^श्रयध्वं विस्तृता भवत । ^उशतीः देवान् कामयमाना यूयं ^रथयुः । 'सुपां सुलुक्' इति जसः सुः । रथकामाः सत्यः ^महिना महिम्ना ^महद्भिः देवैरधिष्ठितम् अत एव ^देवं द्योतमानं ^रथं रमणसाधनं ^धारयध्वं धारयत ॥ ॥२१॥

दे॒वी दि॒वो दु॑हि॒तरा॑ सु॒शि॒ल्पे उ॒षासा॒नक्ता॑ सदतां॒ नि योनौ॑ ।
आ वां॑ दे॒वास॑ उश॒ती उ॒शन्त॑ उ॒रौ सी॑दन्तु सुभगे उ॒पस्थे॑ ॥ ६ ॥

दे॒वी इति॑ । दि॒वः । दु॒हि॒तरा॑ । सु॒शि॒ल्पे इति॑ सु॒ऽशि॒ल्पे । उ॒षसा॒नक्ता॑ । स॒द॒ता॒म् । नि । योनौ॑ ।
आ । वा॒म् । दे॒वासः॑ । उ॒श॒ती इति॑ । उ॒शन्तः॑ । उ॒रौ । सी॒द॒न्तु॒ । सु॒भ॒गे इति॑ सु॒ऽभ॒गे । उ॒प॒ऽस्थे॑ ॥ ६ ॥

^देवी द्योतमाने ^दिवः द्युलोकस्य ^दुहितरा दुहितरौ ^सुशिल्पे शोभनरूपे ^उषासानक्ता उषाश्च नक्तं चाहोरात्रौ ^योनौ यज्ञस्य स्थाने ^नि ^सदताम् निषीदताम् । हे ^उशती उशत्यौ कामयमाने हे ^सुभगे शोभनधने हे देव्यौ ^वां युवयोः ^उरौ विस्तीर्णे ^उपस्थे समीपस्थे स्थाने ^उशन्तः हवींषि कामयमानाः ^देवासः देवाः ^आ ^सीदन्तु उपविशन्तु ॥

ऊ॒र्ध्वो ग्रावा॑ बृ॒हद॒ग्निः समि॑द्धः प्रि॒या धामा॒न्यदि॑तेरु॒पस्थे॑ ।
पु॒रोहि॑ताव॒त्विजा॑ य॒ज्ञे अ॒स्मिन् वि॒दुष्ट॑रा॒ द्रवि॑ण॒मा य॑जेथाम् ॥ ७ ॥

---

१. ग-त–द्राघि इत्यादेशः । २. भ–'वा' नास्ति । ३. ग-त-मु–किंच पृथिव्याश्च ।

ऊर्ध्वः । ग्रावा । बृहत् । अग्निः । सम्ऽइद्धः । प्रिया । धामानि । अदितेः । उपऽस्थे ।
पुरःऽहितौ । ऋत्विजा । यज्ञे । अस्मिन् । विदुःऽतरा । द्रविणम् । आ । यजेथाम् ॥ ७ ॥

ग्रावा सोमाभिषवाय यदा ऊर्ध्वः उन्नतो भवति यदा च बृहत् महान् अग्निः समिद्धः हविर्भिः सम्यग्दीप्तो भवति तथा प्रियाणि देवानां सोमादिहविष्प्रदानेन प्रीणयितॄणि धामानि हविषां धारकाणि यज्ञपात्राणि अदितेः पृथिव्याः उपस्थे यज्ञसदने यदासादितानि भवन्ति तदानीं हे ऋत्विजौ दैव्यौ पुरोहितौ[1] होतारौ[1] पुरतो निहितौ विदुष्टरा । छान्दसं संप्रसारणम् । विद्वत्तमौ युवाम् अस्मिन् यज्ञे द्रविणं धनम् आ यजेथाम् । यजिर्दानार्थः । अस्मभ्यमाभिमुख्येन प्रयच्छतम् ॥

तिस्रो देवीर्बर्हिरिदं वरीय आ सीदत चकृमा वः स्योनम् ।
मनुष्वद्यज्ञं सुधिता हवींषीळा देवी घृतपदी जुषन्त ॥ ८ ॥

तिस्रः । देवीः । बर्हिः । इदम् । वरीयः । आ । सीदत । चकृम । वः । स्योनम् ।
मनुष्वत् । यज्ञम् । सुऽधिता । हवींषि । इळा । देवी । घृतऽपदी । जुषन्त ॥ ८ ॥

हे तिस्रो देवीः इळाद्यास्तिस्रो देव्यः वरीयः उरुतरम् इदं बर्हिः आ सीदत । 'कालाध्वनोः०' इति द्वितीया । अत्यन्तं तस्मिन्निषीदत । कुत एतत् तत्राह । वः युष्मदर्थं स्योनं विस्तीर्णमिदं चकृम वयं कृतवन्तः । वाक्यभेदादनिघातः । इळा एतन्नामिका देवी द्योतमाना सरस्वती घृतपदी दीप्तपदोपेता भारती च एताः मनुष्वत् मनोर्यज्ञे यथा हवींष्यसेवन्त तद्वदस्मदीयं यज्ञं सुधिता सुष्ठु निहितानि हवींषि च जुषन्त सेवन्ताम् ॥

त्वाष्ट्रस्य पशोर्वपायागस्य 'देव त्वष्टः' इति याज्या । सूत्रितं च—'देव त्वष्टर्यद्ध चारुत्वमानट् पिशङ्गरूपः सुभरो वयोधाः' ( आश्व. श्रौ. ३. ८ ) इति ॥

देव त्वष्टर्यद्ध चारुत्वमानड्यदङ्गिरसामभवः सचाभूः ।
स देवानां पाथ उप प्र विद्वानुशन्यक्षि द्रविणोदः सुरत्नः ॥ ९ ॥

देव । त्वष्टः । यत् । ह । चारुऽत्वम् । आनट् । यत् । अङ्गिरसाम् । अभवः । सचाऽभूः ।
सः । देवानाम् । पाथः । उप । प्र । विद्वान् । उशन् । यक्षि । द्रविणःऽदः । सुऽरत्नः ॥९॥

हे देव त्वष्टः एतन्नामक त्वं यत् चारुत्वं हविर्भिः कल्याणरूपत्वम् आनट् प्राप्तवानसि । अश्नोतेर्लिटि तप्रत्ययस्य लुक् । यत् च त्वम् अङ्गिरसाम् अस्माकं सचाभूः सहभावी सहायः अभवः । हे द्रविणोदः धनस्य दातः अत एव सुरत्नः सुधनः सः त्वम् उशन् हवींषि कामयमानः सन् विद्वान् अस्येदमस्येदमिति प्रजानन् देवानां पाथः अन्नम् उप यक्षि उपयज । तेभ्यः प्रयच्छ ॥

वनस्पतिस्तोमे निष्केवल्ये 'वनस्पते रशनया' इत्येषा सूक्तमुखीया । सूत्रितं च—देवेभ्यो वनस्पते हवींषि वनस्पते रशनया नियूयेति सूक्तमुखीयाः' ( आश्व. श्रौ. ९. ५ ) इति ॥

---

१. ग-त-मु–होतारौ पुरोहितौ ।

वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान् ।
स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मे ॥ १० ॥

वनस्पते । रशनया । निऽयूय । देवानाम् । पाथः । उप । वक्षि । विद्वान् ।
स्वदाति । देवः । कृणवत् । हवींषि । अवताम् । द्यावापृथिवी इति । हवम् । मे ॥ १० ॥

हे ᵛवनस्पते वनस्पतिविकार यूप ᵛविद्वान् जानानस्त्वं ᵛरशनया रज्ज्वा ᵛनियूय बद्ध्वा परिव्याय ᵛपाथः अन्नं ᵛदेवानाम् इन्द्रादीनाम् ᵛउप ᵛवक्षि उपवह प्रापय । ततः ᵛदेवः वनस्पतिः ᵛस्वदाति हविष्प्रापणेन स्वदयतु । तथा ᵛहवींषि अस्माभिर्दत्तानि ᵛकृणवत् देवानां करोतु । तथा ᵛमे मदीयं ᵛहवं देवविषयाह्वानं ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛअवतां रक्षताम् ॥

आग्ने वह वरुणमिष्टये न इन्द्रं दिवो मरुतो अन्तरिक्षात् ।
सीदन्तु बर्हिर्विश्व आ यजत्राः स्वाहा देवा अमृता मादयन्ताम् ॥ ११ ॥

आ । अग्ने । वह । वरुणम् । इष्टये । नः । इन्द्रम् । दिवः । मरुतः । अन्तरिक्षात् ।
सीदन्तु । बर्हिः । विश्वे । आ । यजत्राः । स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥ ११ ॥

हे ᵛअग्ने त्वं ᵛनः अस्माकम् ᵛइष्टये यागाय ᵛइन्द्रं ᵛवरुणं च ᵛमरुतः च ᵛदिवः द्युलोकात् ᵛअन्तरिक्षात् च अस्मदीयं यज्ञम् ᵛआ ᵛवह प्रापय । आगतास्ते ᵛयजत्राः यष्टव्याः ᵛविश्वे सर्वे ᵛदेवाः ᵛबर्हिः ᵛआ ᵛसीदन्तु तत्रासन्ना भवन्तु । ततः ᵛअमृताः मरणधर्मरहिताः ᵛदेवाः ᵛस्वाहा स्वाहाकारेण दत्तैर्हविर्भिः ᵛमादयन्ताम् आत्मानं मादयन्तु ॥ ॥ २२ ॥

'बृहस्पते' इत्येकादशर्चं तृतीयं सूक्तम् आङ्गिरसस्य बृहस्पतेरार्षम् । नवमी जगती शिष्टा दश त्रिष्टुभः । अनेन सूक्तेनर्षिः परमपुरुषार्थसाधनं परब्रह्मज्ञानं स्तुतवान् । अतस्तद्देवत्यमिदम् । उक्तं हि बृहद्देवतायां—'सुज्योतिः परमं ब्रह्म यद्योगात्समुपाश्नुते । तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिः' ( बृहद्दे. ७. १०९ ) इति । अनुक्रान्तं च—'बृहस्पते बृहस्पतिर्ज्ञानं तुष्टाव नवमी जगती' इति । सूक्तविनियोगो गतः । देवसुवां हविःषु बृहस्पतिर्वाचस्पतिरित्यस्य प्रथमानुवाक्या । सूत्रितं च— 'बृहस्पते प्रथमं वाचो अग्रं हंसैरिव सखिभिर्वावदद्भिः' ( आश्व. श्रौ. ४. ११ ) इति ॥

बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः ।
यदेषां श्रेष्ठं यदरिप्रमासीत्प्रेणा तदेषां निहितं गुहाविः ॥ १ ॥

बृहस्पते । प्रथमम् । वाचः । अग्रम् । यत् । प्र । ऐरत । नामऽधेयम् । दधानाः ।
यत् । एषाम् । श्रेष्ठम् । यत् । अरिप्रम् । आसीत् ।
प्रेणा । तत् । एषाम् । निऽहितम् । गुहा । आविः ॥ १ ॥

बृहस्पतिरनेन सूक्तेन विदितवेदार्थान् बालान् दृष्ट्वा स्मयमानः[1] स्वात्मानं संबोध्याह । हे ᵛबृहस्पते अन्तरात्मन् ᵛप्रथमम् उत्पत्त्यनन्तरमितरवागुच्चारणात्प्रागेव ᵛनामधेयं नाम ᵛदधानाः

१. ग-त-मु–विस्मयमानः ।

पदार्थेषु निदधाना बालाः ᵛयत् ᵛप्रैरत प्रेरितवन्तः तत् ᵛवाचोऽग्रं भवति। यत्तत तातेत्यादिकं वाक्यं पूर्वमभिधाय पश्चादन्या वाचो वदिष्यन्ति खलु तस्माद्वाचोऽग्रम्। अस्यां दशायामवस्थितान् बालान् पश्य। तथेदानीम् ᵛएषां ᵛश्रेष्ठं प्रशस्यतमं ᵛयत् यच्च ᵛअरिप्रं पापरहितं वेदार्थज्ञानम् ᵛआसीत् ᵛएषां तज्ज्ञानं ᵛगुहा गुहायां ᵛनिहितं गोप्यं ᵛतत् ᵛप्रेणा। मकारलोपश्छान्दसः। प्रेम्णाविर्भवति। वेदाभ्यासकाले सरस्वती स्वार्थमेभ्यः प्रकाशयतीत्यर्थः। एवं विस्मये 'बृहस्पते प्रथमं वाचो अग्रम्' (ऐ. आ. १. ३. ६) इत्यादिकमारण्यकमनुसंधेयम्॥

**सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।**
**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि॥ २॥**

सक्तुम्ऽइव। तितउना। पुनन्तः। यत्र। धीराः। मनसा। वाचम्। अक्रत।
अत्र। सखायः। सख्यानि। जानते। भद्रा। एषाम्। लक्ष्मीः। निऽहिता। अधि। वाचि॥ २॥

ᵛतितउना। परिपूयतेऽनेनेति। यद्वा। तता विस्तृता भृष्टयवा अत्रेति तितउः। 'तनोतेर्डउः सन्वच्च' (उ. सू. ५. २२) इति डउप्रत्ययः। सन्वद्भावादित्वम्। उक्तनिर्वचनेन सूर्पेण ᵛसक्तुमिव यथा कश्चित्सक्तुं दुर्धावं पुनाति तद्वत् प्रकृतितः प्रत्ययतश्च शब्दानुत्पुनन्तः ᵛधीराः धीमन्तो विद्वांसः ᵛयत्र यस्मिन् काले विद्वत्संघे वा ᵛमनसा प्रज्ञायुक्तेन ᵛवाचमक्रत अकृषत कुर्वन्ति। करोतेर्लुङि रूपम्। ᵛअत्र तत्र काले ᵛसखायः समानख्यानाः शास्त्रादिविषयज्ञानास्ते ᵛसख्यानि तेषु भवानि ज्ञानानि ᵛजानते जानन्ति। यद्वा। सखायो वाचा बद्धसख्यास्ते तस्यास्तस्या वाचः सख्यानि जानन्ति। वाक्ययुक्तानभ्युदयाँल्लभन्त इत्यर्थः। तस्मात् ᵛएषां ᵛवाचि ᵛभद्रा कल्याणी ᵛनिहिता ᵛलक्ष्मीः भवति। अधिः सप्तम्यर्थद्योतकः। अर्थज्ञानं वाचि पश्याम इत्यर्थः। 'तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा सक्तुमिव तितउना' (निरु. ४. १०) इत्यादि निरुक्तमनुसंधेयम्॥

वाग्देवत्यपशोर्वपापुरोडाशयोः 'यज्ञेन वाचः' इत्यादिके द्वे क्रमेण याज्ये। सूत्रितं च—'यज्ञेन वाचः पदवीयमायन्निति द्वे देवीं वाचमजनयन्त देवाः' (आश्व. श्रौ. ३. ८) इति॥

**यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्।**
**तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते॥ ३॥**

यज्ञेन। वाचः। पदऽवीयम्। आयन्। ताम्। अनु। अविन्दन्। ऋषिषु। प्रऽविष्टाम्।
ताम्। आऽभृत्य। वि। अदधुः। पुरुऽत्रा। ताम्। सप्त। रेभाः। अभि। सम्। नवन्ते॥३॥

विदितार्था धीराः ᵛपदवीयम्। वेतेः 'अचो यत्'। संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः। पदेन यातव्यः पन्थाः पदवीयः। तं ᵛवाचः मार्गं ᵛयज्ञेन ᵛआयन् प्राप्तवन्तः। ᵛऋषिषु अतीन्द्रियार्थदर्शिषु ᵛप्रविष्टां ᵛतां वाचम् ᵛअविन्दन् अलभन्त। अनन्तरं ᵛतां वाचम् ᵛआभृत्य आहृत्य ᵛपुरुत्रा बहुषु देशेषु ᵛव्यदधुः व्यकार्षुः। सर्वान् मनुष्यानध्यापयामासुरित्यर्थः। एतादृशीं वाचं[1] ᵛरेभाः शब्दायमानाः पक्षिणः पक्षिरूपाणि गायत्र्यादीनि ᵛसप्त छन्दांसि ᵛअभि ᵛसं ᵛनवन्ते अभितः संगच्छन्ते॥

---

१. ग-स४.५-तां वाचं; त१.२.३.७-तां सप्त।

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ॥ ४ ॥

उत । त्वः । पश्यन् । न । ददर्श । वाचम् । उत । त्वः । शृण्वन् । न । शृणोति । एनाम् ।
उतो इति । त्वस्मै । तन्वम् । वि । सस्रे । जायाऽइव । पत्ये । उशती । सुऽवासाः ॥ ४ ॥

त्वशब्द एकवाची । एकः । उतशब्दोऽप्यर्थे । ᵛपश्यन् अपि मनसा पर्यालोचयन्नपि ᵛवाचं ᵛन ᵛददर्श दर्शनफलाभावान्न पश्यति । ᵛत्वः एकः ᵛशृण्वन् अपि ᵛएनां वाचं ᵛन ᵛशृणोति श्रवणफलाभावात् । इत्यनेनार्धेन अविद्वानभिहितः । तृतीयपादेन विदितवेदार्थमाह । ᵛत्वस्मै एकस्मै अपि ᵛतन्वम् आत्मीयं शरीरं ᵛवि ᵛसस्रे स्वयं वाग्विविधं गमयति । आत्मानं विवृणुते प्रकाशयतीत्यर्थः । तत्र दृष्टान्तः । ᵛजायेव यथा ᵛउशती संभोगं कामयमाना ᵛसुवासाः शोभनवसना जाया ᵛपत्ये भर्त्रे ऋतुकाले संभोगार्थं स्वयमात्मानं विवृणुते । तद्वदेनां पश्यति शृणोति चेति विदितवेदार्थस्य प्रशंसा । 'अप्येकः पश्यन्न पश्यति वाचम्' ( निरु. १. १९ ) इत्यादि निरुक्तमत्र द्रष्टव्यम् ॥

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ ५ ॥

उत । त्वम् । सख्ये । स्थिरऽपीतम् । आहुः । न । एनम् । हिन्वन्ति । अपि । वाजिनेषु ।
अधेन्वा । चरति । मायया । एषः । वाचम् । शुश्रुऽवान् । अफलाम् । अपुष्पाम् ॥ ५ ॥

ᵛत्वम् ᵛउत एकमपि ᵛसख्ये विदुषां संसदि । या सत्कथा सा सखिकर्मत्वात्सख्यमित्युच्यते । सा च वाचा क्रियते । अतो वाक्संबन्धाद्वाक्सख्ये ᵛस्थिरपीतम् । मधु यस्य हृदये स्थिरं भवति । यद्वा स्थिरपीतं[1] स्थिरप्राप्तिम् । ᵛआहुः । यद्वा । तस्मिञ्ज्ञातार्थमाहुः । लोके यथा ज्ञातार्थं पुरुषं पीतार्थमिति वदन्ति । किंच ᵛएनं विज्ञातार्थं पुरुषं ᵛवाजिनेषु । वाक् इना ईश्वरा येषां[2] ते वाजिना अर्था वाच आयत्ताः खलु । वाग्ज्ञेयेष्वर्थेषु ᵛन ᵛअपि ᵛहिन्वन्ति । अपिशब्दोऽन्वर्थे । केचिदपि नानुगच्छन्ति । अयमेवातिशयेन विद्वानित्यर्थः । यद्वा । वाजिनेषु सारभूतेषु निरूपणीयेष्वर्थेष्वेनं न हिन्वन्ति न बहिः कुर्वन्ति । एनं पुरस्कृत्यैव सर्वं वेदार्थं विचारयन्तीत्यर्थः । इत्यर्थज्ञः[3] प्रशस्तः । अनन्तरमुत्तरार्धेन केवलपाठको निन्द्यते । ᵛएषः अविज्ञातार्थः पुरुषः ᵛअधेन्वा धेनुत्वविवर्जितया कामानामदोग्ध्र्या देवमनुष्यस्थानेषु वाक्प्रतिरूपया ᵛमायया ᵛचरति । किं कुर्वन् । ᵛअफलामपुष्पाम् । वाचोऽर्थः पुष्पफलम् । अर्थवर्जिताम् । यद्वा । वाचोऽर्थौ याज्ञदैवते । यज्ञे भवं ज्ञानं याज्ञं देवतासु भवं ज्ञानं दैवतम् । तद्वर्जितां कर्मादिविषयज्ञानवर्जितां ᵛवाचं ᵛशुश्रुवान् । केवलं पाठमात्रेणैव श्रुतवान् स चरति । यथा वन्ध्या पीना गौः किं द्रोणमात्रं क्षीरं दोग्धीति मायामुत्पादयन्ती चरति यथा वन्ध्यो वृक्षोऽकाले पल्लवादियुक्तः सन् पुष्यति फलतीति भ्रान्तिमुत्पादयंस्तिष्ठति तथा पाठं ब्रुवाणः चरतीत्यर्थः । 'अप्येकं वाक्सख्ये स्थिरपीतम्' ( निरु. १.२० ) इत्यादि निरुक्तमत्रानुसंधेयम् ॥ ॥२३॥

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥ ६ ॥

१. त३-मु-स्थिरपीतं पीतं । २. ग-येषामर्थानां । ३. त४.५.६.८-म१.२.६.८-इत्यर्थः ।

यः । तित्याज॑ । सचि॒ऽविद॑म् । सखा॑यम् । न । तस्य॑ । वा॒चि । अपि॑ । भा॒गः । अ॒स्ति ।
यत् । ई॒म् । शृ॒णोति॑ । अल॑कम् । शृ॒णोति॑ । न॒हि । प्र॒ऽवेद॑ । सु॒ऽकृ॒तस्य॑ । पन्था॑म् ॥ ६ ॥

^v^सचिविदम् । सचिशब्दः सखिवाची । सखिविदम् । योऽध्येता स वेदस्य सखा संप्रदायोच्छेदनिवारकत्वेन वेदं प्रत्युपकारित्वात् । तादृशमुपकारिणमध्येतारं वेत्तीति सचिवित् । तमभिज्ञं ^v^सखायम् अध्येतृणां पुरुषाणां स्वार्थबोधनेनोपकारित्वात्सखिभूतं वेदं ^v^यः पुमान् ^v^तित्याज तत्याज परार्थविनियोगेन परित्यजति । त्यजतेर्लिटि ' अपस्पृधेथामानृचुः° ' इत्यादिना निपातितः । ^v^तस्य पुरुषस्य ^v^वाचि सर्वस्यां लौकिक्यां शास्त्रीयायां वाच्यपि ^v^भागः भजनीयः कश्चिदर्थः ^v^न ^v^अस्ति । ^v^ईम् अयं पुरुषः ^v^यत् वेदव्यतिरिक्तं ^v^शृणोति तत् ^v^अलकम् अलीकं व्यर्थमेव ^v^शृणोति । ^v^हि यस्मात्कारणात् ^v^सुकृतस्य ^v^पन्थां पन्थानं ^v^न ^v^प्रवेद श्रद्धाराहित्यादनुष्ठानमार्गं न जानाति । तस्मात्तदीयश्रवणमपि निष्फलमित्यर्थः । द्वितीयचतुर्थपादयोरभिप्राय आरण्यके दर्शितः ' न तस्यानूक्ते भागोऽस्ति ' ( ऐ. आ. ३. २. ४ ) इत्यादिना । तथा ' तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाभ्युक्ता ' ( तै. आ. २. १५. ५ ) इत्यध्वर्युभिश्च ॥

अ॒क्ष॒ण्वन्तः॒ कर्ण॑वन्तः॒ सखा॑यो मनोज॒वेष्वस॑मा बभूवुः ।
आ॒द॒घ्नास॑ उपक॒क्षास॑ उ त्वे ह्र॒दाइ॑व॒ स्नात्वा॑ उ त्वे ददृश्रे ॥ ७ ॥

अ॒क्ष॒ण्ऽवन्तः॑ । कर्ण॑ऽवन्तः । सखा॑यः । म॒नः॒ऽज॒वेषु॑ । अस॑माः । ब॒भू॒वुः ।
आ॒द॒घ्नासः॑ । उ॒प॒ऽक॒क्षासः॑ । ऊँ॒ इति॑ । त्वे॒ । ह्र॒दाःऽइ॑व । स्नात्वाः॑ । ऊँ॒ इति॑ । त्वे॒ । द॒दृ॒श्रे॒ ॥ ७ ॥

^v^अक्षण्वन्तः अक्षिमन्तः । ' छन्दस्यपि दृश्यते ' इत्यक्षिशब्दादनङ् । ' अनो नुट् ' इति नुट् । अनेन दृश्यते सर्वमित्यक्षि । यद्वा । तैजसत्वात् अन्येभ्योऽङ्गेभ्यो[1] व्यक्ततरम् । तथा च श्रूयते—' तस्मादेते व्यक्ततरे इव ' इति । तादृशाक्षियुक्ताः ^v^कर्णवन्तः । कर्णौ निकृत्तद्वारः । गर्भावस्थायामेव केनापि निर्मितबिल इत्यर्थः । यद्वा शरीरस्य शिरसो चोर्ध्वं गते उच्चैः स्थिते । कर्णविलक्षणाकाशवन्तः । तथा चाम्नायते—' ऋच्छन्ती इव खे उदगन्ताम् ' इति । तादृशाः ^v^सखायः । समानं ख्यानं ज्ञानं येषामिति सखायः । तेषु वाक्येषु बाह्येष्विन्द्रियेषु समानज्ञाना इत्यर्थः । ते ^v^मनोजवेषु । मनसा गम्यन्ते ज्ञायन्त इति मनोजवाः प्रज्ञायाः । तेषु ^v^असमाः अतुल्याः ^v^बभूवुः भवन्ति । तेषु मध्ये केचित् ^v^आदघ्नासः । आस्यशब्दस्य पृषोदरादित्वादाकारादेशः । आस्यदघ्ना आस्यप्रमाणोदका ह्रदा इवेति मध्यमप्रज्ञानाह । अथ ^v^त्वे एके । सर्वनामत्वाज्जसः शीभावः । ^v^उपकक्षासः । कक्षसमीपप्रमाणोदका ह्रदा इव । अल्पोदका इत्यर्थः । अनेनाल्पप्रज्ञानाह । तथा ^v^त्वे एके ^v^स्नात्वाः । स्नातेः कृत्यार्थे त्वन्प्रत्ययः ( पा. सू. ३.४.१४ ) । स च ' अर्हे कृत्यतृचश्च ' ( पा. सू. ३.३.१६९ ) इत्यर्हार्थे च भवति । स्नानार्हा अक्षोभ्योदकाः ^v^ह्रदाइव ^v^ददृश्रे दृश्यन्ते । अनेन महाप्रज्ञानाह । उः पूरणः । ' अक्षिमन्तः कर्णवन्तः सखायोऽक्षि चष्टेः ' ( निरु. १. ९ ) इत्यादिकं निरुक्तमत्र द्रष्टव्यम् ॥

ह्र॒दा त॒ष्टेषु॒ मन॑सो ज॒वेषु॒ यद्ब्रा॑ह्म॒णाः सं॒यज॑न्ते॒ सखा॑यः ।
अत्राह॑ त्वं॒ वि ज॑हुर्वे॒द्याभि॒रोह॑ब्रह्माणो॒ वि च॑रन्त्यु त्वे ॥ ८ ॥

ह्र॒दा । त॒ष्टेषु॑ । मन॑सः । ज॒वेषु॑ । यत् । ब्रा॒ह्म॒णाः । स॒म्ऽयज॑न्ते । सखा॑यः ।
अत्र॑ । अह॑ । त्व॒म् । वि । ज॒हुः॒ । वे॒द्याभि॑ः । ओह॑ऽब्रह्माणः । वि । च॒र॒न्ति॒ । ऊँ॒ इति॑ । त्वे॒ ॥ ८ ॥

---

१. ग—अन्येभ्यो द्वारेभ्यो ।

vसखायः समानख्यानाः vब्राह्मणाः vहृदा बुद्धिमतां हृदयेन vतष्टेषु निश्चितेषु परिकल्पितेषु vमनसो vजवेषु गन्तव्येषु वेदार्थेषु गुणदोषनिरूपणाः vयत्[1] यदा[1] vसंयजन्ते संगच्छन्ते। यजिरत्र संगतिकरणवाची[2]। vअत्र अस्मिन् ब्राह्मणसंघे vत्वम् अविज्ञातार्थमेकं पुरुषं vवेद्याभिः वेदितव्याभिः विद्याभिः प्रवृत्तिभिर्वा vवि vजहुः विशेषेण परित्यजन्ति। vअह इति विनिश्चये। vओहब्रह्माणः। ऊह्यमानं ब्रह्म विद्याश्रुतिमतिबुद्धिलक्षणं येषां ते तथोक्ताः। तादृशास्त एके विद्वांसः vवि vचरन्ति यथाकामं वेदार्थेषु विनिश्चयार्थं प्रवर्तन्ते। उः प्रसिद्धौ। 'हृदा तष्टेषु मनसां प्रजवेषु' (निरु. १३. १३) इत्यादिकं निरुक्तं द्रष्टव्यम् ॥

इमे ये नार्वाङ्ङ परश्चरन्ति न ब्राह्मणासो न सुतेकरासः ।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥ ९ ॥

इमे । ये । न । अर्वाक् । न । परः । चरन्ति । न । ब्राह्मणासः । न । सुतेऽकरासः ।
ते । एते । वाचम् । अभिऽपद्य । पापया । सिरीः । तन्त्रम् । तन्वते । अप्रऽजज्ञयः ॥९॥

अनया वेदार्थानभिज्ञा निन्द्यन्ते। vइमे vये अविद्वांसः vअर्वाक् अर्वाचीनमधोभाविन्यस्मिँल्लोके ब्राह्मणैः सह vन vचरन्ति ये vपरः परस्तात् देवैः सह vन चरन्ति ते vब्राह्मणासः ब्राह्मणाः वेदार्थतत्पराः vन भवन्ति। तथा vसुतेकरासः। सोमं सुतमभिषुतं कुर्वन्तीति सुतेकरा ऋत्विजः। तेऽपि vन भवन्ति। vअप्रजज्ञयः। जानातेः[3] 'आदृगमहनः॰' इति किप्रत्ययः। अविद्वांसः vत vएते मनुष्याः vवाचं लौकिकीम् vअभिपद्य प्राप्य तया vपापया पापकारिण्या वाचा युक्तास्ते vसिरीः। 'छन्दसीवनिपौ' इतीप्रत्ययः। 'सुपां सुलुक्॰' इति जसः सुः। सीरिणो भूत्वा vतन्त्रं कृषिलक्षणं vतन्वते विस्तारयन्ति। कुर्वन्तीत्यर्थः। सर्वथा वेदार्थो ज्ञेय इत्यभिप्रायः ॥

सोमप्रवहणे[4] 'सर्वे नन्दन्ति' इत्येषा। सूत्रितं च—'सोम यास्ते मयोभुव इति तिस्रः सर्वे नन्दन्ति यशसागतेन' (आश्व. श्रौ. ४. ४) इति ॥

सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः ।
किल्बिषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥ १० ॥

सर्वे । नन्दन्ति । यशसा । आऽगतेन । सभाऽसहेन । सख्या । सखायः ।
किल्बिषऽस्पृत् । पितुऽसनिः । हि । एषाम् । अरम् । हितः । भवति । वाजिनाय ॥१०॥

vसखायः समानख्यानाः समानज्ञानाः vसर्वे सभ्या मनुष्याः vसभासहेन[5] सभां सोढुं शक्नुवता vसख्या ऋत्विजां सखिभूतेन यज्ञं प्रति vआगतेन vयशसा यशस्विना सोमेन हेतुना vनन्दन्ति हृष्टा भवन्ति। स vहि स एव सोमः vएषां जनानां vकिल्बिषस्पृत्। यः स्वस्मादन्यः पुरुषः श्रेष्ठतामश्नुते[6] स किल्बिषं भवति बाध्यत्वेन। यथा पापं सदाचारैः बाधितव्यं[7] भवति तद्वत्। पापरूपस्य शत्रोर्बाधकः। यद्वा। यज्ञे साध्वनुप्रवचनाकरणेन यत्किल्बिषमेषां जायते तद्यो[8] बाधते स किल्बिषस्पृत्। तथा त्वं vपितुषणिः। पितुरित्यन्ननाम दक्षिणा वा। तमनेन सोमेन

---

१. त-भ-मु—यथा। २. ग-भ-मु—संगतकरणवाची। ३. ग४-त१.२.४.६.८—ज्ञातेः। ४. ग४-त१.२.३.६.७.८-भ-मु—सोमप्रवणे; त४—सोमप्रवाहणे; त५—सोमप्रवाहा। ५. ग४-त-भ२.६.८-मु—सभासाहेन। ६. ग४—यः श्रेष्ठत्वमश्नुते; त-भ—यः श्रेष्ठतामश्नुते। ७. ग—बाधितं। ८. ग-त-भ—तं यो।

सनोति यजमानः संभजत इति तादृशः। तेषामन्नदक्षिणादातेत्यर्थः। किंच ᵛहितः पात्रेषु निहितः सोमः ᵛवाजिनाय। इन्द्रियं वीर्यं वाजिनम्। तेषां वीर्याय तत्कर्तुम् ᵛअरम् अलं पर्याप्तः समर्थो ᵛभवति। 'सर्वे नन्दन्ति यशसागतेनेत्यन्वाह यशो वै सोमो राजा' इत्यादिकम् 'इन्द्रियं वै वीर्यं वाजिनमाजरसं हास्मै वाजिनं नापच्छिद्यते' इत्यन्तं ब्राह्मणमत्रानुसंधेयम् (ऐ. ब्रा. १. १३)॥

**ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु।**
**ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः॥ ११॥**

ऋचाम्। त्वः। पोषम्। आस्ते। पुपुष्वान्। गायत्रम्। त्वः। गायति। शक्वरीषु।
ब्रह्मा। त्वः। वदति। जातऽविद्याम्। यज्ञस्य। मात्राम्। वि। मिमीते। ऊँ इति। त्वः॥ ११॥

अनया होत्राद्यृत्विक्कर्मणां विनियोगमाचष्टे। ᵛत्वः एको होता ᵛऋचां ᵛपोषं यथाविधि कर्मणि प्रयोगं ᵛपुपुष्वान्। एको धातुरनुवादार्थः। बह्वीर्ऋचः पुष्यन् शंसन् ᵛआस्ते। ᵛत्वः एक उद्गाता ᵛशक्वरीषु। शक्वर्य ऋचः। आभिर्ऋग्भिर्वृत्रं हन्तुमिन्द्रः समर्थोऽभूदिति शक्वर्यः[1]। तासु ᵛगायत्रं साम ᵛगायति। ᵛत्वः एकः ᵛब्रह्मा च ᵛजातविद्यां जाते जाते कर्तव्ये प्रायश्चित्तादौ वेदवित्त्रीं वाचं ᵛवदति। ब्रह्मा हि सर्वं वेदितुं योग्यो भवति खलु। 'चादिलोपे विभाषा' इति न निघातः। ᵛत्वः एकोऽध्वर्युश्च ᵛयज्ञस्य ᵛमात्रां यज्ञो यया मीयतेऽभिषवग्रहणादिकया क्रियया तां मात्रां यज्ञशरीरं ᵛवि ᵛमिमीते अत्यर्थं निर्मिमीते। 'ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी' (निरु. १. ८) इत्यादिनिरुक्तानुसारेणार्थोऽभ्यधायि। एवं बृहस्पतिर्विदितवेदार्थं[2] तुष्टाव॥　　॥ २४॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरसायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्येऽष्टमाष्टके द्वितीयोऽध्यायः॥

॥ श्रीगणेशाय नमः॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
प्राज्ञः श्रीसायणाचार्यो व्याख्याय चरमेऽष्टके।
स्फुटं द्वितीयमध्यायं तृतीयं वक्तुमुद्यतः॥

तत्र 'देवानाम्' इति नवर्चमनुवाकापेक्षया चतुर्थं सूक्तमानुष्टुभं देवदेवत्यम्। लोकनाम्नः पुत्रो बृहस्पतिराङ्गिरस एव वा बृहस्पतिर्ऋषिः। अथवा दक्षस्य दुहितादितिर्ऋषिः। तथा चानुक्रान्तं—'देवानां नव लौक्यो वा बृहस्पतिर्दाक्षायण्यदितिर्वा दैवमानुष्टुभम्' इति। गतः सूक्तविनियोगः॥

**देवानां नु वयं जाना प्र वोचाम विपन्यया।**
**उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे॥ १॥**

---

१. ग४-त-मु-शक्वर्य ऋचः। २. ग-त-मु-°वेदार्थज्ञानं

देवानाम् । नु । वयम् । जाना । प्र । वोचाम । विपन्यया ।
उक्थेषु । शस्यमानेषु । यः । पश्यात् । उत्ऽतरे । युगे ॥ १ ॥

अदितिर्दाक्षायण्यनेन सूक्तेन स्वयं यथादित्यानजनयत्तद्ब्रवीति । बृहस्पत्यृषिपक्षे स ऋषिरदितेः सकाशादादित्योत्पत्तिप्रकारमाह । ᵛवयं ᵛदेवानाम् आदित्यानां ᵛजाना जन्मानि ᵛप्र ᵛवोचाम प्रकथयाम । ᵛविपन्यया विस्पष्टया वाचा । वयमिति वोचामेति चोभयत्र पूजार्थं बहुवचनम् । अथैकवदाह । ᵛयः देवानां गणः पूर्वे युग उत्पन्नोऽपि ᵛउक्थेषु ᵛशस्यमानेषु यागे शस्त्रेष्वनुष्ठीयमानेषु ᵛउत्तरे ᵛयुगे वर्तमानं स्तुवन्तं स्तोतारं ᵛपश्यात् पश्यति । अनेकेष्वपि युगेषु गतेषु कर्मसु स्तूयमानो[1] वर्तत इत्यर्थः ॥

**ब्रह्मणस्पतिरेता सं कुर्मारइवाधमत् । देवानां पूर्व्ये युगेऽसतः सदजायत ॥ २ ॥**

ब्रह्मणः । पतिः । एता । सम् । कर्मारःऽइव । अधमत् ।
देवानाम् । पूर्व्ये । युगे । असतः । सत् । अजायत ॥ २ ॥

ᵛब्रह्मणः अन्नस्य ᵛपतिः अदितिः ᵛएता एतानि देवानां जन्मानि ᵛकर्मारइव स यथा भस्त्रयाग्निमुपधमति प्रज्वलनार्थमेवं ᵛसम्[2] ᵛअधमत्[2] उदपादयदित्यर्थः । ᵛदेवानां ᵛपूर्व्ये ᵛयुगे । आदिसृष्टावित्यर्थः । तेषामुपादानकारणात्[3] ᵛअसतः नामरूपवर्जितत्वेनासत्समानाद्ब्रह्मणः सकाशात् ᵛसत् नामरूपविशिष्टं देवादिकम् ᵛअजायत प्रादुरभूत् । 'असद्वा इदमग्र आसीत्ततो वै सदजायत' (तै. उ. २. ७) इति हि श्रुतिः । न सदात्मकस्य प्रपञ्चस्यासत्कारणत्वं युक्तमिति वाच्यं, छन्दोगैः 'कथमसतः सज्जायेत' इति असत्कारणत्वमाक्षिप्य 'सत्त्वेव सोम्येदमग्र आसीत्' (छा. उ. ६. २. २) इत्यवधारितत्वात् । तर्ह्यसत्कारणप्रतिपादकवाक्यानां का गतिरिति चेत् तेषामव्याकृतत्वाभिप्रायत्वात् 'तद्धेदं तर्ह्यव्याकृतमासीत्' (श. ब्रा. १४. ४. २. १५) इति श्रुतेः । यद्येवं तर्ह्यदितेः सकाशात्कथं देवाद्युत्पत्तिः । 'वायोरग्निः' (तै. आ. ८. १) इत्यादिवत् अधिष्ठानसकाशादुत्पत्तेः । यद्वा देवानां कारणभूतं सत् असतो ब्रह्मणः सकाशादुत्पन्नमिति योजनादुक्तन्यायोऽस्मिन्पक्षेऽपि समान एव ॥

**देवानां युगे प्रथमेऽसतः सदजायत ।**
**तदाशा अन्वजायन्त तदुत्तानपदस्परि ॥ ३ ॥**

देवानाम् । युगे । प्रथमे । असतः । सत् । अजायत ।
तत् । आशाः । अनु । अजायन्त । तत् । उत्तानऽपदः । परि ॥ ३ ॥

पूर्वार्धमुक्तम् । ᵛतत् ᵛअनु ᵛआशाः दिशः ᵛअजायन्त ᵛतत् ᵛपरि तदग्नित्यर्थः । ᵛउत्तानपदः । उत्तानमूर्ध्वतानं पद्यन्त इत्युत्तानपदो वृक्षाः । ते अजायन्त प्रादुरभवन् ॥

**भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त ।**
**अदितेर्दक्षो अजायत दक्षाद्वदितिः परि ॥ ४ ॥**

भूः । जज्ञे । उत्तानऽपदः । भुवः । आशाः । अजायन्त ।
अदितेः । दक्षः । अजायत । दक्षात् । ऊँ इति । अदितिः । परि ॥ ४ ॥

---

१. त-भ२.६.७.८–यजमानो; भ४.५–सुयजमानो । २. त-भ-संधमत् । ३. त४.५.६-भ५.७–एषामु॰ ।

भूः[1] उत्तानपदः[1] वृक्षात् जज्ञे । तथा भुवः सकाशात् आशाः अजायन्त । तथा अदितेः दक्षः अजायत उत्पन्नः । दक्षादु दक्षादपि अदितिः परि अजायत । न स्वोत्पन्नं कार्यं स्वस्यैव कारणमपि भवतीति विप्रतिषिद्धमिति वाच्यम् । यास्काचार्य इदमेव[2] वाक्यमुदाहृत्य विरोधमाशङ्क्य पर्यहरत् । तथा हि—'अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति च । तत्कथमुपपद्येत समानजन्मानौ[3] स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती' ( निरु. ११. २३ ) इति ॥

अदितिदेवताके पशौ 'अदितिर्ह्यजनिष्ट' इत्येषा हविषोऽनुवाक्या । सूत्रितं च— 'अदितिर्ह्यजनिष्ट सुत्रामाणं पृथिवीं द्यामनेहसम्' ( आश्व. श्रौ. ३. ८ ) इति ॥

अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव ।
तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ॥ ५ ॥

अदितिः । हि । अजनिष्ट । दक्ष । या । दुहिता । तव ।
ताम् । देवाः । अनु । अजायन्त । भद्राः । अमृतऽबन्धवः ॥ ५ ॥

हे दक्ष तव[4] या[4] दुहिता अभूत् सा अदितिः अजनिष्ट हि पुत्रानादित्यान् । तदेवाह । तां देवा अन्वजायन्त भद्राः स्तुत्या भजनीयाः अमृतबन्धवः अमरणबन्धनाः ॥　　॥ १ ॥

यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत ।
अत्रा वो नृत्यतामिव तीव्रो रेणुरपायत ॥ ६ ॥

यत् । देवाः । अदः । सलिले । सुऽसंरब्धाः । अतिष्ठत ।
अत्र । वः । नृत्यताम्ऽइव । तीव्रः । रेणुः । अप । आयत ॥ ६ ॥

अनयोत्तरेण चादित्याः स्तूयन्ते । यत् यदा हे देवाः अदः अमुष्मिन् सलिले यूयं सुसंरब्धाः सुष्ठु लब्धात्मानः अतिष्ठत स्थितवन्तः । 'आपो वा इदं सर्वम्' ( तै. आ. १०. २२ ) 'अप एव ससर्जादौ' (मनु.१. ८ ) इति श्रुतिस्मृती । अत्र अस्मिन् सलिले नृत्यतामिव वः युष्माकं संबन्धी तीव्रः दुःसहः रेणुः अंशभूत एकः अपायत अपागच्छत् । दिवं प्रति गत इति सूर्याभिप्रायम् । 'परा मार्ताण्डमास्यत्' इति वक्ष्यति ॥

यद्देवा यतयो यथा भुवनान्यपिन्वत ।
अत्रा समुद्र आ गूळ्हमा सूर्यमजभर्तन ॥ ७ ॥

यत् । देवाः । यतयः । यथा । भुवनानि । अपिन्वत ।
अत्र । समुद्रे । आ । गूळ्हम् । आ । सूर्यम् । अजभर्तन ॥ ७ ॥

---

१. त-भ—भूरिति उत्तानपदो । २. ग१—मामेव; ग२-त१.२.३.६.७.८-भ—अमुमेव । ३. ग-त-भ२.४.६.८—समानधर्माणौ । ४. ग-त-मु—या तव ।

ᵛयत् यदा हे ᵛदेवाः ᵛयतयो ᵛयथा। वृष्टया नियमयन्तीति वा वर्षणेन[1] यातयन्तीति वा यतयो मेघाः। ते यथोदकैः ᵛभुवनानि[2] लोकं पूरयन्ति तद्वत्स्वतेजोभिः ᵛअपिन्वत पूरितवन्तः। ᵛअत्र ᵛसमुद्रे अप्सु ᵛआ ᵛगूळ्हं ᵛनिगूळ्हं ᵛसूर्यं प्रातरुदयाय ᵛआ ᵛअजभर्तन आहृतवन्तः॥

अ॒ष्टौ पु॒त्रासो॒ अदि॑ते॒र्ये जा॒तास्त॒न्व१॒॑स्परि॑।
दे॒वाँ उप॒ प्रैत्स॒प्तभि॒ः परा॑ मार्ता॒ण्डमा॑स्यत् ॥ ८ ॥

अ॒ष्टौ। पु॒त्रासः॑। अदि॑तेः। ये। जा॒ताः। त॒न्वः॑। परि॑।
दे॒वान्। उप॑। प्र। ऐ॒त्। स॒प्तऽभि॑ः। परा॑। मा॒र्ता॒ण्डम्। आ॒स्य॒त् ॥ ८ ॥

ᵛअष्टौ ᵛपुत्रासः पुत्रा मित्रादयः ᵛअदितेः भवन्ति ᵛये अदितेः ᵛतन्वस्परि शरीरात् ᵛजाताः उत्पन्नाः। अदितेरष्टौ पुत्रा अध्वर्युब्राह्मणे परिगणिताः। तथा हि—'ताननुक्रमिष्यामो मित्रश्च वरुणश्च धाता चार्यमा चांशश्च भगश्च विवस्वानादित्यश्च' (तै. आ. १. १३. ३) इति। तथा तत्रैव प्रदेशान्तरेऽदितिं प्रस्तुत्याम्नातं—'तस्या उच्छेषणमददुस्तत्प्राश्नात्[3] सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त सा द्वितीयमपचत्' इत्यादिनाष्टानामादित्यानामुत्पत्तिर्वर्णिता (तै. सं. ६. ५. ६. १)। सादितिः ᵛसप्तभिः पुत्रैः ᵛदेवानुप ᵛप्रैत् उपागच्छत्। अष्टमं पुत्रं ᵛमार्ताण्डं सूर्यं ᵛपरा ᵛआस्यत् उपरि प्राक्षिपदित्यर्थः॥

स॒प्तभि॑ः पु॒त्रैरदि॑ति॒रुप॒ प्रैत्पू॒र्व्यं यु॒गम्।
प्र॒जायै॑ मृ॒त्यवे॑ त्व॒त्पुन॑र्मार्ता॒ण्डमाभ॑रत् ॥ ९ ॥

स॒प्तऽभि॑ः। पु॒त्रैः। अदि॑तिः। उप॑। प्र। ऐ॒त्। पू॒र्व्यम्। यु॒गम्।
प्र॒ऽजायै॑। मृ॒त्यवे॑। त्व॒त्। पुन॑ः। मा॒र्ता॒ण्डम्। आ। अ॒भ॒र॒त् ॥ ९ ॥

पूर्वमन्त्रोक्त एवार्थः पुनरत्रोच्यते। ᵛसप्तभिः मार्ताण्डव्यतिरिक्तैर्मित्रादिभिः ᵛअदितिः ᵛपूर्व्यं पुराणं ᵛयुगम् ᵛउप ᵛप्रैत् उपगता। अथ ᵛप्रजायै प्राणिनामुत्पत्तये ᵛमृत्यवे तेषां मरणाय ᵛमार्ताण्डं[4] मृतात् व्यृद्धादण्डाज्जातं मार्ताण्डनामानं सूर्यं[5] ᵛपुनः ᵛआभरत् आहरत्। द्युलोकेऽधारयत्। प्राणिमरणजननादीनां सूर्योदयास्तमयायत्तता स्फुटा। 'तस्यै व्यृद्धमाण्डमजायत' (तै. सं. ६. ५. ६. १) इत्यादि ब्राह्मणम्॥ ॥ २ ॥

'जनिष्ठाः' इत्येकादशर्चं पञ्चमं सूक्तं शक्तिपुत्रस्य गौरिवीतेरार्षं मारुतं त्रैष्टुभम्। तथा चानुक्रान्तं—'जनिष्ठा एकादश गौरिवीतिः' इति। अग्निष्टोमे मरुत्वतीयशस्त्र इदं सूक्तं निविद्धानम्। सूत्रितं च—'जनिष्ठा उग्र इत्येकभूयसीः शस्त्वा मरुत्वतीयां निविदं दध्यात्' (आश्व. श्रौ. ५. १४) इति। सौमिकचातुर्मास्येषु वैश्वदेवेऽप्येतन्मरुत्वतीयं निविद्धानम्। सूत्रितं च—'जनिष्ठा उग्र उग्रो जज्ञ इति माध्यंदिनः' (आश्व. श्रौ. ९.२) इति। महाव्रतेऽपि निष्केवल्य एतत्सूक्तम्। तथैव पञ्चमारण्यके सूत्रितं—'जनिष्ठा उग्रः सहसे तुरायेति निविद्धानम्' (ऐ. आ. ५.१.१) इति॥

---

१. ग–अवर्षेण; त-भ-मु–अवर्षणेन। २. ग-त-भ–'भुवनानि' नास्ति। ३. ग४-त१.२.३.७-भ२. ४.६–°मददुस्तान् प्राश्नात्। ४. त-भ४.७–मार्तंडं। ५. ग१–वा सूर्यं; त३-भ२.८–मा सूर्यं; ग४-त७–आ सूर्यं।

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥ १ ॥

जनिष्ठाः । उग्रः । सहसे । तुराय । मन्द्रः । ओजिष्ठः । बहुलऽअभिमानः ।
अवर्धन् । इन्द्रम् । मरुतः । चित् । अत्र । माता । यत् । वीरम् । दधनत् । धनिष्ठा ॥ १ ॥

हे इन्द्र vसहसे बलाय vतुराय शत्रूणां हिंसनाय त्वम् vउग्रः उद्गूर्णबलः vजनिष्ठाः अजायथाः । कीदृशस्त्वम् । vमन्द्रः स्तुत्यः vओजिष्ठः । ओजः शरीरबलम्[1] । अतिशयेन तद्वान् । vबहुलाभिमानः भूयिष्ठाभिमानी । ईदृशं महानुभावम् vइन्द्रम् vअत्र वृत्रवधे vमरुतश्चित् मरुतोऽपि vअवर्धन् स्तुत्या साहाय्येन वा वर्धितवन्तः । vयत् यदा vधनिष्ठा धारयित्रीन्द्रमाता[2] vवीरं vदधनत् अधारयत् ॥

द्रुहो निषत्ता पृशनी चिदेवैः पुरू शंसेन वावृधुष्ट इन्द्रम् ।
अभीवृतेव ता महापदेन ध्वान्तात्प्रपित्वादुदरन्त गर्भाः ॥ २ ॥

द्रुहः । निऽसत्ता । पृशनी । चित् । एवैः । पुरु । शंसेन । ववृधुः । ते । इन्द्रम् ।
अभिवृताऽइव । ता । महाऽपदेन । ध्वान्तात् । प्रऽपित्वात् । उत् । अरन्त । गर्भाः ॥ २ ॥

vद्रुहः द्रोग्धुरिन्द्रस्य vपृशनी vचित् सेनापि vनिषत्ता तत्संनिधौ निषण्णाभूत् । vएवैः गन्तृभिर्मरुद्भिः सहितमिन्द्रं निषण्णेति संबन्धः । vते अपि मरुतः vपुरु प्रभूतेन vशंसेन स्तोत्रेण vइन्द्रं vववृधुः अवर्धयन् वृत्रं जिघांसन्तम् । अथ vमहापदेन महता व्रजेन vअभीवृतेव परिवृतानीव गवादीनि तानि यथावरणापगमे निर्गच्छन्ति तद्वत् तान्युदकानि[3] vध्वान्तात् अन्धकाररूपात् vप्रपित्वात् आसन्नात्प्राप्ताद्वृत्रात् vगर्भाः गर्भभूतान्युदकानि vउदरन्त उदगच्छन् ॥

ऋष्वा ते पादा प्र यज्जिगास्यवर्धन्वाजा उत ये चिदत्र ।
त्वमिन्द्र सालावृकान्त्सहस्रमासन्दधिषे अश्विना ववृत्याः ॥ ३ ॥

ऋष्वा । ते । पादा । प्र । यत् । जिगासि । अवर्धन् । वाजाः । उत । ये । चित् । अत्र ।
त्वम् । इन्द्र । सालावृकान् । सहस्रम् । आसन् । दधिषे । अश्विना । आ । ववृत्याः ॥ ३ ॥

हे इन्द्र vते vपादा पादौ vऋष्वा महान्तौ । तादृशस्त्वं vयत् यदा vजिगासि गच्छसि तदानीं vवाजाः ऋभवः vअवर्धन् अवर्धयन् । vउत अपि च vये vचित् ये केचन देवाः सन्ति तेऽप्यवर्धयन् । हे vइन्द्र vत्वं vसहस्रं vसालावृकान् vआसन् आस्ये vदधिषे धारयसि । तदानीम् vअश्विना अश्विनावपि vआ vववृत्याः आवर्तयेः[4] ॥

सुमना तूर्णिरुप यासि यज्ञमा नासत्या सख्याय वक्षि ।
वसाव्यामिन्द्र धारयः सहस्राश्विना शूर ददतुर्मघानि ॥ ४ ॥

---

१. ग-त२.३-भ२-मु—शारीर° । २. ग४—°माता तं । ३. ग४—ता तान्युदकानि । ४. ग—आवर्तय; त४.५—अवर्तयः ।

सऽमना । तूर्णिः । उप । यासि । यज्ञम् । आ । नासत्या । सख्याय । वक्षि ।
वसाव्याम् । इन्द्र । धारयः । सहस्रा । अश्विना । शूर । ददतुः । मघानि ॥ ४ ॥

हे इन्द्र समना संग्रामे तूर्णिः त्वरमाणोऽपि यज्ञम् उप यासि उपगच्छसि । तदानीं नासत्या अश्विनौ सख्याय वक्षि वहसि । हे इन्द्र वसाव्यां वसुसमूहं सहस्रा सहस्रां[1] बहुसंख्यां धारयः धारयस्यस्माकमर्थाय । हे शूर अश्विना अश्विनावपि तवानुचरौ मघानि धनानि ददतुः अस्मभ्यं प्रयच्छतः ॥

मन्दमान ऋतादधि प्रजायै सखिभिरिन्द्र इषिरेभिरर्थम् ।
आभिर्हि माया उप दस्युमागान्मिहः प्र तम्रा अवपत्तमांसि ॥ ५ ॥

मन्दमानः । ऋतात् । अधि । प्रऽजायै । सखिऽभिः । इन्द्रः । इषिरेभिः । अर्थम् ।
आ । आभिः । हि । मायाः । उप । दस्युम् । आ । अगात् ।
मिहः । प्र । तम्राः । अवपत् । तमांसि ॥ ५ ॥

इन्द्रः[2] ऋतात् यज्ञात् अधि इषिरेभिः गमनशीलैः सखिभिः मरुद्भिः सह मन्दमानः माद्यन् प्रजायै यजमानाय अर्थं धनं प्रयच्छति । स चेन्द्रः आभिः प्रजाभिर्निमित्तभूताभिः मायाः दस्युसंबन्धिनीर्विनाशयितुं दस्युम् उप आगात् । स दस्युः तम्राः अवर्षणेन ग्लापयित्रीः मिहः वृष्टीः प्र अवपत् व्यनाशयदित्यर्थः । तमांसि ‾ ‾ ‾ ॥ ॥ ३ ॥

सनामाना चिद् ध्वसयो न्यस्मा अवाहन्निन्द्र उषसो यथानः ।
ऋष्वैरगच्छः सखिभिर्निकामैः साकं प्रतिष्ठा हृद्या जघन्थ ॥ ६ ॥

सऽनामाना । चित् । ध्वसयः । नि । अस्मै । अव । अहन् । इन्द्रः । उषसः । यथा । अनः ।
ऋष्वैः । अगच्छः । सखिऽभिः । निऽकामैः । साकम् । प्रतिऽस्था । हृद्या । जघन्थ ॥ ६ ॥

अयमिन्द्रो वृत्रं हन्तुं सनामाना चित् समाननामानौ नि ध्वसयः न्यगमयत् । अथ इन्द्रः तं वृत्रम् अवाहन् अवहतवान् । यथा उषसः अनः शकटमवनाशितवान् तद्वत् । अथ प्रत्यक्षेणोच्यते । हे इन्द्र त्वम् ऋष्वैः दीप्तैः महद्भिर्वा निकामैः नितरां वृत्रवधं कामयमानैः सखिभिः मरुद्भिः साकं वृत्रं हन्तुम् अगच्छः । आगत्य च प्रतिष्ठा प्रतिष्ठानानि शरीराणि हृद्या हृद्यानि रमणीयानि जघन्थ हतवानसि । हन्तेस्थलि ‘ उपदेशेऽत्वतः ’ इतीट्प्रतिषेधः ॥

त्वं जघन्थ नमुचिं मखस्युं दासं कृण्वान ऋषये विमायम् ।
त्वं चकर्थ मनवे स्योनान्पथो देवत्राञ्जसेव यानान् ॥ ७ ॥

त्वम् । जघन्थ । नमुचिम् । मखस्युम् । दासम् । कृण्वानः । ऋषये । विऽमायम् ।
त्वम् । चकर्थ । मनवे । स्योनान् । पथः । देवऽत्रा । अञ्जसाऽइव । यानान् ॥ ७ ॥

हे इन्द्र त्वं नमुचिम् एतत्संज्ञकमसुरं जघन्थ हतवानसि । कीदृशम् । मखस्युम् ऋषेर्यज्ञं विधातुमिच्छन्तं[3] यद्वा त्वदीयं धनमिच्छन्तम् । किं कुर्वन् । दासम् उपक्षपयितारं नमुचिमसुरम्

१. त-भ-सहस्रं । २. ग-त-भ-हे इंद्र । ३. ग४-त१.२.३.६.७.८-भ१.४-विधातुमिच्छंतं; त४.५-विज्ञातुमिच्छंतं ।

ऋषये मनवे विमायं विगतमायं कृण्वानः कुर्वन्। किंच त्वं देवत्रा देवेषु मध्ये मनवे ऋषये सामान्येन मनुष्याय वा पथः मार्गान् स्योनान् चकर्थ कृतवानसि। अथवा देवत्रा देवेषु मध्ये गन्तव्यान् मार्गानिति वा संबन्धः। स्योनांश्चकर्थेत्युक्तमेव विवृणोति। अञ्जसेव यानान् इति। इवेत्येवकारार्थे। अञ्जसैवाकुटिलेनैव यानान् गन्तृन् मार्गानकरोः अथवा मार्गेणाकुटिलेनैव गन्तृंश्चकर्थ। यथा लोकेस्रुघ्नं गतो मार्गः काञ्चीं गतो मार्ग इति मार्गस्य गन्तृत्वोपचारः तद्वदत्रापि यातृत्वं द्रष्टव्यम्॥

त्वमे॒तानि॑ पप्रिषे॒ वि नामेशा॑न इन्द्र दधिषे॒ गभ॑स्तौ।
अनु॑ त्वा दे॒वाः शव॑सा मदन्त्यु॒परि॑बुध्नान्व॒निन॑श्चकर्थ॥ ८॥

त्वम्। ए॒तानि॑। प॒प्रि॒षे॒। वि। नाम॑। ईशा॑नः। इ॒न्द्र॒। द॒धि॒षे॒। गभ॑स्तौ।
अनु॑। त्वा॒। दे॒वाः। शव॑सा। म॒द॒न्ति॒। उ॒परि॑ऽबुध्नान्। व॒निन॑ः। च॒क॒र्थ॒॥ ८॥

हे इन्द्र त्वमेतानि नाम नामानि नामकान्युदकानि वि पप्रिषे विपूरयसि। हे इन्द्र ईशानः सर्वस्येश्वरस्त्वं गभस्तौ हस्ते दधिषे धारयसि वज्रं धनं वा। किंच त्वा त्वां शवसा बलेनोपेतं देवाः सर्वे अनु मदन्ति अनुष्टुवन्ति। स त्वं वनिनः उदकवतो मेघान् रश्मीन्वा उपरिबुध्नान् उपरिमूलान् अधोमुखान् चकर्थ कृतवानसि॥

च॒क्रं यद॑स्या॒प्स्वा निष॑त्तमु॒तो तद॑स्मै॒ मध्विच्च॑च्छद्यात्।
पृ॒थि॒व्यामति॑षितं॒ यदूध॒ः पयो॒ गोष्वद॑धा॒ ओष॑धीषु॥ ९॥

च॒क्रम्। यत्। अ॒स्य॒। अ॒प्ऽसु। आ। निऽस॑त्तम्। उ॒तो इति॑। तत्। अ॒स्मै॒। मधु॑। इत्।
च॒च्छ॒द्या॒त्। पृ॒थि॒व्याम्। अति॑ऽसितम्। यत्। ऊध॑ः। पय॑ः। गोषु॑। अद॑धाः। ओष॑धीषु॥९॥*

अ॒श्वादि॑या॒येति॒ यद्वद॒न्त्योज॑सो जा॒तमु॒त म॑न्य एनम्।
म॒न्योरि॑याय ह॒र्म्येषु॑ तस्थौ॒ यत॑ः प्रज॒ज्ञ इन्द्रो॑ अस्य वेद॥ १०॥

* ग१.२-अस्येंद्रस्य चक्रमायुधं यदप्सु अंतरिक्षे निषण्णं उतो अपि च तदायुधमस्मा इंद्राय मधु चच्छद्यात् वशं नयति।' यत् पृथिव्यामतिषितं निमित्तं ऊधः ऊधसो मेघात् तदुदकं पयः गोष्वोषधीषु चादधाः स्थापितवानसि; ग४- ----- पृथिव्यामतिषितं विमुक्तं यदूधः उदरमस्ति तत् त्वया गोष्वोषधीषु चादधा इति; त१.२-मु-परामासित्वे हननार्थं उतो चित् अपि वा अस्मा इंद्राय मध्वित् ( मध्वितत्-मु ) उदकमपि चच्छद्यात् वरान् प्रति ( 'वरान्प्रति' नास्ति-मु ) पृथिव्यामतिषितं विमुक्तं यदुधर्मस्ति ( यदधर्मस्ति-मु ) उदकमस्ति ननापो गोष्ठादिषु वादधा इति; त७-हे इंद्र अस्य सूर्यरूपस्य तव यत् चक्रं रश्मिवृंदं अप्सूदकेषु आ निषत्तं आ समंतात् निषण्णं भवति रात्रौ उतो अनंतरं तत् रश्मिवृंदं अस्मै तुभ्यं मधु जलं चच्छद्यात् समर्पयति किंच यचक्रं ऊधः रात्रिरूपं सत् पृथिव्यां अतिषितं अतिशयेन बद्धं भवति तेन चक्रेण गोषु ओषधीषु च पयः क्षीरं अंबु च अदधाः धृतवानसि। अयमर्थः कृष्णं नियानं ( ऋ. सं. १. १६४. ४७ ) इति मंत्रे व्यक्तीकृतः। इदिति पूरणः॥ सामवेदसंहितासायणभाष्ये ( १. ४.१.४.९ ) अस्य मन्त्रस्य भाष्यमुपलभ्यते तद्यथा-अस्येन्द्रस्य चक्रमायुधमप्स्वन्तरिक्ष आ सर्वतो निषत्तं निषण्णमासीन्मेघहननार्थमुतो तदपि चास्मा इन्द्राय मध्विदुदकमपि चच्छद्यात् वशं नयति। पृथिव्यामतिषितं विमुक्तं यदूधरुदकमस्ति तत्पयो गोष्वोषधीषु चादधाः आदधाति॥

अश्वात्। इयाय। इति। यत्। वदन्ति। ओजसः। जातम्। उत। मन्ये। एनम्।
मन्योः। इयाय। हर्म्येषु। तस्थौ। यतः। प्रऽजज्ञे। इन्द्रः। अस्य। वेद॥ १०॥

इन्द्रसामर्थ्यं दृष्ट्वा केचिदेनम् ᵛअश्वात् आदित्यात् ᵛइयाय उदितवान् ᵛइति ᵛवदन्ति ᵛयत्[1] यद्यपि ᵛउत तथापि अहम् ᵛएनं ᵛओजसः बलात् ᵛजातं ᵛमन्ये जानामि। अस्य तेजस्वित्वं दृष्ट्वा सूर्यादुत्पन्न[2] इति तेषां मतिः। अहं त्वोजःपदार्थाज्जात इति मन्ये यतोऽयं वृत्रादीन् हतवानिति। अथवायं ᵛमन्योः क्रोधात् ᵛइयाय उदितवान्। अतः ᵛहर्म्येषु शत्रुसंबन्धिषु युद्धेषु हर्म्येष्वेव वा ᵛतस्थौ तिष्ठति। ᵛयतः अयं ᵛप्रजज्ञे उत्पन्न इति ᵛइन्द्रः एव ᵛअस्य। स्वस्येत्यर्थः। सामर्थ्यं ᵛवेद जानाति न ह्यन्यो ज्ञातुमीष्टे॥

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान्॥ ११॥

वयः। सुऽपर्णाः। उप। सेदुः। इन्द्रम्। प्रियऽमेधाः। ऋषयः। नाधमानाः।
अप। ध्वान्तम्। ऊर्णुहि। पूर्धि। चक्षुः। मुमुग्धि। अस्मान्। निधयाऽइव। बद्धान्॥ ११॥

ᵛवयः गन्तारः ᵛसुपर्णाः सुपतना आदित्यरश्मयः ᵛइन्द्रम् ᵛउप ᵛसेदुः उपसन्ना अभवन्। कीदृशाः। ᵛप्रियमेधाः प्रिययज्ञाः ᵛऋषयः द्रष्टारः ᵛनाधमानाः प्रज्ञां याचमानाः। याचनप्रकार उच्यते। हे इन्द्र ᵛध्वान्तम् अन्धकारम् ᵛअप ᵛऊर्णुहि परिहर ᵛपूर्धि पूरय च ᵛचक्षुः तेजः। ᵛमुमुग्धि मोचय च ᵛअस्मान् ᵛनिधयेव ᵛबद्धान्। निधा पाश्या भवति। पाश्या पाशसमूहः। पाशसमूहेन बद्धान् यथा मुञ्चन्ति तद्वत्। अत्र 'वयो वेर्बहुवचनम्' (निरु. ४. ३) इत्यादि निरुक्तं द्रष्टव्यम्॥ ॥ ४॥

'वसूनाम्' इति षडृचं षष्ठं सूक्तम्। ऋष्याद्याः पूर्ववत्। 'वसूनां षट्' इत्यनुक्रान्तम्। गतो विनियोगः॥

वसूनां वा चर्कृष इयक्षन्धिया वा यज्ञैर्वा रोदस्योः।
अर्वन्तो वा ये रयिमन्तः सातौ वनुं वा ये सुश्रुणं सुश्रुतो धुः॥ १॥

वसूनाम्। वा। चर्कृषे। इयक्षन्। धिया। वा। यज्ञैः। वा। रोदस्योः।
अर्वन्तः। वा। ये। रयिऽमन्तः। सातौ।
वनुम्। वा। ये। सुऽश्रुणम्। सुऽश्रुतः। धुरिति धुः॥ १॥

ᵛइयक्षन् धनानि दातुमिच्छन्निन्द्रः ᵛवसूनां धनानां लाभाय ᵛवा ᵛचर्कृषे अपकृष्यते। ᵛधिया ᵛवा। धीः कर्म धार्यमाणत्वात्। युद्धादिकर्मणा वा निमित्तेनाकृष्यते। ᵛयज्ञैर्वा निमित्तभूतैः कृष्यते। कैरिति उच्यते। ᵛरोदस्योः द्यावापृथिव्योः संबन्धिभिर्देवैः मनुष्यैश्चेत्यर्थः। ᵛसातौ संग्रामे जेतव्ये सति ᵛये ᵛअर्वन्तो ᵛवा गच्छन्तः ᵛरयिमन्तः भवन्ति तैरप्याकृष्यते। ᵛये ᵛवनुं ᵛवा हिंसां वा ᵛसुश्रुणं सुप्रसिद्धामत्यन्तदुर्जयविषयां ᵛसुश्रुतः सुश्रवसः प्रसिद्धाः कुर्वन्ति तैरपीन्द्र आकृष्यत इति॥

१. त-भ१.६.७.८–'यत्' नास्ति। २. ग-त-भ–सूर्य उत्पन्न।

ह॒वं ए॒षाम॑सु॒रो न॑क्षत॒ द्यां श्र॑व॒स्य॒ता मन॑सा निंसत॒ क्षाम् ।
चक्षा॑णा॒ यत्र॑ सुवि॒ताय॑ दे॒वा द्यौर्न वारे॑भिः कृ॒णव॑न्त॒ स्वैः ॥ २ ॥

ह॒वः । ए॒षाम् । असु॑रः । न॒क्ष॒त । द्याम् । श्र॒व॒स्यता । मन॑सा । निं॒स॒त । क्षाम् ।
चक्षा॑णाः । यत्र॑ । सु॒वि॒ताय॑ । दे॒वाः । द्यौः । न । वारे॑भिः । कृ॒णव॑न्त । स्वैः ॥ २ ॥

ᵛएषाम् अनुष्ठातॄणामङ्गिरसां ᵛहवः आह्वानशब्दः ᵛअसुरः इन्द्रस्य प्रेरकः ᵛद्यां दिवं ᵛनक्षत व्याप्नोत् । तत्रत्या इन्द्रसंबन्धिनो देवाः ᵛश्रवस्यता अन्नमिच्छता ᵛमनसा ᵛक्षां पृथिवीं ᵛनिंसत प्राप्तवन्तः । ᵛयत्र यस्यां पृथिव्यां ᵛचक्षाणाः पणिभिरपहृता गाः पश्यन्तः ᵛदेवाः ᵛसुविताय सुष्ठु हिताय स्वात्मनोऽभ्युदयाय ᵛद्यौर्न आदित्य इव ᵛवारेभिः वरणीयैः ᵛस्वैः तेजोभिः ᵛकृणवन्त प्रकाशमकुर्वन् । गवां प्रदानायान्धकारमपनेतुमिति शेषः । अथवा । एषां यज्विनामपहृतानां गवां हवोऽसुर इन्द्रस्य प्रेरयिता सन्नक्षत । इन्द्रप्रेरिता अङ्गिरसः ᵛश्रवस्यता अन्नं कीर्तिं वेच्छता मनसा क्षां भूमिं निंसत । अनुष्ठातॄणां गाः प्रदर्शयितुमित्यर्थः । इतरत्समानम् ॥

इ॒यमे॑षाम॒मृता॑नां गीः स॒र्वता॑ता॒ ये कृ॒पण॑न्त॒ रत्न॑म् ।
धियं॑ च य॒ज्ञं च॒ साध॑न्त॒स्ते नो॑ धान्तु वसु॒व्य॑१॒मसा॑मि ॥ ३ ॥

इ॒यम् । ए॒षाम् । अ॒मृता॑नाम् । गीः । स॒र्वऽता॑ता । ये । कृ॒पण॑न्त । रत्न॑म् ।
धियं॑म् । च॒ । य॒ज्ञम् । च॒ । साध॑न्तः । ते । नः॒ । धा॒न्तु॒ । व॒सव्य॑म् । अस॑ामि ॥ ३ ॥

ᵛइयमेषाममृतानां यष्टव्यानां देवानां ᵛगीः स्तुतिः क्रियत इति शेषः । ᵛये देवाः ᵛसर्वताता सर्वतातौ यज्ञे ᵛकृपणन्त प्रयच्छन्ति[1] याच्यन्ते वा ᵛरत्नं रमणीयं धनम् । ᵛधियं ᵛच अस्मदीयां स्तुतिं च ᵛयज्ञं ᵛच ᵛसाधन्तः साधयन्तः ᵛते ᵛनः अस्मभ्यं ᵛवसव्यं वसुसमूहम् ᵛअसामि अनल्पमसाधारणं वा ᵛधान्तु प्रयच्छन्तु ॥

आ तत्त॑ इन्द्रा॒यवः॑ पनन्ता॒भि य ऊ॒र्वं गोम॑न्तं॒ तितृ॑त्सान् ।
स॒कृत्स्वं॒१॒ ये पु॑रुपु॒त्रां म॒हीं स॒हस्र॑धारां बृ॒ह॒तीं दुदु॑क्षन् ॥ ४ ॥

आ । तत् । ते॒ । इ॒न्द्र॒ । आ॒यवः॑ । प॒न॒न्त॒ । अ॒भि । ये । ऊ॒र्वम् । गोऽम॑न्तम् । तितृ॑त्सान् ।
स॒कृ॒त्ऽस्व॑म् । ये । पु॒रु॒ऽपु॒त्राम् । म॒हीम् । स॒हस्र॑ऽधाराम् । बृ॒ह॒तीम् । दुदु॑क्षन् ॥ ४ ॥

हे ᵛइन्द्र ᵛते तव ᵛआयवः मनुष्या अङ्गिरसः ᵛतत् तदा ᵛपनन्त ᵛआ सर्वतः पनन्त स्तूयन्ते । ᵛये[2] अङ्गिरसः ᵛगोमन्तम् ᵛऊर्वं संघं पणिभिरपहृतं प्राप्तं ᵛतितृत्सान् हिंसितुमैच्छन् । तृदेर्हिंसार्थस्य सनन्तस्य लेव्याडागमः । यद्योगादनिघातः । अभ्यस्तस्वरः । ᵛये चाङ्गिरसः ᵛसकृत्स्वम् । या सकृत्सूते सा सकृत्सूः । तां सकृत्प्रजातां ᵛपुरुपुत्रां बह्वोषधिवनस्पतिरूपपुत्रां[3] ᵛसहस्रधारां बहुलकामाना-मुत्पादयित्रीं ᵛबृहतीं विस्तृतां ᵛमहीं भूमिम् । यद्वा । पुरुपुत्रां बह्वोषधिवनस्पतिरूपपुत्रां सहस्रधारां बहुकामवर्षित्रीं महीं महतीं पूज्यां वा बृहतीं परिमाणरहितां दिवं ᵛदुधुक्षन् दुदुहुः । ते पनन्तेति संबन्धः । ' सकृद्ध द्यौरजायत ' ( ऋ. सं. ६. ४८. २२ ) इत्याद्युक्तम् ॥

१. त१.२.३.७–प्रियंति; भ–प्रयंति । २. ग-त-भ-मु–' ये ' नास्ति । ३. ग-भ२–वृष्टिलक्षण-बहुपुत्रोपेतां ।

शचीव इन्द्रमवसे कृणुध्वमनानतं दमयन्तं पृतन्यून् ।
ऋभुक्षणं मघवानं सुवृक्तिं भर्ता यो वज्रं नर्यं पुरुक्षुः ॥ ५ ॥

शचीऽवः । इन्द्रम् । अवसे । कृणुध्वम् । अनानतम् । दमयन्तम् । पृतन्यून् ।
ऋभुक्षणम् । मघऽवानम् । सुऽवृक्तिम् । भर्ता । यः । वज्रम् । नर्यम् । पुरुऽक्षुः ॥ ५ ॥

हे शचीवः कर्मवन्तो यजमानाः । व्यत्ययेनैकवचनम् । इन्द्रं देवम् अवसे रक्षणाय कृणुध्वं कुरुध्वम् । कीदृशमिन्द्रम् । अनानतं कदाचिदपि परेषामनवनतं पृतन्यून् पृतना इच्छतः शत्रून् दमयन्तं वशं प्रापयन्तं ऋभुक्षणं महान्तं मघवानं धनवन्तं सुवृक्तिं सुष्टुतिम् । यः पुरुक्षुः बहुशब्द इन्द्रः नर्यं नरेभ्यो हितम् । असुरविघातित्वात्[1] । तादृशं वज्रं भर्ता बिभर्ति तमिन्द्रमवसे कृणुध्वमिति ॥

निष्केवल्ये 'यद्वावान' इत्येषा धाय्या । सूत्रितं च—'यद्वावानेति धाय्या पिबा सुतस्य रसिन इति सामप्रगाथः' ( आश्व. श्रौ. ५. १५ ) इति । महाव्रतेऽप्येषा । तथैव पञ्चमारण्यके सूत्रितं च—'यद्वावानेति धाय्या सूददोहाः' ( ऐ. आ. ५. २. २ ) इति ॥

यद्वावान पुरुतमं पुराषाळा वृत्रहेन्द्रो नामान्यप्राः ।
अचेति प्रासहस्पतिस्तुविष्मान् यदीमुश्मसि कर्तवे करत्तत् ॥ ६ ॥

यत् । ववान । पुरुऽतमम् । पुराषाट् । आ । वृत्रऽहा । इन्द्रः । नामानि । अप्राः ।
अचेति । प्रऽसहः । पतिः । तुविष्मान् । यत् । ईम् । उश्मसि । कर्तवे । करत् । तत् ॥ ६ ॥

यत् यदा पुरुतमम् अत्यन्तं प्रवृद्धतमं वृत्रं ववान हन्ति पुराषाट् शत्रुपुराणामभिभविता इन्द्रः तदानीम् आ अनन्तरमेव वृत्रहेन्द्रः नामानि उदकानि अप्राः[2] पूरयति । व्यत्ययेन मध्यमः । सोऽयमिन्द्रः प्रासहः शत्रूणां प्रकर्षेणाभिभविता पतिः सर्वस्य स्वामी तुविष्मान् । तुवीति बहुनाम तत्सामर्थ्याद्धनं परिगृह्यते । बहुधन इत्यर्थः । ईदृशः सन् अचेति सर्वैः प्रज्ञातः[3] । स महानिन्द्रः यदीं यदेतत्कर्म उश्मसि वयं कामयामहे तत् करत् करोत्येव । इदं भवत्विदं भवत्विति यत्कामयामहे तत्तदानीमेव करोत्येव नोदास्त इत्यर्थः । 'सैतदेव प्रत्यपद्यत यद्वावान पुरुतमं पुराषाट्' ( ऐ. ब्रा. ३. २२ ) इत्यादिकं ब्राह्मणमत्र द्रष्टव्यम् ॥ ॥ ५ ॥

'प्र सु वः' इति नवर्चं सप्तमं सूक्तं प्रियमेधपुत्रस्य सिन्धुक्षित आर्षं जागतं नदीदेवताकम् । तथा चानुक्रान्तं—'प्र सु नव सिन्धुक्षित्प्रैयमेधो नदीस्तुतिर्जगतं तु' इति । गतो विनियोगः ॥

प्र सु व आपो महिमानमुत्तमं कारुर्वोचाति सदने विवस्वतः ।
प्र सप्तसप्त त्रेधा हि चक्रमुः प्र सृत्वरीणामति सिन्धुरोजसा ॥ १ ॥

प्र । सु । वः । आपः । महिमानम् । उत्ऽतमम् । कारुः । वोचाति । सदने । विवस्वतः ।
प्र । सप्तऽसप्त । त्रेधा । हि । चक्रमुः । प्र । सृत्वरीणाम् । अति । सिन्धुः । ओजसा ॥ १ ॥

---

१. ग४-त१.२.३-भ२-मु—असुरविघातकत्वात्; भ१.४.६.८—असुरविघातत्वात् । २. ग-त७—आप्राः । ३. ग—अज्ञायि ।

हे आपः[1] वः युष्माकं महिमानं महत्त्वं स्तोत्रम् उत्तमम् उत्कृष्टतमं कारुः स्तोता सिन्धुक्षिदहं विवस्वतः परिचरणवतो यजमानस्य सदने यज्ञगृहे सु[2] सुष्ठु प्र वोचाति प्रब्रवीमि। ता नद्यः सप्तसप्त भूत्वा त्रेधा पृथिव्यामन्तरिक्षे दिवि चेति त्रेधा त्रिप्रकारं चक्रमुः प्रावहन्। सृत्वरीणाम् आसां मध्ये सिन्धुः एतन्नामिका नदी ओजसा स्वबलेन अति सर्वा अपि नदीरतिक्रम्य प्र वहतीति शेषः ॥

प्र तेऽरदद्वरुणो यातवे पथः सिन्धो यद्वाजाँ अभ्यद्रवस्त्वम् ।
भूम्या अधि प्रवता यासि सानुना यदेषामग्रं जगतामिरज्यसि ॥ २ ॥

प्र । ते । अरदत् । वरुणः । यातवे । पथः । सिन्धो इति । यत् । वाजान् । अभि । अद्रवः । त्वम् ।
भूम्याः । अधि । प्रऽवता । यासि । सानुना । यत् । एषाम् । अग्रम् । जगताम् । इरज्यसि ॥२॥

हे सिन्धो देवि ते तव यातवे गमनाय वरुणः देवः पथः मार्गान् प्र अरदत् प्राचीनं व्यलिखत्। सा हि प्राक् प्रवहति। अथवा प्रकृष्टमितरनदीभ्योऽप्यत्यन्तं विस्तृतं व्यदारयत्। यत् यस्मात् हे सिन्धो वाजान्[3] अन्नान्यभिलक्ष्य त्वम् अभ्यद्रवः अभ्यगच्छः[4]। किंच त्वं भूम्याः अधि उपरि सानुना समुच्छ्रितेन प्रवता मार्गेण[5] यासि गच्छसि। सिन्धुः खलु पर्वतान्विभिद्य गता। यत् येन समुच्छ्रितेन मार्गेण गच्छन्ती त्वम् एषां सर्वेषां जगतां जङ्गमानां प्राणिनाम् अग्रं प्रत्यक्षम् इरज्यसि ईशिषे ॥

दिवि स्वनो यतते भूम्योपर्यनन्तं शुष्ममुदियर्ति भानुना ।
अभ्रादिव प्र स्तनयन्ति वृष्टयः सिन्धुर्यदेति वृषभो न रोरुवत् ॥ ३ ॥

दिवि । स्वनः । यतते । भूम्या । उपरि । अनन्तम् । शुष्मम् । उत् । इयर्ति । भानुना ।
अभ्रात्ऽइव । प्र । स्तनयन्ति । वृष्टयः । सिन्धुः । यत् । एति । वृषभः । न । रोरुवत् ॥३॥

भूम्योपरि भूमेरुपरि प्रवर्तमानः स्वनः दिवि यतते गच्छति। दिवं व्याप्नोति। सेयं सिन्धुः अनन्तम् अपर्यन्तं शुष्मं वेगं भानुना दीप्तेनोर्मिणा उदियर्ति उद्गमयति। अभ्रादिव अन्तरिक्षाद्यथा वृष्टयः प्र स्तनयन्ति तद्वदस्याः[6] शब्दाः प्रादुर्भवन्ति। यत् यदा सिन्धुः इयं रोरुवत् भृशं शब्दयन्[7] वृषभो न वृषभ इव एति गच्छति तदैवं भवति ॥

अभि त्वा सिन्धो शिशुमिन्न मातरो वाश्रा अर्षन्ति पयसेव धेनवः ।
राजेव युध्वा नयसि त्वमित्सिचौ यदासामग्रं प्रवतामिनक्षसि ॥ ४ ॥

अभि । त्वा । सिन्धो इति । शिशुम् । इत् । न । मातरः । वाश्राः । अर्षन्ति । पयसाऽइव । धेनवः ।
राजाऽइव । युध्वा । नयसि । त्वम् । इत् । सिचौ ।
यत् । आसाम् । अग्रम् । प्रऽवताम् । इनक्षसि ॥ ४ ॥

---

१. ग—आपः महानद्यः। २. त-भ—'सु' नास्ति। ३. त-भ-मु—वाजानभि। ४. ग—अभ्यगच्छः। महानद्यस्तत्र सप्त वरुणं गंतुमुद्यताः। प्रजार्थं वरुणो मार्गमकरोत् सरितां पतिरिति स्मृतेः। ५. ग-त-भ—'मार्गेण' नास्ति। ६. त-भ—तद्वदस्यां। ७. ग—शब्दायमानः।

हे ᵛसिन्धो ᵛत्वा त्वां ᵛशिशुमिव ᵛमातरः मातरः पुत्रमिव ᵛवाश्राः शब्दयन्त्य इतरा नद्यः ᵛअभि ᵛअर्षन्ति अभिगच्छन्ति। ᵛपयसेव ᵛधेनवः पयसा युक्ता नवप्रसूतिका गाव इव। किंच ᵛयुध्वा युद्धकृत् ᵛराजेव ᵛत्वमित् त्वमेव ᵛसिचौ सिच्यमानौ तटौ ᵛनयसि उदकपूरं ᵛयत् यदा ᵛआसां ᵛप्रवतां त्वया सह गच्छन्तीनाम् ᵛअग्रम् अग्रे ᵛइनक्षसि व्याप्नोषि। सर्वासां पुरतो गच्छसि॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया॥ ५॥

इमम्। मे। गङ्गे। यमुने। सरस्वति। शुतुद्रि। स्तोमम्। सचत। परुष्णि। आ।
असिक्न्या। मरुत्ऽवृधे। वितस्तया। आर्जीकीये। शृणुहि। आ। सुऽसोमया॥ ५॥

अत्र प्रधानभूताः सप्त नद्यस्तदवयवभूता नद्यस्तिस्रः[1] स्तूयन्ते। हे ᵛगङ्गे हे ᵛयमुने हे ᵛसरस्वति हे ᵛशुतुद्रि हे ᵛपरुष्णि। हे ᵛअसिक्न्या अवयवभूतया सहिते ᵛमरुद्वृधे हे ᵛवितस्तया ᵛसुषोमया च सहिते ᵛआर्जीकीये त्वं च एवं सप्त नद्यो यूयं ᵛमे ᵛस्तोमं स्तोत्रमस्मदीयम् ᵛआ ᵛसचत आसेवध्वम्। ᵛशृणुहि शृणुत च। आर्जीकीयाया वितस्तया सुषोमया च साहित्यं निरुक्त उक्तं—' वितस्तया चार्जीकीय आ शृणुहि सुषोमया च ' इति। अत्र ' गङ्गा गमनात् ' (निरु. ९.२६) इत्यादि निरुक्तं द्रष्टव्यम्॥ ॥ ६॥

तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे॥ ६॥

तृष्टऽअमया। प्रथमम्। यातवे। सऽजूः। सुऽसर्त्वा। रसया। श्वेत्या। त्या।
त्वम्। सिन्धो इति। कुभया। गोऽमतीम्। क्रुमुम्। मेहत्न्वा। सऽरथम्। याभिः। ईयसे॥ ६॥

हे ᵛसिन्धो ᵛत्वं ᵛक्रुमुं क्रमणशीलां ᵛगोमतीं नदीं ᵛयातवे[2] प्रतियातुं पर्वतादवरूढा ᵛप्रथमं ᵛतृष्टामया नद्या ᵛसजूः संगतासि। पश्चात् ᵛसुसर्त्वा ᵛरसया ᵛश्वेत्या ᵛत्या ᵛकुभया ᵛमेहत्न्वा च सह सजूर्भव ᵛयाभिः त्वं ᵛसरथं समानं रथमारुह्य ᵛईयसे गच्छसि॥

ऋजीत्येनी रुशती महित्वा परि ज्रयांसि भरते रजांसि।
अदब्धा सिन्धुरपसामपस्तमाश्वा न चित्रा वपुषीव दर्शता॥ ७॥

ऋजीती। एनी। रुशती। महिऽत्वा। परि। ज्रयांसि। भरते। रजांसि।
अदब्धा। सिन्धुः। अपसाम्। अपःऽतमा। अश्वा। न। चित्रा। वपुषीऽइव। दर्शता॥ ७॥

ᵛऋजीती ऋजुगामिनी ᵛएनी श्वेतवर्णा ᵛरुशती दीप्यमाना सिन्धुः ᵛज्रयांसि वेगवन्ति ᵛरजांसि उदकानि ᵛपरि ᵛभरते प्रभरति। तादृशी ᵛअदब्धा अहिंसिता ᵛसिन्धुः ᵛअपसां कर्मवतीनां मध्ये ᵛअपस्तमा वेगाख्यकर्मवती भवति। ᵛअश्वा ᵛन वडवेव ᵛचित्रा चायनीया ᵛवपुषी वपुष्मती योषित् ᵛइव ᵛदर्शता दर्शनीया भवति॥

१. त-मु—तिस्रः। २. त-भ—' यातवे ' नास्ति।

स्वश्वा सिन्धुः सुरथा सुवासा हिरण्ययी सुकृता वाजिनीवती ।
ऊर्णावती युवतिः सीलमावत्युताधि वस्ते सुभगा मधुवृधम् ॥ ८ ॥

सुऽअश्वा । सिन्धुः । सुऽरथा । सुऽवासाः । हिरण्ययी । सुऽकृता । वाजिनीऽवती ।
ऊर्णाऽवती । युवतिः । सीलमाऽवती । उत । अधि । वस्ते । सुऽभगा । मधुऽवृधम् ॥ ८ ॥

सेयं सिन्धुः स्वश्वा शोभनाश्वोपेता सुरथा शोभनरथा सुवासाः शोभनवसना हिरण्ययी हिरण्मयाभरणा सुकृता वाजिनीवती अन्नवती ऊर्णावती । तस्याः समीपे देशे हि सन्त्यूर्णाः यासां रोमभिः कम्बलाः क्रियन्ते । युवतिः नित्यतरुणी सर्वदा हीनोदका सीलमावती[1] । सीराणि यथौषध्या रज्जुभूतया बध्यन्ते सा सीलमेति निगद्यते कृषीवलैः । तादृगोषध्युपेता । उत अपि च सुभगा सिन्धुः मधुवृधं मधुवर्धकं निर्गुण्ड्यादिकम् अधि वस्ते आच्छादयति । तस्यास्तीरे निर्गुण्ड्यादीनि बहूनि सन्ति ॥

सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ ।
महान् ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥ ९ ॥

सुऽखम् । रथम् । युयुजे । सिन्धुः । अश्विनम् । तेन । वाजम् । सनिषत् । अस्मिन् । आजौ ।
महान् । हि । अस्य । महिमा । पनस्यते । अदब्धस्य । स्वऽयशसः । विऽरप्शिनः ॥ ९ ॥

सिन्धुः देवता सुखं सुखकरं शोभनद्वारं वा अश्विनम् अश्ववन्तं रथं युयुजे युनक्ति । तेन रथेन वाजम् अन्नं सनिषत् प्रयच्छतु । अस्मिन्नाजौ संग्रामे यज्ञे वा अस्य सिन्धुरथस्य महिमा महान् हि पनस्यते स्तूयते । कीदृशस्यास्य । अदब्धस्य अन्यैरहिंस्यस्य स्वयशसः स्वायत्तकीर्तेः विरप्शिनः । महन्नामैतत् । महतः ॥ ॥ ७ ॥

'आ वः' इत्यष्टर्चमष्टमं सूक्तम् । इरावतः पुत्रस्य सर्पजातेर्जरत्कर्णनाम्न आर्षं जागतम् । सोमाभिषवार्था ये ग्रावाणस्तद्देवत्यम् । तथा चानुक्रान्तम्—'आ वोऽष्टौ सर्प ऐरावतो जरत्कर्णो ग्राव्णोऽस्तौत्' इति । ग्रावस्तोत्र एतत्सूक्तम् । सूत्रितं च—'आ व ऋञ्जसे प्र वो ग्रावाण इति सूक्तयोरन्तरोपरिष्टात्पुरस्ताद्वा' (आश्व. श्रौ. ५. १२) इति ॥

आ व ऋञ्जस ऊर्जां व्युष्टिष्विन्द्रं मरुतो रोदसी अनक्तन ।
उभे यथा नो अहनी सचाभुवा सदःसदो वरिवस्यात उद्भिदा ॥ १ ॥

आ । वः । ऋञ्जसे । ऊर्जाम् । विऽउष्टिषु । इन्द्रम् । मरुतः । रोदसी इति । अनक्तन ।
उभे इति । यथा । नः । अहनी इति । सचाऽभुवा । सदःऽसदः । वरिवस्यातः । उत्ऽभिदा ॥ १ ॥

हे ग्रावाणः वः युष्मान् ऊर्जां सारभूतानामन्नवतीनां वोषसां व्युष्टिषु विभातेषु[2] सत्सु आ ऋञ्जसे आप्रसाधयामि । यूयं सोमेन इन्द्रं मरुतो रोदसी द्यावापृथिव्यौ च अनक्तन व्यञ्जयत । नः अस्मान् उभे सचाभुवा सहोत्पन्ने[3] अहनी द्यावापृथिव्यौ सदःसदः सर्वेषु यागगृहेषु वरिवस्यातः परिचरतः । उद्भिदा उद्भेदकेन धनेन पूरयतामिति[4] ॥

---

१. त-भ१.२.४.६.८-मु-सीरमावती । २. ग४-विभावेषु; त-भ१.२.४.६.८-मु-विभागेषु । ३. ग४-त-भ-सहोत्पन्नेन । ४. त-भ-मु-पूरयतमिति ।

तदु श्रेष्ठं सवनं सुनोतनात्यो न हस्तयतो अद्रिः सोतरि ।
विदद्ध्य१र्यो अभिभूति पौंस्यं महो राये चित्तरुते यदर्वतः ॥ २ ॥

तत् । ऊँ इति । श्रेष्ठम् । सवनम् । सुनोतन । अत्यः । न । हस्तऽयतः । अद्रिः । सोतरि ।
विदत् । हि । अर्यः । अभिऽभूति । पौंस्यम् । महः । राये । चित् । तरुते । यत् । अर्वतः ॥२॥

हे ग्रावाणः यूयं ᵛतदु तमेव[1] ᵛश्रेष्ठं प्रशस्यं ᵛसवनं सोमं ᵛसुनोतन अभिषुणुत । अथैकवदाह । ᵛअद्रिः अभिषवग्रावा ᵛहस्तयतः हस्ताभ्यां गृहीतः सन् ᵛअत्यो ᵛन धृतोऽश्व इव भवति ᵛसोतरि अभिषवकर्तर्यध्वर्यौ । स यथा हस्ताभ्यां दृढं गृहीतोऽपि वल्गति तद्वत् । ᵛअर्यः ग्राव्णामभिषवाय प्रेरको यजमानः ᵛअभिभूति शत्रूणामभिभावुकं ᵛपौंस्यं बलं ᵛविदद्धि लभते खलु देवेभ्यः । यद्वा । अभिषवायाध्वर्य्वादेः[2] प्रेरितो[3] ग्रावाभिभूति पौंस्यं विदद्यजमानार्थम् । किंच ᵛमहे महते ᵛराये ᵛचित् धनायापि ᵛयत् यो ग्रावा ᵛअर्वतः अश्वान् ᵛतरुते तनुते प्रयच्छति ॥

तदिद्ध्यस्य सवनं विवेरपो यथा पुरा मनवे गातुमश्रेत् ।
गोअर्णसि त्वाष्ट्रे अश्वनिर्णिजि प्रेमध्वरेष्वध्वराँ अशिश्रयुः ॥ ३ ॥

तत् । इत् । हि । अस्य । सवनम् । विवेः । अपः । यथा । पुरा । मनवे । गातुम् । अश्रेत् ।
गोऽअर्णसि । त्वाष्ट्रे । अश्वऽनिर्णिजि । प्र । ईम् । अध्वरेषु । अध्वरान् । अशिश्रयुः ॥ ३ ॥

ᵛइत् इति पूरणः । ᵛअस्य ग्राव्णः ᵛतत् ᵛसवनम् अभिषवोपेतमस्मदीयं सोमयागाख्यम् ᵛअपः कर्म ᵛविवेः व्याप्नोतु । विपूर्वस्य वेतेर्लङ्यदादित्वाच्छपो लुक् । वेतेर्विपूर्वस्य वा छान्दसे श्नौ वापररूपमिति संदेहादनवग्रहः । समासस्वरः । ᵛयथा ᵛपुरा ᵛमनवे राज्ञे ᵛगातुं गमनम् ᵛअश्रेत् आजगाम तद्वत्[4] व्याप्नोतु । किंच ᵛगोअर्णसि गोरूपे अपहृतैर्गोभिः परिवृते तथा ᵛअश्वनिर्णिजि । निर्णिगिति रूपनाम । अश्वरूपे । अपहृतैरश्वैर्वृत इत्यर्थः । ईदृशे ᵛत्वाष्ट्रे त्वष्टुः पुत्रे हन्तव्ये सतीति शेषः । ᵛईम् एतान् ᵛअध्वरान् असुरैरहिंस्यानध्वरसाधकान् वोपलान् ᵛअध्वरेषु ᵛअशिश्रयुः आश्रयन्ति पूर्वे यजमानाः ॥

अप हत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम् ।
आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः ॥ ४ ॥

अप । हत । रक्षसः । भङ्गुरऽवतः । स्कभायत । निःऽऋतिम् । सेधत । अमतिम् ।
आ । नः । रयिम् । सर्वऽवीरम् । सुनोतन । देवऽअव्यम् । भरत । श्लोकम् । अद्रयः ॥४॥

हे ᵛअद्रयः यूयम् ᵛअप ᵛहत विनाशयत ᵛरक्षसः राक्षसान् । कीदृशान् । ᵛभङ्गुरावतः भञ्जकेन कर्मणा तद्वतः । तथा ᵛस्कभायत दूरे परिहरत ᵛनिर्ऋतिं पापदेवताम् । यथामुं यज्ञं नागच्छति तथा । किंच[5] ᵛसेधत निषेधत ᵛअमतिं हिंसामतिं रक्षःप्रभृतिम्[5] । किंच ᵛनः अस्माकं ᵛसर्ववीरं बहुपुत्राद्युपेतं ᵛरयिं धनम् ᵛआ ᵛसुनोतन । अभिषवेन पुत्रधनादीनां लाभादेवमुक्तम् । किंच ᵛदेवाव्यं देवप्रीणनं ᵛश्लोकं[6] ᵛभरत संपादयत ॥

---

१. त-तदेव । २. भ-अभिषवायाध्वर्य्वादयः । ३. ग-त१.२.३.४.५.७-भ२-प्रेरयिता; त६.८-भ१.४.६-प्रेरिता । ४. त-भ-तत् । ५. त६.८-भ-'किंच ...... रक्षःप्रभृतिं' नास्ति । ६. ग-श्लोकं शब्दं हे अद्रयः ।

दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः ।
वायोश्चिदा सोमरभस्तरेभ्योऽग्नेश्चिदर्च पितुकृत्तरेभ्यः ॥ ५ ॥

दिवः । चित् । आ । वः । अमवत्ऽतरेभ्यः । विऽभ्वना । चित् । आश्वपःऽतरेभ्यः ।
वायोः । चित् । आ । सोमरभःऽतरेभ्यः । अग्नेः । चित् । अर्च । पितुकृत्ऽतरेभ्यः ॥५॥

ᵛदिवश्चित् आदित्यादपि ᵛअमवत्तरेभ्यः अत्यन्तं बलवद्भ्यः ᵛवः युष्मभ्यम् ᵛआ ᵛअर्च अस्तौदध्वर्युः। यद्वा । हे अध्वर्य्वादयः वो यूयमुच्यमानलक्षणेभ्यो ग्रावभ्य आ सर्वतोऽर्च अर्चतेत्येवं प्रतिवाक्यं योज्यम्। ᵛविभ्वना ᵛचित्। विभ्वा सुधन्वनः पुत्रः । तेनापि ᵛआश्वपस्तरेभ्यः शीघ्रकर्मभ्य इत्यर्थः । विभ्वादीनां त्रयाणां चमसादिशीघ्रकर्म प्रसिद्धम् । ᵛवायोश्चित् वायोरपि ᵛसोमरभस्तरेभ्यः सोमाभिषवार्थेनात्यन्तेन वेगेन युक्तेभ्यः। वायोरपि ग्रावाणो वेगवन्तो भवन्ति सोमाभिषवार्थम्। ᵛअग्नेश्चित् अग्नेरपि ᵛपितुकृत्तरेभ्यः अत्यन्तमन्नसाधकेभ्यः । ईदृशेभ्यो ग्रावभ्यः प्रीणनाय यूयमर्चतेति॥ ॥८॥

भुरन्तु नो यशसः सोत्वन्धसो ग्रावाणो वाचा दिविता दिवित्मता ।
नरो यत्र दुहते काम्यं मध्वाघोषयन्तो अभितो मिथस्तुरः ॥ ६ ॥

भुरन्तु । नः । यशसः । सोतु । अन्धसः । ग्रावाणः । वाचा । दिविता । दिवित्मता ।
नरः । यत्र । दुहते । काम्यम् । मधु । आऽघोषयन्तः । अभितः । मिथःऽतुरः ॥ ६ ॥

ᵛयशसः यशस्विनः ᵛग्रावाणः ᵛनः अस्मभ्यं ᵛसोतु सुतम् ᵛअन्धसः सोमस्य रसं ᵛभुरन्तु भरन्तु संपादयन्तु। उकारश्छान्दसः। किंच ᵛदिवित्मता दीप्तिमत्या। लिङ्गव्यत्ययः। ᵛवाचा स्तुतिवाचा ᵛदिविता दिवितायां दीप्तिमत्तायां वास्मान् कुर्वन्तु। सोमयागे स्थापयन्त्वित्यर्थः। कैषा[1] दीप्तिमत्तेति उच्यते। ᵛनरः नेतार ऋत्विजः ᵛयत्र यागे ᵛकाम्यं कमनीयं ᵛमधु सोमरसं ᵛदुहते। किं कुर्वन्तः। ᵛआघोषयन्तः सर्वतोऽभिषवशब्दं स्तोत्रशस्त्रादिरूपं वा शब्दं कुर्वन्तः। ᵛअभितः सर्वतः ᵛमिथस्तुरः त्वरमाणाः। सा दीप्तिमत्तेति ॥

सुन्वन्ति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहन्ति ते ।
दुहन्त्यूधरुपसेचनाय कं नरो हव्या न मर्जयन्त आसभिः ॥ ७ ॥

सुन्वन्ति । सोमम् । रथिरासः । अद्रयः । निः । अस्य । रसम् । । गोऽइषः । दुहन्ति । ते ।
दुहन्ति । ऊधः । उपऽसेचनाय । कम् । नरः । हव्या । न । मर्जयन्ते । आसऽभिः ॥७॥

ᵛरथिरासः रथवन्तो[2] रंहणवन्तः ᵛअद्रयः ग्रावाणः ᵛसोमं ᵛसुन्वन्ति। ग्रावाणः ᵛअस्य सोमस्य ᵛरसं ᵛनिः ᵛदुहन्ति निःशेषेण दुहन्ति। ᵛगविषः स्तुतिवाचमिच्छन्तः सन्तः। ᵛदुहन्ति ᵛऊधः रसं सोमसंबन्धिनम्। किमर्थम्। ᵛउपसेचनाय अग्नेः। ᵛकम् इति पादपूरणः। ᵛनरः नेतारोऽभिषवकर्तार ऋत्विजः ᵛहव्या ᵛन हवींषि वाग्न्युपसेचनानन्तरम् ᵛआसभिः स्वास्यैः ᵛमर्जयन्ते शोधयन्ति। शेषभक्षणेन शुद्धीकुर्वन्ति। यद्वा। अग्नौ होतुर्दशापवित्रात्पुरासभिरास्योपलक्षितैः स्तोत्रैर्मर्जयन्ते ॥

---

१. ग-त१.२.३.७.८-भ-मु-कैषा; त६-केषा। २. ग-त१.२.३.६.७.८-भ-‘रथवन्तो’ नास्ति।

एते नरः स्वपसो अभूतन य इन्द्राय सुनुथ सोममद्रयः ।
वामंवामं वो दिव्याय धाम्ने वसुवसु वः पार्थिवाय सुन्वते ॥ ८ ॥

एते । नरः । सुऽअपसः । अभूतन । ये । इन्द्राय । सुनुथ । सोमम् । अद्रयः ।
वामम्ऽवामम् । वः । दिव्याय । धाम्ने । वसुऽवसु । वः । पार्थिवाय । सुन्वते ॥ ८ ॥

हे ᵛनरः नेतारः हे ᵛअद्रयः ᵛएते यूयं ᵛस्वपसोऽभूतन शोभनाभिषवकर्माणो भवत । ᵛये यूयम् ᵛइन्द्राय ᵛसोमं ᵛसुनुथ ᵛवः यूयं ᵛवामंवामं यद्यद्वननीयं धनमस्ति तत्तत् ᵛदिव्याय ᵛधाम्ने तेजसे कुरुत । तथा ᵛवसुवसु यद्यद्वासयोग्यं धनमस्ति तत् ᵛवः यूयं ᵛपार्थिवाय ᵛसुन्वते यजमानाय कुरुत ॥ ॥ ९ ॥

'अभ्रप्रुषः' इत्यष्टर्चं नवमं सूक्तं भृगुगोत्रस्य स्यूमरश्मेरार्षं मरुद्देवताकम् । पञ्चमी जगती शिष्टाः सप्त त्रिष्टुभः । तथा चानुक्रान्तम्—'अभ्रप्रुषः स्यूमरश्मिर्भार्गवो मारुतं तु पञ्चमी जगती' इति । गतो विनियोगः ॥

अभ्रप्रुषो न वाचा प्रुषा वसु हविष्मन्तो न यज्ञा विजानुषः ।
सुमारुतं न ब्रह्माणमर्हसे गणमस्तोष्येषां न शोभसे ॥ १ ॥

अभ्रऽप्रुषः । न । वाचा । प्रुष । वसु । हविष्मन्तः । न । यज्ञाः । विऽजानुषः ।
सुऽमारुतम् । न । ब्रह्माणम् । अर्हसे । गणम् । अस्तोषि । एषाम् । न । शोभसे ॥ १ ॥

ᵛअभ्रप्रुषो ᵛन मेघान्निर्गच्छन्त उदकबिन्दव इव ᵛवाचा स्तुत्या प्रीता मरुतः ᵛवसु धनं ᵛप्रुष सिञ्चन्ति । व्यत्ययेन बहुवचनम् । किंच ᵛहविष्मन्तो ᵛन ᵛयज्ञाः हविर्भिर्युक्ता यागा इव ᵛविजानुषः जगतो विजनयितारो भवन्ति । अथ समुदायेनाह । तेषाम् ᵛएषां ᵛसुमारुतं[1] शोभनानां मरुतां ᵛब्रह्माणं महान्तं ᵛगणम् ᵛअर्हसे पूजार्थं ᵛन ᵛअस्तोषि नास्तौषम् । न स्तुतवानस्मीतः पूर्वम् । तथा ᵛशोभसे शोभार्थमपि मारुतं गणं ᵛन अस्तोषि । अत इदानीं नूतनेन स्तोत्रेण स्तौमीत्यर्थः ॥

श्रिये मर्यासो अञ्जीँरकृण्वत सुमारुतं न पूर्वीरति क्षपः ।
दिवस्पुत्रास एता न येतिर आदित्यासस्ते अक्रा न वावृधुः ॥ २ ॥

श्रिये । मर्यासः । अञ्जीन् । अकृण्वत । सुऽमारुतम् । न । पूर्वीः । अति । क्षपः ।
दिवः । पुत्रासः । एताः । न । येतिरे । आदित्यासः । ते । अक्राः । न । ववृधुः ॥ २ ॥

ᵛश्रिये शोभार्थं[2] ᵛमर्यासः मारका मनुष्यरूपा वा मरुतः । पूर्वं मनुष्याः सन्तः पश्चात्सुकृतविशेषेण ह्यमरा आसन् । ते ᵛअञ्जीन् अञ्जकान्याभरणानि ᵛअकृण्वत कुर्वन्ति । किमर्थम् । ᵛश्रिये स्वशरीरशोभनार्थम्[3] । ᵛसुमारुतं[4] शोभनानां मरुतां गणं ᵛपूर्वीः बह्व्यः ᵛक्षपः क्षपयित्र्यः सेनाः ᵛन ᵛअति न पराभावयन्तीति शेषः । किंच ᵛदिवः द्युदेवतायाः ᵛपुत्रासः पुत्राः ᵛएताः गन्तारः ᵛन ᵛयेतिरे निर्गच्छन्ति । ᵛते ᵛआदित्यासः अदितेः पुत्राः ᵛअक्राः आक्रमणशीला मरुतः ᵛन ᵛवावृधुः न वर्धन्ते । यतोऽस्माभिर्न स्तुता अत इति भावः ॥

---

१. ग-त-भ-सुमारुतं न । २. ग-त४.५-शोभनार्थं । ३. ग४-'शोभार्थं । ४. त-भ-तं सुमारुतं ।

प्र ये दिवः पृथिव्या न बर्हणा त्मना रिरिचे अभ्रान्न सूर्यः ।
पाजस्वन्तो न वीराः पनस्यवो रिशादसो न मर्या अभिद्यवः ॥ ३ ॥

प्र । ये । दिवः । पृथिव्याः । न । बर्हणा । त्मना । रिरिचे । अभ्रात् । न । सूर्यः ।
पाजस्वन्तः । न । वीराः । पनस्यवः । रिशादसः । न । मर्याः । अभिऽद्यवः ॥ ३ ॥

ये मरुतः दिवः पृथिव्या न पृथिव्याश्च । नेति चार्थे । बर्हणा महत्त्वेन त्मना आत्मनैव रिरिचे रिरिचिरे अतिरिक्ता अभवन् स्वशरीरेण अभ्रान्न[1] अभ्रादिव[2] सूर्यः[2] । किंच पाजस्वन्तो न वीराः बलवन्तो वीरा इव पनस्यवः स्तुतिकामा भवन्ति । किंच रिशादसो न मर्याः रिशतामसितारो मनुष्या इव अभिद्यवः अभिगतदीप्तयो भवन्ति ॥

युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही श्रथर्यति ।
विश्वप्सुर्यज्ञो अर्वागयं सु वः प्रयस्वन्तो न सत्राच आ गत ॥ ४ ॥

युष्माकम् । बुध्ने । अपाम् । न । यामनि । विथुर्यति । न । मही । श्रथर्यति ।
विश्वऽप्सुः । यज्ञः । अर्वाक् । अयम् । सु । वः । प्रयस्वन्तः । न । सत्राचः । आ । गत ॥४॥

हे मरुतः युष्माकं बुध्ने परस्परसंघाते अपां न यामनि प्रवृद्धानामुदकानां गमन इव मही महती भूः न विथुर्यति न व्यथते । नापि श्रथर्यति न विशीर्णा भवति । शीघ्रगतयोऽपि यूयमेनां न पीडयध्वमित्यर्थः । विश्वप्सुः विश्वरूपः अयं यज्ञः यागसाधनं हविः वः युष्माकम् अर्वाक् अभिमुखं सु सुष्ठु गच्छति । प्रयस्वन्तो न अन्नवन्तः परिष्कर्तार इव सुखप्रदाः सन्तः सत्राचः सहाञ्चनाः आ गत आगच्छत । संघाकारेणागच्छतेत्यर्थः । 'सप्तगणा वै मरुतः' ( तै. सं. २. २. ५. ७ ) इति श्रुतेः ॥

यूयं धूर्षु प्रयुजो न रश्मिभिर्ज्योतिष्मन्तो न भासा व्युष्टिषु ।
श्येनासो न स्वयशसो रिशादसः प्रवासो न प्रसितासः परिप्रुषः ॥ ५ ॥

यूयम् । धूःऽसु । प्रऽयुजः । न । रश्मिऽभिः । ज्योतिष्मन्तः । न । भासा । विऽउष्टिषु ।
श्येनासः । न । स्वऽयशसः । रिशादसः । प्रवासः । न । प्रऽसितासः । परिऽप्रुषः ॥ ५ ॥

हे मरुतः यूयं धूर्षु रथसंबन्धिनीषु रश्मिभिः योक्त्रैः प्रयुजः प्रयुक्ता बद्धा अश्वा इव परिप्रुषः परितो गन्तारः स्थ । तथा ज्योतिष्मन्तो न तेजस्वन्त आदित्यादय इव भासा युक्ता भवथ व्युष्टिषु उषःसूदितासु । किंच श्येनासो न श्येना इव[3] स्वयशसः स्वायत्तयशसः ते यथा रिशादसः रिशतामसितारस्तद्वद्रिशादसः स्वायत्तयशसश्च । किंच प्रवासो न प्रवासिन इव पथिका इव प्रसितासः प्रसिद्धयानाः । उक्तरूपा मरुतः परिप्रुषः परितो गन्तारो भवथ ॥ ॥१०॥

प्र यद्वहध्वे मरुतः पराकाद्यूयं महः संवरणस्य वस्वः ।
विदानासो वसवो राध्यस्याराच्चिद्द्वेषः सनुतर्युयोत ॥ ६ ॥

[1] ग-त-भ—अभ्राम्न सूर्यः । [2] भ—'अभ्रादिव सूर्यः' नास्ति । [3] त-भ-मु—इव किंच ।

प्र । यत् । वहध्वे । मरुतः । पराकात् । यूयम् । महः । सम्ऽवरणस्य । वस्वः ।
विदानासः । वसवः । राध्यस्य । आरात् । चित् । द्वेषः । सनुतः । युयोत ॥ ६ ॥

हे मरुतः यूयं यत् यदा पराकात् अत्यन्तं दूरदेशात् वहध्वे[1] आगच्छथ तदानीं[2] महः महत् संवरणस्य संवरणीयं राध्यस्य संराधनीयं वस्वः वसु धनं विदानासः प्रयच्छन्तो हे वसवः यूयम् आराच्चित् दूरादेव युयोत पृथक्कुरुत । कानिति उच्यते । द्वेषः द्वेष्टॄन् । कीदृशान् । सनुतः अन्तर्हितान् । निगूढानित्यर्थः । सनुतरित्यन्तर्हितनाम ॥

य उदृचि यज्ञे अध्वरेष्ठा मरुद्भ्यो न मानुषो ददाशत् ।
रेवत्स वयो दधते सुवीरं स देवानामपि गोपीथे अस्तु ॥ ७ ॥

यः । उत्ऽऋचि । यज्ञे । अध्वरेऽस्थाः । मरुत्ऽभ्यः । न । मानुषः । ददाशत् ।
रेवत् । सः । वयः । दधते । सुऽवीरम् । सः । देवानाम् । अपि । गोऽपीथे । अस्तु ॥७॥

अध्वरेष्ठाः यागे सीदन् मानुषः यः[3] यजमानः यज्ञे उदृचि सति । ऋक्शब्देन स्तोत्रमुपलक्ष्यते । यज्ञे समाप्तस्तुतिके सति संपूर्णे सति मरुद्भ्यो न मरुद्भ्य इवान्येषामध्वर्युभ्य[4] ऋत्विगादिभ्यः ददाशत् दद्यात् । यद्वा यज्ञ उदृच्युपक्रान्त इत्यर्थः । तस्मिन् यज्ञे मरुद्भ्य इवान्यस्मै इन्द्राय ददाशत् ददाति । सः यजमानः रेवत् धनवत्[5] सुवीरं शोभनपुत्राद्युपेतं वयः अन्नं दधते धारयति । व्यत्ययेनैकवचनम् । स देवानाम् इन्द्रादीनाम् अपि गोपीथे सोमपाने अस्तु भवतु ॥

ते हि यज्ञेषु यज्ञियास ऊमा आदित्येन नाम्ना शंभविष्ठाः ।
ते नोऽवन्तु रथतूर्मनीषां महश्च यामन्नध्वरे चकानाः ॥ ८ ॥

ते । हि । यज्ञेषु । यज्ञियासः । ऊमाः । आदित्येन । नाम्ना । शम्ऽभविष्ठाः ।
ते । नः । अवन्तु । रथऽतूः । मनीषाम् । महः । च । यामन् । अध्वरे । चकानाः ॥ ८ ॥

ते हि ते खलु यज्ञेषु यागेषु यज्ञियासः यज्ञार्हा यष्टव्याः ऊमाः अवितारः आदित्येन नाम्ना आदित्यसंबन्धिनोदकेन शंभविष्ठाः सुखस्य भावयितारः । यद्वा । आदित्याख्येन नाम्नादित्यनामकेन देवेन सह शंभविष्ठाः । ते मरुतः नः अस्मान् अवन्तु । रथतूः रथतुरो रथस्य यज्ञगमनसाधनस्य त्वरयितारः सन्तः मनीषां स्तुतिमवन्तु रक्षन्तु । कीदृशास्ते । अध्वरे यामन् यागगमने महः महद्धविः चकानाः कामयमानाः ॥ ॥ १ ॥

'विप्रासः' इत्यष्टर्चं दशमं सूक्तम् । पञ्चम्याद्यास्तिस्रो द्वितीया चेति चतस्रो जगत्यः । शिष्टाश्चतस्रस्त्रिष्टुभः । पूर्ववदृषिदेवते । तथा चानुक्रान्तं—'विप्रासो द्वितीया पञ्चम्याद्याश्च तिस्रो जगत्यः' इति । गतो विनियोगः ॥

विप्रासो न मन्मभिः स्वाध्यो देवाव्यो३ न यज्ञैः स्वप्नसः ।
राजानो न चित्राः सुसंदृशः क्षितीनां न मर्या अरेपसः ॥ १ ॥

---

१. ग-प्रवहध्वे । २. ग-त४.५-तदानीं यूयं; त१.२.३.६.७.८-भ१.२.४.६.८-तदानीं सूर्यं । ३. त-भ-मु-'यः' नास्ति । ४. त-मु-'मध्वर्युप्रभृतिभ्यः । ५. त१.२.३.७-मु-रयिमत्; भ-'धनवत्' नास्ति ।

विप्रा॑सः । न । मन्म॑ऽभिः । सु॒ऽआ॒ध्यः॑ । दे॒व॒ऽअव्यः॑ । न । य॒ज्ञैः । सु॒ऽअ॒प्नसः॑ ।
राजा॑नः । न । चि॒त्राः । सु॒ऽसं॒दृशः॑ । क्षि॒तीना॑म् । न । मर्याः॑ । अ॒रे॒पसः॑ ॥ १ ॥

ᵛविप्रासो ᵛन विप्रा ब्राह्मणा इव ते यथा ᵛमन्मभिः स्तुतिभिः ᵛस्वाध्यः शोभनाध्याना भवन्ति एवं[1] मरुतोऽप्यस्मदीयैर्मन्मभिर्मननीयैः स्तोत्रैः स्वाध्यः सुमनसो भवन्ति । अथवा । मन्मभिः स्तोत्रैर्युक्ता विप्रासो न मेधाविनः स्तोतार इव स्वाध्यो यज्ञे यजमाने वा सुध्याना इत्यर्थः । तथा ᵛयज्ञैः यागैः ᵛदेवाव्यो ᵛन देवानां तर्पयितारो यजमाना इव ᵛस्वप्नसः । अप्न इति कर्मनाम । शोभनकर्माणः । ते यथा कर्मसु व्यापृता भवन्ति तद्वद्वृष्टिप्रदानादिकर्मसु व्यापृता इत्यर्थः । ᵛराजानो ᵛन मूर्धाभिषिक्ताः क्षितिपतय इव ᵛचित्राः चायनीयाः पूजनीयाः । यद्वा चित्राभरणाः । तथा ᵛसुसंदृशः सुष्ठु दर्शनीयाः । तथा ᵛक्षितीनां निवासानां स्वामिनः ᵛमर्याः ᵛन मनुष्या इव ᵛअरेपसः अपापाः । यथा प्रतिग्रहार्थमन्यत्रागत्वा स्वगृह एवानुतिष्ठन्तो निर्दोषा भवन्ति तादृशा इत्यर्थः । ईदृशाः शोभन्त इत्यर्थः ॥

अ॒ग्निर्न ये भ्राज॑सा रु॒क्मव॑क्षसो॒ वाता॑सो॒ न स्व॒युजः॑ स॒द्यऊ॑तयः ।
प्र॒ज्ञा॒तारो॒ न ज्येष्ठाः॑ सु॒नीत॑यः सु॒शर्मा॑णो॒ न सोमा॑ ऋ॒तं य॒ते ॥ २ ॥

अ॒ग्निः । न । ये । भ्राज॑सा । रु॒क्मऽव॑क्षसः । वाता॑सः । न । स्व॒ऽयुजः॑ । स॒द्यःऽऊ॑तयः ।
प्र॒ऽज्ञा॒तारः॑ । न । ज्येष्ठाः॑ । सु॒ऽनीत॑यः । सु॒ऽशर्मा॑णः । न । सोमाः॑ । ऋ॒तम् । य॒ते ॥ २ ॥

हे मरुतः ᵛअग्निर्न अग्निरिव स[2] यथा[3] ᵛभ्राजसा तेजसा शोभते तद्वद्भ्राजसा युक्ताः किंच ᵛरुक्मवक्षसः रुक्मालंकृतवक्षस्काः ᵛवातासो ᵛन प्रत्यक्षवाता इव ᵛस्वयुजः स्वयं[4] युज्यमानाः[4] ᵛसद्यऊतयः सद्योगमनाः ᵛप्रज्ञातारो ᵛन प्रकर्षेण ज्ञातारो ज्ञानिन इव ᵛज्येष्ठाः पूज्याः ᵛसुनीतयः सुनयनाः ᵛसुशर्माणो ᵛन ᵛसोमाः सुसुखाः सोमा इव ते यूयम् ᵛऋतं ᵛयते यज्ञं गच्छते यजमानाय गच्छतेति ॥

वाता॑सो॒ न ये धुन॑यो जिग॒त्नवो॑ऽग्नी॒नां न जि॒ह्वा वि॑रो॒किणः॑ ।
वर्म॑ण्वन्तो॒ न यो॒धाः शिमी॑वन्तः पितॄ॒णां न शंसाः॑ सु॒रात॑यः ॥ ३ ॥

वाता॑सः । न । ये । धुन॑यः । जि॒ग॒त्नवः॑ । अ॒ग्नीना॑म् । न । जि॒ह्वाः । वि॒ऽरो॒किणः॑ ।
वर्म॑ण्ऽवन्तः । न । यो॒धाः । शिमी॑ऽवन्तः । पि॒तॄ॒णाम् । न । शंसाः॑ । सु॒ऽरा॒तयः॑ ॥ ३ ॥

ᵛये मरुतः ᵛवातासो ᵛन वायव इव ᵛधुनयः शत्रूणां कम्पयितारः ᵛजिगत्नवः गमनशीलाः । अत्र मारुते सूक्ते मरुतामेव दृष्टान्तकथनं संचरणस्वभाववायुपदार्थतदभिमानिदेवताभेदेनाविरुद्धम् । तथा ᵛअग्नीनां ᵛन ᵛजिह्वाः अग्नीनां ज्वाला इव ᵛविरोकिणः विरोचनशीलमुखाः । तथा ᵛवर्मण्वन्तो ᵛन ᵛयोधाः कवचिनो योद्धार इव ᵛशिमीवन्तः शौर्यकर्मवन्तः । तथा ᵛपितॄणां ᵛन ᵛशंसाः पितॄणां जनकानां शंसा वाच इव ᵛसुरातयः सुदानाः । एवंमहानुभावा एते मरुतोऽस्मद्यज्ञमागच्छन्तु ॥

१. त-मु–एवमेते । २. ग-त-भ–' स ' नास्ति । ३. त४.५.७–' यथा ' नास्ति । ४. त-भ१. २.४.६.८–स्वयुज्यमानाः ।

रथानां न ये३ऽराः सनाभयो जिगीवांसो न शूरा अभिद्यवः ।
वरेयवो न मर्या घृतप्रुषोऽभिस्वर्तारो अर्कं न सुष्टुभः ॥ ४ ॥

रथानाम् । न । ये । अराः । सऽनाभयः । जिगीवांसः । न । शूराः । अभिऽद्यवः ।
वरेऽयवः । न । मर्याः । घृतऽप्रुषः । अभिऽस्वर्तारः । अर्कम् । न । सुऽस्तुभः ॥ ४ ॥

ᵛरथानां ᵛन रथचक्राणामिव ᵛअराः ते यथा बहवोऽपि ᵛसनाभयः समाननाभयो भवन्ति तद्वत् ᵛये परस्परं सनाभयः समानबन्धना एकस्मिन्नेवान्तरिक्षे वर्तमानाः । परस्परं बन्धुभूता इत्यर्थः । ᵛजिगीवांसो ᵛन ᵛशूराः जयशीलाः शूरा इव ᵛअभिद्यवः अभिगतदीप्तयः किंच ᵛवरेयवो ᵛन ᵛमर्याः वृतं वरं परस्मै प्रदातुमिच्छन्तो मनुष्या इव ᵛघृतप्रुषः उदकसेक्तारः । उदकपूर्वं हि वराणि वसूनि दीयन्ते नियमेन । वृष्ट्युदकप्रदा इत्यर्थः । किंच ᵛअभिस्वर्तारः ᵛअर्कं ᵛन अर्कमर्चनीयं स्तोत्रमभिस्वर्तारोऽभितः शब्दयितारो बन्दिन इव ᵛसुष्टुभः सुशब्दाः ॥

अश्वासो न ये ज्येष्ठास आशवो दिधिषवो न रथ्यः सुदानवः ।
आपो न निम्नैरुदभिर्जिगत्नवो विश्वरूपा अङ्गिरसो न सामभिः ॥ ५ ॥

अश्वासः । न । ये । ज्येष्ठासः । आशवः । दिधिषवः । न । रथ्यः । सुऽदानवः ।
आपः । न । निम्नैः । उदऽभिः । जिगत्नवः । विश्वऽरूपाः । अङ्गिरसः । न । सामऽभिः ॥५॥

ᵛये मरुतः ᵛअश्वासो ᵛन अश्वा इव ᵛज्येष्ठासः ज्येष्ठाः प्रशस्यतमाः ᵛआशवः शीघ्रगमनाः । तथा ᵛदिधिषवो ᵛन वसूनां धारका इव ᵛरथ्यः रथस्वामिनः ᵛसुदानवः सुदानाः । तथा ᵛआपो ᵛन आप इव ᵛनिम्नैः प्रवणगैः ᵛउदभिः उदकैः सह ᵛजिगत्नवः गमनशीलाः । तथा ᵛविश्वरूपाः नानारूपाः ᵛसामभिः युक्ताः ᵛअङ्गिरसो ᵛन अङ्गिरस इव । सर्वदा सामगा इत्यर्थः ॥ ॥ १२ ॥

ग्रावाणो न सूरयः सिन्धुमातर आदर्दिरासो अद्रयो न विश्वहा ।
शिशूला न क्रीळयः सुमातरो महाग्रामो न यामन्नुत त्विषा ॥ ६ ॥

ग्रावाणः । न । सूरयः । सिन्धुऽमातरः । आऽदर्दिरासः । अद्रयः । न । विश्वहा ।
शिशूलाः । न । क्रीळयः । सुऽमातरः । महाऽग्रामः । न । यामन् । उत । त्विषा ॥ ६ ॥

ᵛसूरयः उदकस्य प्रेरकाः ᵛग्रावाणो ᵛन मेघा इव ᵛसिन्धुमातरः नदीनिर्मातारः । ᵛआदर्दिरासः आदरणशीलानि ᵛअद्रयो ᵛन वज्राद्यायुधानीव ᵛविश्वहा सर्वदा शत्रूणां हन्तार इत्यर्थः । यद्वा । सर्वदा अद्रयो न वज्रा इव शत्रूणामादर्दिरास आदरणशीलाः । ᵛसुमातरः शोभनमातृकाः ᵛशिशूला ᵛन शिशव इव ᵛक्रीळयः विहर्तारः । ᵛउत अपि च ᵛमहाग्रामो ᵛन महाजनसंघ इव ᵛयामन् यामनि गमने ᵛत्विषा दीप्त्या युक्ता भवन्ति । तेऽस्मद्यज्ञमागच्छन्तु ॥

उषसां न केतवोऽध्वरश्रियः शुभंयवो नाञ्जिभिर्व्यश्वितन् ।
सिन्धवो न ययियो भ्राजदृष्टयः परावतो न योजनानि ममिरे ॥ ७ ॥

उषसाम् । न । केतवः । अध्वरऽश्रियः । शुभम्ऽयवः । न । अञ्जिऽभिः । वि । अश्वितन् ।
सिन्धवः । न । ययियः । भ्राजत्ऽऋष्टयः । पराऽवतः । न । योजनानि । ममिरे ॥ ७ ॥

ये मरुतः vउषसां vन vकेतवः उषसां रश्मय इव vअध्वरश्रियः यज्ञस्याश्रयितारो[1] भवन्ति। तथा vशुभंयवो vन कल्याणकामा वरा इव vअञ्जिभिः आभरणैः vव्यश्वितन् दीप्यन्ते । 'श्विता वर्णे'। लङि रूपम्। तथा vसिन्धवो vन नद्य इव vययियः गमनशीलाः vभ्राजदृष्टयः दीप्यमानायुधाः vपरावतो vन दूराध्वनीना वडवा इव vयोजनानि दूरदेशान् vममिरे परिच्छिन्दन्ति। तेऽस्मद्यज्ञमागच्छन्त्विति ॥

सुभागान्नो देवाः कृणुता सुरत्नानस्मान्त्स्तोतॄन्मरुतो वावृधानाः ।
अधि स्तोत्रस्य सख्यस्य गात सनाद्धि वो रत्नधेयानि सन्ति ॥ ८ ॥

सुऽभागान् । नः । देवाः । कृणुत । सुऽरत्नान् । अस्मान् । स्तोतॄन् । मरुतः । ववृधानाः ।
अधि । स्तोत्रस्य । सख्यस्य । गात । सनात् । हि । वः । रत्नऽधेयानि । सन्ति ॥ ८ ॥

अनया स्तुतिमुपसंहरति। हे vमरुतः vदेवाः vववृधानाः स्तुत्या वर्धमाना यूयं vस्तोतॄन् vनः अस्मान् vसुभागान् सुधनान् vकृणुत कुरुत। तथा vसुरत्नान् शोभनरत्नान् कृणुत । यद्वा । सुरत्नान् शोभनरमणीयस्तोत्रानस्मानिति संबन्धनीयम्। किंच यूयं vसख्यस्य vस्तोत्रस्य सखिभूतं स्तोत्रम् vअधि vगात अधिगच्छत। vवः युष्माकं vरत्नधेयानि रत्नदानानि अस्मद्विषयाणि vसनाद्धि चिरकालादारभ्य खलु vसन्ति ॥　　॥ १३ ॥

'अपश्यम्' इति सप्तर्चमेकादशं सूक्तमाग्नेयं त्रैष्टुभम्। सौचीकगुणोऽग्निर्ऋषिर्वैश्वानरगुणो वाथवा सप्तिर्नाम वाजंभरपुत्रः। तथा चानुक्रान्तम्—'अपश्यं सप्त सौचीकोऽग्निर्वैश्वानरो वा सप्तिर्वा वाजंभर आग्नेयं तु' इति। प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसीदमादिके द्वे सूक्ते। सूत्रितं च— 'अपश्यमस्य महत इति सूक्ते' ( आश्व. श्रौ. ४. १३ ) इति ॥

अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु ।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥ १ ॥

अपश्यम् । अस्य । महतः । महिऽत्वम् । अमर्त्यस्य । मर्त्यासु । विक्षु ।
नाना । हनू इति । विभृते इति विऽभृते । सम् । भरेते इति ।
असिन्वती इति । बप्सती इति । भूरि । अत्तः ॥ १ ॥

vअस्य अग्नेः vमहतः मंहनीयस्य vमहित्वं महत्त्वम् vअपश्यं पश्यामि। कीदृशस्यास्य। vमर्त्यासु vविक्षु मनुष्यरूपासु प्रजासु तासां हृदये vअमर्त्यस्य अमरणस्वभावस्य वैश्वानररूपेण वर्तमानस्य। यद्वा। मर्त्यासु विक्ष्वृत्विग्यजमानरूपासु प्रजास्वमर्त्यस्य सर्वदा जागरितस्य। अथ दावाग्निरूपोऽग्निरुच्यते। अस्याग्नेः vहनू शिप्रे vनाना vविभृते विभिन्ने vसं vभरेते संभरतो दन्तैः। तथा कृत्वा vअसिन्वती असंखादन्त्यौ स्तोतारं vबप्सती भक्षयन्त्यौ vभूरि प्रभूतं काष्ठमरण्ये वर्तमानम् vअत्तः भक्षयतः ॥

गुहा शिरो निहितमृधगक्षी असिन्वन्नत्ति जिह्वया वनानि ।
अत्राण्यस्मै पड्भिः सं भरन्त्युत्तानहस्ता नमसाधि विक्षु ॥ २ ॥

१. ग-त-भ१.२.४.६.८–यज्ञस्य सेवितारो ।

गुहा । शिरः । निऽहितम् । ऋधक् । अक्षी इति । असिन्वन् । अत्ति । जिह्वया । वनानि ।
अत्राणि । अस्मै । पट्ऽभिः । सम् । भरन्ति । उत्तानऽहस्ताः । नमसा । अधि । विक्षु ॥२॥

अस्याग्नेः ᵛशिरः मूर्धा ᵛगुहा गुहायां ᵛनिहितं मनुष्योदरेषु वर्तते । अस्य ᵛअक्षी अक्षिणी ᵛऋधक् पृथग्निहितं निहिते चन्द्रसूर्यात्मना । तावेवाक्षिणी इत्यर्थः । ईदृशो योऽग्निः ᵛअसिन्वन् दन्तैरसंखादन् ᵛजिह्वया ᵛवनानि ᵛअत्ति काष्ठानि भक्षयति दाहभूतः ᵛअस्मै अग्नयेऽध्वर्य्वादयः ᵛपड्भिः पादैरभिगत्य ᵛअत्राणि[1] ᵛसं ᵛभरन्ति संपादयन्ति हवींषि । कथंभूताः । ᵛउत्तानहस्ताः पात्रधारणार्थमुन्नतकराः ᵛनमसा नमस्कारेण युक्ताः । कुत्र । ᵛअधि ᵛविक्षु प्रजास्वृत्विक्षु मध्ये ॥

**प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः ।**
**ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥ ३ ॥**

प्र । मातुः । प्रऽतरम् । गुह्यम् । इच्छन् । कुमारः । न । वीरुधः । सर्पत् । उर्वीः ।
ससम् । न । पक्वम् । अविदत् । शुचन्तम् । रिरिह्वांसम् । रिपः । उपऽस्थे । अन्तरिति ॥३॥

अयमग्निः ᵛमातुः पृथिव्याः संबन्धिनीः ᵛउर्वीः बह्वीः ᵛवीरुधः लताः ᵛइच्छन् तथा ᵛप्रतरं प्रकृष्टतरं ᵛगुह्यं गोप्यं तासां वीरुधां मूलमपीच्छन् कामयमानः ᵛप्र ᵛसर्पत् प्रसर्पति प्रसरति । किमिव । ᵛकुमारो ᵛन कुमार इव । स यथा स्तन्यं पातुं जानुभ्यां सर्पति तद्वत् । ᵛससं ᵛन ᵛपक्वं पक्वमन्नमिव ᵛशुचन्तं दीप्यमानं नीरसं वृक्षं ᵛरिपः पृथिव्याः ᵛउपस्थे ᵛअन्तः उत्सङ्गेऽन्तः ᵛअविदत् विन्दति । पुनः कीदृशम् । ᵛरिरिह्वांसम् आकाशमास्वादयन्तम् । यद्वा । मूलैर्मातरं पृथिवीं रिरिह्वांसम् ॥

**तद्वामृतं रोदसी प्र ब्रवीमि जायमानो मातरा गर्भो अत्ति ।**
**नाहं देवस्य मर्त्यश्चिकेताग्निरङ्ग विचेताः स प्रचेताः ॥ ४ ॥**

तत् । वाम् । ऋतम् । रोदसी इति । प्र । ब्रवीमि । जायमानः । मातरा । गर्भः । अत्ति ।
न । अहम् । देवस्य । मर्त्यः । चिकेत । अग्निः । अङ्ग । विऽचेताः । सः । प्रऽचेताः ॥४॥

हे ᵛरोदसी द्यावापृथिव्यौ ᵛवां युवां ᵛतत् ᵛऋतं सत्यं ᵛप्र ᵛब्रवीमि यदरणिभ्यां ᵛजायमानः उत्पन्नः ᵛगर्भः गर्भस्थानीयोऽग्निः ᵛमातरा अरणी ᵛअत्ति भक्षयति । ᵛदेवस्य द्योतनादिगुणस्याग्नेः[2] वर्तनं ᵛमर्त्यः मनुष्यः ᵛअहं ᵛन ᵛचिकेत न जानामि । हे ᵛअङ्ग वैश्वानर ᵛअग्निः अरणीभ्यामुत्पन्नः ᵛविचेताः विविधज्ञानवान् ᵛस ᵛप्रचेताः[3] प्रकृष्टज्ञानः[4] । अतो न जानामीत्यर्थः । अथवाङ्गेत्यात्मानमेव संबोध्य ब्रवीमि । अग्निरेव विचेताः बहुधा जानाति स प्रचेताः[4] स एव जानाति । स्वमहिमानं नाहं स्तोतुं प्रभवामीत्यर्थः ॥

**यो अस्मा अन्नं तृष्वा३दधात्याज्यैर्घृतैर्जुहोति पुष्यति ।**
**तस्मै सहस्रमक्षभिर्वि चक्षेऽग्ने विश्वतः प्रत्यङ्ङसि त्वम् ॥ ५ ॥**

१. ग-त-भ–' अत्राणि ' नास्ति । २. त१.२.३.६.७.८-भ४.६.८-मु–द्योतमानादिगुणस्याग्नेः; त४.५–द्योतमानस्याग्नेः; भ१.२.७–दानादिगुणस्याग्नेः । ३. ग-त–प्रचेताः स एव । ४. भ–' प्रकृष्टज्ञानः ... प्रचेताः ' नाति ।

यः । अस्मै । अन्नम् । तृषु । आऽदधाति । आज्यैः । घृतैः । जुहोति । पुष्यति ।
तस्मै । सहस्रम् । अक्षऽभिः । वि । चक्षे । अग्ने । विश्वतः । प्रत्यङ् । असि । त्वम् ॥ ५ ॥

ᵛयः यजमानः ᵛअस्मै अग्नये ᵛतृषु क्षिप्रम् ᵛअन्नम् ᵛआदधाति करोति ᵛआज्यैर्घृतैः क्षरद्रूपैः[१] दीप्तैर्वा सोमरसैः ᵛजुहोति ᵛपुष्यति पुष्णाति चैनं काष्ठैः ᵛतस्मै । तमित्यर्थः । तं ᵛसहस्रं सहस्रसंख्याकैः ᵛअक्षभिः अक्षिस्थानीयाभिरपरिमिताभिर्ज्वालाभिः ᵛवि ᵛचक्षे विचष्टे[२] विपश्यति[२] । अथ प्रत्यक्षकृतः । हे ᵛअग्ने ᵛत्वं ᵛविश्वतः सर्वतः ᵛप्रत्यङ्ङसि प्रत्यगञ्चनो भवसि । अस्मदानुकूल्येन प्रवर्तमानो[३] भवसि ॥

किं देवेषु त्यज एनश्चकर्थाग्ने पृच्छामि नु त्वामविद्वान् ।
अक्रीळन् क्रीळन् हरिरत्तवेऽदन्वि पर्वशश्चकर्त गामिवासिः ॥ ६ ॥

किम् । देवेषु । त्यजः । एनः । चकर्थ । अग्ने । पृच्छामि । नु । त्वाम् । अविद्वान् ।
अक्रीळन् । क्रीळन् । हरिः । अत्तवे । अदन् ।
वि । पर्वऽशः । चकर्त । गाम्ऽइव । असिः ॥ ६ ॥

हे ᵛअग्ने ᵛत्वां ᵛनु क्षिप्रं ᵛदेवेषु ᵛकिं ᵛत्यजः क्रोधम् ᵛएनः पापं च[४] ᵛचकर्थ कृतवानसीति ᵛअविद्वान् अहं ᵛपृच्छामि । खाण्डवं दहन्तमग्निं पृच्छामि । किंच ᵛअक्रीळन् क्वचिद्देशेऽविहरन् ᵛक्रीळन् क्वचिद्देशे विनोदयँल्लीलया दहन् ᵛहरिः हरितवर्णः सन् ᵛअत्तवे अत्तव्यम् ᵛअदन् अन्नकाष्ठादिकं ᵛपर्वशः संधौ संधौ ᵛवि ᵛचकर्थ विविधं करोषि । ᵛगामिवासिः गां यथा असिः स्वधितिः पर्वशश्छिनत्ति तद्वत् ॥

विषूचो अश्वान्युयुजे वनेजा ऋजीतिभी रशनाभिर्गृभीतान् ।
चक्षदे मित्रो वसुभिः सुजातः समानृधे पर्वभिर्वावृधानः ॥ ७ ॥

विषूचः । अश्वान् । युयुजे । वनेऽजाः । ऋजीतिऽभिः । रशनाभिः । गृभीतान् ।
चक्षदे । मित्रः । वसुऽभिः । सुऽजातः । सम् । आनृधे । पर्वऽभिः । ववृधानः ॥ ७ ॥

अयमग्निः ᵛविषूचः विष्वगञ्चनान् ᵛअश्वान् व्यापान् महतो वृक्षान् सर्वतो गन्तॄनश्वानेव वा ᵛयुयुजे युङ्क्ते ᵛवनेजाः वने प्रवृद्धः संपन्नः सन् । कीदृशानश्वान् । ᵛऋजीतिभिः ऋजुगामिनीभिः ᵛरशनाभिः रशनास्थानीयाभिर्लताभिः ᵛगृभीतान्[५] परिगृहीतान् वेष्टितान् । साक्षादश्वपक्षे ऋजुगतिभिः[६] प्रसिद्धाभी रशनाभिर्गृभीतान् गृहीतान् स्वकीयानश्वान् शीघ्रदाहाय रथे योजितवानित्यर्थः । तादृशोऽग्निः ᵛचक्षदे चक्षाद[७] शकलीकरोति वसूनि ᵛमित्रः अस्माकं मित्रभूतः ᵛवसुभिः वासकैः रश्मिभिः ᵛसुजातः सुष्ठु प्रवृद्धः सन् । किंच ᵛसमानृधे सम्यग्वर्धते ᵛपर्वभिः काष्ठखण्डैः ᵛवावृधानः वर्धमानः ॥      ॥ १४ ॥

---

१. त-भ-अक्षरद्रूपैः । २. त१.२-विचक्षे विपश्यति; त३.६.८-भ६.८-विचष्टे विपश्यति; त४.५-विचष्टे; भ१.२.४.७-विचष्टे पश्यति । ३. त२.३.६.७.८-भ४.६.८-प्रवर्तनो । ४. ग-त-भ-'च' नास्ति । ५. त-भ-'गृभीतान्' नास्ति । ६. ग-ऋजुगंत्रीभिः; त१.२.३-भ-ऋजुगतित्रीभिः । ७. ग-त-भ-'चक्षाद' नास्ति ।

'अग्निः सप्तिम्' इति सप्तर्चं द्वादशं सूक्तं सौचीकस्य वैश्वानरस्याग्नेरार्षं त्रैष्टुभमाग्नेयम्। 'अग्निः सप्तिम्' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

अ॒ग्निः सप्तिं॑ वाजंभ॒रं द॑दात्य॒ग्निर्वी॒रं श्रुत्यं॑ कर्मनिः॒ष्ठाम्।
अ॒ग्नी रोद॑सी॒ वि च॑रत्सम॒ञ्जन्न॒ग्निर्नारीं॑ वी॒रकु॑क्षिं॒ पुरं॑धिम् ॥ १ ॥

अ॒ग्निः। सप्ति॑म्। वा॒ज॒म्ऽभ॒रम्। द॒दा॒ति। अ॒ग्निः। वी॒रम्। श्रुत्य॑म्। क॒र्म॒निः॒ऽस्थाम्।
अ॒ग्निः। रोद॑सी॒ इति॑। वि। च॒र॒त्। स॒म्ऽअ॒ञ्जन्।
अ॒ग्निः। नारी॑म्। वी॒रऽकु॑क्षिम्। पुर॑म्ऽधिम् ॥ १ ॥

अयम् ᐯअग्निः ᐯसप्तिं सर्पणस्वभावमश्वं ᐯवाजंभरं युद्धे शत्रून् जित्वान्नसंपादकं ᐯददाति स्तोतृभ्यः। तथा ᐯअग्निर्वीरं वीर्यवन्तं पुत्रं ᐯश्रुत्यं पितृव्यपदेशकं ᐯकर्मनिःष्ठां यागेऽनन्यचित्तं ददाति। ᐯअग्नी ᐯरोदसी द्यावापृथिव्यौ ᐯसमञ्जन् सम्यगञ्जयन् ᐯवि ᐯचरत् विविधं चरति। अयम् ᐯअग्निर्नारीं योषितं ᐯवीरकुक्षिं वीरप्रसवकुक्षिं ᐯपुरंधिं च करोति ॥

अ॒ग्नेरप्न॑सः स॒मिद॑स्तु भ॒द्राग्निर्म॒ही रोद॑सी॒ आ वि॑वेश।
अ॒ग्निरेकं॑ चोदयत्स॒मत्स्व॒ग्निर्वृ॒त्राणि॑ दयते पु॒रूणि॑ ॥ २ ॥

अ॒ग्नेः। अप्न॑सः। स॒म्ऽइत्। अ॒स्तु॒। भ॒द्रा। अ॒ग्निः। म॒ही इति॑। रोद॑सी॒ इति॑। आ। वि॒वे॒श।
अ॒ग्निः। एक॑म्। चो॒द॒य॒त्। स॒मत्ऽसु॑। अ॒ग्निः। वृ॒त्राणि॑। द॒य॒ते॒। पु॒रूणि॑ ॥ २ ॥

ᐯअप्नसः कर्मवतः ᐯअग्नेः ᐯसमित् ᐯभद्रा ᐯअस्तु। अयम् ᐯअग्निः ᐯमही महत्यौ[1] ᐯरोदसी द्यावापृथिव्यौ ᐯआ ᐯविवेश आविष्टवान् स्वतेजसा। तथायम् ᐯअग्निरेकम् असहायमेव ᐯचोदयत् चोदयति प्रेरयति ᐯसमत्सु संग्रामेषु[2]। युद्धे स्वभक्तं स्वयं सहायः सन् जयिनं करोतीत्यर्थः। तथा ᐯअग्निर्वृत्राणि ᐯपुरूणि बहून् शत्रून् ᐯदयते हन्ति ॥

अ॒ग्निर्ह॒ त्यं जर॑तः॒ कर्ण॑मावा॒ग्निर॒द्भ्यो निर॑दह॒ज्जरू॑थम्।
अ॒ग्निरत्रिं॑ घ॒र्म उ॑रुष्यद॒न्तर॒ग्निर्नृ॒मेधं॑ प्र॒जया॑सृज॒त्सम् ॥ ३ ॥

अ॒ग्निः। ह॒। त्यम्। जर॑तः। कर्ण॑म्। आ॒व॒। अ॒ग्निः। अ॒त्ऽभ्यः। निः। अ॒द॒ह॒त्। जरू॑थम्।
अ॒ग्निः। अत्रि॑म्। घ॒र्मे। उ॒रु॒ष्य॒त्। अ॒न्तः। अ॒ग्निः। नृ॒ऽमेध॑म्। प्र॒ऽजया॑। अ॒सृ॒ज॒त्। सम् ॥ ३ ॥

ᐯअग्निर्ह अयमग्निः खलु ᐯत्यं तं प्रसिद्धं ᐯजरतः ᐯकर्णं जरत्कर्णनामानमृषिम् ᐯआव ररक्ष। तथायम् ᐯअग्निः ᐯअद्भ्यः ᐯजरूथम् एतन्नामानमसुरम् ᐯनिरदहत् निर्दग्धवान्। तथा ᐯअग्निरत्रिं महर्षिं ᐯघर्मे ᐯअन्तः ऋबीसेऽवस्थितम् ᐯउरुष्यत् ररक्ष। तथायम् ᐯअग्निर्नृमेधम् एतन्नामकमृषिं ᐯप्रजया पुत्रादिलक्षणया ᐯसम् ᐯअसृजत् संयुयोज[3] ॥

अ॒ग्निर्दा॑द्द्रवि॑णं वी॒रपे॑शा अ॒ग्निरृषिं॒ यः स॒हस्रा॑ स॒नोति॑।
अ॒ग्निर्दि॒वि ह॒व्यमा त॑ताना॒ग्नेर्धामा॑नि॒ विभृ॑ता पुरु॒त्रा ॥ ४ ॥

---

१. ग-त-भ-मह्यौ। २. त१.२.३-भ-संग्रामे। ३. ग-समयोजयत्।

अग्निः । दात् । द्रविणम् । वीरऽपेशाः । अग्निः । ऋषिम् । यः । सहस्रा । सनोति ।
अग्निः । दिवि । हव्यम् । आ । ततान । अग्नेः । धामानि । विऽभृता । पुरुऽत्रा ॥ ४ ॥

अयम् अग्निः वीरपेशाः प्रेरकज्वालारूपः द्रविणं धनं दात् ददाति । तथा अग्निर्ऋषिं मन्त्रद्रष्टारं पुत्रं प्रयच्छतीति शेषः । ऋषिः[1] विशेष्यते । यः ऋषिः सहस्रा गवां सहस्राणि सनोति भजते दक्षिणात्वेन तमृषिं ददातीति । तथा अग्निः दिवि द्युलोके हव्यं यजमानैर्हुतम् आ ततान देवेषु विस्तारयति । तथा अग्नेर्धामानि शरीराणि विभृता विभृतानि संभृतानि पुरुत्रा बहुषु स्थानेष्वाहवनीयधिष्ण्यादिषु क्षित्यादिषु वा ॥

अग्निमुक्थैर्ऋषयो वि ह्वयन्तेऽग्निं नरो यामनि बाधितासः ।
अग्निं वयो अन्तरिक्षे पतन्तोऽग्निः सहस्रा परि याति गोनाम् ॥ ५ ॥

अग्निम् । उक्थैः । ऋषयः । वि । ह्वयन्ते । अग्निम् । नरः । यामनि । बाधितासः ।
अग्निम् । वयः । अन्तरिक्षे । पतन्तः । अग्निः । सहस्रा । परि । याति । गोनाम् ॥ ५ ॥

अग्निमुक्थैः शस्त्रैः ऋषयः पूर्वे वि ह्वयन्ते विविधमाह्वयन्ति यज्ञे स्वीये । अग्निं नरः मनुष्याः यामनि संग्रामे । यातिर्वधकर्मसु पठितः । बाधितासः शत्रुभ्यो बाधिताः प्राप्नुवन्ति जयार्थम् । तथा अग्निं वयः पक्षिणः अन्तरिक्षे पतन्तः पश्यन्ति रात्रिषु । 'तस्मादिमां वयांसि नक्तं नाध्यासते' (तै. सं. ५. ६. ४. ४) इति ब्राह्मणम् । यद्वा दावभूतमग्निमन्तरिक्षगा वयः पतन्ति । तथा अग्निः गोनां गवां सहस्रा सहस्राणि परि परितः याति गच्छति ॥

अग्निं विश ईळते मानुषीर्या अग्निं मनुषो नहुषो वि जाताः ।
अग्निर्गान्धर्वीं पथ्यामृतस्याग्नेर्गव्यूतिर्घृत आ निषत्ता ॥ ६ ॥

अग्निम् । विशः । ईळते । मानुषीः । याः । अग्निम् । मनुषः । नहुषः । वि । जाताः ।
अग्निः । गान्धर्वीम् । पथ्याम् । ऋतस्य । अग्नेः । गव्यूतिः । घृते । आ । निऽसत्ता ॥ ६ ॥

अग्निं विशः प्रजा ऋत्विग्यजमानलक्षणाः ईळते स्तुवन्ति । याः मानुषीः मानुष्यो मनुष्याज्जाताः ता ईळते । तथा अग्निं मनुषः मनुष्याः नहुषः राज्ञः सकाशात् जाताः प्रजा विविधं स्तुवन्तीति । अग्निर्गान्धर्वीम् । वाङ्नामैतत् । वाचं शृणोति । कीदृशीं गान्धर्वीम् । ऋतस्य यज्ञस्य पथ्यां पथि हिताम् । अग्नेः महात्मनः गव्यूतिः मार्गः घृते आज्ये[2] आ निषत्ता सर्वतो निषण्णो भवति ॥

अग्नये ब्रह्म ऋभवस्ततक्षुरग्निं महामवोचामा सुवृक्तिम् ।
अग्ने प्राव जरितारं यविष्ठाग्ने महि द्रविणमा यजस्व ॥ ७ ॥

अग्नये । ब्रह्म । ऋभवः । ततक्षुः । अग्निम् । महाम् । अवोचाम । सुऽवृक्तिम् ।
अग्ने । प्र । अव । जरितारम् । यविष्ठ । अग्ने । महि । द्रविणम् । आ । यजस्व ॥ ७ ॥

१. त४.५-स ऋषिः ।  २. त-भ-आज्येन ।

अग्नये ब्रह्म स्तोत्रम् ऋभवः मेधाविनः ततक्षुः अकुर्वन्। वयं च महां महान्तम् अग्निं प्रति सुवृक्तिं स्तुतिम् अवोचाम। हे यविष्ठ युवतम अग्ने जरितारं स्तोतारं प्राव प्ररक्ष। हे अग्ने महि महत् द्रविणं धनम् आ यजस्व प्रयच्छेत्यर्थः। अत्र प्रतिवाक्यमग्न्यभिधानं तस्य स्तुत्यत्वप्रदर्शनार्थम्॥ ॥ १५ ॥

'य इमा' इति सप्तर्चं त्रयोदशं सूक्तं भुवनपुत्रस्य विश्वकर्मण आर्षं त्रैष्टुभं विश्वकर्मदेवत्यम्। तथा चानुक्रान्तं—'य इमा विश्वकर्मा भौवनो वैश्वकर्मणं तु' इति। गतः सूक्तविनियोगः। अत्र वाजसनेयकं—'ब्रह्म वै स्वयंभु तपोऽतप्यत। तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वा' (श ब्रा. १३. ७. १) इत्यादि॥

**य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः।**
**स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥ १ ॥**

यः। इमा। विश्वा। भुवनानि। जुह्वत्। ऋषिः। होता। नि। असीदत्। पिता। नः।
सः। आऽशिषा। द्रविणम्। इच्छमानः। प्रथमऽछत्। अवरान्। आ। विवेश ॥ १ ॥

अत्र निरुक्तं—'विश्वकर्मा सर्वमेधे सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यन्ततो जुहवांचकार। तदभिवादिन्येषर्ग्भवति य इमा विश्वा भुवनानि जुह्वदिति' (निरु. १०.२६) इति। यः विश्वकर्मैतन्नामकः ऋषिः भुवनपुत्रः होता होमनिष्पादकः सन् विश्वा सर्वाणि भुवनानि जुह्वत् होमं कुर्वन्। प्रथमं सर्वं जगद्धुत्वेत्यर्थः। पश्चादग्नौ न्यसीदत् पिता जनकः। आत्मकृतेन कर्मणा देहोत्पत्तेः। न चैकस्य जन्यजनकभावो विरुध्यते तपोबलेन शरीरद्वयस्वीकारात्। 'स एकधा भवति' (छा. उ. ७. २६. २) इत्यादिश्रुतेः। सः ऋषिः आशिषा आशीःप्रतिपादकेन सूक्तवाकादिना द्रविणं धनं स्वर्गाख्यम् इच्छमानः कामयमानः प्रथमच्छत् प्रथममग्नेर्भुवनैराच्छादयिता अवरान् विप्रकृष्टान् भूतान् स्वात्मनाहुतान् आ[1] विवेश आविष्टवानग्निमित्युक्तार्थ एव पुनर्विशेषेणोक्तः। एवमुत्तरत्राधियज्ञपरतया योज्यम्। अथाध्यात्मप्रसिद्ध्योच्यते। यो विश्वकर्मा[2] परमेश्वर इमा विश्वा भुवनानि जुह्वत् प्रलयकाले[3] पृथिव्यादीनिमान् सप्त लोकान् स्वात्मन्याहुतिप्रक्षेपवत्संहरन्नृषिरतीन्द्रियद्रष्टा सर्वज्ञो होता संहाररूपस्य होमस्य कर्ता नोऽस्माकं पिता जनको निषसाद स्वयं स्थितवान्। अयमर्थः। प्रलयकाले प्राप्ते सति सर्वाँल्लोकान् संहृत्यास्माकमपि संहर्ता पुनः स्रष्टा च सन् सर्वज्ञो यः परमेश्वरः स्वयमेक एवासीत्। तथा हि श्रुतयः—'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ. आ. २. ४. १) 'सदेव सोम्येदमग्र आसीत्' (छा. उ. ६. २. १) इत्यादिकाः। स तादृशः परमेश्वर आशिषा 'बहुः[4] स्यां प्रजायेय' इत्येवंरूपया पुनःपुनः सिसृक्षया द्रविणमिच्छमानः धनोपलक्षितं जगद्भोगमाकाङ्क्षमाणः प्रथमच्छत् प्रथमं मुख्यं निष्प्रपञ्चं पारमार्थिकं रूपमावृण्वन्नवरान् स्वसृष्टान् प्राणिहृदयप्रदेशाना विवेश आविष्टवान् जीवरूपेण। तथा च श्रूयते—'सोऽकामयत बहुः स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किंच तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. आ. ८. ६) इति। एवमन्या अप्युपनिषद उदाहार्याः॥

वैश्वदेवस्य पशोर्वपाया अनुवाक्या 'किं स्वित्' इत्येषा। सूत्रितं च—'किं स्विदासीदधिष्ठानं यो नः पिता जनिता' (आश्व. श्रौ. ३. ८) इति॥

१. त-भ-अन्वा। २. त-विश्वकर्ता। ३. त१.२.३-भ५.७-प्रथमकाले। ४. ग-त४.५.६.७-बहू।

**किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्कथासीत् ।**
**यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ २ ॥**

किम् । स्वित् । आसीत् । अधिऽस्थानम् । आऽरम्भणम् । कतमत् । स्वित् । कथा । आसीत् ।
यतः । भूमिम् । जनयन् । विश्वऽकर्मा । वि । द्याम् । और्णोत् । महिना । विश्वऽचक्षाः ॥२॥

पूर्वमन्त्रे जगत्प्रलयकाले संहृत्य पश्चात्सिसृक्षायां सर्वं सृष्ट्वा तत्र प्रविष्ट इत्युक्तम् । अत्र तस्य द्वितीयस्याधिष्ठानजगदुपादानकारणाद्यसंभवात्सृष्टिरनुपपन्नेत्याक्षिपति । लोके हि घटं चिकीर्षुः कुलालो गृहादिकं किंचित्स्थानमधिष्ठाय मृद्रूपेणारम्भद्रव्येण[1] चक्रादिरूपैरुपकरणैर्घटं निष्पादयति । तद्वदीश्वरस्य जगदाश्रयद्यावापृथिव्योरुत्पादनवेलायाम् vअधिष्ठानं vकिं vस्विदासीत् किं नामाभूत् । न किंचिदित्यर्थः । तथा तयोः vआरम्भणं vकतमत्स्वित्[2] । आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणम् । तदपि कतमद्भवेत् । तदपि नेत्यर्थः । यद्यपि संभवेदारम्भणं[3] vकथासीत् कथमभूत् । किं स्वयं सदसद्वा भवेदित्यर्थः । उभयमपि नोपपद्यते । सच्चेदद्वैतभङ्गप्रसङ्गः । असच्चेत् सदात्मकयोर्द्यावापृथिव्योरुपादानानर्हत्वात् ‘ नान्यत्किंचन मिषत् ’ ( ऐ. आ. २. ४. १ ) इति श्रुतेश्चेत्यभिप्रायः । vयतः यस्मादधिष्ठानादारम्भणाच्च vविश्वचक्षाः[4] सर्वद्रष्टा vविश्वकर्मा परमेश्वरः vभूमिं vजनयन् वर्तते तथा vद्यां दिवं vवि vऔर्णोत् व्यवृणोत् सृष्टवान् vमहिना स्वमहत्त्वेन[5] । किं स्विदासीदिति[6] ॥

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।**
**सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ ३ ॥**

विश्वतःऽचक्षुः । उत । विश्वतःऽमुखः । विश्वतःऽबाहुः । उत । विश्वतःऽपात् ।
सम् । बाहुऽभ्याम् । धमति । सम् । पतत्रैः । द्यावाभूमी इति । जनयन् । देवः । एकः ॥३॥

अनया सर्वात्मकत्वेन कुलालादिविलक्षणत्वादधिष्ठानाद्यभावेऽपि स्रष्टुं शक्नोतीत्याह । vविश्वतश्चक्षुः सर्वतो व्याप्तचक्षुः । vउत अपि च vविश्वतोमुखः । तथा[6] vविश्वतोबाहुः । vउत अपि च vविश्वतस्पात् । स एवंविधः परमेश्वरः स्वस्मिंस्त्रैलोक्यमुत्पादयतीत्यर्थः । कथमिति उच्यते । vबाहुभ्यां दिवं vसं vधमति । धमतिर्गतिकर्मा । सम्यक्प्रेरयति । तथा vपतत्रैः गमनशीलैः पादैः पृथिवीं vसं धमतीति । उभयोरेव श्रवणं प्राधान्याभिप्रायम् । एवं vद्यावाभूमी[7] vजनयन् दिवं च पृथिवीं चोत्पादयन् vदेवः द्योतमानः स्वयंप्रकाशः परमेश्वरः vएकः असहाय एव वर्तते ॥

**किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।**
**मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥ ४ ॥**

किम् । स्वित् । वनम् । कः । ऊँ इति । सः । वृक्षः । आस ।
यतः । द्यावापृथिवी इति । निःऽततक्षुः । मनीषिणः । मनसा । पृच्छत । इत् । ऊँ इति । तत् ।
यत् । अधिऽअतिष्ठत् । भुवनानि । धारयन् ॥ ४ ॥

---

१. ग-त–°णारंभकद्रव्येण । २. ग-त-भ२.६–कतमस्स्विदासीत् । ३. ग-त-भ२.६.८–संभवदारंभणं । ४. ग-त-भ–भूमिं विश्वचक्षाः । ५. भ७–स्वमहत्त्वेन स्वरूपेण किं पदार्थ रूपोभूदिति प्रश्नार्थः । न किंस्विदासीदिति । ६. ग-त१.२.३.६.७.८-भ–स तथा । ७. ग-त६.८–द्यावापृथिवीं; त-भ२.४.५–द्यां पृथिवीं; भ७–द्यावापृथिवी ।

पूर्वस्यामृच्युक्तं ब्रह्मैव भूम्यादिकारणमिति। तदेवानया प्रश्नकथनव्याजेनोच्यते। लोके हि प्रौढं प्रासादं निर्मिमाणः कस्मिंश्चित्प्रौढे वने कंचित्[1] महान्तं वृक्षं छित्वा[2] तक्षणादिना स्तम्भादिकं संपादयति। इह तु परमेश्वरप्रेरिता जगत्स्रष्टारः ᵛयतः यस्माद्वनाद्यं वृक्षमादाय ᵛद्यावापृथिवी ᵛनिष्टतक्षुः तक्षणेन द्यावापृथिव्यौ निष्पादितवन्तः तत् ᵛवनं ᵛकिं ᵛस्वित् किं नाम स्यात्। तथा ᵛक ᵛउ ᵛस ᵛवृक्ष ᵛआस कस्तादृशो महान् वृक्षोऽभूत्। हे ᵛमनीषिणः मनस ईश्वराः तदुभयं ᵛमनसा जिज्ञासायुक्तेन ᵛपृच्छतेदु पृच्छतैव। किंच ईश्वरः ᵛभुवनानि ᵛधारयन् ᵛयत् स्थानम् ᵛअध्यतिष्ठत् ᵛतत् अपि पृच्छत। एतस्य सर्वस्याप्युत्तरं 'ब्रह्म[3] स वृक्ष आसीत्' इत्यादिकमुत्तरम्॥

साकमेधेषु वैश्वकर्मण एककपालस्य 'या ते धामानि' इत्येषा याज्या। सूत्रितं च— 'विश्वकर्मन् हविषा वावृधानो या ते धामानि परमाणि यावमा' (आश्व. श्रौ. २. १८) इति। पूर्वोक्तस्य पशोर्हविष एषैव याज्या। सूत्रितं च— 'या ते धामानि परमाणि यावमा य इमे द्यावापृथिवी जनित्री' (आश्व. श्रौ. ३. ८) इति॥

या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः॥ ५॥

या। ते। धामानि। परमाणि। या। अवमा। या। मध्यमा। विश्वऽकर्मन्। उत। इमा।
शिक्ष। सखिऽभ्यः। हविषि। स्वधाऽवः। स्वयम्। यजस्व। तन्वम्। वृधानः॥ ५॥

अनया भौवनो विश्वकर्मा जगत्कारणं विश्वकर्मदेवं स्तौति। हे ᵛविश्वकर्मन् ᵛया यानि ᵛते तव ᵛपरमाणि ᵛधामानि शरीराणि सन्ति ᵛया यानि च ᵛमध्यमा मध्यमानि शरीराणि सन्ति ᵛउत अपि च ᵛया यानि ᵛअवमा अवमानि शरीराणि सन्ति उतापि च तानीमानि सर्वाणि शरीराणि ᵛसखिभ्यः अस्मभ्यं यष्टुं ᵛहविषि मयि हविर्भूते सति ᵛशिक्ष देहि। हे ᵛस्वधावः हविर्लक्षणान्नवन् ᵛस्वयम् एव त्वं ᵛतन्वं स्वकीयं पूर्वोक्तं त्रिविधं शरीरं ᵛवृधानः हविषा वर्धमानः सन्। अनेन धामत्रैविध्योपन्यासेनोत्तमभूतानि देवादिशरीराणि मध्यमभूतानि मनुष्यादिशरीराणि निकृष्टभूतानि कृमिकीटादिशरीराणि च परिगृहीतानि। किं बहुना सर्वं जगदुपात्तं भवति। उक्तव्यतिरेकेण निरवयवस्य परमेश्वरस्य विग्रहाभावात् 'तदैक्षत बहुः स्यां प्रजायेय' (छा. उ. ६. २. ३) इत्यादिश्रुतिभ्यः परमेश्वरस्यैव देवादिभेदेन बहुभावावगमात्॥

तस्मिन्नेव वैश्वकर्मणपशौ वपापुरोडाशयोः 'विश्वकर्मन् हविषा' इति क्रमेण[4] द्वे[4] अनुवाक्ये। सूत्रितं च— 'विश्वकर्मन् हविषा वावृधान इति द्वे विश्वकर्मा विमना आद्विहायाः' (आश्व. श्रौ. ३.८) इति। साकमेधेषु वैश्वकर्मणस्य 'विश्वकर्मन् हविषा' इत्येषैवानुवाक्या। सूत्रं तु पूर्वमुदाहृतम्॥

विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु॥ ६॥

विश्वऽकर्मन्। हविषा। ववृधानः। स्वयम्। यजस्व। पृथिवीम्। उत। द्याम्।
मुह्यन्तु। अन्ये। अभितः। जनासः। इह। अस्माकम्। मघऽवा। सूरिः। अस्तु॥ ६॥

हे ᵛविश्वकर्मन् विश्वविषयकर्मेतन्नामक परमेश्वर ᵛहविषा हविर्भूतेन मया विश्वकर्मणा मया दत्तेन वा हविषा ᵛववृधानः वर्धमानः। 'विश्वकर्मा सर्वाणि भूतानि जुहवांचकार स आत्मा-

१. त–किंचित्। २. त–स्थित्वा। ३. ग–त–भ२.५.६–ब्रह्मवनं ब्रह्म। ४. ग–त–द्वे क्रमेण।

नमप्यन्ततो जुहवांचकार ' इति हि निरुक्तं पूर्वमुदाहृतम्। ᵛस्वयम् एव ᵛपृथिवीम् ᵛउत अपि च ᵛद्यां दिवं च स्वसृष्टे द्यावापृथिव्यौ स्वयं प्रवृद्धः सन् ᵛयजस्व पूजय। ᵛअन्ये मत्तोऽन्ये ᵛजनासः जना अयष्टारोऽस्मद्यागविरोधिनो वा ᵛमुह्यन्तु मुग्धा भवन्तु ᵛअभितः सर्वतः। अथ परोक्षकृतः। ᵛइह अस्मिन्यागे ᵛअस्माकं ᵛमघवा अस्मत्प्रत्तेन हविर्लक्षणेन धनेन धनवान् सः ᵛसूरिः स्वर्गादिफलस्य प्रेरकः ᵛअस्तु भवतु। अत्र ' विश्वकर्मन् हविषा वर्धमानः ' ( निरु. १०. २७ ) इत्यादि निरुक्तमनुसंधेयम् ॥

**वा॒चस्पतिं॑ वि॒श्वक॑र्माणमू॒तये॑ मनो॒जुवं॒ वाजे॑ अ॒द्या हु॑वेम ।**
**स नो॒ विश्वा॑नि॒ हव॑नानि जोषद्वि॒श्वश॑म्भू॒रव॑से सा॒धुक॑र्मा ॥ ७ ॥**

वा॒चः । पति॑म् । वि॒श्वऽक॑र्माणम् । ऊ॒तये॑ । म॒नः॒ऽजुव॑म् । वाजे॑ । अ॒द्य । हु॒वेम ।
सः । नः॒ । विश्वा॑नि । हव॑नानि । जो॒षत् । वि॒श्वऽश॑म्भूः । अव॑से । सा॒धुऽक॑र्मा ॥ ७ ॥

ᵛवाचस्पतिं मन्त्रात्मकस्य वचसः स्वामिनं ᵛविश्वकर्माणं विश्वकर्तारं ᵛमनोजुवं मनोवेगगमनं देवं ᵛवाजे यज्ञे ᵛअद्य अस्मिन्दिने ᵛऊतये तर्पणाय ᵛहुवेम आह्वयाम। ᵛसः देवः ᵛनः अस्माकं ᵛविश्वानि सर्वाणि ᵛहवनानि ᵛजोषत् सेवताम्। किमर्थम् । ᵛअवसे अस्माकं रक्षणाय। स विशेष्यते। ᵛविश्वशंभूः विश्वस्य सुखस्योत्पादकः ᵛसाधुकर्मा च ॥ ॥ १६ ॥

' चक्षुषः ' इति सप्तर्चं चतुर्दशं सूक्तम्। ऋष्याद्याः पूर्ववत्। ' चक्षुषः ' इत्यनुक्रान्तम्। गतः सूक्तविनियोगः ॥

**चक्षु॑षः पि॒ता मन॑सा॒ हि धीरो॑ घृ॒तमे॑ने अजन॒न्नम्न॑माने ।**
**य॒देदन्ता॒ अद॑दृहन्त॒ पूर्व॒ आदिद्द्या॒वापृथि॒वी अ॑प्रथेताम् ॥ १ ॥**

चक्षु॑षः । पि॒ता । मन॑सा । हि । धीरः॑ । घृ॒तम् । ए॒ने इति॑ । अ॒ज॒न॒त् । नम्न॑माने॒ इति॑ ।
य॒दा । इत् । अन्ताः॑ । अद॑दृहन्त । पूर्वे॑ । आत् । इत् । द्यावा॑पृथि॒वी इति॑ । अ॒प्रथे॑ताम् ॥ १ ॥

ᵛचक्षुषः चक्षुरुपलक्षितस्येन्द्रियसंघातात्मकस्य शरीरस्य ᵛपिता उत्पादयिता। यद्वा। चक्षुः व्यापकं तेजः। तस्योत्पादयिता। ᵛमनसा न हि मत्समोऽस्ति कश्चिदिति बुद्ध्या ᵛहि[1] खलु ᵛधीरः धृष्टो विश्वकर्मा प्रथमं ᵛघृतम् उदकम् ᵛअजनत् अजनयत्। ' आपो वा इदमग्रे ' ( तै. सं. ७. १. ५. १ ) ' अप एव ससर्जादौ ' ( मनु. १. ८ ) इत्यादिश्रुतिस्मृती स्याताम्। पश्चात् ᵛएने द्यावापृथिव्यौ ᵛनम्नमाने तस्मिन्नुदक इतस्ततश्चलन्त्यौ योऽजनयत्[2]। अथ ᵛयदेत् यदैव ᵛअन्ताः पर्यन्तप्रदेशाः ᵛपूर्वे पुराणा द्यावापृथिव्योः संबन्धिनः ᵛअददृहन्त दृढा अभवन्। विश्वकर्मणा दृढाः संपादिता इत्यर्थः। ᵛआदित् अनन्तरमेव ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛअप्रथेतां यथाकामं प्रथिते अभूताम् ॥

वैश्वकर्मणस्य पशोर्हविष एषानुवाक्या। ' विश्वकर्मा विमना आद्विहायाः किं स्विदासीदधिष्ठानम् ' ( आश्व. श्रौ. ३. ८ ) इति सूत्रितम् ॥

**वि॒श्वक॑र्मा॒ विम॑ना॒ आद्विहा॑या धा॒ता वि॑धा॒ता प॑र॒मोत सं॒दृक् ।**
**तेषा॑मि॒ष्टानि॒ समि॒षा म॑दन्ति॒ यत्रा॑ सप्तऋ॒षीन्प॒र एक॑मा॒हुः ॥ २ ॥**

---

१. त-भ–' हि ' नास्ति। २. ग-त-भ२–यो वा अजनत् अजनयत्; भ४.७.८–यो वा अजनयत्।

विश्वऽकर्मा । विऽमनाः । आत् । विऽहायाः । धाता । विऽधाता । परमा । उत । सम्ऽदृक् ।
तेषाम् । इष्टानि । सम् । इषा । मदन्ति । यत्र । सप्तऽऋषीन् । परः । एकम् । आहुः ॥ २ ॥

अयं मन्त्रोऽधियज्ञाध्यात्मयोर्भेदेन द्विधा व्याख्येयः । तत्र प्रथमं दैवतमधिकृत्योच्यते । ᐯविश्वकर्मा बहुविधप्रकाशवृष्टिप्रदानादिकर्मणां कर्तादित्यः स च ᐯविमनाः विभूतमनाः । ᐯआत् इत्यनर्थकः सर्वत इत्यर्थे वा । ᐯविहायाः विविधमाप्ता । महानित्यर्थः । ᐯधाता वृष्ट्यादिकर्ता च ᐯविधाता जगतः कर्ता च ᐯपरमा परमः ᐯसंदृक् संद्रष्टा च भूतानाम् । ᐯतेषां सप्तर्षीणाम्[1] । ज्योतिषां रश्मीनामित्यर्थः । चरमपादे वक्ष्यमाणत्वात्[2] । ᐯइष्टानि स्थानानि शरीराणि वा ᐯइषा उदकेन ᐯसं ᐯमदन्ति संमोदन्ते ᐯयत्र यस्मिन्नादित्ये तं देवं ᐯसप्तर्षीन् । सप्तर्षिभ्य इत्यर्थः । तेभ्यः ᐯपरः परस्तात् ᐯएकम् एव आदित्यम् ᐯआहुः मन्त्रविदः । अध्यात्मपक्ष उच्यते । विश्वकर्मा यः परमात्मा प्राणप्रकाशाभ्यामुपेतः सन् बहुकर्मा भवति । स च विमना विभूतमना विहाया वस्तुतो महान् विशेषेण सुकृतदुष्कृतफलस्याप्ता धाता विधाता च परमोत संदृक् परमश्च संद्रष्टेन्द्रियाणाम् । तेषां सप्तर्षीणां द्रष्टृणामिन्द्रियाणामिष्टानि स्वरूपाणीषान्नेन सह सं मदन्ति संमोदन्ते यत्र यस्मिन्नात्मनि तमात्मानं सप्तर्षीन् सप्तसंख्याकेभ्यः सर्पणस्वभावेभ्यो वा परः परस्ताद्वर्तमानमिन्द्रियाद्यतीतमेकं परमात्मानमाहुस्तत्त्वविदः । अत्र ' विश्वकर्मा विभूतमना व्याप्ता ' ( निरु. १०. २६ ) इत्यादि निरुक्तमनुसंधेयम् ॥

पूर्वोक्त एव पशौ पुरोडाशस्य ' यो नः पिता ' इत्येषा याज्या । सूत्रितं च—' यो नः पिता जनिता यो विधाता या ते धामानि परमाणि यावमा ' ( आश्व. श्रौ. ३. ८ ) इति ॥

**यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।**
**यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या ॥ ३ ॥**

यः । नः । पिता । जनिता । यः । विऽधाता । धामानि । वेद । भुवनानि । विश्वा ।
यः । देवानाम् । नामऽधाः । एकः । एव । तम् । सम्ऽप्रश्नम् । भुवना । यन्ति । अन्या ॥३॥

ᐯयः विश्वकर्मा ᐯनः अस्माकं ᐯपिता पालयिता । न केवलं पालकः किंतु ᐯजनिता उत्पादकः। किमनेनास्माकमुत्पादक इति संकोचेन । ᐯयो ᐯविधाता सर्वस्य जगत उत्पादको यो विश्वकर्मा नोऽस्माकमुत्पन्नानि ᐯधामानि देवानां तेजःस्थानानि ᐯवेद वेत्ति । किं बहुना । ᐯविश्वा विश्वानि ᐯभुवना भूतजातानि वेद वेत्ति । ᐯयः च ᐯदेवानाम् अग्निवाय्वादीनां ᐯनामधाः नाम्नां धाता इन्द्रादीन्निर्माय तेषामिन्द्रादि नाम कृत्वा तत्तत्पदेषु स्थापयिता ᐯएक ᐯएव । ᐯतं देवम् ᐯअन्या अन्यानि ᐯभुवना भूतजातानि ᐯप्रश्नं कः परमेश्वर इति पृच्छां ᐯयन्ति प्राप्नुवन्ति ॥

**त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।**
**असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ ४ ॥**

ते । आ । अयजन्त । द्रविणम् । सम् । अस्मै । ऋषयः । पूर्वे । जरितारः । न । भूना ।
असूर्ते । सूर्ते । रजसि । निऽसत्ते । ये । भूतानि । सम्ऽअकृण्वन् । इमानि ॥ ४ ॥

---

१. त-सप्तर्षीणां सप्तार्षाणां । २. ग४-त-भ२.४.८-व्याचक्षमाणत्वात्; भ७-व्याख्यानत्वात् ।

ᵛते ᵛपूर्वे ᵛऋषयः ᵛअस्मै विश्वकर्मणे ᵛद्रविणं चरुपुरोडाशादिलक्षणं[1] धनं ᵛसं सम्यक् ᵛआयजन्त सर्वतो यजन्ते । ᵛजरितारो ᵛन ᵛभूना स्तोतारो यथा भूम्ना महता स्तोत्रेण[2] यजन्ति तद्वत् । ᵛये महर्षयः ᵛअसूर्ते सरणवर्जिते ᵛसूर्ते सरणसहिते स्थावरजङ्गमात्मके ᵛरजसि लोके ᵛनिषत्ते निषण्णे निश्चलमवस्थिते ᵛइमानि ᵛभूतानि भुवनानि । प्राणिन इत्यर्थः । ᵛसमकृण्वन् सम्यग्धनादि-नापूजयन् । अथवायमर्थः । ये स्थावरजङ्गमात्मके जगति वर्तमानानेतान् प्राणिनस्तेजसा समकृण्वन् ते[3] पूर्वे ऋषयो द्रष्टारो रश्मयोऽस्मा आदित्यात्मकाय विश्वकर्मणे द्रविणं तेज आयजन्त ॥

परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे ॥ ५ ॥

परः । दिवा । परः । एना । पृथिव्या । परः । देवेभिः । असुरैः । यत् । अस्ति ।
कम् । स्वित् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः । सम्ऽअपश्यन्त । विश्वे ॥५॥

यदीश्वरतत्त्वं ᵛदिवा ᵛपरः द्युलोकादपि परस्ताद्वर्तमानं तथा ᵛएना अस्याः ᵛपृथिव्याः ᵛपरः परस्ताद्वर्तमानं तथा ᵛदेवेभिः देवैः[4] परस्ताद्वर्तमानम् ᵛअसुरैः परस्ताद्वर्तमानं[4] च ᵛयदस्ति तद्गुहायामवस्थितं ᵛकं ᵛस्विद्गर्भं गर्भवत्सर्वस्य ग्राहकं तत्त्वम् ᵛआपः ᵛप्रथमं ᵛदध्रे धृतवत्यः । ᵛयत्र यस्मिन् गर्भे ᵛदेवाः इन्द्रादयः ᵛविश्वे सर्वेऽपि ᵛसमपश्यन्त संगताः परस्परं पश्यन्ति । एवं जानन्नेव कश्चित्तत्त्ववित्प्रश्नं करोति ॥

तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ॥ ६ ॥

तम् । इत् । गर्भम् । प्रथमम् । दध्रे । आपः । यत्र । देवाः । सम्ऽअगच्छन्त । विश्वे ।
अजस्य । नाभौ । अधि । एकम् । अर्पितम् । यस्मिन् । विश्वानि । भुवनानि । तस्थुः ॥ ६ ॥

अनया पूर्वमन्त्रोक्तस्य प्रश्नस्योत्तरमभिधीयते । ᵛतमित् तमेव विश्वकर्माणं ᵛगर्भं गर्भस्थानीयं ᵛप्रथमम् इतरसृष्टेः पूर्वम् ᵛआपः ᵛदध्रे धृतवत्यः । ᵛयत्र गर्भे ᵛविश्वे सर्वे ᵛदेवाः इन्द्रादयः ᵛसम-गच्छन्त[5] संगता भवन्ति । तस्य ᵛअजस्य ᵛनाभावधि नाभौ । अधीति सप्तम्यर्थानुवादी । ᵛएकम-र्पितम् इत्यण्डाभिप्रायेणोक्तम् । अण्डं हि प्राक्सर्गान्नाभिस्थाने तिष्ठति । ᵛयस्मिन् अण्डे ᵛविश्वानि ᵛभुवनानि सर्वाणि भूतजातानि ᵛतस्थुः तिष्ठन्ति । अथवा । अजस्य जन्मरहितस्य ब्रह्मणः स्वसृष्टे जले शयानस्य नाभौ सर्वजगद्बन्धक उदक एकं ब्रह्माण्डमर्पितं स्थापितम् । शिष्टं समानम् । अथास्मिन्नर्थे स्मृतिः—'अप एव ससर्जादौ तासु वीर्यमवाकिरत् । तदण्डमभवद्धैमं सूर्यकोटिसमप्रभम्' ( मनु. १.८-९ ) इति ॥

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥ ७ ॥

न । तम् । विदाथ । यः । इमा । जजान । अन्यत् । युष्माकम् । अन्तरम् । बभूव ।
नीहारेण । प्रावृताः । जल्प्या । च । असुऽतृपः । उक्थऽशासः । चरन्ति ॥ ७ ॥

---

१. ग४-त-भ६.८–चपुरोडाशा° । २. त-भ–स्तोत्रेण यथा । ३. त-भ–'ते' नास्ति । ४. त-भ–देवैरसुरैश्च यत्परः परस्ताद्वर्तमानं । ५. त-भ–समगच्छंति ।

हे नराः तं विश्वकर्माणं न विदाथ न जानीथ य इमा इमानि भूतानि जजान उत्पादितवान्। देवदत्तोऽहं यज्ञदत्तोऽहमिति वयमात्मानं विश्वकर्माणं जानीम इति यदुच्येत तदसत् न ह्यहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य तत्त्वं किंतु युष्माकम् अहंप्रत्ययगम्यानां जीवानाम् अन्तरम् अन्यत् अहंप्रत्ययगम्यादतिरिक्तं सर्ववेदान्तवेद्यमीश्वरतत्त्वं बभूव भवति विद्यते। जीवरूपवत्तदपि कुतो न विद्म इति चेत् श्रूयताम्। नीहारेण प्रावृताः यूयं नीहारसदृशेनाज्ञानेनाच्छन्नाः। अतो न जानीथ। यथा नीहारो नात्यन्तमसन् दृष्टेरावरकत्वात् नात्यत्यन्तं सन् काष्ठपाषाणादिरूपान्तरेण संबन्द्धुमयोग्यत्वात् एवमज्ञानमपि नात्यन्तमसदीश्वरतत्त्वावरकत्वात् नापि सत् बोधमात्रनिवर्त्यत्वात्। ईदृशेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः। न केवलं प्रावृतत्वं किंतु जल्प्या च देवोऽहं मनुष्योऽहमित्याद्यनृतजल्पनेन प्रावृताः। किंच असुतृपः केनाप्युपायेन असून्प्राणांस्तृप्यन्तः। उदरंभरा इत्यर्थः। न तु पारमेश्वरं तत्त्वं विचारितवन्तः। न केवलमिहलोकभोगमात्रतृप्ताः उक्थशासः नानाविधेषु यज्ञेषु उक्थं प्रउगनिष्केवल्यादिकं शंसन्तः चरन्ति पृथिव्यां वर्तन्ते। केवलमैहिकामुष्मिकभोगपरा वर्तध्वेऽतो विश्वकर्माणं देवं न जानीथेत्यर्थः ॥ ॥ १७ ॥

'यस्ते मन्यो' इति सप्तर्चं पञ्चदशं सूक्तम्। मन्युर्नाम तपसः पुत्र ऋषिः। आद्या जगती शिष्टास्त्रिष्टुभः। इदमुत्तरं च मन्युदेवत्यम्। तथा चानुक्रान्तं—'यस्ते मन्यो मन्युस्तापसो मान्यवं तु जगत्यादि' इति। अजिरनाम्न्यभिचारसाधने यज्ञ एतत्सूक्तं निविद्धानम्। सूत्रितं च—'त्वया मन्यो यस्ते मन्यो' (आश्व. श्रौ. ९. ७) इति ॥

यस्ते॑ म॒न्योऽवि॑धद्वज्र सायक॒ सह॒ ओजः॑ पुष्यति॒ विश्व॑मानु॒षक् ।
साह्याम॒ दास॒मार्यं॒ त्वया॑ यु॒जा सह॑स्कृतेन॒ सह॑सा॒ सह॑स्वता ॥ १ ॥

यः । ते॒ । म॒न्यो इति॑ । अवि॑धत् । व॒ज्र॒ । सा॒य॒क॒ । सहः॑ । ओजः॑ । पु॒ष्य॒ति॒ । विश्व॑म् । आ॒नु॒षक् ।
सा॒ह्याम॑ । दास॑म् । आर्य॑म् । त्वया॑ । यु॒जा । सहः॑ऽकृतेन । सह॑सा । सह॑स्वता ॥ १ ॥

हे मन्यो क्रोधाभिमानिन् देव। 'मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा' (निरु. १०. २९) इति निरुक्तम्। यः यजमानः ते तुभ्यम् अविधत् परिचरति हे वज्र वज्रवत्सारभूत सायक सायकवच्छत्रूणां हिंसक स मनुष्यः सहः बलं बाह्यम् ओजः शारीरं बलं च आनुषक् अनुषक्तं पुष्यति त्वदनुग्रहात्संग्रामे। यस्मादेवं तस्माद्वयं दासम् उपक्षयकर्तारम् आर्यम् अस्मत्तोऽधिकं चोभयविधं शत्रुं साह्याम अभिभवेम। केन साधनेनेति तदुच्यते। त्वया युजा त्वया सहायेन। सहायो विशेष्यते। सहस्कृतेन बलोत्पादितेन सहसा सहमानेन परान् सहस्वता बलवता। ईदृशेन त्वया[1] सहायेनेत्यर्थः[2] ॥

म॒न्युरिन्द्रो॑ म॒न्युरे॒वास॑ दे॒वो म॒न्युर्होता॒ वरु॑णो जा॒तवे॑दाः ।
म॒न्युं विश॑ ईळते॒ मानु॑षी॒र्याः पा॒हि नो॑ मन्यो॒ तप॑सा स॒जोषाः॑ ॥ २ ॥

म॒न्युः । इन्द्रः॑ । म॒न्युः । ए॒व । आ॒स॒ । दे॒वः । म॒न्युः । होता॑ । वरु॑णः । जा॒तऽवे॑दाः ।
म॒न्युम् । विशः॑ । ई॒ळ॒ते॒ । मानु॑षीः । याः । पा॒हि । नः॒ । म॒न्यो इति॑ । तप॑सा । स॒ऽजोषाः॑ ॥२॥

अयं मन्युरिन्द्रः मन्युरेव देवः सर्वोऽपि मन्युरेव आस अभवत्। मन्युः एव होता होमनिष्पादकोऽग्निः। तथा मन्युः वरुणः अपि जातवेदाः जातप्रज्ञो वरुणश्च। सर्वेष्वपि तेजस्विषु

१. ग४-त-भ२.६–महता त्वया; भ१.४.८–मता त्वया। २. ग-त-भ२.६–सहायेनाभिभवेमेत्यर्थः।

मन्युसद्भावात्। ᵛयाः ᵛमानुषीः मनुषोऽपत्यभूताः ᵛविशः प्रजाः सन्ति ताः ᵛमन्युं एव देवम् ᵛईळते स्तुवन्ति। हे ᵛमन्यो ᵛतपसा एतन्नामकेनास्मत्पित्रा ᵛसजोषाः समानप्रीतिस्त्वं ᵛपाहि रक्ष ॥

अभीहि मन्यो तवसस्तवीयान् तपसा युजा वि जहि शत्रून्।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ॥ ३ ॥

अभि। इहि। मन्यो इति। तवसः। तवीयान्। तपसा। युजा। वि। जहि। शत्रून्।
अमित्रऽहा। वृत्रऽहा। दस्युऽहा। च। विश्वा। वसूनि। आ। भर। त्वम्। नः ॥ ३ ॥

हे ᵛमन्यो त्वम् ᵛअभीहि अभिगच्छास्मच्छत्रून्। कीदृशस्त्वम्। ᵛतवसः बलवतोऽपि ᵛतवीयान् अत्यन्तं बलवान्। स त्वं ᵛतपसा अस्मत्पित्रा ᵛयुजा सहायेन ᵛशत्रून् ᵛवि ᵛजहि। किंच ᵛअमित्रहा अमित्राणां हन्ता। अमित्रोऽस्निग्धः। तथा ᵛवृत्रहा आवरकाणां शत्रूणां हन्ता तथा ᵛदस्युहा ᵛच। दस्युरुपक्षपणकारी शत्रुः। तादृश मन्युदेव ᵛत्वं ᵛविश्वा सर्वाणि ᵛवसूनि धनानि ᵛनः अस्मभ्यम् ᵛआ ᵛभर आहर ॥

त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमातिषाहः।
विश्वचर्षणिः सहुरिः सहावानस्मास्वोजः पृतनासु धेहि ॥ ४ ॥

त्वम्। हि। मन्यो इति। अभिभूतिऽओजाः। स्वयम्ऽभूः। भामः। अभिमातिऽसहः।
विश्वऽचर्षणिः। सहुरिः। सहावान्। अस्मासु। ओजः। पृतनासु। धेहि ॥ ४ ॥

हे ᵛमन्यो ᵛत्वम् ᵛअभिभूत्योजाः परेषामभिभावुकबलः ᵛस्वयंभूः स्वयमेवोत्पन्नः ᵛभामः क्रुद्धः ᵛअभिमातिषाहः। अभितो हिंसन्तीत्यभिमातयः शत्रवः। तेषामभिभविता। ᵛविश्वचर्षणिः सर्वेषां द्रष्टा ᵛसहुरिः सहनशीलः ᵛसहावान् सहनवान् ईदृशस्त्वम् ᵛअस्मासु ᵛपृतनासु संग्रामेषु ᵛओजः बलं ᵛधेहि देहि ॥

अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः।
तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वा तनूर्बलदेयाय मेहि ॥ ५ ॥

अभागः। सन्। अप। पराऽइतः। अस्मि। तव। क्रत्वा। तविषस्य। प्रचेत इति प्रऽचेतः।
तम्। त्वा। मन्यो इति। अक्रतुः। जिहीळ।
अहम्। स्वा। तनूः। बलऽदेयाय। मा। आ। इहि ॥ ५ ॥

हे ᵛप्रचेतः प्रकृष्टज्ञान ᵛमन्यो ᵛतविषस्य महतः ᵛतव ᵛक्रत्वा कर्मणा ᵛअभागः भागरहितः ᵛसन्। त्वां यज्ञेऽयाजकः सन्नित्यर्थः। त्वदनुकूलरहितोऽहम् ᵛअप ᵛपरेतोऽस्मि युद्धे शत्रुभिरभिभूतः सन् दूरं गतोऽस्मि। ᵛतं तादृशं भागरहितं ᵛत्वा त्वां हे ᵛमन्यो ᵛअक्रतुः कर्मरहितः ᵛअहं ᵛजिहीळ क्रुद्धं कृतवानित्यर्थः। यद्वा अहमेव त्वत्सहायमेव क्रोधितवान्। अथेदानीं ᵛस्वा ᵛतनूः मम शरीरभूतस्त्वं ᵛबलदेयाय बलदानाय ᵛमेहि मां प्राप्नुहि ॥

अयं ते अस्म्युप मेह्यर्वाङ् प्रतीचीनः सहुरे विश्वधायः ।
मन्यो वज्रिन्नभि मामा ववृत्स्व हनाव दस्यूँरुत बोध्यापेः ॥ ६ ॥

अयम् । ते । अस्मि । उप । मा । आ । इहि । अर्वाङ् । प्रतीचीनः । सहुरे । विश्वऽधायः ।
मन्यो इति । वज्रिन् । अभि । माम् । आ । ववृत्स्व । हनाव । दस्यून् । उत । बोधि । आपेः ॥६॥

हे ᵛसहुरे शत्रूणां सहनशील ᵛविश्वधायः विश्वस्य धर्तर्मन्यो ᵛअयं जनोऽहं ᵛते तव ᵛअस्मि कर्मकृत् । यत एवमतः ᵛप्रतीचीनः प्रतिगन्ता ᵛअर्वाङ् अस्मदभिमुखं ᵛमा मां ᵛउप ᵛइहि उपागच्छ । हे ᵛमन्यो ᵛवज्रिन् ᵛमाम् ᵛअभि ᵛआ ᵛववृत्स्व अभ्यावर्तस्व । किमर्थमभ्यागमनमिति चेदुच्यते । ᵛहनाव आवां ᵛदस्यून् शत्रून् । ᵛउत अपि च ᵛआपेः बन्धुं ᵛबोधि बुध्यस्व ॥

अभि प्रेहि दक्षिणतो भवा मेऽधा वृत्राणि जङ्घनाव भूरि ।
जुहोमि ते धरुणं मध्वो अग्रमुभा उपांशु प्रथमा पिबाव ॥ ७ ॥

अभि । प्र । इहि । दक्षिणतः । भव । मे । अध । वृत्राणि । जङ्घनाव । भूरि ।
जुहोमि । ते । धरुणम् । मध्वः । अग्रम् । उभौ । उपऽअंशु । प्रथमा । पिबाव ॥ ७ ॥

हे मन्यो ᵛअभि ᵛप्रेहि अभिगच्छ । मम युद्धं गत्वा च ᵛमे मम ᵛदक्षिणतो ᵛभव । ᵛअध अथ आवां ᵛवृत्राणि शत्रून् ᵛभूरि प्रभूतं ᵛजङ्घनाव हनाव । ᵛते तुभ्यम् ᵛअग्रं श्रेष्ठं ᵛमध्वः मधु सोमरसं ᵛजुहोमि । ᵛउभौ त्वं चाहं च ᵛउपांशु अप्रकाशं ᵛप्रथमा प्रथमौ सन्तौ ᵛपिबाव ॥ ॥१८॥

'त्वया मन्यो' इति सप्तर्चं षोडशं सूक्तम् । आदितस्तिस्रस्त्रिष्टुभस्ततश्चतस्रो जगत्यः । पूर्ववदृषिदेवते । तथा चानुक्रान्तं—'त्वया मन्यो चतुर्जगत्यन्तम्' इति । अजिरनाम्न्येकाह इदं सूक्तं मरुत्वतीयशस्त्रे निविद्धानम् । सूत्रं पूर्वसूक्त एवोदाहृतम् । विजुत्यभिभूतिषु वज्रेषुष्वेकाहेष्वेते सूक्ते मरुत्वतीयनिष्केवल्ययोः शस्ये । सूत्रितं च—'विजुत्यभिभूत्योरिषुवज्रयोश्च मन्युसूक्ते[1]' ( आश्व. श्रौ. ९. ८ ) इति ॥

त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः ।
तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ॥ १ ॥

त्वया । मन्यो इति । सऽरथम् । आऽरुजन्तः । हर्षमाणासः । धृषिताः । मरुत्वः ।
तिग्मऽइषवः । आयुधा । सम्ऽशिशानाः । अभि । प्र । यन्तु । नरः । अग्निऽरूपाः ॥१॥

हे ᵛमन्यो हे ᵛमरुत्वः ᵛत्वया ᵛसरथं समानमेकमेव रथमारुह्येति शेषः । ᵛआरुजन्तः[2] गच्छन्तः ᵛहर्षमाणासः हृष्टाः ᵛधृषिताः धृष्टाः ᵛतिग्मेषवः तीक्ष्णबाणाः ᵛआयुधा आयुधानि ᵛसंशिशानाः सम्यग्निश्यन्तः ᵛनरः युद्धस्य नेतार इन्द्रादयो देवास्त्वदनुचरा वा ᵛअग्निरूपाः अग्निवत्तीक्ष्णदाहादिकर्माणो यद्वा संनद्धाः कवचिनः ᵛअभि ᵛप्र ᵛयन्तु युद्धे सहायार्थम् । अत्र 'त्वया मन्यो सरथमारुह्य रुजन्तः' ( निरु. १०. ३० ) इत्यादि निरुक्तमनुसंधेयम् ॥

---

१. ग-त१.२.३.६.७.८-भ-मन्युसूक्तयोः । २. त-भ२-रुजंतो ।

अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून्वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व ॥ २ ॥

अग्निःऽइव । मन्यो इति । त्विषितः । सहस्व । सेनाऽनीः । नः । सहुरे । हूतः । एधि ।
हत्वाय । शत्रून् । वि । भजस्व । वेदः । ओजः । मिमानः । वि । मृधः । नुदस्व ॥ २ ॥

हे ᵛमन्यो ᵛअग्निरिव ᵛत्विषितः ज्वलितः ᵛसहस्व अभिभव शत्रून् । हे ᵛसहुरे सहनशील ᵛसेनानीः ᵛएधि भव ᵛनः अस्माकं संग्रामे ᵛहूतः सन् । किंच ᵛहत्वाय हत्वा ᵛशत्रून्वि ᵛभजस्व प्रयच्छास्माकं ᵛवेदः धनं शत्रुसंबन्धि । किंच ᵛओजो ᵛमिमानः अस्माकं बलं कुर्वन् ᵛमृधः शत्रून् ᵛवि ᵛनुदस्व घातयेत्यर्थः ॥

सहस्व मन्यो अभिमातिमस्मे रुजन्मृणन्प्रमृणन्प्रेहि शत्रून् ।
उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वम् ॥ ३ ॥

सहस्व । मन्यो इति । अभिऽमातिम् । अस्मे इति ।
रुजन् । मृणन् । प्रऽमृणन् । प्र । इहि । शत्रून् ।
उग्रम् । ते । पाजः । ननु । आ । रुरुध्रे । वशी । वशम् । नयसे । एकऽज । त्वम् ॥ ३ ॥

हे ᵛमन्यो ᵛअस्मे अस्माकम् ᵛअभिमातिम् अभिगन्तारं शत्रुं ᵛसहस्व अभिभव । ᵛरुजन् हिंसन्[1] ᵛमृणन्[1] ᵛप्रमृणन् प्रकर्षेण हिंसन् यथा पुनर्न जीवेत्तथा कुर्वंस्त्वं[2] ᵛशत्रून् प्रति ᵛप्रेहि । ᵛते तव ᵛपाजः बलम् ᵛउग्रम् उद्गूर्णं कं ᵛननु ᵛआ ᵛरुरुध्रे आरुन्धन्ति । न तथा संभवति हे ᵛएकज ᵛत्वम् असहायः ᵛवशी त्वं ᵛवशं ᵛनयसे प्रापयसि शत्रुम् ॥

एको बहूनामसि मन्यवीळितो विशंविशं युधये सं शिशाधि ।
अकृत्तरुक्त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्महे ॥ ४ ॥

एकः । बहूनाम् । असि । मन्यो इति । ईळितः । विशम्ऽविशम् । युधये । सम् । शिशाधि ।
अकृत्तऽरुक् । त्वया । युजा । वयम् । द्युऽमन्तम् । घोषम् । विऽजयाय । कृण्महे ॥ ४ ॥

हे ᵛमन्यो ᵛईळितः स्तुतस्त्वम् ᵛएकः एव असहाय एव ᵛबहूनां शत्रूणाम् ᵛअसि भवसि पर्याप्तो हन्तुम् । अतः ᵛविशंविशं तां तामस्मद्विरोधिनीं प्रजां ᵛयुधये युद्धाय ᵛसं ᵛशिशाधि सम्यक् तीक्ष्णीकुरु । किंच हे ᵛअकृत्तरुक् अच्छिन्नदीप्ते ᵛत्वया ᵛयुजा सहायेन ᵛवयं ᵛद्युमन्तं दीप्तिमन्तं ᵛघोषं सिंहनादवन्तं ᵛविजयाय विशिष्टजयार्थं[3] ᵛकृण्महे कुर्मः[3] ॥

विजेषकृदिन्द्रइवानवब्रवो३ऽस्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥ ५ ॥

---

१. त-मृणन् हिंसन् ; भ-हिंसन् । २. ग-त-भ१.२.४.६.८-कुर्वन् । ३. त१.२.३.६.७.८-भ-कृण्महे ।

विजेषऽकृत् । इन्द्रःऽइव । अनवऽब्रवः । अस्माकम् । मन्यो इति । अधिऽपाः । भव । इह ।
प्रियम् । ते । नाम । सहुरे । गृणीमसि । विद्म । तम् । उत्सम् । यतः । आऽबभूथ ॥५॥

हे ᵛमन्यो ᵛइन्द्रइव ᵛविजेषकृत् विजयकर्ता । तथा ᵛअनवब्रवः अनिन्दितवचनः । 'अनवब्रवोऽनवक्षिप्तवचनः' (निरु. ६. २९) इति यास्कः । ईदृशस्त्वम् ᵛअस्माकम् ᵛअधिपाः अधिकं पाता रक्षिता ᵛभव ᵛइह अस्मिन्यज्ञे । हे ᵛसहुरे शत्रूणां सहनशील ᵛते ᵛप्रियं ᵛनाम स्तोत्रं ᵛगृणीमसि गृणीमः स्तुमः । ᵛयतः नाम्नः स्तोत्रात् त्वम् ᵛआबभूथ आभवसि प्रवृद्धो भवसि ᵛतमुत्सं बलस्योद्गमयितारं ᵛविद्म जानीमः ॥

आभूत्या सहजा वज्र सायक सहो बिभर्ष्यभिभूत उत्तरम् ।
क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि ॥ ६ ॥

आऽभूत्या । सहऽजाः । वज्र । सायक । सहः । बिभर्षि । अभिऽभूते । उतऽतरम् ।
क्रत्वा । नः । मन्यो इति । सह । मेदी । एधि । महाऽधनस्य । पुरुऽहूत । समऽसृजि ॥६॥

हे ᵛवज्र वज्रवत्सारभूत हे ᵛसायक शत्रूणामन्तकर ᵛअभिभूते शत्रूणामभिभावुक मन्यो ᵛआभूत्या । आभूतिरभिभवः । तेन ᵛसहजाः सहैवोत्पन्नस्त्वं ᵛउत्तरम् उत्कृष्टतरं ᵛसहः बलं ᵛबिभर्षि धारयसि । हे ᵛमन्यो ᵛक्रत्वा कर्मणा ᵛसह ᵛनः अस्माकं ᵛमेद्येधि स्निग्धो भव । कुत्रेति तदुच्यते । ᵛमहाधनस्य । संग्रामनामैतत् । संग्रामस्य ᵛसंसृजि सर्गे । हे ᵛपुरुहूत बहुभिराहूतेति मन्युसंबोधनम् ॥

संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥ ७ ॥

समऽसृष्टम् । धनम् । उभयम् । समऽआकृतम् । अस्मभ्यम् । दत्ताम् । वरुणः । च । मन्युः ।
भियम् । दधानाः । हृदयेषु । शत्रवः । पराऽजितासः । अप । नि । लयन्ताम् ॥ ७ ॥

ᵛसंसृष्टम् अविभागमापन्नम् ᵛउभयम् उभयविधं ᵛधनं ᵛसमाकृतं सम्यगानीतम् ᵛअस्मभ्यं ᵛदत्ताम् । कः[1] । ᵛवरुणश्च देवः ᵛमन्युः च । ᵛभियं भयं ᵛहृदयेषु ᵛदधानाः ᵛशत्रवः अस्मद्विरोधिनः ᵛपराजितासः पराजिताः ᵛअप ᵛनि ᵛलयन्तां अपनिलीना भवन्तु ॥ ॥ १९ ॥ ॥ ५ ॥

सप्तमेऽनुवाके षट् सूक्तानि । तत्र 'सत्येन' इति सप्तचत्वारिंशदृचं प्रथमं सूक्तं सवितृसुतायाः सूर्याया आर्षम् । 'नवोनवः' इति तिस्रः 'अनृक्षराः' इति द्वे 'गृभ्णामि' इति द्वे 'यदश्विना पृच्छमानौ' इत्येका 'पूषा त्वेतो नयतु' इत्येका 'अघोरचक्षुः' इति चैवमेता दशर्चस्त्रिष्टुभः । 'तृष्टमेतत्' इत्येषोरोबृहत्यष्टकद्वादशकद्वयष्टकवती । 'पूर्वापरं चरतः' 'इह प्रियं प्रजया' 'आ नः प्रजां जनयतु' इत्येतास्तिस्रो जगत्यः । शिष्टास्त्रयस्त्रिंशदनुष्टुभः । आदितः पञ्चानामृचां सोमो देवता । तत एकादशभिः सूर्या स्वविवाहं स्तुतवती । अतस्तत्र योऽर्थः प्रतिपाद्यते स एव देवतात्वेन विज्ञेयः । 'या तेनोच्यते सा देवता' इति न्यायात् । सप्तदश्या देवा देवता । अष्टादश्याः सोमार्कौ । एकोनविंश्याश्चन्द्रमाः । 'सुकिंशुकम्' इत्याद्या नवर्चो विवाहमन्त्रा आशिषः प्रतिपादकाः । अतस्तत्र तत्र प्रतिपाद्योऽर्थो देवता । 'परा देहि' 'अश्रीरा तनूः' इति द्वे वध्वा विवाहकाले परिहितस्य वाससः

१. त१.३.१७-म१.५-कौ ।

संस्पर्शनिन्दयिन्यौ। 'ये वध्वश्चन्द्रम्' इति दंपत्योः क्षयरोगस्य नाशिनी। अतस्तद्देवताका[1]। परिशिष्टानां षोडशानां सूर्या देवता। तथा चानुक्रान्तं—'सत्येन सप्तचत्वारिंशत्' सर्वमनुक्रान्तम्[2]। सूक्तविनियोगो लैङ्गिकः॥

**स॒त्येनोत्त॑भिता॒ भूमि॒: सूर्ये॒णोत्त॑भिता॒ द्यौः ।**
**ऋ॒तेना॑दि॒त्यास्ति॑ष्ठन्ति दि॒वि सोमो॒ अधि॑ श्रि॒तः ॥ १ ॥**

स॒त्येन॑ । उत्त॑भिता । भूमि॑: । सूर्ये॑ण । उत्त॑भिता । द्यौः ।
ऋ॒तेन॑ । आ॒दि॒त्याः । ति॒ष्ठ॒न्ति॒ । दि॒वि । सोम॑: । अधि॑ । श्रि॒तः ॥ १ ॥

सत्येन ब्रह्मणानन्तात्मना। ब्रह्मा खलु देवानां मध्ये सत्यभूतः। तेनाधःस्थितेन भूमिः उत्तभिता उपरि स्तम्भिता[3]। यथाधो न पतेत्तथा कृता। यद्वा। सत्येन अनृतप्रतियोगिना धर्मेण भूमिरुत्तभितोद्धृता फलिता भवतीत्यर्थः। असति सत्ये भूम्यां सस्यादयो न फलन्ति। तथा सूर्येण देवेन द्यौः उत्तभिता। सूर्यो हि द्युस्थानत्वाद्दिवं दधार। ऋतेन यज्ञेन आदित्याः अदितेः पुत्रा देवाः तिष्ठन्ति। यज्ञे यजमानदत्तेन खल्वाहुत्या देवा उपजीवन्ति। दिवि द्युलोके सोमः देवानामाप्यायनकारी[4] वल्लीरूपो देवतारूपश्च अधि श्रितः अधितिष्ठति। इति स्वपतिं सोमं सूर्या स्तौति॥

**सोमे॑नादि॒त्या ब॒लिन॒: सोमे॑न पृथि॒वी म॒ही ।**
**अथो॒ नक्ष॑त्राणामे॒षामु॒पस्थे॒ सोम॒ आहि॑तः ॥ २ ॥**

सोमे॑न । आ॒दि॒त्याः । ब॒लिन॑: । सोमे॑न । पृ॒थि॒वी । म॒ही ।
अथो॒ इति॑ । नक्ष॑त्राणाम् । ए॒षाम् । उ॒पऽस्थे॑ । सोम॑: । आऽहि॑तः ॥ २ ॥

सोमेनादित्याः अदितेः पुत्रा इन्द्रादयः बलिनः भवन्ति। ऐन्द्रवायवादिग्रहपरिग्रहादिति[5] भावः। तथा सोमेन आहुत्यात्मनाग्नौ हुतेन पृथिवी भूमिः मही महती भवति। आहुत्या वृष्टिद्वारेण सस्यादिसंपत्तेः। अथो अपि चायं सोमः नक्षत्राणामेषाम्। न क्षं त्रायन्त इति नक्षत्रा ग्रहचमसादयः। तेषामेषाम् उपस्थे सोमः रसात्मकः आहितः। यद्वा। प्रसिद्धानामेव नक्षत्राणामुपस्थ उपस्थाने द्युलोके सोम आहितः। 'तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्' ( तै. ब्रा. ३. २. १. १ ) इत्यादिश्रुतेः। देवतारूपसोमपक्षे। सोमेनादित्या देवा बलिनो बलवन्तो भवन्ति तस्यैकैककलास्वादनात्। 'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः' इत्यादिस्मृतेः। सोमेन पृथिवी मही। अमृतसेकेनौषध्याद्यभिवृद्ध्या[6] पृथिव्या बलवत्त्वम्। चन्द्रस्य नक्षत्राणामुपस्थे स्थितिः प्रसिद्धा॥

**सोमं॑ मन्यते पपि॒वान् यत्सं॑पि॒षन्त्योष॑धिम् ।**
**सोमं॒ यं ब्र॒ह्माणो॑ वि॒दुर्न तस्या॑श्नाति॒ कश्च॒न ॥ ३ ॥**

सोम॑म् । म॒न्य॒ते॒ । प॒पि॒ऽवान् । यत् । स॒म्ऽपि॒षन्ति॑ । ओष॑धिम् ।
सोम॑म् । यम् । ब्र॒ह्माण॑: । वि॒दुः । न । तस्य॑ । अ॒श्ना॒ति॒ । कः । च॒न ॥ ३ ॥

---

१. त-भ—अतस्तद्देवताकाः। २. ग४-त१.२.७—पुस्तकेषु संपूर्णः पाठो दत्तः। ३. त-भ—स्तभिता। ४. त-भ१.४.६.७.८—देवतानामा°। ५. ग१.२—°ग्रहपानादिति; ग४—°ग्रहप्रचारादिति; त-भ१.२.४.६.८—°ग्रहपरादिति। ६. त-भ१.२.४.६.८—°भिवृद्धये।

तं vसोमं vमन्यते । कः[1] । यः vपपिवान् । वर्धनकामार्थं चिकित्सार्थं पीतः सोमो येन । vयत् यमित्यर्थः । यं सोमम् vओषधिं वल्लीरूपं vसंपिंषन्ति सामर्थ्याद्रासायनिकाः । न च स साक्षात्सोमः । तर्हि कः । उच्यते । vसोमं हि तं मन्यते vयं vब्रह्माणः । यद्ब्रह्मशब्दो ब्राह्मणशब्दपर्यायोऽस्ति । 'कुतो नु चरसि ब्रह्मन्' 'तस्मै मा ब्रूया निधिपाय ब्रह्मन्' इत्यादिप्रयोगात् । ब्राह्मणा इत्यर्थः । ते चर्त्विजो यजमानश्च[2] यागसाधनभूतं संस्कर्तुं vविदुः जानन्ति vतस्य अंशम् । यद्वा । कर्मणि षष्ठी । तं सोमं vकश्चन vन vअश्नाति । कश्चिदप्ययज्वेति शेषः । यज्वैनं[3] भक्षयितुमर्हति नान्य इत्यर्थः । एवमोषधिपक्षे । अथ चन्द्रपक्ष उच्यते । तं सोमं मन्यते पपिवान् पीतवान्[4] यजमानो यद्यमोषधिरूपं संपिंषन्त्यभिषवग्रावभिरध्वर्य्वादयो यजमानश्च[5] । न च स सोमः । कस्तर्हि । यं ब्रह्माणो ब्राह्मणा अभिज्ञा दैवज्ञा विदुः कथयन्ति चन्द्रमसं न तस्याश्नाति कश्चनादेवो देवेभ्योऽन्यो मनुष्यादिः । देवा अग्न्यादयो रश्मयो वा । यज्ञार्हसोमस्यासोमत्वं न निन्दायै अपि तु इतरस्य स्तुत्यै इति मन्तव्यम् । 'अपशवो वा अन्ये गोअश्वेभ्यः' (तै. सं. ५. २. ९. ४) इत्यादिवत् । एवमत्र सोम्या उभयथा योज्याः ॥

आच्छद्विधानैर्गुपितो बार्हतैः सोम रक्षितः ।
ग्राव्णामिच्छृण्वन् तिष्ठसि न ते अश्नाति पार्थिवः ॥ ४ ॥

आच्छत्ऽविधानैः । गुपितः । बार्हतैः । सोम । रक्षितः ।
ग्राव्णाम् । इत् । शृण्वन् । तिष्ठसि । न । ते । अश्नाति । पार्थिवः ॥ ४ ॥

हे vसोम vआच्छद्विधानैः । आच्छादयन्ति विधानानि येषां विद्यन्ते त आच्छद्विधानाः । तैः vगुपितः । तथा vबार्हतैः गुपितः स्वानभ्राजाङ्घार्यादिभिः[6] सप्तभिः सोमपालैः vरक्षितः त्वम् । 'एते वा अमुष्मिँल्लोके सोममरक्षन्' (तै. सं. ६.१.१०.५) इति ब्राह्मणम् । vग्राव्णामिच्छृण्वन् अभिषवग्राव्णां ध्वनिं शृण्वन्नेव vतिष्ठसि । vते त्वां vपार्थिवः पार्थिवो जनः vन vअश्नाति । न हि द्युस्थश्चन्द्ररूपः सोमोऽन्यैः पानयोग्यो भवति । 'चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति' (श. ब्रा. ११.१.५.३) इति वाजसनेयकम् ॥

यत्त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः ।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥ ५ ॥

यत् । त्वा । देव । प्रऽपिबन्ति । ततः । आ । प्यायसे । पुनरिति ।
वायुः । सोमस्य । रक्षिता । समानाम् । मासः । आऽकृतिः ॥ ५ ॥

हे vदेव सोम vयत् यदा vत्वा त्वां vप्रपिबन्ति ओषधिरूपं त्रिष्वपि सवनेषु vततः अनन्तरमेव vपुनः vआ vप्यायसे । 'आ प्यायस्व सम्' (ऋ. सं. १. ९१. १६) इति प्रातःसवने 'सं ते पयांसि' (ऋ. सं. १. ९१. १८) इत्युत्तरयोः सवनयोराप्यायसे । किंच vवायुः तव vसोमस्य

१. ग४–श्चामानकः; त१.२.३.६.७–न्यः नकः; त८–न्यनेकः; भ१–न्यनः क; भ२–न्यं नकः; भ४.६.८–न्यनकः । २. त-भ२.८–यजमानाश्च । ३. ग–यज्वैव तत्; त-भ–यज्वैतत् । ४. ग४–पीतवान् पाता; त१.२.३.६.७–पीतवान् पीतसोमो; भ–पीतवान् पीत । ५. त-भ१.२.४.६–यजमानाश्च । ६. त-भ–स्वानभ्राजांघारादिभिः ।

ᵛरक्षिता । यथा न शुष्यति तथा । वायुः शोषकः प्रसिद्धो लोके । किंच ᵛमासः । ‘ मसी परिमाणे ’। मस्यते परिमीयत इति मासः सोमः । स च ᵛसमानां संवत्सराणाम् ᵛआकृतिः आकर्ता व्यवच्छेदको भवति । संवत्सरे संवत्सरे[1] वसन्तादिकालेष्वनुष्ठीयमानत्वात् ‘ वसन्ते वसन्ते ज्योतिषा यजेत ’ इति श्रुतेः । यद्वा । सोमाधारवनस्पतिविकारग्रहद्वारेण वायुः सोमरसस्य[2] रक्षिता भवति । ‘ वायुगोपा वनस्पतयः ’ इति श्रुतेः । एवं वल्लीरूपसोमपक्षे योजना । चन्द्रपक्षे तु । हे देव सोम यद्यदा त्वा त्वां प्रपिबन्ति रश्मयोऽपरपक्षे ततोऽनन्तरमेव पूर्वपक्षे पुनराप्यायसे । वायुश्च सोमस्य तव रक्षिता । वाय्वधीनत्वाच्चन्द्रगतेः । किंच समानां संवत्सराणां मासः । षष्ठ्येकवचनमेतत् । मासस्याकृतिश्च कर्ता त्वं चासि । एकैककलाह्रासवृद्धिभ्यां हि मासः पूर्यते तैः संवत्सर इति ॥ ॥ २० ॥

**रैभ्यासीदनुदेयीं नाराशंसी न्योचनी ।**
**सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम् ॥ ६ ॥**

रैभी । आसीत् । अनुऽदेयी । नाराशंसी । निऽओचनी ।
सूर्यायाः । भद्रम् । इत् । वासः । गाथया । एति । परिऽकृतम् ॥ ६ ॥

आभिः सूर्या स्वविवाहमस्तौदित्युक्तम् । सूर्या सावित्री ब्रूते । ᵛरैभी । रैभ्यः काश्चनर्चः । ‘ रैभीः शंसति रेभन्तो वै देवाश्चर्षयश्च स्वर्गं लोकमायन् ’ ( ऐ. ब्रा. ६. ३२ ) इत्यादिब्राह्मण-विहिता रैभ्यः[3] । सा[3] रैभी ᵛअनुदेयी ᵛआसीत् । दीयमानवधूविनोदनायानुदीयमाना वयस्यासीत् । तथा ᵛनाराशंसी । ‘ प्राता रत्नम् ’ ( ऋ. सं. १. १२५. १ ) इत्यादिका मनुष्याणां स्तुतयो नाराशंस्यः । सा नाराशंसी ᵛन्योचनी । उचतिः सेवाकर्मा । सा वधूशुश्रूषार्थं दीयमाना दास्यभवत् । ᵛसूर्यायाः मम ᵛभद्रं ᵛवासः विचित्रं दुकूलादिकमाच्छादनयोग्यं वस्त्रं ᵛगाथया ᵛपरिष्कृतम् अलंकृतम् ᵛएति । ‘ गाथा गीयते ’ इत्यादिब्राह्मणोक्ता गाथा । तया गाथया यत्परिष्कृतमस्ति तद्वासोऽभवदिति ॥

**चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम् ।**
**द्यौर्भूमिः कोश आसीद्यदयात्सूर्या पतिम् ॥ ७ ॥**

चित्तिः । आः । उपऽबर्हणम् । चक्षुः । आः । अभिऽअञ्जनम् ।
द्यौः । भूमिः । कोशः । आसीत् । यत् । अयात् । सूर्या । पतिम् ॥ ७ ॥

ᵛचित्तिः देवता ᵛउपबर्हणम् ᵛआः आसीत् । ᵛचक्षुः ᵛअभ्यञ्जनम् ᵛआः आसीत् । तथा हि । वृत्रस्य कनीनिका परापतत्त्रिककुन्नाम पर्वते । तेन त्रैककुदेनाञ्जनसजातीयेन चक्षुषी आञ्जते । तच्चक्षुरेवाञ्जनमासीदिति । ᵛद्यौः च ᵛभूमिः च ᵛकोशः ᵛआसीत्[4] । कोशस्थानीये[5] अभूताम् । ᵛयत् यदा ᵛसूर्या ᵛपतिं स्वकीयं नवभर्तारं सोमम् ᵛअयात् अगच्छत् तदैवमुपकरणान्यासन् ॥

**स्तोमा आसन्प्रतिधयः कुरीरं छन्द ओपशः ।**
**सूर्याया अश्विना वराग्निरासीत्पुरोगवः ॥ ८ ॥**

१. त१.२.३.६.७.८-भ–‘ संवत्सरे ’ नास्ति । २. ग-त-भ–सोमस्य । ३. त१.२.३.६.८-भ४.६८–रैभ्यासीः; त७-भ२–रेभ्यासीत्; भ१.७–रेभ्यासिः । ४. ग-त-भ–‘ आसीत् ’ नास्ति । ५. ग२–कोशस्थानीयौ; ग४–कोशस्थानीय; त-भ–कोशस्थानीया ।

स्तोमाः । आसन् । प्रतिऽधयः । कुरीरम् । छन्दः । ओपशः ।
सूर्यायाः । अश्विना । वरा । अग्निः । आसीत् । पुरःऽगवः ॥ ८ ॥

सूर्याया रथस्य ᵛस्तोमाः त्रिवृदादयः ᵛप्रतिधयः ᵛआसन् । प्रतिधीयन्त इति प्रतिधय ईषा-तिर्यगायतकाष्ठादयः । तथा ᵛकुरीरं ᵛछन्दः कुरीरनामकं छन्दोऽनसः ᵛओपशः अभवत् । येनोपशेरते स ओपशः । तादृशायाः ᵛसूर्यायाः ᵛअश्विना अश्विनौ ᵛवरा वरावास्तामिति शेषः । तस्या विवाहे ᵛपुरोगवः पुरोगन्ता पुरतो गन्ता[1] यः पूर्वमेव प्रस्तावार्थं गच्छति तत्स्थानीयः ᵛअग्निरासीत् । 'प्रजापतिर्वै[2] सोमाय राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीं तस्यै सर्वे देवा वरा आगच्छन्' (ऐ. ब्रा. ४.७) इत्यादि हि ब्राह्मणम् । अत्रायमभिप्रायः । प्रजापतिः सविता स्वदुहितरं सोमाय[3] प्रायच्छत्[3] । सोमाय दास्यामीति मनीषामकरोत् । तस्मिन् समये पुत्र्या उपचारार्थं प्रदानान्युक्तान्यभवन् । तथा च सत्यश्विनौ प्रबलौ[4] सन्तावाजिं पुरतो गत्वा तामलभेतामिति । उत्तरत्रापि 'सोमो वधूयुरभवत्' इत्यादिनायमेवार्थः स्पष्टो भविष्यति । 'योषावृणीत जेन्या' (ऋ.सं.१.११९.५) इत्यादिकमुक्तम् ॥

सोमो वधूयुरभवदश्विनास्तामुभा वरा ।
सूर्यां यत्पत्ये शंसन्तीं मनसा सवितादवात् ॥ ९ ॥

सोमः । वधुऽयुः । अभवत् । अश्विना । आस्ताम् । उभा । वरा ।
सूर्याम् । यत् । पत्ये । शंसन्तीम् । मनसा । सविता । अददात् ॥ ९ ॥

ᵛसोमो ᵛवधूयुः वधूकामो वरः ᵛअभवत् । तस्मिन् समये ᵛअश्विना अश्विनौ ᵛउभा उभौ ᵛवरा वरौ ᵛआस्ताम् अभूताम् । ᵛयत् यदा ᵛसूर्यां ᵛपत्ये ᵛशंसन्तीं पतिं कामयमानाम् । पर्याप्तयौवनामित्यर्थः । सूर्यां ᵛमनसा सहिताय[5] सोमाय वराय ᵛसविता तत्पिता ᵛअददात् प्रादात् दित्सां चकार ॥

मनो अस्या अन आसीद् द्यौरासीदुत च्छदिः ।
शुक्रावनड्वाहावास्तां यदयात्सूर्या गृहम् ॥ १० ॥

मनः । अस्याः । अनः । आसीत् । द्यौः । आसीत् । उत । छदिः ।
शुक्रौ । अनड्वाहौ । आस्ताम् । यत् । अयात् । सूर्या । गृहम् ॥ १० ॥

ᵛअस्याः सूर्यायाः पत्युर्गृहं गच्छन्त्याः ᵛअनः रथः ᵛमनः ᵛआसीत् । या पतिगृहं त्वया गच्छामीति मतिरस्ति सा मन आसीत् । ᵛउत अपि च तस्या अनसः ᵛद्यौः द्युलोकः ᵛछदिः उपर्यपिधानम् ᵛआसीत् । ᵛशुक्रौ दीप्तौ सूर्याचन्द्रमसौ ᵛअनड्वाहौ रथस्य वोढारौ ᵛआस्ताम् अभवताम् । ᵛयत् यदा ᵛसूर्या ᵛगृहं सोमम् ᵛअयात् अगात् ॥ ॥ २१ ॥

ऋक्सामाभ्यामभिहितौ गावौ ते सामनावितः ।
श्रोत्रं ते चक्रे आस्तां दिवि पन्थाश्चराचरः ॥ ११ ॥

ऋक्ऽसामाभ्याम् । अभिऽहितौ । गावौ । ते । सामनौ । इतः ।
श्रोत्रम् । ते । चक्रे इति । आस्ताम् । दिवि । पन्थाः । चराचरः ॥ ११ ॥

---

१. ग-त-भ–गंतासीत् । २. त-भ–प्रजापतिः । ३. त-भ–'सोमाय प्रायच्छत्' नास्ति । ४. त१.२.६.७.८-भ१.२.४.६.८–प्रबलौ सबलौ । ५. त४.५–सहितां ।

हे सूर्ये देवि ते तव ऋक्सामाभ्याम् अभिधानीस्थानाभ्याम् अभिहितौ गावौ[1] गोस्थानीयौ सूर्याचन्द्रमसौ सामनौ सामानौ[2] सन्तौ इतः गच्छतः। अनोवाहौ[3] पत्युर्गृहं प्रति गच्छतः। ते तव श्रोत्रम्। श्रोत्रे इत्यर्थः। वरस्य गुणग्राहिणी श्रोत्रे एव चक्रे आस्ताम्। मनोरूपस्य रथस्य श्रोत्रे चक्रे अभवतामित्यर्थः। दिवि पन्थाश्चराचरः चलाचलोऽत्यन्तं गमनसाधनभूतो मार्गोऽभूत्। रथसंचारप्रदेशो द्युलोक आसीत्॥

**शुची॑ ते च॒क्रे या॒त्या व्या॒नो अक्ष॒ आह॑तः।**
**अनो॑ मन॒स्मयं॑ सू॒र्यारो॑हत्प्रय॒ती पति॑म्॥ १२॥**

शु॒ची इति॑। ते॒। च॒क्रे इति॑। या॒त्याः। वि॒ऽआ॒नः। अक्षः॑। आऽह॑तः।
अनः॑। म॒न॒स्मय॑म्। सू॒र्या। आ। अ॒रो॒ह॒त्। प्र॒ऽय॒ती। पति॑म्॥ १२॥

यात्याः गच्छन्त्याः ते तव अनसः चक्रे चङ्क्रमणशीले रथाङ्गे शुची श्रोत्रे आस्ताम्। व्यानः तव व्यानो वायुः अक्षः। उभयरथचक्रच्छिद्रगामिनी या काष्ठा सा च रथस्य सर्वं भारं वहति। सोऽक्षो व्यानोऽभूत्। मनस्मयं मनोमयम् अनः शकटं सूर्या[4] पतिं[4] सोमं प्रति प्रयती प्रकर्षेण गच्छन्ती आरोहत् आरूढवती। पतिं प्रति जिगमिषोर्मनोरूपस्य रथस्य पत्युर्गुणश्राविणी श्रोत्रे एव चक्रे अभूतां व्यानो धारको वायुश्रेष्ठकोऽक्षोऽभूदित्यर्थः[5]॥

**सू॒र्याया॑ वह॒तुः प्रागा॑त्सवि॒ता यम॒वासृ॑जत्।**
**अ॒घासु॑ हन्यन्ते॒ गावोऽर्जु॑न्यो॒ः पर्यु॑ह्यते॥ १३॥**

सू॒र्यायाः॑। व॒ह॒तुः। प्र। अ॒गा॒त्। स॒वि॒ता। यम्। अ॒व॒ऽअसृ॑जत्।
अ॒घासु॑। ह॒न्य॒न्ते॒। गावः॑। अर्जु॑न्योः। परि॑। उ॒ह्य॒ते॒॥ १३॥

सोमाय प्रदित्सितायाः सूर्याया वहतुः। कन्याप्रियार्थं दातव्यो गवादिपदार्थो वहतुः। स च प्रागात् तस्या अपि पूर्वमगच्छत्। यं वहतुं सविता अस्याः पिता अवासृजत् अवसृष्टवान्। प्रादादित्यर्थः। कदा सागच्छत् कदा वहतुरित्युभयोः काल उच्यते। अघासु। मघास्वित्यर्थः। मघानक्षत्रेषु गावः सवित्रा दत्ता गावः सोमगृहं प्रति हन्यन्ते दण्डैस्ताड्यन्ते प्रेरणार्थम्। अर्जुन्योः। फल्गुन्योरित्यर्थः। तयोर्नक्षत्रयोः सवितुः सकाशात् परि सोमगृहं प्रति उह्यते नीयते रथेन[6]॥

**यद॑श्विना पृ॒च्छमा॑ना॒वया॑तं त्रिच॒क्रेण॑ वह॒तुं सू॒र्यायाः॑।**
**विश्वे॑ दे॒वा अनु॒ तद्वा॑मजानन्पु॒त्रः पि॒तरा॑ववृणीत पू॒षा॥ १४॥**

यत्। अ॒श्वि॒ना। पृ॒च्छमा॑नौ। अया॑तम्। त्रि॒ऽच॒क्रेण॑। व॒ह॒तुम्। सू॒र्यायाः॑।
विश्वे॑। दे॒वाः। अनु॑। तत्। वा॒म्। अ॒जा॒न॒न्। पु॒त्रः। पि॒तरौ॑। अ॒वृ॒णी॒त॒। पू॒षा॥ १४॥

१. ग४–नियमितौ गावौ। २. ग-त१.२.३.४.५.७-भ७–‘सामानौ’ नास्ति। ३. ग-त१.२.३.६.७-भ२.८–अनोवोढ्वा; त४.५–अनोवोप्रा; भ४.६.७–अनोवोढा। ४. त-भ–सूर्यां प्रति। ५. ग-त-भ१.२.४.६.८–वायुश्चेत्यष्टको°। ६. ग१.२–रथेन प्राप्यते मघाभिर्गाव इत्यादि गृह्यं; ग४-त४.५-भ१.२.६–पुस्तकेषु ‘रथेन’ इत्यस्यानन्तरं कियांश्चिदवकाशो विद्यते।

हे ᵛअश्विना अश्विनौ ᵛयत् यदा ᵛपृच्छमानौ सवितारं प्रष्टुम् ᵛअयातम् अगच्छतम्। केन साधनेनायातं तदुच्यते। ᵛत्रिचक्रेण चक्रत्रययुक्तेन रथेन। किं पृच्छमानौ। ᵛसूर्यायाः ᵛवहतुम्। विवाहमित्यर्थः। ᵛतत् तदानीं ᵛवां युवां सवितारं प्रति गच्छन्तौ ᵛविश्वे सर्वे ᵛदेवाः ᵛअनु ᵛअजानन् अनुज्ञातवन्तः। तथा ᵛपितरौ ᵛपुत्रः अश्विनोः पुत्रः ᵛपूषा ᵛअवृणीत वृतवान्॥

यद॑यातं शुभस्पती वरे॒यं सू॒र्यामुप॑ ।
क्वैकं॑ च॒क्रं वा॑मासी॒त्क्व॑ दे॒ष्ट्राय॑ तस्थथुः ॥ १५ ॥

यत्। अया॑तम्। शु॒भः। प॒ती इति॑। व॒रे॒ऽयम्। सू॒र्याम्। उप॑।
क्व॑। एक॑म्। च॒क्रम्। वा॒म्। आ॒सी॒त्। क्व॑। दे॒ष्ट्राय॑। त॒स्थ॒थुः॥ १५॥

हे ᵛशुभस्पती उदकस्य स्वामिनौ ᵛयत् यौ ᵛअयातम् अगच्छतम्। कं प्रति। ᵛवरेयं वरणीयायाः सूर्यायाः संबन्धिनं वरयाचितव्यं वा। सवितारमित्यर्थः। किमर्थम्। ᵛसूर्यामुप गन्तुम्। ᵛवां भवतोः संप्रति दृश्यमानमिदम् ᵛएकं ᵛचक्रं ᵛक्व ᵛआसीत् पुरा। ᵛक्व वां युवां ᵛदेष्ट्राय दानाय प्रवृत्तौ ᵛतस्थथुः इत्यश्विनोर्निवासं पृच्छति॥ ॥ २२ ॥

द्वे ते॑ च॒क्रे सू॑र्ये ब्र॒ह्माण॑ ऋतु॒था वि॑दुः ।
अथैकं॑ च॒क्रं यद्गुहा॒ तद॑द्धा॒तय॒ इद्वि॑दुः ॥ १६ ॥

द्वे इति॑। ते॒। च॒क्रे इति॑। सू॒र्ये॒। ब्र॒ह्माणः॑। ऋ॒तु॒ऽथा। वि॒दुः॒।
अथ॑। एक॑म्। च॒क्रम्। यत्। गुहा॑। तत्। अ॒द्धा॒तयः॑। इत्। वि॒दुः॒॥ १६॥

अथ स्वयमेव स्वात्मानं प्रति सूर्या वदति। हे ᵛसूर्ये ᵛते तव ᵛद्वे ᵛचक्रे प्रज्ञाते पुरा दृष्टे द्वे एव चन्द्रसूर्यात्मके ᵛऋतुथा ऋतुषु विनिर्दिष्टे चक्रे ᵛब्रह्माणः ब्राह्मणाः ᵛविदुः। ᵛअथैकं ᵛचक्रं तृतीयं संवत्सरात्मकं ᵛगुहा गुहायां निहितं ᵛयत् अस्ति ᵛतदद्धातय ᵛइत्। एतन्मेधाविनामसु पठितम् (नि. ३. १५. २१)। मेधाविन एव ᵛविदुः जानन्ति॥

सू॒र्यायै॑ दे॒वेभ्यो॑ मि॒त्राय॒ वरु॑णाय च ।
ये भू॒तस्य॒ प्रचे॑तस इ॒दं तेभ्यो॑ऽकर॒ं नमः॑ ॥ १७ ॥

सू॒र्यायै॑। दे॒वेभ्यः॑। मि॒त्राय॑। वरु॑णाय। च॒।
ये। भू॒तस्य॑। प्रऽचे॑तसः। इ॒दम्। तेभ्यः॑। अ॒क॒र॒म्। नमः॑॥ १७॥

ᵛसूर्यायै सूर्यस्य पत्न्यै ᵛदेवेभ्यः अग्न्यादिभ्यः ᵛमित्राय ᵛवरुणाय ᵛच ᵛये च ᵛभूतस्य भूतजातस्य ᵛप्रचेतसः सुमतयोऽभिमतप्रदा भवन्ति ᵛतेभ्यः सर्वेभ्यः ᵛइदं ᵛनमः नमस्कारम् ᵛअकरं करोमि॥

पू॒र्वा॒प॒रं च॑रतो मा॒यये॒तौ शिशू॒ क्रीळ॑न्तौ॒ परि॑ यातो अध्व॒रम् ।
विश्वा॑न्य॒न्यो भुव॑नाभि॒चष्ट॑ ऋ॒तूँर॒न्यो वि॒दध॑ज्जायते॒ पुनः॑ ॥ १८ ॥

पू॒र्व॒ऽअ॒प॒रम्। च॒र॒तः॒। मा॒यया॑। ए॒तौ। शिशू॒ इति॑। क्रीळ॑न्तौ। परि॑। या॒तः॒। अ॒ध्व॒रम्।
विश्वा॑नि। अ॒न्यः। भुव॑ना। अ॒भि॒ऽचष्टे॑। ऋ॒तून्। अ॒न्यः। वि॒ऽदध॑त्। जा॒य॒ते॒। पु॒न॒रिति॑॥ १८॥

कश्चित्पूर्वं गच्छति सूर्यः। अन्यस्तमनुचरति चन्द्रमाः। एवं पूर्वापरं पौर्वापर्येण मायया स्वप्रज्ञानेन एतौ आदित्यचन्द्रौ चरतः गच्छतो दिवि। तौ शिशू। शिशुवत्क्रमणाजायमानत्वाद्वा शिशू इत्युच्येते। शिशू सन्तौ क्रीळन्तौ अन्तरिक्षे विहरन्तौ अध्वरं परि यातः यज्ञं प्रतिगच्छतः। तयोः अन्यः आदित्यः विश्वानि भुवना भुवनानि अभिचष्टे अभिपश्यति। ऋतून् वसन्तादीन् अन्यः चन्द्रमाः विदधत् कुर्वन् मासानर्धमासांश्च कुर्वन् पुनः जायते। यद्यप्युभयोरपि पुनर्जनिरस्ति तथापि सूर्यस्य सर्वदा प्रवृद्धेरुदयो नाभिप्रेतः। चन्द्रस्य तु ह्रासवृद्धिसद्भावात्पुनःपुनर्जायत इत्युक्तिर्युक्ता। 'चन्द्रमा वै जायते पुनः' (तै. ब्रा. ३. ९. ५. ४) इत्यादिश्रुतेः[1] ॥

अतिमूर्तिनाम्न्येकाहे शुक्लपक्षे चान्द्रमसर्याष्टिः। तत्र 'नवोनवः' इत्येषा याज्या। सूत्रितं च— 'नवोनवो भवति जायमानस्तरणिर्विश्वदर्शतः' (आश्व. श्रौ. ९. ८) इति ॥

**नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्।**
**भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥ १९ ॥**

नवःऽनवः। भवति। जायमानः। अह्नाम्। केतुः। उषसाम्। एति। अग्रम्।
भागम्। देवेभ्यः। वि। दधाति। आऽयन्। प्र। चन्द्रमाः। तिरते। दीर्घम्। आयुः ॥१९॥

अयं चन्द्रमाः जायमानः प्रतिदिनं जायमान एकैककलाधिक्येनोत्पद्यमानः सन् नवोनवो भवति प्रतिदिनं नूतन एव भवति। एतत्पूर्वपक्षाद्यभिप्रायम्। तथा अह्नां दिवसानां केतुः प्रज्ञापकः प्रतिपदादीनां तिथीनां चन्द्रकलाह्रासवृद्ध्यधीनत्वात्। तादृशश्चन्द्रमाः उषसां प्रभातीनाम्[2] अग्रम् एति। एतत्कृष्णपक्षान्ताभिप्रायम्। केचनैतं पादमादित्यदेवत्यमाहुः[3]। तस्मिन् पक्षेऽह्नां केतुत्वमुषसामग्रगतिश्च प्रसिद्धे। देवेभ्यः भागं हविर्भागं वि दधाति करोति उभयपक्षान्ते। किं कुर्वन्। आयन् प्रतिदिनं ह्रासवृद्ध्या पक्षान्तमभिगच्छन्। एतदर्धमासाभिप्रायम्। चन्द्रमाः उक्तलक्षणो देवः दीर्घमायुः तिरते वर्धयति ॥

**सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम्।**
**आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥ २० ॥**

सुऽकिंशुकम्। शल्मलिम्। विश्वऽरूपम्। हिरण्यऽवर्णम्। सुऽवृतम्। सुऽचक्रम्।
आ। रोह। सूर्ये। अमृतस्य। लोकम्। स्योनम्। पत्ये। वहतुम्। कृणुष्व ॥ २० ॥

सुकिंशुकं शोभनकिंशुकवृक्षनिर्मितं तथा शल्मलिं शल्मलिवृक्षनिर्मितं विश्वरूपं नानारूपं हिरण्यवर्णं हितरमणीयवर्णं हिरण्यालंकारयुक्तं वा सुवृतं सुष्ठुवर्तनं सुचक्रं शोभनचक्रोपेतं रथं हे सूर्ये आ रोह। अमृतस्य लोकं स्थानं स्योनं सुखकरं पत्ये सोमाय वहतुं वहनमात्मनः प्रापणं कृणुष्व कुरुष्व। अत्र निरुक्तं (१२. ८) द्रष्टव्यम् ॥ ॥ २३ ॥

**उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीळे।**
**अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥ २१ ॥**

१. ग-त-°श्रुतेश्च। २. ग-त-भ१.२.४.६.८-प्रभातानां। ३. ग-°देवत्यमाहुः।

उत् । ईर्ष्व । अतः । पतिऽवती । हि । एषा । विश्वऽवसुम् । नमसा । गीःऽभिः । ईळे ।
अन्याम् । इच्छ । पितृऽसदम् । विऽअक्ताम् । सः । ते । भागः । जनुषा । तस्य । विद्धि ॥ २१ ॥

आभिर्नृणां विवाहः स्तूयते । हे विश्वावसो ᵛअतः स्थानात् कन्यासमीपात् ᵛउदीर्ष्व उत्तिष्ठ । यतः ᵛएषा कन्या ᵛपतिवती ᵛहि संजाता अत उदीर्ष्वेति वा अतःशब्दो योज्यः । ᵛविश्वावसुम् एतन्नामानं गन्धर्वं ᵛनमसा नमस्कारेण ᵛगीर्भिः स्तुतिभिश्च ᵛईळे स्तौमि । तर्ह्येनां विहाय कां स्वीकरोमीति यदि ब्रूषे तर्हि ᵛअन्यां ᵛपितृषदं पितृकुले स्थितां ᵛव्यक्ताम् अनक्तेति परिस्फुटां विगताञ्जनां वा । स्तनोद्गमादिराहित्येनाप्रौढामित्यर्थः । ᵛसः तादृशः पदार्थः ᵛते तव ᵛभागः कल्पितः । ᵛतस्य तं[1] भागं ᵛविद्धि जानीहि ᵛजनुषा जन्मना । लभस्वेत्यर्थः ॥

**उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा ।**
**अन्यामिच्छ प्रफर्व्यं[1] सं जायां पत्या सृज ॥ २२ ॥**

उत् । ईर्ष्व । अतः । विश्वावसो इति विश्वऽवसो । नमसा । ईळामहे । त्वा ।
अन्याम् । इच्छ । प्रऽफर्व्यम् । सम् । जायाम् । पत्या । सृज ॥ २२ ॥

ᵛअतः अस्माच्छयनात् हे ᵛविश्वावसो कन्यास्वामिन् गन्धर्व ᵛउदीर्ष्व उद्गच्छ । 'ईर गतौ' । आदादिकः । अनुदात्तेत् । तस्य लोटि रूपम् । 'विश्वावसुर्नाम गन्धर्वः कन्यानामधिपतिर्यतः । लभामि तेन कन्याम्' इति हि मन्त्रः । तादृश देव त्वां ᵛनमसा नमस्कारेण ᵛईळामहे स्तुमः । स त्वम् ᵛअन्यां ᵛप्रफर्व्यं बृहन्नितम्बां[2] कन्याम् ᵛइच्छ । ᵛजायां मां ᵛपत्या सह पुनः ᵛसं ᵛसृज ॥

**अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम् ।**
**समर्यमा सं भगो नो निनीयात्सं जास्पत्यं सुयममस्तु देवाः ॥ २३ ॥**

अनृक्षराः । ऋजवः । सन्तु । पन्थाः । येभिः । सखायः । यन्ति । नः । वरेऽयम् ।
सम् । अर्यमा । सम् । भगः । नः । निनीयात् ।
सम् । जाःपत्यम् । सुऽयमम् । अस्तु । देवाः ॥ २३ ॥

हे देवाः ᵛपन्थाः पन्थानो मार्गाः ᵛअनृक्षराः । ऋक्षरः कण्टक उच्यते । कण्टकरहिताः ᵛऋजवः अकुटिलाश्च ᵛसन्तु ᵛयेभिः यैः पथिभिः ᵛनः अस्माकं ᵛसखायः वरप्रेषिताः ᵛवरेयं वरैर्याचितव्यं पितरं प्रति ᵛयन्ति गच्छन्ति ते पन्था इति । किंच ᵛअर्यमा देवः[3] ᵛनः अस्मान्[3] ᵛसं ᵛनिनीयात् सम्यक् प्रापयेत् । तथा ᵛभगः देवः ᵛसं निनीयात् । हे ᵛदेवाः आसंगतमस्तु पतिकुलमिति शेषः । तथेदं ᵛजास्पत्यं जायापत्योर्युगलं ᵛसुयमम् अस्तु सुमिथुनमस्तु ॥

पत्न्या योक्त्रविमोचने 'प्र त्वा मुञ्चामि' इत्येषा । सूत्रितं च— 'अथास्या योक्त्रं विचृतेत्प्र त्वा मुञ्चामि वरुणस्य पाशात्' ( आश्व. श्रौ. १. ११ ) इति ॥

**प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाबध्नात्सविता सुशेवः ।**
**ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ॥ २४ ॥**

---

१. त-भ–ते । २. ग-त१,२.३.६.७.८.भ–' बृहन्नितम्बां ' नास्ति । ३. त-भ–देवोर्यमान् ।

प्र । त्वा । मुञ्चामि । वरुणस्य । पाशात् । येन । त्वा । अबध्नात् । सविता । सुऽशेवः ।
ऋतस्य । योनौ । सुऽकृतस्य । लोके । अरिष्टाम् । त्वा । सह । पत्या । दधामि ॥ २४ ॥

जातं प्राणिनं सवित्रा प्रेरितो वरुण आत्मपाशैर्बध्नाति । तस्मात् ^v^वरुणस्य ^v^पाशात् हे वधु ^v^त्वा त्वां ^v^प्र ^v^मुञ्चामि ^v^येन पाशेन ^v^त्वा त्वां ^v^सविता वरुणस्य प्रेरकः ^v^सुशेवः सुसुखः ^v^अबध्नात् बन्धनं कृतवान् । यज्ञविनियोगपक्षे पत्नीं योक्त्रेण बध्नाति । बन्धनस्य वरुणोऽभिमानी । अतो वरुणपाशाद्योक्त्रात्प्र मुञ्चामि येन योक्त्रेण सविता कर्मणामनुज्ञाता देव ऋत्विक्पाशेनाबध्नात्[1] । तं[2] मोचयित्वा च ^v^ऋतस्य यज्ञस्य ^v^योनौ स्थाने यागभूमौ ^v^सुकृतस्य ^v^लोके कर्मक्षेत्रे भूलोके च ^v^अरिष्टाम् अहिंसितां त्वां पुत्रार्थं ^v^पत्या ^v^सह ^v^दधामि स्थापयामि ॥

प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम् ।
यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥ २५ ॥

प्र । इतः । मुञ्चामि । न । अमुतः । सुऽबद्धाम् । अमुतः । करम् ।
यथा । इयम् । इन्द्र । मीढ्वः । सुऽपुत्रा । सुऽभगा । असति ॥ २५ ॥

^v^इतः पितृकुलात् ^v^प्र ^v^मुञ्चामि त्वां ^v^नामुतः भर्तृगृहात्प्रमुञ्चामि । ^v^अमुतः भर्तृगृहे ^v^सुबद्धां ^v^करम् । ^v^यथेयं कन्या हे ^v^इन्द्र ^v^मीढ्वः सेक्तः ^v^सुपुत्रा ^v^सुभगा सुष्ठुभाग्या वा ^v^असति भवति तथा कुरु ॥      ॥ २४ ॥

विवाहानन्तरभाविनि प्रयाणे 'पूषा त्वेतो नयतु' इत्यनया रथादियानमारोहयेत् । सूत्रितं च—'पूषा त्वेतो नयतु हस्तगृह्येति यानमारोहयेत्' (आश्व. गृ. १. ८. १) इति ॥

पूषा त्वेतो नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन ।
गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि ॥ २६ ॥

पूषा । त्वा । इतः । नयतु । हस्तऽगृह्य । अश्विना । त्वा । प्र । वहताम् । रथेन ।
गृहान् । गच्छ । गृहऽपत्नी । यथा । असः । वशिनी । त्वम् । विदथम् । आ । वदासि ॥ २६ ॥

^v^हस्तगृह्य ग्राह्यहस्तः ^v^पूषा ^v^त्वा त्वाम् ^v^इतः ^v^नयतु प्रापयतु । ^v^अश्विना अश्विनौ ^v^त्वा त्वां ^v^रथेन ^v^प्र ^v^वहतां प्रगमयताम् । ^v^गृहान् भर्तृसंबन्धिनः ^v^गच्छ त्वं[3] ^v^गृहपत्नी ^v^यथासः भवसि स्वगृहस्वामिनी भवसि । ^v^वशिनी सर्वेषां गृहगतानां वशं प्रापयित्री पत्युर्वशे वर्तमाना वा ^v^विदथं पतिगृहम् ^v^आ ^v^वदासि आवदसि । गृहस्थितं भृत्यादिजनमावद ॥

'इह प्रियम्' इत्येषा वध्वा गृहप्रवेशनी । सूत्रितं च—'इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत्' (आश्व. गृ. १. ८. ८) इति ॥

इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं१ सं सृजस्वाधा जिव्री विदथमा वदाथः ॥ २७ ॥

---

१. ग-त४-ऋत्विग्व्याजेनाबध्नात्; त१.२.३.५.६.८-म२.४.६-ऋत्विग्व्याजेनाबध्नात् । २.ग-त-म१. २.४.६.८-'तं' नास्ति । ३. त-म-त्वं यथा ।

इह । प्रियम् । प्रऽजया । ते । सम् । ऋध्यताम् । अस्मिन् । गृहे । गार्हऽपत्याय । जागृहि ।
एना । पत्या । तन्वम् । सम् । सृजस्व । अध । जिव्री इति । विदथम् । आ । वदाथः ॥२७॥

हे वधु ᵛते तव ᵛइह अस्मिन् पतिकुले ᵛप्रियं ᵛप्रजया सह ᵛसमृध्यताम् । ᵛअस्मिन्गृहे ᵛगार्हपत्याय गृहपतित्वाय ᵛजागृहि बुध्यस्व । ᵛएना अनेन ᵛपत्या सह ᵛतन्वं स्वीयं शरीरं ᵛसं ᵛसृजस्व । संसृष्टा भव । ᵛअध अथ ᵛजिव्री जीर्णौ जायापती युवां ᵛविदथं गृहम् ᵛआ ᵛवदाथः आभिमुख्येन वदतम्[1] ॥

**नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।**
**एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ॥ २८ ॥**

नीलऽलोहितम् । भवति । कृत्या । आसक्तिः । वि । अज्यते ।
एधन्ते । अस्याः । ज्ञातयः । पतिः । बन्धेषु । बध्यते ॥ २८ ॥

ᵛकृत्या अभिचाराभिमानिनी देवता ᵛनीललोहितं ᵛभवति । नीलं च लोहितं च तस्या रूपं भवतीत्यर्थः । सा कृत्या ᵛआसक्तिः आसक्तास्यां संबद्धा ᵛव्यज्यते । त्यज्यत इत्यर्थः । तस्यां कृत्यायामपगतायाम् ᵛअस्याः वध्वाः ᵛज्ञातयः ᵛएधन्ते वर्धन्ते । ᵛपतिः च ᵛबन्धेषु सांसारिकेषु ᵛबध्यते ॥

**परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।**
**कृत्यैषा पद्वती भूत्व्या जाया विशते पतिम् ॥ २९ ॥**

परा । देहि । शामुल्यम् । ब्रह्मऽभ्यः । वि । भज । वसु ।
कृत्या । एषा । पत्ऽवती । भूत्वी । आ । जाया । विशते । पतिम् ॥ २९ ॥

ᵛशामुल्यम् । शामलमित्यर्थः । शमलं शारीरं मलम् । शरीरावच्छन्नस्य[2] मलस्य धारकं वस्त्रं ᵛपरा ᵛदेहि परात्यज । कृतप्रायश्चित्तार्थं ᵛब्रह्मभ्यः ब्राह्मणेभ्यः ᵛवसु धनं ᵛवि ᵛभज प्रयच्छेत्यर्थः । किमर्थं वधूवासःपरित्याग इति चेत् उच्यते । ᵛएषा ᵛकृत्या ᵛपद्वती पादवती सती ᵛजाया ᵛभूत्वी[3] भूत्वा ᵛपतिं ᵛविशते । कृत्यारूपवासःप्रवेशात् कृत्या जाया भूत्वा विशत इत्युपचर्यते । अतस्तत्परित्यागे कृत्यैव त्यक्ता भवतीत्यर्थः । यदि वधूवासः स्वयं निधत्ते तदैवं भवतीति वधूवासःसंस्पर्शनं निन्दायुक्तम् ॥

**अश्रीरा तनूर्भवति रुशती पापयामुया ।**
**पतिर्यद्वध्वो३ वाससा स्वमङ्गमभिधित्सते ॥ ३० ॥**

अश्रीरा । तनूः । भवति । रुशती । पापया । अमुया ।
पतिः । यत् । वध्वः । वाससा । स्वम् । अङ्गम् । अभिऽधित्सते ॥ ३० ॥

---

१. ग४-त४.५-वदथः; त१.२.३.६.८-भ-वदतः । २. ग-त१.२.३.७-शरीराच्छन्नस्य; त४.५-शरीरोच्छंतस्य; त६-भ७-शरीरामरीछन्नस्य; त८-शरीरामवीछनस्य; भ१.४.७.८-छिन्नस्य । ३. ग-त-भ-' भूत्वी ' नास्ति ।

अत्रापि वधूवासःसंस्पर्शनिन्दोच्यते। तनूः वरस्य संबन्धिनी अश्रीराः अश्रीका भवति। कथं स्याच्चेदिति उच्यते। रुशती। रुशदिति वर्णनाम। दीप्तया अमुया अनया पापया पापरूपया कृत्यया[1] युक्ता चेत्तनूः। तदेवाह। पतिर्यत् यदि वध्वो वाससा स्वमङ्गमभिधित्सते परिधातुमिच्छति ॥ ॥ २५ ॥

**ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनादनु ।**
**पुनस्तान्यज्ञिया देवा नयन्तु यत आगताः ॥ ३१ ॥**

ये । वध्वः । चन्द्रम् । वहतुम् । यक्ष्माः । यन्ति । जनात् । अनु ।
पुनरिति । तान् । यज्ञियाः । देवाः । नयन्तु । यतः । आऽगताः ॥ ३१ ॥

वध्वश्चन्द्रं[2] हिरण्यरूपं वहतुं ये यक्ष्माः व्याधयः अनु यन्ति प्राप्नुवन्ति जनात् अस्मद्विरोधिनः सकाशात्। यद्वा। जनाश्रमाख्यात्। तान्[3] पुनः नयन्तु प्रापयन्तु यज्ञियाः यज्ञार्हाः देवाः इन्द्रादयः। यत आगताः यस्मात्ते यक्ष्मा आगतास्तत्र तान्नयन्तु ॥

वध्वाः प्रयाणे 'मा विदन्' इत्येषा जप्या। सूत्रितं च—'कल्याणेषु देशवृक्षचतुष्पथेषु मा विदन् परिपन्थिन इति जपेत' ( आश्व. गृ. १. ८. ६ ) इति ॥

**मा विदन्परिपन्थिनो य आसीदन्ति दंपती ।**
**सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः ॥ ३२ ॥**

मा । विदन् । परिऽपन्थिनः । ये । आऽसीदन्ति । दंपती इति दम्ऽपती ।
सुऽगेभिः । दुःऽगम् । अति । इताम् । अप । द्रान्तु । अरातयः ॥ ३२ ॥

परिपन्थिनः पर्यवस्थातारः शत्रवः मा विदन् मा प्रापयन् ये परिपन्थिनः दंपती आसीदन्ति अभिगच्छन्ति। सुगेभिः सुगैर्मार्गैः दुर्गं दुःखेन गन्तुं शक्यं दुर्गमं देशम् अतीतां अतिगच्छताम्। अरातयः अदातारः शत्रवः अप द्रान्तु अपगच्छन्तु[4] ॥

**सुमङ्गलीरियं वधूरिमां समेत पश्यत ।**
**सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन ॥ ३३ ॥**

सुऽमङ्गलीः । इयम् । वधूः । इमाम् । सम्ऽएत । पश्यत ।
सौभाग्यम् । अस्यै । दत्त्वाय । अथ । अस्तम् । वि । परा । इतन ॥ ३३ ॥

इयं वधूः सुमङ्गलीः शोभनमङ्गला। अतः इमां सर्वे आशीःकर्तारः समेत संगच्छत। तां पश्यत च। तां संगताश्च दृष्ट्वा अस्यै ऊढायै सौभाग्यं दत्त्वाय दत्त्वा अथ अस्तम्। गृहनामैतत्। स्वस्वसंबन्धिनं वि परेतन विविधं परागच्छत ॥

---

१. ग-त-भ—कृत्यया यदि। २. त-भ—ये वध्वश्चंद्रं। ३. ग-त—तान् यक्ष्मान्। ४. ग४—अपगच्छंतु। विधिवासदेशे वध्वा निशिक्षमागतान् मनुष्यान् सुमंगलीरित्यनया ईक्षते। तथा च सूत्रितं—वासे वासे सुमंगलीरियं वधूरितीक्षकानीक्षेत ( आश्व. गृ. १.८.७ ) इति।

तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे ।
सूर्यां यो ब्रह्मा विद्यात्स इद्वाधूयमर्हति ॥ ३४ ॥

तृष्टम् । एतत् । कटुकम् । एतत् । अपाष्ठऽवत् । विषऽवत् । न । एतत् । अत्तवे ।
सूर्याम् । यः । ब्रह्मा । विद्यात् । सः । इत् । वाधूऽयम् । अर्हति ॥ ३४ ॥

अनयापि वधूवस्त्रपरित्यागः प्रतिपाद्यते । ᵛएतत् वस्त्रं ᵛतृष्टं दाहजनकम् । तथा ᵛएतत् ᵛकटुकम् । तथा ᵛअपाष्ठवत् । अपाष्ठमपस्थितमृजीषम् । तद्वत् । तथा ᵛविषवत् । ᵛनैतत् वस्त्रम् ᵛअत्तवे अत्तव्यम् । अनुपयोग्यम् । ᵛयो ᵛब्रह्मा ब्राह्मणः ᵛसूर्याम् इदानीं प्रस्तुतां देवीं ᵛविद्यात् सम्यग्जानीयात् ᵛस ᵛइत् स एव ᵛवाधूयं वधूवस्त्रम् ᵛअर्हति[1] ॥

आशसनं विशसनमथो अधिविकर्तनम् ।
सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु शुन्धति ॥ ३५ ॥

आऽशसनम् । विऽशसनम् । अथो इति । अधिऽविकर्तनम् ।
सूर्यायाः । पश्य । रूपाणि । तानि । ब्रह्मा । तु । शुन्धति ॥ ३५ ॥

ᵛआशसनं तूषाधानम् । तच्चान्यवर्णं भवति । ᵛविशसनं शिरसि निधीयमानम् । तादृशं दशान्ते निधीयमानम् ᵛअधिविकर्तनं यत्त्रिधा वासो विकृन्तन्ति । तान्याशसनादीनि वासांस्यवस्थितानि ᵛसूर्यायाः ᵛरूपाणि भवन्ति । तानि ᵛपश्य । एवंभूतान्याशसनादीनि पुरा सूर्यास्वशरीरे स्थितान्यमङ्गलानि वासांसि विधत्ते । ᵛतानि रूपाणि सूर्यावित् ᵛब्रह्मा ᵛतु ब्राह्मण एव तस्माद्वाससः सकाशात् ᵛशुन्धति अपनयति ॥ ॥ २६ ॥

विवाहे कन्याहस्तग्रहणे ' गृभ्णामि ' इत्येषा । सूत्रितं च—' गृभ्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात् ' ( आश्व. गृ. १. ७. ३ ) इति ॥

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ ३६ ॥

गृभ्णामि । ते । सौभगऽत्वाय । हस्तम् । मया । पत्या । जरत्ऽअष्टिः । यथा । असः ।
भगः । अर्यमा । सविता । पुरम्ऽधिः । मह्यम् । त्वा । अदुः । गार्हऽपत्याय । देवाः ॥ ३६ ॥

हे वधु ᵛते तव ᵛहस्तम् अहं ᵛगृभ्णामि गृह्णामि । किमर्थम् । ᵛसौभगत्वाय सौभाग्याय । ᵛमया ᵛपत्या त्वं ᵛयथा ᵛजरदष्टिः प्राप्तवार्धक्या ᵛअसः भवसि । ᵛभगो ᵛअर्यमा ᵛसविता ᵛपुरंधिः पूषा एते[2] ᵛदेवाः ᵛत्वा त्वां ᵛमह्यम् ᵛअदुः दत्तवन्तः । किमर्थम् । ᵛगार्हपत्याय । यथाहं गृहपतिः स्यामिति॥

तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति ।
या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् ॥ ३७ ॥

१. ग–अर्हति । अन्यस्तु प्रतिगृह्णानः प्रत्यवं चारितव्रतः सूर्याविदे वधूवस्त्रं दद्यादिति । २. त-म–त्वेते

ताम् । पूषन् । शिवऽतमाम् । आ । ईरयस्व । यस्याम् । बीजम् । मनुष्याः । वपन्ति ।
या । नः । ऊरू इति । उशती । विऽश्रयाते । यस्याम् । उशन्तः । प्रऽहराम । शेपम् ॥३७॥

हे ᵛपूषन् पोषकैतन्नामक देव ᵛशिवतमाम् अत्यन्तमङ्गलभूतां ᵛताम्[१] ᵛएरयस्व आ ईरय सर्वतः प्रेरय । ᵛयस्याम् ऊरौ ᵛबीजं रेतोलक्षणं ᵛमनुष्या ᵛवपन्ति आदधते । ᵛया ᵛनः अस्माकम् ᵛऊरू ᵛउशती कामयमाना ᵛविश्रयाते । ᵛयस्याम् ऊरौ ᵛउशन्तः कामयमाना वयं ᵛशेपं स्पर्शनयोग्यं पुंस्प्रजननं ᵛप्रहराम । ऊरौ व्यञ्जनसंबन्धं करवामेत्यर्थः ॥

**तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह ।**
**पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ ३८ ॥**

तुभ्यम् । अग्रे । परि । अवहन् । सूर्याम् । वहतुना । सह ।
पुनरिति । पतिऽभ्यः । जायाम् । दाः । अग्ने । प्रऽजया । सह ॥ ३८ ॥

गन्धर्वा हे अग्ने ᵛतुभ्यमग्रे ᵛपर्यवहन् । प्रायच्छन्नित्यर्थः । काम् । ᵛसूर्याम् । केन सह । ᵛवहतुना ᵛसह । त्वं च तां सूर्यां वहतुना सह सोमाय प्रायच्छः । तद्वदिदानीमपि हे ᵛअग्ने ᵛपुनः ᵛपतिभ्यः अस्मभ्यं ᵛजायां ᵛप्रजया ᵛसह ᵛदाः देहि ॥

**पुनः पत्नीमग्निरदादायुषा सह वर्चसा ।**
**दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥ ३९ ॥**

पुनरिति । पत्नीम् । अग्निः । अदात् । आयुषा । सह । वर्चसा ।
दीर्घऽआयुः । अस्याः । यः । पतिः । जीवाति । शरदः । शतम् ॥ ३९ ॥

ᵛपुनः स्वगृहीतां ᵛपत्नीम् ᵛअग्निः ᵛआयुषा[२] ᵛसह ᵛवर्चसा सह[२] ᵛअदात् प्रायच्छत् । ᵛअस्याः अग्निदत्तायाः ᵛयः ᵛपतिः पुमान् सः ᵛदीर्घायुः सन् ᵛशरदः ᵛशतं शतसंवत्सरं ᵛजीवाति जीवतु ॥

**सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।**
**तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ ४० ॥**

सोमः । प्रथमः । विविदे । गन्धर्वः । विविदे । उत्ऽतरः ।
तृतीयः । अग्निः । ते । पतिः । तुरीयः । ते । मनुष्यऽजाः ॥ ४० ॥

जातां कन्यां ᵛसोमः प्रथमभावी सन् ᵛविविदे लब्धवान् । ᵛगन्धर्वः ᵛउत्तरः सन् ᵛविविदे लब्धवान् । ᵛअग्निः ᵛतृतीयः ᵛपतिः ᵛते तव । पश्चात् ᵛमनुष्यजाः पतिः ᵛतुरीयः चतुर्थः ॥ ॥२७॥

**सोमो ददद्गन्धर्वाय गन्धर्वो ददग्नये ।**
**रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ ४१ ॥**

---

१. त-भ-तां ऊरू । २. ग-त-मु-आयुषा वर्चसा च सह; भ-आयुषा सह वर्चसा च ।

सोमः । ददत् । गन्धर्वाय । गन्धर्वः । ददत् । अग्नये ।
रयिम् । च । पुत्रान् । च । अदात् । अग्निः । मह्यम् । अथो इति । इमाम् ॥ ४१ ॥

ᵛसोमः ᵛगन्धर्वाय प्रथमं ᵛददत् प्रादात् । ᵛगन्धर्वः ᵛअग्नये प्रादात् । ᵛअथो अपि च ᵛअग्निः ᵛइमां कन्यां ᵛरयिं धनं ᵛपुत्रांश्च ᵛमह्यम् ᵛअदात् ॥

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ ४२ ॥

इह । एव । स्तम् । मा । वि । यौष्टम् । विश्वम् । आयुः । वि । अश्नुतम् ।
क्रीळन्तौ । पुत्रैः । नप्तृऽभिः । मोदमानौ । स्वे । गृहे ॥ ४२ ॥

ᵛइहैव ᵛस्तम् इहैवास्मिँल्लोके स्तं भवतम् । ᵛमा ᵛवियौष्टं मा पृथग्भूतम् । ᵛविश्वमायुर्व्यश्नुतं प्राप्नुतम् । किंच[1] ᵛपुत्रैर्नप्तृभिः पौत्रैः सह ᵛस्वे ᵛगृहे ᵛमोदमानौ भवतमिति शेषः ॥

गृहप्रवेशे 'आ नः प्रजां जनयतु' इत्याद्याश्चतस्रो होमार्थाः । सूत्रितं च—'आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा' (आश्व. गृ. १. ८. ९) इति ॥

आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा ।
अदुर्मङ्गलीः पतिलोकमा विश शं नो भव द्विपदे शं चतुष्पदे ॥ ४३ ॥

आ । नः । प्रऽजाम् । जनयतु । प्रजाऽपतिः । आऽजरसाय । सम् । अनक्तु । अर्यमा ।
अदुःऽमङ्गलीः । पतिऽलोकम् । आ । विश । शम् । नः । भव । द्विऽपदे । शम् । चतुःऽपदे ॥ ४३ ॥

ᵛप्रजापतिः देवः ᵛनः अस्माकं ᵛप्रजाम् ᵛआ ᵛजनयतु । ᵛअर्यमा च ᵛआजरसाय जरापर्यन्तं जीवनाय ᵛसमनक्तु संगमयतु । सा त्वम् ᵛअदुर्मङ्गलीः दुर्मङ्गलरहिता सुमङ्गली । यद्वा । या मङ्गलाचारान् दूषयति सा दुर्मङ्गली । ततोऽन्या अदुर्मङ्गली । तादृशी सती ᵛपतिलोकं पतिसमीपम् ᵛआ ᵛविश प्राप्नुहि । ᵛनः अस्माकं ᵛद्विपदे ᵛशं ᵛभव । तथा च ᵛशं ᵛचतुष्पदे भव ॥

अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ ४४ ॥

अघोरऽचक्षुः । अपतिऽघ्नी । एधि । शिवा । पशुऽभ्यः । सुऽमनाः । सुऽवर्चाः ।
वीरऽसूः । देवऽकामा । स्योना । शम् । नः । भव । द्विऽपदे । शम् । चतुःऽपदे ॥ ४४ ॥

हे वधु[2] ᵛत्वम् ᵛअघोरचक्षुः क्रोधादभयंकरचक्षुः[3] ᵛएधि भव । तथा ᵛअपतिघ्नी भव । तथा ᵛपशुभ्यः ᵛशिवा हितकरी भव ᵛसुमनाः ᵛसुवर्चाः च भव । ᵛवीरसूः पुत्राणामेव प्रसवित्री ᵛदेवकामा ᵛस्योना सुखकरा च भव ॥

१. ग२–किंच क्रीळंती । २. ग-त-भ–वधूः । ३. त-भ–क्रोधाद्भयंकरचक्षुः ।

**इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु ।**
**दशास्यां पुत्राना धेहि पतिमेकादशं कृधि ॥ ४५ ॥**

इमाम् । त्वम् । इन्द्र । मीढ्वः । सुऽपुत्राम् । सुऽभगाम् । कृणु ।
दश । अस्याम् । पुत्रान् । आ । धेहि । पतिम् । एकादशम् । कृधि ॥ ४५ ॥

हे ^v^इन्द्र ^v^त्वम् ^v^इमां वधूं ^v^सुपुत्रां ^v^सुभगां च ^v^कृणु कुरु । ^v^अस्यां वध्वां ^v^दश ^v^पुत्रान् ^v^आ ^v^धेहि । ^v^पतिमेकादशं ^v^कृधि । दश पुत्राः पतिरेकादशो यथा स्यात्तथा कृधि कुरु ॥

**सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।**
**ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥ ४६ ॥**

सम्ऽराज्ञी । श्वशुरे । भव । सम्ऽराज्ञी । श्वश्र्वाम् । भव ।
ननान्दरि । सम्ऽराज्ञी । भव । सम्ऽराज्ञी । अधि । देवृषु ॥ ४६ ॥

हे वधु श्वशुरादिषु त्वं ^v^सम्राज्ञी ^v^भव । ^v^देवृषु । देवरेष्वित्यर्थः ॥

'समञ्जन्तु' इत्येषा वरस्य दधिप्राशने वधूवरयोर्हृदयस्पर्शने वा विनियुक्ता । तथा च सूत्रितं —'समञ्जन्तु विश्वे देवा इति दध्नः[1] प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये' (आश्व. गृ. १. ८. ९) इति ॥

**समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ ।**
**सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥ ४७ ॥**

सम् । अञ्जन्तु । विश्वे । देवाः । सम् । आपः । हृदयानि । नौ ।
सम् । मातरिश्वा । सम् । धाता । सम् । ऊँ इति । देष्ट्री । दधातु । नौ ॥ ४७ ॥

^v^विश्वे ^v^देवाः सर्वे देवाः ^v^नौ ^v^हृदयानि मानसानि ^v^समञ्जन्तु सम्यगञ्जन्तु । अपगतदुःखादिक्लेशानि कृत्वा लौकिकवैदिकविषयेषु प्रकाशयुक्तानि कुर्वन्त्वित्यर्थः । ^v^आपः च ^v^सम् अञ्जन्तु । तथा ^v^मातरिश्वा नौ हृदयानि ^v^सं ^v^दधातु । आवयोर्बुद्धीः परस्परानुकूलाः करोत्वित्यर्थः । ^v^धाता च ^v^सं दधातु । ^v^देष्ट्री दात्री फलानाम् । सरस्वतीत्यर्थः । सा च ^v^सं दधातु संधानं करोतु ॥ ॥२८॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-
धुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्येऽष्टमाष्टके तृतीयोऽध्यायः ॥

1. ग१.२-त-भ१.२.४.७.८–दधि ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अष्टमाष्टकस्य चतुर्थोऽध्याय आरभ्यते । तत्र ‘ वि हि ’ इति त्रयोविंशत्यृचं द्वितीयं सूक्तम् । वृषाकपिर्नामेन्द्रस्य पुत्रः । स चेन्द्राणीन्द्रश्चेते त्रयः संहताः संविवादं कृतवन्तः । तत्र ‘ वि हि सोतोर-सृक्षत ’ ‘ किं सुबाहो स्वङ्गुरे ’ ‘ इन्द्राणीमासु नारिषु ’ इति द्वे ‘ उक्ष्णो हि मे ’ ‘ अयमेमि ’ इति चतस्र इत्येता नवर्च इन्द्रवाक्यानि । अतस्तासामिन्द्र[1] ऋषिः । ‘ परा हीन्द्र ’ इति पञ्च ‘ अवीराम् ’ इति द्वे ‘ वृषभो न तिग्मशृङ्गः ’ इत्याद्याश्चतस्र इत्येकादशर्च इन्द्राण्या वाक्यानि । अतस्तासामिन्द्रा-ण्यृषिः । ‘ उवे अम्ब ’ ‘ वृषाकपायि रेवति ’ ‘ पशुर्ह नाम ’ इति तिस्रो वृषाकपेर्वाक्यानि । अतस्तासां वृषाकपिर्ऋषिः । सर्वं सूक्तमैन्द्रं पञ्चपदापङ्क्तिच्छन्दस्कम् । तथा चानुक्रान्तं—‘ वि हि त्र्यधिकैन्द्रो वृषाकपिरिन्द्राणीन्द्रश्च समूदिरे पाङ्क्तम् ’ इति । षष्ठेऽहनि ब्राह्मणाच्छंसिन उक्थ्यशस्त्र[2] एतत्सूक्तम् । सूत्रितं च—‘ अथ वृषाकपिं शंसेद्यथा होताज्याद्यां चतुर्थे ’ ( आश्व. श्रौ. ८. ३ ) इति । यदि षष्ठेऽ-हन्युक्थ्यस्तोत्राणि द्विपदासु न स्तुवीरन् सामगा यदि वेदमहरग्निष्टोमः स्यात्तदानीं ब्राह्मणाच्छंसी माध्यंदिने सवन आरम्भणीयाभ्य[3] ऊर्ध्वमेतत्सूक्तं शंसेद्विश्वजित्यपि । तथा च सूत्रितं—‘ सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पङ्क्तिशंसम् ’ ( आश्व. श्रौ. ८. ४ ) इति ॥

**वि हि सोतो॒रसृ॑क्षत॒ नेन्द्रं॑ दे॒वम॑मंसत ।**
**यत्राम॑दद्वृ॒षाक॑पिर॒र्यः पु॒ष्टेषु॒ मत्स॑खा॒ विश्व॑स्मा॒दिन्द्र॒ उत्त॑रः ॥ १ ॥**

वि । हि । सोतोः॑ । असृ॑क्षत । न । इन्द्र॑म् । दे॒वम् । अ॒मं॒स॒त॒ ।
यत्र॑ । अम॑दत् । वृ॒षाक॑पिः । अ॒र्यः । पु॒ष्टेषु॑ । मत्ऽस॑खा । विश्व॑स्मात् । इन्द्रः॑ । उत्ऽत॑रः ॥ १ ॥

ˇसोतोः सोमाभिषवं कर्तुं ˇवि ˇअसृक्षत । यागं प्रति मया विसृष्टा अनुज्ञाताः स्तोतारो वृषाकपेर्यष्टारः । ˇहि इति पूरणः । तत्र ˇदेवं द्योतमानम् ˇइन्द्रं मां ˇन ˇअमंसत । मया प्रेरिताः सन्तोऽपि ते स्तोतारो न स्तुतवन्तः । किंतु मम पुत्रं वृषाकपिमेव स्तुतवन्तः । ˇयत्र येषु ˇपुष्टेषु सोमेन प्रवृद्धेषु यागेषु ˇअर्यः स्वामी ˇवृषाकपिः मम पुत्रः मत्सखा मम सखिभूतः सन् ˇअमदत् सोमपानेन हृष्टोऽभूत् । यद्यप्येवं तथापि[4] ˇइन्द्रः अहं ˇविश्वस्मात् सर्वस्माज्जगतः ˇउत्तरः उत्कृष्टतरः । माधवभट्टास्तु वि हि सोतोरित्येषर्गिन्द्राण्या वाक्यमिति मन्यन्ते । तथा च तद्वचनम् । इन्द्राण्यै कल्पितं हविः कश्चिन्मृगोऽदूदुषदिन्द्रपुत्रस्य वृषाकपेर्विषये वर्तमानः । तत्रेन्द्रमिन्द्राणी वदति । तस्मिन्पक्षे त्वस्या ऋचोऽयमर्थः । सोतोः सोमाभिषवं कर्तुं वि ह्यसृक्षत । उपरतसोमाभिषवा आसन् यजमाना इत्यर्थः । किंच मम पतिमिन्द्रं देवं नामंसत स्तोतारो न स्तुवन्ति । कुत्रेति अत्राह । यत्र यस्मिन् जनपदे पुष्टेषु प्रवृद्धेषु धनेष्वर्यः स्वामी वृषाकपिरमदत् । मत्सखा मत्प्रियश्चेन्द्रो विश्वस्मात् सर्वस्माज्जगत उत्तरः उत्कृष्टतरः ॥

**परा॒ हीन्द्र॒ धाव॑सि वृ॒षाक॑पे॒रति॒ व्यथिः॑ ।**
**नो अह॒ प्र वि॑न्दस्य॒न्यत्र॒ सोम॑पीतये॒ विश्व॑स्मा॒दिन्द्र॒ उत्त॑रः ॥ २ ॥**

---

१. त४.५.८-भ-अत आसामिंद्र । २. त१.२.३-उक्थिशस्त्र; त७-भ-उक्थशस्त्र । ३. त-भ-आरंभणीयाया । ४. त-भ-तथा हि ।

परा । हि । इन्द्र । धावसि । वृषाकपेः । अति । व्यथिः ।
नो इति । अह । प्र । विन्दसि । अन्यत्र । सोमऽपीतये । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥२॥

हे ᵛइन्द्र त्वम् ᵛअति[1] अत्यन्तं ᵛव्यथिः चलितः ᵛवृषाकपेः वृषाकपिं ᵛपरा ᵛधावसि प्रतिगच्छसि। ᵛअन्यत्र ᵛसोमपीतये सोमपानाय ᵛनो ᵛअह नैव च ᵛप्र ᵛविन्दसि प्रगच्छसीत्यर्थः । सोऽयम् ᵛइन्द्रः ᵛविश्वस्मात् ᵛउत्तरः ॥

किमयं त्वां वृषाकपिश्चकार हरितो मृगः ।
यस्मा इरस्यसीदु न्व१र्यो वा पुष्टिमद्वसु विश्वस्मादिन्द्र उत्तरः ॥ ३ ॥

किम् । अयम् । त्वाम् । वृषाकपिः । चकार । हरितः । मृगः ।
यस्मै । इरस्यसि । इत् । ऊँ इति । नु । अर्यः । वा । पुष्टिऽमत् । वसु ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ३ ॥

हे इन्द्र ᵛत्वां प्रति ᵛहरितः हरितवर्णः ᵛमृगः मृगभूतः ᵛअयं ᵛवृषाकपिः । मृगजातिर्हि वृषाकपिः । ᵛकिं प्रियं ᵛचकार अकार्षीत । ᵛयस्मै[2] वृषाकपये ᵛपुष्टिमत् पोषयुक्तं ᵛवसु धनम् ᵛअर्यो ᵛवा उदार इव स त्वं ᵛनु क्षिप्रम् ᵛइरस्यसीत् प्रयच्छस्येव । यः ᵛइन्द्रः ᵛविश्वस्मात ᵛउत्तरः ॥

यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि ।
श्वा न्वस्य जम्भिषदपि कर्णे वराहयुर्विश्वस्मादिन्द्र उत्तरः ॥ ४ ॥

यम् । इमम् । त्वम् । वृषाकपिम् । प्रियम् । इन्द्र । अभिऽरक्षसि ।
श्वा । नु । अस्य । जम्भिषत् । अपि । कर्णे । वराहऽयुः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥४॥

हे ᵛइन्द्र ᵛत्वं ᵛप्रियम् इष्टं पुत्रं ᵛयमिमं ᵛवृषाकपिम् ᵛअभिरक्षसि परिपालयसि ᵛअस्य एनं वृषाकपिम्। द्वितीयार्थे षष्ठी। ᵛवराहयुः वराहमिच्छन् ᵛश्वा ᵛनु क्षिप्रं ᵛजम्भिषत् भक्षयतु । ᵛअपि च ᵛकर्णे गृह्णात्विति शेषः । श्वानो हि वराहमिच्छन्ति । सिद्धमन्यत् ॥

प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुषत् ।
शिरो न्वस्य राविषं न सुगं दुष्कृते भुवं विश्वस्मादिन्द्र उत्तरः ॥ ५ ॥

प्रिया । तष्टानि । मे । कपिः । विऽअक्ता । वि । अदूदुषत् ।
शिरः । नु । अस्य । राविषम् । न । सुऽगम् । दुःऽकृते । भुवम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥५॥

ᵛमे मह्यमिन्द्राण्यै ᵛतष्टानि यजमानैः कल्पितानि ᵛप्रिया प्रियाणि ᵛव्यक्ता व्यक्तान्याज्यैर्विशेषेणाक्तानि हवींषि कश्चित् वृषाकपेर्विषये वर्तमानः ᵛकपिः ᵛव्यदूदुषत् दूषयामास । ततोऽहम् ᵛअस्य तत्कपिस्वामिनो वृषाकपेः ᵛशिरो ᵛनु क्षिप्रं ᵛराविषं लुनीयाम् । ᵛदुष्कृते दुष्टस्य कर्मणः कर्त्रे वृषाकपयेऽस्मै ᵛसुगं सुखं न ᵛभुवम् अहं न भवेयम् । अस्मै सुखप्रदात्री न भवामीत्यर्थः । अस्या[3] मम पतिः ᵛइन्द्रः ᵛविश्वस्मात् ᵛउत्तरः ॥ ॥ १ ॥

१. त-भ-' अति ' नास्ति । २. त-तस्मै । ३. ग-त१.२.३.६.७.८-भ-यस्या ।

न मत्स्त्री सुभसत्तरा न सुयाशुतरा भुवत् ।
न मत्प्रतिच्यवीयसी न सक्थ्युद्यमीयसी विश्वस्मादिन्द्र उत्तरः ॥ ६ ॥

न । मत् । स्त्री । सुभसत्ऽतरा । न । सुयाशुऽतरा । भुवत् ।
न । मत् । प्रतिऽच्यवीयसी । न । सक्थि । उत्ऽयमीयसी । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥६॥

ᵛमत् मत्तोऽन्या ᵛस्त्री नारी ᵛसुभसत्तरा अतिशयेन सुभगा ᵛन ᵛभुवत् न भवति । नास्तीत्यर्थः । किंच मत्तोऽन्या स्त्री ᵛसुयाशुतरा अतिशयेन सुसुखातिशयेन सुपुत्रा वा ᵛन भवति । तथा च मन्त्रान्तरं—'ददाति मह्यं यादुरी याशूनां भोज्या शता' (ऋ. सं. १. १२६. ६) इति । किंच ᵛमत् मत्तोऽन्या[1] ᵛप्रतिच्यवीयसी पुमांसं प्रति शरीरस्यात्यन्तं च्यावयित्री ᵛन अस्ति । किंच मत्तोऽन्या स्त्री ᵛसक्थ्युद्यमीयसी संभोगेऽत्यन्तमुत्क्षेप्त्री ᵛन अस्ति । न मत्तोऽन्या काचिदपि नारी मैथुनेऽनुगुणं सक्थ्युद्यच्छतीत्यर्थः । मम पतिः ᵛइन्द्रः ᵛविश्वस्मात् ᵛउत्तरः उत्कृष्टः ॥

उवे अम्ब सुलाभिके यथेवाङ्ग भविष्यति ।
भसन्मे अम्ब सक्थि मे शिरो मे वीव हृष्यति विश्वस्मादिन्द्र उत्तरः ॥ ७ ॥

उवे । अम्ब । सुलाभिके । यथाऽइव । अङ्ग । भविष्यति ।
भसत् । मे । अम्ब । सक्थि । मे । शिरः । मे । विऽइव । हृष्यति ।
विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ७ ॥

एवमिन्द्राण्या शप्तो वृषाकपिर्ब्रवीति । ᵛउवे इति संबोधनार्थो निपातः । हे ᵛअम्ब मातः ᵛसुलाभिके शोभनलाभे त्वया ᵛयथैव येन प्रकारेणैवोक्तं तथैव तत् ᵛअङ्ग क्षिप्रं ᵛभविष्यति भवतु । किमनेन त्वदनुप्रीतिकारिणा ग्रहेण मम प्रयोजनम् । किंच ᵛमे मम पितुः त्वदीयो ᵛभसत् भग उपयुज्यताम् । किंच मम पितुस्त्वदीयं ᵛसक्थि चोपयुज्यताम् । किंच ᵛमे मम पितरमिन्द्रं त्वदीयं ᵛशिरः च प्रियालापेन ᵛवीव यथा कोकिलादिः पक्षी तद्वत् ᵛहृष्यति हर्षयतु । मम पिता ᵛइन्द्रः ᵛविश्वस्मात् ᵛउत्तरः ॥

किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाघने ।
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं विश्वस्मादिन्द्र उत्तरः ॥ ८ ॥

किम् । सुबाहो इति सुऽबाहो । सुऽअङ्गुरे । पृथुस्तो इति पृथुऽस्तो । पृथुऽजघने ।
किम् । शूरऽपत्नि । नः । त्वम् । अभि । अमीषि । वृषाकपिम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥८॥

क्रुद्धामिन्द्र[2] उपशमयति । हे ᵛसुबाहो हे शोभनबाहो ᵛस्वङ्गुरे शोभनाङ्गुलिके ᵛपृथुष्टो पृथुकेशसंघाते ᵛपृथुजघने विस्तीर्णजघने ᵛशूरपत्नि वीरभार्ये हे इन्द्राणि ᵛत्वं ᵛनः अस्मदीयं ᵛवृषाकपिं ᵛकिं किमर्थम् ᵛअभ्यमीषि अभिक्रुध्यसि । एकः किंशब्दः पूरणः । यस्य पिता ᵛइन्द्रः अहं ᵛविश्वस्मात् ᵛउत्तरः ॥

---

१. ग४–मत्तोन्या स्त्री । २. ग.त४–क्रुद्धामिंद्राणीमिंद्र; त३.५.६.७–क्रुद्धामिंद्राणीद्रं ।

अवीरामिव मामयं शरारुरभि मन्यते ।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥ ९ ॥

अवीराम्ऽइव । माम् । अयम् । शरारुः । अभि । मन्यते ।
उत । अहम् । अस्मि । वीरिणी । इन्द्रऽपत्नी । मरुत्ऽसखा । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ९ ॥

पुनरिन्द्रमिन्द्राणी[1] ब्रवीति[2]। $^v$शरारुः घातुको[3] मृगः $^v$अयं वृषाकपिः $^v$माम् इन्द्राणीम् $^v$अवीरामिव $^v$अभि $^v$मन्यते विजानाति। $^v$उत अपि च $^v$इन्द्रपत्नी इन्द्रस्य भार्या $^v$अहम् इन्द्राणी $^v$वीरिणी पुत्रवती $^v$मरुत्सखा मरुद्भिर्युक्ता च $^v$अस्मि भवामि। यस्या मम पतिः $^v$इन्द्रः $^v$विश्वस्मात् $^v$उत्तरः ॥

संहोत्रं स्म पुरा नारी समनं वाव गच्छति ।
वेधा ऋतस्य वीरिणीन्द्रपत्नी महीयते विश्वस्मादिन्द्र उत्तरः ॥ १० ॥

सम्ऽहोत्रम् । स्म । पुरा । नारी । समनम् । वा । अव । गच्छति ।
वेधाः । ऋतस्य । वीरिणी । इन्द्रऽपत्नी । महीयते । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १० ॥

$^v$नारी स्त्री $^v$ऋतस्य सत्यस्य $^v$वेधाः विधात्री $^v$वीरिणी पुत्रवती $^v$इन्द्रपत्नी इन्द्रस्य भार्येन्द्राणी $^v$संहोत्रं $^v$स्म सर्माचीनं यज्ञं खलु $^v$समनं संग्रामं $^v$वा। 'समितिः समनम्' इति संग्रामनामसु पाठात्। $^v$अव प्रति $^v$पुरा $^v$गच्छति। $^v$महीयते स्तोतृभिः स्तूयते च। तस्या मम पतिः $^v$इन्द्रः $^v$विश्वस्मात् $^v$उत्तरः ॥ ॥ २ ॥

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।
नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ ११ ॥

इन्द्राणीम् । आसु । नारिषु । सुऽभगाम् । अहम् । अश्रवम् ।
नहि । अस्याः । अपरम् । चन । जरसा । मरते । पतिः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ ११ ॥

अथेन्द्राणीमिन्द्रः स्तौति। $^v$आसु सौभाग्यवत्तया प्रसिद्धासु $^v$नारिषु स्त्रीषु[3] स्त्रीणां मध्ये $^v$इन्द्राणीं $^v$सुभगां सौभाग्यवतीम् $^v$अहम् इन्द्रः $^v$अश्रवम् अश्रौषम्। किंच $^v$अस्याः इन्द्राण्याः $^v$पतिः पालकः $^v$विश्वस्मात् $^v$उत्तरः उत्कृष्टतरः[4] $^v$इन्द्रः $^v$अपरं $^v$चन अन्यद्भूतजातमिव $^v$जरसा वयोहान्या $^v$नहि $^v$मरते न खलु म्रियते। यद्वा। इदं वृषाकपेर्वाक्यम्। तस्मिन्[5] पक्षे त्वहमिति शब्दो वृषाकपिपरतया योज्यः। अन्यत्समानम् ॥

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥ १२ ॥

न । अहम् । इन्द्राणि । ररण । सख्युः । वृषाकपेः । ऋते ।
यस्य । इदम् । अप्यम् । हविः । प्रियम् । देवेषु । गच्छति । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १२ ॥

---

१. त–पुनरिंद्राणी ब्रूते। २. ग-त-भ–'घातुको' नास्ति। ३. त-भ१.२.४–'स्त्रीषु' नास्ति। ४. त-भ–उत्कृष्टः। ५. त-भ१.२.४.६.८–यस्मिन्।

हे इन्द्राणि अहम् इन्द्रः सख्युः मम सखिभूतात् वृषाकपेर्ऋते प्रियं वृषाकपिं विना न ररण न रमे। अप्यम् अप्सु भवमद्भिर्वा संस्कृतं प्रियं प्रीतिकरम् इदम् उपस्थितं हविः देवेषु देवानां मध्ये यस्य ममेन्द्रस्य[1] सकाशं गच्छति। यश्चाहम् इन्द्रः सर्वस्मात् उत्तरः। यद्वा। अयमर्थः। हे इन्द्राणि वृषाकपेः सख्युरिन्द्रादृतेऽहं वृषाकपिर्न रारण न रमे। अन्यत्समानम्॥

**वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे।**
**घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः॥ १३॥**

वृषाकपायि। रेवति। सुऽपुत्रे। आत्। ऊँ इति। सुऽस्नुषे।
घसत्। ते। इन्द्रः। उक्षणः। प्रियम्। काचित्ऽकरम्। हविः। विश्वस्मात्। इन्द्रः। उत्ऽतरः॥ १३॥

हे वृषाकपायि। कामानां वर्षकत्वादभीष्टदेशगमनाच्चेन्द्रो वृषाकपिः। तस्य पत्नि। यद्वा। वृषाकपेर्मम मातरित्यर्थः। रेवति धनवति सुपुत्रे शोभनपुत्रे सुस्नुषे शोभनस्नुषे हे इन्द्राणि ते तवायम् इन्द्रः उक्षणः सेचनसमर्थान् आदु अनन्तरमेव। शीघ्रमेवेत्यर्थः। पशून् घसत् प्राश्नातु। किंच[2] काचित्करम्। कं सुखम्। तस्याचित् संघः। तत्करं हविः प्रियम् इष्टं कुर्विति शेषः। किंच ते पतिः इन्द्रः विश्वस्मात् उत्तरः। तथा च यास्कः—'वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा। स्नुषा साधुसादिनीति[3] वा साधुसानिनीति वा। प्रियं कुरुष्व सुखाचयकरं हविः सर्वस्माद्य इन्द्र उत्तरः' (निरु. १२. ९) इति॥

**उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम्।**
**उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे विश्वस्मादिन्द्र उत्तरः॥ १४॥**

उक्ष्णः। हि। मे। पञ्चऽदश। साकम्। पचन्ति। विंशतिम्।
उत। अहम्। अद्मि। पीवः। इत्। उभा। कुक्षी इति। पृणन्ति। मे।
विश्वस्मात्। इन्द्रः। उत्ऽतरः॥ १४॥

अथेन्द्रो ब्रवीति। मे मदर्थं पञ्चदश पञ्चदशसंख्याकान् विंशतिं विंशतिसंख्याकांश्च उक्ष्णः वृषभान् साकं सह मम भार्ययेन्द्राण्या प्रेरिता यष्टारः पचन्ति। उत अपि च अहमद्मि तान् भक्षयामि। जग्ध्वा चाहं पीव इत् स्थूल एव भवामीति शेषः। किंच मे मम उभा उभौ[4] कुक्षी पृणन्ति सोमेन पूरयन्ति यष्टारः। सोऽहम् इन्द्रः सर्वस्मात् उत्तरः॥

**वृषभो न तिग्मशृङ्गोऽन्तर्यूथेषु रोरुवत्।**
**मन्थस्त इन्द्र शं हृदे यं ते सुनोति भावयुर्विश्वस्मादिन्द्र उत्तरः॥ १५॥**

वृषभः। न। तिग्मऽशृङ्गः। अन्तः। यूथेषु। रोरुवत्।
मन्थः। ते। इन्द्र। शम्। हृदे। यम्। ते। सुनोति। भावयुः। विश्वस्मात्। इन्द्रः। उत्ऽतरः॥ १५॥

अथेन्द्राणी ब्रवीति। तिग्मशृङ्गः तीक्ष्णशृङ्गः वृषभो न यथा वृषभः यूथेषु गोसंघेषु अन्तः मध्ये रोरुवत् शब्दं कुर्वन् गा अभिरमयति तथा हे इन्द्र त्वं मामभिरमयेति शेषः। किंच

१. त-भ-महेन्द्रस्य। २. त-किंच त्वं। ३. त१.२.३.६-साधुवादिनीति। ४. त-उभौ च।

ᵛहे इन्द्र ᵛते तव ᵛहृदे हृदयाय ᵛमन्थः दध्नो मथनवेलायां शब्दं कुर्वन् ᵛशं[1] शंकरो भवत्विति शेषः। किंच ᵛते तुभ्यं ᵛयं सोमं ᵛभावयुः भावमिच्छन्तीन्द्राणी ᵛसुनोति अभिषुणोति सोऽपि शंकरो भवत्वित्यर्थः। मम पतिः ᵛइन्द्रः ᵛविश्वस्मात् ᵛउत्तरः ॥ ॥ ३ ॥

न सेशे यस्य रम्बतेऽन्तरा सक्थ्या३ कपृत्।
सेदीशे यस्य रोमशं निषेदुषो विजृम्भते विश्वस्मादिन्द्र उत्तरः ॥ १६ ॥

न। सः। ईशे। यस्य। रम्बते। अन्तरा। सक्थ्या। कपृत्।
सः। इत्। ईशे। यस्य। रोमशम्। निऽसेदुषः। विऽजृम्भते।
विश्वस्मात्। इन्द्रः। उत्ऽतरः ॥ १६ ॥

हे इन्द्र ᵛसः जनः ᵛन ᵛईशे मैथुनं कर्तुं नेष्टे न शक्नोति ᵛयस्य जनस्य ᵛकपृत् शेपः[2] ᵛसक्थ्या सक्थिनी ᵛअन्तरा ᵛरम्बते लम्बते। ᵛसेत् स एव स्त्रीजने ᵛईशे मैथुनं कर्तुं शक्नोति ᵛयस्य जनस्य ᵛनिषेदुषः शयानस्य ᵛरोमशम् उपस्थं ᵛविजृम्भते विवृतं भवति। यस्य च पतिः ᵛइन्द्रः ᵛविश्वस्मात् ᵛउत्तरः ॥

न सेशे यस्य रोमशं निषेदुषो विजृम्भते।
सेदीशे यस्य रम्बतेऽन्तरा सक्थ्या३ कपृद्विश्वस्मादिन्द्र उत्तरः ॥ १७ ॥

न। सः। ईशे। यस्य। रोमशम्। निऽसेदुषः। विऽजृम्भते।
सः। इत्। ईशे। यस्य। रम्बते। अन्तरा। सक्थ्या। कपृत्। विश्वस्मात्। इन्द्रः। उत्ऽतरः ॥ १७ ॥

ᵛसः जनः ᵛन ᵛईशे मैथुनं कर्तुं नेष्टे ᵛयस्य जनस्य ᵛनिषेदुषः शयानस्य ᵛरोमशम् उपस्थं ᵛविजृम्भते विवृतं भवति। ᵛसेत् स एव जनः ᵛईशे ईष्टे मैथुनं कर्तुं शक्नोति ᵛयस्य जनस्य ᵛकपृत् प्रजननं ᵛसक्थ्या सक्थिनी ᵛअन्तरा ᵛरम्बते लम्बते। सिद्धमन्यत्। पूर्वोक्तव्यतिरेकोऽत्र द्रष्टव्यः। पूर्वस्यामृचि यियप्सुरिन्द्राणीन्द्रं वदति। अत्र त्वयियप्सुरिन्द्र इन्द्राणीं वदतीत्यविरोधः ॥

अयमिन्द्र वृषाकपिः परस्वन्तं हतं विदत्।
असिं सूनां नवं चरुमादेधस्यान आचितं विश्वस्मादिन्द्र उत्तरः ॥ १८ ॥

अयम्। इन्द्र। वृषाकपिः। परस्वन्तम्। हतम्। विदत्।
असिम्। सूनाम्। नवम्। चरुम्। आत्। एधस्य। अनः। आऽचितम्।
विश्वस्मात्। इन्द्रः। उत्ऽतरः ॥ १८ ॥

हे ᵛइन्द्र ᵛअयं ᵛवृषाकपिः ᵛपरस्वन्तं परस्वमात्मनो विषयेऽवर्तमानं ᵛहतं हिंसितं ᵛविदत् विन्दतु। तथा हतस्य[3] विशसनाय ᵛअसिं शस्त्रं ᵛसूनाम् उद्वानं पाकार्थं ᵛनवं प्रत्यग्रं ᵛचरुं भाण्डम्[4] ᵛआत् अनन्तरम् ᵛएधस्य काष्ठस्य ᵛआचितं पूर्णम् ᵛअनः शकटं च विन्दतु। मम पतिः ᵛइन्द्रः ᵛविश्वस्मात् ᵛउत्तरः ॥

१. ग-त-भ–'शं' नास्ति। २. त–शेपः प्रजननं। ३. त-भ१.२.४.६.८–हतस्य तस्य। ४. त–भांडं च।

**अयमेमि विचाकशद्विचिन्वन् दासमार्यम् ।**
**पिबामि पाकसुत्वनोऽभि धीरमचाकशं विश्वस्मादिन्द्र उत्तरः ॥ १९ ॥**

अयम् । एमि । विऽचाकशत् । विऽचिन्वन् । दासम् । आर्यम् ।
पिबामि । पाकऽसुत्वनः । अभि । धीरम् । अचाकशम् । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ १९ ॥

अथेन्द्रो ब्रवीति । विचाकशत् पश्यन् यजमानान् दासम् उपक्षपयितारमसुरम् आर्यम् अपि च विचिन्वन् पृथक्कुर्वन् अयम् अहमिन्द्रः एमि यज्ञं[1] प्रति गच्छामि[1] । यज्ञं गत्वा च पाकसुत्वनः । पचतीति पाकः । सुनोतीति सुत्वा । हविषां पक्तुः सोमस्याभिषोतुर्यजमानस्य पाकेन विपक्केन मनसा सोमस्याभिषोतुर्वा यजमानस्य संबन्धिनं सोमं पिबामि । तथा धीरं धीमन्तं यजमानम् अभि अचाकशम् अभिपश्यामि । योऽहम् इन्द्रः विश्वस्मात् उत्तरः ॥

**धन्व च यत्कृन्तत्रं च कति स्वित्ता वि योजना ।**
**नेदीयसो वृषाकपेऽस्तमेहि गृहाँ उप विश्वस्मादिन्द्र उत्तरः ॥ २० ॥**

धन्व । च । यत् । कृन्तत्रम् । च । कति । स्वित् । ता । वि । योजना ।
नेदीयसः । वृषाकपे । अस्तम् । आ । इहि । गृहान् । उप । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २० ॥

धन्व निरुदकोऽरण्यरहितो देशः । कृन्तत्रं कर्तनीयमरण्यम् । यत् यत् च धन्व च कृन्तत्रं च भवति[2] । मृगोद्भासमरण्यमेवंविधं भवति न त्वत्यन्तविपिनम् । तस्य शत्रुनिलयस्यास्मदीयगृहस्य च मध्ये कति स्वित् ता तानि योजना योजनानि स्थितानि । नात्यन्तदूरे तद्भवतीत्यर्थः । अतः नेदीयसः अतिशयेन समीपस्थाच्छत्रुनिलयात् हे वृषाकपे त्वम् अस्तम् अस्माकं गृहं वि एहि विशेषेणागच्छ । आगत्य च गृहान् यज्ञगृहान् उप गच्छ । यतोऽहम् इन्द्रः सर्वस्मादुत्कृष्टः ॥

**पुनरेहि वृषाकपे सुविता कल्पयावहै ।**
**य एष स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥ २१ ॥**

पुनः । आ । इहि । वृषाकपे । सुविता । कल्पयावहै ।
यः । एषः । स्वप्नऽनंशनः । अस्तम् । एषि । पथा । पुनः । विश्वस्मात् । इन्द्रः । उत्ऽतरः ॥ २१ ॥

आगत्य प्रतिगतं वृषाकपिमिन्द्रो ब्रवीति । हे वृषाकपे त्वं पुनरेहि अस्मान् प्रत्यागच्छ । आगते च त्वयि सुविता सुवितानि कल्याणानि त्वच्चित्तप्रीतिकराणि[3] कर्माणि कल्पयावहै इन्द्राण्यहं च आवामुभौ पर्यालोच्य कुर्याव । किंच यः स्वप्ननंशनः उदयेन सर्वस्य प्राणिनः स्वप्नानां नाशयिता आदित्यः सः एषः त्वं पथा मार्गेण अस्तम् आत्मीयमावासं पुनः एषि गच्छसि । यतोऽहम् इन्द्रः विश्वस्मात् उत्तरः । तथा च यास्कः—‘सुप्रसूतानि वः कर्माणि कल्पयावहै य एष स्वप्ननंशनः स्वप्नान्नाशयत्यादित्य उदयेन सोऽस्तमेषि पथा पुनः’ ( निरु. १२. २८ ) इति ॥

---

१. त–‘यज्ञं प्रति गच्छामि’ नास्ति । २. त१.२.४.५.६-भ२.४.६–भवत; त३-भ८–भवतः ।
३. भ–°प्रीतिकरणानि ।

यदुदंश्चो वृषाकपे गृहमिन्द्राजगन्तन।
क्व१ स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥ २२ ॥

यत्। उदंञ्चः। वृषाकपे। गृहम्। इन्द्र। अजगन्तन।
क्व। स्यः। पुल्वघः। मृगः। कम्। अगन्। जनऽयोपनः। विश्वस्मात्। इन्द्रः। उत्ऽतरः॥२२॥

गत्वा पुनरागतं वृषाकपिमिन्द्रः पृच्छति। हे ᵛइन्द्र परमैश्वर्यवन् हे ᵛवृषाकपे यूयम् ᵛउदञ्चः उद्गामिनः सन्तो मद्गृहम् ᵛअजगन्तन आगच्छ[1]। एकस्यापि बहुवचनं पूजार्थम्। तत्र भवतः संबन्धी ᵛपुल्वघः बहूनां भौमरसानामत्ता ᵛस्यः सः ᵛमृगः ᵛक्व अभूत् ᵛजनयोपनः जनानां मोदयिता मृगः ᵛकं वा देशम् ᵛअगन् अगच्छन्। सोऽहम् ᵛइन्द्रः ᵛविश्वस्मात् ᵛउत्तरः। यद्वा इन्द्राणीवाक्यमिदम्। अत्र यास्कः—'यदुदञ्चो वृषाकपे गृहमिन्द्राजगमत क्व स्य पुल्वघो मृगः क्व स बह्वादी मृगः। मृगो मार्ष्टेर्गतिकर्मणः। कमगमद्देशं जनयोपनः' (निरु. १३. ३) इति॥

पर्शुर्ह नाम मानवी साकं ससूव विंशतिम्।
भद्रं भल त्यस्या अभूद्यस्या उदरमामयद्विश्वस्मादिन्द्र उत्तरः ॥ २३ ॥

पर्शुः। ह। नाम। मानवी। साकम्। ससूव। विंशतिम्।
भद्रम्। भल। त्यस्यै। अभूत्। यस्याः। उदरम्। आमयत्। विश्वस्मात्। इन्द्रः। उत्ऽतरः ॥२३॥

इन्द्रविसृज्यमानमनेन[2] मन्त्रेण[2] वृषाकपिराशास्ते। हे ᵛभल इन्द्रेण विसृज्यमान शर। भलतिर्भेदनकर्मा। ᵛपर्शुः ᵛनाम मृगी। ᵛह इति पूरणः। ᵛमानवी मनोर्दुहितेयं ᵛविंशतिं विंशतिसंख्याकान् पुत्रान् ᵛसाकं सह ᵛससूव अजीजनत्। ᵛत्यस्यै तस्यै ᵛभद्रं भजनीयं कल्याणम् ᵛअभूत् भवतु। लोडर्थे लुङ्। ᵛयस्या ᵛउदरमामयत गर्भस्थैर्विंशतिभिः पुत्रैः पुष्टमासीत्। मम पिता ᵛइन्द्रः ᵛविश्वस्मात् ᵛउत्तरः॥ ॥ ४ ॥

'रक्षोहणम्' इति पञ्चविंशत्यृचं तृतीयं सूक्तम्। पायुर्नाम भारद्वाज ऋषिः। द्वाविंशाद्याश्चतस्रोऽनुष्टुभः। शिष्टा एकविंशतिस्त्रिष्टुभः। रक्षोहाग्निर्देवता। तथा चानुक्रान्तं—'रक्षोहणं पञ्चाधिका पायुराग्नेयं राक्षोघ्नं चतुरनुष्टुबन्तम्' इति। गतः सूक्तविनियोगः। अङ्गाराभिविहरणे 'परि त्वाग्ने' इत्येषा जप्या। सूत्रितं च—'धिष्ण्यावताम्[3]' इत्यादिना 'परि त्वाग्ने पुरं वयम्' (आश्व. श्रौ. ५. १३) इत्यन्तेन॥

रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम्॥ १॥

रक्षःऽहनम्। वाजिनम्। आ। जिघर्मि। मित्रम्। प्रथिष्ठम्। उप। यामि। शर्म।
शिशानः। अग्निः। क्रतुऽभिः। सम्ऽइद्धः। सः। नः। दिवा। सः। रिषः। पातु। नक्तम् ॥१॥

ᵛरक्षोहणं रक्षसां हन्तारं ᵛवाजिनं बलवन्तमन्नवन्तं वाग्निम् ᵛआ ᵛजिघर्मि घृतेनाजुहोमि। किंच ᵛमित्रं यजमानानां सखायं ᵛप्रथिष्ठं पृथुतमं ᵛशर्म गृहम्[4] ᵛउप ᵛयामि उपगच्छामि[1]। सोऽयम्

---

१. ग२–आगच्छत। २. ग४–इंद्रेण विज्यमानं शरमनेन मंत्रेण; त–हे इंद्र विसृज्यमानं अनंतरमंत्रेण; भ–हे इंद्र विसृज्यमानमनेन मंत्रेण। ३. त–यं धिष्ण्यावतां; आश्व. श्रौ.–धिष्ण्यवतां। ४. भ–शरणं।

अग्निः शिशानः ज्वालास्तीक्ष्णाकुर्वन् क्रतुभिः कर्मपरैः पुरुषैः समिद्धः[1] प्रज्वालितो भवति। किंच सः अग्निः नः अस्मान् दिवा अहनि रिषः हिंसकाद्रक्षसः पातु रक्षतु। सः अग्निः नक्तं रात्रौ चास्मान्रक्षसः पातु ॥

अयोदंष्ट्रो अर्चिषा यातुधानानुप स्पृश जातवेदः समिद्धः ।
आ जिह्वया मूरदेवान् रभस्व क्रव्यादो वृक्त्व्यपि धत्स्वासन् ॥ २ ॥

अयःऽदंष्ट्रः । अर्चिषा । यातुऽधानान् । उप । स्पृश । जातऽवेदः । सम्ऽइद्धः ।
आ । जिह्वया । मूरऽदेवान् । रभस्व । क्रव्यऽअदः । वृक्त्वी । अपि । धत्स्व । आसन् ॥ २ ॥

हे जातवेदः जातधन जातप्रज्ञ वा त्वं समिद्धः सम्यग्दीप्तः अयोदंष्ट्रः अयोमयदंष्ट्रः । तीक्ष्णदंष्ट्रः[2] सन्नित्यर्थः । यातुधानान् राक्षसान् अर्चिषा ज्वालया उप स्पृश संदहेत्यर्थः । किंच त्वं मूरदेवान् मूढदेवान् मारकव्यापारान् राक्षसान् जिह्वया ज्वालया आ रभस्व मारयेत्यर्थः । मारयित्वा च क्रव्यादः मांसभक्षकान् राक्षसान् वृक्त्वी छित्वा आसन् आस्ये अपि धत्स्व अपिधेहि । आच्छादयेत्यर्थः ॥

उभोभयाविन्नुप धेहि दंष्ट्रा हिंस्रः शिशानोऽवरं परं च ।
उतान्तरिक्षे परि याहि राजञ्जम्भैः सं धेह्यभि यातुधानान् ॥ ३ ॥

उभा । उभयाविन् । उप । धेहि । दंष्ट्रा । हिंस्रः । शिशानः । अवरम् । परम् । च ।
उत । अन्तरिक्षे । परि । याहि । राजन् । जम्भैः । सम् । धेहि । अभि । यातुऽधानान् ॥ ३ ॥

हे उभयाविन् उभाभ्यां दंष्ट्राभ्यां युक्ताग्ने त्वं हिंस्रः राक्षसानां हिंसकस्त्वं उभा उभे दंष्ट्रा दंष्ट्रे शिशानः तीक्ष्णीकुर्वन् उप धेहि वधार्हेषु राक्षसेषु प्रतिष्ठापय । किंच अवरं परं च जगत् रक्ष । उत अपि च हे राजन् दीप्ताग्ने त्वम् अन्तरिक्षे स्थितान् राक्षसान् परि याहि परिगच्छ । परिगत्य च तान् यातुधानान् राक्षसान् जम्भैः भक्षणसाधनभूताभिः दंष्ट्राभिः[3] अभि सं धेहि संयोजय । भक्षयेत्यर्थः ॥

यज्ञैरिषूः संनममानो अग्ने वाचा शल्याँ अशनिभिर्दिहानः ।
ताभिर्विध्य हृदये यातुधानान्प्रतीचो बाहून्प्रति भङ्ध्येषाम् ॥ ४ ॥

यज्ञैः । इषूः । सम्ऽनममानः । अग्ने । वाचा । शल्यान् । अशनिऽभिः । दिहानः ।
ताभिः । विध्य । हृदये । यातुऽधानान् । प्रतीचः । बाहून् । प्रति । भङ्धि । एषाम् ॥ ४ ॥

हे अग्ने त्वं यज्ञैः अस्मदीयैर्बलकरैर्यागैः वाचा अस्मदीयया स्तुत्या च इषूः वक्रान् बाणान् संनममानः संनमयन् शल्यान् तासां शल्यान् अशनिभिः दीप्तिभिः दिहानः[4] तीक्ष्णीकुर्वन् ताभिः इषुभिः यातुधानान् राक्षसान् हृदये विध्य । ततः एषां यातुधानानां संबन्धिनः प्रतीचः युद्धाय त्वां[5] प्रतिगतान् बाहून् प्रति भङ्धि प्रत्यामर्दय ॥

१. भ–'समिद्धः' नास्ति। २. त-भ१.४.७–'तीक्ष्णदंष्ट्रः' नास्ति। ३. त१.२.३.६.७.८-भ–'दंष्ट्राभिः' नास्ति। ४. त१.२.३.६.७.८–भ–संदिहानः। ५. त-भ–'त्वां' नास्ति।

**अग्ने त्वचं यातुधानस्य भिन्धि हिंस्राशनिर्हरसा हन्त्वेनम् ।**
**प्र पर्वाणि जातवेदः शृणीहि क्रव्यात्क्रविष्णुर्वि चिनोतु वृक्णम् ॥ ५ ॥**

अग्ने । त्वचम् । यातुऽधानस्य । भिन्धि । हिंस्रा । अशनिः । हरसा । हन्तु । एनम् ।
प्र । पर्वाणि । जातऽवेदः । शृणीहि । क्रव्यऽअत् । क्रविष्णुः । वि । चिनोतु । वृक्णम् ॥५॥

हे जातवेदः जातधन जातप्रज्ञ वा अग्ने त्वं यातुधानस्य राक्षसस्य त्वचं भिन्धि दारय[1]। एनं भिन्नत्वचं यातुधानं हिंस्रा हिंसनशीलं[2] तव अशनिः वज्रं हरसा तापेन हन्तु हिनस्तु। हतस्य राक्षसस्य पर्वाणि शरीरपर्वाणि च प्र शृणीहि छिन्द्धीत्यर्थः। छिन्नेषु च शरीरसंधिषु सत्सु वृक्णं छिन्नसंधिमेनं यातुधानं क्रविष्णुः मांसमिच्छन्[3] क्रव्यात्[3] मांसभक्षको वृकादिः वि चिनोतु। भक्षयत्वित्यर्थः ॥ ॥ ५ ॥

**यत्रेदानीं पश्यसि जातवेदस्तिष्ठन्तमग्न उत वा चरन्तम् ।**
**यद्वान्तरिक्षे पथिभिः पतन्तं तमस्ता विध्य शर्वा शिशानः ॥ ६ ॥**

यत्र । इदानीम् । पश्यसि । जातऽवेदः । तिष्ठन्तम् । अग्ने । उत । वा । चरन्तम् ।
यत् । वा । अन्तरिक्षे । पथिऽभिः । पतन्तम् । तम् । अस्ता । विध्य । शर्वा । शिशानः ॥६॥

हे जातवेदः उत्पन्नप्रज्ञ अग्ने त्वं यत्र पृथिव्यां तिष्ठन्तम् उत अपि च चरन्तं यद्वा-न्तरिक्षे पथिभिः आकाशमार्गैः[4] पतन्तं गच्छन्तं यातुधानम् इदानीं संप्रति पश्यसि तं यातु-धानम् अस्ता शराणां क्षेप्ता त्वं शिशानः शरांस्तीक्ष्णीकुर्वन् शर्वा शरेण विध्य ॥

**उतालब्धं स्पृणुहि जातवेद आलेभानादृष्टिभिर्यातुधानात् ।**
**अग्ने पूर्वो नि जहि शोशुचान आमादः क्ष्विङ्क्लास्तमदन्त्वेनीः ॥ ७ ॥**

उत । आऽलब्धम् । स्पृणुहि । जातऽवेदः । आऽलेभानात् । ऋष्टिऽभिः । यातुऽधानात् ।
अग्ने । पूर्वः । नि । जहि । शोशुचानः । आमऽअदः । क्ष्विङ्क्लाः । तम् । अदन्तु । एनीः ॥७॥

उत अपि च हे जातवेदः अग्ने त्वम् आलब्धं हन्तुं हस्ताभ्यामारब्धं साधुं मां स्तोतारं यष्टारं वा आलेभानात आलभमानात् यातुधानात् राक्षसात् ऋष्टिभिः आत्मीयैरायुधविशेषैः स्पृणुहि पारय। रक्षेत्यर्थः। किंच पूर्वः मुख्यस्त्वं शोशुचानः प्रज्वलन् नि जहि मां हन्तुमुद्युक्तं यातुधानं मारय। किंच तं यातुधानम् आमादः अपक्वस्य मांसस्य भक्षकाः क्ष्विङ्क्लाः शब्दकारिण्यः। 'टुक्षु शब्दे'। यद्वा। क्ष्विङ्क्ला नाम पक्षिविशेषाः। एनीः गन्त्र्यः[5] अदन्तु भक्षयन्तु ॥

**इह प्र ब्रूहि यतमः सो अग्ने यो यातुधानो य इदं कृणोति ।**
**तमा रभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे रन्धयैनम् ॥ ८ ॥**

इह । प्र । ब्रूहि । यतमः । सः । अग्ने । यः । यातुऽधानः । यः । इदम् । कृणोति ।
तम् । आ । रभस्व । सम्ऽइधा । यविष्ठ । नृऽचक्षसः । चक्षुषे । रन्धय । एनम् ॥ ८ ॥

---

१. त–विदारय। २. ग-त-भ–हिंसनशीला। ३. त-भ–'मांसमिच्छन् क्रव्यात्' नास्ति। ४. त-भ–आकाशमार्गे। ५. ग१.२–गंत्र्यः श्वेता वा।

हे ᵛयविष्ठ युवतम ᵛअग्ने ᵛयः ᵛयातुधानः राक्षसोऽस्मद्यज्ञविघ्नकारी ᵛयः चान्योऽपि पिशाचादिः ᵛइदं यज्ञदूषणादि ᵛकरोति ᵛसः ᵛयतमः। तमवधारणार्थम्। ᵛइह अस्मिंस्त्वद्विषययागकर्मणि वर्तमानाय मह्यं ᵛप्र ᵛब्रूहि। ᵛतं पापकारिणं ᵛसमिधा स्वकीयेन तेजसा ᵛआ ᵛरभस्व हन्तुं प्रारभस्व। ततः ᵛएनं पापिष्ठं ᵛनृचक्षसः नृणां द्रष्टुस्तव ᵛचक्षुषे तेजसे ᵛरन्धय वशं नय। तेजसा संदहेत्यर्थः॥

तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्राञ्चं वसुभ्यः प्र णय प्रचेतः।
हिंस्रं रक्षांस्यभि शोशुचानं मा त्वा दभन्यातुधाना नृचक्षः॥ ९॥

तीक्ष्णेन। अग्ने। चक्षुषा। रक्ष। यज्ञम्। प्राञ्चम्। वसुऽभ्यः। प्र। नय। प्रचेत इति प्रऽचेतः।
हिंस्रम्। रक्षांसि। अभि। शोशुचानम्। मा। त्वा। दभन्। यातुऽधानाः। नृऽचक्षः॥ ९॥

हे ᵛअग्ने त्वं ᵛतीक्ष्णेन तिग्मेन ᵛचक्षुषा तेजसा ᵛयज्ञम् अस्मदीयं यागं ᵛरक्ष पालय। किंच हे ᵛप्रचेतः प्रकृष्टज्ञानाग्ने ᵛप्राञ्चं प्राञ्चितारं यज्ञं ᵛवसुभ्यः वसूनामर्थाय ᵛप्र ᵛणय प्रकर्षेण नय। किंच हे ᵛनृचक्षः नृणां द्रष्टरग्ने ᵛरक्षांसि ᵛहिंस्रं हिंसनशीलम् ᵛअभि ᵛशोशुचानम् अभिप्रदीप्तं ᵛत्वा त्वां ᵛयातुधानाः राक्षसाः ᵛमा ᵛदभन् मा हिंसिषुः॥

नृचक्षा रक्षः परि पश्य विक्षु तस्य त्रीणि प्रति शृणीह्यग्रा।
तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च॥ १०॥

नृऽचक्षाः। रक्षः। परि। पश्य। विक्षु। तस्य। त्रीणि। प्रति। शृणीहि। अग्रा।
तस्य। अग्ने। पृष्टीः। हरसा। शृणीहि। त्रेधा। मूलम्। यातुऽधानस्य। वृश्च॥ १०॥

हे ᵛअग्ने ᵛनृचक्षाः नृणां द्रष्टा त्वं ᵛविक्षु मनुष्येषु हिंसकत्वेन वर्तमानं ᵛरक्षः राक्षसं ᵛपरि ᵛपश्य सर्वतोऽवलोकय। अवलोक्य च ᵛतस्य रक्षसः ᵛत्रीणि ᵛअग्रा[1] अग्राणि शिरांसि ᵛप्रति ᵛशृणीहि छिन्द्धीत्यर्थः। ततः ᵛतस्य रक्षसः ᵛपृष्टीः पार्श्वस्थान् राक्षसानपि ᵛहरसा स्वकीयेन तेजसा ᵛशृणीहि मारय। एवं ᵛत्रेधा ᵛयातुधानस्य तस्य राक्षसस्य ᵛमूलं पादं ᵛवृश्च छिन्द्धि॥ ॥ ६॥

त्रिर्यातुधानः प्रसितिं त एत्वृतं यो अग्ने अनृतेन हन्ति।
तमर्चिषा स्फूर्जयञ्जातवेदः समक्षमेनं गृणते नि वृङ्धि॥ ११॥

त्रिः। यातुऽधानः। प्रऽसितिम्। ते। एतु। ऋतम्। यः। अग्ने। अनृतेन। हन्ति।
तम्। अर्चिषा। स्फूर्जयन्। जातऽवेदः। समऽअक्षम्। एनम्। गृणते। नि। वृङ्धि॥ ११॥

हे ᵛजातवेदः जातप्रज्ञ ᵛअग्ने ᵛते त्वदीयं[2] ᵛप्रसितिं ज्वालाप्रबन्धनं ᵛयातुधानः राक्षसः ᵛत्रिः त्रीन्वारान् ᵛएतु गच्छतु। त्रिर्बद्धं यत्तत्सुबद्धं भवति हि। किंच ᵛयः यातुधानः राक्षसः ᵛऋतं सत्यम् ᵛअनृतेन असत्येन ᵛहन्ति हिनस्ति ᵛतं यातुधानम् ᵛअर्चिषा स्वकीयेन तेजसा ᵛस्फूर्जयन् निष्पिषन्। स्फूर्जतिरत्र निष्पेषणकर्मा। ᵛएनं यातुधानं ᵛगृणते स्तोत्रं कुर्वते मह्यं ᵛसमक्षं प्रत्यक्षं[3] ᵛनि ᵛवृङ्धि। निगृह्य वर्जय वृकेण॥

---

१. त-भ-'अग्रा नास्ति। २. त-भ-त्वदीयां। ३. त२.३.६.७.८-भ-'प्रत्यक्षं' नास्ति।

तद॑ग्ने॒ चक्षुः॒ प्रति॑ धेहि रे॒भे श॑फा॒रुजं॒ येन॒ पश्य॑सि यातु॒धान॑म् ।
अ॒थ॒र्व॒वज्ज्योति॑षा॒ दैव्ये॑न स॒त्यं धूर्व॑न्तम॒चितं॒ न्यो॑ष ॥ १२ ॥

तत् । अ॒ग्ने॒ । चक्षुः॑ । प्रति॑ । धे॒हि॒ । रे॒भे । श॒फ॒ऽआ॒रुज॑म् । येन॑ । पश्य॑सि । या॒तु॒ऽधान॑म् ।
अ॒थ॒र्व॒ऽवत् । ज्योति॑षा । दैव्ये॑न । स॒त्यम् । धूर्व॑न्तम् । अ॒चित॑म् । नि । ओ॒ष॒ ॥ १२ ॥

हे ᵛअग्ने त्वं ᵛरेभे शब्दायमाने राक्षसे ᵛतत् ᵛचक्षुः तेजः ᵛप्रति ᵛधेहि प्रक्षिप ᵛयेन चक्षुषा ᵛशफारुजं शफाभ्यामारुजन्तं शफसदृशैर्नखैः साधूनामभिमुख्येन भञ्जकं ᵛयातुधानं राक्षसं ᵛपश्यसि। किंच ᵛसत्यं ᵛधूर्वन्तम् असत्येन हिंसन्तम् ᵛअचितम् अज्ञानं ᵛदैव्येन दिवि भवेन ᵛज्योतिषा तेजसा ᵛअथर्ववत् ᵛन्योष नितरां दह। दध्यङ्ङथर्वा[1] रक्षांसि हन्तेति प्रागुक्तम् ॥

यद॑ग्ने अ॒द्य मि॑थु॒ना शपा॑तो॒ यद्वा॒चस्तृ॒ष्टं ज॒नय॑न्त रे॒भाः ।
म॒न्योर्मन॑सः शर॒व्या॒३ जाय॑ते॒ या तया॑ विध्य॒ हृद॑ये यातु॒धाना॑न् ॥ १३ ॥

यत् । अ॒ग्ने॒ । अ॒द्य । मि॒थु॒ना । शपा॑तः । यत् । वा॒चः । तृ॒ष्टम् । ज॒नय॑न्त । रे॒भाः ।
म॒न्योः । मन॑सः । श॒र॒व्या॑ । जाय॑ते । या । तया॑ । वि॒ध्य॒ । हृद॑ये । या॒तु॒ऽधाना॑न् ॥ १३ ॥

हे ᵛअग्ने ᵛयत्[2] यदा ᵛअद्य अस्मिन्नहनि[2] ᵛमिथुना स्त्रीपुंसौ ᵛशपातः परस्परमाक्रोशतः ᵛयत् यदा ᵛरेभाः स्तोतारः ᵛवाचः संबन्धि ᵛतृष्टं कटुकं परस्पराक्रोशलक्षणमधरं वा ᵛजनयन्त। परस्परमाक्रोशन्तीत्यर्थः। तदा ᵛमन्योः दीप्तस्य क्रुद्धस्य वा तत्र। तथा च यास्कः—'मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा' (निरु. १०. २९) इति। ᵛमनसः प्रकाशात् ᵛया ᵛशरव्या इषुः ᵛजायते ᵛतया शरव्यया ᵛयातुधानान् राक्षसान् ᵛहृदये ᵛविध्य ताडय। मारयेत्यर्थः ॥

परा॑ शृणीहि॒ तप॑सा यातु॒धाना॒न्परा॑ग्ने॒ रक्षो॒ हर॑सा शृणीहि ।
परा॒र्चिषा॒ मूर॑देवाञ्छृणीहि॒ परा॑सु॒तृपो॑ अ॒भि शोशु॑चानः ॥ १४ ॥

परा॑ । शृ॒णी॒हि॒ । तप॑सा । या॒तु॒ऽधाना॑न् । परा॑ । अ॒ग्ने॒ । रक्षः॑ । हर॑सा । शृ॒णी॒हि॒ ।
परा॑ । अ॒र्चिषा॑ । मूर॑ऽदेवान् । शृ॒णी॒हि॒ । परा॑ । अ॒सु॒ऽतृपः॑ । अ॒भि । शोशु॑चानः ॥ १४ ॥

हे ᵛअग्ने ᵛयातुधानान्[3] ᵛतपसा तापेन ᵛपरा ᵛशृणीहि मारय। किंच ᵛरक्षो ᵛहरसा त्वदीयेनौष्ण्येन ᵛपरा ᵛशृणीहि। किंच ᵛमूरदेवान् मारकव्यापारान् राक्षसान् ᵛअर्चिषा स्वकीयेन तेजसा ᵛपरा ᵛशृणीहि। अपि च ᵛअसुतृपः मनुष्याणामसुभिस्तृप्ता ये तानपि ᵛपरा शृणीहीत्यर्थः ॥

परा॒द्य दे॒वा वृ॑जि॒नं शृ॑णन्तु प्र॒त्यगे॑नं श॒पथा॑ यन्तु तृ॒ष्टाः ।
वा॒चास्ते॒नं शर॑व ऋच्छन्तु॒ मर्म॒न्विश्व॑स्यैतु॒ प्रसि॑तिं यातु॒धानः॑ ॥ १५ ॥

परा॑ । अ॒द्य । दे॒वाः । वृ॒जि॒नम् । शृ॒ण॒न्तु॒ । प्र॒त्यक् । ए॒न॒म् । श॒पथाः॑ । य॒न्तु॒ । तृ॒ष्टाः ।
वा॒चाऽस्ते॒नम् । शर॑वः । ऋ॒च्छ॒न्तु॒ । मर्म॑न् । विश्व॑स्य । ए॒तु॒ । प्रऽसि॑तिम् । या॒तु॒ऽधानः॑ ॥ १५ ॥

१. त-भ-आथर्वणो दध्यङ्ङथर्वा। २. त१.२.३.६.७.८-भ-मु-अद्यास्मिन्नहनि; त४-यद्यस्मिन्नहनि; त५-यद्यास्मिन्नहनि। ३. ग-त१.२.३.६.७.८-भ-'यातुधानान्' नास्ति।

ᵛअद्य अस्मिन्नहनि ᵛदेवाः अग्निपुरोगाः सर्वे देवाः ᵛवृजिनं प्राणिनां प्राणैर्वर्जितारं यातुधानं ᵛपरा ᵛशृणन्तु[१]। अथ ᵛएनम् आयान्तं राक्षसं ᵛतृष्टाः कटुका अस्माभिरुक्ताः ᵛशपथाः ᵛप्रत्यक्[२] ᵛयन्तु[२]। किंच ᵛवाचास्तेनम् अनृतवचनमेनं यातुधानं ᵛशरवः शराः ᵛमर्मन् मर्मणि ᵛऋच्छन्तु गच्छन्तु। ᵛविश्वस्य[३] व्याप्तस्याग्नेः ᵛप्रसितिं जालम्। तथा च यास्कः—'प्रसितिः प्रसयनात्तन्तुर्वा[४] जालं वा' (निरु. ६. १२) इति। जालं ᵛयातुधानः राक्षसः ᵛएतु गच्छतु॥ ॥ ७ ॥

**यः पौरु॑षेयेण क्र॒विषा॑ सम॒ङ्क्ते यो अश्व्ये॑न प॒शुना॑ यातु॒धानः॑।**
**यो अ॒घ्न्याया॒ भर॑ति क्षी॒रम॑ग्ने तेषां॑ शी॒र्षाणि॒ हर॒साऽपि॑ वृश्च ॥ १६ ॥**

यः। पौरु॑षेयेण। क्र॒विषा॑। स॒म्ऽअ॒ङ्क्ते। यः। अश्व्ये॑न। प॒शुना॑। या॒तु॒ऽधानः॑।
यः। अ॒घ्न्याया॑ः। भर॑ति। क्षी॒रम्। अ॒ग्ने। तेषा॑म्। शी॒र्षाणि॑। ह॒र॑सा। अपि॑। वृ॒श्च॥१६॥

ᵛयः ᵛयातुधानः राक्षसः ᵛपौरुषेयेण पुरुषसंबन्धिना ᵛक्रविषा मांसेन ᵛसमङ्क्ते आत्मानं संगमयति। ᵛयः च ᵛअश्व्येन अश्वसमूहेन। तदीयेन मांसेनेत्यर्थः। आत्मानं संगमयति। यो वा यातुधानोऽन्येन ᵛपशुना आत्मानं संगमयति। ᵛयः वा यातुधानः ᵛअघ्न्यायाः गोः ᵛक्षीरं ᵛभरति हरति। हे ᵛअग्ने त्वं ᵛतेषां सर्वेषामपि राक्षसानां ᵛशीर्षाणि शिरांसि ᵛहरसा त्वदीयेन तेजसा ᵛवृश्च छिन्द्धि॥

**सं॒व॒त्स॒रीणं॒ पय॑ उ॒स्रिया॑या॒स्तस्य॒ माशी॑द्यातु॒धानो॑ नृचक्षः।**
**पी॒यूष॑मग्ने यत॒मस्तितृ॑प्सा॒त्तं प्र॒त्यञ्च॑म॒र्चिषा॑ विध्य॒ मर्म॑न् ॥ १७ ॥**

सं॒व॒त्स॒रीण॑म्। पय॑ः। उ॒स्रिया॑याः। तस्य॑। मा। अ॒शी॒त्। या॒तु॒ऽधान॑ः। नृ॒ऽच॒क्षः।
पी॒यूष॑म्। अ॒ग्ने। य॒त॒मः। तितृ॑प्सात्। तम्। प्र॒त्यञ्च॑म्। अ॒र्चिषा॑। वि॒ध्य॒। मर्म॑न्॥१७॥

हे ᵛनृचक्षः नृणां द्रष्टः ᵛअग्ने ᵛउस्रियायाः अस्मदीयाया गोः। 'उस्रिया अही' इति गोनामसु पाठात्। ᵛसंवत्सरीणं संवत्सरेण भवं यत् ᵛपयः अस्ति ᵛयातुधानः राक्षसः ᵛतस्य ᵛमाशीत् तत्पयः मा भक्षयतु। किंच ᵛयतमः यो राक्षसः ᵛपीयूषं पीयूषेण। विभक्तिव्यत्ययः। अस्मदीयाया गोः पयसा ᵛतितृप्सात् आत्मानं तर्पयितुमिच्छति ᵛतं ᵛप्रत्यञ्चं युद्धायात्मानं प्रतिगतं राक्षसं ᵛमर्मन् मर्मणि प्राणवियोगस्थाने ᵛअर्चिषा स्वकीयेन तेजसा ᵛविध्य ताडय। मारयेत्यर्थः॥

**वि॒षं गवां॑ यातु॒धानाः॑ पिबन्त्वा वृ॑श्च्यन्ता॒मदि॑तये दु॒रेवाः॑।**
**परै॑नान्दे॒वः स॑वि॒ता द॑दातु॒ परा॑ भा॒गमोष॑धीनां जयन्ताम् ॥ १८ ॥**

वि॒षम्। गवा॑म्। या॒तु॒ऽधाना॑ः। पि॒ब॒न्तु॒। आ। वृ॒श्च्य॒न्ता॒म्। अदि॑तये। दुः॒ऽएवा॑ः।
परा॑। ए॒ना॒न्। दे॒वः। स॒वि॒ता। द॒दा॒तु॒। परा॑। भा॒गम्। ओष॑धीनाम्। ज॒य॒न्ता॒म्॥१८॥

हे अग्ने ᵛयातुधानाः राक्षसाः ᵛगवां पशूनां गृहे स्थितं ᵛविषं ᵛपिबन्तु। किंच ᵛअदितये अदित्यर्थं ᵛदुरेवाः दुस्तरा यातुधानाः ᵛआ ᵛवृश्च्यन्तां त्वदीयैरायुधैराच्छिद्यन्ताम्। किंच ᵛसविता ᵛदेवः ᵛएनान् राक्षसान् ᵛपरा ᵛददातु हिंस्रेभ्यः प्रयच्छतु। अपि च तेऽमी राक्षसाः ᵛओषधीनां स्वभूतं ᵛभागं भजनीयमन्नं ᵛपरा ᵛजयन्तां लभन्तामित्यर्थः[५]॥

---

१. ग-त-भ१.२.४.६.८–शृणंतु पराशृण्वंतु। २. त–प्रत्यगेनमायंतु। ३. ग-त४–किंच विश्वस्य। ४. ग-त-भ–प्रसहनात्तं तुर्वा। ५. ग४–न लभंतामित्यर्थः।

सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः ।
अनु दह सहमूरान् क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥ १९ ॥

सनात् । अग्ने । मृणसि । यातुऽधानान् । न । त्वा । रक्षांसि । पृतनासु । जिग्युः ।
अनु । दह । सहऽमूरान् । क्रव्यऽअदः । मा । ते । हेत्याः । मुक्षत । दैव्यायाः ॥ १९ ॥

हे ᵛअग्ने त्वं ᵛसनात् चिरादेवारभ्य ᵛयातुधानान् राक्षसान् ᵛमृणसि बाधसे । तथापि ᵛत्वा त्वां ᵛपृतनासु संग्रामेषु ᵛरक्षांसि राक्षसाः ᵛन ᵛजिग्युः नाजयन् । किंच स त्वमधुना ᵛअनु अनुक्रमेण ᵛसहमूरान् मूलेन सहितान् मारकव्यापारेण युक्तान् ᵛक्रव्यादः मांसभक्षकान् राक्षसान् ᵛदह तेजसा भस्मीकुरु । किंच तव संबन्धिनः ᵛदैव्यायाः दैव्यात् ᵛहेत्याः आयुधात् ᵛते यातुधानाः ᵛमा ᵛमुक्षत मुक्ता मा भूवन् ॥

त्वं नो अग्ने अधरादुदक्तात्त्वं पश्चादुत रक्षा पुरस्तात् ।
प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहन्तु ॥ २० ॥

त्वम् । नः । अग्ने । अधरात् । उदक्तात् । त्वम् । पश्चात् । उत । रक्ष । पुरस्तात् ।
प्रति । ते । ते । अजरासः । तपिष्ठाः । अघऽशंसम् । शोशुचतः । दहन्तु ॥ २० ॥

हे ᵛअग्ने ᵛत्वं ᵛनः अस्मान् ᵛअधरात् दक्षिणतः । उत्तरादिदिक्समभिव्याहारादधरशब्दोऽत्र दक्षिणदिक्पर इति विज्ञायते । ᵛउदक्तात् उत्तरतश्च ᵛरक्ष पाहि । ᵛउत अपि च हे अग्ने ᵛत्वं ᵛपश्चात् पश्चिमतः ᵛपुरस्तात् पूर्वतश्च नोऽस्मान् रक्ष । चतसृषु दिक्ष्ववस्थितेभ्यो राक्षसेभ्योऽस्मान् पाहीत्यर्थः । किंच ᵛते[1] तव संबन्धिनः ᵛते ᵛतपिष्ठाः अतिशयेन तप्यमानाः ᵛअजरासः जरावर्जिताः ᵛशोशुचतः ज्वलन्तः सन्तो रश्मयः ᵛअघशंसं पापशंसकं राक्षसं ᵛप्रति ᵛदहन्तु भस्मीकुर्वन्तु ॥　॥ ८ ॥

पश्चात्पुरस्तादधरादुदक्तात्कविः काव्येन परि पाहि राजन् ।
सखे सखायमजरो जरिम्णेऽग्ने मर्तां अमर्त्यस्त्वं नः ॥ २१ ॥

पश्चात् । पुरस्तात् । अधरात् । उदक्तात् । कविः । काव्येन । परि । पाहि । राजन् ।
सखे । सखायम् । अजरः । जरिम्णे । अग्ने । मर्तान् । अमर्त्यः । त्वम् । नः ॥ २१ ॥

हे ᵛराजन् दीप्ताग्ने ᵛकविः क्रान्तदर्शनस्त्वं ᵛकाव्येन कविकर्मणा ᵛपश्चात् पश्चिमतः ᵛपुरस्तात् पूर्वतः ᵛअधरात् दक्षिणतश्च ᵛउदक्तात् उत्तरतश्च अस्मान् ᵛपरि ᵛपाहि परितो रक्ष । किंच हे ᵛसखे मित्रभूताग्ने ᵛअजरः जरारहितस्त्वं मां ᵛसखायं ᵛजरिम्णे जरायै कुरु । त्वत्प्रसादादहं चिरं जीवामीत्यर्थः । एतदेव दर्शयति । हे ᵛअग्ने ᵛअमर्त्यः मरणधर्मरहितः ᵛत्वं ᵛमर्तान् मरणधर्मवतः ᵛनः अस्मान् जरिम्णे जरायै[2] कुर्विति शेषः[2] ॥

परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम् ॥ २२ ॥

---

१. ग-त-भ-' ते ' नास्ति । २. त१.२.३.६.७.८-भ-कुर्वित्यर्थः ।

परि । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि ।
धृषत्ऽवर्णम् । दिवेऽदिवे । हन्तारम् । भङ्गुरऽवताम् । ॥ २२ ॥

हे सहस्य सहसे हित सहसो जात वा अग्ने पुरं पूरकं विप्रं मेधाविनं धृषद्वर्णं धर्षकरूपं भङ्गुरावतां भङ्गुरकर्मयुक्तानां रक्षसां दिवेदिवे प्रत्यहं हन्तारं हिंसितारं त्वा त्वां वयं पायुनामधेया भारद्वाजा रक्षसां हननाय परि धीमहि ॥

**विषेण भङ्गुरावतः प्रति ष्म रक्षसो दह ।**
**अग्ने तिग्मेन शोचिषा तपुरग्राभिर्ऋष्टिभिः ॥ २३ ॥**

विषेण । भङ्गुरऽवतः । प्रति । स्म । रक्षसः । दह ।
अग्ने । तिग्मेन । शोचिषा । तपुःऽअग्राभिः । ऋष्टिऽभिः ॥ २३ ॥

हे अग्ने त्वं भङ्गुरावतः भञ्जनकर्मयुक्तान् रक्षसः राक्षसान् विषेण व्यापेन तिग्मेन तीक्ष्णेन शोचिषा तेजसा प्रति दह भस्मीकुरु । तथा तपुरग्राभिः तपनशीलाग्राभिः ऋष्टिभिः । ऋष्टय आयुधविशेषाः । ताभिरपि प्रति दह ॥

**प्रत्यग्ने मिथुना दह यातुधाना किमीदिना ।**
**सं त्वा शिशामि जागृह्यदब्धं विप्र मन्मभिः ॥ २४ ॥**

प्रति । अग्ने । मिथुना । दह । यातुऽधाना । किमीदिना ।
सम् । त्वा । शिशामि । जागृहि । अदब्धम् । विप्र । मन्मऽभिः ॥ २४ ॥

हे अग्ने त्वं मिथुना मिथुनभूतानि किमीदिना । किमिदानीमिति ये चरन्ति ते किमीदिनः । तान् । तथा च यास्कः—'किमीदिने किमिदानीमिति चरते किमिदं किमिदमिति वा' ( निरु. ६. ११ ) इति । यातुधाना यातुधानान्राक्षसान् प्रति दह । किंच हे विप्र मेधाविन्नग्ने अदब्धं केनाप्यहिंसितं त्वा त्वां मन्मभिः स्तुतिभिरहं सं शिशामि स्तौमीत्यर्थः । अतस्त्वं जागृहि निद्रां मा कुरु । बुध्यस्वेत्यर्थः ॥

**प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति ।**
**यातुधानस्य रक्षसो बलं वि रुज वीर्यम् ॥ २५ ॥**

प्रति । अग्ने । हरसा । हरः । शृणीहि । विश्वतः । प्रति ।
यातुऽधानस्य । रक्षसः । बलम् । वि । रुज । वीर्यम् ॥ २५ ॥

हे अग्ने त्वं हरसा त्वदीयेन तेजसा । तथा च यास्कः—'हरो हरतेर्ज्योतिर्हर उच्यते' ( निरु. ४. १९ ) इति । यातुधानस्य राक्षसस्य[1] हरः[2] हरणशीलं बलं प्रति शृणीहि नाशयेत्यर्थः । तथा रक्षसः राक्षसस्य वीर्यं च वि रुज भञ्जय ॥ ॥ ९ ॥

१. ग२–राक्षसस्य बलं । २. त-भ१.२.४.६.८–'हरः' नास्ति ।

'हविष्पान्तम्' इत्येकोनविंशत्यृचं चतुर्थं सूक्तं त्रैष्टुभम्। मूर्धन्वानृषिः। स चाङ्गिरसो वामदेव्यो वा। सूर्यो वैश्वानरगुणकोऽग्निश्च समुदितो देवता। तथा चानुक्रान्तं—'हविरेकोनाङ्गिरसो मूर्धन्वान्वामदेव्यो वा सौर्यवैश्वानरीयम्' इति। व्यूढस्य दशरात्रस्य पञ्चमेऽहन्याग्निमारुत एतद्वैश्वानरीयनिविद्धानम्। सूत्रितं च—'हविष्पान्तमग्निर्होता गृहपतिः स राजा' (आश्व. श्रौ. ८. ८) इति॥

हविष्पान्तमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ।
तस्य भर्मणे भुवनाय देवा धर्मणे कं स्वधया पप्रथन्त॥ १॥

हविः। पान्तम्। अजरम्। स्वःऽविदि। दिविऽस्पृशि। आऽहुतम्। जुष्टम्। अग्नौ।
तस्य। भर्मणे। भुवनाय। देवाः। धर्मणे। कम्। स्वधया। पप्रथन्त॥ १॥

ᵛपान्तं पानीयं सोमात्मकम् ᵛअजरं जरारहितं ᵛजुष्टं देवानां प्रियं यत् ᵛहविः ᵛस्वर्विदि सूर्यस्य वेदितरि ᵛदिविस्पृशि दिवि स्प्रष्टरि ᵛअग्नौ ᵛआहुतम् अभिहुतं ᵛतस्य सोमात्मकस्य हविषः ᵛभर्मणे भरणाय ᵛभुवनाय भावनाय च ᵛधर्मणे धारणाय च ᵛकं सर्वस्य सुखकरमिममग्निं ᵛदेवाः ᵛस्वधया अन्नेन ᵛपप्रथन्त प्रथयन्ति। तथा च यास्कः—'हविर्यत्पानीयमजरं सूर्यविदि दिविस्पृश्यभिहुतं जुष्टमग्नौ तस्य भरणाय च भावनाय च धारणाय चैतेभ्यः सर्वेभ्यः कर्मभ्यो देवा इममग्निमन्नेनापप्रथन्त' (निरु. ७. २५) इति॥

गीर्णं भुवनं तमसापगूळ्हमाविः स्वरभवज्जाते अग्नौ।
तस्य देवाः पृथिवी द्यौरुतापोऽरणयन्नोषधीः सख्ये अस्य॥ २॥

गीर्णम्। भुवनम्। तमसा। अपऽगूळ्हम्। आविः। स्वः। अभवत्। जाते। अग्नौ।
तस्य। देवाः। पृथिवी। द्यौः। उत। आपः। अरणयन्। ओषधीः। सख्ये। अस्य॥२॥

ᵛगीर्णं पूर्वं[1] निगीर्णं[1] ᵛतमसा अन्धकारेण ᵛअपगूढम् आच्छादितं ᵛस्वः सर्वं ᵛभुवनम् ᵛअग्नौ यस्मिन् वैश्वानरे ᵛजाते उत्पन्ने सति ᵛआविः ᵛअभवत् आविर्भवति ᵛतस्य ᵛअस्य वैश्वानरस्याग्नेः ᵛसख्ये सखिकर्मणि ᵛदेवाः इन्द्रादयः ᵛपृथिवी भूमिश्च ᵛद्यौः च ᵛआपः अन्तरिक्षं चोदकानि च ᵛओषधीः ओषध्यश्च ᵛअरणयन् अरमन्त। प्रीतिं कृतवन्त इत्यर्थः॥

देवेभिर्न्विषितो यज्ञियेभिरग्निं स्तोषाण्यजरं बृहन्तम्।
यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्॥ ३॥

देवेभिः। नु। इषितः। यज्ञियेभिः। अग्निम्। स्तोषाणि। अजरम्। बृहन्तम्।
यः। भानुना। पृथिवीम्। द्याम्। उत। इमाम्। आऽततान। रोदसी इति। अन्तरिक्षम्॥३॥

ᵛयज्ञियेभिः यज्ञार्हैः ᵛदेवेभिः देवैरिन्द्रादिभिः ᵛनु क्षिप्रम् ᵛइषितः[2] अहम् ᵛअजरं जरारहितं ᵛबृहन्तं महान्तम् ᵛअग्निं तं वैश्वानराग्निं ᵛस्तोषाणि स्तोषामि[3]। ᵛयः वैश्वानराग्निः ᵛभानुना तेजसा ᵛपृथिवीं भूमिम् ᵛउत अपि च ᵛइमां ᵛद्यां दिवं च[4] ᵛआततान[4] आतनोति। तदेव दर्शयति। ᵛरोदसी द्यावापृथिव्यौ चाततान आतनोति। विस्तारयतीत्यर्थः॥

---

१. त-भुवनं गीर्णं; भ१.२.७-पूर्णं निगीर्णं। २. ग-इषितः प्रेषितः। ३. ग-मु-स्तौमि। ४. ग-त४.५-अंतरिक्षं च; त१.२.३.६-मु-चांतरिक्षं च।

यो होतासीत्प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना वृणानाः ।
स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥ ४ ॥

यः । होता । आसीत् । प्रथमः । देवऽजुष्टः । यम् । सम्ऽआञ्जन् । आज्येन । वृणानाः ।
सः । पतत्रि । इत्वरम् । स्थाः । जगत् । यत् । श्वात्रम् । अग्निः । अकृणोत् । जातऽवेदाः ॥ ४ ॥

ᵛयः वैश्वानरोऽग्निः ᵛदेवजुष्टः देवैः सेवितः ᵛप्रथमः मुख्यः ᵛहोता ᵛआसीत् अभूत् ᵛयं च वैश्वानराग्निं यजमानाः ᵛवृणानाः ᵛआज्येन ᵛसमाञ्जन् समञ्जन्ति ᵛजातवेदाः जातप्रज्ञो जातधनो वा ᵛसः वैश्वानरः ᵛअग्निः ᵛपतत्रि पतनशीलं पक्षिजातम् ᵛइत्वरं गमनशीलं सरीसृपादिकं ᵛस्थाः स्थावरं वृक्षादिरूपं च ᵛजगत् । स्थावरं जङ्गमं च जगदित्यर्थः । ᵛश्वात्रं क्षिप्रमेव ᵛअकृणोत् अजनयत् । तथा च यास्कः—'स पतत्रि चेत्वरं स्थावरं जङ्गमं च यत्तत्क्षिप्रमग्निरकरोज्जातवेदाः' ( निरु. ५. ३ ) इति ॥

यज्जातवेदो भुवनस्य मूर्धन्नतिष्ठो अग्ने सह रोचनेन ।
तं त्वाहेम मतिभिर्गीर्भिरुक्थैः स यज्ञियो अभवो रोदसिप्राः ॥ ५ ॥

यत् । जातऽवेदः । भुवनस्य । मूर्धन् । अतिष्ठः । अग्ने । सह । रोचनेन ।
तम् । त्वा । अहेम । मतिऽभिः । गीःऽभिः । उक्थैः । सः । यज्ञियः । अभवः । रोदसिऽप्राः ॥ ५ ॥

हे ᵛजातवेदः जातप्रज्ञ ᵛअग्ने ᵛयत् यस्त्वं ᵛभुवनस्य त्रैलोक्यस्य ᵛमूर्धन् मूर्धनि ᵛरोचनेन आदित्येन ᵛसह ᵛअतिष्ठः स्थितवानसि ᵛतं वैश्वानराग्निं ᵛत्वा त्वां ᵛमतिभिः अर्चनीयाभिः ᵛगीर्भिः स्तुतिभिः ᵛउक्थैः शस्त्रैश्च ᵛअहेम प्रपद्यामहे । 'हि गतौ' इति धातुः । ᵛसः वैश्वानरस्त्वं ᵛरोदसिप्राः द्यावापृथिव्योः पूरयिता ᵛयज्ञियः यज्ञार्हश्च ᵛअभवः भवसि ॥ ॥ १० ॥

मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन् ।
मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन् ॥ ६ ॥

मूर्धा । भुवः । भवति । नक्तम् । अग्निः । ततः । सूर्यः । जायते । प्रातः । उत्ऽयन् ।
मायाम् । ऊँ इति । तु । यज्ञियानाम् । एताम् । अपः । यत् । तूर्णिः । चरति । प्रऽजानन् ॥ ६ ॥

ᵛअग्निः वैश्वानरोऽग्निः ᵛनक्तं रात्रौ ᵛभुवः भूतजातस्य ᵛमूर्धा शिरोवत्प्रधानभूतः ᵛभवति । रात्रौ सर्वप्राणिनामालोकस्य तदधीनत्वात् । ᵛततः रात्रेरनन्तरं ᵛप्रातरुद्यन् ᵛसूर्यो ᵛजायते । अहनि स एव वैश्वानरोऽग्निः सूर्यो भवतीत्यर्थः । किंच ᵛयज्ञियानां यज्ञसंपादिनां देवानां ᵛमायामु प्रज्ञामेव ᵛएतां मन्यन्ते कवय इति शेषः । ᵛयत् ᵛप्रजानन् प्रज्ञायमानः सूर्यः ᵛतूर्णिः त्वरमाणः सन् ᵛअपः अन्तरिक्षं कर्म वा ᵛचरति । तथा च यास्कः—'मूर्धा मूर्तमस्मिन्धीयते मूर्धा यः सर्वेषां भूतानां भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्स एव[1] । प्रज्ञां त्वेतां मन्यन्ते यज्ञियानां देवानां यज्ञसंपादिनामपो यत्कर्म चरति प्रजानन्सर्वाणि स्थानान्यनुसंचरति त्वरमाणः' ( निरु. ७. २७ ) इति ॥

दृशेन्यो यो महिना समिद्धोऽरोचत दिवियोनिर्विभावा ।
तस्मिन्नग्नौ सूक्तवाकेन देवा हविर्विश्व आजुहवुस्तनूपाः ॥ ७ ॥

---

१. त-भ-एष ।

दृशेन्यः । यः । महिना । सम्ऽइद्धः । अरोचत । दिविऽयोनिः । विभाऽवा ।
तस्मिन् । अग्नौ । सूक्तऽवाकेन । देवाः । हविः । विश्वे । आ । अजुहवुः । तनूऽपाः ॥७॥

यः वैश्वानरोऽग्निः महिना महत्त्वेन दृशेन्यः सर्वदर्शनीयः समिद्धः सम्यग्दीप्तः दिवियोनिः द्युस्थानः विभावा दीप्तिमांश्च सन् अरोचत दीप्यते तस्मिन् वैश्वानरे अग्नौ तनूपाः शरीराणां रक्षकाः विश्वे सर्वे देवाः सूक्तवाकेन 'इदं द्यावापृथिवी' इत्यादिवाक्येन स्तोत्राणां वचनेन वा हविः आजुहवुः आभिमुख्येन जुहुवुः ॥

**सूक्तवाकं प्रथममादिदग्निमादिद्धविरजनयन्त देवाः ।**
**स एषां यज्ञो अभवत्तनूपास्तं द्यौर्वेद तं पृथिवी तमापः ॥ ८ ॥**

सूक्तऽवाकम् । प्रथमम् । आत् । इत् । अग्निम् । आत् । इत् । हविः । अजनयन्त । देवाः ।
सः । एषाम् । यज्ञः । अभवत् । तनूऽपाः । तम् । द्यौः । वेद । तम् । पृथिवी । तम् । आपः ॥८॥

प्रथमं पूर्वं सूक्तवाकम् 'इदं द्यावापृथिवी' इत्यादि वाक्यं मनसा निरूपयन्ति आदित् अनन्तरमेव अग्निं मथनेनोत्पादयन्ति । आदित् अनन्तरमेव देवाः हविरजनयन्त जनयन्ति । सः वैश्वानरोऽग्निः एषां देवानां यज्ञः यष्टव्यः अभवत् भवति । सः तनूपाः शरीराणां रक्षिता च भवति । तम् अग्निं द्यौः द्युलोकः वेद जानाति । तम् अग्निं पृथिवी भूमिरपि च जानाति । तम् अग्निम् आपः अन्तरिक्षं च जानाति ॥

**यं देवासोऽजनयन्ताग्निं यस्मिन्नाजुहवुर्भुवनानि विश्वा ।**
**सो अर्चिषा पृथिवीं द्यामुतेमामृजूयमानो अतपन्महित्वा ॥ ९ ॥**

यम् । देवासः । अजनयन्त । अग्निम् । यस्मिन् । आ । अजुहवुः । भुवनानि । विश्वा ।
सः । अर्चिषा । पृथिवीम् । द्याम् । उत । इमाम् । ऋजुऽयमानः । अतपत् । महिऽत्वा ॥९॥

यं वैश्वानरम् अग्निं देवासः देवाः अजनयन्त उत्पादितवन्तः यस्मिन् च उत्पन्ने वैश्वानरेऽग्नौ विश्वा विश्वानि भुवनानि भूतानि आजुहवुः आभिमुख्येन[1] जुहुवुः[2] सर्वमेधे सः वैश्वानरोऽग्निः अर्चिषा तेजसा पृथिवीम् अन्तरिक्षम् । 'आपः पृथिवी' इत्यन्तरिक्षनामसु पाठात् । द्यां दिवं च उत अपि च इमां भूमिं च ऋजूयमानः ऋजुगमनः महित्वा महत्त्वेन अतपत् सर्वं तपति ॥

**स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम् ।**
**तमू अकृण्वन्त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ॥ १० ॥**

स्तोमेन । हि । दिवि । देवासः । अग्निम् । अजीजनन् । शक्तिऽभिः । रोदसिऽप्राम् ।
तम् । ऊँ । इति । अकृण्वन् । त्रेधा । भुवे । कम् । सः । ओषधीः । पचति । विश्वऽरूपाः ॥१०॥

१. ग४-त१.२.५.६–आभिमुख्येनाजुहवु; त४–आभिमुख्येनाजुहुवुः; भ१.४.६–आभिमुख्येन जुहुवुः; भ७–आभिमुख्येन जहवुः ।

ᵛदेवासः देवाः ᵛशक्तिभिः कर्मभिः ᵛरोदसिप्रां द्यावापृथिव्योरापूरयितारम् ᵛअग्निं सूर्यात्मकं ᵛदिवि द्युलोके ᵛस्तोमेन ᵛहि स्तुत्या खलु ᵛअजीजनन् उत्पादितवन्तः । अपि च ᵛतमु तमेव ᵛकं सुखकरमग्निं यज्ञे ᵛत्रेधा ᵛभुवे त्रेधाभावाय ᵛअकृण्वन् कुर्वन्ति । ᵛसः पृथिव्यां वर्तमानः ᵛविश्वरूपाः सर्वरूपाः ᵛओषधीः व्रीह्याद्यास्तेन तेनोपकारेण ᵛपचति । अत्र यास्कः—' स्तोमेन यं[1] हि[1] दिवि देवासोऽग्निमजनयन् शक्तिभिः[2] कर्मभिर्द्यावापृथिव्योः पूरणं[3] तमकुर्वंस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । यदस्य दिवि तृतीयं तदसावादित्य इति हि ब्राह्मणम् ' ( निरु. ७.२८ ) इति ॥ ॥ ११ ॥

यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् ।
यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन्भुवनानि विश्वा ॥ ११ ॥

यदा । इत् । एनम् । अदधुः । यज्ञियासः । दिवि । देवाः । सूर्यम् । आदितेयम् ।
यदा । चरिष्णू इति । मिथुनौ । अभूताम् । आत् । इत् । प्र । अपश्यन् । भुवनानि । विश्वा ॥ ११ ॥

ᵛयदेत् यदैव प्रातः ᵛआदितेयम् अदितेः पुत्रं ᵛसूर्यम् ᵛएनम् अग्निं च ᵛयज्ञियासः यज्ञार्हाः ᵛदेवाः ᵛदिवि द्युलोके ᵛअदधुः धृतवन्तः । ᵛयदा चेमौ ᵛचरिष्णू चरणशीलौ सूर्यवैश्वानरौ ᵛमिथुनावभूतां प्रादुरभूताम् । ᵛआदित् अनन्तरमेव ᵛविश्वा विश्वानि ᵛभुवनानि भूतजातानि ᵛप्रापश्यन् तौ पश्यन्ति । अत्र यास्कः—' यदैनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमदितेः[4] पुत्रं[4] यदा चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च । मिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा थु इति नामकरणस्थकारो वा नयतिः परो वनिर्वा समाश्रितावन्योन्यं नयतो वनुतो वा । मनुष्यमिथुनावप्येतस्मादेव मेथन्तावन्योन्यं वनुत इति वा ' ( निरु. ७. २९ ) इति ॥

विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ।
आ यस्ततानोषसो विभातीरपो ऊर्णोति तमो अर्चिषा यन् ॥ १२ ॥

विश्वस्मै । अग्निम् । भुवनाय । देवाः । वैश्वानरम् । केतुम् । अह्नाम् । अकृण्वन् ।
आ । यः । ततान । उषसः । विऽभातीः । अपो इति । ऊर्णोति । तमः । अर्चिषा । यन् ॥ १२ ॥

ᵛदेवाः इन्द्रादयः ᵛविश्वस्मै[5] ᵛभुवनाय[6] ᵛवैश्वानरं विश्वनरहितम् ᵛअग्निम् ᵛअह्नां दिवसानां ᵛकेतुं प्रज्ञापकम् ᵛअकृण्वन् अकुर्वन् । ᵛयः वैश्वानरोऽग्निः ᵛउषसो ᵛविभातीः विविधं दीप्यमानाः ᵛआ ᵛततान विस्तारयति । किंच सोऽयं ᵛयन् गच्छन् ᵛतमः अन्धकारम् ᵛअर्चिषा तेजसा ᵛअपो ᵛऊर्णोति अपगमयति ॥

वैश्वानरं कवयो यज्ञियासोऽग्निं देवा अजनयन्नजुर्यम् ।
नक्षत्रं प्रत्नममिनच्चरिष्णु यक्षस्याध्यक्षं तविषं बृहन्तम् ॥ १३ ॥

वैश्वानरम् । कवयः । यज्ञियासः । अग्निम् । देवाः । अजनयन् । अजुर्यम् ।
नक्षत्रम् । प्रत्नम् । अमिनत् । चरिष्णु । यक्षस्य । अधिऽअक्षम् । तविषम् । बृहन्तम् ॥ १३ ॥

---

१. त१.३-भ–हि यं । २. भ–' शक्तिभिः ' नास्ति । ३. त१.२.७–आपूरणं । ४. ग-त२.७–सूर्यमादितेयमदितेः पुत्रं; त१.६–सूर्यमदितेः यमदिते पुत्रं । ५. ग-त–विश्वस्मै सर्वस्मै । ६. त-भ–हवनाय ।

ᐯकवयः मेधाविनः ᐯयज्ञियासः यज्ञार्हा यज्ञसंपादिनो वा ᐯदेवाः ᐯअजुर्यं जरावर्जितमहिंस्यं वा ᐯवैश्वानरं विश्वनरहितं सूर्यात्मकम् ᐯअग्निम् ᐯअजनयन् उत्पादितवन्तः। स च देवैरुत्पादितोऽग्निः ᐯनक्षत्रं कृत्तिकादि ᐯप्रत्नं पुराणं ᐯचरिष्णु चरणशीलं ᐯयक्षस्य। यक्षतिः पूजार्थः। 'प्रयक्षम्' (ऋ. सं. २. ५. १) इत्यादौ दर्शनात्। यक्षस्य पूज्यस्य देवस्य ᐯअध्यक्षं प्रत्यक्षं स्वामिनं वा ᐯतविषं वृद्धं ᐯबृहन्तं महान्तम् ᐯअमिनत् हिंसितवान्। तेजसाभिभूतवानित्यर्थः॥

**वैश्वानरं विश्वहा दीदिवांसं मन्त्रैरग्निं कविमच्छा वदामः।**
**यो महिम्ना परिबभूवोर्वी उतावस्तादुत देवः परस्तात्॥ १४॥**

वैश्वानरम्। विश्वहा। दीदिऽवांसम्। मन्त्रैः। अग्निम्। कविम्। अच्छ। वदामः।
यः। महिम्ना। परिऽबभूव। उर्वी इति। उत। अवस्तात्। उत। देवः। परस्तात्॥१४॥

ᐯविश्वहा सर्वदा ᐯदीदिवांसं दीप्तं ᐯकविं क्रान्तप्रज्ञं ᐯवैश्वानरम् ᐯअग्निं ᐯमन्त्रैः ᐯअच्छा ᐯवदामः अभिष्टुमः। ᐯयः वैश्वानरोऽग्निः ᐯमहिम्ना महत्त्वेन ᐯउर्वी द्यावापृथिव्यौ ᐯपरिबभूव परिभवति। ᐯउत अपि च अयम् ᐯअवस्तात् अधस्तात् तपति। ᐯउत अपि चायं सूर्यात्मकः ᐯदेवः ᐯपरस्तात् उपरिष्टाच्च तपतीत्यर्थः॥

**द्वे स्रुती अशृणवं पितृणामहं देवानामुत मर्त्यानाम्।**
**ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च॥ १५॥**

द्वे इति। स्रुती इति। अशृणवम्। पितृणाम्। अहम्। देवानाम्। उत। मर्त्यानाम्।
ताभ्याम्। इदम्। विश्वम्। एजत्। सम्। एति। यत्। अन्तरा। पितरम्। मातरम्। च॥१५॥

ᐯपितृणां ᐯदेवानां च ᐯउत अपि[1] ᐯमर्त्यानां मनुष्याणां च ᐯद्वे ᐯस्रुती द्वौ मार्गौ देवयानपितृयाणाख्यौ ᐯअहम् ᐯअशृणवम् अश्रौषम्। ᐯयत् विश्वं ᐯपितरं पालकत्वेन पितृभूतां द्यां ᐯमातरं ᐯच धारकत्वेन मातृभूतां पृथिवीं च ᐯअन्तरा द्यावापृथिव्योर्मध्ये भवति तत् ᐯइदं ᐯविश्वम् अग्निना संस्कृतं सत् ᐯएजत् देवलोकं पितृलोकं च गच्छत् ᐯताभ्यां देवयानपितृयाणाख्याभ्यां मार्गाभ्यां ᐯसमेति गच्छति। तौ च मार्गौ भगवता दर्शितौ—'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययावर्तते पुनः॥ नैते सृती पार्थ जानन्योगी मुह्यति कश्चन' (भ.गी.८.२४-२७) इति॥॥१२॥

**द्वे समीची बिभृतश्चरन्तं शीर्षतो जातं मनसा विमृष्टम्।**
**स प्रत्यङ् विश्वा भुवनानि तस्थावप्रयुच्छन् तरणिर्भ्राजमानः॥ १६॥**

द्वे इति। समीची इति सम्ऽईची। बिभृतः। चरन्तम्। शीर्षतः। जातम्। मनसा। विऽमृष्टम्।
सः। प्रत्यङ्। विश्वा। भुवनानि। तस्थौ। अप्रऽयुच्छन्। तरणिः। भ्राजमानः॥ १६॥

---

१. ग-त-भ१.४.६.७—अपि च।

ᵛसमीची संगते ᵛद्वे द्यावापृथिव्यौ ᵛचरन्तं गच्छन्तं ᵛशीर्षतः शिरसः ᵛजातम् उत्पन्नम् । तथा च निगमान्तरम्—' उत मन्येऽहमेनमनयोर्हि शिरस्तोऽयं प्रातर्जायते ' इति । यद्वा । सर्वशिरोभूतादादित्याज्जातमित्यर्थः । ᵛमनसा । मन्यतिरर्चतिकर्मा । अर्चनीयया स्तुत्या ᵛविमृष्टं शोधितं संस्कृतमग्निं ᵛबिभृतः धारयतः । ᵛसः ᵛअप्रयुच्छन् अप्रमाद्यन् ᵛतरणिः क्षिप्रकारी ᵛभ्राजमानः दीप्यमानोऽग्निः ᵛविश्वा विश्वानि ᵛभुवनानि[1] ᵛप्रत्यङ् अभिमुखः ᵛतस्थौ तिष्ठति । तथा च श्रूयते—' तस्मात्सर्व एव मन्यन्ते मां प्रत्युदगात् ' ( तै. सं. ६. ५. ४. २ ) इति ॥

**यत्रा॒ वदे॑ते॒ अव॑रः॒ पर॑श्च य॒ज्ञन्यो॒: कत॒रो नौ॒ वि वे॑द ।**
**आ शे॑कु॒रित्स॑ध॒माद॑ं सखा॑यो॒ नक्ष॑न्त य॒ज्ञं क इ॒दं वि वो॑चत् ॥ १७ ॥**

यत्र॑ । वदे॑ते॒ इति॑ । अव॑रः । परः॑ । च॒ । य॒ज्ञऽन्यो॑: । क॒त॒रः । नौ॒ । वि । वे॒द॒ ।
आ । शे॒कुः॒ । इत् । स॒ध॒ऽमाद॑म् । सखा॑यः । नक्ष॑न्त । य॒ज्ञम् । कः । इ॒दम् । वि । वो॒च॒त॒ ॥ १७ ॥

ᵛयत्र यस्मिन्काले ᵛअवरः पार्थिवोऽग्निर्दैव्यो होता ᵛपरश्च मध्यमो वायुश्च उभौ ᵛवदेते विवादं कुर्वाते ᵛयज्ञन्योः यज्ञस्य नेत्रोः ᵛनौ आवयोर्मध्ये ᵛकतरः भूयिष्ठं यज्ञं ᵛवि ᵛवेद वेत्ति तत्र ᵛसखायः समानख्याना ऋत्विजः ᵛसधमादं यज्ञम् ᵛआ ᵛशेकुः कर्तुं शक्नुवन्ति । तथा ᵛयज्ञं ᵛनक्षन्त अश्नुवतेऽनुतिष्ठन्ति च ये तेषां विदुषां यज्ञमश्नुवानानां मध्ये ᵛकः विद्वाननुष्ठाता वा ᵛइदम् अस्य विवादस्य[2] निर्णयरूपं वाक्यं ᵛवि ᵛवोचत् ब्रवीति । माध्यमिकमिममग्निं ब्रवीति । तथा च यास्कः—' यत्र विवदेते दैव्यौ होतारावयं चाग्निरसौ च मध्यमः कतरो नौ यज्ञे भूयो वेदेत्याशक्नुवन्ति तत्सहमदनं समानख्याना ऋत्विजस्तेषां यज्ञं समश्नुवानानां को न इदं विवक्ष्यति ' (निरु. ७. ३०) इति॥

**कत्य॒ग्नय॒: कति॒ सूर्या॑स॒: कत्यु॒षास॒: कत्यु॑ स्वि॒दाप॑: ।**
**नोप॒स्पिजं॑ वः पितरो वदामि पृ॒च्छामि॑ वः कवयो वि॒द्मने॒ कम् ॥ १८ ॥**

कति॑ । अ॒ग्नय॑: । कति॑ । सूर्या॑सः । कति॑ । उ॒षस॑: । कति॑ । ऊँ इति॑ । स्वि॒त् । आप॑: ।
न । उ॒प॒ऽस्पिज॑म् । वः॒ । पि॒त॒रः॒ । व॒दा॒मि॒ । पृ॒च्छामि॑ । वः॒ । क॒व॒यः॒ । वि॒द्मने॑ । कम् ॥ १८ ॥

एवं विवदमानावग्निवायू पितॄन् प्रश्नमेयतुः । तत्र मध्यमस्तान् पृच्छति । ᵛकत्यग्नयः । अग्नयः कति कतिसंख्याकाः ᵛसूर्यासः सूर्याश्च कतिसंख्याकाः । ᵛउपासः उषसश्च कतिसंख्याकाः । ᵛआपः च ᵛकति । ᵛउ इति पूरणः । स्विच्छब्दोऽत्र विचारणार्थः । हे ᵛपितरः ᵛवः युष्माकम् ᵛउपस्पिजम् । उपस्पिजमिति स्पर्धायुक्तं वचनमुच्यते । पूर्वोक्तं प्रश्नवचनमेतत् ᵛन ᵛवदामि[3] । किं तर्ह्यहमजानन् हे ᵛकवयः मेधाविनः युष्मान् ᵛविद्मने विज्ञानाय ᵛकं सुखं स्वरूपपर्यालोचनक्लेशमन्तरेण ᵛपृच्छामि । अत्रोत्तराणि वालखिल्यसंहितायां दर्शितानि—' एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनु प्रभूतः । एकैवोषाः सर्वमिदं विभात्येकं वा इदं वि बभूव सर्वम् ' ( ऋ. सं. ८. ५८. २ ) इति ॥

**याव॒न्मात्र॑मु॒षसो॒ न प्रती॑कं सुप॒र्ण्यो॒३॑ वस॑ते मातरिश्वः ।**
**ताव॑द्दधात्युप॑ य॒ज्ञमा॒यन् ब्रा॑ह्म॒णो होतु॒रव॑रो नि॒षीद॑न् ॥ १९ ॥**

या॒व॒त्ऽमा॒त्रम् । उ॒षस॑: । न । प्रती॑कम् । सु॒ऽप॒र्ण्य॑: । वस॑ते । मा॒त॒रि॒श्व॒: ।
ताव॑त् । द॒धा॒ति॒ । उप॑ । य॒ज्ञम् । आ॒ऽयन् । ब्रा॒ह्म॒णः । होतु॑: । अव॑रः । नि॒ऽसीद॑न् ॥ १९ ॥

---

१. ग१.२–भुवना भुवनानि । २. त–विधानस्य । ३. ग-त१.३.६.८-म२.८–वदामि न वक्ष्यामि ।

प्रकृतस्य वैश्वानरस्य विषये यः प्रश्नस्तस्य निर्णयमनया वदन्ति। हे मातरिश्वः मातर्यन्तरिक्षे श्वसन् माध्यमिक वायो यावन्मात्रं यावदेव सुपर्ण्यः सुपतना रात्रयः उषसः प्रतीकं मुखं प्रकाशाख्यं दर्शनं वा। न इति पूरणः। वसते आच्छादयन्ति तावत् एव ब्राह्मणः होता अवरः निकृष्टः[1] होतुः अस्याग्नेर्वैश्वानरस्य दैव्यस्य होतुः[2] निषीदन्[2] हौत्रं कर्म कर्तुमुपविशन् यज्ञमायन् उपगच्छन्[3] उप दधाति। होतृकर्म स्वबुद्धौ धारयति। तथा च यास्कः—'यावन्मात्रमुषसः प्रत्यक्तं भवति प्रतिदर्शनमिति वास्त्युपमानस्य संप्रत्यर्थे प्रयोग इहेव निधेहीति यथा सुपर्ण्यः सुपतना एता रात्रयो वसते मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति यज्ञमागच्छन् ब्राह्मणो होतास्याग्नेर्होतुरवरो निषीदन् होतृजपस्त्वनग्निर्वैश्वानरीयो भवति' (निरु. ७. ३१) इति॥　　॥ १३ ॥

'इन्द्रं स्तव' इत्यष्टादशर्चं पञ्चमं सूक्तं वैश्वामित्रस्य रेणोरार्षं त्रैष्टुभमैन्द्रम्। अनुक्रान्तं च—'इन्द्रं स्तव द्व्यूना रेणुः' इति। सूर्यस्तुत्याग्न्येकाह इदं सूक्तं निष्केवल्यनिविद्धानम्। सूत्रितं च—'सूर्यस्तुता यशस्कामः पिबा सोममभीन्द्रं स्तवेति मध्यंदिनः[4]' (आश्व. श्रौ. ९. ८) इति॥

इन्द्रं स्तवा नृतमं यस्य मह्ना विबबाधे रोचना वि ज्मो अन्तान्।
आ यः पप्रौ चर्षणीधृद्वरोभिः प्र सिन्धुभ्यो रिरिचानो महित्वा॥ १॥

इन्द्रम्। स्तव। नृऽतमम्। यस्य। मह्ना। विऽबबाधे। रोचना। वि। ज्मः। अन्तान्।
आ। यः। पप्रौ। चर्षणिऽधृत्। वरःऽभिः। प्र। सिन्धुऽभ्यः। रिरिचानः। महिऽत्वा॥१॥

हे स्तोतः त्वं नृतमं नेतृतमम् इन्द्रं स्तव स्तुहि। यस्य इन्द्रस्य मह्ना महत्त्वम्। विभक्तिव्यत्ययः। रोचना परेषां तेजांसि विबबाधे विबाधते। अभिभवतीत्यर्थः। वि ज्मः पृथिव्याश्च अन्तान् पर्यन्तानभिभवति। यः चेन्द्रः चर्षणीधृत् मनुष्याणां धर्ता सिन्धुभ्यः समुद्रेभ्योऽपि महित्वा महत्त्वेन प्र रिरिचानः प्रवर्धमानश्च सन् वरोभिः तमसां वारकैस्तेजोभिः आ पप्रौ द्यावापृथिव्यावापूरयति॥

स सूर्यः पर्युरू वरांस्येन्द्रो ववृत्याद्रथ्येव चक्रा।
अतिष्ठन्तमपस्यं न सर्गं कृष्णा तमांसि त्विष्या जघान॥ २॥

सः। सूर्यः। परि। उरु। वरांसि। आ। इन्द्रः। ववृत्यात्। रथ्याऽइव। चक्रा।
अतिष्ठन्तम्। अपस्यम्। न। सर्गम्। कृष्णा। तमांसि। त्विष्या। जघान॥ २॥

सूर्यः सुवीर्यः सः प्रसिद्धः इन्द्रः उरु बहूनि वरांसि तेजांसि परि आ ववृत्यात् पर्यावर्तयति। तत्र दृष्टान्तः। रथ्येव यथा[5] सारथी[5] रथसंबन्धीनि चक्रा चक्राणि आवर्तयति तद्वदित्यर्थः। किंच सोऽयम् अतिष्ठन्तं शीघ्रं गच्छन्तम् अपस्यं न कर्मण्यमिव सर्गम्। सृज्यत इति सर्गोऽश्वः। तं कृष्णा कृष्णानि तमांसि त्विष्या दीप्त्या जघान हन्ति॥

---

१. ग-त-भ-अग्नेः निकृष्टः। २. ग१.२-होतुर्वा निषीदन्; त-भ४.८-होतुर्ज्ञाननिषीदन्; भ१-होतुज्ञनिदन्; भ२-होतुरवरो निषीदन; भ६-मु-होतुर्ज्ञानं निषीदन्। ३. त-उपागच्छन्। ४. ग-त-भ-मु-माध्यंदिनः। ५. ग-भ-यथा रथी; त-सारथी।

समानमस्मा अनपावृदर्च क्ष्मया दिवो असमं ब्रह्म नव्यम् ।
वि यः पृष्ठेव जनिमान्यर्य इन्द्रश्चिकाय न सखायमीषे ॥ ३ ॥

समानम् । अस्मै । अनपऽवृत् । अर्च । क्ष्मया । दिवः । असमम् । ब्रह्म । नव्यम् ।
वि । यः । पृष्ठाऽइव । जनिमानि । अर्यः । इन्द्रः । चिकाय । न । सखायम् । ईषे ॥ ३ ॥

हे स्तोतः त्वं ᵛसमानं मया सह ᵛअनपावृत् अपगतिरहितं ᵛक्ष्मया ᵛदिवः दिवः पृथिव्याश्च ᵛअसमम् अत्यन्तमतिरिक्तम् । महदित्यर्थः । ᵛनव्यं नवतरमन्यैरकृतपूर्वं ᵛब्रह्म स्तोत्रम् ᵛअस्मै इन्द्राय ᵛअर्च उच्चारय । ᵛयः ᵛइन्द्रः ᵛजनिमानि यज्ञेषु जातानि ᵛपृष्ठेव पृष्ठसंज्ञकानि स्तोत्राणीव ᵛअर्यः अरीन् शत्रून् ᵛवि ᵛचिकाय विचिनोति ᵛसखायं च ᵛन ᵛईषे नेच्छति ॥

इन्द्राय गिरो अनिशितसर्गा अपः प्रेरयं सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रिया शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥ ४ ॥

इन्द्राय । गिरः । अनिशितऽसर्गाः । अपः । प्र । ईरयम् । सगरस्य । बुध्नात् ।
यः । अक्षेणऽइव । चक्रिया । शचीभिः । विष्वक् । तस्तम्भ । पृथिवीम् । उत । द्याम् ॥४॥

ᵛइन्द्राय इन्द्रार्थम् ᵛअनिशितसर्गाः अतनूकृतविसर्गा उपर्युपरि वर्तमाना याः ᵛगिरः स्तुतयः ताभिर्गीर्भिः ᵛसगरस्य अन्तरिक्षस्य[1] । 'सगरं समुद्रः' इत्यन्तरिक्षनामसु पाठात् । ᵛबुध्नात् प्रदेशात् ᵛअपः उदकानि ᵛप्रेरयं प्रेरयानि । ᵛयः[2] ᵛइन्द्रः ᵛशचीभिः कर्मभिः ᵛपृथिवीम् ᵛउत अपि च ᵛद्यां दिवं ᵛचक्रिया रथचक्राणि ᵛअक्षेणेव यथा रथाक्षेण[3] तद्वत् ᵛविष्वक् सर्वतः ᵛतस्तम्भ अस्तभ्नात् ॥

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥ ५ ॥

आपान्तऽमन्युः । तृपलऽप्रभर्मा । धुनिः । शिमीऽवान् । शरुऽमान् । ऋजीषी ।
सोमः । विश्वानि । अतसा । वनानि । न । अर्वाक् । इन्द्रम् । प्रतिऽमानानि । देभुः ॥५॥

ᵛआपान्तमन्युः आपातितमन्युः[4] ᵛतृपलप्रभर्मा ग्रावभिः क्षिप्रप्रहारी ᵛधुनिः शत्रूणां कम्पयिता ᵛशिमीवान् कर्मवान् ᵛशरुमान् आयुधवान् ᵛऋजीषी ऋजीषवान् ᵛसोमो ᵛविश्वानि सर्वाणि ᵛअतसा अतसमयानि ᵛवनानि अरण्यानि वर्धयतीति शेषः । ᵛप्रतिमानानि प्रतिमानभूतानि समानानि द्रव्याणीत्यर्थः । ᵛइन्द्रम् ᵛअर्वाक् ᵛन ᵛदेभुः । दभ्नोतिरत्राकर्षणकर्मा । तुलया मीयमाना-न्यात्माभिमुखतया नाकर्षयन्ति । लघूनि भवन्तीत्यर्थः । अन्यत्र प्रतिनिधीयमानानि[5] गुरूणि तान्या-त्माभिमुखमाकर्षन्ति नैवमिन्द्रं कुर्वन्तीति । सर्वेभ्यो महानिन्द्र इत्यर्थः । त्रयः पादाः सौम्यास्तुरीय-स्त्वैन्द्रः । तथा च यास्कः—'आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी[6] सोमो वेन्द्रो वा धुनिर्धूनोतेः शिमीति कर्मनाम शमयतेर्वा शक्नोतेर्वर्जीषी सोमो यत्सोमस्य पूयमानस्यातिरिच्यते तदृजीषमपार्जितं भवति तेनर्जीषी सोमोऽथाप्यैन्द्रो निगमो भवत्यृजीषी वज्रीति ।. सोमः सर्वाण्यतसानि वनानि

१. त-भ—अंतरिक्षं च । २. ग१.२-त-भ-मु—'यः' नास्ति । ३. त२.७-भ—रथाक्षेणेव । ४. ग२—आपादित° । ५. त-भ—प्रतिनिधायमानानि । ६. त१.२.७-मु—क्षिप्रप्रहारी सृप्रप्रहारी ।

नार्वागिन्द्रं प्रतिमानानि दभ्नुवन्ति यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्ति' (निरु. ५. १२) इति ॥ ॥ १४ ॥

न यस्य॒ द्यावा॑पृथि॒वी न धन्व॒ नान्तरि॑क्षं॒ नाद्र॑यः॒ सोमो॑ अक्षाः ।
यद॑स्य म॒न्युर॑धिनी॒यमा॑नः शृ॒णाति॑ वी॒ळु रु॒जति॑ स्थि॒राणि॑ ॥ ६ ॥

न । यस्य॑ । द्यावा॑पृथि॒वी इति॑ । न । धन्व॑ । न । अ॒न्तरि॑क्षम् । न । अद्र॑यः । सोम॑ः । अ॒क्षा॒रिति॑ ।
यत् । अ॒स्य॒ । म॒न्युः । अ॒धि॒ऽनी॒यमा॑नः । शृ॒णाति॑ । वी॒ळु । रु॒जति॑ । स्थि॒राणि॑ ॥ ६ ॥

^V^द्यावापृथिवी द्यावापृथिव्यौ ^V^यस्य इन्द्रस्य प्रतिमानभूते[1] ^V^न भवतः[1] । ^V^न[2] ^V^धन्व उदकमपि प्रतिमानभूतं न भवति । ^V^नान्तरिक्षम्[3] अन्तरिक्षमपि प्रतिमानभूतं न भवति । ^V^नाद्रयः[4] पर्वताश्च प्रतिमानभूता न भवन्ति । तस्येन्द्रस्य ^V^सोमः ^V^अक्षाः क्षरति । किंच ^V^यत् यदा ^V^अस्य इन्द्रस्य ^V^मन्युः क्रोधः ^V^अधिनीयमानः शत्रूणामुपरि प्राप्यमाणो भवति तदानीमयमिन्द्रः ^V^वीळु दृढं ^V^शृणाति हिनस्ति । ^V^स्थिराणि ^V^रुजति भिनत्ति च ॥

ज॒घान॑ वृ॒त्रं स्वधि॑ति॒र्वने॑व रु॒रोज॒ पुरो॒ अर॑द॒न्न सिन्धू॑न् ।
बि॒भेद॑ गि॒रिं नव॒मिन्न कु॒म्भमा गा इन्द्रो॑ अकृणुत स्व॒युग्भि॑ः ॥ ७ ॥

ज॒घान॑ । वृ॒त्रम् । स्व॒ऽधि॑तिः । वना॑ऽइव । रु॒रोज॑ । पुर॑ः । अर॑दत् । न । सिन्धू॑न् ।
बि॒भेद॑ । गि॒रिम् । नव॑म् । इत् । न । कु॒म्भम् । आ । गाः । इन्द्र॑ः । अकृ॒णु॒त॒ । स्व॒युक्ऽभि॑ः ॥ ७ ॥

इन्द्रः ^V^वृत्रम् असुरं ^V^जघान हतवान् । अपि च ^V^स्वधितिः परशुः ^V^वनेव वनानीव ^V^पुरः शत्रुनगरीः ^V^रुरोज रुजति भिनत्ति । शत्रुनगरीर्भित्त्वा च ^V^सिन्धून् नदीः ^V^अरदत् वृष्ट्युदकेनालिखत् । ^V^न इति संप्रत्यर्थे । किंच ^V^गिरिं मेघं ^V^नवं ^V^न नवमिव ^V^कुम्भं कलशं ^V^बिभेद ^V^इत् भिनत्त्येव । किंच ^V^इन्द्रः ^V^स्वयुग्भिः स्वयं युज्यमानैर्मरुद्भिः ^V^गाः उदकानि ^V^आ ^V^अकृणुत अस्मदभिमुखं करोति ॥

त्वं ह॒ त्यद॑ृण॒या इ॑न्द्र॒ धीरो॒ऽसिर्न पर्व॑ वृ॒जिना॑ शृ॒णासि॑ ।
प्र ये मि॒त्रस्य॒ वरु॑णस्य॒ धाम॑ यु॒जं न जना॑ मि॒नन्ति॑ मि॒त्रम् ॥ ८ ॥

त्वम् । ह॒ । त्यत् । ऋ॒ण॒ऽयाः । इन्द्र॒ । धीर॑ः । अ॒सिः । न । पर्व॑ । वृ॒जिना॑ । शृ॒णासि॑ ।
प्र । ये । मि॒त्रस्य॑ । वरु॑णस्य । धाम॑ । यु॒जम् । न । जना॑ः । मि॒नन्ति॑ । मि॒त्रम् ॥ ८ ॥

^V^इन्द्र ^V^धीरः प्राज्ञः ^V^त्वं ^V^ह त्वं खलु ^V^त्यत् तत् ^V^ऋणयाः स्तोतृविषयाणामृणानां प्रापयितासि । किंच त्वम् ^V^असिर्न शस्त्रमिव ^V^पर्व पशूनां पर्वाणि ^V^वृजिना वृजिनानि स्तोतृणामुपद्रवाणि[5] ^V^शृणासि हंसि । किंच ^V^मित्रस्य ^V^वरुणस्य मित्रावरुणयोः ^V^धाम धारकं कर्म ^V^युजं ^V^न युक्तमिव ^V^मित्रं ^V^ये अज्ञा नृशंसाः ^V^जनाः ^V^प्र ^V^मिनन्ति प्रकर्षेण हिंसन्ति तानपि शृणासीत्यर्थः ॥

प्र ये मि॒त्रं प्रार्य॒मणं॑ दु॒रेवा॒ः प्र सं॒गिर॒ः प्र वरु॑णं मि॒नन्ति॑ ।
न्य१॒॑मित्रे॑षु व॒धमि॑न्द्र॒ तुम्रं॒ वृष॒न् वृषा॑णमरु॒षं शि॑शीहि ॥ ९ ॥

---

१. त-प्रतिमानभूतं न भवति; भ-प्रमाणभूते न भवतः । २. त-भ-'न' नास्ति । ३. त-भ-अंतरिक्षं । ४. त-भ-अद्रयः । ५. त-भ१.२.४.६-°मुपद्रवाणां; भ८-°मुपद्रव्याणां ।

प्र । ये । मित्रम् । प्र । अर्यमणम् । दुःऽएवाः । प्र । सम्ऽगिरः । प्र । वरुणम् । मिनन्ति ।
नि । अमित्रेषु । वधम् । इन्द्र । तुम्रम् । वृषन् । वृषाणम् । अरुषम् । शिशीहि ॥ ९ ॥

ᵛये ᵛदुरेवाः दुष्टगमना जनाः ᵛमित्रं देवं ᵛप्र ᵛमिनन्ति प्रहिंसन्ति ᵛअर्यमणं च देवं ᵛप्र मिनन्ति ᵛसंगिरः समीचीनस्तुतिमतो मरुतश्च ᵛप्र मिनन्ति ᵛवरुणं च देवं ᵛप्र मिनन्ति तेषु ᵛअमित्रेषु शत्रुषु । तानुद्दिश्येत्यर्थः। हे ᵛवृषन् कामानां वर्षक ᵛइन्द्र त्वं ᵛतुम्रं गमनशीलं ᵛवृषाणं कामानां वर्षकम् ᵛअरुषम् आरोचमानं ᵛवधं वज्रम् । 'वधः वज्रः' इति वज्रनामसु पाठात् । ᵛनि ᵛशिशीहि तीक्ष्णीकुरु ॥

**इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम् ।**
**इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः ॥ १० ॥**

इन्द्रः । दिवः । इन्द्रः । ईशे । पृथिव्याः । इन्द्रः । अपाम् । इन्द्रः । इत् । पर्वतानाम् ।
इन्द्रः । वृधाम् । इन्द्रः । इत् । मेधिराणाम् । इन्द्रः । क्षेमे । योगे । हव्यः । इन्द्रः ॥ १० ॥

ᵛदिवः द्युलोकस्य ᵛइन्द्रः ᵛईशे ईष्टे ᵛपृथिव्याः भूमेरपि ᵛइन्द्रः ईशे ईश्वरो[1] भवति । ᵛअपाम् उदकानामपि ᵛइन्द्रः ईश्वरो भवति । ᵛपर्वतानां मेघानामपि ᵛइन्द्रः ईश्वरो भवति । ᵛवृधां वृद्धानामपि ᵛइन्द्रः एवेश्वरः । ᵛमेधिराणां प्राज्ञानामपि ᵛइन्द्रः एव ईश्वरो भवति । किंच ᵛइन्द्रः ᵛक्षेमे लब्धस्य धनस्य परिपालने ᵛहव्यः ह्वातव्यः ᵛयोगे अलब्धस्य धनस्य लाभेऽपि ᵛइन्द्रः एव ह्वातव्यो भवति ॥ ॥ १५ ॥

**प्राक्तुभ्य इन्द्रः प्र वृधो अहभ्यः प्रान्तरिक्षात्प्र समुद्रस्य धासेः ।**
**प्र वातस्य प्रथसः प्र ज्मो अन्तात्प्र सिन्धुभ्यो रिरिचे प्र क्षितिभ्यः ॥११॥**

प्र । अक्तुऽभ्यः । इन्द्रः । प्र । वृधः । अहऽभ्यः । प्र । अन्तरिक्षात् । प्र । समुद्रस्य । धासेः ।
प्र । वातस्य । प्रथसः । प्र । ज्मः । अन्तात् । प्र । सिन्धुऽभ्यः । रिरिचे । प्र । क्षितिऽभ्यः ॥ ११ ॥

ᵛइन्द्रः ᵛअक्तुभ्यः रात्रिभ्यः ᵛप्र ᵛवृधः प्रवृद्धः । ᵛअहभ्यः दिवसेभ्योऽपि ᵛप्र वृधः अधिकः । ᵛअन्तरिक्षात् अपि प्रवृद्धः । ᵛसमुद्रस्य अब्धेः ᵛधासेः धारकात्स्थानादपि प्रवृद्धः । ᵛवातस्य वायोः ᵛप्रथसः प्रथिम्नोऽपि प्रवृद्धः । ᵛज्मः पृथिव्याः ᵛअन्तात् पर्यन्तादपि प्रवृद्धः । ᵛसिन्धुभ्यः नदीभ्यश्च ᵛप्र ᵛरिरिचे अतिरिच्यते । महान् भवतीत्यर्थः । ᵛक्षितिभ्यः मनुष्येभ्योऽपि ᵛप्र रिरिचे ॥

**प्र शोशुचत्या उषसो न केतुरसिन्वा ते वर्ततामिन्द्र हेतिः ।**
**अश्मेव विध्य दिव आ सृजानस्तपिष्ठेन हेषसा द्रोघमित्रान् ॥ १२ ॥**

प्र । शोशुचत्याः । उषसः । न । केतुः । असिन्वा । ते । वर्तताम् । इन्द्र । हेतिः ।
अश्माऽइव । विध्य । दिवः । आ । सृजानः । तपिष्ठेन । हेषसा । द्रोघऽमित्रान् ॥ १२ ॥

हे ᵛइन्द्र ᵛते तव ᵛअसिन्वा भेदनरहितं[2] ᵛहेतिः वज्राख्यमायुधं ᵛशोशुचत्याः ज्वलन्त्याः ᵛउषसो ᵛन यथोषसः ᵛकेतुः पताकास्थानीयो रश्मिस्तद्वच्छत्रुषु ᵛप्र ᵛवर्तताम् । किंच ᵛतपिष्ठेन

१. त१.२.३.७-मु-एव ईश्वरो । २. ग४-मु-भेदनरहिता; त-भ-भेदेन रहिता ।

अतिशयेन शत्रूणां तापयित्र्या [v]हेषसा शब्दकारिण्या हेत्या [v]द्रोघमित्रान् । द्रुग्धानि मित्राणि येषां ते द्रोघमित्राः । तान् शत्रून् [v]विध्य ताडय । तत्र दृष्टान्तः । [v]दिव [v]आ [v]सृजानः सृज्यमानः [v]अश्मेव । यथाशनिः[1] वृक्षान्[2] विध्यति तद्वदित्यर्थः ॥

अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः ।
अन्विन्द्रं रोदसी वावशाने अन्वापो अजिहत जायमानम् ॥ १३ ॥

अनु । अह । मासाः । अनु । इत् । वनानि । अनु । ओषधीः । अनु । पर्वतासः ।
अनु । इन्द्रम् । रोदसी इति । वावशाने इति । अनु । आपः । अजिहत । जायमानम् ॥ १३ ॥

[v]जायमानं प्रादुर्भवन्तम् [v]इन्द्रं [v]मासाः चैत्रादयः [v]अनु [v]अजिहत अनुगच्छन्ति । [v]अह इति पूरणः । [v]वनानि अरण्यान्यपीन्द्रम् [v]अनु अजिहत । [v]इत् इति पूरणः । [v]ओषधीः ओषध्योऽपि इन्द्रम् [v]अनु गच्छन्ति । [v]पर्वतासः पर्वता अपीन्द्रम् [v]अनु गच्छन्ति । [v]वावशाने कामयमाने [v]रोदसी द्यावापृथिव्यावपि [v]इन्द्रम् अनु गच्छतः । [v]आपः उदकान्यपीन्द्रम् [v]अनु गच्छन्ति । मासाद्यधिष्ठातृदेवताः प्रादुर्भवन्तमिन्द्रमनुगच्छन्तीत्यर्थः ॥

कर्हि स्वित्सा त इन्द्र चेत्यासदघस्य यद्भिनदो रक्ष एषत् ।
मित्रक्रुवो यच्छसने न गावः पृथिव्या आपृगमुया शयन्ते ॥ १४ ॥

कर्हि । स्वित् । सा । ते । इन्द्र । चेत्या । असत् । अघस्य । यत् । भिनदः । रक्षः । आऽईषत् ।
मित्रऽक्रुवः । यत् । शसने । न । गावः । पृथिव्याः । आऽपृक् । अमुया । शयन्ते ॥ १४ ॥

हे [v]इन्द्र [v]ते तव [v]सा हेतिरिषुर्वा [v]चेत्या चेतयितव्या शत्रुषु क्षेप्तव्या [v]कर्हि [v]स्वित् कदा वा [v]असत् भविष्यति । [v]यत् यया हेत्या त्वम् [v]अघस्य । द्वितीयार्थे षष्ठी । अहतम् [v]एषत् युद्धार्थमागच्छत् [v]रक्षः [v]भिनदः अभिनः । [v]यत् यया च शक्त्या [v]मित्रक्रुवः मित्राणां क्रूरस्य कर्मणः कर्तारो जनाः [v]पृथिव्याः संबन्धिनि [v]शसने विशसनस्थाने [v]गावो [v]न पशव इव [v]आपृक् आपर्चनाहताः सन्तः [v]अमुया अनया पृथिव्या संगता युद्धे [v]शयन्ते शेरते ॥

शत्रूयन्तो अभि ये नस्ततस्रे महि व्राधन्त ओगणास इन्द्र ।
अन्धेनामित्रास्तमसा सचन्तां सुज्योतिषो अक्तवस्ताँ अभि ष्युः ॥ १५ ॥

शत्रुऽयन्तः । अभि । ये । नः । ततस्रे । महि । व्राधन्तः । ओगणासः । इन्द्र ।
अन्धेन । अमित्राः । तमसा । सचन्ताम् । सुऽज्योतिषः । अक्तवः । तान् । अभि । स्युरिति स्युः ॥ १५ ॥

हे [v]इन्द्र[3] [v]शत्रूयन्तः[4] [v]महि अत्यन्तं [v]व्राधन्तः अस्मान् बाधमानाः [v]ओगणासः संघीभूताः [v]ये शत्रवः [v]नः अस्मान् [v]अभि [v]ततस्रे निक्षिपन्ति [v]ते [v]अमित्राः शत्रवः [v]अन्धेन [v]तमसा महतान्धकारेण [v]सचन्तां संगच्छन्ताम् । किंच [v]तान् अमित्रान् [v]सुज्योतिषः दिवसाः [v]अक्तवः रात्रयश्च [v]अभि [v]ष्युः अभिभवन्तु ॥

१. त४.५–यथास्मा । २. ग-त४.५–वृक्षादीन्; त१.२.३.६.७–वृक्षाश्मान् । ३. त१.२.३.६.७.८-भ–'इंद्र' नास्ति । ४. ग४–शत्रूयंतः शत्रुत्वमिच्छंतः ।

पुरूणि हि त्वा सर्वना जनानां ब्रह्माणि मन्दन् गृणतामृषीणाम् ।
इमामाघोषन्नवसा सहूतिं तिरो विश्वाँ अर्चतो याह्यर्वाङ् ॥ १६ ॥

पुरूणि । हि । त्वा । सर्वना । जनानाम् । ब्रह्माणि । मन्दन् । गृणताम् । ऋषीणाम् ।
इमाम् । आऽघोषन् । अवसा । सऽहूतिम् । तिरः । विश्वान् । अर्चतः । याहि । अर्वाङ् ॥ १६ ॥

हे इन्द्र ᵛत्वा त्वां ᵛजनानां संबन्धीनि ᵛपुरूणि बहूनि ᵛसवना सवनानि ᵛब्रह्माणि स्तोत्राणि च ᵛमन्दन् स्तुवन्ति मोदयन्ति वा । ᵛगृणतां स्तुवताम्[1] ᵛऋषीणाम् ᵛइमां ᵛसहूतिं स्तुतिं त्वम् ᵛआघोषन् महती शोभना चेयं स्तुतिरिति वदन् ᵛअर्चतः स्तुवतोऽन्यान् ᵛविश्वान् सर्वानपि ᵛतिरः तिरस्कृत्य ᵛअवसा रक्षणेन सह ᵛअर्वाङ् अस्मदभिमुखं ᵛयाहि गच्छ[2] ॥

एवा ते वयमिन्द्र भुञ्जतीनां विद्याम सुमतीनां नवानाम् ।
विद्याम वस्तोरवसा गृणन्तो विश्वामित्रा उत त इन्द्र नूनम् ॥ १७ ॥

एव । ते । वयम् । इन्द्र । भुञ्जतीनाम् । विद्याम । सुऽमतीनाम् । नवानाम् ।
विद्याम । वस्तोः । अवसा । गृणन्तः । विश्वामित्राः । उत । ते । इन्द्र । नूनम् ॥ १७ ॥

हे ᵛइन्द्र ᵛते तवैव ᵛभुञ्जतीनां रक्षन्तीः प्रियाः ᵛवयं विश्वामित्रपुत्रा रेणवः ᵛविद्याम लभेमहि । ᵛउत अपि च हे ᵛइन्द्र ᵛते तव ᵛनवानां नूतनाः ᵛसुमतीनां सुमतीरनुग्रहबुद्धीः ᵛवस्तोः अहनि ᵛअवसा रक्षणार्थं ᵛगृणन्तः ᵛनूनं त्वां स्तुवन्त एव ᵛविश्वामित्राः विश्वामित्रपुत्रा वयं ᵛविद्याम लभेमहि ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ १८ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १८ ॥

ᵛअस्मिन्भरे संग्रामे ᵛशुनं वृद्धं ᵛमघवानं धनवन्तं ᵛशृण्वन्तम् अस्मदीयस्याह्वानस्य श्रोतारम् ᵛउग्रम् उद्गूर्णं ᵛसमत्सु संग्रामेषु ᵛवृत्राणि शत्रून् ᵛघ्नन्तं मारयन्तं ᵛधनानां शत्रुधनानां ᵛसंजितं सम्यगेव जेतारम् ᵛइन्द्रं ᵛवाजसातौ अन्नस्य लाभाय ᵛऊतये रक्षणाय च ᵛहुवेम आह्वयेम ॥ ॥ १६ ॥

'सहस्रशीर्षा' इति षोडशर्चं षष्ठं सूक्तम् । नारायणो नामर्षिरन्त्या त्रिष्टुप् शिष्टा अनुष्टुभः । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः 'पुरुषान्न परं किंचित्' (क. उ. ३. ११) इत्यादिश्रुतिषु प्रसिद्धः स देवता । तथा चानुक्रान्तं—'सहस्रशीर्षा षोळश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तं तु' इति । गतो विनियोगः ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

---

१. त१.२.३.६.७.८-म-'स्तुवतां' नास्ति । २. ग-त४.५-आगच्छ ।

सहस्रऽशीर्षा । पुरुषः । सहस्रऽअक्षः । सहस्रऽपात् ।

सः । भूमिम् । विश्वतः । वृत्वा । अति । अतिष्ठत् । दशऽअङ्गुलम् ॥ १ ॥

सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः ^v^पुरुषः[1] सोऽयं ^v^सहस्रशीर्षा । सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम् । एवं सहस्राक्षित्वं सहस्रपादत्वं च । ^v^सः पुरुषः ^v^भूमिं ब्रह्माण्डगोलकरूपां ^v^विश्वतः सर्वतः ^v^वृत्वा परिवेष्ट्य ^v^दशाङ्गुलं दशाङ्गुलपरिमितं देशम् ^v^अत्यतिष्ठत् अतिक्रम्य व्यवस्थितः । दशाङ्गुलमित्युपलक्षणम् । ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ॥

**पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।**
**उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥**

पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भव्यम् ।

उत । अमृतऽत्वस्य । ईशानः । यत् । अन्नेन । अतिऽरोहति ॥ २ ॥

यत् ^v^इदं वर्तमानं जगत् तत् ^v^सर्वं ^v^पुरुष ^v^एव । ^v^यत् च ^v^भूतम् अतीतं जगत् ^v^यच्च ^v^भव्यं भविष्यज्जगत् तदपि पुरुष एव । यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः[2] सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः । ^v^उत अपि च ^v^अमृतत्वस्य देवत्वस्य अयम् ^v^ईशानः स्वामी । ^v^यत् यस्मात्कारणात् ^v^अन्नेन प्राणिनां भोग्येनान्नेन[3] निमित्तभूतेन[4] ^v^अतिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः[5] ॥

**एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।**
**पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥**

एतावान् । अस्य । महिमा । अतः । ज्यायान् । च । पुरुषः ।

पादः । अस्य । विश्वा । भूतानि । त्रिऽपात् । अस्य । अमृतम् । दिवि ॥ ३ ॥

अतीतानागतवर्तमानरूपं जगद्यावदस्ति ^v^एतावान् सर्वोऽपि ^v^अस्य पुरुषस्य ^v^महिमा स्वकीयसामर्थ्यविशेषः । न तु तस्य वास्तवस्वरूपम् । वास्तवस्तु ^v^पुरुषः ^v^अतः महिम्नोऽपि ^v^ज्यायान् अतिशयेनाधिकः । एतच्चोभयं स्पष्टीक्रियते । ^v^अस्य पुरुषस्य ^v^विश्वा सर्वाणि ^v^भूतानि कालत्रयवर्तीनि प्राणिजातानि ^v^पादः चतुर्थोऽशः[6] । ^v^अस्य पुरुषस्य अवशिष्टं ^v^त्रिपात् स्वरूपम् ^v^अमृतं विनाशरहितं सत् ^v^दिवि द्योतनात्मके स्वप्रकाशस्वरूपे व्यवतिष्ठत इति शेषः । यद्यपि ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै. आ. ८.१; तै. उ. २.१ ) इत्याम्नातस्य परब्रह्मण इयत्ताभावात्[7] पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात् पादत्वोपन्यासः ॥

---

१. त१.२.३.६.७.८-भ-'पुरुषः' नास्ति । २. त१.२.३-भ२.७.८-प्राणिदेवाः । ३. त-भ-मु-अन्नेन भोग्येन । ४. त१.२.३.६.७.८-भ-मु-निमित्तेन । ५. ग-त-वस्तुतत्त्वमित्यर्थः । ६. त-भ-चतुर्थोशश्च । ७. ग-त४.५-मु-इयत्ताया अभावात्; त२.३.६.७.८-भ४.८-इयत्ता अभावात् ।

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत् पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥

त्रिऽपात् । ऊर्ध्वः । उत् । ऐत् । पुरुषः । पादः । अस्य । इह । अभवत् । पुनरिति ।
ततः । विष्वङ् । वि । अक्रामत् । साशनानशने इति । अभि ॥ ४ ॥

योऽयं त्रिपात् पुरुषः संसाररहितो[1] ब्रह्मस्वरूपः[2] सोऽयम् ऊर्ध्वं उदैत् अस्मादज्ञानकार्यात्संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान् । तस्य[3] अस्य सोऽयं[3] पादः लेशः सोऽयम् इह मायायां पुनः अभवत् सृष्टिसंहाराभ्यां पुनःपुनरागच्छति । अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तं—‘विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्’ (भ. गी. १०. ४२) इति । ततः मायायामागत्यानन्तरं विष्वङ् देवमनुष्यतिर्यगादिरूपेण[4] विविधः सन् व्यक्रामत् व्याप्तवान् । किं कृत्वा । साशनानशने अभिलक्ष्य । साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातम्[5] अनशनं तद्रहितमचेतनं गिरिनद्यादिकम् । तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥

तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

तस्मात् । विऽराट् । अजायत । विऽराजः । अधि । पुरुषः ।
सः । जातः । अति । अरिच्यत । पश्चात् । भूमिम् । अथो इति । पुरः ॥ ५ ॥

विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्च्यते । तस्मात् आदिपुरुषात् विराट् ब्रह्माण्डदेहः अजायत उत्पन्नः । विविधानि[6] राजन्ते वस्तून्यत्रेति[7] विराट् । विराजोऽधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित् पुमान् अजायत । सोऽयं सर्ववेदान्तवेद्यः परमात्मा स्वयमेव[8] स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् । एतच्चाथर्वणिका उत्तरतापनीये विस्पष्टमामनन्ति—‘स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव’ (नृ. ता. २. १. ९) इति । स जातः विराट् पुरुषः अत्यरिच्यत अतिरिक्तोऽभूत् । विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् । पश्चात् देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः । अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज । पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥॥१७॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥

यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत ।
वसन्तः । अस्य । आसीत् । आज्यम् । ग्रीष्मः । इध्मः । शरत् । हविः ॥ ६ ॥

---

१. ग-त-भ४-मु—संसारस्पर्शरहितो । २. ग-त१.२.३.६.७.८-भ—बहुलस्वरूपः । ३. ग—तस्य योयं; त-भ४.७—तस्य सोयं । ४. त-भ—देवतिर्यगादिरूपेण । ५. त-मु—प्राणिजातं लक्ष्यते । ६. ग-त४.५-भ—विविधं । ७. त६-भ८—वसून्यत्रेति । ८. त-भ—स एव ।

यत् यदा पूर्वोक्तक्रमेणैव[1] शरीरेषूत्पन्नेषु[1] सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासंभवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञम् अतन्वत अन्वतिष्ठन् तदानीम् अस्य यज्ञस्य वसन्तः वसन्तर्तुरेव आज्यम् आसीत् अभूत्। तमेवाज्यत्वेन संकल्पितवन्त इत्यर्थः। एवं ग्रीष्म इध्मः आसीत्। तमेवेध्मत्वेन संकल्पितवन्त इत्यर्थः। तथा शरद्धविः आसीत्। तामेव[2] पुरोडाशादिहविष्ट्वेन संकल्पितवन्त इत्यर्थः। पूर्वं[3] पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः। अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन[4] संकल्प इति द्रष्टव्यम्॥

**तं य॒ज्ञं ब॒र्हिषि॒ प्रौक्ष॒न् पुरु॑षं जा॒तम॑ग्र॒तः।**
**तेन॑ दे॒वा अ॑यजन्त सा॒ध्या ऋष॑यश्च॒ ये॥ ७॥**

तम्। य॒ज्ञम्। ब॒र्हिषि॑। प्र। औ॒क्ष॒न्। पुरु॑षम्। जा॒तम्। अ॒ग्र॒तः।
तेन॑। दे॒वाः। अ॒य॒ज॒न्त॒। सा॒ध्याः। ऋष॑यः। च॒। ये॥ ७॥

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया[5] यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः। कीदृशमित्यत्राह। अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तं 'तस्माद्विराळजायत विराजो अधि पूरुषः' इति। तेन पुरुषरूपेण पशुना देवा अयजन्त। मानसयागं निष्पादितवन्त इत्यर्थः। के ते देवा इत्यत्राह। साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूलाः ऋषयः मन्त्रद्रष्टारः च ये सन्ति। ते सर्वेऽप्ययजन्तेत्यर्थः॥

**तस्मा॑द्य॒ज्ञात् स॑र्व॒हु॒तः संभृ॑तं पृषदा॒ज्यम्।**
**प॒शून् ताँश्च॑क्रे वाय॒व्या॑नार॒ण्यान् ग्रा॒म्याश्च॒ ये॥ ८॥**

तस्मा॑त्। य॒ज्ञात्। स॒र्व॒ऽहु॑तः। सम्ऽभृ॑तम्। पृ॒ष॒त्ऽआ॒ज्यम्।
प॒शून्। तान्। च॒क्रे॒। वा॒य॒व्या॑न्। आ॒र॒ण्यान्। ग्रा॒म्याः। च॒। ये॥ ८॥

सर्वहुतः। सर्वात्मकः पुरुषः यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत्। तादृशात् तस्मात् पूर्वोक्तात् मानसात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितम्। दधि चाज्यं चेत्येवमादिभोग्यजातं सर्वं संपादितमित्यर्थः। तथा वायव्यान् वायुदेवताकाँल्लोकप्रसिद्धान् आरण्यान् पशून् चक्रे उत्पादितवान्। आरण्या हरिणादयः। तथा ये च ग्राम्याः गवाश्वादयः तानपि चक्रे। पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते—'वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैनान्परिददाति' ( तै. ब्रा. ३. २. १. ३ ) इति॥

**तस्मा॑द्य॒ज्ञात् स॑र्व॒हु॒त ऋच॒ः सामा॑नि जज्ञिरे।**
**छन्दां॑सि जज्ञिरे॒ तस्मा॒द्यजु॒स्तस्मा॑दजायत॥ ९॥**

तस्मा॑त्। य॒ज्ञात्। स॒र्व॒ऽहु॑तः। ऋच॑ः। सामा॑नि। ज॒ज्ञि॒रे॒।
छन्दां॑सि। ज॒ज्ञि॒रे॒। तस्मा॑त्। यजु॑ः। तस्मा॑त्। अ॒जा॒य॒त॒॥ ९॥

१. त१.२.३.४.५.६.७-भ८–'क्रमेण देवशरीरे'। २. त-भ–तमेव। ३. त-मु–एवं। ४. ग–'माज्यादिरूपविशेषत्वेन। ५. त–पशुत्वभावाय; भ७–पशुत्वभावनाय।

vसर्वहुतः vतस्मात् पूर्वोक्तात् vयज्ञात् vऋचः vसामानि च vजज्ञिरे उत्पन्नाः। vतस्मात् यज्ञात् vछन्दांसि गायत्र्यादीनि vजज्ञिरे। vतस्मात् यज्ञात् vयजुः अपि vअजायत ॥

**तस्मादश्वा अजायन्त ये के चोभयादतः।**
**गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥ १० ॥**

तस्मात्। अश्वाः। अजायन्त। ये। के। च। उभयादतः।
गावः। ह। जज्ञिरे। तस्मात्। तस्मात्। जाताः। अजावयः ॥ १० ॥

vतस्मात् पूर्वोक्ताद्यज्ञात् vअश्वा vअजायन्त उत्पन्नाः। तथा vये vके vच अश्वव्यतिरिक्ता गर्दभा अश्वतराश्च vउभयादतः ऊर्ध्वाधोभागयोरुभयोः दन्तयुक्ताः सन्ति तेऽप्यजायन्त[1]। तथा vतस्मात् यज्ञात् vगावः च vजज्ञिरे। किंच vतस्मात् यज्ञात् vअजावयः च vजाताः ॥ ॥ १८ ॥

**यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।**
**मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ ११ ॥**

यत्। पुरुषम्। वि। अदधुः। कतिधा। वि। अकल्पयन्।
मुखम्। किम्। अस्य। कौ। बाहू इति। कौ। ऊरू इति। पादौ। उच्येते इति ॥ ११ ॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपा देवाः vयत् यदा vपुरुषं विराड्रूपं vव्यदधुः संकल्पेनोत्पादितवन्तः[2] तदानीं vकतिधा कतिभिः प्रकारैः vव्यकल्पयन् विविधं कल्पितवन्तः। vअस्य पुरुषस्य vमुखं vकिम्[3] आसीत्। vकौ vबाहू अभूताम् vका vऊरू। कौ च vपादावुच्येते। प्रथमं सामान्यरूपः प्रश्नः पश्चात् मुखं[3] किमित्यादिना विशेषविषयाः प्रश्नाः ॥

**ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ १२ ॥**

ब्राह्मणः। अस्य। मुखम्। आसीत्। बाहू इति। राजन्यः। कृतः।
ऊरू इति। तत्। अस्य। यत्। वैश्यः। पत्ऽभ्याम्। शूद्रः। अजायत ॥ १२ ॥

इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति। vअस्य प्रजापतेः vब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषः vमुखमासीत् मुखादुत्पन्न इत्यर्थः। योऽयं vराजन्यः क्षत्रियत्वजातिमान्[4] पुरुषः सः vबाहू vकृतः बाहुत्वेन निष्पादितः। बाहुभ्यामुत्पादित इत्यर्थः। vतत् तदानीम् vअस्य प्रजापतेः vयत् यौ vऊरू तद्रूपः vवैश्यः संपन्नः। ऊरुभ्यामुत्पन्न इत्यर्थः। तथास्य vपद्भ्यां पादाभ्यां vशूद्रः शूद्रत्वजातिमान् पुरुषः vअजायत। इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' (तै. सं. ७. १. १. ४) इत्यादौ विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्परतयैव[5] योजनीये ॥

---

१. त१.२.६.७–तस्मादप्यजायंत। २. त–कालेनोत्पादितवंतः। ३. त–'किम्...मुखं' नास्ति। ४. त-मु–क्षत्रियत्वजातिविशिष्टः। ५. ग-भ२–तत्परेणैव; त१.३.४.५.६.८–तत्परेनैव; त७-मु–तत्परत्वेनैव।

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥

चन्द्रमाः। मनसः। जातः। चक्षोः। सूर्यः। अजायत।
मुखात्। इन्द्रः। च। अग्निः। च। प्राणात्। वायुः। अजायत ॥ १३ ॥

यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह। प्रजापतेः ᵛमनसः सकाशात् ᵛचन्द्रमाः ᵛजातः। ᵛचक्षोः च चक्षुषः ᵛसूर्यः अपि ᵛअजायत। अस्य ᵛमुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ। अस्य ᵛप्राणाद्वायुरजायत ॥

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ १४ ॥

नाभ्याः। आसीत्। अन्तरिक्षम्। शीर्ष्णः। द्यौः। सम्। अवर्तत।
पत्ऽभ्याम्। भूमिः। दिशः। श्रोत्रात्। तथा। लोकान्। अकल्पयन् ॥ १४ ॥

यथा चन्द्रादीन् प्रजापतेर्मनःप्रभृतिभ्योऽकल्पयन्[1] ᵛतथा अन्तरिक्षादीन् ᵛलोकान् प्रजापतेः नाभ्यादिभ्यो[2] देवाः[2] ᵛअकल्पयन् उत्पादितवन्तः। एतदेव दर्शयति। ᵛनाभ्याः प्रजापतेर्नाभेः ᵛअन्तरिक्षमासीत्। ᵛशीर्ष्णः शिरसः ᵛद्यौः ᵛसमवर्तत उत्पन्ना। अस्य ᵛपद्भ्यां पादाभ्यां ᵛभूमिः उत्पन्ना। अस्य ᵛश्रोत्रात् ᵛदिशः उत्पन्नाः ॥

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥

सप्त। अस्य। आसन्। परिऽधयः। त्रिः। सप्त। सम्ऽइधः। कृताः।
देवाः। यत्। यज्ञम्। तन्वानाः। अबध्नन्। पुरुषम्। पशुम् ॥ १५ ॥

ᵛअस्य सांकल्पिकयज्ञस्य[3] गायत्र्यादीनि ᵛसप्त छन्दांसि ᵛपरिधयः ᵛआसन्। ऐष्टिकस्याहवनीयस्य त्रयः परिधय उत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः। अत एवाम्नायते— 'न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ति' (तै. सं. २.६.६.३) इति। तत एत आदित्यसहिताः सप्त परिधयोऽत्र सप्त छन्दोरूपाः। तथा ᵛसमिधः ᵛत्रिः ᵛसप्त त्रिगुणीकृतसप्तसंख्याकाः एकविंशतिः ᵛकृताः। 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' (तै. सं. ५.१.१०.३) इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः। ᵛयत् यः पुरुषो वैराजोऽस्ति तं ᵛपुरुषं ᵛदेवाः प्रजापतिप्राणेन्द्रियरूपाः ᵛयज्ञं ᵛतन्वानाः मानसं यज्ञं तन्वानाः कुर्वाणाः ᵛपशुम् ᵛअबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेवाभिप्रेत्य पूर्वत्र 'यत्पुरुषेण हविषा' इत्युक्तम् ॥

---

१. त-भ२.४.६.८—प्रजापतेर्मनःप्रभृतयो॰; भ७—प्रजापतेर्मनसःप्रभृतयो॰। २. त१-२-६—नाभ्यादयो देवा अवयवा; त३.७—नाभ्यदयोवयवा; त८-भ—नाभ्यादयो देवा। ३. त—सांकल्पिकस्य यज्ञस्य।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ।
ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥ १६ ॥

पूर्वं प्रपञ्चेनोक्तमर्थं संक्षिप्यात्र दर्शयति । ᵛदेवाः प्रजापतिप्राणरूपाः ᵛयज्ञेन यथोक्तेन मानसेन संकल्पेन ᵛयज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिम् ᵛअयजन्त पूजितवन्तः। तस्मात्पूजनात् ᵛतानि प्रसिद्धानि ᵛधर्माणि जगद्रूपविकाराणां धारकाणि ᵛप्रथमानि मुख्यानि[1] ᵛआसन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः । अथोपासनतत्फलानुवादकभागार्थः संगृह्यते । ᵛयत्र यस्मिन् विराट्प्राप्तिरूपे नाके ᵛपूर्वे ᵛसाध्याः पुरातना विराडुपास्तिसाधकाः ᵛदेवाः ᵛसन्ति तिष्ठन्ति तत् ᵛनाकं विराट्प्राप्तिरूपं स्वर्गं ᵛते ᵛमहिमानः तदुपासका महात्मानः ᵛसचन्त समवयन्ति प्राप्नुवन्ति ॥ ॥ १९ ॥ ॥ ७ ॥

अष्टमेऽनुवाके नव सूक्तानि । 'सं जागृवद्भिः' इति पञ्चदशर्चं प्रथमं सूक्तं वीतहव्यपुत्रस्यारुणनाम्न आर्षमग्निदेवत्यम् । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रान्तं—'सं जागृवद्भिः पञ्चोनारुणो वैतहव्य आग्नेयम्' इति । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदं सूक्तम् । सूत्रितं च—'सं जागृवद्भिश्चित्र इच्छिशोर्वसुं न चित्रमहसमिति जागतम्' (आश्व. श्रौ. ४. १३) इति ॥

सं जागृवद्भिर्जरमाण इध्यते दमे दमूना इषयन्निळस्पदे ।
विश्वस्य होता हविषो वरेण्यो विभुर्विभावा सुषखा सखीयते ॥ १ ॥

सम् । जागृवत्ऽभिः । जरमाणः । इध्यते । दमे । दमूनाः । इषयन् । इळः । पदे ।
विश्वस्य । होता । हविषः । वरेण्यः । विऽभुः । विभाऽवा । सुऽसखा । सखिऽयते ॥ १ ॥

हे अग्ने ᵛजागृवद्भिः जागरणशीलैः स्तोतृभिः ᵛजरमाणः स्तूयमानः ᵛदमूनाः दममना दानमना दान्तमना वा ᵛइळः इळायाः ᵛपदे स्थाने उत्तरवेद्याम् ᵛइषयन् अन्नमिच्छन् ᵛविश्वस्य सर्वस्य ᵛहविषः ᵛहोता ᵛवरेण्यः वरणीयः ᵛविभुः व्याप्तः ᵛविभावा दीप्तिमान् ᵛसुषखा शोभनसखा भवान् ᵛसखीयते सखित्वमिच्छते यजमानाय ᵛसम् ᵛइध्यते सम्यग्दीप्यते ॥

स दर्शतश्रीरतिथिर्गृहेगृहे वनेवने शिश्रिये तक्ववीरिव ।
जनंजनं जन्यो नाति मन्यते विश आ क्षेति विश्यो३ विशंविशम् ॥ २ ॥

सः । दर्शतऽश्रीः । अतिथिः । गृहेऽगृहे । वनेऽवने । शिश्रिये । तक्ववीःऽइव ।
जनम्ऽजनम् । जन्यः । न । अति । मन्यते । विशः । आ । क्षेति । विश्यः । विशम्ऽविशम् ॥ २ ॥

ᵛदर्शतश्रीः दर्शनीयविभूतिः ᵛअतिथिः[2] अतिथिभूतः ᵛसः अग्निः ᵛगृहेगृहे यजमानानां गृहेषु ᵛवनेवने सर्वेषु वनेषु[3] च ᵛशिश्रिये श्रयति । किंच ᵛजन्यः जनहितः सोऽग्निः ᵛजनंजनं सर्वं जनं[4]

---

१. त–मुख्यानि भूतानि । २. ग-त३.४.५.६-मु–'अतिथिः' नास्ति । ३. ग-त४–वृक्षेषु; त१.२-३.५.६.८-म२.४.८–वृद्धेषु । ४. ग-त-म२.४.५.८–जातं ।

ᵛतक्कवीरिव गच्छन्निव ᵛनाति ᵛमन्यते न विसृज्य गच्छतीत्यर्थः। तदेव दर्शयति। ᵛविश्यः विड्भ्यो हितः सोऽग्निः ᵛविशो मनुष्यान् ᵛआ ᵛक्षेति अभिगच्छति। किंच ᵛविशंविशं सर्वा विशः प्रजा अधितिष्ठतीति शेषः ॥

सुदक्षो दक्षैः क्रतुनासि सुक्रतुरग्ने कविः काव्येनासि विश्ववित्।
वसुर्वसूनां क्षयसि त्वमेक इद् द्यावा च यानि पृथिवी च पुष्यतः ॥ ३ ॥

सुऽदक्षः। दक्षैः। क्रतुना। असि। सुऽक्रतुः। अग्ने। कविः। काव्येन। असि। विश्वऽवित्।
वसुः। वसूनाम्। क्षयसि। त्वम्। एकः। इत्। द्यावा। च। यानि। पृथिवी इति। च। पुष्यतः॥३॥

हे ᵛअग्ने त्वं ᵛदक्षैः बलैः ᵛसुदक्षः सुबलः ᵛअसि भवसि। किंच ᵛक्रतुना कर्मणा ᵛसुक्रतुः शोभनकर्मासि। किंच ᵛकाव्येन मेधाविकर्मणा ᵛकविः मेधावी ᵛअसि। किंच ᵛविश्ववित् सर्वज्ञोऽसि। किंच ᵛवसूनां धनानां ᵛवसुः वासयितासि। किंच हे अग्ने ᵛत्वमेक ᵛइत् एक एव ᵛक्षयसि निवससि। किंच ᵛद्यावा ᵛच ᵛपृथिवी ᵛच द्यावाभूमी ᵛयानि वसूनि ᵛपुष्यतः संवर्धयतः[1] तेषां दिव्यानां पार्थिवानां च धनानामीशिष इत्यर्थः[2] ॥

प्रजानन्नग्ने तव योनिमृत्वियमिळायास्पदे घृतवन्तमासदः।
आ ते चिकित्र उषसामिवेतयोऽरेपसः सूर्यस्येव रश्मयः ॥ ४ ॥

प्रऽजानन्। अग्ने। तव। योनिम्। ऋत्वियम्। इळायाः। पदे। घृतऽवन्तम्। आ। असदः।
आ। ते। चिकित्रे। उषसाम्ऽइव। एतयः। अरेपसः। सूर्यस्यऽइव। रश्मयः ॥ ४ ॥

हे ᵛअग्ने ᵛतव ᵛऋत्वियम् ऋतौ भवं ᵛघृतवन्तं घृतेन सहितं ᵛयोनिं निवासस्थानम् ᵛइळाया-स्पदे उत्तरवेद्यां ᵛप्रजानन् त्वम् ᵛआसदः आसीदसि। किंच ᵛते तव ᵛरश्मयः ᵛउषसामिव यथोषसाम् ᵛएतयः प्रज्ञाः प्रकाशलक्षणा आगतयो वा निर्गता रश्मयो दृश्यन्ते तद्वत् ᵛआ ᵛचिकित्रे प्रज्ञायन्ते। ᵛसूर्यस्येव यथा सूर्यस्य ᵛअरेपसः पापरहिता निर्गताः ᵛरश्मयः दृश्यन्ते तद्वदा चिकित्रे प्रज्ञायन्ते ॥

तव श्रियो वर्ष्यस्येव विद्युतश्चित्राश्चिकित्र उषसां न केतवः।
यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमास्ये ॥ ५ ॥

तव। श्रियः। वर्ष्यस्यऽइव। विऽद्युतः। चित्राः। चिकित्रे। उषसाम्। न। केतवः।
यत्। ओषधीः। अभिऽसृष्टः। वनानि। च। परि। स्वयम्। चिनुषे। अन्नम्। आस्ये॥५॥

हे अग्ने ᵛतव ᵛश्रियः रश्मिलक्षणा विभूतयः ᵛचित्राः विचित्राः ᵛचिकित्रे प्रज्ञायन्ते। तत्र दृष्टान्तः। ᵛवर्ष्यस्येव यथा वर्षितुर्मेघस्य संबन्धिन्यः ᵛविद्युतः ᵛउषसां ᵛन यथा चोषसां ᵛकेतवः प्रज्ञानास्तत्स्थाः प्रकाशाः प्रज्ञायन्ते तद्वदित्यर्थः। कदेत्यत्राह। ᵛयत् यदा त्वम् ᵛओषधीः व्रीह्याद्याः[3]

१. ग-त४-५—संवंधयतः; त१.२.३.६.७—संबंधयत्। २. ग-त-मु—इति शेषः। ३. ग-त-मु—व्रीहिय-वाद्या; भ२—व्रीह्यायात्या; भ४.६.८—व्रीह्याद्यान्या।

ᵛवनानि अरण्यानि ᵛच ᵛअभिसृष्टः सृष्टो दग्धुं विसृष्टः सन्[1] ᵛस्वयम्[1] आत्मना ᵛआस्ये मुखे ᵛअन्नम् अदनीयं स्थावरलक्षणं ᵛपरि ᵛचिनुषे परिक्षिपसीत्यर्थः[2] ॥ ॥ २० ॥

**तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयन्त मातरः ।**
**तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥ ६ ॥**

तम् । ओषधीः । दधिरे । गर्भम् । ऋत्वियम् । तम् । आपः । अग्निम् । जनयन्त । मातरः ।
तम् । इत् । समानम् । वनिनः । च । वीरुधः । अन्तःऽवतीः । च । सुवते । च । विश्वहा ॥ ६ ॥

ᵛऋत्वियम् ऋतौ प्राप्तं ᵛगर्भं गर्भभूतं ᵛतं प्रकृतमग्निम् ᵛओषधीः ओषध्यः ᵛदधिरे धारयन्ति । ᵛतम् एव ᵛअग्निं ᵛमातरः धारकत्वेन मातृस्थानीया ᵛआपः च ᵛजनयन्त जनयन्ति । किंच ᵛवनिनः वनस्पतयः ᵛच ᵛसमानं गर्भभावेन प्रवेशात् स्वतुल्यं ᵛतमित् तमेवाग्निं जनयन्ति । किंच तमेवाग्निम् ᵛअन्तर्वतीः गर्भवत्यः ᵛवीरुधः ओषधयः ᵛच ᵛविश्वहा सर्वदा ᵛसुवते जनयन्ति ॥

**वातोपधूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे ।**
**आ ते यतन्ते रथ्यो३ यथा पृथक्शर्धांस्यग्ने अजराणि धक्षतः ॥ ७ ॥**

वातऽउपधूतः । इषितः । वशान् । अनु । तृषु । यत् । अन्ना । वेविषत् । विऽतिष्ठसे ।
आ । ते । यतन्ते । रथ्यः । यथा । पृथक् । शर्धांसि । अग्ने । अजराणि । धक्षतः ॥ ७ ॥

हे ᵛअग्ने ᵛयत्[3] यदा त्वं[3] ᵛवातोपधूतः वायुना कम्पितः ᵛवशान् कान्तान् वनस्पतीन् ᵛअनु प्रति ᵛतृषु क्षिप्रम् ᵛइषितः प्रेरितश्च[4] सन् ᵛअन्ना अदनीयानि वनस्पत्यादीनि स्थावराणि ᵛवेविषत् व्याप्नुवन् ᵛवितिष्ठसे इतस्ततो गच्छसि तदानीं ᵛधक्षतः काष्ठानि दहतः ᵛते तव ᵛअजराणि जरारहितानि ᵛशर्धांसि तेजांसि ᵛयथा ᵛरथ्यः रथिनः तद्वत् ᵛपृथक्[5] ᵛआ ᵛयतन्ते गच्छन्ति[6] ॥

**मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम् ।**
**तमिदर्भे हविष्या समानमित्तमिन्महे वृणते नान्यं त्वत् ॥ ८ ॥**

मेधाऽकारम् । विदथस्य । प्रऽसाधनम् । अग्निम् । होतारम् । परिऽभूतमम् । मतिम् ।
तम् । इत् । अर्भे । हविषि । आ । समानम् । इत् । तम् । इत् । महे । वृणते । न । अन्यम् । त्वत् ॥ ८ ॥

ᵛमेधाकारं प्रज्ञायाः कर्तारं ᵛविदथस्य यज्ञस्य ᵛप्रसाधनं प्रकर्षेण साधकं[7] ᵛहोतारं देवानामाह्वातारं ᵛपरिभूतमम् अतिशयेन शत्रूणां परिभवितारं ᵛमतिं मन्तारं यं त्वाम् ᵛअग्निं वृणीमह इति शेषः । ᵛतमित् तमेवाग्निम्[8] ᵛअर्भे अल्पे ᵛहविषि चरुपुरोडाशादिके हविषि ᵛसमानमित् सहैव ऋत्विजः ᵛआ ᵛवृणते प्रार्थयन्ते । ᵛमहे महति सोमात्मके हविष्यपि ᵛतमित् तमेवाग्निं ᵛवृणते । ᵛत्वत् त्वत्तः ᵛअन्यम् अतिरिक्तं देवं ᵛन वृणते ॥

---

१. ग-सततं; त-भ२.४.६.८-सन् तं । २. ग२-प्रक्षिपसीत्यर्थः; ग४-त३.४.५-प्रक्षेपसीत्यर्थः; त१.७-प्रक्षेपामीत्यर्थः; त२.६-प्रक्षेपमीत्यर्थः; त८-पक्षिपमीत्यर्थः; भ-पक्षिपसीत्यर्थः । ३. ग४-यद्यदा; त१.२.६.८-भ-त्वं यद्यदा त्वं; त३.४.५.७-मु-त्वं यद्यदा । ४. ग-त१.२.३.६.७.८-भ-प्रेषितश्च । ५. ग-त-मु-पृथक् पृथक् । ६. त-मु-आगच्छंति । ७. त-साधनं । ८. ग-त-भ-तमेवाग्निं त्वां ।

त्वामिदत्र वृणते त्वायवो होतारमग्ने विदथेषु वेधसः ।
यद्देवयन्तो दधति प्रयांसि ते हविष्मन्तो मनवो वृक्तबर्हिषः ॥ ९ ॥

त्वाम् । इत् । अत्र । वृणते । त्वाऽयवः । होतारम् । अग्ने । विदथेषु । वेधसः ।
यत् । देवऽयन्तः । दधति । प्रयांसि । ते । हविष्मन्तः । मनवः । वृक्तऽबर्हिषः ॥ ९ ॥

हे ᵛअग्ने ᵛहोतारं[1] देवानां ह्वातारमग्निं ᵛत्वामित् त्वामेव ᵛत्वायवः त्वत्कामाः ᵛवेधसः कर्मणां कर्तार ऋत्विजः ᵛअत्र अस्मिँल्लोके ᵛविदथेषु यज्ञेषु ᵛवृणते प्रार्थयन्ते । कदेत्यत्राह । ᵛयत् यदा ᵛदेवयन्तः देवान्यष्टुं स्तोतुं वेच्छन्तः ᵛवृक्तबर्हिषः छिन्नबर्हिषः ᵛहविष्मन्तः संस्कृतहविष्काः ᵛमनवः मनुष्या ऋत्विजः ᵛते तुभ्यं ᵛप्रयांसि हवींषि ᵛदधति धारयन्ति । प्रयच्छन्तीत्यर्थः ॥

तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः ।
तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥ १० ॥

तव । अग्ने । होत्रम् । तव । पोत्रम् । ऋत्वियम् । तव । नेष्ट्रम् । त्वम् । अग्नित् । ऋतऽयतः ।
तव । प्रऽशास्त्रम् । त्वम् । अध्वरिऽयसि । ब्रह्मा । च । असि । गृहऽपतिः । च । नः । दमे ॥ १० ॥

हे ᵛअग्ने ᵛतव ᵛहोत्रं होतृकर्म । त्वया विना तस्याभावात् । किंच ᵛतव एव[2] ᵛऋत्वियम् ऋतौ भवं प्राप्तानुष्ठानकाले ᵛपोत्रं पोतृकर्म । त्वया विना तस्याप्यभावात् । किंच ᵛतव एव ᵛनेष्ट्रं नेष्टृकर्म । किंच ᵛऋतायतः ऋतं यज्ञं कर्तुमिच्छतो यजमानस्य ᵛत्वम् एव ᵛअग्नित् नान्यः कश्चित् । किंच ᵛतव एव ᵛप्रशास्त्रं प्रशास्तृकर्म । किंच हे अग्ने ᵛत्वम् एव ᵛअध्वरीयसि अध्वरं यज्ञं कर्तुमिच्छसि । तव हेतुत्वात्त्वत्कर्तृत्वम् । किंच त्वमेव ᵛब्रह्मा ᵛअसि । त्वया विना तस्याभावात् । किंच ᵛनः अस्माकं ᵛदमे गृहे ᵛगृहपतिः यजमानोऽसि । त्वया विनास्माकं यजमानत्वाभावात् ॥ ॥ २१ ॥

यस्तुभ्यमग्ने अमृताय मर्त्यः समिधा दाशदुत वा हविष्कृति ।
तस्य होता भवसि यासि दूत्य१मुप ब्रूषे यजस्यध्वरीयसि ॥ ११ ॥

यः । तुभ्यम् । अग्ने । अमृताय । मर्त्यः । सम्ऽइधा । दाशत् । उत । वा । हविःऽकृति ।
तस्य । होता । भवसि । यासि । दूत्यम् । उप । ब्रूषे । यजसि । अध्वरिऽयसि ॥ ११ ॥

हे ᵛअग्ने ᵛअमृताय मरणधर्मरहिताय ᵛतुभ्यं ᵛयः ᵛमर्त्यः मनुष्यः ᵛसमिधा समिधम्[3] । द्वितीयायाः 'सुपां सुलुक्°' इत्याकारः । ᵛदाशत् ददाति प्रयच्छति ᵛउत ᵛवा अपि वा ᵛहविष्कृति । हविषां कृत् करणं यस्मिन् स हविष्कृत् । तस्मिन्यज्ञे हवींषि ददातीति[4] शेषः । ᵛतस्य मनुष्यस्य ᵛहोता देवानामाह्वाता ᵛभवसि । किंच त्वं ᵛदूत्यं देवान् प्रति दूतकर्म कर्तुं ᵛयासि गच्छसि । किंच त्वं ब्रह्मा भूत्वास्मिन् कर्मणि युष्मभ्यमिमानि हवींषि यजमानेन प्रहितानीति ᵛउप ᵛब्रूषे उपक्रम्य ब्रवीषि । किंच त्वं ᵛयजसि यजमानो भूत्वा देवेभ्यो हवींषि ददासि । किंच त्वं तथा[5] पूर्वोक्तप्रकारेण[6] ᵛअध्वरीयसि अध्वर्युरिवाचरसि । अथवान्यं[7] यज्ञं कर्तुमिच्छसि ॥

१. त-भ-'होतारं' नास्ति । २. त-मु-'एव' नास्ति । ३. त-समिद्धः; भ१.२-समिध; भ४.६.८-समिधः । ४. त-मु-ददातीति संस्कृतं यस्मिन् तद्यज्ञमनुतिष्ठतीति; भ-ददातीति संस्कृतिर्यस्मिन् तद्यज्ञमनुतिष्ठतीति । ५. त-यथा । ६. ग-°प्रकारेण तस्य । ७. त-मु-अन्यथा ।

इमा अस्मै मतयो वाचो अस्मदाँ ऋचो गिरः सुष्टुतयः समग्मत ।
वसूयवो वसवे जातवेदसे वृद्धासु चिद्वर्धनो यासु चाकनत् ॥ १२ ॥

इमाः । अस्मै । मतयः । वाचः । अस्मत् । आ । ऋचः । गिरः । सुऽस्तुतयः । सम् । अग्मत ।
वसुऽयवः । वसवे । जातऽवेदसे । वृद्धासु । चित् । वर्धनः । यासु । चाकनत् ॥ १२ ॥

ᐯजातवेदसे जातप्रज्ञाय ᐯवसवे वासयित्रे ᐯअस्मै अग्नये ᐯमतयः पूजयित्र्यः ᐯइमाः ᐯवाचः ᐯवसूयवः अस्मदर्थं धनकामाः सत्यः ᐯअस्मत् अस्मत्तो निर्गत्य ᐯआ ᐯसमग्मत आभिमुख्येन संगच्छन्ते । तमिममग्निं प्रीणयन्त्वित्यर्थः[१] । काः पुनस्ताः । ᐯसुष्टुतयः शोभनस्तुतिरूपाः ᐯऋचः ऋगात्मिकाः ᐯगिरः वाचः । तथा ᐯयासु ᐯवृद्धासु ᐯचित् स्वत एव वृद्धास्वपि[२] ᐯवर्धनः पुनरपि वर्धयिता सन्नग्निः ᐯचाकनत् स्तोतॄन् कामयते । इमा मतय इत्यन्वयः ॥

इमां प्रत्नाय सुष्टुतिं नवीयसीं वोचेयमस्मा उशते शृणोतु नः ।
भूया अन्तरा हृद्यस्य निस्पृशे जायेव पत्य उशती सुवासाः ॥ १३ ॥

इमाम् । प्रत्नाय । सुऽस्तुतिम् । नवीयसीम् । वोचेयम् । अस्मै । उशते । शृणोतु । नः ।
भूयाः । अन्तरा । हृदि । अस्य । निऽस्पृशे । जायाऽइव । पत्ये । उशती । सुऽवासाः ॥ १३ ॥

ᐯप्रत्नाय पुराणाय ᐯउशते स्तोत्रं कामयमानाय ᐯअस्मै अग्नये ᐯनवीयसीं नवतरामन्यैः अकृतपूर्वां ᐯसुष्टुतिं शोभनां स्तुतिं ᐯवोचेयम् अहं वक्ष्यामि । सोऽग्निरस्मदीयां स्तुतिं ᐯशृणोतु । किंचाहम् ᐯअस्य अग्नेः ᐯहृदि हृदये तत्रापि ᐯअन्तरा मध्ये ᐯनिस्पृशे संस्पर्शनाय । गुणैरनुरञ्जनायेत्यर्थः । ᐯभूयाः भूयासम् । व्यत्ययेन मध्यमः । अग्नेर्हृदिस्पृगहं स्यामित्यर्थः । अथवा मम सुष्टुतेरनुप्रवेष्टा[३] भवेति योज्यम् । समानमन्यत् । तत्र दृष्टान्तः । ᐯपत्ये पत्युर्हृदयस्य मध्ये ᐯसुवासाः शोभनवस्त्रादिना मण्डिता ᐯजाया ᐯउशती कामयमाना यथेष्टतमा भवति तद्वदित्यर्थः ॥

यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नये ॥ १४ ॥

यस्मिन् । अश्वासः । ऋषभासः । उक्षणः । वशाः । मेषाः । अवऽसृष्टासः । आऽहुताः ।
कीलालऽपे । सोमऽपृष्ठाय । वेधसे । हृदा । मतिम् । जनये । चारुम् । अग्नये ॥ १४ ॥

ᐯयस्मिन्[४] अग्नौ ᐯउक्षणः उक्षाणः । 'वा पपूर्वस्य निगमे' इति दीर्घविकल्पः । सेचनसमर्थाः ᐯअश्वासः अश्वाः ᐯऋषभासः वृषभाश्च ᐯवशाः स्वभावबन्ध्याश्च[५] ᐯमेषाः च ᐯअवसृष्टासः देवतार्थम् अवसृष्टाः परित्यक्ताः सन्तोऽश्वमेधे ᐯआहुताः आभिमुख्येन हुता भवन्ति ᐯकीलालपे सौत्रामण्यां सुरां पिबते । 'कीलालम्' इत्युदकनामसु पाठात् । उदकं[६] पिबते ᐯसोमपृष्ठाय सोमयुक्तः पृष्ठ उपरिभागो यस्य तस्मै सोमपृष्ठाय ᐯवेधसे विधात्रे तस्मै ᐯअग्नये ᐯहृदा हृदयेन ᐯचारुं कल्याणीं ᐯमतिं स्तुतिं ᐯजनये जनयामि । उत्पादयामि ॥

---

१. भ–पूजयंत्वित्यर्थः । २. त-मु–प्रवृद्धास्वपि । ३. ग–मनसि सुष्ठु अनुप्रविष्टो । ४. त–अस्मिन् ।
५. त–स्वभावतवंध्याश्च । ६. ग-त–'उदकं' नास्ति ।

अहा॑व्यग्ने ह॒विरा॒स्ये॑ ते स्रु॒चीव॑ घृ॒तं च॒म्वी॑व॒ सोमः॑ ।
वा॒ज॒सनिं॑ र॒यिम॒स्मे सु॒वीरं॑ प्रश॒स्तं धे॑हि य॒शसं॑ बृ॒हन्त॑म् ॥ १५ ॥

अहा॑वि । अ॒ग्ने॒ । ह॒विः । आ॒स्ये॑ । ते॒ । स्रु॒चिऽइ॑व । घृ॒तम् । च॒म्वि॑ऽइव । सोमः॑ ।
वा॒ज॒ऽसनि॑म् । र॒यिम् । अ॒स्मे इति॑ । सु॒ऽवीर॑म् । प्र॒ऽश॒स्तम् । धे॒हि॒ । य॒शस॑म् । बृ॒हन्त॑म् ॥ १५ ॥

हे ᵛअग्ने ᵛते तव ᵛआस्ये मुखे ᵛहविः पुरोडाशादिहविरस्माभिः ᵛअहावि सततं प्रक्षिप्यते। तत्र दृष्टान्तौ। ᵛघृतम् आज्यं ᵛस्रुचीव यथा स्रुचि। ᵛचम्वीव ᵛसोमः। यथा चमसे सोमः तद्वदित्यर्थः। तथा त्वं ᵛवाजसनिम् अन्नस्य दातारं ᵛसुवीरं शोभनपुत्रोपेतं ᵛप्रशस्तं सुवर्णादिकं ᵛयशसं यशस्विनं कीर्तिमन्तं ᵛबृहन्तम् अपरिमितं महान्तं वा ᵛरयिं रमणीयं धनम् ᵛअस्मे अस्मभ्यं ᵛधेहि देहि ॥ ॥ २२ ॥

'यज्ञस्य' इति पञ्चदशर्चं द्वितीयं सूक्तं मनोः पुत्रस्य शार्यातस्यार्षं जागतं बहुदेवताकम्। तथा चानुक्रान्तं—'यज्ञस्य शार्यातो मानवो वैश्वदेवं तु जागतम्' इति। चातुर्विंशिक आरम्भणीयेऽहनि वैश्वदेवशस्त्र इदं सूक्तं वैश्वदेवनिविद्धानम्। सूत्रितं च—'ते हि द्यावापृथिवी यज्ञस्य वो रथ्यम्' (आश्व. श्रौ. ७. ४) इति। पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहन्यपीदं[1] वैश्वदेवनिविद्धानम्। 'चातुर्विंशिकेन तृतीयसवनम्' (आश्व. श्रौ. ७. ६) इति सूत्रकृतातिदिष्टत्वात्॥

य॒ज्ञस्य॑ वो र॒थ्यं॑ वि॒श्पतिं॑ वि॒शां होता॑रम॒क्तोरति॑थिं वि॒भाव॑सुम् ।
शोच॒ञ्छुष्का॑सु॒ हरि॑णीषु॒ जर्भु॑रद्वृ॒षा के॒तुर्य॑ज॒तो द्याम॑शायत ॥ १ ॥

य॒ज्ञस्य॑ । वः॒ । र॒थ्य॑म् । वि॒श्पति॑म् । वि॒शाम् । होता॑रम् । अ॒क्तोः । अति॑थिम् । वि॒भाऽव॑सुम् ।
शोच॑न् । शुष्का॑सु । हरि॑णीषु । जर्भु॑रत् । वृषा॑ । के॒तुः । य॒ज॒तः । द्याम् । अ॒शा॒य॒त ॥ १ ॥

हे देवाः ᵛवः यूयं ᵛयज्ञस्य ᵛरथ्यं नेतारं ᵛविश्पतिं मनुष्याणां पालकं स्वामिनं वा[2] ᵛविशां देवानां ᵛहोतारम् आह्वातारम् ᵛअक्तोः रात्रेः ᵛअतिथिम् अतिथिभूतं ᵛविभावसुं विविधदीप्तधनं तमग्निं परिचरतेति शेषः। ᵛशुष्कासु शुष्कभूतास्वोषधीषु ᵛशोचन् ज्वलन् ᵛहरिणीषु हरितवर्णासु आर्द्रास्वोषधीषु ᵛजर्भुरत् भक्षयन् कुटिलं गच्छन् वा ᵛवृषा कामानां वर्षिता ᵛकेतुः प्रज्ञापकः ᵛयजतः यष्टव्योऽग्निः ᵛद्यां दिवम् ᵛअशायत प्रतिशेते ॥

इ॒मम॑ञ्ज॒स्पामु॒भये॑ अकृण्वत ध॒र्माण॑म॒ग्निं वि॒दथ॑स्य॒ साध॑नम् ।
अ॒क्तुं न य॒ह्वमु॒षसः॑ पु॒रोहि॑तं॒ तनू॒नपा॑तमरु॒षस्य॑ निंसते ॥ २ ॥

इ॒मम् । अ॒ञ्जः॒ऽपाम् । उ॒भये॑ । अ॒कृ॒ण्व॒त॒ । ध॒र्माण॑म् । अ॒ग्निम् । वि॒दथ॑स्य । साध॑नम् ।
अ॒क्तुम् । न । य॒ह्वम् । उ॒षसः॑ । पु॒रःऽहि॑तम् । तनू॑ऽनपा॑तम् । अ॒रु॒षस्य॑ । निंस॑ते ॥ २ ॥

ᵛउभये देवमनुष्याः ᵛअञ्जस्पाम् अञ्जसा रक्षकं ᵛधर्माणं धारकम् ᵛइमम् ᵛअग्निं ᵛविदथस्य यज्ञस्य ᵛसाधनं साधयितारम् ᵛअकृण्वत अकुर्वत। किंच ᵛअरुषस्य आरोचमानस्य वायोः ᵛतनूनपातं पुत्रं ᵛयह्वं महान्तं ᵛपुरोहितम्[3] ᵛउषसः ᵛअक्तुं ᵛन स्वरश्मिभिरञ्जकमादित्यमिव ᵛनिंसते चुम्बयन्ति। आश्रयन्त इत्यर्थः ॥

१. त१.२.६.८-म१.२.४.६.८-पृष्ठयाभिप्लव॰। २. त-म-'वा' नास्ति। ३. ग-त-मु-पुरोहितमिममग्निं।

बळस्य नीथा वि पुणेश्च मन्महे वया अस्य प्रहुता आसुरत्तवे ।
यदा घोरासो अमृतत्वमाशुतादिज्जनस्य दैव्यस्य चर्किरन् ॥ ३ ॥

बट् । अस्य । नीथा । वि । पुणेः । च । मन्महे । वयाः । अस्य । प्रऽहुताः । आसुः । अत्तवे ।
यदा । घोरासः । अमृतऽत्वम् । आशत । आत् । इत् । जनस्य । दैव्यस्य । चर्किरन् ॥ ३ ॥

ᵛविपणेः अस्माभिर्विविधं पणितव्यस्य स्तुत्यस्याग्नेः ᵛनीथा नीथान्यस्मत्संबन्धीनि प्रज्ञानानि ᵛबट् सत्यानि स्युरिति ᵛमन्महे वयं कामयामहे । किंच ᵛअस्य अग्नेः ᵛवयाः अस्मदीया अन्नाहुतयः ᵛअत्तवे भक्षणाय ᵛप्रहुताः ᵛआसुः भवेयुरिति कामयामहे । किंच ᵛयदा यस्मिन् काले ᵛघोरासः घोराः[१] अग्नेर्ज्वालाः ᵛअमृतत्वम् अविनाशित्वम् ᵛआशत प्राप्नुवन्ति ᵛआदित् अनन्तरमेवास्माकमृत्विजः ᵛदैव्यस्य देवेषु भवस्य ᵛजनस्य अग्नेरर्थाय ᵛचर्किरन् किरेयुः[२] । अग्नौ हवींषि प्रक्षिपेयुरित्यर्थः ॥

ऋतस्य हि प्रसितिर्द्यौरुरु व्यचो नमो मह्यरमतिः पनीयसी ।
इन्द्रो मित्रो वरुणः सं चिकित्रिरेऽथो भगः सविता पूतदक्षसः ॥ ४ ॥

ऋतस्य । हि । प्रऽसितिः । द्यौः । उरु । व्यचः । नमः । मही । अरमतिः । पनीयसी ।
इन्द्रः । मित्रः । वरुणः । सम् । चिकित्रिरे । अथो इति । भगः । सविता । पूतऽदक्षसः ॥ ४ ॥

ᵛऋतस्य यज्ञस्य संबन्धिनमेनमग्निं प्रति ᵛप्रसितिः विस्तृता ᵛद्यौः ᵛउरु विस्तीर्णं ᵛव्यचः व्याप्तमन्तरिक्षं च ᵛपनीयसी स्तुत्यतमा ᵛअरमतिः पर्यन्तरहिता ᵛमही पृथिवी च ᵛनमः नमनं कुर्वन्तीति शेषः । ᵛअथो अपि च एनमग्निम् ᵛइन्द्रो ᵛमित्रः च ᵛवरुणः च ᵛभगः च ᵛसविता ᵛपूतदक्षसः शुद्धबला एते देवा एनमग्निं ᵛसं ᵛचिकित्रिरे ज्यैष्ठ्याय संजानते ॥

प्र रुद्रेण ययिना यन्ति सिन्धवस्तिरो महीमरमतिं दधन्विरे ।
येभिः परिज्मा परियन्नुरु ज्रयो वि रोरुवज्जठरे विश्वमुक्षते ॥ ५ ॥

प्र । रुद्रेण । ययिना । यन्ति । सिन्धवः । तिरः । महीम् । अरमतिम् । दधन्विरे ।
येभिः । परिऽज्मा । परिऽयन् । उरु । ज्रयः । वि । रोरुवत् । जठरे । विश्वम् । उक्षते ॥ ५ ॥

ᵛसिन्धवः स्यन्दनशीला आपः ᵛययिना गमनशीलेन ᵛरुद्रेण रुद्रपुत्रेण मरुद्गणेन सह ᵛप्र ᵛयन्ति[३] । अथ बहुवदाह । तेऽमी मरुतः ᵛअरमतिम् । रमतिर्विरामोऽवसानम् । तद्रहितामपर्यन्तां ᵛमहीं पृथिवीं ᵛतिरः ᵛदधन्विरे तिरस्कुर्वन्तीत्यर्थः । ᵛपरिज्मा परितो गन्तेन्द्रः ᵛपरियन् परितो गच्छन् ᵛयेभिः यैः मरुद्गणैः सह ᵛउरु ᵛज्रयः बहुवेगं करोतीति शेषः । किंच ᵛजठरे अन्तरिक्षे ᵛरोरुवत् शब्दं कुर्वन् पर्जन्यो यैर्मरुद्गणैः सह ᵛविश्वं भुवनम् ᵛउक्षते सिञ्चते[४] ॥ ॥ २३ ॥

आणा रुद्रा मरुतो विश्वकृष्टयो दिवः श्येनासो असुरस्य नीळयः ।
तेभिश्चष्टे वरुणो मित्रो अर्यमेन्द्रो देवेभिरर्वशेभिरर्वशः ॥ ६ ॥

---

१. ग-त-मु—घोरा भयंकराः । २. ग-त-मु—प्रकिरेयुः । ३. ग—यंति प्रगच्छंति । ४. त—सिंचति ।

ऋाणाः । रुद्राः । मरुतः । विश्वऽकृष्टयः । दिवः । श्येनासः । असुरस्य । नीळयः ।
तेभिः । चष्टे । वरुणः । मित्रः । अर्यमा । इन्द्रः । देवेभिः । अर्वशेभिः । अर्वशः ॥ ६ ॥

ᵛअसुरस्य मेघस्य ᵛनीळयः आवासभूताः ᵛदिवः अन्तरिक्षस्य संबन्धिनः ᵛश्येनासः श्येनाः शंसनीयगतयः ᵛविश्वकृष्टयः व्याप्तमनुष्याः ᵛरुद्राः रुद्रपुत्रा ये ᵛमरुतः ᵛऋाणाः स्वाधिकारकर्माणि कुर्वाणा आसत इति शेषः । ᵛतेभिः तैः ᵛअर्वशेभिः अश्ववद्भिः सोमवद्भिर्वा ᵛदेवेभिः देवैः सह ᵛअर्वशः अश्ववान् सोमवान्वा ᵛइन्द्रः ᵛचष्टे पश्यति । ᵛवरुणः च ᵛमित्रः च ᵛअर्यमा च सोमवद्भिः मरुद्भिः सह पश्यन्ति ॥

इन्द्रे भुजं शशमानास आशत सूरो दृशीके वृषणश्च पौंस्ये ।
प्र ये न्वस्यार्हणा ततक्षिरे युजं वज्रं नृषदनेषु कारवः ॥ ७ ॥

इन्द्रे । भुजम् । शशमानासः । आशत । सूरः । दृशीके । वृषणः । च । पौंस्ये ।
प्र । ये । नु । अस्य । अर्हणा । ततक्षिरे । युजम् । वज्रम् । नृऽसदनेषु । कारवः ॥ ७ ॥

ये ᵛशशमानासः शशमानाः[1] स्तोतारः ᵛइन्द्रे स्तुते सति ᵛभुजं पालनम् ᵛआशत प्राप्नुवन्ति । ᵛसूरः सूर्ये स्तुते सति ᵛदृशीके दर्शनं सर्ववस्तुविषयं प्राप्नुवन्ति । ᵛवृषणः वर्षितरीन्द्रे स्तुते ᵛपौंस्यं बलं च प्राप्नुवन्ति । किंच ᵛये ᵛकारवः स्तोतारः ᵛअस्य इन्द्रस्य ᵛअर्हणा पूजनानि ᵛनु क्षिप्रं ᵛततक्षिरे प्रकृष्टानि कुर्वन्ति ते स्तोतारः ᵛनृषदनेषु नरः कर्तृत्वेन येषु सीदन्ति तिष्ठन्ति तेषु यज्ञेषु ᵛयुजं सहायमिन्द्रस्य ᵛवज्रं प्राप्नुवन्ति ॥

सूरश्चिदा हरितो अस्य रीरमदिन्द्रादा कश्चिद्भयते तवीयसः ।
भीमस्य वृष्णो जठरादभिश्वसो दिवेदिवे सहुरिः स्तन्नबाधितः ॥ ८ ॥

सूरः । चित् । आ । हरितः । अस्य । रीरमत् । इन्द्रात् । आ । कः । चित् । भयते । तवीयसः ।
भीमस्य । वृष्णः । जठरात् । अभिऽश्वसः । दिवेऽदिवे । सहुरिः । स्तन् । अबाधितः ॥८॥

ᵛसूरः सूर्योऽपि ᵛअस्य इन्द्रस्य परमेश्वरस्य परमात्मन आज्ञां परिपालयितुं मन्वानः ᵛहरितः अश्वान् प्रेरयतीति शेषः । प्रेरयन्नध्वनि ᵛआ ᵛरीरमत् आभिमुख्येन रमयति । यः ᵛकश्चित् देवोऽपि सृष्टौ[2] ᵛभयते बिभेति स देवः ᵛतवीयसः प्रवृद्धात् ᵛइन्द्रात् परमात्मनो भयादेव बिभेति । तथा च तैत्तिरीये पठितं—'भीषास्माद्वातः पवते' (तै. उ. २. ८) इत्यादिना । किंच ᵛवृष्णः कामानां वर्षितुः ᵛभीमस्य सर्वभयंकरस्य परमात्मनः परमेश्वरस्य ᵛदिवेदिवे अन्वहम् ᵛअभिश्वसः आभिमुख्येन श्वसतः ᵛजठरात् उदरादन्तरिक्षात् ᵛसहुरिः सहनशीलः[3] ᵛअबाधितः बाधरहितः ᵛस्तन् स्तनयति शब्दं करोति ॥

स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसा दिदिष्टन ।
येभिः शिवः स्ववाँ एवयावभिर्दिवः सिषक्ति स्वयशा निकामभिः ॥ ९ ॥

---

१. ग-त४.५-शंसमानाः; त१.२.३.६.७-शंसमानासः । २. ग-इह; त१.२.३.६.७-दृष्टौ; त४.५-दृष्टो । ३. त-मु-सहनशीलः सन् ।

स्तोमम् । वः । अद्य । रुद्राय । शिक्वसे । क्षयत्ऽवीराय । नमसा । दिदिष्टन ।
येभिः । शिवः । स्वऽवान् । एवयावऽभिः । दिवः । सिसक्ति । स्वऽयशाः । निकामऽभिः॥९॥

एवयावभिः अश्वैरागच्छद्भिः येभिः यैर्मरुद्भिः सह[1] स्ववान् ज्ञातिमान् स्वयशाः स्वभूत-कीर्तिः शिवः सुखकरः परमेश्वरः दिवः द्युलोकाद्यजमानान्[2] सिषक्ति सेवते हे ऋत्विजः यूयम् अद्य अस्मिन् यागे निकामभिः नियताभिलाषैः[3] तैर्मरुद्भिः सहिताय क्षयद्वीराय क्षितशत्रवे[4] शिक्वसे शरणे शक्ताय रुद्राय नमसा अन्नेन नमस्कारेण वा सह स्तोमं स्तोत्रं दिदिष्टन दिशत सृजत । गमयतेत्यर्थः ॥

ते हि प्रजाया अभरन्त वि श्रवो बृहस्पतिर्वृषभः सोमजामयः ।
यज्ञैरथर्वा प्रथमो वि धारयद्देवा दक्षैर्भृगवः सं चिकित्रिरे ॥ १० ॥

ते । हि । प्रऽजायाः । अभरन्त । वि । श्रवः । बृहस्पतिः । वृषभः । सोमऽजामयः ।
यज्ञैः । अथर्वा । प्रथमः । वि । धारयत् । देवाः । दक्षैः । भृगवः । सम् । चिकित्रिरे॥१०॥

हि यस्मात्कारणात् वृषभः कामानां वर्षिता बृहस्पतिः सोमजामयः अन्ये सोमबन्धवः[5] ते विश्वे देवाः प्रजायाः अर्थाय श्रवः अन्नं वि अभरन्त विभरन्ति वृष्टिद्वारेण पोषयन्ति तस्मात्कारणात् तासां[6] प्रजानां मध्ये अथर्वा नामर्षिः प्रथमः[7] प्रथममेव[8] क्रियमाणैः[9] यज्ञैः वि धारयत् देवान् कर्ममार्गान् वा विश्रुतानकरोत् । अत्र निगमः—' यज्ञैरथर्वा प्रथमः पथस्तते ' ( ऋ. सं. १. ८३. ५ ) इति । अथ दक्षैः बलैः सह देवाः विश्वे भृगवः ऋषयश्च सं चिकित्रिरे अथर्वणा कृतं यज्ञं गत्वा पशून् संज्ञातवन्तः ॥ ॥ २४ ॥

ते हि द्यावापृथिवी भूरिरेतसा नराशंसश्चतुरङ्गो यमोऽदितिः ।
देवस्त्वष्टा द्रविणोदा ऋभुक्षणः प्र रोदसी मरुतो विष्णुरर्हिरे ॥ ११ ॥

ते इति । हि । द्यावापृथिवी इति । भूरिऽरेतसा । नराशंसः । चतुःऽअङ्गः । यमः । अदितिः ।
देवः । त्वष्टा । द्रविणःऽदाः । ऋभुक्षणः । प्र । रोदसी इति । मरुतः । विष्णुः । अर्हिरे॥११॥

भूरिरेतसा बहूदके द्यावापृथिवी द्यावापृथिव्यौ यमः देवः अदितिः च त्वष्टा देवः च द्रविणोदाः अग्निश्च ऋभुक्षणः ऋभवश्च रोदसी रुद्रस्य पत्नी च मरुतः देवाश्च विष्णुः[10] च[10] एते विश्वे देवा. चतुरङ्गः चतुर्भिरग्निभिर्युक्तस्तस्मिन्[11] नराशंसः नराशंसनामधेये यज्ञे प्र[12] अर्हिरे अस्माभिः स्तोतृभिः पूज्यन्ते[12] ॥

उत स्य न उशिजामुर्विया कविरहिः शृणोतु बुध्न्यो३ हवीमनि ।
सूर्यामासा विचरन्ता दिविक्षिता धिया शमीनहुषी अस्य बोधतम् ॥१२॥

१. त-भ१.२.४.६.८–सहजाः । २. त-भ६.८–द्युलोकानयजमाना वा; भ१.२.४.७–द्युलोकाद्यजमानो वा । ३. त-भ–नियताभिलषितैः । ४. ग४–क्षपितशत्रवे; त१.२.७-भ४.६.८–रक्षितशत्रवे; त३–क्षतशत्रवे; भ१.२–भक्षितशत्रवे । ५. ग-भ–सोमबंधकाः; त-मु–सोमबंधुकाः । ६. ग-त-भ१.४.५.६–तेषां । ७. ग-भ-'प्रथमः' नास्ति । ८. त-'प्रथममेव' नास्ति । ९. त–विक्रियमाणैः । १०. त–रुद्राश्च त । ११. त-मु–चतुर्भिर्युक्तोभिस्तस्मिन् । १२. त-मु–विष्णुरस्माभिः स्तोतृभिरर्हिरे प्रपूज्यते ।

उत । स्यः । नः । उशिजाम् । उर्विया । कविः । अहिः । शृणोतु । बुध्न्यः । हवीमनि ।
सूर्यामासा । विऽचरन्ता । दिविऽक्षिता । धिया । शमीनहुषी इति । अस्य । बोधतम् ॥१२॥

<sup>v</sup>उत अपि च <sup>v</sup>नः अस्माकम् <sup>v</sup>उशिजां कामयमानानामृत्विजाम् <sup>v</sup>उर्विया उर्वीं बह्वीं स्तुतिं <sup>v</sup>कविः मेधावी <sup>v</sup>बुध्न्यः बुध्ने अन्तरिक्षे भवः सः <sup>v</sup>अहिः देवः <sup>v</sup>हवीमनि हूयन्ते यत्र देवेभ्यो हवींषि तस्मिन्यज्ञे <sup>v</sup>शृणोतु । <sup>v</sup>दिविक्षिता दिवि वसन्तौ <sup>v</sup>विचरन्ता विशेषेण चरन्तौ <sup>v</sup>सूर्यामासा सूर्याचन्द्रमसौ <sup>v</sup>धिया बुद्ध्या <sup>v</sup>अस्य स्तोत्रमिदं <sup>v</sup>बोधतं बुध्येताम् । <sup>v</sup>शमी कर्मवती पृथिवी । 'शमी' इति कर्मनामसु पाठात् । <sup>v</sup>नहुषी द्यौः । अत्र वाजसनेयकं—'द्यौर्नहुषीयं वै शमी तस्या एष गर्भः' इति । हे द्यावापृथिव्यौ युवां[1] स्तोत्रं धिया स्वीयया प्रज्ञया बुध्येतमवगच्छतमित्यर्थः ॥

**प्र नः पूषा चरथं विश्वदेव्योऽपां नपादवतु वायुरिष्टये ।**
**आत्मानं वस्यो अभि वातमर्चत तदश्विना सुहवा यामनि श्रुतम् ॥ १३ ॥**

प्र । नः । पूषा । चरथम् । विश्वऽदेव्यः । अपाम् । नपात् । अवतु । वायुः । इष्टये ।
आत्मानम् । वस्यः । अभि । वातम् । अर्चत । तत् । अश्विना । सुऽहवा । यामनि । श्रुतम् ॥ १३ ॥

<sup>v</sup>पूषा देवः <sup>v</sup>न अस्माकं संबन्धि <sup>v</sup>चरथं जङ्गमं <sup>v</sup>प्र <sup>v</sup>अवतु प्रकर्षेण रक्षतु । <sup>v</sup>किंच <sup>v</sup>विश्वदेव्यः विश्वदेवहितः <sup>v</sup>अपां <sup>v</sup>नपात् <sup>v</sup>वायुः <sup>v</sup>इष्टये यज्ञस्य निष्कृत्यर्थं प्रावतु । किंच <sup>v</sup>आत्मानं सर्वेषामात्मभूतं <sup>v</sup>वातं वायुं <sup>v</sup>वस्यः वसीयः प्रशस्यतरमन्नं प्राप्तुम् । अस्मभ्यमन्नं कामयमानमिति शेषः । हे <sup>v</sup>अश्विना अश्विनौ <sup>v</sup>सुहवा स्वाह्वानौ युवां <sup>v</sup>यामनि यागगमने <sup>v</sup>तत् इदं स्तोत्रं <sup>v</sup>श्रुतं शृणुतम् ॥

**विशामासामभयानामधिक्षितं गीर्भिरु स्वयशसं गृणीमसि ।**
**ग्नाभिर्विश्वाभिरदितिमनर्वणमक्तोर्युवानं नृमणा अधा पतिम् ॥ १४ ॥**

विशाम् । आसाम् । अभयानाम् । अधिऽक्षितम् । गीःऽभिः । ऊँ इति । स्वऽयशसम् । गृणीमसि ।
ग्नाभिः । विश्वाभिः । अदितिम् । अनर्वणम् । अक्तोः । युवानम् । नृऽमनाः । अध । पतिम् ॥ १४ ॥

<sup>v</sup>अभयानां संसारभयरहितानाम् <sup>v</sup>आसां <sup>v</sup>विशां मनुष्याणाम् <sup>v</sup>अधिक्षितम् अन्तर्निवसन्तं[2] <sup>v</sup>स्वयशसं स्वयं समुपार्जितकीर्तिमेनमग्निं <sup>v</sup>गीर्भिः स्तुतिभिः <sup>v</sup>गृणीमसि वयं स्तुमः । किंच <sup>v</sup>अनर्वणम् अप्रत्यृतां पत्युरपत्यान्तरत्वेनाप्रतिगताम् <sup>v</sup>अदितिम् अदीनां देवमातरं <sup>v</sup>विश्वाभिः सर्वाभिः <sup>v</sup>ग्नाभिः देवपत्नीभिः सहितां स्तुमः । किंच <sup>v</sup>अक्तोः रात्रेः <sup>v</sup>युवानं स्वतेजसा मिश्रयितारं चन्द्रमसं स्तुमः । किंच <sup>v</sup>नृमणाः नृषु मनुष्येष्वनुग्राहकमना यः तमादित्यं स्तुमः । <sup>v</sup>अध अथ <sup>v</sup>पतिं सर्वस्य पालकमिन्द्रं स्तुमः ॥

**रेभदत्र जनुषा पूर्वो अङ्गिरा ग्रावाण ऊर्ध्वा अभि चक्षुरध्वरम् ।**
**येभिर्विहाया अभवद्विचक्षणः पाथः सुमेकं स्वधितिर्वनन्वति ॥ १५ ॥**

रेभत् । अत्र । जनुषा । पूर्वः । अङ्गिराः । ग्रावाणः । ऊर्ध्वाः । अभि । चक्षुः । अध्वरम् ।
येभिः । विऽहायाः । अभवत् । विऽचक्षणः । पाथः । सुऽमेकम् । स्वऽधितिः । वनन्ऽवति ॥ १५ ॥

---

१. त१.२.३.६.७—युवां बुद्ध्या; त४.५.८-म-युवां बुध्न्या । २. त-म२.४.६.८—अंतरधिनिवसंतं ।

अङ्गिरा नामर्षिरार्त्विज्येन वृतः सन् देवान् स्तौति । ᵛअत्र अस्मिन् यज्ञे ᵛजनुषा जन्मना ᵛपूर्वः प्रत्नः ᵛअङ्गिराः नामर्षिः ᵛरेभत् देवान् स्तौति । ᵛग्रावाणः च ᵛऊर्ध्वाः उद्यताः सन्तः ᵛअध्वरं यज्ञसाधनं सोमम् ᵛअभि ᵛचक्षुः अभिपश्यन्ति । ᵛविचक्षणः विद्वष्टेन्द्रः ᵛयेभिः यैः ग्रावभिरभिषवसंबन्धिभिः शब्दैः ᵛविहायाः महान् ᵛअभवत् । हृष्टोऽभूदित्यर्थः । अस्येन्द्रस्य ᵛस्वधितिः वज्रः ᵛवनन्वति उदकवति मार्गे ᵛपाथः अन्नसाधनं ᵛसुमेकं शोभनमुदकं निरगमयदिति शेषः ॥　॥२५॥

' मही ' इति पञ्चदशर्चं तृतीयं सूक्तम् । तान्वो नाम पृथोः पुत्र ऋषिः । द्वितीयातृतीये त्रयोदशी चेति तिस्रोऽनुष्टुभः । नवम्यक्षरसंख्यया पङ्क्तिर्न पादैः । एकादशी न्यङ्कुसारिण्यष्टकद्वादशकद्व्यष्टकवती । पञ्चदशी पुरस्ताद्बृहत्याद्यद्वादशकत्र्यष्टका । शिष्टा नव प्रस्तारपङ्क्तिच्छन्दस्काः । आद्यौ जागतौ[1] द्वौ[1] गायत्रौ सा प्रस्तारपङ्क्तिः । विश्वे देवा देवता । तथा चानुक्रान्तं—' मही तान्वः पार्थः प्रस्तारपाङ्क्तं पुरस्ताद्बृहत्यन्तं त्रयोदश्युपाद्ये चानुष्टुभो नवम्यक्षरैः पङ्क्तिरेकादशी न्यङ्कुसारिणी ' इति । गतो विनियोगः ॥

**मही॑ द्यावा॑पृथि॒वी भू॑तमु॒र्वी नारी॑ य॒ह्वी न रोद॑सी॒ सदं॑ नः ।**
**तेभि॑र्नः पातं॒ सह्य॑स ए॒भिर्नः॑ पातं शू॒षणि॑ ॥ १ ॥**

मही॑ । द्यावा॑पृथि॒वी इति॑ । भू॒तम् । उ॒र्वी इति॑ । नारी॒ इति॑ । य॒ह्वी इति॑ । न । रोद॑सी॒ इति॑ । सद॑म् । न॒ः ।
तेभि॑ः । न॒ः । पा॒तम् । सह्य॑सः । ए॒भिः । न॒ः । पा॒तम् । शू॒षणि॑ ॥ १ ॥

हे ᵛद्यावापृथिवी द्यावापृथिव्यौ युवां ᵛमहि अत्यन्तं यथा भवति तथा ᵛउर्वी विस्तीर्णे ᵛभूतं भवतम् । किंच ᵛयह्वी महत्यौ ᵛरोदसी द्यावापृथिव्यौ ᵛनारी ᵛन स्त्रियाविव ᵛनः अस्माकं ᵛसदं सदा भवतम् । किंच युवां ᵛशूषणि ᵛनः अस्माकं शत्रुबले युष्मदीयैः ᵛएभिः पालनैः ᵛपातं रक्षतम् । किंच युष्मदीयैः ᵛतेभिः तैः पालनैः ᵛनः अस्माकं ᵛसह्यसः अतिशयेनास्मानभिभवितुः शत्रोरपि ᵛपातं रक्षतम् ॥

**य॒ज्ञेय॑ज्ञे स मर्त्यो॑ दे॒वान्त्स॑पर्यति । यः सु॒म्नैर्दी॑र्घ॒श्रुत्त॑म आ॒विवा॑सात्येनान् ॥ २ ॥**

य॒ज्ञेऽय॑ज्ञे । सः । मर्त्यः॑ । दे॒वान् । स॒प॒र्य॒ति॒ ।
यः । सु॒म्नैः । दी॒र्घ॒श्रु॒त्ऽत॑मः । आ॒ऽविवा॑साति । ए॒नान् ॥ २ ॥

ᵛस ᵛमर्त्यः मनुष्यः ᵛयज्ञेयज्ञे सर्वेषु यज्ञेषु ᵛदेवान्[2] सर्वान्[2] ᵛसपर्यति परिचरति ᵛयः ᵛदीर्घश्रुत्तमः अतिशयेन दीर्घस्य बहोः शास्त्रस्य श्रोता यो मनुष्यः ᵛसुम्नैः सुखकरैर्हविर्भिः ᵛएनान् देवान् ᵛआविवासाति[3] परिचरति । असुखकरैर्हविर्भिः कृतमपि कर्म समर्थं[4] न[4] भवतीत्यर्थः ॥

**विश्वे॑षामिरज्यवो दे॒वाना॒ं वार्म॒हः । विश्वे॒ हि वि॒श्वम॑हसो॒ विश्वे॑ य॒ज्ञेषु॑ य॒ज्ञिया॑ः ॥३॥**

विश्वे॑षाम् । इ॒र॒ज्य॒वः॒ । दे॒वाना॑म् । वाः । म॒हः ।
विश्वे॑ । हि॒ । वि॒श्वऽम॑हसः । विश्वे॑ । य॒ज्ञेषु॑ । य॒ज्ञिया॑ः ॥ ३ ॥

---

१. ग-त-मु—द्वौ जागतौ ततो द्वौ । २. त-मु—सर्वान् देवान् । ३. त-मु—आविवासति । ४. त१-२—सपर्यति सपर्यायै न; त३.८-मु—सपर्यायै; त४.५.६.७—सपर्यति सपर्यायै ।

हे ᵛविश्वेषामिरज्यवः भुवनानामीश्वराः ᵛदेवानां द्योतनादिगुणयुक्तानां भवतां ᵛमहः महत् ᵛवाः वरणीयं धनं विद्यत इति शेषः। तदस्मभ्यं दत्तेति भावः। किंच ᵛविश्वे सर्वे यूयं ᵛविश्वमहसः व्याप्ततेजस्काः। किंच ᵛविश्वे यूयं ᵛयज्ञेषु ᵛयज्ञियाः यष्टव्याः॥

**ते घा राजानो अमृतस्य मन्द्रा अर्यमा मित्रो वरुणः परिज्मा।**
**कद्रुद्रो नृणां स्तुतो मरुतः पूषणो भगः॥ ४॥**

ते। घ। राजानः। अमृतस्य। मन्द्राः। अर्यमा। मित्रः। वरुणः। परिऽज्मा।
कत्। रुद्रः। नृणाम्। स्तुतः। मरुतः। पूषणः। भगः॥ ४॥

ᵛअर्यमा देवः ᵛमित्रः च ᵛपरिज्मा सर्वतोगामी सर्वत्राप्रतिहतगतिः ᵛवरुणः[1] अन्यो देवजनश्चर्त्विग्भिः ᵛस्तुतः ᵛरुद्रः च ᵛपूषणः सर्वस्य पोषयितारो ᵛमरुतः च ᵛभगः च एते[2] देवाः ᵛमन्द्राः सर्वैः स्तुत्याः सन्तः ᵛनृणां मनुष्याणां ᵛकत् सुखं प्रयच्छतेति शेषः। ᵛते सर्वे ᵛअमृतस्य अमृतसदृशस्य हविषः ᵛराजानः ᵛघ ईश्वराः खलु॥

**उत नो नक्तमपां वृषण्वसू सूर्यामासा सदनाय सधन्या।**
**सचा यत्साद्येषामहिर्बुध्नेषु बुध्न्यः॥ ५॥**

उत। नः। नक्तम्। अपाम्। वृषण्वसू इति वृषण्ऽवसू। सूर्यामासा। सदनाय। सऽधन्या।
सचा। यत्। सादि। एषाम्। अहिः। बुध्नेषु। बुध्न्यः॥ ५॥

ᵛउत अपि च हे ᵛवृषण्वसू वर्षणधनावश्विनौ युवाम् ᵛअपाम् उदकानां संबन्धिनौ ᵛसधन्या सधन्यौ समानधनौ ᵛसूर्यामासा सूर्याचन्द्रमसौ ᵛबुध्नेषु अन्तरिक्षेषु निवासस्थानेषु मेघेषु ᵛयत्[3] यः ᵛअहिर्बुध्न्यः देवः[4] ᵛसादि सीदति तिष्ठति ᵛएषाम्[5] एभिः[5] ᵛसचा सह युवां ᵛनक्तं रात्रावहनि चोरुष्यतमिति[6] वक्ष्यमाणेन संबन्धः॥　　॥ २६॥

**उत नो देवावश्विना शुभस्पती धामभिर्मित्रावरुणा उरुष्यताम्।**
**महः स राय एषतेऽति धन्वेव दुरिता॥ ६॥**

उत। नः। देवौ। अश्विना। शुभः। पती इति। धामऽभिः। मित्रावरुणौ। उरुष्यताम्।
महः। सः। रायः। आ। ईषते। अति। धन्वऽइव। दुःऽइता॥ ६॥

ᵛउत अपि च ᵛशुभस्पती शुभस्योदकस्य[7] पती ᵛअश्विना अश्विनौ ᵛदेवौ ᵛनः अस्मान् ᵛधामभिः आत्मीयैः शरीरैः[8] ᵛउरुष्यतां रक्षताम्। किंच ᵛमित्रावरुणौ आत्मीयैः शरीरैरुरुष्यतां रक्षताम्। यं यजमानं पुरुषममी देवा रक्षन्ति ᵛसः ᵛमहः महान्ति ᵛरायः धनानि ᵛएषते आभिमुख्येन गच्छति प्राप्नोति। किंच ᵛदुरिता दुरितानि शीघ्रम् ᵛअति अतिगन्तातिक्रान्ता च भवति। तत्र दृष्टान्तः। ᵛधन्वेव। यथा पथिको निरुदकान् देशानतिक्रामति तद्वदित्यर्थः॥

---

१. त-भ१.२.४.६.८-'वरुणः' नास्ति। २. त-भ१.४.८-ये एते। ३. ग-त-भ-'यत्' नास्ति। ४. त-भ-देवो यत्। ५. ग-तेषामिति; त-भ-तैरेषामेति। ६. ग-त-भ-चोरुष्यतामिति। ७. त-भ-उदकस्य। ८. भ-'शरीरैः' नास्ति।

उत नो रुद्रा चिन्मृळतामश्विना विश्वे देवासो रथस्पतिर्भगः ।
ऋभुर्वाज ऋभुक्षणः परिज्मा विश्ववेदसः ॥ ७ ॥

उत । नः । रुद्रा । चित् । मृळताम् । अश्विना । विश्वे । देवासः । रथःपतिः । भगः ।
ऋभुः । वाजः । ऋभुक्षणः । परिऽज्मा । विश्वऽवेदसः ॥ ७ ॥

ᵛउत ᵛचित् अपि च ᵛरुद्रा रुद्रपुत्रौ ᵛअश्विना अश्विनौ ᵛनः अस्मान् ᵛमृळतां सुखयताम् । किंच ᵛरथस्पतिः रथस्य पतिः पूषा ᵛऋभुः ᵛवाजः अश्ववान् ᵛभगः च ᵛपरिज्मा परितो गन्ता वायुश्चेति[1] ᵛविश्वे सर्वे ᵛदेवासः देवाः सुखयन्तु । हे ᵛविश्ववेदसः विश्ववेदाः सर्वप्रज्ञाः सर्वधना वा हे ᵛऋभुक्षणः महान्तो ब्रह्मादयो देवा यूयं सुखयत ॥

ऋभुर्ऋभुक्षा ऋभुर्विधतो मद आ ते हरी जूजुवानस्य वाजिना ।
दुष्टरं यस्य साम चिदृधग्यज्ञो न मानुषः ॥ ८ ॥

ऋभुः । ऋभुक्षाः । ऋभुः । विधतः । मदः । आ । ते । हरी इति । जूजुवानस्य । वाजिना ।
दुस्तरम् । यस्य । साम । चित् । ऋधक् । यज्ञः । न । मानुषः ॥ ८ ॥

ᵛऋभुक्षाः महानिन्द्रः ᵛऋभुः यज्ञेन भाति । किंच ᵛविधतः त्वां परिचरतो यजमानस्य ᵛमदः हर्षोऽपि ᵛऋभुः यज्ञेन भाति[2] । हे इन्द्र ᵛआ ᵛजूजुवानस्य यागं प्रति शीघ्रमागच्छतः ᵛते तव ᵛहरी अश्वावपि ᵛवाजिना वाजिनौ बलवन्तौ । किंच ᵛयस्य इन्द्रस्य संबन्धि ᵛसाम ᵛचित् गीयमानं सामापि ᵛदुष्टरं रक्षोभिरप्रापणीयम् । एषः ᵛयज्ञः ᵛमानुषः मनुष्यसाधारणः ᵛन किंच ᵛऋधक् पृथक् । दिव्य इत्यर्थः ॥

कृधी नो अह्रयो देव सवितः स च स्तुषे मघोनाम् ।
सहो न इन्द्रो वह्निभिर्न्येषां चर्षणीनां चक्रं रश्मिं न योयुवे ॥ ९ ॥

कृधि । नः । अह्रयः । देव । सवितरिति । सः । च । स्तुषे । मघोनाम् ।
सहो इति । नः । इन्द्रः । वह्निऽभिः । नि । एषाम् ।
चर्षणीनाम् । चक्रम् । रश्मिम् । न । योयुवे ॥ ९ ॥

हे ᵛसवितः प्रेरक ᵛनः अस्मान् ᵛअह्रयः अनवनतवदनानलज्जितान् ᵛकृधि कुरु । किंच ᵛसः त्वं ᵛमघोनां धनवतां यजमानानां संबन्धिभिर्ऋत्विग्भिः ᵛस्तुषे स्तूयसे । ᵛइन्द्रः ᵛवह्निभिः वोढृभिः मरुद्भिः सह ᵛसहः बलं ᵛचर्षणीनां मनुष्याणां ᵛनः अस्माकं ᵛनि ᵛयोयुवे भृशं निमिश्रयतु । तत्र दृष्टान्तः । ᵛचक्रं रथस्य चक्रं ᵛरश्मिं ᵛन । यथा रश्मिं चक्रादिकं तद्वदित्यर्थः ॥

ऐषु द्यावापृथिवी धातं महदस्मे वीरेषु विश्वचर्षणि श्रवः ।
पृक्षं वाजस्य सातये पृक्षं रायोत तुर्वणे ॥ १० ॥

---

१. ग-त-मु-वायुश्चैते; भ७-सूर्यश्चेति । २. ग-भ-भवति; त-भवंति ।

आ । एषु । द्यावापृथिवी इति । धातम् । महत् । अस्मे इति । वीरेषु । विश्वऽचर्षणि । श्रवः । पृक्षम् । वाजस्य । सातये । पृक्षम् । राया । उत । तुर्वणे ॥ १० ॥

हे ᵛद्यावापृथिवी द्यावापृथिव्यौ युवाम् ᵛअस्मे अस्माकं संबन्धिषु ᵛएषु ᵛवीरेषु पुत्रेषु ᵛविश्वचर्षणि सर्वमनुष्योपेतं ᵛमहत् ᵛश्रवः यशः ᵛआ ᵛधातम् आधत्तं दत्तम्। किंच ᵛवाजस्य बलस्य ᵛसातये संभजनाय ᵛपृक्षं पालकमन्नं दत्तम्। ᵛउत अपि च ᵛतुर्वणे शत्रूणां तरणाय ᵛराया धनेन सह ᵛपृक्षम् अन्नं दत्तम् ॥ ॥ २७ ॥

एतं शंसमिन्द्रास्मयुष्ट्वं कूचित्सन्तं सहसावन्नभिष्टये सदा पाह्यभिष्टये ।
मेदतां वेदता वसो ॥ ११ ॥

एतम् । शंसम् । इन्द्र । अस्मऽयुः । त्वम् । कूऽचित् । सन्तम् । सहसाऽवन् । अभिष्टये । सदा । पाहि । अभिष्टये । मेदताम् । वेदता । वसो इति ॥ ११ ॥

हे ᵛवसो वासयितः ᵛसहसावन् बलवन् ᵛइन्द्र ᵛअस्मयुः अस्मान्कामयमानः ᵛत्वं ᵛकूचित् क्वचिदपि ᵛसन्तं स्थितम् ᵛएतम् इमं ᵛशंसं स्तोतारम् ᵛअभिष्टये अभिलषितसिद्ध्यर्थमपि च ᵛअभिष्टये यागार्थं ᵛसदा सर्वदा ᵛपाहि रक्ष। किंच ᵛवेदता त्वदीयेन प्रज्ञानेन स्तोतारं मां ᵛमेदतां बुध्यस्व ॥

एतं मे स्तोमं तना न सूर्ये द्युतद्यामानं वावृधन्त नृणाम् ।
संवननं नाश्व्यं तष्टेवानपच्युतम् ॥ १२ ॥

एतम् । मे । स्तोमम् । तना । न । सूर्ये । द्युतत्ऽयामानम् । ववृधन्त । नृणाम् । सम्ऽवननम् । न । अश्व्यम् । तष्टाऽइव । अनपऽच्युतम् ॥ १२ ॥

ᵛनृणां नेतॄणां देवशत्रूणां[1] ᵛसंवननं ᵛन संभजनं सम्यग्हिंसनमिवावस्थितं ᵛमे मदीयम् ᵛएतम्[2] इदं ᵛस्तोमं[3] स्तोत्रं ᵛववृधन्त ऋत्विजो वर्धयन्तु। तत्र दृष्टान्तः। ᵛसूर्ये ᵛद्युतद्यामानं दीप्तगमनं ᵛतना ᵛन विस्तृतान् रश्मीन् वर्धयन्ति तद्वदित्यर्थः। ᵛअनपच्युतं च्युतिरहितम् ᵛअश्व्यम् अश्वार्हं रथं ᵛतष्टेव यथा वर्धकी रथिष्वागतेषु संस्कृतं रथं संस्कारस्थानात्प्रेरयति तद्वदित्यर्थः ॥

वावर्त येषां राया युक्तैषां हिरण्ययी ।
नेमधिता न पौंस्या वृथेव विष्टान्ता ॥ १३ ॥

ववर्त । येषाम् । राया । युक्ता । एषाम् । हिरण्ययी । नेमऽधिता । न । पौंस्या । वृथाऽइव । विष्टऽअन्ता ॥ १३ ॥

ᵛयेषां[4] देवानां स्वभूतेन ᵛराया अस्मभ्यं दातव्येन धनेन ᵛयुक्ता स्तुतिः आववर्त तेषां ᵛएषाम् अर्थाय ᵛहिरण्ययी हिरण्मयी हिरण्यालंकारवत् प्रीतिकरास्मन्मुखात्[5] पुनःपुनरावर्तत इत्यर्थः। तत्र

१. ग-त-भ-मु–देवानां शत्रूणां। २. ग-त-भ–एतमिमं। ३. ग-त–'स्तोमं' नास्ति। ४. ग१.२-त-भ१.२.४.६.८–एषां। ५. ग–प्रीतिकरसन्मुखा; भ१.२.४.६.८–प्रीतिकरासन्मुखा; भ७–प्रीतिकरी सती मुखात्।

दृष्टान्तः। ᵛपौंस्या पौंस्यानि बलानि ᵛनेमधिता ᵛन नेमधितौ संग्रामे ᵛविष्टान्ता व्याप्तावसाना ᵛवृथेव यथा घटिकायन्त्रमाला[1] तद्वदित्यर्थः ॥

प्र तद्दुःशीमे पृथवाने वेने प्र रामे वोचमसुरे मघवत्सु ।
ये युक्त्वाय पञ्च शतास्मयु पथा विश्राव्येषाम् ॥ १४ ॥

प्र । तत् । दुःऽशीमे । पृथवाने । वेने । प्र । रामे । वोचम् । असुरे । मघवत्ऽसु ।
ये । युक्त्वाय । पञ्च । शता । अस्मऽयु । पथा । विऽश्रावि । एषाम् ॥ १४ ॥

ᵛये देवाः ᵛपञ्च ᵛशता शतानि रथान् ᵛयुक्त्वाय अश्वैर्युक्त्वा ᵛअस्मयु अस्मत्कामाः सन्तः ᵛपथा यज्ञमार्गेण गच्छन्ति तेषाम् ᵛएषां देवानां ᵛविश्रावि देवानां लोके वा विशेषेण श्रावकगुणयुक्तं[2] ᵛतत् स्तोत्रं ᵛदुःशीमे दुःशीमनाम्नि ᵛपृथवाने। पृथवानः पृथिः। तस्मिन् ᵛवेने च ᵛअसुरे बलवति ᵛरामे चैतेषु राजसु ᵛप्र ᵛवोचं प्रब्रवीमि। प्रख्यापयामीत्यर्थः। ᵛमघवत्सु अन्येषु धनवत्सु च प्रख्यापयामीत्यर्थः ॥

अधीन्वत्र सप्ततिं च सप्त च ।
सद्यो दिदिष्ट तान्वः सद्यो दिदिष्ट पार्थ्यः सद्यो दिदिष्ट मायवः ॥ १५ ॥

अधि । इत् । नु । अत्र । सप्ततिम् । च । सप्त । च ।
सद्यः । दिदिष्ट । तान्वः । सद्यः । दिदिष्ट । पार्थ्यः । सद्यः । दिदिष्ट । मायवः ॥ १५ ॥

ᵛअत्र एषु राजसु ᵛतान्वः नामर्षिः गवां ᵛसप्त ᵛच सप्ततिं ᵛच ᵛनु क्षिप्रं ᵛसद्यः ᵛइत् सद्य एव ᵛअधि ᵛदिदिष्ट। अधिपूर्वो दिशिर्याचनार्थः। ययाचे। किंच ᵛपार्थो[3] नाम युवनाश्वनामकस्य कुले पृथोः पुत्रः कश्चित् ᵛसद्यः एव गवां सप्तसप्ततिमधि ᵛदिदिष्ट। किंच ᵛमायवः अपि ᵛसद्यः एवाधि ᵛदिदिष्ट ॥ ॥ २८ ॥

'प्रैते' इति चतुर्दशर्चं चतुर्थं सूक्तं कद्र्वाः पुत्रस्य सर्पस्यार्बुदस्यार्षम्। पञ्चमी सप्तमी चतुर्दशी त्रिष्टुभः शिष्टा एकादश जगत्यः। सोमाभिषवार्था ग्रावाणोऽत्र देवता। तथा चानुक्रान्तं—'प्रैते पञ्चोना सर्पोऽर्बुदः काद्रवेयो ग्राव्णोऽस्तौत्पञ्चम्यन्त्ये त्रिष्टुभौ सप्तमी च' इति। ग्रावस्तोत्र एतत्सूक्तम्। सूत्रितं च—'प्रैते वदन्त्वित्यर्बुदं[4] प्रागुत्तमाया आ व ऋञ्जसे प्र वो ग्रावाण इति सूक्तयोः' ( आश्व. श्रौ. ५. १२ ) इति। यद्वा। इदमेकमेव सूक्तं ग्रावस्तोत्रम्। सूत्रितं च—'अर्बुदमेवेत्येके प्र वो ग्रावाण इत्येके' ( आश्व. श्रौ. ५. १२ ) इति ॥

प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ॥ १ ॥

प्र । एते । वदन्तु । प्र । वयम् । वदाम । ग्रावऽभ्यः । वाचम् । वदत । वदत्ऽभ्यः ।
यत् । अद्रयः । पर्वताः । साकम् । आशवः । श्लोकम् । घोषम् । भरथ । इन्द्राय । सोमिनः ॥ १ ॥

---

१. ग-घटिका यज्ञस्य यथा माला; त४.५-घटिकात्रयंकाला; भ७-घटितात्रयंत्रमाल। २. त-भ१. २.४.६.८-श्रावकं गुणयुक्तं। ३. त२-मु-पार्थ्यो भ१-पार्थ्यो; भ७-पार्थ्यौ। ४. त-भ६.७-मु-वदन्त्यर्बुदं।

ᐯएते ग्रावाण उपलाः ᐯप्र ᐯवदन्तु अभिषवशब्दं कुर्वन्तु। ᐯवयं यजमानाः ᐯवदद्भ्यः अभिषवशब्दं कुर्वद्भ्यः ᐯग्रावभ्यः ग्राव्णामर्थाय ᐯवाचं ᐯप्र ᐯवदाम। किंच हे ऋत्विजो यूयमपि स्तुतिलक्षणां वाचं ᐯवदत पठत। ᐯयत् यदा ᐯअद्रयः आदरणीया दृढाः ᐯआशवः सोमाभिषवार्थे[1] क्षिप्रकारिणः ᐯपर्वताः ग्रावाणः सर्वे यूयं ᐯसाकं सह ᐯइन्द्राय इन्द्रार्थं ᐯश्लोकं श्रोतव्यं ᐯघोषम् अभिषवशब्दं ᐯभरथ पोषयथ तदानीं ᐯसोमिनः सोमवन्तः सोमेन तृप्ता[2] भवथ[2] ॥

एते वदन्ति शतवत्सहस्रवदभि क्रन्दन्ति हरितेभिरासभिः।
विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशत ॥ २ ॥

एते। वदन्ति। शतऽवत्। सहस्रऽवत्। अभि। क्रन्दन्ति। हरितेभिः। आसऽभिः।
विष्ट्वी। ग्रावाणः। सुऽकृतः। सुऽकृत्यया। होतुः। चित्। पूर्वे। हविःऽअद्यम्। आशत ॥२॥

ᐯशतवत्सहस्रवत् यथा शतं मनुष्याः सहस्रवदपरिमिता मनुष्याश्च वदन्ति तद्वत् ᐯएते ग्रावाणः[3] ᐯवदन्ति शब्दं कुर्वन्ति। किंच ᐯहरितेभिः सोमसंसर्गाद्धरितवर्णैः ᐯआसभिः आस्यैः ᐯअभि ᐯक्रन्दन्ति। सोममभिलक्ष्य देवानाह्वयन्तीत्यर्थः। किंच ᐯसुकृतः शोभनकर्माणः ᐯग्रावाणः ᐯविष्ट्वी यज्ञं प्राप्य ᐯहोतुः देवानामाह्वातुरग्नेः ᐯपूर्वे ᐯचित् पूर्वमेव ᐯअद्यं भक्षणीयं ᐯहविः ᐯआशत प्राप्नुवन्ति ॥

एते वदन्त्यविदन्नना मधु न्यूङ्खयन्ते अधि पक्व आमिषि।
वृक्षस्य शाखामरुणस्य बप्सतस्ते सूभर्वा वृषभाः प्रेमराविषुः ॥ ३ ॥

एते। वदन्ति। अविदन्। अना। मधु। नि। ऊङ्खयन्ते। अधि। पक्वे। आमिषि।
वृक्षस्य। शाखाम्। अरुणस्य। बप्सतः। ते। सूभर्वाः। वृषभाः। प्र। ईम्। अराविषुः ॥३॥

ᐯअरुणस्य अरुणवर्णस्य ᐯवृक्षस्य ᐯशाखां ᐯबप्सतः भक्षयन्तः ᐯते ᐯसूभर्वाः शोभनभक्षाः ᐯवृषभाः ᐯप्रेमराविषुः प्ररुवन्ति। यथा ᐯपक्वे ᐯआमिषि ᐯअधि आमिषे क्रव्यादो मांसभक्षकाश्च मांसविषये यथा ᐯन्यूङ्खयन्ते शब्दविशेषं कुर्वन्ति तद्वत् ᐯएते ग्रावाणः ᐯवदन्ति शब्दं कुर्वन्ति। किंच ᐯमधु मदकरं[4] सोमम् ᐯअना आस्येन ᐯअविदन् लभन्ते ॥

बृहद्वदन्ति मदिरेण मन्दिनेन्द्रं क्रोशन्तोऽविदन्नना मधु।
संरभ्या धीराः स्वसृभिरनर्तिषुराघोषयन्तः पृथिवीमुपब्दिभिः ॥ ४ ॥

बृहत्। वदन्ति। मदिरेण। मन्दिना। इन्द्रम्। क्रोशन्तः। अविदन्। अना। मधु।
सम्ऽरभ्य। धीराः। स्वसृऽभिः। अनर्तिषुः। आऽघोषयन्तः। पृथिवीम्। उपब्दिऽभिः ॥४॥

ᐯमदिरेण मदकरेण ᐯमन्दिना अभिषूयमाणेन सोमेन ᐯइन्द्रं ᐯक्रोशन्तः आह्वयन्त एते ग्रावाणः ᐯबृहत् अत्यन्तं ᐯवदन्ति शब्दायन्ते। किंच ᐯअना आस्येन ᐯमधु मदकरं सोमम् ᐯअविदन् अलभन्त। किंच ᐯसंरभ्य संरब्धा भूत्वा ᐯधीराः धृष्टाः सन्तः ᐯउपब्दिभिः शब्दैः ᐯपृथिवीम् ᐯआघोषयन्तः पूरयन्तः ᐯस्वसृभिः अङ्गुलिभिः सह ᐯअनर्तिषुः नृत्यन्ति ॥

१. त-भ-सोममभिषवार्थे। २. ग-भ५-लिप्ता भवथ; त-तृप्ता अभवन्; भ१.६.८-लिप्ता भवतः; भ२-लिप्सा भवतः; भ४.७-लिप्ता भवत। ३. त-'ग्रावाणः' नास्ति। ४. भ१.२.७-मधुरं।

सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः ।
न्य१ङ्नि यन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्वितः ॥ ५ ॥

सुऽपर्णाः । वाचम् । अक्रत । उप । द्यवि । आऽखरे । कृष्णाः । इषिराः । अनर्तिषुः ।
न्यक् । नि । यन्ति । उपरस्य । निःऽकृतम् । पुरु । रेतः । दधिरे । सूर्यऽश्वितः ॥ ५ ॥

ᐯसुपर्णाः सुपतना ग्रावाणः ᐯउप उपलक्ष्य समीपे ᐯद्यवि अन्तरिक्षे ᐯवाचम् अभिषवशब्दम् ᐯअक्रत कुर्वन्ति । किंच ᐯआखरे । मृगाणां व्रज आखरः । तस्मिन् ᐯइषिराः गमनशीलाः ᐯकृष्णाः कृष्णमृगा इव ᐯसूर्यश्वितः सूर्यवच्छ्वेतवर्णा द्रप्साः ᐯअनर्तिषुः नृत्यन्ति । ᐯनिष्कृतं ग्रावभिः पीडितं सत् ᐯउपरस्य उपलस्य ᐯन्यक् अधोमुखं सोमं ᐯनि ᐯयन्ति निगमयन्ति । किंच ᐯपुरु बहु ᐯरेतः सोमलक्षणमुदकं ᐯदधिरे धारयन्ति ॥ ॥ २९ ॥

उग्राइव प्रवहन्तः समायमुः साकं युक्ता वृषणो बिभ्रतो धुरः ।
यच्छ्वसन्तो जग्रसाना अराविषुः शृण्व एषां प्रोथथो अर्वतामिव ॥ ६ ॥

उग्राःऽइव । प्रऽवहन्तः । सम्ऽआयमुः । साकम् । युक्ताः । वृषणः । बिभ्रतः । धुरः ।
यत् । श्वसन्तः । जग्रसानाः । अराविषुः । शृण्वे । एषाम् । प्रोथथः । अर्वताम्ऽइव ॥ ६ ॥

ᐯवृषणः । फलं वर्षतीति वृषा यज्ञः । तस्य ᐯधुरः धुरं भारं ᐯबिभ्रतः धारयन्त एते ग्रावाणः ᐯसाकं सोमेन सह ᐯयुक्ताः सन्तः ᐯप्रवहन्तः रथं प्रकर्षेण वोढारः ᐯउग्राः उद्गूर्णा[1] अश्वाः ᐯइव ᐯसमायमुः समायच्छन्ति । आयता भवन्तीत्यर्थः । ᐯयत् यदा ᐯश्वसन्तः अभिषवसमय उत्पतन-निपतनव्यापारजनितेन वायुना श्वसन्त इव स्थिता ग्रावाणः ᐯजग्रसानाः सोमं ग्रसमानाः ᐯअराविषुः शब्दायन्ते तदानीम् ᐯएषां ग्राव्णां संबन्धी ᐯप्रोथथः मुखाच्छब्दः ᐯशृण्वे श्रूयते । तत्र दृष्टान्तः । ᐯअर्वतामिव । अश्वानां संबन्धिनो मुखाद्धेषाशब्दो यथा तद्वदित्यर्थः ॥

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।
दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥ ७ ॥

दशावनिऽभ्यः । दशऽकक्ष्येभ्यः । दशऽयोक्त्रेभ्यः । दशऽयोजनेभ्यः ।
दशाभीशुऽभ्यः । अर्चत । अजरेभ्यः । दश । धुरः । दश । युक्ताः । वहत्ऽभ्यः ॥ ७ ॥

ᐯदशावनिभ्यः । कर्माण्यवन्ति गच्छन्तीत्यवनयः । दशावनयोऽङ्गुलयो येषां ग्राहकत्वेन संबन्धिनस्ते दशावनयः । तान् ग्राव्णः । द्वितीयार्थे चतुर्थी । ᐯदशकक्ष्येभ्यः । कक्ष्याः प्रकाशका अङ्गुलयो येषां ते दशकक्ष्याः । तान् । ᐯदशयोक्त्रेभ्यः । योक्त्रवद्बन्धनसाधनभूता दशाङ्गुलयो[2] येषां तान् । ᐯदशयोजनेभ्यः । सोमेन सह योजने साधनभूता दशाङ्गुलयो येषां तान् । ᐯदशाभी-शुभ्यः । कर्माण्यभितो व्याप्नुवन्तीत्यभीशवोऽङ्गुलयो दश येषां तान् । ᐯअजरेभ्यः जराविवर्जितान् ᐯदश दशभिः ᐯधुरः धूर्भिः हिंसितृभिः । तृतीयार्थे प्रथमा । ᐯयुक्ताः युक्तान् । द्वितीयार्थे प्रथमा । ᐯवहद्भ्यः वहतोऽभिषवाख्ये कर्मणि व्याप्रियमाणान् ᐯअर्चत स्तुत । हे ऋत्विज इति शेषः । अत्र

१. त–उद्गूर्णिवर्णा । २. ग-त-भ–' दशाङ्गुलयो ' नास्ति ।

यास्कः—'अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि। कक्ष्याः प्रकाशयन्ति कर्माणि। योक्त्राणि योजनानीति व्याख्यातमभीशवोऽभ्यश्नुवते कर्माणि। दश धुरो दश युक्ता वहद्भ्यः। धूर्धूर्वतेर्वधकर्मण इयमपीतरा धूरेतस्मादेव विहन्ति वहं धारयतेर्वा' ( निरु. ३. ९ ) इति ॥

ते अद्रयो दशयन्त्रास आशवस्तेषामाधानं पर्येति हर्यतम्।
त ऊं सुतस्य सोम्यस्यान्धसोंऽशोः पीयूषं प्रथमस्य भेजिरे ॥ ८ ॥

ते। अद्रयः। दशऽयन्त्रासः। आशवः। तेषाम्। आऽधानम्। परि। एति। हर्यतम्।
ते। ऊं इति। सुतस्य। सोम्यस्य। अन्धसः। अंशोः। पीयूषम्। प्रथमस्य। भेजिरे ॥ ८ ॥

ᵛअद्रयः आदरणीयाः ᵛआशवः क्षिप्रकारिणः ᵛते[1] एते[1] प्रकृता ग्रावाणः ᵛदशयन्त्रासः दशयन्त्राः। ᵛतेषाम् एषां ग्राव्णां संबन्धि यत् ᵛआधानं प्रक्षेपणमभिषवकर्म ᵛहर्यतं स्पृहणीयं ᵛपर्येति परितो गच्छति। ᵛते एते ग्रावाण एव ᵛसुतस्य अभिषुतस्य ᵛसोम्यस्य सोमस्य[2] संबन्धिनः[2] ᵛअंशोः खण्डस्वरूपस्य ᵛअन्धसः अन्नस्य ᵛपीयूषम् अमृतं[3] प्रथमं[3] ᵛभेजिरे[4] ॥

ते सोमादो हरी इन्द्रस्य निंसतेंऽशुं दुहन्तो अध्यासते गवि।
तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते ॥ ९ ॥

ते। सोमऽअदः। हरी इति। इन्द्रस्य। निंसते। अंशुम्। दुहन्तः। अधि। आसते। गवि।
तेभिः। दुग्धम्। पपिऽवान्। सोम्यम्। मधु। इन्द्रः। वर्धते। प्रथते। वृषऽयते ॥ ९ ॥

ᵛसोमादः सोमस्यात्तारः ᵛते प्रकृता[5] एते[6] ग्रावाणः ᵛइन्द्रस्य ᵛहरी अश्वौ ᵛनिंसते निक्षन्ति चुम्बन्ति। प्राप्नुवन्तीत्यर्थः। किंच ᵛगवि अधिषवणचर्मणि[7] ᵛअंशुं सोमं ᵛदुहन्तः ᵛआसते[8]। किंच ᵛइन्द्रः ᵛतेभिः तैः ᵛदुग्धं ᵛसोम्यं सोममयं ᵛमधु अमृतं ᵛपपिवान् पीतवान् ᵛवर्धते वृद्धशरीरो भवति। ᵛप्रथते विस्तीर्णशरीरश्च भवति। ᵛवृषायते वृषेवाचरति ॥

वृषा वो अंशुर्न किला रिषाथनेळावन्तः सदमित्स्थनाशिताः।
रैवत्येव महसा चारवः स्थन यस्य ग्रावाणो अजुषध्वमध्वरम् ॥ १० ॥

वृषा। वः। अंशुः। न। किल। रिषाथन। इळाऽवन्तः। सदम्। इत्। स्थन। आशिताः।
रैवत्याऽइव। महसा। चारवः। स्थन। यस्य। ग्रावाणः। अजुषध्वम्। अध्वरम् ॥ १० ॥

ᵛअंशुः सोमः ᵛवः युष्माकं ᵛवृषा यज्ञे वर्षिता भविष्यति। यूयमपि ᵛन ᵛरिषाथन ᵛकिल न ᵛरिष्यथ न[9] शीर्णा[9] भवथ किल। किंच ᵛइळावन्तः अन्नवन्त इव यूयं ᵛसदमित् सदैव ᵛआशिताः भोजिताः[10] ᵛस्थन भवथ। किंच ᵛरैवत्येव यथा रेवन्तस्तेजसा युक्ता भवन्ति तद्वत् ᵛमहसा तेजसा युक्ताः ᵛचारवः कल्याणाः ᵛस्थन भवथ। हे ᵛग्रावाणः यूयं ᵛयस्य यजमानस्य ᵛअध्वरं यज्ञम् ᵛअजुषध्वम् असेवध्वम् ॥  ॥ ३० ॥

१. त१.२.७-भ४.६.८–ते उ ते। २. ग-त-मु–सोमसंबंधिनः। ३. त१.२.३.७-मु–अमृतं प्रथमस्य; भ२–प्रथमममृतं। ४. त-भेजिरे भजंत इति। ५. भ–प्रकृष्टा। ६. त-मु–'एते' नास्ति। ७. त-भ१.२.४. ६.८–अधिषवणकर्मणि। ८. भ७–अध्यासते। ९. ग–विशीर्णा; भ–विस्तीर्णा। १०. त-मु–भोजयिताः।

तृदिला अतृदिलासो अद्रयोऽश्रमणा अशृथिता अमृत्यवः ।
अनातुरा अजराः स्थामविष्णवः सुपीवसो अतृषिता अतृष्णजः ॥ ११ ॥

तृदिलाः । अतृदिलासः । अद्रयः । अश्रमणाः । अशृथिताः । अमृत्यवः ।
अनातुराः । अजराः । स्थ । अमविष्णवः । सुऽपीवसः । अतृषिताः । अतृष्णऽजः ॥ ११ ॥

ᵛअश्रमणाः श्रमणवर्जिताः[1] ᵛअशृथिताः अन्यैरशिथिलीकृताः ᵛअमृत्यवः अमारिताः ᵛअनातुराः अरोगाः ᵛअजराः जरारहिताः ᵛस्थ भवथ । किंच ᵛअमविष्णवः उत्क्षेपणावक्षेपणगत्युपेता[2] हे ग्रावाणः ᵛतृदिलाः अन्येषां भेदकाः ᵛअतृदिलासः स्वयमन्येनाभिन्नाः[3] ᵛसुपीवसः[4] सुबलाः ᵛअतृषिताः तृष्णारहिताः ᵛअतृष्णजः निःस्पृहा भवथ ॥

ध्रुवा एव वः पितरो युगेयुगे क्षेमकामासः सदसो न युञ्जते ।
अजुर्यासो हरिषाचो हरिद्रव आ द्यां रवेण पृथिवीमशुश्रवुः ॥ १२ ॥

ध्रुवाः । एव । वः । पितरः । युगेऽयुगे । क्षेमऽकामासः । सदसः । न । युञ्जते ।
अजुर्यासः । हरिऽसाचः । हरिद्रवः । आ । द्याम् । रवेण । पृथिवीम् । अशुश्रवुः ॥ १२ ॥

हे ग्रावाणः ᵛयुगेयुगे सर्वेषु युगेषु ᵛध्रुवा ᵛएव निश्चला एव ᵛवः युष्माकं ᵛपितरः पितृभूताः पर्वताः ᵛक्षेमकामासः क्षेमकामाः[5] ᵛसदसः सदांसि[6] आत्मना ᵛन ᵛयुञ्जते न संयोजयन्ति[6] । ᵛअजुर्यासः जरारहिताः ᵛहरिषाचः सोमस्य संभक्तारः ᵛहरिद्रवः सोमसंसर्गाद्धरितवर्णाः ᵛद्यां दिवं ᵛपृथिवीं च ᵛरवेण अभिषवशब्देन ᵛअशुश्रवुः श्रावयन्ति ॥

तदिद्वदन्त्यद्रयो विमोचने यामन्नञ्जस्पाइव घेदुपब्दिभिः ।
वपन्तो बीजमिव धान्याकृतः पृञ्चन्ति सोमं न मिनन्ति बप्सतः ॥ १३ ॥

तत् । इत् । वदन्ति । अद्रयः । विऽमोचने । यामन् । अञ्जःपाःऽइव । घ । इत् । उपब्दिऽभिः ।
वपन्तः । बीजम्ऽइव । धान्यऽकृतः । पृञ्चन्ति । सोमम् । न । मिनन्ति । बप्सतः ॥ १३ ॥

ᵛअद्रयः आदरणीया ग्रावाणः ᵛयामन् यामनि गमने ᵛअञ्जस्पाः । अञ्जसा पान्ति[7] रक्षन्तीत्यञ्जस्पाः[7] । तेषां रथानाम् ᵛइव ᵛउपब्दिभिः ᵛतदित् तदेवाभिषवकर्म ᵛविमोचने ᵛघेत्[8] तत्[8] सोमरसविमोचनवेलायामपि ᵛवदन्ति प्रकाशयन्ति । किंच ᵛबप्सतः सोमं भक्षयन्तो ग्रावाणः ᵛवपन्तः

१. ग-त-भ१.२.४.६.८-मु—श्रमवर्जिताः । २. ग१.२—उत्क्षेपणापक्षेपणाभ्यां युताः; ग४-त१.२.६—उत्क्षेपणापक्षेपणगत्या ता अनृष्णजः; त४.५—उत्क्षेपणापक्षेणगत्यामुपीवसः; त७.८-भ१.२.४.८—उत्क्षेपणावक्षेपणगत्या ता ( भ४—'ता' नास्ति ) अतृष्णजः ( भ८—अतृजः ); भ७—उत्क्षेपणवक्षेपणगत्योपेता । ३. भ१.२.७—स्वयमन्योन्याभिन्नाः । ४. ग-त-भ१.२.४.६.८—' सुपीवसः ' नास्ति । ५. त-भ—क्षेमकामाः सदसो न कामासः । ६. ग४-भ५—सदमिषो न युंजते अजुर्यासो हरिषाचो हरिद्रवः आ द्यां रवेण सदांसि आत्मना न युंजते न संयोजयंति; त-भ१.२.४.६.७.८—'सदांस्यात्मना...संयोजयन्ति' नास्ति । ७. ग—याति गच्छंती°, त-भ१.२—याति गच्छंती°; भ८—याति गच्छती° । ८. ग-त—अप्येतत्; भ—घ्वेतत् ।

ᵛधान्याकृतः कृषीवलाः ᵛबीजमिव यथा पृञ्चन्ति तद्वत् ᵛसोमं ᵛपृञ्चन्ति । संपर्चयन्तीत्यर्थः । ᵛन एनं ᵛमिनन्ति । न हिंसन्तीत्यर्थः ॥

सुते अध्वरे अधि वाचमक्रता क्रीळयो न मातरं तुदन्तः ।
वि षू मुञ्चा सुषुवुषो मनीषां वि वर्तन्तामद्रयश्चायमानाः ॥ १४ ॥

सुते । अध्वरे । अधि । वाचम् । अक्रत । आ । क्रीळयः । न । मातरम् । तुदन्तः ।
वि । सु । मुञ्च । सुसुऽवुषः । मनीषाम् । वि । वर्तन्ताम् । अद्रयः । चायमानाः ॥ १४ ॥

ᵛचायमानाः पूज्यमानाः ᵛअद्रयः आदरणीया ग्रावाणः ᵛअध्वरेऽधि यज्ञे ᵛसुते सोमेऽभिषुते ᵛमातरं ᵛतुदन्तः हस्तेन ताडयन्तः ᵛआ ᵛक्रीळयो ᵛन आक्रीडकाः कुमाराः शब्दं यथा कुर्वन्ति तथा ᵛवाचं शब्दम् ᵛअक्रत कृण्वन्ति । ᵛसुषुवुषः सोममभिषुतवतः प्राज्ञ्णः ᵛमनीषां स्तुतिं ᵛवि ᵛमुञ्च विशेषेण[1] मुञ्च[1] । किंच अद्रयः ᵛवि ᵛवर्तन्ताम् अभिषवशब्दं विमुञ्चन्तु ॥ ॥ ३१ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अष्टकेऽष्टमकेऽध्यायश्चतुर्थः संप्रदर्शितः ।
धीमता सायणार्येण पञ्चमोऽथ प्रदर्श्यते ॥

तत्र ' हये जाये ' इत्यष्टादशर्चं पञ्चमं सूक्तं त्रैष्टुभम् । अत्रानुक्रमणिका—' हये द्व्यूनोर्वशीमैळः पुरूरवाः पूर्वोषितात्कामात्[2] पुनरासाद्यात्ररोद्धुमैच्छत्सा तमनिच्छन्ती प्रत्याचष्टे इय इषुर्या कदा सुदेवोऽन्तरिक्षप्रां सचेति तिस्रश्चैळवाक्यं शिष्टा उर्वश्याः ' इति । 'हये जाये' 'इषुर्न श्रिये' 'या सुजूर्णिः' ' कदा सूनुः ' ' सुदेवो अद्य ' ' अन्तरिक्षप्रां ' ' सचा यदासु जहतीषु ' इत्याद्यास्तिस्रश्चेति नवर्चं ऐळस्य पुरूरवसो वाक्यानि । अतस्तासां स ऋषिः । शिष्टा नवोर्वश्या वाक्यानि । अतस्तासु सर्षिका । उभयोर्वाक्येषु योऽर्थः प्रतिपाद्यते सा देवता । गतो विनियोगः ॥

ऐळोर्वशीतिहासोऽत्र वैशद्याय[3] प्रवर्ण्यते । मित्रश्च वरुणश्चोभौ दीक्षितौ प्रेक्ष्य चोर्वशीम् ॥१॥
रेतः सिषिचतुः सद्यस्तत्कुम्भे न्यदधुस्तदा । तां शप्तवन्तौ मनुजभोग्या भूस्यां भवेति तौ ॥२॥
अत्रान्तर इळो राजा मनोः पुत्रैश्च संयुतः । मृगयां संचरन् साश्वो देवीक्रीडं विवेश ह ॥३॥
यत्र[4] देवं गिरिसुता सर्वैर्भावैरतोषयत् । अत्राविशन्पुमान्स्त्री स्यादित्युक्त्वा तत्र चाविशत् ॥४॥
स्त्री भूत्वा व्रीडितः सोऽगाच्छरणं शिवमञ्जसा । इयं प्रसाद्यतां राजन्नित्युक्तः शंभुना नृपः ॥५॥
जगाम शरणं देवीमात्मनः पुंस्त्वसिद्धये । अकरोत्सा नृपं देवी षण्मासात्प्राप्तपुंस्त्वकम् ॥६॥
ततः कदाचित्स्त्रीकाले बुधः सौन्दर्यमोहितः । अप्सरोभ्यो विशिष्टां तामिळां संगतवान् मुदा ॥७॥

---

१. भ-'विशेषेण मुञ्च' नास्ति । २. त-भ१.२.४.६.८-पूर्वोषितान् कामान् ; अनु-पूर्वोषितां कामात् । ३. त१.२.३.६.७-वैशद्यार्थं । ४. त-तत्र ।

तदैळायां सोमपुत्राज्जातो राजा पुरूरवाः। तमुर्वशी तु चकमे प्रतिष्ठानपुरे स्थितम् ॥८॥
तत्पादन्यत्र नग्नं त्वां दृष्ट्वा यामि यथागतम्[1]। सुता उरणकौ त्वं[2] च[2] समीपं कुरु मे द्रुतम् ॥९॥
इति सा समयं कृत्वा रमयामास तं नृपम्। चतुरब्दे गते रात्रौ देवैरुरणकद्वयम् ॥१०॥
हृतं तस्य ध्वनिं श्रुत्वा नग्न एव स भूपतिः। उत्थाय जित्वा तावागच्छेत्येवं जल्पकोऽन्यतः[3]॥११॥
विद्युता दर्शितोऽस्यै[4] स[4] नग्न एव पुरूरवाः। अथ सा दृष्टसमया[5] ह्युर्वशी तु दिवं ययौ[6]॥१२॥
तत उन्मत्तवद्राजा दिदृक्षुस्तामितस्ततः। कुर्वन्नन्वेषणं तीरे सरसो मानसस्य ताम् ॥१३॥
विहरन्तीमप्सरोभिः सहापश्यत्पुरूरवाः। पुनः स चकमे भोक्तुमुर्वशीं च पुरूरवाः ॥१४॥
साश्रं सापश्यदुक्ता च प्रत्याचष्टे व्रजेति तम्। इत्युर्वश्यैळसंवादमिममेषोऽप्यसूचयत्[7] ॥१५॥इति॥

अत्र वाजसनेयकम्—'उर्वशी हाप्सराः पुरूरवसमैळं चकमे तँ ह विन्दमानोवाच त्रिः स्म माह्नो[8] वैतसेन दण्डेन हतादकामाँ स्म मा निपद्यासै मो स्म त्वा नग्नं दर्शमेष वै न स्त्रीणामुपचार इति। सा हास्मिञ्ज्योगुवासापि हास्माद्गर्भिण्यास तावज्ज्योग्घास्मिन्नुवास ततो ह गन्धर्वाः समूदिरे ज्योग्वा इयमुर्वशी मनुष्येष्ववात्सीदुपजानीत यथेयं पुनरागच्छेदिति तस्यै हाविद्वयुरणा शयन उपबद्धास ततो ह गन्धर्वा अन्यतरमुरणं प्रमेथुः। सा होवाचावीर इव बत मेऽजन इव पुत्रं हरन्तीति द्वितीयं प्रमेथुः सा ह तथैवोवाच। अथ हायमीक्षांचक्रे कथं नु तदवीरं कथमजनं[9] स्याद्यत्राहँ स्यामिति स नग्न एवानूत्पपात चिरं तन्मेने यद्वासः पर्यधास्यत ततो ह गन्धर्वा विद्युतं जनयांचक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो हैवेयं तिरोबभूव पुनरैमीत्येत्तिरोभूताँ स आध्या जल्पन्कुरुक्षेत्रँ समया चचारान्यतःप्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज तद्ध ता अप्सरस आतयो भूत्वा परिपुप्लुविरे। तँ हेयं ज्ञात्वोवाच अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा आविरसामेति तथेति तस्मै हाविरासुः। ताँ हायं ज्ञात्वाभिपरोवाद हये जाये मनसा' (श. ब्रा. ११. ५. १) इत्यादि ॥

**हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु।**
**न नौ मन्त्रा अनुदितास एते मयस्करन्परतरे चनाहन् ॥ १ ॥**

हये। जाये। मनसा। तिष्ठ। घोरे। वचांसि। मिश्रा। कृणवावहै। नु।
न। नौ। मन्त्राः। अनुदितासः। एते। मयः। करन्। परऽतरे। चन। अहन् ॥ १ ॥

पुरूरवसो[10] वाक्यम्। जायां पश्यन् वदति। $^{v}$हये हे $^{v}$घोरे। अस्माकं दुःखजनकत्वात्। घोरकारिणि $^{v}$जाये $^{v}$मनसा अस्मदुपर्यनुरागवता मनसा युक्ता सती $^{v}$तिष्ठ क्षणमात्रं संनिधावेव निवस। हये इत्यस्य निघाताभावश्छान्दसः। किमर्थं संस्थानमिति तत्राह। $^{v}$वचांसि वाक्यानि मिश्राणि[11] उक्तिप्रत्युक्तिरूपाणि $^{v}$नु अद्य क्षिप्रं वा $^{v}$कृणवावहै करवावहै। 'कृवि हिंसाकरणयोः'। 'धिन्विकृण्व्योरच' इत्युप्रत्ययः। किमर्थं वचसः करणमिति[12] चेदुच्यते। $^{v}$नौ आवयोः $^{v}$मन्त्राः रहस्यार्थाः $^{v}$एते विवक्षिताः $^{v}$अनुदितासः अव्याह्रियमाणाः[13] परस्परमसंभाष्यमाणा गुम्फिताः सन्तः $^{v}$परतरे $^{v}$चनाहन्। चनेति निपातसमुदायश्चार्थे। अनेकेषु दिवसेषु चरमेऽप्यहनि $^{v}$मयः। सुखनामैतत्। सुखं $^{v}$न $^{v}$करन् कुर्वन्ति[14]। अतः कृणवावहा इति ॥

---

१. त१.३.४.५.७–तथागतं; त२.६.८-भ१.२.८–तथागतां। २. त१.२.३.६–त्वस्य। ३. त१.२.३.६.७–जल्पको नृपः; त४.४–जल्पको नृपा। ४. भ२–दर्शिता रात्रौ। ५. भ५–नष्टसमया। ६. भ२–गता। ७. भ५–°संवादमितिहासोप्य°। ८. त१-भ२.८–माह्नो श्नथयो। ९. भ५–कथं नु तदजनं। १०. त-मु–हये जाये पुरुरवसो। ११. ग–मिश्रा मिश्राणि। १२. त१.६.७.८-भ–कारणमिति। १३. त–अव्याक्रियमाणाः। १४. ग-त४–न कुर्वंति।

किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव ।
पुरूरवः पुनरस्तं परेहि दुरापना वातइवाहमस्मि ॥ २ ॥

किम् । एता । वाचा । कृणव । तव । अहम् । प्र । अक्रमिषम् । उषसाम् । अग्रियाऽइव ।
पुरूरवः । पुनः । अस्तम् । परा । इहि । दुःऽआपना । वातःऽइव । अहम् । अस्मि ॥ २ ॥

अनया तमुर्वशी प्रत्युवाच । ᵛएता एतया ᵛवाचा केवलया पुनःसंभोगरहितया ᵛकिं ᵛकृणव किं करवाव । ᵛअहं त्विदानीं त्वत्सकाशात् ᵛप्राक्रमिषम् अतिक्रान्तवत्यस्मि । अतिक्रमे दृष्टान्तः । ᵛउषसामग्रियेव । बह्वीनामुषसां मध्येऽग्र्याग्रे भवा पूर्वोषाः प्राक्रमीद्यथा तथाहमपीति । यस्मादेवं तस्माद्धे ᵛपुरूरवः त्वं ᵛपुनः अस्मत्सकाशात् ᵛअस्तं गृहं ᵛपरेहि परागच्छ । मा मय्यभिलाषं कार्षीः । स्वस्या दुर्ग्रहत्वमाह । ᵛअहं ᵛवातइव वायुरिव ᵛदुरापना दुष्प्रापा दुरापा वा ᵛअस्मि । 'दुरापा वा अहं त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवेनं तदुवाच' (श. ब्रा. ११. ५. १. ७) इति वाजसनेयकम् ॥

इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः ।
अवीरे क्रतौ वि दविद्युतन्नोरा न मायुं चितयन्त धुनयः ॥ ३ ॥

इषुः । न । श्रिये । इषुऽधेः । असना । गोऽसाः । शतऽसाः । न । रंहिः ।
अवीरे । क्रतौ । वि । दविद्युतत् । न । उरा । न । मायुम् । चितयन्त । धुनयः ॥ ३ ॥

अनया पुरूरवाः स्वस्य विरहजनितं वैक्लव्यं तां प्रति ब्रूते । ᵛइषुधेः । इषवो धीयन्तेऽत्रेतीषुधि-र्निषङ्गः । ततः सकाशात् ᵛइषुः ᵛअसना असनाय प्रक्षेप्तुं[1] ᵛन भवति ᵛश्रिये विजयार्थम् । त्वद्विर-हाद्युद्धस्य बुद्धावप्यनिधानात् । तथा ᵛरंहिः वेगवानहं शत्रुसकाशात् ᵛगोषाः तेषां शत्रूणां गवां संभक्ता ᵛन अभवम् । तथा ᵛशतसाः शतानामपरिमितानां शत्रुधनानां संभक्ता नाभवम् । किंच ᵛअवीरे वीरवर्जिते ᵛक्रतौ[2] राजकर्मणि सति ᵛन ᵛवि ᵛदविद्युतत् न विद्योतते मत्सामर्थ्यम् । किंच ᵛधुनयः कम्पयितारोऽस्मदीया भटाः ᵛउरा उरौ । 'सुपां सुलुक्°' इति सप्तम्या डादेशः । विस्तीर्णे संग्रामे ᵛमायुम् । मीयते प्रक्षिप्यत इति मायुः शब्दः । 'कृवापाजि°' इत्यादिनोण् । सिंहनादं ᵛन ᵛचितयन्त न बुध्यन्ते । 'चिती संज्ञाने' । अस्माण्णिचि संज्ञापूर्वकस्य विधेरनित्यत्वाल्लघूपध-गुणाभावः । छान्दसो लङ्[3] ॥

सा वसु दधती श्वशुराय वय उषो यदि वष्ट्यन्तिगृहात् ।
अस्तं ननक्षे यस्मिञ्चाकन्दिवा नक्तं श्नथिता वैतसेन ॥ ४ ॥

सा । वसु । दधती । श्वशुराय । वयः । उषः । यदि । वष्टि । अन्तिऽगृहात् ।
अस्तम् । ननक्षे । यस्मिन् । चाकन् । दिवा । नक्तम् । श्नथिता । वैतसेन ॥ ४ ॥

इदमुत्तरं[4] चोर्वशीवाक्यम्[5] । आद्येन[6] पुरात्मना कृतमुषसे[6] निवेदयति । हे ᵛउषः ᵛसा इयमुर्वशी ᵛवसु वासकं ᵛवयः अन्नं ᵛश्वशुराय भर्तुः पुरूरवसः पित्रे ᵛदधती प्रयच्छन्ती तत्र गृहे

---

१. ग-त३.४.५-भ-'प्रक्षेप्तुं' नास्ति; त१.२.६.७.८-प्रक्षिप्तुं । २. भ-'क्रतौ' नास्ति । ३. त-लुक्; भ-लुङ् । ४. त-मु-इयमुत्तरा । ५. त-मु-चोर्वशीवाक्ये । ६. ग-अनेन परमात्मना कृतमुषसे; त-आद्येन पुत्रात्मना कृतमुषसे; भ७-आद्येन पुरातनकृतमुषसे ।

स्थिता ᵛयदि पतिं ᵛवष्टि कामयते तदा ᵛअन्तिगृहात्। स्वभर्तृभोगगृहान्तिके यत् श्वशुरस्य भोजनगृहं तदन्तिगृहम्। तस्माद्गृहात्सोर्वशी ᵛअस्तं पतिगृहं ᵛननक्षे व्याप्नोति। ᵛयस्मिन्[१] गृहे ᵛचाकन् कामयत उर्वशी। सा[२] चोर्वशी[२] ᵛदिवा ᵛनक्तम् अहनि रात्रौ च ᵛवैतसेन। 'शेपो वैतस इति पुंस्प्रजननस्य' (निरु. ३. २१) इति निरुक्तम्। पुंस्प्रजननेन ᵛश्नथिता ताडिता च[३] भवति। एवमुर्वश्यात्मानं परोक्षेण निर्दिदेश॥

त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म मेऽव्यत्यै पृणासि।
पुरूरवोऽनु ते केतमायं राजा मे वीर तन्व१स्तदासीः॥ ५॥

त्रिः। स्म। मा। अह्नः। श्नथयः। वैतसेन। उत। स्म। मे। अव्यत्यै। पृणासि।
पुरूरवः। अनु। ते। केतम्। आयम्। राजा। मे। वीर। तन्वः। तत्। आसीः॥ ५॥

अनेन पुरूरवसमेव संबोध्योक्तवती। हे पुरूरवः त्वं ᵛमा माम् ᵛअह्नः अहनि ᵛवैतसेन दण्डेन पुंव्यञ्जनेन ᵛत्रिः त्रिवारम्। 'द्वित्रिचतुर्भ्यः सुच्' (पा. सू. ५.४.१८)। ᵛश्नथयः ᵛस्म। अश्नथयः अताडयः। 'कृत्वोऽर्थप्रयोगे°' (पा. सू. २. ३. ६४) इति कालवाचिनोऽहःशब्दादधिकरणे षष्ठी। ᵛउत अपि च। ᵛस्म इति पूरणः। ᵛअव्यत्यै। सपत्नीभिः सह पर्यायेण पतिमागच्छति सा व्यती। न तादृश्यव्यती। तस्यै ᵛमे मह्यं ᵛपृणासि पूरयसि। एवं बुद्ध्या हे ᵛपुरूरवः ᵛते तव ᵛकेतं गृहम् ᵛअनु ᵛआयम् अन्वगमं पूर्वम्। हे ᵛवीर ᵛराजा त्वं च ᵛमे मम ᵛतन्वः शरीरस्य ᵛतत् तदा ᵛआसीः अभवः। सुखयितेति शेषः। परमप्येवं[४] मन्तव्यं[४] किमिति कातरो[५] भवसीत्युवाच॥ ॥१॥

या सुजूर्णिः श्रेणिः सुम्नआपिर्ह्रदेचक्षुर्न ग्रन्थिनी चरण्युः।
ता अञ्जयोऽरुणयो न सस्रुः श्रिये गावो न धेनवोऽनवन्त॥ ६॥

या। सुऽजूर्णिः। श्रेणिः। सुम्नेऽआपिः। ह्रदेऽचक्षुः। न। ग्रन्थिनी। चरण्युः।
ताः। अञ्जयः। अरुणयः। न। सस्रुः। श्रिये। गावः। न। धेनवः। अनवन्त॥ ६॥

पुरूरवसो वाक्यम्। ᵛया ᵛसुजूर्णिः सुजवा एतन्नामिकास्ति तथा या ᵛश्रेणिः या ᵛसुम्नआपिः या ᵛह्रदेचक्षुः। नकारः समुच्चये। ताभिश्चान्यभिरालिभूताभिर्नामिनीभिः सहिता ᵛग्रन्थिनी ग्रन्थनवती संदर्भवती ᵛचरण्युः चरणशीलोर्वश्याजगाम। यद्वा। ग्रन्थिनीत्येतत्सखिभूताप्सरोनामधेयम्। या सुजूर्णिः सुजवोर्वशी सा ताभिः सह जगाम[६]। ᵛताः अप्सरसः ᵛअञ्जयः आभरणोपेताः ᵛअरुणयः अरुणवर्णाः ᵛन ᵛसस्रुः पूर्ववन्न गच्छन्ति। ᵛश्रिये श्रयणाय ᵛधेनवः नवप्रसूताः ᵛगावो ᵛन गाव इव। आश्रयार्थं[७] यथा गावः ᵛअनवन्त शब्दायन्ते तथा न शब्दयन्तीति व्यतिरेके दृष्टान्तः॥

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्य१ः स्वगूर्ताः।
महे यत्त्वा पुरूरवो रणायावर्धयन् दस्युहत्याय देवाः॥ ७॥

सम्। अस्मिन्। जायमाने। आसत। ग्नाः। उत। ईम्। अवर्धन्। नद्यः। स्वऽगूर्ताः।
महे। यत्। त्वा। पुरूरवः। रणाय। अवर्धयन्। दस्युऽहत्याय। देवाः॥ ७॥

---

१. त-मु–तस्मिन्। २. त१.२.३.६.७–पुरूरवसो वाचं; त४.५–पुरूरवसा चोर्वशी। ३ ग-त–'च' नास्ति। ४. ग-भ–परमप्युपरंतव्यं। ५. भ१–कामतरो; भ४–कामवशो; भ७–कामुकतरो। ६. ग–आजगाम। ७. ग-भ-मु–आशिरार्थं।

अनयैताभिः सह संसर्गस्त्वयानुभूत इत्युर्वशी वदति । ᵛअस्मिन् पुरूरवसि ᵛजायमाने सति[1] ᵛग्नाः अप्सरसो देववेश्या अपि ᵛसम् ᵛआसत संगता अभवन् । अथवा जायमाने यज्ञार्थं प्रवर्धमाने[2] सति ग्ना देवपत्न्योऽपि समासत समभवन् । ᵛउत अपि च ᵛईम् एनं पुरूरवसं ᵛस्वगूर्ताः स्वयंगामिन्यः ᵛनद्यः तासामाश्रयभूता अवर्धयन् । किंच हे ᵛपुरूरवः ᵛयत् यस्मात् ᵛत्वा त्वां ᵛमहे महते ᵛरणाय रमणीयाय संग्रामाय ᵛदस्युहत्याय दस्युहननाय[3] ᵛदेवाः ᵛत्वाम् ᵛअवर्धयन् ॥

सचा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।
अप स्म मत्तरसन्ती न भुज्युस्ता अत्रसन्रथस्पृशो नाश्वाः ॥ ८ ॥

सचा । यत् । आसु । जहतीषु । अत्कम् । अमानुषीषु । मानुषः । निऽसेवे ।
अप । स्म । मत् । तरसन्ती । न । भुज्युः । ताः । अत्रसन् । रथऽस्पृशः । न । अश्वाः ॥८॥

इदमादित्रीण्यैळवाक्यानि । तत्रादितो द्वाभ्यामुर्वशीमन्याश्च सह स्तौति । ᵛयत् यदा ᵛसचा सहायभूतः पुरूरवाः ᵛअत्कं स्वकीयं रूपम् । अत्क इति रूपनाम । ᵛजहतीषु परित्यजन्तीषु ᵛअमानुषीषु देवताभूतास्वप्सरःसु ᵛमानुषः सन् ᵛनिषेवे अभिमुखं गच्छति तदानीं ᵛताः अप्सरसः ᵛमत् मत्तः ᵛअप अपसृत्य ᵛअत्रसन् । त्रसतिर्गतिकर्मा । गच्छन्ति । पलायने दृष्टान्तः । ᵛतरसन्ती ᵛभुज्युः[4] ᵛन[4] । तरसन्नाम मृगः । तस्य स्त्री भुज्युर्भोगसाधनभूता स्त्री मृगी । सा यथा व्याधाद्भीता पलायते । किंच ᵛरथस्पृशो ᵛनाश्वाः रथे नियुक्ता अश्वा इव । यथा[5] ते[5] पलायन्ते तद्वत्पलायन्त इति । उर्वश्यानेकाभिरस्माभिः सह भोगमनुभुक्तवानसीत्युक्तः प्रत्याचष्टे ॥

यदासु मर्तो अमृतासु निस्पृक्सं क्षोणीभिः क्रतुभिर्न पृङ्क्ते ।
ता आतयो न तन्वः शुम्भत स्वा अश्वासो न क्रीळयो दन्दशानाः ॥ ९ ॥

यत् । आसु । मर्तः । अमृतासु । निऽस्पृक् । सम् । क्षोणीभिः । क्रतुऽभिः । न । पृङ्क्ते ।
ताः । आतयः । न । तन्वः । शुम्भत । स्वाः । अश्वासः । न । क्रीळयः । दन्दशानाः ॥९॥

ᵛयत् यदा ᵛआसु ᵛअमृतासु अप्सरःसु ᵛमर्तः मनुष्यः पुरूरवाः ᵛनिस्पृक् निःशेषेण स्पृशन् ᵛक्षोणीभिः वाग्भिः ᵛक्रतुभिर्न कर्मभिश्च ᵛसं ᵛपृङ्क्ते संपर्कं करोति । नकारः समुच्चयार्थः । ᵛताः अप्सरसः ᵛआतयः आतिभूतास्तदानीं ᵛस्वाः ᵛतन्वः आत्मीयानि रूपाणि ᵛन ᵛशुम्भत न प्रकाशयन्ति । ᵛअश्वासो ᵛन अश्वा इव ᵛक्रीळयः संक्रीडमानाः ᵛदन्दशानाः दन्दशूका जिह्वाभिरात्मीयाः सृक्का भक्षयन्तः । ते यथा चापलयेन धावन्तः स्वरूपं न प्रयच्छन्ति रथिकाय तद्वदिति दुःखादुच्यते ॥

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥ १० ॥

विऽद्युत् । न । या । पतन्ती । दविद्योत् । भरन्ती । मे । अप्या । काम्यानि ।
जनिष्टो इति । अपः । नर्यः । सुऽजातः । प्र । उर्वशी । तिरत । दीर्घम् । आयुः ॥१०॥

१. ग-त१.२.६.७.८-भ४.५.६.८-वर्धमाने; त३-मु-'सति' नास्ति; भ२-सति वर्धमाने । २. त१.२.३.६.७.८-भ२.६.८-प्रवृद्धमाने; त४.५-प्रवर्तमाने । ३. ग-त-दस्युहननाय च । ४. त३.७-न भुज्युः । ५. ग-त-ते यथा ।

अनयोर्वशीं स्तौति। या उर्वशी विद्युन्न विद्युदिव पतन्ती गच्छन्ती दविद्योत् द्योतते। किं कुर्वती। अप्या। अप इत्यन्तरिक्षनाम। तत्संबन्धीनि व्याप्तानि[1] वा[1] काम्यानि अस्मदभिमतान्युदकानि वा मे मह्यं भरन्ती संपादयन्ती। यदा आगतायास्तस्याः सकाशात्[2] अपः व्याप्तः कर्मसु कर्मवान्[3] वा नर्यः[3] नरेभ्यो हितः सुजातः सुजननः पुत्रः जनिष्टो अजनिष्ट उत्पद्यते तदानीं मम[4] उर्वशी[4] दीर्घमायुः प्र तिरत प्रवर्धयति। 'प्रजामनु प्र जायसे तदु ते मर्त्यामृतम्' (तै. ब्रा. १. ५. ५. ६) इति हि मन्त्रः॥ ॥ २ ॥

**जज्ञिष इत्था गोपीथ्याय हि दधाथ तत्पुरूरवो म ओजः।**
**अशासं त्वा विदुषी सस्मिन्नहन्न म आशृणोः किमभुग्वदासि ॥ ११ ॥**

जज्ञिषे। इत्था। गोऽपीथ्याय। हि। दधाथ। तत्। पुरूरवः। मे। ओजः।
अशासम्। त्वा। विदुषी। सस्मिन्। अहन्।
न। मे। आ। अशृणोः। किम्। अभुक्। वदासि॥ ११ ॥

इत्था इत्थं गोपीथ्याय। गौः पृथिवी। पीथं पालनम्। स्वार्थिकस्तद्धितः। भूमे रक्षणाय जज्ञिषे हि जातोऽसि खलु पुत्ररूपेण। 'आत्मा वै पुत्रनामा' इति श्रुतेः। पुनस्तदेवाह। हे पुरूरवः मे ममोदरे मयि ओजः अपत्योत्पादनसामर्थ्यं दधाथ[5] मयि निहितवानसि। तत् तथास्तु। अथापि स्थातव्यमिति चेत् तत्राह। अहं विदुषी भावि कार्यं जानती[6] सस्मिन्नहन्[7] सर्वस्मिन्नहनि त्वया[8] कर्तव्यं त्वा त्वाम् अशासं शिक्षितवत्यस्मि। त्वं मे मम वचनं न आशृणोः न शृणोषि। किं त्वम् अभुक् अभोक्तापालयिता प्रतिज्ञातार्थमपालयन् वदासि[9] हये जाय इत्यादिकरूपं प्रलापम्। वदेर्लेट्याडागमः। दिवसे[10] त्रिवारं यभस्व एडकद्वयमस्माकं पुत्रत्वेन परिकल्पय अपत्योत्पादनपर्यन्तं[11] वसामि नग्नं त्वां यदाद्राक्षं तदा गच्छामीत्येवंरूपो मिथःसमयः 'उर्वशी हाप्सराः पुरूरवसमैळं चकमे तं ह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन दण्डेन' (श. ब्रा. ११. ५. १) इत्यादि वाजसनेयकमुदाहृतम्॥

**कदा सूनुः पितरं जात इच्छाच्चक्रन्नाश्रु वर्तयद्विजानन्।**
**को दंपती समनसा वि यूयोदध यदग्निः श्वशुरेषु दीदयत् ॥ १२ ॥**

कदा। सूनुः। पितरम्। जातः। इच्छात्। चक्रन्। न। अश्रु। वर्तयत्। विऽजानन्।
कः। दंपती इति दम्ऽपती। सऽमनसा। वि। युयोत्।
अध। यत्। अग्निः। श्वशुरेषु। दीदयत्॥ १२ ॥

१. त–आप्यानि; मु–अप्यानि। २. ग४-भ५–सकाशाद्यदि; त१.२.३.६.८-भ१.४–सकाशाद्यद्वि; त४–सकाशादादि; त७–सकाशाद्यद्; भ२.६.७–सकाशाद्यद्वि। ३. ग१.२–कृतवान्वा नर्यो; त१.२.३.६–नवान्नर्यो; त४–कर्मवान्वा नर्यो; ग४–नवा नर्यो; त७–तव त्वां नर्यो; त८-भ१.२.४.६.८–तवान्वा नर्यो; भ७–श्रवतन्वा नर्यो। ४. त–प्रोर्वशी। ५. ग-त-मु–दधाथ निदधाथ। ६. ग-त-भ–जानती त्वं। ७. ग४–त्वंनस्मिन्नहन्; त२.६–त्वंस्मिन्नहन्; त३.४.५–त्वमस्मिन्नहन्। ८. त-मु–त्वया यत्। ९. ग-त४.५-भ५–वदासि वदसि; त८-भ२.८–वदसि। १०. ग-त-भ–अहनि दिवसे। ११. त१.२.३.६.७–पुत्रोत्पादनपर्यंतं।

इदं पुरूरवसो वाक्यम्। ᵛकदा कस्मिन् काले ᵛसूनुः तवोदरजातः सन् ᵛपितरं माम् ᵛइच्छात् इच्छेत्। 'इषु इच्छायाम्'। लेटि शपि 'इषुगमियमां छः' इति छादेशः। 'लेटोऽडाटौ' इत्यडागमः। कदा वा ᵛविजानन् पितरं मामधिगच्छन् ᵛचक्रन् क्रन्दमानः ᵛनाश्रु ᵛवर्तयत्[1]। नेति चार्थे। किंच ᵛकः किंविधः सन् सूनुः ᵛसमनसा समनसौ समनस्कौ[2] ᵛदंपती जायापती त्वां मां च ᵛवि ᵛयूयोत् विश्लेषयेत्। 'यु मिश्रणामिश्रणयोः'। यौतेश्छान्दसः शपः श्लुः। तुजादित्वादभ्यासस्य दीर्घः। ᵛअध अधुना ᵛयत् यदा ᵛअग्निः तव हृदयस्थितस्तेजोरूपो गर्भः ᵛश्वशुरेषु ᵛदीदयत् दीप्यते। दीदयतिर्दीप्तिकर्मेति[3] नैरुक्तो धातुः॥

**प्रति॑ ब्रवाणि व॒र्तय॑ते॒ अश्रु॑ च॒क्रन्न क्रन्द॑दा॒ध्ये॑ शि॒वायै॑।**
**प्र तत्ते॑ हिनवा॒ यत्ते॑ अ॒स्मे परे॒ह्यस्तं॑ न॒हि मू॑र॒ माप॑ः॥ १३॥**

प्रति॑। ब्र॒वा॒णि॒। व॒र्तय॑ते। अश्रु॑। च॒क्रन्। न। क्र॒न्द॒त्। आ॒ऽध्ये॑। शि॒वायै॑।
प्र। तत्। ते॒। हि॒न॒व॒। यत्। ते॒। अ॒स्मे इति॑।
परा॑। इ॒हि॒। अस्त॑म्। न॒हि। मू॒र॒। मा॒। आप॑ः॥ १३॥

इदमुर्वशीवाक्यम्। हे पुरूरवः त्वां ᵛप्रति ᵛब्रवाणि प्रतिवच्मि। त्वदपत्यम्[4] ᵛअश्रु बाष्पं ᵛवर्तयते वर्तयिष्यति। ᵛआध्ये आध्याते वस्तुनि ᵛशिवायै शिवे कल्याणे समुपस्थिते सति ᵛचक्रन् रुदन्नश्रूणि विमुञ्चन् ᵛन ᵛक्रन्दत्। नकारश्चार्थे। रोदयति चेत्यर्थः। ᵛतत् त्वदपत्यं ᵛते तुभ्यं ᵛहिनव प्रहिणोमि ᵛयत् अपत्यं ᵛते तव संबन्धि ᵛअस्मे अस्मासु निहितम्। त्वं ᵛपरेह्यस्तम्। अस्तमिति गृहनाम। स्वगृहं प्रतिगच्छ। हे ᵛमूर मूढ ᵛमा मां ᵛनहि ᵛआपः न प्राप्नोषि। हिनवेत्यत्र हिनोतेः 'छन्दसि लुङ्लङ्लिटः' इति भविष्यदर्थे लङि मिपोऽमादेशः। गुणः। अन्त्यलोपश्छान्दसः। बहुलवचनादडभावः। आपः। 'आप्लृ व्याप्तौ'। लिटि 'तिङां तिङो भवन्ति' इति थलो णल्॥

**सु॒दे॒वो अ॒द्य प्र॒पते॒दना॑वृत्परा॒वत॑ं पर॒मां गन्त॒वा उ॑।**
**अधा॒ शयी॑त॒ निरृ॑ते॒रु॒पस्थेऽधै॑नं॒ वृका॑ रभ॒सासो॑ अ॒द्युः॥ १४॥**

सु॒ऽदे॒वः। अ॒द्य। प्र॒ऽपते॑त्। अना॑वृत्। प॒रा॒ऽवत॑म्। प॒र॒माम्। गन्त॒वै। ॐ इति॑।
अध॑। शयी॑त। निःऽऋ॑तेः। उ॒प॒ऽस्थे॑। अध॑। ए॒न॒म्। वृका॑ः। र॒भ॒सास॑ः। अ॒द्युः॥ १४॥

अथ परिद्यूनः पुरूरवा उवाच। ᵛसुदेवः त्वया सह सुक्रीडः पतिः ᵛअद्य ᵛप्रपतेत्। अत्रैव प्रपततु। अथवा ᵛअनावृत् अनावृत्तः सन् ᵛपरमां ᵛपरावतं दूरादपि दूरदेशं ᵛगन्तवै गन्तुं महाप्रस्थानगमनं कुर्यात्। ᵛअध अथवा यत्रकुत्रापि गन्तुमसमर्थः ᵛनिर्ऋतेः पृथिव्याः ᵛउपस्थे ᵛशयीत शयनं कुर्यात्। यद्वा। निर्ऋतिः पापदेवता। तस्या उपस्थे उत्संगे संनिधौ म्रियतामित्यर्थः। ᵛअध अथवा ᵛएनं ᵛवृकाः आरण्याः श्वानः ᵛरभसासः[5] वेगवन्तः ᵛअद्युः भक्षयन्तु। अत्र वाजसनेयकं—'सुदेवोऽद्योद्वा बध्नीत प्र वा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाच' (श. ब्रा. ११. ५. १. ८) इति॥

१. ग-त७-वर्तयत् वर्तयेत्; त१.२.६.८-भ-वर्तयत् वर्तयेत। २. ग-त-भ-मु-'समनस्कौ' नास्ति। ३. त४-दीधीङ् दीप्तिदेवनयोः। अस्माण्यंताल्लुटि वटि दददीदेतिर्दीप्तिकर्मेति। ४. ग.त१.२.३.६.७.८-भ-तदपत्यं; त४.५-यदपत्यं। ५. त-रभसासो रभसः।

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन् ।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता ॥ १५ ॥

पुरूरवः । मा । मृथाः । मा । प्र । पप्तः । मा । त्वा । वृकासः । अशिवासः । ऊँ इति । क्षन् ।
न । वै । स्त्रैणानि । सख्यानि । सन्ति । सालावृकाणाम् । हृदयानि । एता ॥ १५ ॥

तमितरा प्रत्युवाच । हे पुरूरवः त्वं मा मृथाः मृतिं मा प्राप्नुहि । म्रियतेर्लुङि थासि 'ह्रस्वादङ्गात्' इति सिचो लोपः । तथा मा प्र पप्तः अत्रैव पतनं मा कार्षीः। पतेर्लुङि लृदित्वात् 'पुषादि°' इत्यादिना च्लेरङ् । 'पतः पुम्' इति पुम् । तथा त्वा त्वाम् अशिवासः अशुभाः वृकासः वृकाः मा उ क्षन् । उ इत्येवकारार्थे । अक्षन् । माभ्यवहारयन्तु । किमित्येवमस्मदुपर्याग्रहं करोषि । मा कार्षीरित्यर्थः । अदेर्लुङि 'लुङ्सनोर्घस्लृ' (पा. सू. २. ४. ३७) इति घस्लादेशः । 'मन्त्रे घस°' इति च्लेर्लुक् । 'गमहन°' इत्यादिनोपधालोपः । 'शासिवसि°' इत्यादिना षत्वम् । 'खरि च' इति चर्त्वम् । बाहुलकादडभावः । अथ[1] स्वस्नेहस्यासारतामाह[1] । स्त्रैणानि स्त्रीणां कृतानि सख्यानि न वै सन्ति । न सन्ति खलु । अभावे कारणमाह । एता एतानि सख्यानि सालावृकाणां हृदयानि तेषां हृदयानि यथा वत्सादीनां विश्वासापन्नानां घातुकानि तद्वत् । अत्र वाजसनेयकं—'मैतदादृथा न वै स्त्रैणं सख्यमस्ति पुनर्गृहानिहीति हैवैनं तदुवाच' (श. ब्रा. ११. ५. १. ९) इति ॥ ॥ ३ ॥

यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः ।
घृतस्य स्तोकं सकृदह्न आश्नां तादेवेदं तातृपाणा चरामि ॥ १६ ॥

यत् । विऽरूपा । अचरम् । मर्त्येषु । अवसम् । रात्रीः । शरदः । चतस्रः ।
घृतस्य । स्तोकम् । सकृत् । अह्नः । आश्नाम् । तात् । एव । इदम् । ततृपाणा । चरामि ॥ १६ ॥

यत् यदा विरूपा[2] मनुष्यसंपर्काद्विगतसहजभूतदेवरूपा पत्यानुकूल्येन नानारूपा वा मर्त्येषु मनुष्येषु अचरं तदानीं रात्रीः प्ररमयित्रीः चतस्रः शरदः अवसं न्यवसम् । अत्यन्तसंयोगे द्वितीया । तदानीं घृतस्य स्तोकं सकृदह्न आश्नाम् । तादेव तेनैव स्तोकेनाहम् इदं संप्रति तातृपाणा तृप्ता सती चरामि ॥

अन्तरिक्षप्रां रजसो विमानीमुप शिक्षाम्युर्वशीं वसिष्ठः ।
उप त्वा रातिः सुकृतस्य तिष्ठान्नि वर्तस्व हृदयं तप्यते मे ॥ १७ ॥

अन्तरिक्षऽप्राम् । रजसः । विऽमानीम् । उप । शिक्षामि । उर्वशीम् । वसिष्ठः ।
उप । त्वा । रातिः । सुऽकृतस्य । तिष्ठात् । नि । वर्तस्व । हृदयम् । तप्यते । मे ॥ १७ ॥

अन्तरिक्षप्रां स्वतेजसान्तरिक्षस्य पूरयित्रीं तथा रजसः रञ्जकस्योदकस्य विमानीं निर्मात्रीम् उर्वशीं वसिष्ठः समानानां मध्येऽतिशयेन वासयिताहम् उप शिक्षामि वशं नयामि । सुकृतस्य शोभनकर्मणः रातिः दाता पुरूरवाः त्वा त्वाम् उप तिष्ठात् उपतिष्ठतु । मे हृदयं तप्यते[3]। अतो नि वर्तस्व । एवं राजोवाच[3] ॥

---

१. त-मु–अथास्य स्नेहस्या° । २. त-मु–विरूपा परं । ३. भ–'तप्यते...राजोवाच' नास्ति ।

इति॑ त्वा दे॒वा इ॒म आ॑हुरैळ॒ यथे॑मे॒तद्भव॑सि मृ॒त्युब॑न्धुः ।
प्र॒जा ते॑ दे॒वान् ह॒विषा॑ यजाति स्व॒र्ग उ॒ त्वमपि॑ मादयासे ॥ १८ ॥

इति॑ । त्वा॒ । दे॒वाः । इ॒मे । आ॒हुः । ऐळ॒ । यथा॑ । ई॒म् । ए॒तत् । भव॑सि । मृ॒त्युऽब॑न्धुः ।
प्र॒ऽजा । ते॒ । दे॒वान् । ह॒विषा॑ । य॒जा॒ति॒ । स्वः॒ऽगे । ऊँ॒ इति॑ । त्वम् । अपि॑ । मा॒द॒या॒से॒ ॥ १८ ॥

हे[1] ᵛऐळ पुरूरवः ᵛत्वा त्वाम् ᵛइमे ᵛदेवाः ᵛइति ᵛआहुः । ᵛमृत्युबन्धुः मृत्योः[1] बन्धकः मृत्योर्बन्धुभूतो वा मृत्युवशमप्राप्नुवंस्त्वं ᵛयथैं यथा ᵛएतद्भवसि[2] भविष्यसि ᵛप्रजा प्रकर्षेण जायमानस्त्वं[3] ᵛते तव संबन्धिनो यष्टव्यान् ᵛदेवान् ᵛहविषा ᵛयजासि यजसि । ᵛस्वर्गे ᵛउ स्वर्ग एव ᵛत्वमपि ᵛमादयासे मादयसेऽस्माभिः सह । एवमाहुरित्यर्थः । यस्मादेवं करोषि तस्मादभिलापं हित्वा सुखी भवेति[4] सेयं पुरूरवसं प्रत्युवाच ॥ ॥ ४ ॥

अथ 'प्र ते महे' इति त्रयोदशर्चं षष्ठं सूक्तम् । बरुर्नामाङ्गिरस ऋषिः इन्द्रस्य पुत्रः सर्वहरिर्वा नाम । द्वादशीत्रयोदश्यौ त्रिष्टुभौ शिष्टा एकादश जगत्यः । इन्द्रस्याश्वौ हरी । तयोरत्र स्तूयमानत्वात्तद्देवताकमिदम् । तथा चानुक्रान्तं—'प्र ते सप्तोना बरुः सर्वहरिर्वैन्द्रो हरिस्तुतिर्द्वित्रिष्टुबन्तम्[5]' इति । अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिन एतत्सूक्तम् । सूत्रितं च—'प्र ते महे ऊती शचीवस्तव वीर्येणेति याज्या' ( आश्व. श्रौ. ६. ४ ) इति । षोडशिशस्त्रेऽप्यायस्तृचः शंसनीयः। सूत्रितं च—'प्र ते महे विदथे शंसिषं हरी इति तिस्रो जगत्यः' ( आश्व. श्रौ. ६. २ ) इति ॥

प्र ते॑ म॒हे वि॒दथे॑ शंसिषं॒ हरी॒ प्र ते॑ वन्वे व॒नुषो॑ हर्य॒तं मद॑म् ।
घृ॒तं न यो हरि॑भि॒श्चारु॒ सेच॑त॒ आ त्वा॑ विशन्तु॒ हरि॑वर्पसं॒ गिरः॑ ॥ १ ॥

प्र । ते॒ । म॒हे । वि॒दथे॑ । शं॒सि॒ष॒म् । हरी॒ इति॑ । प्र । ते॒ । व॒न्वे॒ । व॒नुषः॑ । ह॒र्य॒तम् । मद॑म् ।
घृ॒तम् । न । यः । हरि॑ऽभिः । चारु॑ । सेच॑ते । आ । त्वा॒ । वि॒श॒न्तु॒ । हरि॑ऽवर्पसम् । गिरः॑ ॥ १ ॥

हे इन्द्र ᵛते तव ᵛहरी अश्वौ ᵛमहे महति ᵛविदथे यज्ञे ᵛप्र ᵛशंसिषम् अशंसिषम् । अस्ताविषम् । तथा ᵛवनुषः । 'वनु हिंसायाम्' । हिंसकस्य ᵛते तव ᵛहर्यतम् । 'हर्य गतिकान्त्योः' । तस्यौणादिकोऽतच् । चित्स्वरेणान्तोदात्तः । कमनीयं ᵛमदं ᵛप्र ᵛवन्वे प्रयाचेऽस्मदभिमतम् । 'वनु याचने' । ᵛयः इन्द्रः ᵛहरिभिः हरितवर्णैरश्वैः मघानं[6] गत्वा ᵛचारु चरणीयं ᵛघृतं ᵛन घृतमिव सुपूतमुदकं ᵛसेचते वर्षति तं तादृशं ᵛहरिवर्पसम् । वर्प इति रूपनाम । हरितरूपं ᵛत्वा त्वाम् ᵛआ ᵛविशन्तु ᵛगिरः अस्मदीयाः स्तुतिवाचस्तव मदाय ॥

हरिं॒ हि योनि॑म॒भि ये स॒मस्व॑रन् हि॒न्वन्तो॒ हरी॑ दि॒व्यं यथा॒ सदः॑ ।
आ यं पृ॒णन्ति॒ हरि॑भि॒र्न धे॒नव॒ इन्द्रा॑य शू॒षं हरि॑वन्तमर्चत ॥ २ ॥

हरि॑म् । हि । योनि॑म् । अ॒भि । ये । स॒म्ऽअस्व॑रन् । हि॒न्वन्तः॑ । हरी॒ इति॑ । दि॒व्यम् । यथा॑ । सदः॑ ।
आ । यम् । पृ॒णन्ति॑ । हरि॑ऽभिः । न । धे॒नवः॑ । इन्द्रा॑य । शू॒षम् । हरि॑ऽवन्तम् । अ॒र्च॒त॒ ॥ २ ॥

---

१. भ-'हे ... ... मृत्योः' नास्ति । २. त-एतद्भवति । ३. त-जायमानाः । ४. त-भवति । ५. त१.२.३.६.८-भ१.२.४.७.८-°स्तुतिस्त्रिष्टुबंतं । ६. ग-भ१.४.५.६.८-मेघान्; त१.२.३.७-मेघानं; त६.८-मघानं; भ२-मघोन् ।

vये पूर्वे स्तोतार ऋषयः vयोनिम् इन्द्रस्य स्थानभूतम् vहरिम् अश्वम् vअभि vसमस्वरन्। 'स्वृ शब्दोपतापयोः'। अभिसंस्तुवन्ति। किं कुर्वन्तः। vदिव्यं देवसंबन्धि vसदः यागगृहं vयथा प्रेरयन्तीन्द्रं तथा vहरी अश्वौ vहिन्वन्तः प्रेरयन्तः। सोमेऽभिषुते सति स्वयमेवेन्द्रो रथेऽश्वौ प्रेरयति अतः स्तोतॄणां हरिप्रेरणत्वम्। यद्वा[1]। दिव्यं सद इन्द्रः प्राप्नुयाद्यथा[2] तथा[2] हरी[3] स्तुतिभिर्हिन्वन्तः प्रेरयन्तः। vयम् इन्द्रम् vधेनवः नवप्रसूता गावो यथा पृणन्ति क्षीरादिभिः। अत्र पुरस्तादुपाचारोऽपि नकार उपमार्थीयः। vहरिभिः हरितवर्णैः सोमैः vआ vपृणन्ति पूरयन्ति च[4]। तथा यूयमपि vइन्द्राय इन्द्रस्य vहरिवन्तं vशूषं बलम् vअर्चत पूजयत हे स्तोतारः स्तुतिभिः॥

**सो अस्य वज्रो हरितो य आयसो हरिर्निकामो हरिरा गभस्त्योः।**
**द्युम्नी सुशिप्रो हरिमन्युसायक इन्द्रे नि रूपा हरिता मिमिक्षिरे॥ ३॥**

सः। अस्य। वज्रः। हरितः। यः। आयसः। हरिः। निऽकामः। हरिः। आ। गभस्त्योः।
द्युम्नी। सुऽशिप्रः। हरिमन्युऽसायकः। इन्द्रे। नि। रूपा। हरिता। मिमिक्षिरे॥ ३॥

vअस्य इन्द्रस्य vसः[5] vवज्रः vहरितः हरितवर्णः vय vआयसः अयःसारभूतोऽस्ति निर्मितः। स च vहरिः[6] हरितवर्णो वज्रः vनिकामः नितरां कमनीयः। सः vआ हन्ता शत्रूणाम्। तादृशो वज्रः vगभस्त्योः हस्तयोर्वर्तत इति शेषः। अयमिन्द्रः vद्युम्नी। द्युम्नं द्योतमानं धनम्। तद्वान् vसुशिप्रः शोभनहनुः vहरिमन्युसायकः। यस्य मन्युः[7] सायकः शत्रुहन्ताभिगन्ता वा भवति। यद्वा शत्रुहन्ता कोपः सायकश्च यस्य स तादृशो भवति। किं बहुना। vइन्द्रे vरूपा रूपाणि सर्वाणि vहरिता हरितानि vनि vमिमिक्षिरे निषिक्तानि बभूवुः। सिहेः सनन्तात्कर्मणि लिटि रूपम्॥

**दिवि न केतुरधि धायि हर्यतो विव्यचद्वज्रो हरितो न रंह्या।**
**तुददहिं हरिशिप्रो य आयसः सहस्रशोका अभवद्धरिंभरः॥ ४॥**

दिवि। न। केतुः। अधि। धायि। हर्यतः। विव्यचत्। वज्रः। हरितः। न। रंह्या।
तुदत्। अहिम्। हरिऽशिप्रः। यः। आयसः। सहस्रऽशोकाः। अभवत्। हरिम्ऽभरः॥ ४॥

vदिवि अन्तरिक्षे vकेतुः प्रकाशेन सर्वस्य प्रज्ञापक आदित्य इव स यथाधि निहित एवमयमिन्द्रः vअधि vधायि अध्यधायि[8] स्तोतृभिरधिनिहितः। किंचेन्द्रस्य vवज्रः vहर्यतः स्पृहणीयः सन् vविव्यचत् व्याप्नोति[9] व्याप्तव्यं शत्रुसंघम्। तत्र दृष्टान्तः। vहरितो vन हरितवर्णा अध्वाहर्तारो[10] वाश्वा आदित्यसंबन्धिनः। ते यथा vरंह्या रंहणेन वेगेन व्याप्नुवन्ति व्याप्तव्यम्। vयः अस्य वज्रः vआयसः अयोविकारः vअहिं वृत्रं मेघं वा vतुदत् हिनस्ति। योऽयं[11] महानुभावः vहरिशिप्रः सोमपानरभसेन[12] हरितवर्णनासिकस्तद्वर्णहनुर्वा vहरिंभरः हर्योर्भर्तेन्द्रः[13] vसहस्रशोकाः vअभवत्। 'शुच दीप्तौ'। अपरिमितदीप्तिर्भवति॥

---

१. ग–यद्वा यथा। २. ग-त-भ–प्राप्नुयात्तथा। ३. त-भ–हरी रथाय। ४. ग–आप्रीणयंति वा; त४.५.८-भ१.२.४.६.८–वा; त१.२.३.६.७-मु–'च' नास्ति। ५. त-भ–'सः' नास्ति। ६. त-भ–'हरिः' नास्ति। ७. ग-त-भ–'मन्युः' नास्ति। ८. त१.२.३.६.७.८-भ–'अध्यधायि' नास्ति। ९. त१.२.३.६.७.८-भ२.६.८-मु–विव्याप्नोति। १०. ग-भ२.८–असाध्वाहर्तारो, त४.५–असाधा वर्तते; भ६–अस्याध्वाहर्तारो। ११. ग–सोयं। १२. त४.५–°रसेन। १३. ग-भ–हर्या भर्तेंद्रः।

त्वंत्वमहर्यथा उपस्तुतः पूर्वेभिरिन्द्र हरिकेश यज्वभिः ।
त्वं हर्यसि तव विश्वमुक्थ्य१मसामि राधो हरिजात हर्यतम् ॥ ५ ॥

त्वम्ऽत्वम् । अहर्यथाः । उपऽस्तुतः । पूर्वेभिः । इन्द्र । हरिऽकेश । यज्वऽभिः ।
त्वम् । हर्यसि । तव । विश्वम् । उक्थ्यम् । असामि । राधः । हरिऽजात । हर्यतम् ॥ ५ ॥

हे इन्द्र हे हरिकेश हरितरोमवदश्व त्वंत्वं[1] त्वमेव सर्वत्र यज्ञे अहर्यथाः अकामयथाः स्तोत्रं हविर्वा । कीदृशस्त्वम् । पूर्वेभिः पूर्वतनैः यज्वभिः यजमानैः उपस्तुतः सन् । हे हरिजात हरितवर्णः सन् प्रादुर्भूत हारकप्रादुर्भाव वा । शत्रुवधार्थं प्रादुर्भूतेत्यर्थः । हे तादृशेन्द्र त्वं तव । स्वभूतमिति शेषः । विश्वं व्याप्तं सोमचरुपुरोडाशादिरूपं सर्वं वा । यद्वा । यत्र यानि यानि हवींषि दीयन्ते तत्सर्वं वा । तथा उक्थ्यं प्रशस्यम् असामि असाधारणमसमं कृत्स्नं हर्यतं कान्तं राधः अन्नं हविर्लक्षणं हर्यसि कामयसे ॥ ॥ ५ ॥

ता वज्रिणं मन्दिनं स्तोम्यं मद इन्द्रं रथे वहतो हर्यता हरी ।
पुरूण्यस्मै सवनानि हर्यत इन्द्राय सोमा हरयो दधन्विरे ॥ ६ ॥

ता । वज्रिणम् । मन्दिनम् । स्तोम्यम् । मदे । इन्द्रम् । रथे । वहतः । हर्यता । हरी इति ।
पुरूणि । अस्मै । सवनानि । हर्यते । इन्द्राय । सोमाः । हरयः । दधन्विरे ॥ ६ ॥

ता तौ प्रसिद्धौ हर्यता हर्यतौ गन्तारौ कान्तौ वा हरी हरितवर्णावश्वौ मन्दिनं मोदमानं स्तोम्यं स्तुत्यर्हं वज्रिणम् इन्द्रं मदे निमित्ते[2] रथे वहतः धारयतः[3] । यज्ञमस्मदीयं प्रापयतः। अस्मै हर्यते कान्ताय इन्द्राय पुरुणि बहूनि सवनानि प्रातरादीनि हरयः हरितवर्णाः सोमाः दधन्विरे निधीयन्ते ॥

अरं कामाय हरयो दधन्विरे स्थिराय हिन्वन् हरयो हरी तुरा ।
अर्वद्भिर्यो हरिभिर्जोषमीयते सो अस्य कामं हरिवन्तमानशे ॥ ७ ॥

अरम् । कामाय । हरयः । दधन्विरे । स्थिराय । हिन्वन् । हरयः । हरी इति । तुरा ।
अर्वत्ऽभिः । यः । हरिऽभिः । जोषम् । ईयते । सः । अस्य । कामम् । हरिऽवन्तम् । आनशे ॥ ७ ॥

अरम् अलं पर्याप्तं कामाय इन्द्रकामनाय हरयः हरितवर्णाः सोमाः दधन्विरे । ते च हरयः स्थिराय युद्धेऽपलायितायेन्द्राय तुरा तुरौ त्वरमाणौ हरी अश्वौ हिन्वन् प्रेरयन्ति । यः अर्वद्भिः अरणकुशलैः हरिभिः अश्वैः जोषं शूरैः सेव्यं संग्रामम् ईयते गच्छति सः रथः अस्य इन्द्रस्य स्वभूतं कामं कमनीयं हरिवन्तं सोमवन्तं यज्ञम् आनशे व्याप्नोति ॥

हरिश्मशारुर्हरिकेश आयसस्तुरस्पेये यो हरिपा अवर्धत ।
अर्वद्भिर्यो हरिभिर्वाजिनीवसुरति विश्वा दुरिता पारिषद्धरी ॥ ८ ॥

१. त-मु-त्वं । २. त४.५-मदनिमित्ते । ३. त४.५-प्रापयतः ।

हरि॑ऽश्मशारुः । हरि॑ऽकेशः । आ॒य॒सः । तु॒रः॒ऽपेये॑ । यः । ह॒रि॒ऽपाः । अव॑र्धत ।
अर्व॑त्ऽभिः । यः । हरि॑ऽभिः । वा॒जिनी॑ऽवसुः ।
अति॑ । विश्वा॑ । दुः॒ऽइ॒ता । पारि॑षत् । हरी॒ इति॑ ॥ ८ ॥

ᐯहरिश्मशारुः हरितवर्णश्मश्रुः ᐯहरिकेशः ᐯहरितवर्णकेशः ᐯआयसः अयोमयहृदयः[१] । शत्रूणां घातक इत्यर्थः । एतादृशः ᐯयः इन्द्रः ᐯतुरस्पेये तूर्णं पातव्ये सोमे ᐯहरिपाः हरितवर्णसोमपाः ᐯअवर्धत वर्धते ᐯयः च ᐯअर्वद्भिः गन्तृभिः ᐯहरिभिः अश्वैः सोमैर्वा ᐯवाजिनीवसुः । वाजिनमन्नं हविर्लक्षणम् । तदस्या अस्तीति वाजिनी क्रिया । सैव वसु धनं यस्य स तथोक्तः । यज्ञधन इत्यर्थः । यद्वा । वाजिनमेव वाजिनी । तदेव धनं यस्य । स एवमुक्तलक्षण इन्द्रः ᐯहरी रथे योजयित्वा ᐯविश्वा विश्वानि सर्वाणि ᐯदुरिता अस्माकं दुरितानि ᐯपारिषत् पारयतु[२] । पारयतेर्लेटि सिप्यडागमः ॥

स्रुवे॑व॒ यस्य॒ हरि॑णी वि॒पे॒त॒तुः॒ शिप्रे॒ वाजा॑य॒ हरि॑णी॒ दवि॑ध्वतः ।
प्र यत्कृ॒ते च॑म॒से मर्मृ॑ज॒द्धरी॑ पी॒त्वा मद॑स्य हर्य॒तस्यान्ध॑सः ॥ ९ ॥

स्रु॒वाऽइ॑व । यस्य॑ । हरि॑णी॒ इति॑ । वि॒ऽपे॒त॒तुः । शिप्रे॒ इति॑ । वाजा॑य । हरि॑णी॒ इति॑ । दवि॑ध्वतः ।
प्र । यत् । कृ॒ते । च॒म॒से । मर्मृ॑जत् । हरी॒ इति॑ । पी॒त्वा । मद॑स्य । ह॒र्य॒तस्य॑ । अन्ध॑सः ॥ ९ ॥

ᐯयस्य इन्द्रस्य ᐯहरिणी हरितवर्णावश्वौ ᐯविपेततुः रथ इन्द्रमारोप्य विपततो यज्ञमस्मदीयम् । यद्वा । यस्य हरिणी हरितवर्णे कनीनिके विपेततुः सोमं प्रति विपततः । तत्र दृष्टान्तः । ᐯस्रुवेव । यथा स्रुवा स्रुवौ हविषा पूर्णौ पात्रविशेषौ होमार्थं विपततः तद्वत् । तथा यस्य च ᐯहरिणी हरितवर्णे ᐯशिप्रे हनू ᐯवाजाय सोमलक्षणायान्नाय ᐯदविध्वतः कम्पयतः पुरतः प्रत्तस्य[३] सोमस्य प्रीत्या[४] चलतः[४] । तथा ᐯयत् यदा ᐯकृते संस्कृते ᐯचमसे वर्तमानं ᐯमदस्य मदकरं ᐯहर्यतस्य कान्तम् ᐯअन्धसः अन्नं सोमं ᐯपीत्वा ᐯहरी अश्वौ ᐯप्र ᐯमर्मृजत् प्रमार्ष्टि । तदानीं स्तुत इत्यर्थः ॥

उ॒त स्म॒ सद्म॑ हर्य॒तस्य॑ प॒स्त्यो॒३॒॑रत्यो॒ न वाजं॒ हरि॑वाँ अचिक्रदत् ।
म॒ही चि॒द्धि धि॒षणाह॑र्य॒दोज॑सा बृ॒हद्वयो॑ दधिषे हर्य॒तश्चि॒दा ॥ १० ॥

उ॒त । स्म॒ । सद्म॑ । ह॒र्य॒तस्य॑ । प॒स्त्यो॑ः । अत्यः॑ । न । वाज॑म् । हरि॑ऽवान् । अ॒चि॒क्र॒द॒त् ।
म॒ही । चि॒त् । हि । धि॒षणा॑ । अह॑र्यत् । ओज॑सा । बृ॒हत् । वयः॑ । द॒धि॒षे । ह॒र्य॒तः । चि॒त् । आ ॥ १० ॥

ᐯउत अपि च ᐯहर्यतस्य कमनीयस्येन्द्रस्य ᐯसद्म सदनं ᐯपस्त्योः द्यावापृथिव्योः संबन्धि । सोऽयम् ᐯअत्यो ᐯन अश्व इव ᐯवाजं संग्रामं ᐯहरिवान् अश्ववान् ᐯअचिक्रदत् गच्छति । तथा ᐯहि यस्माद्धे इन्द्र त्वां ᐯमही महती ᐯधिषणा स्तुतिः ᐯओजसा बलेन युक्तमिन्द्रम् ᐯअहर्यत् कामयते । ᐯचित् इति पूरणः । अतो वाजमचिक्रदत् । तथा सति हे इन्द्र ᐯहर्यतः कामयमानस्य यजमानस्य[५] ᐯबृहत् महत् ᐯवयः अन्नम् ᐯआ ᐯदधिषे धारयसि[६] । आप्रयच्छसि । ᐯचित् इति पूरणः ॥ ॥ ६ ॥

---

१. त१.२.३.६.७-मु-°हृदयोस्य । २. त-भ-पारयति । ३. त१.२.६.७-प्रयत् प्रत्यस्य । ४. ग-प्रियां चलतः; त-प्रिया चलतः; भ१.७-प्रियबलजः; भ२.४-प्रियबलतः; भ६-प्रियावलतः; भ८-प्रियाबलतः । ५. ग-त१.२.३.६.७-भ१.२.४.७.८-यजमानाय । ६. ग-त१२३६७-भ-मु-'धारयसि' नास्ति ।

आ रोदसी हर्यमाणो महित्वा नव्यंनव्यं हर्यसि मन्म नु प्रियम्।
प्र पस्त्यमसुर हर्यतं गोराविष्कृधि हरये सूर्याय ॥ ११ ॥

आ। रोदसी इति। हर्यमाणः। महिऽत्वा। नव्यम्ऽनव्यम्। हर्यसि। मन्म। नु। प्रियम्।
प्र। पस्त्यम्। असुर। हर्यतम्। गोः। आविः। कृधि। हरये। सूर्याय ॥ ११ ॥

हे इन्द्र ᵛहर्यमाणः कामयमानः ᵛमहित्वा महत्त्वेन ᵛरोदसी द्यावापृथिव्यौ ᵛआ। पूरयसीति शेषः। तथा ᵛनव्यंनव्यं नवतरं ᵛप्रियं प्रियकरं ᵛमन्म मननीयं स्तोत्रं ᵛनु क्षिप्रं ᵛहर्यसि कामयसे। हे ᵛअसुर बलवन्। असुः प्राणः। तद्वन्। मत्वर्थीयो रः। तादृशेन्द्र ᵛगोः। जात्येकवचनम्। गवां ᵛहर्यतं स्पृहणीयं ᵛपस्त्यं गृहं गोरुदकस्योक्तगुणकं स्थानं वा ᵛहरये उदकस्य हर्त्रे ᵛसूर्याय ᵛप्र प्रकर्षेण ᵛआविष्कृधि प्रकटीकुरु ॥

आ त्वा हर्यन्तं प्रयुजो जनानां रथे वहन्तु हरिशिप्रमिन्द्र।
पिबा यथा प्रतिभृतस्य मध्वो हर्यन्यज्ञं सधमादे दशोणिम् ॥ १२ ॥

आ। त्वा। हर्यन्तम्। प्रऽयुजः। जनानाम्। रथे। वहन्तु। हरिऽशिप्रम्। इन्द्र।
पिब। यथा। प्रतिऽभृतस्य। मध्वः। हर्यन्। यज्ञम्। सधऽमादे। दशऽओणिम् ॥ १२ ॥

हे ᵛइन्द्र ᵛहरिशिप्रं हरितवर्णशिप्रं ᵛत्वा त्वां ᵛहर्यन्तं यज्ञं कामयमानं ᵛप्रयुजः रथे प्रयुक्ता अश्वाः ᵛरथे स्थापयित्वा ᵛजनानाम् ऋत्विग्यजमानानामन्तिकं[1] ᵛवहन्तु[2] प्रापयन्तु। ᵛयथा येन प्रकारेण ᵛप्रतिभृतस्य ग्रहादिषु संभृतं ᵛमध्वः मधु सोमरसं ᵛयज्ञं यागसाधनं ᵛदशोणिम्। ओणयोऽङ्गुलयः। दशभिरङ्गुलिभिः संपादितं सोमं ᵛहर्यन् कामयमानः सन् ᵛपिब पिबसि ᵛसधमादे संग्रामे[3] जयार्थं[3] तथा वहन्त्वित्यर्थः ॥

‘अपाः पूर्वेषाम्’ इत्येषा षोडशिशस्त्रस्य याज्या। सूत्रितं च—‘एवा हि शक्रो वशी हि शक्र इति जपित्वापाः पूर्वेषां हरिवः सुतानामिति यजति’ ( आश्व. श्रौ. ६. २ ) इति ॥

अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते।
ममद्धि सोमं मधुमन्तमिन्द्र सत्रा वृषञ्जठर आ वृषस्व ॥ १३ ॥

अपाः। पूर्वेषाम्। हरिऽवः। सुतानाम्। अथो इति। इदम्। सवनम्। केवलम्। ते।
ममद्धि। सोमम्। मधुऽमन्तम्। इन्द्र। सत्रा। वृषन्। जठरे। आ। वृषस्व ॥ १३ ॥

हे इन्द्र[4] ᵛसुतानाम् अभिषुतानां ᵛपूर्वेषां प्रातःसवनसंपादितानाम्। कर्मणि षष्ठ्यावेते। अभिषुतान् प्रातःसवनिकान् सोमानित्यर्थः। तान् ᵛअपाः अपिबः। हे ᵛहरिवः इतीन्द्रसंबोधनम्। हरिभ्यामश्वाभ्यां तद्वन्। यद्वा ऋक्सामात्मकाभ्यां हरिभ्यां युक्त। ‘ऋक्सामे वा इन्द्रस्य हरी’ ( ऐ. ब्रा. २. २४; तै. सं. ६. ५. ९. २ )। ‘ताभ्यामेष हरति’ इति ब्राह्मणम्। ᵛअथो अपि च ᵛइदं माध्यंदिनं ᵛसवनं ᵛकेवलं ᵛते तवैवासाधारणम्। ‘माध्यंदिनं सवनं केवलं ते’ ( ऋ. सं.

१. त४.५–यजमाना॰। २. ग-त-भ-मु–प्रांत वहंतु। ३. त-भ–संग्रामजयार्थं। ४. ग-त-मु–इंद्र त्वं।

४. ३५. ७ ) इति हि मन्त्रान्तरम्। तस्मिन् सवने हे ᵛइन्द्र ᵛमधुमन्तं माधुर्योपेतं ᵛसोमं ᵛममद्धि पिब। आस्वादयेत्यर्थः। मदिरत्रास्वादनकर्मा। पिबन्तु मदन्तु वियन्तु इति च मन्त्रः। ᵛसत्रा ᵛवृषन्। सत्राशब्दो भूयिष्ठवचनः। हे भूयिष्ठवर्षितरिन्द्र ᵛजठर ᵛआ ᵛवृषस्व आसिञ्चस्व ॥ ॥७॥

'या ओषधीः' इति त्रयोविंशत्यृचं सप्तमं सूक्तम्। अथर्वणः पुत्रस्य भिषङ्नाम्न आर्षम्। आनुष्टुभमोषधिदेवताकम्। तथा चानुक्रान्तं—'या ओषधीस्त्र्यधिकाथर्वणो भिषगोषधिस्तुतिरानुष्टुभम्' इति। दीक्षितानां ज्वराद्युपतापे संजातेऽनेन सूक्तेन मार्जयेत्। सूत्रितं च—'ओषधिसूक्तेन चाप्लाव्यानुमृजेत्' ( आश्व. श्रौ. ६. ९ ) इति ॥

**या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा।**
**मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥ १ ॥**

याः। ओषधीः। पूर्वाः। जाताः। देवेभ्यः। त्रिऽयुगम्। पुरा।
मनै। नु। बभ्रूणाम्। अहम्। शतम्। धामानि। सप्त। च ॥ १ ॥

ᵛयाः ᵛओषधीः ओषधयः ᵛपूर्वाः पुरातन्यः ᵛजाताः उत्पन्नाः। केभ्यः सकाशात्। ᵛदेवेभ्यः जगन्निर्मातृभ्यः। यद्वा। देवा द्योतमाना ऋतवः। तेभ्यः। कस्मिन् काले। ᵛत्रियुगं त्रिषु[1] युगेषु[1]। विशेषेण[2] प्रादुर्भावापेक्षया कृतादियुगत्रयमुक्तं कलौ स्वल्पन्तात्यल्पत्वादुपेक्षितम्। अथवा त्रिषु युगेषु वसन्ते प्रावृषि शरदि चेत्यर्थः। ᵛअहं ᵛबभ्रूणां बभ्रुवर्णानां सोमाद्योषधीनां ᵛशतं ᵛसप्त ᵛच ᵛधामानि अनुलेपमार्जनाभिषेकादिरूपेणाश्रयभूतानि[3] स्थानानि ᵛनु क्षिप्रं ᵛमनै मन्ये। संभावयामीत्यर्थः। अत्र वाजसनेयकं—'या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरेत्यृतवो वै देवास्तेभ्य एतास्त्रिः पुरा जायन्ते वसन्ते प्रावृषि शरदि मनै नु बभ्रूणामहमिति सोमो वै बभ्रुः सोम्या ओषधय औषधः पुरुषः शतं धामानीति यदिदं शतायुः शतार्घः[4] शतवीर्य एतानि ह्यस्य तानि* शतं धामानि सप्त चेति। य एवेमे सप्त शीर्षन्प्राणास्तानेतदाह' ( श. ब्रा. ७. २. ४. २६ ) इति। अत्र निरुक्तं च—'या ओषधयः[4] पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां भरणानां हरणानामिति वा शतं धामानि सप्त चेति। धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति। जन्मान्यत्राभिप्रेतानि[5] सप्तशतानि सप्त शतं पुरुषस्य मर्मणां तेष्वेना दधति' ( निरु. ९.२८ ) इति॥

**शतं वो अम्ब धामानि सहस्रमुत वो रुहः।**
**अधा शतक्रत्वो यूयमिमं मे अगदं कृत ॥ २ ॥**

शतम्। वः। अम्ब। धामानि। सहस्रम्। उत। वः। रुहः।
अध। शतऽक्रत्वः। यूयम्। इमम्। मे। अगदम्। कृत ॥ २ ॥

हे ᵛअम्ब मातर ओषधयः ᵛवः युष्माकं ᵛधामानि स्थानानि जन्मानि वा ᵛशतम् अपरिमितानि। ᵛउत अपि च ᵛवः युष्माकं ᵛरुहः प्ररोहः प्रोद्गमः ᵛसहस्रम् अपरिमितः[6]। ᵛअध अपि च हे ᵛशतक्रत्वः शतकर्माणः ᵛयूयमिमं ᵛमे मां मदीयं वा जनमामयग्रस्तम् ᵛअगदम्। गदो रोगः। तद्रहितं ᵛकृत कुरुत ॥

---

१. त-भ–त्रियुगेषु। २. त-भ२.४.६.८–विशेष॰। ३. ग-त-मु–अनुलेपसंमार्जनाभिषेक॰। ४. भ–'शतार्घः ... ... ... ओषधयः' नास्ति। * त-मु–'तानि' नास्ति। ५. त४.५–स्थानान्यत्रा॰। ६. ग-त-भ-मु–अपरिमितं।

ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वाइव सजित्वरीर्वीरुधः पारयिष्ण्वः ॥ ३ ॥

ओषधीः । प्रति । मोदध्वम् । पुष्पऽवतीः । प्रऽसूवरीः ।
अश्वाःऽइव । सऽजित्वरीः । वीरुधः । पारयिष्ण्वः ॥ ३ ॥

हे ^v^ओषधीः ओषधयः ^v^प्रति ^v^मोदध्वं इमं रुग्णं प्रति मुदिता हृष्टा भवत । कीदृश्यो यूयम् । ^v^पुष्पवतीः पुष्पवत्यः ^v^प्रसूवरीः । प्रकर्षेण सूयन्त उपभोगायेति प्रसवाः फलानि । तद्वत्यः । किंच ^v^अश्वाइव अश्नुवाना हया इव ^v^सजित्वरीः सह रोगं जयन्त्यः ^v^वीरुधः विरोहन्त्यः ^v^पारयिष्ण्वः रुग्णं पुरुषं पारयन्त्यो रोगात् ॥

ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे ।
सनेयमश्वं गां वास आत्मानं तव पूरुष ॥ ४ ॥

ओषधीः । इति । मातरः । तत् । वः । देवीः । उप । ब्रुवे ।
सनेयम् । अश्वम् । गाम् । वासः । आत्मानम् । तव । पुरुष ॥ ४ ॥

हे ^v^ओषधीः ओषधयः ^v^देवीः देव्यो द्योतनादिगुणका हे ^v^मातरः जनानां मातृभूताः । मातृवद्धितकारित्वान्मातृत्वोपचारः । अथवा मातर आरोग्यनिर्मात्र्यः ^v^वः युष्माकं संबन्धिनं भिषजं ^v^तत् वक्ष्यमाणम् ^v^इति इत्थम् ^v^उप ^v^ब्रुवे उप ब्रवीमि । किं तदिति चेत् उच्यते । ओषध्यर्थमहम् ^v^अश्वं ^v^गां ^v^वासः अंशुकं किं बहुना ^v^आत्मानम् अपि हे ^v^पुरुष चिकित्सक ^v^तव तुभ्यं ^v^सनेयं ददामि ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ५ ॥

अश्वत्थे । वः । निऽसदनम् । पर्णे । वः । वसतिः । कृता ।
गोऽभाजः । इत् । किल । असथ । यत् । सनवथ । पुरुषम् ॥ ५ ॥

हे ओषधिदेवताः ^v^वः युष्माकम् ^v^अश्वत्थे ^v^निषदनं नितरां वर्तनम् । तथा ^v^वः युष्माकं ^v^पर्णे पलाशे ^v^वसतिः निवासः ^v^कृता । 'तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत् तत्पर्णस्य पर्णत्वम्' ( तै. ब्रा. १. १. ३. १० ) इति ब्राह्मणात्पलाशस्य पर्णत्वप्रसिद्धिः । अश्वत्थपलाशयोर्यज्ञयोग्यत्वप्राधान्यापेक्षयोपादानम् । किंच ^v^गोभाज ^v^इत्किल गवां भाजयित्र्य एव ^v^असथ भवथ खलु । ^v^यत् यदि ^v^सनवथ संभजध्वे ^v^पुरुषं तर्ह्येवं भवथेति । 'वन षण संभक्तौ'। लेट्यडागमः । व्यत्ययेनोप्रत्ययः । यद्वा । औत्सर्गिकः शप्चेति द्विविकरणता ॥ ॥ ८ ॥

यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥ ६ ॥

यत्र । ओषधीः । सम्ऽअग्मत । राजानः । समितौऽइव ।
विप्रः । सः । उच्यते । भिषक् । रक्षःऽहा । अमीवऽचातनः ॥ ६ ॥

यत्र यस्मिन् देशे ओषधीः ओषधयः[1] समग्मत संगच्छन्ते[2]। राजानः समिताविव संग्रामे यथा संगता भवन्ति तद्वत्। तासां नानाविधानामोषधीनां संगमनं यस्मिन् देशेऽस्ति तत्र विप्रः प्राज्ञः ब्राह्मणः सः भिषक् उच्यते रक्षोहा रक्षोहन्ता। अमीवचातनः। अमीवा व्याधिः। तस्य चातनश्चातयिता नाशयिता[3] च भवति तदानीम्॥

**अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम्।**
**आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये॥ ७॥**

अश्वऽवतीम्। सोमऽवतीम्। ऊर्जयन्तीम्। उत्ऽओजसम्।
आ। अवित्सि। सर्वाः। ओषधीः। अस्मै। अरिष्टऽतातये॥ ७॥

अश्वावत्यादयः प्रधानभूता ओषधयश्चतस्रः[4]। ताः सर्वाः ओषधीः आवित्सि आजाने। स्तौमीत्यर्थः। अस्मा अरिष्टतातये[5]। अमुं रोगं विनाशयितुमित्यर्थः॥

**उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते।**
**धनं सनिष्यन्तीनामात्मानं तव पूरुष॥ ८॥**

उत्। शुष्माः। ओषधीनाम्। गावः। गोस्थात्ऽइव। ईरते।
धनम्। सनिष्यन्तीनाम्। आत्मानम्। तव। पुरुष॥ ८॥

ओषधीनां शुष्माः बलानि उत् ईरते उद्गच्छन्ति। रुग्णे स्ववीर्यं प्रोद्गमयन्तीत्यर्थः। गावो गोष्ठादिव। ता यथा ततः सकाशादुदीरते तद्वत्। कीदृशीनामोषधीनाम्। उच्यते। धनं स्वसामर्थ्यलक्षणं सनिष्यन्तीनां दातुमिच्छन्तीनाम्। किं प्रतीति उच्यते। हे पूरुष पुरुष रोगग्रस्त तव आत्मानं शरीरं प्रति। यद्वा। प्ररोहन्तीरोषधीर्दृष्ट्वा वदति। हे पुरुष प्रियङ्ग्वाद्योषधिस्वामिन् तवात्मानं वर्धयितुं[6] धनं सनिष्यन्तीनां व्रीह्याद्योषधीनां शुष्मा उदीरते॥

**इष्कृतिर्नाम वो माताथो यूयं स्थ निष्कृतीः।**
**सीराः पतत्रिणीः स्थन यदामयति निष्कृथ॥ ९॥**

इष्कृतिः। नाम। वः। माता। अथो इति। यूयम्। स्थ। निःऽकृतीः।
सीराः। पतत्रिणीः। स्थन। यत्। आमयति। निः। कृथ॥ ९॥

हे ओषधयः वो माता जननी इष्कृतिर्नाम, सर्वेषां रुग्णानां निष्कर्त्रीति प्रसिद्धा। यस्मात्सा रुग्णं निष्करोति। अथ अतो यूयम् अपि निष्कृतीः निष्कृतयः स्थ भवथ। किंच यूयं सीराः सरणशीलाः पतत्रिणीः पतनवत्यश्च स्थन भवथ। 'तप्तनप्' इति तनादेशः। किंच पुरुषः यत् यदि आमयति व्याधितो भवति तं निष्कृथ संस्कुरुथ॥

**अति विश्वाः परिष्ठाः स्तेनइव व्रजमक्रमुः।**
**ओषधीः प्राचुच्यवुर्यत्किं च तन्वो३ रपः॥ १०॥**

१. ग-त-भ-मु-ओषध्यः। २. ग२-समगच्छंत। ३. त-भ-मु-'नाशयिता' नास्ति। ४. ग-त-भ-ओषध्यश्चतस्रः। ५. त-मु-अरिष्टतातये अस्मै रोगाय। ६. त४.५-दर्शयितुं।

अति । विश्वाः । परिऽस्थाः । स्तेनःऽइव । व्रजम् । अक्रमुः ।
ओषधीः । प्र । अचुच्यवुः । यत् । किम् । च । तन्वः । रपः ॥ १० ॥

ᐯविश्वाः व्याप्ताः ᐯपरिष्ठाः परितः स्थिता ओषधयः ᐯअति ᐯअक्रमुः व्याधीनतिक्रान्तवत्यः । ᐯस्तेनइव ᐯव्रजम् । यथा स्तेनो व्रजमत्यक्रमीत् तद्वत् । तथा कृत्वा ᐯओषधीः ओषधयः ᐯप्राचुच्यवुः प्रच्यावयन्ति ᐯयत्किं ᐯच ᐯतन्वः रुग्णशरीरस्य ᐯरपः पापं व्याधिलक्षणमस्ति तदिति ॥ ॥ ९ ॥

यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ ११ ॥

यत् । इमाः । वाजयन् । अहम् । ओषधीः । हस्ते । आऽदधे ।
आत्मा । यक्ष्मस्य । नश्यति । पुरा । जीवऽगृभः । यथा ॥ ११ ॥

ᐯअहं ᐯयत् यदि ᐯइमाः ओषधीः ᐯहस्त ᐯआदधे आधारयामि । किं कुर्वन् । ᐯवाजयन् रुग्णं बलिनं कुर्वन् । ततः ᐯपुरा ᐯयक्ष्मस्य रोगस्य ᐯआत्मा ᐯनश्यति नष्टो भवति ᐯजीवगृभो ᐯयथा । जीवानां शकुन्यादीनां ग्राहकाद्व्याधाद्यथा जीवा नश्यन्ति तद्वत् । यद्वा । जीवगृभो मृत्योः सकाशाज्जीवोऽपह्रियते तद्वत् ॥

यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः । ततो यक्ष्मं वि बाधध्व उग्रो मध्यमशीरिव ॥ १२ ॥

यस्य । ओषधीः । प्रऽसर्पथ । अङ्गम्ऽअङ्गम् । परुःऽपरुः ।
ततः । यक्ष्मम् । वि । बाधध्वे । उग्रः । मध्यमशीःऽइव ॥ १२ ॥

हे ᐯओषधीः ओषधयः[1] ᐯयस्य रुग्णस्य ᐯअङ्गमङ्गं यद्यदङ्गं ᐯपरुःपरुः यद्यत्पर्व ᐯप्रसर्पथ प्रकर्षेणाश्रयथ ᐯततः अङ्गात्पर्वणश्च ᐯयक्ष्मं व्याधिं ᐯवि ᐯबाधध्वे । ᐯउग्रः उद्गूर्णबलः ᐯमध्यमशीः मध्यमस्थाने वर्तमानो राजा यथा[2] उपद्रवकारिणः समनन्तरशत्रून् पदे पदे विबाधते तद्वत् ॥

साकं यक्ष्म प्र पत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥ १३ ॥

साकम् । यक्ष्म । प्र । पत । चाषेण । किकिदीविना ।
साकम् । वातस्य । ध्राज्या । साकम् । नश्य । निऽहाकया ॥ १३ ॥

हे अस्मदीयस्य पुरुषस्य शरीराधिष्ठायिन् ᐯयक्ष्म व्याधे त्वं ᐯसाकं सहैव ᐯप्र ᐯपत प्रकर्षेण शीघ्रं गच्छ । केन साकमिति । उच्यते । ᐯचाषेण अतिशीघ्रं पतता चाषाख्येन पक्षिणा सह । तथा ᐯकिकिदीविना पक्षिणा च सह । तथा ᐯवातस्य शीघ्रं गच्छतो वायोः ᐯध्राज्या । 'ध्रज गतौ' । गत्या वेगेन सह गच्छ । तथा ᐯनिहाकया गोधिकया ᐯसाकं ᐯनश्य नाशं प्राप्नुहि ॥

अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥ १४ ॥

---

१. ग-त-भ—ओषध्यः । २. ग-त-भ—'यथा' नास्ति ।

अन्या । वः । अन्याम् । अवतु । अन्या । अन्यस्याः । उप । अवत ।
ताः । सर्वाः । सम्ऽविदानाः । इदम् । मे । प्र । अवत । वचः ॥ १४ ॥

हे ओषधयः ᵛवः युष्माकं मध्ये ᵛअन्या ओषधिः ᵛअन्याम् ओषधिम् ᵛअवतु प्राप्नोतु। अवतिरत्र गत्यर्थः। तथा ᵛअन्यान्यस्याः समीपम् ᵛउपावत उपगच्छत। एवं याः सन्ति क्षित्यामोषधयः ᵛताः ᵛसर्वाः ᵛसंविदानाः परस्परमैकमत्यं प्राप्ताः सत्यः ᵛइदं ᵛमे मदीयं ᵛवचः प्रार्थनालक्षणं वचनं ᵛप्रावत प्ररक्षत ॥

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ १५ ॥

याः । फलिनीः । याः । अफलाः । अपुष्पाः । याः । च । पुष्पिणीः ।
बृहस्पतिऽप्रसूताः । ताः । नः । मुञ्चन्तु । अंहसः ॥ १५ ॥

ᵛयाः ᵛफलिनीः फलवत्यः ᵛया ᵛअफलाः फलवर्जिताः याः ᵛअपुष्पाः पुष्परहिताः ᵛयाश्च ᵛपुष्पिणीः पुष्पवत्यः ᵛबृहस्पतिप्रसूताः। बृहस्पतिर्मन्त्राभिमानी देवः। तेनानुज्ञाताः। ᵛता ᵛनः अस्मान् ᵛअंहसः ᵛमुञ्चन्तु मोचयन्तु ॥ ॥ १० ॥

मुञ्चन्तु मा शपथ्या३दथो वरुण्यादुत ।
अथो यमस्य पड्बीशात् सर्वस्माद्देवकिल्बिषात् ॥ १६ ॥

मुञ्चन्तु । मा । शपथ्यात् । अथो इति । वरुण्यात् । उत ।
अथो इति । यमस्य । पड्बीशात् । सर्वस्मात् । देवऽकिल्बिषात् ॥ १६ ॥

ᵛमा माम् ओषधयः ᵛशपथ्यात् शपथसंजातादेनसः सकाशात्[1] ᵛमुञ्चन्तु। ᵛअथो अपि च ᵛवरुण्यात् वरुणसंभवात् ᵛमां मुञ्चन्तु। वरुणोऽपि स्वपाशेन जातमात्रं पुरुषं बध्नाति। ᵛउत इति पूरणः। ᵛअथो अपि च ᵛयमस्य ᵛपड्बीशात् पादबन्धनान्निगडान्मुञ्चन्तु। न केवलं वरुणादेः पापात् किंतु ᵛसर्वस्माद्देवकिल्बिषात् देवैः कृतात्पापान्मुञ्चन्तु ॥

अवपतन्तीरवदन् दिव ओषधयस्परि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥ १७ ॥

अवऽपतन्तीः । अवदन् । दिवः । ओषधयः । परि ।
यम् । जीवम् । अश्नवामहै । न । सः । रिष्याति । पुरुषः ॥ १७ ॥

ᵛदिवः द्युलोकात् ᵛअवपतन्तीः अवपतन्त्यः ᵛओषधयः इत्थं ᵛपरि ᵛअवदन्। किमिति उच्यते। ᵛयं ᵛजीवं[2] जीवन्तम्[3] ᵛअश्नवामहै व्याप्नुमः ᵛन ᵛसः ᵛपूरुषः पुरुषः ᵛरिष्याति रिष्यति विनश्यति[4] ॥

---

१. ग-त१.२.३.६.७.८-भ-मु-पापात्। २. त-'जीवं' नास्ति। ३. भ-'जीवन्तं' नास्ति।
४. ग-त७-मु-न हिंस्यते; त१.२-म हिंस्यते; त३.६-म हिंस्यैत; त८-भ-न हिंस्यात्।

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासां त्वमस्युत्तमारं कामाय शं हृदे ॥ १८ ॥

याः । ओषधीः । सोमऽराज्ञीः । बह्वीः । शतऽविचक्षणाः ।
तासाम् । त्वम् । असि । उत्ऽतमा । अरम् । कामाय । शम् । हृदे ॥ १८ ॥

ᵛया ᵛओषधीः ओषधयः ᵛसोमराज्ञीः सोमो राजा स्वामी यासां तास्तथोक्ताः ᵛबह्वीः असंख्याताः ᵛशतविचक्षणाः बहुदर्शना हे सोमाख्ये ओषधे ᵛतासाम् ओषधीनां ᵛत्वम् ᵛउत्तमा ᵛअसि । यस्मादेवं तस्मात् ᵛअरम् अलमत्यर्थं ᵛकामाय कान्ताय ᵛहृदे हृदयाय ᵛशं सुखकरी भवेति शेषः ॥

या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
बृहस्पतिप्रसूता अस्यै सं दत्त वीर्यम् ॥ १९ ॥

याः । ओषधीः । सोमऽराज्ञीः । विऽस्थिताः । पृथिवीम् । अनु ।
बृहस्पतिऽप्रसूताः । अस्यै । सम् । दत्त । वीर्यम् ॥ १९ ॥

ᵛया ᵛओषधीः ओषधयः[1] ᵛसोमराज्ञीः ᵛपृथिवीमनु ᵛविष्ठिताः विविधं स्थिताः दिवः सकाशादागत्य पृथिव्यां नानाभेदेन स्थिताः ᵛबृहस्पतिप्रसूताः बृहस्पतिनानुज्ञाताः सत्यो यूयम् ᵛअस्यै रुग्णतन्वे ᵛवीर्यं ᵛसं ᵛदत्त संधत्त ॥

मा वो रिषत्खनिता यस्मै चाहं खनामि वः ।
द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् ॥ २० ॥

मा । वः । रिषत् । खनिता । यस्मै । च । अहम् । खनामि । वः ।
द्विऽपत् । चतुःऽपत् । अस्माकम् । सर्वम् । अस्तु । अनातुरम् ॥ २० ॥

हे ओषधयः ᵛवः युष्मान् ᵛमा ᵛरिषत् मा हिंस्यात् । कः । ᵛखनिता भूमेः खननकर्ता । ᵛयस्मै रुग्णाय ᵛचाहं ᵛखनामि ᵛवः युष्मान् । किंच ᵛअस्माकं संबन्धि ᵛद्विपत् पुत्रभृत्यादिकं[2] ᵛचतुष्पत् गोमहिष्यादिकं च यदस्ति तत् ᵛसर्वम् ᵛअनातुरम् अरोगम् ᵛअस्तु ॥

याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः ।
सर्वाः संगत्य वीरुधोऽस्यै सं दत्त वीर्यम् ॥ २१ ॥

याः । च । इदम् । उपऽशृण्वन्ति । याः । च । दूरम् । पराऽगताः ।
सर्वाः । सम्ऽगत्य । वीरुधः । अस्यै । सम् । दत्त । वीर्यम् ॥ २१ ॥

ᵛयाश्च ओषधयः ᵛइदं स्तोत्रम् ᵛउपशृण्वन्ति ᵛयाश्च ओषधयः ᵛदूरं ᵛपरागताः ᵛसर्वाः ᵛवीरुधः ᵛसंगत्य संगताः सत्यो हे ᵛवीरुधः ᵛअस्यै रुग्णतन्वे ᵛवीर्यं ᵛसं ᵛदत्त ॥

१. ग-त-भ-' ओषधयः ' नास्ति । २. त१.२.३.६.७.८-भ-पुत्रप्रभृत्यादिकं ।

ओषधयः सं वदन्ते सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि ॥ २२ ॥

ओषधयः । सम् । वदन्ते । सोमेन । सह । राज्ञा ।
यस्मै । कृणोति । ब्राह्मणः । तम् । राजन् । पारयामसि ॥ २२ ॥

ˇओषधयः सर्वाः ˇसोमेन ˇराज्ञा ˇसह ˇसं ˇवदन्ते संवादं कुर्वन्ति । किमिति तदुच्यते । ˇयस्मै रुग्णाय ˇब्राह्मणः ओषधिसामर्थ्यज्ञो ब्राह्मणो वैद्यः ˇकृणोति करोति चिकित्सां ˇतं रुग्णं हे ˇराजन् ˇपारयामसि पारयामः ॥ इदन्तो मसिः ॥

त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सो३ऽस्माकं यो अस्माँ अभिदासति ॥ २३ ॥

त्वम् । उत्ऽतमा । असि । ओषधे । तव । वृक्षाः । उपस्तयः ।
उपस्तिः । अस्तु । सः । अस्माकम् । यः । अस्मान् । अभिऽदासति ॥ २३ ॥

हे ˇओषधे सोमाख्ये ˇत्वम् ओषधीनामन्यासाम्[1] ˇउत्तमासि । ˇतव ˇवृक्षाः सर्वे ˇउपस्तयः अधःशायिन एव । तथा सति ˇसः ˇउपस्तिरस्तु अधःशायी भवतु ˇयोऽस्मान् ˇअभिदासति अभिहिनस्ति भ्रातृव्य इति ॥ ॥ ११ ॥

'बृहस्पते प्रति' इति द्वादशर्चमष्टमं सूक्तं त्रैष्टुभं बृहस्पतिमित्रादिसर्वदेवताकम् । ऋष्टिषेणपुत्रो देवापिर्नामर्षिः । तथा चानुक्रान्तं—'बृहस्पते द्वादशार्ष्टिषेणो देवापिर्वृष्टिकामो देवांस्तुष्टाव' । गतः सूक्तविनियोगः । अस्य सूक्तस्याख्यानं निरुक्तकारः प्रदर्शयति—'देवापिश्चार्ष्टिषेणः शंतनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शंतनुः कनीयानभिषेचयांचक्रे देवापिस्तपः[2] प्रतिपेदे । ततः शंतनो राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति । स शंतनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति । तस्यैतद्वर्षकामसूक्तम्' ( निरु. २. १० ) इति ॥

बृहस्पते प्रति मे देवतामिहि मित्रो वा यद्वरुणो वासि पूषा ।
आदित्यैर्वा यद्वसुभिर्मरुत्वान्त्स पर्जन्यं शंतनवे वृषाय ॥ १ ॥

बृहस्पते । प्रति । मे । देवताम् । इहि । मित्रः । वा । यत् । वरुणः । वा । असि । पूषा ।
आदित्यैः । वा । यत् । वसुऽभिः । मरुत्वान् । सः । पर्जन्यम् । शम्ऽतनवे । वृषाय ॥ १ ॥

तत्र ब्रह्मत्वे प्रवृत्तो बृहस्पतिमनुधावति । हे ˇबृहस्पते ˇमे मम वृष्ट्यर्थं[3] प्रति ˇदेवतां ˇप्रति ˇइहि प्रतिगच्छ । यष्टव्या देवताः प्रतिगच्छ । यदि त्वं ˇमित्रो ˇवा ˇअसि अथवा[4] ˇवरुणः असि ˇयद्वा ˇपूषा असि अथवा[5] ˇआदित्यैः द्वादशादित्यैर्वरुणादिभिः ˇवसुभिः वासकैरष्टवसुभिर्धरध्रुवादिभिः सह ˇमरुत्वान् । मरुतो देवाः । तद्वानसि । ˇसः त्वं ˇपर्जन्यं तर्पयितारं मेघं ˇशंतनवे राज्ञे ˇवृषाय वर्षय । 'छन्दसि शायजपि' इति व्यत्ययेन शपोऽपि शायजादेशः ॥

---

१. ग-त-भ—ओषधीनामन्येषां । २. ग-त१.२.३.६.८-भ४.५.८—स देवापिस्तपः । ३. त१.२.३.६.७.८-भ१.२.४.८—वृष्ट्यर्थे । ४. त१.२.३.६.७—वा अथवा; त४.५—वा यद्वा । ५. ग४—वा अथवा ।

आ देवो दूतो अजिरश्चिकित्वान् त्वद्देवापे अभि मामगच्छत् ।
प्रतीचीनः प्रति मामा ववृत्स्व दधामि ते द्युमतीं वाचमासन् ॥ २ ॥

आ । देवः । दूतः । अजिरः । चिकित्वान् । त्वत् । देवऽआपे । अभि । माम् । अगच्छत् ।
प्रतीचीनः । प्रति । माम् । आ । ववृत्स्व । दधामि । ते । द्युऽमतीम् । वाचम् । आसन् ॥२॥

देवः कश्चित् दूतः अजिरः गमनशीलः चिकित्वान् चेतनावान् हे देवापे त्वत् त्वत्तः सकाशात् त्वया प्रेषितः सन् माम् अभि आ अगच्छत् अभ्यागच्छतु । हे बृहस्पते प्रतीचीनः अस्मदभिमुखः मां प्रति आ ववृत्स्व मां प्रत्यागच्छ । ते तुभ्यं त्वदर्थं द्युमतीं दीप्तियुक्तां वाचं स्तुतिरूपां दधामि[1] आसन् आस्येऽस्मदीये ॥

अस्मे धेहि द्युमतीं वाचमासन् बृहस्पते अनमीवामिषिराम् ।
यया वृष्टिं शंतनवे वनाव दिवो द्रप्सो मधुमाँ आ विवेश ॥ ३ ॥

अस्मे इति । धेहि । द्युऽमतीम् । वाचम् । आसन् । बृहस्पते । अनमीवाम् । इषिराम् ।
यया । वृष्टिम् । शम्ऽतनवे । वनाव । दिवः । द्रप्सः । मधुऽमान् । आ । विवेश ॥ ३ ॥

हे बृहस्पते त्वम् अस्मे अस्मासु द्युमतीं दीप्तिमतीं वाचं स्तोत्रात्मिकाम् आसन् आस्येऽस्मदीये धेहि स्थापय । कीदृशीं वाचम् । अनमीवाम् अमीवारहिताम् । वाचोऽमीवा नाम गद्गदादिदोषः । तथा इषिरां गमनशीलाम् । यया वाचा स्तुत्यात्मिकया देवानिष्ट्वा शंतनवे वृष्टिकामाय वनाव संभजेवहि वृष्टिं त्वं चाहं च दिवः द्युलोकात् । त्वयाधिष्ठितः द्रप्सः उदकस्यन्दः मधुमान् माधुर्योपेतः आ विवेश आविशति । तां वाचमिति समन्वयः ॥

आ नो द्रप्सा मधुमन्तो विशन्त्विन्द्र देह्यधिरथं सहस्रम् ।
नि षीद होत्रमृतुथा यजस्व देवान् देवापे हविषा सपर्य ॥ ४ ॥

आ । नः । द्रप्साः । मधुऽमन्तः । विशन्तु । इन्द्र । देहि । अधिऽरथम् । सहस्रम् ।
नि । सीद । होत्रम् । ऋतुऽथा । यजस्व । देवान् । देवऽआपे । हविषा । सपर्य ॥ ४ ॥

नः अस्मान् द्रप्साः वृष्टिसंस्त्यायाः मधुमन्तः माधुर्योपेताः आ विशन्तु । हे इन्द्र परमेश्वर बृहस्पते अधिरथं रथस्याध्युपरि वर्तमानं सहस्रं सहस्रसंख्याकं धनं देहि[2] धेहि । यद्वा । रथमधिकं यस्य सहस्रस्य तादृशं गोसहस्रम् । हे देवापे नि षीद होत्रम् । आर्त्विज्ये निषीद । निषण्णश्च त्वम् ऋतुथा काले काले यजस्व यष्टव्यान् देवान् स्तुत्या हविषा च सपर्य परिचर ॥

आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥ ५ ॥

आर्ष्टिषेणः । होत्रम् । ऋषिः । निऽसीदन् । देवऽआपिः । देवऽसुमतिम् । चिकित्वान् ।
सः । उत्ऽतरस्मात् । अधरम् । समुद्रम् । अपः । दिव्याः । असृजत् । वर्ष्याः । अभि ॥ ५ ॥

---

१. ग-त४.५–दधामि धारयामि । २. त-भ–'देहि' नास्ति ।

आर्ष्टिषेणः ऋष्टिषेणस्य पुत्रः देवापिः ऋषिः देवसुमतिं देवानां कल्याणीं मतिं स्तुतिं चिकित्वान् जानन् होत्रं होतृकर्म कर्तुं निषीदन् निषण्णो भवति। स उत्तरस्मात् उपरि वर्तमानादन्तरिक्षाख्यात् समुद्रात् अधरम् अधो वर्तमानं पार्थिवं समुद्रम् अभि दिव्याः दिवि भवाः वर्ष्याः वर्षभवाः अपः असृजत् सृजतु। अत्र 'आर्ष्टिषेण ऋष्टिषेणस्य पुत्रः' (निरु. २. ११) इत्यादि निरुक्तं द्रष्टव्यम्॥

**अस्मिन्त्समुद्रे अध्युत्तरस्मिन्नापो देवेभिर्निवृता अतिष्ठन्।**
**ता अद्रवन्नार्ष्टिषेणेन सृष्टा देवापिना प्रेषिता मृक्षिणीषु॥ ६॥**

अस्मिन्। समुद्रे। अधि। उत्ऽतरस्मिन्। आपः। देवेभिः। निऽवृताः। अतिष्ठन्।
ताः। अद्रवन्। आर्ष्टिषेणेन। सृष्टाः। देवऽआपिना। प्रऽइषिताः। मृक्षिणीषु॥ ६॥

अस्मिन् पार्थिवे समुद्रे पूरणीये सति। अधि इति सप्तम्यर्थानुवादी। उत्तरस्मिन् समुद्रे अन्तरिक्षाख्ये आपः उदकानि देवेभिः द्योतमानैः निवृताः निरुद्धाः अतिष्ठन्। ताः आपः आर्ष्टिषेणेन ऋष्टिषेणस्य पुत्रेण देवापिना सृष्टाः प्रेषिताः प्रकर्षेणेच्छां प्राप्ताः काङ्क्षिताः मृक्षिणीषु मृष्टवतीषु परिमृष्टासु स्थलीषु अद्रवन् स्रवन्ति॥　　　॥ १२॥

**यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्।**
**देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्॥ ७॥**

यत्। देवऽआपिः। शम्ऽतनवे। पुरःऽहितः। होत्राय। वृतः। कृपयन्। अदीधेत्।
देवऽश्रुतम्। वृष्टिऽवनिम्। रराणः। बृहस्पतिः। वाचम्। अस्मै। अयच्छत्॥ ७॥

यत् यदा देवापिः आर्ष्टिषेणः शंतनवे स्वभ्रात्रे कौरव्याय पुरोहितः सन् होत्राय होत्रार्थं वृतः सन् देवश्रुतम्। देवा एनं शृण्वन्तीति देवश्रुत्। तं तथा वृष्टिवनिं वृष्टियाचिनं बृहस्पतिम् अदीधेत् अन्वध्यायत् स च रराणः रममाणः बृहस्पतिः देवः अस्मै देवापये वाचम् अयच्छत्॥

**यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यः समीधे।**
**विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया वृष्टिमन्तम्॥ ८॥**

यम्। त्वा। देवऽआपिः। शुशुचानः। अग्ने। आर्ष्टिषेणः। मनुष्यः। सम्ऽईधे।
विश्वेभिः। देवैः। अनुऽमद्यमानः। प्र। पर्जन्यम्। ईरय। वृष्टिऽमन्तम्॥ ८॥

हे अग्ने यं त्वा त्वां शुशुचानः स्तोत्रेण ज्वलन् मनुष्यः आर्ष्टिषेणः देवापिः समीधे सम्यग्दीपयति स त्वं विश्वेभिः सर्वैः देवैः अनुमद्यमानः अनुमाद्यमानः[1] सन् पर्जन्यं मेघं वृष्टिमन्तं वर्षणवन्तं प्र ईरय गमय॥

**त्वां पूर्व ऋषयो गीर्भिरायन् त्वामध्वरेषु पुरुहूत विश्वे।**
**सहस्राण्यधिरथान्यस्मे आ नो यज्ञं रोहिदश्वोप याहि॥ ९॥**

---

१. ग-त४.५-भ—अनुमोद्यमानः।

त्वाम् । पूर्वे । ऋषयः । गीःऽभिः । आयन् । त्वाम् । अध्वरेषु । पुरुऽहूत । विश्वे ।
सहस्राणि । अधिऽरथानि । अस्मे इति । आ । नः । यज्ञम् । रोहित्ऽअश्व । उप । याहि ॥९॥

हे अग्ने ᵛत्वां ᵛपूर्वे ᵛऋषयः ᵛगीर्भिः स्तुतिभिः ᵛआयन् आगच्छन् । तथा हे ᵛपुरुहूत बहुभिराहूताग्ने ᵛविश्वे सर्वेऽपीदानींतना यजमानाः ᵛअध्वरेषु यज्ञेषु स्तुतिभिः गच्छन्तीति[1] शेषः । किंच[2] ᵛसहस्राणि सहस्रसंख्यानि गोयूथानि ᵛअधिरथानि रथाधिकानि ᵛअस्मे* अस्माकं शंतनुना दक्षिणात्वेन संकल्पितानि भवन्त्विति शेषः[2] । हे ᵛरोहिदश्व ᵛनो ᵛयज्ञम् ᵛउप ᵛयाहि उपागच्छ ॥

**एतान्यग्ने नवतिर्नव त्वे आहुतान्यधिरथा सहस्रा ।**
**तेभिर्वर्धस्व तन्वः शूर पूर्वीर्दिवो नो वृष्टिमिषितो रिरीहि ॥ १० ॥**

एतानि । अग्ने । नवतिः । नव । त्वे इति । आऽहुतानि । अधिऽरथा । सहस्रा ।
तेभिः । वर्धस्व । तन्वः । शूर । पूर्वीः । दिवः । नः । वृष्टिम् । इषितः । रिरीहि ॥ १० ॥

हे ᵛअग्ने गवां ᵛनवतिः ᵛनव च तथा ᵛएतानि अधिरथानि ᵛसहस्रा सहस्राणि च रथाधिकानि गवां सहस्राणि च ᵛत्वे त्वयि ᵛआहुतानि त्वयि प्रीणयितव्ये सत्याहुतानि । यद्वा । त्वे त्वयि आहुतानि[3] समर्पितानीत्यर्थः । ᵛतेभिः तैः प्रत्तैः ᵛपूर्वीः बह्वीः ᵛतन्वः तनूः युष्मदीयाः ᵛवर्धस्व वर्धय । ᵛनः अस्मदर्थं ᵛदिवः द्युलोकात् ᵛवृष्टिम् ᵛइषितः प्रार्थितः सन् ᵛरिरीहि पूरय ॥

**एतान्यग्ने नवतिं सहस्रा सं प्र यच्छ वृष्ण इन्द्राय भागम् ।**
**विद्वान्पथ ऋतुशो देवयानानप्यौलानं दिवि देवेषु धेहि ॥ ११ ॥**

एतानि । अग्ने । नवतिम् । सहस्रा । सम् । प्र । यच्छ । वृष्णे । इन्द्राय । भागम् ।
विद्वान् । पथः । ऋतुऽशः । देवऽयानान् । अपि । औलानम् । दिवि । देवेषु । धेहि ॥ ११ ॥

हे ᵛअग्ने गवाम् ᵛएतानि ᵛनवतिं ᵛसहस्रा सहस्राणि च ᵛवृष्णे वर्षित्रे ᵛइन्द्राय ᵛभागं ᵛसं ᵛप्र ᵛयच्छ । तत्प्रीत्यर्थमृत्विग्भ्यो देहि । किंच ᵛदेवयानान् ᵛपथः देवयानान् मार्गान् ᵛविद्वान् त्वम् ᵛऋतुशः काले काले ᵛऔलानम् ᵛअपि कुरुकुलजातमपि शान्तनवं ᵛदेवेषु मध्ये ᵛधेहि निधेहि स्थापय ॥

**अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षांसि सेध ।**
**अस्मात्समुद्राद्बृहतो दिवो नोऽपां भूमानमुप नः सृजेह ॥ १२ ॥**

अग्ने । बाधस्व । वि । मृधः । वि । दुःऽगहा । अप । अमीवाम् । अप । रक्षांसि । सेध ।
अस्मात् । समुद्रात् । बृहतः । दिवः । नः । अपाम् । भूमानम् । उप । नः । सृज । इह ॥ १२ ॥

हे ᵛअग्ने[4] ᵛदुर्गहा दुर्गहाणि दुःखेन गाहितव्यानि शत्रुपुराणि ᵛवि ᵛबाधस्व । तथा ᵛअमीवां रोगम् ᵛअप ᵛसेध । तथा ᵛरक्षांसि ᵛअप सेध अपवारय । ᵛअस्मात् ᵛसमुद्रात् समुद्रवणसाधनात्[5]

---

१. ग–स्तुवंतीति; त-भ– यच्छंतीति । २. ग–स त्वमधिरथानि सहस्राणि रथोपरि वर्तमानानि धनानि सहस्रसंख्याकानि अस्मभ्यं यच्छेति शेषः । * त-भ–'अस्मे' नास्ति । ३. ग१.२–आहुतानि आहूतानि; ग४–आहुतावाहुतानि; त२–आहुतानि आहतानि; त६.८-भ१.४.७–आहुतानि आहुतानि । ४. ग१.२–अग्ने मृधः शत्रून् विबाधस्व तथा । ५. ग४–समुद्रतरणसाधनात्; त१.२.३.७-भ१.२.४.८–समुद्रचरणसाधनात् ।

ᵛबृहतः महतः ᵛदिवः द्युलोकादन्तरिक्षाद्वा ᵛअपाम् उदकानां ᵛभूमानं बहुभावं वृष्टिसंस्त्यायम् ᵛइह अस्मिँल्लोके ᵛउप ᵛसृज प्रयच्छेत्यर्थः ॥ ॥ १३ ॥

'कं नः' इति द्वादशर्चं नवमं सूक्तं वैखानसस्य वम्रस्यार्षं त्रैष्टुभमैन्द्रम्। तथा चानुक्रान्तं—कं नो वम्रो वैखानसः' इति। गतो विनियोगः ॥

कं न॑श्चि॒त्रमि॑षण्यसि चिकि॒त्वान् पृ॑थु॒ग्मानं॑ वा॒श्रं वा॑वृ॒धध्यै॑ ।
कत्तस्य॑ दा॒तु शव॑सो॒ व्यु॑ष्टौ॒ तक्ष॒द्वज्रं॑ वृत्र॒तुर॒मपि॑न्वत् ॥ १ ॥

कम् । न॒ः । चि॒त्रम् । इ॒ष॒ण्य॒सि॒ । चि॒कि॒त्वान् । पृ॒थु॒ऽग्मान॑म् । वा॒श्रम् । व॒वृ॒धध्यै॑ ।
कत् । तस्य॑ । दा॒तु । शव॑सः । विऽउ॑ष्टौ । तक्ष॑त् । वज्र॑म् । वृ॒त्र॒ऽतुर॑म् । अपि॑न्वत् ॥ १ ॥

हे इन्द्र ᵛनः अस्माकं ᵛचित्रं चायनीयं ᵛकं धनविशेषम् ᵛइषण्यसि प्रेरयसि। ᵛचिकित्वान् सर्वथा प्रेरणीयमिति जानन्। कीदृशं तम्। ᵛपृथुग्मानं पृथुभावं प्राप्नुवन्तं ᵛवाश्रं शब्दनीयं स्तुत्यम्। किमर्थम्। ᵛववृधध्यै अस्माकं वर्धनाय। किंच ᵛतस्य इन्द्रस्य ᵛशवसः बलस्य ᵛव्युष्टौ व्युच्छने सति ᵛकत् ᵛदातु किं[1] दानमस्माकं भवतीति शेषः। यं ᵛवज्रं ᵛवृत्रतुरं वृत्रस्यावरकस्य पापस्य हिंसकं त्वष्टा ᵛतक्षत् अतक्षत् साधु संपादितवान् ᵛअपिन्वत् असिञ्चच्च। तस्य शवसो व्युष्टाविति संबन्धः। यद्वा। हे इन्द्र कत्[2] किं तस्य[2] वज्रस्य दानं भवति यं वज्रमिन्द्रार्थं तक्षदिति योजना। 'मह्यं त्वष्टा वज्रमतक्षदायसम्' (ऋ. सं. १०. ४८. ३) इति मन्त्रान्तरम् ॥

स हि द्यु॒ता वि॒द्युता॒ वेति॒ साम॑ पृ॒थुं योनि॑मसु॒रत्वा स॑साद ।
स सनी॑ळेभिः प्रस॒हानो॑ अ॒स्य भ्रातु॒र्न ऋ॒ते स॒प्तथ॑स्य मा॒याः ॥ २ ॥

सः । हि । द्यु॒ता । वि॒ऽद्युता॑ । वेति॑ । साम॑ । पृ॒थुम् । योनि॑म् । अ॒सु॒र॒ऽत्वा । आ । स॒सा॒द॒ ।
सः । सऽनी॑ळेभिः । प्र॒ऽस॒हा॒नः । अ॒स्य । भ्रातु॑ः । न । ऋ॒ते । स॒प्तथ॑स्य । मा॒याः ॥ २ ॥

ᵛस[3] ᵛहि[3] स खल्विन्द्रः ᵛद्युता द्योतमानेन ᵛविद्युता एतन्नामकेनायुधेन युक्तः सन् ᵛसाम स्तोत्रात्मकं यज्ञसंबन्धि ᵛवेति गच्छति। तथा[4] ᵛअसुरत्वा असुरत्वेन बलेन युक्तः सन् ᵛपृथुं विस्तीर्णं ᵛयोनिं फलस्योत्पादकं यज्ञं ᵛससाद संगतो भवति। ᵛसः इन्द्रः ᵛसनीळेभिः। नीडं विमानम्। सविमानैर्मरुद्भिर्युक्तः सन् ᵛप्रसहानः अभिभवन् भवति। तस्य ᵛसप्तथस्य आदित्यानां धात्रादीनां मध्ये सप्तमस्येन्द्रस्य ᵛभ्रातुः भागैर्भक्तव्यस्य ᵛमाया आसुरी ᵛऋते यज्ञे ᵛन संभवतीति शेषः ॥

स वाजं॑ या॒तापदु॑ष्पदा॒ यन्त्स्व॑र्षाता॒ परि॑ षदत्सनि॒ष्यन् ।
अ॒नर्वा॒ यच्छ॒तदु॑रस्य॒ वेदो॒ घ्नञ्छि॒श्नदे॑वाँ अ॒भि वर्प॑सा॒ भूत् ॥ ३ ॥

सः । वाज॑म् । याता॑ । अप॑दुःऽपदा । यन् । स्वः॑ऽसाता । परि॑ । स॒द॒त् । स॒नि॒ष्यन् ।
अ॒न॒र्वा । यत् । श॒त॒ऽदु॑रस्य । वेद॑ः । घ्नन् । शि॒श्नऽदे॑वान् । अ॒भि । वर्प॑सा । भूत् ॥ ३ ॥

१. त-भ-'किं' नास्ति। २. ग४-किं त्वस्य; त१.२.३.६.७.८-भ-किं तस्य; त४.५-क त्वस्य।
३. त-भ-'स हि' नास्ति। ४. भ-यथा।

$^{v}$वाजं शूरैर्गन्तव्यं संग्रामं $^{v}$याता $^{v}$सः इन्द्रः। 'न लोकाव्यय'' इति षष्ठीप्रतिषेधः। $^{v}$अपदुष्पदा अपगतदुष्टपतनेन $^{v}$यन् गच्छन् $^{v}$सनिष्यन् तत्र शत्रुधनानि संभक्तुमिच्छन् $^{v}$परि $^{v}$षदत् परिषीदति। कुत्रेति उच्यते। $^{v}$स्वर्षाता स्वर्षातौ सर्वलाभोपेते संग्रामे[1]। किंच $^{v}$अनर्वा युद्धे अप्रत्यृत[2] इन्द्रः $^{v}$शतदुरस्य शतद्वारस्य शत्रुपुरस्य अन्तर्निहितं $^{v}$यत् $^{v}$वेदः धनमस्ति तद्धनं $^{v}$वर्पसा आवरकेण बलेन $^{v}$अभि $^{v}$भूत्[2] अभिभवति। किं कुर्वन्। $^{v}$शिश्नदेवान् अब्रह्मचर्यान् शतद्वारेषु शत्रुपुरसंबन्धिषु वर्तमानान् $^{v}$घ्नन् हिंसन्॥

स य॒ह्व्यो॒३॑ऽवनी॒र्गोष्वर्वा जु॑होति प्र॒धन्या॑सु सस्रिः।
अ॒पादो॒ यत्र॑ यु॒ज्यासो॑ऽर॒था द्रो॒ण्य॑श्वास॒ ईर॑ते घृ॒तं वाः॥ ४॥

सः। य॒ह्व्यः॑। अ॒वनीः॑। गोषु॑। अर्वा॑। आ। जु॒हो॒ति॒। प्र॒ऽध॒न्या॑सु। सस्रिः॑।
अ॒पादः॑। यत्र॑। यु॒ज्यासः॑। अ॒र॒थाः। द्रो॒णि॒ऽअ॑श्वासः। ईर॑ते। घृ॒तम्। वारिति॒ वाः॥४॥

$^{v}$सः इन्द्रः $^{v}$अर्वा मेघेष्वभिगन्ता $^{v}$सस्रिः सरणकुशलः $^{v}$प्रधन्यासु प्रकृष्टधननिमित्तासु $^{v}$गोषु भूमिषु $^{v}$यह्व्यः। महन्नामैतत्। महतीः $^{v}$अवनीः। अवन्तीत्यवनय आपः। ताः $^{v}$आ $^{v}$जुहोति आक्षिपति। $^{v}$यत्र यासु भूमिषु $^{v}$अपादः पादरहिताः $^{v}$अरथाः रथवर्जिताः। पादरहिताः केचन रथेन गच्छन्ति। केनापि शून्याः $^{v}$द्रोण्यश्वासः द्रुतव्यापनाः $^{v}$युज्यासः युज्या इन्द्रस्य सख्यो नद्यः $^{v}$वाः वारकं $^{v}$घृतम् उदकम् $^{v}$ईरते प्रेरयन्ति तत्राजुहोति॥

स रु॒द्रेभि॒रश॑स्तवार ऋभ्वा॑ हि॒त्वी गय॑मा॒रेअ॑वद्य॒ आगा॑त्।
व॒म्रस्य॑ मन्ये मिथु॒ना विव॑व्री॒ अन्न॑म॒भीत्या॑रोदयन्मु॒षाय॑न्॥ ५॥

सः। रु॒द्रेभिः॑। अश॑स्तऽवारः। ऋभ्वा॑। हि॒त्वी। गय॑म्। आ॒रेऽअ॑वद्यः। आ। अ॒गा॒त्।
व॒म्रस्य॑। म॒न्ये॒। मि॒थु॒ना। विव॑व्री॒ इति॒ विऽव॑व्री। अन्न॑म्। अ॒भि॒ऽइत्य॑। अ॒रो॒द॒य॒त्। मु॒षाय॑न्॥५॥

$^{v}$सः इन्द्रः $^{v}$रुद्रेभिः रुद्रपुत्रैर्मरुद्भिः सहितः $^{v}$आगात् आगच्छतु। कीदृशः[3]। $^{v}$अशस्तवारः स्तोतृभिरप्रार्थितधनः। स्वयमेव प्रदातेत्यर्थः। तथा $^{v}$ऋभ्वा महान् $^{v}$गयं $^{v}$हित्वी हित्वा स्वस्थानं परित्यज्यागात् आगच्छतु[4]। तत्र संबन्धः। $^{v}$आरेअवद्यः दूरेगतगर्ह्यः। किंच $^{v}$वम्रस्य एतन्नामकस्य ऋषेर्मम $^{v}$मिथुना मिथुनौ मातापितरौ $^{v}$विवव्री विगतज्वरौ $^{v}$मन्ये अवगच्छामि। अयं वम्रः $^{v}$अन्नं शत्रुसंबन्धि $^{v}$अभीत्य अभिप्राप्य $^{v}$मुषायन् मुष्णन् $^{v}$अरोदयत् रोदयति। 'छन्दसि शायजपि' इत्यहावपि मुषेः श्नः शायजादेशः॥

स इद्दासं॑ तुवी॒रवं॒ पति॒र्दन्ष॑ळ॒क्षं त्रि॑शी॒र्षाणं॑ दमन्यत्।
अ॒स्य त्रि॒तो न्वोज॑सा वृधा॒नो वि॒पा व॑रा॒हमयो॑अग्रया हन्॥ ६॥

सः। इत्। दास॑म्। तु॒वि॒ऽरव॑म्। पतिः॑। दन्। ष॒ट्ऽअ॒क्षम्। त्रि॒ऽशी॒र्षाण॑म्। द॒म॒न्य॒त्।
अ॒स्य। त्रि॒तः। नु। ओज॑सा। वृ॒धा॒नः। वि॒पा। व॒रा॒हम्। अयः॑ऽअग्रया। ह॒न्निति॑ हन्॥ ६॥

---

१. त-भ-'संग्रामे' नास्ति। २. भ-'अप्रत्यृत ...... भूत्' नास्ति। ३. ग-त-कीदृशः सः। ४. ग-त-भ-आगच्छति।

ᵛस ᵛइत् स एवेन्द्रः ᵛपतिः सर्वस्य स्वामी ᵛदासम् उपक्षपयितारं ᵛतुवीरवं बहुशब्दं संग्रामे भयंकरं शब्दं कुर्वाणं वृत्रं ᵛदन् दमयन् ᵛपळक्षम् अक्षिपक्ष्मोपेतं ᵛत्रिशीर्षाणं त्रिशिरस्कं त्वष्टुः पुत्रं विश्वरूपं ᵛदमन्यत् दमितुं प्रहर्तुमैच्छत्। अवधीदित्यर्थः। यद्वा। दमयतीति दमनः। नन्द्यादित्वात् ल्युः। स इवाचरति। 'उपमानादाचारे' (पा. सू. ३. १. १०) इति क्यच्यन्त्यलोपश्छान्दसः। ततो लङि 'बहुलं छन्दसि' इत्यडभावः। किंच ᵛत्रितः एतन्नामा महर्षिः ᵛअस्य इन्द्रस्य ᵛओजसा बलेन ᵛवृधानः वर्धमानः ᵛविपा अङ्गुल्या। कीदृश्या। ᵛअयोअग्रया अयोवत्कठिननखया ᵛवराहं वराहारम्[1] उदकवन्तं मेघं व्यहन्[2] विहतवान्॥ ॥ १४॥

स द्रुह्वणे मनुष ऊर्ध्वसान आ साविषदर्शसानाय शरुम्।
स नृतमो नहुषोऽस्मत्सुजातः पुरोऽभिनदर्हन् दस्युहत्ये॥ ७॥

सः। द्रुह्वणे। मनुषे। ऊर्ध्वसानः। आ। साविषत्। अर्शसानाय। शरुम्।
सः। नृऽतमः। नहुषः। अस्मत्। सुऽजातः। पुरः। अभिनत्। अर्हन्। दस्युऽहत्ये॥७॥

ᵛसः इन्द्रः ᵛद्रुह्वणे द्रुह्वणाय दृढं शत्रुभिर्जेतव्याय ᵛमनुषे मनुष्याय योद्ध्रे स्वभक्ताय ᵛऊर्ध्वसानः। ऊर्ध्वं उच्छ्रितः शौर्यादिभिर्गुणैरधिकः सन्[3] स्यति शत्रूणामन्तं करोतीत्यूर्ध्वसः। स[3] इवाचरन्। ऊर्ध्वसशब्दादाचारार्थे क्विबन्ताच्छानच्[4]। ᵛअर्शसानाय शत्रूणां हिंसित्रे ᵛशरुं हिंसकमायुधम् ᵛआ ᵛसाविषत् आभिमुख्येन प्रसौति यच्छति। यद्वा। द्रुह्वणे मनुषे द्रोग्धव्याय मनुष्यायार्शसानाय स्वभक्तहिंसित्रे तस्य वधार्थमूर्ध्वसानः सन् शरुम् आ साविषत् वज्रं प्रेरयति। ᵛसः एवेन्द्रः ᵛनहुषः मनुष्यात् ᵛनृतमः मनुष्याणां नेतृतमः संग्रामे शूराणां गमयितृतमः। यद्वा। नृतमो नहुषो बन्धकश्च। ᵛअस्मत् अस्मदर्थं ᵛसुजातः सुष्ठु प्रादुर्भूतः ᵛअर्हन् पूज्यः सन् ᵛदस्युहत्ये। दस्यवः उपक्षपयितारः शत्रवः। तेषां हत्यं हननं यस्मिन् तादृशे[5] संग्रामे ᵛपुरः शत्रूणां शरीराणि ᵛअभिनत् भिन्नवान्॥

सो अभ्रियो न यवस उदन्यन् क्षयाय गातुं विदन्नो अस्मे।
उप यत्सीददिन्दुं शरीरैः श्येनोऽयोपाष्टिर्हन्ति दस्यून्॥ ८॥

सः। अभ्रियः। न। यवसे। उदन्यन्। क्षयाय। गातुम्। विदत्। नः। अस्मे इति।
उप। यत्। सीदत्। इन्दुम्। शरीरैः। श्येनः। अयःऽअपाष्टिः। हन्ति। दस्यून्॥ ८॥

ᵛसः इन्द्रः ᵛअभ्रियो ᵛन। न भ्राजन्तेऽपो बिभ्रतीति वाभ्राणि मेघाः। तेषां संघोऽभ्रियः[6]। स इव ᵛयवसे गवादिभक्षणसाधनाय तृणाय ᵛउदन्यन् उदकं दातुमिच्छन्। तथा ᵛक्षयाय गमनाय निवासाय वा ᵛअस्मे अस्माकं ᵛगातुं[7] मार्गं ᵛविदत् लम्भयन्। ᵛनः इति पूरणः। तादृशः सन् ᵛयत् यदा ᵛइन्दुं सोमं ᵛशरीरैः स्वशरीरावयवैरङ्गैः ᵛउप ᵛसीदत् उपगच्छति। यच्छब्दयोगादनिघातः। तदानीं ᵛश्येनः। सादृश्यप्रधानोऽयं[8] निर्देशः। श्येनसदृशः श्येनवच्छंसनीयगमनः

१. त१.२.३.६.७-मु-'वराहारं' नास्ति; त४.५-वराहाकारं। २ त१.२.३.६.७-व्यवहन्। ३. ग-त-भ-'सन् ... ... स' नास्ति। ४. त-१.२.३.७-क्विबन्तादसानच्; भ-क्विबन्तादस्तानच्। ५. त-स तादृशे; भ-सा तादृशे। ६. त४.५-संबंधी अभ्रियः। ७. त-भ-गातुमस्माकं। ८. ग२-त-भ-सदृश°; ग४-तादृश°।

ᵛअयोपाष्टिः। अपयष्टिर्व्याप्तिर्यस्य स प्रदेशोऽपाष्टिः पार्ष्णिः। अयोमयोऽपाष्टिः पार्ष्णिर्यस्य सः। ᵛदस्यून् शत्रून् ᵛहन्ति हिनस्ति ॥

स व्राधतः शवसानेभिरस्य कुत्साय शुष्णं कृपणे परादात्।
अयं कविमनयच्छस्यमानमत्कं यो अस्य सनितोत नृणाम् ॥ ९ ॥

सः। व्राधतः। शवसानेभिः। अस्य। कुत्साय। शुष्णम्। कृपणे। परा। अदात्।
अयम्। कविम्। अनयत्। शस्यमानम्। अत्कम्। यः। अस्य। सनिता। उत। नृणाम् ॥ ९ ॥

ᵛसः इन्द्रः ᵛव्राधतः[1]। महन्नामैतत्। महतोऽपि शत्रून् ᵛशवसानेभिः बलमाचरद्भिरायुधैः ᵛअस्य अस्यतु। 'असु क्षेपणे'। व्यत्ययेन मध्यमः। ᵛकुत्साय[2] एतन्नामकाय ᵛकृपणे स्तोत्रे। कृपतिः स्तुतिकर्मा। ᵛशुष्णं शोषकमेतन्नामकमसुरं ᵛपरादात् पराभूय खण्डितवान्[3]। 'कुत्साय शुष्णमशुषं नि बर्हीः' (ऋ. सं. ४. १६. १२) इति मन्त्रान्तरम्। किंच ᵛअयम् इन्द्रः ᵛकविम् उशनसम्। कविरिति पितृनाम्ना पुत्रस्यापि व्यवहार उपचारात्। ᵛशस्यमानं स्तुवन्तम् ᵛअनयत् वशं प्रापयत्तस्य विरोधिनम्। यद्वा। कविं भार्गवमेव स्तोतृभिः शस्यमानं स्ववशमनयत्। ᵛयः कविः ᵛअस्य इन्द्रस्य ᵛअत्कं रूपं[4] ᵛसनिता संभक्ता भवति। 'न लोकाव्यय°' इति षष्ठीप्रतिषेधः। ᵛउत अपि च ᵛनृणां वृष्ट्यादिनेतॄणामिन्द्रानुचराणां मरुतां यः कविः सनिता तमनयदिति ॥

अयं दशस्यन्नर्येभिरस्य दस्मो देवेभिर्वरुणो न मायी।
अयं कनीनं ऋतुपा अवेद्यमिमीताररुं यश्चतुष्पात् ॥ १० ॥

अयम्। दशस्यन्। नर्येभिः। अस्य। दस्मः। देवेभिः। वरुणः। न। मायी।
अयम्। कनीनः। ऋतुऽपाः। अवेदि। अमिमीत। अररुम्। यः। चतुःऽपात् ॥ १० ॥

ᵛअयम् इन्द्रः ᵛदशस्यन् स्तोतृभ्यो धनं प्रयच्छन्। दशस्यतिर्दानकर्मा। ᵛनर्येभिः[5] नर्यैर्नृहितैः मरुद्भिः ᵛअस्य अस्यति। छान्दसस्तिपो लोपः। यद्वा। व्यत्ययेन लोण्मध्यमः। तथा ᵛदेवेभिः द्योतमानैः स्वतेजोभिः ᵛदस्मः दर्शनीयः ᵛवरुणो ᵛन वरुण इव। वरुणस्तमोवारक आदित्यो वरुण एव वा। स इव ᵛमायी मायावान्[6]। तथा ᵛअयं ᵛकनीनः कमनीयः ᵛऋतुपाः ऋतौ पाता ᵛअवेदि अज्ञायि। तथा ᵛअररुम् असुरमेतन्नामानम् ᵛअमिमीत अमिनात्। ᵛयः अररुः ᵛचतुष्पात् पादचतुष्टयोपेतः। 'मीङ् हिंसायाम्'। लङि 'बहुलं छन्दसि' इति विकरणस्य श्लुः ॥

अस्य स्तोमेभिरौशिज ऋजिश्वा व्रजं दरयद्वृषभेण पिप्रोः।
सुत्वा यद्यजतो दीदयद्गीः पुर इयानो अभि वर्पसा भूत् ॥ ११ ॥

अस्य। स्तोमेभिः। औशिजः। ऋजिश्वा। व्रजम्। दरयत्। वृषभेण। पिप्रोः।
सुत्वा। यत्। यजतः। दीदयत्। गीः। पुरः। इयानः। अभि। वर्पसा। भूत् ॥ ११ ॥

---

१. ग१.२-त१.२.३.६.७.८-म-व्राधतो व्राधन्। २. ग-यः कुत्साय; त-म१.२.४.८-अयः कुत्साय। ३. ग४-खंडितवान् दो (अवखं)डने लेटि रूपं। ४. ग४-आत्मीयरूपं। ५. ग१.२-त-म१.२.४.८-स नर्येभिः। ६. ग-त१.२.३.६.७-मु-मायावान् प्रज्ञावान्।

ᐯअस्य इन्द्रस्य ᐯस्तोमेभिः स्तोत्रैः ᐯऔशिजः उशिजः पुत्रः ᐯऋजिश्वा एतन्नामा ᐯवृषभेण[1] वज्रेण वृषभेण वा युक्तं ᐯव्रजं गोष्ठं ᐯपिप्रोः एतन्नामकस्यासुरस्य संबन्धिनं तेनापहृत्य पालितं ᐯदरयत् अदारयत्। ᐯयत् यदा ᐯसुत्वा सोमस्य सोता। 'सुयजोर्ङ्वनिप्' इति वनिप्। 'ह्रस्वस्य पिति°' इति तुक्। ᐯयजतः यष्टौशिजः ᐯगीः स्तुतिवाचः ᐯदीदयत् दीपितवान्। तथा यद्यदा ᐯइयानः[2] गच्छन् ᐯपुरः शत्रुपुराणि। यद्वा। पुरः पुर इव संघीभूतानि पापानि। ᐯअभि ᐯभूत् अभिभवति। केन साधनेन। ᐯवर्पसा। रूपनामैतत्। रूपेणेन्द्रानुगृहीतेन। यदैवमकरोत् तदा व्रजं दरयदिति संबन्धः॥

एवा म॒हो अ॑सुर व॒क्षथा॑य वम्र॒कः प॒ड्भिरुप॑ सर्प॒दिन्द्र॑म्।
स इ॑या॒नः क॑रति स्व॒स्तिम॑स्मा इ॒षमू॒र्जं सु॑क्षि॒तिं विश्व॒माभाः॥ १२॥

एव। म॒हः। अ॒सु॒र॒। व॒क्षथा॑य। व॒म्र॒कः। प॒ट्ऽभिः। उप॑। स॒र्प॒त्। इन्द्र॑म्।
सः। इ॒या॒नः। क॒र॒ति॒। स्व॒स्तिम्। अ॒स्मै॒।
इ॒षम्। ऊर्ज॑म्। सु॒ऽक्षि॒तिम्। विश्व॑म्। आ। अ॒भा॒रित्य॑भाः॥ १२॥

अनया स्तुतिमुपसंहृत्याभिमतं वम्रकः प्रार्थयते। हे ᐯअसुर बलवन्निन्द्र त्वाम् ᐯएव एवमुक्तप्रकारेण ᐯमहः महतो हविषः स्तोत्रस्य वा ᐯवक्षथाय वहनाय महतः स्वर्गादेः प्रापणाय वा ᐯपड्भिः पादैः ᐯउप ᐯसर्पत् उपागमत्। ᐯसः ᐯइयानः उपागम्यमानः[3] सन् ᐯकरति करोतु ᐯस्वस्तिम् अविनाशम् ᐯअस्मै वम्रकाय। तथा ᐯइषम् अन्नम् ᐯऊर्जं रसं ᐯसुक्षितिं सुनिवासं सम्यक् ᐯविश्वं सर्वम् ᐯआभाः आहरतु॥ ॥ १५॥ ॥ ८॥

नवमेऽनुवाके त्रयोदश सूक्तानि। तत्र 'इन्द्र दृह्य' इति द्वादशर्चं प्रथमं सूक्तं वन्दनपुत्रस्य दुवस्योरार्षं वैश्वदेवम्। द्वादशी त्रिष्टुप्। शिष्टा जगत्यः। तथा चानुक्रान्तम्—'इन्द्र दुवस्युर्वान्दनो वैश्वदेवं त्वन्त्या त्रिष्टुप्' इति। गतो विनियोगः॥

इन्द्र॒ दृह्य॑ मघव॒न्त्वाव॒दिद्भु॒ज इ॒ह स्तु॒तः सु॑त॒पा बो॑धि नो वृ॒धे।
दे॒वेभि॑र्नः सवि॒ता प्राव॑तु श्रु॒तमा स॒र्वता॑ति॒मदि॑तिं वृणीमहे॥ १॥

इन्द्र॑। दृह्य॑। म॒घ॒ऽव॒न्। त्वाऽव॑त्। इत्। भु॒जे। इ॒ह। स्तु॒तः। सु॒त॒ऽपाः। बो॒धि॒। नः॒। वृ॒धे।
दे॒वेभिः॑। नः॒। स॒वि॒ता। प्र। अ॒व॒तु॒। श्रु॒तम्। आ। स॒र्वऽता॑तिम्। अदि॑तिम्। वृ॒णी॒म॒हे॒॥ १॥

हे ᐯइन्द्र ᐯमघवन् धनवन् त्वं ᐯत्वावदित् त्वत्सदृशमेव शत्रुबलं ᐯदृह्य मारय। किमर्थम्। ᐯभुजे अस्माकं भोगाय[4]। तदर्थम् ᐯइह अस्मिन् यज्ञे ᐯस्तुतः सन् ᐯसुतपाः सुतस्य अभिषुतस्य सोमस्य पाता ᐯबोधि बुध्यस्व। भवेत्यर्थः। किमर्थम्। ᐯनः अस्माकं ᐯवृधे वर्धनाय। किंच ᐯदेवेभिः देवैः सह ᐯनः अस्माकं ᐯश्रुतं विश्रुतं यज्ञं ᐯसविता सर्वस्य स्वस्वकर्मसु प्रेरको देवः ᐯप्रावतु प्ररक्षतु। किंच ᐯसर्वतातिम्। स्वार्थिकस्तातिल्। सर्वां सर्वात्मिकाम्। यद्वा। सर्वे तायन्तेऽस्यामिति सर्वतातिः। छान्दसो दीर्घः। तादृशीम् ᐯअदितिम् अखण्डनीयां देवमातरम् ᐯआ ᐯवृणीमहे॥

१. ग-त१.२.३.६.७-मु-वृषभेण वर्षणेन। २. ग.१.२-त-भ-'इयानः' नास्ति। ३. त१.२.३.४.५.६-भ१.२.४.७-उपगम्यमानः। ४. त४.५-गोलाभाय।

भराय सु भरत भागमृत्वियं प्र वायवे शुचिपे क्रन्ददिष्टये ।
गौरस्य यः पयसः पीतिमानश आ सर्वतातिमदितिं वृणीमहे ॥ २ ॥

भराय । सु । भरत । भागम् । ऋत्वियम् । प्र । वायवे । शुचिऽपे । क्रन्दत्ऽइष्टये ।
गौरस्य । यः । पयसः । पीतिम् । आनशे । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥२॥

ᵛभराय संग्रामकारिणे सर्वेषां पोषकाय वेन्द्राय ᵛऋत्वियं काले जातं प्राप्तकालं ᵛभागं ᵛसु ᵛभरत सुष्ठु संपादयत हे ऋत्विजः । तथा ᵛशुचिपे शुद्धस्य सोमस्य पात्रे ᵛक्रन्ददिष्टये शब्दितगमनाय । वायोः शीघ्रगमने हि शब्दः प्रत्यक्षः । तादृशाय ᵛवायवे ᵛदेवाय ᵛप्र भरत भागमिति शेषः । ᵛयः देवः ᵛगौरस्य गौरवर्णस्य पशोः ᵛपयसः ᵛपीतिं पानम् ᵛआनशे प्राप्नोति तस्मै वायवे । शिष्टमुक्तम् ॥

आ नो देवः सविता साविषद्वय ऋजूयते यजमानाय सुन्वते ।
यथा देवान् प्रतिभूषेम पाकवदा सर्वतातिमदितिं वृणीमहे ॥ ३ ॥

आ । नः । देवः । सविता । साविषत् । वयः । ऋजुऽयते । यजमानाय । सुन्वते ।
यथा । देवान् । प्रतिऽभूषेम । पाकऽवत् । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥३॥

ᵛसविता सर्वस्य प्रेरकः सूर्यः ᵛनः अस्माकं संबन्धिने ᵛऋजूयते ऋजुकामाय ᵛसुन्वते अभिषवं कुर्वते ᵛयजमानाय ᵛवयः अन्नं ᵛपाकवत् पाकोपेतम् । व्यवहितमप्येतदत्र संबध्यते । ᵛआ ᵛसाविषत् आभिमुख्येन प्रसौति[1] । सौतेर्ण्यन्ताल्लेटि रूपम् । ᵛयथा येन प्रकारेण ᵛदेवान् ᵛप्रतिभूषेम प्रतिभवेम । भवतेर्लिङि सिप्शपौ । द्विविकरणता । यद्वा । 'भूष अलंकारे' । भौवादिकः । भूषयेमेत्यर्थः ॥

इन्द्रो अस्मे सुमना अस्तु विश्वहा राजा सोमः सुवितस्याध्येतु नः ।
यथायथा मित्रधितानि संदधुरा सर्वतातिमदितिं वृणीमहे ॥ ४ ॥

इन्द्रः । अस्मे इति । सुऽमनाः । अस्तु । विश्वहा । राजा । सोमः । सुवितस्य । अधि । एतु । नः ।
यथाऽयथा । मित्रऽधितानि । सम्ऽदधुः । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥ ४ ॥

ᵛइन्द्रः देवः ᵛअस्मे अस्माकं ᵛसुमनाः सुमनस्कः अनुग्रहचेताः ᵛअस्तु भवतु । ᵛविश्वहा सर्वेष्वप्यहःसु । ᵛराजा ᵛसोमः च ᵛनः अस्माकं ᵛसुवितस्य सुवितं स्तोत्रम् ᵛअध्येतु अधिगच्छतु । ᵛयथायथा येन येन प्रकारेण अस्माकं ᵛमित्रधितानि मित्रनिहितानि धनानि ᵛसंदधुः तथाधिगच्छतु सोमः । तथेन्द्रोऽपि सुमना अस्त्विति समन्वयः ॥

इन्द्र उक्थेन शवसा परुर्दधे बृहस्पते प्रतरीतास्यायुषः ।
यज्ञो मनुः प्रमतिर्नः पिता हि कमा सर्वतातिमदितिं वृणीमहे ॥ ५ ॥

इन्द्रः । उक्थेन । शवसा । परुः । दधे । बृहस्पते । प्रऽतरीता । असि । आयुषः ।
यज्ञः । मनुः । प्रऽमतिः । नः । पिता । हि । कम् । आ । सर्वऽतातिम् । अदितिम् । वृणीमहे ॥५॥

१. त-भ-मु-प्रस्तौति ।

अयम् ᵛइन्द्रः ᵛउक्थेन ᵛशवसा स्तुत्येन बलेन ᵛपरुः पर्व यज्ञियमस्मदीयं वा ᵛदधे धारयति। हे ᵛबृहस्पते ᵛआयुषः ममायुष्यस्य ᵛप्रतरीता प्रवर्धयिता ᵛअसि भव। तथा ᵛयज्ञो ᵛमनुः मन्ता ᵛप्रमतिः प्रकृष्टा मतिर्यस्य सः ᵛनः ᵛपिता पालकः सन् ᵛकं सुखं प्रयच्छतु। यद्वा। यज्ञो मन्त्रो बुद्धिश्च प्रत्येकं सुखं प्रयच्छतु॥

इन्द्रस्य नु सुकृतं दैव्यं सहोऽग्निर्गृहे जरिता मेधिरः कविः।
यज्ञश्च भूद्विदथे चारुरन्तम आ सर्वतातिमदितिं वृणीमहे॥ ६॥

इन्द्रस्य। नु। सुऽकृतम्। दैव्यम्। सहः। अग्निः। गृहे। जरिता। मेधिरः। कविः।
यज्ञः। च। भुत्। विदथे। चारुः। अन्तमः। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे॥ ६॥

ᵛदैव्यं देवानां हितं ᵛसहः बलं यदस्ति[1] तत् ᵛइन्द्रस्य* ᵛसुकृतं इन्द्रेण खलु सुष्ठु संपादितम्। यद्वा। यत्सुकृतं दैव्यं सहो बलं[1] मरुत्संज्ञकमस्ति तदिन्द्रस्य नु इन्द्रस्य संबन्धि खलु। अथवा। इन्द्रस्य नु[2] संबन्धि सुकृतं दैव्यं सहो देवार्हं बलम् ᵛअग्निर्गृहे अस्मदीये यागगृहे वर्तत इति शेषः। इन्द्रस्य संबन्धी सुष्ठु संपादितो देवानां बलभूतोऽग्निर्गार्हपत्यः सन् वर्तत इत्यर्थः। स चाग्निः ᵛजरिता देवानां स्तोता ᵛमेधिरः। मेधो यज्ञो हविर्वा। तद्वान् ᵛकविः क्रान्तप्रज्ञः ᵛयज्ञः यष्टव्यः ᵛच ᵛभूत् भवति। कुत्र। ᵛविदथे यज्ञे। किंच सोऽग्निः ᵛचारुः चरणीयः ᵛअन्तमः अस्माकमन्तिकतमश्च॥ ॥ १६॥

न वो गुहा चकृम भूरि दुष्कृतं नाविष्ट्यं वसवो देवहेळनम्।
माकिर्नो देवा अनृतस्य वर्पस आ सर्वतातिमदितिं वृणीमहे॥ ७॥

न। वः। गुहा। चकृम। भूरि। दुःऽकृतम्। न। आविःऽत्यम्। वसवः। देवऽहेळनम्।
माकिः। नः। देवाः। अनृतस्य। वर्पसः। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे॥७॥

हे देवाः[3] ᵛवः युष्माकं ᵛगुहा गुहायां प्रच्छन्ने देशे ᵛभूरि प्रभूतं ᵛदुष्कृतं पापम्। द्रोहमित्यर्थः। ᵛन ᵛचकृम। तथा ᵛआविष्ट्यम् आविः संभूतं ᵛदेवहेळनं देवानां क्रोधनं तन्निमित्तं द्रोहं ᵛन चकृम हे ᵛवसवः वासका देवाः। किंच हे ᵛदेवाः ᵛनः अस्माकम् ᵛअनृतस्य ᵛवर्पसः रूपस्य प्राप्तिः ᵛमाकिः मा भूत्। इतः परं मानुषं रूपं मा भूदित्यर्थः। शिष्टमुक्तम्॥

अपामीवां सविता साविषन्न्य१ग्वरीय इदप सेधन्त्वद्रयः।
ग्रावा यत्र मधुषुदुच्यते बृहदा सर्वतातिमदितिं वृणीमहे॥ ८॥

अप। अमीवाम्। सविता। साविषत्। न्यक्। वरीयः। इत्। अप। सेधन्तु। अद्रयः।
ग्रावा। यत्र। मधुऽसुत्। उच्यते। बृहत्। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे॥ ८॥

ᵛसविता सर्वस्य प्रेरकः सवितृदेवोऽस्माकं संबन्धिनम् ᵛअमीवां रोगम् ᵛअप ᵛसाविषत् अपप्रेरयतु। अपगमयत्वित्यर्थः। तथा ᵛवरीय ᵛइत् उरुतरमपि पापं ᵛन्यक् नीचीनम् ᵛअप ᵛसेध-

---

१. ग-भ-' यदस्ति...बलं ' नास्ति। * ग४-इंद्रस्य नु। २. ग-त८-भ७-मु-नु इंद्रस्य; त१.२.३.७-भ१.२.४.८- नु इंद्रस्य सु। ३. त१.२.३.७-भ१.२.४.८-देव।

न्वद्भयः पर्वताभिमानिनो[1] देवा[1] अभिषवाङ्गमानो वा। एतत्सर्वं कुत्र भवत्विति चेत् उच्यते। ᵛयत्र यस्मिन् प्रदेशे यस्मिन् यागे वा मधुरस्य[2] सोमस्य सोता ᵛग्रावा ᵛबृहत् प्रवृद्धम् ᵛउच्यते स्तूयते तत्र॥

ऊर्ध्वो ग्रावा वसवोऽस्तु सोतरि विश्वा द्वेषांसि सनुतर्युयोत।
स नो देवः सविता पायुरीड्य आ सर्वतातिमदितिं वृणीमहे॥ ९॥

ऊर्ध्वः। ग्रावा। वसवः। अस्तु। सोतरि। विश्वा। द्वेषांसि। सनुतः। युयोत।
सः। नः। देवः। सविता। पायुः। ईड्यः। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे॥९॥

हे ᵛवसवः देवाः ᵛसोतरि सोमाभिषवकर्तरि मयि ᵛग्रावा ᵛऊर्ध्वः उन्नतः ᵛअस्तु। तेनोच्छ्रितेन ᵛविश्वा ᵛद्वेषांसि सर्वानपि द्वेष्टॄन् ᵛसनुतः निगूढान् ᵛयुयोत पृथक्कुरुत। ᵛसः ᵛसविता ᵛदेवः ᵛनः अस्माकं ᵛपायुः पालयिता। 'कृवापाजि॰' इत्यादिनोण्[3]। प्रत्ययस्वरः[3]। सः ᵛईड्यः स्तोतव्यश्च॥

ऊर्जं गावो यवसे पीवो अत्तन ऋतस्य याः सदने कोशे अङ्ग्ध्वे।
तनूरेव तन्वो अस्तु भेषजमा सर्वतातिमदितिं वृणीमहे॥ १०॥

ऊर्जम्। गावः। यवसे। पीवः। अत्तन। ऋतस्य। याः। सदने। कोशे। अङ्ग्ध्वे।
तनूः। एव। तन्वः। अस्तु। भेषजम्। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे॥ १०॥

हे ᵛगावः आशिरार्थाः यूयं ᵛयवसे तृणवति देशे ᵛपीवः प्रवृद्धम् ᵛऊर्जं रसम् ᵛअत्तन अत्त। ᵛयाः[4] ᵛऋतस्य यज्ञस्य ᵛसदने गृहे ᵛकोशे गोष्ठे दोहनस्थाने ᵛअङ्ग्ध्वे व्यञ्जयथ ता अत्तन। ᵛतनूरेव। जन्ये जनकशब्दः। तनूरेव क्षीरमेव ᵛतन्वः सोमरसस्य ᵛभेषजम् ᵛअस्तु। यद्वा। पृथगेव वाक्यम्। अस्माकं तन्वो भेषजमस्तु। किंच तनूरेव पशुशरीरमेव। पशुना यागे सति स्वर्गस्य संपादयितुं शक्यत्वात्॥

क्रतुप्रावा जरिता शश्वतामव इन्द्र इद्भद्रा प्रमतिः सुतावताम्।
पूर्णमूधर्दिव्यं यस्य सिक्तय आ सर्वतातिमदितिं वृणीमहे॥ ११॥

क्रतुऽप्रावा। जरिता। शश्वताम्। अवः। इन्द्रः। इत्। भद्रा। प्रऽमतिः। सुतऽवताम्।
पूर्णम्। ऊधः। दिव्यम्। यस्य। सिक्तये। आ। सर्वऽतातिम्। अदितिम्। वृणीमहे॥ ११॥

ᵛक्रतुप्रावा कर्मणां पूरकः। 'प्रा पूरणे'। 'आतो मनिन्॰' इत्यादिना वनिप्। ᵛजरिता स्तोता। यजमानं साधु सोमः कृत इति स्तौति[5]। यद्वा। ᵛशश्वतां सर्वेषां जरयिता ᵛइन्द्र ᵛइत् इन्द्र एव ᵛसुतावतां सोमवतां यजमानानाम् ᵛअवः रक्षकः ᵛभद्रा भद्रया स्तुत्या ᵛप्रमतिः। ᵛयस्य इन्द्रस्य ᵛसिक्तये सेकाय पानाय ᵛऊधः उद्धततरं द्रोणकलशं ᵛपूर्णं सोमेन पूर्णं भवति स एवावः[6] स एव प्रमतिरिति॥

१. ग-त३-पर्वताभिमानिदेवाः; त१.२.६.७.८-भ-पर्वताभिमानिदेवताः। २. ग-मधुसुत् मधुरस्य। ३. त३.७-मु-इत्यादिना उणप्रत्ययः। ४. ग-त-भ-या युष्मान्। ५. ग-त-भ-स्तौति अथवा स्तुत्यर्थः। ६. त-भ-एवाश्वः।

चित्रस्ते भानुः क्रतुप्रा अभिष्टिः सन्ति स्पृधो जरणिप्रा अधृष्टाः ।
रजिष्ठया रज्या पश्व आ गोस्तूतूर्षति पर्यग्रं दुवस्युः ॥ १२ ॥

चित्रः । ते । भानुः । क्रतुऽप्राः । अभिष्टिः । सन्ति । स्पृधः । जरणिऽप्राः । अधृष्टाः ।
रजिष्ठया । रज्या । पश्वः । आ । गोः । तूतूर्षति । परि । अग्रम् । दुवस्युः ॥ १२ ॥

हे इन्द्र ^v^ते ^v^भानुः प्रकाशः ^v^चित्रः आश्चर्यभूतश्चायनीयो वा । तथा ^v^क्रतुप्राः स भानुरस्माकं कर्मणां पूरकः ^v^अभिष्टिः अभ्येषणीयः । हे इन्द्र ते ^v^जरणिप्राः स्तोतॄणां धनस्य पूरयितारः ^v^अधृष्टाः अन्यैरप्रधृष्याः ^v^स्पृधः स्पर्धाः ^v^सन्ति । यस्मादेवं तस्मात् ^v^रजिष्ठया ऋजुतमया ^v^रज्या रज्ज्वा ^v^गोः ^v^पश्वः पशोः ^v^अग्रं ^v^दुवस्युः परिचरणमिच्छन्नेतन्नामर्षिः ^v^परि ^v^तूतूर्षति अभित्वरयति ॥ ॥ १७ ॥

'उद्बुध्यध्वम्' इति द्वादशर्चं द्वितीयं सूक्तं सोमपुत्रस्य बुधस्यार्षम्। 'आ वो धियम्' इति नवमी 'कृष्णुः' इत्यन्त्या च द्वे जगत्यौ। चतुर्थीपष्ठ्यौ गायत्र्यौ 'निराहावान्' इति पञ्चमी बृहती। शिष्टास्त्रिष्टुभः। विश्वे देवा देवता। ऋत्विक्स्तुतिरूपोऽर्थो वा देवता। तथा चानुक्रान्तम्— 'उद्बुध्यध्वं बुधः सौम्य ऋत्विक्स्तुतिर्वा नवम्यन्त्ये जगत्यौ गायत्र्योर्मध्ये पञ्चमी बृहती' इति। गतः सूक्तविनियोगः ॥

उद्बुध्यध्वं समनसः सखायः समग्निमिन्ध्वं बहवः सनीळाः ।
दधिक्रामग्निमुषसं च देवीमिन्द्रावतोऽवसे नि ह्वये वः ॥ १ ॥

उत् । बुध्यध्वम् । सऽमनसः । सखायः । सम् । अग्निम् । इन्ध्वम् । बहवः । सऽनीळाः ।
दधिऽक्राम् । अग्निम् । उषसम् । च । देवीम् । इन्द्रऽवतः । अवसे । नि । ह्वये । वः ॥ १ ॥

अग्निं चेष्यमाणा ऋत्विजो वदन्ति। हे ^v^सखायः सखिभूता ऋत्विजः ^v^समनसः समानमनस्काः परस्परमद्रोग्धारः। अन्योन्यं कर्मानुकूला इत्यर्थः। तादृशा यूयम् ^v^उत् उत्कृष्टं ^v^बुध्यध्वं जानीध्वम्। उत्तरत्र युष्माकं कर्तव्यमेवोपदिशति। तथा ^v^अग्निं ^v^सम् ^v^इन्ध्वं सम्यग्दीपयध्वम्। 'ञिइन्धी दीप्तौ'। रौधादिकः। लोटि 'श्नसोरल्लोपः' इत्यल्लोपः। ^v^बहवः अनेके ^v^सनीळाः समाननिवासा एकस्यामेव शालायां निवसन्तः। अहं च ^v^दधिक्राम् एतन्नामिकां देवताम् ^v^अग्निमुषसं ^v^च ^v^देवीम् एतांस्त्रीन् देवान् ^v^इन्द्रावतः इन्द्रेण युक्तान् ^v^वः युष्मान् ^v^अवसे अस्माकं रक्षणाय ^v^नि नितरां ^v^ह्वये आह्वयामि ॥

मन्द्रा कृणुध्वं धिय आ तनुध्वं नावमरित्रपरणीं कृणुध्वम् ।
इष्कृणुध्वमायुधारं कृणुध्वं प्राञ्चं यज्ञं प्र णयता सखायः ॥ २ ॥

मन्द्रा । कृणुध्वम् । धियः । आ । तनुध्वम् । नावम् । अरित्रऽपरणीम् । कृणुध्वम् ।
इष्कृणुध्वम् । आयुधा । अरम् । कृणुध्वम् । प्राञ्चम् । यज्ञम् । प्र । नयत । सखायः ॥ २ ॥

^v^मन्द्रा मन्द्राणि मदकराणि स्तोत्राणि ^v^कृणुध्वं कुरुध्वं हे सखायः। 'कृवि हिंसाकरणयोः'[1]। 'धिन्विकृण्व्योरच्च' इत्युप्रत्ययः। अकारश्चान्तादेशः। यद्वा करोतेर्व्यत्ययेन श्नुः। तथा ^v^धियः

---

1. त-मु—हिंसाकरणयोश्च।

कर्माणि चयनप्रदेशकर्षणादीनि ᵛआ ᵛतनुध्वं विस्तारयत। तथा ᵛअरित्रपरणीं कर्षणादिरूपेणारित्रेण पारयितव्यां ᵛनावं चयनाख्यां ᵛकृणुध्वं कुरुध्वम्। तथा ᵛआयुधा आयुधानि सीरयुगादीनि ᵛअरम् अलं ᵛकृणुध्वम्। हे ᵛसखायः ऋत्विजः ᵛप्राञ्चं प्रागञ्चनं ᵛयज्ञं यष्टव्यमग्निं ᵛप्र ᵛणयत प्रकर्षेण नयत। आदौ कर्षणं प्राञ्चं कुरुतेत्यर्थः॥

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम्।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्॥ ३॥

युनक्त। सीरा। वि। युगा। तनुध्वम्। कृते। योनौ। वपत। इह। बीजम्।
गिरा। च। श्रुष्टिः। सऽभराः। असत्। नः। नेदीयः। इत्। सृण्यः। पक्वम्। आ। इयात्॥३॥

हे सखायो यूयं ᵛसीरा सीराणि ᵛयुनक्त युङ्ग्ध्वमनडुद्भिः सह। युजेर्लोटि ‘तप्तनप्तनथनाश्च’ इति तबादेशः[1]। अत एव अङित्वात् ‘श्नसोरल्लोपः’ इत्यल्लोपाभावः। तदर्थं ᵛयुगा युगानि ᵛवि ᵛतनुध्वं विस्तारयध्वम्। ᵛकृते च ᵛयोनौ ᵛइह सीतायां ᵛबीजं ग्राम्यमारण्यं च ᵛवपत निधत्त। तिलमाषव्रीह्यादिकं ग्राम्यसप्तकं वेणुश्यामाकनीवारादिकमारण्यबीजसप्तकं च कृष्टाकृष्टयोर्निवपतेत्यर्थः। ‘सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे’ इत्यापस्तम्बः। तथा ᵛनः अस्माकं ᵛगिरा स्तुत्या प्रशस्त्या सहास्माकं ᵛश्रुष्टिः अन्नं ᵛसभराः सभरम् ᵛअसत् भवति भवतु। तथा ᵛनेदीय ᵛइत् अन्तिकमेव[2] ᵛसृण्यः। सृणिरङ्कुशः। अङ्कुशवद्वक्रो लवित्रः। ᵛपक्वं स्तम्बम् ᵛएयात् आभिमुख्येन गच्छतु[3]। श्रुष्टिः सभरा असत् सृण्यः पक्वमेयादिति चशब्दानुवृत्तेः ‘चवायोगे प्रथमा’ इति प्रथमस्य निघाताभावः॥

सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक्। धीरा देवेषु सुम्नया॥ ४॥

सीरा। युञ्जन्ति। कवयः। युगा। वि। तन्वते। पृथक्। धीराः। देवेषु। सुम्नऽया॥ ४॥

ᵛकवयः मेधाविन ऋत्विजः ᵛसीरा[4] सीराणि कर्षणसाधनानि ᵛयुञ्जन्ति योजयन्ति। ᵛयुगा युगान्यपि ᵛपृथक् परस्परं ᵛवि ᵛतन्वते भिन्नप्रदेशानि[5] कुर्वन्ति। कीदृशाः कवयः। ᵛदेवेषु विषये ᵛधीराः धीमन्तः। किमर्थम्। ᵛसुम्नया। सुम्नमिति सुखनाम। सुखेच्छया। सुम्नशब्दात् क्यजन्ताद्भावे ‘अ प्रत्ययात्’ इत्यकारप्रत्ययः। ‘सुपां सुलुक्०’ इति तृतीयाया आकारः। अथवा धीरा धीमन्तो देवेषु सुम्नया सुम्नेन। देवेषु सुखं भूयादिति। ‘सुपां सुलुक्०’ इति विभक्तेर्याजादेशः॥

निराहावान् कृणोतन सं वरत्रा दधातन।
सिञ्चामहा अवतमुद्रिणं वयं सुषेकमनुपक्षितम्॥ ५॥

निः। आऽहावान्। कृणोतन। सम्। वरत्राः। दधातन।
सिञ्चामहै। अवतम्। उद्रिणम्। वयम्। सुऽसेकम्। अनुपऽक्षितम्॥ ५॥

हे सखायः ᵛआहावान्। आहूयन्ते पानार्थं गावोऽत्रेत्याहावा निपानानि। अत्रौचित्यादग्निचयन-प्रदेशकर्षणार्थगोपानसाधनद्रुममयपानपात्राण्युच्यन्ते। तानाहावान् ᵛनिः ᵛकृणोतन निष्कुरुत। आह्वयतेः ‘निपानमाहावः’ (पा. सू. ३. ३. ७४) इति निपातितः। थाथादिस्वरः। कृणोतन।

---

१. त-भ-तनबादेशः। २. ग-त१.२.३.६.७.८-भ-मु-अंतिक एव; त४.५-अंतरिक्ष एव। ३. ग१.२-त-भ-मु-गच्छति; ग४-गच्छत। ४. त-सुसीराः। ५. त-भ-भिन्नप्रदेशान्।

'तप्तनप्°' इत्यादिना तनप्। पित्त्वेनाङित्त्वाद्गुणः[1]। 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। किमर्थमाहावकरणं वरत्रस्थापनं[2] चेति। अत्रोच्यते। ᵛवयम् ᵛअवतम् अवटं ᵛसिञ्चामहै। कीदृशमवटम्। ᵛउद्रिणम् उद्राववन्तं ᵛसुषेकं सुष्ठु सेक्तुं शक्यम् ᵛअनुपक्षितम् अनुपक्षीणं कदाचिदप्युदकोपक्षयरहितम्॥

इष्कृ॑ताहावमव॒तं सु॑वर॒त्रं सु॑षेच॒नम्। उ॒द्रिणं॑ सिञ्चे॒ अक्षि॑तम् ॥ ६ ॥

इष्कृ॑तऽआहावम्। अ॒व॒तम्। सु॒ऽव॒र॒त्रम्। सु॒ऽसे॒च॒नम्। उ॒द्रिण॑म्। सि॒ञ्चे॒। अक्षि॑तम् ॥ ६ ॥

ᵛइष्कृताहावं संस्कृताहावं ᵛअवतम् अवटं द्रोणं ᵛसिञ्चे सेचयामि। पुनः कीदृशमवतम्। ᵛसुवरत्रं शोभनवरत्रोपेतं ᵛसुषेचनं शोभनोदकसेकोपेतम् ᵛउद्रिणम् उद्राववन्तम् ᵛअक्षितम् अक्षीणम्॥॥१८॥

प्री॒णी॒ताश्वा॑न्‌ हि॒तं ज॑याथ स्वस्ति॒वाहं॒ रथ॒मित्कृ॑णुध्वम्।
द्रोणा॑हावमव॒तमश्म॑चक्र॒मंस॑त्रकोशं सिञ्चता नृ॒पाण॑म् ॥ ७ ॥

प्री॒णी॒त। अश्वा॑न्। हि॒तम्। ज॒या॒थ। स्व॒स्ति॒ऽवाह॑म्। रथ॑म्। इत्। कृ॒णु॒ध्व॒म्।
द्रोण॑ऽआहावम्। अ॒व॒तम्। अश्म॑ऽचक्रम्। अंस॑त्रऽकोशम्। सि॒ञ्च॒त॒। नृ॒ऽपान॑म् ॥ ७ ॥

हे ऋत्विजो यूयम् ᵛअश्वान् व्यापनशीलान् बलीवर्दान् ᵛप्रीणीत उचितघासोदकादिप्रदानेन प्रीणयत। यथा क्षेत्रकर्षणाय प्रभवन्ति तथा कुरुतेत्यर्थः। तथा कृत्वा ᵛहितं चयनायोचितं कर्षणं ᵛजयाथ जयथ संपादयथ। तथा ᵛरथं चयनाख्यं हलाख्यं वा ᵛस्वस्तिवाहम् ᵛइत् सुखस्य वाहकमेव ᵛकृणुध्वं कुरुध्वम्। तदर्थं ᵛद्रोणाहावम्। आह्वयन्त्यत्र पानार्थं बलीवर्दानित्याहावो जलाधारः पात्रविशेषः। स च द्रोणमयो द्रुममय आहावो यस्य तादृशम् ᵛअवतम् अवटवन्निम्नभूतम् ᵛअश्मचक्रं व्याप्तक्रमणमश्ममयचक्रं वा ᵛअंसत्रकोशम् अंसत्रं कवचं यथा कायं रक्षति तद्वदुदकस्य कोशं[3] कोशस्थानीयं ᵛनृपाणं नृणां कर्मनेतॄणां पानयोग्यमीदृशमवतं ᵛसिञ्चत हे ऋत्विजः। एवमृत्विक्स्तुतिर्वेति[4] पक्षे[4]। सूक्तस्य वैश्वदेवपक्ष एवं योजना। प्रीणीत प्रीणयताश्वान्। स्नानपानयोग्यान्नैः संग्रामयोग्यान् कुरुतेत्यर्थः। हितं जयाथ। हितमिति क्रियाविशेषणम्। कथं जयथ। बन्धुसुहृद्भ्यो यथा हितं भवति तथा जयथ संग्रामम्। स्वस्तिवाहम्। स्वस्तीत्यविनाशनाम[5]। अविनाशवाहनं रथमिद्रथं च कृणुध्वम्[6]। इदिति चार्थे। अश्वं रथं च दृढं कृत्वा संग्रामभूमिं गत्वा। द्रोणाहावमित्यादीनि द्वितीयान्तानि कूपाख्यसंग्रामविशेषणानि सिञ्चतेत्यनेन संबध्यन्ते। द्रोणो द्रुममयः स एव रथ आहाव आहावस्थानीयो यस्य संग्रामस्य तम्। अवतम्[7]। कूपनामैतत्। कूपं संग्रामाख्यम्। अश्मचक्रं कूपप्रान्तनिबद्धाश्मसदृशप्रहरणायुधवन्तम्। असनानि वा क्षेपणानि वा चक्राख्यायुधविशेषा यस्मिन् तम्। व्याप्तचरणवन्तं व्याप्तक्रमणवन्तं वा। 'चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वा' (निरु.४.२७) इति निरुक्तम्। अंसत्रकोशम्। अंसत्राणि धनूंषि कवचानि च कोशस्थानीयानि यस्मिन् तं सिञ्चत[8]। नृपाणं यस्मिन् योद्धार उदकवत्पीयन्ते मार्यन्ते तम्। ईदृशं[9] कूपसदृशं संग्रामं सिञ्चत हे अस्मदीया योद्धारः। सूक्तस्य वैश्वदेवत्वाद्धे सैनिका विश्वेषां देवानां प्रसादेन सर्वमेतत्कुरुतेत्यर्थः। एवं 'निराहावान्' इत्यादिषु कूपरूपकव्याजेन संग्रामवर्णनमवगन्तव्यम्॥

---

१. ग४—पित्त्वेनाङित्त्वाद्गुणः। तथा वरत्राणि सं दधातन। दुंगेलबंधनसाधनानि प्रग्रहान् दधातन स्थापयत। यद्वा प्रधनो क्षरणसाधनरूपो वा आहावः। तस्मिन्नाहावे वरत्रान्युदकोन्नयनसाधनान्युच्यंते। अत्रापि पूर्वव···प्रदेशः। २. त-भ—वरस्थापनं। ३. त-भ—'कोशं' नास्ति। ४. त-मु—एवमृत्विक्स्तुतिपक्षे। ५. ग-त—°त्यविनाशिनाम। ६. ग-त—कृणुध्वं कुरुध्वं। ७. त४.५—अवतं अवटं। ८. ग-त-मु— सिंचत उत्सिंचत। ९. ग-त-भ-मु—कीदृशं।

व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ॥ ८ ॥

व्रजम् । कृणुध्वम् । सः । हि । वः । नृऽपानः । वर्म । सीव्यध्वम् । बहुला । पृथूनि ।
पुरः । कृणुध्वम् । आयसीः । अधृष्टाः । मा । वः । सुस्रोत् । चमसः । दृंहत । तम् ॥८॥

हे ऋत्विजः vव्रजं vकृणुध्वं व्रजं गोष्ठं कुरुध्वम् । आशिरदोहार्थं गोस्थानं कुरुत । vस vहि स खलु vवः vनृपाणः नेतृणां देवानां पातव्यः । देवपानसाधन इति । सांनाय्यरूपेण वाशिररूपेण वा गोः पयआदिकं देवाः पिबन्ति खलु । vवर्म वर्माणि vसीव्यध्वम् । वर्मवत्प्रधानस्योभयत आच्छादकत्वात् प्रयाजादीनि प्राच्यानि प्रतीच्यानि चाङ्गानि वर्माणि । तानि सीव्यध्वं दलयध्वम् । कुरुध्वमित्यर्थः । कीदृशानि वर्माणि । vबहुला बहुलान्यनेकानि । तानि च vपृथूनि विस्तीर्णानि । तथा vपुरः पुराणि धिष्ण्यादीनि यष्टव्यानां देवानां वा पुरः शरीराणि vआयसीः अयोमयवत्सारभूताः vअधृष्टाः अन्यैः अधृष्याः । पूरणीया ग्रहा वा पुर इत्युच्यन्ते । तानुक्तलक्षणान् कुरुत । vवः युष्मदीयः vचमसः यज्ञाख्यो भक्षणसाधनश्चमस एव वा । चमसपक्षे सामान्येनैकवचनम् । vमा vसुस्रोत् मा स्रवेत् । स्रवतेर्लङि ' बहुलं छन्दसि ' इति शपः श्लुः । vतं vदृंहत दृढीकुरुत । यथा विकलो न भवति तथा कुरुत । ' दृह दृहि वृद्धौ ' । भौवादिकः । तस्माल्लोटि इदित्त्वान्नुम् । ऋत्विक्स्तुतिपक्ष एवम् । वैश्वदेवपक्षे । अस्मदीया योद्धारो यूयम्[1] । नरो योद्धारः पिबन्ति प्रत्यर्थिनां प्राणानिति नृपाणः । स तादृशो युष्मदीयः खलु । गोष्ठपक्षे नराणां पानसाधनः स खलु । पातेः ' करणाधिकरणयोश्च ' इति ल्युट् । वर्म वर्माणि कवचानि सीव्यध्वं बहुलानि पृथूनि च यथा भवन्ति तथा । पुरः पुरीः कृणुध्वमायसीरन्यैरधृष्टाश्च । वश्चमसोऽदनसाधनो मा सुस्रोत् मा स्रवेत् । तं दृंहतेति । इति देवतानुग्रहलब्धबलो वदति ॥

आ वो धियं यज्ञियां वर्त ऊतये देवा देवीं यजतां यज्ञियामिह ।
सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥ ९ ॥

आ । वः । धियम् । यज्ञियाम् । वर्ते । ऊतये । देवाः । देवीम् । यजताम् । यज्ञियाम् । इह ।
सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥ ९ ॥

हे vदेवाः स्तोतार ऋत्विजः vवः युष्माकम् vऊतये vयज्ञियां यज्ञार्हां vधियं बुद्धिम् vआ vवर्ते प्रवर्तये । यद्वा । हे देवा ऋत्विजः वो यज्ञियां धियं युष्माकं कर्तव्यत्वेन संबन्धिनीमस्माकमूतये[2] रक्षणाय आ वत । अपि वा देवा एव संबोध्याः । हे देवाः वो युष्माकं धियं बुद्धिमा वर्ते आवर्तयामि । किमर्थम् । ऊतयेऽस्माकं रक्षणाय । कीदृशीं धियम् । vयज्ञियां यज्ञार्हां vदेवीं द्योतमानां vयजतां पूज्याम् । vइह अस्मिन् यागे अस्यां भूमौ वा । एको यज्ञियामिति शब्दः पूरणः । vसा धीः vनः अस्माकं vदुहीयत् दुह्यात् । तत्र दृष्टान्तः । vयवसेव यवसानि भक्षयित्वेव vगत्वी पुनर्गोष्ठं गत्वा । पीत्वीतिवत् । vपयसा vसहस्रधारा vमही महती vगौः यथा दुग्धे तद्वत् ॥

१. ग४–यूयं विश्वेषां देवानां आनुकूल्येनैव कुरुतेति सूक्तद्रष्टा यजमानो ब्रूते । भवि व्रजं कृणुध्वं व्रजःसंघात्मकः स···र्मसंग्रामः तं कृणुध्वं । अथवा शत्रुसंघं कृणुध्वं । अवारणं कुरुध्वमित्यर्थः । वो नृपाणः । २. त-भ–संबंधिनाम॰ ।

आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ।
परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥ १० ॥

आ । तु । सिञ्च । हरिम् । ईम् । द्रोः । उपऽस्थे । वाशीभिः । तक्षत । अश्मन्ऽमयीभिः ।
परि । स्वजध्वम् । दश । कक्ष्याभिः । उभे इति । धुरौ । प्रति । वह्निम् । युनक्त ॥ १० ॥

हे अध्वर्यो त्वम् ईम् एनं हरिं हरितवर्णं सोमं द्रोः द्रुमविकारस्य पात्रस्य उपस्थे उपरि आ सिञ्च आसेकं कुरु । तु इति पूरणः । तदर्थं हे पात्रसंपादिनः अश्मन्मयीभिः अयःशिलासारभूताभिः वाशीभिः तक्षत पात्राणि । नकारोपजनश्छान्दसः । मयटः टित्वात् ङीप् । तानि पात्राणि सोमपूर्णानि दश दशसंख्याकानि कक्ष्याभिः प्रकारैः पर्यायेण परि ष्वजध्वं संस्कुरुध्वम् । आसादयत । यद्वा । वाशीभिरश्मन्मयीभिर्हविर्धानशकटे तक्षत । ते च दश कक्ष्याभिर्दशसंख्याकाभिः रज्जुभिः परि ष्वजध्वम् । उभे धुरौ युगसंबन्धिन्यौ प्रति वह्नी वाहकावनड्वाहौ युनक्त[1] । अथवायं मन्त्रश्चयनक्षेत्रकर्षणसाधनहलविषयतया व्याख्येयः ॥

उभे धुरौ वह्निरापिब्दमानोऽन्तर्योनेव चरति द्विजानिः ।
वनस्पतिं वन आस्थापयध्वं नि षू दधिध्वमखनन्त उत्सम् ॥ ११ ॥

उभे इति । धुरौ । वह्निः । आऽपिब्दमानः । अन्तः । योनाऽइव । चरति । द्विऽजानिः ।
वनस्पतिम् । वने । आ । अस्थापयध्वम् । नि । सु । दधिध्वम् । अखनन्तः । उत्सम् ॥ ११ ॥

हविर्धानशकटस्य उभे धुरौ आपिब्दमानः आपिशब्दमानः वह्निः हविर्वाहकोऽनड्वान् योनौ अन्तः इव द्विजानिः द्विजायः तयोरन्तः[2] चरति । तं वनस्पतिं वनस्पतिविकारं शकटं वने वनसंबन्धिनि वृक्षे । मेथीभूत इत्यर्थः । तत्र आस्थापयध्वम् । यद्वा । वने वननीये देश आस्थापयध्वम् । तत्पश्चात्[3] तत्रत्यं सोमं सु[4] सुष्ठु नि दधिध्वं सुखं यथा भवति तथा स्थापयतासन्द्याम् । अभिषवप्रदेशे च[5] पश्चात् उत्सं तद्रसम् अखनन्तः संपादयतेत्यर्थः । अथवायमपि मन्त्रः कर्षणपरो व्याख्येयः । यस्य लाङ्गलस्योभे धुरावापिब्दमानोऽपिशब्दमानो वह्निरनड्वान् अन्तर्योनाविवेत्यादि समानम् । तादृशं वनस्पतिं वनस्पतिविकारं लाङ्गलं वने वननीये वपनार्थं[6] कर्षणप्रदेश आस्थापयध्वम् । सु सुष्ठु सर्वत्र तं लाङ्गलं नि दधिध्वम् । उत्सं सेकसाधनं गर्तं सिक्तं वा प्रदेशमखनन्तः ॥

षष्ठेऽहनि ब्राह्मणाच्छंसिशस्त्रे 'कपृन्नरः' इत्येषा । 'कपृन्नरो यद्ध प्राचीरजगन्तेति चैते '(आश्व. श्रौ. ८. ३) इति ॥

कपृन्नरः कपृथमुद्दधातन चोदयत खुदत वाजसातये ।
निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये ॥ १२ ॥

कपृत् । नरः । कपृथम् । उत् । दधातन । चोदयत । खुदत । वाजऽसातये ।
निष्टिग्र्यः । पुत्रम् । आ । च्यवय । ऊतये । इन्द्रम् । सऽबाधः । इह । सोमऽपीतये ॥ १२ ॥

---

१. ग४-त४.५-युनक्त योजयत । २. ग-त-भ-तेषामंतः । ३. ग-त-मु-आस्थापयत पश्चात् । ४. त-भ-'सु' नास्ति । ५. ग-त-भ-मु-वा । ६. ग-त१.२.६-चयनार्थं ।

हे <sup>v</sup>नरः नेतार ऋत्विजः एष इन्द्रः <sup>v</sup>कपृत्। सुखस्य पूरको यष्टॄणां स्तोतॄणां च। कमिति सुखनाम। तं <sup>v</sup>कपृथं सुखस्य पूरयितारमिन्द्रं <sup>v</sup>चोदयत प्रेरयत <sup>v</sup>खुदत खुर्दत क्रीडयत। 'खुर्द क्रीडायां' भौवादिकः। व्यत्ययेन शः। रेफलोपश्छान्दसः। संपिष्ट संस्कुरुतेत्यर्थः। किमर्थम्। <sup>v</sup>वाजसातये अन्नस्य लाभाय। तदेवाह। हे होतः <sup>v</sup>निष्टिग्र्यः <sup>v</sup>पुत्रम्। निष्टिं दितिं स्वसपत्नीं गिरतीति निष्टिग्रीरदितिः। तस्याः पुत्रम् <sup>v</sup>इन्द्रं <sup>v</sup>सबाधः। सह पापैः प्रयासरूपैः कर्मभिर्बाध्यन्त इति सबाध ऋत्विजः। तथाविधा यूयं <sup>v</sup>सोमपीतये तस्य सोमपानाय <sup>v</sup>ऊतये अस्माकं रक्षणाय वा <sup>v</sup>आ <sup>v</sup>च्यवय। व्यत्ययेनैकवचनम्। आच्यावयतेत्यर्थः ॥ ॥ १९ ॥

'प्र ते रथम्' इति द्वादशर्चं तृतीयं सूक्तम्। भर्म्यश्वपुत्रो मुद्गल ऋषिः। आद्या तृतीयान्त्या चेति तिस्रो बृहत्यः। शिष्टा नव त्रिष्टुभः। द्रुघणो नाम मुद्गरः। तद्देवत्यमिदमिन्द्रदेवत्यं वा। तथा चानुक्रान्तं—'प्र ते मुद्गलो भार्म्यश्व ऋषभेण द्रुघणेन चाजिं जिगायेति द्रौघणं वाद्या तृतीयान्त्या च बृहत्यः' इति। गतो विनियोगः। अत्राहुः—'मुद्गलस्य हृता गावश्चोरैस्त्यक्त्वा जरद्गवम्। स शिष्टं शकटे कृत्वा गत्वैक ऋजुराहवम्। द्रुघणं युयुजेऽन्यत्र चोरमार्गानुसारकः। द्रुघणं चाग्रतः क्षिप्त्वा चोरेभ्यो जगृहे स्वगाः' इति। तथा निरुक्तेऽपीयं कथा सूचिता—'मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय' ( निरु. ९. २३ ) इति ॥

**प्र ते रथं मिथूकृतमिन्द्रोऽवतु धृष्णुया ।**
**अस्मिन्नाजौ पुरुहूत श्रवाय्ये धनभक्षेषु नोऽव ॥ १ ॥**

प्र । ते । रथम् । मिथुऽकृतम् । इन्द्रः । अवतु । धृष्णुऽया ।
अस्मिन् । आजौ । पुरुऽहूत । श्रवाय्ये । धनऽभक्षेषु । नः । अव ॥ १ ॥

हे मुद्गल <sup>v</sup>ते <sup>v</sup>रथं <sup>v</sup>मिथूकृतं मिथःकृतमसहायं कृतम्। अथवा मिथुरिति मिथ्यानाम। अश्वादिभिः शून्यं कृतं <sup>v</sup>धृष्णुया धर्षणशीलः <sup>v</sup>इन्द्रोऽवतु रक्षतु। यद्वा। धृष्णुया धर्षणशीलेन वज्रेण। उभयत्र 'सुपां सुलुक्°' इति सुपो याजादेशः। अथ प्रत्यक्षकृतः। हे <sup>v</sup>पुरुहूत बहुभिराहूतेन्द्र <sup>v</sup>अस्मिन्नाजौ संग्रामेऽपहृतगोभिश्चोरैः कृते संग्रामे। कीदृशे। <sup>v</sup>श्रवाय्ये श्रोतव्ये। विश्रुत इत्यर्थः। 'श्रुदक्षि°' ( उ. सू. ३.९६ ) इत्यादिना आय्यप्रत्ययः। <sup>v</sup>धनभक्षेषु अस्मासु गोरूपधनभजनकामेषु सत्सु। यद्वा। गोरूपधनस्य भक्षकेषु चोरेषु जेतव्येषु सत्सु। <sup>v</sup>नः[1] अस्मान्[1] <sup>v</sup>अव रक्ष ॥

**उत्स्म वातो वहति वासो अस्या अधिरथं यदजयत्सहस्रम् ।**
**रथीरभून्मुद्गलानी गविष्टौ भरे कृतं व्यचेदिन्द्रसेना ॥ २ ॥**

उत् । स्म । वातः । वहति । वासः । अस्याः । अधिऽरथम् । यत् । अजयत् । सहस्रम् ।
रथीः । अभूत् । मुद्गलानी । गोऽइष्टौ । भरे । कृतम् । वि । अचेत् । इन्द्रऽसेना ॥ २ ॥

<sup>v</sup>अस्याः 'रथीरभून्मुद्गलानी' इति वक्ष्यमाणत्वादस्य मुद्गलस्य पत्न्याः सारथिभूतायाः <sup>v</sup>वासः अंशुकं <sup>v</sup>वातः वायुः <sup>v</sup>उत् <sup>v</sup>वहति ऊर्ध्वं प्रापयति। श्रमजनितस्वेदापनयाय। अथवा शीघ्ररथधावनजनितो वायुरंशुकं चालयतीत्यर्थः। कदेति उच्यते। <sup>v</sup>यत् यदा <sup>v</sup>अधिरथम् अधिकं रथमारुह्य <sup>v</sup>सहस्रं सहस्रसंख्याकं गोसंघम् <sup>v</sup>अजयत् तदा। यद्वा गोसहस्रमजयदस्या इति वा योज्यम्। यदीगाजयतेन

१. त१.२.३.६.७—नोस्माकं।

निघातः । ᵛगविष्टौ गवामपहृतानामेषणे ᵛमुद्गलानी मुद्गलस्य स्त्री ᵛरथीरभूत् सारथिरभवत् । छान्दस आनुक् । ᵛइन्द्रसेना स्तुत्या परितुष्टस्येन्द्रस्य सेना । यद्वा । इन्द्रस्य शत्रूणां दारयितुर्मुद्गलस्य सेनानीरूपा[1] मुद्गलानी । ᵛभरे संग्रामे ᵛकृतं संपादितं गोसंघं ᵛव्यचेत् व्यचिनोत् । शत्रुभ्यः पृथक्कृतवती । चयतेर्लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥

अ॒न्तर्य॑च्छ जिघां॑सतो॒ वज्र॑मिन्द्राभि॒दास॑तः ।
दास॑स्य वा मघव॒न्नार्य॑स्य वा स॒नुत॑र्यवया व॒धम् ॥ ३ ॥

अ॒न्तः । य॒च्छ॒ । जिघां॑सतः । वज्र॑म् । इ॒न्द्र॒ । अ॒भि॒ऽदास॑तः ।
दास॑स्य । वा॒ । म॒घ॒ऽव॒न् । आर्य॑स्य । वा॒ । स॒नुतः॑ । य॒व॒य॒ । व॒धम् ॥ ३ ॥

हे ᵛइन्द्र ᵛजिघांसतः हन्तुमिच्छतः ᵛअभिदासतः अभिद्रुह्यतः शत्रोः ᵛवज्रम् ᵛअन्तर्यच्छ अन्तर्गमय । तदेवाह । हे ᵛमघवन् धनवन्निन्द्र ᵛदासस्य ᵛवा उपक्षीणस्याल्पस्य ᵛआर्यस्य अभिगन्तव्यस्य महतो ᵛवा शत्रोः ᵛवधम् । वज्रनामैतत् । हननसाधनं वज्रं ᵛसनुतः । अन्तर्हितनामैतत् । अन्तर्हितं गूढं प्रयुज्यमानं ᵛयवय पृथक्कुरु ॥

उ॒द्नो ह्र॒दम॑पिब॒ज्जर्हृ॑षाणः॒ कूटं॑ स्म तृं॒हद॒भिमा॑तिमेति ।
प्र मु॒ष्कभा॑रः॒ श्रव॑ इ॒च्छमा॑नोऽजि॒रं बा॒हू अ॑भर॒त्सिषा॑सन् ॥ ४ ॥

उ॒द्नः । ह्र॒दम् । अ॒पि॒ब॒त् । जर्हृ॑षाणः । कूट॑म् । स्म॒ । तृं॒हत् । अ॒भि॒ऽमा॑तिम् । ए॒ति॒ ।
प्र । मु॒ष्कऽभा॑रः । श्रवः॑ । इ॒च्छमा॑नः । अ॒जि॒रम् । बा॒हू इति॑ । अ॒भ॒र॒त् । सिषा॑सन् ॥ ४ ॥

अत्र वृषभः स्तूयते । वृषभः ᵛउद्नः उदकस्य ᵛह्रदम् अगाधजलाशयम् ᵛअपिबत् ᵛजर्हृषाणः अत्यन्तं हर्षितः सन् । तथा ᵛकूटं पर्वतशृङ्गं चौरैर्गोपिधानार्थं निहितं ᵛतृंहत् ᵛस्म शृङ्गेण विहिंसितवान् । व्यदारयदित्यर्थः । तथा कृत्वा ᵛअभिमातिमेति शत्रुं गच्छति हन्तुम् । पश्चात् ᵛमुष्कभारः प्रवृद्धमुष्कः । प्रवृद्धस्य वृषभस्य हि मुष्कवृद्धिर्भवति । तथा प्रवृद्धो वृषभः ᵛश्रवः । श्रूयत इति श्रवो यशः । ᵛइच्छमानः इच्छन् ᵛअजिरं गमनशीलं शत्रुं ᵛबाहू बाहुभ्यां बाह्वोर्वा ᵛप्र ᵛअभरत् प्रहृतवान्[2] । यद्वा अजिरमिति क्षिप्रनाम । क्षिप्रं ᵛसिषासन् संभक्तुमिच्छन् बाहू प्राभरत् । प्रसारितवानित्यर्थः ॥

न्य॑क्रन्दयन्नुप॒यन्त॑ एन॒मने॑हयन्वृष॒भं मध्य॑ आ॒जेः ।
तेन॒ सूभ॑र्वं श॒तव॑त्स॒हस्रं॒ गवां॒ मुद्ग॑लः प्र॒धने॑ जिगाय ॥ ५ ॥

नि । अ॒क्र॒न्द॒य॒न् । उ॒प॒ऽयन्तः॑ । ए॒न॒म् । अमे॑हयन् । वृ॒ष॒भम् । मध्ये॑ । आ॒जेः ।
तेन॑ । सूभ॑र्वम् । श॒त॒ऽव॑त् । स॒हस्र॑म् । गवा॑म् । मुद्ग॑लः । प्र॒ऽधने॑ । जि॒गा॒य॒ ॥ ५ ॥

मुद्गल आह । तेनेति तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यम् ᵛएनं वृषभं ᵛन्यक्रन्दयन् नितरां क्रन्दनमकुर्वन् । के । ᵛउपयन्तः समीपे गच्छन्तो नराः । यथा प्रचण्डेन क्रन्दनेन शत्रवो भीताः पलायन्ते तथाकुर्वन् । किम् । ᵛवृषभं वर्षकं सेक्तारम् ᵛआजेः संग्रामस्य ᵛमध्ये ᵛअमेहयन् मूत्रपुरीषोत्सर्गं

१. ग४-सेवारूप; त१.२.३.६.७.८-म१.२.४.८-सेनारूपी; त४.५-सेनारूपा; भ७-सेनानीरूपी ।
२. त३.७-भ-मु-प्रहृतवान् ।

विश्रामार्थं कारितवन्तः। ᵛसुभर्वम्। भर्वतिरत्तिकर्मा। शोभनचणकादिभक्षकम्। तादृशो यथा भवति तथा कृत्वेत्यर्थः। यद्वा एतद्गोसहस्रविशेषणम्। ᵛतेन उक्तरूपेण वृषभेण सुभर्वं सुष्ठु यवसास्वादि ᵛशतवत् शतोपेतं ᵛगवां ᵛसहस्रं ᵛमुद्गलः एतन्नामाहं ᵛप्रधने संग्रामे ᵛजिगाय अजैषम्॥

ककर्दवे वृषभो युक्त आसीदवावचीत्सारथिरस्य केशी।
दुधेर्युक्तस्य द्रवतः सहानस ऋच्छन्ति ष्मा निष्पदो मुद्गलानीम्॥ ६॥

ककर्दवे। वृषभः। युक्तः। आसीत्। अवावचीत्। सारथिः। अस्य। केशी।
दुधेः। युक्तस्य। द्रवतः। सह। अनसा। ऋच्छन्ति। स्म। निःऽपदः। मुद्गलानीम्॥ ६॥

ᵛककर्दवे हिंसनाय शत्रूणां ᵛवृषभः वर्षिता गौः ᵛयुक्त ᵛआसीत् रथे संबद्धोऽभूत्। ᵛकेशी केशवान् प्रग्रहवान् ᵛअस्य राज्ञः रथस्य वा ᵛसारथिः। मुद्गलानीत्यर्थः। सारथ्यभिप्रायेण केशीति पुंलिङ्गता। ᵛअवावचीत् वृषभभयजनकं शत्रुभयजनकं वाक्रोशमकरोत्। अथवा। केशी केशिनी सारथिरस्य। अमुमित्यर्थः। अमुं वृषभं शब्दमकारयत्। 'वच परिभाषणे' इत्यस्य केवलस्यान्तर्णीतण्यर्थस्य यङ्लुगन्तस्य लुङि रूपम्। अथवा। अस्य सारथिः सहायभूतः केशी प्रकृष्टकेशो वृषभोऽवावचीत् भृशमशब्दयत्। एवंभूतस्य ᵛदुधेः दुर्धरस्य ᵛअनसा ᵛसह ᵛद्रवतः शीघ्रं शत्रुमध्ये रथेन सह धावतो वृषभस्य भयंकरशब्देन ᵛनिष्पदः निर्गच्छन्तो योद्धारः ᵛमुद्गलानीं मुद्गलस्य योषितं सारथिभूतां प्रति ᵛऋच्छन्ति ᵛष्म अगच्छन्नित्यर्थः। 'पाघ्रा०' इत्यादिना ऋच्छादेशः॥ ॥ २०॥

उत प्रधिमुदहन्नस्य विद्वानुपायुनग्वंसगमत्र शिक्षन्।
इन्द्र उदावत्पतिमघ्न्यानामरंहत पद्याभिः ककुद्मान्॥ ७॥

उत। प्रऽधिम्। उत्। अहन्। अस्य। विद्वान्। उप। अयुनक्। वंसगम्। अत्र। शिक्षन्।
इन्द्रः। उत्। आवत्। पतिम्। अघ्न्यानाम्। अरंहत। पद्याभिः। ककुत्ऽमान्॥ ७॥

ᵛउत अपि च ᵛविद्वान् स[1] मुद्गलः ᵛअस्य रथस्य ᵛप्रधिम्। प्रधिरक्षच्छिद्रकाष्ठः प्रान्तकाष्ठः। स च रथावयवानामुपलक्षकः। रथावयवम् ᵛउदहन् उदगमयत्। रथं संनन्नाहेत्यर्थः। तदनन्तरम् ᵛअत्र रथे ᵛवंसगं वननीयगमनं वृषभं ᵛशिक्षन् शिक्षयन् रज्जुषु स्थापयन् ᵛउपायुनक् रथसमीपे युगेऽयोजयत्। युजेर्लङि तिपो हल्ङ्यादिलोपः। एवं सति ᵛइन्द्रः देवः ᵛअघ्न्यानाम् अहन्तव्यानां गवां ᵛपतिम् ᵛउत् उत्कृष्टम् ᵛआवत् रक्षामकरोत्। पश्चात् ᵛककुद्मान् वृषभः ᵛपद्याभिः सरणिभिः ᵛअरंहत वेगेनागमत्। रंहिर्गत्यर्थः॥

शुनमष्ट्राव्यचरत्कपर्दी वरत्रायां दार्वानह्यमानः।
नृम्णानि कृण्वन्बहवे जनाय गाः पस्पशानस्तविषीरधत्त॥ ८॥

शुनम्। अष्ट्राऽवी। अचरत्। कपर्दी। वरत्रायाम्। दारु। आऽनह्यमानः।
नृम्णानि। कृण्वन्। बहवे। जनाय। गाः। पस्पशानः। तविषीः। अधत्त॥ ८॥

ᵛशुनम् इति सुखनाम। सुखं यथा भवति तथा। ᵛअष्ट्रावी। अष्ट्रा प्रतोदः तद्वान्। छान्दसो विनिः। ᵛकपर्दी कपर्दवान् ᵛअचरत् संचरति। किं कुर्वन्। ᵛवरत्रायां वध्रौ ᵛदारु काष्ठं रथाङ्गभूतम्

१. ग-त-भ१.२.४.८-मु—'स' नास्ति।

ᐯआनह्यमानः सर्वतो बध्नन्। पुनः किं कुर्वन्। ᐯबहवे ᐯजनाय स्वपुत्रभृत्यादिलक्षणाय ᐯनृम्णानि धनानि शत्रुसंबन्धीनि सुखानि वा ᐯकृण्वन्। ᐯगाः ᐯपस्पशानः स्पृशन्। 'स्पश बाधनस्पर्शनयोः'। छान्दसो[1] लिटि कानच्। एवं कुर्वन् ᐯतविषीः बलानि ᐯअधत्त धत्ते। जयं प्राप्नोतीत्यर्थः॥

**इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम्।**
**येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु॥ ९॥**

इमम्। तम्। पश्य। वृषभस्य। युञ्जम्। काष्ठायाः। मध्ये। द्रुऽघनम्। शयानम्।
येन। जिगाय। शतऽवत्। सहस्रम्। गवाम्। मुद्गलः। पृतनाज्येषु॥ ९॥

कंचन सखायं सेनादिसहायाभावेन जयविषय उपहासं कुर्वाणं प्रति ब्रवीति। राजा द्रुघणेन वृषभेण वाजिं[2] जिगायेत्युक्तवान्[3]। पूर्वं वृषभो वर्णितः। अत्र द्रुघणो वर्ण्यते। हे सखे ᐯतम् ᐯइमं ᐯद्रुघणं ᐯपश्य। कीदृशमिममिति उच्यते। 'युजेरसमासे' (पा. सू. ७. १. ७१) इति नुम्। ᐯयुञ्जम्। युज्यत इति युक् सखा। ᐯवृषभस्य सखिभूतम्। वृषभो यावन्तमर्थं साधयति तावन्तमेव साधयन्तमित्यर्थः। पुनः कीदृशम्। ᐯकाष्ठाया ᐯमध्ये। 'आज्यन्तोऽपि काष्ठोच्यते' (निरु. २.१५) इति निरुक्तम्। आज्यन्तस्य मध्ये। संग्राम इत्यर्थः। तत्र ᐯशयानं हन्तव्यान् सर्वान् हत्वा सुखेन स्वपन्तं निर्व्यापारत्वेन वर्तमानम्। ईदृशं द्रुममयं घनं पश्येत्यर्थः। ᐯयेन द्रुघणेन ᐯशतवत् शतोपेतं ᐯगवां ᐯसहस्रं ᐯपृतनाज्येषु[4] संग्रामेषु[4] ᐯजिगाय अहमजैषं तमिमं पश्येति समन्वयः। जयतेर्लिट्। 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य कुत्वम्। मिपो णल्॥

**आरे अघा को न्वि१त्था ददर्श यं युञ्जन्ति तम्वा स्थापयन्ति।**
**नास्मै तृणं नोदकमा भरन्त्युत्तरो धुरो वहति प्रदेदिशत्॥ १०॥**

आरे। अघा। कः। नु। इत्था। ददर्श। यम्। युञ्जन्ति। तम्। ऊँ इति। आ। स्थापयन्ति।
न। अस्मै। तृणम्। न। उदकम्। आ। भरन्ति। उत्ऽतरः। धुरः। वहति। प्रऽदेदिशत्॥ १०॥

यः ᐯआरे समीप एव ᐯअघा अघानि दुःखानि शत्रुरूपाणि करोति तं ᐯकः नरः ᐯनु इदानीम् ᐯइत्था इत्थं ᐯददर्श पश्यति। किंच ᐯयं द्रुघणं ᐯयुञ्जन्ति रथे ᐯतमु तमेव ᐯआ ᐯस्थापयन्ति आरोहयन्तीत्यर्थः[5]। अथवा। यं रथे युञ्जन्ति तमेव प्रहरणार्थमा स्थापयन्ति। उभयविधकार्यमेकः करोतीत्यर्थः। किंच ᐯअस्मै ᐯतृणं ᐯन ᐯआ ᐯभरन्ति नाहरन्ति। तथा ᐯउदकं ᐯन आहरन्ति। 'हृग्रहोर्भः' इति भत्वम्। ईदृशो द्रुघणः ᐯउत्तरः दक्षिणस्य वृषभस्य स्वयमुत्तरः सन् ᐯधुरः रथभारस्य रथधुरं ᐯवहति ᐯप्रदेदिशत् प्रकर्षेण जयं स्वामिने प्रदिशन् शत्रूणां वा भयं प्रदिशन् वहति। 'दिश अतिसर्जने' इत्यस्माद्यङ्लुगन्ताच्छतरि रूपम्॥

**परिवृक्तेव पतिविद्यमानट् पीप्याना कूचक्रेणेव सिञ्चन्।**
**एषैष्या चिद्रथ्या जयेम सुमङ्गलं सिनवदस्तु सातम्॥ ११॥**

---

१. ग१.२.त-भ१.४.७-८–छांदसे। २. ग-भ१.४.७.८–वाजिं। ३. ग-त१.२.३.६.७-मु–°त्युक्तत्वात्। ४. ग-त-भ–प्रधने संग्रामे। ५. त-भ–आरोहतीत्यर्थः।

परिवृक्ताऽइव । पतिऽविद्यम् । आनट् । पीप्याना । कूचक्रेणऽइव । सिञ्चन् ।
एषऽएष्या । चित् । रथ्या । जयेम । सुऽमङ्गलम् । सिनऽवत् । अस्तु । सातम् ॥ ११ ॥

अत्र मुद्गलानी सारथिः स्तूयते । एषा मुद्गलानी परिवृक्तेव । 'वृजी वर्जने'। परित्यक्ता पत्या पत्या[1] वियुक्ता योषिदिव । सा यथा पतिविद्यम् । विद्यो वेद्यो लम्भनीयः । पतिश्चासौ विद्यश्च । पतिविद्यमानशे तद्वत्पतिविद्यम् आनट् । आनड् व्याप्तिकर्मा । नशेर्लुङि 'मन्त्रे घस°' इति च्लेर्लुक् । 'छन्दस्यपि दृश्यते' (पा. सू. ६. ४. ७३) इत्यनजादीनामप्याडागमः । अश्नोतेर्वा लिटि तलोपश्छान्दसः । तथा पतिसमीपं सारथित्वेनागत्य पीप्याना वर्धमाना भवति । किमिव । कूचक्रेणेव सिञ्चन् । कुः पृथिवी । तस्याश्चक्रो वलयः कूचक्रः । तेन वर्षणीयत्वेन निमित्तेन सिञ्चन् जलं वर्षन्मेघ इव । स यथान्तरिक्षे स्वल्पमात्रोऽपि वर्षणसमये महान्भवति तद्वदियमपि शत्रुमध्ये शरधारा वर्षन्ती वर्धत इत्यर्थः । तथा एषैष्या । एषितव्यो गोसंघ एषः । तमिच्छतीत्येषैषी । ईदृश्या तया रथ्या सारथिभूतया जयेम शत्रुभिरपहृतं गोसंघम् । तस्याः सातं दत्तं संभजनं वा सुमङ्गलं शोभनमङ्गलवत् सिनवत् । सिनमन्नम् । तद्वच्च अस्तु गोरूपान्नवच्च भवतु ॥

त्वं विश्वस्य जगतश्चक्षुरिन्द्रासि चक्षुषः ।
वृषा यदाजिं वृषणा सिषाससि चोदयन् वध्रिणा युजा ॥ १२ ॥

त्वम् । विश्वस्य । जगतः । चक्षुः । इन्द्र । असि । चक्षुषः ।
वृषा । यत् । आजिम् । वृषणा । सिसाससि । चोदयन् । वध्रिणा । युजा ॥ १२ ॥

सूक्तस्य विकल्पेनैन्द्रत्वादादाविन्द्रस्य[2] स्तुतत्वादन्तेऽपीन्द्रः स्तूयते । हे इन्द्र त्वं विश्वस्य सर्वस्य जगतः चक्षुषः चक्षुष्मतः पश्यतो वा जगतः चक्षुः असि । प्रत्येकमुत्पत्तिविशिष्टचक्षुःसद्भावेऽपि सर्वस्य साधारणं चक्षुरसि । त्वया दृष्टया द्रष्टव्यानैहिकामुष्मिकपदार्थान् पश्यन्तीत्यर्थः । त्वामेव हि यज्ञादिना लब्ध्वा पुरुषार्थान् साधयन्ति । यद्वा । विश्वस्य जगतो यन्निजं चक्षुरस्ति तस्यापि चक्षुषस्त्वं चक्षुरसि । यत् यस्मात् वृषा अभिमतवर्षकस्त्वम् आजिं मुद्गलस्य मम संग्रामं वध्रिणा पाशेन युजा युजौ युक्तौ वृषणा वृषणौ वर्षकावश्वौ रथे योजयित्वा चोदयन् शत्रुषु प्रेरयन् सिषाससि आजिं संभक्तुमिच्छसि तस्माच्चक्षुरसि ॥ ॥ २१ ॥

'आशुः शिशानः' इति त्रयोदशर्चं चतुर्थं सूक्तमिन्द्रपुत्रस्याप्रतिरथनाम्न आर्षम् । त्रयोदश्यनुष्टुप् शिष्टास्त्रिष्टुभः । 'बृहस्पते परि दीय' इत्यस्या बृहस्पतिर्देवता । 'अमीषां चित्तम्' इत्यस्या अप्वाख्या देवी देवता । शिष्टा ऐन्द्र्यः । त्रयोदशी विकल्पेन मारुती । तथा चानुक्रान्तम्—'आशुः सप्तोनैन्द्रोऽप्रतिरथश्चतुर्थी बार्हस्पत्योपान्त्याप्वादेव्यन्त्यानुष्टुम्मारुती वा' इति । साग्निचित्ये क्रतौ चित्यग्निषु प्रणीयमानेषु दक्षिणतो व्रजता ब्रह्मणैतत्सूक्तं जप्यम् । तथा च सूत्रितं—'दक्षिणतश्च व्रजञ्जपत्याशुः शिशान इति सूक्तं समाप्य' (आश्व. श्रौ. ४. १२) इति । 'ब्रह्माप्रतिरथं जपित्वा' (आश्व. श्रौ. ४. ८) इति च । युद्धार्थं राज्ञः संनहनेऽनेन सूक्तेन राजेक्षितव्यः । सूत्रितं च—'अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः' (आश्व. गृ. ३. १२. १३) इति ॥

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः ॥ १ ॥

---

१. ग-त-'पत्या' नास्ति । २. ग-त-भ-विकल्पेनैंद्रत्वा° ।

आशुः । शिशानः । वृषभः । न । भीमः । घनाघनः । क्षोभणः । चर्षणीनाम् ।
सम्ऽक्रन्दनः । अनिऽमिषः । एकऽवीरः । शतम् । सेनाः । अजयत् । साकम् । इन्द्रः ॥ १ ॥

अयमिन्द्रः ᵛआशुः शीघ्रकारी व्यापको वा ᵛशिशानः निशितः । शत्रूणां भयजनक इत्यर्थः । क इव । ᵛवृषभो ᵛन ᵛभीमः । बिभेत्यस्मादिति भीमः । तादृशो वृषभ इव । स यथा तीक्ष्णाभ्यां शृङ्गाभ्यां भीमो भवति तद्वत् । अथवा शिशानस्तीक्ष्णमतिः । व्यत्ययेनात्मनेपदम् । वृषभो न भीमः वृषभो यथा शृङ्गाभ्यां भयजनकः तद्वच्छत्रूणां भयजनकश्च । ᵛघनाघनः घातकः शत्रूणाम् । हन्तेः पचाद्यचि 'हन्तेर्घश्च' (पा.सू.६.१.१२.७) इति द्विर्वचनमभ्यासस्याडागमो घत्वं च धात्वभ्यासयोः । ᵛचर्षणीनाम् । चर्षणयो मनुष्याः । मनुष्याणां द्वेष्याणां ᵛक्षोभणः क्षोभयिता । ᵛसंक्रन्दनः सम्यक् क्रन्दयिता प्राणिनामाकर्षणेन प्रहारेण वा । ᵛअनिमिषः चक्षुर्निमेषरहितः । सर्वदा स्वयङ्गमन-युद्धादिकार्येष्वनलस इत्यर्थः । ᵛएकवीरः । वीरयत्यमित्रानिति वीरः । एकश्चासौ वीरश्च । अथवा एक एव विक्रान्तः । असाहाय्येन कार्यक्षम इत्यर्थः । ईदृशोऽयम् ᵛइन्द्रः ᵛशतं ᵛसेनाः ᵛसाकं सह एकोद्योगेनैव ᵛअजयत् जयति ॥

**संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।**
**तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ २ ॥**

सम्ऽक्रन्दनेन । अनिऽमिषेण । जिष्णुना । युत्ऽकारेण । दुःऽच्यवनेन । धृष्णुना ।
तत् । इन्द्रेण । जयत । तत् । सहध्वम् । युधः । नरः । इषुऽहस्तेन । वृष्णा ॥ २ ॥

अस्तु नामेन्द्र उक्तविधः तथाप्यस्माकं किमिति चेत् तत्राह । ᵛसंक्रन्दनेनानिमिषेण चोक्तलक्षणेन ᵛजिष्णुना जयशीलेन ᵛयुत्कारेण । योधनं युत् । युद्धकारिणा । कर्मण्यण् । ᵛदुश्च्यवनेन अन्यैरविचाल्येन । 'च्युङ् गुङ् गतौ' । 'छन्दसि गत्यर्थेभ्यः' (पा. सू. ३. ३. १२९) इति युच् । ᵛधृष्णुना धर्षकेण ईदृशेन ᵛइन्द्रेण ᵛतत् युद्धं ᵛजयत । ᵛतत् शत्रुबलं ᵛसहध्वम् अभिभवत । हे ᵛयुधः योद्धारो हे ᵛनरः नेतारः । 'विभाषितं विशेषवचने बहुवचनम्' (पा. सू. ८. १. ७४) इति पूर्वस्याविद्यमानवत्त्वनिषेधादुत्तरं निहन्यते । पुनः कीदृशेनेन्द्रेणेति । ᵛइषुहस्तेन ᵛवृष्णा वर्षित्रा च ॥

**स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन ।**
**संसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥**

सः । इषुऽहस्तैः । सः । निषङ्गिऽभिः । वशी । सम्ऽस्रष्टा । सः । युधः । इन्द्रः । गणेन ।
संसृष्टऽजित् । सोमऽपाः । बाहुऽशर्धी । उग्रऽधन्वा । प्रतिऽहिताभिः । अस्ता ॥ ३ ॥

पूर्वमन्त्र इन्द्रेण जयत इत्युक्तम् । अत्र इन्द्रस्य जयसाधनसमर्थत्वं दर्शयति । ᵛसः इन्द्रः ᵛइषुहस्तैः भटैः मरुदादिभिः ᵛवशी वश्यैस्तद्वान् । तथा ᵛनिषङ्गिभिः युक्तः । निषङ्गः खड्गः । तद्वद्भिः ᵛवशी । ᵛसः च ᵛइन्द्रः ᵛयुधः युध्यमानः सन् । इगुपधलक्षणः कः । अथवा युधो युद्धहेतोः ᵛगणेन शत्रुसंघेन सह ᵛसंस्रष्टा एकीभवनशीलः । यत एवंविधोऽतः ᵛसंसृष्टजित् । ये परस्परैकमत्येन युद्धाय संसृष्टा भवन्ति तेषां जेता । तथा ᵛसोमपाः सोमस्य पाता । ᵛबाहुशर्धी । शर्धो बलम् । बाह्वोर्बलं बाहुबलम् । तद्वान् । मत्वर्थीय इनिः । यद्वा । 'शृधु प्रसहने' । बाहुभ्यां शर्धयत्यभिभवतीति बाहुशर्धी । 'सुप्यजातौ णिनिस्ताच्छील्ये' (पा. सू. ३. २. ७८) इति णिनिः । ᵛउग्रधन्वा उद्यत-

धन्वा ^प्रतिहिताभिः शत्रुषु प्रेरिताभिरिषुभिः ^अस्ता मारयिता । यत्रेषून्मुञ्चति तत्र वृथा न भवन्तीत्यर्थः । ईदृशेनेन्द्रेण जयतेति संबन्धः ॥

बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः ।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ४ ॥

बृहस्पते । परि । दीय । रथेन । रक्षःऽहा । अमित्रान् । अपऽबाधमानः ।
प्रऽभञ्जन् । सेनाः । प्रऽमृणः । युधा । जयन् । अस्माकम् । एधि । अविता । रथानाम् ॥ ४ ॥

हे ^बृहस्पते बृहतां पातः[1] पालयितर्देव ^रथेन ^परि ^दीय परिगच्छ । दीयतिर्गतिकर्मा । आगत्य च ^रक्षोहा रक्षसां हन्ता ^अमित्रान् शत्रून् ^अपबाधमानः सर्वतो नाशयन् तथा ^सेनाः शत्रुसंबन्धिनीः ^प्रभञ्जन् प्रकर्षेण नाशयन् ^प्रमृणः प्रकर्षेण हिंसन् । 'मृण हिंसायाम्' । इगुपधलक्षणः कः । केन हिंसन् । ^युधा युद्धेन । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । ^जयन् एवं सर्वत्र जयं प्रतिपद्यमानः ईदृशस्त्वम् ^अस्माकं ^रथानाम् ^अविता[2] ^एधि भव ॥

बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥ ५ ॥

बलऽविज्ञायः । स्थविरः । प्रऽवीरः । सहस्वान् । वाजी । सहमानः । उग्रः ।
अभिऽवीरः । अभिऽसत्वा । सहःऽजाः । जैत्रम् । इन्द्र । रथम् । आ । तिष्ठ । गोऽवित ॥ ५ ॥

सर्वस्य भूतस्य[3] बलं विजानातीति ^बलविज्ञायः । यद्वा । बलं ममायमिति सर्वैर्बलत्वेन विज्ञायत इति बलविज्ञायः । सर्वस्य बलभूत इत्यर्थः । ^स्थविरः महान् ^प्रवीरः प्रकर्षेण वीरः ^सहस्वान् पराभिभवसामर्थ्यवान् ^वाजी वेजनवानन्नवान्वा ^सहमानः शत्रूणामभिभविता ^उग्रः उद्गूर्णबलः ^अभिवीरः । अभिगता वीरा वीर्यवन्तोऽनुचरा यस्य स तथोक्तः । ^अभिसत्वा अभिगतसत्वा ^सहोजाः सहसो बलाज्जातः एवंमहानुभावस्त्वं हे ^इन्द्र ^जैत्रं जयशीलं ^रथम् ^आ ^तिष्ठ अस्मत्सहायार्थमारोढुमर्हसि । त्वं च ^गोवित् उदकस्य स्तुतेर्वा लब्धा वेदिता वा ॥

गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
इमं सजाता अनु वीरयध्वमिन्द्रं सखायो अनु सं रभध्वम् ॥ ६ ॥

गोत्रऽभिदम् । गोऽविदम् । वज्रऽबाहुम् । जयन्तम् । अज्म । प्रऽमृणन्तम् । ओजसा ।
इमम् । सऽजाताः । अनु । वीरयध्वम् । इन्द्रम् । सखायः । अनु । सम् । रभध्वम् ॥ ६ ॥

^गोत्रभिदम् । गा उदकानि त्रायन्त इति गोत्रा मेघाः । यद्वा गौर्भूमिः । तां त्रायन्त इति गोत्राः पर्वताः । तेषां भेत्तारं ^गोविदम् उदकस्य लब्धारं ^वज्रबाहुं वज्रहस्तम् । 'प्रहरणार्थेभ्यः°' (पा. सू. २. २. ३६. ४) इति परनिपातः । ^जयन्तं जयनशीलम् ^अज्म गमनशीलं शत्रुबलम् ^ओजसा बलेन जयन्तं यद्वा अज्म आजिं जयन्तमोजसा बलेन ^प्रमृणन्तं शत्रूनभिभवन्तमीदृशं महानुभावम् ^इमम् इन्द्रं हे ^सजाताः सहोत्पन्ना योद्धारो यूयम् ^अनु ^वीरयध्वम् । एनमग्रतः

१. त१.२.३.६.७-मु-पते । २. त-अविता रक्षिता । ३. ग-त-भ-'भूतस्य' नास्ति ।

कृत्वानु पश्चाद्वीरयध्वं वीरकर्म युद्धं कुरुध्वम्। 'शूर वीर विक्रान्तौ'। वीरशब्दात् 'तत्करोति तदाचष्टे' इति णिच्। हे ᵛसखायः परस्परं सखिभूता यूयमिमम् ᵛइन्द्रं संरभमाणम् ᵛअनु ᵛसं ᵛरभध्वम्॥॥२२॥

अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः।
दुश्च्यवनः पृतनाषाळयुध्योऽस्माकं सेना अवतु प्र युत्सु ॥ ७ ॥

अभि। गोत्राणि। सहसा। गाहमानः। अदयः। वीरः। शतऽमन्युः। इन्द्रः।
दुःऽच्यवनः। पृतनाषाट्। अयुध्यः। अस्माकम्। सेनाः। अवतु। प्र। युत्ऽसु ॥ ७ ॥

अयम् ᵛइन्द्रः ᵛगोत्राणि अभ्राणि मेघान् ᵛसहसा बलेन ᵛअभि ᵛगाहमानः प्रविशन् ᵛअदयः निर्दयः ᵛवीरः विक्रान्तः ᵛशतमन्युः बहुयज्ञो बहुक्रोधो वा ᵛदुश्च्यवनः अन्यैरचाल्यः। स्वयं ᵛपृतनाषाट् शत्रुसेनानामभिभविता। 'छन्दसि सहः' इति ण्विः। 'सहेः साडः सः' इति मूर्धन्यादेशः। ᵛअयुध्यः संप्रहर्तुमशक्यः। 'युध संप्रहारे'। छान्दसः क्यप्। ईदृगिन्द्रः ᵛअस्माकं ᵛसेनाः ᵛयुत्सु संग्रामेषु ᵛप्र ᵛअवतु प्रकर्षेण रक्षतु ॥

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ ८ ॥

इन्द्रः। आसाम्। नेता। बृहस्पतिः। दक्षिणा। यज्ञः। पुरः। एतु। सोमः।
देवऽसेनानाम्। अभिऽभञ्जतीनाम्। जयन्तीनाम्। मरुतः। यन्तु। अग्रम् ॥ ८ ॥

ᵛआसाम् अस्मत्सहायार्थमागतानाम्[1] अयम् ᵛइन्द्रः ᵛनेता नायकोऽस्तु। तथा तस्य ᵛबृहस्पतिः ᵛपुर ᵛएतु। एवं ᵛदक्षिणा ᵛयज्ञः ᵛसोमः च पुर एत्विति प्रत्येकं संबन्धः। तथा ᵛदेवसेनानामभिभञ्जतीनाम् अस्मदमित्रानाभिमुख्येन मर्दयन्तीनां ᵛजयन्तीनाम्। '°छन्दसि°' इति नाम उदात्तत्वं जयन्तीनामित्यत्र बहुलवचनान्न भवति (पा. सू. ६. १. १७८)। तासाम् ᵛअग्रं ᵛमरुतो ᵛयन्तु गच्छन्तु ॥

इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम्।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ९ ॥

इन्द्रस्य। वृष्णः। वरुणस्य। राज्ञः। आदित्यानाम्। मरुताम्। शर्धः। उग्रम्।
महाऽमनसाम्। भुवनऽच्यवानाम्। घोषः। देवानाम्। जयताम्। उत्। अस्थात् ॥ ९ ॥

ᵛवृष्णः वर्षकस्य ᵛइन्द्रस्य ᵛराज्ञः ᵛवरुणस्य ᵛआदित्यानां ᵛमरुतां च ᵛउग्रम् उद्गूर्णं ᵛशर्धः बलमस्माकं भवत्विति शेषः। किंच ᵛमहामनसाम् उदारमनसां ᵛभुवनच्यवानां भुवनानां च्यावयितॄणां ᵛदेवानां ᵛघोषः जयशब्दः ᵛउदस्थात् उत्तिष्ठति। अनूर्ध्वकर्मत्वादात्मनेपदाभावः (पा. सू. १. ३. २४)॥

उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनांसि।
उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ १० ॥

---

१. ग-त-मु–°मागतानां देवसेनानां।

उत । हर्षय । मघऽवन् । आयुधानि । उत । सत्वनाम् । मामकानाम् । मनांसि ।
उत । वृत्रऽहन् । वाजिनाम् । वाजिनानि । उत । रथानाम् । जयताम् । यन्तु । घोषाः ॥ १० ॥

हे ᵛमघवन् इन्द्र अस्मदीयानि ᵛआयुधानि ᵛउद्धर्षय उत्कृष्टं हर्षय । प्रहरणेषूद्युक्तानि भवन्त्वित्यर्थः। ᵛमामकानां मदीयानां ᵛसत्वनां प्राणिनां सैनिकानां ᵛमनांसि च ᵛउत् हर्षय । हे ᵛवृत्रहन् इन्द्र ᵛवाजिनाम् अश्वानां ᵛवाजिनानि वेगाः ᵛउत् ᵛयन्तु । तथा ᵛजयतां ᵛरथानां ᵛघोषाः ᵛउत् यन्तु ॥

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु ॥ ११ ॥

अस्माकम् । इन्द्रः । सम्ऽऋतेषु । ध्वजेषु । अस्माकम् । याः । इषवः । ताः । जयन्तु ।
अस्माकम् । वीराः । उत्ऽतरे । भवन्तु । अस्मान् । ऊँ इति । देवाः । अवत । हवेषु ॥ ११ ॥

ᵛअस्माकं संबन्धिष्वेव ᵛसमृतेषु परसेनां संप्राप्तेषु ᵛध्वजेषु ध्वजवत्सु सैनिकेषु ᵛइन्द्रः रक्षिता भवतु । तथा ᵛअस्माकं ᵛया ᵛइषवः सन्ति ᵛताः एव ᵛजयन्तु शत्रून्[१] । तथा ᵛअस्माकं ᵛवीराः भटाः ᵛउत्तरे उपरि ᵛभवन्तु । हे ᵛदेवाः ᵛअस्माँ ᵛउ अस्मानेव ᵛअवत रक्षत ᵛहवेषु संग्रामेषु ॥

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १२ ॥

अमीषाम् । चित्तम् । प्रतिऽलोभयन्ती । गृहाण । अङ्गानि । अप्वे । परा । इहि ।
अभि । प्र । इहि । निः । दह । हृत्ऽसु । शोकैः । अन्धेन । अमित्राः । तमसा । सचन्ताम् ॥ १२ ॥

हे ᵛअप्वे पापाभिमानिनि देवते ᵛअमीषां योद्धृणां शत्रूणां ᵛचित्तं ᵛप्रतिलोभयन्ती विमोहयन्ती सती ᵛअङ्गानि तेषामवयवान् शिरआदिकान् ᵛगृहाण स्वीकुरु । ᵛअभि ᵛप्रेहि ᵛअभिगच्छ । तेषां समीपं गत्वा च ᵛहृत्सु हृदयेषु ᵛशोकैः ᵛनिर्दह नितरां भस्मीकुरु । ते ᵛअमित्राः अस्मच्छत्रवः ᵛअन्धेन ᵛतमसा ᵛसचन्तां संगच्छन्ताम् ॥

प्रेता जयता नर इन्द्रो वः शर्म यच्छतु ।
उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ १३ ॥

प्र । इत । जयत । नरः । इन्द्रः । वः । शर्म । यच्छतु ।
उग्राः । वः । सन्तु । बाहवः । अनाधृष्याः । यथा । असथ ॥ १३ ॥

हे ᵛनरः नेतारः संग्रामस्य निर्वोढारो योद्धारः ᵛप्रेत प्रकर्षेण गच्छत । गत्वा च ᵛजयत तान्प्रतिभटान् । तिङः परत्वात् ‘ तिङ्ङतिङः ’ इति निघाताभावः । ᵛवः युष्माकम् ᵛइन्द्रः ᵛशर्म सुखं ᵛयच्छतु प्रयच्छतु । ᵛवः ᵛबाहवः ᵛउग्राः उद्गूर्णबलाः ᵛसन्तु भवन्तु । ᵛअनाधृष्याः अन्यैरनभिभाव्याः ᵛयथा यूयम् ᵛअसथ भविष्यथ तथोग्राः सन्तु वो बाहवः ॥ ॥ २३ ॥

‘ असावि ’ इत्येकादशर्चं पञ्चमं सूक्तं वैश्वामित्रस्याष्टकस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तम्—‘ असाव्येकादशाष्टको वैश्वामित्रः ’ इति । गतः सूक्तविनियोगः ॥

---

१. ग-त-भ–शत्रूणां ।

असावि सोमः पुरुहूत तुभ्यं हरिभ्यां यज्ञमुप याहि तूयम्।
तुभ्यं गिरो विप्रवीरा इयाना दधन्विर इन्द्र पिबा सुतस्य ॥ १ ॥

असावि। सोमः। पुरुऽहूत। तुभ्यम्। हरिऽभ्याम्। यज्ञम्। उप। याहि। तूयम्।
तुभ्यम्। गिरः। विप्रऽवीराः। इयानाः। दधन्विरे। इन्द्र। पिब। सुतस्य ॥ १ ॥

हे पुरुहूत बहुभिः स्तोतृभिराहूत तुभ्यं[1] त्वदर्थं सोमः असावि अभिषुतोऽभूत्। 'षुञ् अभिषवे' इत्यस्मात्कर्मणि लुङ्। अतः हरिभ्यां हरितवर्णाभ्यामश्वाभ्यां यज्ञम् अस्मदीयं तूयं तूर्णम् उप याहि उपागच्छ। तुभ्यं त्वदर्थं गिरः अस्मदीयाः स्तुतयः विप्रवीराः। विप्रा मेधाविनो वीरा विशेषेण प्रेरयितारः प्रोद्गमयितारो यासां तास्तथोक्ताः। इयानाः गमनशीलाः दधन्विरे गम्यन्ते। अस्माभिर्युष्मत्प्रीणनाय प्राप्यन्त इत्यर्थः। 'ईङ् गतौ'। ताच्छीलिकः शानच्। छान्दसो विकरणस्य लुक्। धविर्गत्यर्थः। इदित्त्वान्नुम्। कर्मणि छान्दसो लिट्। यत एवमतः सुतस्य अभिषुतस्यांशं सुतं सोमं वा पिब ॥

प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे 'अप्सु धूतस्य' इत्येषा याज्या। सूत्रितं च—'अप्सु धूतस्य हरिवः पिबेहेति याज्या' (आश्व. श्रौ. ६. ४) इति ॥

अप्सु धूतस्य हरिवः पिबेह नृभिः सुतस्य जठरं पृणस्व।
मिमिक्षुर्यमद्रय इन्द्र तुभ्यं तेभिर्वर्धस्व मदमुक्थवाहः ॥ २ ॥

अप्ऽसु। धूतस्य। हरिऽवः। पिब। इह। नृऽभिः। सुतस्य। जठरम्। पृणस्व।
मिमिक्षुः। यम्। अद्रयः। इन्द्र। तुभ्यम्। तेभिः। वर्धस्व। मदम्। उक्थऽवाहः ॥ २ ॥

हे हरिवः। 'ऋक्सामे वा इन्द्रस्य हरी' (ऐ. ब्रा. २. २४) इति श्रुतेः स्तोत्रशस्त्राधारभूताभ्यामृक्सामाभ्यां हरिभ्यां तद्वन्निन्द्र अप्सु एकधनादिषूदकेषु धूतस्य कम्पितस्य। अभिषुतस्येत्यर्थः। तथा नृभिः कर्मनेतृभिः कर्मनिर्वाहकैरध्वर्य्वादिभिः सुतस्य अभिषुतस्य। उभयत्र 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानसंज्ञायां 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी। ईदृशं सोमम् इह अस्मिन्यज्ञे पिब। पीत्वा च जठरं स्वकीयं पृणस्व पूरय च। 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते। यं सोमम् अद्रयः अभिषवग्रावाणो हे इन्द्र तुभ्यं त्वदर्थं मिमिक्षुः सेक्तुमभिषोतुमैच्छन्। अभिषवमकुर्वन्नित्यर्थः। 'मिह सेचने' इत्यस्य सनि लिङ्युसि रूपम्। हे उक्थवाहः उक्थैः शस्त्रैरुह्यमान तेभिः तैः मदं वर्धस्व ॥

द्वितीये पर्याये ब्राह्मणाच्छंसिनः 'प्रोग्राम्' इत्येषा याज्या। सूत्रितं च—'अश्वावति प्रथमः प्रोग्रां पीतिं वृष्ण इयर्मि सत्यामिति याज्या' (आश्व. श्रौ. ६. ४) इति ॥

प्रोग्रां पीतिं वृष्ण इयर्मि सत्यां प्रयै सुतस्य हर्यश्व तुभ्यम्।
इन्द्र धेनाभिरिह मादयस्व धीभिर्विश्वाभिः शच्या गृणानः ॥ ३ ॥

प्र। उग्राम्। पीतिम्। वृष्णे। इयर्मि। सत्याम्। प्रऽयै। सुतस्य। हरिऽअश्व। तुभ्यम्।
इन्द्र। धेनाभिः। इह। मादयस्व। धीभिः। विश्वाभिः। शच्या। गृणानः ॥ ३ ॥

---

१. त-भ-ते तुभ्यं।

हे vहर्यश्व इन्द्र vवृष्णे वर्षकाय vतुभ्यम् vउग्राम् उद्गूर्णे[1] vसत्यां vपीतिं सोमपाने vप्र vइयर्मि प्रेरयामि । किमर्थम् । vप्रयै प्रगमनाय । कस्य पीतिम् । vसुतस्य अभिषुतस्य । अतो हे vइन्द्र vशच्या शक्त्या कर्मणा वा युक्तः vगृणानः स्तूयमानस्त्वं vविश्वाभिः सर्वाभिः vधेनाभिः स्तुतिवाग्भिः विश्वाभिः vधीभिः सर्वैः कर्मभिश्च vइह अस्मिन् यज्ञे vमादयस्व तृप्यस्व । 'मद तृप्तियोगे'। आत्मनेपदम् ॥

तृतीये पर्याये ब्राह्मणाच्छंसिनः शस्त्रे 'ऊती शचीवः' इत्येषा याज्या । 'ऊती शचीवस्तव वीर्येणेति याज्या' ( आश्व. श्रौ. ६. ४ ) इति सूत्रितम् ॥

**ऊती शचीवस्तव वीर्येण वयो दधाना उशिजं ऋतज्ञाः ।**
**प्रजावदिन्द्र मनुषो दुरोणे तस्थुर्गृणन्तः सधमाद्यासः ॥ ४ ॥**

ऊती । शचीऽवः । तव । वीर्येण । वयः । दधानाः । उशिजः । ऋतऽज्ञाः ।
प्रजाऽवत् । इन्द्र । मनुषः । दुरोणे । तस्थुः । गृणन्तः । सधऽमाद्यासः ॥ ४ ॥

हे vशचीवः शक्तिवन् vइन्द्र vतव vऊती ऊत्या रक्षणेन तव vवीर्येण vवयः अन्नं vप्रजावत् प्रजोपेतं vदधानाः धारयन्तः vउशिजः त्वामेव कामयमानाः vऋतज्ञाः ऋतं यज्ञमहर्जानन्तः । अङ्गिरसः सत्रमनुतिष्ठन्तः षष्ठेऽहनि प्रयोगमूढाः सन्तो नाभानेदिष्ठेन पारं गता यतः अतस्तेषामृतज्ञत्वम् । ईदृशोऽङ्गिरसः vमनुषः मनुष्यस्य यजमानस्य vदुरोणे यज्ञगृहे vगृणन्तः त्वां स्तुवन्तः vसधमाद्यासः सह माद्यन्तः vतस्थुः तिष्ठन्ति । मादयतेः 'कृत्यल्युटो बहुलम्' इति वचनात् कर्तरि 'अचो यत्' इति यत् । छान्दसः सधादेशः । अतो वयमपि तिष्ठेमेत्यर्थः ॥

**प्रणीतिभिष्टे हर्यश्व सुष्टोः सुषुम्नस्य पुरुरुचो जनासः ।**
**मंहिष्ठामूतिं वितिरे दधानाः स्तोतार इन्द्र तव सूनृताभिः ॥ ५ ॥**

प्रनीतिऽभिः । ते । हरिऽअश्व । सुऽस्तोः । सुऽसुम्नस्य । पुरुऽरुचः । जनासः ।
मंहिष्ठाम् । ऊतिम् । विऽतिरे । दधानाः । स्तोतारः । इन्द्र । तव । सूनृताभिः ॥ ५ ॥

हे vहर्यश्व हरितवर्णाश्वोपेत vइन्द्र vसुष्टोः सुष्ठु स्तूयमानस्य vसुषुम्नस्य सुसुखस्य सुधनस्य वा vपुरुरुचः बहुदीप्तेः vते तव vप्रणीतिभिः प्रणयनैर्धनादिप्रदानैः vजनासः जनाः vस्तोतारः vसूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः । एतत्प्रणीतिभिरित्यनेन समुच्चीयते । vवितिरे अन्येभ्योऽर्थिभ्यो वितरणाय vमंहिष्ठाम् अतिशयेन मंहनीयां vतव संबन्धिनीम् vऊतिं रक्षां vदधानाः आसत इति शेषः ॥     ॥ २४ ॥

**उप ब्रह्माणि हरिवो हरिभ्यां सोमस्य याहि पीतये सुतस्य ।**
**इन्द्र त्वा यज्ञः क्षममाणमानड् दाश्वाँ अस्यध्वरस्य प्रकेतः ॥ ६ ॥**

उप । ब्रह्माणि । हरिऽवः । हरिऽभ्याम् । सोमस्य । याहि । पीतये । सुतस्य ।
इन्द्र । त्वा । यज्ञः । क्षममाणम् । आनट् । दाश्वान् । असि । अध्वरस्य । प्रऽकेतः ॥ ६ ॥

१. ग-त-भ१.२.४.८-मु—उद्गूर्णा ।

हे ^v^हरिवः हरिवन्निन्द्र ^v^सुतस्य अभिषुतस्य ^v^सोमस्य ^v^पीतये पानाय ^v^ब्रह्माणि परिवृढा-न्यस्मदीयानि कर्माणि स्तोत्राणि वा ^v^उप ^v^याहि उपागच्छ। केन साधनेनेति तदुच्यते। ^v^हरिभ्याम् अश्वाभ्याम्। ताभ्यां युक्तेन रथेनेत्यर्थः। यद्वा। हरिभ्यां हरिव इति संबन्धनीयम्। हे ^v^इन्द्र ^v^क्षममाणं ^v^त्वा त्वां ^v^यज्ञः सोमयागः ^v^आनट् व्याप्नोति। नशतेर्लुङि 'मन्त्रे घस°' इति च्लेर्लुक्। 'छन्दस्यपि दृश्यते' इत्याडागमः। अश्नोतेरेव वा लिटि छान्दसस्तप्रत्ययस्य लोपः। 'अश्नोतेश्च' इति नुडागमः। ^v^अध्वरस्य यागस्य ^v^प्रकेतः प्रकर्षेण जानंस्त्वं ^v^दाश्वानसि दातासि कर्मफलस्य॥

सहस्रवाजमभिमातिषाहं सुतेरणं मघवानं सुवृक्तिम्।
उप भूषन्ति गिरो अप्रतीतमिन्द्रं नमस्या जरितुः पनन्त॥ ७॥

सहस्रऽवाजम्। अभिमातिऽसहम्। सुतेऽरणम्। मघऽवानम्। सुऽवृक्तिम्।
उप। भूषन्ति। गिरः। अप्रतिऽइतम्। इन्द्रम्। नमस्याः। जरितुः। पनन्त॥ ७॥

^v^सहस्रवाजम् अपरिमितान्नमपरिमितबलं वा ^v^अभिमातिषाहम् अभिमातीनां सर्वतो हिंसकानां शत्रूणामभिभवितारं ^v^सुतेरणम् अभिषुते सोमे रममाणं ^v^मघवानं धनवन्तं ^v^सुवृक्तिं शोभनस्तुतिकम् ^v^अप्रतीतं युद्धेऽन्यैरप्रतिगतम् ^v^इन्द्रं ^v^गिरः स्तुतिरूपा वाचः ^v^उप ^v^भूषन्ति अलंकुर्वन्ति। तदेवाह। ^v^जरितुः स्तोतुः ^v^नमस्याः स्तुतयः ^v^पनन्त स्तुवन्ति॥

सप्तापो देवीः सुरणा अमृक्ता याभिः सिन्धुमतर इन्द्र पूर्भित्।
नवतिं स्रोत्या नव च स्रवन्तीर्देवेभ्यो गातुं मनुषे च विन्दः॥ ८॥

सप्त। आपः। देवीः। सुऽरणाः। अमृक्ताः। याभिः। सिन्धुम्। अतरः। इन्द्र। पूःऽभित्।
नवतिम्। स्रोत्याः। नव। च। स्रवन्तीः। देवेभ्यः। गातुम्। मनुषे। च। विन्दः॥ ८॥

हे इन्द्र त्वदाज्ञया ^v^सप्त एतत्संख्याकाः ^v^आपः अब्रूपाः[1] ^v^देवीः देव्यो गङ्गाद्याः ^v^सुरणाः सुष्ठु रममाणाः शोभनशब्दा वा। रणिः शब्दार्थः। 'वशिरण्योरुपसंख्यानम्' (पा. सू. ३.३.५८.३) इति भावेऽप्। बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। ^v^अमृक्ताः अहिंसिताः प्रवहन्तीति शेषः। हे ^v^इन्द्र ^v^पूर्भित् पुरां भेत्ता त्वं ^v^याभिः गङ्गादिभिः सप्तनदीभिः ^v^सिन्धुं समुद्रम् ^v^अतरः। प्रावर्धय इत्यर्थः। यद्वा। सप्त सर्पणस्वभावा उक्तलक्षणा आपो देव्यस्त्वया सृष्टाः प्रवहन्ति याभिः सिन्धुं नदीमतरः। किंच त्वं[2] ^v^नवतिं ^v^नव ^v^च नवोत्तरनवतिसंख्याकाः ^v^स्रवन्तीः प्रवहन्तीः ^v^स्रोत्याः। नदीनामैतत्। नदीः ^v^देवेभ्यः हविरर्थं ^v^मनुषे मनुष्याय भोगार्थं ^v^च ^v^गातुं गन्तव्यं तासां मार्गं च ^v^विन्दः अलभथाः॥

अपो महीरभिशस्तेरमुञ्चोऽजागरास्वधि देव एकः।
इन्द्र यास्त्वं वृत्रतूर्ये चकर्थ ताभिर्विश्वायुस्तन्वं पुपुष्याः॥ ९॥

अपः। महीः। अभिऽशस्तेः। अमुञ्चः। अजागः। आसु। अधि। देवः। एकः।
इन्द्र। याः। त्वम्। वृत्रऽतूर्ये। चकर्थ। ताभिः। विश्वऽआयुः। तन्वम्। पुपुष्याः॥ ९॥

१. ग-अब्रूपा नद्यः; त१.२.३.७-अब्रूपा द्याः; त४.५.८-भ१.२.४.८-अब्रूपा द्याः। २. ग१.२-त१.२.३.६.७.८-भ-'त्वं' नास्ति।

हे इन्द्र ᐯमहीः महतीः ᐯअपः उदकानि ᐯअभिशस्तेः अभिशंसकाद्वृत्रात् ᐯअमुञ्चः। ᐯआसु मुक्तास्वप्सु ᐯदेवः त्वम् ᐯएकः एक एव असहायः सन् ᐯअधि ᐯअजागः अप्रमत्तो भवसि। यद्वा। अधीति सप्तम्यर्थानुवादी। हे ᐯइन्द्र ᐯत्वं ᐯयाः अपः ᐯवृत्रतूर्ये वृत्रहत्यायां मेघहनने ᐯचकर्थ करोषि ᐯताभिः अद्भिः ᐯविश्वाभिः सर्वाभिः त्वं ᐯतनुं स्वकीयं शरीरं ᐯपुपुष्याः पोषयेः। 'पुष पुष्टौ' इत्यस्य व्यत्ययेन श्लुः ॥

**वीरेण्यः क्रतुरिन्द्रः सुशस्तिरुतापि धेना पुरुहूतमीट्टे ।**
**आर्दयद्वृत्रमकृणोदु लोकं ससाहे शक्रः पृतना अभिष्टिः ॥ १० ॥**

वीरेण्यः । क्रतुः । इन्द्रः । सुऽशस्तिः । उत । अपि । धेना । पुरुऽहूतम् । ईट्टे ।
आर्दयत् । वृत्रम् । अकृणोत् । ऊँ इति । लोकम् । ससहे । शक्रः । पृतनाः । अभिष्टिः ॥ १० ॥

ᐯइन्द्रः ᐯवीरेण्यः वीरैर्गन्तव्योऽतिशयेन वीरो वा ᐯक्रतुः कर्मवान्[1] ᐯसुशस्तिः शोभनस्तुतिकः ᐯउत अपि च। ᐯअपि इत्यनर्थकः। अपि च ᐯधेना। वाङ्नामैतत्। प्रीणयित्री स्तुतिवाक् ᐯपुरुहूतम् इन्द्रम् ᐯईट्टे स्तौति पूजयति वा। यत उक्तलक्षणः अतः स्तोतव्य इत्यर्थः। किंचायं ᐯवृत्रम् आवरकमेतन्नामकमसुरम् ᐯआर्दयत् हतवानित्यर्थः। ᐯउ अपि च ᐯलोकम्। लोक्यत इति लोकः प्रकाशः। तम् ᐯअकृणोत् अकरोत्। आवरकमसुरं हत्वा प्रकाशं कृतवानित्यर्थः। न केवलं तमेकमेव अपि तु ᐯशक्रः शक्त इन्द्रः ᐯअभिष्टिः शत्रूणामभिगन्ता ᐯपृतनाः शत्रुसेनाः ᐯससाहे अभ्यभवत् ॥

**शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।**
**शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥**

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥

पूर्वं व्याख्याता[2] ॥ ॥ २५ ॥

'कदा' इत्येकादशर्चं षष्ठं सूक्तमैन्द्रम्। कुत्सपुत्रो नाम्ना[3] दुर्मित्रो गुणतः सुमित्रः यद्वा नाम्ना सुमित्रो गुणतो दुर्मित्रः स ऋषिः। 'हरी यस्य सुयुजा' 'वज्रं यश्चक्रे' इति द्वे पिपीलिकमध्ये एकादशषट्कैकादशके उष्णिहौ। अन्त्या त्रिष्टुप्। आद्या गायत्री वा। अक्षरव्यूहेन पक्षान्तर उष्णिक्। शिष्टाः सर्वाः सप्तोष्णिहः। तथा चानुक्रान्तं—'कदा कौत्सो दुर्मित्रो नाम्ना सुमित्रो गुणतः सुमित्रो वा नाम्ना दुर्मित्रो गुणत औष्णिहं हरी वज्रं पिपीलिकमध्ये त्रिष्टुबन्त्याद्या गायत्री वा' इति। गतो विनियोगः ॥

---

१. गध—कर्मवान् प्रज्ञावान् वा। २. तव—इयं पूर्वं व्याख्याता। मंत्रार्थस्तु हे इंद्र वाजसातौ वाजस्यान्नस्य सातिर्लाभो यस्मिन् सोयं वाजसातिः। तस्मिन् भरे। बिभ्रति जयलक्ष्मीमनेन योद्धार इति भरः संग्रामः। तस्मिन् संग्रामे शुनमुत्साहेन प्रवृद्धं मघवानं धनवंतं अत एव इंद्रं निरतिशयऐश्वर्यसंपन्नं नृतमं सर्वस्य जगतोतिशयेन नेतारं त्वां हुवेम कुशिका वयं यज्ञार्थमाह्वयाम। तथा शृण्वंति अस्माभिः क्रियमाणां स्तुतिं शृण्वंतं उग्रं शत्रूणां भयंकरं समत्सु संग्रामेषु वृत्राणि वृत्रोपलक्षितानि सर्वाणि रक्षांसि घ्नंतं हिंसंतं धनानां शत्रुसंबंधिनां संजितं सम्यग्जेतारं त्वां ऊतये रक्षणाय वयमाह्वयेम। ३. त-मु—नामतः।

कुदा वसो स्तोत्रं हर्यत आव श्मशा रुधद्वाः । दीर्घं सुतं वाताप्याय ॥ १ ॥

कुदा । वसो इति । स्तोत्रम् । हर्यते । आ । अवं । श्मशा । रुधत् । वारिति वाः ।
दीर्घम् । सुतम् । वाताप्याय ॥ १ ॥

हे ᵛवसो वासयितरिन्द्र ᵛस्तोत्रम् अस्मत्कर्तृकं ᵛहर्यते कामयमानाय कामयमानं त्वाम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी । ᵛकदा कस्मिन् काले ᵛअव ᵛरुधत् अवरोत्स्यति । अवरुध्य च कदा ᵛवाः वारयिष्यति । तादृशः कालः कदास्माकं संभविष्यतीत्याशास्ते । रुधेर्लुङि 'इरितो वा' इति च्लेरङादेशः । वारिति वृणोतेर्ण्यन्ताल्लङि छान्दसः शपो लुक् । 'छन्दस्युभयथा' इति तिप आर्धधातुकत्वात् 'णेरनिटि' इति लोपे[1] 'हल्ङ्याब्भ्यः[0]' इति तिलोपः । तत्र दृष्टान्तः । अश्नुते क्षेत्रमिति ᵛश्मशा कुल्या । लुप्तोपममेतत् । यथा कुल्येतस्तत उदकान्यवरुणद्धि अवरुध्य च वारयति तथेत्यर्थः । किमुद्दिश्यावरोध इति तत्राह । ᵛदीर्घं सवनत्रयरूपेणायतं ᵛसुतम् अभिषुतं सोमं प्रति । किमर्थमिति तदाह । ᵛवाताप्याय । वातेनाप्यतेऽधस्तान्निपात्यत इति वाताप्यमुदकम् । तस्य प्रदानायेत्यर्थः ॥

हरी यस्य सुयुजा विव्रता वेरर्वन्तानु शेपा ।
उभा रजी न केशिना पतिर्दन् ॥ २ ॥

हरी इति । यस्य । सुऽयुजा । विऽव्रता । वेः । अर्वन्ता । अनु । शेपा ।
उभा । रजी इति । न । केशिना । पतिः । दन् ॥ २ ॥

ᵛयस्य इन्द्रस्य ᵛहरी हरितवर्णावश्वौ ᵛसुयुजा[2] सुष्ठु नियोज्यौ । सुशिक्षितावित्यर्थः । ᵛविव्रता । व्रतमिति कर्मनाम । विशिष्टकर्माणौ अर्वन्तौ अरणकुशलौ ᵛशेपा शेपवन्तौ । मत्वर्थो लुप्यते । प्रशस्तपुंस्त्वावित्यर्थः । ᵛउभा उभौ ᵛरजी ᵛन रजसी द्यावापृथिव्याविव । यद्वा महान्तौ रञ्जकौ सूर्याचन्द्रमसाविव । ᵛकेशिना केशिनौ प्रकाशमानौ केशवन्तौ वा ईदृशावश्वौ हे इन्द्र यस्य ते तव स्वभूतौ तयोः ᵛपतिः स्वामी त्वं ᵛदन् धनानि प्रयच्छन् ᵛअनु ᵛवेः स्तुतशस्त्रादीन्यनुकामयस्व । दन्निति ददातेः शतरि 'छन्दस्युभयथा' इत्यार्धधातुकत्वात् 'आतो लोप इटि च' इत्याकारलोपः । अत एव श्लवभावश्च[3] ॥

अप योरिन्द्रः पापज आ मर्तो न शश्रमाणो बिभीवान् ।
शुभे यद्युयुजे तविषीवान् ॥ ३ ॥

अप । योः । इन्द्रः । पापजे । आ । मर्तः । न । शश्रमाणः । बिभीवान् ।
शुभे । यत् । युयुजे । तविषीऽवान् ॥ ३ ॥

यः ᵛइन्द्रः ᵛपापजे । ᵛआ इत्यनर्थकः । पापाज्जायत इति पापजो वृत्रः । तस्मिन् ᵛमर्तो ᵛन मनुष्य इव ᵛशश्रमाणः तेन सह युद्धे श्राम्यन् ᵛबिभीवान् बिभ्यच्च भवति । श्राम्यतेश्छन्दसि लिट् । तस्य व्यत्ययेन कानच् । स इन्द्रः ᵛयत् यदा ᵛतविषीवान् मरुद्भिर्बलैर्बलवान् ᵛयुयुजे युज्यते संपद्यते ᵛशुभे शोभार्थं तदानीम् ᵛअप ᵛयोः । तस्य वृत्रस्यापयोरपयोजयिता भवति ॥

१. त१.२.३.६.७-मु-णिलोपे । २. ग-त-भ-सुयुजौ । ३. त-भ-शवभावश्च ।

सचायोरिन्द्रश्चर्कृष आँ उपानसः सपर्यन् । नदयोर्विव्रतयोः शूर इन्द्रः ॥ ४ ॥

सचा । आयोः । इन्द्रः । चर्कृषे । आ । उपानसः । सपर्यन् ।
नदयोः । विऽव्रतयोः । शूरः । इन्द्रः ॥ ४ ॥

आयोः । मनुष्यनामैतत् । मनुष्यस्य स्तोतुः चर्कृषे पुनःपुनर्विलेखनाय । धनप्रदानायेत्यर्थः । सचा सह दातव्यैर्धनैः सहितः । यद्वा । आयोः सचा सहायभूतः । उपानसः अनः उपागतवान्[1] । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (पा. म. २. २. १८. ४) इति प्रादिसमासः । 'अनसन्ताञ्च-पुंसकात्' (पा. सू. ५. ४. १०३) इति समासान्तष्टच् । आरूढरथ इत्यर्थः । सपर्यन् धनैः स्तोतारं पूजयन् । यद्वा । व्यत्ययेन कर्तृप्रत्ययः[2] । स्तुतिभिर्हविर्भिश्च पूज्यमानः । उक्तगुणविशिष्टः सन् आ आगच्छति । उपसर्गश्रुतेरुचितक्रियाध्याहारः । कीदृश इन्द्रः । नदयोः हेषाशब्दं कुर्वतोः विव्रतयोः विशिष्टकर्मणोरश्वयोर्नियन्ता शूरः विक्रान्तः ॥

अधि यस्तस्थौ केशवन्ता व्यचस्वन्ता न पुष्ट्यै ।
वनोति शिप्राभ्यां शिप्रिणीवान् ॥ ५ ॥

अधि । यः । तस्थौ । केशऽवन्ता । व्यचस्वन्ता । न । पुष्ट्यै ।
वनोति । शिप्राभ्याम् । शिप्रिणीऽवान् ॥ ५ ॥

यः इन्द्रः केशवन्ता केशिनौ व्यचस्वन्ता व्यचनवन्तौ व्याप्तिमन्तौ । न* इत्यनर्थको निपातः । ईदृशावश्वौ[3] पुष्ट्यै पोषणाय यजमानस्यात्मनो वा अधि तस्थौ अधितिष्ठति आरोहति । 'अधिशीङ्स्थासां कर्म' (पा. सू. १. ४. ४६) इति कर्मणोऽधिकरणसंज्ञा । यद्वा नेति चार्थे । तेन गुणौ समुच्चीयेते । प्रशस्तकेशौ व्यचस्वन्तौ चेत्यर्थः । सः शिप्राभ्यां हनूभ्यां[4] शिप्रिणीवान् शिप्रवानिन्द्रः । एको मत्वर्थीयोऽनुवादः । वनोति सोमान् याचते । 'वनु याचने' । यद्वा । वनुष्यतिर्हन्तिकर्मा । शत्रून् हिनस्ति* ॥  ॥ २६ ॥

प्रास्तौदृष्वौजा ऋष्वेभिस्ततक्ष शूरः शवसा । ऋभुर्न क्रतुभिर्मातरिश्वा ॥ ६ ॥

प्र । अस्तौत् । ऋष्वऽओजाः । ऋष्वेभिः । ततक्ष । शूरः । शवसा ।
ऋभुः । न । क्रतुऽभिः । मातरिश्वा ॥ ६ ॥

ऋष्वौजाः[5] दर्शनीयबलः व्याप्तबलो वा ऋष्वेभिः दर्शनीयैर्मरुद्भिः सह प्रास्तौत् प्रस्तौति । स्तुत्यादिकं सम्यक्कृतमनेनेति प्रशंसति । यद्वा । कर्मणि कर्तृप्रत्ययः । प्रकर्षेण स्तुतोऽभूत् । य इन्द्रः शूरः विक्रान्तः मातरिश्वा वृष्टेर्निर्मातर्यन्तरिक्षे श्वसन् वर्तमानः सन् शवसा बलेन क्रतुभिः

१. ग४-त२.३.७-म-मु-उपगतवान् । २. त४.५-शतृप्रत्ययः । * ग१.२-न इदानीं पुष्ट्यै पुष्ट्यर्थं अधि तस्थौ अधितिष्ठति । शिप्राभ्यां शिप्रिणीवान् प्रशस्तहनुकः वनोति शत्रूनभिभवति । ३. त-म-कीदृशावश्वौ । ४. त१.२.३.६.७.८-म२.८-मु-हनूभ्यां प्रशस्ताभ्यां । ५. ग१.२-पुस्तकस्थं षष्ठमन्त्र-भाष्यं—ऋष्वौजा महौजा ऋष्वेभिः महद्भिःसह युद्धं प्रास्तौत् प्रस्तौति । शवसा बलेनोपेत इंद्रः शूरः ततक्ष शत्रून् तनूकरोति ; तत्र दृष्टांतः । ऋभुर्न उरु भासमानो मातरिश्वा वायुर्यथा क्रतुभिः कर्मभिः वनस्प तनूकरोति तद्वदित्यर्थः ।

क्रियमाणैः कर्मभिः । यद्वा । क्रतुरिति प्रज्ञानाम । बलेन प्रज्ञाभिश्च ᵛततक्ष वृत्रवधादिकं चकार । तत्र दृष्टान्तः । ᵛऋभुर्न ऋभव इव । 'सुपां सुलुक्°' इति जसः सुरादेशः । ऋभवो यथा कर्मभिः प्रज्ञाभिश्चानन्यसाधारणरथचमसादिनिर्माणमकुर्वन् तद्वदित्यर्थः ॥

**वज्रं यश्चक्रे सुहनाय दस्यवे हिरीमशो हिरीमान् । अरुतहनुरद्भुतं न रजः ॥७॥**

वज्रम् । यः । चक्रे । सुऽहनाय । दस्यवे । हिरीमशः । हिरीमान् ।
अरुतऽहनुः । अद्भुतम् । न । रजः ॥ ७ ॥

ᵛयः इन्द्रः ᵛसुहनाय सुष्ठु हननीयाय ᵛदस्यवे उपक्षपयित्रे शत्रवे तस्य वधाय ᵛवज्रं प्रहरणसाधनमायुधं ᵛचक्रे कृतवान् स त्वं वृजिना शिशीहीत्युत्तरत्र संबन्धः । कीदृश इन्द्रः । ᵛहिरीमशः हरितश्मश्रुः । पृषोदरादिः । ᵛहिरीमान् हरिताश्वो हरितवर्णो वा ᵛअरुतहनुः अबाधितहनुः । किमिव । ᵛअद्भुतं ᵛन ᵛरजः । अद्भुतमिति महन्नाम । रज इति रञ्जकमन्तरिक्षमुच्यते । महदन्तरिक्षमिव । तद्यथान्यैरबाध्यं भवति तद्वत्[1] ॥

**अव नो वृजिना शिशीह्यृचा वनेमानृचः । नाब्रह्मा यज्ञ ऋधग्जोषति त्वे ॥ ८ ॥**

अव । नः । वृजिना । शिशीहि । ऋचा । वनेम । अनृचः ।
न । अब्रह्मा । यज्ञः । ऋधक् । जोषति । त्वे इति ॥ ८ ॥

हे इन्द्र ᵛनः अस्माकं ᵛवृजिना वृजिनानि वर्जनीयानि पापानि ᵛअव ᵛशिशीहि अत्यर्थं तनूकुरु । विनाशयेत्यर्थः । वयं च ᵛऋचा स्तुत्या साधनेन ᵛअनृचः अस्तुतिकानयजमानान् ᵛवनेम हिंसाम । ᵛअब्रह्मा । ब्रह्म परिवृढं स्तोत्रम् । स्तुतिविरहितः ᵛयज्ञः ᵛऋधक् सस्तुतिकाद्यज्ञात्पृथग्भूतः ᵛत्वे त्वयि ᵛन ᵛजोषति न सेवते त्वाम् । न प्रीणयतीत्यर्थः । 'जुषी प्रीतिसेवनयोः' । व्यत्ययेन शप् परस्मैपदं च[2] ॥

**ऊर्ध्वा यत्ते त्रेतिनी भूद्यज्ञस्य धूर्षु सद्मन् । सजूर्नावं स्वयशसं सचायोः ॥ ९ ॥**

ऊर्ध्वा । यत् । ते । त्रेतिनी । भूत् । यज्ञस्य । धूःऽसु । सद्मन् ।
सऽजूः । नावम् । स्वऽयशसम् । सचा । आयोः ॥ ९ ॥

हे[3] इन्द्र ᵛते तव स्वभूता ᵛत्रेतिनी । त्रेताग्नित्रयम् । तद्वती त्रेतिनी क्रिया । सा ᵛयत् यदा ᵛऊर्ध्वा उन्नता प्रवृत्ता ᵛभूत् अभूत् । यद्योगादनिघातः । कुत्र स्थाने इति । ᵛयज्ञस्य यागस्य ᵛसद्मन् सदने । केष्विति । ᵛधूर्षु कर्मणां वोढृष्वृत्विक्षु । तदानीं ᵛसजूः यजमानेन मरुद्भिर्वा सह

१. ग१.२–पुस्तकस्थं सप्तममन्त्रभाष्यं–य इंद्रः सुहनाय हंतुं शक्याय दस्यवे उपक्षयित्रे शत्रवे वज्रं चक्रे करोति हंतुं । वज्रमादत्त इत्यर्थः । कीदृशः । हिरीमशः हरिश्मश्रुः हिरीमान् हरिवान् अरुतहनुः अशब्दितहंतव्यः एवंभूत इंद्रः अद्भुतं न महच्च तेजः प्राप्तवानित्यर्थः । २. ग१.२–पुस्तकस्थमष्टममन्त्रभाष्यं–नोस्माकं वृजिना शत्रुबलानि अवशिशीहि नाशय । ऋचा मंत्रेण अनृचः अमंत्रान् वनेम हन्याम । अब्रह्मा अस्तुतिर्यज्ञः त्वे त्वयि जोषति सेवमाने ऋधक् वृद्धो न भवति । ३. ग१.२–पुस्तकस्थं नवममन्त्रभाष्यं–यज्ञस्य धूर्षु धिष्ण्येषु सद्मन् स्वे स्थाने यद्यदा ते त्वदर्थं त्रेतिनी अग्नित्रेता ऊर्ध्वा उन्मुखा भूत् भवति तदानीं सजूः मरुद्भिः संगतस्त्वं आयोः यजमानस्य सहायः स्वयशसं नावं करोषि । यज्ञं पापतारणसमर्थं करोषीति यावत् ।

प्रीयमाणः सन् ᵛआयोः मनुष्यस्य यजमानस्य ᵛसचा सह तेन साकं ᵛस्वयशसं स्वायत्तयशस्कं यशःसाधनं ᵛनावं तरणसाधनं तरणिम्। आरोहसीति शेषः। एकमेव रथं[1] यजमान आरोहति स्वतरणार्थं तमेव तस्य साधकमारोहसीत्यर्थः[2]। यद्वा। नावं रथं स्वयशसमायोर्यजमानस्य सचा सहायभूतः सजूस्तेन सह प्रीयमाण आरोहेत्यर्थः॥

श्रिये ते पृश्निरुपसेचनी भूच्छ्रिये दर्विररेपाः। यया स्वे पात्रे सिञ्चस उत्॥१०॥

श्रिये। ते। पृश्निः। उपऽसेचनी। भूत्। श्रिये। दर्विः। अरेपाः।
यया। स्वे। पात्रे। सिञ्चसे। उत्॥ १०॥

हे इन्द्र ᵛते तव संबन्धिनः सोमस्य ᵛश्रिये श्रयणाय ᵛपृश्निः गौः पृश्निवर्णा ᵛउपसेचनी पयसो[3] दोग्ध्री ᵛभूत् भवतु। तथा ᵛदर्विः अपि ᵛअरेपाः अपापा सती ते ᵛश्रिये हविषः श्रयणाय ᵛभूत् भवतु। ᵛयया दर्व्या ᵛस्वे स्वकीये ᵛपात्रे पानसाधने मुखे ᵛउत् ᵛसिञ्चसे उपर्याकृष्य पिबसि सा श्रियेऽभूदिति संबन्धः[4]॥

शतं वा यदसुर्य प्रति त्वा सुमित्र इत्थास्तौद्दुर्मित्र इत्थास्तौत्।
आवो यद्दस्युहत्ये कुत्सपुत्रं प्रावो यद्दस्युहत्ये कुत्सवत्सम्॥ ११॥

शतम्। वा। यत्। असुर्य। प्रति। त्वा। सुऽमित्रः। इत्था। अस्तौत्। दुःऽमित्रः। इत्था। अस्तौत्।
आवः। यत्। दस्युऽहत्ये। कुत्सऽपुत्रम्। प्र। आवः। यत्। दस्युऽहत्ये। कुत्सऽवत्सम्॥ ११॥

हे ᵛअसुर्य बलवन्निन्द्र। अवध्यत्वेनासुरसंबन्धित्वात्[5]। ᵛत्वा त्वां ᵛप्रति[6] ᵛशतं ᵛवा शतसंख्याकं धनम्। वाशब्देनापरिमितं धनं वा। ᵛयत् यदा कामितवानित्यर्थः। ᵛयत् यदा च ᵛदस्युहत्ये दस्युहनने शत्रुवधे ᵛकुत्सपुत्रं दुर्मित्रम् ᵛआवः रक्षितवानसि। तथा ᵛकुत्सवत्सं कुत्सपुत्रं ᵛप्रावः प्रकर्षेण रक्षितवानसि। अव रक्षणादौ। लङि 'आडजादीनाम्' इत्याडागमः। पादादित्वादनिघातः। पुनरुक्तिरादरार्था। तदानीं ᵛसुमित्रः नाम्नेत्थम् ᵛअस्तौत्। तथा ᵛदुर्मित्रः गुणत इत्थम् ᵛअस्तौत्। तद्विपरीतं वा द्रष्टव्यम्। 'सुमित्रो नाम्ना दुर्मित्रो गुणतः' इति कात्यायनेन तथोक्तेः। स ᵛइत्था इत्थमनेन कृतप्रकारेणास्तौत् अस्तावीत्। इत्थास्तौदिति द्विरुक्तिः स्तुतिसमाप्त्यर्था[7]॥ ॥ २७॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टके पञ्चमोऽध्यायः॥

१. त-मु–रथं यज्ञं। २. त१.३.६.७–साधकेनारोहसी°; त४.५–सायाकमारोहसी°; त८–साधकेन रोहसी°; भ२–साधिकेन रोहसी°। ३. त-भ-मु–पयसां। ४. ग१.२–पुस्तकस्थं दशममन्त्रभाष्यं–ते तव श्रिये श्रयणाय पृश्निर्गौः उपसेचनी दोग्ध्री भूत् भवति। श्रिये सेवनाय दर्विः भूमिः अरेपाः अपापा भवति। यया उत्पादितं सोमं स्वकीये पानसाधन आस्ये उत्सिंचसे उत्क्षरसि। ५. त-भ–वध्यत्वेना°। ६. त-भ–'प्रति' नास्ति। ७. ग१.२–पुस्तकस्थमेकादशमन्त्रभाष्यं–शतं वा शतमपि यद्भवति सोमपात्रं तत् हे असुर्य ·असुरहंतः त्वां प्रति भवति। तादृशं त्वामयं सुमित्रो गुणतः नाम्ना दुर्मित्रः इत्था इत्थमस्तौत् स्तुतवान्। यद्यस्मात् दस्युहत्ये युद्धे कुत्सपुत्रमावः अरक्षः यस्मात् युद्धे कुत्सं प्रावः प्रकर्षेणारक्षः। पुनरुक्तिरादरार्था।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अष्टमे पञ्चमाध्यायं व्याख्याय श्रुतिकोविदः ।
सायणार्यस्ततोऽध्यायं षष्ठं च व्याचिकीर्षति ॥

तत्र 'उभा उ नूनम्' इत्येकादशर्चमाद्यमनुवाकापेक्षया सप्तमं सूक्तं त्रैष्टुभमश्विदेवत्यम्। कश्यपपुत्रो भूतांशो नामर्षिः । तथा चानुक्रम्यते— 'उभौ भूतांशः काश्यप आश्विनम्' इति । अप्तोर्यामेऽच्छावाकातिरिक्तोक्थ एतत्सूक्तम् । सूत्रितं च— 'उभा उ नूनं दैव्या होतारा प्रथमा पुरोहितेति परिधानीया' ( आश्व. श्रौ. ९. ११ ) इति ॥

**उभा उ नूनं तदिदर्थयेथे वि तन्वाथे धियो वस्त्रापसेव ।**
**सध्रीचीना यातवे प्रेमजीगः सुदिनेव पृक्ष आ तंसयेथे ॥ १ ॥**

उभौ । ऊँ इति । नूनम् । तत् । इत् । अर्थयेथे इति ।
वि । तन्वाथे इति । धियः । वस्त्रा । अपसाऽइव ।
सध्रीचीना । यातवे । प्र । ईम् । अजीगरिति । सुदिनाऽइव । पृक्षः । आ । तंसयेथे इति॥ १॥

हे अश्विनौ ᵛउभौ युवां ᵛनूनम् इदानीं ᵛतदित् अस्माभिर्दीयमानं हविः क्रियमाणं स्तोत्रमेव ᵛअर्थयेथे प्रार्थयथः । 'अर्थ याच्ञायाम्' । चौरादिकः । अनुदात्तेत् । उः पूरणः । संप्रार्थ्य च ᵛधियः कर्माणि स्तुतीर्वा ᵛवि ᵛतन्वाथे विस्तारयथः । 'तनु विस्तारे' । तानादिकः । तत्र दृष्टान्तः । ᵛअपसेव अपसा अपस्विनौ कुविन्दौ यथा ᵛवस्त्रा वस्त्राणि विस्तारयतः ॥ अपःशब्दान्मत्वर्थीयो विनिः । तस्य 'बहुलं छन्दसि' इति लुक् । प्रातिपदिकस्वरेणान्तोदात्तः । उभयत्र सुप आकारः ॥ ᵛईम् अयं यजमानः ᵛसध्रीचीना सध्रीचीनौ सहाञ्चनौ युवाम् ॥ सहपूर्वादञ्चतेः क्विनि 'सहस्य सध्रिः' इति सध्र्यादेशः । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । सुप आजादेशः ॥ तौ ᵛयातवे ॥ तुमर्थे तवेन्प्रत्ययः ॥ अभिमतप्राप्त्यर्थं ᵛप्र ᵛअजीगः प्रकर्षेण स्तौति । यद्वा युवां प्रति स्तुतीरुद्गिरति ॥ 'गॄ शब्दे' । 'गॄ निगरणे' वा । एताभ्यां लङि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । दीर्घश्छान्दसः । गुणे कृते हल्ङ्यादिना तिपो लोपः ॥ किंच ᵛसुदिनेव सुदिनेष्वन्नानि यथालंकुर्वन्ति । यद्वा । सुदिना सुदिनौ । अहोरात्रयोः प्रवर्तकत्वेन तद्वन्तौ सूर्याचन्द्रमसौ स्वरश्मिभिर्यथान्नान्यलंकुरुतः । तद्वद्युवां ᵛपृक्षः । अन्ननामैतत् । भोक्तृभिः संपृच्यन्त इति पृक्षोऽन्नानि । ᵛआ ᵛतंसयेथे समन्तादलंकुरुथः ॥ 'तसि भूष अलंकारे' । चौरादिकः[1] ॥

**उष्टारेव फर्वरेषु श्रयेथे प्रायोगेव श्वात्र्या शासुरेथः ।**
**दूतेव हि ष्ठो यशसा जनेषु माप स्थातं महिषेवावपानात् ॥ २ ॥**

उष्टाराऽइव । फर्वरेषु । श्रयेथे इति । प्रायोगाऽइव । श्वात्र्या । शासुः । आ । इथः ।
दूताऽइव । हि । स्थः । यशसा । जनेषु । मा । अप । स्थातम् । महिषाऽइव । अवऽपानात्॥ २॥

१. त-भ-मु—तौदादिकः ।

ᵛउष्टारेव । उष्टः कामयेते गन्तव्यं देशमित्युष्टारौ प्रासङ्गस्य वोढारावनड्वाहाविव ॥ ' वश कान्तौ ' इत्यस्मात्तृचि छान्दसं संप्रसारणमिडभावश्च ॥ तौ यथा संपूर्णघासेषु संचरतः तद्वत् ᵛफर्वरेषु स्तुतिभिर्हविर्भिश्च पूरयितृषु जनेषु ᵛश्रयेथे । तत्स्वीकरणार्थमाश्रयथः ॥ फर्वतिः पूरणार्थः । अस्मादौणादिको रन्प्रत्ययः ॥ ᵛप्रायोगेव प्रायोगौ प्रयोक्तव्यावनड्वाहाविव । प्रपूर्वाद्युजेः कर्मणि घञ्युपसर्गस्य दीर्घः । थाथादिस्वरेणान्तोदात्तः ॥ तौ यथा ᵛश्वात्र्या श्वात्र्यौ । शु क्षिप्रमतनं श्वात्रम् । तत्र साधू भवतः तद्वत् । यद्वा । युद्धार्थं प्रयोक्तव्यावश्वाविव श्वात्र्यौ । श्वात्र्यमिति धननाम । तत्र भवौ । धनस्य साधकावित्यर्थः । तौ युवां ᵛशासुः शंसितुः स्तोतुः स्तुतिं प्रति ᵛएथः आगच्छथः । ' इण् गतौ ' । आदादिकः । ᵛदूतेव दूताविव यथा राज्ञः प्रियतमौ दूतौ जनपदेषु यशस्विनौ भवतः तद्वत् ᵛजनेषु स्तोतृषु ᵛयशसा यशस्विनौ ᵛस्थः ᵛहि भवथः खलु ॥ अस्तेर्लेटि रूपम् । हियोगादनिघातः ॥ ᵛमहिषेव महिषाविव यथा श्रान्तौ महिषौ ᵛअवपानात् । पीयतेऽस्मिन्निति पानं ह्रदादि । अधिकरणे ल्युट् । पानमेवावपानम् । संनिकृष्टात् पानान्नापगच्छतः तद्वद्युवामस्मदीयाद्धविषः स्तोत्राच्च ᵛमाप ᵛस्थातं मापक्रम्य तिष्ठतम् ॥ तिष्ठतेर्लुङि ' गातिस्था° ' इति सिचो लुक् । ' न माङ्योगे ' इत्यडभावः[1] ॥

**साकंयुजा शकुनस्येव पक्षा पश्वेव चित्रा यजुरा गमिष्टम् ।**
**अग्निरिव देवयोर्दीदिवांसा परिज्मानेव यजथः पुरुत्रा ॥ ३ ॥**

साकम्ऽयुजा । शकुनस्यऽइव । पक्षा । पश्वाऽइव । चित्रा । यजुः । आ । गमिष्टम् ।
अग्निःऽइव । देवऽयोः । दीदिऽवांसा । परिज्मानाऽइव । यजथः । पुरुऽत्रा ॥ ३ ॥

ᵛशकुनस्येव पक्षिण इव यथा पक्षिणः ᵛपक्षा पक्षौ संहत्य वर्तमानौ तद्वत् ᵛसाकंयुजा साकंयुजौ सहावियुज्य वर्तमानौ भवथः ॥ युजेः ' सत्सूद्विष° ' इत्यादिना क्विप् ॥ ᵛपश्वेव पशू इव ॥ सुप आकारः ॥ तौ यथा चायनीयौ तद्वत् ᵛचित्रा चित्रौ चायनीयौ युवां ᵛयजुः यजनावस्मदीयौ ᵛआ ᵛगमिष्टम् आगच्छतम् ॥ यजेरौणादिको भाव उसिन्प्रत्ययः । गमिष्टम् । गमेर्लेटि ' सिब्बहुलं लेटि ' इति सिप् । सिप आर्धधातुकत्वात् ' गमेरिट् परस्मैपदेषु ' ( पा. सू. ७. २. ५८ ) इतीडागमः ॥ ᵛदेवयोः देवानिच्छतो यजमानस्य यज्ञे ᵛअग्निरिव[2] अग्निर्यथा हविर्भिः स्तुतिभिश्च दीप्यते तद्वत् ᵛदीदिवांसा दीदिवांसौ स्तुतिभिर्दीप्तौ भवथः ॥ दीव्यतेः क्वसौ ' वस्वेकाजात्° ' इति नियमादिडभावः । वलि लोपे तुजादित्वादभ्यासदीर्घः ॥ ᵛपरिज्मानेव परिज्मानाविव परितो अजतो गच्छतः कर्मकरणार्थमिति परिज्मानावध्वर्यू इव स्थितौ युवां ᵛपुरुत्रा बहुषु देशेषु ᵛयजथः देवान् पूजयथः । ' अश्विनौ हि देवानामध्वर्यू ' ( ऐ. ब्रा. १. १८ ) इत्याम्नानात् । यद्वा । परिज्मानेव परितो गन्तारौ पुरो वा पश्चाद्वा तौ यथा बहुषु देशेषु यजथः संगच्छमानौ भवथः ॥ ' यज देवपूजासंगतिकरणदानेषु ' । पुरुत्रा । ' देवमनुष्य° ' इत्यादिना त्राप्रत्ययः ॥

**आपी वो अस्मे पितरेव पुत्रोग्रेव रुचा नृपतीव तुर्यै ।**
**इर्येव पुष्ट्यै किरणेव भुज्यै श्रुष्टीवानेव हवमा गमिष्टम् ॥ ४ ॥**

आपी इति । वः । अस्मे इति । पितराऽइव । पुत्रा । उग्राऽइव । रुचा । नृपती इवेति नृपतीऽइव । तुर्यै ।
इर्याऽइव । पुष्ट्यै । किरणाऽइव । भुज्यै । श्रुष्टीवानाऽइव । हवम् । आ । गमिष्टम् ॥ ४ ॥

---

१. त-मु—इत्यडागमाभावः । २. त-भ—' अग्निरिव ' नास्ति ।

अस्मे अस्माकं वः युवाम्। पूजायां बहुवचनम्। आपी[1] प्राप्तौ[1] बन्धुभूतौ भवथः। पितरेव पितराविव यथात्र पितरौ प्रति पुत्रा पुत्रौ बन्धुभूतौ भवतः तद्वत्। यद्वा। पुत्रा। षष्ठ्या आकारः। पुत्राणां पितरौ बन्धू। तथा उग्रेव उग्राविव यथोग्रौ स्वतेजसोदूर्णावग्न्यादित्यौ यथा रोचमानौ[2] भवतः तद्वत् रुचा दीप्त्या युक्तौ। रोचतेर्भावे क्विप्। 'सावेकाचः' इति विभक्तेः उदात्तत्वम्। यद्वा। रुचा आरोचमानौ भवथः। रोचतेरिगुपधलक्षणः कः। सुप आकारः॥ नृपतीव यथा नृणां पालयितारौ राजानौ संभ्रमयुक्तायै सेनायै रक्षकत्वेन भवतः तद्वत् तुर्यै कर्मार्थं त्वरमाणायै संभ्रमवत्यै जनतायै युवामभीष्टदातृत्वेन भवथः॥ 'तुर त्वरणे'। 'इगुपधात्कित्' (उ. सू. ४. ११९) इतीन्प्रत्ययः। 'कृदिकारादक्तिनः' (पा. सू. ४. १. ४५ ग.) इति ङीप्। 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम्॥ इर्येव इर्याविव। इरान्नम्। तत्र भवौ। भवार्थे यत्। अन्नवन्तावाढ्यौ स्वजनपरितोषणाय भवतः। तद्वद्युवां पुष्ट्यै धनादिदानेनास्माकं परितोषणाय भवथः। किरणेव किरणाविव यथाग्न्यादित्यकिरणौ[3] सर्वेषां प्रकाशनादिद्वारेण भोगाय भवतः तद्वत् भुज्यै स्तोतॄणां परिभोगाय भवथः। श्रुष्टीवानेव श्रुष्टिवन्ताविव। श्रुष्टीति क्षिप्रनाम। मत्वर्थीयो वनिप्। तद्वन्तावश्वौ यथा लक्ष्यं देशं प्रति शीघ्रं गच्छतः तद्वत्। यद्वा। श्रुष्टीवानेव। श्रुष्टीति सुखनाम। तद्वन्तौ पुरुषौ यथा क्रीडार्थमागच्छतः तद्वद्युवां हवम् अस्मदीयमाह्वानं प्रति आ गमिष्टम् आगच्छतम्॥ हवम्। 'भावेऽनुपसर्गस्य' इति ह्वयतेरप् संप्रसारणं च॥

वंसगेव पूषर्या शिम्बाता मित्रेव ऋता शतरा शातपन्ता।
वाजेवोच्चा वयसा घर्म्येष्ठा मेषेवेषा सपर्या३ पुरीषा॥ ५॥

वंसगाऽइव। पूषर्या। शिम्बाता। मित्राऽइव। ऋता। शतरा। शातपन्ता।
वाजाऽइव। उच्चा। वयसा। घर्म्येऽस्था। मेषाऽइव। इषा। सपर्या। पुरीषा॥ ५॥

वंसगेव वंसगाविव वननीयगमनौ वृषभाविव तौ यथा पूषर्या पूषर्यौ पूषणे भवौ। पुष्टावयवावित्यर्थः। तद्वद्युवां स्फीताङ्गावयवौ। 'पुष पुष्टौ'। अस्मादौणादिको भावेऽरन्प्रत्ययः। तदन्तात् 'भवे छन्दसि' इति यत्। तित्स्वरितम्। तथा शिम्बाता शिम्बातौ। सुखनामैतत् शिम्बेन दुःखानां तनूकरणेन हेतुना आतं व्याप्तमिति। 'शिञ् निशाने'। अस्माच्छिम्बमिति बाहुलकाद्बप्रत्ययो मुक्च निपात्यते। अततेः कर्मणि घञ्। सुप आलादेशः। सुखकरौ भवथः। मित्रेव मित्राविव। मित्रशब्देन वरुणोऽप्युपलक्ष्यते सहावस्थानात्। मित्रावरुणाविव ऋता ऋतौ सत्यभूतौ तद्वद्यथार्थदर्शिनौ भवथः। तथा शतरा शतं शतसंख्याकानि बहूनि राधो धनानि ययोः सन्ति तौ तथोक्तौ। सुपो डादेशः। यद्वा। शतमनेकमिन्द्रियप्रसादादि राति ददातीति शतरा सुखम्। तेन तद्वन्तौ। शातपन्ता शातपन्तौ तीक्ष्णस्तुतिकौ। शातं तीक्ष्णम्। पन्तम्। पनतेर्बाहुलकात्तन् (उ. सू. ३. ८६)। यद्वा शातपन्ता। शातेन दुःखानां तनूकरणेन पन्यते स्तूयत इति शातपन्तं सुखम्। 'शो तनूकरणे'। निष्ठा। पनतेस्तन्। तेन युवां सुखवन्तौ भवथः। यद्यपि शिम्बाता शतरा शातपन्ता इति त्रीण्यपि सुखनामानि तथापि कालत्रयेऽप्यश्विनोः सुखकरत्वस्य विवक्षितत्वेन विषयभेदादपौनरुक्त्यम्। वाजेव वाजाविव यथाश्वौ घासादिनोन्नतौ संपूर्णावयवौ तद्वत् वयसा हवीरूपेणान्नेन हेतुना उच्चा उच्चैर्वर्तमानौ। पुष्टावित्यर्थः॥ उच्चा। उच्चैःशब्दात्सुपो डादेशः। डित्वाट्टि-

---

१. त–आपूर्व्यौ; भ१.२.४.८–आपी आप्तव्यौ; भ७–आपीव्यौ। २. भ२–रुचा रोचमानौ।
३. त-भ-मु–यथाग्नेयादित्यकिरणौ।

लोपः ॥ ᵛघर्म्येष्ठा घर्मस्थौ । घर्मं दीप्तमन्तरिक्षम् । तत्संबन्धिनि देशे सूर्याचन्द्रमसो रूपेणावस्थितौ भवथः । 'सूर्याचन्द्रमसौ' ( निरु. १२. १ ) इति यास्कः । यद्वा । घर्म्ये प्रवर्ग्ये भवं घर्म्यं हविः । तत्र देवतात्वेनावस्थितौ भवथः ॥ तिष्ठतेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । 'तत्पुरुषे कृति बहुलम्' इति पूर्वपदस्य सप्तम्या अलुक् ॥ ᵛमेषेव मेषाविव । तौ यथान्नेन परिचरणीयौ तद्वद्युवाम् ᵛइषा हवीरूपेणान्नेन ᵛसपर्या सपर्यौ परिचरणीयौ भवथः । सपरशब्दः कण्ड्वादिः । सपर्यतिः परिचरणकर्मा । ᵛपुरीषा पुरीषौ धनादिदानेन स्तोतॄणां पोषयितारौ यद्वा हविर्भिः पोषणीयौ भवथः । 'पुरीषं पुष्णातेः पोषयतेर्वा' ( निरु. २. २२ ) इति यास्कः ॥　　॥ १ ॥

**सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।**
**उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥ ६ ॥**

सृण्याऽइव । जर्भरी इति । तुर्फरीतू इति । नैतोशाऽइव । तुर्फरी इति । पर्फरीका ।
उदन्यजाऽइव । जेमना । मदेरू इति । ता । मे । जरायु । अजरम् । मरायु ॥ ६ ॥

ᵛसृण्येव सृण्याविव । सृणिरङ्कुशः । 'तत्र साधुः' इति यत् । अङ्कुशार्हौ मत्तगजाविव ᵛजर्भरी गात्रविनामं कुर्वन्तौ ॥ 'जभ जृभि गात्रविनामे' । अस्मादौणादिको रिप्रत्ययः ॥ यद्वा । सृण्येव । सृणिर्द्विविधा । मत्तगजस्यैकत्रावस्थापयित्र्येका । अपरा बाधयित्री ॥ 'सर्तेः किच्च' ( उ. सू. ४. ४९; १०४ ) इत्यौणादिको निप्रत्ययः । कित्वादगुणः । 'कृदिकारादक्तिनः' इति ङीप् । सुप आकारः । 'उदात्तस्वरितयोर्यणः°' इति स्वरितः ॥ तादृश्यौ सृण्याविव जर्भरी भर्तारावेकत्रैवावस्थापकौ । तथा ᵛतुर्फरीतू तर्फितारौ शत्रूणां हन्तारौ । जर्भरी । भरतेर्यङ्लुगन्तादौणादिक इप्रत्ययः । अभ्यासस्य जकारश्छान्दसः । 'तृफ तृम्फ हिंसायाम्'। अस्मात्तृजन्तस्य तुर्फरीतारावित्यस्य पृषोदरादित्वाद्वर्णविकारः । यद्वा । अस्माद्बाहुलकादौणादिकोऽरीतुप्रत्यय उत्वं च । अत्र निरुक्तं— 'द्विविधा सृणिर्भवति भर्ता च हन्ता च तथाश्विनौ चापि भर्तारौ जर्भरी भर्तारावित्यर्थस्तुर्फरीतू[1] हन्तारौ' ( निरु. १३. ५ ) इत्यादि । ᵛनैतोशेव । नितोशतिर्वधकर्मा । नितोशयतीति नितोशः । तस्यापत्यं नैतोशः । ताविव ᵛतुर्फरी शत्रूणां हन्तारौ ॥ तृफतिर्हिंसार्थः । अस्मादौणादिको रिप्रत्यय उत्वं च ॥ ᵛपर्फरीका पर्फरीकौ शत्रूणां विदारयितारौ ॥ 'ञिफला विशरणे'। अस्मात् 'पर्फरीकादयश्च' ( उ. सू. ४. २० ) इतीकप्रत्ययान्तो निपात्यते ॥ यद्वा । स्तोतृजनानां धनादिदानेन पूरयितारौ ॥ 'पॄ पालनपूरणयोः'। अस्मादीकनि पूर्ववत्सर्वं निपात्यते । फर्वतेः पूरणार्थाद्वा ॥ ᵛउदन्यजेव उदन्यजे इव । उदके भवमुदन्यम् ॥ 'पद्दन्नोमास्°' ( पा. सू. ६. १. ६३ ) इत्यादिनाशस्प्रभृतिष्वप्युदन्नादेशः ॥ तत्र जाते रत्ने इव निर्मलौ । कान्तियुक्तावित्यर्थः । ᵛजेमना जेमनौ जयशीलौ ॥ जयतेः 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । दीर्घाभावश्छान्दसः ॥ ᵛमदेरू बलातिशयेन मत्तौ स्तुत्यौ वा । ᵛता तौ पूर्वोक्तगुणावश्विनौ युवां ᵛमे मदीयं ᵛजरायु[2] जरायुजम् अत एव ᵛमरायु मरणशीलं शरीरम् ᵛअजरं जरारहितं मरणधर्मरहितं कुरुतम् ॥ 'नञो जरमरमित्रमृताः' इति नञ उत्तरस्य जरशब्दस्याद्युदात्तत्वम् ॥

**पज्रेव चर्चरं जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा ।**
**ऋभू नापत्खरमज्रा खरज्रुर्वायुर्न पर्फरत्क्षयद्रयीणाम् ॥ ७ ॥**

१. त-मु-भर्तारावित्यस्य तूर्फरीतू । २. त-भ-'जरायु' नास्ति ।

पज्राऽइव । चर्चरम् । जारम् । मरायु । क्षद्मऽइव । अर्थेषु । तर्तरीथः । उग्रा ।
ऋभू इति । न । आपत् । खरमज्रा । खरऽज्रुः । वायुः । न । पर्फरत् । क्षयत् । रयीणाम् ॥७॥

हे ᵛउग्रा उग्रावुद्गूर्णतेजस्कावश्विनौ ᵛपज्रेव पज्राविव प्रार्जितबलौ वीराविव स्थितौ । यद्वा । पज्रेव । 'जि ज्रि अभिभवे' । पादाभ्यामभिभवन्तौ समर्थाविव स्थितौ । युवां ᵛचर्चरं चरणशीलं ᵛजारं जरायुक्तम् अत एव ᵛमरायु मरणशीलं मदीयं शरीरम् ᵛअर्थेषु गन्तव्येषु तरीतव्येष्वापदादिषु ᵛक्षद्मेव । उदकनामैतत् । उदकमिव ᵛतर्तरीथः अत्यन्तं तारयथः ॥ 'तॄ प्लवनतरणयोः' । यङ्लुगन्ताल्लटि 'छन्दस्युभयथा' इति थस[1] आर्धधातुकत्वेनेडागमः । 'वॄतो वा' (पा. सू. ७. २. ३८) इति दीर्घः ॥ ᵛऋभू ᵛन ऋभू इव । दार्ष्टान्तिकसाम्यादत्र द्विवचनम् । ऋभू यथा स्वनिर्मितो रथ ᵛआपत् तद्वत् ᵛखरमज्रा खरं तीक्ष्णं मज्जयितारौ शोधयितारौ । अत्यन्तं शुद्धबलावित्यर्थः ॥ 'टुमस्जो शुद्धौ' । अस्मादौणादिको रप्रत्ययः ॥ तादृशौ युवां ᵛखरज्रुः तीक्ष्णगतिरतिशयेन वेगवान् ऋभुभिर्दत्तो रथो युवाम् ᵛआपत् आप्नोत् ॥ 'आप्लृ व्याप्तौ' । लुङि लृदित्वात् च्लेरङ् ॥ स रथः ᵛवायुर्न वायुरिव ᵛपर्फरत् सर्वत्रापूरयत् । सर्वत्र व्याप्तवानित्यर्थः ॥ 'फर्व पूरणे' । अस्माल्लेटि 'बहुलं छन्दसि' इति शपः श्लुः । अभ्यासस्य रुगागमो वलोपश्च । 'लेटोऽडाटौ' इत्यडागमः ॥ ततः स रथः ᵛरयीणां धनानां धनानि ᵛक्षयत् शत्रुभ्य आगमयत् ॥ 'क्षि निवासगत्योः' । अस्मादन्तर्णीतण्यर्थाल्लेट्यडागमः ॥ यद्वा । क्षयतिरैश्वर्यकर्मा । धनानामीष्टे ॥ छान्दसमनुदात्तत्वम् ॥

घुर्मेव मधु जठरे सनेरू भगेविता तुर्फरी फारिवारम् ।
पतरेव चचरा चन्द्रनिर्णिङ्मनऋङ्गा मनन्याउ न जग्मी ॥ ८ ॥

घर्माऽइव । मधु । जठरे । सनेरू इति । भगेऽअविता । तुर्फरी इति । फारिवा । अरम् ।
पतराऽइव । चचरा । चन्द्रऽनिर्निक् । मनःऽऋङ्गा । मनन्या । न । जग्मी इति ॥ ८ ॥

ᵛघर्मेव घर्माविव महावीराविव ᵛजठरे स्वोदरे ᵛमधु मधुनः । षष्ठ्या लुक् । घृतस्य ᵛसनेरू संभक्तारौ ॥ 'वन षण संभक्तौ' । अस्मादौणादिक एरुप्रत्ययः ॥ ᵛभगेविता । भगो धनम् । तद्विषयरक्षणयुक्तौ ॥ अवतेर्भावे क्तः । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् बहुव्रीहावप्यलुक् । यद्वा । अवतेस्तृजन्तस्य सुपो डादेशः । स्वरस्तु छान्दसः ॥ ᵛअरम् अलं ᵛतुर्फरी शत्रूणां हिंसितारौ अत एव ᵛफारिवा । फारिरायुधम् । तद्वन्तौ भवतः । स्फुरतिर्वधकर्मा । अस्माण्णिचि 'चिस्फुरोर्णौ' (पा. सू. ६. १. ५४) इत्यात्वम् । तदन्तादिप्रत्ययः । सकारलोपश्छान्दसः । 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप् । सुपो डादेशः ॥ ᵛपतरेव पतराविव पतनशीलौ पक्षिणाविव ᵛचचरा संचरन्तौ ᵛचन्द्रनिर्णिक् । निर्णिगिति रूपनाम । सुपो लुक् । चन्द्रनिर्णिजौ चन्द्रसदृशरूपयुक्तौ । यद्वा । चन्द्रमाह्लादकं रूपं ययोस्तौ वर्तेते । ᵛमनऋङ्गा मनसा प्रसाधनं ययोस्तौ । ऋञ्जतिः प्रसाधनकर्मा । अस्माद्भावे घञ् । बहुव्रीहिस्वरः । ᵛमनन्या ᵛन[2] मनन्यौ यथा । मनने साधू । स्तुत्यावित्यर्थः ॥ मननशब्दात् 'तत्र साधुः' इति यत् । तित्स्वरितम् ॥ तादृशाविव ᵛजग्मी यज्ञं प्रत्यागमनशीलौ भवतः ॥ गमेः 'आदृगमहन॰' इति किन्प्रत्ययः ॥

बृहन्तेव गम्भरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः ।
कर्णेव शासुरनु हि स्मराथोंऽशेव नो भजतं चित्रमप्नः ॥ ९ ॥

---

१. त१.२.३-भ१.४.८-मु-थास; त७-भ२-थास् । २. ग-त-भ-'न' नास्ति ।

बृहन्ताऽइव । गम्भरेषु । प्रतिऽस्थाम् । पादाऽइव । गाधम् । तरते । विदाथः ।
कर्णाऽइव । शासुः । अनु । हि । स्मराथः । अंशाऽइव । नः । भजतम् । चित्रम् । अप्नः ॥९॥

"बृहन्तेव बृहन्ताविव प्रांशू पुरुषौ यथा "गम्भरेषु[1] गहनेषु जलेषु प्रतिष्ठां विन्दतः तद्वत् गह्वरेषु गम्भीरेषु दुष्प्रवेशेषु स्थानेषु "प्रतिष्ठाम् अवस्थितिमासदं युवां "विदाथः[2] जानीथः। "पादेव पादाविव यथा "तरते। षष्ठ्यर्थे चतुर्थी। तरतः पुरुषस्य पादौ यथा "गाधं जलं वित्तः तद्वद्युवां तार्येषु जलेषु गाधं विदाथः जानीथः। 'विद ज्ञाने'। लेट्याडागमः। "कर्णेव यथा कर्णावुक्तं शब्दं विदतुः तद्वद्युवां "शासुः शासितारं स्तुतिं कुर्वाणं जनम् "अनु "हि "स्मराथः अनुकूलं जानीथः खलु। स्मरतेर्लेट्याडागमः। हियोगादनिघातः। 'अधीगर्थदयेशां कर्मणि' (पा. सू. २. ३. ५२) इति शासुरित्यस्य षष्ठी। "अंशेव अंशाविव यथावयवौ[3] तद्वन्तं यज्ञं भजेते तद्वद्युवां "नः अस्मदीयं "चित्रं चायनीयम् "अप्नः कर्म "भजतम् आश्रयतम्॥ अप्नः। 'आप्लृ व्याप्तौ'। अस्मादापः कर्माख्यायां 'ह्रस्वो नुट् च वा' (उ. सू. ४. २०७) इत्यसुन् तत्संनियोगेन ह्रस्वो नुडागमश्च। नित्स्वरेणाद्युदात्तः॥

आरङ्गरेव मध्वेरयेथे सारघेव गवि नीचीनबारे ।
कीनारेव स्वेदमासिष्विदाना क्षामेवोर्जा सूयवसात् सचेथे ॥ १० ॥

आरङ्गराऽइव । मधु । आ । ईरयेथे इति । सारघाऽइव । गवि । नीचीनऽबारे ।
कीनाराऽइव । स्वेदम् । आऽसिस्विदाना । क्षामऽइव । ऊर्जा । सुयवसऽअत् । सचेथे इति ॥१०॥

"आरङ्गरेव। 'गॄ शब्दे'। अस्माद्भावे ऋदोरप्। अरमलं पर्याप्तं गरः शब्दनम्। तस्य संबन्धिनौ॥ 'तस्येदम्' इत्यण्॥ शब्दवन्तौ मेघाविव यथा "मधु जलं प्रेरयतः तद्वद्युवाम् "एरयेथे प्रेरयथः॥ 'ईर प्रेरणे'। चौरादिकः॥ "सारघेव सारघाविव। सरघा मधुमक्षिका। सरघैव सारघा। प्रज्ञादित्वादण् (पा. सू. ५. ४. ३८)। ते[4] यथा[4] "नीचीनबारे नीचीनद्वारे मधुपुष्पे मधु प्रेरयतः तद्वद्युवां नीचीनबारे न्यग्भूतद्वारे "गवि गोरूधसि क्षीरं प्रक्षिपथः। "कीनारेव कीनाराविव कुत्सितमनुष्यौ यथा स्विद्यमानौ भवतः तद्वत् "स्वेदं स्विद्यमानं जलम् "आसिस्विदाना आ समन्तात् स्वेदयन्तौ प्रक्षारयन्तौ भवथः॥ 'ञिष्विदा गात्रप्रक्षरणे'। अनुदात्तेत्। तस्माच्छान्दसे लिटि कानजादेशः॥ "क्षामेव। 'क्षै जै पै क्षये'। अस्मादातो मनिन्। ह्रस्वश्छान्दसः। क्षामा क्षीणा गौः "सुयवसात्। अदेः क्विप्। शोभनं यवसं घासादिकं भक्षयन्ती क्षीररूपेणान्नेन समवेता यथा भवति तद्वद्युवाम् "ऊर्जा हवीरूपेणान्नेन "सचेथे संगच्छेथे॥ 'षच समवाये'॥

ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् ।
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ ११ ॥

ऋध्याम । स्तोमम् । सनुयाम । वाजम् । आ । नः । मन्त्रम् । सऽरथा । इह । उप । यातम् ।
यशः । न । पक्वम् । मधु । गोषु । अन्तः । आ । भूतऽअंशः । अश्विनोः । कामम् । अप्राः ॥११॥

१. त-भ-'गम्भरेषु' नास्ति। २. ग-त-भ-'विदाथः' नास्ति। ३. ग४-त४.५-यथा यज्ञस्यावयवौ। ४. त-भ-तथा।

हे अश्विनौ वयं ᵛस्तोमं त्रिवृत्पञ्चदशादिकम् ᵛऋध्याम ऋध्यास्म वर्धयेम ॥ 'ऋधु वृद्धौ'। अस्मादाशीर्लिङि 'किदाशिषि' इति यासुटः कित्वम् ॥ ᵛवाजं हविर्लक्षणमन्नं युवाभ्यां ᵛसनुयाम प्रयच्छेम ॥ 'षणु दाने'। तानादिकः। विधिलिङ्। वाक्यभेदादनिघातः ॥ तस्माद्युवां ᵛसरथा सरथौ समानरथावेकमेव रथमारूढौ सन्तौ ᵛइह अस्मिन् कर्मणि ᵛनः अस्मदीयं ᵛमन्त्रं मननीयं स्तोत्रम् ᵛउप ᵛयातम् उपागच्छतम्। ᵛगोष्वन्तः। गोरूधस्यवस्थितं ᵛपक्वं परिणतम् अत एव ᵛमधु मधुरं ᵛयशो ᵛन। यश इत्यन्ननाम। नश्चार्थे। क्षीराज्यादिलक्षणं महावीरेऽवनीयमानमन्नं चापेक्ष्यागच्छतमिति संबन्धः। एवमुक्तप्रकारेण ᵛभूतांशः एतन्नामर्षिः ᵛअश्विनोः ᵛकामम् अभिलाषमात्मीयाभिः स्तुतिभिः ᵛआ ᵛअप्राः आपूरयत्। संपूर्णमकार्षीदित्यर्थः ॥ 'प्रा पूरणे'। आदादिकः। व्यत्ययेन मध्यमः ॥ अत्राश्विने सूक्ते सर्वाण्यपि पदानि दुर्व्युत्पादान्यस्माभिर्दिङ्मात्रं प्रदर्शितानि। एवं निरुक्तव्याकरणादिभिरर्थविशेषे बुद्धिमद्भिरुन्नेयानि ॥ ॥ २ ॥

'आविः' इत्येकादशर्चमष्टमं सूक्तम्। दिव्यो नामाङ्गिरस ऋषिः। प्रजापतेः सुता दक्षिणा सा वा ऋषिका। 'शतधारं वायुम्' इति चतुर्थी जगती शिष्टा दश त्रिष्टुभः। अनेन सूक्तेन ऋत्विग्भ्यो दीयमाना दक्षिणा तद्दातारो यजमाना वा स्तूयन्ते। अतः सैव देवता। तथा चानुक्रान्तम्–'आविर्दिव्यो दक्षिणा वा प्राजापत्या दक्षिणां तद्दातॄन्वास्तौच्चतुर्थी जगती' इति। गतो विनियोगः ॥

**आविर॑भून्म॒हि माघो॑नमेषां॒ विश्वं॑ जी॒वं तम॑सो॒ निर॑मोचि ।**
**म॒हि ज्योतिः॑ पि॒तृभि॑र्द॒त्तमागा॑दु॒रुः पन्था॒ दक्षि॑णाया अदर्शि ॥ १ ॥**

आ॒विः । अ॒भू॒त् । म॒हि । माघो॑नम् । ए॒षा॒म् । विश्व॑म् । जी॒वम् । तम॑सः । निः । अ॒मो॒चि॒ ।
म॒हि । ज्योतिः॑ । पि॒तृऽभिः॑ । द॒त्तम् । आ । अ॒गा॒त् । उ॒रुः । पन्थाः॑ । दक्षि॑णायाः । अ॒द॒र्शि॒ ॥ १ ॥

इदं सूक्तं दक्षिणाया वा तद्दातॄणां वा स्तावकम्। दक्षिणा तु यागाङ्गं यागस्तु सायंकाले न क्रियते। 'न सायमस्ति देवया अजुष्टम्' (ऋ. सं. ५. ७७. २) इत्यादिश्रवणात्। तस्मात् अह्न्येव कर्तव्यः। अहश्च सूर्योदयात्पश्चाद्भवतीति सूक्तादौ सूर्योदयोऽभिधीयते। ᵛमाघोनम्। मघवेन्द्रः[1]। इन्द्रश्च सूर्यः 'चैत्रमासे तयोरिन्द्रः' इति स्मरणात्। तस्य संबन्धि ॥ 'तस्येदम्' इत्यण्। अतद्धिते प्रत्यये संप्रसारणमभिहितम् (पा. सू. ६. ४. १३३)। सर्वविधीनां छन्दसि विकल्पितत्वादत्र तद्धितेऽपि संप्रसारणम् ॥ सूर्यात्मकस्येन्द्रस्य स्वभूतं ᵛमहि महत् तेजः ᵛएषां यजमानानां यागसिद्ध्यर्थम् ᵛआविरभूत्। प्रकाशितमुद्गतमभूत्। तत्र ᵛविश्वं सर्वं ᵛजीवं स्थावरजङ्गमात्मकं जगत् ᵛतमसः सकाशात् ᵛनिरमोचि[2] निर्मुक्तमभूत्[2]। मुञ्चतेः[3] कर्मलुङि चिणि रूपम्। अथानन्तरं ᵛपितृभिः यत् पितृभिर्देवैः ᵛदत्तं नो* हविषामागमनाय तत्[3] ᵛमहि महत् ᵛज्योतिः सूर्याख्यम् ᵛआगात् आगच्छति। पश्चात् ᵛदक्षिणायाः यागाङ्गभूतायाः ᵛउरुः महान् ᵛपन्थाः मार्गः ᵛअदर्शि सर्वैर्यजमानैर्दृष्टोऽभूत्। सर्वे यागं कृत्वा ऋत्विग्भ्यो दक्षिणां दत्तवन्त इत्यर्थः ॥

**उ॒च्चा दि॒वि दक्षि॑णावन्तो अस्थु॒र्ये अ॑श्व॒दाः स॒ह ते सूर्ये॑ण ।**
**हि॒र॒ण्य॒दा अ॑मृत॒त्वं भ॑जन्ते वासो॒दाः सो॑म॒ प्र ति॑रन्त॒ आयुः॑ ॥ २ ॥**

---

१. त-भ–मघोन इंद्रः। २. भ–'निरमोचि निर्मुक्तमभूत्' नास्ति; त४.५–तेन निर्मुक्तमभूत्। ३. भ–'मुञ्चतेः... तत्' नास्ति। * त४.५–आत्मनो।

उच्चा । दिवि । दक्षिणाऽवन्तः । अस्थुः । ये । अश्वऽदाः । सह । ते । सूर्येण ।
हिरण्यऽदाः । अमृतऽत्वम् । भजन्ते । वासःऽदाः । सोम । प्र । तिरन्ते । आयुः ॥ २ ॥

ᐯदक्षिणावन्तः दक्षिणाया देयत्वेन तद्वन्तो दक्षिणां दत्तवन्तो यजमानाः ᐯउच्चा उच्चैः स्थानैः स्थिते ᐯदिवि द्युलोके ᐯअस्थुः तिष्ठन्ति । सामान्येनोक्त्वा दातृविशेषाणां फलविशेषमाह । ᐯअश्वदाः अश्वानां दातारः ᐯये यजमानाः ᐯते ᐯसूर्येण सर्वस्य स्वस्वकर्मणि प्रेरकेणादित्येन ᐯसह तिष्ठन्ति । ये ᐯहिरण्यदाः[1] हिरण्यदातारः ते ᐯअमृतत्वम् अमरणधर्मत्वं देवत्वं ᐯभजन्ते । 'अमृतं वै हिरण्यम्' ( तै. सं. ५.२.७.२ ) इत्याम्नानात् । तथा 'सौम्यं वै वासः' ( तै. ब्रा. २.२.५ ) इति श्रवणात् सोम एव संबोध्यते । हे ᐯसोम ᐯवासोदाः त्वद्देवत्यवस्त्राणां[2] दातारो ये सन्ति ते त्वया सह तिष्ठन्तीति शेषः । एते सर्वे ᐯआयुः जीवनं ᐯप्र ᐯतिरन्ते प्रवर्धयन्ति । प्रपूर्वस्तिरतिर्वृद्ध्यर्थः ॥

दैवी पूर्तिर्दक्षिणा देवयज्या न कवारिभ्यो नहि ते पृणन्ति ।
अथा नरः प्रयतदक्षिणासोऽवद्यभिया बहवः पृणन्ति ॥ ३ ॥

दैवी । पूर्तिः । दक्षिणा । देवऽयज्या । न । कवऽअरिभ्यः । नहि । ते । पृणन्ति ।
अथ । नरः । प्रयतऽदक्षिणासः । अवद्यऽभिया । बहवः । पृणन्ति ॥ ३ ॥

ᐯदैवी देवसंबन्धिनी ॥ 'देवाद्यञञौ' ( पा. सू. ४. १. ८५. ३ ) इत्यञ् । तादृशी ᐯपूर्तिः पालिनी तत्साध्या ᐯदेवयज्या ॥ 'छन्दसि निष्टर्क्य°' ( पा. सू. ३. १. १२३ ) इति निपातितः ॥ देवयागः । तदङ्गभूता ᐯदक्षिणा ᐯन ᐯकवारिभ्यः ॥ 'ऋ गतौ' इत्यस्य 'अच इः' ( उ. सू. ४.१३८ ) इतीप्रत्ययः ॥ कुत्सितगन्तृभ्योऽयष्टृभ्यः । एतेभ्यो न भवति । यद्वा । देवानां स्वभूता पूर्तिः पूरयित्री स्तुतिभिर्हविर्भिश्च तादृशी देवयज्या दक्षिणा च तेभ्यो न भवतः । तत्र हेतुरुच्यते । हि यस्मात् ᐯते कुत्सितगन्तारः ᐯनहि ᐯपृणन्ति देवान् स्तुतिभिर्हविर्भिश्च न प्रीणयन्ति । 'पृण प्रीणने' । तौदादिकः । ᐯअथ इति प्रश्ने । यष्टॄणां देवयागादि कथं भवति । उच्यते । ᐯनरः कर्मणां नेतारः अत एव ᐯप्रयतदक्षिणासः दत्तदक्षिणाः ᐯबहवः यजमानाः ᐯअवद्यभिया ॥ 'अवद्यपण्यवर्या गर्ह्य°' ( पा. सू. ३. १. १०१ ) इति यत्प्रत्ययान्तत्वेन निपातितः ॥ पापभिया । विहितानुष्ठाने दुरितानि भवन्ति खलु । तस्मात्तद्भीत्या ᐯपृणन्ति देवान् प्रीणयन्ति । तस्माद्यष्टॄणां देवपालनयागदक्षिणा भवतीत्यर्थः[3] ॥

शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते हविः ।
ये पृणन्ति प्र च यच्छन्ति संगमे ते दक्षिणां दुहते सप्तमातरम् ॥ ४ ॥

शतऽधारम् । वायुम् । अर्कम् । स्वःऽविदम् । नृऽचक्षसः । ते । अभि । चक्षते । हविः ।
ये । पृणन्ति । प्र । च । यच्छन्ति । सम्ऽगमे । ते । दक्षिणाम् । दुहते । सप्तऽमातरम् ॥ ४ ॥

ᐯशतधारं बहुधारेणोपेतं ᐯवायुम् एतन्नामकं ᐯस्वर्विदं स्वर्गस्य लम्भकं सर्वस्य वेत्तारं वा ᐯअर्कम् अर्चनीयमादित्यं च एतौ ᐯनृचक्षसः नृणां द्रष्टॄनन्यानिन्द्रादीन् देवांश्चाभिलक्ष्य ᐯते यजमानाः ᐯहविः ᐯचक्षते । तेभ्यो दातुं पश्यन्ति जानन्ति[4] । चष्टेर्लटि रूपम् । किंच ᐯसंगमे । कर्मकरणार्थम्

१. त-भ-'हिरण्यदाः' नास्ति । २. त-भ-मु-तद्देवत्य° । ३. त-भ१.२.४.८-भवतीत्यर्थः ।
४. त-भ-'जानन्ति' नास्ति ।

ऋत्विजोऽत्र संगच्छन्त इति संगमः ॥ 'प्रहवृदनिश्चिगमश्च' इत्यधिकरणेऽप्। थाथादिस्वरः ॥ तस्मिन् यज्ञे ᵛये यष्टारः ᵛपृणन्ति स्तुतिभिः प्रीणयन्ति। ये ᵛच तेभ्यो देवेभ्यो हवींषि ᵛप्र ᵛयच्छन्ति। उभयत्र यद्योगादनिघातः। ᵛते ᵛसप्तमातरम्। सप्तसंख्याका मातृभूता अग्निष्टोमादिसंस्था यस्यां भवन्ति सा। यद्वा। सप्तसंख्याका मातरः कर्मणां निर्मातारः कर्तारो होत्रादयः सन्ति। तादृशीं ᵛदक्षिणां ᵛदुहते ऋत्विग्भ्यो दुहन्ति ॥

दक्षिणावान् प्रथमो हूत एति दक्षिणावान् ग्रामणीरग्रमेति।
तमेव मन्ये नृपतिं जनानां यः प्रथमो दक्षिणामाविवाय ॥ ५ ॥

दक्षिणाऽवान्। प्रथमः। हूतः। एति। दक्षिणाऽवान्। ग्रामऽनीः। अग्रम्। एति।
तम्। एव। मन्ये। नृऽपतिम्। जनानाम्। यः। प्रथमः। दक्षिणाम्। आऽविवाय ॥ ५ ॥

ᵛहूतः ऋत्विग्भिराहूतः ᵛदक्षिणावान् यजमानः ᵛप्रथमः सर्वेषां मुख्यः सन् ᵛएति सर्वत्र गच्छति। तथा ᵛग्रामणीः ग्रामाणां नेता धनवत्त्वेन तेषां कर्ता ᵛदक्षिणावान् सः ᵛअग्रमेति। सर्वेषां प्रथममेव गच्छति। ᵛतमेव ᵛनृपतिं नराणां पालयितारमिति ᵛमन्ये ऋषिरहमवबुध्ये ᵛप्रथमः ᵛयः[1] ᵛजनानां ᵛदक्षिणाम् ᵛआविवाय आगमयति। वी गत्यादिषु। तस्य लिटि रूपम्। तं नृपतिमिति मन्ये। यद्वा। जनानामिति पूर्ववाक्यशेषः। जनानां मध्ये तमेव मनुष्याणां स्वामिनमिति मन्ये ॥ ॥ ३ ॥

तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम्।
स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥ ६ ॥

तम्। एव। ऋषिम्। तम्। ऊँ इति। ब्रह्माणम्। आहुः। यज्ञऽन्यम्। सामऽगाम्। उक्थऽशासम्।
सः। शुक्रस्य। तन्वः। वेद। तिस्रः। यः। प्रथमः। दक्षिणया। रराध ॥ ६ ॥

ᵛतमेव दक्षिणाया दातारम् ᵛऋषिम् अतीन्द्रियार्थदर्शिनं यद्वा सत्कर्मकरणेन ऋषिमित्याहुः। तथा ᵛतमु तमेव ᵛब्रह्माणमाहुः। किंच तमेव ᵛयज्ञन्यम् ॥ 'णीञ् प्रापणे'। क्विप्। 'उदात्तस्वरितयोर्यणः०' इत्यमः स्वरितत्वम् ॥ यज्ञस्य नेतारमध्वर्युमित्याहुः। तमेव ᵛसामगां साम्नां गातारमिति। तथा ᵛउक्थशासम्। 'शन्सु स्तुतौ'। क्विप्। संहितायां दीर्घश्छान्दसः। उक्थशसं शस्त्राणां शंसितारं होतारमिति ब्रुवन्ति। दक्षिणादानेन तत्कर्मणः परिग्रहात्। ᵛसः दाता ᵛशुक्रस्य दीप्यमानस्य ज्योतिषः ᵛतिस्रः ᵛतन्वः अग्निवैद्युतादित्यात्मकानि त्रीणि शरीराणि ᵛवेद जानाति। यद्वा। शुक्रस्य दीप्तस्याग्नेराहवनीयाद्यात्मकानि[2] त्रीणि शरीराणि जानाति। ᵛप्रथमः मुख्यः ᵛयः जनः ᵛदक्षिणया ᵛरराध ऋत्विगादीनाराधयति ॥ 'राध संसिद्धौ'। लिटि रूपम्। लित्स्वरः ॥

दक्षिणाश्वं दक्षिणा गां ददाति दक्षिणा चन्द्रमुत यद्धिरण्यम्।
दक्षिणान्नं वनुते यो न आत्मा दक्षिणां वर्म कृणुते विजानन् ॥ ७ ॥

दक्षिणा। अश्वम्। दक्षिणा। गाम्। ददाति। दक्षिणा। चन्द्रम्। उत। यत्। हिरण्यम्।
दक्षिणा। अन्नम्। वनुते। यः। नः। आत्मा। दक्षिणाम्। वर्म। कृणुते। विऽजानन् ॥ ७ ॥

१. त१.३.४.५.७.८-भ-मु-यो जनः। २. त-भ-मु-°राहवनीयात्मकानि।

ᵛदक्षिणा तद्दातृभ्यः ᵛअश्वं ᵛददाति। तथा ᵛगां च ददाति। तथा ᵛचन्द्रं सुवर्णं ददाति। ᵛउत अपि च ᵛयद्धिरण्यं रजतमस्ति। 'रजतं हिरण्यम्' (तै. सं. १.५.१,२) इत्याम्नानात्। तच्च ददाति। किंच सा ᵛअन्नं[1] ᵛवनुते ददाति। वनोतिरत्र दानार्थः। तस्मात् ᵛनः अस्मदीयः ᵛयः ᵛआत्मा अस्ति सः ᵛवर्म ᵛविजानन् कवचं यथायुधानां निवारकं तद्वद्दुरितानि वारयतीति कवचमिति विजानन् ᵛदक्षिणाम् अश्वादिदानशीलां ᵛकृणुते। ऋत्विग्भ्यः करोति॥

न भोजा मम्रुर्न न्यर्थमीयुर्न रिष्यन्ति न व्यथन्ते ह भोजाः।
इदं यद्विश्वं भुवनं स्वश्चैतत्सर्वं दक्षिणैभ्यो ददाति॥ ८॥

न। भोजाः। मम्रुः। न। निऽअर्थम्। ईयुः। न। रिष्यन्ति। न। व्यथन्ते। ह। भोजाः।
इदम्। यत्। विश्वम्। भुवनम्। स्वरिति स्वः। च। एतत्। सर्वम्। दक्षिणा। एभ्यः। ददाति॥८॥

ᵛभोजाः भोजयितारो धनादिदानेन दातारः ᵛन ᵛमम्रुः न म्रियन्ते। देवत्वं भजन्त इत्यर्थः। अत एव ᵛन्यर्थम्॥ 'ऋ गतौ'। उषिकुषिगार्तिभ्यस्थन् (उ. सू. २. ४)। समासे थाथादिस्वरः॥ निकृष्टां गतिं ᵛन ᵛईयुः न प्राप्नुवन्ति॥ 'इण् गतौ'। लिटि 'दीर्घ इणः किति' (पा. सू. ७. ४. ६९) इति दीर्घः॥ तथा ᵛन ᵛरिष्यन्ति। कैश्चिदप्यहिंसिता भवन्ति। कर्मणि व्यत्ययेन परस्मैपदम्। अत एव ᵛभोजाः दातारः ᵛन ᵛव्यथन्ते। परस्परं न भीता न बाधिता वा भवन्ति। ᵛह प्रसिद्धौ। किंच ᵛइदं परिदृश्यमानं ᵛविश्वं सर्वं ᵛभुवनं ᵛयत् भूतजातमस्ति ᵛस्वश्च स्वर्गलोकश्च ᵛएतत्सर्वं ᵛदक्षिणा स्वयम् ᵛएभ्यः तद्दातृभ्यः ᵛददाति प्रयच्छति॥

भोजा जिग्युः सुरभिं योनिमग्रे भोजा जिग्युर्वध्वं१ या सुवासाः।
भोजा जिग्युरन्तःपेयं सुराया भोजा जिग्युर्ये अहूताः प्रयन्ति॥ ९॥

भोजाः। जिग्युः। सुरभिम्। योनिम्। अग्रे। भोजाः। जिग्युः। वध्वम्। या। सुऽवासाः।
भोजाः। जिग्युः। अन्तःऽपेयम्। सुरायाः। भोजाः। जिग्युः। ये। अहूताः। प्रऽयन्ति॥९॥

ᵛभोजाः दातारः ᵛअग्रे प्रथममेव ᵛयोनिं क्षीरादेरुत्पत्तिस्थानं ᵛसुरभिं धेनुं ᵛजिग्युः। शत्रुभ्यो जितवन्तः॥ 'जि जये'। लिटि 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य कवर्गादेशः॥ तथा ᵛभोजाः दातारः ᵛवध्वं, वधूं नवोढां स्त्रीं ᵛजिग्युः। ᵛया स्त्रीः ᵛसुवासाः शोभनवासा अस्ति तां जिग्युः। किंच ᵛभोजाः शत्रूणां ᵛसुरायाः ᵛअन्तःपेयम् अन्तःपानं ᵛजिग्युः॥ 'पा पाने'। भावे यत्। 'ईद्यति' इतीत्वम्। आर्धधातुकलक्षणो गुणः। कृदुत्तरपदप्रकृतिस्वरत्वम्॥ ᵛये शत्रवः ᵛअहूताः बलाधिक्येनानाहूयमानाः ᵛप्रयन्ति प्रमुखमागच्छन्ति तान् ᵛभोजाः दक्षिणाया दातारो जनाः ᵛजिग्युः जयन्ति॥

भोजायाश्वं सं मृजन्त्याशुं भोजायास्ते कन्या३ शुम्भमाना।
भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम्॥ १०॥

भोजाय। अश्वम्। सम्। मृजन्ति। आशुम्। भोजाय। आस्ते। कन्या। शुम्भमाना।
भोजस्य। इदम्। पुष्करिणीऽइव। वेश्म। परिऽकृतम्। देवमानाऽइव। चित्रम्॥ १०॥

---

१. त१.२.३.६.७.८-म१.४.७-अन्नं च।

Vभोजाय दात्रे Vआशुं शीघ्रगामिनम् Vअश्वं Vसं Vमृजन्ति। परिचारकाः सम्यगलंकुर्वन्ति। 'मृजू शौचालंकारयोः'। तथा Vकन्या। कन्यात्वेनात्र संनिकर्षादभिनवं यौवनं लक्ष्यते। अभिनवयौवना Vशुम्भमाना शरीरावयवविशेषशोभया वस्त्राद्यलंकारशोभया च शोभमाना स्त्री तस्मै Vभोजाय दात्रे Vआस्ते। तथा Vभोजस्य दातुरेव हृदयाह्लादकरं Vवेश्म गृहं भवति। कीदृशम्। Vपुष्करिणीव। पुष्कराणि पद्मानि यस्याः सन्तीति पुष्करिणी सरसी। सा यथा पद्महंसादिभिरलंकृता भवति तद्वत् Vपरिष्कृतं वितानादिभिरलंकृतम्॥ परिपूर्वस्य करोतेर्भूषणार्थे संहितायां सुडागमः। 'परिनिविभ्यः' इति सुटः षत्वम्। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्॥ तथा Vदेवमानेव। 'सुपां सुलुक्' इति प्रथमैकवचनस्याकारः॥ देवमानमिव देवयानमिव Vचित्रं मनोहरं वेश्म तस्य भवति॥

भोजमश्वाः सुष्टुवाहो वहन्ति सुवृद्रथो वर्तते दक्षिणायाः।
भोजं देवासोऽवता भरेषु भोजः शत्रून्त्समनीकेषु जेता॥ ११॥

भोजम्। अश्वाः। सुष्टुऽवाहः। वहन्ति। सुऽवृत्। रथः। वर्तते। दक्षिणायाः।
भोजम्। देवासः। अवत। भरेषु। भोजः। शत्रून्। सम्ऽअनीकेषु। जेता॥ ११॥

Vसुष्टुवाहः॥ 'वह प्रापणे'। 'वहश्च' इति ण्विप्रत्ययः। शोभनवहनसमर्थाः Vअश्वाः Vभोजं दातारं Vवहन्ति। लक्ष्यं देशं प्रापयन्ति। ततः Vदक्षिणायाः दातुर्यजमानस्य Vसुवृत् सुष्ठु चक्रादिवर्तनं यस्य सोऽश्वादिसहितः Vरथः Vवर्तते। अथ प्रत्यक्षः। हे Vदेवासः हे देवा इन्द्रादयः Vभरेषु। भ्रियते[1] आहवनीयादिरूपेणाग्निरत्रेति भरा यज्ञाः। यद्वा। 'भृ भर्त्सने'। भृणन्ति भर्त्सयन्ति योद्धारः अत्रेति भराः संग्रामाः। तेषु Vभोजं दातारम् Vअवत रक्षत। ततो युष्माभिः पालितः Vभोजः धनादिदानेन जनानां भोजयिता सन् Vसमनीकेषु संग्रामेषु Vशत्रून् Vजेता जयशीलो भवति॥ 'जि जये'। ताच्छीलिकस्तृन्। अत एव 'न लोकाव्यय°' इति शत्रुशब्दस्य षष्ठीप्रतिषेधः॥ ॥ ४॥

'किमिच्छन्ती' इत्येकादशर्चं नवमं सूक्तं त्रैष्टुभम्। ऐन्द्रपुरोहितस्य बृहस्पतेर्गोषु वलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं नदीमुत्तीर्य वलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श। अथ तस्मिन्नन्तरे पणय इदं वृत्तान्तमवगच्छन्त एनां मित्रीकर्तुं संवादमकुर्वन्। तत्र प्रथमातृतीयाद्या अयुजोऽन्त्यावर्जिताः पणीनां वाक्यानि। अत्र त ऋषयः सरमा देवता। द्वितीयाचतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि। अतस्तासु सर्पिः पणयो देवता। तथा चानुक्रान्तं—'किमिच्छन्ती पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितामयुग्भिः पणयो मित्रीयन्तः प्रोचुः सा तान्युग्मान्त्याभिरनिच्छन्ती प्रत्याचष्टे' इति। गतो विनियोगः॥

किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः।
कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि॥ १॥

किम्। इच्छन्ती। सरमा। प्र। इदम्। आनट्। दूरे। हि। अध्वा। जगुरिः। पराचैः।
का। अस्मेऽहितिः। का। परिऽतक्म्या। आसीत्। कथम्। रसायाः। अतरः। पयांसि॥ १॥

अनयागच्छन्तीं सरमां दृष्ट्वा पणयो वदन्ति। Vसरमा सरणशीलैतन्नामिका देवशुनी Vकिमिच्छन्ती[2] किं प्रार्थयमाना सती Vइदम् अस्मदीयं स्थानं Vप्र Vआनट् प्राप्नोत्॥ आङ्पूर्वो नशिः

१. त१.२.३.६.७.८-म२.५–ह्रियत। २. त-भ-मु–'किमिच्छन्ती' नास्ति।

ग्यासिकर्मा। तस्य लुङि 'मन्त्रे घस॰' इत्यादिना च्लेर्लुक्। छन्दस्यपि दृश्यत इत्याडागमः॥ ᵛपराचैः पराञ्चि पराङ्मुखान्यावृत्तिवर्जितानि यानि गमनानि तैः ᵛजगुरिः उद्गूर्णः। महता प्रयत्नेनापि गन्तुं न शक्यत इत्यर्थः॥ 'गॄ निगरणे'। 'आदृगमहन॰' इत्यादिना किन्प्रत्ययः। 'बहुलं छन्दसि' (पा. सू. ७. १. १०३) इत्युत्वम्॥ तादृशोऽयम् ᵛअध्वा ᵛदूरे ᵛहि विप्रकृष्टः खलु। यद्वा। पराचैः पराञ्चनैर्जगुरिरित्यर्थं गन्त्री पार्ष्णिभागमनालोकमाना सतीदं स्थानं प्राप्नोति। दूरेऽयमध्वा यदृच्छया गन्तुं न शक्यते। अतो वयमेतां पृच्छामः। हे सरमे ᵛका कीदृशी ᵛअस्मेहितिः। कोऽस्मा-स्वर्थहितिः। कोऽस्मासु त्वदपेक्षितार्थो निहितः। यद्वा। अस्मासु कोऽर्थो गतः। दधातेर्हिनोतेर्वा क्तिनि रूपम्। आगच्छन्त्यास्तव ᵛका कीदृशी ᵛपरितक्म्या रात्रिः ᵛआसीत्। यद्वा। तकतिर्गत्यर्थः। परितकनं परितो गमनं भ्रमणं वा कीदृशमासीत्। ᵛकथं च[1] ᵛरसायाः शब्दायमानाया अन्तरिक्षनद्या योजनशतविस्तीर्णायाः ᵛपयांसि उदकानि ᵛअतरः तीर्णवत्यसि। एतद्वद। अत्र 'किमिच्छन्ती सरमेदं प्रानट्' (निरु. ११. २५) इत्यादिकं निरुक्तं द्रष्टव्यम्॥

इन्द्रस्य दूतीरिषिता चरामि मह इच्छन्ती पणयो निधीन्वः।
अतिष्कदो भियसा तन्न आवत्तथा रसाया अतरं पयांसि॥ २॥

इन्द्रस्य। दूतीः। इषिता। चरामि। महः। इच्छन्ती। पणयः। निऽधीन्। वः।
अतिऽस्कदः। भियसा। तत्। नः। आवत्। तथा। रसायाः। अतरम्। पयांसि॥ २॥

अनया तान् सरमा[2] प्रत्युवाच[2]। हे ᵛपणयः एतन्नामका असुराः ᵛइन्द्रस्य ᵛदूतीः। 'सुपां सुलुक्॰' इति प्रथमैकवचनस्य सुश्छान्दसः। अहम् ᵛइषिता तेनैव प्रेषिता सती ᵛचरामि। युष्मदीयं स्थानमागच्छामि। किमर्थम्। ᵛवः युष्मदीयान् युष्मदीये पर्वतेऽधिष्ठापितान् ᵛमहः महतः ᵛनिधीन् बृहस्पतेर्गोनिधीन् ᵛइच्छन्ती कामयमाना सती चरामि। किंच ᵛअतिष्कदः॥ 'स्कन्दिर् गतिशोषणयोः'। भावे क्विप्। अतिष्कन्दनादतिक्रमणाज्जातेन ᵛभियसा भयेन ᵛतत् नदीजलं ᵛनः। पूजायां बहुवचनम्। माम् ᵛआवत् अरक्षत्। ᵛतथा तेन प्रकारेण ᵛरसायाः नद्याः ᵛपयांसि उदकानि ᵛअतरं तीर्णवत्यस्मि॥

कीदृङ्ङिन्द्रः सरमे का दृशीका यस्येदं दूतीरसरः पराकात्।
आ च गच्छान्मित्रमेना दधामाथा गवां गोपतिर्नो भवाति॥ ३॥

कीदृङ्। इन्द्रः। सरमे। का। दृशीका। यस्य। इदम्। दूतीः। असरः। पराकात्।
आ। च। गच्छात्। मित्रम्। एन। दधाम। अथ। गवाम्। गोऽपतिः। नः। भवाति॥३॥

तेषां वाक्यम्। हे ᵛसरमे तव स्वामी ᵛइन्द्रः ᵛकीदृक्। कियत्पराक्रमवान्। ᵛका ᵛदृशीका। तस्य कीदृशी दृष्टिः। दृष्टिरूपा सेना कियती। ᵛयस्य ᵛदूतीः दूती त्वम् ᵛइदम् अस्मदीयं स्थानं ᵛपराकात् अतिदूरात् ᵛअसरः आगमः। इति तामुक्त्वा इदानीं ते परस्परमाहुः। एषा सरमा ᵛआ ᵛगच्छात् ᵛच आगच्छतु च। गमेर्लेट्याडागमः। स्वामी ᵛभवाति भवतु। न ह्येकस्या गोः किंतु बहूनां गवां स्वामी भवतु। वृत्यवृत्तिभ्यां स्वामित्वं बाहुल्यं च विवक्ष्यते॥

१. ग-त-भ१.२.४.८-मु-वा। २. ग-सरमा प्र ऊचो; त-भ-मु-सरमेत्यूचे।

नाहं तं वेद दभ्यं दभत्स यस्येदं दूतीरसरं पराकात् ।
न तं गूहन्ति स्रवतो गभीरा हता इन्द्रेण पणयः शयध्वे ॥ ४ ॥

न । अहम् । तम् । वेद । दभ्यम् । दभत् । सः । यस्य । इदम् । दूतीः । असरम् । पराकात् ।
न । तम् । गूहन्ति । स्रवतः । गभीराः । हताः । इन्द्रेण । पणयः । शयध्वे ॥ ४ ॥

सरमा वदति । हे पणयः ᵛतम् इन्द्रं ᵛदभ्यं हन्तव्यमिति ᵛन ᵛवेद न[1] जानामि । दभेः अचो यत् । कथम् । ᵛसः इन्द्रः ᵛदभत् सर्वान् जनान् दभति हिनस्त्येव ॥ दभेर्लेटि रूपम् । वाक्यभेदादनिघातः ॥ ᵛयस्य ᵛदूतीः दूती अहम् ᵛइदं युष्मदीयं स्थानं ᵛपराकात् अतिदूराद्देशात् ᵛअसरं प्राप्ताभूवम् । इन्द्रो हिंसितव्यो[2] न भवतीत्यत्र युक्तिमाह । ᵛस्रवतः । स्रवणं स्रवः । तमाचरन्ति ॥ आचारार्थे क्विप् । तुगागमः । जसि रूपम् ॥ स्रवणशीलाः ᵛगभीराः गम्भीरा नद्यः ᵛतम् इन्द्रं ᵛन ᵛगूहन्ति न संवृण्वन्ति । नाच्छादयन्ति । किंत्वाविष्कुर्वन्ति । वयं यस्य महिम्ना समुद्रं प्रतिसरामः । तस्मादहिंस्य इत्येनं प्रकटीकुर्वन्ति । ' गुहू संवरणे ' । भौवादिकः । तस्माद्धि ᵛपणयः यूयम् ᵛइन्द्रेण तादृशपराक्रमेण ᵛहताः सन्तः ᵛशयध्वे ॥ ' शीङ् स्वप्ने ' । ' बहुलं छन्दसि ' इति शपो लुगभावः ॥

इमा गावः सरमे या ऐच्छः परि दिवो अन्तान्त्सुभगे पतन्ती ।
कस्त एना अव सृजादयुध्व्युतास्माकमायुधा सन्ति तिग्मा ॥ ५ ॥

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अन्तान् । सुऽभगे । पतन्ती ।
कः । ते । एनाः । अव । सृजात् । अयुध्वी । उत । अस्माकम् । आयुधा । सन्ति । तिग्मा ॥ ५ ॥

क्रुद्धाः पणयः प्रत्यूचुः । हे ᵛसुभगे शोभनसौभाग्यवति[3] हे ᵛसरमे ᵛदिवः द्युलोकस्य ᵛअन्तान् पर्यन्तान् ᵛपरि ᵛपतन्ती कुत्र गावस्तिष्ठन्तीति परितो गच्छन्ती त्वम् ᵛइमाः परिदृश्यमानाः ᵛयाः ᵛगावः । सुव्यत्ययः । गाः ᵛऐच्छः कामयसे ताः ᵛएनाः गाः ᵛते त्वदीयः ᵛकः ᵛअयुध्वी अयुद्ध्वा ᵛअव ᵛसृजात् । अस्मात् पर्वतादवसृजेत् । विनिर्गमयेत् । सृजेर्लेटि रूपम् । अयुध्वी । युधेः क्त्वाप्रत्यये ' स्नात्व्यादयश्च ' इति निपातितः । नञ्समासत्वाल्ल्यबादेशाभावः । नञः प्रकृतिस्वरत्वम् । ᵛउत अपि च ᵛअस्माकं ᵛतिग्मा तीक्ष्णानि ᵛआयुधा आयुधानि ᵛसन्ति । तस्मादस्माभिर्युद्धमकृत्वा को वा गा आहरति[4] ॥ ॥ ५ ॥

असेन्या वः पणयो वचांस्यनिषव्यास्तन्वः सन्तु पापीः ।
अधृष्टो व एतवा अस्तु पन्था बृहस्पतिर्व उभया न मृळात् ॥ ६ ॥

असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः । सन्तु । पापीः ।
अधृष्टः । वः । एतवै । अस्तु । पन्थाः । बृहस्पतिः । वः । उभया । न । मृळात् ॥ ६ ॥

सा तानिराह । हे ᵛपणयः ᵛवः युष्माकं ᵛवचांसि पूर्वोक्तानि वचनानि ᵛअसेन्या असेन्यानि । सेनार्हाणि न भवन्ति ॥ सेनाशब्दात् तदर्हतीत्यर्थे ' छन्दसि च ' इति यत्प्रत्ययः । नञा समासः । ' ययतोश्चातदर्थे ' ( पा. सू. ६. २. १५६ ) इत्युत्तरपदान्तोदात्तत्वम् ॥ तथा ᵛतन्वः युष्मदीयानि

१. त-भ-मु-' न ' नास्ति । २. भ५-हिंसितो । ३. त-मु-शोभनभाग्यवति । ४. त२-हरेदिति ।

शरीराणि ᵛअनिषव्याः इषुवर्हाणि न ᵛसन्तु पराक्रमराहित्येन। पूर्ववत् प्रत्ययः। 'ओर्गुणः' (पा. सू. ६. ४. १४६) इति गुणः। स्वरश्च तादृक्। यतः ᵛपापीः पापयुक्तानि खलु॥ 'छन्दसी-वनिपौ' इतीप्रत्ययः। जसः सुः। किंच ᵛवः युष्मदीयः ᵛपन्थाः मार्गः ᵛएतवै गन्तुम् ᵛअधृष्टः असमर्थः ᵛअस्तु॥ 'इण् गतौ' इत्यस्य तुमर्थे तवैप्रत्ययः। 'तवै चान्तश्च युगपत्' (पा. सू. ६. २. ५१) इति धातोः प्रत्ययस्य च युगपदुदात्तत्वम्। तत्र हेतुमाह। ᵛवः युष्मदीयान् ᵛउभया उभयविधान् पूर्वोक्तांस्तन्वो देहान् ᵛबृहस्पतिः इन्द्रप्रेरितः ᵛन ᵛमृळात् न सुखयेत्। किंतु बाधेत॥ 'मृड सुखने'। लेट्याडागमः॥

**अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः।**
**रक्षन्ति तं पणयो ये सुगोपा रेकु पदमलकमा जगन्थ॥ ७॥**

अयम्। निऽधिः। सरमे। अद्रिऽबुध्नः। गोभिः। अश्वेभिः। वसुऽभिः। निऽऋष्टः।
रक्षन्ति। तम्। पणयः। ये। सुऽगोपाः। रेकु। पदम्। अलकम्। आ। जगन्थ॥ ७॥

ते पुनराहुः। हे ᵛसरमे ᵛअयं ᵛनिधिः अस्मदीयः कोशः ᵛअद्रिबुध्नः। 'बन्ध बन्धने'। 'बन्धेर्ब्रधिबुधी च' (उ. सू. ३. ५) इति नप्रत्ययो बुध इत्यादेशः। अद्रिर्बन्धको यस्य तादृशः। तथा आहृतैः ᵛगोभिरश्वेभिः अश्वैश्च ᵛवसुभिः आत्मीयैर्धनैश्च ᵛन्यृष्टः नितरां प्राप्तो भवति॥ 'ऋषी गतौ'। क्तप्रत्यये 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः। 'गतिरनन्तरः' इति गतेः प्रकृति-स्वरत्वम्॥ ᵛसुगोपाः। 'गुपू रक्षणे'। आयप्रत्ययान्तात् क्विपि अतोलोपयलोपौ। सुष्ठु गोपायितारः ᵛये ᵛपणयः तेऽसुराः ᵛतं निधिं ᵛरक्षन्ति पालयन्ति[1]। ᵛरेकु। 'रेकृ शङ्कायाम्'। औणादिक उप्रत्ययः। शङ्कितं गोभिः शब्दायमानं ᵛपदम् अस्माभिः पालितं स्थानम् ᵛअलकं व्यर्थमेव ᵛआ ᵛजगन्थ आगतवत्यसि॥ गमेर्लिटि[2] रूपम्॥

**एह गमन्नृषयः सोमशिता अयास्यो अङ्गिरसो नवग्वाः।**
**त एतमूर्वं वि भजन्त गोनामथैतद्वचः पणयो वमन्नित्॥ ८॥**

आ। इह। गमन्। ऋषयः। सोमऽशिताः। अयास्यः। अङ्गिरसः। नवऽग्वाः।
ते। एतम्। ऊर्वम्। वि। भजन्त। गोनाम्। अथ। एतत्। वचः। पणयः। वमन्। इत्॥८॥

सरमा पुनः प्रत्युवाच। हे पणयः ᵛसोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः॥ 'शिञ् निशाने'। कर्मणि क्तप्रत्ययः। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्॥ तादृशाः ᵛनवग्वाः नवगतयः। यद्वा। अङ्गिरसां सत्रमासीनानां मध्ये केचन नवसु माःसूदतिष्ठन् ते नवग्वाः। अनेन दशग्वा अप्युपलक्ष्यन्ते। उभयविधास्ते ᵛअङ्गिरसः ᵛऋषयः तेषां प्रथमः ᵛअयास्यः एतन्नामा च त एते ᵛइह युष्मदीये स्थाने ᵛआ ᵛगमन् आगच्छेयुः॥ गमेः 'छन्दसि लुङ्लङ्लिटः' इति सार्वकालिको लुङ्। लृदित्वाच्च्लेरङ्॥ आगत्य च ᵛते ᵛगोनाम्॥ 'गोः पादान्ते' इति छन्दसि नुडागमः॥ गवाम् ᵛऊर्वं तं समूहं ᵛवि ᵛभजन्त विभागं कुर्युः॥ अत्रापि पूर्ववत् सार्व-कालिको लुङ्॥ ᵛअथ अनन्तरं ᵛपणयः यूयम् ᵛएतद्वचः पूर्वं यत् व्यर्थमागतासीति यद्वाक्यमवोचत तद्वाक्यं तदा ᵛवमन्नित् वमन्तः परित्यजन्त एव भवथ॥ 'वमु उद्गिरणे'। शतरि 'सुपां सुलुक्' इति जसो लुक्। नुमागमः। संयोगान्तस्य लोपः। यद्वा। लङि रूपम्। स्वरश्छान्दसः॥

---

१. त४.५–पालयंति तस्मात्त्वं। २. त-मु–गमेर्लेटि।

एवा च त्वं सरम आजगन्थ प्रबाधिता सहसा दैव्येन ।
स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ॥ ९ ॥

एव । च । त्वम् । सरमे । आऽजगन्थ । प्रऽबाधिता । सहसा । दैव्येन ।
स्वसारम् । त्वा । कृणवै । मा । पुनः । गाः । अप । ते । गवाम् । सुऽभगे । भजाम ॥ ९ ॥

तयैवमुक्ते सति पणयः प्रणयवाक्यमाहुः । हे ᵛसरमे ᵛत्वं ᵛदैव्येन देवसंबन्धिना ᵛसहसा बलेन ᵛप्रबाधिता यथा तथा वलपुरं प्राप्य तत्र स्थिता गा दृष्ट्वा पुनरागच्छेति तेन प्रपीडिता ᵛत्वम् एवं[1] चेत् ᵛआजगन्थ आगतवत्यसि ॥ चशब्दश्चेदर्थे । 'निपातैर्यद्यदिहन्त°' इति तिङो निघाताभावः । गमेर्लिटि थलि रूपम् । 'सह सुपा' इत्यत्र सहेति योगविभागात् समासः । 'तिङि चोदात्तवति' इति गतेर्निघातः[2] । लित्स्वरः[3] ॥ तर्हि ᵛत्वा त्वां ᵛस्वसारं भगिनीं ᵛकृणवै करवै । समूहापेक्षयैकवचनम् । त्वं तु ᵛपुनः ᵛमा ᵛगाः । इन्द्रादीन् मा गच्छ । अपि तर्हि हे ᵛसुभगे सरमे ᵛते त्वदीयानां ᵛगवां समूहं पर्वतादपगमय्य ᵛभजाम । त्वं च वयं च विभजाम । विभागं करवामेत्यर्थः ॥

नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः ।
गोकामा मे अच्छदयन्यदायमपात इत पणयो वरीयः ॥ १० ॥

न । अहम् । वेद । भ्रातृऽत्वम् । नो इति । स्वसृऽत्वम् । इन्द्रः । विदुः । अङ्गिरसः । च । घोराः ।
गोऽकामाः । मे । अच्छदयन् । यत् । आयम् । अप । अतः । इत । पणयः । वरीयः ॥ १० ॥

सा[4] तान्[4] प्रत्याचष्टे । हे पणयः ᵛअहं ᵛभ्रातृत्वं ᵛन ᵛवेद न जानामि । तथा ᵛस्वसृत्वं च ᵛनो वेद नैव जानामि । के जानन्ति तानाह । ᵛइन्द्रः ᵛघोराः शत्रूणां भयंकराः ᵛअङ्गिरसश्च ᵛविदुः जानन्ति । किंच अस्मात् स्थानादहं ᵛयत् यदा ᵛआयम् इन्द्रादीन् प्राप्नवम् ॥ 'अय पय गतौ' । लङि रूपम् ॥ तदा ᵛमे मदीयाः ᵛगोकामाः युष्माभिरपहृता गाः कामयमाना इन्द्रादयः ᵛअच्छदयन् । युष्मदीयं स्थानमाच्छादयन्ति । 'छद अपवारणे' । ᵛअतः कारणाद्धे ᵛपणयः[5] ᵛवरीयः उरुतरं गवां वृन्दं परित्यज्य ᵛअप ᵛइत अन्यत्स्थानं प्रति गच्छत । यद्वा । वरीयः प्रभूतमतिदूरं देशं गच्छत ॥ इत । 'इण् गतौ' । लोटि रूपम् । वरीयः । उरुशब्दादीयसुनि 'प्रियस्थिर°' इत्यादिना वरादेशः ॥

दूरमित पणयो वरीय उद्गावो यन्तु मिनतीर्ऋतेन ।
बृहस्पतिर्या अविन्दन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ॥ ११ ॥

दूरम् । इत । पणयः । वरीयः । उत् । गावः । यन्तु । मिनतीः । ऋतेन ।
बृहस्पतिः । याः । अविन्दत् । निऽगूळ्हाः । सोमः । ग्रावाणः । ऋषयः । च । विप्राः ॥ ११ ॥

हे ᵛपणयः यूयं ᵛवरीयः उरुतरं ᵛदूरं दूरदेशम्[6] ᵛइत गच्छत । युष्माभिरपहृताः ᵛगावः ᵛऋतेन सत्येन ᵛमिनतीः मिनत्यो द्वारस्य पिधायकं पर्वतं हिंसत्यो विदारयन्त्यः ᵛउत् ᵛयन्तु

---

१. ग२–एवा च एवं । २. त-भ–गमेर्निघातः । ३. त१.२.३.६.७.८–भ१.४.५.७–तित्स्वरः; त४.५.भ८-मु-नित्स्वरः; भ२–नित्स्वरितः । ४. ग–अन्यान् स तान्; त-भ–अन्यान् सा तान् । ५. ग२-त४.५–पणयो यूयं । ६. त१.२.३.७-भ१.४-मु–देशं ।

तस्मादुद्गच्छन्तु। यद्वा। मिनतीः। व्यत्ययेन कर्मणि शतृ[1]। मीयमाना युष्माभिर्बाध्यमानास्ता गावः। सुब्व्यत्ययः। गा ऋतेन स्तुतिभिर्गन्तव्येनेन्द्रेण सहायेन बृहस्पत्यादय उद्यन्तु पर्वतादुद्गमयन्तु। ᵛनिगूढाः नितरां स्थापिताः ᵛयाः गाः ᵛबृहस्पतिः ᵛअविन्दत् लप्स्यते तथा ᵛसोमः तदभिषवकारिणः ᵛग्रावाणः च ᵛविप्राः मेधाविनः ᵛऋषयः अङ्गिरसः ᵛच लप्स्यन्ते॥ 'विद्लृ लाभे'। तौदादिकः। तस्मात् 'छन्दसि लुङ्लङ्लिटः' इति भविष्यदर्थे लङ्। 'शे मुचादीनाम्' इति नुमागमः॥ ॥ ६ ॥

'तेऽवदन्' इति सप्तर्चं दशमं सूक्तम्। जुहूर्नाम ब्रह्मवादिन्यृषिः। ब्रह्मपुत्र ऊर्ध्वनाभा नाम वा। षष्ठीसप्तम्यावनुष्टुभौ। शिष्टाः पञ्च त्रिष्टुभः। विश्वे देवा देवता। तथा चानुक्रान्तं—'तेऽवदन्सप्त जुहूर्ब्रह्मजाया ब्राह्मो वोर्ध्वनाभा वैश्वदेवं अनुष्टुबन्तम्' इति। गतो विनियोगः॥

तेऽवदन्प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा।
वीळुहरास्तप उग्रो मयोभूरापो देवीः प्रथमजा ऋतेन ॥ १ ॥

ते। अवदन्। प्रथमाः। ब्रह्मऽकिल्बिषे। अकूपारः। सलिलः। मातरिश्वा।
वीळुऽहराः। तपः। उग्रः। मयःऽभूः। आपः। देवीः। प्रथमऽजाः। ऋतेन॥ १॥

अत्रेतिहासमाचक्षते। जुहूरिति वाङ्नाम। सा ब्रह्मणो जाया च। बृहस्पतेर्वाचस्पतित्वाद्बृहस्पतेर्जुहूर्नाम भार्या बभूव। कदाचिदस्य किल्बिषमस्या दौर्भाग्यरूपेणासांचक्रे। अत एव स एनां पर्यत्याक्षीत्। अनन्तरमादित्यादयो देवा मिथो विचार्यैनामकिल्बिषां कृत्वा पुनर्बृहस्पतये प्रादुरिति। तदत्र वर्ण्यते। ᵛप्रथमाः मुख्याः ᵛते देवाः ᵛब्रह्मकिल्बिषे॥ षष्ठीसमासः। समासस्वरः॥ ब्रह्मणो बृहस्पतेः किल्बिषे पापे जुहूदौर्भाग्यरूपे विषये ᵛअवदन्। निष्कृत्युपायमवोचन्॥ अकारपरत्वादत्र प्रकृतिभावाभावः॥ के ते। ᵛअकूपारः। अत्र यास्कः—'आदित्योऽप्यकूपार उच्यतेऽकूपारो भवति दूरपारः' (निरु. ४. १८) इति। अकुत्सितपारो महागनिरादित्यः ᵛसलिलः अब्देवता वरुणः ᵛमातरिश्वा वायुः ᵛवीळुहराः॥ हरतेरसुनि रूपं हर इति। हरति विनाशयति तमांसीति हरस्तेजः। प्रभूततेजस्कः। ᵛतपः। तृतीयायाः सुः। तपसा तापनेन ᵛउग्रः उद्गूर्णोऽग्निः ᵛमयोभूः सुखस्य भावयिता सोमः ᵛदेवीः देव्यः ᵛआपः। कीदृश्यः। ᵛऋतेन सत्यभूतेन ब्रह्मणा ᵛप्रथमजाः आदित एवोत्पादिताः। एत उपायमुक्त्वा प्रायश्चित्तमप्यकारयन्निति भावः॥

सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः।
अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्या निनाय ॥ २ ॥

सोमः। राजा। प्रथमः। ब्रह्मऽजायाम्। पुनरिति। प्र। अयच्छत्। अहृणीयमानः।
अनुऽअर्तिता। वरुणः। मित्रः। आसीत्। अग्निः। होता। हस्तऽगृह्य। आ। निनाय॥२॥

ᵛप्रथमः मुख्यः ᵛसोमो ᵛराजा ᵛअहृणीयमानः पापापगमनेनालज्जमानः सन् तामेनामकिल्बिषां ᵛब्रह्मजायां ᵛपुनः बृहस्पतये ᵛप्रायच्छत्। ततः ᵛवरुणः ᵛअन्वर्तिता॥ ऋतिः सौत्रो धातुर्घृणायां वर्तते। तस्य तृचि रूपम्॥ सोममनुमोदयिता ᵛआसीत्। सर्वथा त्वं परिगृहाणेति दयामकार्षीत्। तथा ᵛमित्रः च। अनन्तरं ᵛहोता देवानामाह्वाता[2] मनुष्याणां होमनिष्पादको वा ᵛअग्निः ᵛहस्तगृह्य

---

१. ग-त-भ-शता। २. त-भ-देवानां।

तां हस्ते गृहीत्वा ᵛआ ᵛनिनाय आनैषीत्। प्रादादित्यर्थः ॥ हस्तगृह्य। 'नित्यं हस्ते पाणावुपयमने' (पा. सू. १. ४. ७७) इति हस्तशब्दस्य गतिसंज्ञायां ग्रहिणा समासे ल्यप्। एकारलोपश्छान्दसः। यद्वा। हस्तशब्दात् परस्य गृहेश्छान्दसौ समासल्यपौ ॥

हस्तेनैव ग्राह्य आधिरस्या ब्रह्मजायेयमिति चेदवोचन्।
न दूताय प्रह्ये तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥ ३ ॥

हस्तेन। एव। ग्राह्यः। आऽधिः। अस्याः। ब्रह्मऽजाया। इयम्। इति। च। इत्। अवोचन्।
न। दूताय। प्रऽह्ये। तस्थे। एषा। तथा। राष्ट्रम्। गुपितम्। क्षत्रियस्य ॥ ३ ॥

देवा बृहस्पतिमूचुः। हे बृहस्पते ᵛअस्याः ᵛआधिः। आधीयन्त आभरणान्यत्रेत्याधिः शरीरम् ॥ 'उपसर्गे घोः किः' (पा. सू. ३. ३. ९२) इति किप्रत्ययः। अस्याः शरीरं ᵛहस्तेनैव ᵛग्राह्यः ग्रहीतव्यमेव। पुनस्ते देवा इदानीम् ᵛइयं ᵛब्रह्मजाया ᵛइति एव ᵛअवोचन् अवादिषुः ॥ चशब्दश्चेदर्थे। अत एव 'निपातैर्यद्यदिहन्त°' इति तिङो निघाताभावः। 'ब्रूञ् व्यक्तायां वाचि'। लुङि ब्रुवो वचिः। 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः। 'वच उम्' इत्युमागमः। अडागमस्वरः ॥ ᵛइत् अवधारणे। ᵛएषा ब्रह्मजाया पुरा ᵛप्रह्ये ॥ 'हि गतौ वृद्धौ च'। कर्मण्यौणादिकः किप्। तुगभावश्छान्दसः। ङिद्वचने संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः। 'उदात्तस्वरितयोर्यणः°' इति सुपः स्वरितत्वम् ॥ प्रहिताय त्वया भार्यान्वेषणार्थं प्रेषिताय ᵛदूताय ᵛतथा ᵛन ᵛतस्थे। स्वात्मानं न प्रकाशयति ॥ तिष्ठतेर्लिटि 'प्रकाशनस्थेयाख्ययोश्च' (पा. सू. १. ३. २३) इत्यात्मनेपदम्। 'श्लाघह्नुङ्स्थाशपाम्°' (पा. सू. १. ४. ३४) इति दूतस्य संप्रदानसंज्ञा ॥ तत्र दृष्टान्तः। यथा ᵛक्षत्रियस्य राज्ञः ᵛगुपितं रक्षितं ᵛराष्ट्रं राज्यं शत्रवे यथा न प्रकाशयति तद्वदसौ दौर्भाग्ययुक्ततया तस्मै स्वात्मानं न प्रकाशितवती। इदानीं तु तद्राहित्येन प्रकाशमानेयं[1] ब्रह्मजायैवेत्यब्रुवन् ॥

देवा एतस्यामवदन्त पूर्वे सप्तऋषयस्तपसे ये निषेदुः।
भीमा जाया ब्राह्मणस्योपनीता दुर्धां दधाति परमे व्योमन् ॥ ४ ॥

देवाः। एतस्याम्। अवदन्त। पूर्वे। सप्तऽऋषयः। तपसे। ये। निऽसेदुः।
भीमा। जाया। ब्राह्मणस्य। उपऽनीता। दुःऽधाम्। दधाति। परमे। विऽओमन् ॥ ४ ॥

ᵛपूर्वे चिरंतनाः ᵛदेवाः आदित्यादयः ᵛएतस्यां विषये ᵛअवदन्त[2]। इयं पापरहितेत्यवादिषुः। तथा ᵛये ᵛसप्तर्षयः। समासस्वरः। सप्तसंख्याका ऋषयः ᵛतपसे तपश्चरणाय ᵛनिषेदुः निषण्णा बभूवुः। सदेर्लिटि रूपम्। उपसर्गेण समासः। यद्योगादनिघातः। तेऽप्यवादिषुः। ततः ᵛभीमा शत्रुरूपाणां पापानां भयंकरी सुकृतवती एषा ᵛजाया ᵛब्राह्मणस्य बृहस्पतेः ᵛउपनीता। समीपे देवैः स्थापिता ॥ 'णीञ् प्रापणे'। कर्मणि क्तः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। तथा हि। तपःप्रभावः ᵛदुर्धां दुर्धानामपि ᵛपरमे ᵛव्योमन् व्योमन्युत्तमे स्थाने ᵛदधाति विदधाति खलु। तस्मात् एनामपि देवतापरिग्रहरूपस्तपोमहिमा बृहस्पतेरन्तिके स्थापयति ॥

१. त-भ१.२.४.८-°मानेदं। २. त४.५-अवदन्।

ब्रह्मचारी चरति वेविषद्विषः स देवानां भवत्येकमङ्गम् ।
तेन जायामन्वविन्दद्बृहस्पतिः सोमेन नीतां जुह्वं१ न देवाः ॥ ५ ॥

ब्रह्मऽचारी । चरति । वेविषत् । विषः । सः । देवानाम् । भवति । एकम् । अङ्गम् ।
तेन । जायाम् । अनु । अविन्दत् । बृहस्पतिः । सोमेन । नीताम् । जुह्वम् । न । देवाः ॥५॥

एवं स्वपतिर्मामलभतेति जुहूः परोक्षतया वदति । हे ᵛदेवाः पूर्वं सः ᵛब्रह्मचारी जायाभावेन ब्रह्मचारी ᵛचरति । अत एव ᵛविषः सर्वेषु यज्ञेषु व्याप्तवान् देवान् ᵛवेविषत् स्तुतिभिर्हविर्भिश्च व्याप्नुवन् ᵛदेवानाम् ᵛएकम् ᵛअङ्गं ᵛभवति । जायापती यज्ञस्य द्वे अङ्गे खलु ॥ वेविषत् । 'विष्लृ व्याप्तौ' । जौहोत्यादिकः । 'निजां त्रयाणां गुणः श्लौ' (पा. सू. ७. ४. ७५) इत्यभ्यासस्य गुणः । शतुः 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ ᵛतेन देवानां परिचरणेन ᵛबृहस्पतिः ᵛजायां जुहूनामिकां माम् ᵛअन्वविन्दत् । अनुगम्य अलभत१ । नशब्द उपमार्थे । पूर्वं यथा ᵛसोमेन ᵛनीतां 'सोमो ददद्गन्धर्वाय' (ऋ. सं. १०. ८५. ४१) इत्यादिक्रमेण नीतां ᵛजुह्वं जुहूं यथा लब्धवान् तद्वदिदानीमपि ॥ जुह्वम् । 'हु दानादनयोः' । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । 'जुहोतेर्दीर्घश्च' इति द्विर्वचनं दीर्घश्च । 'उदात्तयणो हल्पूर्वात्' इति विभक्त्युदात्तत्वे प्राप्ते 'नोङ्धात्वोः' इति प्रतिषेधे 'उदात्तस्वरितयोर्यणः०' इति स्वरितत्वम् ॥

पुनर्वै देवा अददुः पुनर्मनुष्या उत ।
राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ॥ ६ ॥

पुनः । वै । देवाः । अददुः । पुनः । मनुष्याः । उत ।
राजानः । सत्यम् । कृण्वानाः । ब्रह्मऽजायाम् । पुनः । ददुः ॥ ६ ॥

लाभहेतुमाह । ᵛदेवाः ᵛब्रह्मजायां जुहूं बृहस्पतये ᵛपुनः ᵛअददुः । वैशब्दः प्रसिद्धिवाची । ᵛउत अप्यर्थे । ᵛमनुष्याः अपि ᵛपुनः अददुः । एवं देवमनुष्यैः कृतं दानं ᵛसत्यं यथार्थं ᵛकृण्वानाः कुर्वाणाः ᵛराजानः अपि ᵛपुनः तस्मै ᵛददुः । एवमव्यवहार्यत्वनिमित्तं२ पापमपि व्यनाशयन्निति भावः ॥

पुनर्दाय ब्रह्मजायां कृत्वी देवैर्निकिल्बिषम् ।
ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते ॥ ७ ॥

पुनःऽदाय । ब्रह्मऽजायाम् । कृत्वी । देवैः । निःऽकिल्बिषम् ।
ऊर्जम् । पृथिव्याः । भक्त्वाय । उरुऽगायम् । उप । आसते ॥ ७ ॥

ᵛदेवैः । 'सुपां सुपो भवन्ति' इति जसस्तृतीयादेशः ॥ देवाः ᵛनिकिल्बिषम् ॥ अर्थाभावे अव्ययीभावः । समासस्वरः ॥ तस्याः किल्बिषाभावं ᵛकृत्वी ॥ 'स्नात्व्यादयश्च' इति निपातितः ॥ कृत्वा ᵛब्रह्मजायां ब्रह्मणो बृहस्पतेर्भार्यां ᵛपुनर्दाय पुनर्दत्त्वा ॥ 'पुनश्चनसोश्छन्दसि गतिसंज्ञा वक्तव्या' (पा. सू. १. ४. ६०. २) इति पुनःशब्दस्य गतिसंज्ञायां समासल्यपौ । 'न ल्यपि' (पा. सू. ६.

१. त१.२.३–अभवत; त७-भ१.२.४.८–अभवत् ; भ७–अभ्यवत् । २. ग–एवं देवमनुष्या अव्यव° ।

४. ६९ ) इतीत्वप्रतिषेधः। कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ᵛपृथिव्याः ᵛऊर्जं रसभूतमन्नं हवीरूपं ᵛभक्त्वाय ॥ 'क्त्वो यक्' ( पा. सू. ७. १. ४७ ) इति यगागमः ॥ भक्त्वा विभज्य ᵛउरुगायं बहुकीर्तिं बहुभिः स्तोतव्यं वा बार्हस्पत्यं यज्ञम् ᵛउपासते सेवन्ते ॥ ॥ ७ ॥

'समिद्धः' इत्येकादशर्चमेकादशं सूक्तं त्रैष्टुभम्। भार्गवो जमदग्निर्ऋषिः। तस्य पुत्रो रामो वा यः परशुराम इति प्रख्यातः। आप्रीसूक्तमिदम्। अतः समिदाद्याः सतनूनपातो नराशंसवर्जिताः प्रत्यृचं देवताः। तथा चानुक्रान्तं—'समिद्ध एकादश जमदग्निस्तत्सुतो वा राम आप्रियः' इति। पशौ जामदग्न्यानामिदमाप्रीसूक्तं यद्वाविशेषेण सर्वेषाम्। सूत्रितं च—'समिद्धो अद्येति सर्वेषां यथर्षि वा' ( आश्व. श्रौ. ३. २ ) इति। अग्निचयनाङ्गभूते प्राजापत्ये पशौ सर्वेषां नित्यमिदमाप्रीसूक्तम्। सूत्रितं च—'प्राजापत्ये तु जामदग्न्यः सर्वेषाम्' ( आश्व. श्रौ. ३. २ ) इति ॥

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः।
आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥ १ ॥

सम्ऽइद्धः। अद्य। मनुषः। दुरोणे। देवः। देवान्। यजसि। जातऽवेदः।
आ। च। वह। मित्रऽमहः। चिकित्वान्। त्वम्। दूतः। कविः। असि। प्रऽचेताः ॥ १ ॥

हे ᵛजातवेदः जातप्रज्ञाग्ने ᵛदेवः स्वतेजसा दीप्यमानस्त्वं ᵛमनुषः मनुष्यस्य यष्टुः ᵛदुरोणे। गृहनामैतत्। दुरवने आयासेन रक्षितव्ये गृहे ᵛअद्य अस्मिन् कर्मणि ᵛसमिद्धः सम्यक् प्रज्वालितः सन् ᵛदेवान् इन्द्रादीन् ᵛयजसि। हविर्भिः पूजय ॥ समिद्धः। 'इन्धी दीप्तौ'। कर्मणि क्तः। 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥ हे ᵛमित्रमहः स्तुत्यस्तोतृलक्षणत्वेन मित्रभूतानां स्तोतॄणां पूजयितः तैः पूज्यमान वाग्ने ᵛचिकित्वान् तैः कृताः स्तुतीः प्रजानन् चेतनावान् वा त्वमस्मदीये यज्ञे देवान् ᵛआ ᵛवह ᵛच। आप्रापय ॥ 'वह प्रापणे'। लोटि रूपम्। 'चवायोगे प्रथमा' इति न निघातः ॥ तथा ᵛकविः क्रान्तप्रज्ञः अत एव ᵛप्रचेताः प्रकृष्टज्ञानः ᵛत्वं ᵛदूतः देवानां हविष्प्रापणेन हितकारी भवसि ॥

तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व।
मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः ॥ २ ॥

तनूऽनपात्। पथः। ऋतस्य। यानान्। मध्वा। सम्ऽअञ्जन्। स्वदय। सुऽजिह्व।
मन्मानि। धीभिः। उत। यज्ञम्। ऋन्धन्। देवऽत्रा। च। कृणुहि। अध्वरम्। नः ॥ २ ॥

हे ᵛतनूनपात्। नपादित्यनन्तरापत्यनामधेयम्। गौरत्र[1] तनूरुच्यते[1] तता अस्यां भोगाः क्षीरादय इति। तस्याः पयो जायते पयस आज्यं तस्मादग्निः। यद्वा। अन्तरिक्षे तता आपस्तन्वः ताभ्य ओषध्यादयः तेभ्योऽग्निरिति। एवंरूप हे ᵛसुजिह्व शोभनज्वाल। यद्वा जिह्वेति वाङ्नाम। शोभनवागग्ने ᵛऋतस्य यज्ञस्य ᵛयानान् फलप्राप्तिहेतून् ᵛपथः मार्गान् हविराख्यान् ᵛमध्वा मदकरेण रसेन यद्वा वाग्जनितेन रसेन ᵛसमञ्जन् सम्यग्दीपयन् ᵛस्वदय स्वादय। स्वादूकुरु ॥ 'स्वद आस्वादने'। णिच्युपधावृद्ध्यभावश्छान्दसः ॥ किंच ᵛमन्मानि। मन्यतेरर्चतिकर्मणः। मननीयानि अस्मदभिप्रेतानि स्तोत्राणि ᵛधीभिः प्रज्ञाभिः कर्मभिर्वा ᵛउत अपि च ᵛयज्ञं यजनीयं हविश्च ᵛऋन्धन्

१. त१.२.३.४.५.६.८-म—गौरुच्यते।

समृद्धानि कुर्वन् ᵛनः अस्मदीयम् ᵛअध्वरं यज्ञं ᵛदेवत्रा देवेषु ᵛकृणुहि कुरु ॥ देवशब्दात् 'देवमनुष्य०' इत्यादिना सप्तम्यर्थे त्राप्रत्ययः ॥

आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥ ३ ॥

आऽजुह्वानः । ईड्यः । वन्द्यः । च । आ । याहि । अग्ने । वसुऽभिः । सऽजोषाः ।
त्वम् । देवानाम् । असि । यह्व । होता । सः । एनान् । यक्षि । इषितः । यजीयान् ॥३॥

हे ᵛअग्ने त्वमस्मत्कर्मणि[1] ᵛआ ᵛयाहि आगच्छ । कीदृशः । ᵛआजुह्वानः देवानामाह्वाता । 'हु दानादनयोः' । जौहोत्यादिकः । अभ्यस्तस्वरः । ᵛईड्यः । ईडिरध्येषणाकर्मा । अध्येष्यः प्रार्थ्यमानः[2] ᵛवन्द्यः स्तोतव्यः ᵛवसुभिः देवैः ᵛसजोषाः सह प्रीयमाणः । आगत्य च हे ᵛयह्व । महन्नामैतत् । हे महन् सः ᵛत्वं ᵛदेवानां ᵛहोता आह्वाता ᵛअसि । ततः ᵛयजीयान् ॥ यष्टृशब्दादीयसुनि 'तुरिष्ठेमेयःसु' इति तृचो लोपः ॥ यष्टृतरः ᵛसः त्वम् ᵛइषितः अस्माभिरध्येषितः प्रार्थितः सन् एतान् देवान् ᵛयक्षि यज । हविषा पूजय ॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥ ४ ॥

प्राचीनम् । बर्हिः । प्रऽदिशा । पृथिव्याः । वस्तोः । अस्याः । वृज्यते । अग्रे । अह्नाम् ।
वि । ऊँ इति । प्रथते । विऽतरम् । वरीयः । देवेभ्यः । अदितये । स्योनम् ॥ ४ ॥

यदिदं ᵛप्राचीनं प्रागञ्चितं प्राङ्मुखं ᵛबर्हिः अस्ति तदिदं ᵛपृथिव्याः वेदिलक्षणायाः ᵛवस्तोः ॥ 'वस आच्छादने' । तुन्प्रत्ययः । 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी । यद्वा । भावलक्षणे तोसुन् द्रष्टव्यः । वसनायाच्छादनार्थम् ᵛअह्नाम् ᵛअग्रे पूर्वाह्णे ᵛप्रदिशा प्रकर्षेण दिश्यमानेन मन्त्रेण ᵛअस्याः प्राच्या दिशः ᵛवृज्यते स्तूयते आह्रियते । तथा च निगमः—'त आ वहन्ति कवयः पुरस्तात्' (तै. सं. १.१.२.१) इत्यादि । तच्चाहृतं ᵛवरीयः उरुतरं बर्हिः ᵛवितरं विस्तीर्णतरं यथा भवति तथा ᵛवि ᵛप्रथते । त्रिविधमेव वेद्यां प्रस्तृतं भवति । तथा ᵛदेवेभ्यः ᵛअदितये[3] वेदिलक्षणायै पृथिव्यै च ᵛस्योनं सुखकरं भवति । विस्तीर्णे बर्हिषि देवाः सुखं निषीदन्ति ॥

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥ ५ ॥

व्यचस्वतीः । उर्विया । वि । श्रयन्ताम् । पतिऽभ्यः । न । जनयः । शुम्भमानाः ।
देवीः । द्वारः । बृहतीः । विश्वम्ऽइन्वाः । देवेभ्यः । भवत । सुप्रऽअयनाः ॥ ५ ॥

ᵛव्यचस्वतीः । व्यचो व्यापनम् । तद्वत्यः ॥ 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥ ता द्वारदेवताः ᵛउर्विया ॥ उरुशब्दात्तृतीयैकवचने 'इयाडियाजीकाराणामुपसंख्यानम्' (पा. सू. ७. १.

---

१. ग-त-भ२.८–त्वस्मिन् कर्मणि; भ१–त्वमस्मि कर्मणि; भ४–त्वमस्मित्कर्मणि;. भ७–त्वमस्म कर्मणि । २. त४.५–पूज्यमानः । ३. ग१.२–अदितये अदीनायै ।

३९. १ ) इतीयादेशः ॥ उरुत्वेन ᵛवि ᵛश्रयन्तां विशेषेणाश्रिता भवन्तु । तत्र दृष्टान्तः । ᵛपतिभ्यो ᵛन यथा पतीनामर्थाय संभोगकाले ᵛशुम्भमानाः शोभमानाः ᵛजनयः जाया विश्रयन्ति तद्वदस्मिन् कर्मणि[1] विश्रयन्ताम् । हे ᵛबृहतीः महत्यो हे ᵛविश्वमिन्वाः ॥ हविः प्रीणनार्थः । तस्मात् कर्मण्युपपदे अण् । इदित्वान्नुम् । 'तत्पुरुषे कृति बहुलम्' इत्यत्र बहुलवचनात् द्वितीयाया अप्यलुक् ॥ सर्वस्य प्रीणयित्र्यो हे ᵛद्वारः ᵛदेवीः द्वाराभिमानिन्यो हे देव्यः यूयं ᵛदेवेभ्यः देवानामर्थाय ᵛसुप्रायणाः सुप्रगमनाः सुविवृताः ᵛभवत ॥ ॥ ८ ॥

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥ ६ ॥

आ । सुस्वयन्ती इति । यजते इति । उपाके इति । उषसानक्ता । सदताम् । नि । योनौ ।
दिव्ये इति । योषणे इति । बृहती इति । सुरुक्मे इति सुऽरुक्मे ।
अधि । श्रियम् । शुक्रऽपिशम् । दधाने इति ॥ ६ ॥

ᵛसुस्वयन्ती । 'अय पय गतौ' । शतर्युपसर्गस्य सोर्द्विर्वचनं छान्दसम् । सुष्ठु अयन्त्यौ गच्छन्त्यौ । यद्वा । स्वपेर्ण्यन्तस्य वर्णलोपः ॥ सुष्वापयन्त्यौ । ᵛयजते यष्टव्ये ᵛउपाके उपक्रान्ते ᵛउषासानक्ता उषाश्च नक्तं च ॥ द्वन्द्वे 'उषासोषसः' ( पा. सू. ६. ३. ३१ ) इत्युषासादेशः[2] । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥ अहोरात्रदेव्यौ ᵛयोनौ अस्मिन् यज्ञस्थाने ᵛनि[3] नितरां नियमेन वा ᵛआ ᵛसदताम् आसीदताम् । सदेर्लुङि लृदित्वाच्च्लेरङ् । कीदृश्यौ । ᵛदिव्ये दिवि भवे ᵛयोषणे योषिताविव प्रीणयित्र्यौ । यद्वा । योषणे समिते[4] परस्परतोऽविविक्ते । ᵛबृहती गुणैर्महत्यौ ᵛसुरुक्मे शोभनदीप्ते ॥ रुक्मम् । रोचतेर्मक्प्रत्यये कुत्वे च कृते रूपम् ॥ ᵛशुक्रपिशं शोचमानरूपां[5] ᵛश्रियम् ᵛअधि ᵛदधाने अधिकं धारयन्त्यौ ॥

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ ७ ॥

दैव्या । होतारा । प्रथमा । सुऽवाचा । मिमाना । यज्ञम् । मनुषः । यजध्यै ।
प्रऽचोदयन्ता । विदथेषु । कारू इति । प्राचीनम् । ज्योतिः । प्रऽदिशा । दिशन्ता ॥ ७ ॥

ᵛदैव्या ॥ 'देवाद्यञञौ' इति यञ्प्रत्ययः[6] । देवसंबन्धिनौ होतारौ होमनिष्पादकौ होतृनामकावग्न्यादित्यावस्मिन् यज्ञे आसीदताम् । कीदृशौ । ᵛप्रथमा मनुष्यहोतुः पूर्वभाविनौ ᵛसुवाचा शोभनस्तोत्रौ ᵛमनुषः मनुष्यस्य सर्वस्य यष्टुः ᵛयजध्यै यागनिवृत्तये ॥ यजेस्तुमर्थे शध्यैन्प्रत्ययः ॥ ᵛयज्ञं ᵛमिमाना निर्मिमानावुत्पादयन्तौ ᵛविदथेषु । विदन्त्यत्रर्त्विजः स्वस्वकर्माणीति विदथा यज्ञाः । तेष्वृत्विजो यजमानांश्च ᵛप्रचोदयन्ता प्रेरयन्तौ ᵛकारू स्तुतीनां कर्तारौ ᵛप्राचीनं पूर्वस्यां दिशि यष्टव्यत्वेन स्थितमाहवनीयाख्यं ᵛज्योतिः ᵛप्रदिशा प्रकृष्टेनोपदिष्टमार्गेण यद्वा प्रदिश्यमानेन मन्त्रेण ᵛदिशन्ता निर्वहन्तौ ॥

१. त४.५–यज्ञकर्मणि । २. त४.५–°देशः सुपो डादेशः । ३. त-भ–'नि' नास्ति । ४. त-भ–संमिते । ५. त४.५–शोभमानरूपां । ६. त-भ–प्रत्ययः ।

आ नो॑ य॒ज्ञं भार॑ती॒ तूय॑मे॒त्विळा॑ मनु॒ष्वदि॒ह चे॒तय॑न्ती ।
ति॒स्रो दे॒वीर्ब॒र्हिरेदं स्यो॒नं सर॑स्वती॒ स्वप॑सः सदन्तु ॥ ८ ॥

आ । नः॒ । य॒ज्ञम् । भार॑ती । तूय॑म् । ए॒तु॒ । इळा॑ । म॒नु॒ष्वत् । इ॒ह । चे॒तय॑न्ती ।
ति॒स्रः । दे॒वीः । ब॒र्हिः । आ । इ॒दम् । स्यो॒नम् । सर॑स्वती । सु॒ऽअप॑सः । स॒द॒न्तु॒ ॥ ८ ॥

भारती । भरत आदित्यः । तस्य स्वभूता दीप्तिः ॥ 'तस्येदम्' इत्यर्थे उत्सादित्वादञ् (पा. सू. ४. १. ८६ ) । 'टिड्ढाणञ्' इति ङीप् । नः अस्मदीयं यज्ञं तूयं[1] क्षिप्रम् आ एतु आगच्छतु । तथा मनुष्वत् मनुष्यो यथा इदं मया कर्तव्यमिति जानाति तद्वत् चेतयन्ती जानाना इळा देवी च इह अस्मिन् कर्मण्यागच्छतु । तथा सरस्वती च । स्वपसः सुकर्माणः । अप इति कर्मनाम ॥ आप्नोतेरसुनि आपः कर्माख्यायां[2] ह्रस्वः । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥ एताः तिस्रो देवीः देव्यः स्योनं सुखकरम् इदं बर्हिः इमं यज्ञम् आ सदन्तु आसीदन्तु प्राप्नुवन्तु ॥ सदेर्लोटि सीदादेशाभावश्छान्दसः ॥

त्वाष्ट्रस्य पशोर्वपायां 'य इमे' इत्येषानुवाक्या । सूत्रितं च—'य इमे द्यावापृथिवी जनित्री तन्नस्तुरीपमध पोषयित्नु' ( आश्व. श्रौ. ३. ८ ) इति ॥

य इ॒मे द्यावा॑पृथि॒वी जनि॑त्री रू॒पैरपिं॑श॒द्भुव॑नानि॒ विश्वा॑ ।
तम॒द्य हो॑तरिषि॒तो यजी॑यान्दे॒वं त्वष्टा॑रमि॒ह य॑क्षि वि॒द्वान् ॥ ९ ॥

यः । इ॒मे इति॑ । द्यावा॑पृथि॒वी इति॑ । जनि॑त्री॒ इति॑ । रू॒पैः । अपिं॑शत् । भुव॑नानि । विश्वा॑ ।
तम् । अ॒द्य । हो॒त॒रिति॑ । इ॒षि॒तः । यजी॑यान् । दे॒वम् । त्वष्टा॑रम् । इ॒ह । य॒क्षि॒ । वि॒द्वान् ॥ ९ ॥

यः त्वष्टा देवः जनित्री विश्वस्य जनयित्र्यौ इमे द्यावापृथिवी ॥ द्वन्द्वे 'दिवो द्यावा' इति द्यावादेशः । आद्युदात्तः । पृथिवीशब्दो ङीषन्तत्वेनान्तोदात्तः[3] । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोः प्रकृतिस्वरत्वम्[4] ॥ द्यावापृथिव्यौ रूपैः देवतिर्यङ्मनुष्याद्याकारैः अपिंशत् रूपवत्यावकरोत् ॥ 'पिश अवयवे' । तौदादिकः । 'शे मुचादीनाम्' इति नुमागमः ॥ तथा विश्वा सर्वाणि भुवनानि भूतजातानि रूपयुक्तान्यकरोत् । हे होतः यजीयान् यष्टृतमः विद्वान् सर्वं जानानः त्वम् इषितः अस्माभिरध्येषितः प्रार्थितः सन् इह अस्मिन् कर्मणि अद्य अस्मिन् दिने तं त्वष्टारं देवं यक्षि । स्तुतिभिर्हविर्भिर्वा यज पूजय ॥

उ॒पाव॑सृज॒ त्मन्या॑ सम॒ञ्जन्दे॒वानां॒ पाथ॑ ऋतु॒था ह॒वींषि॑ ।
व॒न॒स्पतिः॑ शमि॒ता दे॒वो अ॒ग्निः स्वद॑न्तु ह॒व्यं मधु॑ना घृ॒तेन॑ ॥ १० ॥

उ॒प॒ऽअव॑सृज । त्मन्या॑ । स॒म्ऽअ॒ञ्जन् । दे॒वाना॑म् । पाथः॑ । ऋ॒तु॒ऽथा । ह॒वींषि॑ ।
व॒न॒स्पतिः॑ । श॒मि॒ता । दे॒वः । अ॒ग्निः । स्वद॑न्तु । ह॒व्यम् । मधु॑ना । घृ॒तेन॑ ॥ १० ॥

हे वनस्पते यूप त्मन्या ॥ आत्मन्शब्दस्य तृतीयैकवचने यादेशः । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः ॥ आत्मनैव ऋतुथा ऋतौ ऋतौ प्राप्ते काले देवानाम् अर्थाय पाथः पशुलक्षण-

१. त१.२.३.६.७.८-भ-'तूयं' नास्ति । २. त४.५-कर्माख्यायां ह्रस्वो नुट् चेति । ३. त-भ-मु-ङीषंतत्वेनाद्युदात्तः । ४. त४.५-युगपत्प्रकृतिस्वरत्वं ।

मन्नमन्यानि च vहवींषि vसमञ्जन् सम्यग्व्यक्तीकुर्वन् vउपावसृज उपागम्य प्रयच्छ ॥ 'गतिर्गतौ' (पा. सू. ८. १. ७० ) इति गतेर्निघातः ॥ किंच vवनस्पतिः योऽयं यूपः vशमिता एतन्नामकः vदेवः यद्वा शामित्रः vअग्निः देवो दीप्यमान आहवनीयाख्योऽग्निश्चैते त्रयः vमधुना मधुरेण vघृतेन । यद्वा मधुनोदकेन प्रोक्षणोपनयनादिगतेन घृतेन च । vहव्यं हवनयोग्यं vस्वदन्तु स्वादूकुर्वन्तु ॥

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ॥ ११ ॥

सद्यः । जातः । वि । अमिमीत । यज्ञम् । अग्निः । देवानाम् । अभवत् । पुरःऽगाः ।
अस्य । होतुः । प्रऽदिशि । ऋतस्य । वाचि । स्वाहाऽकृतम् । हविः । अदन्तु । देवाः ॥ ११ ॥

अयमग्निः vसद्यः तदानीमेव vजातः जायमान एव vयज्ञं vव्यमिमीत विशेषेण निर्मिमीते । उत्पादयति ॥ 'माङ् माने शब्दे च' । जौहोत्यादिकः ॥ अत एवायम् vअग्निः vदेवानां vपुरोगाः प्रथमगामी मुख्यः vअभवत् ॥ गमेर्विट्प्रत्यय आत्वे च कृते रूपम् ॥ ततः vप्रदिशि प्रकृष्टायां दिशि प्राच्याम् vऋतस्य आहवनीयात्मनागतस्य vअस्य vहोतुः होमनिष्पादकस्याग्नेः vवाचि । अत्र वागाश्रय आस्यं लक्ष्यते । वाच्यास्ये vस्वाहाकृतं स्वाहाकारेण प्रक्षिप्तं vहविः सर्वे vदेवाः vअदन्तु भक्षयन्तु । इदं सूक्तं यास्केन सम्यगभ्यधायि ( निरु. ८.५–२१ ) । तदत्रानुसंधीयताम् ॥ ॥ ९ ॥

'मनीषिणः' इति दशर्चं द्वादशं सूक्तं वैरूपस्याष्ट्रादंष्ट्रस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रम्यते— 'मनीषिणो दशाष्ट्रादंष्ट्रः' इति । गतो विनियोगः ॥

मनीषिणः प्र भरध्वं मनीषां यथायथा मतयः सन्ति नृणाम् ।
इन्द्रं सत्यैरेरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः ॥ १ ॥

मनीषिणः । प्र । भरध्वम् । मनीषाम् । यथाऽयथा । मतयः । सन्ति । नृणाम् ।
इन्द्रम् । सत्यैः । आ । ईरयाम । कृतेभिः । सः । हि । वीरः । गिर्वणस्युः । विदानः ॥ १ ॥

हे vमनीषिणः स्तोतारः vमनीषां मनस ईशित्रीं स्तुतिमिन्द्राय vप्र vभरध्वं कुरुत । vनृणां कर्मनेतॄणां युष्माकं vयथायथा[1] vमतयः vसन्ति भवन्ति तथा बुद्ध्यनुसारेण स्तुतिं कुरुध्वम्[2] । वयं च vकृतेभिः कृतैः vसत्यैः यथार्थभूतैः स्तोत्रैः vइन्द्रम् vएरयाम यज्ञं प्रत्यागमयाम ॥ 'ईर गतौ' । ण्यन्तस्य लोट् ॥ vहि यतः vविदानः जानानः समर्थः[3] स इन्द्रः vगिर्वणस्युः । गीर्भिर्वनन्ति संभजन्त[4] इति गीर्वणसः स्तोतारः ॥ वनतेरसुनि रूपम् । उपपदस्य दीर्घाभावश्छान्दसः । तदन्तात् क्यप् । 'क्याच्छन्दसि' इत्युप्रत्ययः ॥ स्तोतॄन् कामयमानः खलु । अतस्तमभिष्टुत ॥

ऋतस्य हि सदसो धीतिरद्यौत्सं गार्ष्टेयो वृषभो गोभिरानट् ।
उदतिष्ठत्तविषेणा रवेण महान्ति चित्सं विव्याचा रजांसि ॥ २ ॥

ऋतस्य । हि । सदसः । धीतिः । अद्यौत् । सम् । गार्ष्टेयः । वृषभः । गोभिः । आनट् ।
उत् । अतिष्ठत् । तविषेण । रवेण । महान्ति । चित् । सम् । विव्याच । रजांसि ॥ २ ॥

---

१. त१.२.३.६.७.८-म–यथा । २. ग-त१.२.३.६.७.८-म–प्रकुरुध्वं । ३. ग–वीरः समर्थः । ४. ग–संभजंति ।

vऋतस्य उदकस्य vसदसः स्थानस्यान्तरिक्षस्य vधीतिः धारकः स इन्द्रः vअद्यौत् द्योतते प्रकाशते। vहि प्रसिद्धौ॥ 'द्युत दीप्तौ'। लुङि 'द्युद्भ्यो लुङि' इति परस्मैपदम्। च्लेर्लुक् छान्दसः। हलन्तलक्षणा वृद्धिरपि॥ यद्वा। अद्यौत्। तादृश इन्द्रो यज्ञमभिगच्छति॥ 'द्यु अभिगमे[1]' आदादिकः। लङ्[2]। 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः॥ vगार्ष्टेयः। सकृत्प्रसूता धेनुर्गृष्टिः। तस्या अपत्यं vवृषभो vगोभिः vसम् vआनट् संव्याप्नोति। तथैषोऽपि सर्वं स्वमहिम्ना व्याप्नोति। तथा vतविषेण। महन्नामैतत्। महता vरवेण शब्देन vउदतिष्ठत्। उच्छ्रित उन्नतोऽभवत्। अत एव vमहान्ति vचित् महान्त्यपि vरजांसि उदकानि भुवनानि वा vसं vविव्याच संव्याप्नोति॥

इन्द्रः किल श्रुत्या अस्य वेद स हि जिष्णुः पथिकृत्सूर्याय।
आन्मेनां कृण्वन्नच्युतो भुवद्गोः पतिर्दिवः सनजा अप्रतीतः॥ ३॥

इन्द्रः। किल। श्रुत्यै। अस्य। वेद। सः। हि। जिष्णुः। पथिऽकृत्। सूर्याय।
आत्। मेनाम्। कृण्वन्। अच्युतः। भुवत्। गोः। पतिः। दिवः। सनऽजाः। अप्रतिऽइतः॥३॥

vअस्य अस्मदीयस्य स्तोत्रस्य vश्रुत्यै श्रवणाय vइन्द्रः vकिल इन्द्र एव vवेद जानाति। vस vहि स एव vजिष्णुः शत्रूणां जयशीलः vसूर्याय vपथिकृत् मार्गकर्ता भवति। किंच vअच्युतः शत्रुभिरगन्तव्यो वृषणश्वस्य vमेनाम् आत्मानं vकृण्वन् कुर्वन् इन्द्रः vआत्। आगच्छत्यस्मदीयं यज्ञम्। 'मेनाभवो वृषणश्वस्य सुक्रतो' (ऋ. सं. १. ५१. १३) इति मन्त्रान्तरम्॥ 'अस गतिदीप्त्यादानेषु'। भौवादिकः। ---॥ vदिवः द्युलोकस्य च vपतिः[3] vभुवत् अभूत्॥ भवतेर्लेट्। वाक्यभेदादनिघातः॥

इन्द्रो मह्ना महतो अर्णवस्य व्रतामिनादङ्गिरोभिर्गृणानः।
पुरूणि चिन्नि तताना रजांसि दाधार यो धरुणं सत्यताता॥ ४॥

इन्द्रः। मह्ना। महतः। अर्णवस्य। व्रता। अमिनात्। अङ्गिरःऽभिः। गृणानः।
पुरूणि। चित्। नि। ततान। रजांसि। दाधार। यः। धरुणम्। सत्यऽताता॥ ४॥

vइन्द्रः vअङ्गिरोभिः ऋषिभिः vगृणानः स्तूयमानः सन् vमहतो vअर्णवस्य॥ 'अर्णसः सलोपश्च' (का. ५. २. १०९. ३) इति वप्रत्ययः॥ उदकवतो मेघस्य vव्रता[4] व्रतानि कर्माणि vमह्ना स्वमहिम्नैव vअमिनात् अहिंसीत्॥ 'मीङ् हिंसायाम्'। लङि 'मीनातेर्निगमे' इति ह्रस्वः॥ ततः vपुरूणि vचित् बहून्येव vरजांसि उदकानि vनि vततान नीचीनान्यकरोत्। vयः इन्द्रः vसत्यताता सत्यैर्देवैस्तते। यद्वा। सत्यशब्दादपि स्वार्थिकस्तातिल् द्रष्टव्यः। सत्ये। द्युलोके vधरुणं धारकं बलं vदाधार[5] अधारयत्[5]॥

इन्द्रो दिवः प्रतिमानं पृथिव्या विश्वा वेद सवना हन्ति शुष्णम्।
मही चिद्द्यामातनोत्सूर्येण चास्कम्भ चित्कम्भनेन स्कभीयान्॥ ५॥

१. त४.५–अभिगमने। २. त-भ–लुङ्। ३. ग-त४.५–पतिः स्वामी। ४. त-भ–'व्रता' नास्ति। ५. त-भ–दाधारयत्।

इन्द्रः । दिवः । प्रतिऽमानम् । पृथिव्याः । विश्वा । वेद । सवना । हन्ति । शुष्णम् ।
महीम् । चित् । द्याम् । आ । अतनोत् । सूर्येण । चास्कम्भ । चित् । स्कम्भनेन । स्कभीयान् ॥५॥

दिवः द्युलोकस्य पृथिव्याः च प्रतिमानं महत्त्वेन प्रतिनिधिः इन्द्रः विश्वा सर्वाणि सवना सवनानि वेद सोमपानार्थं जानाति । शुष्णं सर्वस्य शोषकमेतन्नामानमसुरं हन्ति । वाक्यभेदादनिघातः । अपि च महीं चित् महतीमपि[1] द्यां सूर्येण अतनोत् । सर्वत्र प्रकाशयुक्तामकरोत् । स्कभीयान् स्कम्भयितृणां मध्ये श्रेष्ठः सः स्कम्भनेन चित् निरोधनसाधनेन सामर्थ्येनैव चास्कम्भ । द्युलोकमवरुद्धमकरोत् ॥ स्कम्भिः सौत्रो धातुः । लिटि 'तुजादीनाम्°' इति दीर्घः । चित्स्कम्भनेन इत्यत्र संहितायां सलोपः । उत्पूर्वस्य स्तम्भेः 'उदः स्थास्तम्भोः°' (पा.सू. ८. ४. ६१) इति सलोप उक्तः । चित्पूर्वस्य स्कम्भेरपि भवति छन्दोविषयत्वात् ॥ ॥ १० ॥

**वज्रेण हि वृत्रहा वृत्रमस्तरदेवस्य शूशुवानस्य मायाः ।**
**वि धृष्णो अत्र धृषता जघन्थाथाभवो मघवन् बाह्वोजाः ॥ ६ ॥**

वज्रेण । हि । वृत्रऽहा । वृत्रम् । अस्तः । अदेवस्य । शूशुवानस्य । मायाः ।
वि । धृष्णो इति । अत्र । धृषता । जघन्थ । अथ । अभवः । मघऽवन् । बाहुऽओजाः ॥६॥

हे इन्द्र वृत्रहा वृत्रस्य हन्ता वज्रेण वृत्रम् अस्तः अस्तृणाः । अवधीः ॥ स्तृणातेर्लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । सिपि गुणः । हियोगादनिघातः ॥ अनन्तरं हे धृष्णो धर्षणशील त्वम् अदेवस्य अद्योतमानस्य शूशुवानस्य स्वबलेन वर्धमानस्य तस्य मायाः धृषता समर्थेन वज्रेण अत्र अस्मिन् काले एव वि जघन्थ विनाशितवानसि ॥ हन्तेर्लिटि थलि 'अभ्यासाच्च' इति कुत्वम् ॥ अथ हे मघवन् धनवन्निन्द्र बाह्वोजाः भुजबलवान् अभवः ॥

**सचन्त यदुषसः सूर्येण चित्रामस्य केतवो रामविन्दन् ।**
**आ यन्नक्षत्रं ददृशे दिवो न पुनर्यतो नकिरद्धा नु वेद ॥ ७ ॥**

सचन्त । यत् । उषसः । सूर्येण । चित्राम् । अस्य । केतवः । राम् । अविन्दन् ।
आ । यत् । नक्षत्रम् । ददृशे । दिवः । न । पुनः । यतः । नकिः । अद्धा । नु । वेद ॥ ७ ॥

यत् यदा उषसः उषःकालाः सूर्येण सूर्यात्मकेनेन्द्रेण सचन्त संगच्छन्ते । 'सच समवाये' । भौवादिकः । तदानीम् अस्य स्वभूताः केतवः सर्वस्य प्रज्ञापका रश्मयः चित्रां नानावर्णां रां रायं श्रियम् अविन्दन् अलभन्त । पुनः उदयानन्तरं यत् यदा दिवः नक्षत्रं न ददृशे न दृश्यते ॥ दृशेः कर्मणि लिट् । यद्योगादनिघातः ॥ तदानीं यतः ॥ इणः[2] शत्रन्तस्य शसि 'शतुरनुमो नद्यजादी' इति विभक्तेरुदात्तत्वम् ॥ सर्वत्र गच्छतोऽस्य रश्मीन् नकिः न कश्चित् नु वेद जानाति । एतत् अद्धा सत्यमेव ॥

**दूरं किल प्रथमा जग्मुरासामिन्द्रस्य याः प्रसवे सस्रुरापः ।**
**क्व स्विदग्रं क्व बुध्न आसामापो मध्यं क्व वो नूनमन्तः ॥ ८ ॥**

---

१. त-भ-महीमपि । २. त-भ-मु-'इणः' नास्ति ।

दूरम् । किल । प्रथमाः । जग्मुः । आसाम् । इन्द्रस्य । याः । प्रऽसवे । सस्रुः । आपः ।
क्व । स्वित् । अग्रम् । क्व । बुध्नः । आसाम् । आपः । मध्यम् । क्व । वः । नूनम् । अन्तः ॥८॥

आसाम् अपां मध्ये प्रथमाः प्रथमगामिन्यस्ता आपः दूरं किल जग्मुः । दूरमेव[1] गताः[1] । याः आपः इन्द्रस्य प्रसवे प्रेरणे ॥ 'षू प्रेरणे'। 'जवसवौ चेति वक्तव्यम्' ( पा. सू. ३. ३. ५६. ४ ) इत्यबपवादेऽच् । 'थाथघञ्क्ताजबित्रकाणाम्' इत्युत्तरपदान्तोदात्तत्वम् ॥ तस्य आज्ञायां सस्रुः सरन्ति । गच्छन्ति खलु । अथ प्रत्यक्षकृतः । हे आपः आसां युष्माकम् अग्रं क्व स्वित् । कुत्र वर्तते । बुध्नः मूलं च क्व । तथा वः युष्माकं मध्यं च क्व नूनम् इदानीं युष्माकम् अन्तः अवसानं च क्व । सर्वगतत्वादनिर्ज्ञायमानगमना आसन्नित्यर्थः ॥ क्व । किंशब्दात् सप्तम्यर्थे 'किमोऽत्' इत्यत्प्रत्ययः । 'क्वाति' इति क्वादेशः । तित्स्वरितः । अन्तः । अमेर्गत्यर्थस्य 'असिहसि०' इत्यादिना तन्प्रत्ययः[2] ॥

सृजः सिन्धूँरहिना जग्रसानाँ आदिदेताः प्र विविज्रे जवेन ।
मुमुक्षमाणा उत या मुमुच्रेऽधेदेता न रमन्ते नितिक्ताः ॥ ९ ॥

सृजः । सिन्धून् । अहिना । जग्रसानान् । आत् । इत् । एताः । प्र । विविज्रे । जवेन ।
मुमुक्षमाणाः । उत । याः । मुमुच्रे । अध । इत् । एताः । न । रमन्ते । निऽतिक्ताः ॥ ९ ॥

हे इन्द्र अहिना अहन्तव्येन वृत्रेण मेघेन वा जग्रसानान् ॥ 'ग्रस अदने'। अनुदात्तेत् । छन्दसि लिटः कानच् ॥ ग्रस्ताः सिन्धून् स्यन्दमाना अपः सृजः असृजः[3] निरगमयः । आदित् । इदवधारणे । अनन्तरमेव एताः आपः जवेन वेगेन प्र विविज्रे । सर्वत्र अत्यन्तं चलिता बभूवुः ॥ 'ओविजी भयचलनयोः'। अनुदात्तेत् । लिटि 'इरयो रे' ( पा. सू. ६.४.७६ ) इतीरयो रेआदेशः ॥ उत अपि च मुमुक्षमाणाः इन्द्रेण मोचयितुमिष्यमाणाः याः आपः मुमुच्रे इन्द्रेण मोचिता अभूवन् ॥ मुचेः कर्मणि लिट् ॥ अधेत् अनन्तरमेव नितिक्ताः नितरां शुद्धा आपः न रमन्ते । एकत्र न क्रीडन्ति । किंतु सर्वत्र गमनशीला इत्यर्थः ॥

सध्रीचीः सिन्धुमुशतीरिवायन्त्सनाज्जार आरितः पूर्भिदासाम् ।
अस्तमा ते पार्थिवा वसून्यस्मे जग्मुः सूनृता इन्द्र पूर्वीः ॥ १० ॥

सध्रीचीः । सिन्धुम् । उशतीःऽइव । आयन् । सनात् । जारः । आरितः । पूःऽभित् । आसाम् ।
अस्तम् । आ । ते । पार्थिवा । वसूनि । अस्मे इति । जग्मुः । सूनृताः । इन्द्र । पूर्वीः ॥१०॥

सध्रीचीः ॥ 'सहस्य सध्रिः' इति सध्र्यादेशः । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । अलोपदीर्घौ । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥ सहाञ्चनाः सहगमना आपः सिन्धुं समुद्रं भर्तारम् आयन् आगच्छन् । तत्र दृष्टान्तः । उशतीरिव यथा कामयमानाः स्त्रियः स्वपतिमभिगच्छन्ति तद्वत् । जारः शत्रूणां जारयिता पूर्भित् इन्द्रः सनात् चिरादेव आसाम् अपाम् आरितः प्रेरकत्वेन स्वामी भवति । हे इन्द्र अस्मे अस्माकं स्वभूतानि पार्थिवा पार्थिवानि वसूनि धनवत्प्रीणयितॄणि हवींषि पूर्वीः बह्व्यः सूनृताः वाचः स्तुतिलक्षणाश्च ते त्वदीयम् अस्तं

१. त-भ१.४.८-मु-दूरमेवागताः । २. त-तत्प्रत्ययः । ३. त-भ-'असृजः' नास्ति ।

गृहम् ᵛआ ᵛजग्मुः आगच्छन्तु । यद्वा अस्मदीयाः स्तुतयस्ते गृहं गच्छन्तु । अस्माकं गृहं त्वदीयानि पार्थिवानि धनान्यभिगच्छन्तु ॥ गमेश्छन्दसि सार्वकालिको लिट् ॥ ॥ ११ ॥

'इन्द्र पिब' इति दशर्चं त्रयोदशं सूक्तं त्रैष्टुभमैन्द्रम् । नभःप्रभेदनो नाम विरूपगोत्र ऋषिः । तथा चानुक्रम्यते—'इन्द्र पिब नभःप्रभेदनः' इति । गतो विनियोगः ॥

इन्द्र पिब॑ प्रतिका॒मं सु॒तस्य॑ प्रातः सा॒वस्तव॒ हि पू॒र्वपी॑तिः ।
हर्ष॑स्व॒ हन्त॑वे शूर॒ शत्रू॑नु॒क्थेभि॑ष्टे वी॒र्या॒३॒॑ प्र ब्र॑वाम ॥ १ ॥

इन्द्र॑ । पिब॑ । प्र॒ति॒ऽका॒मम् । सु॒तस्य॑ । प्रा॒तः॒ऽसा॒वः । तव॑ । हि । पू॒र्वऽपी॑तिः ।
हर्ष॑स्व । हन्त॑वे । शू॒र॒ । शत्रू॑न् । उ॒क्थेभि॑ः । ते॒ । वी॒र्या॑ । प्र । ब्र॒वा॒म॒ ॥ १ ॥

हे ᵛइन्द्र त्वं ᵛप्रतिकामं ये ये कामास्तांस्तान्प्रति । अव्ययीभावसमासः । तस्य स्वरः । यथेच्छं ᵛसुतस्य अभिषुतस्य यो भागस्तुभ्यं दातव्यस्तं ᵛपिब ॥ आमन्त्रितस्याविद्यमानत्वेन पादादित्वाद्-निघातः ॥ ᵛप्रातःसावः प्रातःसवनेऽभिषूयमाणः सोमः ᵛतव ᵛहि । तृतीयार्थे षष्ठी । त्वयैव ᵛपूर्वपीतिः प्रथमत एव पातव्यः । यद्वा । प्रातःसावः । सप्तम्याः सुः । प्रातःसवने तवैव प्रथमपानं खलु । ऐन्द्रवायवग्रहे ह्यादित एवेन्द्रः पिबति ॥ तत्पुरुषे दासीभारादित्वात्पूर्वपदान्तोदात्तत्वम् । यद्वा बहुव्रीहिः ॥ ततो हे ᵛशूर समर्थ त्वं ᵛशत्रून् ᵛहन्तवे हन्तुं ᵛहर्षस्व हृष्टो भव । अथ ᵛते त्वदीयानि ᵛवीर्या वृत्रहननादिलक्षणानि वीर्याणि ᵛउक्थेभिः उक्थैः शस्त्रैः ᵛप्र ᵛब्रवाम प्रकर्षेण वदाम ॥

यस्ते॒ रथो॒ मन॑सो॒ जवी॑या॒नेन्द्र॒ तेन॑ सोम॒पेया॑य याहि ।
तू॒यमा ते॒ हर॑यः॒ प्र द्र॑वन्तु॒ येभि॒र्यासि॒ वृष॑भि॒र्मन्द॑मानः ॥ २ ॥

यः । ते॒ । रथ॑ः । मन॑सः । जवी॑यान् । आ । इ॒न्द्र॒ । तेन॑ । सो॒म॒ऽपेया॑य । या॒हि॒ ।
तू॒यम् । आ । ते॒ । हर॑यः । प्र । द्र॒व॒न्तु॒ । येभि॑ः । यासि॑ । वृष॑ऽभिः । मन्द॑मानः ॥ २ ॥

हे ᵛइन्द्र ᵛमनसः अपि ᵛजवीयान् अतिशयेन[1] गन्ता ᵛते त्वदीयः ᵛयः ᵛरथः अस्ति ᵛतेन रथेन ᵛसोमपेयाय अस्मदीयं सोमं पातुम् ᵛआ ᵛयाहि आगच्छ ॥ 'पा पाने'। भावेऽचो यत् । 'ईद्यति' इतीत्वम् । आर्धधातुकलक्षणो गुणः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ तथा ᵛते त्वदीयाः ᵛहरयः रथे संयुक्ता अश्वाः ᵛतूयं क्षिप्रम् ᵛआ आभिमुख्येन ᵛप्र ᵛद्रवन्तु प्रगच्छन्तु । ᵛवृषभिः सेक्तृभिः ᵛयेभिः यैरश्वैः ᵛमन्दमानः मोदमानः सन् ᵛयासि गच्छसि । 'हरी इन्द्रस्य' ( नि. १. १५. १ ) इति वचनादिन्द्रस्य द्वावेवाश्वाविति न चोदनीयम् 'आ त्वा सहस्रमा शतम्' ( ऋ. सं. ८. १. २४ ) इत्यादिनिगमान्तरे दर्शनात् ॥

हरि॑त्वता॒ वर्च॑सा॒ सूर्य॑स्य॒ श्रेष्ठै॑ रू॒पैस्त॒न्वं॑ स्पर्शयस्व ।
अ॒स्माभि॑रिन्द्र॒ सखि॑भिर्हुवा॒नः स॑ध्रीची॒नो मा॑दयस्वा नि॒षद्य॑ ॥ ३ ॥

हरि॑त्वता । वर्च॑सा । सूर्य॑स्य । श्रेष्ठै॑ः । रू॒पैः । त॒न्व॑म् । स्प॒र्श॒य॒स्व॒ ।
अ॒स्माभि॑ः । इ॒न्द्र॒ । सखि॑ऽभिः । हु॒वा॒नः । स॒ध्रीचीन॑ः । मा॒द॒य॒स्व॒ । नि॒ऽसद्य॑ ॥ ३ ॥

---

१. त-भ–'अतिशयेन' नास्ति ।

हे ᵛइन्द्र ᵛहरित्वता ॥ हरिच्छब्दान्मतुपः 'झयः' (पा. सू. ८.२.१०) इति वत्वम् ॥ हरिद्वर्णयुक्तेन ᵛसूर्यस्य ᵛवर्चसा तेजसा तत्सदृशैः ᵛश्रेष्ठैः प्रशस्यतमैरात्मीयैः ᵛरूपैः ᵛतन्वम् आत्मीयं शरीरं मदीयं वा । यद्वा । तायत इति तनूर्यज्ञः । तं ᵛस्पर्शयस्व । तेजोयुक्तं कुरु । किंच ᵛसध्रीचीनः ॥ 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खप्रत्ययः ॥ मरुद्भिः सहाञ्चनस्त्वं ᵛसखिभिः सखिभूतैः ᵛअस्माभिः ᵛहुवानः आहूयमानः सन् ᵛनिषद्य यज्ञे निषण्णो भूत्वा ᵛमादयस्व । सोमपानेन हृष्टो भव ॥

यस्य॒ त्यत्ते॑ महि॒मानं॒ मदे॑ष्वि॒मे म॒ही रोद॑सी॒ नावि॑विक्ताम् ।
तदोक॒ आ हरि॑भिरिन्द्र यु॒क्तैः प्रि॒येभि॑र्याहि प्रि॒यमन्न॒मच्छ॑ ॥ ४ ॥

यस्य॑ । त्यत् । ते॒ । म॒हि॒मान॑म् । मदे॑षु । इ॒मे इति॑ । म॒ही इति॑ । रोद॑सी॒ इति॑ । न । अवि॑विक्ताम् ।
तत् । ओकः॑ । आ । हरि॑ऽभिः । इ॒न्द्र॒ । यु॒क्तैः । प्रि॒येभिः॑ । या॒हि॒ । प्रि॒यम् । अन्न॑म् । अच्छ॑ ॥४॥

हे ᵛइन्द्र ᵛइमे ᵛमही महत्यौ ᵛरोदसी द्यावापृथिव्यौ ᵛयस्य ᵛते तव सोमपानेन जनितेषु ᵛमदेषु संभूतं ᵛत्यत् तं ᵛमहिमानं ᵛन ᵛअविविक्तां न पृथक्कुरुतः किंतु[1] यस्य[1] महिम्न्येव तिष्ठतः ॥ 'विचिर् पृथग्भावे' । जौहोत्यादिकः । लङि 'संज्ञापूर्वको विधिरनित्यः' इत्यभ्यासस्य गुणाभावः । यद्योगादनिघातः ॥ ᵛप्रियेभिः प्रियतमैः रथे ᵛयुक्तैः ᵛहरिभिः अश्वैः ᵛप्रियं प्रीणनकरम् ᵛअन्नं सोमलक्षणम् ᵛअच्छ अभिलक्ष्य ᵛतदोकः अस्मदीयं यज्ञसदनम् ᵛआ ᵛयाहि आगच्छ ॥

यस्य॒ शश्व॑त्पपि॒वाँ इ॑न्द्र॒ शत्रू॑ननानुकृ॒त्या रण्या॑ च॒कर्थ॑ ।
स ते॒ पुरं॑धिं॒ तवि॑षीमियर्ति॒ स ते॒ मदा॑य सु॒त इ॑न्द्र॒ सोमः॑ ॥ ५ ॥

यस्य॑ । शश्व॑त् । प॒पि॒ऽवान् । इ॒न्द्र॒ । शत्रू॑न् । अ॒न॒नु॒ऽकृ॒त्या । रण्या॑ । च॒कर्थ॑ ।
सः । ते॒ । पुर॑म्ऽधिम् । तवि॑षीम् । इ॒यर्ति॒ । सः । ते॒ । मदा॑य । सु॒तः । इ॒न्द्र॒ । सोमः॑ ॥५॥

हे ᵛइन्द्र ᵛपपिवान् ॥ पिबतेः[2] क्वसौ 'वस्वेकाजाद्घसाम्' इतीडागमः ॥ सोमं पीतवांस्त्वम् ᵛअनानुकृत्या अनुकरणरहितेन सकृत्प्रहारेण शत्रुहननसमर्थेन ᵛरण्या सांयुगीनेनायुधेन[3] । रणशब्दात् साध्वर्थे प्राग्घितीयो[4] यत् ॥ ᵛयस्य यजमानस्य ᵛशत्रून् ᵛशश्वत् बहुवारं ᵛचकर्थ हतवानसि ॥ 'कृञ् हिंसायाम्' । लिटि थलि यद्योगादनिघाते लित्स्वरः ॥ ᵛसः यष्टा[5] ᵛते त्वदर्थं ᵛतविषीं महतीं ᵛपुरंधिं बह्वीं स्तुतिम् ᵛइयर्ति प्रेरयति ॥ 'ऋ गतौ' । जौहोत्यादिकः । 'अर्तिपिपर्त्योः०' इत्यभ्यासस्येत्वम् । 'अभ्यासस्यासवर्णे' इतीयङ् ॥ हे ᵛइन्द्र ᵛसुतः अभिषुतः ᵛसः ᵛसोमः ᵛते ᵛमदाय समर्थो भवति । यद्वा । स यष्टा सुतः सोमः । सुब्व्यत्ययः । अभिषुतं सोमं त्वन्मदाय प्रेरयति ॥ ॥ १२ ॥

इ॒दं ते॒ पात्रं॒ सन॑वित्तमिन्द्र॒ पिबा॒ सोम॑मे॒ना श॑तक्रतो ।
पू॒र्ण आ॑हा॒वो म॑दि॒रस्य॒ मध्वो॒ यं विश्व॑ इ॒दभि॒हर्य॑न्ति दे॒वाः ॥ ६ ॥

इ॒दम् । ते॒ । पात्र॑म् । सन॑ऽवित्तम् । इ॒न्द्र॒ । पिब॑ । सोम॑म् । ए॒ना । श॒त॒क्र॒तो॒ इति॑ शत॑ऽक्रतो ।
पू॒र्णः । आ॒ऽहा॒वः । म॒दि॒रस्य॑ । मध्वः॑ । यम् । विश्वे॑ । इत् । अ॒भि॒ऽहर्य॑न्ति । दे॒वाः ॥६॥

---

१. ग२–इंद्रस्य; त१.२.३.६.७.८-भ१.२.४.८-मु–किंतु तस्य; भ७–किंतु । २. ग-त१.२.३.६.७.८-भ-मु–पातेः । ३. त-भ-मु–सांयुगीनेनायुधेन । ४. त-भ–प्राग्वहतीयो । ५. ग-त-भ–यथा ।

हे ᵛइन्द्र ᵛते त्वदर्थं ᵛपात्रं चमसादिकं ᵛसनवित्तम्। अस्माभिश्चिरादेव लब्धम्। लाभे'। कर्मणि निष्ठा। हे ᵛशतक्रतो बहुकर्मन्निन्द्र ᵛएना एनेन पात्रेण ᵛसोमं ᵛपिब। यतः ᵛमदिरस्य मदकरस्य ᵛमध्वः मधुनः सोमस्य ᵛआहावः पानस्थानीयपात्रविशेषः ᵛपूर्णः पूरितोऽभूत्॥ 'ह्वेञ् स्पर्धायाम्'। 'निपानमाहावः' (पा. सू. ३. ३. ७४) इति निपातितः। स्तुतिभिराहूयमाना देवा अत्र सोमं पिबन्तीति। थाथादिस्वरः॥ ᵛयम् ᵛइत् यमाहावमेव ᵛविश्वे सर्वे ᵛदेवाः ᵛअभिहर्यन्ति अभिकामयन्ते। 'हर्य गतिकान्त्योः'। भौवादिकः। यद्योगात्तिङो निघाताभावे 'तिङि चोदात्तवति' इति गतेर्निघातः॥

वि हि त्वामिन्द्र पुरुधा जनासो हितप्रयसो वृषभ ह्वयन्ते।
अस्माकं ते मधुमत्तमानीमा भुवन्त्सवना तेषु हर्य॥ ७॥

वि। हि। त्वाम्। इन्द्र। पुरुधा। जनासः। हितऽप्रयसः। वृषभ। ह्वयन्ते।
अस्माकम्। ते। मधुमत्ऽतमानि। इमा। भुवन्। सवना। तेषु। हर्य॥ ७॥

हे ᵛइन्द्र ᵛवृषभ कामानां वर्षक ᵛहितप्रयसः। प्रय इत्यन्ननाम प्रीणनकारित्वात्। संभृतहविष्काः ᵛजनासः जनाः ᵛपुरुधा बहुधा। हिरवधारणे। ᵛत्वाम् एव ᵛवि ᵛह्वयन्ते विविधमाह्वयन्ति॥ 'ह्वेञ् स्पर्धायाम्'[1]। 'निसमुपविभ्यो ह्वः' इत्यात्मनेपदम्॥ ᵛअस्माकं स्वभूतानि ᵛइमा इमानि ᵛसवना सवनानि ᵛते त्वदर्थं ᵛमधुमत्तमानि अतिशयेन सोमवन्ति ᵛभुवन् अभवन्। तस्मात्त्वं ᵛतेषु सवनेषु ᵛहर्य सोमान् कामयस्व॥

प्र ते इन्द्र पूर्व्याणि प्र नूनं वीर्या वोचं प्रथमा कृतानि।
सतीनमन्युरश्रथायो अद्रिं सुवेदनामकृणोर्ब्रह्मणे गाम्॥ ८॥

प्र। ते। इन्द्र। पूर्व्याणि। प्र। नूनम्। वीर्या। वोचम्। प्रथमा। कृतानि।
सतीनऽमन्युः। अश्रथयः। अद्रिम्। सुऽवेदनाम्। अकृणोः। ब्रह्मणे। गाम्॥ ८॥

हे ᵛइन्द्र ᵛते त्वदीयानि ᵛप्रथमा आदितः ᵛकृतानि ᵛपूर्व्याणि पुरातनानि च ᵛवीर्या[2] वीर्याणि ᵛनूनम् इदानीं ᵛप्र ᵛवोचं प्रकर्षेण वदामि। एकः प्रशब्दः पूरणः॥ वोचम्। लुङि ब्रुवो वचिः। च्लेरङ्॥ कानि तानि। ᵛसतीनमन्युः। सतीनमित्युदकनाम। उदकाभिवर्षणबुद्धियुक्तस्त्वम् ᵛअद्रिं मेघम् ᵛअश्रथयः वज्रेणाहिंसीः। ᵛब्रह्मणे बृहस्पतये ᵛगां पणिभिरपहृतां ᵛसुवेदनां सुष्ठु ज्ञापनीयाम् ᵛअकृणोः अकरोरित्यादीनि॥

नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम्।
न ऋते त्वत्क्रियते किं चनारे महामर्कं मघवञ्चित्रमर्च॥ ९॥

नि। सु। सीद। गणऽपते। गणेषु। त्वाम्। आहुः। विप्रऽतमम्। कवीनाम्।
न। ऋते। त्वत्। क्रियते। किम्। चन। आरे। महाम्। अर्कम्। मघऽवन्। चित्रम्। अर्च॥ ९॥

हे ᵛगणपते त्वं ᵛगणेषु स्तोतृगणेषु ᵛसु सुष्ठु ᵛनि ᵛषीद। स्तुतिश्रवणार्थं निषण्णो भव। यतः ᵛकवीनां क्रान्तप्रज्ञानां मध्ये ᵛत्वां ᵛविप्रतमम् अतिशयेन मेधाविनमिति ᵛआहुः। किंच ᵛत्वत्

---

१. त-भ—स्पर्धायां वाचि। २. ग-त४.५-भ—'वीर्या' नास्ति।

ᐯऋते ॥ 'अन्यारादितरर्ते॰' ( पा. सू. २. ३. २९ ) इति पञ्चमी ॥ त्वां वर्जयित्वा ᐯकिं ᐯचन कर्म ᐯआरे दूरे समीपे वा ᐯन क्रियते। तस्मान्निषीद। ततो हे ᐯमघवन् धनवन्निन्द्र ᐯमहां महान्तम् ᐯअर्कम् अर्चनीयमस्मदीयं त्रिवृत्पञ्चदशादिलक्षणं स्तोमं ᐯचित्रं नानारूपं कृत्वा ᐯअर्च पूजय। विधेहि ॥ 'अर्च पूजायाम्'। भौवादिकः ॥

**अभिख्या नो मघवन्नाधमानान्त्सखे बोधि वसुपते सखीनाम्।**
**रणं कृधि रणकृत्सत्यशुष्माभक्ते चिदा भजा राये अस्मान् ॥ १० ॥**

अभिऽख्या । नः । मघऽवन् । नाधमानान् । सखे । बोधि । वसुऽपते । सखीनाम् ।
रणम् । कृधि । रणऽकृत् । सत्यऽशुष्म । अभक्ते । चित् । आ । भज । राये । अस्मान् ॥ १० ॥

हे ᐯमघवन् धनवन्निन्द्र ᐯनाधमानान् ॥ 'नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु'। भौवादिकः। अनुदात्तेत् ॥ याचमानान् ᐯनः अस्मान ᐯअभिख्या[1] अभिख्यापनेन तेजसा युक्तान् कुरु। प्रसिद्धान् वा कुरु। हे ᐯसखे धनदानेन हे ᐯवसुपते वसूनां स्वामिन् त्वं ᐯसखीनां स्तोतृत्वेन सखिभूतानामस्माकं स्वभूतानि स्तोत्राणि ᐯबोधि बुध्यस्व ॥ 'बुध अवगमने'। भौवादिकः। लोटि छान्दसः शपो लुक्। 'छन्दस्युभयथा' इति हेरार्धधातुकत्वेनाङित्त्वात् 'अङितश्च' इति हेर्धिभावः। अत एव गुणः। सार्वधातुकत्वेन ङित्त्वादन्तोदात्तत्वम्। वर्णलोपश्छान्दसः ॥ हे ᐯरणकृत् शत्रुभिः सह युद्धकर्तः अत एव हे ᐯसत्यशुष्म यथार्थबलोपेत त्वं ᐯरणं ᐯकृधि कुरु। शत्रून् जहि ॥ करोतेर्लोटि 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिः ॥ किंच ᐯअभक्ते ᐯचित् असंभजनीये स्थानेऽपि ᐯअस्मान् ᐯराये धनाय ᐯआ ᐯभज भागिनः कुरु ॥ 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः ॥ ॥१३॥ ॥९॥

दशमेऽनुवाके षोडश सूक्तानि। तत्र 'तमस्य' इति दशर्चं प्रथमं सूक्तमैन्द्रम्। शतप्रभेदनो नाम वैरूप ऋषिः। अन्त्या त्रिष्टुप् शिष्टा जगत्यः। तथा चानुक्रान्तं–'तमस्य शतप्रभेदनस्त्रिष्टुबन्तम्'[2] इति। दशरात्रस्याष्टमेऽहनि मरुत्वतीय एतत्सूक्तम्। सूत्रितं च—'तमस्य द्यावापृथिवी महाँ इन्द्रो नृवदिति मरुत्वतीयम्' ( आश्व. श्रौ. ८. ७ ) इति ॥

**तमस्य द्यावापृथिवी सचेतसा विश्वेभिर्देवैरनु शुष्ममावताम्।**
**यदैत्कृण्वानो महिमानमिन्द्रियं पीत्वी सोमस्य क्रतुमाँ अवर्धत ॥ १ ॥**

तम् । अस्य । द्यावापृथिवी इति । सऽचेतसा । विश्वेभिः । देवैः । अनु । शुष्मम् । आवताम् ।
यत् । ऐत् । कृण्वानः । महिमानम् । इन्द्रियम् । पीत्वी । सोमस्य । क्रतुऽमान् । अवर्धत ॥ १ ॥

ᐯसचेतसा सह चेतयन्त्यौ ᐯद्यावापृथिवी द्यावापृथिव्यौ ᐯविश्वेभिः सर्वैः ᐯदेवैः सह ᐯअस्य ॥ अन्वादेशेऽशादेशोऽनुदात्तः ( पा. सू. २. ४. ३२ ) ॥ एतस्येन्द्रस्य ᐯतं ᐯशुष्मं शत्रूणां शोषकं बलम् ᐯअनु ᐯआवतां रक्षताम्। तस्य बलं पूर्वमस्मान् रक्षतु पश्चादेतेऽपि रक्षतामिति भावः। अवतेर्लङ्। ᐯकृण्वानः वृत्रवधादिकं कुर्वाणः सः ᐯमहिमानम् ᐯइन्द्रियम् इन्द्रस्यात्मनः पर्याप्तं वीर्यं च ᐯयत् यदा ᐯऐत् प्राप्नोत् ॥ 'इण् गतौ'। आदादिकः। 'आडजादीनाम्' इत्याडागमः ॥ तदा ᐯक्रतुमान् कर्मवान् सः ᐯसोमस्य ᐯपीत्वी सोमं पीत्वा ᐯअवर्धत ॥ 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानसंज्ञा। 'चतुर्थ्यर्थे बहुलम्' इति षष्ठी। पीत्वी। 'स्नात्व्यादयश्च' इति निपातितः ॥

---

१. त-भ-'अभिख्या' नास्ति। २. अनु–शतप्रभेदनोऽन्त्या त्रिष्टुप्।

तम॑स्य॒ विष्णु॑र्महि॒मान॒मोज॑सां॒शुं द॑ध॒न्वान्मधु॑नो॒ वि र॑प्शते ।
दे॒वेभि॒रिन्द्रो॑ म॒घवा॑ स॒याव॑भिर्वृ॒त्रं ज॑घ॒न्वाँ अ॑भव॒द्वरे॑ण्यः ॥ २ ॥

तम् । अ॒स्य॒ । विष्णुः॑ । म॒हि॒मान॑म् । ओज॑सा । अं॒शुम् । द॒ध॒न्वान् । मधु॑नः । वि । र॒प्श॒ते॒ ।
दे॒वेभिः॑ । इन्द्रः॑ । म॒घऽवा॑ । स॒याव॑ऽभिः । वृ॒त्रम् । ज॒घ॒न्वान् । अ॒भ॒व॒त् । वरे॑ण्यः ॥ २ ॥

ᐯविष्णुः एतन्नामकः । व्यासो यज्ञो वा । ᐯमधुनः मदकरस्य सोमस्य ᐯअंशुं लताखण्डं ᐯदधन्वान् प्रेरयन् ॥ धन्वेर्गत्यर्थस्य क्वसौ इदित्वान्नुमागमे कृते वलि लोपः ॥ ᐯओजसा स्ववीर्येण संजातम् ᐯअस्य इन्द्रस्य ᐯतं ᐯमहिमानं ᐯवि ᐯरप्शते विविधं शब्दयति । स्तौति । ᐯमघवा धनवान् ᐯसयावभिः ॥ यातेः 'आतो मनिन्°' इति क्वनिप् ॥ सहगन्तृभिः ᐯदेवेभिः देवैः मरुद्भिश्च ᐯवृत्रं ᐯजघन्वान् हतवान् ᐯइन्द्रः ᐯवरेण्यः सर्वैर्वरणीयः संभजनीयः ᐯअभवत् ॥

वृ॒त्रेण॒ यदहि॑ना॒ बिभ्र॒दायु॑धा स॒मस्थि॑था यु॒धये॒ शंस॑मा॒विदे॑ ।
विश्वे॑ ते॒ अत्र॑ म॒रुतः॑ स॒ह त्मनाव॑र्धन्नुग्र महि॒मान॑मिन्द्रि॒यम् ॥ ३ ॥

वृ॒त्रेण॑ । यत् । अहि॑ना । बिभ्र॑त् । आयु॑धा । स॒म्ऽअस्थि॑थाः । यु॒धये॑ । शंस॑म् । आ॒ऽविदे॑ ।
विश्वे॑ । ते॒ । अत्र॑ । म॒रुतः॑ । स॒ह । त्मना॑ । अव॑र्धन् । उ॒ग्र॒ । म॒हि॒मान॑म् । इ॒न्द्रि॒यम् ॥ ३ ॥

ᐯयुधये योधनाय ᐯआयुधा आयुधानि वज्रादीनि ᐯबिभ्रत् धारयन्निन्द्रस्त्वं ᐯयत् यदा ᐯअहिना आहन्तव्येन ᐯवृत्रेण[1] ᐯसमस्थिथाः सहास्थाः ॥ तिष्ठतेर्लुङि 'समवप्रविभ्यः स्थः' (पा. सू. १. ३. २२) इत्यात्मनेपदम् । 'स्थाघ्वोरिच्च' इति सिचः कित्त्वमिकारश्चान्तादेशः । 'ह्रस्वादङ्गात्' (पा. सू. ८. २. २७) इति सिचो लोपः । यद्योगादनिघातः । 'तिङि चोदात्तवति' इति गतेर्निघातः ॥ तत् ᐯआविदे ॥ कृत्यार्थे केन्प्रत्ययः ॥ तव वृत्रवधादिकं वीर्यं प्रज्ञापयितुं ᐯशंसम् अशंसम् । शस्त्रैरहं स्तौमि ॥ 'शन्सु स्तुतौ' । लङ् । वाक्यभेदादनिघातः ॥ किंच हे ᐯउग्र उद्गूर्णबल ᐯअत्र अस्मिन् काले एव ᐯते त्वदीयं ᐯमहिमानमिन्द्रियं वीर्यं च ᐯविश्वे सर्वे ᐯमरुतः ᐯत्मना आत्मना ᐯसह एव ᐯअवर्धन् । वर्णलोपश्छान्दसः । अवर्धयन् । मरुतो हीन्द्रस्य वीर्यं भवति ॥

ज॒ज्ञा॒न ए॒व व्य॑बाधत॒ स्पृधः॒ प्राप॑श्यद्वी॒रो अ॒भि पौंस्यं॒ रण॑म् ।
अवृ॑श्चद॒द्रिमव॑ स॒स्यदः॑ सृ॒जदस्त॑भ्ना॒न्नाकं॑ स्वप॒स्यया॑ पृ॒थुम् ॥ ४ ॥

ज॒ज्ञा॒नः । ए॒व । वि । अ॒बा॒ध॒त॒ । स्पृधः॑ । प्र । अ॒प॒श्य॒त् । वी॒रः । अ॒भि । पौंस्य॑म् । रण॑म् ।
अवृ॑श्चत् । अ॒द्रिम् । अव॑ । स॒ऽस्यदः॑ । सृ॒जत् । अस्त॑भ्नात् । नाक॑म् । सु॒ऽअ॒प॒स्यया॑ । पृ॒थुम् ॥ ४ ॥

स इन्द्रः ᐯजज्ञान ᐯएव ॥ 'जनी प्रादुर्भावे' । छान्दसस्य लिटः कानच् ॥ जायमाना एव ᐯस्पृधः शत्रून् ᐯव्यबाधत अत्यर्थमपीडयत् ॥ स्पृधः । 'स्पर्ध संघर्षे' । क्विप् । 'अपस्पृधेथाम्°' इति निपातनेनैकत्र संप्रसारणदर्शनादत्रापि भवति ॥ अत एव ᐯवीरः समर्थः सः ᐯरणं संग्रामम् अभिलक्ष्य ᐯपौंस्यम् आत्मीयं बलं ᐯप्रापश्यत् । अस्यैतावद्बलमिति प्रकर्षेण पश्यति । जानाति । किंच ᐯअद्रिं मेघम् ᐯअवृश्चत् वर्षणार्थमच्छिनत्[2] । अनन्तरं ᐯसस्यदः ॥ 'स्यन्दू प्रस्रवणे' । क्विप् । शसि नलोपः । सह स्यन्दमाना अपः ᐯअव ᐯसृजत् अवाङ्मुखमसृजत् निरगमयत् । तथा सः ᐯपृथुं

१. त१.२.३-भ–वृत्रेणास्थिताः । २. त१.२.३.६.७.८-भ१.२.४.८–वर्षणाद्यर्थं° ।

महान्तं ᵛनाकं द्युलोकं ᵛस्वपस्यया ॥ सुप आत्मनः क्यच्। 'अ प्रत्ययात्' (पा. सू. ३.३.१०२) इति स्त्रियामप्रत्ययः ॥ शोभनकर्मेच्छया ᵛअस्तम्नात्। निरुद्धमकरोत् ॥ स्तम्भिः सौत्रो धातुः ॥

आदिन्द्रः सत्रा तविषीरपत्यत वरीयो द्यावापृथिवी अबाधत ।
अवाभरद्धृषितो वज्रमायसं शेवं मित्राय वरुणाय दाशुषे ॥ ५ ॥

आत् । इन्द्रः । सत्रा । तविषीः । अपत्यत । वरीयः । द्यावापृथिवी इति । अबाधत ।
अव । अभरत् । धृषितः । वज्रम् । आयसम् । शेवम् । मित्राय । वरुणाय । दाशुषे ॥ ५ ॥

ᵛआत् अपि च स ᵛइन्द्रः ᵛतविषीः महतीः सेनाः ᵛसत्रा सहैव ᵛअपत्यत अगच्छत्। 'पद गतौ'। दैवादिकः। वर्णव्यत्ययः॥ यद्वा। पत्यत इत्यैश्वर्यकर्मा। सेनानामीष्टे[1]। तासामीश्वरोऽभवदित्यर्थः। स एव ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛवरीयः॥ तृतीयायाः सुः॥ उरुतरेण महिम्ना ᵛअबाधत। तयोरन्तःस्थितान् शत्रूनवधीदित्यर्थः। ᵛधृषितः शत्रुवधे प्रगल्भः सन् ᵛआयसम् अयोमयं ᵛवज्रम् ᵛअवाभरत् अधारयत्[2]। किमर्थम्। ᵛमित्राय ᵛवरुणाय ᵛदाशुषे हविर्दत्तवते यज्वने च ᵛशेवं सुखं कर्तुम्॥ ॥ १४ ॥

इन्द्रस्यात्र तविषीभ्यो विरप्शिन ऋघायतो अरंहयन्त मन्यवे ।
वृत्रं यदुग्रो व्यवृश्चदोजसापो बिभ्रतं तमसा परीवृतम् ॥ ६ ॥

इन्द्रस्य । अत्र । तविषीभ्यः । विऽरप्शिनः । ऋघायतः । अरंहयन्त । मन्यवे ।
वृत्रम् । यत् । उग्रः । वि । अवृश्चत् । ओजसा । अपः । बिभ्रतम् । तमसा । परिऽवृतम् ॥ ६ ॥

ᵛअत्र अस्मिन् काल एव ᵛविरप्शिनः महतो विविधं शब्दायमानस्य वा ᵛऋघायतः शत्रून् हिंसतः ᵛइन्द्रस्य ᵛतविषीभ्यः। षष्ठ्यर्थे चतुर्थी। बलानां ᵛमन्यवे प्रख्यापनाय[3] ᵛअरंहयन्त। आपो निरगच्छन्। रहिर्गत्यर्थः। ᵛउग्रः उद्गूर्णः सः ᵛअपः उदकानि ᵛबिभ्रतं धारयन्तं ᵛतमसा ᵛपरीवृतं परितो वेष्टितम्। वृणोतेः कर्मणि क्तः। 'गतिरनन्तरः' इति स्वरः। संहितायाम् 'उपसर्गस्य घञि°' (पा. सू. ६. ३. १२२) इति दीर्घः॥ तं ᵛवृत्रं ᵛयत् यस्मिन् काले ᵛओजसा स्ववीर्येण ᵛव्यवृश्चत् अत्यर्थमवधीत्॥

या वीर्याणि प्रथमानि कर्त्वा महित्वेभिर्यतमानौ समीयतुः ।
ध्वान्तं तमोऽव दध्वसे हत इन्द्रो मह्ना पूर्वहूतावपत्यत ॥ ७ ॥

या । वीर्याणि । प्रथमानि । कर्त्वा । महिऽत्वेभिः । यतमानौ । सम्ऽईयतुः ।
ध्वान्तम् । तमः । अव । दध्वसे । हते । इन्द्रः । मह्ना । पूर्वऽहूतौ । अपत्यत ॥ ७ ॥

ᵛमहित्वेभिः मंहनीयैः स्वबलैः ᵛयतमानौ युद्धाय प्रयत्नं कुर्वन्तौ इन्द्रवृत्रौ[4] ᵛप्रथमानि पूर्वभावीनि ᵛकर्त्वा। कृत्यार्थे त्वन्प्रत्ययः। कर्तव्यानि ᵛया यानि ᵛवीर्याणि ᵛसमीयतुः संयोजयामासतुः॥ 'इण् गतौ'। लिटि 'दीर्घ इणः किति' (पा. सू. ७. ४. ६९) इति दीर्घः॥ तयोर्मध्ये

---

१. न१.२३.७-भ१.४.७.८-सेना ईष्टे; भ२-सेनामीष्टे। २. त१.२.३.६.८-भ१.४-आधारयत्। ३. त-भ-अप्रख्यापनाय। ४. त-इन्द्रवृत्रौ' नास्ति।

इन्द्रेण वृत्रे ᵛहते सति ᵛध्वान्तम् अतिनिबिडं ᵛतमः ᵛअव ᵛदध्वसे। अवध्वस्तं विनष्टमभूत्॥ ध्वंसेर्लिट्। किरवान्नलोपः॥ ᵛइन्द्रः तु ᵛमह्ना स्वमहिम्ना ᵛपूर्वहूतौ प्रथमाह्वाने ᵛअपत्यत अगच्छत्। शूराणां मध्येऽयमेव प्रथममाहूयमानोऽभवदित्यर्थः॥

विश्वे॑ दे॒वासो॑ अध॒ वृष्ण्या॑नि॒ तेऽव॑र्धय॒न्त्सोम॑वत्या वच॒स्यया॑।
र॒द्धं वृ॒त्रमहि॒मिन्द्र॑स्य॒ हन्म॑ना॒ग्निर्न जम्भै॑स्तृ॒ष्वन्न॑मावयत्॥ ८॥

विश्वे॑। दे॒वासः॑। अध॑। वृष्ण्या॑नि। ते॒। अव॑र्धयन्। सोम॑ऽवत्या। व॒च॒स्यया॑।
र॒द्धम्। वृ॒त्रम्। अहि॑म्। इन्द्र॑स्य। हन्म॑ना। अ॒ग्निः। न। जम्भैः॑। तृ॒षु। अन्न॑म्। आ॒व॒य॒त्॥८॥

हे इन्द्र ᵛअध वृत्रहननानन्तरं ᵛविश्वे ᵛदेवासः देवा ऋत्विजः ᵛसोमवत्या सोमयुक्तया ᵛवचस्यया स्तुतीच्छया ᵛते त्वदीयानि ᵛवृष्ण्यानि बलानि ᵛअवर्धयन्[1] वर्धयन्ति[1]। ᵛइन्द्रस्य ᵛहन्मना हननसाधनेन वज्रेण ᵛरद्धम्। 'रध हिंसासंराध्योः'। हिंसितम् ᵛअहिं ᵛवृत्रम् अपामावरकं मेघं ᵛतृषु शीघ्रम् ᵛअन्नमावयत् अभक्षयत्। तज्जन्येनोदकेन संपादितमन्नं जनोऽभक्षयदित्यर्थः। आवयतिरत्तिकर्मा। तत्र दृष्टान्तः। ᵛअग्निर्न यथाग्निः ᵛजम्भैः आत्मीयैर्दन्तैरन्नं भक्षयति तद्वत्॥

भूरि॒ दक्षे॑भिर्वच॒नेभि॒र्ऋक्व॑भिः स॒ख्येभिः॑ स॒ख्यानि॒ प्र वो॑चत।
इन्द्रो॒ धुनिं॑ च॒ चुमु॑रिं च द॒म्भय॑ञ्छ्र॒द्धाम॑न॒स्या शृ॑णुते द॒भीत॑ये॥ ९॥

भूरि॑। दक्षे॑भिः। व॒च॒नेभिः॑। ऋक्व॑ऽभिः। स॒ख्येभिः॑। स॒ख्यानि॑। प्र। वो॒च॒त॒।
इन्द्रः॑। धुनि॑म्। च॒। चुमु॑रिम्। च॒। द॒म्भय॑न्। श्र॒द्धाऽम॑न॒स्या। शृ॒णु॒ते॒। द॒भीत॑ये॥ ९॥

हे स्तोतारः ᵛदक्षेभिः वर्धनहेतुभिः ᵛऋक्वभिः॥ 'छन्दसीवनिपौ' इति वनिप्प्रत्ययः। अयस्मयादित्वेन भत्वाज्जश्त्वाभावः। पदत्वात् कुत्वम् (का. १. ४. २०)॥ मन्त्रयुक्तैः ᵛसख्येभिः॥ तदर्हतीत्यर्थे 'छन्दसि च' इति यप्रत्ययः[2]॥ सख्युरिन्द्रस्य योग्यैः ᵛवचनेभिः वचनैः स्तोत्रैः ᵛसख्यानि स्तुत्यस्तोतृलक्षणान्यभिलक्ष्य ᵛभूरि बहुवारम् इन्द्रं ᵛप्र ᵛवोचत प्रब्रूत अभिष्टुत। ᵛइन्द्रः तु ᵛदभीतये एतन्नामकाय राजर्षये ᵛधुनिं ᵛच ᵛचुमुरिं ᵛच एतन्नामकौ द्वावसुरौ ᵛदम्भयन् हिंसन् ᵛश्रद्धामनस्या। मनःशब्दात् क्यच्। श्रद्धायुक्तया मनस इच्छया ᵛशृणुते। युष्माभिः कृतानि स्तोत्राणि शृणोति॥

त्वं पु॒रूण्या भ॑रा॒ स्वश्व्या॒ येभि॒र्मंसै॒ नि॒वच॑नानि॒ शंस॑न्।
सु॒गेभि॒र्विश्वा॑ दुरि॒ता त॑रेम वि॒दो षु ण॑ उ॒र्विया॑ गा॒धम॒द्य॥ १०॥

त्वम्। पु॒रूणि॑। आ। भ॒र॒। सु॒ऽअश्व्या॑। येभिः॑। मंसै॑। नि॒ऽवच॑नानि। शंस॑न्।
सु॒ऽगेभिः॑। विश्वा॑। दुः॒ऽइ॒ता। त॒रे॒म॒। वि॒दो इति॑। सु। नः॒। उ॒र्विया॑। गा॒धम्। अ॒द्य॥ १०॥

हे इन्द्र ᵛत्वं ᵛस्वश्व्या स्वश्व्यानि शोभनाश्वयुक्तानि ᵛपुरूणि बहूनि धनानि मह्यम् ᵛआ ᵛभर आहर प्रयच्छ। ᵛनिवचनानि नितरां वक्तव्यानि स्तोत्राणि ᵛशंसन् अहं ᵛयेभिः धनैः ᵛमंसै।

---

१. त-भ-अवर्धयंति। २. त-भ-मु-यप्रत्ययः।

मन्थतिरर्चतिकर्मा । देवान् पूजयानि तानि देहि ॥ मन्यतेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । सिप्यडागमः । सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरः ॥ ᵛसुगेभिः सुष्ठु गन्तव्यैस्तैर्धनैः स्तोत्रैर्वा ᵛविश्वा सर्वाणि ᵛदुरिता दुरितानि पापानि ᵛतरेम । हे इन्द्र ᵛअद्य अस्मिन् कर्मणि ᵛगाधं ग्रथ्यमानं क्रियमाणं ᵛनः अस्मदीयं स्तोत्रम् ᵛउर्विया उरुत्वेन बहुमानेन ᵛसु[1] सुष्ठु ᵛविदो । विद उ । जानीह्येव ॥ ॥ १५ ॥

'घर्मा' इति दशर्चं द्वितीयं सूक्तं वैश्वदेवम् । सध्रिर्नाम वैरूप ऋषिः । तपसः पुत्रो घर्मो वा । चतुर्थी जगती । शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तं—'घर्मा सध्रिस्तापसो वा घर्मो वैश्वदेवं चतुर्थी जगती' इति । गतो विनियोगः ॥

**घ॒र्मा सम॑न्ता त्रि॒वृतं॒ व्या॑पतु॒स्तयो॒र्जुष्टिं॑ मात॒रिश्वा॑ जगाम ।**
**दि॒वस्पयो॑ दिधि॑षाणा अवे॑षन्वि॒दुर्दे॒वाः स॒हसा॑मानम॒र्कम् ॥ १ ॥**

घ॒र्मा । स॒म्ऽअ॑न्ता । त्रि॒ऽवृत॑म् । वि । आ॒प॒तुः॒ । तयोः॑ । जुष्टि॑म् । मा॒त॒रिश्वा॑ । ज॒गा॒म॒ ।
दि॒वः । पयः॑ । दिधि॑षाणाः । अवे॑षन् । वि॒दुः । दे॒वाः । स॒हऽसा॑मानम् । अ॒र्कम् ॥ १ ॥

ᵛसमन्ता समन्तौ संव्याप्तदिगन्तौ ᵛघर्मा । 'घृ क्षरणदीप्त्योः' । घर्मौ दीप्यमानावग्न्यादित्यौ ᵛत्रिवृतम् । 'त्रयो वा इमे त्रिवृतो लोकाः' ( ऐ. आ. १. १. २ ) इत्याम्नानात् । त्रैलोक्यं ᵛव्यापतुः । स्वतेजोभिर्व्याप्तवन्तौ । ᵛमातरिश्वा अन्तरिक्षे वर्तमानो वायुः ᵛतयोः अग्न्यादित्ययोः ᵛजुष्टिं प्रीतिं ᵛजगाम गतवान् । यद्वा ᵛसहसामानम् । सामशब्द उपलक्षकः । वेदत्रयतेजःसहितम् । 'सर्वं तेजः सामरूप्यं ह शश्वत्' ( तै. ब्रा. ३. १२. ९.२ ) इत्याम्नानात् । ईदृशम् ᵛअर्कम् अर्चनीयं सूर्यं ᵛदेवाः दीप्यमानाः स्वरश्मयः ᵛविदुः विविदुः लेभिरे प्रापुः तदा ᵛदिधिषाणाः लोकधारणशीलास्ते ᵛदिवः द्युलोकस्य संबन्धि ᵛपयः उदकम् ᵛअवेषन् व्याप्तवन्तः । ववर्षुरित्यर्थः[2] ॥ दिवस्पय इत्यत्र 'षष्ठ्याः पतिपुत्र°' इति सत्वम् । दिधिषाणाः । 'धिष[3] धारणे' । चानश् । शपः श्लुः । यद्वा । 'धि धारणे' । सनन्तस्य चानश् । 'अज्झनगमां सनि' इति दीर्घाभावश्छान्दसः । यद्वा । समन्तौ संगतौ घर्मौ स्वयं दीप्यमानौ जीवेश्वरौ त्रिवृतं सत्त्वरजस्तमोगुणात्मिकां मायां व्यापतुः । नियन्तृनियन्तव्यभावेन मातरिश्वा परमात्मा तयोर्जुष्टिं संभोक्तव्यपदार्थैः संजातां प्रीतिं जगाम । गतवान्[4] । तं परमात्मानं वेदमयमिमं सूर्यमिति देवा जानन्ति ॥

**ति॒स्रो दे॒ष्ट्राय॒ निर्ऋ॑ती॒रुपा॑सते दी॒र्घश्रुतो॒ वि हि जा॒नन्ति॒ वह्न॑यः ।**
**तासा॒ं नि चि॑क्युः क॒वयो॑ नि॒दानं॒ परे॑षु॒ या गुह्ये॑षु व्र॒तेषु॑ ॥ २ ॥**

ति॒स्रः । दे॒ष्ट्राय॑ । निः॒ऽऋ॑तीः । उप॑ । आ॒स॒ते॒ । दी॒र्घऽश्रु॑तः । वि । हि । जा॒नन्ति॑ । वह्न॑यः ।
तासा॑म् । नि । चि॒क्युः॒ । क॒वयः॑ । नि॒ऽदान॑म् । परे॑षु । याः । गुह्ये॑षु । व्र॒तेषु॑ ॥ २ ॥

ᵛनिर्ऋतीः । पृथिवीनामैतत् । अनेनेतरलोकावुपलक्ष्येते । तत्राधिष्ठिताः ᵛतिस्रः अग्न्यादिदेवताः ᵛदेष्ट्राय हविषां प्रदानाय ᵛउपासते । यजमाना उपासनं कुर्वते । ततः ᵛदीर्घश्रुतः प्रभूतकीर्तयः ᵛवह्नयः जगतः प्रापिकास्ता देवताः ᵛवि ᵛजानन्ति । एतैः कृतामुपासनां मन्वत एव । यद्वा ।

१. ग-त-भ-मु-'सु' नास्ति । २. त१.२.३.६.७.८-भ-ववर्षुः त४.५-ववृधुरित्यर्थः । ३. ग-त२.३.६.७.८-भ-धिषु । ४, ग-त१.२.३.६.७.८-भ१.२.४.५.८-गमितवान् ।

निर्ऋतीः। निःशेषेण ऋच्छन्ति गच्छन्तीति निर्ऋतयः। तास्तिस्रः सृष्टिस्थितिसंहृतीः देष्ट्रायात्मनः कर्मभोगदानायोपासते ते दीर्घश्रुतो दीर्घं[1] संसारे शृण्वन्तो मन्तव्यदृश्यादिपदार्थं जानन्तः। मन्त्रदृष्ट्यादिरूपमजानन्त इत्यर्थः। अत एव वह्नयः संसारस्य वोढारस्ता न जानन्ति। ᵛकवयः क्रान्तदर्शिनस्तु ᵛतासां सृष्ट्यादीनामग्न्यादीनां वा ᵛनिदानं मूलकारणं परमात्मानं ᵛनि ᵛचिक्युः नितरां चिन्वन्ति जानन्ति। ᵛपरेषु उत्कृष्टेषु वा ᵛगुह्येषु वा गोप्यव्येषु कर्मसु यमनियमादिषु ᵛव्रतेषु[2] ᵛयाः प्रवृत्तयः सन्ति तासां निदानं नि चिक्युः जानन्ति॥ 'चिञ् चयने'। लिटि 'विभाषाचेः' इत्यभ्यासादुत्तरस्य कवर्णादेशः[3]। यद्वा। चायतेर्लिटि 'चायः की' (पा. सू. ६. १. ३५) इति छन्दसि की इत्यादेशः॥

**चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते।**
**तस्यां सुपर्णा वृषणा नि षेदतुर्यत्र देवा दधिरे भागधेयम्॥ ३॥**

चतुःऽकपर्दा। युवतिः। सुऽपेशाः। घृतऽप्रतीका। वयुनानि। वस्ते।
तस्याम्। सुऽपर्णा। वृषणा। नि। सेदतुः। यत्र। देवाः। दधिरे। भागऽधेयम्॥ ३॥

ᵛचतुष्कपर्दा चतुष्कोणा ᵛयुवतिः स्त्रीरूपा ᵛसुपेशाः शोभनालंकारा ᵛघृतप्रतीका घृतप्रमुखहविष्का एतादृशी वेदिः ᵛवयुनानि ज्ञातव्यानि पदार्थजातानि कर्माणि स्तोत्राणि वा ᵛवस्ते आच्छादयति। ᵛतस्यां वेद्यां ᵛवृषणा वृषणौ हविषां वर्षितारौ ᵛसुपर्णा सुपर्णौ सुपतनौ जायापती यजमानब्रह्माणौ वा ᵛनि ᵛषेदतुः निषण्णौ भवतः। ᵛयत्र यस्यां वेद्यां ᵛदेवाः अग्न्यादयः ᵛभागधेयम्। स्वार्थिको धेयप्रत्ययः। स्वस्वभागं हविः ᵛदधिरे[4] धारयन्ति। यद्वा। चतुष्कपर्दा नामाख्यातोपसर्गनिपाताश्चत्वारः कपर्दस्थानीया यस्याः सा युवतिस्तरुणी नित्या घृतप्रतीका दीप्यमानवर्णावयवैर्षोपनिषदी वाग्वयुनानि ज्ञानानि वस्ते आच्छादयति। तस्यां वाचि सुपर्णा सुपर्णौ जीवपरमात्मानौ निषण्णौ भवतः। यत्र। 'इतराभ्योऽपि दृश्यन्ते' इति तृतीयार्थे त्रल्प्रत्ययः। यया वाचा देवा भागं धारयन्ति॥

**एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे।**
**तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम्॥ ४॥**

एकः। सुऽपर्णः। सः। समुद्रम्। आ। विवेश। सः। इदम्। विश्वम्। भुवनम्। वि। चष्टे।
तम्। पाकेन। मनसा। अपश्यम्। अन्तितः।
तम्। माता। रेळ्हि। सः। ऊँ इति। रेळ्हि। मातरम्॥ ४॥

ᵛएकः सर्वकार्येष्वसहायः ᵛसुपर्णः सुपतनो मध्यमस्थानो देवः ᵛसमुद्रम् अन्तरिक्षम् ᵛआ ᵛविवेश आविशति। आविश्य च ᵛस ᵛइदं ᵛविश्वं सर्वं ᵛभुवनं भूतजातं ᵛवि ᵛचष्टे। अनुग्राह्यतयाभिपश्यति। ᵛतम् एवंरूपं देवं ᵛपाकेन परिपक्वेन ᵛमनसा ᵛअन्तितः समीपेऽहम् ᵛअपश्यम् अदर्शम्। किंच ᵛमाता उदकानां निर्मात्री माध्यमिका वाक् तां ᵛरेळ्हि आस्वादयति। उपजीवनमात्रमत्र लक्ष्यते। ᵛस ᵛउ स खलु ᵛमातरं वाचं ᵛरेळ्हि लेढि। तामेवोपजीवति। 'लिह आस्वादने'। यद्वा। सुपर्णः पक्षवान्निराधारसंचार्येकः प्राणवायुः परमात्मा वा समुद्रम्। समुद्द्रवन्ति

---

१. त-म१.२.४.८–दीर्घं। २. ग-त-भ–'व्रतेषु' नास्ति। ३. त-भ-मु–कवर्गादेशः। ४. त१.२.३.६.७.८-भ२.४.८–दधंत।

आपोऽस्मादिति समुद्रमन्तरिक्षम्। यद्वा। समुद्द्रवणं[1] सर्वतो[2] गमनम्। तच्छीलं प्रपञ्चजातमाविष्टवान्। 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै. आ. ८. ६ ) इति श्रुतेः। वायुपक्षे[2] वाय्वादिरूपेण[3] आ विवेश। स इदं विश्वं सर्वं लोकं वि चष्टे विशेषेण ख्यापयति। सति हि प्राणे परमात्मनि वा जीवन्तः पुरुषा लोकं विख्यातं कुर्वन्ति। तं देवमुपासकोऽहं[4] पाकेन परिपक्वज्ञानेन मनसा अन्तितः॥ अन्तिकशब्दात्तसिः। अन्तिकस्य तसि कादिलोपो भवत्याद्युदात्तत्वं च ( पा. सू. ६. ४. १४९. ८ ) इति कादिलोपः॥ अन्तिके समीपे स्वहृदयेऽपश्यम्। तं प्राणं माता वाक् रेळ्हि[5]। वाक् प्राणेऽन्तर्भवतीत्यर्थः। स्वापे हि वाग्व्यापारो न दृश्यते प्राणव्यापारस्तु दृश्यत इति॥

सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति।
छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश॥ ५॥

सुऽपर्णम्। विप्राः। कवयः। वचःऽभिः। एकम्। सन्तम्। बहुधा। कल्पयन्ति।
छन्दांसि। च। दधतः। अध्वरेषु। ग्रहान्। सोमस्य। मिमते। द्वादश॥ ५॥

विप्राः मेधाविनः कवयः क्रान्तप्रज्ञा मनुष्याः सुपर्णं सुपतनम् एकं सन्तं परमात्मानं वचोभिः स्तुतिलक्षणैर्वचनैः बहुधा बहुप्रकारं कल्पयन्ति कुर्वन्ति। किंच त एव कवयः अध्वरेषु यज्ञेषु छन्दांसि गायत्र्यादीनि सप्त छन्दांसि दधतः स्तोत्रशस्त्रादिना धारयन्तो द्वादशसंख्याकान्[6] सोमस्य ग्रहान् ग्रहणसाधनानि पात्राण्युपांश्वन्तर्यामादीनि मिमते निर्मिमते॥ ग्रहान्। गृह्यत एभिरिति ग्रहाः। 'ग्रहवृदृनिश्चिगमश्च' इति करणेऽप्प्रत्ययः। सोमस्येति कर्मणि षष्ठी। द्वादश इत्यत्र 'संख्या' ( पा. सू. ६. २. ३५ ) इति पूर्वपदप्रकृतिस्वरत्वम्॥ ॥ १६ ॥

षट्त्रिंशांश्च चतुरः कल्पयन्तश्छन्दांसि च दधत आद्वादशम्।
यज्ञं विमाय कवयो मनीष ऋक्सामाभ्यां प्र रथं वर्तयन्ति॥ ६॥

षट्ऽत्रिंशान्। च। चतुरः। कल्पयन्तः। छन्दांसि। च। दधतः। आऽद्वादशम्।
यज्ञम्। विऽमाय। कवयः। मनीषा। ऋक्ऽसामाभ्याम्। प्र। रथम्। वर्तयन्ति॥ ६॥

पूर्वं सामान्येन यज्ञग्रहानुक्त्वेदानीं सर्वग्रहादिपूर्वको यज्ञोऽभिधीयते। षट्त्रिंशान्। द्वावुपांश्वन्तर्यामौ[7]। ऐन्द्रवायवादयस्त्रयो द्विदेवत्यग्रहाः। द्वौ शुक्रामन्थिनौ। आग्रयण उक्थ्यो ध्रुवश्चेति त्रयः। ऋतुग्रहा द्वादश। ऐन्द्राग्नो वैश्वदेवश्च द्वौ। त्रयो मरुत्वतीयाः। एको माहेन्द्रः। आदित्यसावित्रौ द्वौ। वैश्वदेवः पात्नीवतो हारियोजन इति त्रयो[8] ग्रहाः। एवं षट्त्रिंशद्भवन्ति। अत्यग्निष्टोमे पूर्वे षट्त्रिंशद्ग्रहा द्वावंश्वदाभ्यौ दधिग्रहः षोडशीति चेति चत्वारः। एतांश्चत्वारिंशत्संख्याकान् ग्रहान् कल्पयन्तः सोमेन पूरयन्तः। किंच आद्वादशम्॥ 'आङ् मर्यादाभिविध्योः' ( पा. सू. २. १. १३ ) इत्यव्ययीभावसमासः। तस्य स्वरः॥ द्वादशसंख्याकप्रउगादिशस्त्रसमाप्तिपर्यन्तं

---

१. ग–समुंदनं; त१.२.३.६.७.८–समंदनं; त४.५–समुंदजं; भ२.४.८–सुमंदनं; भ७–समुद्रनं। २. त१.२.३.६.७.८-भ–'सर्वतो ...... वायुपक्षे' नास्ति। ३. ग–बाह्यवायुरूपेण; त१.२.३.६.७.८-भ–वायुरूपेण। ४. त१.२.३.६.७.८-भ२.४.८–सदेवमु°। ५. त४.५–रेळ्हि। अध्ययनकाले वाग्व्यापारो दृष्टः। सह प्राणो हि मातरं वाचं रेळ्हि। ६. ग–द्वादश द्वादशसंख्याकान्। ७. त४–षडुत्तरान् त्रिंशत्संख्याकान् ततश्चतुरश्च ग्रहान्। एते तैत्तिरीयारण्यके ज्योतिष्टोमे समाम्नायंते प्राणापानाभ्यामेवोपांश्वंतर्यामो। ८. त-भ–'त्रयो' नास्ति।

vछन्दांसि गायत्र्यादीनि vदधतः स्तुतशस्त्रादिरूपेण धारयन्तः vकवयो vमनीषा। तृतीयाया आकारः। मनीषया बुद्ध्या एवं vयज्ञं vविमाय निर्माय vरथम्। रमन्त्यत्रेति[1] रथो यज्ञः। तं vरथं यज्ञम् vऋक्सामाभ्यां vप्र vवर्तयन्ति प्रकर्षेण संपादयन्ति॥ चतुर इत्यत्र 'चतुरः शसि' (पा. सू. ६. १. १६७) इत्यन्तोदात्तत्वम्॥

चतुर्दशान्ये महिमानो अस्य तं धीरा वाचा प्र णयन्ति सप्त।
आप्नानं तीर्थं क इह प्र वोचद्येन पथा प्रपिबन्ते सुतस्य॥ ७॥

चतुःऽदश। अन्ये। महिमानः। अस्य। तम्। धीराः। वाचा। प्र। नयन्ति। सप्त।
आप्नानम्। तीर्थम्। कः। इह। प्र। वोचत्। येन। पथा। प्रऽपिबन्ते। सुतस्य॥ ७॥

vअस्य यज्ञरूपस्य परमात्मनः vअन्ये vचतुर्दश[2] चतुर्दशसंख्याकाः[2] vमहिमानः विभूतयो भवन्ति। vतं यज्ञं vसप्त[3] सप्तसंख्याकाः vधीराः धीमन्तो होत्रादयः vवाचा शस्त्ररूपया vप्र vणयन्ति प्रकर्षेण नयन्ति। vआप्नानम्॥ 'आप्लृ व्याप्तौ'। ताच्छीलिके चानशि व्यत्ययेन विकरणस्य व्यत्ययः[4]॥ व्यापनशीलं vतीर्थं पापोत्तारणसमर्थं चात्वालोत्करमध्यदेशम् vइह अस्मिन् यज्ञे vकः vप्र vवोचत् को वक्ति। न कोऽपीत्यर्थः। vयेन vपथा येन यज्ञमार्गेण vसुतस्य अभिषुतं सोमं vप्रपिबन्ते देवा अतिशयेन पिबन्ति॥ 'पा पाने'। 'पाघ्रा°' इत्यादिना पिबादेशः। व्यत्ययेन आत्मनेपदम्। उपसर्गेण समासः। यद्योगादनिघाते 'तिङि चोदात्तवति' इति गतेर्निघातः॥

सहस्रधा पञ्चदशान्युक्था यावद्द्यावापृथिवी तावदित्तत्।
सहस्रधा महिमानः सहस्रं यावद्ब्रह्म विष्ठितं तावती वाक्॥ ८॥

सहस्रधा। पञ्चऽदशानि। उक्था। यावत्। द्यावापृथिवी इति। तावत्। इत्। तत्।
सहस्रधा। महिमानः। सहस्रम्। यावत्। ब्रह्म। विऽस्थितम्। तावती। वाक्॥ ८॥

vसहस्रधा सहस्रसंख्याकेषु ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु vपञ्चदशानि। चक्षुः श्रोत्रं मनो वाक् प्राण इत्येतानि पञ्च। तदाधारत्वेन मातापित्रोः सकाशादागतानि पृथिव्यप्तेजोवाय्वाकाशरूपाणि भूतानि मिलितानि दश। एवं पञ्चदशसंख्याकानि vउक्था उक्थान्युत्कृष्टान्यङ्गानि विद्यन्ते प्राणिदेहेषु[5] जातेषु। vद्यावापृथिवी॥ षष्ठीद्विवचनस्य 'सुपां सुलुक्°' इति पूर्वसवर्णदीर्घः॥ द्यावापृथिव्योः vयावत् यत्परिमाणमस्ति vतावदित् तत्परिमाणमेवात्माधिष्ठितं प्राणिदेहजातं भवति। यावत्तावच्छब्दयोः[6] 'यत्तदेतेभ्यः परिमाणे वतुप्' (पा. सू.५.२.३९) 'आ सर्वनाम्नः' (पा. सू.६.३.९१) इति दीर्घः॥ किंच vसहस्रधा सहस्रसंख्याकेषु vसहस्रं vमहिमानः सहस्रसंख्याका महान्तो व्यवहारविशेषा भवन्ति। प्रतिविषयं प्रतिक्षणं दर्शनश्रवणादिव्यवहारनिष्पत्तेः[7]। सहस्रधेत्यत्र विधार्थे धाप्रत्ययः। vब्रह्म जगत्कारणं वस्तु vयावत् नानाविधप्राणिदेहरूपेण यावत्परिमाणं भूत्वा vविष्ठितं विशेषेण स्थितं vवाक् vतावती तत्परिमाणा भवति। एकैकस्याभिधेयार्थस्यैकैकनामापेक्षणात्।

---

१. ग२–रमंतेत्रेति। २. ग-त-भ–चतुर्दशलोकाः; मु–चतुर्दशसंख्याका लोकाः। ३. ग-त-भ-मु–'सप्त' नास्ति। ४. ग–श्ना; त१.२.३.६.७.८ भ–च; त४.५–स्ना। ५. ग२-त४.५–इत्थं प्राणिदेहेषु; त१.२.३.६.७-भ–उक्थप्राणिदेहेषु। ६. ग-त४.५–यत्तच्छब्दयोः। ७. त-भ१.४.८–°व्यवहारवनिष्पत्तेः; भ२–°व्यवहारत्वनिष्पत्तेः।

अन्यत्रापि श्रूयते—' सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाभिवदन्यदास्ते ' ( तै. आ. ३. १२. ७ ) इति । ' सहस्रधा पञ्चदशान्युक्थेति पञ्च हि दशतो भवन्ति ' ( ऐ. आ. १. ३. ८ ) इत्यादिकमारण्यकमत्रानुसंधेयम् ॥

**कश्छन्दसां योगमा वेद धीरः को धिष्ण्यां प्रति वाचं पपाद ।**
**कमृत्विजामष्टमं शूरमाहुर्हरी इन्द्रस्य नि चिकाय कः स्वित् ॥ ९ ॥**

कः । छन्दसाम् । योगम् । आ । वेद । धीरः । कः । धिष्ण्याम् । प्रति । वाचम् । पपाद ।
कम् । ऋत्विजाम् । अष्टमम् । शूरम् । आहुः । हरी इति । इन्द्रस्य । नि । चिकाय । कः । स्वित् ॥ ९ ॥

धीरः धीमान् कः मानुषः छन्दसां गायत्र्यादीनां योगं स्तुतशस्त्रात्मना नियोगम् आ वेद आजानाति । कः वा धिष्ण्याम् । धिष्ण्यानि होत्रादीनां सप्त स्थानानि[1] । तदर्हां वाचं प्रति पपाद प्रतिपादयति । करोति । किंच ऋत्विजां होत्रादीनां सप्तानाम् अष्टमम् अष्टसंख्यापूरकं शूरं स्वतन्त्रं कम् आहुः वदन्ति । कः स्वित् कः खलु इन्द्रस्य हरी ऋक्सामरूपौ द्वावश्वौ । ' ऋक्सामे वा इन्द्रस्य हरी ' ( तै. सं. ६.५.९.२ ) इत्याम्नायते । तादृशौ हरी नि चिकाय नितरां पूजयति । जानाति । वेदिता प्रतिपादयिताष्टसंख्यापूरकस्य देवस्य ज्ञाता वा परमात्मनोऽन्यो नास्तीत्यर्थः ॥

**भूम्या अन्तं पर्येके चरन्ति रथस्य धूर्षु युक्तासो अस्थुः ।**
**श्रमस्य दायं वि भजन्त्येभ्यो यदा यमो भवति हर्म्ये हितः ॥ १० ॥**

भूम्याः । अन्तम् । परि । एके । चरन्ति । रथस्य । धूःऽसु । युक्तासः । अस्थुः ।
श्रमस्य । दायम् । वि । भजन्ति । एभ्यः । यदा । यमः । भवति । हर्म्ये । हितः ॥ १० ॥

एके केचन सप्ताश्वाः भूम्याः पृथिव्याः । अनेन द्युलोकोऽप्युपलक्ष्यते । द्युलोकस्य च अन्तं पर्यन्तं परि चरन्ति । तदानीं सर्वत आगच्छन्ति । तदा च तेऽश्वाः रथस्य धूर्षु युगादिभारेषु युक्तासः युक्ताः सन्तः अस्थुः तिष्ठन्ति । एभ्यः अश्वेभ्यः श्रमस्य दायम् ॥ ' दो अवखण्डने ' । घञ् । ' कर्षात्वतः° ' इत्यन्तोदात्तत्वम् ॥ श्रमस्य नाशकं घासादिकं वि भजन्ति देवाः प्रयच्छन्ति । यदा यस्मिन् काले यमः नियन्ता सूर्यः हर्म्ये हर्म्यस्थानीये रथे हितः निहितः भवति । तदैवैते भजन्तीत्यर्थः[2] ॥  ॥ १७ ॥

' चित्रः ' इति नवर्चं तृतीयं सूक्तमाग्नेयम् । उपस्तुतो नाम वृष्टिहव्यपुत्र ऋषिः । अष्टमी त्रिष्टुप् । नवमी शक्वरी । आदितः सप्त जगत्यः । तथा चानुक्रान्तं—' चित्र इत्नव वार्ष्टिहव्य उपस्तुत आग्नेयं जागतं त्रिष्टुप्शक्कर्यन्तम् ' इति । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदं सूक्तम् । सूत्रितं च—' चित्र इच्छिशोर्वसुं न चित्रमहसमिति जागतम् ' ( आश्व. श्रौ. ४. १३ ) इति ॥

**चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे ।**
**अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं[1] चरन् ॥ १ ॥**

---

१. ग–स्थानानि मार्जालीयश्च; त१.२.३.६.७.८–भ१.२.४.८–स्थानानि मार्जय; त४.५–स्थानानि मार्जारश्च; भ७–स्थानानि मार्जयत । २. ग-त-भ–भवंतीत्यर्थः ।

चित्रः । इत् । शिशोः । तरुणस्य । वक्षथः । न । यः । मातरौ । अपिऽएति । धातवे ।
अनुधाः । यदि । जीजनत् । अध । च । नु । ववक्ष । सद्यः । महि । दूत्यम् । चरन् ॥ १ ॥

vशिशोः शिशुभूतस्य अत एव vतरुणस्य नूतनस्याग्नेः vवक्षथः ॥ वक्षेरौणादिकोऽथप्रत्ययः[1] ॥ हविर्वहनं vचित्र vइत् आश्चर्यभूतमेव vयः जातोऽग्निः vमातरौ सर्वस्य निर्मात्र्यौ मातृपितृभूते द्यावापृथिव्यावरण्यौ वा vधातवे vन vअप्येति ॥ '.धेट् पाने'। तुमर्थे तवेन्प्रत्ययः ॥ स्तनपानायापि न गच्छति ॥ 'इण् गतौ'। लटगुपसर्गेण समासः। 'तिङि चोदात्तवति' इति गतेर्निघातः ॥ vअनूधाः ॥ नञ्बहुव्रीहिः। समासान्तस्यानङः स्त्रियामिष्टत्वादत्रानङभावः (पा. सू. ५.४.१३१)। प्रत्येकविवक्षयैकवचनम् ॥ ऊधोरहितोऽयं लोकोऽसौ लोकश्चैनमग्निं vयदि vजीजनत् अजीजनत् अजनयत्। तर्हि स्तनपानाय न गच्छतीति युक्तम्। तथा न भवति। किंतु द्यावापृथिव्यौ[2] सर्वेषां कामदुघे खलु। तथापि न याति। तस्मादस्य हविर्वहनं चित्रम्[3]। vअध vच उत्पत्त्यनन्तरमेव vनु अद्य अस्मिन् दिने vसद्यः तदानीमेव शीघ्रं vमहि महत् vदूत्यम् ॥ 'दूतस्य भागकर्मणी' (पा. सू. ४. ४. १२०) इति कर्मणि यत्प्रत्ययः ॥ दूतकर्म vचरन्[4] vववक्ष। देवान् प्रति हवींषि वहति ॥

**अग्निर्ह नाम धायि दन्नपस्तमः सं यो वना युवते भस्मना दता।**
**अभिप्रमुरा जुह्वा स्वध्वर इनो न प्रोथमानो यवसे वृषा ॥ २ ॥**

अग्निः । ह । नाम । धायि । दन् । अपःऽतमः । सम् । यः । वना । युवते । भस्मना । दता ।
अभिऽप्रमुरा । जुह्वा । सुऽअध्वरः । इनः । न । प्रोथमानः । यवसे । वृषा ॥ २ ॥

vअपस्तमः ॥ अपःशब्दस्यान्तोदात्तत्वेन मत्वर्थो लुप्त इति ज्ञायते। अन्यथा 'आपः कर्माख्यायाम्' इत्यसुनि कृत आद्युदात्तत्वमेव स्यात् ॥ अपस्वितमः कर्मवत्तमः vअग्निः vनाम ॥ तृतीयाया लुक् ॥ नाम्ना नमयितृणा हविषा स्तोत्रेण वा vधायि यजमानैर्धार्यते खलु। यतः vदन् यष्टॄणां धनदाता ॥ 'डुदाञ् दाने'। हेतौ[5] 'छन्दस्युभयथा' इति शतुरार्धधातुकत्वेन आकारलोपः। अत एव शपोऽसंभवः ॥ vयः अग्निः vभस्मना भासकेन प्रकाशकेन तेजसा vदता दन्तेन च vवना[6] वनान्यरण्यानि vसं vयुवते संयुनक्ति। संदहतीति यावत्। 'यु मिश्रणामिश्रणयोः'। व्यत्ययेन शः। आत्मनेपदं च। दता। दन्तशब्दस्य 'पद्दन्°' इत्यादिना दद्भावः। 'ऊडिदम्°' इति विभक्तेराद्युदात्तत्वम् ॥ किंच vअभिप्रमुरा ॥ 'मूर्च्छा मोहसमुच्छ्राययोः'। अस्मात् क्विपि 'राल्लोपः' इति छकारलोपः। 'मुर संवेष्टने' इत्यस्माद्वा क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ अभितः समुच्छ्रितेनोद्यतेन यद्वा सर्वतो हविर्भिः संवेष्टितेन vजुह्वा एतन्नामकेन पात्रविशेषेण vस्वध्वरः शोभनयज्ञोऽग्निः अदनीये[7] हविषि चरतीति शेषः। तत्र दृष्टान्तः। vइनः समर्थः vप्रोथमानः पर्याप्तः पुष्टाङ्गः vवृषा vयवसे vन यथा वृषभो घासादिषु चरति ॥

**तं वो विं न द्रुषदं देवमन्धस इन्दुं प्रोथन्तं प्रवपन्तमर्णवम्।**
**आसा वह्निं न शोचिषा विरप्शिनं महिव्रतं न सरजन्तमध्वनः ॥ ३ ॥**

---

१. ग-त१.२.३.६.७.८-भ-मु-वहेरौणादिको°। २. ग-द्यावापृथिव्यौ हि; त१.२.३.६.७.८-भ१.४.७-द्यावापृथिव्यौ तु; भ२.८-द्यावापृथिव्यौ नु। ३. त-भ-'चित्रं' नास्ति। ४. ग-चरन् आचरन्। ५. ग-हेतौ शतरि। ६. त-भ-'वना' नास्ति। ७. ग-त१.२.३.७.८-भ१.२.४.७-खादनीये; त६-भ८-स्वादनीये।

तम् । वः । विम् । न । द्रुऽसदम् । देवम् । अन्धसः । इन्दुम् । प्रोथन्तम् । प्रऽवपन्तम् । अर्णवम् ।
आसा । वह्निम् । न । शोचिषा । विऽरप्शिनम् । महिऽव्रतम् । न । सरजन्तम् । अध्वनः ॥३॥

हे स्तोतारः ᵛवः यूयं ᵛतम् अग्निमभिष्टुत । कीदृशम् । ᵛविं ᵛन पक्षिणमिव ᵛद्रुषदम् । द्रुर्वृक्षः । अरणिलक्षणे वृक्षे सीदन्तं ᵛदेवं द्योतमानम् ᵛअन्धसः ᵛइन्दुं स्तोतृणामन्नस्य क्लेदयितारं प्रापयितारम् ॥ 'उन्देरिच्चादेः' (उ. सू. १. १३) इत्युप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् ॥ ᵛप्रोथन्तं शब्दायमानं ᵛप्रवपन्तम् अत्यर्थं वनानां दाहकम् ᵛअर्णवम् ॥ 'अर्णसः सलोपश्च' इति मत्वर्थीयो वः ॥ 'अग्नौ प्रास्ताहुतिः' इत्यादिक्रमेण उदकवन्तम् ᵛआसा ॥ आस्यशब्दस्य 'पद्न्°' इत्यादिनासन्नादेशः । वर्णलोपश्छान्दसः ॥ आस्येन ᵛवह्निं[1] हविषां वोढारम् । यद्वा । आसा । अन्तिकनामैतत् । देवानां समीपे हविषां प्रापकम् । वहने दृष्टान्तः । वह्निं न । 'वह्निर्वा अनड्वान्' (तै. ब्रा. १. ८. २. ५) इति श्रवणादनड्वाहमिव वहने समर्थं ᵛशोचिषा स्वदीप्त्या ᵛविरप्शिनम् । महन्नामैतत् । महान्तं ᵛमहिव्रतं ᵛन महाकर्माणमादित्यमिव ᵛअध्वनः ᵛसरजन्तम् । मार्गान् सह युगपदेव रञ्जयन्तम् । एवंगुणमग्निमभिष्टुत ॥ सरजन्तम् । 'रञ्ज रागे' । रञ्जेः शतरि 'रञ्जेश्च' (पा. सू. ६. ४. २६) इति नलोपे सहस्य सभावे च कृते रूपम् । यद्वा । सरतीति सरः । सरस्योदकस्य जनयितारम् । जनेः तप्रत्यये[2] कृते रूपमिति वा । व्युत्पत्त्यनवधारणादनवग्रहः ॥

वि यस्य ते ज्रयसानस्याजर धक्षोर्न वाताः परि सन्त्यच्युताः ।
आ रण्वासो युयुधयो न सत्वनं त्रितं नशन्त प्र शिषन्त इष्टये ॥ ४ ॥

वि । यस्य । ते । ज्रयसानस्य । अजर । धक्षोः । न । वाताः । परि । सन्ति । अच्युताः ।
आ । रण्वासः । युयुधयः । न । सत्वनम् । त्रितम् । नशन्त । प्र । शिषन्तः । इष्टये ॥ ४ ॥

हे ᵛअजर जरारहित अग्ने ᵛज्रयसानस्य ॥ ज्रयतिर्गत्यर्थः ॥ बाहुलकादस्मादप्यसानच्प्रत्ययः ॥ गमनशीलस्य ᵛधक्षोः ॥ दहेः सन् । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (का. ६.१.८.१) इति द्विर्वचनाभावः । तदन्तादुप्रत्ययः । अरण्यदहनेच्छोः ᵛयस्य ᵛते तव स्वभूताः ᵛअच्युताः शत्रुभिः अच्यवनीयाः प्रभावाः ᵛवाता ᵛन वायव इव ᵛवि ᵛपरि ᵛसन्ति सर्वतो विशेषेण वर्तन्ते ॥ सन्ति । अस्तेर्लट् । यद्योगादनिघातः ॥ ᵛयुयुधयो ᵛन ॥ युधेः किन्प्रत्ययः ॥ योद्धार इव ᵛरण्वासः शीघ्रं गन्तारः शब्दायमाना वा ऋत्विजः ᵛइष्टये यागाय ᵛप्र ᵛशिषन्तः प्रकर्षेण सिषन्तः सिषासन्तः संभक्तुमिच्छन्तः ᵛसत्वनं बलवन्तं ᵛत्रितं[3] त्रिष्वाहवनीयादिषु स्थानेषु ततं विस्तृतं त्वाम् ᵛआ ᵛनशन्त । स्तुतिभिर्हविर्भिश्च व्याप्नुवन्ति । आङ्पूर्वो नशिर्व्याप्तिकर्मा । 'आक्षाण आनट्' इति व्याप्तिकर्मसु पाठात् ॥

स इदग्निः कण्वतमः कण्वसखार्यः परस्यान्तरस्य तरुषः ।
अग्निः पातु गृणतो अग्निः सूरीनग्निर्ददातु तेषामवो नः ॥ ५ ॥

सः । इत् । अग्निः । कण्वऽतमः । कण्वऽसखा । अर्यः । परस्य । अन्तरस्य । तरुषः ।
अग्निः । पातु । गृणतः । अग्निः । सूरीन् । अग्निः । ददातु । तेषाम् । अवः । नः ॥ ५ ॥

---

१. ग-त-भ-'वह्निं' नास्ति । २. त-भ-प्रत्ययं । ३. त-भ-'त्रितं' नास्ति ।

ᵛकण्वतमः ॥ कणतेः शब्दार्थात् ‘अशिप्रुषि°’ इत्यादिना क्वन्प्रत्ययः ॥ अतिशयेन स्तोता अत एव ᵛकण्वसखा ॥ बहुव्रीहित्वात् समासान्तोदात्ताभावः[1] ॥ कण्वाः स्तोतारः सखायो यस्य स तादृशः ᵛअर्यः ॥ ‘स्वामिन्यन्तोदात्तत्वं वक्तव्यम्’ (पा. सू. ३.१.१०३. १) इत्यन्तोदात्तत्वम् ॥ स्वामी सर्वस्येश्वरः ᵛस ᵛइत् स एव ᵛअग्निः ᵛपरस्य विप्रकृष्टस्य बाह्यस्य ᵛअन्तरस्य अव्यवहितस्य समीपे वर्तमानस्य च शत्रोः ᵛतरुषः तारयिता विनाशयिता भवति। सः ᵛअग्निः ᵛगृणतः स्तोतॄन् अस्मान् ᵛपातु रक्षतु ॥ ‘गॄ शब्दे’। क्र्यादिकः। ‘शतुरनुमो नद्यजादी’ इति विभक्तेरुदात्तत्वम् ॥ तथा ᵛसूरीन्। ‘षू प्रेरणे’। हविषां प्रेरयितॄनस्मान् रक्षतु। किंच ᵛतेषाम् एषां ᵛनः अस्माकम् ᵛअवः रक्षणमन्नं वा ᵛअग्निर्ददातु प्रयच्छतु[2] ॥ ॥ १८ ॥

**वाजिन्तमाय सह्यसे सुपित्र्य तृषु च्यवानो अनु जातवेदसे।**
**अनुद्रे चिद्यो धृषता वरं सते महिन्तमाय धन्वनेदविष्यते ॥ ६ ॥**

वाजिन्ऽतमाय। सह्यसे। सुऽपित्र्य। तृषु। च्यवानः। अनु। जातऽवेदसे।
अनुद्रे। चित्। यः। धृषता। वरम्। सते। महिन्ऽतमाय। धन्वना। इत्। अविष्यते ॥ ६ ॥

हे ᵛसुपित्र्य। पितुरागतः पित्र्यः ॥ ‘पितुर्यच्च’ (पा. सू. ४. ३. ७९) इति यत्प्रत्ययः ॥ शोभनपित्र्य हे अग्ने ᵛवाजिन्तमाय अतिशयेनान्नवते अत्यन्तं[3] बलवते वा ॥ ‘नाद्धस्य’ इति नुडागमः ॥ ᵛसह्यसे सहीयसे शत्रूणामतिशयेनाभिभवित्रे ᵛजातवेदसे जातप्रज्ञाय तुभ्यं[4] त्वां[4] स्तोतुं ᵛतृषु क्षिप्रम् ᵛअनु ᵛच्यवानः स्तुतिभिरनुगत उद्युक्तोऽस्मि ॥ ‘क्रियार्थोपपदस्य च कर्मणि’ इति जातवेदःशब्दस्य चतुर्थी। सह्यसे। सहस्विन्शब्दादीयसुनि ‘विन्मतोर्लुक्’ इतीयसुन ईकारलोपः छान्दसः[5] ॥ ᵛअनुद्रे ᵛचित् उदकवर्जिते स्थले। आपदीत्यर्थः। शत्रुभिः संजातायामापदि ᵛधृषता शत्रुधर्षणसमर्थेन ᵛधन्वनेत् आत्मीयेन धनुषैव ᵛअविष्यते पालकाय ᵛसते भूष्णवे ॥ ‘शतुरनुमः°’ इति विभक्तेरुदात्तत्वम् ॥ ᵛमहिन्तमाय पूज्यतमाय दातृतमाय वा ईदृशायाग्नये ᵛयः अहं ᵛवरं वरणीयं हविः प्रयच्छामि सोऽहं स्तुतिमपि तस्मै करोमीत्यर्थः ॥

**एवाग्निर्मर्तैः सह सूरिभिर्वसुः ष्टवे सहसः सूनरो नृभिः।**
**मित्रासो न ये सुधिता ऋतायवो द्यावो न द्युम्नैरभि सन्ति मानुषान् ॥ ७ ॥**

एव। अग्निः। मर्तैः। सह। सूरिऽभिः। वसुः। स्तवे। सहसः। सूनरः। नृऽभिः।
मित्रासः। न। ये। सुऽधिताः। ऋतऽयवः। द्यावः। न। द्युम्नैः। अभि। सन्ति। मानुषान् ॥ ७ ॥

ᵛसहसः बलस्य ᵛसूनरः सुष्ठु प्रेरकः। यद्वा। सूनुरित्यस्य वर्णव्यत्ययः। सूनरः सूनुः। बलेन मथ्यमानत्वात्तस्य पुत्रः। ᵛअग्निः ᵛनृभिः कर्मनेतृभिः ᵛमर्तैः मनुष्यैः ᵛसह ᵛसूरिभिः विद्वद्भिः[6] अस्माभिः ᵛवसु धनमभिलक्ष्य ᵛएव एवं ᵛस्तवे स्तूयते। वसु ष्टवे इत्यत्र संहितायां ‘पूर्वपदात्°’ इति षत्वम् ॥ ᵛमित्रासो ᵛन सुहृद इव ᵛसुधिताः सुहितास्तृप्ताः ॥ दधातेर्निष्ठायां ‘सुधित-

---

१. त१.२.६.७–समासातस्य टचो चोपसंभवं; त३.८-भ२.५.८–समासातस्य टचो संभवं; ग–समासांतस्य चो संभवः; भ१.४–समासांतस्य ग्वो संभवं; भ७–समासांतस्य। २. त१.२.३.६.७.८-भ–रक्षतु। ३. ग-त-भ–अत्यर्थं। ४. त-भ–त्वां तुभ्यं। ५. ग-त४.५–छांदसः। अनुद्रे चिदनुदकस्थलेपि धृषता धृषेन धन्वनेत्। धन्व इत्युदकनाम। उदकेनैव अविष्यते स्तोतॄणां रक्षकाय। यद्वा। ६. त-भ२.८–‘विद्वद्भिः’ नास्ति।

वसुधित० ' ( पा. सू. ७. ४. ४५ ) इति निपातितः । ' सुधितार्थास्तृप्त्यर्था: ' इति काशिकाया-मुक्तम् ॥ vऋतायवः यज्ञं कामयमानाः ॥ ' न च्छन्दस्यपुत्रस्य ' इति दीर्घत्वयोः प्रतिषेधः ॥ ईदृशाः vये सूरयः vद्यावो vन द्योतमाना[1] इव[2] vद्युम्नैः । ' द्युम्नं द्योततेर्यशो वान्नं वा ' ( निरु. ५. ५ ) इति यास्कः । अभिप्रदत्तैर्बलैरात्मीयैर्यशोभिर्वा vमानुषान् शात्रवान् जनान्[2] vअभि vसन्ति अभिभवन्ति ॥ यद्वृत्तयोगादनिघातः ॥

ऊर्जो नपात्सहसावन्निति त्वोपस्तुतस्य वन्दते वृषा वाक् ।
त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ॥ ८ ॥

ऊर्जः । नपात् । सहसाऽवन् । इति । त्वा । उपऽस्तुतस्य । वन्दते । वृषा । वाक् ।
त्वाम् । स्तोषाम । त्वया । सुऽवीराः । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥ ८ ॥

vऊर्जो vनपात् । नपादित्यपत्यनाम । अन्नस्य पुत्र । ' अन्नं वा आज्यम् ' इति श्रवणात्तेन प्रवृध्यमानत्वात् । बलस्य वा पुत्र ॥ ' सुबामन्त्रिते पराङ्गवत्स्वरे ' इत्यूर्ज इत्यस्य पराङ्गवद्भावेन आमन्त्रितत्वे ' आमन्त्रितस्य च ' इति षाष्ठिकमाद्युदात्तत्वम् ॥ हे vसहसावन् सहस्विन्नग्ने vत्वा त्वाम् vइति एवम् vउपस्तुतस्य एतन्नामकस्यर्षेर्मम vवृषा हविषां वर्षयित्री तैः सहिता vवाक् स्तुतिः vवन्दते स्तौति ॥ वृषा । ' इगुपधज्ञा०' इति कः । अजाद्यतष्टाप् ॥ किंच वयं vत्वां vस्तोषाम स्तवाम । स्तौतेर्लेट्याडागमः । ततः vत्वया vसुवीराः शोभनपुत्राः स्याम । vद्राघीयः दीर्घतमम् vआयुः जीवनं vप्रतरम् अत्यर्थं vदधानाः धारयन्तो भवेम ॥

इति त्वाग्ने वृष्टिहव्यस्य पुत्रा उपस्तुतास ऋषयोऽवोचन् ।
ताँश्च पाहि गृणतश्च सूरीन् वषड्वषळित्यूर्ध्वासो
अनक्षन्नमो नम इत्यूर्ध्वासो अनक्षन् ॥ ९ ॥

इति । त्वा । अग्ने । वृष्टिऽहव्यस्य । पुत्राः । उपऽस्तुतासः । ऋषयः । अवोचन् ।
तान् । च । पाहि । गृणतः । च । सूरीन् । वषट् । वषट् । इति । ऊर्ध्वासः । अनक्षन् ।
नमः । नमः । इति । ऊर्ध्वासः । अनक्षन् ॥ ९ ॥

हे vअग्ने vत्वा त्वाम् vइति एवमुक्तप्रकारेण vवृष्टिहव्यस्य एतन्नामकस्यर्षेः vपुत्राः vउपस्तुतासः उपस्तुता एतदभिधानाः vऋषयः सूक्तद्रष्टारः vअवोचन् अभ्यष्टुवन् । vतान् ऋषीन् vच त्वं vपाहि रक्ष ॥ ' चवायोगे प्रथमा ' इति न निघातः ॥ तथा vगृणतः स्तोतॄन् vसूरीन् विदुषः vच पाहि । vवषट् vवषडिति मन्त्रेण vऊर्ध्वासः हविष्प्रदानार्थमूर्ध्वमुखहस्ताः सन्तः vअनक्षन् व्याप्नुवन्[3] । नक्षतिर्व्याप्तिकर्मा । vनमो vनम vइति एवम् vऊर्ध्वासः स्तोतुमुद्युक्ताः vअनक्षन् । य उक्तगुणाः तानुभयविधान् यष्टॄन् स्तोतॄन् पालय ॥　　॥ १९ ॥

' पिब ' इति नवर्चं चतुर्थं सूक्तं त्रैष्टुभमैन्द्रम् । स्थूरनाम्नः पुत्रोऽग्नियुताख्य ऋषिरग्नियूपाख्यो वा । तथा चानुक्रम्यते—' पिब स्थौरोऽग्नियुतोऽग्नियूपो वा ' इति । गतो विनियोगः ॥

---

१. ग–द्योतमाना देवाः; त१.२.३.६.७.८-भ–' द्योतमानाः ' नास्ति; त४.५–द्योतमाना वा ।
२. त१.२.३.६.७.८-भ–' इव...जनान् ' नास्ति । ३. ग-भ–त्वां व्याप्नुवन् ।

पिबा सोम॑म॒भि य॑मुग्र॒ तर्द॑ ऊ॒र्वं गव्यं॒ महि॑ गृणा॒न इ॑न्द्र ।

पिबा सोम॑ महत इन्द्रियाय पिबा॑ वृत्राय॒ हन्त॑वे शविष्ठ ।
पिब॑ रा॒ये शव॑से हू॒यमा॑नः॒ पिब॑ मध्व॑स्तृ॒पदि॑न्द्रा वृषस्व ॥ १ ॥

पिब॑ । सोम॑म् । म॒ह॒ते । इ॒न्द्रि॒याय॑ । पिब॑ । वृ॒त्राय॑ । हन्त॑वे । श॒वि॒ष्ठ॒ ।
पिब॑ । रा॒ये । शव॑से । हू॒यमा॑नः । पिब॑ । मध्वः॑ । तृ॒पत् । इ॒न्द्र॒ । आ । वृ॒ष॒स्व॒ ॥ १ ॥

हे इन्द्र त्वं ᵛमहते प्रभूताय ᵛइन्द्रियाय इन्द्रस्यात्मनो जुष्टाय वीर्याय ᵛसोमम् अस्माभिर्दीयमानं[1] ᵛपिब ॥ 'इन्द्रियमिन्द्रलिङ्ग°' (पा. सू. ५. २. ९३) इत्यादिनेन्द्रियशब्दो यजन्तत्वेन निपातितः ॥ हे ᵛशविष्ठ अतिशयेन प्रवृद्ध ᵛवृत्राय ᵛहन्तवे वृत्रं हन्तुं सोमं ᵛपिब ॥ 'क्रियाग्रहणं कर्तव्यम्' इति वृत्रस्य संप्रदानत्वम् ॥ तथा ᵛहूयमानः अस्माभिराहूयमानस्त्वं ᵛराये धनाय ॥ 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम् ॥ ᵛशवसे अन्नाय[2] । धनान्नयोः प्रदानाय सोमं ᵛपिब । ᵛमध्वः मदकरान् सर्वान् सोमान् ᵛपिब ॥ 'वा छन्दसि' इति पूर्वसवर्णदीर्घाभावः । अनन्तरं हे ᵛइन्द्र ᵛतृपत् तृप्तो भवन् ᵛआ ᵛवृषस्व । अस्मदभिलषितान्यासिञ्च[3] । ददस्व ॥ तृपत् । 'तृम्प तृप्तौ' । तौदादिकः । 'अनित्यमागमशासनम्' इति नुमभावः ॥

अ॒स्य पि॑ब क्षु॒मतः॒ प्रस्थि॑तस्येन्द्र॒ सोम॑स्य॒ वर॒मा सु॒तस्य॑ ।
स्व॒स्ति॒दा मन॑सा माद॒यस्वा॑र्वा॒ची॒नो रे॒वते॒ सौभ॑गाय ॥ २ ॥

अ॒स्य । पि॒ब॒ । क्षु॒ऽमतः॑ । प्रऽस्थि॑तस्य । इ॒न्द्र॒ । सोम॑स्य । वर॑म् । आ । सु॒तस्य॑ ।
स्व॒स्ति॒ऽदाः । मन॑सा । मा॒द॒य॒स्व॒ । अ॒र्वा॒ची॒नः । रे॒वते॑ । सौभ॑गाय ॥ २ ॥

हे ᵛइन्द्र ᵛक्षुमतः स्तुतियुक्तस्य यद्वा हवीरूपान्नवतः ᵛप्रस्थितस्य हविर्धानादुत्तरवेदिं प्रति प्रस्थापितस्य ᵛसुतस्य अभिषुतस्य ᵛअस्य ᵛसोमस्य ᵛवरं वरणीयं त्वदीयं भागम् ᵛआ आभिमुख्येन ᵛपिब ॥ प्रस्थितस्य । तिष्ठतेः कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥ ततः ᵛस्वस्तिदाः कल्याणस्य दाता त्वं ᵛमनसा अन्तःकरणेन ᵛमादयस्व हृष्टो भव । यद्वा । अस्मानपि हृष्टान् कुरु । तदेवोच्यते । ᵛरेवते धनवते ᵛसौभगाय[4] सौभाग्याय तदस्मभ्यं दातुम् ᵛअर्वाचीनः अभिमुखाञ्चनो भव ॥ 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । रयिशब्दात् मतुपः 'छन्दसीरः' इति वत्वम् । 'रयेर्मतौ बहुलम्' इति संप्रसारणम् । पूर्वरूपत्वे गुणः । सौभगाय । उद्गात्रादिषु सुभगमन्त्र इति पठ्यते । तस्योत्तरपदस्य 'हृद्भग°' इति वृद्धिर्नेष्यते सर्वविधीनां छन्दसि विकल्पितत्वात् । ञित्स्वरेणाद्युदात्तत्वम् ॥

म॒मत्तु॑ त्वा दि॒व्यः सोम॑ इन्द्र म॒मत्तु॒ यः सू॒यते॒ पार्थि॑वेषु ।
म॒मत्तु॒ येन॒ वरि॑वश्च॒कर्थ॑ म॒मत्तु॒ येन॑ निरि॒णासि॒ शत्रू॑न् ॥ ३ ॥

म॒मत्तु॑ । त्वा॒ । दि॒व्यः । सोमः॑ । इ॒न्द्र॒ । म॒मत्तु॑ । यः । सू॒यते॑ । पार्थि॑वेषु ।
म॒मत्तु॑ । येन॑ । वरि॑वः । च॒कर्थ॑ । म॒मत्तु॑ । येन॑ । नि॒ऽरि॒णासि॑ । शत्रू॑न् ॥ ३ ॥

---

१. त-भ–अस्माभिर्दीप्यमानं । २. ग–अन्नायास्मभ्यं । ३. त१.२.३.६.७.८-भ२.८–अस्मदभिलषितानासिंच; त४.५–अस्मदभिमतानासिंच, भ१.४.७–अस्मदभिलक्षितानासिंच । ४. त-भ–'सौभगाय' नास्ति ।

हे ᐟइन्द्र ᐟत्वा त्वां ᐟदिव्यः दिवि भवः ᐟसोमः ᐟममत्तु । आत्मीयकलाप्रदानेन मादयतु । देवा ह्यपरपक्षे सोमस्य कलां पिबन्ति ॥ मदेर्लोटि व्यत्ययेन श्लुः । 'भीह्री' (पा. सू. ६. १. १९२) इत्यादिना पितः पूर्वस्योदात्तत्वम् ॥ तथा ᐟपार्थिवेषु पृथिव्यां भवेषु देवयजनेषु ᐟयः सोमोऽस्माभिः ᐟसूयते अभिषूयते सोऽप्यस्माभिर्दत्तः ᐟममत्तु त्वां हर्षयतु । ᐟयेन सोमेन ᐟवरिवः वरणीयं धनं ᐟचकर्थ कृतवानसि स च ᐟममत्तु ॥ करोतेर्लिट् । यद्योगादनिघाते लित्स्वरः ॥ किंच ᐟयेन ᐟशत्रून् ᐟनिरिणासि निर्गमयसि[1] सोऽपि ᐟममत्तु त्वां मादयतु ॥ रिणासि । 'री गतिरेषणयोः' । क्र्यादिः । प्वादीनां ह्रस्वत्वम् ॥

**आ द्विबर्हा अमिनो यात्विन्द्रो वृषा हरिभ्यां परिषिक्तमन्धः ।**
**गव्या सुतस्य प्रभृतस्य मध्वः सत्रा खेदामरुशहा वृषस्व ॥ ४ ॥**

आ । द्विऽबर्हाः । अमिनः । यातु । इन्द्रः । वृषा । हरिऽभ्याम् । परिऽसिक्तम् । अन्धः ।
गवि । आ । सुतस्य । प्रऽभृतस्य । मध्वः । सत्रा । खेदाम् । अरुशऽहा । आ । वृषस्व ॥४॥

ᐟद्विबर्हाः द्वयोर्लोकयोः परिवृढः । यद्वा । द्वाभ्यां स्तुतशस्त्राभ्यां वर्धनीयः ॥ बृहेर्वर्धनार्थस्य कर्तरि कर्मणि वा असुन् ॥ ᐟअमिनः । अमतेर्गत्यर्थादौणादिक इनच् । सर्वत्र गन्ता । यद्वा । कान्त्यर्थात् । सर्वैः काम्यमानः । अत एव ᐟवृषा अभिलषितानां वर्षकः ᐟइन्द्रः ᐟपरिषिक्तं वसतीवरीभिः परितः सिक्तम् ᐟअन्धः अस्मदीयं सोमलक्षणमन्नं प्रति ᐟहरिभ्याम् एतन्नामकाभ्यामश्वाभ्यां सह ᐟआ ᐟयातु आगच्छतु । अथ प्रत्यक्षः । हे इन्द्र ᐟअरुशहा । अरुशाः शत्रवः । तेषां हन्ता ॥ अर्तेरौणादिक उशन् । 'बहुलं छन्दसि' इति हन्तेः क्विप् ॥ ᐟसत्रा । सप्तम्या डादेशः । अस्मदीये सत्रे यज्ञे ᐟगवि आनडुहे चर्मणि ᐟसुतस्य अभिषुतस्य ᐟप्रभृतस्य पात्रेषु प्रहृतस्य । हृग्रहोर्भः । ईदृशस्य ᐟमध्वः मदकरस्य सोमस्य पानेन हृष्टः सन् ᐟखेदां खिद्यमानानां शत्रूणामुत्खित्तये आभिमुख्येन ᐟवृषस्व वृष इवाचर ॥ वृषशब्दादाचारार्थे क्विप् । व्यत्ययेनात्मनेपदम् । खेदाम् । 'खिद दैन्ये' । कर्मणि घञन्तस्यामि नुडभावश्छान्दसः ॥

**नि तिग्मानि भ्राशयन् भ्राश्यान्यव स्थिरा तनुहि यातुजूनाम् ।**
**उग्राय ते सहो बलं ददामि प्रतीत्या शत्रून् विगदेषु वृश्च ॥ ५ ॥**

नि । तिग्मानि । भ्राशयन् । भ्राश्यानि । अव । स्थिरा । तनुहि । यातुऽजूनाम् ।
उग्राय । ते । सहः । बलम् । ददामि । प्रतिऽइत्य । शत्रून् । विऽगदेषु । वृश्च ॥ ५ ॥

हे इन्द्र ᐟभ्राश्यानि प्रकाश्यानि ᐟतिग्मानि तीक्ष्णान्यायुधानि नितरां ᐟभ्राशयन् प्रकाशयन् । 'भ्राशृ दीप्तौ' । स त्वं ᐟयातुजूनाम् ॥ जु इति सौत्रो धातुः । 'भ्राजभास°' इत्यत्र जवतेर्दीर्घः (का. ३. २. १७७. १) । 'क्विप्च' इति क्विप् । दीर्घस्यामि नुडागमश्छान्दसः ॥ यातुधानानां ᐟस्थिरा[2] स्थिराणि दृढान्यपि शरीराणि ᐟअव ᐟतनुहि । अवस्तात्तनुभूतान् पातय । ᐟउग्राय उद्गूर्णबलाय ᐟते तुभ्यं ᐟसहः शत्रुसहनसमर्थं ᐟबलं बलहेतुकं हविः ᐟददामि अहं प्रयच्छामि । ततः ᐟविगदेषु[3] । विविधं गदन्ति शब्दायन्ते[4] ॥ गदेः 'घञर्थे कविधानम्' इत्यधिकरणे कः ॥ ᐟशत्रून् ᐟप्रतीत्य प्रतिगम्य प्रतिकूलं गत्वा ᐟवृश्च तांश्छिन्धि ॥ 'ओव्रश्चू छेदने' । तौदादिकस्य लोट् ॥ ॥२०॥

---

१. ग–स्वस्थानान्निर्गमयसि । २. त-भ–'स्थिरा' नास्ति । ३. ग–विगदेषु संग्रामेषु । ४. ग–शब्दायंतेत्रेति ।

व्य१र्य इन्द्र तनुहि श्रवांस्योजः स्थिरेव धन्वनोऽभिमातीः ।
अस्मद्र्यग्वावृधानः सहोभिरनिभृष्टस्तन्वं वावृधस्व ॥ ६ ॥

वि । अर्यः । इन्द्र । तनुहि । श्रवांसि । ओजः । स्थिराऽइव । धन्वनः । अभिऽमातीः ।
अस्मद्र्यक् । ववृधानः । सहःऽभिः । अनिऽभृष्टः । तन्वम् । ववृधस्व ॥ ६ ॥

हे ᵛइन्द्र ᵛअर्यः स्वामी त्वं ᵛश्रवांसि अन्नानि । श्रव इत्यन्ननाम । अस्मभ्यं ᵛवि ᵛतनुहि विस्तारय । प्रयच्छ ॥ तनोतेर्लोटि 'उतश्च प्रत्ययाच्छन्दसि वावचनम्' (पा. सू. ६. ४. १०६. १) इति हेर्लुगभावः ॥ तथा ᵛअभिमातीः । अभितो मातिर्मानं येषां तेऽभिमातयः शत्रवः । तान् प्रति ᵛओजः आत्मीयं वीर्यं ᵛस्थिरेव स्थिराण्येव ᵛधन्वनः धनूंषि च विस्तारय । तैः शत्रूञ्जहीत्यर्थः । अपि च ᵛअस्मद्र्यक् अस्मदभिमुखाञ्चनः ॥ 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ°' (पा. सू. ६. ३. ९२) इत्यद्र्यादेशः अद्रिसध्र्योरन्तोदात्तत्वेन निपातनात् (पा. सू. ६. ३. ९५. १) 'उदात्तस्वरितयोर्यणः°' इति धातोरकारस्यानुदात्तस्य स्वरितत्वम् ॥ ᵛसहोभिः आत्मीयैर्बलैः ᵛवावृधानः प्रवृद्धः अत एव ᵛअनिभृष्टः शत्रुभिरपरिभवनीयस्त्वं ᵛतन्वम् आत्मीयं शरीरं ᵛवावृधस्व वर्धय[1] । यद्वा । तन्वम् । तन्यत[2] इति तनूर्यज्ञः । तं वर्धय । त्वदागमनेन हि यज्ञो वर्धते ॥

इदं हविर्मघवन् तुभ्यं रातं प्रति सम्राळहृणानो गृभाय ।
तुभ्यं सुतो मघवन् तुभ्यं पक्वो३ऽद्धीन्द्र पिब च प्रस्थितस्य ॥ ७ ॥

इदम् । हविः । मघऽवन् । तुभ्यम् । रातम् । प्रति । सम्ऽराट् । अहृणानः । गृभाय ।
तुभ्यम् । सुतः । मघऽवन् । तुभ्यम् । पक्वः । अद्धि । इन्द्र । पिब । च । प्रऽस्थितस्य ॥ ७ ॥

हे ᵛमघवन् धनवन् ᵛसम्राट् सम्यग्राजमान सर्वेषामीश्वरेति वा ᵛइदं सोमादिलक्षणं ᵛरातम् अस्माभिर्दत्तं ᵛहविः हे इन्द्र ᵛतुभ्यम् ᵛअहृणानः अक्रुध्यन् ᵛप्रति ᵛगृभाय प्रतिगृहाण ॥ ग्रहेर्लोटि श्नाप्रत्ययस्य 'छन्दसि शायजपि' इति शायजादेशः । हृग्रहोर्भः । संनिपातपरिभाषाया अनित्यत्वाद्धेर्लुक् ॥ हे ᵛमघवन् ᵛतुभ्यम् एव अयं सोमः ᵛसुतः ॥ 'ङयि च' (पा. सू. ६. १. २१२) इत्याद्युदात्तत्वम् ॥ ᵛतुभ्यम् एवायं पुरोडाशादिः ᵛपक्वः । हे ᵛइन्द्र तं पुरोडाशम् ᵛअद्धि भक्षय । किंच ᵛप्रस्थितस्य हविर्धानादुत्तरवेदिं प्रति प्रस्थापितं सोमं ᵛपिब ॥ वाक्यभेदादनिघातः । यद्वा । आमन्त्रितस्याविद्यमानत्वेन तिङ उत्तरत्वादनिघातः ॥

अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् ।
प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः ॥ ८ ॥

अद्धि । इत् । इन्द्र । प्रऽस्थिता । इमा । हवींषि । चनः । दधिष्व । पचता । उत । सोमम् ।
पर्यस्वन्तः । प्रति । हर्यामसि । त्वा । सत्याः । सन्तु । यजमानस्य । कामाः ॥ ८ ॥

हे ᵛइन्द्र ᵛप्रस्थिता प्रस्थितान्युत्तरवेदिं प्रति ᵛइमा इमानि । उभयत्र डादेशः । हवींषि ᵛअद्धीत् । इदवधारणे । भक्षयैव । ᵛचनः । चन इत्यन्ननाम । तत्[3] ᵛदधिष्व[4] धारय । उदरे प्रक्षिप ॥

---

१. ग-त-भ-प्रवर्धय । २. ग-त४.५-तायते । ३. त१.२.३.७.-भ-तस्यत । ४. त१.२.३.६.७.८-तव दधिष्व; भ१-नघा दधिष्व; भ२-तथा दधिष्व; भ४-तचा दधिष्व; भ७-तधा दधिष्व; भ८-तवा दधिष्व ।

दधातेर्लोटि 'छन्दस्युभयथा' इति थास आर्धधातुकत्वादिडागमः ॥ ᵛपचता पचतानि[1] सवनीयपुरोडाशादीनि च[2] धारय ॥ पचेः 'भृमृदृशि°' इत्यादिना कर्मण्यतच्प्रत्ययः ॥ ᵛउत अपि च ᵛसोमं पिब । ततः ᵛप्रयस्वन्तः । प्रीणयतीति प्रयोऽन्नम् । तेन तद्वन्तः सन्तः ᵛत्वा त्वां ᵛप्रति ᵛहर्यामसि हर्यामः । कामयामहे धनादीनि ॥ हर्यतिः प्रेप्साकर्मा । इदन्तो मसिः ॥ तस्मान् ᵛयजमानस्य यागं कुर्वाणस्य ᵛकामाः धनादिविषया अभिलाषाः ᵛसत्याः यथार्थाः ᵛसन्तु ॥ 'पूङ्यजोः शानन्' (पा. सू. ३. २. १२८) इति यजेः शानन्प्रत्ययः । नित्वादाद्युदात्तः ॥

**प्रेन्द्राग्निभ्यां सुवचस्यामियर्मि सिन्धाविव प्रेरयं नावमर्कैः ।**
**अयाइव परि चरन्ति देवा ये अस्मभ्यं धनदा उद्भिदश्च ॥ ९ ॥**

प्र । इन्द्राग्निऽभ्याम् । सुऽवचस्याम् । इयर्मि । सिन्धौऽइव । प्र । ईरयम् । नावम् । अर्कैः ।
अयाःऽइव । परि । चरन्ति । देवाः । ये । अस्मभ्यम् । धनऽदाः । उत्ऽभिदः । च ॥९॥

ᵛइन्द्राग्निभ्यां देवाभ्यां ᵛसुवचस्याम् । 'छन्दसि च' इति यत्प्रत्ययः । सुवचनार्हां स्तुतिमहं ᵛप्र ᵛइयर्मि प्रेरयामि ॥ 'ऋ गतौ' । जौहोत्यादिकः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । 'देवताद्वन्द्वे च' इतीन्द्राग्न्योरुभयपदप्रकृतिस्वरत्वे प्राप्ते 'नोत्तरपदेऽनुदात्तादौ°' इति प्रतिषेधः ॥ ᵛसिन्धाविव सिन्धौ नद्यां यथा ᵛनावं प्रेरयन्ति[3] तद्वत् ᵛअर्कैः अर्चनीयैर्मन्त्रैः सहितां स्तुतिं ᵛप्रेरयं प्रावादिषम् ॥ 'ईर गतौ' । ण्यन्तस्य लङ्युत्तमस्यामादेशः ॥ स्तुतास्ते ᵛदेवाः ᵛअयाइव । अयन्ति कर्मकरणार्थं गच्छन्तीत्ययाः ऋत्विजः कर्मकरा वा । तद्वत् ᵛपरि ᵛचरन्ति । अस्मान् धनादिदानेन पूजयन्ति । ᵛये देवाः ᵛअस्मभ्यं ᵛधनदाः धनस्य दातारः ᵛउद्भिदः अस्मच्छत्रूणामुद्भेत्तारः ᵛच ये सन्ति ॥ ॥ २१ ॥

'न वा' इति नवर्चं पञ्चमं सूक्तम् । भिक्षुर्नामाङ्गिरस ऋषिः । प्रथमाद्वितीये जगत्यौ शिष्टाः सप्त त्रिष्टुभः । अत्र धनस्यान्नस्य च दानं स्तूयते । अतस्तद्दैवत्यमिदम् । तथा चानुक्रान्तं—'न वा उ भिक्षुर्धनान्नदानप्रशंसाद्ये जगत्यौ' इति । गतो विनियोगः ॥

**न वा उ देवाः क्षुधमिद्वधं ददुरुताशितमुप गच्छन्ति मृत्यवः ।**
**उतो रयिः पृणतो नोप दस्यत्युतापृणन् मर्डितारं न विन्दते ॥ १ ॥**

न । वै । ऊँ इति । देवाः । क्षुधम् । इत् । वधम् । ददुः । उत । आशितम् । उप । गच्छन्ति । मृत्यवः ।
उतो इति । रयिः । पृणतः । न । उप । दस्यति । उत । अपृणन् । मर्डितारम् । न । विन्दते ॥१॥

भिक्षुः प्रथमं व्यतिरेकमुखेनान्नदानं प्रशंसति । ᵛदेवाः[4] ᵛवै[4] देवाः खलु सर्वेषां ᵛक्षुधं ᵛन ᵛददुः न प्रायच्छन् । किंतु ᵛवधम् ᵛइत् वधमेव दत्तवन्तः । एतादृशीं वधरूपां क्षुधमन्नदानेन यः शमयति स दाता खलु । ᵛउ इति पूरणः । योऽदत्वा भुङ्क्ते तम् ᵛआशितं भुञ्जानं पुरुषमपि ᵛमृत्यवः मरणानि ᵛउप ᵛगच्छन्ति समीपे यान्ति ॥ 'आशितः कर्ता' (पा. सू. ६. १. २०७) इत्याद्युदात्तत्वम् ॥ क्षुधार्त्तानां भोक्तृणां च मरणं समानम् । किं दानेन धननाशरूपेण । अत आह[5] । ᵛउतो । उतशब्दोऽप्यर्थे[6] । ᵛपृणतः प्रयच्छतः पुरुषस्य ᵛरयिः धनं ᵛनोप ᵛदस्यति नोपक्षीयते ।

१. ग२–पचतानि पक्वानि । २. त–वा । ३. ग–त१.२.३.६.७.८–भ–प्रेरयति । ४. त४भ–'देवाः वै' नास्ति । ५. त१.२.३.६.७.८–भ–आहुः । ६. त१.२.३.६.७–उतशब्दस्त्वप्यर्थे; त४.५–उतशब्दश्चार्थे; भ–उतशब्दास्त्वर्थे ।

'दसु उपक्षये'। दैवादिकः। 'पृण दाने'। तौदादिकः। तस्य शत्रन्तस्य 'शतुरनुमो नद्यजादी' इति विभक्तेराद्युदात्तत्वम्॥ दानप्रसङ्गेनादातारं दूषयति। ᐯअपृणन् अप्रयच्छन् पुरुषस्तु ᐯमर्डितारम् आत्मनः सुखयितारं ᐯन ᐯविन्दते। न[1] कुत्रापि लभते। इह बन्धवोऽप्रदानान्न[2] सुखयन्ति देवा अपि हविष्प्रदानाभावात्॥

**य आध्राय चकमानाय पित्वोऽन्नवान्त्सन्रफितायोपजग्मुषे।**
**स्थिरं मनः कृणुते सेवते पुरोतो चित्स मर्डितारं न विन्दते॥ २॥**

यः। आध्राय। चकमानाय। पित्वः। अन्नऽवान्। सन्। रफिताय। उपऽजग्मुषे।
स्थिरम्। मनः। कृणुते। सेवते। पुरा। उतो इति। चित्। सः। मर्डितारम्। न। विन्दते॥ २॥

ᐯयः पुरुषः स्वयम् ᐯअन्नवान् ᐯसन् अपि ᐯआध्राय। आधार्यतेऽसावित्याध्रो[3] दुर्बलः। तस्मै ᐯपित्वः पितूनन्नानि ᐯचकमानाय कामयमानाय। चकमानः कान्तिकर्मा। ᐯरफिताय। रफतिर्हिंसार्थः। दारिद्र्येण हिंसिताय ᐯउपजग्मुषे गृहं प्रत्यागताय अतिथये ᐯमनः आत्मीयमन्तःकरणम् अदाने ᐯस्थिरं ᐯकृणुते कुरुते। मनःस्थैर्यकरणेन तं क्लेशयतीत्यर्थः॥ कृणुते। 'कृवि हिंसाकरणयोः'। 'धिन्विकृण्व्योरच' इत्युप्रत्ययः। करोतेर्वा व्यत्ययेन श्नुः। 'विकरणस्वरः सतिशिष्टोऽपि लसार्वधातुकस्वरं न बाधते' (पा. म. ६. १. १५८. ११) इति लसार्वधातुकस्वरः। न केवलं क्लेशकरणम् अपि तु ᐯपुरा तस्य पुरस्तादेव ᐯसेवते भोगान्। ᐯसः अपि ᐯमर्डितारम् आत्मनः सुखयितारं ᐯन ᐯविन्दते। न कुत्रापि लभते॥

**स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय।**
**अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम्॥ ३॥**

सः। इत्। भोजः। यः। गृहवे। ददाति। अन्नऽकामाय। चरते। कृशाय।
अरम्। अस्मै। भवति। यामऽहूतौ। उत। अपरीषु। कृणुते। सखायम्॥ ३॥

अन्वयमुखेन प्रशंसति। ᐯस ᐯइत् स एव ᐯभोजः दाता खलु ᐯयो ᐯगृहवे॥ ग्रहेर्मृगय्वादित्वात् कुप्रत्ययः (उ. सू. १. ३८)॥ प्रतिग्रहीत्रे ᐯअन्नकामाय अन्नं याचमानाय ᐯचरते गृहमागतवते ᐯकृशाय दारिद्र्येण गुतादृशायातिथयेऽन्नं ᐯददाति प्रयच्छति॥ 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्॥ ᐯयामहूतौ। यामा गन्तारो देवाः॥ अत्र यातेः 'अर्तिस्तुसुहुसृ°' (उ. सू. १. १३९) इत्यादिना मन्प्रत्ययः॥ त आहूयन्तेऽत्रेति यामहूतिर्यज्ञः। तस्मिन् ᐯअस्मै दात्रे फलम् ᐯअरम् अलं पर्याप्तं ᐯभवति। कामप्रदानं[4] भवतीत्यर्थः। ᐯउत अपि च ᐯअपरीषु॥ 'केवलमामक°' (पा. सू. ४.१.३०) इति ङीप्॥ अन्यासु शात्रवीषु सेनासु ᐯसखायं ᐯकृणुते[5]। तद्वदाचरतीत्यर्थः। तस्य सर्वे सखाय एव न शत्रव इत्यर्थः॥

---

१. त१.२.३.७-भ१—न तेन। २. ग२—बंधुभ्योप्रदानात्ते न; त१.२.३.६.७—बहुभ्योदानेन न; त४—बंधवोऽप्रदानात्ते न; भ१.४.७—बंधुभ्योप्रदानेन न। ३. त१-मु-आध्रीयते°; त२.३.७—आध्रियते°। ४. ग-त४.५—कामप्रदं। ५. त४.५—कृणुते कुरुते।

न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः ।
अपास्मात्प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत् ॥ ४ ॥

न । सः । सखा । यः । न । ददाति । सख्ये । सचाऽभुवे । सचमानाय । पित्वः ।
अप । अस्मात् । प्र । इयात् । न । तत् । ओकः । अस्ति ।
पृणन्तम् । अन्यम् । अरणम् । चित् । इच्छेत् ॥ ४ ॥

व्यतिरेकेण निन्दामाह । <sup>v</sup>सः पुरुषः <sup>v</sup>सखा <sup>v</sup>न भवति <sup>v</sup>यः पुरुषः <sup>v</sup>सचाभुवे सर्वदा सहभवनशीलाय <sup>v</sup>सचमानाय सेवमानायोपसर्जनीभूताय <sup>v</sup>सख्ये सखिजनाय[1] <sup>v</sup>पित्वः पितूनन्नानि <sup>v</sup>न <sup>v</sup>ददाति न प्रयच्छति । स सुहृन्न भवतीत्यर्थः । <sup>v</sup>अस्मात् अदातुः सख्युः सः <sup>v</sup>अप <sup>v</sup>प्रेयात् अपगच्छेत् । यद्येनं परित्यज्य गच्छेत् ॥ 'इण् गतौ'। लिङि यासुट् ॥ तर्हि <sup>v</sup>तदोकः निवासः[2] सदनं[2] <sup>v</sup>न <sup>v</sup>अस्ति न भवति । सदनं हि बन्धुभिः परिवृतम् । स गतः पुरुषः <sup>v</sup>पृणन्तम् अन्नादिकं प्रयच्छन्तम् <sup>v</sup>अन्यमरणं <sup>v</sup>चित् अर्थं स्वामिनमेव <sup>v</sup>इच्छेत् कामयेत ॥

पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनु पश्येत पन्थाम् ।
ओ हि वर्तन्ते रथ्येव चक्रान्यमन्यमुप तिष्ठन्त रायः ॥ ५ ॥

पृणीयात् । इत् । नाधमानाय । तव्यान् । द्राघीयांसम् । अनु । पश्येत । पन्थाम् ।
ओ इति । हि । वर्तन्ते । रथ्याऽइव । चक्रा । अन्यम्ऽअन्यम् । उप । तिष्ठन्त । रायः ॥ ५ ॥

धनवन्तं पुरुषं दाने प्रेरयति । <sup>v</sup>तव्यान् तवीयान् धनैरतिशयेन प्रवृद्धः पुरुषः <sup>v</sup>नाधमानाय याचमानायातिथये <sup>v</sup>पृणीयादित् धनानि दद्यादेव ॥ 'पॄ पालनपूरणयोः'। क्र्यादिः । प्वादीनां ह्रस्वः ॥ यदि दद्यात् <sup>v</sup>द्राघीयांसम् ॥ दीर्घशब्दादीयसुनि 'प्रियस्थिर°' इत्यादिना द्राघीत्यादेशः ॥ दीर्घतमं <sup>v</sup>पन्थां पन्थानं सुकृतमार्गम् <sup>v</sup>अनु <sup>v</sup>पश्येत अनुपश्येत् । व्यत्ययेनात्मनेपदम् । तत्र कारणमाह । <sup>v</sup>रायः धनानि <sup>v</sup>ओ <sup>v</sup>हि[3] । आ उ । आ <sup>v</sup>वर्तन्ते एव खलु । एकत्र न तिष्ठन्तीत्यर्थः । तत्र दृष्टान्तः । <sup>v</sup>रथ्येव यथा रथ्यानि ॥ 'रथाद्यत्' (पा. सू. ४. ३. १२१) इति 'तस्येदम्' इत्यर्थे यत् ॥ रथसंबन्धीनि <sup>v</sup>चक्रा चक्राण्युपर्यधोभावेनावर्तन्ते तद्वदावृत्तिमेव दर्शयति । <sup>v</sup>अन्यमन्यं पुरुषं धनानि <sup>v</sup>उप <sup>v</sup>तिष्ठन्त उपतिष्ठन्ते । समवेतानि भवन्ति[4] । 'उपाद्देवपूजासंगतिकरण°' (का. १. ३. २५. १) इत्यात्मनेपदम् ॥ तस्माद्धनानि देयानीति भावः ॥ ॥ २२ ॥

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ ६ ॥

मोघम् । अन्नम् । विन्दते । अप्रऽचेताः । सत्यम् । ब्रवीमि । वधः । इत् । सः । तस्य ।
न । अर्यमणम् । पुष्यति । नो इति । सखायम् । केवलऽअघः । भवति । केवलऽआदी ॥ ६ ॥

अदातारं दूषयति । <sup>v</sup>अप्रचेताः अप्रकृष्टज्ञानः दाने चेतो[5] मनो यस्य न भवति <sup>v</sup>सः <sup>v</sup>मोघं व्यर्थमेव <sup>v</sup>अन्नं <sup>v</sup>विन्दते लभते ॥ 'विद्लृ लाभे'। तौदादिकः । 'शे मुचादीनाम्' इति नुमागमः ॥

---

१. त-भ-जनाय । २. ग-त१.२.३.६.७.८-भ-सद्म; त४.५-मु-निवासः । ३. त-भ-'हि' नास्ति । ४. त-भवंति उक्तत्रंति । ५. ग-त१.२.३.६.७.८.भ-'चेतो' नास्ति ।

इदं ᵛसत्यं यथार्थमेवेति ᵛब्रवीमि। ऋषिरहं वदामि। न केवलं व्यर्थं किंतु ᵛतस्य पुरुषस्य ᵛसः ᵛवध ᵛइत् वध एवान्नं परामृशतः॥ तच्छब्दस्य वधसामानाधिकरण्यात् पुँल्लिङ्गता। यथा 'णेरणौ°' (पा. सू. १. ३. ६७) इत्यत्र यत् कर्म स एव कर्तेति॥ अथवा स निरर्थको वध एव यः पुरुषः ᵛअर्यमणम्। उपलक्षणमिदम्। सर्वान् देवानर्यमादीन् ᵛन ᵛपुष्यति हविष्प्रदानेन न[1] पोषयति ᵛनो नापि ᵛसखायं समानख्यानमभ्यागतमतिथिं मित्रवर्गं च न पोषयति॥ 'पुष पुष्टौ'। दैवादिकः। यच्छब्दाध्याहारादनिघातः॥ अत एव ᵛकेवलादी॥ अदेः 'सुप्यजातौ°' (पा. सू. ३. २. ७८) इति णिनिः। अत उपधालक्षणा वृद्धिः॥ केवलमसाक्षिकमन्नं भुञ्जानः सः ᵛकेवलाघो ᵛभवति। केवलपापवान् भवति। अघमेव केवलं तस्य शिष्यते। नैहिकं नामुष्मिकमिति। तस्माद्यथाकथंचिद्दातव्यमित्यभिप्रायः॥

## कृषन्नित्फाल आशितं कृणोति यन्नध्वानमप वृङ्क्ते चरित्रैः।
## वदन्ब्रह्मावदतो वनीयान्पृणन्नापिरपृणन्तमभि ष्यात्॥ ७॥

कृषन्। इत्। फालः। आशितम्। कृणोति। यन्। अध्वानम्। अप। वृङ्क्ते। चरित्रैः। वदन्। ब्रह्मा। अवदतः। वनीयान्। पृणन्। आपिः। अपृणन्तम्। अभि। स्यात्॥ ७॥

ᵛकृषन् कृषिं कुर्वन् ᵛफालः ᵛआशितं[2] कर्षकं भोक्तारं ᵛकृणोति करोति। तथा ᵛअध्वानं मार्गं ᵛयन्॥ इणः शतरि नुमागमः॥ गच्छन् पुरुषः ᵛचरित्रैः आत्मीयैर्गमनैः ᵛअप ᵛवृङ्क्ते। स्वामिनो धनमावर्जयति॥ 'वृजी वर्जने'। आदादिकः। अनुदात्तेत्॥ ᵛवदन् शास्त्रार्थं ब्रुवाणः ᵛब्रह्मा ब्राह्मणः ᵛअवदतः शास्त्रार्थमब्रुवाणाज्जनात् ᵛवनीयान् संभक्तृतमः प्रियकरो भवति[3]॥ वनतेस्तृजन्तस्येयसुनि 'तुरिष्ठेमेयःसु' इति तृचो लोपः। ते यथा स्वकर्मणि प्रवर्तमानाः परेषामुपकारकाः तथा ᵛपृणन् दाता पुरुषः ᵛअपृणन्तम् अदातारं जनम् ᵛअभि अभिलक्ष्य ᵛआपिः ᵛस्यात् बन्धुर्भवेत्॥

## एकपाद्भूयो द्विपदो वि चक्रमे द्विपात्त्रिपादमभ्येति पश्चात्।
## चतुष्पादेति द्विपदामभिस्वरे संपश्यन्पङ्क्तीरुपतिष्ठमानः॥ ८॥

एकऽपात्। भूयः। द्विऽपदः। वि। चक्रमे। द्विऽपात्। त्रिऽपादम्। अभि। एति। पश्चात्। चतुःऽपात्। एति। द्विऽपदाम्। अभिऽस्वरे। सम्ऽपश्यन्। पङ्क्तीः। उपऽतिष्ठमानः॥ ८॥

अत्र पादशब्दो भागवचनः। ᵛएकपात् एकभागधनः पुरुषः ᵛद्विपदः द्विगुणधनस्य मार्गं ᵛभूयः। तृतीयायाः सुः। भूयसा कालेन ᵛवि ᵛचक्रमे विविधं गच्छति॥ 'वेः पादविहरणे' (पा. सू. १. ३. ४१) इत्यात्मनेपदम्॥ तथा ᵛद्विपात् पुरुषः ᵛत्रिपादं त्रिभागधनं पुरुषं ᵛपश्चात् ᵛअभ्येति अभिगच्छति। ᵛचतुष्पात् चतुर्भागधनस्तु ᵛद्विपदाम्। बहुवचनादेकपादादय उपलक्ष्यन्ते। एकपादधनादीनां ᵛपङ्क्तीः ᵛअभिस्वरे अभिगमने ᵛसंपश्यन् सम्यगीक्षमाणः सन् ᵛउपतिष्ठमानः ᵛएति गच्छमानो भवति। अन्योन्यापेक्षया सर्वे उत्तमाधमाः। तस्मात्त्वम् अहमेव धनवानिति न मन्येः[4] किंत्वतिथिभ्यो[5] धनानि ददस्वेत्यर्थः॥

---

१. ग-त१.२.३.६.८-भ-'न' नास्ति। २. ग-त१.२.३.६.७.८-भ-य आशितं। ३. ग-त४.५-भ-न भवति। ४. ग-भ-मन्यस्व। ५. त४-५-किंत्वर्थिभ्यो।

समौ चिद्धस्तौ न समं विविष्टः संमातरा चिन्न समं दुहाते ।
यमयोश्चिन्न समा वीर्याणि ज्ञाती चित्सन्तौ न समं पृणीतः ॥ ९ ॥

समौ । चित् । हस्तौ । न । समम् । विविष्टः । सम्ऽमातरा । चित् । न । समम् । दुहाते इति ।
यमयोः । चित् । न । समा । वीर्याणि । ज्ञाती इति । चित् । सन्तौ । न । समम् । पृणीतः ॥९॥

अतिथिभ्यो धनमप्रयच्छन्नपि मम भ्राता दास्यतीति चेत् तत्र हेतुमाह । समौ चिद्धस्तौ समावपि समं समानं न विविष्टः कार्यं न व्याप्नुतः ॥ 'विष्लृ व्याप्तौ' । जौहोत्यादिकः । संज्ञापूर्वकस्य विधेरनित्यत्वादभ्यासस्य गुणाभावः ॥ तथा संमातरा[1] वत्सस्य मातरौ धेनू समे अपि समं समानं पयः न दुहाते । यमयोश्चित् सहजातयोः पुत्रयोरपि समा समानि वीर्याणि न सन्ति । तस्मात् ज्ञाती चित् एकस्मिन् कुले सन्तौ जातावपि समं न पृणीतः न प्रयच्छतः। तस्माद्यस्य धनमस्ति स एव दद्यादित्यर्थः ॥ ॥ २३ ॥

'अग्ने हंसि' इति नवर्चं षष्ठं सूक्तममहीयुगोत्रस्योरुक्षयस्यार्षं गायत्रम् । रक्षोहाग्निर्देवता । तथा चानुक्रम्यते—'अग्ने हंस्युरुक्षय आमहीयव आग्नेयं राक्षोघ्नं गायत्रं तु' इति । मथ्यमानेऽग्नावजायमान इदमनुवक्तव्यम् । सूत्रितं च—'अजायमाने त्वेतस्मिन्नेवावसानेऽग्ने हंसि न्यत्रिणमिति सूक्तमावपेत' ( आश्व. श्रौ. २. १६ ) इति । प्रातरनुवाकाश्विनशस्त्रयोरपि गायत्रे छन्दसीदं सूक्तम् । सूत्रितं च—'अग्ने हंस्यग्निं हिन्वन्तु नः' ( आश्व. श्रौ. ४. १३ ) इति । दशमेऽहनि धिष्ण्याङ्गाराभिविहरण आद्या जप्या । सूत्रितं च—'परि त्वाग्ने पुरं वयमित्येतस्याः स्थानेऽग्ने हंसि न्यत्रिणम्' ( आश्व. श्रौ. ८. १२ ) इति ॥

अग्ने हंसि न्य१त्रिणं दीद्यन् मर्त्येष्वा । स्वे क्षये शुचिव्रत ॥ १ ॥

अग्ने । हंसि । नि । अत्रिणम् । दीद्यत् । मर्त्येषु । आ । स्वे । क्षये । शुचिऽव्रत ॥ १ ॥

हे शुचिव्रत पूतकर्मन्[2] दीप्यमानतेजस्क वा हे अग्ने अत्रिणम् अत्तारं शत्रुं तमोरूपं नितरां हंसि विनाशय ॥ आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः ॥ किं कुर्वन् । मर्त्येषु मनुष्येषु यजमानेष्वाभिमुख्येन दीद्यत् कर्मसिद्ध्यर्थं प्रकाशमानः । दीदेतिर्दीप्तिकर्मा । तथा स्वे आत्मीये क्षये[3] निवासभूते आहवनीयादिस्थाने दीप्यमानः ॥ 'क्षयो निवासे' ( पा. सू. ६. १. २०१ ) इत्याद्युदात्तत्वम् ॥

उत्तिष्ठसि स्वाहुतो घृतानि प्रति मोदसे । यत्त्वा स्रुचः समस्थिरन् ॥ २ ॥

उत् । तिष्ठसि । सुऽआहुतः । घृतानि । प्रति । मोदसे । यत् । त्वा । स्रुचः । सम्ऽअस्थिरन् ॥२॥

हे अग्ने स्वाहुतः अस्माभिः सुष्ठु आहूयमानः सन् उत्तिष्ठसि । अरणीभ्यामुद्गतो भव ॥ ऊर्ध्वकर्मत्वादात्मनेपदाभावः ( पा. सू. १. ३. २४ ) ॥ उद्गत्य च घृतानि घृतसहितान्यस्माभिर्दीयमानानि हवींषि प्रति मोदसे हृष्टो भव ॥ 'मुद हर्षे' । भौवादिकः । अनुदात्तेत् ॥ यत् यदा त्वा त्वां स्रुचः जुह्वादीनि पात्राणि समस्थिरन् संगतान्यभवन् ॥ 'समवप्रविभ्यः स्थः' ( पा. सू. १. ३. २२ ) इति लुङ्यात्मनेपदम् । 'स्थाघ्वोरिच्च' ( पा. सू. १. २. १७ ) इति सिचः कित्वमिकारश्चान्तादेशः । 'ह्रस्वादङ्गात्' इति सिचो लोपः । व्यत्ययेन झस्य रन् । 'तिङि चोदात्तवति' इति गतेर्निघातः ॥

---

१. त-भ-मातरा । २. त४.५-सुकर्मन् । ३. त-भ-मु-'क्षये' नास्ति ।

स आहु॑तो॒ वि रो॑चते॒ऽग्निरी॒ळेन्यो॑ गि॒रा । स्रु॒चा प्रती॑कमज्यते ॥ ३ ॥

सः । आऽहु॑तः । वि । रो॒च॒ते॒ । अ॒ग्निः । ई॒ळेन्यः॑ । गि॒रा । स्रु॒चा । प्रती॑कम् । अ॒ज्य॒ते॒ ॥३॥

^v^आहुतः आभिमुख्येन हुतः ॥ 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरः ॥ ^v^गिरा स्तुतिलक्षणया वाचा ^v^ईळेन्यः स्तोतव्यः ^v^सः ^v^अग्निः ^v^वि ^v^रोचते अत्यर्थं दीप्यते । तथा ^v^प्रतीकं सर्वेषां देवानां पूर्वमेव ^v^स्रुचा घृतसहितया ^v^अज्यते सिच्यते ॥

घृ॒तेना॒ग्निः सम॑ज्यते॒ मधु॑प्रतीक॒ आहु॑तः । रोच॑मानो वि॒भाव॑सुः ॥ ४ ॥

घृ॒तेन॑ । अ॒ग्निः । सम् । अ॒ज्य॒ते॒ । मधु॑ऽप्रतीकः । आऽहु॑तः । रोच॑मानः । वि॒भाऽव॑सुः ॥४॥

^v^अग्निः ^v^घृतेन हविषा ^v^समज्यते सम्यक् सिक्तो भवति । कीदृशः । ^v^मधुप्रतीकः घृतप्रयुक्तावयवः ^v^आहुतः स्तुतिभिर्हविर्भिर्वा ^v^रोचमानः दीप्यमानः ^v^विभावसुः स्वदीप्त्या सर्वमाच्छादयन् । यद्वा । दीप्तिरेव धनं यस्य सः ॥

अप्तोर्यामे होतुरतिरिक्तोक्थ्ये 'जरमाणः समिध्यसे' इत्यनुरूपस्तृचः । सूत्रितं च—'जराबोध तद्विविड्ढि जरमाणः समिध्यसे' (आश्व. श्रौ. ९. ११) इति ॥

जर॑माणः॒ समि॑ध्यसे दे॒वेभ्यो॑ हव्यवाहन । तं त्वा॑ हवन्त॒ मर्त्याः॑ ॥ ५ ॥

जर॑माणः । सम् । इ॒ध्य॒से॒ । दे॒वेभ्यः॑ । ह॒व्य॒ऽवा॒ह॒न॒ । तम् । त्वा॒ । ह॒व॒न्त॒ । मर्त्याः॑ ॥ ५ ॥

हे ^v^हव्यवाहन हव्यानां प्रापयितः ॥ 'हव्येऽनन्तःपादम्' (पा. सू. ३. २. ६६) इति ञ्युट् ॥ ^v^जरमाणः स्तोतृभिः स्तूयमानः । जरतिः स्तुतिकर्मा । स त्वं ^v^देवेभ्यः देवार्थं ^v^समिध्यसे हविर्भिः सम्यग्दीप्यसे । ^v^तं तादृशं ^v^त्वा त्वां ^v^मर्त्याः मनुष्येषु साधवो यजमानाः ^v^हवन्त आह्वयन्ति ॥ ह्वयतेर्लङि 'बहुलं छन्दसि' इति संप्रसारणम् ॥ ॥ २४ ॥

तं मर्ता॒ अम॑र्त्यं घृ॒तेना॒ग्निं स॑पर्यत । अदा॑भ्यं गृ॒हप॑तिम् ॥ ६ ॥

तम् । मर्ताः॑ । अम॑र्त्यम् । घृ॒तेन॑ । अ॒ग्निम् । स॒प॒र्य॒त॒ । अदा॑भ्यम् । गृ॒हऽप॑तिम् ॥ ६ ॥

हे ^v^मर्ताः ऋत्विजः ^v^अमर्त्यं मनुष्यधर्मरहितम् ^v^अग्निं ^v^घृतेन हविषा ^v^सपर्यत परिचरत ॥ सपरशब्दः कण्ड्वादिः ॥ कीदृशम् । ^v^अदाभ्यं कैश्चिदप्यहिंस्यम् ॥ 'दभेश्चेति वक्तव्यम्' (पा. सू. ३. १. १२४. ३) इति ण्यत् ॥ ^v^गृहपतिं गृहस्य स्वामिनं यजमानरूपम् ॥ 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरः ॥

अदा॑भ्येन शो॒चिषाग्ने॒ रक्ष॒स्त्वं द॑ह । गो॒पा ऋ॒तस्य॑ दीदिहि ॥ ७ ॥

अदा॑भ्येन । शो॒चिषा॑ । अग्ने॑ । रक्षः॑ । त्वम् । द॒ह॒ । गो॒पाः । ऋ॒तस्य॑ । दी॒दि॒हि॒ ॥ ७ ॥

हे ^v^अग्ने ^v^त्वम् ^v^अदाभ्येन अहिंस्येन ^v^शोचिषा तेजसा ^v^रक्षः । जातावेकवचनम् । सर्वान् राक्षसान् ^v^दह विनाशय । किंच ^v^ऋतस्य यज्ञस्य[1] ^v^गोपाः[1] गोपायिता सन् ^v^दीदिहि दीप्यस्व ॥

स त्वम॑ग्ने॒ प्रती॑केन॒ प्रत्यो॑ष यातु॒धान्यः॑ । उ॒रु॒क्षये॑षु॒ दीद्य॑त् ॥ ८ ॥

सः । त्वम् । अ॒ग्ने॒ । प्रती॑केन । प्रति॑ । ओ॒ष॒ । या॒तु॒ऽधान्यः॑ । उ॒रु॒ऽक्षये॑षु । दीद्य॑त् ॥ ८ ॥

---

१. त-भ—'यज्ञस्य गोपाः' नास्ति ।

हे ᵛअग्ने ᵛस ᵛत्वं ᵛप्रतीकेन त्वदवयवभूतेन तेजसा ᵛयातुधान्यः यातुधानी राक्षसीः ᵛप्रत्योष प्रतिकूलं दह ॥ 'उष दाहे'। भौवादिकः। लोटि हेर्लुक्। 'जातेरस्त्रीविषयात्°' (पा. सू. ४. १. ६३) इति यातुधानशब्दस्य ङीष्[1]। 'उदात्तस्वरितयोर्यणः°' इति स्वरितत्वम्॥ किं कुर्वन्। ᵛउरुक्षयेषु विस्तीर्णेषु निवासेष्वाहवनीयादिषु ᵛदीद्यत् दीप्यमानः॥

तं त्वा गीर्भिरुरुक्षया हव्यवाहं समीधिरे। यजिष्ठं मानुषे जने॥ ९॥

तम्। त्वा। गीःऽभिः। उरुऽक्षयाः। हव्यऽवाहम्। सम्। ईधिरे। यजिष्ठम्। मानुषे। जने॥९॥

हे अग्ने ᵛउरुक्षयाः बहुनिवासा यजमानाः ᵛहव्यवाहं हविषां वोढारं ᵛमानुषे मनुष्यसंबन्धिनि ᵛजने जनमध्ये ᵛयजिष्ठं यष्टृतमं ᵛतं ᵛत्वा त्वां ᵛगीर्भिः स्तुतिभिस्तत्सहितैर्हविर्भिः ᵛसमीधिरे सम्यगदीदिपन्[2]॥ इन्धेर्लिटि 'इन्धिभवतिभ्यां च[3]' (पा.सू.१.२. ६) इति किरवे नलोपः॥ ॥२५॥

'इति वै' इति त्रयोदशर्चं सप्तमं सूक्तं गायत्रम्। इन्द्रो लबरूपमास्थाय सोमपानं कुर्वन् तदानीमृषिभिः दृष्टः सन् स्वात्मानमनेन सूक्तेनास्तावीत्। अतो लबरूपापन्न इन्द्र ऋषिः। स एव देवता। तथा चानुक्रम्यते—'इति वै सप्तोनैन्द्रो लब आत्मानं तुष्टाव' इति। गतो विनियोगः॥

इति वा इति मे मनो गामश्वं सनुयामिति। कुवित्सोमस्यापामिति॥ १॥

इति। वै। इति। मे। मनः। गाम्। अश्वम्। सनुयाम्। इति। कुवित्। सोमस्य। अपाम्। इति॥१॥

ᵛइति ᵛवै इति खलु ᵛइति एवंप्रकारेण ᵛमे मदीयं ᵛमनः वर्तते। तं प्रकारं दर्शयति। ᵛगामश्वं च ᵛसनुयां स्तोतृभ्यः प्रयच्छामि ᵛइति। 'षणु दाने'। तानादिकः। इतिशब्दो हेतौ। यस्मात् ᵛकुवित् बहुवारं ᵛसोमस्य सोमम् ᵛअपां पीतवानस्मि॥ 'क्रियाग्रहणं कर्तव्यम्' इति सोमस्य संप्रदानसंज्ञा। 'चतुर्थ्यर्थे बहुलम्°' इति षष्ठी। 'पा पाने'। लुङि 'गातिस्था°' इति सिचो लुक्। कुवियोगादनिघातः॥

प्र वाताइव दोधत उन्मा पीता अयंसत। कुवित्सोमस्यापामिति॥ २॥

प्र। वाताःऽइव। दोधतः। उत्। मा। पीताः। अयंसत। कुवित्। सोमस्य। अपाम्। इति॥२॥

ᵛदोधतः भृशं कम्पयमानाः ᵛवाताइव वायवो यथा वृक्षादीनुद्यच्छन्ते तद्वत् ᵛपीताः सोमाः ᵛमा मां प्रकर्षेण ᵛउत् ᵛअयंसत उद्यच्छन्ते॥ यमेर्लुङि 'समुदाङ्भ्यो यमोऽग्रन्थे' (पा. सू. १. ३. ७५) इत्यात्मनेपदम्॥ यस्माद्बहुवारं सोमम् ᵛअपाम्॥

उन्मा पीता अयंसत रथमश्वाइवाशवः। कुवित्सोमस्यापामिति॥ ३॥

उत्। मा। पीताः। अयंसत। रथम्। अश्वाःऽइव। आशवः। कुवित्। सोमस्य। अपाम्। इति॥३॥

ᵛपीताः सोमाः माम् ᵛउत् ᵛअयंसत उद्यच्छन्ते। तत्र दृष्टान्तः। ᵛरथमश्वाइव यथा ᵛआशवः क्षिप्रगामिनो गमनेन व्याप्ता वाश्वा रथमुद्गमयन्ति तद्वत्॥

उप मा मतिरस्थित वाश्रा पुत्रमिव प्रियम्। कुवित्सोमस्यापामिति॥ ४॥

उप। मा। मतिः। अस्थित। वाश्रा। पुत्रम्ऽइव। प्रियम्। कुवित्। सोमस्य। अपाम्। इति॥४॥

---

१. त-भ-मु—ङीप्। २. ग—सम्यगदीपयन्। ३. ग-त-भ१.२.४.८—'च' नास्ति।

मतिः स्तोतृभिः क्रियमाणा स्तुतिः मा माम् उप अस्थित संयोजयति ॥ ' उपाद्देवपूजासंगतिकरण" (पा. सू. १. ३. २५. १ ) इत्यात्मनेपदम्। कथमिव। वाश्रा पुत्रमिव यथा वाश्रा शब्दायमाना धेनुः प्रियं पुत्रं[1] वत्सं संगच्छति तद्वत् ॥

अहं तष्टेव वन्धुरं पर्यचामि हृदा मतिम् । कुवित्सोमस्यापामिति ॥ ५ ॥

अहम् । तष्टाऽइव । वन्धुरम् । परि । अचामि । हृदा । मतिम् । कुवित् । सोमस्य । अपाम् । इति ॥५॥

तष्टेव तक्षा यथा वन्धुरं सारथिनिवासस्थानम्। तद्वान् वोपलक्ष्यते। तत्स्थानं रथं वा साधुकरोति तद्वत् अहं मतिं स्तुतिं हृदा आत्मीयेन मनसा पर्यचामि। साधुकरणाय परिगच्छामि ॥

नहि मे अक्षिपच्चनाच्छान्त्सुः पञ्च कृष्टयः । कुवित्सोमस्यापामिति ॥ ६ ॥

नहि । मे । अक्षिऽपत् । चन । अच्छान्त्सुः । पञ्च । कृष्टयः । कुवित् । सोमस्य । अपाम् । इति ॥६॥

चन इति निपातसमुदायोऽप्यर्थे। पञ्च कृष्टयः अपि निषादपञ्चमाश्चत्वारो वर्णाः पञ्च जनाः। यद्वा। देवमनुष्यादयः। मे मदीयम् अक्षिपत् चक्षुःपतनं दृष्टिसंचारं नहि अच्छान्त्सुः न ह्यपवृण्वन्ति[2]। ' न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते ' ( श. ब्रा. १४. ७. १. २३ ) इति हि श्रुतेः। ' छर्दि अपवारणे '। ' चुरादीनाम् ' इति वा ण्यन्तत्वादत्र ण्यभावे लुङि हलन्तलक्षणा वृद्धिः (पा. सू. ७. २. ३ ) ॥ यस्माद्बहुवारं[3] सोमम् अपाम् ॥ ॥ २६ ॥

नहि मे रोदसी उभे अन्यं पक्षं चन प्रति । कुवित्सोमस्यापामिति ॥ ७ ॥

नहि । मे । रोदसी इति । उभे इति । अन्यम् । पक्षम् । चन । प्रति ।
कुवित् । सोमस्य । अपाम् । इति ॥ ७ ॥

उभे रोदसी द्यावापृथिव्यौ मे मदीयम् अन्यं पक्षं चन पक्षमपि प्रति समाने न भवतः॥

अभि द्यां महिना भुवमभीमां पृथिवीं महीम् । कुवित्सोमस्यापामिति ॥८॥

अभि । द्याम् । महिना । भुवम् । अभि । इमाम् । पृथिवीम् । महीम् ।
कुवित् । सोमस्य । अपाम् । इति ॥ ८ ॥

उक्तमर्थं प्रतिपादयति। महिना महिम्नात्मीयेन द्यां द्युलोकम् अभि भुवम् अभिभवामि। तथा महीं महतीम् इमां पृथिवीं स्वमहिम्ना अभि भवामि ॥ भवतेर्लङि छान्दसो विकरणस्य लुक्। ' भूसुवोस्तिङि ' (पा. सू. ७. ३. ८८ ) इति गुणे प्रतिषिद्धे उवङादेशः ॥

हन्ताहं पृथिवीमिमां नि दधानीह वेह वा । कुवित्सोमस्यापामिति ॥ ९ ॥

हन्त । अहम् । पृथिवीम् । इमाम् । नि । दधानि । इह । वा । इह । वा ।
कुवित् । सोमस्य । अपाम् । इति ॥ ९ ॥

हन्त इति संभावनायामनुज्ञायां वा। संभावयाम्येतदनुजानामि वा। किं तत्। अहम् इमां पृथिवीम् इह वा अन्तरिक्षे नि दधानि। इह वा द्युलोके इति हस्तेन निर्दिशति ॥ दधातेर्लोटि[4] मेर्निः ॥

---

१. त४.५-पुत्रमिव। २. त१.२.३.६.७.८-म२.४.८-ह्यपावृण्वंति; त४.५-ह्यपिवृण्वंति।
३. ग-त१.२.३.४.५.६.८-म-यस्माद्बहु। ४. त-म-' दधातेर्लोटि ' नास्ति।

ओषमित्पृथिवीमहं जङ्घनानीह वेह वा। कुवित्सोमस्यापामिति ॥ १० ॥

ओषम्। इत्। पृथिवीम्। अहम्। जङ्घनानि। इह। वा। इह। वा।
कुवित्। सोमस्य। अपाम्। इति ॥ १० ॥

ᵛअहं ᵛपृथिवीम् अभिलक्ष्य ᵛओषं स्वतेजसा तापकमादित्यम् ᵛइह ᵛवा अन्तरिक्षे ᵛइह ᵛवा द्युलोके ᵛजङ्घनानि भृशं यापयानि[1]। ᵛइत् इति पूरणः ॥ हन्तेर्गत्यर्थस्य यङ्लुगन्तस्य लोटि शपो लुगभावश्छान्दसः ॥

दिवि मे अन्यः पक्षो३ऽधो अन्यमचीकृषम्। कुवित्सोमस्यापामिति ॥ ११ ॥

दिवि। मे। अन्यः। पक्षः। अधः। अन्यम्। अचीकृषम्।
कुवित्। सोमस्य। अपाम्। इति ॥ ११ ॥

ᵛमे मदीयः ᵛअन्यः ᵛपक्षः ᵛदिवि द्युलोके स्थापितः। ᵛअधः ॥ 'पूर्वाधरावराणामसि' (पा. सू. ५. ३. ३९) इत्यादिनासिप्रत्ययः। प्रकृतेरधादेशश्च ॥ अधस्तात्पृथिव्याम् ᵛअन्यं पक्षम् ᵛअचीकृषम् अकार्क्षम् ॥ 'कृष विलेखने'। ण्यन्तस्य लुङि चङि 'नित्यं छन्दसि' (पा. सू. ७. ४. ८) इत्यृकारादेशः ॥ विलेखनं नामोत्पादनम्। उदपादयम्। आस्थापयमित्यर्थः ॥

अहमस्मि महामहोऽभिनभ्यमुदीषितः। कुवित्सोमस्यापामिति ॥ १२ ॥

अहम्। अस्मि। महाऽमहः। अभिऽनभ्यम्। उत्ऽईषितः।
कुवित्। सोमस्य। अपाम्। इति ॥ १२ ॥

ᵛअभिनभ्यं नाभौ मध्यस्थाने भवं नभ्यमन्तरिक्षम्। 'उगवादिभ्यो यत्' (पा. सू. ५. १. २) इति यत्प्रत्ययः। तत्रैव पाठान्नभादेशश्च। 'लक्षणेनाभिप्रती आभिमुख्ये' (पा. सू. २. १. १४) इत्यव्ययीभावः। समासस्वरः। अन्तरिक्षमभि ᵛउदीषितः उद्गतः सूर्यात्मा ᵛअहं ᵛमहामहः ᵛअस्मि। महतामपि महानस्मि। यद्वा। महत् प्रभूतं महस्तेजो यस्य। प्रभूततेजस्कोऽस्मि ॥ 'आन्महतः°' (पा. सू. ६. ३. ४६) इत्यात्वम् ॥

गृहो याम्यरंकृतो देवेभ्यो हव्यवाहनः। कुवित्सोमस्यापामिति ॥ १३ ॥

गृहः। यामि। अरम्ऽकृतः। देवेभ्यः। हव्यऽवाहनः। कुवित्। सोमस्य। अपाम्। इति ॥ १३ ॥

ᵛगृहः हविषां ग्रहीता ᵛअरंकृतः यजमानैरलंकृतोऽहं ᵛदेवेभ्यः इन्द्रादिभ्यः[2] ᵛहव्यवाहनः हविषां वोढा प्रापयिता अग्न्यात्मा सन् ᵛयामि हवींषि प्रापयामि ॥ 'या प्रापणे'। लट्। 'हव्येऽनन्तःपादम्' इति वहेर्ञ्युट्। ञित्वादाद्युदात्तः। समासे कृदुत्तरपदप्रकृतिस्वरः ॥ ᵛइति यस्मात् ᵛकुवित् बहुवारं ᵛसोमस्य सोमम् ᵛअपां पीतवानस्मि। तस्मादेतान्यकार्यमितीन्द्रः स्वात्मानमेवास्तावीत् ॥ ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्येऽष्टमाष्टके षष्ठोऽध्यायः ॥

१. ग-त४.५-प्रापयानि। २. ग-अन्येभ्यः; त१.२.३.६.७.८-म-अन्येभ्यः।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ सप्तमो व्याख्यायते । दशममण्डलस्य दशमेऽनुवाके सूक्तसप्तकं व्याख्यातम् । 'तदित्' इति नवर्चमष्टमं सूक्तमथर्वणः पुत्रस्य बृहद्दिवस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं—'तदिन्नवाथर्वणो बृहद्दिवः' इति । चातुर्विंशिकेऽहनि निष्केवल्य इदं सूक्तम् । सूत्रितं च—'तदिदासेति च पुरस्तात्सूक्तस्य शंसेत्' (आश्व. श्रौ. ७. ३) इति । व्योमविश्वदेवस्तुत्पञ्चशारदीयेष्वप्येकाहेष्विदमेव निष्केवल्यनिविद्धानम् । सूत्रितं च—'एतेषां त्रयाणां कया शुभा तदिदासेति मध्यंदिनः' (आश्व. श्रौ. ९. ८) इति । राशिमरायाख्ययोरेकाहयोरपीदं निष्केवल्यनिविद्धानम् । सूत्रितं च—'राशिमराययोश्च कयाशुभीयतदिदासीये' (आश्व. श्रौ. ९. ८) इति । महाव्रते निष्केवल्येऽप्येतत्सूक्तम् । तथैव पञ्चमारण्यके शौनकेन सूत्रितं—'तदिदास भुवनेषु ज्येष्ठं तां सु ते कीर्तिं मघवन् महित्वा' (ऐ. आ. ५. १. ६) इति ॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ १ ॥

तत् । इत् । आस । भुवनेषु । ज्येष्ठम् । यतः । जज्ञे । उग्रः । त्वेषऽनृम्णः ।
सद्यः । जज्ञानः । नि । रिणाति । शत्रून् । अनु । यम् । विश्वे । मदन्ति । ऊमाः ॥ १ ॥

तत् जगत्कारणत्वेन सर्ववेदान्तप्रसिद्धम् । इच्छब्दोऽवधारणे । भुवनेषु ॥ 'भू सत्तायाम्'॥ सत्सु[1] पृथिव्यादिषु लोकेषु मध्ये जगत्कारणं ब्रह्मैव ज्येष्ठं प्रशस्ततमम् आस बभूव । तस्य परमार्थत्वात्[2] तद्व्यतिरिक्तानां व्यावहारिकत्वाच्च[3] । यद्वा । ज्येष्ठं वृद्धतमं जगत्कारणत्वेन सर्वेषामादिभूतं बभूव ॥ अस्तेर्लिटि 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'अस्तेर्भूः' (पा. सू. २. ४. ५२) इति भूभावाभावः । यद्वा । वृद्धं तदेव ब्रह्म स्वप्रकाशतया आस दिदीपे । 'अस गतिदीप्त्यादानेषु' । अस्माल्लिटि रूपम् । यतः उपादानभूतात् यस्मात् ब्रह्मणः उग्रः उद्गूर्णः त्वेषनृम्णः प्रदीप्तबलः सूर्यात्मक इन्द्रः जज्ञे जातो बभूव । श्रूयते हि—'चक्षोः सूर्यो अजायत' (ऋ. सं. १०. ९०. १३) इति । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (ऋ. सं. १०. १९०. ३) इति च ॥ 'जनिकर्तुः प्रकृतिः' (पा. सू. १. ४. ३०) इति प्रकृतेरपादानसंज्ञायां यत इति पञ्चमी । जनेर्लिटि 'गमहन°' इत्यादिना उपधालोपः । 'द्विर्वचनेऽचि' इति तस्य स्थानिवद्भावात् द्विर्वचनादि । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः ॥ स च जज्ञानः जायमान एव सद्यः शीघ्रं शत्रून् शातयितॄन् मन्देहादीन् राक्षसान् नि रिणाति निहिनस्ति । यद्वा उपासकानां पापरूपान् शत्रून् निहन्ति । तथा च ब्राह्मणं—'सद्यो ह्येष जातः पाप्मानमपाहत' (ऐ. आ. १. ३. ४) इति ॥ जज्ञान इति जनेर्लिटि[4] कानचि रूपमेतत् । रिणाति । 'री गतिरेषणयोः'। क्र्यादिः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् ॥ विश्वे सर्वे ऊमाः । अवन्ति रक्षन्तीत्यूमाः प्राणिनः । अवतेरौणादिको मन्प्रत्ययः । 'ज्वरत्वर°' इत्यादिना वकारोपधयोः स्थाने ऊठ् ॥ सर्वे प्राणिनः यं सूर्यात्मकमुद्यन्तमिन्द्रमनुलक्ष्य मदर्थमुदगात् मदर्थमुदगादिति मदन्ति हृष्यन्ति ॥ 'मदी हर्षे' । व्यत्ययेन शप् ॥ तथा च

---

१. त-भ-असत्सु । २. ग-त-भ-परमार्थसत्वात् । ३. ग-भ-व्यावहारिकसत्वाच्च; त-व्यावहारिकसत्वाच्च । ४. ग-त१.२.३.६.७.८-भ-मु-जनेर्लिटः ।

ब्राह्मणं—'भूतानि वै विश्व ऊमास्त एनमनुमदन्त्युदगादुदगादिति' (ऐ. आ. १. ३. ४) इति। तैत्तिरीयकं च—'तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति' (तै. सं. ६. ५. ४. २) इति। यद्वा। यं स्तुत्यादिभिर्मादयन्तमनु पश्चात् सर्वे प्राणिनोऽभीष्टप्राप्त्या हृष्यन्ति॥ 'अनुर्लक्षणे' (पा. सू. १.४.८४) इत्यनोः कर्मप्रवचनीयत्वात् कर्मप्रवचनीययुक्त इति द्वितीया॥ स इन्द्रो जज्ञ इत्यन्वयः॥

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु॥ २॥

ववृधानः। शवसा। भूरिऽओजाः। शत्रुः। दासाय। भियसम्। दधाति।
अविऽअनत्। च। विऽअनत्। च। सस्नि। सम्। ते। नवन्त। प्रऽभृता। मदेषु॥ २॥

^V^शवसा बलेन ^V^ववृधानः वर्धमानः अत एव ^V^भूर्योजाः बहुबलः ^V^शत्रुः शातयितेन्द्रः ^V^दासाय उपक्षयकारिणे शत्रवे ^V^भियसं भीतिं ^V^दधाति विदधाति। करोति। ^V^अव्यनत्। विविधमनिति श्वसितीति ^V^व्यनत्[1] प्राणवज्जङ्गमम्। तद्विलक्षणमव्यनत् स्थावरम्। तदुभयमपि ^V^सस्नि संस्नातमिन्द्रेण सम्यक् शोधितं भवति॥ स्नातेः 'आदृगमहन°' इति व्यत्ययेन कर्मणि किन्प्रत्ययः॥ यद्वा अन्तर्णीतण्यर्थात् कर्तर्येव किन्। वृष्ट्यादिना सम्यक् स्नापयिता शोधयिता भवति॥ 'न लोकाव्यय°' इति कर्मणि षष्ठ्याः प्रतिषेधः॥ शिष्टः पादः प्रत्यक्षकृतः। हे इन्द्र ^V^ते तव ^V^मदेषु हर्षेषु हविषा स्तुत्या च जातेषु[2] सत्सु ^V^प्रभृता प्रभृतानि प्रकर्षेण धृतानि पोषितानि वा सर्वाणि भूतजातानि ^V^सं ^V^नवन्त संगच्छन्ते। स्तोतुं हवींषि च दातुं समूहीभवन्तीत्यर्थः। नवतिर्गतिकर्मा॥ प्रभृता[3]। बिभर्तेः कर्मणि निष्ठा। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्॥

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः॥ ३॥

त्वे इति। क्रतुम्। अपि। वृञ्जन्ति। विश्वे। द्विः। यत्। एते। त्रिः। भवन्ति। ऊमाः।
स्वादोः। स्वादीयः। स्वादुना। सृज। सम्। अदः। सु। मधु। मधुना। अभि। योधीः॥ ३॥

हे इन्द्र ^V^त्वे त्वयि॥ 'सुपां सुलुक्°' इति सप्तम्येकवचनस्य शेआदेशः॥ ^V^विश्वे सर्वे यजमानाः ^V^क्रतुम् अनुष्ठेयं कर्म ^V^वृञ्जन्ति समापयन्ति। अपिशब्दो ब्राह्मणोक्तसर्वभूतानां सर्वमनसां समुच्चयार्थः॥ सर्वाणि पृथिव्यादीनि भूतानि सर्वेषां प्राणिनां मनांसि सर्वे यज्ञक्रतवश्च व्याप्ते त्वय्येव यजमानैः परिसमाप्यन्त इत्यर्थः। तथा च ब्राह्मणं—'त्वयीमानि सर्वाणि भूतानि सर्वाणि मनांसि सर्वे क्रतवोऽपि वृञ्जन्तीत्येव तदाह' (ऐ. आ. १. ३. ४) इति। ^V^यत् यस्मात् ^V^एते ^V^ऊमाः तर्पकाः॥ अवतेस्तर्पणार्थादौणादिको मन्प्रत्ययः। 'ज्वरत्वर°' इत्यादिना वकारोपधयोः ऊठ्॥ ईदृशा यजमानाः पूर्वमेकाकिनः सन्तः पश्चात् ^V^द्विः द्विवारं स्त्रीरूपेण पुंरूपेण च जाताः सन्तः पुनरपत्येन सार्धं ^V^त्रिः त्रिवारं जन्मभाजः ^V^भवन्ति। एक एवात्मा स्त्रीपुंसरूपेण जायते। 'अर्धो वा एष आत्मनो यत्पत्नी' (तै. ब्रा. ३. ३. ३) इति श्रुतेः। पुत्रोऽप्यात्मैव। 'आत्मा वै पुत्रनामासि' (श. ब्रा.

---

१. त-भ—व्यनत्स। २. ग-त१.२.३.६.७.८-भ—जन्येषु। ३. त१.२.६.८-भ१.४—प्रसूर्वात्; त३.४.५.७-भ२—प्रपूर्वात्।

१४. ९. ४. २६ ) इति श्रुतेः। यत एवमेतेऽभिवृद्धा भवन्ति ततोऽवगम्यते त्वय्येवानुष्ठितं सर्वं कर्म परिसमापयन्तीति। तथा च ब्राह्मणं—' द्वौ वै सन्तौ मिथुनौ प्रजायेते प्रजात्यै ' ( ऐ. आ. १. ३. ४ ) इति। हे इन्द्र त्वं[1] ᐯस्वादोः प्रियात् गृहधनादेरपि ᐯस्वादीयः स्वादुतरं प्रियतरमपत्यं ᐯस्वादुना स्वादुभूतेन मिथुनेन मातापित्रात्मकेन ᐯसं ᐯसृज संयोजय। यद्वा। स्वादुना भावेनोत्पन्नं तदपत्यमपि संयोजय। एतदेवाह। ᐯअदः तदपत्यं ᐯमधु मधुरं ᐯमधुना मदहेतुना मिथुनान्तरेण पौत्रेण[2] वा ᐯसु[3] सुष्ठु ᐯअभि ᐯयोधीः अभियोधय। अभितः क्रीडय ॥ धातूनामनेकार्थत्वात् युध्यतिरत्र क्रीडार्थे वर्तते ॥ ' मिथुनं वै स्वादु प्रजा स्वादु ' (ऐ. आ. १.३.४) इत्यादि ब्राह्मणमत्रानुसंधेयम् ॥

इति॑ चि॒द्धि त्वा॒ धना॒ जय॑न्तं॒ मदे॑मदे अनु॒मद॑न्ति॒ विप्राः॑ ।
ओजी॑यो धृष्णो स्थि॒रमा त॑नुष्व॒ मा त्वा॑ दभन्यातु॒धाना॑ दु॒रेवाः॑ ॥ ४ ॥

इति॑ । चि॒त् । हि । त्वा॒ । धना॑ । जय॑न्तम् । मदे॑ऽमदे । अ॒नु॒ऽमद॑न्ति । विप्राः॑ ।
ओजी॑यः । धृ॒ष्णो॒ इति॑ । स्थि॒रम् । आ । त॒नु॒ष्व॒ ।
मा । त्वा॒ । द॒भ॒न् । या॒तु॒ऽधाना॑ः । दुः॒ऽएवाः॑ ॥ ४ ॥

ᐯइति ᐯचिद्धि एवमेव खलु हे इन्द्र ᐯमदेमदे सोमपानजन्ये हर्षे सति ᐯधना शत्रुधनानि ᐯजयन्तं जयेन प्राप्नुवन्तं त्वाम् ᐯअनु पश्चात्। लक्षणेऽनोः कर्मप्रवचनीयत्वम्। ᐯविप्राः मेधाविनः स्तोतारः ᐯमदन्ति हृष्यन्ति। यद्वा त्वामनुमदन्ति अनुक्रमेण स्तुवन्ति। मदतिः स्तुतिकर्मा। 'हि च' इति निघातप्रतिषेधः। हे ᐯधृष्णो शत्रूणां धर्षयितरिन्द्र। ' त्रसिगृधिधृषिक्षिपेः क्नुः '। ᐯओजीयः[4]। ओजस्विशब्दादीयसुनि ' विन्मतोर्लुक् ' इति विनो लुक्। ' टेः ' इति टिलोपः। बलवत्तरम् अत एव ᐯस्थिरं दृढं धनम् ᐯआ ᐯतनुष्व अभितोऽस्मदर्थं विस्तारय। ᐯत्वा त्वां च ᐯमा ᐯदभन् मा हिंसन्तु ᐯदुरेवाः दुर्गतयः ᐯयातुधानाः राक्षसाः ॥

त्वया॑ व॒यं शा॑शद्महे॒ रणे॑षु प्र॒पश्य॑न्तो यु॒धेन्या॑नि॒ भूरि॑ ।
चो॒दया॑मि त॒ आयु॑धा॒ वचो॑भिः॒ सं ते॑ शिशामि॒ ब्रह्म॑णा॒ वयां॑सि ॥ ५ ॥

त्वया॑ । व॒यम् । शा॒श॒द्म॒हे॒ । रणे॑षु । प्र॒ऽपश्य॑न्तः । यु॒धेन्या॑नि । भूरि॑ ।
चो॒दया॑मि । ते॒ । आयु॑धा । वचः॑ऽभिः । सम् । ते॒ । शि॒शा॒मि॒ । ब्रह्म॑णा । वयां॑सि ॥ ५ ॥

हे इन्द्र ᐯत्वया अनुगृहीताः ᐯवयं ᐯरणेषु संग्रामेषु ᐯशाशद्महे भृशं शत्रून् शातयामः ॥ ' शद्लृ शातने '। अस्माद्यङन्तात् महिङः ' छन्दस्युभयथा ' इति आर्धधातुकत्वादतोलोपयलोपौ ॥ किं कुर्वन्तः। ᐯयुधेन्यानि योधनार्हाणि ॥ ' कृत्यार्थे तवैकेन्केन्यत्वनः ' इति युधेरर्हार्थे केन्यप्रत्ययः[5]। ᐯभूरि बहूनि बलानि ॥ ' सुपां सुलुक् ' इति शसो लुक्। ᐯप्रपश्यन्तः प्रकर्षेण जानन्तः। अपि च ᐯते तव ᐯआयुधा आयुधानि आयोधनसाधनानि वज्रादीनि। ' शेश्छन्दसि बहुलम् ' इति शेर्लोपः। ᐯवचोभिः स्तुतिभिः ᐯचोदयामि शत्रून् प्रति प्रेरयामि। ᐯते त्वदर्थं ᐯब्रह्मणा मन्त्रेण स्तुतिरूपेण सहितानि ᐯवयांसि ॥ अन्ननामैतत्। हविर्लक्षणान्यन्नानि ᐯसं ᐯशिशामि सम्यक्प्रिश्यामि। संस्करोमीत्यर्थः ॥ ' शो तनूकरणे '। छान्दसो विकरणस्य श्लुः। ' बहुलं छन्दसि ' इत्यभ्यासस्येत्वम् ॥॥१॥

---

१. ग-त-भ२.४–त्वं च। २. ग-त१.२.३.६.७.८-भ–' पौत्रेण ' नास्ति। ३. त-भ–' सु ' नास्ति। ४. ग-त४.५–ओजीयः ओजस्वितरं। ५. त-भ–केन्प्रत्ययः।

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।
आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ॥ ६ ॥

स्तुषेय्यम् । पुरुऽवर्पसम् । ऋभ्वम् । इनऽतमम् । आप्त्यम् । आप्त्यानाम् ।
आ । दर्षते । शवसा । सप्त । दानून् । प्र । साक्षते । प्रतिऽमानानि । भूरि ॥ ६ ॥

ᐯस्तुषेय्यं स्तोतव्यम् । 'स्तुवः क्सेय्यश्छन्दसि' (उ. सू. ३. ९९) इत्यौणादिकः क्सेय्य-प्रत्ययः । ᐯपुरुवर्पसं बहुरूपम् ᐯऋभ्वम् उरु भासमानमुरुभूतं वा ᐯइनतमम् अतिशयेनेश्वरम् ᐯआप्त्यानाम् आप्तव्यानां मध्ये ᐯआप्त्यम् आप्तव्यमेवंभूतमिन्द्रं स्तौमीति शेषः । य इन्द्रः ᐯशवसा बलेन ᐯसप्त सप्तसंख्याकान् ᐯदानून् दानवान् वृत्रनमुचिकुयवादीन् ᐯआ ᐯदर्षते आदृणाति हिनस्ति ॥ 'दॄ विदारणे' । अस्माल्लेटि व्यत्ययेनात्मनेपदम् । 'लेटोऽडाटौ' इत्यडागमः[१] । 'सिब्बहुलम्' इति सिप् ॥ तथा ᐯप्रतिमानानि असुराणां प्रतिरूपाणि ᐯभूरि भूरीणि बहून्यसुरबलानि ᐯप्र ᐯसाक्षते य इन्द्रः प्रसहते । यद्वा बहूनि प्रतिमानान्यसुराणां स्थानानि प्र साक्षते प्राप्नोति । 'साक्षतिराप्नोतिकर्मा' (निरु. ११. २१) इति यास्कः ॥ 'षह अभिभवे' । लेट्यडागमः[२] । 'सिब्बहुलम्°' इति सिप् । ढत्वकत्वषत्वानि । छान्दसो दीर्घः ॥

नि तद्दधिषेऽवरं परं च यस्मिन्नाविथावसा दुरोणे ।
आ मातरा स्थापयसे जिगत्नू अत इनोषि कर्वरा पुरूणि ॥ ७ ॥

नि । तत् । दधिषे । अवरम् । परम् । च । यस्मिन् । आविथ । अवसा । दुरोणे ।
आ । मातरा । स्थापयसे । जिगत्नू इति । अतः । इनोषि । कर्वरा । पुरूणि ॥ ७ ॥

ᐯतत् तस्मिन् यजमानस्य गृहे ᐯअवरम् अल्पं भौमं धनं ᐯपरम् उत्कृष्टं दिवि भवं धनं ᐯच हे इन्द्र त्वं ᐯनि ᐯदधिषे निदधासि । निक्षिपसि । ᐯयस्मिन् ᐯदुरोणे गृहे ᐯअवसा । अन्ननामैतत् । तर्पकेणान्नेन हविर्लक्षणेन ᐯआविथ अवसि तृप्यसि ॥ अवतेस्तृप्त्यर्थात् 'छन्दसि लुङ्लङ्लिटः' इति सार्वकालिको लिट् । 'अत आदेः' इत्यभ्यासस्यात्वम्[३] । 'यद्वृत्तान्नित्यम्' इति निघात-प्रतिषेधः ॥ अपि च ᐯमातरा सकलस्य भूतजातस्य निर्मात्र्यौ द्यावापृथिव्यौ ᐯजिगत्नू गमनशीले इतस्ततः प्रचलन्त्यौ ᐯआ ᐯस्थापयसे स्वकीये स्थानेऽवस्थापयसि । नैश्चल्येन यथावतिष्ठेते तथा करोषीत्यर्थः । "विष्वक् तस्तम्भ पृथिवीमुत द्याम्' (ऋ. सं. १०. ८९. ४) इति निगमान्तरम् । हे इन्द्र ᐯअतः कारणात् ᐯपुरूणि बहूनि ᐯकर्वरा । कर्मनामैतत् । कर्वराणि ॥ 'शेश्छन्दसि बहुलम्' इति शेर्लोपः ॥ कर्माणि लौकिकानि वैदिकानि च ᐯइनोषि प्राप्नोषि ॥ 'इण् गतौ' । व्यत्ययेन श्नुः ॥

इमा ब्रह्म बृहद्दिवो विवक्तीन्द्राय शूषमग्रियः स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजो दुरश्च विश्वा अवृणोदप स्वाः ॥ ८ ॥

इमा । ब्रह्म । बृहत्ऽदिवः । विवक्ति । इन्द्राय । शूषम् । अग्रियः । स्वःऽसाः ।
महः । गोत्रस्य । क्षयति । स्वऽराजः । दुरः । च । विश्वाः । अवृणोत् । अप । स्वाः ॥ ८ ॥

---

१. त-म—इत्याडागमः । २. त-म१.२.४.८—लेट्याडागमः । ३. त-म—'सस्येत्वं ।

बृहद्दिवः ऋषिः इमा इमानि ब्रह्म ब्रह्माणि[1] इन्द्राय शूषं सुखं यथा भवति तथा विवक्ति। प्रब्रवीतीत्यात्मन एव परोक्षनिर्देशः। 'वच परिभाषणे'। आदादिकः। छान्दसः शपः श्लुः। 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम्। ऋषिर्विशेष्यते। अग्रियः अग्रेभवः। ऋषीणां प्रमुखः श्रेष्ठ इत्यर्थः॥ 'घच्छौ च' (पा. सू. ४. ४. ११७) इत्यग्रशब्दाद्भवार्थे घच्। स्वर्षाः स्वर्गस्य संभक्ता। यद्वा। स्वरादित्य इन्द्रः। 'असौ वा आदित्य इन्द्रः' (तै. सं. ५.७.१.३) इति श्रुत्यन्तरात्। तस्य संभक्ता सेवक इत्यर्थः। 'वन षण संभक्तौ'। जनसनखनक्रमगमो विट्। 'विड्वनोरनुनासिकस्यात्' इत्यात्वम्। 'सनोतेरनः' इति षत्वम्। य इन्द्रः महः महतः गोत्रस्य पर्वतस्य बलेनासुरेण गवां पिधानार्थं निहितस्य स्वराजः स्वयमेव राजमानस्य। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। ईदृशं पर्वतं क्षयति अपगमयति। 'क्षि क्षये'। भौवादिकः। यद्वा। गोशब्दात् समूहार्थे 'इनित्रकट्यचश्च' (पा. सू. ४. २. ५१) इति त्रप्रत्ययः। गोत्रस्य गोसमूहस्य महः महतः स्वराजः स्वयमेव राजमानस्य य इन्द्रः क्षयति ईष्टे। क्षयतिरैश्वर्यकर्मा। स्वशब्दोपपदात् राजतेः 'सत्सूद्विष०' इति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। दुरश्च बिलद्वाराणि च विश्वाः सर्वाः स्वाः बलासुरस्य स्वभूताः अप अवृणोत् अपगतावरणा अकरोत्। उद्घाटितवानित्यर्थः। यद्वा। दुरश्चापावृणोत् विश्वाः सर्वाः स्वाः स्वभूता गा बिलमध्ये वर्तमाना अलभतेति शेषः। एवंभूतो य इन्द्रस्तस्मा इन्द्राय विवक्तीत्यन्वयः॥

**एवा महान् बृहद्दिवो अथर्वावोचत्स्वां तन्व१मिन्द्रमेव।**
**स्वसारो मातरिभ्वरीररिप्रा हिन्वन्ति च शवसा वर्धयन्ति च॥ ९॥**

एव। महान्। बृहत्ऽदिवः। अथर्वा। अवोचत्। स्वाम्। तन्वम्। इन्द्रम्। एव। स्वसारः। मातरिभ्वरीः। अरिप्राः। हिन्वन्ति। च। शवसा। वर्धयन्ति। च॥ ९॥

महान् गुणैरधिकः अथर्वा। उपचाराज्जन्ये जनकशब्दः। अथर्वणः पुत्रो बृहद्दिवाख्य[2] ऋषिर्देवेषु मध्ये इन्द्रमेव प्रति स्वाम् आत्मीयां तन्वं विस्तृतां स्तुतिम् एवम्[3] अवोचत् प्रोक्तवान्। वचेर्लुङि 'अस्यतिवक्ति०' इत्यादिना च्लेरङादेशः। 'वच उम्' इत्युमागमः। पादादित्वान्न निहन्यते। अपि चैनमेव इन्द्रं मातरिभ्वरीः मातरि सकलस्य भूतजातस्य निर्मात्र्यां भूमौ भवन्त्यो वर्तमानाः। भवतेः 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप्। 'वनो र च' इति ङीब्रेफौ। जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घः। पृषोदरादित्वाद्वर्णलोपः। अरिप्राः अपापाः स्वसारः स्वयमेव सरन्त्यः परस्परं भगिन्यो वा गङ्गाद्या नद्यः हिन्वन्ति यागसाधनत्वेन प्रीणयन्ति। हिविः प्रीणनार्थः। भौवादिकः। व्यत्ययेन शः। इदित्वात् नुम्। यद्वा। 'हि गतौ वृद्धौ च'। स्वादिभ्यः श्नुः। वृद्ध्यर्थं तमिन्द्रमुपगच्छन्ति। गत्वा च शवसा यागजन्येन बलेन तं वर्धयन्ति च॥ ॥२॥

'हिरण्यगर्भः' इति दशर्चं नवमं सूक्तं प्रजापतिपुत्रस्य हिरण्यगर्भाख्यस्यार्षं त्रैष्टुभम्। कशब्दाभिधेयः प्रजापतिर्देवता। तथा चानुक्रान्तं—'हिरण्यगर्भो दश हिरण्यगर्भः प्राजापत्यः कायम्' इति। गतः सूक्तविनियोगः। प्राजापत्यस्य पशोर्वपापुरोडाशहविषां क्रमेणादितस्तिस्रोऽनुवाक्यास्ततस्तिस्रो याज्याः। सूत्रितं च—'हिरण्यगर्भः समवर्तताग्र इति षट् प्राजापत्याः' (आश्व. श्रौ. ३. ८) इति। वरुणप्रघासेषु कायस्य हविषो हिरण्यगर्भ इत्येषा याज्या। सूत्रितं च—'कया नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्र इति प्रतिप्रस्थाता वाजिने तृतीयः' (आश्व श्रौ. २. १७) इति॥

---

१. ग-त४.५-ब्रह्माणि स्तोत्राणि। २. त-भ-बृहद्दिवा। ३. ग२-एवा एवं।

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥**

हिरण्यऽगर्भः । सम् । अवर्तत । अग्रे । भूतस्य । जातः । पतिः । एकः । आसीत् ।
सः । दाधार । पृथिवीम् । द्याम् । उत । इमाम् । कस्मै । देवाय । हविषा । विधेम ॥१॥

ᐯहिरण्यगर्भः हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः। तथा च तैत्तिरीयकं— ‘प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय’ (तै. सं. ५. ५. १. २) इति। यद्वा हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते। ᐯअग्रे प्रपञ्चोत्पत्तेः प्राक् ᐯसमवर्तत। मायाध्यक्षात् सिसृक्षोः परमात्मनः समजायत। यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपाधिभूतानां वियदादीनां ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न इत्युच्यते। स च ᐯजातः जातमात्र एव ᐯएकः अद्वितीयः सन् ᐯभूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः ᐯपतिः ईश्वरः ᐯआसीत्। न केवलं पतिरासीदेव अपि तर्हि ᐯसः हिरण्यगर्भः ᐯपृथिवीं विस्तीर्णां ᐯद्यां दिवम् ᐯउत अपि च ᐯइमाम् अस्माभिर्दृश्यमानां पुरोवर्तिनीमिमां भूमिम्। यद्वा पृथिवीत्यन्तरिक्षनाम। अन्तरिक्षं दिवं भूमिं च ᐯदाधार धारयति ॥ ‘छन्दसि लुङ्लङ्लिटः’ इति सार्वकालिको लिट्। तुजादित्वादभ्यासदीर्घः ॥ ᐯकस्मै। अत्र किंशब्दोऽनिर्ज्ञातस्वरूपत्वात् प्रजापतौ वर्तते। यद्वा। सृष्ट्यर्थं कामयत इति कः। कमेर्डप्रत्ययः। यद्वा। कं सुखम्। तद्रूपत्वात् क इत्युच्यते। अथवा इन्द्रेण पृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं प्रदायाहं कः कीदृशः स्यामित्युक्तवान्। स इन्द्रः प्रत्यूचे यदीदं ब्रवीष्यहं कः स्यामिति तदेव त्वं भवेति। अतः कारणात् क इति प्रजापतिराख्यायते। ‘इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्’ (ऐ. ब्रा. ३.२१) इत्यादिकं ब्राह्मणमत्रानुसंधेयम् ॥ यदासौ किंशब्दस्तदा सर्वनामत्वात् स्मैभावः सिद्धः। यदा तु यौगिकस्तदा व्यत्ययेनेति द्रष्टव्यम्। ‘सावेकाचः°’ इति प्राप्तस्य ‘न गोश्वन्साववर्ण°’ इति प्रतिषेधः। ‘क्रियाग्रहणं कर्तव्यम्’ इति कर्मणः संप्रदानत्वाच्चतुर्थी। कं प्रजापतिं ᐯदेवाय देवं दानादिगुणयुक्तं ᐯहविषा प्राजापत्यस्य पशोर्वपारूपेणैककपालात्मकेन[1] पुरोडाशेन वा ᐯविधेम वयमृत्विजः परिचरेम। विधतिः परिचरणकर्मा ॥

**य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।**
**यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ २ ॥**

यः । आत्मऽदाः । बलऽदाः । यस्य । विश्वे । उपऽआसते । प्रऽशिषम् । यस्य । देवाः ।
यस्य । छाया । अमृतम् । यस्य । मृत्युः । कस्मै । देवाय । हविषा । विधेम ॥ २ ॥

ᐯयः प्रजापतिः ᐯआत्मदाः[2] आत्मनां दाता। आत्मानो हि सर्वे तस्मात् परमात्मन उत्पद्यन्ते। यथाग्नेः सकाशाद्विस्फुलिङ्गा जायन्ते तद्वत्। यद्वा आत्मनां शोधयिता। ‘दैप् शोधने’। ‘आतो मनिन्°’ इति विच्। ᐯबलदाः बलस्य च दाता शोधयिता वा। ᐯयस्य च ᐯप्रशिषं प्रकृष्टं शासनमाज्ञां ᐯविश्वे सर्वे प्राणिनः ᐯउपासते प्रार्थयन्ते सेवन्ते वा। ‘शासु अनुशिष्टौ’। ‘शास इत्°’ (पा. सू. ६.४.३४) इत्युपधाया इत्वम्। ‘शासिवसिघसीनां च’ इति षत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। आसेरनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। ‘तिङि चोदात्तवति’ इति गतिरनुदात्ता। तथा ᐯदेवाः अपि ᐯयस्य प्रशासनमुपासते। अपि च ᐯअमृतम् अमृतत्वम्। भावप्रधानो निर्देशः।

---

१. त४.५–°कपालाख्येन। २. त१.२.३.६.७.८-भ–‘आत्मदाः’ नास्ति।

यद्वा। अमृतम्। मरणं नास्त्यस्मिन्निरित्यमृतं सुधा। बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम्। तदपि ᵛयस्य प्रजापतेः ᵛछाया छायेव वर्ति भवति। ᵛमृत्युः यमश्च प्राणापहारी छायेव भवति। तस्मै ᵛकस्मै ᵛदेवाय इत्यादि समानं पूर्वेण ᵛहविषा पुरोडाशात्मनेति तु विशेषः॥

य: प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥ ३॥

यः। प्राणतः। निऽमिषतः। महिऽत्वा। एकः। इत्। राजा। जगतः। बभूव।
यः। ईशे। अस्य। द्विऽपदः। चतुःऽपदः। कस्मै। देवाय। हविषा। विधेम॥ ३॥

ᵛयः हिरण्यगर्भः ᵛप्राणतः प्रश्वसतः[1]॥ 'अन प्राणने'। आदादिकः। 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम्॥ ᵛनिमिषतः अक्षिपक्ष्मचलनं कुर्वतः॥ अत्रापि पूर्ववद्विभक्तिरुदात्ता॥ ᵛजगतः जङ्गमस्य प्राणिजातस्य ᵛमहित्वा महत्त्वेन॥ 'सुपां सुलुक्°' इति तृतीयाया आकारः॥ माहात्म्येन ᵛएक ᵛइत् अद्वितीय एव सन् ᵛराजा ᵛबभूव ईश्वरो भवति॥ भवतेर्णलि 'लिति' (पा. सू. ६. १. १९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम्॥ ᵛअस्य परिदृश्यमानस्य ᵛद्विपदः पादद्वययुक्तस्य मनुष्यादेः ᵛचतुष्पदः गवाश्वादेश्च ᵛयः प्रजापतिः ᵛईशे ईष्टे॥ 'ईश ऐश्वर्ये'। आदादिकोऽनुदात्तेत्। 'लोपस्त आत्मनेपदेषु' इति तलोपः। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। अस्य। 'ऊडिदम्°' इतीदमो विभक्तिरुदात्ता। द्वौ पादौ यस्य स द्विपात्। 'संख्यासुपूर्वस्य' (पा. सू. ५. ४. १४०) इति पादस्यान्त्यलोपः समासान्तः। भसंज्ञायां 'पादः पत्' (पा. सू. ६.४.१३०) इति पद्भावः। 'द्वित्रिभ्यां पाद्दन्°' (पा. सू. ६. २. १९७) इत्येकदेशविकृतस्यानन्यत्वादुत्तरपदान्तोदात्तत्वम्। स्वरवर्जमेषैव चतुष्पद इत्यत्रापि प्रक्रिया। 'बहुव्रीहौ प्रकृत्या°' इति पूर्वपदप्रकृतिस्वरः। पूर्वपदस्य 'त्रः संख्यायाः' (फि. सू.२.५) इत्याद्युदात्तत्वम्। 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम्॥ ईदृशो यः प्रजापतिस्तस्मै ᵛकस्मै इत्यादि सुबोधं ᵛहविषा हृदयाद्यात्मनेत्ययमत्र विशेषः॥

यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम॥ ४॥

यस्य। इमे। हिमऽवन्तः। महिऽत्वा। यस्य। समुद्रम्। रसया। सह। आहुः।
यस्य। इमाः। प्रऽदिशः। यस्य। बाहू इति। कस्मै। देवाय। हविषा। विधेम॥ ४॥

हिमा अस्मिन् सन्तीति हिमवान्। तेन[2] बहुवचनान्तेन सर्वे पर्वता लक्ष्यन्ते। यथा छत्रिणो गच्छन्तीति। ᵛहिमवन्तः हिमवदुपलक्षिताः ᵛइमे दृश्यमानाः सर्वे पर्वताः ᵛयस्य प्रजापतेः ᵛमहित्वा महत्त्वं माहात्म्यमैश्वर्यमिति ᵛआहुः। तेन सृष्टत्वात्तद्रूपेणावस्थानाद्वा। तथा ᵛरसया। रसो जलम्। तद्वती रसा नदी॥ अर्शआदित्वादच्॥ जातावेकवचनम्। रसाभिर्नदीभिः ᵛसह ᵛसमुद्रम्। पूर्ववदेकवचनम्। सर्वान् समुद्रान् ᵛयस्य महाभाग्यमिति ᵛआहुः कथयन्ति सृष्टरभिज्ञाः। ᵛयस्य च ᵛइमाः ᵛप्रदिशः प्राच्याद्यारम्भा आग्नेय्याद्याः कोणदिश ईशितव्याः। तथा ᵛबाहू। वचनव्यत्ययः। बाहवो भुजाः। भुजवत्प्राधान्ययुक्ताः प्रदिशश्च ᵛयस्य स्वभूताः। तस्मै ᵛकस्मै इत्यादि समानं पूर्वेण॥

---

१. भ७–श्वसतः। २. ग-भ–तेन च।

येन॒ द्यौरु॒ग्रा पृ॑थि॒वी च॑ दृ॒ळ्हा येन॒ स्वः॑ स्तभि॒तं येन॒ नाकः॑ ।
यो अ॒न्तरि॑क्षे॒ रज॑सो वि॒मानः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ५ ॥

येन॑ । द्यौः । उ॒ग्रा । पृ॒थि॒वी । च॒ । दृ॒ळ्हा । येन॑ । स्व१रिति॑ स्वः॑ । स्त॒भि॒तम् । येन॑ । नाकः॑ ।
यः । अ॒न्तरि॑क्षे । रज॑सः । वि॒ऽमानः॑ । कस्मै॑ । दे॒वाय॑ । ह॒विषा॑ । वि॒धेम ॥ ५ ॥

ᵛयेन प्रजापतिना ᵛद्यौः अन्तरिक्षम् ᵛउग्रा उद्गूर्णं विशेषागहनरूपं वा । ᵛपृथिवी भूमिः ᵛच ᵛदृळ्हा येन स्थिरीकृता । ᵛस्वः स्वर्गश्च ᵛयेन ᵛस्तभितं स्तब्धं कृतम् । यथाधो न पतति तथोपरि अवस्थापितमित्यर्थः ॥ 'ग्रसितस्कभितस्तभित°' इति निपात्यते ॥ तथा ᵛनाकः आदित्यश्च ᵛयेन अन्तरिक्षे स्तभितः[1] । ᵛयः च ᵛअन्तरिक्षे ᵛरजसः उदकस्य ᵛविमानः निर्माता । तस्मै ᵛकस्मै इत्यादि गतम् ॥ ॥ ३ ॥

यं क्रन्द॑सी॒ अव॑सा तस्तभा॒ने अ॒भ्यैक्षे॑तां॒ मन॑सा॒ रेज॑माने ।
यत्राधि॒ सूर॒ उदि॑तो वि॒भाति॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ६ ॥

यम् । क्रन्द॑सी॒ इति॑ । अव॑सा । त॒स्त॒भा॒ने इति॑ । अ॒भि । ऐ॒क्षे॑ता॒म् । मन॑सा । रेज॑माने॒ इति॑ ।
यत्र॑ । अधि॑ । सूरः॑ । उत्ऽइ॑तः । वि॒ऽभाति॑ । कस्मै॑ । दे॒वाय॑ । ह॒विषा॑ । वि॒धेम ॥ ६ ॥

क्रन्दितवान् रोदितवाननयोः प्रजापतिरिति ᵛक्रन्दसी द्यावापृथिव्यौ । श्रूयते हि—'यदरोदीत्तदनयो रोदस्त्वम्' ( तै. ब्रा. २. २. ९. ४ ) इति । ते ᵛअवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं ᵛतस्तभाने प्रजापतिना सृष्टे[2] लब्धस्थैर्ये सत्यौ ᵛयं प्रजापतिं ᵛमनसा बुद्ध्या ᵛअभ्यैक्षेताम् आवयोर्महत्त्वमनेन इत्यभ्यपश्येताम् ॥ 'ईक्ष दर्शने'। लङि अडादित्वादाद्युदात्तः[3] ॥ कीदृश्यौ द्यावापृथिव्यौ । ᵛरेजमाने राजमाने दीप्यमाने ॥ आकारस्य[4] व्यत्ययेनैत्वम् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वा । लिटः कानच् । 'फणां च सप्तानाम्' (पा. सू. ६. ४. १२५) इत्येत्वाभ्यासलोपौ । 'छन्दस्युभयथा' इति सार्वधातुकत्वाच्छप् । अत एव 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ ᵛयत्राधि यस्मिन्नाधारभूते प्रजापतौ ᵛसूरः सूर्यः ᵛउदितः उदयं प्राप्तः सन् ᵛविभाति प्रकाशते ॥ उत्पूर्वादेतेः कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥ तस्मै ᵛकस्मै इत्यादि सुज्ञानम् ॥

आपो॑ ह॒ यद्बृ॑ह॒तीर्विश्व॒माय॒न् गर्भं॒ दधा॑ना ज॒नय॑न्तीर॒ग्निम् ।
ततो॑ दे॒वानां॒ सम॑वर्तता॒सुरेकः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ७ ॥

आपः॑ । ह॒ । यत् । बृ॒ह॒तीः । विश्व॑म् । आय॑न् । गर्भ॑म् । दधा॑नाः । ज॒नय॑न्तीः । अ॒ग्निम् ।
ततः॑ । दे॒वाना॑म् । सम् । अ॒व॒र्त॒त॒ । असुः॑ । एकः॑ । कस्मै॑ । दे॒वाय॑ । ह॒विषा॑ । वि॒धेम ॥ ७ ॥

ᵛबृहतीः बृहत्यो महत्यः ॥ जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । 'बृहन्महतोरुपसंख्यानम्' इति ङीप उदात्तत्वम् ॥ ᵛअग्निम् । उपलक्षणमेतत् । अग्न्युपलक्षितं सर्वं वियदादि-

१. ग-त१.२.३.६.८-मु-स्तंभितः । २. ग-भ५-स्तब्धे । ३. त-भ-अजादित्वादाद्युदात्तः । ४. त-भ-अकारस्य ।

भूतजातं ˅जनयन्तीः जनयन्त्यः तदर्थं ˅गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं ˅दधानाः धारयन्त्यः ˅आपो ˅ह आप एव ˅विश्वमायन् सर्वं जगत् व्याप्नुवन् ˅यत्[1] यस्मात् ˅ततः तस्माद्धेतोः ˅देवानां देवादीनां सर्वेषां प्राणिनाम् ˅असुः प्राणभूतः ˅एकः प्रजापतिः ˅समवर्तत समजायत। यद्वा[1]। यत् यं गर्भं दधाना आपो विश्वात्मनावस्थिताः ततो गर्भभूतात्प्रजापतेर्देवादीनां प्राणात्मको वायुरजायत। अथवा। यत्। लिङ्गवचनयोर्व्यत्ययः। उक्तलक्षणा या आपो विश्वमावृत्य स्थिताः[2] ततस्ताभ्योऽन्यः सकाशादेकोऽद्वितीयोऽसुः प्राणात्मकः प्रजापतिः समवर्तत निश्चक्राम। तस्मै ˅कस्मै इत्यादि गतम्॥

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम॥ ८॥

यः। चित्। आपः। महिना। परिऽअपश्यत्। दक्षम्। दधानाः। जनयन्तीः। यज्ञम्।
यः। देवेषु। अधि। देवः। एकः। आसीत्। कस्मै। देवाय। हविषा। विधेम॥ ८॥

˅यज्ञं यज्ञोपलक्षितं विकारजातं ˅जनयन्तीः उत्पादयन्तीः तदर्थं ˅दक्षं प्रपञ्चात्मना वर्धिष्णुं प्रजापतिमात्मनि ˅दधानाः धारयित्रीः॥ दधातेर्हेतौ शानच्। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्॥ ईदृशीः ˅आपः। व्यत्ययेन प्रथमा। अपः प्रलयकालीनाः ˅महिना महिम्ना। छान्दसो मलोपः। स्वमाहात्म्येन ˅यश्चित् यश्च प्रजापतिः ˅पर्यपश्यत् परितो दृष्टवान् ˅यः च ˅देवेष्वधि देवेषु मध्ये ˅देवः तेषामपीश्वरः सन् ˅एकः अद्वितीयः ˅आसीत् भवति॥ अस्तेश्छान्दसो लङ्। 'अस्तिसिचोऽपृक्ते' (पा. सू. ७. ३. ९६) इतीडागमः॥ तस्मै ˅कस्मै इत्यादि गतम्॥

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम॥ ९॥

मा। नः। हिंसीत्। जनिता। यः। पृथिव्याः। यः। वा। दिवम्। सत्यऽधर्मा। जजान।
यः। च। अपः। चन्द्राः। बृहतीः। जजान। कस्मै। देवाय। हविषा। विधेम॥ ९॥

स प्रजापतिः ˅नः अस्मान् ˅मा ˅हिंसीत् मा बाधताम्। ˅यः ˅पृथिव्याः भूमेः ˅जनिता जनयिता स्रष्टा॥ 'जनिता मन्त्रे' इति णिलोपो निपात्यते। 'उदात्तयणो हल्पूर्वात्' इति पृथिवीशब्दाद्विभक्तेरुदात्तत्वम्॥ ˅यो ˅वा यश्च ˅सत्यधर्मा सत्यमवितथं धर्म जगतो धारणं यस्य स तादृशः प्रजापतिः ˅दिवम् अन्तरिक्षोपलक्षितान् सर्वान् लोकान् ˅जजान जनयामास॥ 'जनी प्रादुर्भावे'। णिचि वृद्धौ 'जनीजृष्क्नसुरञ्जः°' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम्। ततो लिटि '°अमन्त्रे°' (पा. सू. ३. १. ३५) इति निषेधादाम्प्रत्ययाभावे तिपो णलि वृद्धौ 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्॥ ˅यश्च ˅बृहतीः महतीः ˅चन्द्राः आह्लादिनीः ˅अपः उदकानि ˅जजान जनयामास॥ 'ऊडिदम्°' इत्यादिना अप्शब्दादुत्तरस्य शस उदात्तत्वम्॥ तस्मै ˅कस्मै इत्यादि गतम्॥

इळादधाख्य इष्ट्ययने प्राजापत्यस्य हविषः 'प्रजापते' इत्येषानुवाक्या। सूत्रितं च—'प्राजापत्य'इळादधः प्रजापते न त्वदेतान्यन्यः' (आश्व. श्रौ. २. १४) इति। केशनखकीटादिभिः दुष्टानि हवींष्यनयैवाप्सु प्रक्षिपेत्। सूत्रितं च—'अपोऽभ्यवहरेयुः प्रजापते न त्वदेतान्यन्यः'

---

१. त-म१.४.७-'यत्...यद्वा' नास्ति। २. त-मु-स्थितास्ताः।

( आश्व. श्रौ. ३. १० ) इति। चौलादिकर्मस्वप्येषा होमार्था। सूत्रितं च—'तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च' ( आश्व. गृ. १. ४. ४ ) इति ॥

**प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव ।**
**यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒यं स्या॑म॒ पत॑यो र॒यी॒णाम् ॥ १० ॥**

प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव ।
यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु व॒यं स्या॑म॒ पत॑यो र॒यी॒णाम् ॥ १० ॥

हे ᵛप्रजापते ᵛत्वत् त्वत्तोऽन्यः कश्चित् ᵛएतानि इदानीं वर्तमानानि ᵛविश्वा विश्वानि सर्वाणि ॥ 'शेश्छन्दसि बहुलम्' इति शेर्लोपः ॥ ᵛजातानि प्रथमविकारभाञ्जि ᵛता तानि सर्वाणि भूतजातानि ᵛन ᵛपरि ᵛबभूव न परिगृह्णाति। न व्याप्नोति। त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषीति भावः। परिपूर्वो भवतिः परिग्रहार्थः। वयं च ᵛयत्कामाः यत्फलं कामयमानाः ᵛते तुभ्यं ᵛजुहुमः हवींषि प्रयच्छामः ᵛतत् फलं ᵛनः अस्माकम् ᵛअस्तु भवतु। तथा ᵛवयं च ᵛरयीणां धनानां ᵛपतयः ईश्वराः ᵛस्याम भवेम ॥ 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ॥  ॥ ४ ॥

'वसुं न' इत्यष्टर्चं दशमं सूक्तं वसिष्ठपुत्रस्य चित्रमहस आर्षमाग्नेयम्। आद्यापञ्चमी त्रिष्टुभौ शिष्टा जगत्यः। तथा चानुक्रान्तं—'वसुं नाष्टौ चित्रमहा वासिष्ठ आग्नेयं जागतमाद्यां पञ्चमीं वर्जे' इति। प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ जागते छन्दसीदं सूक्तम्। सूत्रितं च—'वसुं न चित्रमहसमिति जागतम्' ( आश्व. श्रौ. ४. १३ ) इति ॥

**वसुं॒ न चि॒त्रम॑हसं गृणीषे वा॒मं शेव॒मति॑थिमद्वि॒षेण्य॑म् ।**
**स रा॑सते शु॒रुधो॑ वि॒श्वधा॑यसो॒ऽग्निर्होता॑ गृ॒हप॑तिः सु॒वीर्य॑म् ॥ १ ॥**

वसु॑म् । न । चि॒त्रऽम॑हसम् । गृ॒णी॒षे॒ । वा॒मम् । शेव॑म् । अति॑थिम् । अ॒द्वि॒षेण्य॑म् ।
सः । रा॒स॒ते॒ । शु॒रुधः॑ । वि॒श्वऽधा॑यसः । अ॒ग्निः । होता॑ । गृ॒हऽप॑तिः । सु॒ऽवीर्य॑म् ॥ १ ॥

ᵛवसुं ᵛन वासकं सूर्यमिव ᵛचित्रमहसं चायनीयतेजस्कमग्निं ᵛगृणीषे गृणे स्तौमि ॥ 'गॄ शब्दे'। क्रैयादिकः। पुरुषव्यत्ययः। प्वादित्वाद्ध्रस्वः ॥ यद्वा। चित्रमहसमिति प्रथमार्थे द्वितीया। न इति संप्रत्यर्थे। संप्रति वासकमग्निमहं चित्रमहाः स्तौमि। कीदृशम्। ᵛवामं वननीयं ᵛशेवं सुखकरम् ᵛअतिथिम् अतिथिवत्पूज्यं यद्वा हविर्वहनाय सततगामिनम् ᵛअद्विषेण्यं द्वेष्यरहितम् ॥ द्विषेः[१] 'कृत्यार्थे तवैकेन्°' इति केन्यप्रत्ययः। नञा 'बहुव्रीहौ नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥ ᵛसः ᵛअग्निः ᵛशुरुधः[२] शोकस्य रोधयित्रीर्निवारयित्रीः ᵛविश्वधायसः क्षीरप्रदानादिना विश्वं सर्वं जगद्धारयन्तीर्गाः ᵛसुवीर्यं शोभनवीर्यं च ᵛरासते यजमानेभ्यो ददाति ॥ 'रा दाने'। अस्माल्लेट्यडागमः। 'सिब्बहुलम्°' इति सिप्। व्यत्ययेनात्मनेपदम्। विश्वशब्दोपपदाद्धधातेः 'वहिहाधाञ्भ्यः°' इत्यसुन्। 'णित्' इत्यनुवृत्तेः 'आतो युक्चिण्°' ( पा. सू. ७.३.३३ ) इति युक्। मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥ कीदृशोऽग्निः। ᵛहोता देवानामाह्वाता होमनिष्पादको वा ᵛगृहपतिः यजमानगृहाणा-

---

१. त-भ-'द्विषेः' नास्ति। २. ग-त४.५-भ२-शुरुधः शुचः।

मीश्वरः ॥ 'गेहे कः' (पा. सू. ३. १. १४४) इति ग्रहेः कप्रत्ययः। 'ग्रहिज्या॰' (पा. सू. ६. १. १६) इत्यादिना संप्रसारणम्। 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम्। शोभनं वीर्यं यस्येति बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥

जुषाणो अग्ने प्रति हर्य मे वचो विश्वानि विद्वान्वयुनानि सुक्रतो।
घृतनिर्णिग्ब्रह्मणे गातुमेरय तव देवा अजनयन्ननु व्रतम् ॥ २ ॥

जुषाणः। अग्ने। प्रति। हर्य। मे। वचः।
विश्वानि। विद्वान्। वयुनानि। सुक्रतो इति सुऽक्रतो।
घृतऽनिर्निक्। ब्रह्मणे। गातुम्। आ। ईरय। तव। देवाः। अजनयन्। अनु। व्रतम् ॥२॥

हे ᵛअग्ने ᵛजुषाणः प्रीयमाणस्त्वं ᵛमे मम ᵛवचः वचनं स्तोत्रं ᵛप्रति ᵛहर्य कामयस्व। 'हर्य गतिकान्त्योः'। तथा हे ᵛसुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा त्वं ᵛविश्वानि सर्वाणि ᵛवयुनानि। ज्ञाननामैतत् इह[1] ज्ञातव्ये वर्तते। ज्ञातव्यान्यर्थजातानि ᵛविद्वान् जानन् वर्तसे। हेतौ शतृप्रत्ययः। यतो जानासि ततो हेतोर्मद्वचनं कामयस्वेत्यर्थः। हे ᵛघृतनिर्णिक् घृतेनाज्येन निर्णिज्यमान पुष्यमाणशरीर। 'णिजिर् शौचपोषणयोः'। यद्वा। निर्णिगिति रूपनाम। दीप्तरूपाग्ने ᵛब्रह्मणे ब्राह्मणाय यजमानाय ᵛगातुं गातव्यं ज्ञातव्यं[2] वा यज्ञम् ᵛएरय आगमय। ᵛतव ᵛव्रतं त्वदीयं यज्ञकर्म ᵛअनु पश्चात् ᵛदेवाः इन्द्रादयः सर्वे ᵛअजनयन्। यजमानाय फलानि जनयन्ति। अतस्त्वदीयं यज्ञं यजमानाय प्रापयेत्यर्थः ॥ लक्षणेऽनोः कर्मप्रवचनीयत्वम्। व्रतमिति कर्मप्रवचनीययुक्त इति द्वितीया। जनेर्ण्यन्ताच्छान्दसो लङ्। 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम् ॥

सप्त धामानि परियन्नमर्त्यो दाशद्दाशुषे सुकृते मामहस्व।
सुवीरेण रयिणाग्ने स्वाभुवा यस्त आनट् समिधा तं जुषस्व ॥ ३ ॥

सप्त। धामानि। परिऽयन्। अमर्त्यः। दाशत्। दाशुषे। सुऽकृते। ममहस्व।
सुऽवीरेण। रयिणा। अग्ने। सुऽआभुवा। यः। ते। आनट्। सम्ऽइधा। तम्। जुषस्व ॥३॥

हे अग्ने ᵛसप्त सप्तसंख्याकानि ᵛधामानि स्थानानि पृथिव्यादिलोकात्मकानि ᵛपरियन् परितो गच्छन् ᵛअमर्त्यः मरणधर्मरहितस्त्वं यो यजमानः पुरोडाशादीनि[3] हवींषि ᵛदाशत् प्रयच्छति तस्मै ᵛदाशुषे दत्तवते ᵛसुकृते सुष्ठु यागं कृतवते ᵛमामहस्व। अपेक्षितं धनं ददस्व। महतिर्दानकर्मा ॥ 'सुकर्मपाप॰' (पा. सू. ३. २. ८९) इत्यादिना सुपर्वात्कृञो भूते काले क्विप् ॥ ᵛयः च यजमानः ᵛसमिधा समिन्धनसाधनेनेध्मेन हे ᵛअग्ने ᵛते त्वाम् ᵛआनट् प्राप्नोति ॥ नशतिर्गतिकर्मा। अस्माच्छान्दसो लङ्। 'बहुलं छन्दसि' इति शपो लुक्। 'छन्दस्यपि दृश्यते' इत्याडागमः। अश्नोतेर्वा व्यत्ययेन श्नम् ॥ ᵛतं यजमानं ᵛसुवीरेण। शोभनवीराः पुत्रा यस्य ॥ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥ तादृशेन ᵛस्वाभुवा सुष्ठु आ समन्ताद्भूष्णुना वर्धिष्णुना[4] ᵛरयिणा धनेन दातव्येन सार्धं ᵛजुषस्व[5] ॥

---

१. ग-त४.५-भ२–इह तु। २. ग-त-भ–'ज्ञातव्यं' नास्ति। ३. ग-त४.५-भ२–चरुपुरोडाशादीनि। ४. त१.२.३.६.७.८-भ–'वर्धिष्णुना' नास्ति। ५. ग-त४.५-भ२–जुषस्व सेवस्व।

यज्ञस्य॑ के॒तुं प्र॑थ॒मं पु॒रोहि॑तं ह॒विष्म॑न्त ईळते स॒प्त वा॒जिन॑म् ।
शृ॒ण्वन्त॑म॒ग्निं घृ॒तपृ॑ष्ठमु॒क्षणं॑ पृ॒णन्तं॑ दे॒वं पृ॑ण॒ते सु॒वीर्य॑म् ॥ ४ ॥

य॒ज्ञस्य॑ । के॒तुम् । प्र॒थ॒मम् । पु॒रःऽहि॑तम् । ह॒विष्म॑न्तः । ई॒ळ॒ते । स॒प्त । वा॒जिन॑म् ।
शृ॒ण्वन्त॑म् । अ॒ग्निम् । घृ॒तऽपृ॑ष्ठम् । उ॒क्षण॑म् । पृ॒णन्त॑म् । दे॒वम् । पृ॒ण॒ते । सु॒ऽवीर्य॑म् ॥ ४ ॥

यज्ञस्य यागस्य केतुं प्रज्ञापकं प्रथमं सर्वेषु देवेषु मुख्यं प्रथमस्थानं वा पुरोहितं पुरतो हितकारिणम् । यद्वा । पुरस्तात् पूर्वस्यां दिश्याहवनीयरूपेण निहितम् ॥ 'पूर्वाधरा॰' (पा. सू. ५. ३. ३९) इत्यादिना पूर्वशब्दादसिःप्रत्ययः । तत्संनियोगेन प्रकृतेः पुरादेशश्च । 'तद्धितश्चासर्वविभक्तिः' (पा. सू. १. १. ३८) इत्यव्ययसंज्ञायां 'पुरोऽव्ययम्' (पा. सू. १. ४. ६७) इति गतिसंज्ञा । धाञः कर्मणि निष्ठा । दधातेर्हिः । ततः समासे 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥ वाजिनं बलवन्तमन्नवन्तं वा शृण्वन्तम् अस्मत्स्तुतीः श्रोत्रेण जानन्तं घृतपृष्ठं दीप्तपृष्ठं दीप्ताङ्गम् उक्षणं यागद्वारेण वृष्टेः संभक्तारं यद्वा सेचनसमर्थं युवानं पृणते हविर्भिः प्रीणयित्रे यजमानाय ॥ 'पृण प्रीणने' । तौदादिकः । 'शतुरनुमः॰' इति विभक्तेरुदात्तत्वम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी ॥ हविर्भिः प्रीणयन्तं यजमानं पृणन्तं धनैः प्रीणयन्तम् । यद्वा । पृणतिर्दानकर्मा । हवींषि ददते यजमानाय पृणन्तं धनानि प्रयच्छन्तम् । सुवीर्यं शोभनवीर्योपेतं देवं द्योतमानं दानादिगुणयुक्तं वा एवंगुणविशिष्टम् अग्निं हविष्मन्तः हविर्भिर्युक्ताः सप्त होतृप्रमुखा वषट्कर्तारः ईळते स्तुवन्ति ॥ 'ईड स्तुतौ' । आदादिकः ॥

त्वं दू॒तः प्र॑थ॒मो वरे॑ण्यः॒ स हू॒यमा॑नो अ॒मृता॑य मत्स्व ।
त्वां म॑र्जयन् म॒रुतो॑ दा॒शुषो॑ गृ॒हे त्वां स्तोमे॑भि॒र्भृग॑वो॒ वि रु॑रुचुः ॥ ५ ॥

त्वम् । दू॒तः । प्र॒थ॒मः । वरे॑ण्यः । सः । हू॒यमा॑नः । अ॒मृता॑य । म॒त्स्व॒ ।
त्वाम् । म॒र्जय॒न् । म॒रुतः॑ । दा॒शुषः॑ । गृ॒हे । त्वाम् । स्तोमे॑भिः । भृग॑वः । वि । रु॒रु॒चुः॒ ॥५॥

हे अग्ने त्वं दूतः देवानां दूतकर्मणि नियुक्तः प्रथमः मुख्यः प्रथितः प्रख्यातो वा वरेण्यः संभजनीयश्चासि । सः त्वम् अमृताय अमरणाय तदर्थं नोऽस्माभिः हूयमानः हविषा तर्प्यमाणो वा सन् मत्स्व तृप्यस्व ॥ 'मदी हर्षे' । छान्दसो विकरणस्य लुक् ॥ अपि च त्वां मध्यमस्थाने वैद्युतरूपेण वर्तमानं मरुतः तत्रत्या देवगणाः मर्जयन् मार्जयन्ति अलंकुर्वन्ति । तथा दाशुषः हवींषि दत्तवतो यजमानस्य गृहे स्तोमेभिः स्तोमैः स्तोत्रैः भृगवः भृगुगोत्रा ऋषयस्त्वां वि रुरुचुः विशेषेण दीपयन्ति ॥ भृगुशब्दादुत्तरस्य तद्धितस्य 'अत्रिभृगुकुत्स॰' (पा. सू. २.४.६५) इत्यादिना बहुषु लुक् । रुरुचुः[1] । 'रुच दीप्तौ[1]' । अस्माच्छान्दसो लिट् ॥ ॥ ५ ॥

इषं॑ दु॒हन्त्सु॒दुघां॑ वि॒श्वधा॑यसं यज्ञ॒प्रिये॒ यज॑मानाय सुक्रतो ।
अग्ने॑ घृ॒तस्नु॒स्त्रिॠ॒तानि॒ दीद्य॑द्व॒र्तिर्य॒ज्ञं प॑रि॒यन्त्सु॑क्रतूयसे ॥ ६ ॥

इष॑म् । दु॒हन् । सु॒ऽदुघा॑म् । वि॒श्वऽधा॑यसम् । य॒ज्ञ॒ऽप्रिये॑ । यज॑मानाय । सु॒क्र॒तो॒ इति॑ सुऽक्रतो ।
अग्ने॑ । घृ॒तऽस्नुः॑ । त्रिः । ॠ॒तानि॑ । दीद्य॑त् । व॒र्तिः । य॒ज्ञम् । प॒रि॒ऽयन् । सु॒क्र॒तु॒ऽयसे॑ ॥६॥

---

१. ग-त-भ१.२.४.८–'रुरुचुः । रुच दीप्तौ' नास्ति ।

हे सुक्रतो सुकर्मन् शोभनप्रज्ञ वा अग्ने यज्ञप्रिये यज्ञैर्हविर्भिर्देवान् प्रीणयित्रे यजमानाय विश्वधायसं विश्वस्य सर्वस्य धारयित्रीं सुदुघां दोग्धुं सुशकां यज्ञरूपिणीं गाम् वृषम् इष्यमाणं यागफलरूपं पयः दुहन् क्षारयन् तथा घृतस्नुः घृतेनाज्येन प्रस्नातः ॥ स्नातेरौणादिकः कुप्रत्ययः॥ यद्वा। घृतो[1] दीप्तः[1] स्नुः सानुः समुच्छ्रितो ज्वालासमूहो यस्य स तथोक्तः ॥ 'पदादिषु मांस्पृत्स्नूनामुपसंख्यानम्' (पा. सू. ६. १. ६३. १) इति सानुशब्दस्य स्नुभावः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥ ईदृशस्त्वं त्रिः त्रिवारमावृत्तानि ऋतानि सत्यभूतानि पृथिव्यादीनि त्रीणि स्थानानि। यद्वा[2] गार्हपत्यादीनि स्थानानि[2] दीद्यत् दीपयन् वर्तिः सर्वं यज्ञगृहं सर्वमनुष्ठीयमानं यागं च परियन् परितो गच्छन् तत्तद्यज्ञगृहं तं तं यज्ञं च प्राप्नुवन् सुक्रतूयसे। शोभनं क्रतुं यज्ञमात्मन इच्छसि। यद्वा। शोभनः क्रतुर्यस्यासौ सुक्रतुर्यजमानः। स इवाचरसि। स यथा सम्यगनुष्ठाने प्रवर्तते एवं त्वमपि स्वयमेव यागस्य सम्यङ्निष्पत्त्यर्थं प्रवर्तस इत्यर्थः॥

**त्वामिदुस्या उषसो व्युष्टिषु दूतं कृण्वाना अयजन्त मानुषाः।**
**त्वां देवा महयाय्याय वावृधुराज्यमग्ने निमृजन्तो अध्वरे॥ ७॥**

त्वाम्। इत्। अस्याः। उषसः। विऽउष्टिषु। दूतम्। कृण्वानाः। अयजन्त। मानुषाः।
त्वाम्। देवाः। महयाय्याय। ववृधुः। आज्यम्। अग्ने। निऽमृजन्तः। अध्वरे॥ ७॥

अस्याः इदानीं दृश्यमानायाः उषसः व्युष्टिषु विवासनेषु प्रभातेषु सत्सु हे अग्ने त्वामित् त्वामेव देवानां दूतं कृण्वानाः कुर्वाणाः मानुषाः मनुष्याः अयजन्त यजन्ति। सर्वदेवात्मकं त्वामेव यजन्तीत्यर्थः। तथा देवाः अपि त्वां महयाय्याय पूजायै॥ 'मह पूजायाम्'। अस्मादौणादिको भाव आय्यप्रत्ययः॥ आत्मनः पूजार्थं वावृधुः वर्धयन्ति। किं कुर्वन्तः। अध्वरे। ध्वरो हिंसानिमित्तः प्रत्यवायः। तद्रहिते यागे आज्यम्। उपलक्षणमेतत्। आज्योपलक्षितं सर्वं हविः निमृजन्तः त्वयि निमार्जयन्तः। प्रक्षिपन्त इत्यर्थः॥

**नि त्वा वसिष्ठा अह्वन्त वाजिनं गृणन्तो अग्ने विदथेषु वेधसः।**
**रायस्पोषं यजमानेषु धारय यूयं पात स्वस्तिभिः सदा नः॥ ८॥**

नि। त्वा। वसिष्ठाः। अह्वन्त। वाजिनम्। गृणन्तः। अग्ने। विदथेषु। वेधसः।
रायः। पोषम्। यजमानेषु। धारय। यूयम्। पात। स्वस्तिऽभिः। सदा। नः॥ ८॥

हे अग्ने विदथेषु। विदन्त्यस्मिन् यष्टव्यान् देवानिति विदथो यज्ञः। तेषु वेधसः कर्मणां विधातारः गृणन्तः स्तुवन्तः वसिष्ठाः वसिष्ठपुत्रा ऋषयः वाजिनम् अन्नवन्तं बलवन्तं वा त्वां[3] नि अह्वन्त नितरामाह्वयन्। अस्ताविषुर्वा॥ ह्वेञो लुङि 'निसमुपविभ्यो ह्वः' (पा. सू. १.३. ३०) इत्यात्मनेपदम्। 'आत्मनेपदेष्वन्यतरस्याम्' (पा. सू.३.१.५४) इति च्लेरङादेशः। वसिष्ठशब्दाद्विहितस्यापत्यार्थप्रत्ययस्य 'अत्रिभृगुकुत्स॰' (पा. सू. २. ४. ६५) इत्यादिना बहुषु लुक्॥ स त्वं यजमानेषु अस्मासु रायः धनस्य पोषं पुष्टं धारय अवस्थापय॥ 'ऊडिदम्॰' इत्यादिना रैशब्दात् षष्ठ्या उदात्तत्वम्। 'षष्ठ्याः पतिपुत्र॰' (पा. सू. ८. ३. ५३) इति विसर्जनीयस्य सत्वम्॥ गतमन्यत्। एकस्मिन्नप्यग्नौ पूजार्थं बहुवचनम्॥ ॥ ६॥

१. त१.२.३.६.७.८-म८-घृतदीप्तः; म१.२.७-घृतवद्दीप्तः। २. ग-त-म१.४.७.८-'यद्वा... स्थानानि' नास्ति। ३. म७-त्वा त्वां।

'अयं वेनः' इत्यष्टर्चमेकादशं सूक्तं भार्गवस्य वेनस्यार्षं त्रैष्टुभम्। वेनो देवता। तथा चानुक्रान्तम्—'अयं वेनो वैन्यम्' इति। प्रवर्ग्येऽभिष्टव आद्यानुवक्तव्या। सूत्रितं च—'स्रक्के द्रप्सस्यायं वेनश्चोदयत्पृश्निगर्भाः' (आश्व. श्रौ. ४. ६) इति। वैश्वदेवशस्त्रेऽप्येषा धाय्या। सूत्रितं च—'तक्षन्नथमयं वेनश्चोदयत्पृश्निगर्भाः' (आश्व. श्रौ. ५. १८) इति॥

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति॥ १॥

अयम्। वेनः। चोदयत्। पृश्निऽगर्भाः। ज्योतिःऽजरायुः। रजसः। विऽमाने।
इमम्। अपाम्। सम्ऽगमे। सूर्यस्य। शिशुम्। न। विप्राः। मतिऽभिः। रिहन्ति॥१॥

^v^वेनः कान्त एतत्संज्ञो मध्यस्थानो देवः ^v^ज्योतिर्जरायुः। ज्योतिर्द्योतमानो मेघो जरायुः। उदरे गर्भो येन वेष्टितोऽवतिष्ठते तज्जरायु। तदिव वेष्टको यस्य स तथोक्तः। मेघमध्ये गर्भवदवस्थित इत्यर्थः। ^v^विमाने। विमीयन्ते[1] निर्मीयन्ते[1] अस्मिन्नाप इति विमानमन्तरिक्षम्। ^v^रजसः उदकस्य निर्मातर्यन्तरिक्षे स्थितः सन् ^v^अयं वेनः ^v^पृश्निगर्भाः। पृश्निरादित्यः। तस्य गर्भभूताः। यद्वा। पृश्नयः सह्योज्ज्वलवर्णाः सूर्यरश्मयः तेषां गर्भभूता अन्तरिक्षस्था अपः ^v^चोदयत्। पृथिवीं प्रति प्रेरयति। ^v^अपाम् उदकानामान्तरिक्ष्याणां ^v^सूर्यस्य च ^v^संगमे संगमनेऽन्तरिक्षे स्थितम् ^v^इमं वेनं ^v^विप्राः मेधाविनः स्तोतारः ^v^मतिभिः स्तुतिभिः ^v^रिहन्ति। रिहतिरर्चतिकर्मा। अर्चन्ति। पूजयन्ति। स्तुवन्तीत्यर्थः। ^v^शिशुं ^v^न। यथा बालं पुत्रं मातापित्राद्या बान्धवाः स्तुतिपदैरुपलालयन्ति तद्वत्॥

तस्मिन्नेवाभिष्टवे 'समुद्रादूर्मिम्' इत्येषा। सूत्र्यते हि—'समुद्रादूर्मिमुदियर्ति वेनो द्रप्सः समुद्रमभि यज्जिगाति' (आश्व. श्रौ. ४. ७) इति॥

समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शि।
ऋतस्य सानावधि विष्टपि भ्राट् समानं योनिमभ्यनूषत व्राः॥ २॥

समुद्रात्। ऊर्मिम्। उत्। इयर्ति। वेनः। नभःऽजाः। पृष्ठम्। हर्यतस्य। दर्शि।
ऋतस्य। सानौ। अधि। विष्टपि। भ्राट्। समानम्। योनिम्। अभि। अनूषत। व्राः॥२॥

समुद्रवन्त्यस्मादाप इति समुद्रमन्तरिक्षम्। तस्मात् ^v^ऊर्मिं जलसमूहम् अयं ^v^वेनः ^v^उदियर्ति उद्गमयति। अधः पातयतीत्यर्थः। कीदृशः। ^v^नभोजाः। नभस्याकाशे ... । इमं वेनमभि शब्दायन्ते॥ 'नु स्तुतौ'। कुटादिः। छान्दसो लुङ्॥

समानं पूर्वीरभि वावशानास्तिष्ठन्वत्सस्य मातरः सनीळाः।
ऋतस्य सानावधि चक्रमाणा रिहन्ति मध्वो अमृतस्य वाणीः॥ ३॥

समानम्। पूर्वीः। अभि। वावशानाः। तिष्ठन्। वत्सस्य। मातरः। सऽनीळाः।
ऋतस्य। सानौ। अधि। चक्रमाणाः। रिहन्ति। मध्वः। अमृतस्य। वाणीः॥ ३॥

---

१. त-भ-विमायंते निर्मायंते।

vपूर्वीः बह्वयः vसमानं वेनस्यात्मनश्च साधारणं स्थानं प्राप्य vअभि vवावशानाः अभितः शब्दायमानाः । यद्वा । तमेव वेनमभिकामयमानाः । vवत्सस्य वत्सस्थानीयस्य वैद्युताग्नेः vमातरः मातृभूताः vसनीळाः समाननिलया एवंविधा आन्तरिक्ष्या आपः vतिष्ठन् तिष्ठन्ति । अपि च vऋतस्य उदकस्य vसानावधि सानौ[1] समुच्छ्रितेऽन्तरिक्षस्थाने vचक्रमाणाः प्रवर्तमानाः vमध्वः मधुरस्य vअमृतस्य उदकस्य vवाणीः वाण्यः शब्दाः vरिहन्ति इमं वेनमर्चन्ति । अलंकुर्वन्तीत्यर्थः ॥

जा॒नन्तो॑ रू॒पम॑कृपन्त॒ विप्रा॑ मृ॒गस्य॒ घोषं॑ महि॒षस्य॒ हि ग्मन् ।
ऋ॒तेन॒ यन्तो॒ अधि॒ सिन्धु॑मस्थुर्वि॒दद्ग॑न्ध॒र्वो अ॒मृता॑नि॒ नाम॑ ॥ ४ ॥

जा॒नन्तः॑ । रू॒पम् । अ॒कृ॒प॒न्त॒ । विप्राः॑ । मृ॒गस्य॑ । घोष॑म् । म॒हि॒षस्य॑ । हि । ग्मन् ।
ऋ॒तेन॑ । यन्तः॑ । अधि॑ । सिन्धु॑म् । अ॒स्थुः॒ । वि॒दत् । ग॒न्ध॒र्वः । अ॒मृता॑नि । नाम॑ ॥ ४ ॥

vविप्राः मेधाविनः स्तोतारोऽस्य वेनस्य vरूपं vजानन्तः vअकृपन्त स्तुवन्ति । कृपतिः स्तुतिकर्मा । कथमस्य रूपं जानन्तीत्यत आह । vमृगस्य अन्वेषणीयस्य vमहिषस्य । महन्नामैतत् । महतो वेनस्य vघोषं गर्जितलक्षणं मेघस्थं शब्दं vहि यस्मात् vग्मन् अभिगच्छन्ति अतस्तदीयं रूपं जानन्तीत्यर्थः ॥ गमेश्छान्दसे लङि 'बहुलं छन्दसि' इति शपो लुक् । 'गमहन०' इत्युपधालोपः । 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा. सू. ६. ४. ७५) इत्यडभावः । अपि च vऋतेन सत्यभूतेन स्तोत्रेण यज्ञेन वा vयन्तः तं वेनं गच्छन्तः प्राप्नुवन्तो जनाः vसिन्धुं स्यन्दनशीलं जलसमूहम् vअधि vअस्थुः अधितिष्ठन्ति । तेषां स वेनो वृष्टिं करोतीत्यर्थः । तत्र किं कारणमिति चेत् यतोऽयं vगन्धर्वः गवामुदकानां धर्ता वेनः vअमृतानि अमरणहेतुभूतानि vनाम । उदकनामैतत् । नमनशीलानि उदकानि vविदत् वेद जानाति । तस्य वशे वर्तन्त इत्यर्थः । अतस्तद्भक्तानां वृष्टिः सुलभा ॥

अ॒प्स॒रा जा॒रमु॑पसिष्मिया॒णा योषा॑ बिभर्ति पर॒मे व्यो॑मन् ।
चर॑त्प्रि॒यस्य॒ योनि॑षु प्रि॒यः सन्त्सीद॑त्प॒क्षे हि॒र॒ण्यये॒ स वे॒नः ॥ ५ ॥

अ॒प्स॒राः । जा॒रम् । उ॒प॒ऽसि॒ष्मि॒या॒णा । योषा॑ । बि॒भ॒र्ति॒ । प॒र॒मे । विऽओ॑मन् ।
चर॑त् । प्रि॒यस्य॑ । योनि॑षु । प्रि॒यः । सन् । सीद॑त् । प॒क्षे । हि॒र॒ण्यये॑ । सः । वे॒नः ॥ ५ ॥

vअप्सराः अपां सारयित्र्यप्सु क्रीडार्थं सरन्ती वा vउपसिष्मियाणा कान्तसमीपमुपगम्येषद्धसन्ती ॥ 'स्मिङ् ईषद्धसने' । छान्दसो लिट् । तस्य 'लिटः कानज्वा' इति कानच् ॥ ईदृशी vयोषा स्त्री विद्युद्रूपा vजारम् अपां जरयितारम् । यद्वा । जार उपपतिः । स इव प्रियम् । इमं वेनं vपरमे उत्कृष्टे vव्योमन् व्योमन्यन्तरिक्षे vबिभर्ति पोषयति । धारयति वा । यथा काचिद्रूपवती योषिज्जारमुपगम्येषद्धसन्ती तं निर्जने स्थले पुष्णाति तद्वदनेन वेनेन विद्युद्रमत इत्यर्थः । vप्रियस्य अस्य वेनस्य vयोनिषु स्थानेषु vचरत् । विद्युद्रूपा यांपिच्चरति गच्छति । अभिसारिकावृत्त्या स्वयमेव गच्छति । vसः च vवेनः vप्रियः अस्या अनुकूलतमः vसन् vहिरण्यये हिरण्मये हिरण्मयवज्रास्वरे हितरमणीयरूपे वा vपक्षे आत्मनः पक्षभूते मेघे vसीदत् सीदति । तया सहोपविशति ॥ ॥ ७ ॥

अभिप्लवे 'नाके सुपर्णम्' इत्येषा । सूत्रितं च—'नाके सुपर्णमुप यत्पतन्तमिति समाप्य प्रणवेनोपविशेत्' (आश्व. श्रौ. ४. ७) इति ॥

---

१. ग-त४.५-भ२-'सानौ' नास्ति ।

नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ६ ॥

नाके । सुऽपर्णम् । उप । यत् । पतन्तम् । हृदा । वेनन्तः । अभि । अचक्षत । त्वा ।
हिरण्यऽपक्षम् । वरुणस्य । दूतम् । यमस्य । योनौ । शकुनम् । भुरण्युम् ॥ ६ ॥

हे वेन ᵛत्वा त्वां ᵛहृदा हृदयेन मनसा ᵛवेनन्तः कामयमानाः स्तोतारः ᵛनाके अन्तरिक्षे ᵛयत्[1] यदा[1] ᵛअभ्यचक्षत अभिपश्यन्ति तदानीं त्वम् ᵛउप आगच्छसीति शेषः । कथंभूतम् । ᵛसुपर्णं शोभनपतनं ᵛपतन्तम् अन्तरिक्षे गच्छन्तं ᵛहिरण्यपक्षं हिरण्मयाभ्यां पक्षाभ्यामुपेतं ᵛवरुणस्य जलाभिमानिनो देवस्य ᵛदूतं चारं[2] ᵛयमस्य नियामकस्य वैद्युताग्नेः ᵛयोनौ स्थानेऽन्तरिक्षे ᵛशकुनं पक्षिरूपेण वर्तमानं ᵛभुरण्युं भर्तारम् । यद्वा । वृष्टिप्रदानादिना सर्वस्य जगतः पोषकम् ॥ 'भुरण धारणपोषणयोः'। कण्ड्वादिः । अस्मादौणादिक उप्रत्ययः ॥

ऊर्ध्वो गन्धर्वो अधि नाके अस्थात्प्रत्यङ् चित्रा बिभ्रदस्यायुधानि ।
वसानो अत्कं सुरभिं दृशे कं स्व१र्ण नाम जनत प्रियाणि ॥ ७ ॥

ऊर्ध्वः । गन्धर्वः । अधि । नाके । अस्थात् । प्रत्यङ् । चित्रा । बिभ्रत् । अस्य । आयुधानि ।
वसानः । अत्कम् । सुरभिम् । दृशे । कम् । स्वः । न । नाम । जनत । प्रियाणि ॥ ७ ॥

ᵛऊर्ध्वः उपरिदेशे वर्तमानः ᵛगन्धर्वः गवामुदकानां धर्ता ॥ 'गवि गन् धृञो वः' इति गोशब्दोपपदात् 'धृञ् धारणे' इत्यस्माद्वप्रत्यय उपपदस्य गन्भावश्च ॥ ईदृशो वेनः ᵛप्रत्यङ् अस्मत्प्रत्यञ्चनोऽभिमुखः सन् ᵛनाके ᵛअधि अन्तरिक्षे ᵛअस्थात् तिष्ठति । किं कुर्वन् । ᵛअस्य आत्मनः स्वभूतानि ᵛचित्रा चित्राणि चायनीयान्याश्चर्यभूतानि वा ᵛआयुधानि ᵛबिभ्रत् धारयन् ॥ बिभर्तेः शतरि 'भृञामित्' इत्यभ्यासस्येत्वम् । 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ तथा ᵛसुरभिं शोभनम् ᵛअत्कम् आत्मीयं व्याप्तं रूपं ᵛवसानः सर्वत्राच्छादयन् । किमर्थम् । ᵛदृशे दर्शनार्थम् ॥ 'दृशे विख्ये च' इति केप्रत्ययान्तो निपात्यते ॥ ᵛकम् इति पूरणः । तत्र दृष्टान्तः । ᵛस्वर्ण । स्वः शोभनारण आदित्यः । स यथात्मीयं रूपं दर्शनाय सर्वत्राच्छादयति तद्वत् । तदनन्तरं ᵛनाम नामानि नमनशीलान्युदकानि ᵛप्रियाणि सर्वेषामनुकूलानि ᵛजनत जनयति । वृष्टिमुत्पादयतीत्यर्थः ॥

प्रवर्ग्येऽभिष्टवे 'द्रप्सः समुद्रम्' इत्येषा । सूत्रितं च—'द्रप्सः समुद्रमभि यज्जिगाति सखे सखायमभ्या ववृत्स्व' (आश्व. श्रौ. ४. ७) इति ॥

द्रप्सः समुद्रमभि यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् ।
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥ ८ ॥

द्रप्सः । समुद्रम् । अभि । यत् । जिगाति । पश्यन् । गृध्रस्य । चक्षसा । विऽधर्मन् ।
भानुः । शुक्रेण । शोचिषा । चकानः । तृतीये । चक्रे । रजसि । प्रियाणि ॥ ८ ॥

१. ग-त-'यद्यदा' नास्ति । २. ग—चामरं; त१.२.३.६.७.८-म१.२.७.८—चारपरं ।

ᵛविधर्मन् विधर्मणि विधारकेऽन्तरिक्षे स्थितः ᵛद्रप्सः द्रवणशीलः । यद्वा । द्रप्सा उदकबिन्दवः । तद्वान् ॥ अर्शआदित्वादच् । ᵛगृध्रस्य गृधो रसानभिकाङ्क्षतः सूर्यस्य ᵛचक्षसा तेजसा ᵛपश्यन् प्रकाशमानो वेनः ᵛयत् यदा ᵛसमुद्रं समुन्दनशीलं मेघम् ᵛअभि ᵛजिगाति अभिगच्छति तदानीं ᵛभानुः सूर्यः ᵛशुक्रेण शुभ्रेण ᵛशोचिषा तेजसा ᵛतृतीये ᵛरजसि लोके ᵛचकानः दीप्यमानः ᵛप्रियाणि सर्वेषामभीष्टान्युदकानि ᵛचक्रे करोति ॥ ॥८॥

'इमं नो अग्ने' इति नवर्चं द्वादशं सूक्तम् । द्वितीयाद्याभिस्तिसृभिरग्निर्ऋषिर्भूत्वा स्वात्मानं देवतारूपिणमस्तौत् । अतस्तासां स एवर्षिर्देवता च । शिष्टाभिरग्निवरुणसोमा अस्तुवन् । अतस्तासां षण्णां त ऋषयः । आद्याग्नेयी । नवमीन्द्रदेवत्या । शिष्टासु चतसृषु लिङ्गोक्तदेवता । सप्तमी जगती शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—'इमं नो नवैन्द्र्युत्तमा निहत्वोऽग्निवरुणसोमानामाद्याग्नेयी तिस्रश्चाग्नेरात्मस्तवः शिष्टा यथानिपातं सप्तमी जगती' इति । गतो विनियोगः ॥

इमं नो अग्न उप यज्ञमेहि पञ्चयामं त्रिवृतं सप्ततन्तुम् ।
असो हव्यवाळुत नः पुरोगा ज्योगेव दीर्घं तम आशयिष्ठाः ॥ १ ॥

इमम् । नः । अग्ने । उप । यज्ञम् । आ । इहि । पञ्चऽयामम् । त्रिऽवृतम् । सप्तऽतन्तुम् ।
असः । हव्यऽवाट् । उत । नः । पुरःऽगाः । ज्योक् । एव । दीर्घम् । तमः । आ । अशयिष्ठाः ॥ १ ॥

भ्रातृषु हविर्वहनेषु मृतेषु मरणभीत्या कृतपलायनं गुहायां निगूढमग्निमद्याद्याः सूक्तद्रष्टार ऋषयोऽनयाह्वयन् । हे ᵛअग्ने ᵛनः अस्माकम् ᵛइमं ᵛयज्ञम् ᵛउप ᵛएहि उपागच्छ । प्राप्नुहि । मा पलायिष्ठाः । कीदृशम् । ᵛपञ्चयामं यजमानपञ्चमैर्ऋत्विग्भिर्नियमितम् । यद्वा । धानाकरम्भादिभिः पञ्चभिः हविर्भिः पञ्चभिः प्रयाजैर्वा प्राप्तम् । ᵛत्रिवृतं पाकयज्ञहविर्यज्ञसोमयज्ञभेदेन सवनत्रयात्मना वा त्रिगुणं ᵛसप्ततन्तुं सप्त तन्तवस्तनितारः कर्मणां विस्तारयितारो होत्राद्याः सप्त वषट्कर्तारो यस्य । यद्वा । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोळशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तधा विस्तीर्यमाणम्[1] । ईदृशं यज्ञमुपगत्य चानन्तरं ᵛनः अस्माकं ᵛहव्यवाट् हव्यानां हविषां वोढा ᵛअसः भव ॥ अस्तेर्लेट्यडागमः ॥ ᵛउत अपि च ᵛनः अस्माकं ᵛपुरोगाः पुरतो गन्ता भव ॥ जनसनखनक्रमगमो विट् । 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् ॥ ᵛज्योक् चिरकालम् ᵛएव अस्मान् परित्यज्य ᵛदीर्घं ᵛतमः महदन्धकारं गुहायाम् ᵛआशयिष्ठाः । आस्थाय[2] शयनमकार्षीः । इत ऊर्ध्वं तस्मात् स्थानादस्मानागच्छेत्यर्थः ॥

अदेवाद्देवः प्रचता गुहा यन् प्रपश्यमानो अमृतत्वमेमि ।
शिवं यत्सन्तमशिवो जहामि स्वात्सख्यादरणीं नाभिमेमि ॥ २ ॥

अदेवात् । देवः । प्रऽचता । गुहा । यन् । प्रऽपश्यमानः । अमृतऽत्वम् । एमि ।
शिवम् । यत् । सन्तम् । अशिवः । जहामि । स्वात् । सख्यात् । अरणीम् । नाभिम् । एमि ॥ २ ॥

ᵛअदेवात् अदेवनशीलात् ᵛगुहा गुहायां वर्तमानात् ॥ 'सुपां सुलुक्' इति सप्तम्या लुक् ॥ ᵛप्रचता देवानां प्रयाचनेन हेतुना ᵛयन् निर्गच्छन् ᵛदेवः देवनशीलोऽहं ᵛप्रपश्यमानः देवैर्मदर्थं कल्पितं प्रयाजानुयाजादिलक्षणं हविर्भागं प्रपश्यमानो निरीक्षमाणः सन् ᵛअमृतत्वमेमि । मरणधर्मराहित्यं देवत्वं प्राप्नोमि ॥ दृशेर्व्यत्ययेनात्मनेपदम् ॥ हविर्वहनाद्भीतः पलायितोऽब्बादिषु स्थानेषु

१. ग-त१.२.३.६.७.८-म१.२.४.८—विस्तार्यमाणं । २. त१.२.३.७-म१.२.४.८—आस्थापय ।

निगूढः पुनर्देवैर्हविर्वहनाय प्रार्थ्यमानस्तैर्दत्तेन हविषा अहं देवत्वं प्राप्तवानस्मीत्यर्थः। यद्यप्यहं गुहातो निर्गत्य प्रकाशमानः सन् शोभनं यज्ञं निवर्तयामि तथापि ᵛशिवं शोभनं ᵛसन्तं भवन्तं यज्ञम् ᵛअशिवः अशोभनरूपोऽप्रकाशमानः सन् ᵛयत् यस्मिन् समाप्तिकाले ᵛजहामि परित्यजामि तदानीं ᵛनाभिं नहनशीलां बन्धनशीलाम् ᵛअरणीम् अश्वत्थमेव ᵛस्वात्सख्यात् आत्मीयात् सखित्वाच्चिर-कालमश्वरूपोऽहं तत्र न्यवात्समिति स्नेहवशात् ᵛएमि प्राप्नोमि ॥

**पश्यन्नन्यस्या अतिथिं वयायां ऋतस्य धाम वि मिमे पुरूणि ।**
**शंसामि पित्रे असुराय शेवमयज्ञियाद्यज्ञियं भागमेमि ॥ ३ ॥**

पश्यन् । अन्यस्याः । अतिथिम् । वयायाः । ऋतस्य । धाम । वि । मिमे । पुरूणि ।
शंसामि । पित्रे । असुराय । शेवम् । अयज्ञियात् । यज्ञियम् । भागम् । एमि ॥ ३ ॥

मम स्थानभूता या पृथिवी ततः ᵛअन्यस्याः ᵛवयायाः गन्तव्यायाः दिवः संबन्धिनम् ᵛअतिथिं सततगामिनं सूर्यं ᵛपश्यन्[1] जानन् सूर्यस्य गतिमनुसृत्य वसन्तादिकाले ᵛऋतस्य यज्ञस्य ᵛधाम धामानि शरीराणि ᵛपुरूणि बहूनि ᵛवि ᵛमिमे निर्मिमे निष्पादयामि। ततः ᵛपित्रे पितृ-भूताय द्युलोकवर्तिने देवजनाय ᵛअसुराय शत्रुक्षेपणकुशलाय ᵛशेवं सुखमुद्दिश्य होता भूत्वा अहं उक्थानि ᵛशंसामि। यत एवं तस्मात्कारणात् ᵛअयज्ञियात् यज्ञानर्हात्प्रदेशान्निर्गत्य ᵛयज्ञियं यज्ञार्हं वेदिलक्षणं भूभागं हविर्लक्षणं वा ᵛएमि प्राप्नोमि ॥ यज्ञशब्दादर्हार्थे 'यज्ञर्त्विग्भ्यां घखञौ' ( पा. सू. ५. १. ७१ ) इति घप्रत्ययः ॥

**बह्वीः समा अकरमन्तरस्मिन्निन्द्रं वृणानः पितरं जहामि ।**
**अग्निः सोमो वरुणस्ते च्यवन्ते पर्यावर्द्राष्ट्रं तदवाम्यायन् ॥ ४ ॥**

बह्वीः । समाः । अकरम् । अन्तः । अस्मिन् । इन्द्रम् । वृणानः । पितरम् । जहामि ।
अग्निः । सोमः । वरुणः । ते । च्यवन्ते । परिऽआवर्त् । राष्ट्रम् । तत् । अवामि । आऽयन् ॥ ४ ॥

ᵛअस्मिन् वेदिलक्षणस्थाने ᵛबह्वीः ᵛसमाः बहून् संवत्सरान् ᵛअकरम् अकार्षम्। चिरकालं न्यवात्सम्। तत्र ᵛइन्द्रं ᵛवृणानः संभजमानः ᵛपितरम् उत्पादकमरण्यात्मकं ᵛजहामि परित्यजामि। यदा त्वहं देवेभ्यो निर्गत्य गुहायां निगूढः तदा ᵛते देवाः ᵛअग्निः ᵛसोमो ᵛवरुणः च ᵛच्यवन्ते। राष्ट्रात् प्रच्युता अभवन्। एकस्याप्यग्नेर्हविर्वोढृत्वरूपेण देवतात्मना च पृथक्त्वात्परोक्षनिर्देशः। ᵛआयन्[2] पुनरागच्छन्नहं यद्राष्ट्रमसुरैरपहृतं ᵛपर्यावर्त् पर्यावर्तमानं मदभिमुखं पुनरावर्तमानं ᵛतत् ᵛराष्ट्रं राज्यं यज्ञभूमिम् ᵛअवामि असुरेभ्यो रक्षामि ॥ पर्यावर्त्। उपसृष्टाद्वृतेः 'अन्येभ्योऽपि दृश्यन्ते' ( पा. सू. ३. २. ७५ ) इति विच्। 'रात्सस्य' ( पा. सू. ८. २. २४ ) इति नियमात् 'संयोगान्तस्य°' ( पा. सू. ८. २. २३ ) इति लोपाभावः ॥

**निर्माया उ त्ये असुरा अभूवन् त्वं च मा वरुण कामयासे ।**
**ऋतेन राजन्ननृतं विविञ्चन् मम राष्ट्रस्याधिपत्यमेहि ॥ ५ ॥**

---

१. ग-त१.२.३.६.७.८-म२.४.८–संपश्यन्। २. त१.३.६.७.८-म१.२.४.५.८–आयन् पुरागत्य।

निःऽमायाः । ऊँ इति । त्ये । असुराः । अभूवन् । त्वम् । च । मा । वरुण । कामयासे ।
ऋतेन । राजन् । अनृतम् । विऽविञ्चन् । मम । राष्ट्रस्य । अधिऽपत्यम् । आ । इहि ॥५॥

vत्ये ते vअसुराः मय्यभ्यागते सति vनिर्मायाः मायारहिताः vअभूवन् । आसुर्यः सर्वा माया मया दग्धा आसन्नित्यर्थः । हे vवरुण vत्वं vच ॥ अयं चशब्दश्चेदर्थे वर्तमानश्चणिति निपातान्तरम् । अनेन युक्तत्वात् कामयासे इति तिङ्विभक्तेः 'निपातैर्यद्यदिहन्त°' (पा. सू. ८. १. ३० ) इति निघातप्रतिषेधः॥ हे वरुण त्वं चेत् vमा vकामयासे मां कामयेथाः तर्हि हे vराजन् ईश्वर vऋतेन सत्येनास्मदीयेन कर्मणा vअनृतम् असत्यभूतं मायामयमासुरं चरित्रं vविविञ्चन् पृथक्कुर्वन् अपसारयन् vमम vराष्ट्रस्य मया यत्साधितं राज्यं तस्य vअधिपत्यम् अधिपतित्वमीश्वरत्वम् vएहि प्राप्नुहि ॥ ॥९॥

इदं स्वरिदमिदास वाममयं प्रकाश उर्व१न्तरिक्षम् ।
हनाव वृत्रं निरेहि सोम हविष्ट्वा सन्तं हविषा यजाम ॥ ६ ॥

इदम् । स्वः । इदम् । इत् । आस । वामम् । अयम् । प्रऽकाशः । उरु । अन्तरिक्षम् ।
हनाव । वृत्रम् । निःऽएहि । सोम । हविः । त्वा । सन्तम् । हविषा । यजाम ॥ ६ ॥

इयमृगग्नेर्वरुणस्य वा वाक्यम् । हे सोम vइदं vस्वः अयं द्युलोकः यद्वायं शोभनारणः सूर्यः vइदमित् इदमेव vवामं वननीयम् vआस बभूव । इदंशब्देन प्रकृतं स्वः परामृश्यते । vअयं च vप्रकाशः प्रकाशस्याधारभूतः vउरु विस्तीर्णमिदम् vअन्तरिक्षं हे सोम एतत्सर्वं[1] पश्य । अत एव अस्मिन्समये[2] आवां vवृत्रं vहनाव हिनसाव[3] । तदर्थं vनिरेहि निष्क्रम्यागच्छ । vहविः vसन्तं लतारूपेण हविर्भवन्तं देवतात्मानं त्वां vहविषा चरुपुरोडाशादिना वयं vयजाम ॥

कविः कवित्वा दिवि रूपमासजदप्रभूती वरुणो निरपः सृजत् ।
क्षेमं कृण्वाना जनयो न सिन्धवस्ता अस्य वर्णं शुचयो भरिभ्रति॥ ७ ॥

कविः । कविऽत्वा । दिवि । रूपम् । आ । असजत् । अप्रऽभूती । वरुणः । निः । अपः । सृजत् ।
क्षेमम् । कृण्वानाः । जनयः । न । सिन्धवः । ताः । अस्य । वर्णम् । शुचयः । भरिभ्रति ॥ ७ ॥

vकविः क्रान्तदर्शी मित्रः vकवित्वा कवित्वेन ॥ 'सुपां सुलुक्°' इति तृतीयाया आकारः ॥ क्रान्तदर्शनेन vदिवि द्युलोके vरूपम् आत्मीयं तेजः vआसजत् आसक्तं करोति ॥ 'षन्ज संगे' । अस्माल्लङि शपि 'दंशसञ्जस्वञ्जां शपि' (पा. सू. ६. ४. २५) इति नलोपः ॥ vअप्रभूती अप्रभूत्या ॥ 'सुपां सुलुक्°' इति तृतीयायाः पूर्वसवर्णदीर्घः ॥ अप्रभूष्णुना[4] अल्पेनैव यत्नेन vवरुणः मेघात् vअपः vनिः vसृजत् निरगमयत् । वरुणेन विसृष्टास्ता आपः vसिन्धवः स्यन्दनशीला नद्यो भूत्वा vजनयो vन जाया इव यथा जायाः पत्युः क्षेमकारिण्यो भवन्ति तथा vक्षेमं कुर्वाणा जगतो रक्षणं कुर्वाणाः vशुचयः शुद्धा दीप्यमाना वा vअस्य वरुणस्य vवर्णं शुक्लं भास्वररूपं vभरिभ्रति । भृशं बिभ्रति धारयन्ति ॥ दाधर्त्यादिसूत्रे ( पा. सू. ७. ४. ६५ ) 'भरिभ्रत्' इति निपातनाद्बिभर्तेः यङ्लुक्यभ्यासस्य जश्त्वाभावः[5] ॥

---

१. त-भ१.२.४.८–एतत्सोमं । २. ग-त-भ१.२.८–एतस्मिन् समयः भ७–एतत्समय । ३. त१.२.३.६.७.८-भ१.४.७.८–हिनवाव । ४. त-भ–अप्रभूणा । ५. ग-त१.२.३.६.७.८-भ१.४.७.८–जश्त्वादेशः ।

ता अस्य ज्येष्ठमिन्द्रियं सचन्ते ता ईमा क्षेति स्वधया मदन्तीः ।
ता ईं विशो न राजानं वृणाना बीभत्सुवो अप वृत्राददतिष्ठन् ॥ ८ ॥

ताः । अस्य । ज्येष्ठम् । इन्द्रियम् । सचन्ते । ताः । ईम् । आ । क्षेति । स्वधया । मदन्तीः ।
ताः । ईम् । विशः । न । राजानम् । वृणानाः । बीभत्सुवः । अप । वृत्रात् । अतिष्ठन् ॥ ८ ॥

ᵛताः पूर्वोक्ता वृष्टा आपः ᵛअस्य वरुणस्य ᵛज्येष्ठं वृद्धतमम् ᵛइन्द्रियं वीर्यं ᵛसचन्ते समवयन्ति संभजन्ते । धारयन्तीत्यर्थः । 'आपो वरुणस्य पत्नय आसन्' (तै. सं. ५.५.४.१) इति श्रुतेः । ᵛस्वधया । अन्ननामैतत् । हविर्लक्षणेनान्नेन ᵛमदन्तीः माद्यन्तीः । यद्वा । व्रीह्याद्युत्पादनद्वारेण हविषा मादयन्तीः । ᵛताः अपः ᵛईम् अयं वरुणः ᵛआ ᵛक्षेति अभिगच्छति ॥ 'क्षि निवासगत्योः'। छान्दसो विकरणस्य लुक् ॥ ᵛताः च ᵛईम् एनं वरुणं ᵛविशो ᵛन विशः प्रजा यथा ᵛराजानं स्वामिनं संभजन्ते तथा ᵛवृणानाः संभजमानाः ᵛबीभत्सुवः भयेन कम्पमानाः । यद्वा । बद्धा वृत्रेणावृताः सत्यः । तस्मिन् हते सति तस्मात् ᵛवृत्रात् ᵛअप ᵛअतिष्ठन् । अपक्रम्य तत्र तत्रावतिष्ठन्ते ॥ 'बध बन्धने' इत्यस्माद्धातोः[1] 'मान्बधदान्शान्भ्यः' (पा. सू. ३.१.६) इति सन् अभ्यासस्य च दीर्घः । 'सनाशंसभिक्ष उः' (पा. सू. ३. २. १६८) इत्युप्रत्ययः । जसि छान्दस उवङादेशः ॥

बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम् ।
अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं नि चिक्युः कवयो मनीषा ॥ ९ ॥

बीभत्सूनाम् । सऽयुजम् । हंसम् । आहुः । अपाम् । दिव्यानाम् । सख्ये । चरन्तम् ।
अनुऽस्तुभम् । अनु । चर्चूर्यमाणम् । इन्द्रम् । नि । चिक्युः । कवयः । मनीषा ॥ ९ ॥

ᵛबीभत्सूनां कम्पमानावयववानां यद्वा मेघेन बद्धानाम् । हन्ति गच्छतीति हंसः सूर्यः । तं ᵛसयुजं सखायम् ᵛआहुः । ब्रह्मवादिनः कथयन्ति । एतदेवाह । ᵛदिव्यानां दिवि भवानामान्तरिक्षाणाम् ᵛअपां ᵛसख्ये सखित्वे[2] ᵛचरन्तं वर्तमानम् । ᵛअनुष्टुभम् अनुष्टोभनीयं[3] स्तोतव्यम् । यद्वा । अनुष्टुप्शब्देन तत्संबद्धो यागः स्तुतिर्वा लक्ष्यते । अनुष्टुप्संबद्धं यागमनुष्टुप्छन्दसा युक्तं स्तुतिविशेषं वा । अनुलक्ष्य ᵛचर्चूर्यमाणं पुनःपुनश्चरन्तं गच्छन्तम् ॥ चरतेर्यङि 'उत्परस्यातः' (पा. सू. ७. ४. ८८) इत्यभ्यासादुत्तरस्याकारस्योत्वम् । 'चरफलोश्च' (पा. सू. ७. ४. ८७) इति नुकि प्राप्ते व्यत्ययेनाभ्यासस्य रुगागमः ॥ एवंगुणविशिष्टम् ᵛइन्द्रं ᵛकवयः क्रान्तदर्शिन ऋषयः ᵛमनीषा मनीषया स्तुत्या ᵛनि ᵛचिक्युः पूजयन्ति । यद्वा । मनीषा बुद्ध्या नि चिक्युः जानन्ति ॥ मनीषाशब्दात्तृतीयायाः 'सुपां सुलुक्°' इति लुक् । 'चायृ पूजानिशामनयोः' इत्यस्माच्छान्दसे लिटि 'चायः की' (पा. सू. ६. १.३५) इति प्रकृतेः कीभावः । 'एरनेकाचः°' (पा. सू. ६. ४. ८२) इति यण् ॥ ॥१०॥

'अहम्' इत्यष्टर्चं त्रयोदशं सूक्तम् । अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत् । अतः सर्षिः । सच्चित्सुखात्मकः सर्वगतः परमात्मा देवता । तेन ह्येषा तादात्म्यमनुभवन्ती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाहमेव सर्वं[4] भवामीति स्वात्मानं स्तौति । द्वितीया जगती शिष्टाः

१. ग-त-भ–इत्यस्मात् । २. त१.२.३.६.७.८-भ–सखित्वं । ३. ग-त-भ-मु–अनुस्तोभनीयं । ४. ग-त४.५-भ–'सर्वं' नास्ति ।

सप्त त्रिष्टुभः । तथा चानुक्रान्तम्—‘ अहमष्टौ वागाम्भृणी तुष्टावात्मानं द्वितीया जगती ’ इति । गतो विनियोगः ॥

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥

अहम् । रुद्रेभिः । वसुऽभिः । चरामि । अहम् । आदित्यैः । उत । विश्वऽदेवैः ।
अहम् । मित्रावरुणा । उभा । बिभर्मि । अहम् । इन्द्राग्नी इति । अहम् । अश्विना । उभा ॥ १ ॥

"अहं सूक्तस्य द्रष्ट्री वागाम्भृणी यद्ब्रह्म जगत्कारणं तद्रूपा भवन्ती "रुद्रेभिः रुद्रैरेकादशभिः । इत्थंभावे तृतीया । तदात्मना "चरामि । एवं "वसुभिः इत्यादौ तत्तदात्मना चरामीति योज्यम्[1] । तथा "मित्रावरुणा मित्रं च वरुणं च ॥ ‘ सुपां सुलुक्° ’ इति द्वितीयाया आकारः ॥ "उभा उभौ "अहम् एव ब्रह्मीभूता "बिभर्मि धारयामि । "इन्द्राग्नी अपि "अहम् एव धारयामि । "उभा उभौ "अश्विना अश्विनावपि "अहम् एव धारयामि । मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं सदृश्यते । माया च जगदाकारेण विवर्तते । तादृश्या मायाया आधारत्वेनासङ्गस्यापि ब्रह्मण उक्तस्य सर्वस्योत्पत्तिः ॥

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥ २ ॥

अहम् । सोमम् । आहनसम् । बिभर्मि । अहम् । त्वष्टारम् । उत । पूषणम् । भगम् ।
अहम् । दधामि । द्रविणम् । हविष्मते । सुप्रऽअव्ये । यजमानाय । सुन्वते ॥ २ ॥

"आहनसम् आहन्तव्यमभिषोतव्यं "सोमं यद्वा शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोमम् "अहम् एव "बिभर्मि । तथा "त्वष्टारम् "उत अपि च "पूषणं "भगं च "अहम् एव बिभर्मि । तथा "हविष्मते हविर्भिर्युक्ताय "सुप्राव्ये शोभनं हविर्देवानां प्रापयित्रे तर्पयित्रे ॥ अवतेस्तर्पणार्थात् ‘ अवितृस्तृतन्त्रिभ्य ईः ’ ( उ. सू. ३. १५८ ) इतीकारप्रत्ययः । चतुर्थ्येकवचने यणि ‘ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ’ इति सुपः स्वरितत्वम् ॥ "सुन्वते सोमाभिषवं कुर्वते ॥ ‘ शतुरनुमः° ’ इति चतुर्थ्या उदात्तत्वम् ॥ ईदृशाय "यजमानाय "द्रविणं धनं यागफलरूपम् "अहम् एव "दधामि धारयामि । एतच्च ब्रह्मणः फलदातृत्वं ‘ फलमत उपपत्तेः ’ ( वे. सू. ३. २. ३८ ) इत्यधिकरणे भगवता भाष्यकारेण समर्थितम् ॥

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥

अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् । चिकितुषी । प्रथमा । यज्ञियानाम् ।
ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा । भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥ ३ ॥

"अहं "राष्ट्री । ईश्वरनामैतत् । सर्वस्य जगत ईश्वरी । तथा "वसूनां धनानां "संगमनी संगमयित्र्युपासकानां प्रापयित्री । "चिकितुषी यत्साक्षात्कर्तव्यं परं ब्रह्म तज्ज्ञातवती स्वात्मतया

१. त४.५—योज्यं । उतापि च आदित्यैः समं चरामि । उतापि च विश्वदेवैश्च ।

साक्षात्कृतवती। अत एव ᵛयज्ञियानां यज्ञार्हाणां ᵛप्रथमा मुख्या। या एवंगुणविशिष्टाहं ᵛतां मां ᵛभूरिस्थात्रां बहुभावेन प्रपञ्चात्मनावतिष्ठमानां ᵛभूरि भूरीणि बहूनि भूतजातानि ᵛआवेशयन्तीं जीवभावेनात्मानं प्रवेशयन्तीमीदृशीं मां ᵛपुरुत्रा बहुषु देशेषु ᵛव्यदधुः ᵛदेवाः विदधति कुर्वन्ति। उक्तप्रकारेण वैश्वरूप्येणावस्थानात्[1]। यद्यत्कुर्वन्ति तत्सर्वं मामेव कुर्वन्तीत्यर्थः ॥

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥

मया। सः। अन्नम्। अत्ति। यः। विऽपश्यति। यः। प्राणिति। यः। ईम्। शृणोति। उक्तम्।
अमन्तवः। माम्। ते। उप। क्षियन्ति। श्रुधि। श्रुत। श्रद्धिऽवम्। ते। वदामि ॥ ४ ॥

ᵛयः ᵛअन्नमत्ति ᵛसः भोक्तृशक्तिरूपया ᵛमया एवान्नमत्ति। ᵛयः च ᵛविपश्यति। आलोकयतीत्यर्थः। ᵛयः च ᵛप्राणिति श्वासोच्छ्वासरूपं व्यापारं करोति सोऽपि मयैव। यश्च ᵛउक्तं ᵛशृणोति॥ 'श्रु श्रवणे'। 'श्रुवः शृ च' इति श्नुप्रत्ययः। धातोः शृभावः ॥ य ईदृशीमन्तर्यामिरूपेण स्थितां ᵛमां न जानन्ति ᵛते[2] ᵛअमन्तवः अमन्यमाना अजानन्तः ᵛउप ᵛक्षियन्ति। उपक्षीणाः संसारेण हीना भवन्ति॥ मनेरौणादिकस्तुप्रत्ययः। नञ्समासे व्यत्ययेनान्तोदात्तत्वम्। यद्वा। भावे तुप्रत्ययः। ततो बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। माममन्तवो मद्विषयज्ञानरहिता इत्यर्थः ॥ हे ᵛश्रुत विश्रुत सखे ᵛश्रुधि। मया वक्ष्यमाणं शृणु॥ छान्दसो विकरणस्य लुक्। 'श्रुशृणुपृकृवृभ्यः॰' इति हेर्धिभावः ॥ किं तच्छ्रोतव्यम्। ᵛश्रद्धिवम्। श्रद्धिः श्रद्धा। तया युक्तम्। श्रद्धायत्नेन लभ्यमित्यर्थः। श्रदन्तरोरुपसर्गवद्वृत्तिरिष्यते (पा.सू. १. ४.५७.२) इति श्रच्छब्दस्योपसर्गवद्वर्तमानत्वात् 'उपसर्गे घोः किः' इति किप्रत्ययः। मत्वर्थीयो वः॥ ईदृशं ब्रह्मात्मकं वस्तु ᵛते तुभ्यं ᵛवदामि उपदिशामि ॥

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥

अहम्। एव। स्वयम्। इदम्। वदामि। जुष्टम्। देवेभिः। उत। मानुषेभिः।
यम्। कामये। तम्ऽतम्। उग्रम्। कृणोमि। तम्। ब्रह्माणम्। तम्। ऋषिम्। तम्। सुऽमेधाम् ॥५॥

ᵛअहं ᵛस्वयम् ᵛएव ᵛइदं वस्तु ब्रह्मात्मकं ᵛवदामि उपदिशामि। ᵛदेवेभिः देवैरिन्द्रादिभिरपि ᵛजुष्टं सेवितम्। ᵛउत अपि च ᵛमानुषेभिः मनुष्यैरपि जुष्टम्। ईदृग्वस्त्वात्मिकाहं ᵛयं ᵛकामये यं पुरुषं रक्षितुमहं वाञ्छामि ᵛतंतं पुरुषम् ᵛउग्रं ᵛकृणोमि। सर्वेभ्योऽधिकं करोमि। ᵛतम् एव ᵛब्रह्माणं स्रष्टारं करोमि। ᵛतम् एव ᵛऋषिम् अतीन्द्रियार्थदर्शिनं करोमि। ᵛतम् एव ᵛसुमेधां शोभनप्रज्ञं च करोमि ॥ ॥ ११ ॥

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥ ६ ॥

अहम्। रुद्राय। धनुः। आ। तनोमि। ब्रह्मऽद्विषे। शरवे। हन्तवै। ऊँ इति।
अहम्। जनाय। सऽमदम्। कृणोमि। अहम्। द्यावापृथिवी इति। आ। विवेश ॥ ६ ॥

---

१. त-मु–विश्वरूपेणावस्थानात्। २. त१.२.३.६.७-म–ते मां।

पुरा त्रिपुरविजयसमये vरुद्राय रुद्रस्य। षष्ठ्यर्थे चतुर्थी। महादेवस्य vधनुः चापम् vअहम् vआ vतनोमि । ज्ययाततं करोमि। किमर्थम्। vब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं vशरवे शरुं हिंसकं त्रिपुरनिवासिनमसुरं vहन्तवै हन्तुं हिंसितुम् ॥ हन्तेः 'तुमर्थे सेसेन्°' (पा. सू. ३.४.९) इति तवैप्रत्ययः। 'अन्तश्च तवै युगपत्' (पा. सू. ६. १. २००) इत्याद्यन्तयोर्युगपदुदात्तत्वम्। 'शॄ हिंसायाम्' इत्यस्मात् 'शॄस्वृस्निहि°' इत्यादिना उप्रत्ययः। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी ॥ उशब्दः पूरकः। vअहम् एव vसमदम्। समानं माद्यन्त्यस्मिन्निति समत्संग्रामः। स्तोतृजनार्थं शत्रुभिः सह संग्राममहमेव vकृणोमि करोमि। तथा vद्यावापृथिवी दिवं च पृथिवीं चान्तर्यामितया vअहम् एव vआ vविवेश प्रविष्टवती ॥

अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्व१न्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥

अहम् । सुवे । पितरम् । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु । अन्तरिति । समुद्रे ।
ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत । अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥७॥

'द्यौः[1] पिता' (तै. ब्रा. ३.७.५.४) इति श्रुतेः पिता द्यौः। vपितरं दिवम् vअहं vसुवे प्रसुवे जनयामि। 'आत्मन आकाशः संभूतः' (तै. आ. ८. १) इति श्रुतेः। कुत्रेति तदाह। vअस्य परमात्मनः vमूर्धन् मूर्धन्युपरि[2]। कारणभूते[2] तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव। vमम च vयोनिः कारणं vसमुद्रे। समुद्द्रवन्त्यस्माद्भूतजातानीति समुद्रः परमात्मा। तस्मिन् vअप्सु व्यापनशीलासु धीवृत्तिषु vअन्तः मध्ये यद्ब्रह्म चैतन्यं तन्मम कारणमित्यर्थः। यत ईदृग्भूता अहमस्मि vततः हेतोः vविश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि vअनु प्रविश्य vवि vतिष्ठे। विविधं व्याप्य तिष्ठामि ॥ 'समवप्रविभ्यः स्थः' (पा. सू. १.३.२२) इत्यात्मनेपदम् ॥ vउत अपि च vअमूं vद्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम्। उपलक्षणमेतत्। एतदुपलक्षितं कृत्स्नं विकारजातं vवर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन vउप vस्पृशामि। यद्वा। अस्य भूलोकस्य[3] मूर्धन् मूर्धन्युपर्यहं पितरमाकाशं सुवे। समुद्रे जलधावप्सूदकेष्वन्तर्मध्ये मम योनिः कारणभूतोऽम्भृणाख्य ऋषिर्वर्तते। यद्वा। समुद्रेऽन्तरिक्षेऽप्स्वम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्म चैतन्यं वर्तते। ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि। अन्यत्समानम् ॥

अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥ ८ ॥

अहम् । एव । वातःऽइव । प्र । वामि । आऽरभमाणा । भुवनानि । विश्वा ।
परः । दिवा । परः । एना । पृथिव्या । एतावती । महिना । सम् । बभूव ॥ ८ ॥

vविश्वा विश्वानि सर्वाणि vभुवनानि भूतजातानि कार्याणि vआरभमाणा कारणरूपेणोत्पादयन्ती vअहमेव परेणानधिष्ठिता स्वयमेव vप्र vवामि प्रवर्ते। vवातइव यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत्। उक्तं सर्वं निगमयति। vपरो vदिवा। पर इति सकारान्तं परस्तादित्यर्थे वर्तते यथा अध इत्यधस्तादर्थे। तद्योगे च तृतीया सर्वत्र दृश्यते। दिव आकाशस्य परस्तात्। vएना

१. त७–द्यौर्वः। २. भ७–मूर्धनि परमकारणभूते। ३. भ७–भूतस्य।

Vपृथिव्या ॥ 'द्वितीयाटौः स्वेनः' (पा. सू. २. ४. ३४) इतीदम एनादेशः[1]। अस्याः पृथिव्याः Vपरः परस्तात्। द्यावापृथिव्योरुपादानमुपलक्षणम्। एतदुपलक्षितात् सर्वस्मात् विकारजातात्[2] परस्ताद्वर्तमाना सङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहं Vमहिना महिम्ना Vएतावती Vसं Vबभूव। एतच्छब्देनोक्तं सर्वं परामृश्यते। एतत्परिमाणमस्याः ॥ 'यत्तदेतेभ्यः परिमाणे°' (पा. सू. ५. २. ३९) इति वतुप्। 'आ सर्वनाम्नः (पा.सू.६.३.९१) इत्यात्वम् ॥ सर्वजगदात्मनाहं संभूतास्मि ॥ महच्छब्दादिमनिचि 'टेः' (पा. सू. ६. ४. १५५) इति टिलोपः। ततः तृतीयायामुदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वम्। छान्दसो मलोपः ॥ ॥१२॥

'न तम्' इत्यष्टर्चं चतुर्दशं सूक्तं शिलूषपुत्रस्य कुल्मलबर्हिषस्यार्षं वामदेवपुत्रस्यांहोमुङ्नाम्नो वा। वैश्वदेवम्। अष्टमी त्रिष्टुप् शिष्टा उपरिष्टाद्बृहत्यः। ष्यष्टकद्वादशकवत्युपरिष्टाद्बृहती। 'अन्त्यश्चेदुपरिष्टाद्बृहती' (अनु. ७. ४) इति हि तल्लक्षणम्। तथा चानुक्रान्तं—'न तं शैलूषः[3] कुल्मलबर्हिषो[4] वामदेव्यो वांहोमुग्वैश्वदेवमुपरिष्टाद्बार्हतमन्त्या त्रिष्टुप्' इति। गतो विनियोगः ॥

न तमंहो न दुरितं देवासो अष्ट मर्त्यम्।
सजोषसो यमर्यमा मित्रो नयन्ति वरुणो अति द्विषः ॥ १ ॥

न। तम्। अंहः। न। दुःऽइतम्। देवासः। अष्ट। मर्त्यम्।
सऽजोषसः। यम्। अर्यमा। मित्रः। नयन्ति। वरुणः। अति। द्विषः ॥ १ ॥

हे Vदेवासः देवाः ॥ आज्जसेरसुक् ॥ Vतं Vमर्त्यं मनुष्यम् Vअंहः पापं Vदुरितं तत्फलरूपं दुर्गमनं च Vन Vअष्ट न प्राप्नोति ॥ अशेश्छान्दसे लुङि 'झलो झलि' इति सिचो लोपः। अडभावश्छान्दसः ॥ अरीन्नियच्छतीति Vअर्यमा प्रमीतेस्त्रायको देवः Vमित्रः पापानां निवारयिता देवः Vवरुणः। एते त्रयो देवाः Vसजोषसः संगताः समानं प्रीयमाणा वा भवन्तः Vद्विषः द्वेष्टॄन् शत्रूनतिक्रम्य Vयं स्तोतारं Vनयन्ति अभिमतं देशं प्रापयन्ति तं नाष्टेत्यन्वयः ॥

तद्धि वयं वृणीमहे वरुण मित्रार्यमन्।
येना निरंहसो यूयं पाथ नेथा च मर्त्यमति द्विषः ॥ २ ॥

तत्। हि। वयम्। वृणीमहे। वरुण। मित्र। अर्यमन्।
येन। निः। अंहसः। यूयम्। पाथ। नेथ। च। मर्त्यम्। अति। द्विषः ॥ २ ॥

हिरवधारणे। Vतद्धि तदेव रक्षणं Vवयं Vवृणीमहे प्रार्थयामहे ॥ 'सतिशिष्टोऽपि विकरणस्य स्वरो लसार्वधातुकस्वरं न बाधते' (पा. म. ६. १. १५८. ११) इति वचनात्तिङ एव स्वरः शिष्यते। 'हि च' इति निघातप्रतिषेधः ॥ हे Vवरुण हे Vमित्र हे Vअर्यमन् Vयेन रक्षणेन Vमर्त्यं स्तोतारम् Vअंहसः पापात् Vयूयं Vनिः Vपाथ निःशेषेण रक्षथ ॥ 'पा रक्षणे'। आदादिकः। 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः ॥ येन च[5] रक्षणेन मर्त्यं मनुष्यं स्तोतारं Vद्विषः Vअति Vनेथ अतीत्य नयथ अभीष्टं प्रापयथ तद्वृणीमह इत्यन्वयः ॥ नयतेश्छान्दसः शपो लुक् ॥

१. त१.२.६.७-भ२–एनादेशः। सुपां सुलुगिति तृतीयाया अजादेशः। २. त४.५–भूतजातात्। ३. त७-अनु–शैलूषिः। ४. अनु–कुल्मुल°। ५. त१.२.३.६.७.८-भ–'च' नास्ति।

ते नूनं नोऽयमूतये वरुणो मित्रो अर्यमा ।
नयिष्ठा उ नो नेषणि पर्षिष्ठा उ नः पर्षण्यति द्विषः ॥ ३ ॥

ते । नूनम् । नः । अयम् । ऊतये । वरुणः । मित्रः । अर्यमा ।
नयिष्ठाः । ऊँ इति । नः । नेषणि । पर्षिष्ठाः । ऊँ इति । नः । पर्षणि । अति । द्विषः ॥ ३ ॥

अयं वरुणो मित्रः च अर्यमा च देवाः नः अस्माकम् ऊतये रक्षणाय नूनम् अवश्यं भवन्तु । नेषणि नेतव्ये विषये हे वरुणादयः यूयं नः अस्मान् नयिष्ठाः नयत ॥ वचनव्यत्ययः । यद्वा । प्रत्येकाभिप्रायेणैकवचनम् । छान्दसो लुङ् ॥ उशब्दः समुच्चये पदपूरणार्थो वा । पर्षणि पारयितव्ये विषये नः अस्मान् द्विषः अति पर्षिष्ठाः अतिपारयथ ॥ नयिष्ठा इतिवत्प्रक्रिया ॥

यूयं विश्वं परि पाथ वरुणो मित्रो अर्यमा ।
युष्माकं शर्मणि प्रिये स्याम सुप्रणीतयोऽति द्विषः ॥ ४ ॥

यूयम् । विश्वम् । परि । पाथ । वरुणः । मित्रः । अर्यमा ।
युष्माकम् । शर्मणि । प्रिये । स्याम । सुऽप्रनीतयः । अति । द्विषः ॥ ४ ॥

हे देवा वरुणादयः यूयं विश्वं सर्वं जगत् परि पाथ परितो रक्षथ । हे सुप्रणीतयः शोभनप्रणयना मित्रादयः युष्माकं युष्मदीये युष्माभिर्दत्ते प्रिये अनुकूले वेद्ये शर्मणि सुखे वयं स्याम भवेम । द्विषः द्वेष्टॄंश्च अति क्रामेम ॥

आदित्यासो अति स्रिधो वरुणो मित्रो अर्यमा ।
उग्रं मरुद्भी रुद्रं हुवेमेन्द्रमग्निं स्वस्तयेऽति द्विषः ॥ ५ ॥

आदित्यासः । अति । स्रिधः । वरुणः । मित्रः । अर्यमा ।
उग्रम् । मरुत्ऽभिः । रुद्रम् । हुवेम । इन्द्रम् । अग्निम् । स्वस्तये । अति । द्विषः ॥ ५ ॥

आदित्यासः अदितेः पुत्रा वरुणादयो देवाः स्रिधः हिंसकान् शत्रूनस्मान् अति नयन्तु । मरुद्भिः पुत्रैः सहितम् उग्रम् उद्गूर्णतेजसं[1] रुद्रम् इन्द्रमग्निं च स्वस्तये क्षेमाय हुवेम आह्वयेमहि ॥ ह्वयतेराशीर्लिङि ' बहुलं छन्दसि ' इति संप्रसारणम् । लिङ्याशिष्यङ् ॥ आहूतास्ते अस्मान् द्विषः द्वेष्टॄन् अति नयन्तु ॥

नेतार ऊ षु णस्तिरो वरुणो मित्रो अर्यमा ।
अति विश्वानि दुरिता राजानश्चर्षणीनामति द्विषः ॥ ६ ॥

नेतारः । ऊँ इति । सु । नः । तिरः । वरुणः । मित्रः । अर्यमा ।
अति । विश्वानि । दुःऽइता । राजानः । चर्षणीनाम् । अति । द्विषः ॥ ६ ॥

नेतारः नयनकुशलाः ॥ नयतेः साधुकारिणि तृन् ॥ वरुणादयो देवाः नः अस्माकं पापानि सु[2] सुष्ठु तिरः तिरोधानमदर्शनं नयन्तु । उ इति पूरणः । चर्षणीनां मनुष्याणां राजानः

---

१. ग–उद्गूर्णतेजस्कं । २. त-भ१.२.४.८–'सु' नास्ति ।

स्वामिनो वरुणादयो देवाः ^विश्वानि सर्वाणि ^दुरिता दुरितानि दुर्गमनानि पापफलरूपाण्यस्मान् ^अति नयन्तु । ^द्विषः द्वेष्टॄन् शत्रूंश्च ^अति नयन्तु ॥ 'नामन्यतरस्याम्' इति चर्षणिशब्दात्परस्य नाम उदात्तत्वम् ॥

शुनमस्मभ्यमूतये वरुणो मित्रो अर्यमा ।
शर्म यच्छन्तु सप्रथ आदित्यासो यदीमहे अति द्विषः ॥ ७ ॥

शुनम् । अस्मभ्यम् । ऊतये । वरुणः । मित्रः । अर्यमा ।
शर्म । यच्छन्तु । सऽप्रथः । आदित्यासः । यत् । ईमहे । अति । द्विषः ॥ ७ ॥

वरुणादयो देवाः ^ऊतये रक्षार्थं ^शुनं सुखम् ^अस्मभ्यं स्तोतृभ्यः प्रयच्छन्तु । तथा ^आदित्यासः अदितेः पुत्रास्ते ^सप्रथः सर्वतः पृथु विस्तीर्णं ^शर्म सुखं[1] च ^यच्छन्तु अस्मभ्यं ददतु । ^यत् शर्म वयम् ^ईमहे याचामहे । ^द्विषः च ^अति नयन्तु ॥

यथा ह त्यद्वसवो गौर्यं चित्पदि षिताममुञ्चता यजत्राः ।
एवो ष्व१स्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥ ८ ॥

यथा । ह । त्यत् । वसवः । गौर्यम् । चित् । पदि । सिताम् । अमुञ्चत । यजत्राः ।
एवो इति । सु । अस्मत् । मुञ्चत । वि । अंहः । प्र । तारि । अग्ने । प्रऽतरम् । नः । आयुः ॥ ८ ॥

हे ^वसवः वासकाः हे ^यजत्राः यागार्हा मित्रादयो देवाः ॥ 'अमिनक्षि°' ( उ. सू. ३. १०५ ) इत्यादिना यजेरत्रन्प्रत्ययः ॥ ^त्यत् ते प्रसिद्धा यूयम् ॥ 'सुपां सुलुक्°' इति विभक्तेर्लुक् ॥ ^यथा ^ह यथा खलु ^पदि पादे ^सितां बद्धाम् । 'पद्दन्°' इत्यादिना पादशब्दस्य पदादेशः । 'ऊडिदं-पदादि°' ( पा. सू. ६. १. १७१ ) इत्यादिना सप्तम्या उदात्तत्वम् । 'षिञ् बन्धने' इत्यस्मान्निष्ठा ॥ ईदृशीं ^गौर्यं[2] गौरीं गौरवर्णां सोमक्रयणीं गाम् ॥ 'षिद्गौरादिभ्यश्च' ( पा. सू. ४. १. ४१ ) इति ङीष् । 'अमि पूर्वः' ( पा. सू. ६. १. १०७ ) इत्यत्र 'वा छन्दसि' ( पा. सू. ६. १. १०६ ) इत्यनुवर्तनात्पूर्वरूपस्य पूर्वसवर्णदीर्घस्य चाभावे यण् । 'उदात्तस्वरितयोर्यणः°' इति परस्यानुदात्तस्य स्वरितत्वम् ॥ ईदृशीं गाम् ^अमुञ्चत यथा खलु यूयं विश्वावसोर्गन्धर्वान्मोचितवन्तः ^एवो एवमेव ^अस्मत् अस्मत्तः ^अंहः पापं सुष्ठु ^वि ^मुञ्चत विश्लेषयत । हे ^अग्ने ^नः अस्माकम् ^आयुः जीवनं ^प्रतरं ^प्र ^तारि । प्रकर्षेण त्वया प्रवर्धताम् । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ प्रशब्दात्तरपि 'अमु च च्छन्दसि' ( पा. सू. ५. ४. १२ ) इत्यमुप्रत्ययः ॥ ॥ १३ ॥

'रात्री' इत्यष्टर्चं पञ्चदशं सूक्तं सोभरिपुत्रस्य कुशिकस्यार्षम् । यद्वा । भारद्वाजस्य सुता रात्र्याख्या अस्य सूक्तस्यर्षिका । गायत्रं रात्रिदेवताकम् । तथा चानुक्रान्तं–'रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवं गायत्रम्' इति । दुःस्वप्नदर्शन उपोषितेन कर्त्रा पायसेन होतव्यम् । तत्रैतत्सूक्तं करणत्वेन विनियुक्तम् । तथा चारण्यके श्रूयते–'स यद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वा' ( ऐ. आ. ३. २. ४ ) इति ॥

रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः । विश्वा अधि श्रियोऽधित ॥ १ ॥

रात्री । वि । अख्यत् । आऽयती । पुरुऽत्रा । देवी । अक्षऽभिः ।
विश्वाः । अधि । श्रियः । अधित ॥ १ ॥

---

१. ग२–गृहं । २. ग-त४.५-म२–गौर्यं चित् ।

ᵛआयती आगच्छन्ती ॥ आङ्पूर्वादेतेः शतर्यदादिग्वाच्छपो लुक् । 'इणो यण्' (पा. सू. ६. ४.८१) इति यणादेशः । 'उगितश्च' (पा. सू. ४. १. ६) इति ङीप् । 'शतुरनुमः°' इति नद्या उदात्तत्वम् ॥ ᵛअक्षभिः[1] अक्षिस्थानीयैः प्रकाशमानैर्नक्षत्रैः ॥ 'छन्दस्यपि दृश्यते' इत्यक्षिशब्दस्यानङादेशः ॥ यद्वा । अक्षभिरञ्जकैः तेजोभिः[2] । ᵛपुरुत्रा बहुषु देशेषु ᵛदेवी देवनशीला ॥ 'देवमनुष्यपुरुषपुरुमर्त्येभ्यः°' इत्यादिना पुरुशब्दात्सप्तम्यर्थे त्राप्रत्ययः ॥ ᵛरात्री इयं रात्रिदेवता ᵛव्यख्यत् विचष्टे विशेषेण पश्यति ॥ 'रात्रेश्चाजसौ' (पा. सू. ४. १. ३१) इति ङीप् । ख्यातेश्छान्दसे लुङि 'अस्यतिवक्ति°' इत्यादिना च्लेरङादेशः ॥ अपि चैषा ᵛविश्वाः सर्वाः ᵛश्रियः शोभाः ᵛअधि ᵛअधित अधिधारयति ॥ दधातेर्लुङि[3] 'स्थाघ्वोरिच्च' इतीत्वम् । सिचः कित्त्वम् । 'ह्रस्वादङ्गात्' इति सिचो लोपः ॥

**ओर्वप्रा अमर्त्या निवतो देव्युद्वतः । ज्योतिषा बाधते तमः ॥ २ ॥**

आ । उरु । अप्राः । अमर्त्या । निऽवतः । देवी । उत्ऽवतः । ज्योतिषा । बाधते । तमः ॥२॥

ᵛअमर्त्या मरणरहिता ᵛदेवी देवनशीला रात्रिः ᵛउरु विस्तीर्णमन्तरिक्षम् ᵛआ ᵛअप्राः । प्रथमतस्तमसापूरयति ॥ 'प्रा पूरणे' । आदादिकः । लङि व्यत्ययेन मध्यमः ॥ तथा ᵛनिवतः नीचीनाल्लँतागुल्मादीन् ᵛउद्वतः उत्थितान् वृक्षादींश्च स्वकीयेन तेजसावृणोति[4] । तदनन्तरं तत् ᵛतमः अन्धकारं ᵛज्योतिषा ग्रहनक्षत्रादिरूपेण तेजसा ᵛबाधते पीडयति ॥

**निरु स्वसारमस्कृतोषसं देव्यायती । अपेदु हासते तमः ॥ ३ ॥**

निः । ऊँ इति । स्वसारम् । अकृत । उषसम् । देवी । आऽयती ।
अप । इत् । ऊँ इति । हासते । तमः ॥ ३ ॥

ᵛआयती आगच्छन्ती ᵛदेवी देवनशीला रात्रिः ᵛस्वसारं भगिनीम् ᵛउषसं ᵛनिः ᵛअकृत निष्करोति । प्रकाशेन संस्करोति । निवर्तयतीत्यर्थः । तस्यामुषसि जातायां नैशं ᵛतमः ᵛअपेत् ᵛहासते अपैव गच्छति ॥ 'ओहाङ् गतौ' । लेट्यडागमः । 'सिब्बहुलम्' इति सिप् ॥

**सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि । वृक्षे न वसतिं वयः ॥ ४ ॥**

सा । नः । अद्य । यस्याः । वयम् । नि । ते । यामन् । अविक्ष्महि । वृक्षे । न । वसतिम् । वयः ॥४॥

ᵛअद्य अस्मिन् काले ᵛनः अस्माकं ᵛसा रात्रिदेवता प्रसीदतु ᵛयस्याः रात्रेः ᵛयामन् यामनि प्राप्तौ सत्यां ᵛवयं ᵛनि ᵛअविक्ष्महि निविशामहे सुखेन गृह आस्महे ॥ विशेर्लङि 'नेर्विशः' (पा. सू. १. ३. १७) इत्यात्मनेपदम् । छान्दसः शपो लुक् ॥ तत्र दृष्टान्तः । ᵛवयः पक्षिणः ᵛवृक्षे ᵛन यथा वृक्षे नीडाश्रये ᵛवसतिं रात्रौ निवासं कुर्वन्ति तथा निवसाम इत्यर्थः ॥

**नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः । नि श्येनासश्चिदर्थिनः ॥ ५ ॥**

नि । ग्रामासः । अविक्षत । नि । पत्ऽवन्तः । नि । पक्षिणः । नि । श्येनासः । चित् । अर्थिनः ॥५॥

ᵛग्रामासः ग्रामाः । अत्र ग्रामशब्दो जनसमूहे वर्तते यथा ग्राम आगत इति । सर्वे जनाः ᵛनि ᵛअविक्षत । तस्यां रात्रावागतायां निविशन्ते । शेरते ॥ निपूर्वाद्विशतेश्छान्दसे लुङि पूर्ववदात्मनेपदम् ।

---

१. त१.२.३.६.८-म-अक्षिभिः । २. ग-तमोभिः । ३. त१.२.३.६.७.८-म-तथा दधातेर्लुङि । ४. ग-तमसावृणोति ।

'शल इगुपधादनिटः क्सः' (पा. सू. ३. १. ४५), 'क्सस्याचि' (पा. सू. ७.३.७२) इत्यकारलोपः ॥ तथा ᵛपद्वन्तः पादयुक्ता गवाश्वादयश्च निविशन्ते । तथा ᵛपक्षिणः पक्षोपेताश्च निविशन्ते । ᵛअर्थिनः । अर्तेरर्थो गमनम् । शीघ्रगमनयुक्ताः । ᵛश्येनासश्चित् श्येना[1] अपि तस्यां राम्यां निविशन्ते एषा रात्रिः सर्वाणि भूतजातान्यहनि[2] संचारेण श्रान्तानि स्वयमागत्य सुखयतीत्यर्थः ॥

**यावया वृक्यं१ वृकं यवय स्तेनमूर्म्ये । अथा नः सुतरा भव ॥ ६ ॥**

यवय । वृक्यम् । वृकम् । यवय । स्तेनम् । ऊर्म्ये । अथ । नः । सुऽतरा । भव ॥ ६ ॥

हे ᵛऊर्म्ये । रात्रिनामैतत् । रात्रे ᵛवृक्यं वृकस्य स्त्रियं ᵛवृकं चास्मान् हिंसन्तं ᵛयवय । अस्मत्तः पृथक्कुरु । अस्मान् बाधितुं यथा न प्राप्नोति तथा । ᵛस्तेनं तस्करं च ᵛयवय । अस्मत्तो वियोजय । ᵛअथ अनन्तरं ᵛनः अस्माकं ᵛसुतरा सुखेन तरणीया क्षेमकरी ᵛभव ॥

**उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित । उष ऋणेव यातय ॥ ७ ॥**

उप । मा । पेपिशत् । तमः । कृष्णम् । विऽअक्तम् । अस्थित । उषः । ऋणाऽइव । यातय ॥ ७ ॥

ᵛपेपिशत् भृशं पिंशत् सर्ववस्तुष्वाश्लिष्टं ᵛतमः अन्धकारं ᵛकृष्णं कृष्णवर्णं ᵛव्यक्तं विशेषेण स्वभासा सर्वस्याञ्जकं स्पष्टरूपं वा ईदृशं नैशं तमो माम् ᵛउप ᵛअस्थित उपागच्छत् ॥ संगतकरण आत्मनेपदम् ॥ हे ᵛउषः उषोदेवते त्वम् ᵛऋणेव ऋणानीव तत्तमो ᵛयातय अपगमय । स्तोतॄणामृणानि यथा धनप्रदानेनापाकरोषि तथा तमोऽप्यपसारयेत्यर्थः ॥

**उप ते गाइवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमं न जिग्युषे ॥ ८ ॥**

उप । ते । गाःऽइव । आ । अकरम् । वृणीष्व । दुहितः । दिवः । रात्रि । स्तोमम् । न । जिग्युषे ॥ ८ ॥

हे ᵛरात्रि रात्रिदेवते ᵛते त्वां ᵛगाइव पयसो दोग्ध्रीर्धेनूरिव उपेत्य ᵛआकरं स्तुतिभिरभिमुखीकरोमि ॥ करोतेश्छान्दसे लुङि 'कृमृदृरुहिभ्यः०' इति च्लेरङादेशः ॥ ᵛदिवः ᵛदुहितः द्योतमानस्य सूर्यस्य पुत्रि यद्वा दिवसस्य तनये ॥ 'परमपि च्छन्दसि' (पा. सू. २. १. २. ६) इति परस्य षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावात् पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वम् ॥ त्वत्प्रसादात् ᵛजिग्युषे शत्रून् जिग्युषो[3] मम ᵛस्तोमं ᵛन स्तोत्रमिव हविरपि ᵛवृणीष्व त्वं भजस्व ॥ जयतेर्लिटः क्वसुः । 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य जकारस्य कुत्वम् । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी । 'वसोः संप्रसारणम्' इति संप्रसारणम् ॥ ॥ १४ ॥

'ममाग्ने' इति नवर्चं षोडशं सूक्तमाङ्गिरसस्य विहव्यस्यार्षं वैश्वदेवम् । अन्त्या जगती शिष्टास्त्रिष्टुभः । अनुक्रम्यते हि—'ममाग्ने नव विहव्यो वैश्वदेवं जगत्यन्तम्' इति । संसवे निमित्तभूते वैश्वदेवसूक्तस्य पुरस्तादेतत् शंस्यम् । सूत्रितं च—'ममाग्ने वर्च इति वैश्वदेवसूक्तस्यापि वैतेष्वेव निविदो दध्यात्' (आश्व. श्रौ. ६.६) इति । समावर्तनेऽनेन सूक्तेन सिष्णासुना प्रत्यृचं समिदाधातव्या । सूत्रितं च—'ममाग्ने वर्च इति प्रत्यृचं समिधोऽभ्यादध्यात्' (आश्व. गृ.३.९.२) इति ॥

**ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।**
**मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥ १ ॥**

---

१. ग-त४.५-भ२-श्येना गृध्राः । २. त१.२.३.६.७.८-भ-भूतान्यहनि । ३. ग-जितवतो ।

मम॑ । अ॒ग्ने॒ । वर्चः॑ । वि॒ऽह॒वेषु॑ । अ॒स्तु॒ । व॒यम् । त्वा॒ । इन्धा॑नाः । त॒न्व॑म् । पु॒षे॒म॒ ।
मह्य॑म् । न॒म॒न्ता॒म् । प्र॒ऽदिशः॑ । चत॑स्रः । त्वया॑ । अधि॑ऽअक्षेण । पृत॑नाः । ज॒ये॒म॒ ॥ १ ॥

हे <sup>v</sup>अग्ने । विविधमाहूयन्ते येषु शूरा इति विहवाः संग्रामाः । यद्वा । विविधं यागार्थं देवा आहूयन्त एष्विति विहवा यज्ञाः ॥ 'ह्वः संप्रसारणं च न्यभ्युपविषु' (पा. सू. ३. ३. ७२) इत्यधिकरणेऽप् संप्रसारणं च । थाथादिनोत्तरपदान्तोदात्तत्वम् । संग्रामेषु यज्ञेषु वा <sup>v</sup>वर्चः दीप्तिः त्वदनुग्रहात् <sup>v</sup>मम <sup>v</sup>अस्तु भवतु । <sup>v</sup>वयं च <sup>v</sup>त्वा त्वाम् <sup>v</sup>इन्धानाः समिद्भिर्दीपयन्तः <sup>v</sup>तन्वं तव शरीरं <sup>v</sup>पुषेम हविर्भिर्वर्धयेम ॥ इन्धेः शानचि श्नसोरल्लोप उदात्तनिवृत्तिस्वरेण शानच आद्युदात्तत्वे प्राप्ते 'विभाषा वेण्विन्धानयोः' (पा. सू. ६. १. २१५) इत्याद्युदात्तत्वम् ॥ तन्वं[1] पुषेम ॥ पुषेर्लिङि लिङ्याशिष्यङ् ॥ अपि च <sup>v</sup>मह्यं मदर्थम् । 'ङयि च' (पा. सू. ६. १. २१२) इत्यस्मद आद्युदात्तत्वम् ॥ <sup>v</sup>चतस्रः <sup>v</sup>प्रदिशः प्रकृष्टा दिशः । तद्वासिनो जना इत्यर्थः । <sup>v</sup>नमन्तां स्वत एव प्रह्वीभवन्तु । नमतेः कर्मकर्तरि लोटि 'न दुहस्नुनमाम्°' इति यक्प्रतिषेधः ॥ <sup>v</sup>त्वया अस्माभिर्हविर्भिः प्रवर्धितेन <sup>v</sup>अध्यक्षेण ईश्वरेण सता <sup>v</sup>पृतनाः शत्रुसेनाः <sup>v</sup>जयेम अभिभवेम ॥

मम॑ दे॒वा वि॑ह॒वे स॑न्तु॒ सर्व॒ इन्द्र॑वन्तो म॒रुतो॒ विष्णु॑र॒ग्निः ।
ममा॒न्तरि॑क्षमु॒रुलो॑कमस्तु॒ मह्यं॒ वातः॑ पवतां॒ कामे॑ अ॒स्मिन् ॥ २ ॥

मम॑ । दे॒वाः । वि॒ऽह॒वे । स॒न्तु॒ । सर्वे॑ । इन्द्र॑ऽवन्तः । म॒रुतः॑ । विष्णुः॑ । अ॒ग्निः ।
मम॑ । अ॒न्तरि॑क्षम् । उ॒रुऽलो॑कम् । अ॒स्तु॒ । मह्य॑म् । वातः॑ । प॒व॒ता॒म् । कामे॑ । अ॒स्मिन् ॥२॥

<sup>v</sup>सर्वे <sup>v</sup>देवाः <sup>v</sup>विहवे संग्रामे यज्ञे वा <sup>v</sup>मम <sup>v</sup>सन्तु ममैव साधका भवन्तु । के पुनस्ते । <sup>v</sup>इन्द्रवन्तः इन्द्रेण युक्ताः <sup>v</sup>मरुतो <sup>v</sup>विष्णुरग्निः च । तथा <sup>v</sup>अन्तरिक्षं <sup>v</sup>मम <sup>v</sup>उरुलोकं विस्तीर्णप्रकाशकम् <sup>v</sup>अस्तु ॥ 'लोकृ दर्शने' । भावे घञ् । लोक आलोकः प्रकाशः । उरुर्लोको यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ अपि च <sup>v</sup>अस्मिन् <sup>v</sup>कामे कामयितव्ये फले निमित्तभूते सति <sup>v</sup>वातः वायुः <sup>v</sup>पवताम् अनुगुणं प्रवातु ॥ 'पूङ् पवने'। भौवादिकः । 'ऊडिदम्°' इत्यादिना इदमः सप्तम्या उदात्तत्वम् ॥

मयि॑ दे॒वा द्रवि॑ण॒मा य॑जन्तां॒ मय्या॒शीर॑स्तु॒ मयि॑ दे॒वहू॑तिः ।
दैव्या॒ होता॑रो वनुषन्त॒ पूर्वेऽरि॑ष्टाः स्याम त॒न्वा॑ सु॒वीराः॑ ॥ ३ ॥

मयि॑ । दे॒वाः । द्रवि॑णम् । आ । य॒ज॒न्ता॒म् । मयि॑ । आ॒ऽशीः । अ॒स्तु॒ । मयि॑ । दे॒वऽहू॑तिः ।
दैव्याः॑ । होता॑रः । व॒नु॒ष॒न्त॒ । पूर्वे॑ । अरि॑ष्टाः । स्या॒म॒ । त॒न्वा॑ । सु॒ऽवीराः॑ ॥ ३ ॥

<sup>v</sup>देवाः सर्वे <sup>v</sup>द्रविणं धनं <sup>v</sup>मयि स्तोतरि <sup>v</sup>आ <sup>v</sup>यजन्तां गमयन्तु । मह्यं ददत्वित्यर्थः । तथा <sup>v</sup>आशीः आशंसनीयं यज्ञफलं च <sup>v</sup>मयि एव <sup>v</sup>अस्तु । देवानां हूतिराह्वानमस्मिन्निति <sup>v</sup>देवहूतिः यज्ञः । स च <sup>v</sup>मयि अस्तु । अपि च देवानामिमे <sup>v</sup>दैव्याः । 'देवाद्यञञौ' इति यञ् । तादृशाः <sup>v</sup>होतारः साधुहोमनिष्पादका मदीया ऋत्विजः <sup>v</sup>पूर्वे अन्यदीयेभ्य ऋत्विग्भ्यः प्रथमभाविनः सन्तः <sup>v</sup>वनुषन्त देवान् संभजन्ताम् ॥ वनतेश्छान्दसे लङि 'व्यत्ययो बहुलम्' इति उषो विकरणा उप्रत्ययः सिप्शपौ च । अडभावश्छान्दसः ॥ वयं च <sup>v</sup>तन्वा शरीरेण <sup>v</sup>अरिष्टाः अहिंसिताः <sup>v</sup>सुवीराः सुपुत्राश्च <sup>v</sup>स्याम भवेम ॥ 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥

---

१. त-भ–प्राप्ते ।

**मह्यं यजन्तु मम यानि हव्याकूतिः सत्या मनसो मे अस्तु ।**
**एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता नः ॥ ४ ॥**

मह्यम् । यजन्तु । मम । यानि । हव्या । आऽकूतिः । सत्या । मनसः । मे । अस्तु ।
एनः । मा । नि । गाम् । कतमत् । चन । अहम् । विश्वे । देवासः । अधि । वोचत । नः ॥४॥

ᵛमह्यं मदर्थं ᵛयजन्तु ऋत्विजो देवान् हविर्भिर्यजन्तु । यद्वा । षष्ठ्यर्थे चतुर्थी । मह्यं मदीया ऋत्विज इत्यर्थः । ᵛमम स्वभूतानि हव्यानि ᵛयानि हवींषि चरुपुरोडाशादीनि सन्ति तैर्हविर्भिरित्यर्थः । तथा ᵛमे ᵛमनसः ᵛआकूतिः संकल्पनमभीष्टस्य प्रार्थनं ᵛसत्या यथार्थम्[1] ᵛअस्तु । अपि च ᵛअहं ᵛकतमच्चन किमपि ᵛएनः पापं ᵛमा ᵛनि ᵛगां मा नियतं निकृष्टतरं वा गच्छेयम् । पापं मा कार्षमित्यर्थः ॥ एतेर्माङि लुङि ' इणो गा लुङि ' इति गादेशः । ' गातिस्था° ' इति सिचो लुक् ॥ अपि च हे ᵛविश्वे सर्वे ᵛदेवासः देवाः यूयं ᵛनः अस्माकम् ᵛअधि ᵛवोचत विवादपदेषु पक्षपातेन ब्रूत ॥ वक्तेर्लोटि व्यत्ययेनाङ् । ' वच उम् ' इत्युमागमः ॥

**देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् ।**
**मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ ५ ॥**

देवीः । षट् । उर्वीः । उरु । नः । कृणोत । विश्वे । देवासः । इह । वीरयध्वम् ।
मा । हास्महि । प्रऽजया । मा । तनूभिः । मा । रधाम । द्विषते । सोम । राजन् ॥ ५ ॥

हे ᵛषट् ᵛउर्वीः षट्संख्याका उर्व्यः । एताश्चान्यत्राम्नायन्ते—' षण्मोर्वीरंहसः पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च ' इति । ईदृश्यो हे ᵛदेवीः देव्यः ॥ जसि ' वा छन्दसि ' इति पूर्वसवर्णदीर्घः । ' नामन्त्रिते समानाधिकरणे सामान्यवचनम् ' इत्यस्याविद्यमानत्वनिषेधेन षळुर्वीरित्यनयोरामन्त्रितयोः पदात्परत्वादाष्टमिकमामन्त्रितानुदात्तत्वम् ॥ ता यूयम् ᵛउरु विस्तीर्णं धनं ᵛनः अस्माकं ᵛकृणोत कुरुत ॥ ' कृवि हिंसाकरणयोश्च ' । ' धिन्विकृण्व्योरच्च ' इत्युप्रत्ययः । ' तप्तनप्तनथनाश्च ' इति तस्य तबादेशः ॥ हे ᵛविश्वे सर्वे ᵛदेवासः देवाः यूयं च ᵛइह अस्मिन् धने प्राप्तव्ये विषये ᵛवीरयध्वं विक्रामयत । यथा वयं तद्धनं लभेमहि तथा वीर्यवन्तो यूयं प्रयतध्वमित्यर्थः ॥ ' वीर विक्रान्तौ ' । अपि च ᵛप्रजया पुत्रादिरूपया ᵛमा ᵛहास्महि वयं मा परित्यज्येमहि[2] । ᵛमा च ᵛतनूभिः शरीरैस्त्यज्येमहि[3] । अस्मान् कदाचिदपि पुत्रादयः शरीराणि च मा परित्याक्षुरित्यर्थः ॥ ' ओहाक् त्यागे ' । अस्मान् कर्मणि लुङि चिण्वद्भावाभावे रूपमेतत् ॥ तथा हे ᵛराजन् राजमान यद्वास्माकं स्वामिन् हे ᵛसोम ᵛद्विषते अप्रीतिं कुर्वते ॥ द्विषेः शतरि अदादित्वात् शपो लुक् । ' शतुरनुमः° ' इति विभक्तेरुदात्तत्वम् । ' षष्ठ्यर्थे चतुर्थी वक्तव्या ' इति चतुर्थी ॥ द्विषतः शत्रोः ᵛमा ᵛरधाम मा वशं प्राप्नुयाम तथा त्वं कुर्वित्यर्थः । ' रध्यतिर्वशगमने ' ( निरु. ६. ३२ ) इति यास्कः । यद्वा । द्विषते शत्रवे तदर्थं मा रधाम । परिपक्वा हननार्हा मा भूम ॥ ' रध हिंसासंराद्ध्योः ' । संराद्धिः पाक इति तद्वृत्तिः । माङि लुङि पुषादित्वात् च्लेरङादेशः ॥ ॥ १५ ॥

**अग्ने मन्युं प्रतिनुदन् परेषामदब्धो गोपाः परि पाहि नस्त्वम् ।**
**प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधां वि नेशत् ॥ ६ ॥**

१. ग-त-भ-मु-यथार्था । २. त-भ-परित्यजेमहि । ३. त-भ-°स्त्यजेमहि ।

अग्ने । मन्युम् । प्रतिऽनुदन् । परेषाम् । अदब्धः । गोपाः । परि । पाहि । नः । त्वम् ।
प्रत्यञ्चः । यन्तु । निऽगुतः । पुनरिति । ते । अमा । एषाम् । चित्तम् । प्रऽबुधाम् । वि । नेशत् ॥ ६ ॥

हे ᵛअग्ने ᵛपरेषां शत्रूणां ᵛमन्युं क्रोधं ᵛप्रतिनुदन् प्रतिमुखं प्रेरयन् तिरस्कुर्वन् ᵛअदब्धः केनाप्यहिंसितो ᵛगोपाः गोपायिता ॥ 'गुपू रक्षणे' इत्यस्मात् आयप्रत्ययान्तात् क्विपि वेरपृक्तस्य लोपात् पूर्वं वलि लोपे रूपमेतत् ॥ ईदृशः ᵛत्वं ᵛनः अस्मान् ᵛपरि ᵛपाहि परितः सर्वतो रक्ष । ᵛते शत्रवः ᵛप्रत्यञ्चः प्रत्यञ्चन्तः प्रतिनिवर्तमानाः ᵛनिगुतः ॥ 'गुङ् अव्यक्ते शब्दे' । अस्मात् क्विपि तुक् ॥ भयेन गद्गदरूपमव्यक्तं शब्दं नितरां कुर्वन्तः ᵛपुनः ᵛयन्तु स्वकीयं स्थानं पुनर्गच्छन्तु । अपि च ᵛप्रबुधां प्रबुध्यमानानाम् ᵛएषां[1] शत्रूणां[1] ᵛचित्तं ज्ञानसाधनं मनः ᵛअमा सह युगपदेव ᵛवि ᵛनेशत् विनश्यतु ॥ प्रत्येकाभिप्रायेणैकवचनम् । 'णश अदर्शने' इत्यस्माच्छान्दसो लुङ् । पुषादित्वात् च्लेरङादेशः । 'नशिमन्योरलिट्येत्वं वक्तव्यम्' ( पा.सू. ६.४.१२०.५ ) इत्यकारस्यैत्वम् ॥

धाता धातॄणां भुवनस्य यस्पतिर्देवं त्रातारमभिमातिषाहम् ।
इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात् ॥ ७ ॥

धाता । धातॄणाम् । भुवनस्य । यः । पतिः । देवम् । त्रातारम् । अभिमातिऽसहम् ।
इमम् । यज्ञम् । अश्विना । उभा । बृहस्पतिः । देवाः । पान्तु । यजमानम् । निऽअर्थात् ॥ ७ ॥

ᵛधातॄणां स्रष्टॄणामपि ᵛधाता स्रष्टा ᵛभुवनस्य कृत्स्नस्य भूतजातस्य ᵛयः इन्द्रः सविता वा ᵛपतिः पालयिता तं ᵛदेवं देवनशीलं ᵛत्रातारं सर्वेभ्यो भयेभ्यः पालयितारम् ᵛअभिमातिषाहम् अभिमातीनां शत्रूणां सोढारमभिभवितारम् एवंगुणविशिष्टमिन्द्रं सवितारं वा स्तौमीति शेषः ॥ 'षह अभिभवे' । 'छन्दसि सहः' इति ण्विप्रत्ययः । छान्दसं विभक्त्युदात्तत्वम् ॥ ᵛउभा उभावश्विनौ ᵛबृहस्पतिः चैतत्प्रमुखाः सर्वे ᵛदेवाः ᵛइमं ᵛयज्ञम् अनुष्ठीयमानं ᵛयजमानं च ᵛन्यर्थात् निकृष्टादर्थात् पापात् । यद्वा । अर्थस्य प्रयोजनस्याभावो न्यर्थम् । तस्मात् ᵛपान्तु रक्षन्तु सफलं कुर्वन्त्वित्यर्थः ॥ 'नेरनिधाने' ( पा. सू. ६. २. १९२ ) इत्युत्तरपदान्तोदात्तत्वम् ॥

उरुव्यचा नो महिषः शर्म यंसदस्मिन् हवे पुरुहूतः पुरुक्षुः ।
स नः प्रजायै हर्यश्व मृळयेन्द्र मा नो रीरिषो मा परा दाः ॥ ८ ॥

उरुऽव्यचाः । नः । महिषः । शर्म । यंसत् । अस्मिन् । हवे । पुरुऽहूतः । पुरुऽक्षुः ।
सः । नः । प्रऽजायै । हरिऽअश्व । मृळय । इन्द्र । मा । नः । रिरिषः । मा । परा । दाः ॥ ८ ॥

ᵛउरुव्यचाः विस्तीर्णव्यापनः ᵛमहिषः महान् पूज्यो वा ᵛपुरुहूतः बहुभिर्यजमानैराहूतः ᵛपुरुक्षुः बहुनिवासः ॥ क्षियतेः 'मितद्र्वादिभ्य उपसंख्यानम्' ( पा. सू. ३. २. १८०. १ ) इति डुप्रत्ययः ॥ यद्वा । पुरुभिर्बहुभिः शब्द्यमानः[2] स्तूयमानः ॥ पूर्ववत् डुप्रत्ययः । औणादिके कर्मणि क्विपि वा 'अनित्यमागमशासनम्' इति तुगभावः ॥ ईदृशः इन्द्रः ᵛअस्मिन् ᵛहवे यज्ञे । हूयन्ते अस्मिन् हवींषीति हवो यज्ञः । जुहोतेरधिकरणेऽप् ॥ यद्वा । अस्मिन् हवे त्वद्विषये आह्वाने ॥ 'भावेऽनुपसर्गस्य' इति ह्वयतेरप् संप्रसारणं च ॥ ᵛनः अस्मभ्यं ᵛशर्म सुखं ᵛयंसत् यच्छतु ददात्वित्यर्थः ॥

१. ग–अजानतामेषां गुरूणां; त४.५-ग१२–जानतामेतेषां शत्रूणां । २. त४.५–शंस्यमानः ।

यमेर्लेट्यडागमः । 'सिब्बहुलम्' इति सिप् ॥ हे ᐯहर्यश्व हरी अश्वौ यस्य तादृश हे ᐯइन्द्र ᐯसः त्वं ᐯनः अस्माकं ᐯप्रजायै । द्वितीयार्थे चतुर्थी । प्रजां पुत्रपौत्रादिकां ᐯमृळय सुखय । ᐯनः अस्मान् ᐯमा ᐯरीरिषः मा हिंसीः । ᐯमा च ᐯपरा ᐯदाः । परादानं परित्यागः । मा परित्याक्षीरित्यर्थः ॥

ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् ।
वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥ ९ ॥

ये । नः । सऽपत्नाः । अप । ते । भवन्तु । इन्द्राग्निऽभ्याम् । अव । बाधामहे । तान् ।
वसवः । रुद्राः । आदित्याः । उपरिऽस्पृशम् । मा । उग्रम् । चेत्तारम् । अधिऽराजम् । अक्रन् ॥ ९ ॥

ᐯनः अस्माकं ᐯये ᐯसपत्नाः शत्रवः ᐯते ᐯअप ᐯभवन्तु अपगता भवन्तु । स्वस्थानादपगताः प्रच्युता भवन्तु । ᐯतान् सपत्नान् ᐯइन्द्राग्निभ्यां हविर्भिः स्तुत्या च प्रसन्नाभ्यामनुगृहीता वयम् ᐯअव ᐯबाधामहे निकृष्टतरं विनाशयामः । अपि च ᐯवसवो ᐯरुद्रा ᐯआदित्याः च ᐯमा माम् ᐯउपरिस्पृशम् उन्नतपदस्य संस्प्रष्टारं सर्वेभ्यः श्रेष्ठम् ᐯअक्रन् कुर्वन्तु । तथा ᐯउग्रम् उद्गूर्णबलं ᐯचेत्तारं चेतितारम् ॥ छान्दस इडभावः ॥ सर्वस्य ज्ञातारम् ᐯअधिराजं सर्वेषामधीश्वरं च मां कुर्वन्तु ॥ करोतेश्छान्दसे लुङि 'मन्त्रे घस" इत्यादिना च्लेर्लुक् ॥ ॥ १६ ॥ ॥ १० ॥

एकादशेऽनुवाके त्रयोविंशतिसंख्याकानि सूक्तानि । तत्र 'नासदासीत्' इति सप्तर्चं प्रथमं सूक्तं त्रैष्टुभम् । परमेष्ठी नाम प्रजापतिर्ऋषिः । वियदादिभावानां सृष्टिस्थितिप्रलयादीनामत्र प्रतिपाद्यत्वात् तेषां[1] कर्ता परमात्मा देवता । तथा चानुक्रान्तं—'नासत्सप्त प्रजापतिः परमेष्ठी भाववृत्तं तु' इति । गतो विनियोगः ॥

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ॥ १ ॥

न । असत् । आसीत् । नो इति । सत् । आसीत् । तदानीम् ।
न । आसीत् । रजः । नो इति । विऽओम । परः । यत् ।
किम् । आ । अवरीवरिति । कुह । कस्य । शर्मन् । अम्भः । किम् । आसीत् । गहनम् । गभीरम् ॥ १ ॥

'तपसस्तन्महिनाजायतैकम्' इत्यादिनाग्रे सृष्टिः प्रतिपादयिष्यते । अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते । ᐯतदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तत् ᐯअसत् शशविषाणवन्निरुपाख्यं ᐯन ᐯआसीत् । न हि तादृशात् कारणादस्य सतो जगत उत्पत्तिः संभवति । तथा ᐯनो ᐯसत् नैव सदात्मवत् सत्त्वेन निर्वाच्यम् ᐯआसीत् । यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपि[2] संभवति । कुतस्तयोः तादात्म्यमिति उभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः । ननु नो सदिति पारमार्थिकसत्त्वस्य निषेधः । तद्वात्मनोऽप्यनिर्वाच्यत्वप्रसङ्गः । अथोच्येत । न[3] । आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते परिशेषान्मायाया एवात्र सत्त्वं निषिध्यत इति । एवमपि तदानीमिति विशेषणानर्थक्यं व्यवहारदशायामपि

१. त१.२.३.६.७.८-भ-एषां । २. ग-त-भ२.५–सद्भावावस्थानमपि । ३. ग-त१.२.३.६.७.८-भ–'न' नास्ति ।

तस्याः पारमार्थिकसत्त्वाभावात्[1]। अथ व्यावहारिकसत्तां पृथिव्यादीनां भावानां[2] विद्यमानत्वात् कथं नो सदिति निषेधः। तत्राह। vनासीद्रज इत्यादि। 'लोका रजांस्युच्यन्ते' (निरु. ४. १९) इति यास्कः। अत्र च सामान्यापेक्षमेकवचनम्। व्योम्नो वक्ष्यमाणत्वात्तस्याधस्तनाः पातालादयः पृथिव्यन्ता नासन्नित्यर्थः। तथा vव्योम अन्तरिक्षं तदपि vनो नैवासीत्। पर इति सकारान्तं परस्तादित्यर्थे वर्तते। परशब्दाच्छान्दसोऽस्तातेरर्थेऽसिप्रत्ययः। vपरः व्योम्नः परस्तादुपरिदेशे द्युलोकप्रभृतिसत्यलोकान्तं vयत् अस्ति तदपि नासीदित्यर्थः। अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति। अथ तदावरकत्वेन[3] पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधयति किमावरीवरिति। vकिम् आवरणीयं तत्त्वमावरकभूतजातम् vआवरीवः। अत्यन्तमावृणुयात्। आवार्याभावात् तदावरकमपि[4] नासीदित्यर्थः॥ वृणोतेर्यङ्लुगन्ताच्छान्दसे लङि तिपि रूपमेतत्॥ यद्वा। किमिति प्रथमैव। किं तत्त्वमावरकमावृणुयात्। आव्रियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः। आवृण्वत् तत्तत्त्वं vकुह कुत्र देशेऽवस्थायावृणोति। आधारभूतस्तादृशो देशोऽपि नासीदित्यर्थः॥ किंशब्दात् सप्तम्यर्थे हप्रत्ययः। 'कु तिहोः' (पा. सू. ७.२.१०४) इति प्रकृतेः कादेशः॥ vकस्य vशर्मन् कस्य वा भोक्तुर्जीवस्य शर्मणि[5] सुखदुःखसाक्षात्कारलक्षणे भोगे निमित्तभूते सति तदावरकं तत्त्वमावृणुयात्। जीवानामुपभोगार्था हि सृष्टिः। तस्यां हि सत्यां ब्रह्माण्डस्य भूतैरावरणं प्रलयदशायां च भोक्तारो जीवा उपाधिविलयात् प्रलीना[6] इति कस्य[7] कश्चिदपि भोक्ता[7] न संभवतीत्यावरणस्य निमित्ताभावादपि तन्न घटत इत्यर्थः। एतेन भोग्यप्रपञ्चवत् भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति॥ किंशब्दादुत्तरस्य ङसः 'सावेकाचः°' इति प्राप्तस्योदात्तत्वस्य[8] 'न गोश्वन्साववर्ण°' इति प्रतिषेधः। 'सुपां सुलुक्°' इति शर्मणः सप्तम्या लुक्॥ यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गतमप्सत्त्वमपि[9] निराकृतं तथापि 'आपो वा इदमग्रे सलिलमासीत्' (तै. सं. ७. १. ५. १) इति श्रुत्या कश्चिदपां सद्भावमाशङ्केत। तं प्रत्याचष्टे अम्भः किमासीत् इति। vगहनं दुष्प्रवेशं vगभीरं दुरवस्थानमत्यगाधम् ईदृशम् vअम्भः vकिमासीत्। तदपि नैवासीदित्यर्थः। श्रुतिस्त्ववान्तरप्रलयविषया॥

**न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।**
**आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किं चनास॥ २॥**

न। मृत्युः। आसीत्। अमृतम्। न। तर्हि। न। रात्र्याः। अह्नः। आसीत्। प्रऽकेतः।
आनीत्। अवातम्। स्वधया। तत्। एकम्।
तस्मात्। ह। अन्यत्। न। परः। किम्। चन। आस॥ २॥

ननूक्तस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युर्विद्यत इत्यत आह vन vमृत्युरासीत् इति। ननु यदि स नासीत् तर्हि तदभावकृतम् vअमृतम् अमरणं प्राणिनामवस्थानं तदानीमपि

१. त-°सत्त्वाभावात् इति तु न प्रलयदशाया एव वर्णनीयत्वेन तदुपादानौचित्यात् तदानीमपि तत्सत्त्वेन तदबाधात्। २. त१.३-भावानां तदापि; त७-भावानां तदपि। ३. ग-त१.२.३.६.७.८-भ-तदावरणत्वेन; त४.५-तदावरत्वेन। ४. त२.७-भ२.४.८-तद्रक्षकमपि; त३.८-भ५-तत्रक्षकमपि; त६-ततक्षकमपि। ५. त१.३.७-भ२.८-मु-शर्मणि सुखे। ६. ग-त१.२.३.६.७.८-भ-मु-प्रविलीना। ७. ग-कस्यचिदपि भोगो; त१.७-भ२.४.७.८-कस्यचिदपि भोगो; त२.३.६.८-कांस्यंचिदपि भोगो। ८. ग-त४.५-भ२ प्राप्तस्योदात्तस्य; त१.२.३.६.७.८-भ-मु-प्राप्तस्य। ९. त१.२.६.७-भ२.८-°मप्तत्वमपि; त४-°मद्वत्वमपि; त५-°मामाप्तत्वमपि; त८-भ२-°मतत्वमपि; भ४.७-°मसत्त्वमपि।

स्यात् तत्राह । ᵛअमृतं ᵛन ᵛतर्हि इति । तर्हि तस्मिन् प्रतिहारसमये । अयं भावः । सर्वेषां प्राणिनां परिपक्वं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत् तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि संजिहीर्षा जायते । तथैव स मृत्युः[1] सर्वं जगत् संहरत[2] इति किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादिति । एतदेवाभिप्रेत्य कठैराम्नायते–' यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ' ( क. उ. २. २५ ) इति । नन्वेतस्य सर्वस्याधिकरणभूतः कालो विद्यत इत्यत आह न रात्र्या इति । ᵛरात्र्याः ᵛअह्नः च ᵛप्रकेतः प्रज्ञानं ᵛन ᵛआसीत् । तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात् । एतेनाहोरात्रनिषेधेन तदात्मको मासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः । कथं तर्हि नो सदासीत्तदानीमिति कालवाची प्रत्ययः । उपचारादिति ब्रूमः । यथेदानींतननिषेध्यस्य कालोऽवच्छेदकस्तथा मायापि तदवच्छेदहेतुरित्यवच्छेदकत्वसाम्येनाकालेऽपि कालवाची प्रत्ययः । यद्वात्रादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वक्ष्यत इति तदिदानीं दर्शयत्यानीदिति । ᵛतत् सकलवेदान्तप्रसिद्धं ब्रह्मतत्त्वम् ᵛआनीत् प्राणितवत् । नन्वेवं प्राणनकर्तुर्जीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात् न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः । ' अप्राणो ह्यमनाः शुद्धः ' इति तस्य प्राणसंबन्धाभावात् तत्राह आनीदवातमिति । अयमाशयः । आनीदित्यत्र धात्वर्थक्रिया तत्कर्ता तस्य च भूतकालसंबन्ध इति त्रयोऽर्थाः प्रतीयन्ते । तत्र समुदायो न विधीयते यथाग्नेयोऽष्टाकपाल इति येन ब्रह्मणः सत्त्वं न स्यात् । किं तर्ह्यनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणो गुणो विधीयते दध्ना[3] जुहोतीति वाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुणविधानम् । तत्राप्यनेन कर्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते[4] तन्निषेधानुपपत्तिप्रसङ्गात् अतोऽनेन कर्तृत्वेन इदानींतनेनोपलक्षितं यन्निरुपाधिकं परं ब्रह्म तस्यैव भूतकालसत्ता विधीयत इति न कश्चिद्दोष इति । नन्वीदृशस्य ब्रह्मणो मायया सह संबन्धासंभवात् सांख्याभिमता स्वतन्त्रा सद्रूपा सत्त्वरजस्तमोगुणात्मिका मूलप्रकृतिरेवाभिमतेति कथं[5] नो सदिति निषेधः । तत्राह ᵛस्वधया इति । स्वस्मिन् धीयते ध्रियत आश्रित्य वर्तत इति स्वधा माया । तया तद्ब्रह्मैकमविभागापन्नमासीत् । ' सहयुक्तेऽप्रधाने ' ( पा. सू. २. ३. १९ ) इति तृतीया सहशब्दयोगाभावेऽपि सहार्थयोगे भवति ' वृद्धो यूना° ' ( पा. सू. १. २. ६५ ) इति निपातनाल्लिङ्गात् । अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातन्त्र्यं निवार्यते । यद्यपि असङ्गस्य ब्रह्मणस्तया सह संबन्धो न संभवति तथापि तस्मिन्नविद्यया तत्स्वरूपमिव संबन्धोऽप्यध्यस्यते यथा शुक्तिकायां रजतस्य । एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम् । ननु यदि माया ब्रह्मणा सहाविभागापन्ना तर्हि तस्या अनिर्वाच्यत्वात् ब्रह्मणोऽपि तत्प्रसङ्ग इति कथं तस्य सत्त्वमुक्तम् आनीदवातमिति । ब्रह्मणो वा सत्त्वात्तस्या अपि सत्त्वप्रसङ्ग इति कथं नो सदासीदिति सत्त्वप्रतिषेधः । मैवम् । अयुक्तिदृष्ट्यैक्यावभासेऽपि[6] युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं ब्रह्मणः सत्त्वं च प्रतिपादितम् । ननु दृग्दृश्याविति द्वावेव पदार्थौ आनीदवातं स्वधयेति तौ चेदङ्गीक्रियेते तत्किमपरमवशिष्यते यत् नासीद्रजः इत्यादिना प्रतिषिध्येत तत्राह तस्मादिति । ᵛतस्माद्ध तस्मात् खलु पूर्वोक्तान्मायासहितात् ब्रह्मणः ᵛअन्यत् ᵛकिं ᵛचन किमपि वस्तु भूतभौतिकात्मकं जगत् ᵛन ᵛआस न बभूव ॥ ' छन्दस्युभयथा ' इति लिटः सार्वधातुकत्वादस्तेर्भूभावाभावः ॥ ननु तदानीमन्यस्य सत्त्वनिषेधो न शङ्क्यः । असत्त्वे चाप्रसक्तत्वान्न[7] निषेधोपयोग इत्यत आह पर इति । ᵛपरः परस्तात् सृष्टेरूर्ध्वं वर्तमानमिदं जगत् तदानीं न बभूवेत्यर्थः । अन्यथा उत्करीत्या[8] क्वचिदपि निषेधो न स्यादिति भावः ॥

---

१. त१.२.३.४.५.६.८-भ२.८–मृत्युर्वं; भ४–मृत्यर्कं; भ७–मृत्युदर्कं । २. १.२.३.६.७.८-भ–संह्रियते; त४.५–संह्रन । ३. भ२–यथा दध्ना । ४. त-भ–विधीयते वा । ५. त२.३.६.७.८-भ४.५.७.८–किं । ६. त१७-भ२.५–मु–अनुभवदृष्ट्या ऐक्यावभासेऽपि; त२.३.६.८-भ८–अनुभवदृष्ट्या ऐक्याभावेऽपि; त४.५–अयुक्तिमत् दृष्ट्या ऐक्यावभासेपि; भ७–अनुभवदृष्ट्या ऐक्याभावेपि । ७. त४.५–एव प्रेरकत्वान्न । ८. त-भ–उक्तनीत्या ।

तम॑ आसी॒त्तम॑सा गू॒ळ्हमग्रे॑ऽप्रके॒तं स॑लि॒लं सर्व॑मा इ॒दम् ।
तु॒च्छ्येना॒भ्वपि॑हितं॒ यदासी॒त्तप॑स॒स्तन्म॑हि॒नाजा॑यतै॒क॑म् ॥ ३ ॥

तम॑: । आसी॑त् । तम॑सा । गू॒ळ्हम् । अग्रे॑ । अ॒प्र॒ऽके॒तम् । स॒लि॒लम् । सर्व॑म् । आ॒: । इ॒दम्
तु॒च्छ्येन॑ । आ॒भु । अपि॑ऽहितम् । यत् । आसी॑त् ।
तप॑सः । तत् । म॒हि॒ना । अ॒जा॒य॒त॒ । एक॑म् ॥ ३ ॥

ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म । जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् कारकं च कारणावान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्य अवश्यंभावात् । अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते[1] । कथं तस्य जन्म । अत आह तमसा गूळ्हमग्रे इति । ˇअग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् ˇतमसा ˇगूळ्हम् । यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत् । आत्मतत्त्वस्यावरकत्वान्मायापरसंज्ञं भावरूपाज्ञानमत्र तम इत्युच्यते । तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति । आच्छादकात् तस्मात्तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते । एतेन कारणावस्थायामसदेव कार्यमुत्पद्यते इत्यसद्वादिनोऽसत्कार्यवादिनो ये मन्यन्ते ते प्रत्याख्याताः । ननु कारणे तमसि तज्जगदात्मकं कार्यं विद्यते चेत् कथं नासीद्रज इत्यादिनिषेधः[2] । तत्राह ˇतम ˇआसीत् इति । तमो भावरूपाज्ञानं मूलकारणम् । तद्रूपता तदात्मनाम् । यतः सर्वं जगत् प्राक् तम आसीदतो निषिध्यत इत्यर्थः । नन्वावरकत्वादावरकं तमः कर्तृ आवार्यत्वाज्जगत्कर्म । कथं तयोः कर्मकर्त्रोस्तादात्म्यम् । तत्राह अप्रकेतमिति । ˇअप्रकेतम् अप्रज्ञायमानम् । अयमर्थः । यद्यपि जगतस्तमसश्च कर्मकर्तृभावो वास्तविको विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम् ॥ अत एव मनुना स्मर्यते—'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः' ( मनु. १. ५ ) इति । कुतो वा न प्रज्ञायते तत्राह । ˇसलिलम् । 'षल गतौ '। औणादिक इलच् । ˇइदं दृश्यमानं ˇसर्वं जगत् सलिलं कारणेन संगतमविभागापन्नम् ˇआः आसीत् । अस्तेर्लङि तिपि 'बहुलं छन्दसि' इतीडभावे 'हल्ङ्याब्भ्यः' इति तिलोपे 'तिप्यनस्तेः' (पा. सू. ८. २. ७३ ) इति पर्युदासाद्दकाराभावः । यद्वा सलिलमिति लुप्तोपमम् । सलिलमिव । यथा क्षीरेणाविभागापन्नं नीरं दुर्विज्ञानं तथा तमसाविभागापन्नं जगन्न शक्यविज्ञानमित्यर्थः । ननु विविधविचित्ररूपभूयसः[3] प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः । तथा तमोऽपि क्षीरवद्बलवदित्येवोच्यते । तर्हि दुर्बलस्य जगतः सर्गसमयेऽपि नोद्भवसंभव इत्यत आह तुच्छयेन इति । आ समन्ताद्भवतीति ˇआभु ˇतुच्छयेन । छान्दसो यकारोपजनः । तुच्छेन तुच्छकल्पेन सदसद्विलक्षणेन भावरूपाज्ञानेन ˇअपिहितं छादितम् ˇआसीत् । दधातेः कर्मणि निष्ठा । दधातेर्हि । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । ˇएकम् एकीभूतं कारणेन तमसाविभागतां प्राप्तमपि तत्कार्यजातं ˇतपसः स्रष्टव्यपर्यालोचनरूपस्य[4] ˇमहिना माहात्म्येन ˇअजायत उत्पन्नम् । तपसः स्रष्टव्यपर्यालोचनरूपत्वं[4] चान्यत्राम्नायते—'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' ( मु. उ. १. १. ९ ) इति ॥

१. त–इत्युच्येत । २. त४.५.भ२–इत्यादिना तन्निषेधः । ३. त-भ२.४.८–विविधविचित्रभूयसः । ४. त१.२.६.७-भ५–यत्पर्यालोचनरूपत्वं परमेश्वरस्य तपः तस्य महिना महिम्ना महत्त्वेन । छांदसो वर्णलोपः । अजायत तस्मात्तमोरूपात् कारणात् पुनः प्रादुरासीत् । परमेश्वरस्य तपसः स्रष्टव्यपर्यालोचनरूपत्वं; त३.४.५.८-भ२.४.८–यत् पर्यालोचनरूपत्वं ।

**कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।**
**सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥ ४ ॥**

कामः । तत् । अग्रे । सम् । अवर्तत । अधि । मनसः । रेतः । प्रथमम् । यत् । आसीत् ।
सतः । बन्धुम् । असति । निः । अविन्दन् । हृदि । प्रतिऽइष्य । कवयः । मनीषा ॥ ४ ॥

ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनरुत्पत्तौ कारणं तदेव[1] किंनिबन्धनमित्यत आह कामस्तदग्र इति । अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत । सिसृक्षा जातेत्यर्थः । ईश्वरस्य सिसृक्षा वा किंहेतुकेत्यत आह मनस इति । मनसः अन्तःकरणस्य संबन्धि वासनाशेषेण मायायां विलीनेऽन्तःकरणे समवेतम् । सामान्यापेक्षमेकवचनम् । सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः । एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम् । तादृशं रेतः भाविनः प्रपञ्चस्य बीजभूतं प्रथमम् अतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं[2] कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवत् । भूष्णु वर्धिष्णवजायत परिपक्कं सत् फलोन्मुखमासीदित्यर्थः । तत्तो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः । तस्यां च जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं जगत् सृजति । तथा चाम्नायते—'सोऽकामयत बहुः स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किंच' ( तै. आ. ८. ६ ) इति श्रुतिः । आत्मनेत्थमवगमितेऽर्थे विद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति सत इति । सतः सत्त्वेन इदानीमनुभूयमानस्य सर्वस्य जगतः बन्धुं बन्धकं हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रान्तदर्शना अतीतानागतवर्तमानाभिज्ञा योगिनः हृदि हृदये निरुद्ध्या मनीषा मनीषया बुद्ध्या । 'सुपां सुलुक्' इति तृतीयाया लुक् । प्रतीष्य विचार्य । 'अन्येषामपि' इति सांहितिको दीर्घः । असति सद्विलक्षणेऽव्याकृते कारणे निरविन्दन् निष्कृष्यालभन्त । विविच्याजानन्नित्यर्थः ॥

**तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् ।**
**रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥ ५ ॥**

तिरश्चीनः । विऽततः । रश्मिः । एषाम् । अधः । स्वित् । आसी३त् । उपरि । स्वित् । आसी३त् ।
रेतःऽधाः । आसन् । महिमानः । आसन् । स्वधा । अवस्तात् । प्रऽयतिः । परस्तात् ॥५॥

एवमविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि । अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते । येयं नासदासीदित्यविद्या प्रतिपादिता यश्च कामस्तदग्रे इति कामो मनसो रेतः प्रथमं यदासीदिति यत्कर्म एषाम् अविद्याकामकर्मणां वियदादिभूतजातानि सृजतां रश्मिः रश्मिसदृशो यथा सूर्यरश्मिः उदयानन्तरं निमेषमात्रेण युगपत् सर्वं जगत् व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन् यः कार्यवर्गः विततः विस्तृतः आसीत् । स्विदासीत् इति वक्ष्यमाणमत्रापि संबध्यते । 'विचार्यमाणानाम्' (पा. सू. ८. २. ९७ ) इति प्लुतः । तत्रोदात्त इत्यनुवृत्तेः स चोदात्तः । स्वित् इति वितर्के । स कार्यवर्गः प्रथमतः किं तिरश्चीनः तिर्यगवस्थितो मध्ये स्थित आसीत् किंवा अधः अधस्तात् आसीत् । आहोस्वित् उपरि उपरिष्टात् किमासीत् । 'उपरि स्विदासीदिति च' ( पा. सू. ८.२. १०२ ) इत्यनुदात्तः प्लुतः । 'आत्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निः' ( तै. आ. ८. १ ) इत्यादिकया पञ्चमीश्रुत्या तत उद्गातारं ततो होतारमितिवत् क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत्

१. त-भ-तदेव वा । २. भ२-पुण्यापुण्यात्मकं ।

सर्गस्य शीघ्रव्यापनेन[1] तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते। एवं नाम शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः। एतदेव विभजते। सृष्टेषु कार्येषु मध्ये केचिद्भावाः ^रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवाः ^आसन् अन्ये भावाः ^महिमानः। स्वार्थिक इमनिच्। महान्तो वियदादयो भोग्याः ^आसन्। एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः। अयमेवार्थस्तैत्तिरीयके 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. आ. ८. ६) इत्यारभ्य प्रतिपाद्यते। तत्र च भोक्तृभोग्ययोर्मध्ये ^स्वधा। अन्ननामैतत्। भोग्यप्रपञ्चः ^अवस्तात् अवरो निकृष्ट आसीत्। ^प्रयतिः प्रयतिता भोक्ता ^परस्तात् पर उत्कृष्ट आसीत्। भोग्यप्रपञ्चं भोक्तृप्रपञ्चस्य शेषभूतं कृतवानित्यर्थः। 'विभाषा परावराभ्याम्' (पा. सू. ५. ३. २९) इति प्रथमार्थे अस्तातिः। 'अस्ताति च' (पा. सू. ५. ३. ४०) इत्यवरशब्दस्यावादेशः। अवस्तादिति संहितायाम् ईषाअक्षादित्वात् प्रकृतिभावः॥

को अ॒द्धा वे॑द॒ क इ॒ह प्र वो॑च॒त्कुत॒ आजा॑ता॒ कुत॑ इ॒यं विसृ॑ष्टिः।
अ॒र्वाग्दे॒वा अ॒स्य वि॒सर्ज॑ने॒नाथा॒ को वे॑द॒ यत॑ आब॒भूव॑ ॥ ६ ॥

कः। अ॒द्धा। वे॒द॒। कः। इ॒ह। प्र। वो॒च॒त्। कुतः॑। आऽजा॑ता। कुतः॑। इ॒यम्। विऽसृ॑ष्टिः।
अ॒र्वाक्। दे॒वाः। अ॒स्य। वि॒ऽसर्ज॑नेन। अथ॑। कः। वे॒द॒। यतः॑। आ॒ऽब॒भूव॑ ॥ ६ ॥

एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता। 'एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद'(श. ब्रा. १ .४.२ १३) इतिवत्। अथेदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह को अद्धेति। ^कः पुरुषः ^अद्धा पारमार्थ्येन ^वेद जानाति। ^कः वा ^इह अस्मिँल्लोके ^प्र ^वोचत् प्रब्रूयात्। ^इयं दृश्यमाना ^विसृष्टिः विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः ^कुतः कस्मादुपादानकारणात्। ^कुतः कस्माच्च निमित्तकारणात् ^आजाता समन्ताज्जाता प्रादुर्भूता। एतदुभयं सम्यक् को वेद को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः। ननु देवाः अजानन्तः। सर्वज्ञास्ते ज्ञास्यन्ति वक्तुं च शक्नुवन्तीत्यत[2] आह अर्वागिति। ^देवाः च ^अस्य जगतो विसर्जनेन ^वियदादिभूतोत्पत्त्यनन्तरं विविधं यद्भौतिकं सर्जनं सृष्टिस्तेन ^अर्वाक् अर्वाचीनाः कृताः। भूतसृष्टेः पश्चाज्जाता इत्यर्थः। तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः। अजानन्तो वा कथं प्रब्रूयुः। उक्तं दुर्विज्ञानत्वं[3] निगमयति। ^अथ एवं सति देवा अपि न जानन्ति किल[4]। तद्व्यतिरिक्तः ^कः नाम मनुष्यादिः ^वेद तज्जगत्कारणं जानाति ^यतः कारणात् कृत्स्नं जगत् ^आबभूव अजायत[5]॥

इ॒यं विसृ॑ष्टि॒र्यत॑ आब॒भूव॒ यदि॑ वा द॒धे यदि॑ वा॒ न।
यो अ॒स्याध्य॑क्षः पर॒मे व्यो॑म॒न्त्सो अ॒ङ्ग वे॑द॒ यदि॑ वा॒ न वेद॑ ॥ ७ ॥

इ॒यम्। विऽसृ॑ष्टिः। यतः॑। आ॒ऽब॒भूव॑। यदि॑। वा॒। द॒धे। यदि॑। वा॒। न।
यः। अ॒स्य। अधि॑ऽअक्षः। प॒र॒मे। वि॒ऽओ॑मन्। सः। अ॒ङ्ग। वे॒द॒। यदि॑। वा॒। न। वेद॑ ॥७॥

उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानं एवं सृष्टं तज्जगत् दुर्धरमपीत्याह इयमिति। ^यतः[6] उपादानभूतात् परमात्मनः ^इयं ^विसृष्टिः विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिः

१. त४.५-भ७-शीघ्रव्यापने। २. ग-भ-शक्ष्यंतीत्यत। ३. ग-त१.२.३.६.७.८भ-दुर्ज्ञानत्वं। ४. त१.२.३.६.७.८-भ-'किल' नास्ति। ५. ग-त२.३.६.७.८-आजायत। ६. त-भ-'यतः' नास्ति।

vआबभूव आजाता सोऽपि किल vयदि vवा vदधे धारयति vयदि vवा vन धारयति। एवं च को नाम अन्यो धर्तुं शक्नुयात्। यदि धारयेदीश्वर एव धारयेन्नान्य इत्यर्थः। एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मण उपादानकारणत्वमुक्तं भवति। तथा च पारमार्षं सूत्रं—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' ( वे. सू. १. ४.२३ ) इति। यद्वा। अनेनार्धर्चेन पूर्वोक्तं सृष्टेर्दुर्ज्ञानत्वमेव द्रढयति। को वेदेत्यनुवर्तते। इयं विविधा सृष्टिः यत[1] आबभूव आ समन्तादजायतेति को वेद। न कोऽपि। नास्त्येव जगतो[2] जन्म न कदाचिदनीदृशं जगदिति बहवो भ्रान्ता भवन्त्यपि। यतः। 'जनिकर्तुः प्रकृतिः' ( पा. सू. १.४.३० ) इत्यपादानसंज्ञायां पञ्चम्यास्तसिल्। यस्मात् परमात्मन उपादानभूतादाबभूव[3] तं परमात्मानं को वेद। न कोऽपि। प्रकृतितः परमाणुभ्यो वा जगज्जन्मेति हि बहवो भ्रान्ताः। तथा स एवोपादानभूतः परमात्मा स्वयमेव निमित्तभूतोऽपि सन् यदि वा दधे विदधे इदं जगत् ससर्ज यदि वा न ससर्ज। असंदिग्धे संदिग्धवचनमेतच्छास्त्राणि चेत्प्रमाणं स्युरिति यथा। स एव विदधे। तं को वेद। अजानन्तोऽपि बहवो जडात् प्रधानादकर्तृकमेवेदं जगत् स्वयमजायतेति विपरीतं प्रतिपन्ना विदधतो[4] विधानमजानन्तोऽपि[4]। स एव उपादानभूत इत्यपि को वेद। न कोऽपि। उपादानादन्यः तटस्थ एवेश्वरो विदधे इति हि बहवः प्रतिपन्नाः। देवा अपि यन्न जानन्ति तदर्वाचीनानामेषां तत्परिज्ञाने कैव कथेत्यर्थः। यद्येवं जगत्सृष्टिरत्यन्तदुरवबोधा न तर्हि सा प्रमाणपद्धतिमध्यास्त इत्याशङ्क्य तत्सद्भावं ईश्वरमेव प्रमाणयति यो अस्येति। vअस्य भूतभौतिकात्मकस्य जगतः vयः vअध्यक्षः ईश्वरः vपरमे उत्कृष्टे सत्यभूते vव्योमन् व्योमन्याकाशे आकाशवन्निर्मले स्वप्रकाशे। यद्वा॥ अवतेस्तर्पणार्थात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्। 'नेड्वशि कृति' इतीट्प्रतिषेधः। 'ज्वरत्वर°' इत्यादिना वकारोपधयोः ऊठ्। सप्तम्या लुक्। 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेधः॥ व्योमनि विशेषेण तृप्ते[5]। निरतिशयानन्दस्वरूपे इत्यर्थः। यद्वा। अवतिर्गत्यर्थः। व्योमनि विशेषेण गते व्याप्ते। देशकालवस्तुभिरपरिच्छिन्न इत्यर्थः। अथवा। अवतिर्ज्ञानार्थः। व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि। ईदृशे स्वात्मनि प्रतिष्ठितः। श्रूयते हि सनत्कुमारनारदयोः संवादे—'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छा. उ. ७.२४.१) इति। ईदृशो यः परमेश्वरः vसो vअङ्ग। अङ्गेति प्रसिद्धौ। सोऽपि नाम vवेद जानाति। vयदि vवा vन vवेद न जानाति। को नाम अन्यो जानीयात्। सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् नान्य इत्यर्थः॥ ॥ १७ ॥

'यो यज्ञः' इति सप्तर्चं द्वितीयं सूक्तं प्रजापतिपुत्रस्य यज्ञाख्यस्यार्षम्। आद्या जगती शिष्टास्त्रिष्टुभः। अत्रापि यज्ञादीनां केषांचिद्भावानां सृष्टिः प्रतिपाद्यते। अतः स्रष्टव्यत्वेन प्रधानभूतो योऽर्थः सैव देवता। तत्कर्ता[6] प्रजापतिरेव देवता। तथा चानुक्रान्तं—'यो यज्ञो यज्ञः प्राजापत्यो जगत्याद्या' इति। गतो विनियोगः॥

यो यज्ञो विश्वतस्तन्तुभिस्तत एकशतं देवकर्मेभिरायतः।
इमे वयन्ति पितरो य आययुः प्र वयाप वयेत्यासते तते॥ १ ॥

यः। यज्ञः। विश्वतः। तन्तुऽभिः। ततः। एकऽशतम्। देवऽकर्मेभिः। आऽयतः।
इमे। वयन्ति। पितरः। ये। आऽययुः। प्र। वय। अप। वय। इति। आसते। तते॥ १॥

---

१. ग-त-भ–'यतः' नास्ति। २. त-भ–'जगतो' नास्ति। ३. त-भ–उपादानाद्बभूव। ४. त१.२.३.६.७.८-भ२.४.८–विदधानोपि विदधानं तं जानतोपि; त४.५–विदधतोपि दधानं जानंतोपि; भ७–विदधेतं जातं जानंतोपि। ५. ग-भ२.४.८–तृप्ते नित्यतृप्ते। ६. ग-त१.२.३.६.८-भ२.४.८–तद्वत् कर्ता।

ᵛतन्तुभिः तनितृभिर्विस्तारयितृभिर्वियदादिभूतैः ᵛयः सर्गात्मकः ᵛयज्ञः ᵛविश्वतः सर्वतः ᵛततः विस्तृतः। तथा ᵛएकशतम्। एकं च शतं चैकशतम्। 'संख्या' इति पूर्वपदप्रकृतिस्वरत्वम्। एकोत्तरशतमित्यर्थः। ब्रह्मा येषु शतसंख्येषु आत्मीयसंवत्सरेषु जीवति तदभिप्रायेणात्र शतसंख्या[1]। जीवता तेन प्रजापतिना सार्धमेकशतमित्युच्यते। यथा 'शतायुर्वै पुरुषः शतवीर्य आत्मैकशतः' (तै. ब्रा. १.७.६.४) इति। अत्यन्तसंयोगे द्वितीया। ब्रह्मणः शतसंवत्सरपर्यन्तं ᵛदेवकर्मभिः देवानुद्दिश्य भोक्तृभिः कृतैः कर्मभिः ᵛआयतः दीर्घीभूतः। तावत्कालावस्थायी। एवमायामविस्तारवान् यः उक्तः सर्गात्मको यज्ञस्तं यज्ञम् ᵛइमे ᵛपितरः पालकाः प्रजापतेः प्राणभूता विश्वसृजो देवाः ᵛवयन्ति निर्मिमते। ᵛये देवाः ᵛआययुः स्रष्टव्यं सर्वं जगत् सर्जनेन व्यापुः। अपि च ᵛप्र ᵛवयाप ᵛवयेति। प्रवाणं नाम प्रकृष्टस्य चेतनस्य भोक्तृप्रपञ्चस्य सर्जनम्। अपवानं नाम अपकृष्टस्य निकृष्टस्य अचेतनस्य भोग्यप्रपञ्चस्य सर्जनम्। 'वेञ् तन्तुसंताने'। 'समुच्चयेऽन्यतरस्याम्' (पा. सू. ३. ४. ३) इति लोट्। तस्य '"लोटो हिस्वौ°' इत्यनुवृत्तेर्हिरादेशः। शब्गुणायादेशाः। 'अतो हेः' इति लुक्। प्र वयाप वयेति वयन्तः प्रवाणमपवानं च कुर्वन्त इत्यर्थः। एवंभूताः सन्तस्ते विश्वसृजः ᵛतते विस्तृते सत्यलोके ᵛआसते प्राणरूपेण प्रजापतिमुपासते। यद्वा ज्योतिष्टोमादिर्यज्ञ एवंरूपकत्वेन पटात्मना वर्ण्यते। यो यज्ञो ज्योतिष्टोमादिस्तन्तुभिः तन्तुस्थानीयैः अग्निष्टोमात्यग्निष्टोमादिसंस्थाभेदैः सप्तभिश्छन्दोभिर्वा विश्वतः सर्वतस्ततो विस्तृतः। तथैकशतम्। तृतीयार्थे प्रथमा। एकाधिकेनाग्निचयनेन[2] युक्तैः देवकर्मभिः[3] गवामयनप्रभृतिकैः विश्वसृजामयनान्तैः एकाहाहादिसत्रात्मकैर्वा आयतो दीर्घीभूत एवमायामविस्तारवान् यज्ञात्मकोऽयं पटः प्रजापतिना सृष्टः। तं पटं पितरोऽस्माकं पितृभूता इमेऽङ्गिरसो वयन्ति। तस्य पटस्य प्राचीनतन्तुस्थानीयानि स्तुतशस्त्राणि प्र[4] वय[4] त्वं कुरु अप वय तिरश्चीनतन्तुस्थानीयानि यजूंषि त्वं कुरु इत्येवं परस्परं नियुञ्जाना आसते नियुञ्जन्ति[5]॥ एवं विस्तृतस्य यज्ञस्य प्रजापतेः सकाशादुत्पत्तिरुत्तरया प्रतिपाद्यते ॥

पुमाँ॑ एनं तनुत॒ उत्कृ॑णत्ति॒ पुमा॒न्वि त॑त्ने॒ अधि॒ नाके॑ अ॒स्मिन् ।
इ॒मे म॒यूखा॒ उप॑ सेदुरू॒ सद॑ः सामा॑नि चक्रु॒स्तस॑रा॒ण्योत॑वे ॥ २ ॥

पुमा॑न् । ए॒नम् । त॒नु॒ते॒ । उत् । कृ॒ण॒त्ति॒ । पुमा॑न् । वि । त॒त्ने॒ । अधि॑ । नाके॑ । अ॒स्मिन् ।
इ॒मे । म॒यूखा॑ः । उप॑ । से॒दुः॒ । ऊँ इति॑ । सद॑ः । सामा॑नि । च॒क्रुः॒ । तस॑राणि । ओत॑वे ॥ २ ॥

ᵛपुमान् पुरुष आदिपुरुषः प्रजापतिः ᵛएनं यज्ञं ᵛतनुते विस्तारयति। सृष्टवानित्यर्थः। तथा च ब्राह्मणं — 'स प्रजापतिर्यज्ञमतनुत तमाहरत्तेनायजत' (ऐ. ब्रा. ५.२२) इति 'प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येताम्' (ऐ. ब्रा. ७.१९) इति च। स एव पुमान् सृष्टं तं यज्ञम् ᵛउत्कृणत्ति उद्वेष्टयति। 'कृती वेष्टने'। रौधादिकः। स एव ᵛपुमान् प्रजापतिः ᵛअस्मिन् भूलोके ᵛनाके। अकं दुःखं नास्त्यस्मिन्निति नाकः स्वर्गलोकः। 'नभ्राण्नपात्°' इत्यादिना नञः प्रकृतिभावः। तत्र च ᵛवि ᵛतत्ने इमं यज्ञं विस्तारयति। अधिः सप्तम्यर्थानुवादी। तनोतेर्लिटि 'तनिपत्योश्छन्दसि' इत्युपधालोपः। तस्य स्थानिवद्भावात् द्विर्वचनम्। ᵛमयूखाः रश्मिभूतास्तस्य प्रजापतेः प्राणात्मकाः ᵛइमे विश्वसृजो देवाः ᵛसदः सदनं देवयजनस्थानम् ᵛउप ᵛसेदुः। विश्वसर्जनहेतुभूतं विश्वसृजामयनाख्यं यज्ञं कर्तुमुपसीदन्ति। उपसद्य च ᵛसामानि रथन्तरादीनि ᵛओतवे वयनाय यज्ञाख्यं वस्त्रमोतुं[6] ᵛतसराणि तिर्यक्सराणि[7] तिरश्चीनसूत्राणि ᵛचक्रुः[8] ॥

---

१. न३.४.५.८–म२.४.७.८–शतपालकाः। २. त१.२.३.६.७.८–म२.४.८–एकविधेनाग्निचयनेन। ३. ग–देवकर्मभिः देवानां कर्मभिः; त३.७–म२.८–देवकर्मभिः देवकर्मभिः। ४. त–म२.४.८–'प्र यव' नास्ति। ५. ग–निषीदंति। ६. त–म–वस्त्रं वातुं। ७. ग–त४.५–तिर्यक्सरणानि। ८. ग२–चक्रुः कृतवंतः।

कासीत्प्रमा प्रतिमा किं निदानमाज्यं किमासीत्परिधिः क आसीत् ।
छन्दः किमासीत्प्रउगं किमुक्थं यद्देवा देवमयजन्त विश्वे ॥ ३ ॥

का । आसीत् । प्रऽमा । प्रतिऽमा । किम् । निऽदानम् ।
आज्यम् । किम् । आसीत् । परिऽधिः । कः । आसीत् ।
छन्दः । किम् । आसीत् । प्रउगम् । किम् । उक्थम् । यत् । देवाः । देवम् । अयजन्त । विश्वे ॥ ३ ॥

विश्वसर्जनोपायत्वेन प्रजापतिना सृष्टे यज्ञे विश्वस्य स्रष्टारो विश्वसृजो देवा विश्वसर्जनाय तं यज्ञमन्वतिष्ठन् । तस्मिन् समये जगतोऽनुत्पत्तेर्जगदन्तःपातिनो यागोपकरणभूताः पदार्थाः कथमासन्नित्यनया प्रश्नः क्रियते । ᵛयत् यदा ᵛविश्वे सर्वे साध्याः ᵛदेवाः ᵛदेवं प्रजापतिम् ᵛअयजन्त तदानीं तस्य यज्ञस्य ᵛप्रमा प्रमाणम् इयत्ता ᵛका कथंभूता ᵛआसीत् । तथा ᵛप्रतिमा । हविष्प्रतियोगित्वेन मीयते निर्मीयत इति प्रतिमा देवता । सा च[1] तस्य यज्ञस्य कासीत् । तथा ᵛनिदानम् आदिकारणं यागेऽप्रवृत्तस्य प्रवर्तकं फलं ᵛकिम् आसीत् । तथा ᵛआज्यं घृतमेतदुपलक्षितं हविर्वा तस्य यज्ञस्य ᵛकिमासीत् । तथा ᵛपरिधिः । परितो धीयन्त इति त्रयः परिधयो बाहुमात्राः पलाशादिवृक्षजन्याः । परिपूर्वात् दधातेः 'उपसर्गे घोः किः' (पा. सू. ३. ३. ९२) इति किप्रत्ययः । सामान्यापेक्षमेकवचनम् । परिधयः क आसन्नित्यर्थः । तथा तस्य यज्ञस्य गायत्र्यादिकं ᵛछन्दः ᵛकिमासीत् । तथा ᵛप्रउगम् ᵛउक्थम् । उपलक्षणमेतत् । आज्यप्रउगादीन्युक्थानि शस्त्राणि वा कान्यासन् । एतेषु प्रश्नेषु त्रयाणामुत्तरं द्वृचेनाह ॥

अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सं बभूव ।
अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमावत् ॥ ४ ॥

अग्नेः । गायत्री । अभवत् । सऽयुग्वा । उष्णिहया । सविता । सम् । बभूव ।
अनुऽस्तुभा । सोमः । उक्थैः । महस्वान् । बृहस्पतेः । बृहती । वाचम् । आवत् ॥ ४ ॥

ᵛसयुग्वा सहयुक्ता ᵛअग्नेः सहायभूता ᵛगायत्र्यभवत् । यष्टव्यात् प्रजापतेर्मुखादजायत । देवतासु मध्येऽग्निः छन्दःसु गायत्री च उभावप्यजायेतामित्यर्थः । तथा च तैत्तिरीयकं—'प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्री छन्दः' (तै. सं. ७. १. १. ४) इति । ᵛउष्णिहया[2] उष्णिक्छन्दसा सह ᵛसविता देवः ᵛसं ᵛबभूव तस्मात् प्रजापतेर्जज्ञे । 'टापं[3] चापि[3] हलन्तानाम्' इति वचनादुष्णिहशब्दात् टाप् । तथा[4] ᵛमहस्वान् तेजस्वी ᵛसोमः ᵛउक्थैः स्तुतशस्त्रैः ᵛअनुष्टुभा अनुष्टुप्छन्दसा च सार्धं तस्मादेव प्रजापतेरजायत । तथा ᵛबृहस्पतेः देवस्य ᵛवाचं वाक्यं ᵛबृहती छन्दः ᵛआवत् अरक्षत् अगच्छद्वा । बृहत्या[5] सार्धं[5] बृहस्पतिरपि तस्मात् प्रजापतेर्जज्ञ इत्यर्थः ॥

विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबिह भागो अह्नः ।
विश्वान् देवाञ्जगत्या विवेश तेन चाक्लृप्र ऋषयो मनुष्याः ॥ ५ ॥

---

१. त-भ-मु-वा । २. ग-भ२-तथाष्णिहया । ३. त४.५-भ७-आर्पं चैव । ४. त१.२.३.६.७-तथा त६ । ५. त१.२.३.६.७.८-भ१.४.७.८-'बृहत्या सार्धं' नास्ति ।

विऽराट् । मित्रावरुणयोः । अभिऽश्रीः । इन्द्रस्य । त्रिऽस्तुप् । इह । भागः । अह्नः ।
विश्वान् । देवान् । जगती । आ । विवेश । तेन । चाक्लृप्रे । ऋषयः । मनुष्याः ॥ ५ ॥

अपि च ᵛमित्रावरुणयोः देवयोः ᵛविराट् छन्दः ᵛअभिश्रीः अभिश्रिता आश्रितासीत् । विराजा सह मित्रावरुणावपि प्रजापतेः सकाशादजायेतामित्यर्थः । ᵛइह अस्मिन् यज्ञे ᵛअह्नः सवनत्रयरूपस्य ᵛभागः मध्यंदिनसवनाख्यः अंशः ᵛत्रिष्टुप् छन्दश्च इन्द्रस्य अभिश्रयणीयौ आस्ताम् । ताविन्द्रश्च प्रजापतेः सकाशादजायन्तेत्यर्थः । तथा च तैत्तिरीयकम्—‘ उरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवतान्वसृज्यत त्रिष्टुप्छन्दो बृहत्साम ’ ( तै. सं. ७.१.१.४ ) इति । तथा ᵛविश्वान् सर्वान् ᵛदेवान् ᵛजगती छन्दः ᵛआ ᵛविवेश प्रविष्टवती । विश्वे देवा जगती च प्रजापतेरजायन्तेत्यर्थः । तथा च तैत्तिरीयकं—‘ तं विश्वे देवा देवता अन्वसृज्यन्त जगती छन्दो वैरूपं साम ’ ( तै. सं. ७. १. १. ५ ) इति । उक्तेन प्रकारेण प्रतिमा कासीत् छन्दः किमासीत् प्रउगं किमुक्थमिति त्रयाणामुत्तरं जातम् । आज्यं किमासीत् परिधिः क आसीदित्यनयोरुत्तरं पुरुषसूक्ते द्रष्टव्यम् । तत्र इहैवमाम्नायते—‘ देवा यज्ञमतन्वत वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ’ ‘ सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ’ ( ऋ. सं. १०. ९०. ६; १५ ) इति । अयमर्थः । सर्वरसोत्पादको वसन्तः तस्य जगत्सर्जनसाधनस्य यज्ञस्याज्यमासीत् । आज्यदध्यादिभी[1] रसैः सार्धं तादृशो वसन्तोऽजायतेत्यर्थः । सर्वरसानां शोषको ग्रीष्म ऋतुरिध्म आसीत् । शुष्कैः काष्ठैः सार्धं ग्रीष्मोऽजायतेत्यर्थः[2] । पच्यमानव्रीहियुक्तः शरद॒ ॒स्य यज्ञस्य हविरासीत् । सप्त छन्दांसि त्रिः सप्तैकविंशतिधा भूत्वा अष्टादश समिधस्त्रयः परिधयश्चासन् । कासीत् प्रमा प्रतिमा किं निदानमित्यनयोरपि प्रश्नयोरप्येवमुत्तरं ‘ पूर्वे विश्वसृजोऽमृताः शतं वर्षसहस्राणि दीक्षिताः सत्रमासत ’ इति ‘ एतेन वै विश्वसृज इदं विश्वमसृजन्त ’ ( तै. ब्रा. ३. १२. ९. २; ८ ) इति च तैत्तिरीयके समाम्नायते । अतस्तस्य यज्ञस्य सहस्रसंवत्सरपरिमितः कालः प्रमाणम् । विश्वस्य जगतः सर्जनमादिकारणं प्रवर्तकं फलमित्यर्थः । एतदुक्तं भवति । यदा[3] विश्वसृजो देवा देवं प्रजापतिं विश्वसृजामयनाख्येन यागेनायजन् तदोक्ताः सर्वयागोपकरणाः प्रजापतेः सकाशादजायन्तेति । यतोऽग्न्यादिदेवताभिः सह गायत्र्यादीनि सप्त छन्दांसि जातानि अतो हेतोस्तेषां छन्दसामग्न्यादयो देवता इति । छन्दोविचितौ सूत्रितं च—‘ अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वे देवा देवताः ’ ( पि. सू. ३.६३ ) इति । एवं प्राजापत्यो यज्ञोऽनुष्ठितः । ᵛतेन यज्ञेन ᵛऋषयः ᵛमनुष्याः च ᵛचाक्लृप्रे चक्लृपिरे । क्लृप्ताः सृष्टा आसन् ॥ कृपेः कर्मणि लिटि ‘ इरयोः॰ ’ इति रेआदेशः । ‘ कृपो रो लः ’ ( पा. सू. ८.२.१८ ) इति लत्वम् । तुजादित्वात् अभ्यासदीर्घः । तेनैव यज्ञेन सर्वं जगदसृजन्नित्यर्थः ॥

चाक्लृप्रे तेन ऋषयो मनुष्या यज्ञे जाते पितरो नः पुराणे ।
पश्यन् मन्ये मनसा चक्षसा तान् य इमं यज्ञमयजन्त पूर्वे ॥ ६ ॥

चाक्लृप्रे । तेन । ऋषयः । मनुष्याः । यज्ञे । जाते । पितरः । नः । पुराणे ।
पश्यन् । मन्ये । मनसा । चक्षसा । तान् । ये । इमम् । यज्ञम् । अयजन्त । पूर्वे ॥ ६ ॥

ᵛपुराणे चिरंतने अस्मिन्[4] ᵛयज्ञे ᵛजाते विश्वसृड्भिर्देवैः सम्यगनुष्ठिते सति ᵛतेन यज्ञेन ᵛऋषयो ᵛमनुष्याः ᵛनः अस्माकं ᵛपितरः पूर्वपुरुषाश्च ᵛचाक्लृप्रे अकल्प्यन्त । असृज्यन्त । ᵛइमम्

१. त४.५–ओषध्यादिभिः । २. ग-त४.५-भ२.८–ग्रीष्मर्तुरजायतेत्यर्थः । ३. त-भ–यद्वा । ४. त१.२.३.६.७.८-भ–तस्मिन् ।

ईदृशं ᵛयज्ञं ᵛये ᵛपूर्वे साध्या देवाः प्रजापतेः प्राणभूताः ᵛअयजन्त अन्वतिष्ठन् ᵛतान् देवान् प्राणात्मना सर्वत्र वर्तमानान् ᵛचक्षसा दर्शनहेतुना ᵛमनसा ᵛपश्यन् जानन् ᵛमन्ये। तानेव विश्वस्रष्टॄन्[1] देवान् स्तौमि। मन्यतिरर्चतिकर्मा ॥

सहस्तोमाः सहछन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः।
पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्योऽन रश्मीन् ॥ ७ ॥

सहऽस्तोमाः। सहऽछन्दसः। आऽवृतः। सहऽप्रमाः। ऋषयः। सप्त। दैव्याः।
पूर्वेषाम्। पन्थाम्। अनुऽदृश्य। धीराः। अनुऽआलेभिरे। रथ्यः। न। रश्मीन् ॥ ७ ॥

स्तोमैः त्रिवृत्पञ्चदशादिभिः सह वर्तमानाः ᵛसहस्तोमाः ᵛसहछन्दसः गायत्र्यादिभिः छन्दोभिः सह वर्तमानाः ᵛआवृतः आवर्तमानाः ᵛसहप्रमाः। प्रमितिः प्रमा यज्ञस्येयत्तापरिज्ञानम्। तेन सह वर्तमानाः ᵛदैव्याः देवस्य प्रजापतेः संबन्धिनः यद्वा देवानां यष्टव्यानां संबन्धिनः ᵛऋषयः द्रष्टारः सप्तसंख्याकाः शीर्षण्याः। यद्वा। मरीचिप्रमुखाः सप्तर्षयो होत्रादयः सप्त वषट्कर्तारो[2] वा। एवंविधा एते ᵛपूर्वेषां पूर्वपुरुषाणामङ्गिरःप्रभृतीनां विश्वसृजां देवानां वा ᵛपन्थां पन्थानमनुष्ठानमार्गम् ᵛअनुदृश्य क्रमेण ज्ञात्वा ᵛधीराः धीमन्तः सन्तः ᵛअन्वालेभिरे अनुक्रमेण आरब्धवन्तः। यागानुष्ठाने प्रवृत्ता इत्यर्थः। ᵛरथ्यो ᵛन यथा रथिनो रथेन युक्ता रथस्य नेतारः सूताः ᵛरश्मीन् अश्वनियोजनार्थान्[3] प्रग्रहान् सम्यग्रथस्य नयनाय हस्तेनान्वारभन्ते। अन्वारभ्य च सम्यक् तं रथं प्रवर्तयन्ति एवमेतेऽप्यनुष्ठानमार्गं श्रुतितोऽवगम्य सम्यगन्वतिष्ठन्नित्यर्थः ॥　　॥१८॥

'अप प्राचः' इति सप्तर्चं तृतीयं सूक्तं कक्षीवतः पुत्रस्य सुकीर्तेरार्षम्। चतुर्थ्यनुष्टुप् शिष्टाः षट् त्रिष्टुभः। चतुर्थीपञ्चम्यावश्विदेवत्ये शिष्टा ऐन्द्र्यः। तथा चानुक्रान्तम्—'अप प्राचः सुकीर्तिः काक्षीवतो मध्येऽनुष्टुप्सोत्तरा चाश्विन्यौ' इति। षष्ठेऽहनि ब्राह्मणाच्छंसिन उक्थशस्त्र एतत्सूक्तम्। सूत्रितं च—'सुकीर्तिं ब्राह्मणाच्छंसी वृषाकपिं च पङ्क्तिशंसम्' (आश्व. श्रौ. ८. ४) इति। चातुर्विंशिकेऽहनि माध्यंदिने सवने मैत्रावरुणस्य 'अप प्राचः' इत्येषारम्भणीया कद्वत्प्रगाथानन्तरं शंसनीया। सूत्रितं च—'कद्वन्तः प्रगाथा अप प्राच इन्द्र विश्वाँ अमित्रान्' (आश्व. श्रौ. ७.४) इति। अहर्गणेष्वपि द्वितीयादिष्वहःसु तस्यैव तस्मिन्नेव शस्त्र आरम्भणीया। सूत्रितं च—'आरम्भणीयाः पर्यासान् कद्वतोऽहरहःशस्यानीति होत्रका द्वितीयादिष्वेव' (आश्व. श्रौ.७.१) इति ॥

अप प्राच इन्द्र विश्वाँ अमित्रानपापाचो अभिभूते नुदस्व।
अपोदीचो अप शूराधराच उरौ यथा तव शर्मन् मदेम ॥ १ ॥

अप। प्राचः। इन्द्र। विश्वान्। अमित्रान्। अप। अपाचः। अभिऽभूते। नुदस्व।
अप। उदीचः। अप। शूर। अधराचः। उरौ। यथा। तव। शर्मन्। मदेम ॥ १ ॥

हे ᵛइन्द्र ᵛप्राचः प्रमुखमञ्चतः प्राग्देशे वर्तमानान्। अस्मत्तः पूर्वभागे वर्तमानानित्यर्थः। प्रपूर्वादञ्चतेः 'ऋत्विक्°' इत्यादिना क्विन्। 'अनिदिताम्' इति नलोपः। शसि 'अचः' इत्यकारलोपे 'चौ' इति दीर्घत्वम्। 'अनिगन्तोऽञ्चतौ वप्रत्यये' (पा. सू. ६.२ ५२) इति गतेः

१. ग-त१.२.३.६.७.८-भ-विश्वस्य स्रष्टॄन्। २. त-भ१.२.४.८—वषट्कारो। ३. ग-त१.२.३.६.७.८-भ-मु-रथे अश्वनियोजनार्थान्।

प्रकृतिस्वरत्वम् । तादृशान् vविश्वान् सर्वान् vअमित्रान् शत्रून् vअप vनुदस्व अस्मत्तोऽपगमय । तथा हे vअभिभूते शत्रूणामभिभवितरिन्द्र vअपाचः अपमुखमञ्चतः पृष्ठभागे वर्तमानान् सर्वान् शत्रून् अप नुदस्व । अपि च vउदीचः ऊर्ध्वमञ्चतः उपरिवर्तमानान् । उत्पूर्वादञ्चतेः पूर्ववत् क्विनि 'उद ईत्' इत्यञ्चतेरकारस्येकारः । पूर्ववत्स्वरः । तथाविधानपि शत्रून् vअप नुदस्व । तथा हे vशूर शौर्यवन्निन्द्र vअधराचः अधरदेशमधोभागमञ्चतश्च अधस्तनानपि शत्रून् vअप नुदस्व । अधरशब्दोपपदादञ्चतेः शसि पूर्ववत् प्रक्रिया । 'चौ' इति पूर्वपदस्यान्तोदात्तः । vउरौ विस्तीर्णे vतव संबन्धिनि त्वया दत्ते vशर्मन् शर्मणि गृहे सुखे वा vयथा वयं vमदेम निरुपद्रवाः सन्तो हृष्येम तथा त्वं सर्वत्र वर्तमानानस्मदीयान् शत्रून् विनाशयेत्यर्थः ॥

**कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।**
**इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥ २ ॥**

कुवित् । अङ्ग । यवऽमन्तः । यवम् । चित् । यथा । दान्ति । अनुऽपूर्वम् । विऽयूय ।
इहऽइह । एषाम् । कृणुहि । भोजनानि । ये । बर्हिषः । नमःऽवृक्तिम् । न । जग्मुः ॥ २ ॥

vअङ्ग हे इन्द्र vयवमन्तः यवादिधान्ययुक्ताः कर्षकाः vयवं vचित् । उपलक्षणमेतत् । यवगोधूमादीन् vअनुपूर्वं यो यो धान्यविशेषः प्रथमं पच्यते तेनानुपूर्व्येण vवियूय पृथक्कृत्य vयथा vकुवित् बहुलं vदान्ति लुनन्ति । 'दाप् लवने' । आदादिकः । विपूर्वात् यौतेर्ल्यपि 'युप्लुवोर्दीर्घश्छन्दसि' (पा. सू. ६.४.५८) इति दीर्घः । एवम् vइहेह अस्मिन्नस्मिन् देशे सर्वस्मिन् vएषां यजमानानां vभोजनानि । धननामैतत् । भोगसाधनानि धनानि vकृणुहि कुरु । यस्मिन्[1] यस्मिन् देशे यद्धनमपेक्षितं तदनुगुणं प्रयच्छेत्यर्थः ॥ 'उतश्च प्रत्ययाच्छन्दसि वावचनम्' (पा. सू. ६.४.१०६.१) इति हेर्लुगभावः । एषामित्युक्तं के पुनरिमे इत्यत आह । vये यजमानाः vबर्हिषः यज्ञस्य vनमोवृक्तिं नमसो हविर्लक्षणस्यान्नस्य नमस्कारात्मकस्य स्तोत्रस्य वा वर्जनमकरणं vन vजग्मुः न प्राप्नुवन्ति किंतु सर्वदा हविर्भिर्यजन्ति स्तुतिभिः स्तुवन्ति च । एषां कृणुहीत्यन्वयः ॥

**नहि स्थूर्यृतुथा यातमस्ति नोत श्रवो विविदे संगमेषु ।**
**गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयन्तः ॥ ३ ॥**

नहि । स्थूरि । ऋतुऽथा । यातम् । अस्ति । न । उत । श्रवः । विविदे । सम्ऽगमेषु ।
गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् । वाजयन्तः ॥ ३ ॥

एकेन धुर्येण युक्तमनः स्थूरि इत्युच्यते । vऋतुथा ऋतौ यस्मिन् काले प्राप्तव्यं तद्योग्यकाले vस्थूरि vअनः vयातं तं देशं प्राप्तं vनहि vअस्ति न हि भवति । एकेन धुर्येण युक्तः शकटः शीघ्रं गन्तव्यं न प्राप्नोतीत्यर्थः । vउत अपि च vसंगमेषु संग्रामेषु[2] vश्रवः अन्नं यशो वा vन vविविदे न लभते । इन्द्रस्तु उक्तविलक्षणः । vवृषणं वर्षितारं तम् vइन्द्रं vगव्यन्तः गा इच्छन्तः vविप्राः मेधाविनो वयं vसख्याय सखिकर्मणे आह्वयाम इति शेषः । कथंभूताः । vअश्वायन्तः अश्वानप्यात्मन इच्छन्तः vवाजयन्तः अन्नकामा[3] बलकामाश्च[3] ॥

सौत्रामण्यां सुराग्रहाणां पुरोनुवाक्या 'युवम्' इत्येषा । सूत्रितं च—'युवं सुराममश्विनेति ग्रहाणां पुरोनुवाक्या' (आश्व. श्रौ. ३.९) इति ॥

---

१. त-भर२.४.८-मु—यस्य । २. तर२.६.७—संगमनेषु । ३. त७—अन्नकामाश्च ।

युवं सुराममश्विना नमुचावासुरे सचा ।
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥ ४ ॥

युवम् । सुरामम् । अश्विना । नमुचौ । आसुरे । सचा ।
विऽपिपाना । शुभः । पती इति । इन्द्रम् । कर्मऽसु । आवतम् ॥ ४ ॥

हे अश्विना अश्विनौ हे शुभस्पती उदकस्य शोभनालंकारस्य वा पती पालयितारौ सुरामं सुष्ठु रमणसाधनमिदं हविः विपिपाना विशेषेण पीतवन्तौ युवं युवां सचा सन्तौ संगतौ आसुरे असुरपुत्रे नमुचौ एतत्संज्ञे असुरे हन्तव्ये सति कर्मसु योधनकर्मसु इन्द्रम् आवतम् अरक्षतम् ॥ विपिपाना । 'पा पाने' इत्यस्मात् लिटः कानच् । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । शुभस्पती इति 'सुबामन्त्रिते°' इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वम् ॥

पूर्वोक्तानामेव ग्रहाणां 'पुत्रमिव' इति याज्या । सूत्रितं च—'पुत्रमिव पितरावश्विनोभेति याज्या' (आश्व. श्रौ. ३.९) इति ॥

पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ५ ॥

पुत्रम्ऽइव । पितरौ । अश्विना । उभा । इन्द्र । आवथुः । काव्यैः । दंसनाभिः ।
यत् । सुरामम् । वि । अपिबः । शचीभिः । सरस्वती । त्वा । मघऽवन् । अभिष्णक् ॥ ५ ॥

हे इन्द्र त्वां पितरौ मातापितरौ पुत्रमिव ॥ 'पिता मात्रा' (पा. सू. १.२.७०) इति पितुः शेषः । उभा उभौ अश्विनौ काव्यैः प्रशस्यैः दंसनाभिः आत्मीयैः कर्मभिः आवथुः । मध्यमो व्यत्ययेन । आवतुः ररक्षतुः । त्वं च सुरामं सुखेन रमणसाधनं हविः यत् यदा शचीभिः शक्तिभिः सार्धं व्यपिबः विशेषेण पीतवानसि तदा हे मघवन् धनवन्निन्द्र सरस्वती देवी त्वा त्वाम् अभिष्णक् उपासेवत । भिष्णक् उपसेवायाम् । कण्ड्वादिः । छान्दसो यगभावः । लङि 'बहुलं छन्दसि' इति शपो लुक् । 'हल्ङ्याब्भ्यः°' इति लोपः ॥

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृळीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ ६ ॥

इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृळीकः । भवतु । विश्वऽवेदाः ।
बाधताम् । द्वेषः । अभयम् । कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥ ६ ॥

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु ॥ ७ ॥

तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ।
सः । सुऽत्रामा । स्वऽवान् । इन्द्रः । अस्मे इति । आरात् । चित् । द्वेषः । सनुतः । युयोतु ॥ ७ ॥

'त्रातारमिन्द्रम्' इत्यस्मिन् वर्गे व्याख्याते (ऋ. सं. ६.४७.११–१३)। अक्षरार्थस्तु। सुष्ठु त्राता धनवान् सर्वस्य वेदिता इन्द्रो रक्षणैः सुष्ठु सुखयिता भवतु शत्रूंश्च हिनस्तु भयराहित्यं च करोत्व-स्माकम्। अतो वयं शोभनवीर्योपेतस्य धनस्य स्वामिनो भवेमेति॥ सप्तम्यास्तु। तस्य यज्ञार्हस्य इन्द्रस्यानुग्रहबुद्धौ भजनीये सौमनस्ये च वयं विषयभूता भवेम। सुष्ठु त्राता धनवान् स इन्द्रोऽस्मत्तो दूरदेशे द्वेष्टॄनन्तर्धानं योजयत्विति॥ ॥ १९ ॥

'ईजानम्' इति सप्तर्चं चतुर्थं सूक्तं नृमेधपुत्रस्य शकपूतस्यार्षं मित्रावरुणदेवताकम्। आद्या तु लिङ्गोक्तद्युभूम्यश्विदेवताका न्यङ्कुसारिणी द्वितीयद्वादशकाष्टकवती। द्वितीयाषष्ठ्यौ प्रस्तारपङ्क्ती द्विद्वादशकाष्टकवती। सप्तमी महासतोबृहती त्र्यष्टकद्विद्वादशकवती। शिष्टास्तिस्रो विराड्रूपा एकादशिनस्त्रयोऽष्टकश्चेति लक्षणलक्षिताः। तथा चानुक्रान्तम्—'ईजानं शकपूतो नार्मेधो मैत्रावरुणं न्यङ्कुसारिण्याद्या लिङ्गोक्तदेवतान्त्या[1] महासतोबृहत्युपाद्योपान्त्ये[2] प्रस्तारपङ्क्ती शेषा विराड्रूपाः' इति। गतो विनियोगः॥

ई॒जा॒नमिद् द्यौर्गू॒र्ताव॑सुरीजा॒नं भूमि॑र॒भि प्र॑भू॒षणि॑।
ई॒जा॒नं दे॒वाव॒श्विना॑व॒भि सु॒म्नैर॑वर्धताम्॥ १ ॥

ई॒जा॒नम्। इत्। द्यौः। गू॒र्तऽव॑सुः। ई॒जा॒नम्। भूमिः॑। अ॒भि। प्र॒ऽभू॒षणि॑।
ई॒जा॒नम्। दे॒वौ। अ॒श्विनौ॑। अ॒भि। सु॒म्नैः। अ॒व॒र्ध॒ता॒म्॥ १ ॥

ᵛगूर्तवसुः। गूर्तमुद्यतं स्तोतृभ्यो दानाय हस्ते धृतं वसु धनं यस्याः सा तथोक्ता॥ 'गुरी उद्यमने'। निष्ठा। 'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधः। 'नसत्तनिषत्त॰' इत्यादिना निपातना-न्निष्ठानत्वाभावः। 'अन्येषामपि॰' इति सांहितिको दीर्घः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥ ईदृशी ᵛद्यौः द्युलोकाभिमानिनी देवता ᵛईजानम् ᵛइत् यज्ञैः इष्टवन्तमेव पुरुषमभिवर्धयति। यजेर्लिटः कानच्। 'वचिस्वपि॰' इति संप्रसारणे द्विर्वचनम्। तथा ᵛभूमिः च ᵛप्रभूषणि प्रभवने यद्वा प्रकृष्ट-भूषणे अलंकारे निमित्तभूते सति ᵛईजानम् अभिवर्धयति। अपि च ᵛदेवौ दानादिगुणयुक्तौ ᵛअश्विनौ ᵛईजानम् इष्टवन्तं पुरुषं ᵛसुम्नैः धनैः ᵛअभि ᵛअवर्धताम् अभिवर्धयतः। वृधेरन्तर्भावितण्यर्थात् छान्दसो लङ्॥

ता वां॑ मित्रावरुणा धा॒रय॑त्क्षिती सुषु॒म्नेषि॑त॒त्वता॑ यजामसि।
यु॒वोः क्रा॒णाय॑ स॒ख्यैर॒भि ष्या॑म र॒क्षसः॑॥ २ ॥

ता। वा॒म्। मि॒त्रा॒व॒रु॒णा॒। धा॒रय॑त्क्षिती॒ इति॑ धा॒रय॑त्ऽक्षिती। सु॒ऽसु॒म्ना। इ॒षि॒त॒त्वता॑। य॒जा॒म॒सि॒।
यु॒वोः। क्रा॒णाय॑। स॒ख्यैः। अ॒भि। स्या॒म॒। र॒क्षसः॑॥ २ ॥

हे ᵛमित्रावरुणा मित्रावरुणौ ᵛधारयत्क्षिती ध्रियमाणभूमिकौ। यद्वा क्षितिरिति मनुष्यनाम। हवींषि धारयन्तः क्षितयो मनुष्या ययोः स्वभूतास्तथाविधौ। ᵛसुषुम्ना सुषुम्नौ सुधनौ[3] सुसुखौ वा ᵛता तौ ᵛवां युवाम् ᵛइषितत्वता इषितत्वेन। तृतीयैकवचने छान्दसस्तकारोपजनः। यद्वा। भाव-प्रत्ययान्तात् पुनरपि भावप्रत्ययो विकरणद्वयवत्। इषितत्वत्वेन प्राप्तत्वत्वेन। हेतौ तृतीया। यतो

१. अनु.–मैत्रावरुणमाद्या लिङ्गोक्तदेवता न्यङ्कुसारिण्यन्त्या। २. त१.२.३.६.८-म१.४.७.८–॰द्योपान्त्ये च। ३. ग२-त४.५-म२–शोभनधनौ; त१.२.३.७-म१.४.७.८–'सुधनौ' नास्ति।

युवां देवेषु मध्ये प्रासव्यौ ततो हेतोः ᵛयजामसि हविर्भिर्यजामः । ' इदन्तो मसि ' इति मस इकारागमः । एवं च ᵛयुवोः युवयोः ᵛसख्यैः सखित्वैः । सख्युर्यः । ᵛक्राणाय कुर्वते यजमानाय । करोतेः शानचि छान्दसो विकरणस्य लुक् । तादर्थ्ये चतुर्थी । यजमानार्थं ᵛरक्षसः यज्ञस्य बाधकान् राक्षसान् ᵛअभि ᵛस्याम अभिभवेम । ' उपसर्गप्रादुर्भ्याम्°' ( पा. सू. ८. ३. ८७ ) इत्यस्तेः सकारस्य षत्वम् ॥

अधा चिन्नु यद्दिधिषामहे वामभि प्रियं रेक्णः पत्यमानाः ।
दद्वाँ वा यत्पुष्यति रेक्णः सम्वारन्नकिरस्य मघानि ॥ ३ ॥

अर्ध । चित् । नु । यत् । दिधिषामहे । वाम् । अभि । प्रियम् । रेक्णः । पत्यमानाः ।
दद्वान् । वा । यत् । पुष्यति । रेक्णः । सम् । ऊँ इति । आरन् । नकिः । अस्य । मघानि ॥३॥

हे मित्रावरुणौ ᵛवां युवाभ्यां युवयोरर्थं ᵛयत् यदा ᵛदिधिषामहे हवींषि धारयामः । यद्वा । ' धिष शब्दे ' । वां युवां स्तुमहे । ᵛअधा ᵛचित् अनन्तरमेव ᵛनु क्षिप्रं ᵛप्रियम् अभीष्टं ᵛरेक्णः । धननामैतत् । धनम् ᵛअभि ᵛपत्यमानाः अभिपतन्तोऽभिप्राप्नुवन्तो भवामः । ᵛदद्वान् ददिवान् । ददातेर्लिटः क्वसुः । ' छन्दस्युभयथा ' इति वसोः सार्वधातुकत्वात् ' श्नाभ्यस्तयोरातः ' इत्याकारलोपः । अत एवेडभावश्च । संहितायां नकारस्य ' दीर्घादटि समानपादे ' इति रुत्वम् । ' आतोऽटि नित्यम् ' इति सानुनासिक आकारः । वाशब्दश्चार्थे । हवींषि दत्तवांश्च ᵛयत् यो यजमानः ᵛरेक्णः धनं ᵛपुष्यति वर्धयति ᵛअस्य दत्तवतो यजमानस्य ᵛमघानि धनानि ᵛनकिः ᵛसम् ᵛआरन् नैवापगच्छन्ति । किंतु तमेव सर्वदा भजन्ते । समित्येतत् अपेत्येतस्यार्थे । ᵛउ इति पूरणः । अर्तेश्छान्दसे लुङि 'सर्तिशास्त्यर्तिभ्यश्च ' इति च्लेरङादेशः । ' ऋदृशोऽङि गुणः ' ( पा. सू. ७. ४.१६ )॥

असावन्यो असुर सूयत द्यौस्त्वं विश्वेषां वरुणासि राजा ।
मूर्धा रथस्य चाकन्नैतावतैनसान्तकध्रुक् ॥ ४ ॥

असौ । अन्यः । असुर । सूयत । द्यौः । त्वम् । विश्वेषाम् । वरुण । असि । राजा ।
मूर्धा । रथस्य । चाकन् । न । एतावता । एनसा । अन्तकऽध्रुक् ॥ ४ ॥

हे ᵛअसुर तमसः क्षेपक । यद्वा असवः प्राणाः । तान् ददाति मनुष्येभ्यः स्वोदयेन प्रयच्छतीत्यसुरः । ईदृश हे मित्र ᵛद्यौः द्युलोको देवनशीलादितिर्वा ᵛअन्यः । ' सुपां सुलुक्°' इति द्वितीयायाः स्वादेशः । वरुणापेक्षया अन्यम् ᵛअसौ अमुं नभसि दृश्यमानं त्वां ᵛसूयत असूत ॥ ' षूङ् प्राणिप्रसवे ' । छान्दसोऽडभावः ॥ हे ᵛवरुण ᵛत्वं च ᵛविश्वेषां सर्वेषां प्राणिनां ᵛराजा ᵛअसि ईश्वरो भवसि । तादृशयोर्युवयोः ᵛरथस्य ᵛमूर्धा शिरः ᵛचाकन् अस्मद्यज्ञं कामयते । यद्वा । रथस्य रंहणशीलस्य यज्ञस्य मूर्धा न मूर्धेव प्रधानः सोमश्चाकन् युवां कामयते ॥ ' कन दीप्तिकान्तिगतिषु ' । अस्माद्यङ्लुगन्ताच्छान्दसो लङ् ॥ यत एवमतः कारणात् ᵛअन्तकध्रुक् अन्तकस्य हननशीलस्य राक्षसादेर्यमस्यैव वा द्रोग्धा । ' द्रुह जिघांसायाम् ' । ' सत्सूद्विष°' इत्यादिना क्विप् । ' वा द्रुहमुहष्णुहष्णिहाम् ' ( पा. सू. ८. २. ३३ ) इति घत्वम् । अडभावः । ईदृशः स यज्ञः ᵛएतावता ᵛएनसा इयत्परिमाणेनापि पापलेशेनापि ᵛन युज्यते ॥

अस्मिन्त्स्वे३तच्छकपूत एनो हिते मित्रे निगतान् हन्ति वीरान् ।
अवोर्वा यद्धात्तनूष्ववः प्रियासु यज्ञियास्वर्वा ॥ ५ ॥

अस्मिन् । सु । एतत् । शकऽपूते । एनः । हिते । मित्रे । निऽगतान् । हन्ति । वीरान् ।
अवोः । वा । यत् । धात् । तनूषु । अवः । प्रियासु । यज्ञियासु । अर्वा ॥ ५ ॥

योऽयं शकपूताख्य ऋषिः ᵛअस्मिन् ᵛशकपूते स्थितम् ᵛएतत् ᵛएनः पापं शत्रूणां पापकरमायुधं वा ᵛमित्रे देवे ᵛहिते हिताचरणपरेऽनुकूले सति ᵛनिगतान् निगन्तव्यान् हननार्थं नियमेन प्राप्तव्यान् ᵛवीरान् शत्रोः पुत्रादीन् ᵛसु[1] सुष्ठु ᵛहन्ति हिनस्ति। अस्मिन्नृषौ समवेतं[2] यत्पापं तन्मित्रस्य प्रसादेन तदीयेषु शत्रुषु स्वकार्यं दुःखं जनयतीत्यर्थः। निगतान्। निपूर्वाद्गमेः कर्मणि निष्ठा। 'गतिरनन्तरः[2]' इति गतेः प्रकृतिस्वरत्वम्। कदेत्यत आह। ᵛअवोः हविर्भिस्तर्पयितुः। अवतेरौणादिक उप्रत्ययः। तस्य यजमानस्य ᵛयज्ञियासु यज्ञार्हासु क्रियासु ᵛतनूषु शरीरेषु ᵛअर्वा अभिगन्ता मित्रो वरुणो वा ᵛयत् यदा[3] ᵛअवः रक्षणं ᵛधात् दधाति निदधाति स्थापयति। यद्वा। यदा[4] अर्वा अभिगन्ता स ऋषिः अवितुः रक्षितुर्मित्रस्य वरुणस्य वा यागार्हासु प्रियासु तनूषु शरीरेषु अवो हविर्लक्षणमन्नं धात् धारयति। तदानीं मित्रे वरुणे चानुकूले सति तदेनो वीरान् हन्तीत्यर्थः॥

युवोर्हि मातादितिर्विचेतसा द्यौर्न भूमिः पयसा पुपूतनि ।
अव प्रिया दिदिष्टन सूरो निनिक्त रश्मिभिः ॥ ६ ॥

युवोः । हि । माता । अदितिः । विऽचेतसा । द्यौः । न । भूमिः । पयसा । पुपूतनि ।
अव । प्रिया । दिदिष्टन । सूरः । निनिक्त । रश्मिऽभिः ॥ ६ ॥

हे ᵛविचेतसा विशिष्टज्ञानौ मित्रावरुणौ ᵛयुवोर्हि युवयोः खलु ᵛमाता जननी ᵛअदितिः अदीना अखण्डनीया वा भवति। सैव भूमिः। 'इयं वा अदितिः' (तै. सं. २.२.६.१) इति श्रुतेः। ᵛद्यौर्न यथा द्युलोकः ᵛपयसा वृष्ट्युदकेन सर्वं जगत् पुनाति एवमेषा[5] सा ᵛभूमिः पयसा आत्मीयेन रसेन हविरात्मना परिणतेन ᵛपुपूतनि परिपवने यजमानानां पापस्य शोधने हेतुर्भवतीत्यर्थः॥ पूतशब्दादाचारे क्विबन्तादौणादिकः कनिप्रत्ययः[6]। छान्दसं द्विर्वचनम्। तौ युवामतिदिश्य यूयं ᵛप्रिया प्रियाणि धनानि ᵛअव ᵛदिदिष्टन अवाङ्मुखमस्मदभिमुखं दिशत दत्त॥ 'दिश अतिसर्जने'। अस्माल्लोटि छान्दसः शपः श्लुः। 'तप्तनप्तनथनाश्च' इति तशब्दस्य तनादेशः॥ अपि च ᵛसूरः सूर्यस्य ᵛरश्मिभिः किरणैः ᵛनिनिक्त अस्मान् शोधयत पोषयत वा। 'णिजिर् शौचपोषणयोः'। जौहोत्यादिकः। 'संज्ञापूर्वको विधिरनित्यः' इति 'निजां त्रयाणां°' (पा. सू. ७. ४. ७५) इत्यभ्यासस्य गुणो न क्रियते॥

युवं ह्यप्नराजावसीदतं तिष्ठद्रथं न धूर्षदं वनर्षदम् ।
ता नः कणूकयन्तीर्नृमेधस्तत्रे अंहसः सुमेधस्तत्रे अंहसः ॥ ७ ॥

युवम् । हि । अप्नऽराजौ । असीदतम् । तिष्ठत् । रथम् । न । धूःऽसदम् । वनऽसदम् ।
ताः । नः । कणुकऽयन्तीः । नृऽमेधः । तत्रे । अंहसः । सुऽमेधः । तत्रे । अंहसः ॥ ७ ॥

हे मित्रावरुणौ ᵛयुवं ᵛहि युवां खलु ᵛअप्नराजौ अप्नसा कर्मणा, प्रवर्षणप्रकाशनादिना राजमानौ दीप्यमानौ सन्तौ ᵛअसीदतं स्वकीये स्थाने निषीदथः आसाथे॥ अप्न इति कर्मनाम। 'आपः

१. त-भ-'सु' नास्ति। २. त१.२.३.६.७.८-भ१.४.७.८-'समवेतं...गतिरनंतरः' नास्ति। ३. त-भ-यद्वा। ४. त-भ-'यदा' नास्ति। ५. ग-त१.२.३.६.७.८-भ-एवमेव। ६. ग-त४.५-भ२.७-कनिन्प्रत्ययः।

कर्माख्यायां ह्रस्वो नुट् च वा ' ( उ. सू. ४. २०७ ) इत्याप्नोतेः असुन् तस्य नुडागमो धातोर्ह्रस्वश्च । तस्मिन्नुपपदे राजतेः ' सत्सूद्विष०' इत्यादिना क्विप् । ' वीवोपवसनादीनां छन्दसि लोपो वक्तव्यः ' ( पा. म. ६. ३. १०९. ६ ) इत्यप्नसः सकारलोपः ॥ तौ मित्रावरुणौ <sup>v</sup>कणूकयन्तीः । कणतिः शब्दार्थः । कणनमाक्रोशरूपं शब्दनमिच्छन्तीः <sup>v</sup>ताः प्रसिद्धाः शात्रवीः प्रजा अभिभवितुम् । <sup>v</sup>न संप्रत्यर्थे । संप्रति <sup>v</sup>रथं <sup>v</sup>तिष्ठत् अभितिष्ठताम् । तिष्ठतेर्लेट्यडागमः । ' इतश्च लोपः' इतीकारलोपः । प्रत्येकाभिप्रायेणैकवचनम् । कीदृशं रथम् । <sup>v</sup>धूर्षदं धुर्यश्वयोर्वहनदेशे सीदन्तं <sup>v</sup>वनर्षदं[1] वनेषूद्यानेषु क्रीडार्थं निषीदन्तम्[1] । यद्वा । वनमित्युदकनाम । समुद्रमध्ये हि वरुणो निवसति । वने समुद्रोदके निषीदन्तम् । उभयत्रापि पूर्ववत् क्विप् । वनसदमित्यत्र छान्दसः सांहितिको रेफोपजनः । हे मित्रावरुणौ युवाभ्यां <sup>v</sup>नृमेधः मम पिता <sup>v</sup>अंहसः पापात् <sup>v</sup>तत्रे ररक्षे रक्षितो बभूव । ' त्रैङ् पालने ' इत्यस्मात् कर्मणि लिट् । यद्वा उपचाराज्जन्ये जनकशब्दः । नृमेधस्य पुत्रः शकपूतोऽहं पापात् युवाभ्यां तत्रे रक्षितोऽस्मि । <sup>v</sup>सुमेधः अन्योऽपि सुयज्ञो यजमानः <sup>v</sup>अंहसः पापात् <sup>v</sup>तत्रे युवाभ्यामेवारक्ष्यत । ' भीत्रार्थानाम् ' ( पा. सू. १. ४. २५ ) इत्यंहसोऽपादानसंज्ञा ॥ ॥२०॥

' प्रो षु ' इति सप्तर्चं पञ्चमं सूक्तं पिजवनपुत्रस्य सुदास आर्षमैन्द्रम् । आद्यस्तृचः शाक्करः । षट्पञ्चाशदक्षरा शक्करी । द्वितीयस्तृचो महापाङ्क्तः । पळष्टका महापङ्क्तिः । सप्तमी त्रिष्टुप् । तथा चानुक्रान्तं—' प्रो षु सुदाः पैजवनः शाक्करमहापाङ्क्तावाद्यौ तृचावन्त्या[2] त्रिष्टुप्[2] ' इति । षोळशिशस्त्र आद्यस्तृचः शंसनीयः । सूत्रितं च—' त्रिकद्रुकेषु महिषो यवाशिरं प्रो ष्वस्मै पुरोरथमिति तृचावातिच्छन्दसौ ' ( आश्व. श्रौ. ६. २ ) इति । महाव्रते माध्यंदिनसवने ब्रह्मशस्त्रेऽनुरूपतृचस्य ' प्रो ष्वस्मै ' इत्येका । तथैव पञ्चमारण्यके सूत्रितं च—' प्रो ष्वस्मै पुरोरथमित्यतोऽनुरूपः[3] ' ( ऐ. आ. ५. १. १ ) इति ॥

प्रो ष्व॑स्मै पु॒रोर॑थ॒मिन्द्रा॑य शू॒षम॑र्चत ।
अ॒भीके॑ चि॒दु लो॑क॒कृत्सं॒गे स॒मत्सु॑ वृत्र॒हास्माकं॑ बोधि चोदि॒ता
नभ॑न्तामन्य॒केषां॑ ज्या॒का अधि॒ धन्व॑सु ॥ १ ॥

प्रो इति॑ । सु । अ॒स्मै॒ । पु॒रः॒ऽर॒थम् । इन्द्रा॑य । शू॒षम् । अ॒र्च॒त॒ ।
अ॒भीके॑ । चि॒त् । ऊँ॒ इति॑ । लो॒क॒ऽकृत् । स॒म्ऽगे । स॒मत्ऽसु॑ । वृ॒त्र॒ऽहा ।
अ॒स्माक॑म् । बो॒धि॒ । चो॒दि॒ता । नभ॑न्ताम् । अ॒न्य॒केषा॑म् । ज्या॒काः । अधि॑ । धन्व॑ऽसु ॥ १ ॥

<sup>v</sup>अस्मै <sup>v</sup>इन्द्राय । षष्ठ्यर्थे चतुर्थी । अस्येन्द्रस्य <sup>v</sup>पुरोरथं रथस्य पुरः पुरतः । ' पुरोऽव्ययम् ' इति गतित्वाद्गतिसमासः । रथस्याग्रतो वर्तमानं <sup>v</sup>शूषं बलं <sup>v</sup>सु <sup>v</sup>प्रो <sup>v</sup>अर्चत । हे स्तोतारः सुष्ठु प्रपूजयत । प्र उ इति निपातसमुदायः प्रो इति । ' ओत् ' इति प्रगृह्यसंज्ञम् । इन्द्रो विशेष्यते । समत्सु । समानं माद्यन्त्यत्रेति समदः संग्रामाः । औणादिकोऽधिकरणे क्विप् । ' समानस्य च्छन्दसि०' इति सभावः । <sup>v</sup>समत्सु संग्रामेषु <sup>v</sup>संगे संगमनीये शत्रुबले । ' डोऽन्यत्रापि दृश्यते ' ( पा. सू. ३. २. ४८ ) इति गमेर्डः । <sup>v</sup>अभीके <sup>v</sup>चित् अभ्यर्णेऽपि निकटं प्राप्तेऽपि केशाकेश्यवस्थायामपि <sup>v</sup>लोककृत् स्थितिकृत् पलायिता[4] स्थित्वा च <sup>v</sup>वृत्रहा वृत्राणामावरकाणां हन्ता एवंविधः स इन्द्रः <sup>v</sup>अस्माकं स्तोतॄणां <sup>v</sup>चोदिता धनानां प्रेरिता सन् <sup>v</sup>बोधि । अस्माभिः कृतानि परिचरणानि बुध्यताम् ।

१. त१.२.३.६.७.८-म१.४.५.७.८–' वनर्षदं...निषीदन्तं ' नास्ति । २.अनु.–तृचौ त्रिष्टुबन्त्या । ३. त१.२.३.७-म१.२.८–'मित्यनुरूपः । ४. ग१-त४.५-म७.८–पालयिता ।

बुधेश्छान्दसे लुङि 'दीपजनबुध°' इत्यादिना कर्तरि च्लेश्चिणादेशः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। अपि च ᵛअन्यकेषां कुत्सितानामन्येषां शत्रूणाम् ᵛअधि[1] ᵛधन्वसु धनुःष्वधिरोपिता ᵛज्याकाः कुत्सिता ज्या ᵛनभन्तां हिंसयन्तां नश्यन्तु। ज्याशब्दात् कुत्सायां प्रागिवात्कः (पा. सू. ५. ३. ७०; ७४)। 'नभ तुभ हिंसायाम्'। क्रैयादिकः। व्यत्ययेन शप् ॥

त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम्।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ २॥

त्वम्। सिन्धून्। अव। असृजः। अधराचः। अहन्। अहिम्।
अशत्रुः। इन्द्र। जज्ञिषे। विश्वम्। पुष्यसि। वार्यम्। तम्। त्वा। परि। स्वजामहे।
नभन्ताम्। अन्यकेषाम्। ज्याकाः। अधि। धन्वऽसु॥ २॥

हे ᵛइन्द्र ᵛत्वं ᵛसिन्धून् स्यन्दनशीलान् जलपूरान् ᵛअधराचः अधरमधोमुखमञ्चतो गन्तॄन् ᵛअवासृजः मेघान्निरगमयः। यतस्त्वम् ᵛअहिम् अन्तरिक्षे गतं मेघम् ᵛअहन् हतवानसि। यद्वा। अहिमागत्य हन्तारं सर्वस्य जगत आवरकं वृत्रमसुरमहन् हतवानसि। अतो हे ᵛइन्द्र त्वम् ᵛअशत्रुः शत्रुरहितः ᵛजज्ञिषे जायसे। न सन्ति शत्रवोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। जनेर्लिटि 'गमहन°' इत्यादिनोपधालोपः। 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् द्विर्वचनम्। तथा ᵛविश्वं सर्वं ᵛवार्यं वरणीयं संभजनीयं धनं ᵛपुष्यसि वर्धयसि। 'वृङ् संभक्तौ'। ऋहलोर्ण्यत्। 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम्। ᵛतं तादृशं ᵛत्वा त्वां ᵛपरि ᵛष्वजामहे हविर्भिः स्तुतिभिश्चालिङ्गनं कुर्मः। वशीकुर्म इत्यर्थः। 'ष्वञ्ज परिष्वङ्गे'। 'दंशसञ्जस्वञ्जां शपि' (पा. सू. ६. ४. २५) इत्यनुनासिकलोपः। गतमन्यत् ॥

वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः।
अस्तासि शत्रवे वधं यो न इन्द्र जिघांसति या ते रातिर्ददिर्वसु
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ ३ ॥

वि। सु। विश्वाः। अरातयः। अर्यः। नशन्त। नः। धियः।
अस्ता। असि। शत्रवे। वधम्। यः। नः। इन्द्र। जिघांसति। या। ते। रातिः। ददिः। वसु।
नभन्ताम्। अन्यकेषाम्। ज्याकाः। अधि। धन्वऽसु॥ ३ ॥

ᵛविश्वाः सर्वाः ᵛअरातयः अदातॄणः ᵛअर्यः अभिगन्त्र्यः ᵛनः अस्माकं शत्रुभूताः प्रजाः ᵛसु[2] सुष्ठु ᵛवि ᵛनशन्त विनश्यन्तु। हे इन्द्र त्वदर्थं ᵛधियः कर्माणि स्तुतयो वा प्रवर्तन्ताम्। हे ᵛइन्द्र ᵛयः ᵛनः अस्मान् ᵛजिघांसति हन्तुमिच्छति। हन्तेः सनि 'अज्झनगमां सनि' इति दीर्घः। 'अभ्यासाच्च' इति कुत्वम्। तस्मै ᵛशत्रवे ᵛवधं हननसाधनमायुधम् ᵛअस्तासि क्षेप्ता भवसि। 'असु क्षेपणे'। ताच्छीलिकस्तृन्। ᵛते तव ᵛया ᵛरातिः धनप्रदानहेतुर्हस्तः। 'रा दाने'। करणे क्तिन्।

---

१. त-भ-'अधि' नास्ति। २. त-भ-'सु' नास्ति।

'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इति क्तिन उदात्तत्वम्। सा रातिः [v]वसु धनं [v]ददिः अस्मभ्यं दाता भवतु। 'आदृगमहन°' इति ददातेः किप्रत्ययः। 'न लोकाव्यय°' इति वसुशब्दात् षष्ठ्यभावः। सिद्धमन्यत् ॥

योॱ नॱ इन्द्राभितो जनो वृकायुरादिदेशति ।
अधस्पदं तमीं कृधि विबाधो असि सासहिर्नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥४॥

यः । नः । इन्द्र । अभितः । जनः । वृकऽयुः । आऽदिदेशति ।
अधःऽपदम् । तम् । ईम् । कृधि । विऽबाधः । असि । ससहिः ।
नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ ४ ॥

हे [v]इन्द्र [v]यः [v]जनः [v]वृकायुः। वृको हिंसकोऽरण्यश्वा स्तेनो वा। स इवाचरन् [v]नः अस्मान् [v]अभितः सर्वतः [v]आदिदेशति अभिलक्ष्य आयुधान्यतिसृजति। दिशतेर्लेट्यडागमः। छान्दसः शपः श्लुः। 'नाभ्यस्तस्याचि पिति' इत्यत्र 'बहुलं छन्दसीति वक्तव्यम्' इति वचनात् प्रतिषेधाभावे लघूपधगुणः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। [v]तमीं तमिमं जनम् [v]अधस्पदं पादस्याधस्ताद्वर्तमानं [v]कृधि कुरु। करोतेश्छान्दसो विकरणस्य लुक्। 'श्रुशृणुपृकृवृभ्यः' इति हेर्धिः। यतस्त्वं [v]विबाधः विशेषेण बाधिता शत्रूणां [v]सासहिः [v]अभिभविता च [v]असि[1]। सिद्धः शेषः ॥

योॱ नॱ इन्द्राभिदासति सनाभिर्यश्च निष्ट्यः ।
अव तस्य बलं तिर महीव द्यौरध त्मना नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥५॥

यः । नः । इन्द्र । अभिऽदासति । सऽनाभिः । यः । च । निष्ट्यः ।
अव । तस्य । बलम् । तिर । महीऽइव । द्यौः । अध । त्मना ।
नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ ५ ॥

हे [v]इन्द्र [v]यः[2] [v]सनाभिः समानजन्मा शत्रुः [v]नः अस्मान् [v]अभिदासति उपक्षयति [v]यश्च [v]निष्ट्यः निकृष्टजन्मा अस्मानुपक्षयति ॥ जातार्थे निकृष्टवाचिनो निःशब्दादव्ययात्त्यप् (पा. सू. ४. २. १०४)। 'ह्रस्वात्तादौ तद्धिते' (पा. सू. ८. ३. १०१) इति षत्वम् ॥ [v]अध अनन्तरमेव [v]महीव [v]द्यौः महती द्यौरिव विस्तृतं [v]तस्य शत्रोः [v]बलं [v]त्मना आत्मना। 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः। स्वयमेव [v]अव[3] [v]तिर जहि[3]। अवतिरतिर्वधकर्मा। गतमन्यत् ॥

वयमिन्द्र त्वायवः सखित्वमा रभामहे ।
ऋतस्य नः पथा नयाति विश्वानि दुरिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥६॥

वयम् । इन्द्र । त्वाऽयवः । सखिऽत्वम् । आ । रभामहे ॥ ऋतस्य । नः । पथा । नय ।
अति । विश्वानि । दुःऽइता । नभन्ताम् । अन्यकेषाम् । ज्याकाः । अधि । धन्वऽसु ॥ ६ ॥

हे [v]इन्द्र [v]त्वायवः त्वामात्मन इच्छन्तः [v]वयं [v]सखित्वं सखिकर्म यज्ञात्मकम् [v]आ [v]रभामहे उपक्रमामहे। [v]ऋतस्य सत्यस्य यज्ञस्य [v]पथा मार्गेण। भस्य टेर्लोपः। उदात्तनिवृत्तिस्वरेण तृतीयाया

---

१. ग–असि भवसि। २. त-भ–'यः' नास्ति। ३. त-भ–अवति रक्षति।

उदात्तत्वम्। ᐯविश्वानि सर्वाणि ᐯदुरिता दुरितानि दुर्गमनानि पापानि तत्फलानि च ᐯनः अस्मान् ᐯअति ᐯनय अतिपारय। गतमन्यत्॥

अस्मभ्यं सु त्वमिन्द्र तां शिक्ष या दोहते प्रति वरं जरित्रे।
अच्छिद्रोध्नी पीपयद्यथा नः सहस्रधारा पयसा मही गौः॥ ७॥

अस्मभ्यम्। सु। त्वम्। इन्द्र। ताम्। शिक्ष। या। दोहते। प्रति। वरम्। जरित्रे।
अच्छिद्रऽऊध्नी। पीपयत्। यथा। नः। सहस्रऽधारा। पयसा। मही। गौः॥ ७॥

हे ᐯइन्द्र ᐯत्वं ᐯतां गाम् ᐯअस्मभ्यं स्तोतृभ्यः ᐯसु ᐯशिक्ष प्रदेहि। शिक्षतिर्दानकर्मा। ᐯया गौः ᐯजरित्रे स्तोत्रे ᐯवरं वरणीयं पयः ᐯप्रति ᐯदोहते प्रतिदिनं नैरन्तर्येण दुग्धे॥ दुहेः 'बहुलं छन्दसि' इति शपो लुगभावः। अदुपदेशात् लसार्वधातुकानुदात्तत्वे शपः पित्वादनुदात्तत्वम्। धातुस्वरः शिष्यते। वरम्। 'वृञ् वरणे' इत्यस्मात् 'ग्रहवृदृनिश्चिगमश्च' इति कर्मण्यप्॥ सा प्रत्ता ᐯगौः ᐯअच्छिद्रोध्नी निबिडोधस्का अत एव ᐯसहस्रधारा बहुभिः क्षीरधाराभिरुपेता ᐯमही महती सती ᐯयथा ᐯनः अस्मान् ᐯपयसा क्षीरेण ᐯपीपयत् प्रवर्धयेत् तथा तां कुर्विति शेषः॥ 'ओप्यायी वृद्धौ'। ण्यन्ताच्छान्दसो लुङ्। व्यत्ययेन धातोः पीभावः। अडभावश्छान्दसः॥ ॥२१॥

'उभे यत्' इति सप्तर्चं षष्ठं सूक्तं युवनाश्वपुत्रस्य मान्धातुरार्षम्। 'पूर्वेण[1]' इत्यर्धर्च-सहितायाः सप्तम्यास्तु गोधा नाम ब्रह्मवादिन्यृषिः। सप्तमी पङ्क्तिः। शिष्टाः षळष्टका महापङ्क्तयः। इन्द्रो देवता। तथा चानुक्रान्तम्—'उभे यन्मान्धाता यौवनाश्वो महापाङ्क्तं पङ्क्तिरन्त्या तामध्यर्धां गोधापश्यत्' इति। गतः सूक्तविनियोगः। चातुर्विंशिकेऽहनि माध्यंदिनेऽच्छावाकस्यायस्तृचो वैकल्पिकः स्तोत्रियः। सूत्रितं च—'उभे यदिन्द्र रोदसी अव यत्त्वं शतक्रतो' (आश्व. श्रौ. ७. ४) इति॥

उभे यदिन्द्र रोदसी आपप्राथोषाइव।
महान्तं त्वा महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्॥ १॥

उभे इति। यत्। इन्द्र। रोदसी इति। आऽपप्राथ। उषाःऽइव।
महान्तम्। त्वा। महीनाम्। सम्ऽराजम्। चर्षणीनाम्।
देवी। जनित्री। अजीजनत्। भद्रा। जनित्री। अजीजनत्॥ १॥

हे ᐯइन्द्र ᐯउभे ᐯरोदसी द्यावापृथिव्यौ ᐯयत् यस्त्वम् ᐯआपप्राथ तेजसाप्रासि आपूरयसि। 'प्रा पूरणे'। आदादिकः। छान्दसो लिट्। ᐯउषाइव यथोषाः स्वभासा सर्वं जगदापूरयति तद्वत्। तं ᐯमहीनां महतां देवानामपि ᐯमहान्तम् अधिकं ᐯचर्षणीनां मनुष्याणामपि ᐯसम्राजम् ईश्वरमिन्द्रं ᐯत्वा त्वां ᐯदेवी देवनशीला ᐯजनित्री साधु जनयित्री अदितिः ᐯअजीजनत् अजनयत्। जनेर्ण्यन्तात् लुङि चङि रूपमेतत्। यस्मादेषा ᐯजनित्री ईदृशं पुत्रम् ᐯअजीजनत् अतः कारणात् सा[2] ᐯभद्रा कल्याणी प्रशस्ता जाता। जनेर्ण्यन्तात् साधुकारिणि तृन्। 'जनिता मन्त्रे' इतीडादौ णिलोपो[3] निपात्यते। 'ऋन्नेभ्यः' इति ङीप्॥

---

१. ग-भ१.७–ऋतस्य; त-म२.४.८–ऋतस्य न। २. भ७–असौ। ३. त-भ–णिनिलोपो।

अव॑ स्म दुर्हणाय॒तो मर्त॑स्य तनुहि स्थि॒रम् ।
अ॒ध॒स्प॒दं तमीं॑ कृधि॒ यो अ॒स्माँ आ॒दिदे॑शति
दे॒वी जनि॑त्र्यजीजनद्भ॒द्रा जनि॑त्र्यजीजनत् ॥ २ ॥

अव॑ । स्म॒ । दुः॒ऽह॒ना॒य॒तः । मर्त॑स्य । त॒नु॒हि॒ । स्थि॒रम् ।
अ॒धः॒ऽप॒दम् । तम् । ईम् । कृ॒धि॒ । यः । अ॒स्मान् । आ॒ऽदिदे॑शति ।
दे॒वी । जनि॑त्री । अ॒जी॒ज॒न॒त् । भ॒द्रा । जनि॑त्री । अ॒जी॒ज॒न॒त् ॥ २ ॥

ᵛदुर्हणायतः दुःखप्रदं हननमाचरतः ᵛमर्तस्य मनुष्यस्य शत्रोः ᵛस्थिरं दृढं बलम् ᵛअव ᵛतनुहि। अवततं[1] नीचीनं कुरु। ᵛस्म इति पूरकः। ᵛतं शत्रुम् ᵛईम् एनम् ᵛअधस्पदं पादयोरधस्ताद्वर्तमानं ᵛकृधि कुरु। ᵛयः शत्रुः ᵛअस्मानादिदेशति जिघांसति। समानमन्यत् ॥

अव॒ त्या बृ॑ह॒तीरिषो॑ वि॒श्वश्च॑न्द्रा अमित्रहन् ।
शचीभिः शक्र धूनुहीन्द्र॒ विश्वा॑भिरू॒तिभि॑र्दे॒वी
जनि॑त्र्यजीजनद्भ॒द्रा जनि॑त्र्यजीजनत् ॥ ३ ॥

अव॑ । त्याः । बृ॒ह॒तीः । इषः॑ । वि॒श्वऽच॑न्द्राः । अ॒मि॒त्र॒ऽह॒न् ।
शची॑भिः । श॒क्र॒ । धू॒नु॒हि॒ । इन्द्र॑ । विश्वा॑भिः । ऊ॒तिऽभिः॑ ।
दे॒वी । जनि॑त्री । अ॒जी॒ज॒न॒त् । भ॒द्रा । जनि॑त्री । अ॒जी॒ज॒न॒त् ॥ ३ ॥

हे ᵛअमित्रहन् अमित्राणां शत्रूणां हन्तर्हे ᵛशक्र ᵛइन्द्र ᵛशचीभिः आत्मीयाभिः शक्तिभिः आत्मीयैः कर्मभिर्वा ᵛत्याः ताः प्रसिद्धाः ᵛबृहतीः महतीः। 'बृहन्महतोरुपसंख्यानम्' इति ङीप उदात्तत्वम्। ᵛविश्वश्चन्द्राः। विश्वानि सर्वाणि चन्द्राणि हिरण्यानि यासां तादृशीः। 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुडागमः। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्। एवंभूताः ᵛइषः अन्नानि ᵛविश्वाभिः सर्वाभिः ᵛऊतिभिः रक्षाभिः सार्धम् ᵛअव ᵛधूनुहि अस्मास्ववाङ्मुखं कम्पय। अस्मदभिमुखं गमयेत्यर्थः। गतमन्यत् ॥

चातुर्विंशिकेऽहनि माध्यंदिनेऽच्छावाकस्य 'अव यत्त्वम्' इति तृचो वैकल्पिकोऽनुरूपः। सूत्रं तु सूक्तादावुदाहृतम् ॥

अव॒ यत्त्वं श॑तक्रत॒विन्द्र॒ विश्वा॑नि धूनु॒षे ।
र॒यिं न सु॑न्व॒ते सचा॑ सह॒स्रिणी॑भिरू॒तिभि॑र्दे॒वी
जनि॑त्र्यजीजनद्भ॒द्रा जनि॑त्र्यजीजनत् ॥ ४ ॥

अव॑ । यत् । त्वम् । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । इन्द्र॑ । विश्वा॑नि । धू॒नु॒षे ।
र॒यिम् । न । सु॒न्व॒ते । सचा॑ । स॒ह॒स्रिणी॑भिः । ऊ॒तिऽभिः॑ ।
दे॒वी । जनि॑त्री । अ॒जी॒ज॒न॒त् । भ॒द्रा । जनि॑त्री । अ॒जी॒ज॒न॒त् ॥ ४ ॥

---

१. त-भ—अवर्तं ।

हे शतक्रतो बहुकर्मन् बहुप्रज्ञ वा इन्द्र सुन्वते सोमाभिषवं कुर्वते। सुनोतेर्लटः शतृ। 'हुश्नुवोः सार्वधातुके' इति यण्। 'शतुरनुमः' इति विभक्तेरुदात्तत्वम्। ईदृशाय यजमानाय यत् यदा त्वं विश्वानि व्याप्ताव्यप्तानि धनानि वा अव धूनुषे अभिगमयसि ददासीत्यर्थः। तदा रयिं न रयिं च पुत्ररूपं धनं च सहस्रिणीभिः सहस्रसंख्यायुक्ताभिः ऊतिभिः रक्षाभिः सचा सह प्रवेहि। गतमन्यत् ॥

अव॒ स्वेदा॑इवा॒भितो॒ विष्व॑क्पतन्तु दि॒द्यवः॑ ।
दूर्वा॑याइव॒ तन्त॑वो॒ व्य१॒॑स्मदे॑तु दु॒र्म॒ति॒र्दे॑वी जनि॑त्र्यजीजनद्भ॒द्रा जनि॑त्र्यजीजनत् ॥५॥

अव॑ । स्वेदाः॑ऽइव । अ॒भितः॑ । विष्व॑क् । प॒त॒न्तु॒ । दि॒द्यवः॑ ।
दूर्वा॑याःऽइव । तन्त॑वः । वि । अ॒स्मत् । ए॒तु॒ । दुः॒ऽम॒तिः ।
दे॒वी । जनि॑त्री । अ॒जी॒ज॒न॒त् । भ॒द्रा । जनि॑त्री । अ॒जी॒ज॒न॒त् ॥ ५ ॥

स्वेदाइव गात्रात्[1] स्वेदबिन्दव इव अभितः सर्वतः दिद्यवः द्योतमानान्यायुधानीन्द्रस्य दीप्तयो वा विष्वक् नानामुखाः अव पतन्तु निपतन्तु। दूर्वायाइव तन्तवः। यथा दूर्वाकाण्डा बहुशः प्ररोहन्ति एवं बहुशो विस्तृता दृश्यन्ते। दुर्मतिः दुष्टाभिसंधिः शत्रुः अस्मत् अस्मत्तः वि एतु वियुत्य गच्छतु। गतमन्यत् ॥

दी॒र्घं ह्य॑ङ्कु॒शं य॑था॒ शक्तिं॒ बिभ॑र्षि मन्तुमः ।
पूर्वे॑ण मघवन्प॒दाजो व॒यां यथा॑ यमो दे॒वी जनि॑त्र्यजीजनद्भ॒द्रा जनि॑त्र्यजीजनत् ॥६॥

दी॒र्घम् । हि । अ॒ङ्कु॒शम् । य॒था॒ । शक्ति॑म् । बिभ॑र्षि । म॒न्तु॒ऽमः॒ ।
पूर्वे॑ण । म॒घ॒ऽव॒न् । प॒दा । अ॒जः । व॒याम् । यथा॑ । य॒मः॒ ।
दे॒वी । जनि॑त्री । अ॒जी॒ज॒न॒त् । भ॒द्रा । जनि॑त्री । अ॒जी॒ज॒न॒त् ॥ ६ ॥

दीर्घम् आयतम् अङ्कुशं सृणिं यथा बिभर्षि एवमायतां शक्तिं हे मन्तुमः[2]। मन्तुर्ज्ञानम्। तद्वन्। 'मतुवसो रुः' इति संबुद्धौ नकारस्य रुत्वम्। ईदृशेन्द्र बिभर्षि धारयसि। 'डुभृञ् धारण-पोषणयोः'। जौहोत्यादिकः। श्लौ 'भृञामित्' इत्यभ्यासस्येत्वम्। हे मघवन् धनवन्निन्द्र यथा पूर्वेण देहस्य पूर्वभागे वर्तमानेन पदा पादेन अजः छागः वयां शाखामाकर्षति तथा पूर्वोक्तया शक्त्याकृष्य यमः शत्रून् नियच्छसि। यमेर्लेट्यडागमः। 'बहुलं छन्दसि' इति शपो लुक्। गतमन्यत् ॥

नकि॑र्देवा मिनीमसि॒ नकि॒रा यो॑पयामसि मन्त्र॒श्रुत्यं॑ चरामसि ।
प॒क्षेभि॑रपिक॒क्षेभि॑र॒त्राभि सं र॑भामहे ॥ ७ ॥

नकिः॑ । दे॒वाः॒ । मि॒नी॒म॒सि॒ । नकिः॑ । आ । यो॒प॒या॒म॒सि॒ । म॒न्त्र॒ऽश्रुत्य॑म् । च॒रा॒म॒सि॒ ।
प॒क्षेभिः॑ । अ॒पि॒ऽक॒क्षेभिः॑ । अत्र॑ । अ॒भि । सम् । र॒भा॒म॒हे॒ ॥ ७ ॥

हे देवाः इन्द्रादयः युष्मद्विषये नकिः मिनीमसि न किमपि हिंस्मः। 'मीञ् हिंसायाम्'। क्रैयादिकः। 'मीनातेर्निगमे' इति ह्रस्वः। इदन्तो मसिः। आकारः समुच्चये। नकिः[3] न किंच[3]

१. ग–वक्त्रात्। २. त२.३.७-म१.२.४.८–'मंतुमः' नास्ति। ३. त१.२.३.७-म१.४.८–नकिराव; म२.७–नकिरा।

ᵛयोपयामसि योपयामः। अननुष्ठानेन विमोहयामः। 'युप विमोहने'। किं तर्हि। ᵛमन्त्रश्रुत्यं मन्त्रेण स्मार्यं श्रुतौ विधिवाक्ये प्रतिपाद्यं युष्मद्विषयं कर्म तत् ᵛचरामसि आचरामः। अनुतिष्ठामः। अपि च ᵛपक्षेभिः पक्षैः पक्षस्थानीयैः स्तुतशस्त्रैः ᵛअपिकक्षेभिः। अपिकक्षो नाम बाह्वोर्मध्यभागः। यज्ञस्य अपिकक्षभूतैर्हविर्भिः ᵛअत्र अस्मिन् यज्ञेऽभितः सर्वतो युष्मान् ᵛसं ᵛरभामहे सम्यगवलम्बामहे ॥ ॥ २२ ॥

'यस्मिन्' इति सप्तर्चं सप्तमं सूक्तं यमगोत्रस्य कुमारस्यार्षमानुष्टुभं यमदेवत्यम्। तथा चानुक्रान्तं—'यस्मिन् कुमारो यामायनो याममानुष्टुभं तु[1]' इति ॥

**यस्मि॑न्वृ॒क्षे सु॑पला॒शे दे॒वैः सं॒पिब॑ते य॒मः ।**
**अत्रा॑ नो वि॒श्पति॑ः पि॒ता पु॑रा॒णाँ अनु॑ वेनति ॥ १ ॥**

यस्मि॑न् । वृ॒क्षे । सु॒ऽप॒ला॒शे । दे॒वैः । स॒म्ऽपिब॑ते । य॒मः ।
अत्र॑ । नः॒ । वि॒श्पति॑ः । पि॒ता । पु॒रा॒णान् । अनु॑ । वे॒न॒ति॒ ॥ १ ॥

ᵛवृक्षे। लुप्तोपममेतत्। वृक्षवत् ᵛसुपलाशे शोभनपलाशोपेते शोभनोद्यानसहिते। यद्वा। शोभनपर्णोपेते वृक्षे। तादृशस्य वृक्षस्य मूलं यथौष्ण्यजनितश्रमापनोदनेन सुखकरं भवति तद्वत् सुखकरे ᵛयस्मिन् स्थाने ᵛदेवैः परिजनभूतैः ᵛयमः नियन्ता वैवस्वतः ᵛसंपिबते सह भुङ्क्ते[2]। पिबतीत्यर्थः। ᵛविश्पतिः विशां प्रजानामधिपतिः ᵛपिता ᵛनः। व्यत्ययेन बहुवचनम्। मम नचिकेतसो[2] जनको वाजश्रवसः ᵛअत्र अस्मिन् यमस्य स्थाने ᵛपुराणान् पुरातनान् अत्र चिरकालं निवसतः पितॄन् ᵛअनु तेषां पश्चात् तत्समीपे निवसत्वयमिति ᵛवेनति मां कामयते। नचिकेता नाम कुमारो वाजश्रवसेन पित्रा यमलोकं प्रस्थापितः सन् यमं दृष्ट्वा प्रसाद्य पुनरपीमं लोकमाजगाम। अयमर्थ इदमादिकैर्मन्त्रैः प्रतिपाद्यते। यद्वा। कुमारो नाम नचिकेतसोऽन्यः कश्चिदृषिः। यच्छतीति यम आदित्यः। तमनेन सूक्तेन तुष्टाव। सुपलाशे वृक्ष इव यस्मिन् शोभने स्थाने यम आदित्यो देवैः[3]। दीव्यन्तीति देवा रश्मयः। तैः संपिबते संगच्छते। उपसर्गवशात् पिबतिरत्र[4] गत्यर्थः। व्यत्ययेनात्मनेपदम्। अत्र अस्मिन् स्थाने स्थितो विश्पतिर्विशां प्रजानां प्रकाशनप्रवर्षणादिना पालयिता[4] प्राणात्मना सर्वेषां जनकः स आदित्यः पुराणांश्चिरंतनान् स्तोतॄन् नोऽस्मानपि वेनति अनुग्राह्यत्वेन कामयते। यद्वा। अत्र स्थाने स्थितान् नोऽस्माकं पुराणान् पूर्वपुरुषाननु वेनति अनुक्रमेण कामयते॥

**पु॒रा॒णाँ अ॑नु॒वेन॑न्तं॒ चर॑न्तं पा॒पया॑मु॒या ।**
**अ॒सू॒यन्न॒भ्य॑चाकशं॒ तस्मा॑ अस्पृहयं॒ पुन॑ः ॥ २ ॥**

पु॒रा॒णान् । अ॒नु॒ऽवेन॑न्तम् । चर॑न्तम् । पा॒पया॑ । अ॒मु॒या ।
अ॒सू॒यन् । अ॒भि । अ॒चा॒क॒श॒म् । तस्मै॑ । अ॒स्पृ॒ह॒य॒म् । पु॒नः॒ऽरिति॑ ॥ २ ॥

ᵛपुराणान् पुरातनान् पितॄन् ᵛअनुवेनन्तं मामनुगतं कामयमानम् ᵛअमुया अनया ᵛपापया निकृष्टया बुद्ध्या सह ᵛचरन्तं वर्तमानं पितरं वाजश्रवसम् ᵛअसूयन् सुखेन जीवन्तं मां मृत्युसमीपं प्रेहीत्युक्तवानिति मानसेनोपतापेन युक्तः सन् प्रथमम् ᵛअभ्यचाकशम्। अयं पश्यतिकर्मा। अभ्य-

१. अनु.-हि। २. त१.२.३.६.७.८-भ-'भुङ्क्ते...नचिकेतसः' नास्ति। ३. त-भ-'देवैः' नास्ति। ४. ग-त१.२.३.६.७.८-भ-'पिबतिरत्र ...... पालयिता' नास्ति।

पश्यम् । 'असुज् मानस उपतापे '। कण्ड्वादिः । ᵛपुनः पश्चात् ᵛतस्मा ᵛअस्पृहयं पितुराज्ञया तं मृत्युं प्राप्तुमैच्छम् । 'स्पृह ईप्सायाम्'। चुरादिरदन्तः । 'स्पृहेरीप्सितः' ( पा. सू. १.४.३६ ) इति संप्रदानसंज्ञायां तच्छब्दाच्चतुर्थी । यद्वा । पुराणान् चिरंतनान् स्तोतॄन् पूर्वपुरुषान् पितॄन् वा अनुवेनन्तमनुक्रमेण कामयमानं चरन्तम् उदयास्तमयाभ्यां दिवि परिवर्तमानमनया पापया निकृष्टया स्तोतुमसमर्थया बुद्ध्या असूयन् । गुणेषु दोषाविष्करणमसूया । परकीयगुणेषु दोषानाविष्कुर्वन्नभ्यचाकशम् । अयमपि कश्चिदिति सामान्यरूपेणाभ्यपश्यम् । इदानीं तु पुनस्तस्यादित्यस्य माहात्म्यं जानन्[१] तस्मा अस्पृहयम् । तमेवादित्यं स्तुतिभिः परिचरणात्मकैः कर्मभिश्च प्राप्तुमैच्छम्[२] ॥

**यं कु॑मार॒ नवं॒ रथ॑मच॒क्रं मन॒साकृ॑णोः ।**
**एके॑षं वि॒श्वतः॒ प्राञ्च॒मप॑श्य॒न्नधि॑ तिष्ठसि ॥ ३ ॥**

यम् । कु॒मा॒र॒ । नव॑म् । रथ॑म् । अ॒च॒क्रम् । मन॑सा । अकृ॑णोः ।
एक॑ऽईषम् । वि॒श्वत॑ः । प्राञ्च॑म् । अप॑श्यन् । अधि॑ । ति॒ष्ठ॒सि॒ ॥ ३ ॥

नचिकेतःसंज्ञं कुमारं यमोऽनयोत्तरया च प्रलोभयति[३] । हे ᵛकुमार ᵛनवम् अभिनवमितः पूर्वमदृष्टम् । अभिनवत्वमेव व्यनक्ति । ᵛअचक्रं चक्ररहितं तम्[४] ᵛएकेषम्[४] एकेषा यस्य तादृशं तथापि ᵛविश्वतः सर्वतः ᵛप्राञ्चं प्रकर्षेणाञ्चन्तं गच्छन्तं ᵛयं ᵛरथं ᵛमनसाकृणोः मत्समीपं प्रतिगमनाय अध्यवसायात्मकमीदृशं यं रथमकरोः कृत्वा[५] च ᵛअपश्यन् कर्तव्याकर्तव्यविभागमजानन्[६] ᵛअधि ᵛतिष्ठसि रथमारोहसि । यद्वा । स्तोतारं कुमाराख्यमृषिमादित्यः प्रत्यक्षः सन् देहात्मनोर्विवेकं बोधयति । हे कुमार ऋषे चक्ररहितम् एकेषम् । एकः प्राण ईषास्थानीयो यस्य । ईदृशमभिनवं सर्वतो गच्छन्तं शरीरात्मकं यं रथं मनसान्तःकरणेन अकृणोः अकरोः । संकल्पात्मकेन मनसा हि कामो जायते[७] । सत्यां हि कामनायां पुण्यपापात्मकं कर्म[८] क्रियते । तेन च भोगप्रदानायेदं शरीरमारभ्यत इति परंपरया मनसः शरीरनिष्पादकत्वम् । तं शरीरात्मकं[८] रथमपश्यन्नजानन् । 'लक्षणहेत्वोः॰' ( पा. सू. ३.२.१२६ ) इति हेतौ शतृप्रत्ययः । मत्स्वरूपापरिज्ञानाद्धेतोरधितिष्ठसि । भोगायतनत्वेन स्वीकरोषि॥

**यं कु॑मार॒ प्राव॑र्तयो॒ रथं॒ विप्रे॑भ्य॒स्परि॑ ।**
**तं सामानु॒ प्राव॑र्तत॒ समि॒तो ना॒व्याहि॑तम् ॥ ४ ॥**

यम् । कु॒मा॒र॒ । प्र । अ॒व॒र्त॒यः॒ । रथ॑म् । विप्रे॑भ्यः । परि॑ ।
तम् । साम॑ । अनु॑ । प्र । अ॒व॒र्त॒त॒ । सम् । इ॒तः । ना॒वि । आऽहि॑तम् ॥ ४ ॥

हे ᵛकुमार नचिकेतः ᵛयं पूर्वोक्तमधिष्ठितं ᵛरथं ᵛप्रावर्तयः मत्समीपं प्रत्यगमयः ᵛविप्रेभ्यः मेधाविभ्यः ᵛपरि उपरि भूलोके वर्तमानानां मेधाविनां बान्धवानामुपरिष्टात् । अन्तरिक्ष इत्यर्थः । 'पञ्चम्याः परावध्यर्थे ' इति विसर्जनीयस्य सत्वम् । ᵛतं रथं ᵛसाम पित्रा कृतं सान्त्वनं यमसमीपं गत्वा एवमेव त्वया वक्तव्यमिति प्रत्यागमनकारणमुपायोपदेशनम् ᵛअनु ᵛप्रावर्तत । ᵛइतः अस्माल्लोकादन्वगच्छत् । कथंभूतम् । ᵛनावि नौवत्तरणसाधनायां बुद्धौ ᵛसम् ᵛआहितं सम्यग्धृतम् । यद्वा ।

१. त४.५—जानन्नहं । २. ग-त२.३.६.७.८-भ—आप्तुमैच्छं । ३. त४.५—प्रचोदयति । ४. त-भ—'तमेकेषं ' नास्ति । ५. त१.२.३.६.७.८-भ१.२.४.८—कृत्वा वा । ६. त-भ—कर्तव्यविभाग॰ । ७. त-भ—जन्यते । ८. त-भ—'कर्म ... ... शरीरात्मकं ' नास्ति ।

हे कुमार कृषे यं शरीरात्मकं रथमधिष्ठितं प्रावर्तयः संसारे प्रवर्तितवानसि मेधाविनां मध्ये तं रथमनु साम। उपलक्षणमेतत्। ऋक्सामादिसाध्यं स्तोत्रं नावि नौवत्सारथिभ्यां वाधि वेदात्मिकायां समाहितं सम्यक्प्रतिपाद्यत्वेन हितं कर्म च इतः अस्माल्लोकात्[1] प्रावर्तत प्रवृत्तमभूत्। इत्थमात्मस्वरूपापरिज्ञानेन शरीरबन्धनं तेन[2] कर्तव्यं व्यवहारजातं चोक्तम्। अथ तु सत्यज्ञानादिस्वरूपमकर्तारं परमात्मानं यदि स्वात्मतया साक्षात्करोति तदोक्तं[3] न संभवतीत्यभिप्रायः॥

कः कुमारमजनयद्रथं को निरवर्तयत्।
कः स्वित्तदद्य नो ब्रूयादनुदेयी यथाभवत्॥ ५॥

कः। कुमारम्। अजनयत्। रथम्। कः। निः। अवर्तयत्।
कः। स्वित्। तत्। अद्य। नः। ब्रूयात्। अनुऽदेयी। यथा। अभवत्॥ ५॥

√कः पुरुषः इमं √कुमारमजनयत्। अधिक्षेपे किंशब्दः। ईदृशं[4] बालं यमसमीपं प्रहिण्वन् कथं पिता समीचीनः स्यात्। तत्तावदास्ताम्। √कः वा पुरुषोऽस्य बालस्य यमसमीपं प्रतिगमनाय तं √रथं √निरवर्तयत् निर्वर्तितवान्[5]। सोऽपि मूर्ख इत्यर्थः। √यथा येन प्रकारेणायं कुमारः √अनुदेयी अनुदातव्यः √अभवत् भवति √तत् तदनुगुणं वचनमुपायकथनम् √अद्य अस्मिन् काले √नः अस्माकं √कः √स्वित् को नाम √ब्रूयात् अभिदध्यात्। प्रथमं यमसमीपं गत्वा पश्चात् ततो निर्गमनोपायं ब्रुवन्नपि न प्राज्ञ इत्यर्थः। अथवा। कुमाराख्य ऋषिरात्मनः सार्वात्म्यमवगच्छन् स्वव्यतिरिक्तस्यान्यस्यासंभवं किंशब्देनाक्षेपवाचिना दर्शयति। कुमारं मां कः पिताजनयत्। न कोऽपि। 'अजो नित्यः शाश्वतः' (क. उ. २.१८) इति श्रुत्युक्तरूपोऽहं भवामि। कश्च शरीरात्मकं रथं निरवर्तयत् निर्वर्तयति। मद्व्यतिरिक्तस्य निर्वर्तयितुरभावात् तथा निर्वर्त्यस्यान्यस्यासंभवाच्च। अद्य अस्मिन् काले सार्वात्म्यानुभवदशायां तं तं प्रकारं कः स्वित् को नाम नोऽस्माकं ब्रूयात् यथा येन प्रकारेण अनुदेयी अनुदातव्या मद्व्यतिरिक्तान्यपदार्थसत्ता अभवत् भवति। स प्रकारोऽपि दुर्वचन इत्यर्थः॥

यथाभवदनुदेयी ततो अग्रमजायत।
पुरस्ताद्बुध्न आततः पश्चान्निरयणं कृतम्॥ ६॥

यथा। अभवत्। अनुऽदेयी। ततः। अग्रम्। अजायत।
पुरस्तात्। बुध्नः। आऽततः। पश्चात्। निःऽअयनम्। कृतम्॥ ६॥

√अनुदेयी अनुदातव्यः √यथा येन प्रकारेण पितरमनुलक्ष्य अयं कुमारो यमेन दत्तः √अभवत् भवति तथा √ततः तस्माद्वाजश्रवसात् पितुः √अग्रं यमसमीपं गच्छेति वचनस्याग्रतो वर्तमानं नचिकेतसा यमेन सह वदितव्यं 'तं वै प्रवसन्तं गन्तासीति होवाच' (तै. ब्रा. ३.११.८.२) इत्यादिकं ब्राह्मणान्तरोक्तम् √अजायत प्रादुरभवत्। पितोपदिष्टवानित्यर्थः। √पुरस्तात् ततः पूर्वं √बुध्नः उक्तस्याग्रस्य मूलभूतं यमस्य गृहं प्रतिगच्छ इति वचनम् √आततः अतिविस्तृतमासीत्। अतः तदशक्यपरिहारमिति √पश्चात् क्रोधं परित्यज्य √निरयणं तस्माद्यमान्निर्गमनोपायं √कृतं पित्राचरितम्। यद्वा। अनुदेयी आत्मानमनु दातव्यात्मस्वरूपव्यतिरिक्तान्यपदार्थसत्ता यथाभवत् भवति तदनुगुणं

१. ग-त-भ-अस्मिन् लोके। २. त-भ-च तेन। ३. ग-त१.२.३.५.६.७.८-भ-तस्योक्तं; त४-तदस्योक्तं। ४. त-भ-कीदृशं। ५. त-भ-निवर्तितवान्।

ततस्तस्मान्मायाविशिष्टादात्मनोऽग्रे स्रष्टव्यस्य विकारजातस्याद्यं मनस्तत्त्वं सिसृक्षाकारणमजायत उदपद्यत। पुरस्तात् सृष्टेः प्रागवस्थायां बुध्नो मूलमव्याकृतं मायात्मकं कारणमेवाततः। आ समन्तात् ततं विस्तृतमासीत्। पश्चात्तमस उत्पत्त्यनन्तरं निरयणं तद्गतानां कार्याणां तस्मात् कारणान्निर्गमनं घटपटादिभेदेन स्वरूपालम्भनं[1] कृतम्। ब्रह्मणा निर्मितम्। तथा मृद्विकारो घटादिर्मृदोऽन्यो न भवति। आदित्यानुग्रहात् ब्रह्मभावं प्राप्तस्य मम विकारः प्रपञ्चो मदन्यो न भवतीति व्यतिरिक्तस्य[2] पित्रादेराक्षेपः पूर्वोक्तः समर्थितः॥

इदं यमस्य सादनं देवमानं यदुच्यते।
इयमस्य धम्यते नाळीरयं गीर्भिः परिष्कृतः॥ ७॥

इदम्। यमस्य। सदनम्। देवऽमानम्। यत्। उच्यते।
इयम्। अस्य। धम्यते। नाळीः। अयम्। गीःऽभिः। परिऽकृतः॥ ७॥

इदं यमस्य नियन्तुरादित्यस्य वैवस्वतस्य वा सदनं स्थानम्। छान्दसः सांहितिको दीर्घः। यत् सदनं देवमानं देवैर्निर्मितमिति उच्यते सर्वत्र अभिधीयते। यद्वा। देवानां रश्मीनां निर्माणसाधनमिति गीयते। अस्य यमस्य प्रीणनाय इयं नाळीः वाद्यविशेषो[3] वेणुः धम्यते वाद्यते। यद्वा। नाळीति वाङ्नाम। इयं स्तुतिरूपा वागस्य प्रीणनाय धम्यते उच्चार्यते। एवं सति अयं यमः गीर्भिः स्तुतिभिः परिष्कृतः अलंकृतोऽभूत्। 'संपर्युपेभ्यः॰' इति सुडागमः। 'परिनिविभ्यः॰' इति षत्वम्। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्॥ ॥ २३॥

'केशी' इति सप्तर्चमष्टमं सूक्तमग्निसूर्यवायुदेवताकम्[4]। वातरशनपुत्रा जूतिवातजूतिप्रभृतयः प्रत्यृचं क्रमेणर्षयः। तथा चानुक्रान्तं—'केशी मुनयो वातरशना जूतिर्वातजूतिर्विप्रजूतिर्वृषाणकः करिक्रत एतश ऋष्यशृङ्गश्चैकर्चाः कैशिनम्' इति। गतो विनियोगः॥

केश्य१ग्निं केशी विषं केशी बिभर्ति रोदसी।
केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते॥ १॥

केशी। अग्निम्। केशी। विषम्। केशी। बिभर्ति। रोदसी इति।
केशी। विश्वम्। स्वः। दृशे। केशी। इदम्। ज्योतिः। उच्यते॥ १॥

केशाः केशस्थानीया रश्मयः। तद्वन्तः केशिनोऽग्निर्वायुः सूर्यश्च। एते त्रयः स्तूयन्ते। केशी रश्मिभिर्युक्तः प्रकाशमानो वा सूर्यः अग्निं बिभर्ति। हविर्भिः पोषयति धारयति वा। कालविशेषे ह्यग्नेः पोषणाय होमः। स च कालविशेषः सूर्यगत्यधीन इति सूर्य एव बिभर्तीत्युच्यते। तथा विषम्। उदकनामैतत्। उदकं रश्मिभिर्घर्मसमय आहृतमयमेव केशी बिभर्ति विसृष्टुम्। तथा रोदसी द्यावापृथिव्यौ अपि अयमेव बिभर्ति। अपि च विश्वं व्याप्तं स्वः सर्वं जगत् दृशे दर्शनाय अयमेव केशी करोति। प्रकाशयतीत्यर्थः। इत्थंमहानुभावः केशी को नामेत्यत आह। इदं दृश्यमानं मण्डलस्थं यत् ज्योतिः इदम् एव केशी इति उच्यते। नान्य इत्यर्थः॥

मुनयो वातरशनाः पिशङ्गा वसते मला।
वातस्यानु ध्राजिं यन्ति यद्देवासो अविक्षत॥ २॥

---

१. त-भ—रूपलंभनं। २. ग—मद्व्यतिरिक्तस्य। ३. त-भ—विश्वाविशेषो। ४. त४.५—सूक्तमनुष्टुभमग्नि॰।

मुनयः । वातऽरशनाः । पिशङ्गा । वसते । मला ।
वातस्य । अनु । ध्राजिम् । यन्ति । यत् । देवासः । अविक्षत ॥ २ ॥

ᵛवातरशनाः वातरशनस्य पुत्राः ᵛमुनयः अतीन्द्रियार्थदर्शिनो जूतिवातजूतिप्रभृतयः ᵛपिशङ्गा पिशङ्गानि कपिलवर्णानि ᵛमला मलिनानि वल्कलरूपाणि वासांसि ᵛवसते आच्छादयन्ति । 'वस आच्छादने'। आदादिकः । इदशास्ते ᵛयत् यदा ᵛदेवासः देवाः तपसो महिम्ना दीप्यमानाः सन्तः ᵛअविक्षत देवतास्वरूपं प्राविशन् । विशेर्लुङि शल इगुपधादनिटः क्सः । व्यत्ययेनात्मनेपदम् । तदा ते ᵛवातस्य वायोः ᵛध्राजिं गतिम् ᵛअनु ᵛयन्ति अनुगच्छन्ति । प्राणोपासनया प्राणरूपिणो वायुभावं प्रपन्ना इत्यर्थः ॥

**उन्मदिता मौनेयेन वाताँ आ तस्थिमा वयम् ।**
**शरीरेदस्माकं यूयं मर्तासो अभि पश्यथ ॥ ३ ॥**

उत्ऽमदिताः । मौनेयेन । वातान् । आ । तस्थिम । वयम् ।
शरीरा । इत् । अस्माकम् । यूयम् । मर्तासः । अभि । पश्यथ ॥ ३ ॥

ᵛमौनेयेन मुनिभावेन लौकिकसर्वव्यवहारविसर्जनेन[1] ᵛउन्मदिताः उन्मत्ता उन्मत्तवदाचरन्तः । यद्वा । उत्कृष्टं मदं हर्षं प्राप्ताः । ᵛवयं ᵛवातान् वायूनस्माभिरुपास्यमानान् ᵛआ ᵛतस्थिम आस्थितवन्तः । हे ᵛमर्तासः मनुष्याः ᵛअस्माकं ᵛशरीरेत् शरीराण्येव ᵛयूयं केवलम् ᵛअभि ᵛपश्यथ । नास्मान्[2] । यतो वयं नीरूपेण वायुना सायुज्यं प्राप्ताः ॥

**अन्तरिक्षेण पतति विश्वा रूपावचाकशत् ।**
**मुनिर्देवस्यदेवस्य सौकृत्याय सखा हितः ॥ ४ ॥**

अन्तरिक्षेण । पतति । विश्वा । रूपा । अवऽचाकशत् ।
मुनिः । देवस्यऽदेवस्य । सौकृत्याय । सखा । हितः ॥ ४ ॥

ᵛमुनिः अस्यर्चो द्रष्टा वृषाणक ऋषिर्वातरूपतां सूर्यात्मतां वा तत्तदुपासनया प्राप्तः सन् ᵛअन्तरिक्षेण आकाशेन ᵛपतति गच्छति । किं कुर्वन् । ᵛविश्वा विश्वानि सर्वाणि रूपाणि रूप्यमाणानि पदार्थजातानि ᵛअवचाकशत् अभिपश्यन् स्वतेजसा दर्शयन् । तथा ᵛदेवस्यदेवस्य । 'नित्यवीप्सयोः' इति द्विर्वचनम् । 'अनुदात्तं च' इति परस्याम्रेडितस्यानुदात्तत्वम् । सर्वस्यापि देवस्य ᵛसखा सखिभूतः अत एव ᵛसौकृत्याय । सुष्ठु देवानुद्दिश्य क्रियमाणं यागात्मकं कर्म सुकृतम् । तस्य भावाय सम्यगनुष्ठापनाय ᵛहितः निहितः स्थापितो भवति ॥

**वातस्याश्वो वायोः सखाथो देवेषितो मुनिः ।**
**उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः ॥ ५ ॥**

वातस्य । अश्वः । वायोः । सखा । अथो इति । देवऽइषितः । मुनिः ।
उभौ । समुद्रौ । आ । क्षेति । यः । च । पूर्वः । उत । अपरः ॥ ५ ॥

---

१. त-भ—लौकिकस्य सर्व° । २. त-भ-मु—नोस्मान् ।

ᵛवातस्य वायोर्गतिरिव ᵛअश्वः व्याप्तः। यद्वा। वायोः अशिता भोक्ता। वायुरेव तस्याहार इत्यर्थः। अत एव ᵛवायोः ᵛसखा मित्रभूतः ᵛअथो अपि च ᵛदेवेषितः देवेन द्योतमानेन वायुना सूर्येण वा इषितः प्राप्तः[1]। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। ईदृशो ᵛमुनिः करिक्रताख्य ऋषिरुक्तप्रकारेण वायुरूपः सूर्यरूपो वा सन् ᵛउभौ ᵛसमुद्रौ उदधी ᵛआ ᵛक्षेति अभिगच्छति। 'क्षि निवासगत्योः'। छान्दसो विकरणस्य लुक्। कौ तौ समुद्रौ। ᵛयश्च ᵛपूर्वः समुद्रः। उतशब्दश्चार्थे। यश्च ᵛअपरः समुद्रः॥

अप्सरसां गन्धर्वाणां मृगाणां चरणे चरन्।
केशी केतस्य विद्वान्त्सखा स्वादुर्मदिन्तमः॥ ६॥

अप्सरसाम्। गन्धर्वाणाम्। मृगाणाम्। चरणे। चरन्।
केशी। केतस्य। विद्वान्। सखा। स्वादुः। मदिन्ऽतमः॥ ६॥

ᵛअप्सरसां देवस्त्रीणां ᵛगन्धर्वाणां ᵛचरणे संचारभूते दिव्यन्तरिक्षे च तथा ᵛमृगाणां सिंहादीनां संचारस्थले पृथिव्यां ᵛचरन् व्याप्य संचरन् ᵛकेशी अग्निर्वायुः सूर्यो वा ᵛकेतस्य ज्ञातव्यस्य सर्वस्यार्थजातस्य ᵛविद्वान् यद्वा ज्ञातव्यस्यास्यर्थैरेतशस्य ᵛसखा विद्वान् अविशेषात् सर्वं जानन् ᵛस्वादुः स्वादयिता[2] रसयिता सर्वस्य रसस्योत्पादकः अत एव ᵛमदिन्तमः मादयितृतमो भवति। 'नाद्घस्य' इति नुडागमः॥

वायुरस्मा उपामन्थत्पिनष्टि स्मा कुनंनमा।
केशी विषस्य पात्रेण यद्रुद्रेणापिबत्सह॥ ७॥

वायुः। अस्मै। उप। अमन्थत्। पिनष्टि। स्म। कुनंनमा।
केशी। विषस्य। पात्रेण। यत्। रुद्रेण। अपिबत्। सह॥ ७॥

ᵛकेशी रश्मिभिर्युक्तः सूर्यः ᵛरुद्रेण रुद्रपुत्रेण मरुद्गणेन। यद्वा। 'रुद्रो वा एष यदग्निः' (तै. सं. ५.४.३.१) इति श्रवणाद्रुद्रो वैद्युताग्निः। तेन ᵛसह वर्तमानो ᵛविषस्य। उदकनामैतत्। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। विषमुदकं ᵛपात्रेण पानसाधनेन रश्मिजालेन ᵛयत् यदा[3] ᵛअपिबत् पिबति तदा ᵛअस्मै केशिने ᵛ वायुः ᵛउपामन्थत्। भूगतं सर्वं रसमुपमथ्नाति। यद्वा। यदापिबत् पीतवान् भवति तदा सूर्यमण्डले घनीभूतमस्य तदुदकं वायुरुपमथ्नाति। मन्थनेन वैद्युताग्निनालोडयति। तथा ᵛकुनंनमा कुत्सितमपि भृशं नमयित्री स्वयं नमयितुमशक्या स्वतन्त्रा माध्यमिका वाक् ᵛपिनष्टि ᵛस्म। यथाधस्तात् स्रवति तथा चूर्णीकरोति। स्मेति प्रसिद्धौ। कुपूर्वान्नमयतेः पचाद्यचि 'यङोऽचि च' इति यङो लुक्। थाथादिनोत्तरपदान्तोदात्तत्वम्॥ ॥ २४॥

'उत देवाः' इति सप्तर्चं नवमं सूक्तमानुष्टुभं वैश्वदेवं भरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठा इति क्रमेण प्रत्यृचमृषयः। तथा चानुक्रान्तम्—'उत देवाः सप्तर्षय एकर्चा वैश्वदेवम्' इति। गतो विनियोगः॥

उत देवा अवहितं देवा उन्नयथा पुनः। उतागश्चक्रुषं देवा देवा जीवयथा पुनः॥१॥

---

१. त४.५–व्याप्तः। २. ग–स्वदयिता। ३. त-भ-मु–'यदा' नास्ति।

उत । देवाः । अवऽहितम् । देवाः । उत् । नयथ । पुनरिति । उत । आगः ।
चक्रुषम् । देवाः । देवाः । जीवयथ । पुनरिति ॥ १ ॥

उत[1] अपि च हे देवाः अवहितम् उन्नयथ[1]। उत अपि च हे देवाः आगः अपराधं चक्रुषं कृतवन्तं मां तस्मादागसो रक्षत। हे देवाः रक्षित्वा च पुनः पश्चात् जीवयथ चिरजीविनं कुरुत ॥

**द्वाविमौ वातौ वात आ सिन्धोरा परावतः ।**
**दक्षं ते अन्य आ वातु परान्यो वातु यद्रपः ॥ २ ॥**

द्वौ । इमौ । वातौ । वातः । आ । सिन्धोः । आ । पराऽवतः ।
दक्षम् । ते । अन्यः । आ । वातु । परा । अन्यः । वातु । यत् । रपः ॥ २ ॥

इमौ दृश्यमानौ द्वौ वातौ पुरोवातः पश्चाद्वातश्च आ सिन्धोः आ समुद्रात्। मर्यादायामाकारः। यद्वा आ परावतः समुद्रादपि यो दूरदेशः तं देशमवधीकृत्य वातः गच्छतः। 'वा गतिगन्धनयोः'। आदादिकः। तयोर्वातयोः अन्यः एको हे स्तोतः ते तव दक्षं बलम् आ वातु आगमयतु। अन्यः च त्वदीयं यद्रपः पापं तत् परा वातु परागमयतु ॥

**आ वात वाहि भेषजं वि वात वाहि यद्रपः ।**
**त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥ ३ ॥**

आ । वात । वाहि । भेषजम् । वि । वात । वाहि । यत् । रपः ।
त्वम् । हि । विश्वऽभेषजः । देवानाम् । दूतः । ईयसे ॥ ३ ॥

हे वात भेषजं सुखं व्याध्युपशमनमौषधं वा आ वाहि आगमय। हे वात यद्रपः अस्मदीयं पापं तत् वि वाहि विगमय। अस्मत्तो विश्लेषय। त्वं हि खलु देवानां दूतः विश्वभेषजः। विश्वानि भेषजानि यस्मिन्। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्। ईदृशश्च सन् ईयसे सततं गच्छसि ॥ 'ईङ् गतौ'। दैवादिकः। श्यनो ञित्वात् 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम्। 'हि च' इति निघातप्रतिषेधः ॥

**आ त्वागमं शंतातिभिरथो अरिष्टतातिभिः ।**
**दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते ॥ ४ ॥**

आ । त्वा । अगमम् । शंतातिऽभिः । अथो इति । अरिष्टतातिऽभिः ।
दक्षम् । ते । भद्रम् । आ । अभार्षम् । परा । यक्ष्मम् । सुवामि । ते ॥ ४ ॥

१. ग–उतापि च हे देवाः अवहितमधोनिहितं पुनश्चोन्नयथ दारिद्र्यपीडितमाढ्यं कुरुथ; त१.३.४.५.६.८–'उत ... ... उन्नयथ' नास्ति; त७–उतापि च हे देवा यूयं अवहितं दारिद्र्येणाधः पातितं मा पश्यतेति शेषः। हे देवाः मां दृष्ट्वा पुनः पश्चात् उन्नयथ उद्धरत उत्कृष्टं स्थानं प्रापयतेत्यर्थः; भ–उतापि च हे देवा अवहितं।

हे स्तोतः <sup>v</sup>त्वा त्वां <sup>v</sup>शंतातिभिः सुखकरैः <sup>v</sup>अथो अपि च <sup>v</sup>अरिष्टतातिभिः अहिंसाकरैश्च रक्षणैः <sup>v</sup>आ <sup>v</sup>अगमम् आगतवानस्मि। 'शिवशमरिष्टस्य करे' (पा. सू. ४. ४. १४३) इत्युभयत्र तातिल्प्रत्ययः। 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम्। अपि च <sup>v</sup>भद्रं कल्याणं <sup>v</sup>ते तव <sup>v</sup>दक्षं बलम् <sup>v</sup>आभार्षम् आहार्षं वायुसकाशादानैषम्। तथा <sup>v</sup>ते तव <sup>v</sup>यक्ष्मं रोगं च[1] <sup>v</sup>परा <sup>v</sup>सुवामि विनाशयामि ॥

त्रायन्तामिह देवास्त्रायतां मरुतां गणः ।
त्रायन्तां विश्वा भूतानि यथायमरपा असत् ॥ ५ ॥

त्रायन्ताम्। इह। देवाः। त्रायताम्। मरुताम्। गणः।
त्रायन्ताम्। विश्वा। भूतानि। यथा। अयम्। अरपाः। असत् ॥ ५ ॥

<sup>v</sup>इह अस्मिन् देशे सर्वे <sup>v</sup>देवाः <sup>v</sup>त्रायन्ताम् अस्मान् पालयन्ताम्। तथा <sup>v</sup>मरुतां <sup>v</sup>गणः संघः स <sup>v</sup>त्रायताम्। <sup>v</sup>विश्वा विश्वानि सर्वाण्यन्यानि च <sup>v</sup>भूतानि भूतजातानि <sup>v</sup>त्रायन्ताम् अस्मान् रक्षन्तु। <sup>v</sup>यथायम् अस्मदीयः शरीरादिः <sup>v</sup>अरपाः <sup>v</sup>असत् पापरहितो भवति तथेत्यर्थः। रप इति पापनाम। नञो बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। अस्तेर्लेट्यडागमः। 'यावद्यथाभ्याम्' (पा. सू. ८. १. ३६) इति निघाताभावः ॥

आप इद्वा उ भेषजीरापो अमीवचातनीः ।
आपः सर्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ॥ ६ ॥

आपः। इत्। वै। ऊँ इति। भेषजीः। आपः। अमीवऽचातनीः।
आपः। सर्वस्य। भेषजीः। ताः। ते। कृण्वन्तु। भेषजम् ॥ ६ ॥

<sup>v</sup>आप <sup>v</sup>इद्वै आप एव खलु <sup>v</sup>भेषजीः भेषजभूताः। स्नानपानादिना सुखहेतवः। यद्वा। ओषधिरूपेण परिणता रोगोपशमनहेतवो भवन्ति। 'केवलमामक°' (पा. सू. ४. १. ३०) इत्यादिना भेषजशब्दात् ङीप्। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। यत एवमतः कारणात् <sup>v</sup>आपः <sup>v</sup>अमीवचातनीः अमीवचातन्यः रोगाणां नाशयित्र्यो भवन्ति। चातयतिर्वधकर्मा। किंच <sup>v</sup>आपः <sup>v</sup>सर्वस्य प्राणिजातस्य <sup>v</sup>भेषजीः भेषजभूता भवन्ति न कतिपयस्य। <sup>v</sup>ताः तथाविधा आपः <sup>v</sup>ते तव <sup>v</sup>भेषजं <sup>v</sup>कृण्वन्तु कुर्वन्तु ॥

हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ।
अनामयित्नुभ्यां त्वा ताभ्यां त्वोप स्पृशामसि ॥ ७ ॥

हस्ताभ्याम्। दशऽशाखाभ्याम्। जिह्वा। वाचः। पुरःऽगवी।
अनामयित्नुऽभ्याम्। त्वा। ताभ्याम्। त्वा। उप। स्पृशामसि ॥ ७ ॥

<sup>v</sup>दशशाखाभ्यां दशाङ्गुलयः शाखाभूता ययोः तादृशाभ्यां प्रजापतेः <sup>v</sup>हस्ताभ्यां सृज्यमाना <sup>v</sup>जिह्वा रसना <sup>v</sup>वाचः शब्दस्य <sup>v</sup>पुरोगवी पुरतो गन्त्री जाता। यत्र यत्र शब्दस्तत्र सर्वत्र तस्य

---

१. त१.२.३.६.७-भ१.४–चा।

शब्दस्योच्चारणाय पुरतो व्याप्रियत इत्यर्थः। ᵛअनामयित्नुभ्यां[1] सम्यगारोग्यहेतुभ्यां ᵛताभ्यां हस्ताभ्यां हे स्तोतः ᵛत्वा त्वाम् ᵛउप ᵛस्पृशामसि उपस्पृशामः। इदन्तो मसिः। ᵛत्वा इति पुनरुक्तिः पादपूरणार्था ॥ ॥ २५ ॥

'तव त्ये' इति षडृचं दशमं सूक्तमुरुनाम्नः पुत्रस्याङ्गाख्यस्यार्षं जागतमैन्द्रम्। तथा चानुक्रान्तं—'तव त्ये षळङ्ग औरवो जागतम्' इति। गतो विनियोगः॥

तव॒ त्य इ॑न्द्र स॒ख्येषु॒ वह्न॑य ऋ॒तं म॑न्वा॒ना व्य॑दर्दिरु॒र्व॒लम्।
यत्रा॑ दश॒स्यन्नु॒षसो॑ रि॒णन्न॒पः कुत्सा॑य॒ मन्म॑न्न॒ह्य॑श्च दं॒सयः॑ ॥ १ ॥

तव॑। त्ये। इ॒न्द्र॒। स॒ख्येषु॑। वह्न॑यः। ऋ॒तम्। म॒न्वा॒नाः। वि। अ॒द॒र्दि॒रुः। व॒लम्।
यत्र॑। द॒श॒स्यन्। उ॒षसः॑। रि॒णन्। अ॒पः। कु॒त्सा॑य। मन्म॑न्। अ॒ह्यः॑। च॒। दं॒सयः॑ ॥ १ ॥

हे ᵛइन्द्र ᵛतव ᵛसख्येषु सखित्वेषु सत्सु ᵛत्ये ते प्रसिद्धाः ᵛवह्नयः वोढारो हविषां स्तुतीनां वा अत एव ᵛऋतं यज्ञं ᵛमन्वानाः अवबुध्यमानाः अङ्गिरसः ᵛवलं गवामपहर्तारमेतत्संज्ञकमसुरं ᵛव्यदर्दिरुः अत्यर्थं व्यदारयन्। 'दॄ विदारणे'। अस्मात् यङ्लुगन्तात् लुङि 'सिजभ्यस्त°' इति झेर्जुः। 'जुसि च' इति गुणः। व्यत्ययेनेत्वम्। अपि च ᵛयत्र यस्मिन् काले ᵛमन्मन् मन्मनि स्तोत्रे सति ᵛकुत्साय महर्षये ᵛउषसः उषःकालान् वृत्रेणावृतत्वात् पूर्वमसत्प्रायांस्तदपनोदनेन ᵛदशस्यन् प्रयच्छन् तथा ᵛअपः वृत्रेणावृतान्युदकानि च ᵛरिणन् तस्मान्निर्गमयन् वर्तसे। 'री गतिरेषणयोः'। क्रैयादिकः। प्वादीनां ह्रस्वत्वम्। तदानीम् ᵛअह्यः अहेर्वृत्रस्य ᵛच ᵛदंसयः कर्माणि वितथान्यासन्नित्यर्थः॥

अवा॑सृजः प्र॒स्वः॑ श्व॒ञ्चयो॑ गि॒रीनुदा॑ज उ॒स्रा अपि॑बो॒ मधु॑ प्रि॒यम्।
अव॑र्धयो व॒निनो॑ अस्य॒ दंस॑सा शु॒शोच॒ सूर्य॑ ऋ॒तजा॑तया गि॒रा ॥ २ ॥

अव॑। अ॒सृ॒जः॒। प्र॒ऽस्वः॑। श्व॒ञ्चयः॑। गि॒रीन्। उत्। आ॒जः॒। उ॒स्राः। अपि॑बः। मधु॑। प्रि॒यम्।
अव॑र्धयः। व॒निनः॑। अ॒स्य॒। दंस॑सा। शु॒शोच॑। सूर्यः॑। ऋ॒तऽजा॑तया। गि॒रा ॥ २ ॥

हे इन्द्र ᵛप्रस्वः। प्रसूतिर्जन्म। तद्धेतुभूता अपः ᵛअवासृजः। आवरकान्मेघादधः पातितवानसि। तथा ᵛगिरीन्-पर्वतान् बलेन गोमतो बिलस्य पिधानाय निहितान् ᵛश्वञ्चयः अगमयः। अभैत्सीरित्यर्थः। 'श्वचि गतौ'। अस्माण्ण्यन्ताल्लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः। 'समानवाक्ये[2] निघातयुष्मदस्मदादेशा वक्तव्याः' (पा. सू. ८. १. १८. ५) इति वचनात् पूर्वपदस्यासमानवाक्यगतत्वेनास्य 'तिङ्ङतिङः' इति निघाताभावः[2]। तथा बलासुरेण बिले निहिता ᵛउस्राः गाः पर्वतभेदनानन्तरम् ᵛउदाजः उदगमयः। ततः पयोदध्याज्यादिकं ᵛप्रियम् अनुकूलं ᵛमधु मधुरं हविः ᵛअपिबः पीतवानसि। यद्वा। श्रयणसाधनासु तासु गोष्वागतासु यजमानैः प्रियमभीष्टं मधु सोमात्मकमपिबः पिबसि। तथा ᵛवनिनः वनसंबद्धान् वृक्षान्। यद्वा। वनमित्युदकनाम। तद्युक्तान् समुद्रान्। ᵛअवर्धयः वृष्टिप्रदानेन वर्धयसि। ᵛऋतजातया। ऋतं यज्ञम्। तदर्थं जातं जन्म यस्याः तया ᵛगिरा वेदात्मिकया वाचा स्तूयमानस्य ᵛअस्य इन्द्रस्य ᵛदंससा कर्मणा

---

१. भ२–अनामयित्नुभ्यां अनामयहेतुभ्यां। २. त१.२.३.६.७.८-भ१.४.७.८–'समानवाक्ये ...... निघाताभावः' नास्ति।

आवृण्वतो वृत्रादेरपि नोदनात्मकेन सूर्यः शुशोच नभसि प्रदिदीपे। यद्वा। ऋतजातया गिरेति सूर्यस्यैव विशेषणम्। त्रयीरूपया वाचा प्रदीप्यत इत्यर्थः। 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' (तै. ब्रा. ३. १२. ९. १) इत्यादिकं तैत्तिरीयकमन्त्रानुसंधेयम्॥ शुशोचेत्यस्य पदात्परत्वेऽपि पादादित्वादपादादाविति पर्युदासस्यानुवृत्तेर्निघाताभावः॥

वि सूर्यो मध्ये अमुचद्रथं दिवो विदद्दासाय प्रतिमानमार्यः।
दृळ्हानि पिप्रोरसुरस्य मायिन इन्द्रो व्यास्यच्चकृवाँ ऋजिश्वना॥ ३॥

वि। सूर्यः। मध्ये। अमुचत्। रथम्। दिवः। विदत्। दासाय। प्रतिऽमानम्। आर्यः।
दृळ्हानि। पिप्रोः। असुरस्य। मायिनः। इन्द्रः। वि। आस्यत्। चकृऽवान्। ऋजिश्वना॥३॥

दिवः द्युलोकस्य मध्ये सूर्यः आदित्यः रथं प्रस्थानाय वि अमुचत् विमुक्तवान्। मुचेर्लुङि लृदित्वात् च्लेरङादेशः। कदेति चेत् उच्यते। यदा आर्यः अभिज्ञः इन्द्रः दासाय उपक्षपयित्रे वृत्रादये प्रतिमानं प्रतिकृतिं प्रतीकारं विदत् वेत्ति जानाति। अलभत वा। अपि च मायिनः मायाविनः॥ मायाशब्दस्य व्रीह्यादिषु पाठात् 'व्रीह्यादिभ्यश्च' इतीनिप्रत्ययः॥ पिप्रोः एतन्नाम्नः असुरस्य दृळ्हानि दृढानि स्थिराणि पुराणि बलानि वा ऋजिश्वना राजर्षिणा चकृवान् सख्यं कुर्वन् इन्द्रः व्यास्यत् व्यक्षिपत्। विविधमाक्षिप्तवान्। व्यनीनशदित्यर्थः। 'असु क्षेपणे'॥

अनाधृष्टानि धृषितो व्यास्यन्निधीँरदेवाँ अमृणदयास्यः।
मासेव सूर्यो वसु पुर्यमा ददे गृणानः शत्रूँरशृणाद्विरुक्मता॥ ४॥

अनाधृष्टानि। धृषितः। वि। आस्यत्। निऽधीन्। अदेवान्। अमृणत्। अयास्यः।
मासाऽइव। सूर्यः। वसु। पुर्यम्। आ। ददे। गृणानः। शत्रून्। अशृणात्। विरुक्मता॥४॥

धृषितः शत्रूणां धर्षयिता प्रगल्भ इन्द्रः अनाधृष्टानि इतः पूर्वं शत्रुभिरप्रधृष्टानि अबाधितान्यसुरबलानि व्यास्यत् व्याक्षिप्तवान्। तथा अयास्यः अयासनीयश्चालयितुमशक्यः। यद्वा। अयास्योऽङ्गिराः। स्तोतृवाचिना शब्देन स्तुत्यो लक्ष्यते। अयास्येनर्षिणा स्तुत्य इन्द्रः निधीन् असुरैर्निहितान् धनसमूहान्। यद्वा। निधातृभितरां बलानां धारयितॄन् अदेवान् देवविरोधिनोऽसुरान् अमृणत् अहिंसीत्। 'मृण हिंसायाम्'। तौदादिकः। अपि च सूर्यः मासेव मासेनेव। 'पद्दन्°' इत्यादिना मासशब्दस्य मास्भावः। स यथा मासविशेषेण भौमान् रसानादत्ते तथा पुर्यम् असुराणां पुरि भवम्। 'भवे छन्दसि' इति यत्। 'हलि च' इति दीर्घस्य 'न भकुर्छुराम्' (पा. सू. ८. २. ७९) इति प्रतिषेधः। 'यतोऽनावः' इत्याद्युदात्तत्वम्। ईदृशं वसु धनम् आ ददे आदत्ते स्म॥ 'आङो दोऽनास्यविहरणे' इत्यात्मनेपदम्। तथा गृणानः स्तोतृभिः स्तूयमानः सन्॥ व्यत्ययेन कर्मणि कर्तृप्रत्ययः॥ शत्रून् शातयितॄनसुरान् विरुक्मता विरोचमानेन वज्रेण अशृणात् अहिंसीत्॥

अयुद्धसेनो विभ्वा विभिन्दता दाशद्वृत्रहा तुज्यानि तेजते।
इन्द्रस्य वज्रादबिभेदभिश्नथः प्राक्रामच्छुन्ध्यूरजहादुषा अनः॥ ५॥

अयुद्धऽसेनः। विऽभ्वा। विऽभिन्दता। दाशत्। वृत्रऽहा। तुज्यानि। तेजते।
इन्द्रस्य। वज्रात्। अबिभेत्। अभिऽश्नथः। प्र। अक्रामत्। शुन्ध्यूः। अजहात्। उषाः। अनः॥५॥

ᵛविभ्वा विभुना व्याप्तेन ᵛविभिन्दता विदारयता एवंविधेनापि परकीयबलेन ᵛअयुद्धसेनः अप्रहतसेनः। यद्वा। विभ्वा विभुर्व्याप्तो विभिन्दता शत्रुबलानि विदारयता वज्रेण। ᵛवृत्रहा वृत्रं हतवान् एवंविध इन्द्रः ᵛदाशत् दाशति। स्तोतृभ्यो धनं प्रयच्छति। 'दाशृ दाने'। लेट्यडागमः। तथा ᵛतुज्यानि प्रेर्याणि शत्रुबलानि ᵛतेजते तनूकरोति अल्पीकरोति। 'तिज निशाने'। यद्वा। शत्रून् प्रति प्रेर्याण्यायुधानि तेजते निश्यति तीक्ष्णीकरोति। ईदृशस्य ᵛइन्द्रस्य ᵛअभिश्नथः अभितो हिंसकात् ᵛवज्रात् सर्वं शत्रुजातम् ᵛअबिभेत् भीतिं प्राप्नोत्। एवमसुरेष्विन्द्रेण निरस्तेषु ᵛशुन्ध्यूः शोधयितादित्यः ᵛप्राक्रामत् जगत्प्रकाशनाय गन्तुं प्रक्रान्तवान्। ᵛउषाः उषोदेवता च ᵛअनः स्वकीयं शकटं रथम् ᵛअजहात् गन्तुं पर्यत्यजत्। 'ओहाक् त्यागे'॥

एता त्या ते श्रुत्यानि केवला यदेक एकमकृणोरयज्ञम्।
मासां विधानमदधा अधि द्यवि त्वया विभिन्नं भरति प्रधिं पिता॥ ६॥

एता। त्या। ते। श्रुत्यानि। केवला। यत्। एकः। एकम्। अकृणोः। अयज्ञम्।
मासाम्। विऽधानम्। अदधाः। अधि। द्यवि। त्वया। विऽभिन्नम्। भरति। प्रऽधिम्। पिता॥ ६॥

हे इन्द्र ᵛत्या तानि ᵛते तव त्वदीयानि वीर्यकर्माणि ᵛएता एतान्येव ᵛकेवला केवलानि ᵛश्रुत्यानि श्रोतव्यानि स्तुत्यर्हाणि[1]। नान्यदीयानि। कानि पुनस्तानि। ᵛएकः असहायस्त्वम् ᵛएकं[2] प्रधानभूतम् ᵛअयज्ञं यज्ञरहितमसुरम् ᵛअकृणोः अहिंसीरिति ᵛयत् एतदेकं कर्म॥ 'कृवि हिंसाकरणयोश्च'। अत्र हिंसार्थः। इदित्त्वान्नुम्। 'धिन्विकृण्व्योरच' इत्युप्रत्ययोऽकारान्तादेशश्च। तस्य[3] लोपे[3] सति स्थानिवद्भावाल्लघूपधगुणाभावः॥ तथा ᵛमासां मासानाम्॥ 'पद्दन्°' इत्यादिना मासशब्दस्य मास्भावः। 'उडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम्॥ मासानां ᵛविधानं विधातारं कर्तारं सूर्यम् ᵛअधि ᵛद्यवि द्युलोक उपरि ᵛअदधाः अधारयः॥ विपूर्वात् दधातेः 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट्॥ इदमपरं कर्म। तथा ᵛपिता पालको द्युलोकः ᵛविभिन्नं विदारितं वृत्राद्विभक्तं ᵛप्रधिं रथचक्रस्य पार्श्वम्। पार्श्वफलके प्रधी इत्युच्येते। ईदृशं सूर्यरथसंबन्धिनं प्रधिमन्यैर्धारयितुमशक्यं ᵛत्वया एव ᵛभरति धारयति। इदमपरं कर्म। एतत्प्रभृतीनि त्वया कृतानि कर्माणि परेषामसाधारणानि सर्वदा स्तोतव्यानीत्यर्थः॥ ॥ २६॥

'सूर्यरश्मिः' इति षडृचमेकादशं सूक्तं त्रैष्टुभम्। विश्वावसुर्नाम गन्धर्व ऋषिः। स च पूर्वेण तृचेन सवितारं स्तुतवान् उत्तरेण स्वात्मानम्। अतः प्रथमतृचस्य सविता देवता द्वितीयस्य गन्धर्वः। तथा चानुक्रान्तं—'सूर्यरश्मिर्देवगन्धर्वो विश्वावसुरात्मानमस्तौत् पूर्वार्धे[4] सवितारम्' इति। गतो विनियोगः॥

सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ अजस्रम्।
तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन्विश्वा भुवनानि गोपाः॥ १॥

सूर्यऽरश्मिः। हरिऽकेशः। पुरस्तात्। सविता। ज्योतिः। उत्। अयान्। अजस्रम्।
तस्य। पूषा। प्रऽसवे। याति। विद्वान्। सम्ऽपश्यन्। विश्वा। भुवनानि। गोपाः॥ १॥

---

१. त-भ-स्तुत्याहाणि। २. त-भ१.२.४.८-एवं। ३. ग-त४.५-तस्यातो लोपे; 'त१.२.३.६.७.८-भ२.८-तस्य योगे; भ१-तस्यायोपे; भ४-तस्याद्योपे। ४. अनु.-पूर्वार्धे।

सूर्यरश्मिः । उषसः प्रादुर्भावानन्तरं सूर्यस्योदयात् पूर्वं यः कालस्तस्य कालस्याभिमानी देवः सवितेत्युच्यते । vसूर्यरश्मिः सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य रश्मिरेव रश्मिर्यस्य स तथोक्तः vहरिकेशः हरयो हरणशीला हरितवर्णा वा केशाः केशस्थानीयाः प्रकाशमाना वा दीप्तयो यस्य ईदृशः vसविता सर्वस्य प्रेरको देवः vपुरस्तात् पूर्वस्यां दिशि vअजस्रम्[१] अनवरतं vज्योतिः तेजः vउदयान् उद्याति उद्गमयति ॥ यातेरन्तर्भावितण्यर्थात् छान्दसो लङ् । व्यत्ययेन बहुवचनम् । संहितायां 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः ॥ vतस्य सवितुः vप्रसवे प्रेरणेऽनुज्ञायां सत्यां vविद्वान् जानन् vगोपाः गोपायिता रक्षिता vपूषा पोषको देव आदित्यः vयाति नभसि गच्छति । किं कुर्वन् । vविश्वा विश्वानि सर्वाणि vभुवनानि भूतजातानि vसंपश्यन् सम्यक् प्रकाशयन् ॥

नृचक्षा एष दिवो मध्यं आस्त आपप्रिवान्रोदसी अन्तरिक्षम् ।
स विश्वाचीरभि चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ॥ २ ॥

नृऽचक्षाः । एषः । दिवः । मध्ये । आस्ते । आपप्रिऽवान् । रोदसी इति । अन्तरिक्षम् ।
सः । विश्वाचीः । अभि । चष्टे । घृताचीः । अन्तरा । पूर्वम् । अपरम् । च । केतुम् ॥ २ ॥

vनृचक्षाः नॄन् मनुष्यान् पश्यन् यद्वा नृभिर्नेतृभिः रश्मिभिः प्रकाशमानः vएषः सविता vदिवः[२] द्युलोकस्य vमध्ये vआस्ते निषीदति । किं कुर्वन् । vरोदसी द्यावापृथिव्यौ vअन्तरिक्षं च vआपप्रिवान् स्वतेजसा आपूरयन् ॥ 'प्रा पूरणे'। अस्माच्छान्दसो लिट् । 'क्वसुश्च' इति तस्य क्वसुरादेशः । 'वस्वेकाजाद्धसाम्' इतीडागमः ॥ vसः देवः vविश्वाचीः विश्वमञ्चन्तीः सर्वव्यापिनीः प्राच्यादिमहादिशः vअभि vचष्टे प्रकाशयति । तथा vघृताचीः घृतं दीप्तं रूपमञ्चन्तीः आग्नेय्यादिविदिशश्च प्रकाशयति ॥ अञ्चतेः क्विन्नन्तात् 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । ततो भसंज्ञायाम् 'अचः' इत्यकारलोपे 'चौ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे प्राप्ते 'चौ' इति पूर्वस्याच उदात्तत्वम् ॥ तथा vपूर्वं पूर्वभागं vकेतुं प्रज्ञापनीयम् vअपरं पृष्ठभागं vच vअन्तरा अन्तरालं च अभि चष्टे प्रकाशयति ॥

रायो बुध्नः संगमनो वसूनां विश्वा रूपाभि चष्टे शचीभिः ।
देवइव सविता सत्यधर्मेन्द्रो न तस्थौ समरे धनानाम् ॥ ३ ॥

रायः । बुध्नः । सम्ऽगमनः । वसूनाम् । विश्वा । रूपा । अभि । चष्टे । शचीभिः ।
देवःऽइव । सविता । सत्यऽधर्मा । इन्द्रः । न । तस्थौ । सम्ऽअरे । धनानाम् ॥ ३ ॥

vरायः धनस्य vबुध्नः बन्धको मूलभूतो वा ॥ 'उङिदम्' इत्यादिना रैशब्दाद्विभक्तेरुदात्तत्वम् ॥ तथा vवसूनां धनानां vसंगमनः संगमयिता प्रापयिता ईदृशः सविता vशचीभिः दीप्तिभिः vविश्वा vरूपा सर्वाणि रूपाणि निरूपणीयानि पदार्थजातानि vअभि vचष्टे अभिपश्यति । प्रकाशयति । अपि च vदेवइव अयं vसविता सावको देवः vसत्यधर्मा सत्यमवितथं धर्म धारणं धारणहेतुभूतं कर्म वा यस्य तादृशो भवति । तथा vइन्द्रो vन इन्द्र इव vधनानां vसमरे संग्रामे सम्यक्प्रापणे vतस्थौ । अयं सविता उद्युक्तः संस्तिष्ठति ॥

---

१. त-भ१.२.४.८–अजस्रं जस्रं । २. त१.२.३.६.७–देवः ।

विश्वावसुं सोम गन्धर्वमापो ददृशुषीस्तदृतेना व्यायन् ।
तदन्ववैदिन्द्रो रारहाण आसां परि सूर्यस्य परिधीँरपश्यत् ॥ ४ ॥

विश्वऽवसुम् । सोम । गन्धर्वम् । आपः । ददृशुषीः । तत् । ऋतेन । वि । आयन् ।
तत् । अनुऽअवैत् । इन्द्रः । ररहाणः । आसाम् । परि । सूर्यस्य । परिऽधीन् । अपश्यत् ॥ ४ ॥

हे सोम त्वया सहितं गन्धर्वं गीतरूपां गां शब्दं धारयन्तं विश्वावसुम् एतत्संज्ञं माम् । उत्तरत्र तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यत् आपः वसतीवर्याख्याः ददृशुषीः दृष्टवत्यः ॥ दृशेर्लिटः क्वसुः । 'उगितश्च' इति ङीप् । 'वसोः संप्रसारणम्' इति संप्रसारणम् । जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥ तत् तदानीम् ऋतेन यज्ञेन हेतुना व्यायन् विविधमगच्छन् यष्टृजनाः । तत् गमनम् आसाम् अपां ररहाणः गमयिता इन्द्रः अन्ववैत् अन्वबुध्यत । बुद्ध्वा च कुत्र यज्ञः प्रवृत्त इति सूर्यस्य परिधीन् परितो धीयमानान् प्राच्यादिदिग्भागान् परि अपश्यत् परितो दृष्टवान् ॥

विश्वावसुरभि तन्नो गृणातु दिव्यो गन्धर्वो रजसो विमानः ।
यद्वा घा सत्यमुत यन्न विद्म धियो हिन्वानो धिय इन्नो अव्याः ॥ ५ ॥

विश्वऽवसुः । अभि । तत् । नः । गृणातु । दिव्यः । गन्धर्वः । रजसः । विऽमानः ।
यत् । वा । घ । सत्यम् । उत । यत् । न । विद्म ।
धियः । हिन्वानः । धियः । इत् । नः । अव्याः ॥ ५ ॥

विश्वावसुः गन्धर्वः नः अस्माकं तत् अभि गृणातु अभिमुखं ब्रवीतु ॥ 'गॄ शब्दे' । क्रैयादिकः । प्वादित्वात् ह्रस्वः ॥ कीदृशः । दिव्यः दिवि भवः तथा रजसः उदकस्य विमानः निर्माता । किं पुनस्तत् । यद्वा घ यच्च खलु सत्यम् अवितथं यथार्थफलं कर्मजातम् । उतशब्दश्चार्थे । यत् च न विद्म न जानीमः तदुभयं ब्रवीत्वित्यर्थः ॥ 'ऋचि तुनुघ°' इत्यादिना घशब्दस्य सांहितिको दीर्घः ॥ शिष्टः पादः प्रत्यक्षकृतः । हे विश्वावसो धियः कर्माणि हिन्वानः सोमेन प्रवर्धयन् ॥ 'हि गतौ वृद्धौ च' । यद्वा । धियः स्तुतीर्हिन्वानः प्राप्नुवन् नः अस्माकं धिय इत् कर्माण्येव बुद्धीरेव वा अव्याः रक्ष ॥

सस्निमविन्दच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानाम् ।
प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परि जानादहीनाम् ॥ ६ ॥

सस्निम् । अविन्दत् । चरणे । नदीनाम् । अप । अवृणोत् । दुरः । अश्मऽव्रजानाम् ।
प्र । आसाम् । गन्धर्वः । अमृतानि । वोचत् । इन्द्रः । दक्षम् । परि । जानात् । अहीनाम् ॥ ६ ॥

सस्निम् अद्भिः संस्नातं प्रकर्षेण सर्वस्य जगतः स्नापयितारं मेघम् । 'ष्णा शौचे' । 'आदृगमहन°' इति किन्प्रत्ययः । लिड्वद्भावात् द्विर्वचनम् । नदीनां[1] शब्दकारिणीनामपां चरणे संचरणस्थानेऽन्तरिक्षे अविन्दत् । इन्द्रोऽलभत । लब्ध्वा च अश्मव्रजानाम् । अश्मा व्याप्तो मेघः । तत्र व्रजन्तीनाम् । यद्वा । मेघो व्रजो गोष्ठं निवासस्थानं यासां तादृशीनाम् । अपां

१. ग-भ१.२.८–नदीनां नदनानां; भ७–नदीनां नदमानानां ।

ᵛदुरः द्वाराणि मेघान्निर्गमनप्रदेशान् ᵛअपावृणोत् अपावृतवान् । यद्वा । अश्मसु शिलासु व्रजन्तीनां गच्छन्तीनां व्याप्तगमनानां वा नदीनां गङ्गायमुनादीनां चरणे संचरणे प्रवहणे निमित्तभूते सति तदर्थमिन्द्रः सस्निं मेघमविन्दत् अलभत । लब्ध्वा चान्तर्गतानामपां निर्गमसाधनानि मेघस्य दुरो द्वाराणि अपावृणोत् अपावृतवान् । तथा ᵛआसां नदीनाम् ᵛअमृतानि अमरणसाधकानि[1] उदकानि ᵛगन्धर्वः गोर्वज्रस्य धर्ता विश्वावसुरूपेण वर्तमानः ᵛइन्द्रः ᵛप्र ᵛवोचत् प्राब्रवीति । प्रवोढुमनुजानाति । तथा ᵛदक्षम् । दक्षत्युदकं प्रयच्छतीति दक्षो वर्षणसमर्थो मेघः । तादृशं मेघम् ᵛअहीनां मेघानां मध्ये ᵛपरि ᵛजानात् परितः सर्वतो जानाति । 'ज्ञा अवबोधने' । लेट्याडागमः । 'ज्ञाजनोर्जा' इति जादेशः ॥ ॥ २७ ॥

'अग्ने तव' इति षड्चं द्वादशं सूक्तम् । पावकगुणविशिष्टोऽग्निर्ऋषिः । शुद्धाग्निर्देवता । आद्या विष्टारपङ्क्तिरष्टकद्विद्वादशाष्टकवती । अथ तिस्रः सतोबृहत्यः 'अयुजौ जागतौ' (अनु. ८. ४) इति लक्षणोपेताः । पञ्चम्युपरिष्टाज्ज्योतिः । षष्ठी त्रिष्टुप् । तथा चानुक्रान्तम्—'अग्ने तवाग्निः पावक आग्नेयं विष्टारपङ्क्तिस्तिस्रः सतोबृहत्य उपरिष्टाज्ज्योतिः' इति । महाव्रत आग्निमारुतशस्त्र इदं सूक्तं स्तोत्रियानुरूपार्थम् । तथैव पञ्चमारण्यके सूत्रितम् (ऐ. आ. ५. ३. २)॥

अग्ने॒ तव॒ श्रवो॒ वयो॒ महि॑ भ्राजन्ते अ॒र्चयो॑ विभावसो ।
बृह॑द्भानो॒ शव॑सा॒ वाज॑मु॒क्थ्यं१॒॑ दधा॑सि दा॒शुषे॑ कवे ॥ १ ॥

अग्ने॑ । तव॑ । श्रवः॑ । वयः॑ । महि॑ । भ्राज॑न्ते । अ॒र्चयः॑ । वि॒भा॒व॒सो॒ इति॑ वि॒भाऽव॒सो॒ ।
बृह॑द्भानो॒ इति॒ बृह॑त्ऽभानो । शव॑सा । वाज॑म् । उ॒क्थ्य॑म् । दधा॑सि । दा॒शुषे॑ । क॒वे॒ ॥ १ ॥

हे ᵛअग्ने ᵛतव ᵛवयः अन्नं ᵛश्रवः श्रवणीयं प्रशस्यम् । हविरात्मकस्य तस्य मन्त्रसंस्कृतत्वेन प्रशस्तत्वात् । अन्नेषु मध्ये तवैवान्नं श्रेष्ठमित्यर्थः । हे ᵛविभावसो । विशिष्टा दीप्तिर्विभा । सैव वसु धनं यस्य तादृशाग्ने ᵛअर्चयः दीप्तयः ᵛमहि महत् बहुलं ᵛभ्राजन्ते दीप्यन्ते । 'भ्राजृ दीप्तौ' । अनुदात्तेत् । भौवादिकः । हे ᵛबृहद्भानो प्रौढदीप्ते ᵛकवे क्रान्तदर्शिन्नग्ने एवंमहानुभावस्त्वं ᵛशवसा बलेनोपेतम् ᵛउक्थ्यं प्रशस्यम् । यद्वा । उक्थो यज्ञः । तद्योग्यं ᵛवाजम् अन्नं ᵛदाशुषे हवींषि दत्तवते यजमानाय ᵛदधासि ददासि प्रयच्छसि ॥

पा॒व॒कव॑र्चाः शु॒क्रव॑र्चा॒ अनू॑नवर्चा॒ उदि॑यर्षि भा॒नुना॑ ।
पु॒त्रो मा॒तरा॑ वि॒चर॒न्नुपा॑वसि पृ॒णक्षि॒ रोद॑सी उ॒भे ॥ २ ॥

पा॒व॒कऽव॑र्चाः । शु॒क्रऽव॑र्चाः । अनू॑नऽवर्चाः । उत् । इ॒य॒र्षि॒ । भा॒नुना॑ ।
पु॒त्रः । मा॒तरा॑ । वि॒ऽचर॑न् । उप॑ । अ॒व॒सि॒ । पृ॒णक्षि॑ । रोद॑सी॒ इति॑ । उ॒भे इति॑ ॥ २ ॥

ᵛपावकवर्चाः शोधकदीप्तिः ᵛशुक्रवर्चाः निर्मलतेजस्कः ᵛअनूनवर्चाः संपूर्णतेजस्कः । हे अग्ने ईदृशस्त्वं ᵛभानुना तेजसा ᵛउदियर्षि उद्गच्छसि । 'ऋ सृ गतौ' । जौहोत्यादिकः । 'अर्ति-पिपर्त्योश्च' इत्यभ्यासस्येत्वम् । स त्वं ᵛपुत्रः सन् ᵛमातरा मातृभूते[2] अरण्यौ ᵛविचरन् यागावसाने विशेषेण प्राप्नुवन् ᵛउपावसि उपगतान् यजमानान् रक्षसि । तथा ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛपृणक्षि संयोजयसि । हविषा द्युलोकं वृष्ट्येमं लोकं च पूरयसीत्यर्थः । 'पृची संपर्के' । रौधादिकः[2] ॥

---

१. ग-भ२-॰साधनानि । २. ग—द्यावापृथिव्यौ विचरन् सन् उपावसि उपरक्षसि । उभे रोदसी द्यावापृथिव्यौ पृणक्षि तेजसा पूरयसि । धूमेनामुं लोकं पूरयति वृष्ट्येमं इति वाजसनेयकं ।

ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ ३ ॥

ऊर्जः । नपात् । जातऽवेदः । सुशस्तिऽभिः । मन्दस्व । धीतिऽभिः । हितः ।
त्वे इति । इषः । सम् । दधुः । भूरिऽवर्पसः । चित्रऽऊतयः । वामऽजाताः ॥ ३ ॥

हे ᵛऊर्जो ᵛनपात् ऊर्जः अन्नस्य पार्थिवस्यारण्यादेः पुत्र हे ᵛजातवेदः जातानां वेदितरग्ने ᵛसुशस्तिभिः अस्माभिः क्रियमाणैः ᵛमन्दस्व मोदस्व । तथा ᵛधीतिभिः कर्मभिरस्माभिः क्रियमाणैः अग्निहोत्रादिभिः ᵛहितः सुहितः तृप्तो भव । अपि च ᵛभूरिवर्पसः । वर्प इति रूपनाम । बहुविधरूपाः ᵛचित्रोतयः चित्रा विचित्रोतिस्तृप्तिर्यासां तास्तथोक्ताः ᵛवामजाताः वामं वननीयं जातं जन्म यासां तादृशीः ᵛइषः अन्नानि हविर्लक्षणानि ᵛत्वे त्वय्येव ᵛसं ᵛदधुः संदधति । सम्यग्जुह्वति यजमानाः । यद्वा । भूरिवर्पस इत्यादिकं कर्तृविशेषणम् । तदानीं चित्रोतय इत्यस्य विचित्ररक्षा इति योज्यम् ॥

इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो वि राजसि पृणक्षि सानसिं क्रतुम् ॥ ४ ॥

इरज्यन् । अग्ने । प्रथयस्व । जन्तुऽभिः । अस्मे इति । रायः । अमर्त्य ।
सः । दर्शतस्य । वपुषः । वि । राजसि । पृणक्षि । सानसिम् । क्रतुम् ॥ ४ ॥

हे ᵛअग्ने ᵛजन्तुभिः जातैः शत्रुभिः सह ᵛइरज्यन् ईर्ष्यन् स्पर्धां कुर्वन् । 'इरज् ईर्ष्यायाम्'। कण्ड्वादिः । यद्वा इरज्यतिरैश्वर्यकर्मा । जन्तुभिर्जायमानैरात्मीयैस्तेजोभिः इरज्यन् ईश्वरो भवन् । हे ᵛअमर्त्य मरणरहित ᵛअग्ने ᵛअस्मे अस्माकम् । 'सुपां सुलुक्°' इति षष्ठ्याः शेआदेशः । ᵛरायः धनानि ᵛप्रथयस्व विस्तारय । रयिशब्दाच्छसः स्थाने व्यत्ययेन जस् । शसो वा व्यत्ययेन 'ऊडिदम्°' इति विभक्त्युदात्तत्वं न क्रियते । ᵛसः त्वं ᵛदर्शतस्य दर्शनीयस्य ᵛवपुषः तेजोमयस्य शरीरस्य ᵛवि ᵛराजसि । तृतीयार्थे षष्ठी वा । ईदृशेन शरीरेण विशेषेण दीप्यसे । यद्वा । राजतिरैश्वर्यकर्मा । वपुरिति च रूपनाम । दर्शनीयेन रूपेण वि राजसि विशेषेण ईशिषे । अत एव ᵛसानसिं संभजनीयं ᵛक्रतुं कर्म ᵛपृणक्षि अस्माभिः संपर्चयसि । फलेन वा संयोजयसि ॥

इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं राधसो महः ।
रातिं वामस्य सुभगां महीमिषं दधासि सानसिं रयिम् ॥ ५ ॥

इष्कर्तारम् । अध्वरस्य । प्रऽचेतसम् । क्षयन्तम् । राधसः । महः ।
रातिम् । वामस्य । सुऽभगाम् । महीम् । इषम् । दधासि । सानसिम् । रयिम् ॥ ५ ॥

ᵛइष्कर्तारं निष्कर्तारम् । छान्दसो वर्णलोपः । ᵛअध्वरस्य यज्ञस्य निष्कर्तारं संस्कर्तारं ᵛप्रचेतसं प्रकृष्टज्ञानं ᵛमहः महतः ᵛराधसः धनस्य ᵛक्षयन्तम् ईश्वरम् । क्षयतिरैश्वर्यकर्मा । ᵛवामस्य वननीयस्य धनस्य ᵛरातिं दातारम् । रातेः कर्तरि क्तिच् । ईदृशं त्वां स्तुम इति शेषः । स त्वं ᵛसुभगां सौभाग्योपेतां ᵛमहीं महतीम् ᵛइषम् अन्नं ᵛसानसिं संभक्तव्यं ᵛरयिं धनं च ᵛदधासि स्तोतृभ्यो ददासि ॥

ऋतावानं महिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥ ६ ॥

ऋतऽवानम् । महिषम् । विश्वऽदर्शतम् । अग्निम् । सुम्नाय । दधिरे । पुरः । जनाः ।
श्रुत्ऽकर्णम् । सप्रथःऽतमम् । त्वा । गिरा । दैव्यम् । मानुषा । युगा ॥ ६ ॥

ᐯऋतावानं सत्यवन्तं यज्ञवन्तं वा । 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप् । ᐯमहिषं महान्तं पूज्यं वा ᐯविश्वदर्शतं विश्वैः सर्वैर्दर्शनीयम् । यद्वा विश्वं दर्शनं यस्य । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । ईदृशम् ᐯअग्निं ᐯसुम्नाय सुखार्थं ᐯजनाः ऋत्विग्यजमानरूपाः ᐯपुरः ᐯदधिरे पुरो दधते । सर्वकर्मभ्यः पुरस्ताद्धारयन्ति । यद्वा पुरः पुरस्तात् पूर्वस्यां दिशि आहवनीयरूपेण धारयन्ति । परोऽर्धर्चः प्रत्यक्षकृतः । अपि च हे अग्ने ᐯश्रुत्कर्णं श्रुन् स्तुतीः सम्यक् शृण्वन् कर्णः श्रोत्रेन्द्रियं यस्य तादृशं ᐯसप्रथस्तमम् अतिशयेन प्रख्यातं यद्वा सर्वतो विस्तार्यमाणं ᐯदैव्यं देवानां हविर्वोढृत्वेन संबन्धिनम् ईदृशं ᐯत्वा त्वां ᐯमानुषा मानुषाणि मनोरपत्यानि ᐯयुगा युगानि युगलानि पत्नीयजमानरूपाणि ᐯगिरा स्तुत्या स्तुवन्तीति शेषः ॥ ॥ २८ ॥

'अग्ने' इति षड्टचं त्रयोदशं सूक्तं तापसगुणविशिष्टस्याग्नेरार्षं वैश्वदेवमानुष्टुभम् । तथा चानुक्रान्तम्—'अग्नेऽच्छाग्निस्तापसो वैश्वदेवमानुष्टुभं हि' इति । गतो विनियोगः ॥

अग्ने अच्छा वदेह नः प्रत्यङ् नः सुमना भव ।
प्र नो यच्छ विशस्पते धनदा असि नस्त्वम् ॥ १ ॥

अग्ने । अच्छ । वद । इह । नः । प्रत्यङ् । नः । सुऽमनाः । भव ।
प्र । नः । यच्छ । विशः । पते । धनऽदाः । असि । नः । त्वम् ॥ १ ॥

हे ᐯअग्ने ᐯइह अस्मिन् देशे ᐯनः अस्मान् ᐯअच्छ ᐯवद आभिमुख्येन प्रियं ब्रूहि । तथा ᐯप्रत्यङ् ᐯनः[1] अस्मान् प्रत्यञ्चन् ᐯसुमनाः शोभनमनस्को ᐯभव । हे ᐯविशस्पते यजमानलक्षणायाः प्रजायाः पालयितः ᐯनः अस्मभ्यं ᐯप्र ᐯयच्छ धनानि प्रदेहि यतः ᐯत्वं ᐯनः अस्माकं ᐯधनदाः ᐯअसि धनानां दाता भवसि ॥

प्र नो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः ।
प्र देवाः प्रोत सूनृता रायो देवी ददातु नः ॥ २ ॥

प्र । नः । यच्छतु । अर्यमा । प्र । भगः । प्र । बृहस्पतिः ।
प्र । देवाः । प्र । उत । सूनृता । रायः । देवी । ददातु । नः ॥ २ ॥

ᐯअर्यमा अरीणां नियन्ता अर्याणां निर्माता वैतत्संज्ञो देवः ᐯनः अस्मभ्यं ᐯप्र ᐯयच्छतु धनम् । तथा ᐯभगः एतत्संज्ञको देवश्च ᐯप्र यच्छतु । ᐯबृहस्पतिः च ᐯप्र यच्छतु । सर्वे ᐯदेवाः च ᐯप्र यच्छन्तु । ᐯउत अपि च ᐯसूनृता प्रियसत्यवाग्रूपा ᐯदेवी देवनशीला सरस्वती ᐯरायः धनानि ᐯनः अस्मभ्यं ᐯप्र ᐯददातु ॥ 'ऊडिदम्°' इत्यादिना रायो विभक्तिरुदात्ता ॥

---

१. त-भ-मु-'नः' नास्ति ।

सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ।
आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ ३ ॥

सोमम् । राजानम् । अवसे । अग्निम् । गीःऽभिः । हवामहे ।
आदित्यान् । विष्णुम् । सूर्यम् । ब्रह्माणम् । च । बृहस्पतिम् ॥ ३ ॥

राजानं राजमानमीश्वरं वा सोमम् अग्निं च गीर्भिः स्तुतिभिः अवसे रक्षणार्थं हवामहे आह्वयामहे । तथा आदित्यान् अदितेः पुत्रान् मित्रादीन् विष्णुं सूर्यं ब्रह्माणं प्रजापतिं बृहस्पतिं च रक्षणार्थमाह्वयामहे ॥

इन्द्रवायू बृहस्पतिं सुहवेह हवामहे ।
यथा नः सर्व इज्जनः संगत्यां सुमना असत् ॥ ४ ॥

इन्द्रवायू इति । बृहस्पतिम् । सुऽहवा । इह । हवामहे ।
यथा । नः । सर्वः । इत् । जनः । सम्ऽगत्याम् । सुऽमनाः । असत् ॥ ४ ॥

इन्द्रश्च वायुश्च इन्द्रवायू । 'उभयत्र वायोः प्रतिषेधो वक्तव्यः' (पा. सू. ६. ३. २६. १) इत्यानङः प्रतिषेधः । 'नोत्तरपदेऽनुदात्तादौ' इति 'देवताद्वन्द्वे च' इति प्राप्तस्योभयपदप्रकृतिस्वरस्य निषेधः । 'समासस्य' इत्यन्तोदात्तत्वम् । बृहस्पतिं बृहतां देवानां पालकम् । 'तद्बृहतोः करपत्योः°' (पा. सू. ६. १. १५७) इति सुट्तलोपौ । वनस्पत्यादित्वादुभयपदप्रकृतिस्वरत्वम् । सुहवा सुहवौ सुह्वानौ इन्द्रवायू बृहस्पतिं च इह अस्मिन् कर्मणि हवामहे आह्वयामहे । यथा नः अस्माकं सर्वः इत् सर्व एव जनः संगत्यां संगमने धनस्य प्राप्तौ सुमनाः असत् शोभनमनस्को भवेत् तथा आह्वयामह इत्यर्थः । अस्तेर्लेट्यडागमः ॥

अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय ।
वातं विष्णुं सरस्वतीं सवितारं च वाजिनम् ॥ ५ ॥

अर्यमणम् । बृहस्पतिम् । इन्द्रम् । दानाय । चोदय ।
वातम् । विष्णुम् । सरस्वतीम् । सवितारम् । च । वाजिनम् ॥ ५ ॥

हे स्तोतः अर्यमादीन् देवान् दानाय धनप्रदानाय चोदय स्तुत्या प्रेरय । तथा वातं वायुं विष्णुं सरस्वतीं वाजिनम् अन्नवन्तं बलवन्तं वा सवितारं च दानाय प्रेरय ॥

त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।
त्वं नो देवतातये रायो दानाय चोदय ॥ ६ ॥

त्वम् । नः । अग्ने । अग्निऽभिः । ब्रह्म । यज्ञम् । च । वर्धय ।
त्वम् । नः । देवऽतातये । रायः । दानाय । चोदय ॥ ६ ॥

हे अग्ने त्वम् अग्निभिः त्वद्विभूतिभूतैरन्यैरग्निभिः सार्धं नः अस्माकं ब्रह्म स्तोत्रं यज्ञं च वर्धय । तथा त्वं नः अस्माकं देवतातये । यज्ञनामैतत् । यागार्थं रायः धनस्य दानाय प्रदानाय चोदय दातॄन् प्रेरय ॥     ॥ २९ ॥

'अयमग्ने' इत्यष्टर्चं चतुर्दशं सूक्तमाग्नेयम्। शार्ङ्ग इति पक्षिविशेषस्याख्या। शार्ङ्गजातयो जरितृप्रभृतयश्चत्वारश्चतुर्णां द्वृचानां क्रमेण द्रष्टारः। आदितो द्वे जगत्यौ। अथ चतस्रस्त्रिष्टुभः। ततो द्वे अनुष्टुभौ। तथा चानुक्रान्तम्—'अयमष्टौ द्वृचाः शार्ङ्गा जरिता द्रोणः सारिसृक्वः स्तम्बमित्रश्चाग्नेयमाद्ये जगत्यौ चतस्रश्च त्रिष्टुभः' इति। गतो विनियोगः॥

अयमग्ने जरिता त्वे अभूदपि सहसः सूनो नह्य१न्यदस्त्याप्यम्।
भद्रं हि शर्म त्रिवरूथमस्ति त आरे हिंसानामप दिद्युमा कृधि॥ १॥

अयम्। अग्ने। जरिता। त्वे इति। अभूत्। अपि।
सहसः। सूनो इति। नहि। अन्यत्। अस्ति। आप्यम्।
भद्रम्। हि। शर्म। त्रिऽवरूथम्। अस्ति। ते।
आरे। हिंसानाम्। अप। दिद्युम्। आ। कृधि॥ १॥

हे अग्ने त्वे त्वयि। 'सुपां सुलुक्' इति सप्तम्याः शेआदेशः। अयम् ऋषिः जरिता स्तोता अभूदपि। अपिशब्दः संभावनायाम्। इदानीं स्तोतृत्वेन संभाव्यते। तत्र कारणमाह। हे सहसः सूनो बलस्य पुत्र त्वत्तः अन्यत् आप्यम् आप्तव्यं नहि अस्ति न खलु विद्यते। अतः प्राप्तव्यं त्वामेव स्तुत्या प्राप्नोमि। भद्रं कल्याणं त्रिवरूथं दुःखत्रयस्य निवारकं शर्म सुखं हि यस्मात् ते तव अस्ति विद्यते। अथवा शोभनं त्रिवरूथं त्रिभूमिकं गृहं तवास्ति हि। अतः हिंसानां हिंस्यमानानामस्माकम् आरे दूरे दिद्युं दीप्यमानामात्मीयां ज्वालाम् अप आ कृधि अपाकुरु निवारय। करोतेश्छान्दसो विकरणस्य लुक्। 'श्रुशृणुपृकृवृभ्यः॰' इति हेर्धिभावः॥

प्रवत्ते अग्ने जनिमा पितूयतः साचीव विश्वा भुवना न्यृञ्जसे।
प्र सप्तयः प्र सनिषन्त नो धियः पुरश्चरन्ति पशुपाइव त्मना॥ २॥

प्रऽवत्। ते। अग्ने। जनिम। पितुऽयतः। साचीऽइव। विश्वा। भुवना। नि। ऋञ्जसे।
प्र। सप्तयः। प्र। सनिषन्त। नः। धियः। पुरः। चरन्ति। पशुपाःऽइव। त्मना॥ २॥

हे अग्ने पितूयतः पितुमन्नं भक्ष्यमिच्छतः ते तव जनिम जन्म प्रादुर्भवनं[1] प्रवत् प्रकृष्टमुत्कृष्टं भवति। 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः। स त्वं साचीव सचिव इव विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि न्यृञ्जसे[2] प्रसाधयसि। वशीकरोषीत्यर्थः। सप्तयः सर्पणशीलाः नः अस्माकं धियः स्तुतयः तादृशं त्वां प्र सनिषन्त प्रकर्षेण संभजन्ते। एकः प्रशब्दः पूरकः। यद्वा। सप्तयः। लुप्तोपममेतत्। सर्पणशीला अश्वा यथाजि प्रकर्षेण संभजन्ते तथा अस्मदीया धिय इत्यर्थः। अनन्तरं पुरः तव पुरस्तात् त्मना आत्मना स्वयमेव चरन्ति व्याप्य वर्तन्ते। पशुपाइव यथा पशूनां पालका गोपालाः पालयितव्यानां पुरस्तात् संचरन्ति तद्वत्॥

उत वा उ परि वृणक्षि बप्सद्बहोरग्न उलपस्य स्वधावः।
उत खिल्या उर्वराणां भवन्ति मा ते हेतिं तविषीं चुक्रुधाम॥ ३॥

---

१. त१.३.६.७.८–प्रादुर्भवेत्; त४.५-म४–प्रादुर्भवत्; म१.२.४.७–प्रादुर्भवन्। २. त-म–ऋंजसे।

उत । वै । ॐ इति । परि । वृणक्षि । बप्सत् । बहोः । अग्ने । उलपस्य । स्वधाऽवः ।
उत । खिल्याः । उर्वराणाम् । भवन्ति । मा । ते । हेतिम् । तविषीम् । चुक्रुधाम ॥ ३ ॥

हे Vस्वधावः दीप्तिमन् Vअग्ने Vबप्सत् दहन् । 'भस भर्त्सनदीप्त्योः'। जौहोत्यादिकः । शतरि 'घसिभसोर्हलि च' (पा. सू. ६. ४. १००) इत्युपधालोपः । 'नाभ्यस्ताच्छतुः' इति नुमः प्रतिषेधः । Vबहोः बहुलस्य Vउलपस्य तृणजातस्य । कर्मणि षष्ठी । सर्वं वनम् Vउत Vवै अपि खलु Vपरि Vवृणक्षि परिवर्जयसि विनाशयसि । Vउ इति पूरकः । Vउत अपि च Vउर्वराणाम् । सस्याढ्या भूमय उर्वराः । तासां संबन्धिनः प्रदेशाः Vखिल्याः खिलाः प्राणिभिर्गन्तुं योग्याः Vभवन्ति । त्वया दग्धा इति शेषः । Vतविषीं महतीं Vते तव Vहेतिं हननहेतुभूतां ज्वालां Vमा Vचुक्रुधाम मा क्रोधयाम । अपि तु स्तुतिभिः प्रसादयाम ॥ 'ऊतियूति°' इत्यादिना हन्तेः क्तिनि 'हेतिः' इत्यन्तोदात्तो निपात्यते । चुक्रुधामेति क्रुधेर्ण्यन्ताल्लुङि चङि रूपम् ॥

यदुद्वतो निवतो यासि बप्सत्पृथगेषि प्रगर्धिनीव सेना ।
यदा ते वातो अनुवाति शोचिर्वप्तेव श्मश्रु वपसि प्र भूम ॥ ४ ॥

यत् । उत्ऽवतः । निऽवतः । यासि । बप्सत् । पृथक् । एषि । प्रगर्धिनीऽइव । सेना ।
यदा । ते । वातः । अनुऽवाति । शोचिः । वप्ताऽइव । श्मश्रु । वपसि । प्र । भूम ॥ ४ ॥

Vयत् यदा Vउद्वतः उद्गतानुच्छ्रितान् Vनिवतः नीचीनांस्तरुगुल्मादीन् हे अग्ने Vबप्सत् दहन् Vयासि प्राप्नोषि तदानीं बह्वीभिर्ज्वालाभिः Vपृथक् विभिन्नः[1] सन् Vएषि गच्छसि । तत्र दृष्टान्तः । Vप्रगर्धिनीव Vसेना । 'गृधु अभिकाङ्क्षायाम्'। परराष्ट्रं[2] गच्छतो राज्ञः सेना तत्रत्यं धनजातमभिकाङ्क्षमाणा इतस्ततः संघशो गच्छति तद्वत् । Vवातः वायुश्च Vते तव Vशोचिः दीप्तिं Vयदा यस्मिन् काले Vअनुवाति अनुगुणं प्रवर्तते तदा Vश्मश्रु । श्म शरीरम् । तत्र श्रितं स्थितं केशरोमादिकं Vवप्तेव यथा वप्ता नापितो वपति मुण्डयति तथा Vभूम भूमिं Vप्र Vवपसि प्रकर्षेण मुण्डयसि । सर्वं वनं निःशेषेण दहसीत्यर्थः ॥

प्रत्यस्य श्रेणयो ददृश्र एकं नियानं बहवो रथासः ।
बाहू यदग्ने अनुमर्मृजानो न्यङ्ङुत्तानामन्वेषि भूमिम् ॥ ५ ॥

प्रति । अस्य । श्रेणयः । ददृश्रे । एकम् । निऽयानम् । बहवः । रथासः ।
बाहू इति । यत् । अग्ने । अनुऽमर्मृजानः । न्यङ् । उत्तानाम् । अनुऽएषि । भूमिम् ॥ ५ ॥

Vअस्य अग्नेर्दहतः Vश्रेणयः ज्वालापङ्क्तयः Vप्रति Vददृश्रे प्रतिदृश्यन्ते । तद्वत् । अत्र सामर्थ्यादुपमानप्रतीतिः । हे Vअग्ने Vबाहू । तृतीयार्थे प्रथमा । बाहुभ्यां बाहुस्थानीयैर्ज्वालासमूहैः Vअनुमर्मृजानः सर्वं वनं मृजञ्शोधयन् । दहन्नित्यर्थः । Vन्यङ् न्यञ्चन् प्रह्वीभवन् Vउत्तानाम् ऊर्ध्वाभिमुखां Vभूमिं Vयत् यदा Vअन्वेषि अनुगच्छसि तदानीमस्य श्रेणयो ददृश्र इत्यन्वयः ॥

---

१. त१.२,३.६.७.८–विभिन्नाभिः । २. भ२–यथा परराष्ट्रं ।

उत्ते शुष्मा जिहतामुत्ते अर्चिरुत्ते अग्ने शशमानस्य वाजाः ।
उच्छ्वञ्चस्व नि नम वर्धमान आ त्वाद्य विश्वे वसवः सदन्तु ॥ ६ ॥

उत् । ते । शुष्माः । जिहताम् । उत् । ते । अर्चिः । उत् । ते । अग्ने । शशमानस्य । वाजाः ।
उत् । श्वञ्चस्व । नि । नम । वर्धमानः । आ । त्वा । अद्य । विश्वे । वसवः । सदन्तु ॥६॥

हे अग्ने ते तव शुष्माः शोषका ज्वालाः उत् जिहताम् उद्गच्छन्तु । तथा ते तव अर्चिः दीप्तिश्च उद्गच्छतु । शशमानस्य स्तूयमानस्य । यद्वा । 'शश प्लुतगतौ'। अस्मात्ताच्छीलिकश्चानश् । तस्य सार्वधातुकत्वे सति लसार्वधातुकत्वाभावात् 'चितः' इत्यन्तोदात्तत्वमेव शिष्यते । शशमानस्य सर्वं वनमाक्रम्य शीघ्रं गच्छतः । तव वाजाः वेगा[1] हे अग्ने उज्जिहताम् । स त्वं वर्धमानः सन् उच्छ्वञ्चस्व वन उद्गच्छस्व ॥ 'श्वचि गतौ'। भौवादिकः । इदित्त्वान्नुम् ॥ तथा नि नम प्रह्वीभव । उन्नतं वृक्षादिकं प्राप्य उच्छ्रितो भव । अवनतं गुल्मादिकं प्राप्यावनतो भवेत्यर्थः । ईदृशं त्वा त्वाम् अद्य अस्मिन् काले विश्वे सर्वे वसवः वासयितारो रश्मयो देवा वा आ सदन्तु आसीदन्तु प्राप्नुवन्तु । सदेर्व्यत्ययेन सीदादेशाभावः । शपि प्राप्ते व्यत्ययेन अब्वा कर्तव्यः ॥

अपामिदं न्ययनं समुद्रस्य निवेशनम् ।
अन्यं कृणुष्वेतः पन्थां तेन याहि वशाँ अनु ॥ ७ ॥

अपाम् । इदम् । निऽअयनम् । समुद्रस्य । निऽवेशनम् ।
अन्यम् । कृणुष्व । इतः । पन्थाम् । तेन । याहि । वशान् । अनु ॥ ७ ॥

इत्थं खाण्डववनस्य दाहे प्रवृत्तमग्निं जरितृप्रभृतयः स्वात्मनो रक्षणकामास्तुष्टुवुः । इदानीं च[2] स्तम्बमित्रः स्वनिवासभूमेर्दहनाभावाय अग्नेरन्यत्र गमनं प्रार्थयते । इदम् अस्मदीयं निवासस्थानम् अपाम् उदकानां न्ययनम् । नियन्ति नितरां गच्छन्त्यस्मिन्निति न्ययनं ह्रदः । तथा समुद्रस्य उदधेश्च निवेशनं गृहम् । यथा ह्रदः समुद्रस्य स्थानं च यथा दग्धुं न शक्यते तथा दाह्ययोग्यं न भवत्वित्यर्थः । इतः अस्मादस्मदीयात् स्थानात् अन्यं[3] पन्थां[3] पन्थानं मार्गं हे अग्ने कृणुष्व कुरुष्व । तेन पथा वशाननु यथाकामं याहि गच्छ ॥

आयने ते परायणे दूर्वा रोहन्तु पुष्पिणीः ।
ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इमे ॥ ८ ॥

आऽअयने । ते । पराऽअयने । दूर्वाः । रोहन्तु । पुष्पिणीः ।
ह्रदाः । च । पुण्डरीकाणि । समुद्रस्य । गृहाः । इमे ॥ ८ ॥

अनयापि स्वनिवासस्य दाहानर्हता प्रतिपाद्यते । हे अग्ने ते तव आयने आगमने परायणे परागमने वा सति अस्यां[4] निवासभूमौ पुष्पिणीः पुष्पवत्यो दूर्वाः रोहन्तु प्ररोहन्तु । तथा

१. त१.२.३.६.७.८-म१.४.८-खगा । २. त१.२.३.६.७-म१.२.८-च तु; त४.५-चतुर्थी; म२-चतुर्थ; म७-चस्तु । ३. त१.२.३.७-अत्यंतं; म१.७-यं तं पंथां; म२-अन्यं तं पंथां; म४-अन्यंतं; म८-अन्यंतं पंथां । ४. त१.२.३.६.७.८-म-अस्मिन् ।

vह्रदाः अशोष्योदका जलाशयाः vच भवन्तु vपुण्डरीकाणि पद्मानि च तेषु ह्रदेषु जायन्ताम्। किं बहुना। vसमुद्रस्य जलधेः vइमे अस्मन्निवासप्रदेशे[1] vगृह्याः आश्रयभूता भवन्तु। यथा समुद्रावासभूमिः कदाचिदपि न दह्यते एवं कदाचिदप्यस्मत्स्थानं न दह्यतामित्यर्थः। एतदुक्तं भवति। दूर्वाकाण्डप्ररोहणप्रार्थनेन स्वाश्रयस्य शीतलत्वं ह्रदप्रार्थनेन तृष्णोपशमनकारणस्य जलस्य सत्त्वं पुण्डरीकसद्भावप्रार्थनेनोपभोग्यस्य फलादेः सत्ता समुद्रगृह्यत्वप्रार्थनेन दाहानर्हता चेत्येतत्सर्वं प्रतिपाद्यत इति ॥ ॥ ३० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्येऽष्टमाष्टके सप्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

दशमे मण्डल एकादशेऽनुवाके चतुर्दश सूक्तानि व्याकृतानि। ‘त्यं चित्’ इति षड्चं पञ्चदशं सूक्तं सांख्यपुत्रस्यात्रेरार्षमानुष्टुभमश्विदेवताकम्[2]। तथा चानुक्रान्तं—‘त्यं षट् सांख्योऽत्रिराश्विनम्’ इति। प्रातरनुवाकाश्विनशस्त्रयोरानुष्टुभे छन्दसीदं सूक्तम्। सूत्र्यते हि—‘आ नो विश्वाभिस्त्यं चिदत्रिमित्यानुष्टुभम्’ ( आश्व. श्रौ. ४. १५ ) इति ॥

त्यं चिदत्रिमृतजुरमर्थमश्वं न यातवे ।
कक्षीवन्तं यदी पुना रथं न कृणुथो नवम् ॥ १ ॥

त्यम् । चित् । अत्रिम् । ऋतऽजुरम् । अर्थम् । अश्वम् । न । यातवे ।
कक्षीवन्तम् । यदि । पुनरिति । रथम् । न । कृणुथः । नवम् ॥ १ ॥

हे अश्विनौ शतद्वारे पीडायन्त्रगृहेऽसुरैः प्रक्षिप्तो बद्धाङ्गो योऽत्रिरस्ति vत्यं vचित् तमपि vअत्रिम् vऋतजुरम्। ऋतं स्तोत्रं यज्ञो वा। तेन जीर्यन्तम्। सर्वदा युवयोः परिचरणशीलमित्यर्थः॥ जीर्यतेः क्विपि ‘बहुलं छन्दसि’ इति उत्वम्॥ यद्वा। ऋतेन प्राप्तेनासुरकृतोपद्रवेण ज्वरितं रुग्णम्॥ ‘ज्वर रोगे’। ‘ज्वरत्वर°’ इत्यादिना वकारस्योपधायाश्च स्थान ऊठ्। ‘जूरी हिंसागत्योः’ इत्यस्माद्वा क्विप्। अनयोः पक्षयोश्छान्दसो ह्रस्वः॥ ईदृशं तमत्रिम् vअर्थम् अर्थनीयं प्राप्तव्यं vयातवे गन्तुं युवां कृतवन्तौ। तत्र दृष्टान्तः। vअश्वं vन। यथाश्वो बन्धाद्विमुक्तः सन् शीघ्रं गच्छति एवमयमपि युवयोः प्रसादात् असुरकृतादुपद्रवजातात् विमुच्यमानो यथास्थानमगच्छदित्यर्थः॥ ‘या प्रापणे’ इत्यस्मात् ‘तुमर्थे सेसेन्°’ ( पा. सू. ३. ४. ९ ) इति तवेन्प्रत्ययः॥ vयदि[3]। अपि च इत्यर्थः। vकक्षीवन्तम्। कक्ष्या रज्जुरश्वस्य। तद्वन्तम्॥ ‘आसन्दीवदष्ठीवत्°’ (पा. सू. ८. २. १२ ) इत्यादौ निपातनात् संप्रसारणम्॥ दीर्घतमसः पुत्रम् उशिक्प्रसूतमृषिं मन्दबुद्धिं सन्तं युवां vपुनः vनवं पुनरभिनवप्रज्ञं vकृणुथः अकृणुतम् अकुरुतम्। vरथं vन। यथा कश्चिच्छिल्पी जीर्णं रथं पुनरभिनवं

१. त१.२.३-भ१.२.४.८–°प्रदेशा; त७-भ७–°प्रदेशाः। २. त-भ–सांख्यपुत्रस्या°। ३. त१.२.३.६.७.८-भ–यदि वा।

करोति तद्वत् ॥ ' कृवि हिंसाकरणयोश्च ' । इदित्वान्नुम् । लङर्थे व्यत्ययेन लट् । ' धिन्विकृण्व्योरच ' इत्युप्रत्ययः । तत्संनियोगेनाकारान्तादेशश्च । तस्यातो लोपे सति स्थानिवद्भावाल्लघूपधगुणाभावः । ' सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते ' ( पा. म. ६. १. १५८. ११ ) इति वचनात् तिङ एव स्वरः शिष्यते । ' निपातैर्यद्यदिहन्त°' इति निघातप्रतिषेधः ॥

त्यं चिदश्वं न वाजिनमरेणवो यमत्नत ।
दृळ्हं ग्रन्थिं न वि ष्यतमत्रिं यविष्ठमा रजः ॥ २ ॥

त्यम् । चित् । अश्वम् । न । वाजिनम् । अरेणवः । यम् । अत्नत ।
दृळ्हम् । ग्रन्थिम् । न । वि । स्यतम् । अत्रिम् । यविष्ठम् । आ । रजः ॥ २ ॥

^v^अरेणवः अहिंस्यमानाः प्रबला असुराः ^v^वाजिनं वेगवन्तम् ^v^अश्वं ^v^न अश्वमिव ^v^यम् अत्रिम् ^v^अत्नत अतन्वत बद्धमकृषत ॥ तनोतेर्लुङि ' तनिपत्योश्छन्दसि ' इत्युपधालोपः । ^v^त्यं ^v^चित् तं च ^v^अत्रिं ^v^यविष्ठं युवतमं स्तुतेर्मिश्रयितृतमं वा ^v^रजः । रजन्त्यस्मिन् जना इति रजो भूलोकः । रज इमं लोकम् ^v^आ अभि हे अश्विनौ ^v^वि ^v^ष्यतं व्यमुञ्चतम् । दृढं स्थिरतरं ^v^ग्रन्थिं ^v^न ग्रन्थिमिव । यथा कश्चित् तादृशं ग्रन्थिमयत्नेन विमुञ्चति तथा युवां तमृषिमसुरकृताद्बन्धनात् मोचितवन्तावित्यर्थः ॥ स्यतमिति ' षोऽन्तकर्मणि ' इत्यस्माल्लङि श्यनि ' ओतः श्यनि ' इत्योकारलोपे रूपम् । छान्दसोऽडभावः ॥ यद्वा । अत्रिं मां बन्धाद्वि ष्यतं विमुञ्चतमित्यृषिः असुरैर्बद्धः सन् अश्विनौ प्रार्थयते ॥

नरा दंसिष्ठावत्रये शुभ्रा सिषासतं धियः ।
अथा हि वां दिवो नरा पुनः स्तोमो न विशसे ॥ ३ ॥

नरा । दंसिष्ठौ । अत्रये । शुभ्रा । सिसासतम् । धियः ।
अथ । हि । वाम् । दिवः । नरा । पुनरिति । स्तोमः । न । विऽशसे ॥ ३ ॥

हे ^v^नरा नरौ नेतारौ ^v^दंसिष्ठौ दर्शनीयतमौ ^v^शुभ्रा शोभमानौ ईदृशौ हे अश्विनौ ^v^अत्रये ऋषये मह्यं ^v^धियः कर्माणि बुद्धीर्वा ^v^सिषासतं दातुमिच्छतम् । ' षणु दाने ' । यद्वा । अत्रये इति षष्ठ्यर्थे चतुर्थी । अत्रेर्मम धियः स्तुतीः कर्माणि वा सिषासतं संभक्तुमिच्छतम् । सेवेथामित्यर्थः ॥ ' वन षण संभक्तौ ' । अस्मात्सनतेः सनोतेर्वा सनि ' सनीवन्तर्ध°' इति विकल्पनादिडभावे ' जनसनखनाम्°' इत्यात्वम् । शुभ्रेत्यस्यामन्त्रितस्य ' आमन्त्रितं पूर्वमविद्यमानवत् ' इत्यविद्यमानवत्त्वेन पदादपरत्वेन पादादित्वात् ' तिङ्ङतिङः ' इति निघाताभावः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे सनो नित्त्वादाद्युदात्तत्वम् ॥ ^v^अथा[१] ^v^हि अनन्तरमेव ^v^दिवः । दीव्यतीति स्तौतीति द्यौः स्तोता । तस्य मम ^v^स्तोमो ^v^न । नशब्दश्चार्थे । स्तोत्रं च हे ^v^नरा नेतारावश्विनौ ^v^वां युवां ^v^पुनः ^v^विशसे । पुनरेवाद्यापि विशेषेण शंसितुं प्रभवतीति शेषः ॥

चिते तद्वां सुराधसा रातिः सुमतिरश्विना ।
आ यन्नः सदने पृथौ समने पर्षथो नरा ॥ ४ ॥

---

१. त१.२.३.६.७.८-म-तथा ।

चिते । तत् । वाम् । सुऽराधसा । रातिः । सुऽमतिः । अश्विना ।
आ । यत् । नः । सदने । पृथौ । समने । पर्षथः । नरा ॥ ४ ॥

हे ^v^सुराधसा शोभनदानौ[1] ^v^अश्विना हे अश्विनौ ^v^सुमतिः शोभना स्तुतिरस्मदीया ^v^रातिः हविर्दानं च ^v^तत् तस्मात्कारणात् ^v^वां युवयोः ^v^चिते ज्ञानाय भवति ॥ 'चिती संज्ञाने'। अस्मात् संपदादिलक्षणो भावे क्विप्। 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ॥ ^v^यत् यस्मात्कारणात् ^v^सदने यज्ञगृहे[2] ^v^पृथौ विस्तीर्णे ^v^समने[2] यज्ञे ^v^नः अस्मान् हे ^v^नरा नेतारौ ^v^आ ^v^पर्षथः आपूरयथः अभितो रक्षथो[3] वा तस्माद्युवामस्मदीयं परिचरणं ज्ञातवन्तावित्यनुमीमहे ॥ 'पॄ पालनपूरणयोः' इत्यस्माल्लेटि 'सिब्बहुलम्' इति सिप्। ततः शप् ॥

युवं भुज्युं समुद्र आ रजसः पार ईङ्खितम् ।
यातमच्छा पतत्रिभिर्नासत्या सातये कृतम् ॥ ५ ॥

युवम् । भुज्युम् । समुद्रे । आ । रजसः । पारे । ईङ्खितम् ।
यातम् । अच्छ । पतत्रिऽभिः । नासत्या । सातये । कृतम् ॥ ५ ॥

हे अश्विनौ ^v^युवं युवां ^v^समुद्रे उदधौ निमग्नं ^v^रजसः उदकस्य ^v^पारे प्रान्ते तरङ्गसमूहे ^v^ईङ्खितं डोलायितम् एवंभूतं ^v^भुज्युं तुग्रपुत्रम् ^v^अच्छ अभि ^v^पतत्रिभिः पक्षोपेतैर्नौविशेषैः सह ^v^आ ^v^यातम् आगतवन्तौ स्थः। आगत्य च हे ^v^नासत्या सत्यस्य नेतारौ सत्यस्वभावौ वा हे अश्विनौ ^v^सातये युवयोः संभजनाय समर्थं ^v^कृतं पुनर्युवामकुरुतम् ॥ करोतेर्लङि[4] छान्दसो विकरणस्य लुक्। अडभावश्च[5]। लुङि वा 'मन्त्रे घस' इति च्लेर्लुक्[5] ॥

आ वां सुम्नैः शंयूइव मंहिष्ठा विश्ववेदसा ।
समस्मे भूषतं नरोत्सं न पिप्युषीरिषः ॥ ६ ॥

आ । वाम् । सुम्नैः । शंयूइवेति शंयूऽइव । मंहिष्ठा । विश्वऽवेदसा ।
सम् । अस्मे इति । भूषतम् । नरा । उत्सम् । न । पिप्युषीः । इषः ॥ ६ ॥

हे ^v^विश्ववेदसा सर्वज्ञौ सर्वधनौ वा हे ^v^नरा नेतारौ ^v^वां युवां ^v^शंयूइव सुखयुक्तौ राजानाविव ^v^मंहिष्ठा[6] दातृतमावतिशयेन पूज्यौ वा सन्तौ ^v^सुम्नैः अस्मभ्यं दातव्यैः सुखैः साधम् ^v^आ। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। आगच्छतम्। यद्वा। उपसर्गस्य भूषतमित्यनेन संबन्धः। मंहिष्ठेत्यपि संबोधनम्। हे मंहिष्ठा दातृतमौ उक्तगुणावश्विनौ वां युवां सुम्नैः साधं शंयूइव ^v^अस्मे अस्मान् सम्यक् आ ^v^भूषतम् अभिप्राप्नुतम् ॥ 'भू प्राप्तौ'। अस्माल्लोटि व्यत्ययेन सिप्शपौ। यद्वा। 'भूष अलंकारे' ॥ आ[7] समन्तात् सम्यक् भूषतम् अलंकुरुतम्। ^v^पिप्युषीः प्रवृद्धानि[8] ^v^इषः इष्यमाणानि पयांसि ^v^उत्सं ^v^न गोरूध इव। यथा बहुभिः पयोभिः ऊधः अलंकृतं सत् दृश्यते अस्मानप्येवं बहुभिर्धनैरलंकुरुतमित्यर्थः ॥ पिप्युषीरिति प्यायतेर्लिटः क्वसुः। 'लिड्यङोश्च' इति पीभावः। जसि

१. त४.५–शोभनधनौ। २. त१.२.३.६.७.८-भ१.४.७.८–'यज्ञगृहे ... समने' नास्ति। ३. त-भ–रक्षको। ४. त४–करोतेर्लेटि। ५. त४.५–'अडभावश्च......च्लेर्लुक्' नास्ति। ६. त४.५–मंहिष्ठा मंहिष्ठौ। ७. त-भ–'आ' नास्ति। ८. त-भ–प्रवृद्धाः।

'वा छन्दसि' इति पूर्वसवर्णदीर्घः। यद्वा। उत्सः प्रवाहो यथा पिप्युषीः वृद्धानीषोऽस्मान्यलंकरोति[1] तद्वत्॥ ॥ १ ॥

'अयं हि' इति षड्टचं षोडशं सूक्तं तार्क्ष्यपुत्रस्य सुपर्णस्यार्षं यमगोत्रस्योर्ध्वकृशनस्य वा। आद्या गायत्री द्वितीया बृहती तृतीयाचतुर्थ्यौ गायत्र्यौ पञ्चमी सतोबृहती षष्ठी विष्टारपङ्क्तिरष्टक-द्विर्द्वादशाष्टकवती। अनादेशपरिभाषया इन्द्रो देवता। तथा चानुक्रान्तम्—'अयं हि तार्क्ष्यपुत्रः सुपर्णो यामायनो वोर्ध्वकृशनो गायत्री बृहती गायत्र्यौ सतोबृहती विष्टारपङ्क्तिः' इति। गतो[2] विनियोगः[2]॥

अयं हि ते अमर्त्य इन्दुरत्यो न पत्यते। दक्षो विश्वायुर्वेधसे॥ १॥

अयम्। हि। ते। अमर्त्यः। इन्दुः। अत्यः। न। पत्यते। दक्षः। विश्वऽआयुः। वेधसे॥ १॥

हे इन्द्र ˇवेधसे विधात्रे ˇते तुभ्यं त्वदर्थम् ˇअमर्त्यः मरणरहितोऽमृतत्वप्रापकः ˇअयं ˇहि अयं खलु ˇइन्दुः सोमः ˇअत्यो ˇन सततगाम्यश्व इव ˇपत्यते गच्छति। यद्वा। पत्यतिरैश्वर्यकर्मा। तव स्वभूतोऽयं सोमः ˇवेधसे विधानाय मदस्य करणायेष्टे। कीदृश इन्दुः। ˇदक्षः प्रवृद्धो बल-हेतुर्वा ˇविश्वायुः विश्वैः सर्वैरेतव्यः प्राप्तव्यः। यद्वा। विश्वेषामायुर्जीवनहेतुः। अथवा। आयुरित्य-न्ननाम। सर्वैश्चरुपुरोडाशादिभिरन्नैर्हविर्भिरुपेतः॥

अयमस्मासु काव्य ऋभुर्वज्रो दास्वते।
अयं बिभर्त्यूर्ध्वकृशनं मदमृभुर्न कृत्व्यं मदम्॥ २॥

अयम्। अस्मासु। काव्यः। ऋभुः। वज्रः। दास्वते।
अयम्। बिभर्ति। ऊर्ध्वऽकृशनम्। मदम्। ऋभुः। न। कृत्व्यम्। मदम्॥ २॥

ˇअस्मासु स्तोतृषु ˇकाव्यः स्तुत्यः ˇअयम् इन्द्रः ˇऋभुः दीप्तः सन् ˇदास्वते दानयुक्ताय यज-मानाय ˇवज्रः शत्रूणां वर्जको भवति। यद्वा। दास्वत इति षष्ठ्यर्थे चतुर्थी। अस्मासु दास्वते दानवत इन्द्रस्य वज्रः कुलिशः ऋभुः उरु भासमानो भवति। अपि च ˇअयम् ˇऊर्ध्वकृशनम् उद्गततैक्ष्ण्यमेतत्संज्ञं वा यामायनमृषिं ˇमदं स्तोतारं ˇबिभर्ति पोषयति। तथा ˇऋभुर्न सौधन्वनः। पुत्राणामाद्य ऋभुः। स इव ˇकृत्व्यं कर्मणां कर्तारम् अत एव ˇमदं मोदयितारं[3] यजमानं च बिभर्ति॥

घृषुः श्येनाय कृत्वन आसु स्वासु वंसगः। अव दीधेदहीशुवः॥ ३॥

घृषुः। श्येनाय। कृत्वने। आसु। स्वासु। वंसगः। अव। दीधेत्। अहीशुवः॥ ३॥

ˇघृषुः घर्षयिता दीप्तो वा ˇस्वासु स्वकीयासु ˇआसु यजमानलक्षणासु प्रजासु ˇवंसगः वननीय-गतिः एवंभूत इन्द्रः ˇकृत्वने कर्मणां कर्त्रे॥ करोतेः 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप्॥ ˇश्येनाय सुपर्णाय तार्क्ष्यपुत्राय मह्यमृषये ˇअहीशुवः अहीनव्यापनान् अहीनवृद्धीन् वा अस्मदीयान् पुत्रादीन् ˇअव ˇदीधेत् दीपयतु॥ 'दीधीङ् दीप्तिदेवनयोः'। अस्माच्छान्दसे लिङि[4] व्यत्ययेन परस्मैपदम्॥ यद्वा। हे इन्द्र त्वदीयः सोमो घृष्ट्यादिगुणयुक्तः सन् दीप्यत इति योज्यम्॥

---

१. त-भं—वृद्धा इषो°। २. त-भ१.२.४.८—'गतो विनियोगः' नास्ति। ३. त४.५-भ२—मादयितारं। ४. त-भ—लङि।

यं सुपर्णः परावतः श्येनस्य पुत्र आभरत्। शतचक्रं यो३ह्यो वर्तनिः ॥ ४ ॥
यम्। सुऽपर्णः। पराऽवतः। श्येनस्य। पुत्रः। आ। अभरत्।
शतऽचक्रम्। यः। अह्यः। वर्तनिः ॥ ४ ॥

^श्येनस्य तार्क्ष्यस्य ^पुत्रः तनयः ^सुपर्णः ^यं सोमं ^परावतः परागतात् दूरात् द्युलोकात् ^आभरत् आहरत्। कीदृशम्[1]। ^शतचक्रम्। शतमिति बहुनाम। बहुधनस्य कर्तारम्॥ मूलविभुजादित्वात् कप्रत्ययः (पा. सू. ३. २. ५. २)॥ यद्वा। शतकरणसाधनम्। बहुयागनिष्पादनमित्यर्थः॥ 'घञर्थे कविधानम्' (पा. सू. ३. ३. ५८. ४) इति कप्रत्ययः। 'कृञादीनां के' (का. ६.१.१२.१) इति द्विर्वचनम्। ^यः सोमः ^अह्यः अहेर्वृत्रस्य ^वर्तनिः वर्तयिता प्रेरयिता। यद्वा। 'अह गतौ'। अह्यो गन्तव्यो वर्तनिर्मार्गभूतः। एना वय इति वक्ष्यमाणेनैकवाक्यता॥

यं ते श्येनश्चारुमवृकं पदाभरदरुणं मानमन्धसः।
एना वयो वि तार्यायुर्जीवस एना जागार बन्धुता ॥ ५ ॥
यम्। ते। श्येनः। चारुम्। अवृकम्। पदा। आ। अभरत्। अरुणम्। मानम्। अन्धसः।
एना। वयः। वि। तारि। आयुः। जीवसे। एना। जागार। बन्धुता ॥ ५ ॥

हे इन्द्र ^ते तुभ्यं त्वदर्थं ^श्येनः सुपर्णः पक्षिराट् ^यं सोमं ^पदा। वचनव्यत्ययः। पद्भ्याम्[2] ^आभरत् द्युलोकादाहरत्। 'दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत्' (ऋ. मं. ८. १००. ८) इति निगमान्तरम्। कीदृशम्। ^चारुं शोभनम् ^अवृकं बाधकरहितम्[3] ^अरुणम् आरोचमानमरुणवर्णं वा ^अन्धसः अन्नस्य ^मानं यागद्वारा निर्मातारम्। ^एना एनेनानेन सोमेन तुभ्यं दीयमानेन ^वयः अन्नं ^जीवसे जीवनाय ^आयुः जीवितं च ^वि ^तारि प्रादायि। तथा ^एना एनेनैव सोमेन ^बन्धुता बन्धुसमूहः ^जागार जजागार जाग्रत्प्रबुद्धः सन् वर्तते॥ जागर्तेर्लिटि 'छन्दसि वेति वक्तव्यम्' (पा. सू. ६. १. ८. १) इति द्विर्वचनाभावः॥

एवा तदिन्द्र इन्दुना देवेषु चिद्धारयाते महि त्यजः।
क्रत्वा वयो वि तार्यायुः सुक्रतो क्रत्वायमस्मदा सुतः ॥ ६ ॥
एव। तत्। इन्द्रः। इन्दुना। देवेषु। चित्। धारयाते। महि। त्यजः।
क्रत्वा। वयः। वि। तारि। आयुः। सुक्रतो इति सुऽक्रतो।
क्रत्वा। अयम्। अस्मत्। आ। सुतः ॥ ६ ॥

^एव एवमुक्तेन[4] प्रकारेण ^तत् तेन ^इन्दुना सोमेन तृप्यन् ^इन्द्रः ^देवेषु ^चित् देवेष्वस्मासु च ^महि महत् ^त्यजः तेजो दुःखस्य वर्जयितृ रक्षणं वा ^धारयाते धारयति। शिष्टः प्रत्यक्षकृतः। हे ^सुक्रतो शोभनकर्मन्निन्द्र ^क्रत्वा क्रतुना अस्माभिरनुष्ठितेन कर्मणा प्रीतेन त्वया ^वयः अन्नम् ^आयुः जीवनं च ^वि ^तारि अस्मभ्यं प्रादायि। यः ^अयम् इन्दुः ^क्रत्वा कर्मणा प्रज्ञानेन

१. त१.२.३.६.७.८-म५-कीदृशं तं। २. त४.५-म२-पद्भ्यां पादाभ्यां। ३. त४.५-बाध-रहितं। ४. त१.२.३.६.७-मु-एवमनेन।

वा ᵛअस्मत् अस्माभिः ᵛआ ᵛसुतः अभिषुतः। यद्वा। अस्मत् अस्मत्तस्त्वदाभिमुख्येन सुतः प्रेरितः। तेनेन्दुनेत्यन्वयः॥ ॥ २ ॥

'इमाम्' इति षडृचं सप्तदशं सूक्तमिन्द्राण्या आर्षम्। षष्ठी पङ्क्तिः शिष्टा अनुष्टुभः। अनेन सूक्तेन सपत्न्या बाधनं प्रतिपाद्यते। अत एतत्सूक्तजपादिना सपत्न्या विनाशो भवति। अतस्तद्देवताकमिदम्। तथा चानुक्रान्तम्—'इमामिन्द्राण्युपनिषत्सपत्नीबाधनमानुष्टुभं तु पङ्क्त्यन्तम्' इति। अस्य सूक्तस्य विनियोगो भगवतापस्तम्बेन कस्मिंश्चित् सपत्नीघ्नप्रयोगविशेषे[1] दर्शितः—'त्रिःसप्तैर्यवैः पाठां परिकिरति यदि वारुण्यसि वरुणात्त्वा निष्क्रीणामि यदि सौम्यसि सोमात्त्वा निष्क्रीणामीति। श्वोभूत उत्तरयोत्थाप्योत्तराभिस्तिसृभिरभिमन्त्र्योत्तरया प्रतिच्छन्नां[2] हस्तयोराबध्य शय्याकाले बाहुभ्यां भर्तारं परिगृह्णीयादुपधानलिङ्गया। वश्यो भवति। सपत्नीबाधनं च' ( आप. गृ. ९. ५. ८ ) इति। अयमर्थः। आद्यया पाठा नामौषधिः खातव्या। ततस्तिसृभिरोषधेरभिमन्त्रणम्। षष्ठ्याबद्धा सौषधिर्यथा भर्तारं स्पृशति तथा तस्य भर्तुरालिङ्गनमिति॥

**इ॒मां ख॑ना॒म्योष॑धिं वी॒रुधं॒ बल॑वत्तमाम्।**
**यया॑ स॒पत्नीं॒ बाध॑ते॒ यया॑ सं॒वि॒न्दते॒ पति॑म्॥ १॥**

इ॒माम्। ख॒ना॒मि॒। ओष॑धिम्। वी॒रुध॑म्। बल॑वत्ऽतमाम्।
यया॑। स॒ऽपत्नी॑म्। बाध॑ते। यया॑। स॒म्ऽवि॒न्दते॑। पति॑म्॥ १॥

ᵛइमामोषधिं पाठाख्यां ᵛवीरुधं लतारूपां ᵛबलवत्तमां स्वकार्यकरणे अतिशयेन बलवतीं ᵛखनामि उन्मूलयामि। ᵛयया ओषध्या ᵛसपत्नीम्। समान एकः पतिर्यस्याः सा सपत्नी। तामेषा वधूः ᵛबाधते हिनस्ति। ᵛयया च ᵛपतिं भर्तारं ᵛसंविन्दते सम्यगसाधारण्येन लभते॥

**उत्ता॑नपर्णे॒ सुभ॑गे॒ देव॑जूते॒ सह॑स्वति।**
**स॒पत्नीं॑ मे॒ परा॑ धम॒ पतिं॑ मे॒ केव॑लं कुरु॥ २॥**

उत्ता॑नऽपर्णे। सु॒ऽभ॑गे। देव॑ऽजूते। सह॑स्वति।
स॒ऽपत्नी॑म्। मे॒। परा॑। ध॒म॒। पति॑म्। मे॒। केव॑लम्। कु॒रु॒॥ २॥

हे ᵛउत्तानपर्णे उत्तानान्यूर्ध्वमुखानि पर्णानि पत्राणि यस्यास्तादृशि हे ᵛसुभगे सौभाग्यहेतुभूते हे ᵛदेवजूते देवेन त्वष्ट्रा प्रेरिते हे ᵛसहस्वति अभिभवनवति ईदृशे हे पाठे ᵛमे मम ᵛसपत्नीं स्त्रियं ᵛपरा ᵛधम परागमय। धमतिर्गतिकर्मा। ᵛपतिं च ᵛमे ममैव ᵛकेवलम् असाधारणं ᵛकुरु॥

**उत्त॑रा॒हमु॑त्तर॒ उत्त॒रेदुत्त॑राभ्यः। अथा॑ स॒पत्नी॒ या ममाध॑रा॒ साध॑राभ्यः॥ ३॥**

उत्ऽत॑रा। अ॒हम्। उत्ऽत॒रे॒। उत्ऽत॑रा। इत्। उत्ऽत॑राभ्यः।
अथ॑। स॒ऽपत्नी॑। या। मम॑। अध॑रा। सा। अध॑राभ्यः॥ ३॥

हे ᵛउत्तरे उत्कृष्टतरे पाठे ᵛअहम् ᵛउत्तरा उत्कृष्टतरा भूयासम्। ᵛउत्तराभ्यः लोके या उत्कृष्टतराः सन्ति ताभ्योऽप्यहम् ᵛउत्तरा उत्कृष्टतरैव त्वत्प्रसादाद्भवेयम्। ᵛअथ अनन्तरं ᵛमम ᵛया ᵛसपत्नी ᵛसा ᵛअधराभ्यः निकृष्टाभ्योऽपि ᵛअधरा निकृष्टतरा भवतु॥

---

१. त-भ१.२.४.८-मु—सपत्नीघ्ने प्रयोगविशेषे; भ७—सपत्नीप्रयोगविशेषे। २. भ५—अभिच्छन्नां।

नह्यस्या नाम॑ गृभ्णामि॒ नो अ॒स्मिन्र॑मते॒ जने॑ ।
परा॑मे॒व प॑रा॒वतं॑ स॒पत्नीं॑ गमयामसि ॥ ४ ॥

न॒हि । अ॒स्याः । नाम॑ । गृ॒भ्णामि॑ । नो इति॑ । अ॒स्मिन् । र॒म॒ते॒ । जने॑ ।
परा॑म् । ए॒व । प॒रा॒ऽवत॑म् । स॒ऽपत्नी॑म् । ग॒म॒या॒म॒सि॒ ॥ ४ ॥

ᵛअस्याः सपत्न्याः ᵛनाम संज्ञामपि ᵛनहि ᵛगृभ्णामि नैव गृह्णामि उच्चारयामि । ᵛनो न खलु काचित् ᵛअस्मिन् ᵛजने सपत्न्याख्ये ᵛरमते क्रीडति । अपि च तां ᵛसपत्नीं ᵛपरां ᵛपरावतम् ᵛएव अतिशयेन दूरदेशमेव ᵛगमयामसि गमयामः प्रापयामः । अतिशयेन भर्त्रा वियोजयाम इत्यर्थः ॥

अ॒हम॑स्मि॒ सह॑माना॒थ त्वम॑सि सास॒हिः ।
उ॒भे सह॑स्वती भू॒त्वी स॒पत्नीं॑ मे सहावहै ॥ ५ ॥

अ॒हम् । अ॒स्मि॒ । सह॑माना । अथ॑ । त्वम् । अ॒सि॒ । स॒स॒हिः ।
उ॒भे इति॑ । सह॑स्वती॒ इति॑ । भू॒त्वी । स॒ऽपत्नी॑म् । मे॒ । स॒हा॒व॒है॒ ॥ ५ ॥

हे ओषधि ᵛअहं त्वत्प्रसादात् ᵛसहमाना ᵛअस्मि सपत्न्या अभिभवित्री भवामि । ᵛअथ अपि च ᵛत्वम् अपि ᵛसासहिः ᵛअसि तस्या अभिभवित्री भवसि । आवाम् ᵛउभे अपि ᵛसहस्वती अभिभवित्र्यौ ᵛभूत्वी भूत्वा ᵛमे मम ᵛसपत्नीं ᵛसहावहै अभिभवाव ॥

उप॑ तेऽधां॒ सह॑मानाम॒भि त्वा॑धां॒ सही॑यसा ।
माम॒नु प्र ते॒ मनो॑ व॒त्सं गौरि॑व धावतु प॒था वारि॑व धावतु ॥ ६ ॥

उप॑ । ते॒ । अ॒धा॒म् । सह॑मानाम् । अ॒भि । त्वा॒ । अ॒धा॒म् । सही॑यसा ।
माम् । अनु॑ । प्र । ते॒ । मनः॑ । व॒त्सम् । गौःऽइ॑व । धा॒व॒तु॒ । प॒था । वाःऽइ॑व । धा॒व॒तु॒ ॥ ६ ॥

हे पते ᵛते तव ᵛसहमानां सपत्न्या अभिभवित्रीमिमामोषधिम् ᵛउप ᵛअधाम् । शिरस उपाधानं करोमि । ᵛसहीयसा अभिभवितृतरेण तेनोपधानेन त्वाम् ᵛअभि ᵛअधाम् अभितो धारयामि । ᵛते तव भर्तुः ᵛमनः ᵛमाम् अनुलक्ष्य ᵛप्र ᵛधावतु प्रकर्षेण शीघ्रं गच्छतु । तत्र निदर्शनद्वयमुच्यते । ᵛगौरिव यथा गौः ᵛवत्सं शीघ्रं गच्छति ᵛपथा निम्नेन मार्गेण ᵛवारिव वारुदकं यथा स्वभावतो गच्छति तद्वत् । अनेन निदर्शनद्वयेनौत्सुक्यातिशयः स्वाभाविकत्वं च प्रतिपाद्यते ॥ ॥३॥

'अरण्यानि' इति षड्टचमष्टादशं सूक्तमिरंमदपुत्रस्य देवमुनेरार्षम् । महदरण्यमरण्यानी । तद्देवताकम् । आनुष्टुभम् । तथा चानुक्रान्तम्—'अरण्यान्यैरंमदो देवमुनिररण्यानीं तुष्टाव' इति । गतो विनियोगः ॥

अर॑ण्या॒न्यर॑ण्यान्य॒सौ या प्रेव॒ नश्य॑सि ।
क॒था ग्राम॒ं न पृ॑च्छसि॒ न त्वा॒ भीरि॑व विन्दतीँ३ ॥ १ ॥

अर॑ण्यानि । अर॑ण्यानि । अ॒सौ । या । प्रऽइ॑व । नश्य॑सि ।
क॒था । ग्राम॑म् । न । पृ॒च्छ॒सि॒ । न । त्वा॒ । भीःऽइ॑व । वि॒न्द॒तीँ३ ॥ १ ॥

हे ᵛअरण्यानि । अरण्यस्य पालयित्री काचिदधिदेवतारण्यानीति नैरुक्ताः । वैयाकरणास्तु 'हिमारण्ययोर्महत्त्वे' ( पा. सू. ४. १. ४९. १ ) इत्यरण्यस्य महत्त्वे ङीषं स्मरन्ति । अरण्याधिदेवते ᵛअरण्यानि कान्ताराणि प्रति ᵛया ᵛअसौ त्वं ᵛप्रेव ᵛनश्यसि । इवः संप्रत्यर्थे । नशतिः प्राप्तिकर्मा । अत्र व्यत्ययेन श्यन् । संप्रति रक्षणाय प्राप्नोषि । यद्वा निर्जने देशे वर्तमानत्वान्नष्टेव प्रतीयसे । मा त्वं ᵛकथा कथं ᵛग्रामं ᵛन ᵛपृच्छसि । निर्जनेऽरण्ये कथं रमसे । नूनं ᵛत्वा त्वां ᵛभीः भयं ᵛन ᵛविन्दति न लभते किम् । वितर्के प्लुतः । इवः संप्रत्यर्थे परिभयार्थे वा । अत्र निरुक्तम्— 'अरण्यान्यरण्यस्य पत्न्यरण्यमपार्णं भवति ग्रामादरमणं भवतीति वा । अरण्यानीत्येनामामन्त्रयते । यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विन्दतीवेतीवः परिभयार्थे वा' ( निरु. ९. २९-३० ) इति ॥

**वृषारवाय वदते यदुपावति चिच्चिकः ।**
**आघाटिभिरिव धावयन्नरण्यानिर्महीयते ॥ २ ॥**

वृषऽरवाय । वदते । यत् । उपऽअवति । चिच्चिकः ।
आघाटिभिःऽइव । धावयन् । अरण्यानिः । महीयते ॥ २ ॥

ᵛवृषारवाय । वृषा सेचनसमर्थो रवः शब्दो यस्य सूक्ष्मजन्तुविशेषस्य झिल्ल्याख्यस्य स तथोक्तः । कटुकशब्दवानित्यर्थः । तस्मै वृषारवाख्याय ᵛवदते चीचीशब्दं कुर्वते ᵛचिच्चिकः चीचीशब्दं कुर्वन्नन्यो जन्तुः ᵛयत् यदा ᵛउपावति वृषारवोक्तस्य शब्दस्य प्रत्युत्तररूपेण चीचीशब्दकरणेनोपगच्छति । उपेत्य पालयति वा । तत्र दृष्टान्तः । ᵛआघाटिभिरिव । आघाटयो घाटलिकाः काण्डवीणाः । ताभिः ᵛधावयन् निषादादिसप्तस्वराणि शोधयन् गायक इव । तदा ᵛअरण्यानिः सा अरण्यानी[1] ᵛमहीयते पूज्यते ॥ 'इन्द्रवरुण॰' (पा. सू. ४. १. ४९) इत्यादिना ङीष् । तत्संनियोगेनानुगागमः । छान्दसो ह्रस्वः । अत एव हल्ङ्यादिसुलोपाभावः ॥

**उत गावइवादन्त्युत वेश्मेव दृश्यते ।**
**उतो अरण्यानिः सायं शकटीरिव सर्जति ॥ ३ ॥**

उत । गावःऽइव । अदन्ति । उत । वेश्मऽइव । दृश्यते ।
उतो इति । अरण्यानिः । सायम् । शकटीःऽइव । सर्जति ॥ ३ ॥

ᵛउत अपि च ᵛगावइव गवयाद्या मृगा अस्यामरण्यान्याम् ᵛअदन्ति तृणादिकं भक्षयन्ति । ᵛउत अपि च लतागुल्मादिकं ᵛवेश्मेव गृहमिव ᵛदृश्यते । ᵛउतो अपि च ᵛअरण्यानिः इयमरण्यानी ᵛसायं सायंकाले । इवः संप्रत्यर्थे । संप्रति ᵛशकटीः शकटान्[2] दार्वाद्याहरणायागतान् ᵛसर्जति विसर्जयति । यद्वा । शकटीः सर्जतीव दृश्यते । अहनि महदरण्यं शकटीभिः प्राप्य सर्वे जना अपेक्षितं काष्ठादिकं शकटीष्वध्यारोप्य सायंकाले तस्मान्निर्गच्छन्ति । तदभिप्रायेणेदं वचनम् ॥

**गामङ्गैष आ ह्वयति दार्वङ्गैषो अपावधीत् ।**
**वसन्नरण्यान्यां सायमक्रुक्षदिति मन्यते ॥ ४ ॥**

१. त-म२.८—अरण्यानिः । २. त१.२.३.६.७.—शकटानिव ।

गाम् । अङ्ग । एषः । आ । ह्वयति । दारु । अङ्ग । एषः । अप । अवधीत् ।
वसन् । अरण्यान्याम् । सायम् । अक्रुक्षत् । इति । मन्यते ॥ ४ ॥

ᐯअङ्ग हे अरण्यानि ᐯएषः त्वदधिष्ठिते महारण्ये संप्रति वर्तमानः ᐯगाम्[1] ᐯआ ᐯह्वयति[2] । ᐯएषः[3] चान्यः ᐯदारु काष्ठम् ᐯअपावधीत् अपहन्ति[3] । तथा ᐯसायं[4] सायंकाले रात्रौ ᐯअरण्यान्यां[5] महारण्ये[5] निवसन् मनुष्यो नानाविधं पक्षिमृगादिशब्दं शृण्वन् ᐯअक्रुक्षत् कश्चित्तस्करादिराक्रोशति ᐯइति भीतः सन् ᐯमन्यते बुध्यते ॥

न वा अरण्यानिर्हन्त्यन्यश्चेन्नाभिगच्छति ।
स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते ॥ ५ ॥

न । वै । अरण्यानिः । हन्ति । अन्यः । च । इत् । न । अभिऽगच्छति ।
स्वादोः । फलस्य । जग्ध्वाय । यथाऽकामम् । नि । पद्यते ॥ ५ ॥

ᐯन ᐯवै न खलु ᐯअरण्यानिः अरण्यानी ᐯहन्ति तत्र निवसन्तं हिनस्ति । यदि ᐯअन्यः व्याघ्रचौरादिः ᐯनाभिगच्छति । तर्हि ᐯस्वादोः रसवत आम्रादेः ᐯफलस्य । द्वितीयार्थे षष्ठी । फलं ᐯजग्ध्वाय भक्षयित्वा तत्र निवसन् पुरुषः ᐯयथाकामं यथेच्छं ᐯनि ᐯपद्यते निगच्छति वर्तते ॥ क्त्वाप्रत्यये 'अदो जग्धिर्ल्यप्ति किति ' ( पा. सू. २. ४. ३६ ) इति जग्ध्यादेशः । 'क्त्वो यक् ' ( पा. सू. ७. १. ४७ ) इति यक् ॥

आञ्जनगन्धिं सुरभिं बह्वन्नामकृषीवलाम् ।
प्राहं मृगाणां मातरमरण्यानिमशंसिषम् ॥ ६ ॥

आञ्जनऽगन्धिम् । सुरभिम् । बहुऽअन्नाम् । अकृषिऽवलाम् ।
प्र । अहम् । मृगाणाम् । मातरम् । अरण्यानिम् । अशंसिषम् ॥ ६ ॥

ᐯआञ्जनगन्धिम् । अञ्जनस्येदमाञ्जनं कस्तूर्यादि । तस्य गन्ध इव गन्धो यस्यास्तादृशी । 'उपमानाच्च' (पा. सू. ५. ४. १३७) इति गन्धस्येदन्तादेशः । अत एव ᐯसुरभिं सौरभ्योपेतां ᐯबह्वन्नां बहुभिरन्नैरदनीयैः फलमूलादिभिरुपेताम् ᐯअकृषीवलाम् । कृषिरेषामस्तीति कृषीवलाः कर्षकाः । ' रजःकृषि°' ( पा. सू. ५.२.११२ ) इत्यादिना वलच् । ' वले ' ( पा. सू. ६.३.११८ ) इति दीर्घः । तैर्वियुक्तां तादृशीं ᐯमृगाणां ᐯमातरं जनयित्रीम् ᐯअरण्यानिम् अरण्यानीम् ᐯअहं ᐯप्र ᐯअशंसिषम् उक्तेन प्रकारेण स्तुतवानस्मि ॥ ॥ ४ ॥

'श्रत्ते' इति पञ्चर्चमेकोनविंशं सूक्तं शिरीषपुत्रस्य सुवेदस आर्षम् । पञ्चमी त्रिष्टुप् शिष्टा जगत्यः । इन्द्रो देवता । अनुक्रम्यते हि—'श्रत्ते पञ्च सुवेदाः शैरीषिस्त्रिष्टुबन्तम् ' इति । तृतीये रात्रिपर्याये प्रशास्तुः शस्त्र इदं सूक्तम् । सूत्रितं च – ' श्रत्ते दधामीदं त्यत्पात्रमिन्द्रपानमिति याज्या ' ( आश्व. श्रौ. ६. ४) इति ॥

---

१. ग-त१.२.३.६.७.८-भ-त्वां । २. ग-ह्वयति नष्टा गामन्विच्छ चैब्रूते; त४.५-ह्वयति निष्ठां गामन्विद्वन् त्वदीयं तमोच्यते; भ२-ह्वयति नष्टां गामन्विष्यन् त्वदीयं नामोच्चैर्ब्रूते । ३. त१.२.३.६.७.८-भ-' एषः......अपहन्ति ' नास्ति । ४. त-भ-' सायं ' नास्ति । ५. त१.२.३.६.७.८-भ८-अरण्ये ।

श्रत्ते दधामि प्रथमाय मन्यवेऽहन्यद्वृत्रं नर्यं विवेरपः ।
उभे यत्त्वा भवतो रोदसी अनु रेजते शुष्मात्पृथिवी चिदद्रिवः ॥ १ ॥

श्रत् । ते । दधामि । प्रथमाय । मन्यवे । अहन् । यत् । वृत्रम् । नर्यम् । विवेः । अपः ।
उभे इति । यत् । त्वा । भवतः । रोदसी इति । अनु ।
रेजते । शुष्मात् । पृथिवी । चित् । अद्रिऽवः ॥ १ ॥

हे इन्द्र ^ते तव ^मन्यवे कोपाय तेजसे वा ^प्रथमाय मुख्याय ^श्रत् ^दधामि । श्रद्धा नामादरातिशयः । तद्विषयं करोमि । ^यत् येन मन्युना त्वं ^वृत्रम् आवरकमसुरं मेघं वा ^नर्यं नेतव्यम् ^अहन् अवधीः हत्वा च तेनावृताः ^अपः उदकानि च ^विवेः इमं लोकं प्रत्यागमयः । तस्मै मन्यव इत्यन्वयः । ^यत् यदा ^उभे ^रोदसी द्यावापृथिव्यौ ^त्वा त्वामनुसृत्य ^भवतः वर्तेते । त्वदधीने अभूतामित्यर्थः । तदानीं ^पृथिवी ^चित् । पृथिवीत्यन्तरिक्षनाम । प्रथितं विस्तीर्णमन्तरिक्षमपि हे ^अद्रिवः वज्रवन्निन्द्र ^शुष्मात् त्वदीयाद्बलात् ^रेजते कम्पते ॥

त्वं मायाभिरनवद्य मायिनं श्रवस्यता मनसा वृत्रमर्दयः ।
त्वामिन्नरो वृणते गविष्टिषु त्वां विश्वासु हव्यास्विष्टिषु ॥ २ ॥

त्वम् । मायाभिः । अनवद्य । मायिनम् । श्रवस्यता । मनसा । वृत्रम् । अर्दयः ।
त्वाम् । इत् । नरः । वृणते । गोऽइष्टिषु । त्वाम् । विश्वासु । हव्यासु । इष्टिषु ॥ २ ॥

हे ^अनवद्य अवद्यरहित प्रशस्येन्द्र ^त्वं ^मायिनं मायाविनं ^वृत्रं ^मायाभिः वञ्चनाभिर्बुद्धिविशेषैर्वा ^श्रवस्यता श्रवः श्रवणीयं यशोऽन्नं वेच्छता ^मनसा[1] ^अर्दयः अहिंसीः । अपि च ^नरः नेतारोऽङ्गिरसः ^त्वामित् त्वामेव ^गविष्टिषु गवां पणिभिरपहृतानामेषणेषु प्रापणेषु विषयभूतेषु ^वृणते संभजन्ते । तथा ^विश्वासु सर्वासु ^हव्यासु आह्वातव्यासु प्रार्थनीयासु ^इष्टिषु यागक्रियासु ^त्वाम् एव ^वृणते[2] ॥

ऐषु चाकन्धि पुरुहूत सूरिषु वृधासो ये मघवन्नानशुर्मघम् ।
अर्चन्ति तोके तनये परिष्टिषु मेधसाता वाजिनमह्रये धने ॥ ३ ॥

आ । एषु । चाकन्धि । पुरुऽहूत । सूरिषु । वृधासः । ये । मघऽवन् । आनशुः । मघम् ।
अर्चन्ति । तोके । तनये । परिष्टिषु । मेधऽसाता । वाजिनम् । अह्रये । धने ॥ ३ ॥

हे ^पुरुहूत बहुभिराहूतेन्द्र ^एषु ^सूरिषु स्तोतृषु ^आ ^चाकन्धि अत्यर्थमभिदीप्यस्व अभिकामयस्व वा ॥ 'कनी[3] दीप्तिकान्तिगतिषु'। अस्माद्यङ्लुगन्तात् ... मघवन् धनवन्निन्द्र ^ये सूरयः ^वृधासः त्वत्प्रसादाद्वर्धमानाः सन्तः ^मघं धनम् ^आनशुः प्राप्नुवन्ति[4] । अपि च ^मेधसाता मेधसातौ यज्ञे ^वाजिनं बलवन्तमन्नवन्तं[5] वेजनवन्तं वा त्वां ये ^अर्चन्ति पूजयन्ति ^तोके पुत्रे ^तनये तत्पुत्रे ^परिष्टिषु परित इष्यमाणेष्वन्येष्वपि फलेषु ^अह्रये अलज्जाकरे ^धने च । एतेषु निमित्तभूतेषु सत्सु त्वामेव स्तुत्यादिभिः पूजयन्तीत्यर्थः ॥

---

१. ग-त१.२.३.६.७.८-भ-मनसा च । २. त१.२.३.६.७-वृणुते । ३. भ१.४.७-कन ।
४. त१.२.३.६.७.८-भ५.८-मु-आप्नुवंति । ५. त१.२.३.७-भ१.४.७.८-बलवंतं ।

स इन्नु रायः सुभृतस्य चाकनन्मदं यो अस्य रंह्यं चिकेतति ।
त्वावृधो मघवन्दाश्वध्वरो मक्षू स वाजं भरते धना नृभिः ॥ ४ ॥

सः । इत् । नु । रायः । सुऽभृतस्य । चाकनत् । मदम् । यः । अस्य । रंह्यम् । चिकेतति ।
त्वाऽवृधः । मघऽवन् । दाशुऽअध्वरः । मक्षु । सः । वाजम् । भरते । धना । नृऽभिः ॥४॥

V स V इत् स एव स्तोता V सुभृतस्य सुष्ठु संपादितस्य V रायः धनस्य । द्वितीयार्थे षष्ठी । ईदृशं धनं V नु क्षिप्रं V चाकनत् कामयते । लभत इत्यर्थः । V रंह्यम् । रंहो वेगः । तदर्हम् V अस्य इन्द्रस्य V मदं सोमपानजन्यं हर्षं V यः स्तोता V चिकेतति स्तुतिपदैर्जानाति । हे V मघवन् V त्वावृधः त्वया वर्धितः V दाश्वध्वरः दत्तयज्ञो यजमानः V नृभिः नेतृभिर्ऋत्विग्भिर्भृत्यैर्वा V धना धनानि V वाजम् अन्नं च V मक्षु शीघ्रं V भरते संपादयति ॥

त्वं शर्धाय महिना गृणान उरु कृधि मघवञ्छग्धि रायः ।
त्वं नो मित्रो वरुणो न मायी पित्वो न दस्म दयसे विभक्ता ॥ ५ ॥

त्वम् । शर्धाय । महिना । गृणानः । उरु । कृधि । मघऽवन् । शग्धि । रायः ।
त्वम् । नः । मित्रः । वरुणः । न । मायी । पित्वः । न । दस्म । दयसे । विऽभक्ता ॥५॥

हे इन्द्र V त्वं V महिना महता स्तोत्रेण V गृणानः स्तूयमानः सन् V शर्धाय शर्धं बलम् V उरु V कृधि विस्तीर्णं कुरु । हे V मघवन् V रायः धनानि च V शग्धि अस्मभ्यं प्रयच्छ । हे V दस्म दर्शनीयेन्द्र V विभक्ता विशेषेण धनानां भाजयिता V त्वं V मित्रो V वरुणो V न मित्रवद्वरुणवच्च V मायी प्रज्ञायुक्तः सन् V नः अस्मभ्यम् । नः संप्रत्यर्थे । संप्रति V पित्वः अन्नानि V दयसे प्रयच्छसि ॥    ॥ ५ ॥

'सुष्वाणासः' इति पञ्चर्चं विंशं सूक्तं वेनपुत्रस्य पृथोरार्षं त्रैष्टुभमैन्द्रम् । अनुक्रान्तं च— 'सुष्वाणासः पृथुर्वैन्यः' इति । गतो विनियोगः ॥

सुष्वाणास इन्द्र स्तुमसि त्वा ससवांसश्च तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य चाकन्त्मना तना सनुयाम त्वोताः ॥ १ ॥

सुस्वानासः । इन्द्र । स्तुमसि । त्वा । ससऽवांसः । च । तुविऽनृम्ण । वाजम् ।
आ । नः । भर । सुवितम् । यस्य । चाकन् । त्मना । तना । सनुयाम । त्वाऽऊताः ॥१॥

हे V इन्द्र V सुष्वाणासः सोममभिषुतवन्तो वयं त्वां V स्तुमसि स्तुमः । हे V तुविनृम्ण बहुबल बहुधन वा V वाजं चरुपुरोडाशादिलक्षणमन्नं V ससवांसः संभक्तवन्तः V च वयं त्वां स्तुमः । यत एवमतो हेतोः V नः अस्मभ्यं V सुवितं सुष्ठु प्राप्तव्यं[1] शोभनं धनम्[2] V आ V भर आहर प्रयच्छ । V यस्य यद्धनमतिप्रियत्वेन V चाकन् त्वं कामयसे तद्धनमा भरेत्यर्थः । वयं च V त्वोताः त्वया रक्षिताः सन्तः V तना[2] । धननामैतत् । विस्तृतानि धनानि V त्मना आत्मना स्वयमेवान्यनैरपेक्ष्येणैव V सनुयाम तव प्रसादाल्लभेमहि ॥

१. त१.२.३.६.८-भ१.४.७.८—व्याप्तव्यं । २. भ–' धनं.....तना ' नास्ति ।

ऋष्वस्त्वमिन्द्र शूर जातो दासीर्विशः सूर्येण सह्याः ।
गुहा हितं गुह्यं गूळ्हमप्सु बिभृमसि प्रस्रवणे न सोमम् ॥ २ ॥

ऋष्वः । त्वम् । इन्द्र । शूर । जातः । दासीः । विशः । सूर्येण । सह्याः ।
गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्ऽसु । बिभृमसि । प्रऽस्रवणे । न । सोमम् ॥ २ ॥

हे शूर शौर्यवन् इन्द्र ऋष्वः महान् दर्शनीयो वा त्वं जातः जातमात्र एव दासीः । उपक्षयकारिणो दासा असुराः । तत्संबन्धिनीः विशः प्रजाः सूर्येण सूर्यात्मना सह्याः अभ्यभवः । तथा गुहा गुहायां हितं निहितमत एव गुह्यम् अदृश्यं वलाख्यमसुरम् अप्सु उदकेषु गूढं निगूढं कुयवाख्यं च त्वमभिभूतवानसि । वयमपि प्रस्रवणे प्रवर्षणे सति । नः संप्रत्यर्थे । संप्रति सोमं बिभृमसि त्वदर्थं बिभृमः धारयामः ॥

अर्यो वा गिरो अभ्यर्च विद्वानृषीणां विप्रः सुमतिं चकानः ।
ते स्याम ये रणयन्त सोमैरेनोत तुभ्यं रथोळ्ह भक्षैः ॥ ३ ॥

अर्यः । वा । गिरः । अभि । अर्च । विद्वान् । ऋषीणाम् । विप्रः । सुऽमतिम् । चकानः ।
ते । स्याम । ये । रणयन्त । सोमैः । एना । उत । तुभ्यम् । रथऽओळ्ह । भक्षैः ॥ ३ ॥

विप्रः मेधावी ऋषीणां मन्त्रदर्शिनां सुमतिं सुष्टुतिं[1] चकानः कामयमानः विद्वान् जानन् अर्यो वा स्वामी च भवन् हे इन्द्र ईदृशस्त्वं गिरः स्तोतॄन् स्तुतीर्वा अभ्यर्च । सम्यक्स्तुतमित्यभिपूजय । अपि च ते वयं स्याम सर्वदा भवेम ये सोमैः त्वां रणयन्त रमयन्ति । उत अपि च हे रथोळ्ह रथैरभ्युह्यमान ॥ आ ऊढ ओढः । रथेन ओढो रथोढः । 'ओमाङोश्च' (पा. सू. ६. १. ९५ ) इति पररूपम् ॥ ईदृशेन्द्र भक्षैः भक्षणीयैश्चरुपुरोडाशादिभिः सार्धम् एना इमानि स्तोत्राणि तुभ्यं त्वदर्थं क्रियन्ते ॥

इमा ब्रह्मेन्द्र तुभ्यं शंसि दा नृभ्यो नृणां शूर शवः ।
तेभिर्भव सक्रतुर्येषु चाकन्नुत त्रायस्व गृणत उत स्तीन् ॥ ४ ॥

इमा । ब्रह्म । इन्द्र । तुभ्यम् । शंसि । दाः । नृऽभ्यः । नृणाम् । शूर । शवः ।
तेभिः । भव । सऽक्रतुः । येषु । चाकन् । उत । त्रायस्व । गृणतः । उत । स्तीन् ॥ ४ ॥

हे इन्द्र त्वदर्थम् इमा इमानि पुरोवर्तीनि ब्रह्म[2] ब्रह्माणि परिवृढानि स्तोत्राणि शंसि अशंसिषत । शस्यन्ते । शंसेश्छान्दसे कर्मणि लुङि व्यत्ययेनैकवचनम् । हे शूर शौर्यवन्निन्द्र त्वं नृणां मनुष्याणां मध्ये नृभ्यः स्तुत्यादेः नेतृभ्यः[3] शवः बलं दाः देहि । अपि च तेभिः तैः सक्रतुः समानकर्मा समानप्रज्ञो वा भव येषु स्तोतृषु चाकन् हविरादि[4] कामयसे ॥ 'कन दीप्तिकान्तिगतिषु' । अस्माद्यङ्लुगन्ताच्छान्दसे लङि सिपि रूपमेतत् । कर्मैवां पूर्ववत् । सिपि 'मो नो धातोः' इति नत्वम् ॥ उत अपि च गृणतः स्तोतॄन् त्रायस्व पालय । उत अपि च स्तीन् । स्त्यायतेरेतद्रूपम् । संघीभूय स्थितान् यजमानानपि त्रायस्व ॥

१. त१.२.३.७-भ१.४.७.८-'सुष्टुतिं' नास्ति । २. त१.२.३.७-भ१.४.७.८-'ब्रह्म' नास्ति ।
३. ग-त४.५-भ२-नेतृभ्यो जनेभ्यः । ४. ग-त४.५-भ२-हविरादिकं ।

**श्रुधी हवमिन्द्र शूर पृथ्या उत स्तवसे वेन्यस्यार्कैः ।**
**आ यस्ते योनिं घृतवन्तमस्वारूर्मिर्न निम्नैर्द्रवयन्त वक्वाः ॥ ५ ॥**

श्रुधि । हवम् । इन्द्र । शूर । पृथ्याः । उत । स्तवसे । वेन्यस्य । अर्कैः ।
आ । यः । ते । योनिम् । घृतऽवन्तम् । अस्वाः । ऊर्मिः । न । निम्नैः । द्रवयन्त । वक्वाः ॥५॥

हे शूर इन्द्र पृथ्याः पृथोर्वैन्यस्य मम हवम् आह्वानं श्रुधि शृणु । उत अपि च वेन्यस्य वेनपुत्रस्य मम अर्कैः मन्त्रैः स्तवसे स्तूयसे । यकि प्राप्ते व्यत्ययेन शप् । यः स्तोता घृतवन्तम् उदकवन्तं ते तव योनिं निवासभूमिम् आ अस्वाः अभ्यस्वार्षीत् अभ्यष्टौत् ॥ 'स्वृ शब्दोपतापयोः' । अस्माल्लुङि तिपि 'बहुलं छन्दसि' इतीडभावे हल्ङ्यादिलोपे च 'रात्सस्य' इति सलोपः[1]॥ यद्वा । घृतवन्तमाज्यादिना हविषोपेतं योनिम् । गृहनामैतत् । यज्ञगृहं प्राप्य ते त्वां योऽभिष्टौति तस्य वेन्यस्य अर्कैरित्यन्वयः । अपि च वक्वाः वक्वानः ॥ वचेः 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् । अन्त्यविकारश्छान्दसः । जसि पृषोदरादित्वाद्वर्णलोपः ॥ अन्येऽपि सर्वे स्तोतारः निम्नैः प्रवणैर्मार्गैः ऊर्मिर्न उदकसंघ इव द्रवयन्त । स्तुतिभिस्त्वामेवाभिद्रवन्ति अभिगच्छन्ति ॥ ॥६॥

'सविता यन्त्रैः' इति पञ्चर्चमेकविंशं सूक्तं हिरण्यस्तूपपुत्रस्यार्चत आर्षं त्रैष्टुभं सवितृदेवत्यम् । अनुक्रान्तं च—'सवितार्चन्[2] हैरण्यस्तूपः सावित्रम्' इति । गतो विनियोगः ॥

**सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।**
**अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ॥ १ ॥**

सविता । यन्त्रैः । पृथिवीम् । अरम्णात् । अस्कम्भने । सविता । द्याम् । अदृंहत् ।
अश्वम्ऽइव । अधुक्षत् । धुनिम् । अन्तरिक्षम् । अतूर्ते । बद्धम् । सविता । समुद्रम् ॥ १ ॥

सविता सर्वस्व प्रसविता प्रेरको मध्यमस्थानो देवः सोऽयं यन्त्रैः यमनसाधनैर्वृष्टिप्रदानादिभिरुपायैर्वायवीयैः पाशैर्वा पृथिवीं प्रथितां भूमिम् अरम्णात् अरमयत् । सुखेनावस्थापयति । तथा स एव सविता अस्कम्भने । पतनप्रतिबन्धकमालम्बनं स्कम्भनम् । तद्रहिते स्थले द्यां द्युलोकमपि अदृंहत् दृढीकृतवान् । यथाधो न पतति तथात्मीयैरेवोपायैरवस्थापितवानित्यर्थः । अश्वमिव धुनिं कम्पयितव्यं कम्पयितारं वा अन्तरिक्षम् अन्तरा क्षान्तं मध्यमस्थानगतम् अतूर्ते केनाप्यहिंसितेऽत्वरमाणे वा नभसि वायवीयैः पाशैः बद्धं समुद्रं[3] मेघमयमेव[4] सविता अधुक्षत् उदकानि दोग्धि । यद्वा । अन्तरिक्षमिति सप्तम्यर्थे प्रथमा । अतूर्तेऽन्तरिक्षे बद्धं[5] समुदितारं धुनिं कम्पनीयं मेघमश्वमिवाधुक्षत् । सविता क्लेशयति । 'धुक्ष धिक्ष संदीपनक्लेशनजीवनेषु' । यथा शिक्षकः सादी अश्वं क्लेशयत्येवं वर्षणाय मेघं क्लेशयतीत्यर्थः[5] । अत्र निरुक्तं—'सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्ण इति वात्वरमाण इति वा सविता समुदितारम्' ( निरु. १०. ३२ ) इति ॥

---

१. त१.२.३.६.७.८–'सलोपः......वेन्यस्य' नास्ति । २. ग-त८-भ–सवितार्चंतो; त४-५–सवितार्चतो । ३. त४ ५–समुदितारं । ४. त१.२.३.६.७.८-भ१.४.७.८–'मेघमयमेव...बद्धं' नास्ति । ५. ग–क्लेदयतीत्यर्थः ।

यत्रा॑ समु॒द्रः स्क॑भि॒तो व्यौन॒दपां॑ नपात्सवि॒ता तस्य॑ वेद ।
अतो॒ भूरत॒ आ॒ उत्थि॑तं॒ रजोऽतो॒ द्यावा॑पृथि॒वी अ॑प्रथेताम् ॥ २ ॥

यत्र॑ । स॒मु॒द्रः । स्क॒भि॒तः । वि । औन॑त् । अपा॑म् । न॒पात् । स॒वि॒ता । तस्य॑ । वे॒द ।
अत॑ः । भूः । अत॑ः । आ॒ः । उत्थि॑तम् । रज॑ः । अत॑ः । द्यावा॑पृथि॒वी इति॑ । अ॒प्र॒थे॒ता॒म् ॥२॥

ᵛयत्र यस्मिन्नन्तरिक्षे ᵛसमुद्रः समुन्दनशीलो मेघः ᵛस्कभितः स्तम्भितो वायुपाशैर्बद्धः सन् ᵛव्यौनत् विशेषेण भूमिमुनत्ति उदकैः क्लेदयति । 'उन्दी क्लेदने'। अस्माच्छान्दसे लङि रूपमेतत् । हे ᵛअपां ᵛनपात् मध्यमस्थान वैद्युताग्ने तव संबन्धी ᵛसविता प्रेरको देवः ᵛतस्य तत्स्थानं ᵛवेद वेत्ति जानाति । ᵛअतः अस्मादेव सवितुः ᵛभूः भूमिरासीत् । ᵛअतः एव ᵛउत्थितम् ऊर्ध्वमवस्थितं ᵛरजः अन्तरिक्षं च ᵛआः आसीत् अजायत । अस्तेर्लङि 'बहुलं छन्दसि' इतीडभावः । 'हल्ङ्याब्भ्यः' इति लोपः । ᵛअतः अस्मादेव सवितुः ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛअप्रथेतां विस्तीर्णेऽभ्यभूताम् ॥

प॒श्चेदम॒न्यद॑भव॒द्यज॑त्रमम॑र्त्यस्य॒ भुव॑नस्य भू॒ना ।
सु॒प॒र्णो अ॒ङ्ग स॑वि॒तुर्ग॒रुत्मा॒न्पूर्वो॑ जा॒तः स उ॑ अ॒स्यानु॒ धर्म॑ ॥ ३ ॥

प॒श्चा । इ॒दम् । अ॒न्यत् । अ॒भ॒व॒त् । यज॑त्रम् । अम॑र्त्यस्य । भुव॑नस्य । भू॒ना ।
सु॒ऽप॒र्णः । अ॒ङ्ग । स॒वि॒तुः । ग॒रुत्मा॑न् । पूर्वः॑ । जा॒तः । सः । ऊँ॒ इति॑ । अ॒स्य । अनु॑ । धर्म॑ ॥३॥

ᵛअन्यत् सवितृव्यतिरिक्तम् ᵛइदं देवतान्तरं ᵛपश्चा पश्चात् । 'पश्च पश्चा च च्छन्दसि' (पा. सू. ५. ३. ३३) इति निपात्यते । सवितृप्रेरणानन्तरमेव ᵛयजत्रं यष्टव्यम् ᵛअभवत् । केन साधनेन । ᵛअमर्त्यस्य मरणरहितस्य ᵛभुवनस्य लोकस्य[1] स्वर्गाख्यस्य संबन्धिना ᵛभूना भूतेन । स्वर्गं उत्पन्नेन सोमेनेत्यर्थः । यद्वा । अमर्त्यस्य भुवनस्य संबन्धीदं देवतान्तरं भूना भूम्ना बहुत्वेन युक्तं यष्टव्यमभवत् । कुत इत्यत आह । हे ᵛअङ्ग स्तोतः ᵛसुपर्णः शोभनपतनः ᵛगरुत्मान् सोमस्यापहर्ता तार्क्ष्यः ᵛसवितुः प्रेरकादस्माद्देवात् ᵛपूर्वः प्रथमभावी सन् ᵛजातः । अतो हेतोः सुपर्णो[2] गरुत्मान् ᵛअस्य सवितुः ᵛधर्म धारणमनुसृत्य वर्तते । सवितृप्रेरणाधीनत्वात्सर्वगतीनां सोमाहरणमपि तदधीनमिति सवितृप्रेरणानन्तरमेव सर्वे सोमयागाः प्रवर्तन्त इत्यर्थः । ᵛउ इति पूरकः ॥

गाव॑इव॒ ग्रामं॒ यूयु॑धिरि॒वाश्वा॑न्वा॒श्रेव॑ व॒त्सं सु॒मना॒ दुहा॑ना ।
पति॑रिव जा॒याम॒भि नो॒ न्ये॑तु ध॒र्ता दि॒वः स॑वि॒ता वि॒श्ववा॑रः ॥ ४ ॥

गाव॑ःऽइव । ग्राम॑म् । युयु॑धिःऽइव । अश्वा॑न् । वा॒श्राऽइ॑व । व॒त्सम् । सु॒ऽमना॑ः । दु॒हा॑ना ।
पति॑ःऽइव । जा॒याम् । अ॒भि । न॒ः । नि । ए॒तु॒ । ध॒र्ता । दि॒वः । स॒वि॒ता । वि॒श्वऽवा॑रः ॥४॥

ᵛगावइव यथारण्ये संचरन्तो गावः ᵛग्रामं शीघ्रमभिगच्छन्ति । ᵛयुयुधिरिव यथा योद्धा युद्धार्थम् ᵛअश्वान् अभिगच्छति । 'युध संप्रहारे' । 'आदृगमहनजनः' इत्यत्र 'उत्सर्गश्छन्दसि' (पा. सू. ३.२.१७१.२) इति वचनात् किन्प्रत्ययः । छान्दसं सांहितिकमभ्यासदीर्घत्वम् । ᵛसुमनाः

१. त१.३.६.७.८-म१.२.४.८—भूलोकस्य । २. ग—स सुपर्णो ।

शोभनमनस्का ᵛदुहाना दोग्ध्री बहुपयस्का ᵛवाश्रेव हम्भारवात्मकं शब्दं कुर्वती गौर्यथात्मीयं ᵛवत्सम् अभिगच्छति। ᵛपतिरिव यथा भर्ता ᵛजायां स्वभार्यां शीघ्रमभिगच्छति एवमेव ᵛसविता ᵛनः अस्मान् ᵛनि ᵛअभि ᵛएतु नितरामभिगच्छतु। कीदृशः। ᵛदिवः द्युलोकस्य ᵛधर्ता धारयिता अवस्थापयिता वा अत एव ᵛविश्ववारः सर्वैर्वरणीयः॥

**हिर॑ण्यस्तूपः सवितर्यथा॑ त्वाङ्गिरसो जु॒ह्वे वाजे॑ अ॒स्मिन्।**
**ए॒वा त्वार्च॒न्नव॑से॒ वन्द॑मानः॒ सोम॑स्येवां॒शुं प्रति॑ जागरा॒हम्॥ ५॥**

हिर॑ण्यऽस्तूपः। स॒वि॒तः॒। यथा॑। त्वा॒। आ॒ङ्गि॒र॒सः। जु॒ह्वे। वाजे॑। अ॒स्मिन्।
ए॒व। त्वा॒। अर्च॑न्। अव॑से। वन्द॑मानः। सोम॑स्यऽइव। अं॒शुम्। प्रति॑। जा॒ग॒र॒। अ॒हम्॥५॥

हे ᵛसवितः प्रेरक ᵛत्वा त्वाम् ᵛआङ्गिरसः अङ्गिरसः पुत्रः ᵛहिरण्यस्तूपः मम पिता ᵛअस्मिन् ᵛवाजे अन्ने निमित्तभूते सति[1] ᵛयथा ᵛजुह्वे आहूतवान् ᵛएव[2] एवम् ᵛअर्चन्[2] एतत्संज्ञोऽहं ᵛत्वा त्वाम् ᵛअवसे अवनाय रक्षणार्थं ᵛवन्दमानः स्तुवन् आह्वयामीति शेषः। आहूय च ᵛसोमस्येवांशुं यथा सोमलतां प्रति यजमाना जाग्रति यागपर्यन्तं तद्रक्षणे प्रबुद्धा वर्तन्ते तथा ᵛअहं त्वत्परिचर्यां ᵛप्रति ᵛजागर जागर्मि। जागर्तेर्णल्युत्तमैकवचने रूपम्। अत्र निरुक्तं—'हिरण्यस्तूपो हिरण्मयस्तूपो[3] हिरण्मयः स्तूपोऽस्येति[3] वा[4]। स्तूपः स्त्यायतेः संघातः। सवितर्यथा त्वाङ्गिरसो जुह्वे[5] वाजेऽन्नेऽस्मिन्नेवं[6] त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम्' (निरु. १०. ३३) इति॥ ॥ ७॥

'समिद्धः' इति पञ्चर्चं द्वाविंशं सूक्तं वसिष्ठपुत्रस्य मृळीकस्यार्षमाग्नेयम्। चतुर्थीपञ्चम्यावुपरिष्टाज्ज्योतिषी त्रिष्टुब्द्वादशाष्टकवत्यौ। अक्षरव्यूहेन चतुर्थी जगती वा। शिष्टा बृहत्यः। तथा चानुक्रान्तं—'समिद्धो मृळीको[7] वासिष्ठ[7] आग्नेयं बार्हतमन्त्ये उपरिष्टाज्ज्योतिषी जगत्युपान्त्या वा' इति। गतो विनियोगः॥

**समि॑द्धश्चि॒त्समि॑ध्यसे दे॒वेभ्यो॑ हव्यवाहन।**
**आ॒दि॒त्यै रु॒द्रैर्वसु॑भिर्न॒ आ ग॑हि मृळी॒काय॑ न॒ आ ग॑हि॥ १॥**

सम्ऽइ॑द्धः। चि॒त्। सम्। इ॒ध्य॒से॒। दे॒वेभ्यः॑। ह॒व्य॒ऽवा॒ह॒न॒।
आ॒दि॒त्यैः। रु॒द्रैः। वसु॑ऽभिः। नः॒। आ। ग॒हि॒। मृ॒ळी॒काय॑। नः॒। आ। ग॒हि॒॥ १॥

हे ᵛहव्यवाहन हव्यानां हविषां वोढरग्ने ᵛसमिद्धश्चित् संदीप्तोऽपि ᵛदेवेभ्यः यागार्थं ᵛसमिध्यसे। पुनरप्यृत्विग्भिः समिद्भिः संदीप्यसे। स त्वम् ᵛआदित्यैः आदित्यादिभिस्त्रिभिर्गणैः सार्धं ᵛनः अस्मान् ᵛआ ᵛगहि आगच्छ। तथा ᵛनः अस्माकं ᵛमृळीकाय सुखाय तदर्थमपि ᵛआ ᵛगहि। यद्वा। मृळीकायैतत्संज्ञाय नो मह्यमृषये श्रेयांसि कर्तुमागच्छ॥

**इ॒मं य॒ज्ञमि॒दं वचो॑ जुजुषा॒ण उ॒पाग॑हि।**
**मर्ता॑सस्त्वा समिधान हवामहे मृळी॒काय॑ हवामहे॥ २॥**

---

१. ग-त-भ-सति त्वा त्वां। २. त१.२.३.६.७.८-भ-'एवैवमर्चन्' नास्ति। ३. त१.२.३.४.५.६.८-भ-'हिरण्मयस्तूपोस्येति। ४. त१.२.३-भ-'वा' नास्ति। ५. ग-जुह्वे ह्वयत्र; त१.२.३.६.८-भ-जुह्वे ह्वयत। ६. त-भ-वाजेन्ने एवं। ७. अनु.-वासिष्ठो मृळीकः।

इमम् । यज्ञम् । इदम् । वचः । जुजुषाणः । उपऽआगहि ।
मर्तासः । त्वा । सम्ऽइधान । हवामहे । मृळीकाय । हवामहे ॥ २ ॥

हे अग्ने ᵛइमम् अस्माभिः क्रियमाणं पुरोवर्तिनं ᵛयज्ञमिदं ᵛवचः स्तोत्रं च ᵛजुजुषाणः सेवमानः ᵛउपागहि उपागच्छ । हे ᵛसमिधान समिध्यमान ᵛमर्तासः मर्ता मनुष्याः ᵛत्वा त्वां ᵛहवामहे आह्वयामहे । ᵛमृळीकाय सुखायैतत्संज्ञाय वा ऋषये त्वामेवाह्वयामहे ॥

**त्वामु जातवेदसं विश्ववारं गृणे धिया ।**
**अग्ने देवाँ आ वह नः प्रियव्रतान् मृळीकाय प्रियव्रतान् ॥ ३ ॥**

त्वाम् । ऊँ इति । जातऽवेदसम् । विश्वऽवारम् । गृणे । धिया ।
अग्ने । देवान् । आ । वह । नः । प्रियऽव्रतान् । मृळीकाय । प्रियऽव्रतान् ॥ ३ ॥

हे ᵛअग्ने ᵛविश्ववारं विश्वैः सर्वैर्वरणीयं ᵛजातवेदसं ᵛजातानां वेदितारं जातप्रज्ञं जातधनं वा ᵛत्वामु त्वामेव ᵛधिया स्तुत्या ᵛगृणे स्तौमि । 'गॄ शब्दे' । क्रैयादिकः । प्वादित्वाद्ध्रस्वः । ᵛप्रियव्रतान् प्रियाणि व्रतानि कर्माणि येषां तादृशान् ᵛदेवान् ᵛनः अस्मदर्थम् ᵛआ ᵛवह ᵛआनय । अस्मद्यज्ञं प्रापय । ᵛमृळीकाय सुखार्थमेतत्संज्ञाय वा मह्यं ᵛप्रियव्रतान् तानेवावह ॥

**अग्निर्देवो देवानामभवत्पुरोहितोऽग्निं मनुष्या३ ऋषयः समीधिरे ।**
**अग्निं महो धनसातावहं हुवे मृळीकं धनसातये ॥ ४ ॥**

अग्निः । देवः । देवानाम् । अभवत् । पुरःऽहितः । अग्निम् । मनुष्याः । ऋषयः । सम् । ईधिरे ।
अग्निम् । महः । धनऽसातौ । अहम् । हुवे । मृळीकम् । धनऽसातये ॥ ४ ॥

ᵛदेवः दानादिगुणयुक्तः ᵛअग्निः ᵛदेवानाम् अन्येषां ᵛपुरोहितः पुरस्ताद्धृतः ᵛअभवत् । यद्वा पुरोहितवद्धितकार्यभवत् । यत एवमतः कारणात् तमेव ᵛअग्निम् ᵛऋषयः अतीन्द्रियार्थदर्शिनो ᵛमनुष्याः मानवा यजमानाः ᵛसमीधिरे संदीपयन्ति । अपि च तम् ᵛअग्निं ᵛमहः महतः ᵛधनसातौ धनस्य संभजने निमित्तभूते ᵛअहं ᵛहुवे आह्वये । विशेषणसापेक्षस्यापि धनशब्दस्य छान्दसः समासः । यद्वा । महतो यागस्य कर्तारमग्निमित्यर्थः । ᵛधनसातये धनलाभार्थं ᵛमृळीकं सुखमेतत्संज्ञं वा मां सोऽग्निः करोत्वित्यर्थः ॥

**अग्निरत्रिं भरद्वाजं गविष्ठिरं प्रावन्नः कण्वं त्रसदस्युमाहवे ।**
**अग्निं वसिष्ठो हवते पुरोहितो मृळीकाय पुरोहितः ॥ ५ ॥**

अग्निः । अत्रिम् । भरत्ऽवाजम् । गविष्ठिरम् । प्र । आवत् । नः । कण्वम् । त्रसदस्युम् । आऽहवे ।
अग्निम् । वसिष्ठः । हवते । पुरःऽहितः । मृळीकाय । पुरःऽहितः ॥ ५ ॥

ᵛअत्रिं ᵛभरद्वाजं ᵛगविष्ठिरं ᵛकण्वं ᵛत्रसदस्युं च ᵛनः अस्मान् ᵛआहवे संग्रामे अयम् ᵛअग्निः ᵛप्रावत् प्ररक्षतु । ᵛपुरोहितः पुरोहितवद्धितकारी[1] मम पिता ᵛवसिष्ठः ऋषिः ᵛअग्निं ᵛहवते स्तुतिभिराह्वयति । स चाहूतः ᵛमृळीकाय सुखार्थमेतत्संज्ञाय वा मह्यं ᵛपुरोहितः पुरोधा[2] देवानां पुरःस्थापयिता भवतु ॥ ॥ ८ ॥

१. त-भ-पुरोहितकारी । २. ग२-त४.५-भ२ -पुरोधाता ।

'श्रद्धया' इति पञ्चर्चं त्रयोविंशं सूक्तमानुष्टुभं श्रद्धादेवत्यम्। कामगोत्रजा श्रद्धा नामर्षिका। तथा चानुक्रम्यते—'श्रद्धया श्रद्धा कामायनी श्राद्धमानुष्टुभं तु' इति। लैङ्गिको विनियोगः॥

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि॥ १॥

श्रद्धया। अग्निः। सम्। इध्यते। श्रद्धया। हूयते। हविः।
श्रद्धाम्। भगस्य। मूर्धनि। वचसा। आ। वेदयामसि॥ १॥

पुरुषगतोऽभिलाषविशेषः श्रद्धा। तया "श्रद्धया "अग्निः गार्हपत्यादिः "समिध्यते संदीप्यते। यदा हि[1] पुरुषे श्रद्धाग्निगोचर आदरातिशयो जायते तदैव पुरुषोऽग्नीन् प्रज्वालयति नान्यदा। "श्रद्धया एव "हविः पुरोडाशादिहविश्च "हूयते। आहवनीये प्रक्षिप्यते। यद्वा। अस्य सूक्तस्य द्रष्ट्या श्रद्धाख्ययाग्निः समिध्यते[2]। "श्रद्धाम् उक्तलक्षणायाः श्रद्धाया अभिमानिदेवतां "भगस्य भजनीयस्य धनस्य "मूर्धनि प्रधानभूते स्थानेऽवस्थितां "वचसा वचनेन स्तोत्रेण "आ "वेदयामसि अभितः प्रख्यापयामः। इदन्तो मसिः॥

प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः।
प्रियं भोजेषु यज्वस्विदं म उदितं कृधि॥ २॥

प्रियम्। श्रद्धे। ददतः। प्रियम्। श्रद्धे। दिदासतः।
प्रियम्। भोजेषु। यज्वऽसु। इदम्। मे। उदितम्। कृधि॥ २॥

हे "श्रद्धे "ददतः चरुपुरोडाशादीनि प्रयच्छतो यजमानस्य "प्रियम् अभीष्टफलं कुरु। "दिदासतः दातुमिच्छतश्च हे "श्रद्धे "प्रियं कुरु। "मे मम संबन्धिषु "भोजेषु भोक्तृषु भोगार्थिषु "यज्वसु कृतयज्ञेषु जनेषु च "इदम् "उदितम् उक्तं "प्रियं "कृधि कुरु॥

यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे।
एवं भोजेषु यज्वस्वस्माकमुदितं कृधि॥ ३॥

यथा। देवाः। असुरेषु। श्रद्धाम्। उग्रेषु। चक्रिरे।
एवम्। भोजेषु। यज्वऽसु। अस्माकम्। उदितम्। कृधि॥ ३॥

"देवाः इन्द्रादयः "असुरेषु उद्गूर्णबलेषु "यथा "श्रद्धां "चक्रिरे अवश्यमिमे हन्तव्या इत्यादरातिशयं कृतवन्तः "एवं श्रद्धावत्सु "भोजेषु भोक्तृषु भोगार्थिषु "यज्वसु यष्टृषु "अस्माकम् अस्मत्संबन्धिषु तेषु "उदितं तैरुक्तं प्रार्थितं फलजातं "कृधि कुरु॥

श्रद्धां देवा यजमाना वायुगोपा उपासते।
श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु॥ ४॥

श्रद्धाम्। देवाः। यजमानाः। वायुऽगोपाः। उप। आसते।
श्रद्धाम्। हृदय्यया। आऽकूत्या। श्रद्धया। विन्दते। वसु॥ ४॥

१. त-भ१.२.४.८-च। २. ग-समिध्यते हविश्च हूयते।

ᵛदेवा ᵛयजमानाः मनुष्याश्च ᵛवायुगोपाः वायुर्गोपा रक्षिता येषां ते[1] तादृशाः सन्तः ᵛश्रद्धां देवीम् ᵛउपासते प्रार्थयन्ते । ᵛहृदय्यया । हृदये भवा हृदय्या । तथाविधया ᵛआकूत्या संकल्परूपया क्रियया ᵛश्रद्धाम् एव परिचरन्ति सर्वे जनाः । कुत इत्यत आह । यतः कारणात् ᵛश्रद्धया हेतुभूतया ᵛवसु धनं ᵛविन्दते लभते श्रद्धावाञ्जनः । तत इत्यर्थः ॥

श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि ।
श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥ ५ ॥

श्रद्धाम् । प्रातः । हवामहे । श्रद्धाम् । मध्यंदिनम् । परि ।
श्रद्धाम् । सूर्यस्य । निऽम्रुचि । श्रद्धे । श्रत् । धापय । इह । नः ॥ ५ ॥

ᵛश्रद्धां देवीं ᵛप्रातः पूर्वाह्णे ᵛहवामहे[2] । तथा ᵛमध्यंदिनं ᵛपरि । लक्षणे परेः कर्मप्रवचनीयत्वम् । मध्यंदिनं परिलक्ष्य । मध्यंदिन इत्यर्थः । मध्याह्नेऽपि तां ᵛश्रद्धाम् आह्वयामहे । ᵛसूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य ᵛनिम्रुचि अस्तमयवेलायां सायंसमयेऽपि तामेव ᵛश्रद्धाम् आह्वयामहे । ईदृग्रूपे हे ᵛश्रद्धे ᵛनः अस्मान् ᵛइह[3] लोके कर्मणि वा ᵛश्रद्धापय श्रद्धावतः कुरु ॥ ॥९॥ ॥११॥

द्वादशेऽनुवाके चत्वारिंशत्सूक्तानि । तत्र 'शास इत्था' इति पञ्चर्चं प्रथमं सूक्तं भरद्वाजपुत्रस्य शासनाम्न आर्षमानुष्टुभमैन्द्रम् । अनुक्रान्तं च—'शासः शासो भारद्वाजः' इति । युद्धाय संनद्धं राजानमनेनेक्षेत । तथा च सूत्रितम्—'अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः' (आश्व. गृ. ३. १२. १३) इति ॥

शास इत्था महाँ अस्यमित्रखादो अद्भुतः ।
न यस्य हन्यते सखा न जीयते कदा चन ॥ १ ॥

शासः । इत्था । महान् । असि । अमित्रऽखादः । अद्भुतः ।
न । यस्य । हन्यते । सखा । न । जीयते । कदा । चन ॥ १ ॥

ᵛशासः एतत्संज्ञोऽहम् ᵛइत्था इत्थमनेन वक्ष्यमाणप्रकारेणेन्द्रं स्तौमीति शेषः । हे इन्द्र त्वं ᵛमहाँ ᵛअसि सर्वेभ्योऽधिको भवसि । ᵛअमित्रखादः अमित्राणां शत्रूणां[4] खादिता विनाशयिता अत एव ᵛअद्भुतः आश्चर्यभूतश्च भवसि । ᵛयस्य इन्द्रस्य ᵛसखा मित्रभूतः पुरुषः ᵛकदा ᵛचन कदाचिदपि ᵛन ᵛहन्यते न हिंस्यते ᵛन ᵛजीयते न च शत्रुभिः पराजितो भवति स त्वं महाँ असीत्यन्वयः ॥

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः सोमपा अभयंकरः ॥ २ ॥

स्वस्तिऽदाः । विशः । पतिः । वृत्रऽहा । विऽमृधः । वशी ।
वृषा । इन्द्रः । पुरः । एतु । नः । सोमऽपाः । अभयम्ऽकरः ॥ २ ॥

१. ग-त-भर.७.८-'ते' नास्ति; भ१.४-ता । २. भर-हवामहे आह्वयामहे । ३. ग-इहास्मिन् । ४. ग-शत्रूणां खादः ।

ᵛस्वस्तिदाः स्वस्तेरविनाशस्य दाता ᵛविशस्पतिः सर्वस्याः प्रजायाः पालयिता ᵛवृत्रहा वृत्राणां शत्रूणां हन्ता ᵛविमृधः संग्रामकारी ᵛवशी[1] वशीकर्ता ᵛवृषा वर्षिता कामानां ᵛसोमपाः सोमस्य पाता एवंविधः ᵛइन्द्रः ᵛअभयंकरः अभयस्य भयराहित्यस्य कर्ता सन् ᵛनः अस्माकं ᵛपुर ᵛएतु पुरतो गच्छतु ॥

वि रक्षो॒ वि मृधो॑ जहि॒ वि वृ॒त्रस्य॒ हनू॑ रुज ।
वि म॒न्युमि॑न्द्र वृत्रहन्न॒मित्र॑स्याभि॒दास॑तः ॥ ३ ॥

वि । रक्षः॑ । वि । मृधः॑ । ज॒हि॒ । वि । वृ॒त्रस्य॑ । हनू॒ इति॑ । रु॒ज ।
वि । म॒न्युम् । इ॒न्द्र॒ । वृ॒त्र॒ऽह॒न् । अ॒मित्र॑स्य । अ॒भि॒ऽदास॑तः ॥ ३ ॥

हे इन्द्र ᵛरक्षः राक्षसजातं ᵛवि ᵛजहि विनाशय । ᵛमृधः संग्रामकारिणः शत्रूंश्च ᵛवि जहि । ᵛवृत्रस्य आवरकस्यासुरस्य ᵛहनू कपोलप्रान्तौ ᵛवि ᵛरुज विशेषेण भग्नौ कुरु । हे ᵛवृत्रहन् ᵛइन्द्र ᵛअभिदासतः अस्मानुपक्षयतः ᵛअमित्रस्य शत्रोः ᵛमन्युं क्रोधमपि विनाशय ॥

'वि न इन्द्र' इति वैमृधस्य हविषोऽनुवाक्या । सूत्रितं च—'वि न इन्द्र मृधो जहि मृगो न भीमः कुचरो गिरिष्ठाः' ( आश्व. श्रौ. २. १० ) इति ॥

वि न॑ इन्द्र मृधो॑ जहि नी॒चा य॑च्छ पृतन्य॒तः ।
यो अ॒स्माँ अ॑भि॒दास॒त्यध॑रं गमया॒ तमः॑ ॥ ४ ॥

वि । नः॒ । इ॒न्द्र॒ । मृधः॑ । ज॒हि॒ । नी॒चा । य॒च्छ॒ । पृ॒त॒न्य॒तः ।
यः । अ॒स्मान् । अ॒भि॒ऽदास॑ति । अध॑रम् । ग॒म॒य॒ । तमः॑ ॥ ४ ॥

हे ᵛइन्द्र ᵛनः अस्माकं ᵛमृधः संग्रामकारिणः शत्रून् ᵛवि ᵛजहि विनाशय । तथा ᵛपृतन्यतः पृतनाः सेना आत्मन इच्छतो युयुत्समानानपि ᵛनीचा ᵛयच्छ । नीचीनमवाङ्मुखं यच्छ । गमय । ᵛयः शत्रुः ᵛअस्मान् ᵛअभिदासति अभित उपक्षपयति तम् ᵛअधरं निकृष्टं ᵛतमः अन्धकारं मरणलक्षणं ᵛगमय प्रापय ॥

अपे॑न्द्र द्वि॒ष॒तो मनोऽप॒ जिज्या॑सतो व॒धम् ।
वि म॒न्योः शर्म॑ यच्छ॒ वरी॑यो यवया व॒धम् ॥ ५ ॥

अप॑ । इ॒न्द्र॒ । द्वि॒ष॒तः । मनः॑ । अप॑ । जिज्या॑सतः । व॒धम् ।
वि । म॒न्योः । शर्म॑ । य॒च्छ॒ । वरी॑यः । य॒व॒य॒ । व॒धम् ॥ ५ ॥

हे ᵛइन्द्र ᵛद्विषतः द्वेष्टुः शत्रोः ᵛमनः ᵛअप जहि । ᵛजिज्यासतः[2] अस्माकं वयोहानिमिच्छतश्च ᵛवधं हननसाधनमायुधं च ᵛअप जहि । ᵛमन्योः शत्रुसंबन्धिनः क्रोधाच्चास्मान् रक्ष[3] । ᵛवरीयः उरुतरं ᵛशर्म सुखं विशेषेण ᵛयच्छ देहि । ᵛवधं शत्रुकृतं हननं च ᵛयवय अस्मत्तः पृथक्कुरु ॥ ॥१०॥

---

१. त-भ-'वशी' नास्ति । २. त४.५-अपजिज्यासतो । ३. ग-त१.२.३.६.७.८-भ-रक्षन् ।

'ईङ्खयन्तीः' इति पञ्चर्चं गायत्रमैन्द्रं द्वितीयं सूक्तम्। देवानां स्वसृभूता इन्द्रमातरो नामर्षिकाः। तथा चानुक्रान्तम्—'ईङ्खयन्तीर्देवजामय इन्द्रमातरो गायत्रम्' इति। द्वितीये पर्याये प्रशास्तुः शस्त्र इदं सूक्तम्। सूत्रितं च—'ईङ्खयन्तीरहं दां पाता सुतम्' (आश्व. श्रौ. ६. ४) इति। महाव्रतेऽपि प्रातःसवनिके ब्रह्मशस्त्र एतत्सूक्तम्[1] ॥

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते। भेजानासः सुवीर्यम् ॥ १ ॥

ईङ्खयन्तीः। अपस्युवः। इन्द्रम्। जातम्। उप। आसते। भेजानासः। सुऽवीर्यम् ॥ १ ॥

ईङ्खयन्तीः गच्छन्त्यः स्तुत्यादिभिरिन्द्रं प्राप्नुवत्यः अपस्युवः अपः कर्म आत्मन इच्छन्त्य इन्द्रमातरोऽस्य सूक्तस्य द्रष्ट्र्यः जातं प्रादुर्भूतम् इन्द्रम् उपासते परिचरन्ति। सुवीर्यं शोभनवीर्योपेतं धनं च भेजानासः। तस्मादिन्द्रात् संभक्तवत्यो भवन्ति ॥

त्वमिन्द्र बलादधि सहसो जात ओजसः। त्वं वृषन्वृषेदसि ॥ २ ॥

त्वम्। इन्द्र। बलात्। अधि। सहसः। जातः। ओजसः।

त्वम्। वृषन्। वृषा। इत्। असि ॥ २ ॥

हे इन्द्र त्वं सहसः परेषामभिभावुकात् बलात् अधि जातः असि। अधिः पञ्चम्यर्थानुवादकः। वृत्रादिवधहेतुभूताद्बलाद्धेतोस्त्वं प्रख्यातो भवसीत्यर्थः। अपि च ओजसः। ओजो नाम बलहेतु हृदयगतं धैर्यम्। तस्मादपि त्वं जातोऽसि। हे वृषन् वर्षितः त्वं वृषेदसि कामानां वर्षितैव भवसि ॥

त्वमिन्द्रासि वृत्रहा व्यन्तरिक्षमतिरः। उद् द्यामस्तभ्ना ओजसा ॥ ३ ॥

त्वम्। इन्द्र। असि। वृत्रऽहा। वि। अन्तरिक्षम्। अतिरः।

उत्। द्याम्। अस्तभ्नाः। ओजसा ॥ ३ ॥

हे इन्द्र त्वं वृत्रहा असि। शत्रूणां हन्ता भवसि। अन्तरिक्षं मध्यमस्थानं च वि अतिरः। आवरकापनोदनेन प्रावर्धयः। द्यां द्युलोकं च ओजसा बलेन उत् अस्तभ्नाः। ऊर्ध्वमस्तम्भीः। यथाधो न पतति तथोपर्यवस्थापितवानित्यर्थः ॥

त्वमिन्द्र सजोषसमर्कं बिभर्षि बाह्वोः। वज्रं शिशान ओजसा ॥ ४ ॥

त्वम्। इन्द्र। सऽजोषसम्। अर्कम्। बिभर्षि। बाह्वोः। वज्रम्। शिशानः। ओजसा ॥४॥

हे इन्द्र त्वं सजोषसं सह प्रीयमाणम् अर्कं स्तुत्यं वज्रम् आत्मीयमायुधम् ओजसा बलेन शिशानः निश्यंस्तीक्ष्णीकुर्वन् बाह्वोः हस्तयोः बिभर्षि धारयसि शत्रूणां वधार्थम् ॥

त्वमिन्द्राभिभूरसि विश्वा जातान्योजसा। स विश्वा भुव आभवः ॥ ५ ॥

त्वम्। इन्द्र। अभिऽभूः। असि। विश्वा। जातानि। ओजसा।

सः। विश्वाः। भुवः। आ। अभवः ॥ ५ ॥

---

१. ग१.२–एतत्सूक्तं। सूत्रितं च ईंखयंतीरपस्युव इति ब्राह्मणाच्छंस्यावपेत (ऐ. आ. ५. १. १) इति; त१.२.३.६.७.८-भ१.४.५.८–सूत्रितं च; त४.५-भ२–एतत्सूक्तं सूत्रितं च।

हे ᵛइन्द्र ᵛत्वं ᵛविश्वा सर्वाणि ᵛजातानि जनिमन्ति भूतानि ᵛओजसा बलेन ᵛअभिभूरसि अभिभविता भवसि। तथा ᵛसः तादृशस्त्वं ᵛविश्वा ᵛभुवः सर्वा भूमीः प्राप्तव्यानि सर्वाण्यपि स्थानानि ᵛआभवः अभितः प्राप्नोः। 'भू प्राप्तौ'॥ ॥११॥

'सोमः' इति पञ्चर्चं तृतीयं सूक्तमानुष्टुभम्। विवस्वतो दुहिता यम्यृषिः। म्रियमाणानां यजमानादीनां वर्तनमत्र प्रतिपाद्यते। अतस्तद्देवताकमिदम्। तथा चानुक्रान्तं—'सोमो यमी भाववृत्तमानुष्टुभं तु' इति। प्रेतोपस्थान एतत्सूक्तम्। सूत्रितं च—'सोम एकेभ्य उरूणसावसुतृपा उदुम्बलौ' (आश्व. श्रौ. ६. १०) इति॥

सोम॒ एके॑भ्यः पवते घृ॒तमेक॒ उपा॑सते।
येभ्यो॒ मधु॑ प्र॒धाव॑ति॒ ताँश्चि॑दे॒वापि॑ गच्छतात्॥ १॥

सोम॑ः। एके॑भ्यः। प॒व॒ते॒। घृ॒तम्। एके॑। उप॑। आ॒स॒ते॒।
येभ्य॑ः। मधु॑। प्र॒ऽधाव॑ति। तान्। चि॒त्। ए॒व। अपि॑। ग॒च्छ॒ता॒त्॥ १॥

ᵛएकेभ्यः केभ्यश्चित् पितृभ्यः ᵛसोमः ᵛपवते। उपभोगाय कुल्यारूपेण प्रवहति। एषां गोत्रजाः सामानि ब्रह्मयज्ञसमयेऽधीयते। श्रूयते हि—'यत्सामानि सोम एभ्यः पवते' (तै. आ. २. १०) इति। ᵛएके अन्ये पितरः ᵛघृतम् आज्यम् ᵛउपासते उपगच्छन्ति। उपभुञ्जत इत्यर्थः। एषां पुत्रादयो यजूंषि ब्रह्मयज्ञकालेऽधीयते। श्रुतिश्च भवति—'यद्यजूंषि घृतस्य कुल्या' इति। ᵛयेभ्यः पितृभ्यः। तादर्थ्ये चतुर्थी। उपभोगार्थं ᵛमधु क्षौद्रं ᵛप्रधावति प्रवाहरूपेण शीघ्रं गच्छति। य आथर्वणान् मन्त्रान् ब्रह्मयज्ञार्थमधीयते तेषां पितॄन् मधुकुल्या[1] प्रवहति। तथा चाम्नायते—'यदाथर्वणाङ्गिरसो मधोः कुल्या' इति। ᵛतांश्चिदेव तान् पूर्वोक्तान् सर्वानेव हे प्रेत त्वं ᵛअपि ᵛगच्छतात् अपिगच्छ प्राप्नुहि॥

तप॑सा॒ ये अ॑नाधृ॒ष्यास्तप॑सा॒ ये स्व॑र्य॒युः।
तपो॒ ये च॑क्रि॒रे मह॒स्ताँश्चि॑दे॒वापि॑ गच्छतात्॥ २॥

तप॑सा। ये। अ॒ना॒धृ॒ष्याः। तप॑सा। ये। स्व॑ः। य॒युः।
तप॑ः। ये। च॒क्रि॒रे। मह॑ः। तान्। चि॒त्। ए॒व। अपि॑। ग॒च्छ॒ता॒त्॥ २॥

ᵛये जनाः ᵛतपसा कृच्छ्रचान्द्रायणादिना युक्ताः सन्तः ᵛअनाधृष्याः पापैरप्रधृष्या भवन्ति। ᵛये च ᵛतपसा यागादिरूपेण[2] साधनेन ᵛस्वर्ययुः स्वर्गं यान्ति प्राप्नुवन्ति। ᵛये च ᵛमहः महत् ᵛतपः अन्यैर्दुष्करं राजसूयाश्वमेधादिकं हिरण्यगर्भाद्युपासनं वा ᵛचक्रिरे कुर्वन्ति एतेषु प्रवर्तन्ते[3] तेषु लोकेषु। ᵛतांश्चित् तानेव तपस्विनो हे प्रेत अपिगच्छ॥

ये युध्य॑न्ते प्र॒धने॑षु॒ शूरा॑सो॒ ये त॑नू॒त्यज॑ः।
ये वा॑ स॒हस्र॑दक्षिणा॒स्ताँश्चि॑दे॒वापि॑ गच्छतात्॥ ३॥

ये। यु॒ध्य॑न्ते। प्र॒ऽधने॑षु। शूरा॑सः। ये। त॒नू॒ऽत्यज॑ः।
ये। वा॒। स॒हस्र॑ऽदक्षिणाः। तान्। चि॒त्। ए॒व। अपि॑। ग॒च्छ॒ता॒त्॥ ३॥

---

१. ग-त४-प्रति बहुकुल्या; भ२-प्रति मधुकुल्या। २. त४-नियमादिरूपेण। ३. त४-लोकेषु वर्तते; भ-लोकेषु प्रवर्तते।

<sup>v</sup>प्रधनेषु । प्रकीर्णान्यस्मिन् धनानि भवन्तीति प्रधनाः संग्रामाः । तेषु <sup>v</sup>शूरासः शौर्यवन्तः <sup>v</sup>ये <sup>v</sup>युध्यन्ते शत्रून् संप्रहरन्ति । <sup>v</sup>ये च <sup>v</sup>तनूत्यजः शरीराणां तत्र त्यक्तारो भवन्ति । <sup>v</sup>ये <sup>v</sup>वा ये च <sup>v</sup>सहस्रदक्षिणाः सहस्रदक्षिणान् क्रतून् अनुष्ठितवन्तः । <sup>v</sup>तान् सर्वान् <sup>v</sup>एव त्वमपिगच्छ । येषूत्तमेषु लोकेषु ते निवसन्ति तं लोकं प्राप्नुहीत्यर्थः ॥

ये चित्पूर्व ऋतसाप ऋतावान ऋतावृधः ।
पितॄन्तपस्वतो यम ताँश्चिदेवापि गच्छतात् ॥ ४ ॥

ये । चित् । पूर्वे । ऋतऽसापः । ऋतऽवानः । ऋतऽवृधः ।
पितॄन् । तपस्वतः । यम । तान् । चित् । एव । अपि । गच्छतात् ॥ ४ ॥

<sup>v</sup>ये <sup>v</sup>चित् ये च <sup>v</sup>पूर्वे पूर्वपुरुषाः <sup>v</sup>ऋतसापः ऋतं सत्यं यज्ञं वा स्पृशन्तः अत एव <sup>v</sup>ऋतावानः ऋतेन युक्ताः <sup>v</sup>ऋतावृधः ऋतस्य वर्धकाश्च भवन्ति <sup>v</sup>तपस्वतः तपसा युक्तान् <sup>v</sup>तान्[1] <sup>v</sup>एव <sup>v</sup>पितॄन्[1] हे <sup>v</sup>यम नियत त्वमपिगच्छ ॥

सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् ।
ऋषीन् तपस्वतो यम तपोजाँ अपि गच्छतात् ॥ ५ ॥

सहस्रऽनीथाः । कवयः । ये । गोपायन्ति । सूर्यम् ।
ऋषीन् । तपस्वतः । यम । तपःऽजान् । अपि । गच्छतात् ॥ ५ ॥

<sup>v</sup>सहस्रनीथाः सहस्रनयनाः <sup>v</sup>कवयः क्रान्तदर्शिनः <sup>v</sup>ये <sup>v</sup>सूर्यम् अमुमादित्यं <sup>v</sup>गोपायन्ति रक्षन्ति <sup>v</sup>तपस्वतः तपसा युक्तान् <sup>v</sup>तपोजान् तपसः सकाशादेवोत्पन्नान् तान् <sup>v</sup>ऋषीन् हे <sup>v</sup>यम नियत त्वमपिगच्छ ॥ ॥१२॥

'अरायि' इति पञ्चर्चं चतुर्थं सूक्तं भरद्वाजपुत्रस्य शिरिम्बिठस्यार्षमानुष्टुभम् । जपहोमादिभिरिदं सूक्तमश्रीनाशकरम् । तत्राद्यापान्त्ययोस्तादृशोऽर्थ एव देवता । द्वितीयातृतीये ब्राह्मणस्पत्ये । पञ्चमी वैश्वदेवी । अनुक्रम्यते हि—'अरायि शिरिम्बिठो भारद्वाजोऽलक्ष्मीघ्नं द्वितीयातृतीये ब्राह्मणस्पत्ये अन्त्या वैश्वदेवी' इति । गतो विनियोगः ॥

अरायि काणे विकटे गिरिं गच्छ सदान्वे ।
शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥ १ ॥

अरायि । काणे । विऽकटे । गिरिम् । गच्छ । सदान्वे ।
शिरिम्बिठस्य । सत्वऽभिः । तेभिः । त्वा । चातयामसि ॥ १ ॥

हे <sup>v</sup>अरायि अदायिनि दानविरोधिनि हे <sup>v</sup>काणे कुत्सितशब्दकारिणि कुत्सितदर्शने वा हे <sup>v</sup>विकटे विकृतगमने विकृताङ्गि वा हे <sup>v</sup>सदान्वे सदानोनुवे सर्वदाक्रोशकारिणि दुर्भिक्षादिदेवते <sup>v</sup>गिरिं पर्वतं निर्जनं देशं <sup>v</sup>गच्छ । अस्मान् मा बाधिष्ठाः । <sup>v</sup>शिरिम्बिठस्य । बिठमन्तरिक्षम् । शीर्यते

१. त४.५-तान् देवपितॄन् ।

बिठेऽन्तरिक्ष इति शिरिम्बिठो मेघः। तस्य ᵛसत्वभिः अन्तर्वर्तमानैरुदकैः ᵛतेभिः तैः ᵛत्वा त्वां ᵛचातयामसि चातयामः विनाशयामः। यद्वा। शिरिम्बिठस्यैतत्संज्ञकस्य भरद्वाजपुत्रस्य तेभिस्तैः अनुष्ठितैः सत्वभिः कर्मभिर्हे अलक्ष्मि त्वां विनाशयामः। इतस्त्वमेव शीघ्रं गिरिं गच्छ॥

चत्तो इतश्चत्तामुतः सर्वा भ्रूणान्यारुषी।
अराय्यं ब्रह्मणस्पते तीक्ष्णशृङ्गोदृषन्निहि॥ २॥

चत्तो इति। इतः। चत्ता। अमुतः। सर्वा। भ्रूणानि। आरुषी।
अराय्यम्। ब्रह्मणः। पते। तीक्ष्णऽशृङ्ग। उत्ऽऋषन्। इहि॥ २॥

सालक्ष्मीः ᵛइतः अस्माल्लोकात् ᵛचत्तः चत्तैवास्माभिर्नाशितैव ᵛअमुतः अमुष्मादपि[1] लोकात् ᵛचत्ता हिंसिता भवतु। यालक्ष्मीः ᵛसर्वा सर्वाणि ᵛभ्रूणानि गर्भजातानि सर्वासामोषधीनामङ्कुराणि या दुर्भिक्षाधिदेवता ᵛआरुषी आहन्त्री भवति ᵛअराय्यम् अदात्रीं दानविरोधिनीं तां हे ᵛब्रह्मणस्पते मन्त्रस्य पालयितर्देव हे ᵛतीक्ष्णशृङ्ग तीक्ष्णतेजस्क ᵛउदृषन् अस्मात्स्थानादुद्गमयन् ᵛइहि गच्छ॥

अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम्।
तदा रभस्व दुर्हणो तेन गच्छ परस्तरम्॥ ३॥

अदः। यत्। दारु। प्लवते। सिन्धोः। पारे। अपुरुषम्।
तत्। आ। रभस्व। दुर्हनो इति दुःऽहनो। तेन। गच्छ। परःऽतरम्॥ ३॥

ᵛअदः विप्रकृष्टदेशे वर्तमानम् ᵛअपूरुषं निर्मात्रा पुरुषेण रहितं ᵛयद्दारु दारुमयं पुरुषोत्तमाख्यं देवताशरीरं ᵛसिन्धोः ᵛपारे समुद्रतीरे ᵛप्लवते जलस्योपरि वर्तते ᵛतत् दारु हे ᵛदुर्हणो दुःखेन हननीय केनापि हन्तुमशक्य हे स्तोतः ᵛआ ᵛरभस्व आलम्बस्व। उपास्स्वेत्यर्थः। ᵛतेन दारुमयेण देवेनोपास्यमानेन ᵛपरस्तरम् अतिशयेन तरणीयमुत्कृष्टं वैष्णवं लोकं ᵛगच्छ। अपर आह। हे दुर्हणो दुःखेन हननीये दुष्टहनुयुक्ते वा हे अलक्ष्मि सिन्धोः पारे समुद्रतीरप्रान्तेऽपूरुषं पुरुषैर्जनैर्वियुक्तमदोऽस्मत्तो दूरे देशे वर्तमानं यद्दारु दारुमयी नौः प्लवते तद्दारु आ रभस्व परिगृहाण। गृहीत्वा च तेन दारुणा परस्तरमतिशयेन तरणीयं ब्रह्मणस्पतिना प्रेरिता सती द्वीपान्तरं गच्छ॥

षष्ठेऽहनि तृतीयसवने ब्रह्मशस्त्रे 'यद्ध प्राचीः' इत्येषा। सूत्रितं च—'कपृन्नरो यद्ध प्राचीरजगन्तेति चैते' ( आश्व. श्रौ. ८. ३ ) इति॥

यद्ध प्राचीरजगन्तोरो मण्डूरधाणिकीः।
हता इन्द्रस्य शत्रवः सर्वे बुद्बुदयाशवः॥ ४॥

यत्। ह। प्राचीः। अजगन्त। उरः। मण्डूरऽधाणिकीः।
हताः। इन्द्रस्य। शत्रवः। सर्वे। बुद्बुदऽयाशवः॥ ४॥

हे ᵛमण्डूरधाणिकीः मण्डूरवत्[2] कुत्सितशब्दकारिण्यो मन्दनस्य धनस्य धारयित्र्यो वालक्ष्म्यः ᵛउरः॥ उर्वी हिंसार्थः। अस्मात्क्विपि 'राल्लोपः' इति वलोपः। ततो जसि रूपमेतत्॥ हिंसित्र्यो

---

१. त१.२.३.६.७.८-म१.४.८-अस्मादपि। २. त५-मंडूकवत्।

यूयं ^प्राचीः प्रकर्षेणाञ्चन्त्यः प्रकृष्टगमनाः सत्यो ^यद्ध यदा खलु ^अजगन्त अगच्छत ॥ गमेर्लङि मध्यमबहुवचने छान्दसः शपः श्लुः । 'तप्तनप्तनथनाश्च' इति तस्य तबादेशः । अत एव ङित्त्वाभावादनुनासिकलोपो न भवति ॥ तदानीमेव ^सर्वे ^इन्द्रस्य ^शत्रवः ^बुद्धुदयाशवः । यान्ति गच्छन्तीति याः । अश्नुवत इत्याशवः । याश्च त आशवश्च याशवः । बुद्बुदवद्यातारो व्यापनशीलाश्च सन्तः ^हताः नष्टा आसन् ॥

परी॒मे गाम॑नेषत॒ पर्य॒ग्निम॑हृषत । दे॒वेष्व॑क्रत॒ श्रवः॒ क इ॒माँ आ द॑धर्षति ॥ ५ ॥

परि॑ । इ॒मे । गाम् । अ॒ने॒ष॒त॒ । परि॑ । अ॒ग्निम् । अ॒हृ॒ष॒त॒ ।
दे॒वेषु॑ । अ॒क्र॒त॒ । श्रवः॑ । कः । इ॒मान् । आ । द॒ध॒र्ष॒ति॒ ॥ ५ ॥

^इमे विश्वे देवाः ^गाम् । जात्यभिप्रायमेकवचनम् । पणिभिरपहृताः सर्वा देवगवीः ^परि ^अनेषत पर्यनयन् । यष्टॄनङ्गिरसः परिप्रापयन् । ततः ^अग्निं च ^परि ^अहृषत परितो व्यहरन् । यागार्थं तत्र तत्र गार्हपत्यादिरूपेण स्थापितवन्त इत्यर्थः । एवं कृत्वा ^देवेषु यष्टव्येष्विन्द्रादिषु ^श्रवः अन्नम् ^अक्रत अकृषत । ^कः शत्रुरसुरादिः ^इमान् विश्वान् देवान् ^आ ^दधर्षति अभिभवितुं शक्नोति । न कश्चिदित्यर्थः ॥ ॥ १३ ॥

'अग्निं हिन्वन्तु नः' इति पञ्चर्चं पञ्चमं सूक्तमग्निपुत्रस्य केतुनाम्न आर्षं गायत्रमाग्नेयम् । तथा चानुक्रान्तम्—'अग्निं केतुराग्नेय आग्नेयं गायत्रम्' इति । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसीदं शस्यम् । सूत्रितं च—'अग्निं हिन्वन्तु नः प्राग्नये वाचमिति सूक्ते' (आश्व.श्रौ.४.१३) इति ॥

अ॒ग्निं हि॑न्वन्तु नो॒ धियः॒ सप्ति॑मा॒शुमि॑वा॒जिषु॑ । तेन॑ जेष्म॒ धनं॑धनम् ॥ १ ॥

अ॒ग्निम् । हि॒न्व॒न्तु॒ । नः॒ । धियः॑ । सप्ति॑म् । आ॒शुम्ऽइ॑व । आ॒जिषु॑ ।
तेन॑ । जे॒ष्म॒ । धन॑म्ऽधनम् ॥ १ ॥

^नः अस्माकं ^धियः कर्माणि स्तुतयो[1] वा ^अग्निं ^हिन्वन्तु प्रेरयन्तु । यागार्थमुद्योजयन्तु वर्धयन्तु वा । 'हि गतौ वृद्धौ च' । तत्र दृष्टान्तः । ^आजिषु संग्रामेषु ^आशुमिव यथा आशुं शीघ्रगामिनं ^सप्तिं सर्पणशीलमश्वं योद्धारः प्रेरयन्ति तद्वत् । ^तेन अग्निना ^धनंधनं सर्वं धनं ^जेष्म वयं जयेम ॥

यया॒ गा आ॒करा॑महे॒ सेन॑याग्ने॒ तवो॒त्या । तां नो॑ हिन्व म॒घत्त॑ये ॥ २ ॥

यया॑ । गाः । आ॒ऽकरा॑महे । सेन॑या । अ॒ग्ने॒ । तव॑ । ऊ॒त्या । ताम् । नः॒ । हि॒न्व॒ । म॒घत्त॑ये ॥ २ ॥

हे ^अग्ने ^सेनया इनेन सह वर्तमानया सेनारूपया वा ^यया ^तव ^ऊत्या रक्षया ^गाः ^आकरामहे आभिमुख्येन कुर्महे । लभामह इत्यर्थः । ^ताम् ऊतिं ^नः अस्मान् ^हिन्व गमय । किमर्थम् । ^मघत्तये धनस्य दानार्थम्[2] । अस्माकं धनलाभायेत्यर्थः ॥

आभिप्लविकेषूक्थ्येषु प्रशास्तुः शस्त्रे 'आग्ने स्थूरम्' इति तृचो वैकल्पिकोऽनुरूपः । सूत्रितं च—'आ ते वत्सो मनो यमदाग्ने स्थूरं रयिं भर' (आश्व. श्रौ. ७. ८) इति ॥

आग्ने॑ स्थू॒रं र॒यिं भ॑र पृ॒थुं गोम॑न्तम॒श्विन॑म् । अ॒ङ्धि खं व॒र्तया॑ प॒णिम् ॥ ३ ॥

१. त४.५–बुद्धयो । २. त४-५–लाभार्थं ।

आ । अग्ने । स्थूरम् । रयिम् । भर । पृथुम् । गोऽमन्तम् । अश्विनम् ।
अङ्धि । खम् । वर्तय । पणिम् ॥ ३ ॥

हे ᵛअग्ने ᵛस्थूरं स्थूलं वृद्धं ᵛपृथुं विस्तीर्णं ᵛगोमन्तं गोभिर्युक्तम् ᵛअश्विनम् अश्वैश्चोपेतं ᵛरयिं धनम् ᵛआ ᵛभर अस्मभ्यमाहर । प्रयच्छ । ᵛखम् अन्तरिक्षम् ᵛअङ्धि वृष्ट्युदकैः सिञ्च । यद्वा । आत्मीयैस्तेजोभिर्व्यञ्जय प्रकाशय । ᵛपणिं वणिजमदातारमसुरं वा ᵛवर्तय इतो निर्गमय । यद्वा । दाने प्रवर्तय ॥

अग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि । दधज्ज्योतिर्जनेभ्यः ॥ ४ ॥

अग्ने । नक्षत्रम् । अजरम् । आ । सूर्यम् । रोहयः । दिवि । दधत् । ज्योतिः । जनेभ्यः ॥४॥

हे ᵛअग्ने ᵛनक्षत्रम् ॥ नक्षति सततं गच्छतीति नक्षत्रः । 'नक्षि गतौ' । 'अमिनक्षि°' इत्यादिनात्रन्प्रत्ययः ॥ सततं गन्तारम् ᵛअजरं जरारहितं ᵛसूर्यं सर्वस्य प्रेरकमादित्यं ᵛदिवि अन्तरिक्षे ᵛआ ᵛरोहयः उपर्यवस्थापितवानसि । यद्वा । नक्षत्रं कृत्तिकादिकं सूर्यं च दिव्यारोहयः । किं कुर्वन् । ᵛजनेभ्यः सर्वेभ्यः प्राणिभ्यो व्यवहारार्थं ᵛज्योतिः प्रकाशं ᵛदधत् विदधत् कुर्वन् । यथा सर्वेषां प्रकाशो[1] भवति तथोन्नते देशे सूर्यमगमय इत्यर्थः ॥

अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् । बोधा स्तोत्रे वयो दधत् ॥ ५ ॥

अग्ने । केतुः । विशाम् । असि । प्रेष्ठः । श्रेष्ठः । उपस्थऽसत् । बोध । स्तोत्रे । वयः । दधत् ॥५॥

हे ᵛअग्ने ᵛविशां प्रजानां यजमानानां ᵛकेतुः केतयिता ᵛअसि ज्ञापयिता भवसि । अत एव ᵛप्रेष्ठः प्रियतमः ᵛश्रेष्ठः प्रशस्यतमश्च भवसि । स त्वम् ᵛउपस्थसत् उपस्थाने यज्ञगृहे निषीदन् ᵛबोध अस्मदीयं स्तोत्रमवगच्छ । किं कुर्वन् । ᵛस्तोत्रे स्तुवते जनाय ᵛवयः अन्नं ᵛदधत् विदधत् कुर्वन् प्रयच्छन् ॥ ॥१४॥

'इमा नु कम्' इति पञ्चर्चं षष्ठं सूक्तमप्त्यपुत्रस्य भुवनस्यार्षं[2] भुवनपुत्रस्य साधनसंज्ञस्य वा वैश्वदेवम् । सर्वा द्विपदास्त्रिष्टुभः । तथा चानुक्रान्तम्—'इमा नु कं भुवन आप्त्यः साधनो वा भौवनो वैश्वदेवं द्वैपदं त्रैष्टुभम्' इति । दशरात्रस्य द्वितीये छन्दोमे वैश्वदेवशस्त्रे वैश्वदेवात्त्रिविद्धानात् पूर्वमिदं शंसनीयम् । सूत्रितं च—'आ याहि वनसेमा नु कं बभ्रुरेक इति द्विपदासूक्तानि' ( आश्व. श्रौ. ८.७ ) इति । षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिन[3] उक्थ्यशस्त्र[3] आवस्तृचः स्तोत्रियः । ततो द्वे अनुरूपार्थे । सूत्रितं च—'ब्राह्मणाच्छंसिन इमा नु कं भुवना सीषधामेति पञ्च' ( आश्व. श्रौ. ८. ३ ) इति ॥

इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः ॥ १ ॥

इमा । नु । कम् । भुवना । सीसधाम । इन्द्रः । च । विश्वे । च । देवाः ॥ १ ॥

ᵛइमा इमानि प्रदृश्यमानानि ᵛभुवना भुवनानि ᵛनु क्षिप्रं ᵛसीषधाम साधयामः वशीकुर्मः । ᵛकम् इति पूरकः । यद्वा । इमानि सर्वाणि भूतजातान्यस्मभ्यं कं सुखं सीषधाम । साधयन्तु । पुरुषव्यत्ययः । ᵛइन्द्रश्च ᵛविश्वे सर्वे अन्ये ᵛदेवाः ᵛच स्तुत्या प्रीता इममर्थं साधयन्तु ॥

---

१. त४.५—प्रकाशको । २. ग-त४.५—भुवनाख्यस्यार्षं । ३. त१.२.३.६.७.८-भ१.४.८—ब्राह्मणाच्छंसिशास्त्रे उक्थे ( ? °क्थ्ये )।

यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह चीक्लृपाति ॥ २ ॥

यज्ञम् । च । नः । तन्वम् । च । प्रऽजाम् । च । आदित्यैः । इन्द्रः । सह । चीक्लृपाति ॥२॥

नः अस्माकं यज्ञं ज्योतिष्टोमादिकं यागं तन्वं शरीरं च प्रजां पुत्रादिकां[1] च आदित्यैः अदितिपुत्रैरन्यैर्देवैः सह वर्तमानः इन्द्रः चीक्लृपाति कल्पयतु । यज्ञादिकं स्वव्यापारसमर्थं करोतु ॥

आदित्यैरिन्द्रः सगणो मरुद्भिरस्माकं भूत्वविता तनूनाम् ॥ ३ ॥

आदित्यैः । इन्द्रः । सऽगणः । मरुत्ऽभिः । अस्माकम् । भूतु । अविता । तनूनाम् ॥ ३ ॥

आदित्यैः अदितिपुत्रैर्मित्रादिभिः मरुद्भिः च सगणः सहितः इन्द्रः अस्माकं तनूनां शरीराणां तनयानां वा अविता भूतु रक्षिता भवतु ॥

हत्वाय देवा असुरान् यदायन् देवा देवत्वमभिरक्षमाणाः ॥ ४ ॥

हत्वाय । देवाः । असुरान् । यत् । आयन् । देवाः । देवऽत्वम् । अभिऽरक्षमाणाः ॥४॥

देवाः इन्द्रादयः असुरान् क्षेप्तॄन् वृत्रादीन् हत्वाय हत्वा विनाश्य यत् यदा आयन् आगच्छन् स्वकीयं स्थानं प्राप्नुवन् तदानीं ते देवाः देवत्वम् आत्मीयममृतत्वम् अभिरक्षमाणाः अभितः सर्वतो रक्षन्तोऽभूवन् । बाधकाभावात् सर्वत्र प्रख्यापितवन्त इत्यर्थः ॥

प्रत्यञ्चमर्कमनयञ्छचीभिरादित्स्वधामिषिरां पर्यपश्यन् ॥ ५ ॥

प्रत्यञ्चम् । अर्कम् । अनयन् । शचीभिः । आत् । इत् । स्वधाम् । इषिराम् । परि । अपश्यन् ॥५॥

शचीभिः कर्मभिः परिचरणात्मकैः सार्धम् अर्कम् अर्चनसाधनं स्तोत्रं प्रत्यञ्चम् इन्द्रादीन् प्रत्यञ्चत्[2] अनयन् स्तोतारः प्रापयन् । यदैवम् आदित् अनन्तरमेव इषिरां गमनशीलं[3] स्वधां वृष्ट्युदकं पर्यपश्यन् सर्वे जनाः परितः पश्यन्ति । यद्वा । इषिरामेषणीयां स्वधाम् । अन्ननामैतत् । हविर्लक्षणमन्नं सर्वे देवाः परिपश्यन्ति ॥ ॥ १५ ॥

'सूर्यः' इति पञ्चर्चं सप्तमं सूक्तं सूर्यपुत्रस्य चक्षुःसंज्ञस्यार्षं सूर्यदेवत्यं गायत्रम् । तथा चानुक्रान्तं—'सूर्यो नश्चक्षुः सौर्यः सौर्यं गायत्रम्' इति । आश्विनशस्त्रे सूर्योदयादुत्तरकाले[4] सौर्यकाण्ड इदं सूक्तम् । सूत्रितं च—'सूर्यो नो दिव उदु त्यं जातवेदसमिति नव' (आश्व. श्रौ. ६. ५) इति । दर्शपूर्णमासयोः स्रुगादापनात्पूर्वभाविनि जपे 'सूर्यो नः' इत्येषा[5] । सूत्रितं च—'सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्यः' (आश्व. श्रौ. १. ४) इति ॥

सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः ॥ १ ॥

सूर्यः । नः । दिवः । पातु । वातः । अन्तरिक्षात् । अग्निः । नः । पार्थिवेभ्यः ॥ १ ॥

सूर्यः सर्वस्य प्रेरकः शोभनीयो वा देवः दिवः द्युलोकात् द्युलोकवर्तिनो जनात् नः अस्मान् पातु रक्षतु । वातः वायुश्च अन्तरिक्षात् मध्यमस्थानगताद्बाधकादस्मान् रक्षतु । तथा पृथिवीस्थानः अग्निः च पार्थिवेभ्यः पृथिव्यां वर्तमानेभ्यः शत्रुभ्यः नः अस्मान् रक्षतु ॥

---

१. ग-त४.५-भ४-पुत्रादिकं । २. त१.२.३.६.७.८-भ१.२.४.८-प्रत्यंचतं; त४-भ७-प्रत्यंचंतं; त५-प्रत्यंचं । ३. त-भ-मु-गमनशीलां । ४. ग-भ१.२.४.५.८-मु-॰दुत्तरकालीने; त१.२.३.६.७.८-भ७-॰दुत्तरकालीनो । ५. ग-त४-भ-इत्येषा जप्या ।

जोषा सवितर्यस्य ते हरः शतं सवाँ अर्हति । पाहि नो दिद्युतः पतन्त्याः ॥२॥

जोर्ष । सवितः । यस्य । ते । हरः । शतम् । सवान् । अर्हति ।

पाहि । नः । दिद्युतः । पर्तन्त्याः ॥ २ ॥

हे सवितः सर्वस्य प्रेरक सूर्य जोष अस्मत्स्तुत्यादिकं सेवस्व । यस्य ते तव हरः रसहरणशीलं[1] तेजः शतं सवान् बहून् यज्ञान् प्रति अर्हति योग्यं भवति । यद्वा । प्रकाशनादि-द्वारा पूजयति । स त्वं नः अस्मान् पतन्त्याः निपतन्त्याः शत्रुभिरस्मासु क्षिप्यमाणायाः दिद्युतः । वज्रनामैतत् । द्योतमानायाः शक्तेरायुधात् पाहि रक्ष ॥

चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नः ॥ ३ ॥

चक्षुः । नः । देवः । सविता । चक्षुः । नः । उत । पर्वतः । चक्षुः । धाता । दधातु । नः ॥३॥

सविता प्रेरकः देवः नः अस्माकं चक्षुः प्रकाशकमिन्द्रियमिन्द्रियानुग्राहकं तेजो वा दधातु । उत अपि च पर्वतः इन्द्रसहचरः पर्वताख्योऽपि देवः नः अस्माकं चक्षुः विदधातु । धाता सर्वस्य विधातादित्यानामन्यतमश्च नः अस्माकं चक्षुः विदधातु ॥

चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः । सं चेदं वि च पश्येम ॥ ४ ॥

चक्षुः । नः । धेहि । चक्षुषे । चक्षुः । विऽख्यै । तनूभ्यः ।

सम् । च । इदम् । वि । च । पश्येम ॥ ४ ॥

नः अस्माकं चक्षुषे रूपोपलब्धिकारणायेन्द्रियाय[2] चक्षुः प्रकाशकं तदनुग्राहकं तेजो हे सूर्य धेहि विधेहि कुरु । यद्वा । न इति व्यत्ययेन बहुवचनम् । चक्षुषे चक्षुःसंज्ञाय नो मह्यं चक्षु-रिन्द्रियं वा तेजो वा हे सूर्य धेहि प्रयच्छ । तनूभ्यः अस्माकं शरीरेभ्यस्तनयेभ्यो वा विख्यै विख्यानाय प्रकाशनाय चक्षुः त्वदीयं प्रकाशं विधेहि । यत एवं तस्मात्कारणात् त्वदीयेन तेजसा वयं च इदं सर्वं जगत् सं पश्येम । सम्यग्द्रष्टारो भवेम । वि पश्येम च । विविधं च सविशेषं द्रष्टारो भवेम ॥

सुसंदृशं त्वा वयं प्रति पश्येम सूर्य । वि पश्येम नृचक्षसः ॥ ५ ॥

सुऽसंदृशम् । त्वा । वयम् । प्रति । पश्येम । सूर्य । वि । पश्येम । नृऽचक्षसः ॥ ५ ॥

हे सूर्य सुसंदृशं सुष्ठु संद्रष्टारं त्वा त्वां वयं प्रति पश्येम प्रत्येकं द्रष्टारो भूयास्म । तथा नृचक्षसः नृभिर्मनुष्यैरस्माभिर्द्रष्टव्यान् पदार्थान् वि पश्येम विद्रष्टारो भवेम । यद्वा । नृचक्षसो नृणां शत्रुमनुष्याणां हिंसकाः सन्तो वयं विशिष्टज्ञाना भवेम ॥ ॥ १६ ॥

'उदसौ' इति षड्चमष्टमं सूक्तमानुष्टुभम् । पुलोमतनया शची स्वात्मानमनेनास्तौत् । अतः सैवर्षिः सैव देवता । तथा चानुक्रान्तम्—'उदसौ षट् पौलोमी शच्यात्मानं तुष्टावानुष्टुभम्' इति । विनियोगो लिङ्गादवगन्तव्यः । आपस्तम्बस्तु सपत्नीनाशने सूर्योपस्थान इदं सूक्तं विनियुक्तवान् । सूत्र्यते हि—'एतेनैव कामेनोत्तरेणानुवाकेन सदादित्यमुपतिष्ठते' ( आप. गृ. ९. ९) इति । अत्र एतेन इति प्रकृतं सपत्नीबाधनं परामृश्यते ॥

१. त१.२.३.६.७.८-म-हरणशीलं; त४-संहरणशीलं । २. ग-°करणाये° ।

उद॒सौ सूर्यो॑ अगा॒दुद॒यं मा॑म॒को भगः॑ ।
अ॒हं तद्वि॑द्व॒ला पति॑म॒भ्य॑साक्षि विषास॒हिः ॥ १ ॥

उत् । अ॒सौ । सूर्यः॑ । अ॒गात् । उत् । अ॒यम् । मा॒म॒कः । भगः॑ ।
अ॒हम् । तत् । वि॒द्व॒ला । पति॑म् । अ॒भि । अ॒सा॒क्षि॒ । वि॒ऽस॒स॒हिः ॥ १ ॥

असौ द्युलोकस्थः सूर्यः उत् अगात् उदयं प्राप्तवान् । मामकः मदीयः भगः भजनीयः अयम् इन्द्रश्च सूर्यात्मनोदगात् । यद्वा मामको भगो मदीयमिदं सौभाग्यमुदगात् । तत् उद्यतं सूर्यस्य तेजः विद्वला ज्ञातवती यद्वा पतिं भर्तारं विद्वला लब्धवती अहं विषासहिः विशेषेणाभिभवित्री सती अभ्यसाक्षि अभ्यभूवम् । सपत्नीरिति शेषः । सहतेरभिभवार्थस्य लुङ्येतद्रूपम् । यद्वा । विषासहिः सपत्नीनामभिभवित्री सती पतिमभ्यसाक्षि । भर्तारमप्यभ्यभूवम् । यथा मय्येव वशीकृतश्चिरं वर्तते[1] तथाकार्षमित्यर्थः ॥

अ॒हं के॒तुर॒हं मू॒र्धाहमु॒ग्रा वि॒वाच॑नी । ममेद॑नु॒ क्रतुं॒ पतिः॑ सेहा॒नाया॑ उ॒पाच॑रेत् ॥ २ ॥

अ॒हम् । के॒तुः । अ॒हम् । मू॒र्धा । अ॒हम् । उ॒ग्रा । वि॒ऽवाच॑नी ।
मम॑ । इत् । अनु॑ । क्रतु॑म् । पतिः॑ । से॒हा॒नायाः॑ । उ॒प॒ऽआच॑रेत् ॥ २ ॥

अहं केतुः केतयित्री सर्वस्य ज्ञात्री[2] भवामि । अहं मूर्धा सर्वेष्ववयवेषु शिर इव प्रधानभूता च भवामि । अहम् उग्रा उद्गूर्णा सती विवाचनी विशेषेण पतिं वाचयित्री भवामि । क्रोधाविष्टमपि पतिं मयि सर्वदा प्रियवचनयुक्तं करोमीत्यर्थः । सेहानायाः सपत्नीनामभिभवित्र्याः ममेत् ममैव क्रतुं कर्म बुद्धिं वा अनुलक्ष्य पतिः पालयिता भर्ता उपाचरेत् उपागच्छेत् । नान्यासां पत्नीनाम् ॥

मम॑ पु॒त्राः श॑त्रु॒हणोऽथो॑ मे दुहि॒ता वि॒राट् ।
उ॒ताहम॑स्मि संज॒या पत्यौ॑ मे॒ श्लोक॑ उत्त॒मः ॥ ३ ॥

मम॑ । पु॒त्राः । श॒त्रु॒ऽहनः॑ । अथो॒ इति॑ । मे॒ । दु॒हि॒ता । वि॒ऽराट् ।
उ॒त । अ॒हम् । अ॒स्मि॒ । स॒म्ऽज॒या । पत्यौ॑ । मे॒ । श्लोकः॑ । उ॒त्ऽत॒मः ॥ ३ ॥

मम एव पुत्राः तनयाः शत्रुहणः शत्रूणां सपत्नानां[3] हन्तारो भवन्ति । अथो अपि च मे मदीया दुहिता पुत्री विराट् विशेषेण राजमाना भवति । उत अपि च अहं संजया सम्यग्जेत्री सपत्नीनाम् अस्मि । ता[4] अभिभवामि । अतो हेतोः पत्यौ भर्तरीन्द्रे मे मम श्लोकः उपश्लोकनीयं यशः उत्तमः उद्गततममतिशयेनोत्कृष्टं विद्यते ॥

येनेन्द्रो॑ ह॒विषा॑ कृ॒त्व्यभ॑वद् द्यु॒म्न्यु॑त्त॒मः ।
इ॒दं तद॑क्रि देवा असप॒त्ना किला॑भुवम् ॥ ४ ॥

येन॑ । इन्द्रः॑ । ह॒विषा॑ । कृ॒त्वी । अभ॑वत् । द्यु॒म्नी । उ॒त्ऽत॒मः ।
इ॒दम् । तत् । अ॒क्रि॒ । दे॒वाः॒ । अ॒स॒प॒त्ना । किल॑ । अ॒भु॒व॒म् ॥ ४ ॥

---

१. म२.५–वर्तेत । २. त१.२.३.६.७.८–म–राज्ञी । ३. त-मु–सपत्नीनां । ४. त-म–'ता' नास्ति ।

ᵛयेन ᵛहविषा ᵛइन्द्रः मम भर्ता ᵛकृत्वी कर्मणां कर्ता ᵛअभवत् भवति । तथा ᵛद्युम्नी । द्युम्नं द्योतमानं यशोऽन्नं वा । तद्वान् ᵛउत्तमः उत्कृष्टतमश्च येन हविषा भवति । हे ᵛदेवाः स्तोतार ऋत्विजः ᵛतत् ᵛइदं हविः ᵛअक्रि अकारि । जयार्थिभिर्भवद्भिः क्रियताम् । यद्वा । हे यष्टव्या देवाः तदिदं हविरक्र्यहमपि । करोतेर्लुङीटि 'मन्त्रे घस°' इति च्लेर्लुक् । अत एव कारणादहम् ᵛअसपत्ना ᵛकिल शत्रुरहिता खलु ᵛअभुवम्[१] अभूवम् । छान्दसो ह्रस्वः ॥

**असपत्ना सपत्नघ्नी जयन्त्यभिभूवरी ।**
**आवृक्षमन्यासां वर्चो राधो अस्थेयसामिव ॥ ५ ॥**

असपत्ना । सपत्नऽघ्नी । जयन्ती । अभिऽभूवरी ।
आ । अवृक्षम् । अन्यासाम् । वर्चः । राधः । अस्थेयसाम्ऽइव ॥ ५ ॥

ᵛअसपत्ना अशत्रुका भवामि । कुत इत्यत आह । ᵛसपत्नघ्नी शत्रूणां हन्त्री अत एव ᵛजयन्ती जयं प्राप्नुवती[२] ᵛअभिभूवरी अभिभवित्री ॥ भवतेः 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । 'वनो र च' इति ङीब्रेफौ ॥ ईदृश्यहम् ᵛअन्यासां सपत्नीनां ᵛवर्चः तेजः ᵛराधः धनं च ᵛआवृक्षम् आ समन्तादवृक्षम् । अवृश्चिपम् । अच्छिदम् ॥ व्रश्चेर्लुङि ऊदित्वादिडभावे संयोगादिलोपे छान्दसं संप्रसारणम् ॥ तत्र दृष्टान्तः । ᵛअस्थेयसामिव । अस्थिरतराणां शत्रूणां यथा धनमप्रयत्नेन[३] वृश्च्यते तथेत्यर्थः ॥ स्थिरशब्दादीयसुनि 'प्रियस्थिर°' इत्यादिना स्थादेशः ॥

**समजैषमिमा अहं सपत्नीरभिभूवरी ।**
**यथाहमस्य वीरस्य विराजानि जनस्य च ॥ ६ ॥**

सम् । अजैषम् । इमाः । अहम् । सऽपत्नीः । अभिऽभूवरी ।
यथा । अहम् । अस्य । वीरस्य । विऽराजानि । जनस्य । च ॥ ६ ॥

ᵛअभिभूवरी अभिभवित्री ᵛअहम् ᵛइमाः ᵛसपत्नीः ᵛसमजैषं सम्यगभ्यभूवम् । ᵛयथा येन प्रकारेण ᵛअहमस्य ᵛवीरस्य इन्द्रस्य तदीयपरिजनस्य ᵛच ᵛविराजानि विशेषेण राजमाना भवानि । तथा समजैषमित्यर्थः ॥   ॥ १७ ॥

'तीव्रस्य' इति पञ्चर्चं नवमं सूक्तं वैश्वामित्रस्य पूरणस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं— 'तीव्रस्य पञ्च पूरणो वैश्वामित्रः' इति । तीव्रसोमाख्य एकाह इदं निष्केवल्यनिविद्धानम् । सूत्रितं च—'कस्य वीरस्तीव्रस्याभिवयस इति मध्यंदिनः'( आश्व. श्रौ. ९. ७ ) इति । महाव्रतेऽपि माध्यंदिने सवने ब्रह्मशस्त्रेऽप्येतत्सूक्तम् । तथैव पञ्चमारण्यके सूत्रितं—'तीव्रस्याभिवयसो अस्य पाहीति माध्यंदिने' ( ऐ. आ. ५. १. १ ) इति ॥

**तीव्रस्याभिवयसो अस्य पाहि सर्वरथा वि हरी इह मुञ्च ।**
**इन्द्र मा त्वा यजमानासो अन्ये नि रीरमन् तुभ्यमिमे सुतासः ॥ १ ॥**

१. त२.४.५.६.८-भ१.४.७-'अभुवं' नास्ति । २. त२.३.६.७-भ४.७-प्राप्नुवती । ३. त४.५-स्थानमप्रयत्नेन ।

तीव्रस्य । अभिऽवयसः । अस्य । पाहि । सर्वऽरथा । वि । हरी इति । इह । मुञ्च ।
इन्द्र । मा । त्वा । यजमानासः । अन्ये । नि । रीरमन् । तुभ्यम् । इमे । सुतासः ॥ १ ॥

तीव्रस्य तीक्ष्णस्य क्षिप्रमदकरस्य अभिवयसः । वय इत्यन्ननाम । अभिगतं चरुपुरोडाशाद्यन्नं यस्य तादृशस्य अस्य सोमस्य । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । ईदृशं सोमं हे इन्द्र पाहि पिब । पिबतेश्छान्दसः शपो लुक् । तदर्थं सर्वरथा सरणशीलरथौ हरी अश्वौ इह अस्मिन् यज्ञगृहे वि मुञ्च रथाद्विसृज । हे इन्द्र अस्मत्तः अन्ये यजमानासः यजमानाः त्वा त्वां मा नि रीरमन् नितरां मा रमयन्तु । वयमेव रमयाम इत्यर्थः । ततः तुभ्यं त्वदर्थमेव सुतासः सुता अभिषुताः इमे प्रत्यक्षेणोपलभ्यमानाः सोमा वर्तन्ते ॥

**तुभ्यं सुतास्तुभ्यमु सोत्वासस्त्वां गिरः श्वात्र्या आ ह्वयन्ति ।**
**इन्द्रेदमद्य सवनं जुषाणो विश्वस्य विद्वाँ इह पाहि सोमम् ॥ २ ॥**

तुभ्यम् । सुताः । तुभ्यम् । ऊँ इति । सोत्वासः । त्वाम् । गिरः । श्वात्र्याः । आ । ह्वयन्ति ।
इन्द्र । इदम् । अद्य । सवनम् । जुषाणः । विश्वस्य । विद्वान् । इह । पाहि । सोमम् ॥ २ ॥

हे इन्द्र तुभ्यं त्वदर्थमेव सुताः अभिषुताः सर्वे सोमाः सोत्वासः इतःपरमभिषोतव्याश्च तुभ्यमु त्वदर्थमेव । सुनोतेः 'कृत्यार्थे तवैकेन्०' इति त्वन्प्रत्ययः । श्वात्र्याः शु आशु शीघ्रमतन्त्यः प्रवर्तमानाः गिरः स्तुतिरूपा वाचश्च त्वाम् एव आ ह्वयन्ति आक्रोशयन्ति । हे इन्द्र अद्य अस्मिन् काले इदं सवनं प्रातःसवनादिकं जुषाणः सेवमानः विश्वस्य सर्वस्य विद्वान् ज्ञाता त्वम् इह अस्मिन् यज्ञे सोमं पाहि पिब ॥

**य उशता मनसा सोममस्मै सर्वहृदा देवकामः सुनोति ।**
**न गा इन्द्रस्तस्य परा ददाति प्रशस्तमिच्चारुमस्मै कृणोति ॥ ३ ॥**

यः । उशता । मनसा । सोमम् । अस्मै । सर्वऽहृदा । देवऽकामः । सुनोति ।
न । गाः । इन्द्रः । तस्य । परा । ददाति । प्रऽशस्तम् । इत् । चारुम् । अस्मै । कृणोति ॥ ३ ॥

य[1] उशता कामयमानेन सर्वहृदा । सर्वमविकलं हृदयं यस्य । यद्वा । सर्वेषामृत्विजां हृदयेन । सामर्थ्यान्मत्वर्थो लक्ष्यते । हृदयवता मनसा अस्मै इन्द्राय देवकामः देवमिन्द्रं कामयमानो यजमानः सोमं सुनोति अभिषुणोति । इन्द्रस्तस्य यजमानस्य गाः न परा ददाति । परादानं विनाशः । न विनाशयति । अस्मै यजमानाय चारुं शोभनमत एव प्रशस्तम् । इत् इत्यवधारणे । प्रशंसनीयमेव धनं कृणोति करोति ॥

**अनुस्पष्टो भवत्येषो अस्य यो अस्मै रेवान्न सुनोति सोमम् ।**
**निररत्नौ मघवा तं दधाति ब्रह्मद्विषो हन्त्यनानुदिष्टः ॥ ४ ॥**

अनुऽस्पष्टः । भवति । एषः । अस्य । यः । अस्मै । रेवान् । न । सुनोति । सोमम् ।
निः । अरत्नौ । मघऽवा । तम् । दधाति । ब्रह्मऽद्विषः । हन्ति । अननुऽदिष्टः ॥ ४ ॥

---

१. त१.२.३.७-म२.७.८-'य' नास्ति ।

ᐯअस्य यजमानस्य ᐯएषः इन्द्रः ᐯअनुस्पष्टः दृष्टिगोचरो भवति ᐯयः ᐯरेवान् धनवान् ᐯअस्मै इन्द्राय ᐯसोमं ᐯसुनोति अभिषुणोति । ᐯमघवा धनोपेत इन्द्रः ᐯतं यजमानम् ᐯअरत्नौ हस्ते ᐯनिः ᐯदधाति भयान्निष्कृष्य धारयति रक्षिता सन् स्तुत्वा च ᐯअननुदिष्टः तेनानुक्तोऽप्रार्थित एव सन् ᐯब्रह्मद्विषः ब्राह्मणद्वेष्टॄन् शत्रून् ᐯहन्ति हिनस्ति ॥

शुनासीरीये पर्वणि 'इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालम्' इत्यस्य 'अश्वायन्तः' इत्येषा याज्या। इन्द्रो वा शुन इति वैकल्पिकस्यापि हविष इयमेव याज्या । सूत्रितं च—'अश्वायन्तो गव्यन्तो वाजयन्तः शुनं हुवेम मघवानमिन्द्रम्' (आश्व. श्रौ. २. २०) इति ॥

अश्वायन्तो गव्यन्तो वाजयन्तो हवामहे त्वोपगन्तवा उ ।
आभूषन्तस्ते सुमतौ नवायां वयमिन्द्र त्वा शुनं हुवेम ॥ ५ ॥

अश्वऽयन्तः । गव्यन्तः । वाजयन्तः । हवामहे । त्वा । उपऽगन्तवे । ऊँ इति ।
आऽभूषन्तः । ते । सुऽमतौ । नवायाम् । वयम् । इन्द्र । त्वा । शुनम् । हुवेम ॥ ५ ॥

ᐯअश्वायन्तः अश्वानात्मन इच्छन्तः ॥ क्यचि 'अश्वाघस्यात्' (पा. सू.७.४.३७) इत्यात्वम् ॥ ᐯगव्यन्तः गा आत्मन इच्छन्तः ॥ 'वान्तो यि प्रत्यये' (पा. सू. ६. १. ७९) इत्यवादेशः ॥ ᐯवाजयन्तः अग्नीन् वाजनेन शूर्पादिना प्रज्वलयन्तः ॥ 'वा गतिगन्धनयोः'। णिचि 'वो विधूनने॰' (पा. सू. ७. ३. ३८) इति जुगागमः। अस्माच्छतर्यदुपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वे[1] शपश्च पित्त्वादनुदात्तत्वे[2] ततो णिच एव स्वरः शिष्यते ॥ अपर आह । वाजमन्नमात्मन इच्छन्त इति । तदानीमवग्रहाभावस्वरौ[3] छान्दसौ द्रष्टव्यौ । एवंभूता वयं हे इन्द्र त्वाम् ᐯउपगन्तवै उपगन्तुं प्राप्तुं ᐯहवामहे आह्वयामहे ॥ गमेः 'तुमर्थे सेसेन्॰' इति तवैप्रत्ययः । गतिसमासे 'तवै चान्तश्च युगपत्' इति गतेः प्रकृतिस्वरत्वमुत्तरपदस्यान्तोदात्तत्वम् ॥ ᐯउ इति पूरकः । हे ᐯइन्द्र ᐯते तव ᐯनवायाम् अभिनवायां प्रशस्तायां ᐯसुमतौ शोभनबुद्धौ[4] ᐯआभूषन्तः आ समन्ताद्भवन्तो वर्तमानाः । यद्वा । आ समन्ताद्भूषयन्तोऽलंकुर्वन्तस्त्वानुग्रहबुद्धौ वर्तमानाः ᐯवयं ᐯशुनं सुखकरं त्वां ᐯहुवेम आह्वयेम॥ ॥१८॥

'मुञ्चामि' इति पञ्चर्चं दशमं सूक्तं प्रजापतिपुत्रस्य यक्ष्मनाशनाख्यस्यार्षम् । अन्त्यानुष्टुप् शिष्टास्त्रिष्टुभः । अनादेशे त्विन्द्रो देवता । तथा चानुक्रान्तं—'मुञ्चामि प्राजापत्यो यक्ष्मनाशनो राजयक्ष्मघ्नमन्त्यानुष्टुप्' इति । हृदयरोगप्रमुखस्य[5] व्याधिजातस्योपशमनार्थमनेन सूक्तेन होतव्यम् । सूच्यते हि—'व्याधितस्यातुरस्य[6] यक्ष्मगृहीतस्य वा पळाहुतिश्चरुर्मुञ्चामि त्वा हविषा जीवनाय कमित्येतेन' (आश्व. गृ. ३. ६. ४-५) इति ॥

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् ।
ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥ १ ॥

मुञ्चामि । त्वा । हविषा । जीवनाय । कम् । अज्ञातऽयक्ष्मात् । उत । राजऽयक्ष्मात् ।
ग्राहिः । जग्राह । यदि । वा । एतत् । एनम् ।
तस्याः । इन्द्राग्नी इति । प्र । मुमुक्तम् । एनम् ॥ १ ॥

---

१. त१.२.३.६.७.८-भ–॰नुदात्ते; त४.५–॰नुदात्तं । २. त-भ-मु–॰दनुदात्तत्वं । ३. त-भ–इदानीम॰ । ४. ग-भ२–शोभनबुद्धौ अनुग्रहबुद्धौ । ५. ग-त४.५–क्षयरोगप्रमुखस्य । ६. त२.३.४.५.६.८-भ–व्याधितस्याधितस्य ।

हे यक्ष्माभिभूत ᵛहविषा अनेन चरुणा साधनेन[1] होमेन[1] ᵛत्वा त्वाम् ᵛअज्ञातयक्ष्मात्। अयमेतत्संज्ञ[2] इत्यप्रज्ञातः शरीरगतो रोगोऽज्ञातयक्ष्मः। तादृशाद्रोगात् ᵛमुञ्चामि विश्लेषयामि। किमर्थम्। ᵛजीवनाय ᵛकं जीवनार्थम्। इह लोके चिरकालावस्थानार्थमित्यर्थः। कमिति पूरकः। ᵛउत अपि च ᵛराजयक्ष्मात्। यक्ष्माणां राजा यक्ष्मरोगो राजयक्ष्मः। राजदन्तादित्वादुपसर्जनस्य परनिपातः ( पा. सू. २. २. ३१ )। तस्मादपि त्वां मुञ्चामि। ᵛयदि ᵛवा यदि च ᵛएतत् एतस्मिन् समये ᵛएनं व्याधितं पुरुषं ᵛग्राहिः ग्रहणशीला ग्रहरूपा देवता ᵛजग्राह गृहीतवती ᵛतस्याः देवतायाः सकाशाद्धे ᵛइन्द्राग्नी ᵛएनं ᵛप्र ᵛमुमुक्तं प्रमोचयतम् ॥

यदि॑ क्षि॒तायु॒र्यदि॑ वा॒ परे॑तो॒ यदि॑ मृ॒त्योर॑न्ति॒कं नीत॑ ए॒व ।
तमा ह॑रामि॒ निर्ऋ॑तेरु॒पस्था॒दस्पा॑र्षमेनं श॒तशा॑रदाय ॥ २ ॥

यदि॑ । क्षि॒तऽआ॑युः । यदि॑ । वा॒ । परा॑ऽइतः । यदि॑ । मृ॒त्योः । अ॒न्ति॒कम् । निऽइ॑तः । ए॒व । तम् । आ । ह॒रा॒मि॒ । निःऽऋ॑तेः । उ॒पऽस्था॑त् । अस्पा॑र्षम् । ए॒न॒म् । श॒तऽशा॑रदाय ॥२॥

ᵛयदि स रोगग्रस्तः ᵛक्षितायुः क्षीणायुर्भवति ᵛयदि ᵛवा ᵛपरेतः अस्माल्लोकात् परागतो भवति ᵛयदि च ᵛमृत्योः वैवस्वतस्य ᵛअन्तिकं निकटं ᵛनीतः नितरां प्राप्तः ᵛएव भवति एवंभूतमपि ᵛतं पुरुषं ᵛनिर्ऋतेः पापदेवताया आयुषः[3] क्षयकारिण्याः ᵛउपस्थात् उपस्थानात्[4] ᵛआ ᵛहरामि आनाययामि आवर्तयामि। आहृत्य च ᵛएनं ᵛशतशारदाय शतसंवत्सरजीवनार्थम् ᵛअस्पार्षं प्रबलं करोमि। ' स्पृ प्रीतिबलनयोः ' ॥

स॒ह॒स्रा॒क्षेण॑ श॒तशा॑रदेन श॒तायु॑षा ह॒विषाहा॑र्षमेनम् ।
श॒तं यथे॒मं श॒रदो॒ नया॒तीन्द्रो॒ विश्व॑स्य दुरि॒तस्य॒ पा॒रम् ॥ ३ ॥

स॒ह॒स्र॒ऽअ॒क्षेण॑ । श॒तऽशा॑रदेन । श॒तऽआ॑युषा । ह॒विषा॑ । आ । अ॒हा॒र्ष॒म् । ए॒न॒म् । श॒तम् । यथा॑ । इ॒मम् । श॒रदः॑ । नया॑ति । इन्द्रः॑ । विश्व॑स्य । दुः॒ऽइ॒तस्य॑ । पा॒रम् ॥ ३ ॥

ᵛसहस्राक्षेण। सहस्रमिति बहुनाम। सहस्रमक्षीणि चक्षूंषि यस्य हविषः फलत्वेन विद्यन्ते तत् सहस्राक्षम्॥ ' बहुव्रीहौ सक्थ्यक्ष्णोः ' ( पा. सू. ५. ४. ११३ ) इति षच् समासान्तः। शरदः संबन्धी शारदः संवत्सरः। शतं शारदा यस्य तत्तथोक्तम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अत एव ᵛशतायुषा शतसंवत्सरपरिमितमायुर्जीवनं फलभूतं यस्य तादृशेन[5] ᵛहविषा। यद्वा। सहस्राक्ष इन्द्रः। तेन शतशारदेन शरदां संवत्सराणां शतस्य दातृत्वेन संबन्धिना कर्त्रा शतायुषा हविषा करणभूतेन। ᵛएनं यक्ष्मगृहीतम् ᵛआहार्षं रोगादनैषम्[6]। ᵛयथा येन प्रकारेण ᵛइमं पुरुषं ᵛशतं ᵛशरदः संवत्सरान्। अत्यन्तसंयोगे द्वितीया। एतावन्तं कालम् ᵛइन्द्रो ᵛविश्वस्य सर्वस्य ᵛदुरितस्य दुःखस्य ᵛपारम् अवसानं दुःखराहित्यं ᵛनयाति नयेत् तथाहार्षमित्यर्थः ॥

श॒तं जी॑व श॒रदो॒ वर्ध॑मानः श॒तं हे॑म॒न्ताञ्छ॒तमु॑ वस॒न्तान् ।
श॒तमि॑न्द्रा॒ग्नी स॑वि॒ता बृह॒स्पतिः॑ श॒तायु॑षा ह॒विषे॒मं पुन॑र्दुः ॥ ४ ॥

१. त-भ१.२.४.८–साधनहोमेन। २. त-भ१.२.४.८–अनेन तत्संज्ञ। ३. त१.२.३.७-भ१.२.४.८–मानुषः;'भ७–मनुष्य। ४. ग-त४.५-भ२–उपस्थानात् समीपात्। ५. ग-त१.२.३.६.७.८-भ–तादृशेनानेन; त४.५–तादृशमनेन। ६. ग-त४.५-भ२–रोगादानैषं; त१.२.३.६.७-रोगादानैषां।

शतम् । जीव । शरदः । वर्धमानः । शतम् । हेमन्तान् । शतम् । ऊँ इति । वसन्तान् ।
शतम् । इन्द्राग्नी इति । सविता । बृहस्पतिः । शतऽआयुषा । हविषा । इमम् । पुनः । दुः ॥४॥

हे यक्ष्माद्विमुक्त वर्धमानः अहरहरभिवृद्धिं प्राप्नुवंस्त्वं शतं शरदः शतसंख्याकान् शरदृतून् जीव प्राणान् धारय । पूर्ववदत्यन्तसंयोगे द्वितीया । शतं हेमन्तान् हेमन्तर्तूंश्च जीव शतं वसन्तान् च । उशब्दः समुच्चये । अपि च इन्द्राग्नी इन्द्रश्चाग्निश्च सविता प्रेरको देवश्च बृहस्पतिः बृहतां देवानां पालयिता देवश्च शतायुषा शतसंवत्सरपरिमितस्यायुषो हेतुभूतेन हविषा तर्प्यमाणाः सन्तः इमं जनं पुनर्दुः पुनरस्मभ्यं प्रादुः ॥

आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव ।
सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥ ५ ॥

आ । अहार्षम् । त्वा । अविदम् । त्वा । पुनः । आ । अगाः । पुनःऽनव ।
सर्वऽअङ्ग । सर्वम् । ते । चक्षुः । सर्वम् । आयुः । च । ते । अविदम् ॥ ५ ॥

हे व्याधिगृहीत त्वा त्वाम् आहार्षं मृत्योः सकाशादाहृतवानस्मि । अत एव त्वा त्वाम् अविदम् अलप्सि । हे पुनर्नव पुनरभिनव[1] पुनरागाः पुनरस्मत्समीपमागच्छ । हे सर्वाङ्ग सर्वैरविकलैरङ्गैरुपेत ते तव सर्वं चक्षुः । उपलक्षणमेतत् । इन्द्रियवर्गं सकलम् अविदं लब्धवानस्मि । ते तव आयुः जीवनं च सर्वं संपूर्णमविदम् ॥ ॥ १९ ॥

'ब्रह्मणाग्निः' इति षड्चमेकादशं सूक्तमानुष्टुभम् । ब्रह्मपुत्रो रक्षोहा नामर्षिः । अपप्रसव-समाधानरूपस्य गर्भरक्षणस्य[2] प्रतिपाद्यत्वात्तद्देवताकमिदम् । अनुक्रान्तं च—'ब्रह्मणा षड् ब्राह्मो रक्षोहा गर्भसंस्रावे प्रायश्चित्तमानुष्टुभं हि' इति । विनियोगो लिङ्गादवगन्तव्यः ॥

ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः ।
अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥ १ ॥

ब्रह्मणा । अग्निः । सम्ऽविदानः । रक्षःऽहा । बाधताम् । इतः ।
अमीवा । यः । ते । गर्भम् । दुःऽनामा । योनिम् । आऽशये ॥ १ ॥

ब्रह्मणा मन्त्रेण सह संविदानः ऐकमत्यं प्राप्तः रक्षोहा रक्षसां हन्ता अग्निः इतः अस्मात्स्थानात् राक्षसादिकं बाधतां हिनस्तु । यः राक्षसः अमीवा रोगरूपः सन् ते तव गर्भम् आशये आशेते । 'लोपस्त आत्मनेपदेषु' इति तलोपः । हन्तुं प्राप्नोति । दुर्णामा अर्श-आख्यो रोगः । तद्रूपः सन् यश्च ते तव योनिं रेतस आधानं गर्भस्थानमाशेते[3] तं बाधतामित्यन्वयः॥

यस्ते गर्भममीवा दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥ २ ॥

यः । ते । गर्भम् । अमीवा । दुःऽनामा । योनिम् । आऽशये ।
अग्निः । तम् । ब्रह्मणा । सह । निः । क्रव्यऽअदम् । अनीनशत् ॥ २ ॥

---

१. ग-त१.६–पुनरभिनवमुत्पन्न; त२.३–पुनरभिवमुत्पन्न; त७–पुनरभिषमुत्पन्न; भ१.४.८–पुनर-भिभवमुत्पन्न; भ२–पुनरभिभवमुत्पन्न । २. त४.५–गर्भलक्षणस्य । ३. त४.५–गर्भस्यायतनमाशेते ।

गतः पूर्वोऽर्धर्चः । vतं vक्रव्यादं मांसाशिनं राक्षसादिकं vब्रह्मणा सहितः vअग्निः निःशेषेण vअनीनशत्[1] नाशयतु ॥

यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम् ।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥ ३ ॥

यः । ते । हन्ति । पतयन्तम् । निऽसत्स्नुम् । यः । सरीसृपम् ।
जातम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ३ ॥

हे योषित् vते तव गर्भाशये vपतयन्तं पतन्तं रेतोरूपेण गच्छन्तं तदनन्तरं तत्र vनिषत्स्नुं निषीदन्तं च गर्भं vयः राक्षसादिः vहन्ति हिनस्ति ततो मासत्रयादूर्ध्वं प्राप्तसर्वावयवं vसरीसृपं सर्पणशीलं च गर्भं vयः[2] हन्ति vजातं[2] दशसु मासेषूत्पन्नं vते तव शिशुं vयः राक्षसादिः vजिघांसति हन्तुमिच्छति vतमितः स्थानात् vनाशयामसि नाशयामः[3] ॥

यस्त ऊरू विहरत्यन्तरा दंपती शये ।
योनिं यो अन्तरारेळ्हि तमितो नाशयामसि ॥ ४ ॥

यः । ते । ऊरू इति । विऽहरति । अन्तरा । दंपती इति दम्ऽपती । शये ।
योनिम् । यः । अन्तः । आऽरेळ्हि । तम् । इतः । नाशयामसि ॥ ४ ॥

हे योषित् vते तव vऊरू पादमूलौ vयः राक्षसादिः vविहरति गर्भघाताय विश्लिष्टौ करोति vदंपती vअन्तरा जायापत्योर्मध्ये गर्भहननार्थं यश्च vशये शेते vयः च vयोनिम् vअन्तः प्रविश्य vआरेळ्हि निषिक्तं रेतो जिह्वया आस्वादयति ॥ भक्षयतीत्यर्थः । 'लिह आस्वादने'। आदादिकः । कपिलकादित्वाल्लत्वविकल्पः ॥

यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ ५ ॥

यः । त्वा । भ्राता । पतिः । भूत्वा । जारः । भूत्वा । निऽपद्यते ।
प्रऽजाम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ५॥

हे योषित् vयः राक्षसः vभ्राता भ्रातृरूपो vभूत्वा vपतिः भर्तृरूपो वा भूत्वा त्वां vनिपद्यते अभिगच्छति । अथवा vजारः उपपतिरूपो वा vभूत्वा अभिगच्छति । एवंभूतः vयः राक्षसादिः vते तव vप्रजां vजिघांसति हन्तुमिच्छति । स्पष्टमन्यत् ॥

यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ ६ ॥

यः । त्वा । स्वप्नेन । तमसा । मोहयित्वा । निऽपद्यते ।
प्रऽजाम् । यः । ते । जिघांसति । तम् । इतः । नाशयामसि ॥ ६ ॥

१. त-भ-अनीनशत् नाशयत् । २. त४.५-योनिजातं । ३. त-भ-नाशयाम ।

हे योषित् ᵛयः राक्षसादिः ᵛस्वप्नेन स्वप्नावस्थया[1] ᵛतमसा निद्रया[2] ᵛत्वा त्वां ᵛमोहयित्वा मूढतां प्रापय्य ᵛनिपद्यते गर्भघाताय गच्छति । अन्यद्गतम् ॥	॥ २० ॥

'अक्षीभ्याम्' इति षडृचं द्वादशं सूक्तमानुष्टुभम् । कश्यपगोत्रोत्पन्नो विवृहा नामर्षिः । यक्ष्मनाशनप्रतिपाद्यत्वात्तद्देवताकं कृत्स्नं सूक्तम् । अनुक्रान्तं च—'अक्षीभ्यां विवृहा काश्यपो यक्ष्मघ्नम्' इति । लैङ्गिको विनियोगः ॥

**अ॒क्षीभ्यां॑ ते॒ नासि॑काभ्यां॒ कर्णा॑भ्यां॒ छुबु॑का॒दधि॑ ।**
**यक्ष्मं॑ शीर्ष॒ण्यं॑ म॒स्तिष्का॑ज्जि॒ह्वाया॒ वि वृ॑हामि ते ॥ १ ॥**

अ॒क्षीभ्या॑म् । ते॒ । नासि॑काभ्याम् । कर्णा॑भ्याम् । छुबु॑कात् । अधि॑ ।
यक्ष्म॑म् । शी॒र्ष॒ण्य॑म् । म॒स्तिष्का॑त् । जि॒ह्वाया॑ः । वि । वृ॒हा॒मि॒ । ते॒ ॥ १ ॥

हे यक्ष्मगृहीत ᵛते तव ᵛअक्षीभ्यां चक्षुर्भ्यां यक्ष्मरोगं ᵛवि ᵛवृहामि उद्धारयामि । विश्लेषयामीत्यर्थः ॥ 'ई च द्विवचने' (पा. सू. ७. १. ७७) इत्यक्षिशब्दस्येकारान्तादेशः । स चोदात्तः ॥ तथा ᵛनासिकाभ्यां घ्राणेन्द्रियाच्च ᵛकर्णाभ्यां श्रोत्राभ्यां च ᵛछुबुकात् चुबुकादोष्ठस्याधःप्रदेशाच्च । अधिरनर्थकः[3] । अपि च ᵛशीर्षण्यम् । शिरसि[4] भवो रोगः शीर्षण्यः । 'भवे छन्दसि' इति यत् । 'ये च तद्धिते' (पा. सू. ६. १. ६१) इति शिरसः शीर्षन्नादेशः । 'ये चाभावकर्मणोः' (पा. सू. ६. ४. १६८) इति प्रकृतिभावः ॥ ईदृशं ᵛयक्ष्मं रोगं ᵛते तव ᵛमस्तिष्कात् । शिरसोऽन्तरवस्थितो मांसविशेषो मस्तिष्कः । तस्मात् ᵛजिह्वायाः रसनायाश्च सकाशाद्वि वृहामि उद्धारयामि । पृथक्करोमीत्यर्थः । 'वृहू उद्यमने' इति धातुः ॥

**ग्री॒वाभ्य॑स्त उ॒ष्णिहा॑भ्यः॒ कीक॑साभ्यो अनू॒क्या॑त् ।**
**यक्ष्मं॑ दोष॒ण्य१॒॑मंसा॑भ्यां बा॒हुभ्यां॒ वि वृ॑हामि ते ॥ २ ॥**

ग्री॒वाभ्य॑ः । ते॒ । उ॒ष्णिहा॑भ्यः । कीक॑साभ्यः । अ॒नू॒क्या॑त् ।
यक्ष्म॑म् । दो॒ष॒ण्य॑म् । अंसा॑भ्याम् । बा॒हुऽभ्या॑म् । वि । वृ॒हा॒मि॒ । ते॒ ॥ २ ॥

हे व्याधिगृहीत ᵛउष्णिहाभ्यः ऊर्ध्वाभिमुखं स्निग्धाभ्य उत्स्नाताभ्यो[5] वा स्नायुभ्यः ᵛग्रीवाभ्यः गलगताभ्यो धमनीभ्यः ᵛते तव ᵛयक्ष्मं ᵛवि ᵛवृहामि । तथा ᵛकीकसाभ्यः अस्थिभ्यः ᵛअनूक्यात् अस्थिसंधेश्च यक्ष्मं वि वृहामि । 'उच समवाये' । अनूच्यते समवेयत इत्यस्थ्नः संधिरनूक्यः । ऋहलोर्ण्यत् । 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । तित्स्वरितः । अपि च दोष्णोर्भवं ᵛदोषण्यम् । पूर्ववद्यति 'पद्दन्॰' इत्यादिना दोःशब्दस्य दोषन्नादेशः । पूर्ववत्प्रकृतिभावः । तमपि[6] यक्ष्मं रोगं ᵛते तव ᵛअंसाभ्यां ᵛबाहुभ्यां च वि वृहामि । हस्तयोरूर्ध्वभागावंसावधोभागौ बाहू ॥

**आ॒न्त्रेभ्य॑स्ते॒ गुदा॑भ्यो वनि॒ष्ठोर्हृद॑या॒दधि॑ ।**
**यक्ष्मं॑ मत॑स्नाभ्यां य॒क्नः प्ला॒शिभ्यो॒ वि वृ॑हामि ते ॥ ३ ॥**

१. त१.२.६.८-भ१—स्वप्नावस्थाया; त४.५.७-भ४-मु—स्वप्नावस्थायां । २. त४.५—निद्रायां । ३. त-भ-मु—अधिर्निरर्थकः । ४. त-भ—शिरसो । ५. त४.५—उत । ६. त-भ—कर्म तमपि ।

आन्त्रेभ्यः । ते । गुदाभ्यः । वनिष्ठोः । हृदयात् । अधि ।
यक्ष्मम् । मतस्नाभ्याम् । यक्नः । प्लाशिऽभ्यः । वि । वृहामि । ते ॥ ३ ॥

हे यक्ष्माभिभूत ^v^ते तव[1] ^v^आन्त्रेभ्यः । आन्त्रं पुरीतदन्नपानयोराधानभूतम्[2] । तत्संबन्धिभ्यः स्नायुभ्यः ^v^गुदाभ्यः याभिर्नाडीभिरन्नरसः समानवायुना धातुषु नीयते ताभ्यो नाडीभ्यश्च सकाशात् यक्ष्मं वि वृहामि । तथा ^v^वनिष्ठोः स्थविरान्त्रात् ^v^हृदयादधि हृदयपुण्डरीकाच्च यक्ष्मं वि वृहामि । अपि च ^v^ते तव ^v^मतस्नाभ्याम् । मतस्नौ पार्श्वयोर्वर्तमानावाम्रफलाकृती वृक्कौ । ताभ्यां ^v^यक्नः । हृदयसमीपे वर्तमानः कालमांसविशेषो यकृत् । तस्माच्च । 'पद्दन्°' इत्यादिना यकृच्छब्दस्य यकन्नादेशः । ^v^प्लाशिभ्यः अन्येभ्योऽपि क्लोमप्लीहादिसंज्ञेभ्यश्च मांसेभ्यश्च ^v^यक्ष्मं रोगं ^v^वि ^v^वृहामि उत्क्षिपामि ॥

ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं श्रोणिभ्यां भासदाद्भंससो वि वृहामि ते ॥ ४ ॥
ऊरुऽभ्याम् । ते । अष्ठीवत्ऽभ्याम् । पार्ष्णिऽभ्याम् । प्रऽपदाभ्याम् ।
यक्ष्मम् । श्रोणिऽभ्याम् । भासदात् । भंससः । वि । वृहामि । ते ॥ ४ ॥

हे रुग्ण ^v^ते तव ^v^ऊरुभ्याम् ^v^अष्ठीवद्भ्यां जानुभ्यां च ^v^यक्ष्मं ^v^वि ^v^वृहामि । तथा ^v^पार्ष्णिभ्यां पादस्यापरभागाभ्यां ^v^प्रपदाभ्यां पादाग्राभ्यां च यक्ष्मं वि वृहामि । अपि च ^v^श्रोणिभ्यां जघनाभ्यां च यक्ष्मं वि वृहामि । तथा ^v^भासदात् । भसत् कटिप्रदेशः । तत्संबन्धात् ^v^भंससः भासमानात् पायोः ^v^ते तव यक्ष्मं वि वृहामि ॥

मेहनाद्वनंकरणाल्लोमभ्यस्ते नखेभ्यः ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ५ ॥
मेहनात् । वनम्ऽकरणात् । लोमऽभ्यः । ते । नखेभ्यः ।
यक्ष्मम् । सर्वस्मात् । आत्मनः । तम् । इदम् । वि । वृहामि । ते ॥ ५ ॥

^v^वनंकरणात् । वनमुदकं शारीरम्[3] । तत्क्रियते विसृज्यते येन तद्वनंकरणम् । तस्मात् ^v^मेहनात् मेढ्रात् ^v^ते तव ^v^लोमभ्यः ^v^नखेभ्यः च ^v^यक्ष्मं ^v^वि ^v^वृहामि । किं बहुना । ^v^इदम् इदानीं ^v^तं यक्ष्मं ^v^सर्वस्मादात्मनः कृत्स्नादेव ^v^ते तव शरीरात् वि वृहामि ॥

अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि ।
यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ६ ॥
अङ्गात्ऽअङ्गात् । लोम्नःऽलोम्नः । जातम् । पर्वणिऽपर्वणि ।
यक्ष्मम् । सर्वस्मात् । आत्मनः । तम् । इदम् । वि । वृहामि । ते ॥ ६ ॥

^v^अङ्गादङ्गात् सर्वेभ्योऽङ्गेभ्यः ^v^लोम्नोलोम्नः सर्वेभ्यो लोमभ्यश्च ^v^पर्वणिपर्वणि अवयवानां सधौ[4] ^v^जातम् उत्पन्नं ^v^यक्ष्मं ^v^वि ^v^वृहामि । अन्यद्गतम् ॥ ॥२१॥

---

१. त१.२.३.७-भ१.२.८-तव त्वं । २. त१.२.३.६.७-°राधारभूतं । ३. त-भ-मु-शरीरं । ४. भ२-संधौ संधौ ।

'अपेहि' इति पञ्चर्चं त्रयोदशं सूक्तमाङ्गिरसस्य प्रचेतस आर्षम्। तृतीया त्रिष्टुप् पञ्चमी पङ्क्तिः। दुःस्वप्ननाशनं देवता। तथा चानुक्रान्तम्—'अपेहि पञ्च प्रचेता दुःस्वप्नघ्नं पङ्क्त्यन्तं त्रिष्टुम्मध्यम्' इति। लैङ्गिको विनियोगः॥

अपे॑हि मनसस्पते॒ऽप॑ क्राम प॒रश्च॑र।
प॒रो निर्ऋ॑त्या॒ आ च॑क्ष्व बहु॒धा जीव॑तो॒ मनः॑॥ १॥

अप॑। इ॒हि॒। म॒न॒सः॒। प॒ते॒। अप॑। क्रा॒म॒। प॒रः॒। च॒र॒।
प॒रः। निः॒ऽऋ॑त्यै। आ। च॒क्ष्व॒। ब॒हु॒धा। जीव॑तः। मनः॑॥ १॥

हे मनसस्पते स्वप्नावस्थस्य मनसः स्वामिन् दुःस्वप्नाधिदेव अपेहि अपगच्छ। स्वप्नावस्थावतो मत्तो निर्गच्छ। निर्गत्य च अप क्राम। देशान्तरं गन्तुं पादौ विक्षिप। दूरदेशं गच्छेत्यर्थः। अपक्रम्य च परः परस्ताद्विप्रकृष्टे देशे चर यथेच्छं वर्तस्व। अपि च निर्ऋत्यै पापदेवतायै परः परस्ताद्वर्तमानायै आ चक्ष्व। वयं न बाधनीया इति प्रब्रूहि। जीवतः मम मनः बहुधा बहुप्रकारं भवति। भोक्तव्येषु बहुषु विषयेषूत्सुकं सत् वर्तते। अतस्तद्विनाशकं दुःस्वप्नदर्शनं नश्यत्वित्यर्थः॥

भ॒द्रं वै वरं॑ वृणते भ॒द्रं यु॑ञ्जन्ति॒ दक्षि॑णम्।
भ॒द्रं वै॑वस्व॒ते चक्षु॑र्बहु॒त्रा जीव॑तो॒ मनः॑॥ २॥

भ॒द्रम्। वै। वर॑म्। वृ॒ण॒ते॒। भ॒द्रम्। यु॒ञ्ज॒न्ति॒। दक्षि॑णम्।
भ॒द्रम्। वै॒व॒स्व॒ते। चक्षुः॑। ब॒हु॒ऽत्रा। जीव॑तः। मनः॑॥ २॥

भद्रं वै शोभनमेव वरं वरणीयं दुःस्वप्नविनाशरूपं फलं वृणते सर्वे जनाः प्रार्थयन्ते। दक्षिणं प्रवृद्धं भद्रं शोभनं तत्फलं युञ्जन्ति प्राप्नुवन्ति च। वैवस्वते विवस्वतः पुत्रे यमे विषये भद्रं शोभनमेव चक्षुः दर्शनमहं प्रार्थये। दुःस्वप्नाधिदेवो वैवस्वतोऽस्मान्मा बाधताम्। भद्रमेव दर्शनमिह लोकेऽवस्थानलक्षणं करोत्वित्यर्थः। बहुत्रा बहुषु हि विषयेषु जीवतः मम मनः वर्तते॥

यदा॒शसा॑ निः॒शसा॑भि॒शसो॑पारि॒म जाग्र॑तो॒ यत्स्व॒पन्तः॑।
अ॒ग्निर्विश्वा॒न्यप॑ दु॒ष्कृता॒न्यजु॑ष्टान्या॒रे अ॒स्मद्द॑धातु॥ ३॥

यत्। आ॒ऽशसा॑। निः॒ऽशसा॑। अ॒भि॒ऽशसा॑। उ॒प॒ऽआ॒रि॒म। जाग्र॑तः। यत्। स्व॒पन्तः॑।
अ॒ग्निः। विश्वा॑नि। अप॑। दुः॒ऽकृ॒तानि॑। अजु॑ष्टानि। आ॒रे। अ॒स्मत्। द॒धा॒तु॒॥ ३॥

यत् दुष्कृतम् आशसा आशंसनेनाभिलाषेण जाग्रतः जागरणावस्थायां वर्तमाना वयम् उपारिम उपगतवन्तः स्म यत् च स्वपन्तः स्वप्नावस्थां प्राप्ता उपगतवन्तः स्म। तथा निःशसा निःशंसनेन निर्गताभिलाषेण अभिशसा अभिगताभिलाषेण च कारणेनावस्थाद्वये यद्दुष्कृतमुपागच्छेम[1]। तानि विश्वानि सर्वाणि अजुष्टानि असेव्यान्यप्रियाणि वा दुष्कृतानि दुष्कर्माणि अग्निः अस्मत् आरे अस्मत्तो दूरदेशे अप दधातु अपकृष्य स्थापयतु॥

१. त१.२.३.७-भ१.२.८-°मुपागच्छाम; भ७-°मुपगच्छेम।

यदिन्द्र ब्रह्मणस्पतेऽभिद्रोहं चरामसि । प्रचेता न आङ्गिरसो द्विषतां पात्वंहसः ॥४॥

यत् । इन्द्र । ब्रह्मणः । पते । अभिऽद्रोहम् । चरामसि ।

प्रऽचेताः । नः । आङ्गिरसः । द्विषताम् । पातु । अंहसः ॥ ४ ॥

हे इन्द्र हे ब्रह्मणस्पते युवयोर्विषये यत् अभिद्रोहम् अभितो द्रोहकं पापं दुःस्वप्नकारणं चरामसि आचरामः कुर्मः तस्मादभिद्रोहादस्मात् रक्षतमिति शेषः । अपि च आङ्गिरसः अङ्गिरोभिः स्तोतृभिः सबान्धवः[1] प्रचेताः प्रकृष्टज्ञानो वरुणश्च द्विषतां द्वेष्टॄणाम् अंहसः तत्कर्तृकादस्मद्विषयात्पापात् नः अस्मान् पातु रक्षतु । यद्वा । विभक्तिव्यत्ययः । आङ्गिरसमङ्गिरोगोत्रं प्रचेतसमृषिं नः । वचनव्यत्ययः । मां द्विषतामंहसः पातु । प्रकृतत्वादिन्द्र इति गम्यते ॥

अजैष्माद्यासनाम चाभूमानागसो वयम् ।
जाग्रत्स्वप्नः संकल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥५॥

अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयम् ।

जाग्रत्ऽस्वप्नः । सम्ऽकल्पः । पापः । यम् । द्विष्मः । तम् । सः । ऋच्छतु ।

यः । नः । द्वेष्टि । तम् । ऋच्छतु ॥ ५ ॥

अद्य अस्मिन् काले अजैष्म । जेतव्यानि सर्वाणि जितवन्तोऽभूम दुःस्वप्नस्य नष्टत्वात् । तदनन्तरम् असनाम च संभक्तव्यानि च समभजाम । तथा वयम् अनागसः अनपराधाश्च अभूम । जाग्रत्स्वप्नावस्थयोः संबन्धी पापः पापफलरूपः सः संकल्पः दुःस्वप्नाध्यवसायः यं शत्रुं वयं द्विष्मः तम् ऋच्छतु प्राप्नोतु । यः च नः अस्मान् द्वेष्टि तमृच्छतु प्राप्नोतु ॥॥२२॥

'देवाः' इति पञ्चर्चं चतुर्दशं सूक्तं निर्ऋतिपुत्रस्य कपोताख्यस्यार्षं त्रैष्टुभं वैश्वदेवम् । तथा चानुक्रान्तं—'देवा नैर्ऋतः कपोतः कपोतोपहतौ प्रायश्चित्तं[2] वैश्वदेवम्' इति । कपोतो यदि गृहं प्रविशेत् तदानेन सूक्तेन होतव्यम् । सूत्र्यते हि—'कपोतश्चेदगारमुपहन्यादनुपतेद्वा देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा' (आश्व. गृ. ३. ७. ७) इति ॥

देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥१॥

देवाः । कपोतः । इषितः । यत् । इच्छन् । दूतः । निःऽऋत्याः । इदम् । आऽजगाम ।

तस्मै । अर्चाम । कृणवाम । निःऽकृतिम् । शम् । नः । अस्तु । द्विऽपदे । शम् । चतुःऽपदे ॥ १ ॥

हे देवाः इषितः प्राप्तः निर्ऋत्याः पापदेवतायाः दूतः अनुचरः कपोतः यत् बाधनम् इच्छन् अभिलषन् इदम् अस्मदीयं गृहम् आजगाम प्राप्नोत् तस्मै बाधनाय तद्बाधननिवृत्त्यर्थम् अर्चाम । युष्मान् हविषा पूजयाम । ततः निष्कृतिं कपोतप्रवेशजन्यस्य दोषस्य परिहृतिं कृणवाम । अनेन हविर्दानेन करवाम । अतः नः अस्माकं द्विपदे पुत्राय[3] शं सुखम् अस्तु चतुष्पदे गवाश्वप्रभृतये च शं सुखमस्तु ॥

---

१. त१.२.३.७-भ१.२.४.८-संबंधः; भ७-संबंधवः । २. अनु.-प्रायश्चित्तमिदं । ३. ग-त४.५-पुत्रादये ।

शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहेषु ।
अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ॥ २ ॥

शिवः । कपोतः । इषितः । नः । अस्तु । अनागाः । देवाः । शकुनः । गृहेषु ।
अग्निः । हि । विप्रः । जुषताम् । हविः । नः । परि । हेतिः । पक्षिणी । नः । वृणक्तु ॥ २ ॥

हे देवाः नः अस्माकं गृहेषु इषितः गतः कपोताख्यः शकुनः पक्षी शिवः सुखकरः अनागाः अपापहेतुश्च अस्तु । हि यस्मात् विप्रः मेधावी अग्निः नः अस्माकं हविः युष्मभ्यं परिकल्पितं जुषतां जुषते अतो युष्मत्प्रसादात् पक्षिणी पक्षोपेता हेतिः हननहेतुः कपोतः नः अस्मान् परि वृणक्तु अस्मान् परित्यजतु । मा बाधतामित्यर्थः ॥

हेतिः पक्षिणी न दभात्यस्मानाष्ट्र्यां पदं कृणुते अग्निधाने ।
शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु मा नो हिंसीदिह देवाः कपोतः ॥ ३ ॥

हेतिः । पक्षिणी । न । दभाति । अस्मान् । आष्ट्र्याम् । पदम् । कृणुते । अग्निऽधाने ।
शम् । नः । गोभ्यः । च । पुरुषेभ्यः । च । अस्तु ।
मा । नः । हिंसीत् । इह । देवाः । कपोतः ॥ ३ ॥

पक्षिणी पक्षोपेता हेतिः हननहेतुः कपोतः अस्मान् न दभाति न हिनस्तु । आष्ट्र्यां व्याप्तायामरण्यान्याम् अग्निधाने अग्निर्निधीयतेऽस्मिन्नित्यग्निसहिते प्रदेशे पदं स्थानं कृणुते करोति । तत्रैव प्रदेशे निवसत्वित्यर्थः । यद्वा[1] । अश्नन्त्यस्मिन्नित्याष्ट्री पचनशाला । तस्याम् । अग्निधाने यत्र पचनाग्निर्निधीयते तस्मिन् प्रदेशे पदं पादनिधानं[2] कृणुते करोति । तद्धेतुको बाधो नोऽस्माकं न भवत्वित्यर्थः । अपि च नः अस्माकं गोभ्यश्च पुरुषेभ्यश्च शं सुखं शंसनीयानां दोषाणां शान्तिर्वा अस्तु भवतु । हे देवाः इह अस्मिन् गृहे कपोतः नः अस्मान् मा हिंसीत् । युष्मदनुग्रहात् मा बाधताम् ॥

यदुलूको वदति मोघमेतद्यत्कपोतः पदमग्नौ कृणोति ।
यस्य दूतः प्रहित एष एतत्तस्मै यमाय नमो अस्तु मृत्यवे ॥ ४ ॥

यत् । उलूकः । वदति । मोघम् । एतत् । यत् । कपोतः । पदम् । अग्नौ । कृणोति ।
यस्य । दूतः । प्रऽहितः । एषः । एतत् । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥ ४ ॥

उलूकः घूकसंज्ञः पक्षी यत् अशोभनं वदति ब्रवीति आत्मीयेन शब्देन सूचयति एतत् मोघं निष्फलमस्तु । कपोतः च अग्नौ अग्निमति गृहमध्ये यत् पदं कृणोति करोति एतदपि मोघं निर्वीर्यमस्तु । प्रहितः प्रेषितः एषः कपोतः यस्य स्वामिनः दूतः अनुचरो भवति तस्मै[3] नाम[4] मृत्यवे मारयित्रे यमाय[5] एतत्[6] नमः प्रणामः अस्तु भवतु ॥

---

१. त-भ-' यद्वा ' नास्ति । २. त-भ-पदा निधानं । ३. त-भ-तस्य । ४. ग२-यमाय । ५. ग-त४. ५-' यमाय ' नास्ति । ६. त१.२.३.६.७.८-भ-एतन्नामकाय; त४.५-एवं ।

ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परि गां नयध्वम् ।
संयोपयन्तो दुरितानि विश्वा हित्वा न ऊर्जं प्र पतात्पतिष्ठः ॥ ५ ॥

ऋचा । कपोतम् । नुदत । प्रऽनोदम् । इषम् । मदन्तः । परि । गाम् । नयध्वम् ।
सम्ऽयोपयन्तः । दुःऽइतानि । विश्वा । हित्वा । नः । ऊर्जम् । प्र । पतात् । पतिष्ठः ॥५॥

हे देवाः ᵛऋचा मन्त्रेण स्तूयमानाः सन्तो यूयं ᵛप्रणोदं प्रकर्षेण नोदनीयं बहिष्कर्तव्यं ᵛकपोतं पक्षिणं ᵛनुदत अस्माद्गृहात् प्रेरयत निर्गमयत । तथा ᵛमदन्तः अस्माभिर्दत्तैर्हविर्भिर्माद्यन्तः ᵛइषम् अन्नं ᵛगां च ᵛपरि ᵛणयध्वं परितोऽस्मभ्यं प्रापयत । किं कुर्वन्तः । ᵛविश्वा विश्वानि सर्वाणि ᵛदुरितानि कपोतोपहतिजन्यानि दोषजातानि ᵛसंयोपयन्तः अदृश्यानि कुर्वन्तः । अपि च ᵛपतिष्ठः अतिशयेन पतिता शीघ्रोत्पातकः[1] कपोतः ᵛनः अस्माकम् ᵛऊर्जम् अन्नं ᵛहित्वा परित्यज्य ᵛप्र ᵛपतात् प्रकर्षेण पततु । पक्षाभ्यामुत्पततु ॥ ॥२३॥

'ऋषभम्' इति पञ्चर्चं पञ्चदशं सूक्तं वैराजस्य शाक्करस्य वर्षभाख्यस्यार्षं पञ्चमी षडष्टका महापङ्क्तिः[2] । सपत्ननाशनरूपोऽर्थो देवता । तथा चानुक्रान्तम्—'ऋषभमृषभो वैराजः शाक्करो वा सपत्नघ्नमानुष्टुभं महापङ्क्त्यन्तम्' इति । प्रयाणसमये ‾ ‾ ‾ जपेत् । सूत्रितं च—'ऋषभं मा समानानामित्यभिक्रामन्' ( आश्व. गृ. २. ६. १३ ) इति ॥

ऋषभं मा समानानां सपत्नानां विषासहिम् ।
हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥ १ ॥

ऋषभम् । मा । समानानाम् । सऽपत्नानाम् । विऽससहिम् ।
हन्तारम् । शत्रूणाम् । कृधि । विऽराजम् । गोऽपतिम् । गवाम् ॥ १ ॥

हे सपत्ननाशनाभिमानिन्निन्द्र[3] ᵛमा मां ᵛसमानानां सदृशानामस्मत्कुलीनानां मध्ये ᵛऋषभम् ऋषभवत्प्रशस्तं ᵛकृधि कुरु । तथा ᵛसपत्नानां शत्रूणां ᵛविषासहिं विशेषेणाभिभवितारं कुरु । येऽस्मत्कुल एव जाता अस्माकमेवानिष्टमाचरन्ति ते सपत्नाः । अपि च ᵛशत्रूणाम् अन्येषामपि शातयितॄणां वैरिणां ᵛहन्तारं[4] हिंसितारं ᵛकृधि कुरु । तथा ᵛविराजं विशेषेण राजमानं ᵛगोपतिं गोस्वामिनं च मां कुरु । न केवलमेकस्या एव गोः पतिम् अपि तु सर्वासामित्याह ᵛगवाम् इति ॥

अहमस्मि सपत्नहेन्द्रइवारिष्टो अक्षतः ।
अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ॥ २ ॥

अहम् । अस्मि । सपत्नऽहा । इन्द्रःऽइव । अरिष्टः । अक्षतः ।
अधः । सऽपत्नाः । मे । पदोः । इमे । सर्वे । अभिऽस्थिताः ॥ २ ॥

१. त-भ२.४.८–शीघ्रोत्पादनः; भ१–शीघ्रोत्पादकः । २. भ७–महापंक्तिः । शिष्टा अनुष्टुभः । ३. त१.२.३.६.७.८-भ१.४.७.८–सपत्नाभिमानिन्निंद्र । ४. ग-त१.२.३.६.७.८-भ४.५–हंतारं मां; भ२.८–हंतारं मा ।

ᵛअहं ᵛसपत्नहा सपत्नानां शत्रूणां हन्ता ᵛअस्मि भवामि। ᵛइन्द्रइव इन्द्रो यथा केनाप्यहिंसितो भवति तथाहमपि ᵛअरिष्टः अहिंसितः ᵛअक्षतः अव्रणश्च भवामि। ᵛइमे दृश्यमानाः ᵛसर्वे ᵛसपत्नाः ᵛमे मम ᵛपदोः पादयोः ᵛअधः अधस्तात् ᵛअभिष्ठिताः आक्रान्ता भवन्तु ॥

अत्रैव वोऽपि नह्याम्युभे आर्त्नीइव ज्यया।
वाचस्पते नि षेधेमान्यथा मदधरं वदान् ॥ ३ ॥

अत्र। एव। वः। अपि। नह्यामि। उभे इति। आर्त्नी इवेत्यार्त्नीऽइव। ज्यया।
वाचः। पते। नि। सेध। इमान्। यथा। मत्। अधरम्। वदान् ॥ ३ ॥

हे सपत्नाः यत्र देशे यूयं निवसथ ᵛअत्रैव अस्मिन्नेव देशे ᵛवः युष्मान् ᵛअपि ᵛनह्यामि अपिनद्धान् पाशैर्बद्धान् करोमि ᵛज्यया मौर्व्या ᵛउभे ᵛआर्त्नीइव। यथा द्वे धनुषः कोटी दृढं बध्येते तथेत्यर्थः। हे ᵛवाचस्पते वाचः शब्दस्य पालयितर्देव ᵛइमान् सपत्नान् ᵛनि ᵛषेध प्रतिषेध। ᵛयथा येन प्रकारेण ᵛमत् मत्तः ᵛअधरं निकृष्टतरं ᵛवदान् वदन्ति तथा निरुद्धवाचः कुर्वित्यर्थः ॥

अभिभूरहमागमं विश्वकर्मेण धाम्ना।
आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥ ४ ॥

अभिऽभूः। अहम्। आ। अगमम्। विश्वऽकर्मेण। धाम्ना।
आ। वः। चित्तम्। आ। वः। व्रतम्। आ। वः। अहम्। सम्ऽइतिम्। ददे ॥ ४ ॥

हे सपत्नाः ᵛअभिभूः अभिभविता ᵛअहं ᵛविश्वकर्मेण सर्वकर्मक्षमेण ᵛधाम्ना धारकेण तेजसा बलेन वा सार्धम् ᵛआगमम् आगतवानस्मि। अतः ᵛवः युष्माकं ᵛचित्तं मनः ᵛआ ᵛददे गृह्णामि। मनोगतं धैर्यं हरामीत्यर्थः। ᵛवः युष्माकं ᵛव्रतं कर्म चाहम् ᵛआ ददे। ᵛवः युष्मदीयः यः समितिः संग्रामः तं च ᵛअहम् ᵛआ ददे अपहरामि ॥

योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम्।
अधस्पदान्म उद्वदत मण्डूकाइवोदकान्मण्डूका उदकादिव ॥ ५ ॥

योगऽक्षेमम्। वः। आऽदाय। अहम्। भूयासम्। उत्ऽतमः। आ। वः। मूर्धानम्। अक्रमीम्।
अधःऽपदात्। मे। उत्। वदत। मण्डूकाःऽइव। उदकात्। मण्डूकाः। उदकात्ऽइव ॥५॥

हे सपत्नाः ᵛवः युष्माकं ᵛयोगक्षेमम्। अप्राप्तस्य धनस्य[1] प्राप्तिर्योगः। प्राप्तस्य रक्षणं क्षेमः। तदुभयम् ᵛआदाय युष्मत्तो गृहीत्वा ᵛअहम् ᵛउत्तमः श्रेष्ठः ᵛभूयासम्। ततः ᵛवः युष्माकं ᵛमूर्धानं शिरः ᵛआ ᵛअक्रमीम् आक्रमिषम्। पादेनाधितिष्ठामि ॥ क्रमेर्लुङि अमो मश् (पा. सू. ७.१.४०)। 'इट ईटि' (पा. सू. ८. २. २८) इति सिचो लोपः ॥ अनन्तरं ᵛमे मम ᵛअधस्पदात् पादस्याधस्ताद्वर्तमाना यूयम् ᵛउद्वदत उच्चैराक्रोशत। ᵛउदकात् वृष्टाजलादधःप्रदेशे वर्तमानाः ᵛमण्डूकाइव। यथा ते भृशमाक्रोशन्ति तथोद्वदतेत्यर्थः। ᵛमण्डूका ᵛउदकादिव इति पुनरुक्तिरादरार्था ॥ ॥२४॥

१. त१.२.३.६.७.८-भ२.४.५-'धनस्य' नास्ति।

'तुभ्येदम्' इति चतुर्ऋचं षोडशं सूक्तं विश्वामित्रजमदग्न्योरार्षं जागतमैन्द्रम्। 'सोमस्य राज्ञः' इत्येषा तृतीया वरुणविधात्रनुमतिधातृसोमबृहस्पतीतिलिङ्गोक्तदेवताका। तथा चानुक्रान्तं— 'तुभ्येदं चतुष्कं विश्वामित्रजमदग्नी जागतं तृतीया लिङ्गोक्तदेवता वा[1]' इति। पक्षे इन्द्र एव देवता अन्ये तु निपातभाज इति वाशब्दस्यार्थः। गतो विनियोगः॥

**तुभ्येदमिन्द्र परि षिच्यते मधु त्वं सुतस्य कलशस्य राजसि।**
**त्वं रयिं पुरुवीरामु नस्कृधि त्वं तपः परितप्याजयः स्वः॥ १॥**

तुभ्य। इदम्। इन्द्र। परि। सिच्यते। मधु। त्वम्। सुतस्य। कलशस्य। राजसि।
त्वम्। रयिम्। पुरुऽवीराम्। ऊँ इति। नः। कृधि।
त्वम्। तपः। परिऽतप्य। अजयः। स्व१रिति स्वः॥ १॥

हे ᵛइन्द्र ᵛइदं ᵛमधु सोमलक्षणं तुभ्यं त्वदर्थं ᵛपरि ᵛषिच्यते आहवनीये प्रक्षिप्यते। ᵛत्वम् एव ᵛसुतस्य अभिषुतस्य ᵛकलशस्य द्रोणकलशावस्थितस्य सोमस्य ᵛराजसि ईशिषे। राजतिरैश्वर्यकर्मा। सः ᵛत्वं ᵛनः अस्माकं ᵛपुरुवीरां बहुपुत्रं[2] ᵛरयिं धनं ᵛकृधि कुरु। उशब्दः पूरकः। यद्वा अवधारणे। बहुपुत्रोपेतमेव धनं कुरु न केवलमित्यर्थः। तथा ᵛत्वं ᵛतपः शतसंख्याश्वमेधलक्षणं ᵛपरितप्य अनुष्ठाय ᵛस्वः स्वर्गम् ᵛअजयः जितवानसि॥

**स्वर्जितं महि मन्दानमन्धसो हवामहे परि शक्रं सुताँ उप।**
**इमं नो यज्ञमिह बोध्या गहि स्पृधो जयन्तं मघवानमीमहे॥ २॥**

स्वःऽजितम्। महि। मन्दानम्। अन्धसः। हवामहे। परि। शक्रम्। सुतान्। उप।
इमम्। नः। यज्ञम्। इह। बोधि। आ। गहि। स्पृधः। जयन्तम्। मघऽवानम्। ईमहे॥ २॥

ᵛस्वर्जितम् उक्तप्रकारेण स्वर्गस्य जेतारं ᵛमहि महान्तम् ᵛअन्धसः अन्नस्य सोमस्य पानेन ᵛमन्दानं मोदमानं हृष्यन्तं ᵛशक्रं सर्वकार्येषु शक्तमिन्द्रं ᵛसुतानुप अभिषुतान् सोमान् प्रति ᵛपरि ᵛहवामहे। परित आह्वयामहे। हे इन्द्र इत्थमाहूयमानस्त्वं ᵛनः अस्माकम् ᵛइमं ᵛयज्ञम् ᵛइह अस्मिन् देशे ᵛबोधि बुध्यस्व। बुद्ध्वा च ᵛआ ᵛगहि आगच्छ। ᵛस्पृधः स्पर्धमानाः शत्रुसेनाः ᵛजयन्तम् अभिभवन्तं ᵛमघवानं धनवन्तं त्वाम् ᵛईमहे। अपेक्षितानि धनानि याचामहे॥

**सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि।**
**तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम्॥ ३॥**

सोमस्य। राज्ञः। वरुणस्य। धर्मणि। बृहस्पतेः। अनुऽमत्याः। ऊँ इति। शर्मणि।
तव। अहम्। अद्य। मघऽवन्। उपऽस्तुतौ।
धातः। विधातरिति विऽधातः। कलशान्। अभक्षयम्॥ ३॥

ᵛराज्ञः राजमानस्य ᵛसोमस्य ᵛवरुणस्य च[2] संबन्धिनि[3] ᵛधर्मणि[4] धारके यज्ञे वर्तमानस्तथा ᵛबृहस्पतेरनुमत्याः संबन्धिनि ᵛशर्मणि शरणे यज्ञगृहे वर्तमानः ᵛअहं हे ᵛमघवन् इन्द्र ᵛतव ᵛउप-

---

१. अनु.-'वा' नास्ति। २. त-भ-मु-बहुपुत्रां। ३. त१.२.३.६.७.८-भ-मु-तत्संबंधिनि। ४. त१.२.३.६.७.८-भ१.४.५. ८-मु-कर्मणि।

स्तुतौ स्तोत्रे अद्य इदानीं प्रवृत्तोऽस्मि । हे धातः हे एतत्संज्ञक देव हे विधातः एतत्संज्ञक देव युवाभ्यामनुज्ञातः कलशान् कलशस्थान् हुतशिष्टान् सोमान् अभक्षयं भक्षितवानस्मि ॥

**प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे ।**
**सुते सातेन यद्यागमं वां प्रति विश्वामित्रजमदग्नी दमे ॥ ४ ॥**

प्रऽसूतः । भक्षम् । अकरम् । चरौ । अपि । स्तोमम् । च । इमम् । प्रथमः । सूरिः । उत् । मृजे ।
सुते । सातेन । यदि । आ । अगमम् । वाम् । प्रति । विश्वामित्रजमदग्नी इति । दमे ॥ ४ ॥

हे इन्द्र प्रसूतः त्वया प्रेरितोऽहं चरौ चरणीये चरुणा वा युक्ते यज्ञे भक्षम् अपि भक्षणीयं चर्वादि हविश्च अकरं त्वदर्थमकार्षम् । प्रथमः मुख्यः सूरिः स्तोताहम् इमं स्तोमं स्तोत्रं च त्वदर्थम् उन्मृजे उन्मार्ज्मि संस्करोमि । उच्चारयामीत्यर्थः । इदानीमिन्द्रः अन्तरात्मरूपः सन् सूक्तस्य द्रष्टारावृषी संबोध्य ब्रूते । हे विश्वामित्रजमदग्नी वां युवां प्रति दमे यज्ञगृहे सुते अभिषुते सोमे सति सातेन संभक्तव्येन धनेन सार्धं यदि यदा यस्मिन् काले अहम् आगमम् आगच्छामि तदा युवां स्तोत्रं कुरुतमित्यर्थः ॥ ॥ २५ ॥

'वातस्य' इति चतुर्ऋचं सप्तदशं सूक्तं वातगोत्रस्यानिलाख्यस्यार्षं त्रैष्टुभं वायुदेवताकम् । तथा चानुक्रान्तं—'वातस्यानिलो वातायनो वायव्यम्' इति । गतो विनियोगः ॥

**वातस्य नु महिमानं रथस्य रुजन्नेति स्तनयन्नस्य घोषः ।**
**दिविस्पृग्यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणुमस्यन् ॥ १ ॥**

वातस्य । नु । महिमानम् । रथस्य । रुजन् । एति । स्तनयन् । अस्य । घोषः ।
दिविऽस्पृक् । याति । अरुणानि । कृण्वन् । उतो इति । एति । पृथिव्या । रेणुम् । अस्यन् ॥ १ ॥

वातस्य वायोः रथस्य रंहणशीलस्य महिमानं माहात्म्यं नु क्षिप्रं प्रब्रवीमि । अस्य वायोः घोषः शब्दः स्तनयन् गिरिगह्वरादिषु त्रिविधं शब्दमुत्पादयन् रुजन् सर्वं स्थावरजङ्गमजातं भञ्जन् एति गच्छति । स च वायुः दिविस्पृक् दिवमाकाशं स्पृशन् व्याप्नुवन् अरुणानि अरुणवर्णानि विकृतरूपाणि दिगन्तराणि कृण्वन् कुर्वन् याति प्राप्नोति । उतो अपि च पृथिव्या भूमेः रेणुं पांसुम् अस्यन् गृहीत्वा सर्वत्र विक्षिपन् एति गच्छति । अत एव अरुणानि कृण्वन् इत्युक्तम् ॥

**सं प्रेरते अनु वातस्य विष्ठा ऐनं गच्छन्ति समनं न योषाः ।**
**ताभिः सयुक्सरथं देव ईयतेऽस्य विश्वस्य भुवनस्य राजा ॥ २ ॥**

सम् । प्र । ईरते । अनु । वातस्य । विऽस्थाः । आ । एनम् । गच्छन्ति । समनम् । न । योषाः ।
ताभिः । सऽयुक् । सऽरथम् । देवः । ईयते । अस्य । विश्वस्य । भुवनस्य । राजा ॥ २ ॥

विष्ठाः विशेषेणावस्थिताः पर्वताद्याः वातस्य वायोरनुगुणं सं प्रेरते संप्रगच्छन्ति । यदभिमुखो वायुर्वर्तते तदभिमुखाः प्रकम्पन्त इत्यर्थः । समनं न संग्राममिव एनं वायुं योषाः अश्वयोषितो वडवाः आ गच्छन्ति । ताभिः वडवाभिः सयुक् स्वयमेव युज्यमानं सरथं समान-

मेकं रथमारुह्य ᵛदेवः दीप्यमानः वायुः ᵛईयते गच्छति । ‘ईङ् गतौ’। ᵛअस्य ᵛविश्वस्य सर्वस्य ᵛभुवनस्य द्वितीयविकारभाजो भूतजातस्य ᵛराजा स्वामी भवति । यद्वा। समनं हृष्टं पुरुषं योषाः कामिन्य इव एवं वायुं तरुगुल्मादिरूपाः स्त्रियोऽभिगच्छन्ति । ताभिः सरथं सहरथं देव ईयत इति ॥

अन्तरिक्षे पथिभिरीयमानो न नि विशते कतमच्चनाहः ।
अपां सखा प्रथमजा ऋतावा क्व स्विज्जातः कुत आ बभूव ॥ ३ ॥

अन्तरिक्षे । पथिऽभिः । ईयमानः । न । नि । विशते । कतमत् । चन । अहः । इति ।
अपाम् । सखा । प्रथमऽजाः । ऋतऽवा । क्व । स्वित् । जातः । कुतः । आ । बभूव ॥ ३ ॥

ᵛअन्तरिक्षे नभसि विद्यमानैः ᵛपथिभिः मार्गैः ᵛईयमानः गच्छन् वायुः ᵛकतमच्चनाहः एकमपि दिनं ᵛन ᵛनि ᵛविशते नोपविशति । किंतु सर्वदैव गच्छति । ‘नेर्विशः’ ( पा. सू. १.३.१७ ) इत्यात्मनेपदम् । अपि च ᵛअपाम् उदकानां ᵛसखा । ‘वायुर्वै वृष्ट्या ईशे[1]’ ( तै. सं. २.४.९.१ ) इति श्रुतेः । ᵛप्रथमजाः सर्वेभ्यः प्राणिभ्यः पूर्वोत्पन्न एव ᵛऋतावा सत्यवान् यज्ञवान् वा एवंभूतो वायुः ᵛक्व ᵛस्वित् कुत्र खलु देशे ᵛजातः उत्पन्नः ᵛकुतः कस्माच्च देशान्निष्क्रम्य ᵛआ ᵛबभूव इदं सर्वं जगद्व्याप्नोत् । सर्वदा सर्वत्र वर्तमानत्वादस्योत्पत्तिर्व्याप्तिप्रकारश्च न केनापि ज्ञातुं शक्यत इत्यर्थः ॥

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः ।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥ ४ ॥

आत्मा । देवानाम् । भुवनस्य । गर्भः । यथाऽवशम् । चरति । देवः । एषः ।
घोषाः । इत् । अस्य । शृण्विरे । न । रूपम् । तस्मै । वाताय । हविषा । विधेम ॥ ४ ॥

अयं वायुः ᵛदेवानाम् इन्द्रादीनामपि ᵛआत्मा जीवरूपेण तेष्ववस्थानात् ᵛभुवनस्य अपि भूतजातस्य ᵛगर्भः गर्भवत्प्राणरूपेणान्तर्वर्तमानः ᵛएषः ईदृशः ᵛदेवः ᵛयथावशं यथाकामं यथेच्छं ᵛचरति वर्तते । अनिवारितगतिः सन् क्वचिच्छीघ्रं गच्छति क्वचिच्छनैर्गच्छति कुतश्चिच्छरीरान्निष्क्रामति अन्यच्च शरीरं प्रविशतीत्येवं यथेच्छं वर्तत इत्यर्थः । ᵛअस्य वायोरागच्छतः ᵛघोषा ᵛइत् शब्दा एव ᵛशृण्विरे श्रूयन्ते । ᵛरूपं स्वरूपं तु ᵛन दृश्यते नीरूपत्वात् । अदृग्विषयत्वेन शब्देनैवानुमीयत इत्यर्थः । ᵛतस्मै ᵛवाताय वायवे ᵛहविषा चरुपुरोडाशादिलक्षणेन ᵛविधेम परिचरेम ॥ ॥ २६ ॥

‘मयोभूः’ इति चतुर्ऋचमष्टादशं सूक्तं कक्षीवद्गोत्रस्य शबरस्यार्षं त्रैष्टुभं गोदेवत्यम् । अनुक्रान्तं च—‘मयोभूः शबरः काक्षीवतो गव्यम्’ इति । घासाय वनं प्रतिष्ठमाना गा आदितो द्वाभ्यामभिमन्त्रणीयाः । सूत्रितं च—‘गाः प्रतिष्ठमाना अनुमन्त्रयेत मयोभूर्वातो अभि वातूस्रा इति द्वाभ्याम्’ ( आश्व. गृ. २. १०. ५ ) इति ॥

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् ।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृळ ॥ १ ॥

मयःऽभूः । वातः । अभि । वातु । उस्राः । ऊर्जस्वतीः । ओषधीः । आ । रिशन्ताम् ।
पीवस्वतीः । जीवऽधन्याः । पिबन्तु । अवसाय । पत्ऽवते । रुद्र । मृळ ॥ १ ॥

---

१. त१.२.३.६.७.८-म१.४.८–ईशते ।

ᐯवातः वायुः ᐯमयोभूः सुखस्य भावयिता सन् ᐯउस्राः गाः ᐯअभि ᐯवातु अभिगच्छतु। ताश्च गावः ᐯऊर्जस्वतीः रसवतीः ᐯओषधीः बलवन्ति[1] तृणानि ᐯआ ᐯरिशन्ताम् अभितः स्वादयन्तु। तथा ᐯपीवस्वतीः प्रवृद्धाः ᐯजीवधन्याः जीवानां प्रीणयित्रीरपश्च ᐯपिबन्तु। हे ᐯरुद्र ज्वरादिरोगस्य प्रेक्षणेन संहर्तर्देव ᐯपद्वते पादयुक्ताय ᐯअवसाय अन्नाय गोरूपाय ᐯमृळ उपदयां कुरु। मा बाधस्वेत्यर्थः ॥

याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद ।
या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥ २ ॥

याः । सऽरूपाः । विऽरूपाः । एकऽरूपाः । यासाम् । अग्निः । इष्ट्या । नामानि । वेद ।
याः । अङ्गिरसः । तपसा । इह । चक्रुः । ताभ्यः । पर्जन्य । महि । शर्म । यच्छ ॥ २ ॥

ᐯयाः गावः ᐯसरूपाः समानरूपा याश्च ᐯविरूपाः विभिन्नरूपा याश्च[2] ᐯएकरूपाः एकेनैव वर्णेनोपेताः[2] ᐯयासां च गवां ᐯनामानि इडे रन्तेऽदित इत्यादीनि ᐯइष्ट्या यागेन हेतुना ᐯअग्निः ᐯवेद जानाति ᐯयाः च गाः ᐯअङ्गिरसः ऋषयः ᐯतपसा पशुप्राप्तिसाधनेन चित्रायागादिलक्षणेन ᐯइह अस्मिँल्लोके ᐯचक्रुः कृतवन्तः ᐯताभ्यः सर्वाभ्यो गोभ्यो हे ᐯपर्जन्य ᐯमहि महत् ᐯशर्म सुखं ᐯयच्छ प्रदेहि ॥

'या देवेषु' इति द्वाभ्यां सायं गृहमागच्छन्तीर्गा अनुमन्त्रयेत[3]। सूत्र्यते हि—'या देवेषु तन्वमैरयन्तेति च सूक्तशेषम्। आगावीयमेके' ( आश्व. गृ. २. १०. ६-७ ) इति ॥

या देवेषु तन्व१मैरयन्त यासां सोमो विश्वा रूपाणि वेद ।
ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि ॥ ३ ॥

याः । देवेषु । तन्वम् । ऐरयन्त । यासाम् । सोमः । विश्वा । रूपाणि । वेद ।
ताः । अस्मभ्यम् । पयसा । पिन्वमानाः । प्रजाऽवतीः । इन्द्र । गोऽस्थे । रिरीहि ॥ ३ ॥

ᐯयाः गावः ᐯदेवेषु यष्टव्येषु ᐯतन्वम् आत्मीयं शरीरम् ᐯऐरयन्त हवीरूपेण प्रेरयन्ति ᐯयासां च गवां ᐯविश्वा सर्वाणि ᐯरूपाणि रूप्यमाणानि क्षीरादीनि श्रयणद्रव्याणि ᐯसोमः ᐯवेद जानाति ᐯअस्मभ्यम् अस्मदर्थं ᐯपयसा क्षीरेण ᐯपिन्वमानाः वर्धमाना अत एव ᐯप्रजावतीः प्रजाभिर्वत्सैरुपेताः ᐯताः गाः हे ᐯइन्द्र ᐯगोष्ठे अस्मदीये[4] ᐯरिरीहि गमय ॥ 'री गतिरेषणयोः'। छान्दसो विकरणस्य श्लुः ॥

प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः ।
शिवाः सतीरुप नो गोष्ठमाकुस्तासां वयं प्रजया सं सदेम ॥ ४ ॥

प्रजाऽपतिः । मह्यम् । एताः । रराणः । विश्वैः । देवैः । पितृऽभिः । सम्ऽविदानः ।
शिवाः । सतीः । उप । नः । गोऽस्थम् । आ । अकरित्यकः ।
तासाम् । वयम् । प्रऽजया । सम् । सदेम ॥ ४ ॥

१. त-भ-'बलवन्ति' नास्ति। २. त१.२.३.६.७.८-भ-एकेनैव रूपेणोपेताः; त४.५-अनेकरूपेणोपेताः। ३. त१.२.३.६.७.८-भ-मु-अनुमंत्रयितव्याः; त४.५-अनुमंत्रयीत। ४. त४.५-भ२-अस्मदीये व्रजे।

ᵛप्रजापतिः विधाता ᵛमह्यं स्तोत्रे ᵛएताः गाः ᵛरराणः प्रयच्छन् ॥ रातेर्व्यत्ययेन शानच्। छान्दसः शपः श्लुः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ ᵛविश्वैः सर्वैः ᵛदेवैः ᵛपितृभिः च ᵛसंविदानः ऐकमत्यं गतः सन् ᵛशिवाः ᵛसतीः कल्याणीर्भवन्तीर्गाः ᵛनः अस्माकं ᵛगोष्ठं व्रजम् ᵛउप गोष्ठसमीपे ᵛअकः करोतु। ᵛतासां गवां ᵛप्रजया संतानेन ᵛवयं ᵛसं ᵛसदेम संगच्छेमहि ॥ सदेराशिषि लिङि लिङ्याशिष्यङ् ॥ ॥ २७ ॥

'विभ्राट्' इति चतुर्ऋचमेकोनविंशं सूक्तं सूर्यपुत्रस्य विभ्राट्संज्ञकस्यार्षं सूर्यदेवत्यम्। आदौ तिस्रो जगत्यः। द्व्यष्टकद्विद्वादशकवत्यास्तारपङ्क्तिश्चतुर्थी। तथा चानुक्रान्तं—'विभ्राड्विभ्राट् सौर्यः सौर्यं जागतमास्तारपङ्क्त्यन्तम्' इति। विषुवति निष्केवल्य आद्यस्तृचः स्तोत्रियः। सूत्रितं च—'विभ्राड्बृहत्पिबतु सोम्यं मधु नमो मित्रस्य वरुणस्य चक्षस इति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ८. ६) इति। वाजपेयेऽतिरिक्तोक्थस्य विभ्राडित्येषा शस्त्रे याज्या। सूत्र्यते हि—'विभ्राड्बृहत्पिबतु सोम्यं मध्विति याज्या तस्य गवां शतानाम्' (आश्व. श्रौ. ९. ९) इति ॥

विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥ १ ॥

विऽभ्राट् । बृहत् । पिबतु । सोम्यम् । मधु । आयुः । दधत् । यज्ञऽपतौ । अविऽहुतम् ।
वातऽजूतः । यः । अभिऽरक्षति । त्मना । प्रऽजाः । पुपोष । पुरुधा । वि । राजति ॥ १ ॥

ᵛविभ्राट् विभ्राजमानो विशेषेण दीप्यमानः सूर्यः ᵛबृहत् महत्[1] परिवृढं ᵛसोम्यं सोममयं ᵛमधु ᵛपिबतु। किं कुर्वन्। ᵛयज्ञपतौ यजमाने ᵛअविहुतम् अकुटिलम् ᵛआयुः ᵛदधत् कुर्वन्। ᵛयः सूर्यः ᵛवातजूतः वातेन महावायुना प्रेर्यमाणः सन् ᵛत्मना आत्मना स्वयमेव ᵛअभिरक्षति सर्वं जगदभिपश्यन् पालयति। राशिचक्रस्य वायुप्रेर्यत्वात् सूर्यस्यापि तत्प्रेर्यत्वम्। स सूर्यः ᵛप्रजाः ᵛपुपोष वृष्ट्यादिप्रदानेन पोषयति ᵛपुरुधा बहुधा ᵛवि ᵛराजति विशेषेण दीप्यते च ॥

विभ्राड् बृहत्सुभृतं वाजसातमं धर्मन्दिवो धरुणे सत्यमर्पितम् ।
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ २ ॥

विऽभ्राट् । बृहत् । सुऽभृतम् । वाजऽसातमम् । धर्मन् । दिवः । धरुणे । सत्यम् । अर्पितम् ।
अमित्रऽहा । वृत्रऽहा । दस्युहन्ऽतमम् । ज्योतिः । जज्ञे । असुरऽहा । सपत्नऽहा ॥ २ ॥

ᵛविभ्राट् विभ्राजमानं ᵛबृहत् प्रौढं ᵛसुभृतं सुपुष्टं ᵛवाजसातमं वाजस्यान्नस्य बलस्य वा दातृतमं ᵛधर्मन् धर्मणि वायुना धारयितव्ये ᵛदिवः द्युलोकस्य ᵛधरुणे धारके सूर्यमण्डले ᵛअर्पितं निक्षिप्तं ᵛसत्यम् अविनश्वरम् ᵛअमित्रहा अमित्राणामप्रियाणां हन्तृ ᵛवृत्रहा वृत्राणामावृण्वतां हन्तृ ᵛदस्युहन्तमं दस्यूनामुपक्षपयितॄणां हन्तृतमम् ᵛअसुरहा असुराणां क्षेप्तॄणां घातकं ᵛसपत्नहा सपत्नानां सहजशत्रूणामपि घातकमीदृग्भूतं ᵛज्योतिः सौरं तेजः ᵛजज्ञे प्रादुर्भवति ॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥ ३ ॥

---

१. त१.२.३.६.७.८-म-'महत्' नास्ति ।

इदम् । श्रेष्ठम् । ज्योतिषाम् । ज्योतिः । उत्ऽतमम् । विश्वऽजित् । धनऽजित् । उच्यते । बृहत् ।
विश्वऽभ्राट् । भ्राजः । महि । सूर्यः । दृशे । उरु । पप्रथे । सहः । ओजः । अच्युतम् ॥३॥

इदं सौरं तेजः श्रेष्ठं प्रशस्यतमं ज्योतिषाम् अन्येषां ग्रहनक्षत्रादीनामपि ज्योतिः प्रकाशकमत एव उत्तमम् उत्कृष्टं विश्वजित् विश्वस्य सर्वस्य जेतृ धनजित् धनस्य च जेतृ बृहत् प्रभूतम् उच्यते । एवंगुणविशिष्टमिति सर्वैरभिधीयते । अपि च विश्वभ्राट् विश्वस्य प्रकाशयिता भ्राजः भ्राजमानः महि महान् सूर्यः दृशे दर्शनाय उरु विस्तीर्णं सहः तमसोऽभिभवितृ अच्युतं च्युतिरहितमविनाशम् ओजः तेजोरूपं बलं पप्रथे विस्तारयति ॥

विभ्राजञ्ज्योतिषा स्व१रगच्छो रोचनं दिवः ।
येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता ॥ ४ ॥

विऽभ्राजन् । ज्योतिषा । स्वः । अगच्छः । रोचनम् । दिवः ।
येन । इमा । विश्वा । भुवनानि । आऽभृता । विश्वऽकर्मणा । विश्वदेव्यऽवता ॥ ४ ॥

हे सूर्य ज्योतिषा तेजसा स्वः सर्वं जगत् विभ्राजन् विभ्राजयन् दिवः संबन्धि रोचनं रोचमानं स्थानम् अगच्छः प्राप्नोः । विश्वकर्मणा सर्वव्यापारहेतुना विश्वदेव्यावता । विश्वेषां देवानां हितो यागादिर्विश्वदेव्यः । तद्वता येन सौरेण तेजसा इमा इमानि परिदृश्यमानानि विश्वा सर्वाणि भुवनानि उदकानि भौमानि आभृता घर्मकाल आभृतानि भवन्ति । यद्वा । सर्वाणि भूतजातान्याभृता समन्ताद्भृतानि पोषितानि भवन्ति । तेन ज्योतिषा इत्यन्वयः ॥ ॥ २८ ॥

'त्वं त्यम्' इति चतुर्ऋचं विंशं सूक्तं भृगुपुत्रस्येटस्यार्षं गायत्रमैन्द्रम् । अनुक्रान्तं च— 'त्वं त्यमिटो भार्गवो गायत्रम्' इति । गतो विनियोगः ॥

त्वं त्यमिटतो रथमिन्द्र प्रावः सुतावतः । अशृणोः सोमिनो हवम् ॥१॥

त्वम् । त्यम् । इटतः । रथम् । इन्द्र । प्र । आवः । सुतऽवतः । अशृणोः । सोमिनः । हवम् ॥ १ ॥

हे इन्द्र सुतावतः[1] सुतेनाभिषुतेन सोमेन युक्तस्य इटतः इटस्य । 'सुपां सुलुक्' इति ङसस्तस् । एतत्संज्ञस्यर्षेः त्यं तं प्रसिद्धं रथं प्रावः प्रारक्षः । सोमिनः सोमयुक्तस्य मम हवम् आह्वानम् अशृणोः शृणु ॥

त्वं मखस्य दोधतः शिरोऽव त्वचो भरः । अगच्छः सोमिनो गृहम् ॥२॥

त्वम् । मखस्य । दोधतः । शिरः । अव । त्वचः । भरः । अगच्छः । सोमिनः । गृहम् ॥ २ ॥

हे इन्द्र त्वं मखस्य यज्ञस्य दोधतः कम्पमानस्य देवेभ्यः पलायमानस्य शिरः प्रवर्ग्यरूपं त्वचः त्वगुपलक्षिताच्छरीरात् अव भरः । अवयुत्य पृथक्कृत्य हृतवानसि । देवेभ्यो निष्क्रान्तस्य पुरुषाकारस्य धन्विनो यज्ञस्य शिर इन्द्रो वम्रिरूपेण ज्याघातनद्वारा पुरा चिच्छेद । तदभिप्रायेणेदमुक्तम् । श्रूयते हि—'तस्येन्द्रो वम्रिरूपेण धनुर्ज्यामच्छिनत्तस्य त्वेव धनुरार्त्निः शिर उत्पिपेष स प्रवर्ग्योऽभवत्' ( तै. आ. १. ५. २ ) इति । स त्वं सोमिनः सोमवतो मम गृहम् अगच्छः आगच्छ ॥

१. ग-भ७—त्वं सुतावतः ।

त्वं त्यमिन्द्र मर्त्यमास्त्रबुध्नाय वेन्यम्। मुहुः श्रथ्ना मनस्यवे ॥ ३ ॥

त्वम्। त्यम्। इन्द्र। मर्त्यम्। आस्त्रऽबुध्नाय। वेन्यम्। मुहुः। श्रथ्नाः। मनस्यवे ॥ ३ ॥

हे इन्द्र त्वं त्यं तं मर्त्यं मनुष्यं वेन्यं वेनस्य पुत्रं पृथुम् आस्त्रबुध्नाय। अस्त्रबुध्नो नाम कश्चित्। तस्य पुत्राय मनस्यवे मननीयं स्तोत्रमिच्छते मुहुः शश्वत् श्रथ्नाः अहिंसीः[1]। वशमनय[2] इत्यर्थः ॥

त्वं त्यमिन्द्र सूर्यं पश्चा सन्तं पुरस्कृधि। देवानां चित्तिरो वशम् ॥४॥

त्वम्। त्यम्। इन्द्र। सूर्यम्। पश्चा। सन्तम्। पुरः। कृधि। देवानाम्। चित्। तिरः। वशम्॥४॥

हे इन्द्र त्वं त्यं[3] सूर्यं सायंसमये पश्चा पश्चात् सन्तं भवन्तं पुरः परेद्युः प्रातःकाले पुरस्तात् कृधि करोषि। लकारव्यत्ययः। कीदृशम्। देवानां चित् देवानामपि तिरः तिरोहितं नैरपि क्व गत इति दुर्विज्ञानं वशं कान्तम् ॥ ॥ २९ ॥

'आ याहि' इति चतुर्ऋचमेकविंशं सूक्तमाङ्गिरसस्य संवर्तस्यार्षमुषोदेवताकम्। चतस्रोऽपि विंशतिका द्विपदा विराजः। तथा चानुक्रान्तम्—'आ याहि संवर्त उषस्यं द्वैपदम्' इति। प्रथमे छन्दोमे वैश्वदेवसूक्तात्पूर्वमिदं सूक्तम्। सूत्रितं च—'आ याहि वनसेमा नु कं बभ्रुरेक इति द्विपदा-सूक्तानि' (आश्व. श्रौ. ८. ७) इति। महाव्रतेऽपि निष्केवल्य एतत्। तथैव पञ्चमारण्यके सूत्रितम्—'आ याहि वनसा सहेति नव समाम्नाताः' (ऐ. आ. ५. २. २) इति ॥

आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभिः ॥ १ ॥

आ। याहि। वनसा। सह। गावः। सचन्त। वर्तनिम्। यत्। ऊधऽभिः ॥ १ ॥

हे उषः वनसा वननीयेन तेजसा धनेन वा सार्धम् आ याहि आगच्छ। गावः उषसो वाहनभूताः वर्तनिं रथं सचन्त सेवन्ते। अतस्तेन रथेनायाहीत्यर्थः। यत् या गावः ऊधभिः उपलक्षिताः प्रभूताः। पीना इत्यर्थः। ता गाव इति संबन्धः ॥

आ याहि वस्व्या धिया मंहिष्ठो जारयन्मखः सुदानुभिः ॥ २ ॥

आ। याहि। वस्व्या। धिया। मंहिष्ठः। जारयतऽमखः। सुदानुऽभिः ॥ २ ॥

हे उषः वस्व्या प्रशस्तया धिया अनुग्रहबुद्ध्या कर्मणा स्तुत्या वा सार्धम् आ याहि आगच्छ। स चोषःकालः सुदानुभिः शोभनदानैर्दातृभिः पुरुषैः मंहिष्ठः धनानां दातृतमः अत एव जारयन्मखः समापयद्यज्ञश्च भवति ॥

पितुभृतो न तन्तुमित्सुदानवः प्रति दध्मो यजामसि ॥ ३ ॥

पितुऽभृतः। न। तन्तुम्। इत्। सुऽदानवः। प्रति। दध्मः। यजामसि ॥ ३ ॥

पितुभृतो न अन्नस्य भर्तार इव सुदानवः शोभनदाना वयं तन्तुमित् तन्तुं[4] विस्तीर्णमेव[5] प्रति दध्मः। उषसं प्रत्युपायनरूपेण धारयामः। तेन च यज्ञेन तामुषसं यजामसि ॥

---

१. त-भ-अहिंसात्। २. त१.२.३.६.८-भ२-वशमानय। ३. त७-त्यं तं। ४. ग-त-भ१.४.८-ततं; भ२-तं तं। ५. ग-विस्तीर्णं यज्ञमेव।

दशमेऽहनि प्रातरनुवाक उपस्ये क्रतौ ' उषो भद्रेभिः' इत्यस्याः स्थाने ' उषा अप स्वसुः ' इत्येषा[1]। सूत्रितं च—' उषा अप स्वसुस्तम इति[१] पच्छो द्विपदां त्रिरुपस्ये ' ( आश्व. श्रौ. ८. १२ ) इति ॥

**उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता ॥ ४ ॥**

उषाः । अप । स्वसुः । तमः । सम् । वर्तयति । वर्तनिम् । सुऽजातता ॥ ४ ॥

इयम् ᵛउषाः ᵛस्वसुः भगिन्या रात्रेः संबन्धि ᵛतमः अन्धकारम् ᵛअप ᵛसं ᵛवर्तयति। आत्मीयेन तेजसापगमयति। ᵛसुजातता सुजातत्वमात्मनः सुप्रजातत्वं च ᵛवर्तनिं रथं प्रापयति॥॥३०॥

' आ त्वा ' इति षडृचं द्वाविंशं सूक्तमाङ्गिरसस्य ध्रुवस्यार्षमानुष्टुभम्। अभिषिक्तस्य राज्ञः स्तुतिरूपोऽर्थो देवता। तथा चानुक्रान्तम्—' आ त्वा षड् ध्रुवो राज्ञः स्तुतिस्त्वानुष्टुभं तु ' इति। राज्ञो युद्धाय संनहनेऽनेन सूक्तेनाभिमन्त्रणं पुरोधसा कर्तव्यम्। सूत्रितं च—' आ त्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय ' ( आश्व. गृ. ३. १२. २ ) इति ॥

**आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः**
**विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥ १ ॥**

आ । त्वा । अहार्षम् । अन्तः । एधि । ध्रुवः । तिष्ठ । अविऽचाचलिः ।
विशः । त्वा । सर्वाः । वाञ्छन्तु । मा । त्वत् । राष्ट्रम् । अधि । भ्रशत् ॥ १ ॥

हे राजन् ᵛत्वा त्वाम् ᵛआ ᵛअहार्षम् अस्मद्राष्ट्रस्य स्वामित्वेनानैषम्। स त्वम् ᵛअन्तः अस्मासु मध्ये ᵛएधि स्वामी भव। ᵛध्रुवः नित्यः सन् ᵛअविचाचलिः अतिशयेन चलनरहित[2] एव[2] सन् ᵛतिष्ठ राष्ट्रमधितिष्ठ। ᵛसर्वाः च ᵛविशः प्रजाः ᵛत्वा त्वां ᵛवाञ्छन्तु। अयमेव अस्माकं[3] राजास्त्विति कामयन्तु। ' वाछि इच्छायाम् '। ᵛत्वत् त्वत्तः सकाशात् ᵛराष्ट्रं राज्यं ᵛमा ᵛअधि ᵛभ्रशत् मा भ्रश्यतु। मा वियुक्तं भवतु। ' भ्रन्शु अधःपतने ' ॥

**इहैवैधि माप च्योष्ठाः पर्वतइवाविचाचलिः ।**
**इन्द्रइवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥ २ ॥**

इह । एव । एधि । मा । अप । च्योष्ठाः । पर्वतःऽइव । अविऽचाचलिः ।
इन्द्रःऽइव । इह । ध्रुवः । तिष्ठ । इह । राष्ट्रम् । ॐ इति । धारय ॥ २ ॥

हे राजन् ᵛइह अस्मिन् ᵛएव राज्ये[4] ᵛएधि स्वामित्वेन सर्वदा वर्तमानो भव। ᵛमाप ᵛच्योष्ठाः अपच्युतो मा भूः। मापगमः[5]। ᵛपर्वतइव यथा पर्वतो नैश्चल्येनावतिष्ठते एवम् ᵛअविचाचलिः चलनरहितो भव। ᵛइन्द्रइव यथा स्वर्ग इन्द्रः एवम् ᵛइह लोके त्वं ᵛध्रुवस्तिष्ठ स्थिरो भव। ᵛराष्ट्रमु राष्ट्रं च ᵛइह लोके ᵛधारय। स्वे स्वे कर्मण्यवस्थापय ॥

१. त१.२.३.६.७.८-भ१.४.५.८–इति। २. ग-त१.२.३.६.७.८-भ–चलनरहितश्च। ३. ग२–सर्वथास्माकं; त१.२.३.६.७.८-भ१.२.४.५.८–सर्वास्माकं। ४. भ७–राष्ट्रे। ५. त-भ१.२.४.८–मापगमयः।

इममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा ।
तस्मै सोमो अधि ब्रवत्तस्मा उ ब्रह्मणस्पतिः ॥ ३ ॥

इमम् । इन्द्रः । अदीधरत् । ध्रुवम् । ध्रुवेण । हविषा ।
तस्मै । सोमः । अधि । ब्रवत् । तस्मै । ऊँ इति । ब्रह्मणः । पतिः ॥ ३ ॥

इमम् अभिषिक्तं ध्रुवेण स्थिरेण हविषा तर्प्यमाणः इन्द्रः ध्रुवं स्थिरम् अदीधरत् धारयतु । सोमः च तस्मै राज्ञे अधि ब्रवत् अधिब्रवीतु । मदीयोऽयमिति पक्षपातवचनं करोतु । तस्मा उ तस्मा एव ब्रह्मणस्पतिः मन्त्रस्य पालको देवश्चाधिब्रवीतु ॥

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ।
ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम् ॥ ४ ॥

ध्रुवा । द्यौः । ध्रुवा । पृथिवी । ध्रुवासः । पर्वताः । इमे ।
ध्रुवम् । विश्वम् । इदम् । जगत् । ध्रुवः । राजा । विशाम् । अयम् ॥ ४ ॥

द्यौः ध्रुवा स्थिरा भवति । पृथिवी च ध्रुवा स्थिरा भवति । इमे दृश्यमानाः पर्वताः महीधराश्च ध्रुवासः स्थिराः । इदं विश्वं सर्वं जगत् ध्रुवं स्थिरं भवति । एवमेव अयं विशां प्रजानां राजा स्वामी सन् ध्रुवः स्थिरो भवतु ॥

ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।
ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ ५ ॥

ध्रुवम् । ते । राजा । वरुणः । ध्रुवम् । देवः । बृहस्पतिः ।
ध्रुवम् । ते । इन्द्रः । च । अग्निः । च । राष्ट्रम् । धारयताम् । ध्रुवम् ॥ ५ ॥

हे राजन् ते तव राष्ट्रं राजा राजमानः वरुणः ध्रुवं स्थिरं धारयतु । देवः दानादि-गुणयुक्तः बृहस्पतिः ध्रुवं धारयतु । इन्द्रश्च अग्निश्च उभावपि ते तव राष्ट्रं ध्रुवं स्थिरं धारयताम् । इन्द्राग्न्योरुभयोरपेक्षया ध्रुवशब्दस्य द्विः प्रयोगः ॥

ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि ।
अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥ ६ ॥

ध्रुवम् । ध्रुवेण । हविषा । अभि । सोमम् । मृशामसि ।
अथो इति । ते । इन्द्रः । केवलीः । विशः । बलिऽहृतः । करत् ॥ ६ ॥

ध्रुवेण स्थिरेण हविषा पुरोडाशादिना[1] युक्तं ध्रुवं स्थिरं सोमम् अभि मृशामसि अभिमृशामः । देवतामभिलक्ष्य यागार्थं वयमृत्विजः संस्पृशामः । अथो अथानन्तरमेव इन्द्रः विशः प्रजाः ते तवैव केवलीः असाधारणाः सतीः बलिहृतः करस्य[2] प्रदात्रीः करत् करोतु॥॥३१॥

१. त१.२.३.६.७–चरुपुरोडाशादि; त४.५.८-म१.२.४.८–पुरोडाशादि । २. त१.२.३.७-म१.२.४.८–कारस्य ।

'अभीवर्तेन' इति पञ्चर्चं त्रयोविंशं सूक्तमाङ्गिरसस्याभीवर्ताख्यस्यार्षमानुष्टुभम्। पूर्ववद्राजस्तुतिर्देवता। तथा चानुक्रान्तम्—'अभीवर्तेन पञ्चाभीवर्तः' इति। पुरोहित इदं सूक्तं राजानं युद्धाय कृतसंनाहं वाचयीत। सूत्र्यते हि—'अथैनं सारयमाणमुपारुह्याभीवर्तं वाचयति[1]' (आश्व. गृ. ३. १२. १२) इति[2]॥

**अ॒भी॒व॒र्तेन॑ ह॒विषा॒ येनेन्द्रो॑ अभिवावृ॒ते।**
**तेना॒स्मान् ब्र॑ह्मणस्पते॒ऽभि रा॒ष्ट्राय॑ वर्तय॥ १॥**

अ॒भि॒ऽव॒र्तेन॑। ह॒विषा॑। येन॑। इन्द्रः॑। अ॒भि॒ऽव॒वृ॒ते।
तेन॑। अ॒स्मान्। ब्र॒ह्म॒णः॒। प॒ते॒। अ॒भि। रा॒ष्ट्राय॑। व॒र्त॒य॒॥ १॥

अभीवर्तेन। अभिगच्छत्यनेनेत्यभीवर्तः॥ करणे घञ्। थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम्। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा. सू. ६. ३. १२२) इति दीर्घः॥ ईदृशेन येन हविषा साधनेन इन्द्रः अभिववृते सर्वमभिजगाम तेन हविषेष्टवतः अस्मान् हे ब्रह्मणस्पते राष्ट्राय राज्यं प्राप्तुम् अभि वर्तय अभिगमय॥

**अ॒भि॒वृत्य॑ स॒पत्ना॑न॒भि या नो॒ अरा॑तयः।**
**अ॒भि पृ॑त॒न्यन्तं॑ तिष्ठा॒भि यो न॑ इर॒स्यति॑॥ २॥**

अ॒भि॒ऽवृत्य॑। स॒ऽपत्ना॑न्। अ॒भि। याः। नः॒। अरा॑तयः।
अ॒भि। पृ॒त॒न्यन्त॑म्। ति॒ष्ठ॒। अ॒भि। यः। नः॒। इ॒र॒स्यति॑॥ २॥

हे राजन् सपत्नान् शत्रून् अभिवृत्य अभितो गमयित्वा नः अस्माकं याः अरातयः अदानशीलाः प्रजाः सन्ति ता अपि अभि तिष्ठ अभिभव। पृतन्यन्तं पृतनाः सेना आत्मन इच्छन्तं युयुत्सुं च अभि तिष्ठ॥ पृतनाशब्दात् क्यचि 'कव्यध्वरपृतनस्य' इत्यन्तलोपः॥ यः च नः अस्मभ्यम् इरस्यति ईर्ष्यति। इरस् तिरस् ईर्ष्यायां कण्ड्वादिः। तमपि अभि तिष्ठ। यद्वा। प्रकृतो ब्रह्मणस्पतिरेवात्रापि संबोध्यः॥

**अ॒भि त्वा॑ दे॒वः स॑वि॒ताभि सोमो॑ अवीवृतत्।**
**अ॒भि त्वा॒ विश्वा॑ भू॒तान्य॑भीव॒र्तो यथास॑सि॥ ३॥**

अ॒भि। त्वा॒। दे॒वः। स॒वि॒ता। अ॒भि। सोमः॑। अ॒वी॒वृ॒त॒त्।
अ॒भि। त्वा॒। विश्वा॑। भू॒तानि॑। अ॒भि॒ऽव॒र्तः। यथा॑। अस॑सि॥ ३॥

हे राजन् देवः दानादिगुणयुक्तः सविता त्वा त्वाम् अभि अवीवृतत् अभिवर्तयतु। अभिगमयतु राष्ट्रम्। सोमः च अभि वर्तयतु। विश्वा विश्वानि सर्वाण्यपि भूतानि पृथिव्यादीनि त्वाम् अभि वर्तयन्तु। यथा येन प्रकारेण त्वम् अभीवर्तः असखि अभितः सर्वत्र वर्तमानो भवसि॥ अस्तेश्छान्दसः शपो लुगभावः॥

**येनेन्द्रो॑ ह॒विषा॑ कृ॒त्व्यभ॑वद् द्यु॒म्न्यु॑त्त॒मः।**
**इ॒दं तद॑क्रि देवा असप॒त्नः किला॑भुवम्॥ ४॥**

---

१. त१.२.३.७–वाचयीत; भ२.४.८–वाचयीत इति।

येन । इन्द्रः । हविषा । कृत्वी । अभवत् । द्युम्नी । उत्ऽतमः ।
इदम् । तत् । अक्रि । देवाः । असपत्नः । किल । अभुवम् ॥ ४ ॥

ᐯयेन ᐯहविषा अस्माभिर्दत्तेन माद्यन् ᐯइन्द्रः ᐯकृत्वी वृत्रवधादेः कर्मणः कर्ता ᐯअभवत् ᐯद्युम्नी । द्युम्नं द्योततेर्यशो वान्नं वा । तद्वान् अत एव ᐯउत्तमः उत्कृष्टतमश्चाभवत् ᐯतत् ᐯइदं हविः हे ᐯदेवाः ᐯअक्रि अकारि । यद्वा । अहमकार्षम् । अत एवाहम् ᐯअसपत्नः ᐯकिल ᐯअभुवम् । शत्रुरहितोऽप्यभवं[1] खलु ॥

**असपत्नः सपत्नहाभिराष्ट्रो विषासहिः ।**
**यथाहमेषां भूतानां विराजानि जनस्य च ॥ ५ ॥**

असपत्नः । सपत्नऽहा । अभिऽराष्ट्रः । विऽससहिः ।
यथा । अहम् । एषाम् । भूतानाम् । विऽराजानि । जनस्य । च ॥ ५ ॥

ᐯसपत्नहा सपत्नानां शत्रूणां हन्ता अत एव ᐯअसपत्नः शत्रुरहितोऽहमभूवम् । ᐯअभिराष्ट्रः अभिगतराष्ट्रः प्राप्तराज्यः सन् ᐯविषासहिः शत्रूणां विशेषेणाभिभविता चाभूवम् । ᐯयथा येन प्रकारेण ᐯअहमेषां[2] दृश्यमानानां सर्वेषां ᐯभूतानां प्राणिनां ᐯजनस्य ᐯच सेवकस्यामात्यादेश्च ᐯविराजानि यथेश्वरो भवानि तथा सपत्नहा विषासहिश्चाभूवमित्यर्थः ॥ ॥ ३२ ॥

'प्र वः' इति चतुर्ऋचं चतुर्विंशं सूक्तं गायत्रम् । अर्बुदस्य सर्पर्षेः पुत्र ऊर्ध्वग्रावा नामर्षिः । सोमाभिषवार्था ग्रावाणो देवता । तथा चानुक्रान्तं—'प्र वश्चतुष्कमूर्ध्वग्रावार्बुदिर्ग्राव्णोऽस्तौद्गायत्रम्' इति । ग्रावस्तोत्र एतत्सूक्तम् । सूत्रितं च—'आ व ऋञ्जसे प्र वो ग्रावाण इति सूक्तयोः' (आश्व. श्रौ. ५. १२) इति । यद्वा । इदमेकमेव सूक्तं ग्रावस्तोत्रम् । सूत्र्यते हि—'प्र वो ग्रावाण इत्येक उक्तं सर्पणम्' (आश्व. श्रौ. ५. १२) इति ॥

**प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा । धूर्षु युज्यध्वं सुनुत ॥ १ ॥**

प्र । वः । ग्रावाणः । सविता । देवः । सुवतु । धर्मणा । धूःऽसु । युज्यध्वम् । सुनुत ॥ १ ॥

हे ᐯग्रावाणः सोमाभिषवार्थाः पाषाणाः ᐯवः युष्मान् ᐯसविता प्रेरकः ᐯदेवः ᐯधर्मणा आत्मीयेन धारणेन कर्मणा ᐯप्र ᐯसुवतु अभिषवार्थं प्रेरयतु । 'षू प्रेरणे' । तौदादिकः । यूयं च ᐯधूर्षु अभिषवस्थानेषु प्राच्यादिमहादिक्षु ᐯयुज्यध्वं युक्ता भवत । अनन्तरं ᐯसुनुत अभिषुणुत सोमम् ॥

**ग्रावाणो अप दुच्छुनामप सेधत दुर्मतिम् । उस्राः कर्तन भेषजम् ॥ २ ॥**

ग्रावाणः । अप । दुच्छुनाम् । अप । सेधत । दुःऽमतिम् । उस्राः । कर्तन । भेषजम् ॥ २ ॥

हे ᐯग्रावाणः ᐯदुच्छुनां दुःखकारिणीं शत्रुभूतां प्रजाम् ᐯअप ᐯसेधत अस्मत्तोऽपगमयत । 'षिधु गत्याम्' । तथा ᐯदुर्मतिं दुष्टाभिसंधिं च ᐯअप सेधत । ᐯभेषजं सुखमस्माकं यथा भवति तथा ᐯउस्राः गाः ᐯकर्तन कुरुत ॥ करोतेश्छान्दसो विकरणस्य लुक् । 'तप्तनप्तनथनाश्च' इति तनबादेशः ॥

**ग्रावाण उपरेष्वा महीयन्ते सजोषसः । वृष्णो दधतो वृष्ण्यम् ॥ ३ ॥**

ग्रावाणः । उपरेषु । आ । महीयन्ते । सऽजोषसः । वृष्णे । दधतः । वृष्ण्यम् ॥ ३ ॥

१. त१.२.३.६.७.८–'शत्रुरहितोऽप्यभवं' नास्ति । २. त-भ–एषामहं ।

ᵛग्रावाणः दिक्ष्ववस्थिताः पाषाणाः ᵛसजोषसः सह प्रीयमाणाः संगताः सन्तो वा ᵛउपरेषु। उपरो नामाभिषवाय चतुर्णां ग्राव्णां मध्ये स्थापितो विस्तृतः पाषाणः। प्रदेशापेक्षं बहुवचनम्। उपरस्य प्रान्तेषु ᵛमहीयन्ते प्रकाशन्ते। आकारः पूरणः। किं कुर्वन्तः। ᵛवृष्णे वर्षित्रे सोमाय ᵛवृष्ण्यं वीर्यं ᵛदधतः प्रयच्छन्तः॥

**ग्रावा॑णः सवि॒ता नु वो॑ दे॒वः सु॑वतु॒ धर्म॑णा। यज॑मानाय सुन्व॒ते॥ ४॥**

ग्रावा॑णः। स॒वि॒ता। नु। वः॒। दे॒वः। सु॒व॒तु॒। धर्म॑णा। यज॑मानाय। सु॒न्व॒ते॥ ४॥

ᵛदेवः दानादिगुणयुक्तः ᵛसविता हे ᵛग्रावाणः ᵛवः युष्मान् ᵛधर्मणा आत्मीयेन धारणेन ᵛनु क्षिप्रं ᵛसुवतु अभिषवे प्रेरयतु। किमर्थम्। ᵛसुन्वते सोमाभिषवं कुर्वते ᵛयजमानाय यजमानार्थम्। तस्य यागनिष्पत्त्य इत्यर्थः॥ ॥ ३३॥

'प्र सूनवः' इति चतुर्ऋचं पञ्चविंशं सूक्तम्। ऋभुपुत्रः सूनुर्नामर्षिः। द्वितीया गायत्री शिष्टास्तिस्रोऽनुष्टुभः। आद्यर्भुदेवत्या शिष्टा आग्नेय्यः। तथा चानुक्रान्तं—'प्र सूनवः सूनुरार्भव आग्नेयमानुष्टुभं द्वितीया गायत्र्याद्यार्भवी' इति। गतो विनियोगः॥

**प्र सू॒नव॑ ऋभू॒णां बृ॒हन्न॑वन्त वृ॒जना॑।**
**क्षामा॒ ये वि॒श्वधा॑य॒सोऽश्न॑न् धे॒नुं न मा॒तर॑म्॥ १॥**

प्र। सू॒नवः॑। ऋ॒भू॒णाम्। बृ॒हत्। न॒व॒न्त॒। वृ॒जना॑।

क्षाम॑। ये। वि॒श्वऽधा॑यसः। अश्न॑न्। धे॒नुम्। न। मा॒तर॑म्॥ १॥

ᵛसूनवः एतत्संज्ञाः ᵛऋभूणाम्। ऋभुर्विभ्वा वाज इति त्रयाणामपि प्रथमेन व्यपदेशः। तेषां पुत्राः ᵛबृहत् प्रभूतं ᵛवृजना। संग्रामनामैतत्। वृजनं संग्रामं ᵛप्र ᵛनवन्त। नवतिर्गतिकर्मा। प्रगच्छन्ति। प्रकर्षेण गच्छन्ति। प्रकृष्टगमनेन जयो लक्ष्यते। तत्र शत्रूञ्जयन्तीत्यर्थः। सूनुर्नामर्षिरात्मानमेव परोक्षेण निरदिशत्। एकस्मिन्नपि पूजार्थं बहुवचनम्। ᵛये ऋभवः ᵛविश्वधायसः विश्वस्य धारकाः ᵛक्षाम भूमिम् ᵛअश्नन् व्याप्नुवन्[1]। 'अशू व्याप्तौ'। व्यत्ययेन श्ना। ᵛधेनुं ᵛन। धेनुः प्रीणयित्री गौः। तामिव तेषामृभूणामित्यन्वयः। यद्वा। सूर्यरश्मयोऽप्यृभव उच्यन्ते। य उरु भासमानाः सूर्यरश्मयो विश्वधायसो विश्वं सर्वं रसं धयन्तः[2] पिबन्तः[3]। यद्वा। वृष्ट्यादिप्रदानेन सर्वस्य धारकाः। एवंभूताः सन्तः क्षाम भूमिमश्नन् अभुञ्जत तदीयं सर्वं रसमपिबन्। तत्र दृष्टान्तः। ᵛमातरं जननीं धेनुं पयस्विनीं गां यथा वत्सः पिबति तथा। य ऋभवोऽश्नन्ति तेषामृभूणामित्यन्वयः॥

अग्निप्रणयने 'प्र देवम्' इति तृचोऽनुवक्तव्यः। सूत्रितं च—'प्रेषितोऽग्निप्रणयनीयाः प्रतिपद्यते प्र देवं देव्या धियेति तिस्रः' (आश्व. श्रौ. २. १७) इति॥

**प्र दे॒वं दे॒व्या धि॒या भर॑ता जा॒तवे॑दसम्। ह॒व्या नो॑ वक्षदानु॒षक्॥ २॥**

प्र। दे॒वम्। दे॒व्या। धि॒या। भर॑त। जा॒तऽवे॑दसम्। ह॒व्या। नः॒। व॒क्ष॒त्। आ॒नु॒षक्॥ २॥

हे ऋत्विग्यजमानाः ᵛदेवं दानादिगुणयुक्तं ᵛजातवेदसं जातानां वेदितारं जातप्रज्ञं जातधनं वा इममग्निं ᵛप्र ᵛभरत प्रकर्षेण हरत। यद्वा। प्राञ्चं नयत। केन साधनेनेति तदाह। ᵛदेव्या दीप्तया ᵛधिया प्रज्ञया कर्मणा वा। यद्वा। एषा सहयोगे तृतीया। देव्या धिया युक्तम्। किं प्रयो-

१. त१.२.३.६.७.८-भ१.४.८-'व्याप्नुवन्' नास्ति। २. त१.२.३.६.७.८-भ१.४.८-पर्ययः। ३. त६-पिबंत्यः; भ७-पिबंति।

जनमिति चेत्। ᵛनः अस्माकं ᵛहव्या हव्यानि हवींषि ᵛआनुषक् आनुपूर्व्यादनुक्रमेण ᵛवक्षत्। अयमग्निर्वहेत्। देवान् प्रापयेत्॥ वहेर्लेटि 'सिब्बहुलम्°' इति सिप्॥

अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते।
रथो न योरभीवृतो घृणीवाञ्चेतति त्मना॥ ३॥

अयम्। ऊँ इति। स्यः। प्र। देवऽयुः। होता। यज्ञाय। नीयते।
रथः। न। योः। अभिऽवृतः। घृणिऽवान्। चेतति। त्मना॥ ३॥

ᵛअयमु अयमेव ᵛस्यः सोऽग्निः ᵛदेवयुः[1] देवान् यष्टुमिच्छन् भवति॥ देवशब्दात्क्यचि 'न च्छन्दस्यपुत्रस्य°' इतीत्वदीर्घयोः प्रतिषेधः॥ अयमेव ᵛहोता देवानामाह्वाता। अयमेव ᵛयज्ञाय यागार्थं ᵛप्र ᵛणीयते आहवनीयदेशं प्रति प्रकर्षेण नीयते। अपि च ᵛरथः रंहणशीलः सूर्यो रथवान् वा॥ छान्दसो मत्वर्थीयस्य लोपः॥ स यथा ᵛघृणीवान् दीप्तिमान् तद्वद्दीप्तः ᵛयोः मिश्रयिता हविषां देवैः संगमयिता॥ यौतेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच्॥ ᵛअभीवृतः ऋत्विग्यजमानैरावेष्टितः॥ वृणोतेः कर्मणि 'अन्येषामपि°' इति पूर्वपदस्य दीर्घः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्॥ एवंभूतोऽग्निः ᵛत्मना आत्मना स्वयमेव ᵛचेतति सम्यग्देवान् यष्टुं जानाति॥ 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः॥

अयमग्निरुरुष्यत्यमृतादिव जन्मनः। सहसश्चित् सहीयान् देवो जीवातवे कृतः॥४॥

अयम्। अग्निः। उरुष्यति। अमृतात्ऽइव। जन्मनः।
सहसः। चित्। सहीयान्। देवः। जीवातवे। कृतः॥ ४॥

ᵛअयमग्निः ᵛअमृतात् अमरणाद्देवाद्देवनिमित्ताद्भयादिव[2] ᵛजन्मनः जायमानात् मनुष्यात् मनुष्यनिमित्ताद्भयादपि ᵛउरुष्यति तस्माद्रक्षति॥ 'उरुष्यती रक्षाकर्मा' (निरु. ५. २३) इति यास्कः। भाववाचिनोऽमृतशब्दस्य नञा बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम्। 'भीत्रार्थानाम्°' (पा. सू. १. ४. २५) इत्यपादानसंज्ञा॥ अपि चायं ᵛदेवः ᵛसहसश्चित्॥ सह इति बलनाम। तस्मादुत्तरस्य मत्वर्थीयस्य 'बहुलं छन्दसि' इति लुक्॥ चिच्छब्दोऽप्यर्थे। सहस्वतो बलवतोऽपि ᵛसहीयान् बलवत्तरः॥ सहस्विशब्दादीयसुनि 'विन्मतोः°' इति विनो लुक्। 'टेः' इति टिलोपः॥ एवंभूतो देवः ᵛजीवातवे जीवनहेतवे यागाय ᵛकृतः ब्रह्मणा सृष्टः॥ ॥ ३४॥

'पतङ्गम्' इति तृचं षड्विंशं सूक्तं प्रजापतिपुत्रस्य पतङ्गस्यार्षम्। आद्या जगती ततस्त्रिष्टुभौ। मायाभेदस्य प्रतिपाद्यत्वात्तद्देवत्यमिदं सूक्तम्। अनुक्रान्तं च—'पतङ्गं तृचं पतङ्गः प्राजापत्यो मायाभेदं जगत्यादि' इति। प्रवर्ग्येऽभिष्टव आद्ये ऋचौ। सूत्रितं च—'पतङ्गमक्तमसुरस्य मायया यो नः सनुत्यः' (आश्व. श्रौ. ४. ६) इति॥

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः।
समुद्रे अन्तः कवयो वि चक्षते मरीचीनां पदमिच्छन्ति वेधसः॥ १॥

पतङ्गम्। अक्तम्। असुरस्य। मायया। हृदा। पश्यन्ति। मनसा। विपःऽचितः।
समुद्रे। अन्तरिति। कवयः। वि। चक्षते। मरीचीनाम्। पदम्। इच्छन्ति। वेधसः॥१॥

---

१. त१.२.३.६.७.८-भ-मु-यो देवयुः। २. त-भ-°द्भयादेव।

ᵛअसुरस्य असनकुशलस्य[1] सर्वोपाधिविहीनस्य परब्रह्मणः संबन्धिन्या ᵛमायया त्रिगुणात्मिकया ᵛअक्तं व्यक्तमभिव्यक्तम्। यद्वा। मायेति प्रज्ञानाम। प्रज्ञया संबद्धं सर्वज्ञं ᵛपतङ्गम्। पतति गच्छतीति पतङ्गः सूर्यः। तं ᵛविपश्चितः विद्वांसः ᵛहृदा हृत्स्थेन। तात्स्थ्यात्ताच्छब्द्यम्। हृदि निरुद्धेन ᵛमनसा ᵛपश्यन्ति जानन्ति। ᵛकवयः क्रान्तदर्शिनस्ते ᵛसमुद्रे। समुद्रवन्त्यस्माद्रश्मय इति समुद्रं सूर्यमण्डलम्। तस्मिन् ᵛअन्तः मध्ये ᵛवि ᵛचक्षते विपश्यन्ति। मण्डलान्तर्वर्तिनं हिरण्मयं पुरुषमपि जानन्तीत्यर्थः। य एवं ᵛवेधसः विधातार उक्तप्रकारेण सूर्योपासनस्य कर्तारस्ते ᵛमरीचीनां रश्मीनां ᵛपदं स्थानं सूर्यमण्डलम् ᵛइच्छन्ति अभिलषन्ति। तदुपासनया प्राप्नुवन्तीत्यर्थः। यद्वा। माययाक्तं जीवरूपेणाभिव्यक्तमात्मानं विपश्चितो वेदान्ताभिज्ञा हृत्स्थेनान्तर्मुखेन मनसा पतङ्गम्। पतति व्याप्नोतीति पतङ्गः परमात्मा। तं पश्यन्ति। उपाधिपरित्यागेन जीवात्मनः परमात्मना तादात्म्यं साक्षात्कुर्वन्तीत्यर्थः। अपि च ते कवयः क्रान्तदर्शिनो वेदान्ताभिज्ञाः समुद्रे। समुद्रवन्त्यस्माद्भूतानीति समुद्रः परमात्मा। तस्मिन्नधिष्ठानभूतेऽन्तर्मध्ये सर्वं दृश्यजातमध्यस्तत्वेन वि चक्षते विपश्यन्तीति। अतो दृग्व्यतिरिक्तस्य सर्वस्य मिथ्यात्वाद्वेधसो विधातारस्ते मरीचीनां वृत्तिज्ञानानां पदमधिष्ठानभूतं सच्चित्सुखात्मकं यत्परं ब्रह्म तदेवेच्छन्ति। तद्भावप्राप्तिमेव कामयन्ते ॥

वाग्देवत्ये पशौ 'पतङ्गो वाचम्' इति पुरोडाशस्यानुवाक्या। सूत्रितं च—'यद्वाग्वदन्त्यविचेतनानि पतङ्गो वाचं मनसा बिभर्ति' (आश्व. श्रौ. ३. ८) इति ॥

**पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः।**
**तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो नि पान्ति ॥ २ ॥**

पतङ्गः। वाचम्। मनसा। बिभर्ति। ताम्। गन्धर्वः। अवदत्। गर्भे। अन्तः। इति।
ताम्। द्योतमानाम्। स्वर्यम्। मनीषाम्। ऋतस्य। पदे। कवयः। नि। पान्ति ॥ २ ॥

ᵛपतङ्गः सूर्यः ᵛवाचं त्रयीरूपां ᵛमनसा प्रज्ञया ᵛबिभर्ति धारयति। श्रूयते हि—'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः' (तै. ब्रा.३.१२.९.१) इति। ᵛताम् एव वाचं ᵛगर्भे शरीरस्य मध्ये वर्तमानः ᵛगन्धर्वः। गाः शब्दान् धारयतीति गन्धर्वः प्राणवायुः। ᵛअन्तः मध्ये ᵛअवदत् वदति प्रेरयति। 'मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्' (पा. शि. ७) इति स्मरणात्। ᵛद्योतमानां ᵛस्वर्यं स्वर्गमयित्रीं स्वर्गाय हितां वा ᵛमनीषां मनस ईशित्रीं ᵛतां त्रयीरूपां वाचम् ᵛऋतस्य यज्ञस्य सत्यभूतस्य सूर्यस्य वा ᵛपदे स्थाने ᵛकवयः मेधाविन ऋषयः ᵛनि ᵛपान्ति। अध्यापनेन नितरां रक्षन्ति। यद्वा। पतङ्गः सर्वोपाधिशून्यो व्यापकः परमात्मा। स[2] सृष्ट्यादौ वाचं मनसा बिभर्ति। कानि कानि स्रष्टव्यानीति पर्यालोचनेन मनसा सकलार्थप्रतिपादकं वेदं परामृष्टवानित्यर्थः। स्मर्यते हि—'वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' इति। गर्भे हिरण्मये ब्रह्माण्डेऽन्तर्वर्तमानो गन्धर्वो हिरण्यगर्भस्तां वाचमवदत् प्रथममुच्चारितवान्। द्योतमानत्वादिगुणविशिष्टां तां वाचं कवयः क्रान्तदर्शिनो देवा ऋतस्य सत्यस्य ब्रह्मणः पदे स्थाने नि पान्ति निभृतं रक्षन्ति ॥

प्रवर्ग्येऽभिष्टवे 'अपश्यं गोपाम्' इत्येषा। सूत्रितं च—'अपश्यं गोपामनिपद्यमानं स्वक्के द्रप्सस्य' (आश्व. श्रौ. ४. ६) इति ॥

---

१. त१.२.३-म—असुरनकुलस्य; त७—असुरकुलस्य। २. त१.२.३.६.८—'स' नास्ति।

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥ ३ ॥

अपश्यम् । गोपाम् । अनिऽपद्यमानम् । आ । च । परा । च । पथिऽभिः । चरन्तम् ।
सः । सध्रीचीः । सः । विषूचीः । वसानः । आ । वरीवर्ति । भुवनेषु । अन्तरिति ॥ ३ ॥

व्याख्यातेयमस्यवामीयसूक्ते ( ऋ. सं. १. १६४. ३१ ) । ᵛगोपां गोपायितारमादित्यम् ᵛअपश्यम् अज्ञासिषम् । एष हि सर्वाणि भूतजातान्युदयास्तमयादिकर्मणा गोपायति । कीदृशम् । ᵛअनिपद्यमानम् उच्चैर्गच्छन्तम् । न ह्यसौ कदाचिन्नीचैः पद्यते । ᵛपथिभिः आकाशमार्गैः पूर्वाह्णे ᵛआ ᵛचरन्तम् अस्मानभिलक्ष्य गच्छन्तं सायंसमये ᵛपरा चरन्तं पराङ्मुखं गच्छन्तम् । प्रकारद्वयसमुच्चयार्थौ चशब्दौ । ᵛसः सूर्यः ᵛसध्रीचीः सहाञ्चन्तीः ᵛविषूचीः विविधं पृथक्पृथगञ्चन्तीः स्वस्वव्यापाराय गच्छन्तीः । प्राच्याद्या महादिशः सध्रीच्यो विषूच्यः कोणदिशः । ᵛवसानः स्वभासाच्छादयन् प्रकाशयन् ᵛभुवनेषु लोकेषु ᵛअन्तः मध्ये ᵛआ ᵛवरीवर्ति । पुनःपुनरुद्यन् अस्तं गच्छंश्चावर्तते । यद्वा । गोपां शरीरस्य गोपायितारमनिपद्यमानमविनाशिनमविपन्नमा[1] च परा चाभिमुखेन च पराङ्मुखेन च पथिभिर्नाडीलक्षणैर्मार्गैश्चरन्तं[2] शरीरे वर्तमानं प्राणमपश्यम्[3] अहमदर्शम् ॥ ॥३५॥

'त्यमू षु' इति तृचं सप्तविंशं सूक्तं तार्क्ष्यपुत्रस्यारिष्टनेमेरार्षं त्रैष्टुभं तार्क्ष्यदेवताकम् । तथा चानुक्रान्तं—'त्यमू त्वरिष्टनेमिस्तार्क्ष्यस्तार्क्ष्यम्' इति । अहर्गणेषु द्वितीयादिष्वहःसु निष्केवल्यसूक्तानां पुरस्तादिदं सूक्तं शंसनीयम् । सूत्रितं च—'त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यमग्रे निष्केवल्यसूक्तानाम्' ( आश्व. श्रौ. ७. १ ) इति । विषुवति तु निष्केवल्यसूक्तानामन्त एव तत्सूक्तम् । सूत्र्यते हि—'त्यमू ष्वितीह तार्क्ष्यमन्ततः' ( आश्व. श्रौ. ८. ६ ) इति । महाव्रतेऽपि निष्केवल्य एतत् । तथैव पञ्चमारण्यके सूत्र्यते ( ऐ. आ. ५. ३. १ ) ॥

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥ १ ॥

त्यम् । ऊँ इति । सु । वाजिनम् । देवऽजूतम् । सहऽवानम् । तरुतारम् । रथानाम् ।
अरिष्टऽनेमिम् । पृतनाजम् । आशुम् । स्वस्तये । तार्क्ष्यम् । इह । हुवेम ॥ १ ॥

ᵛत्यमु तं प्रसिद्धमेव ᵛतार्क्ष्यं तृक्षपुत्रं सुपर्णम् ॥ तृक्षाद्यञ् । गर्गादिः ॥ ᵛस्वस्तये क्षेमाय ᵛइह अस्मिन् कर्मणि ᵛहुवेम भृशमाह्वयेमहि[4] ॥ 'बहुलं छन्दसि' इति ह्वयतेः संप्रसारणम् । लिङ्याशिष्यङ् । यद्वा । प्रार्थनायां लिङि व्यत्ययेन शः ॥ कीदृशम् । ᵛवाजिनं बलवन्तमन्नवन्तं वा ᵛदेवजूतं देवैः सोमाहरणाय प्रेरितम् ॥ जु इति गत्यर्थः सौत्रो धातुः । अस्मात् कर्मणि निष्ठा । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥ यद्वा । देवैः प्रीयमाणं तर्प्यमाणम् । यदाह[5] यास्कः—'जूतिर्गतिः प्रीतिर्वा देवजूतं देवगतं देवप्रीतं वा' ( निरु. १०. २८ ) इति । ᵛसहावानं सहस्वन्तं बलवन्तमभिभवनवन्तं वा अत एव ᵛरथानाम् अन्यदीयानां ᵛतरुतारं संग्रामे जेतारम्[6] । यद्वा । रंहणशीला

१. त१.२.३.६.७.८-भ–°विनाशिनमा । २. भ७–°मार्गैरंतश्चरंतं । ३. त१.२.३.६.७ ८-भ१.४.७.८–अपश्यं । ४. त१.२.३.६.७.८-भ–भृशमाह्वयेमहीति । ५. त१.२.३.७-मु–तदाह । ६. त१.२.३.६.७.८-भ७–नेतारं; त४.५–तारं; भ१.२.४.५–नेतारं; भ८–नतारं ।

इमे लोका रथाः । तान् सोमाहरणसमये शीघ्रं तरीतारम्[1] । श्रूयते हि—'एष हीमाँल्लोकान्सद्यस्तरति' (ऐ. ब्रा. ४. २०) इति ॥ तरतेस्तृचि 'ग्रसितस्कभित°' इत्यादावुडागमो निपात्यते (पा. सू. ७. २. ३४) ॥ ᵛअरिष्टनेमिम् अहिंसितरथम् । यद्वा । नेमिर्नमनशीलमायुधम् । अहिंसितायुधम् । अथवा । उपचाराज्जनके जन्यशब्दः । अरिष्टनेमेर्मम जनकम् । ᵛपृतनाजं पृतनानां शत्रुसेनानां प्राजितारं प्रगमयितारं जेतारं वा । 'अज गतिक्षेपणयोः' । अस्मात्क्विप् । 'वलादावार्धधातुके विकल्प इष्यते' (का. २. ४. ५६. २) इति वचनाद्वीभावाभावः । जयतेर्वा डप्रत्ययः । ᵛआशुं शीघ्रगामिनम् ॥

इन्द्र॑स्येव रा॒तिमा॒जोहु॑वानाः स्व॒स्तये॒ नाव॑मि॒वा रु॑हेम ।
उर्वी॒ न पृथ्वी॒ बहु॑ले॒ गभी॑रे॒ मा वा॒मेतौ॒ मा परे॑तौ रिषाम ॥ २ ॥

इन्द्र॑स्यऽइव । रा॒तिम् । आ॒ऽजोहु॑वानाः । स्व॒स्तये॑ । नाव॑म्ऽइव । आ । रु॒हे॒म ।
उ॒र्वी॒ इति॑ । न । पृ॒थ्वी॒ इति॑ । बहु॑ले॒ इति॑ । गभी॑रे॒ इति॑ ।
मा । वा॒म् । आ॒ऽइ॑तौ । मा । परा॑ऽइतौ । रि॒षा॒म ॥ २ ॥

ᵛइन्द्रस्येव तार्क्ष्यस्य ᵛरातिं दानम् ᵛआजोहुवानाः पुनःपुनराह्वयन्तो वयं ᵛस्वस्तये अविनाशाय ᵛनावमिव नौर्यथा दुरवगाहं समुद्रं तारयति तथा दुःखस्य तारयित्रीं ताम् ᵛआ ᵛरुहेम आरूढा भूयास्म ॥ रुहेराशीर्लिङि लिङ्याशिष्यङ् ॥ हे ᵛउर्वी उर्व्यौ विस्तीर्णे हे ᵛपृथ्वी पृथिवी प्रथिते विख्याते हे ᵛबहुले अनन्ते ᵛगभीरे गाम्भीर्योपेते ईदृश्यौ हे द्यावापृथिव्यौ । नशब्दः संप्रत्यर्थे । संप्रति ᵛवां युवयोः संबन्धिनि ᵛएतौ तार्क्ष्यस्यागमे ᵛपरेतौ परागमने च वयं ᵛमा ᵛरिषाम हिंसिता मा भूम ॥ आङ्पराभ्यामुत्तरस्येणो भावे क्तिन् । 'तादौ च निति°' इति गतेः प्रकृतिस्वरत्वम् ॥

स॒द्यश्चि॒द्यः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑इव॒ ज्योति॑षा॒पस्त॒तान॑ ।
स॒ह॒स्र॒साः श॑त॒सा अ॑स्य॒ रंहि॒र्न स्मा॑ वरन्ते युव॒तिं न शर्या॑म् ॥ ३ ॥

स॒द्यः । चि॒त् । यः । शव॑सा । पञ्च॑ । कृ॒ष्टीः । सूर्यः॑ऽइव । ज्योति॑षा । अ॒पः । त॒तान॑ ।
स॒ह॒स्र॒ऽसाः । श॒त॒ऽसाः । अ॒स्य॒ । रंहिः॑ । न । स्म॒ । व॒र॒न्ते॒ । यु॒व॒तिम् । न । शर्या॑म् ॥ ३ ॥

ᵛयः ᵛचित् योऽपि तार्क्ष्यः ᵛसद्यः शीघ्रं ᵛशवसा आत्मीयेन बलेन ᵛअपः उदकानि अमृतलक्षणानि ᵛततान विस्तारितवान् ᵛसूर्यइव यथा सूर्यः सर्वस्य प्रेरक आदित्यः ᵛज्योतिषा आत्मीयेन तेजसा वर्षतौ अपो विस्तारयति तद्वत् । कृष्टयो मनुष्याः । ᵛपञ्च ᵛकृष्टीः पञ्चविधान् कृष्टीन् मनुष्यान् प्रति । निषादपञ्चमांश्चतुरो वर्णानित्यर्थः । ᵛअस्य तार्क्ष्यस्य ᵛरंहिः गतिः ᵛसहस्रसाः सहस्रसंख्यस्य धनस्य दात्री संभक्त्री वा भवति । तथा ᵛशतसाः शतस्य च दात्री संभक्त्री वा भवति ॥ सनतेः सनोतेर्वा 'जनसनखन°' इति विट् । 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । ᵛन ᵛस्म न खल्वीदृशीं तार्क्ष्यस्य[2] ते गतिं ᵛवरन्ते के चन वारयन्ति । तत्र दृष्टान्तः । ᵛशर्यां शरकाण्डमयीमिषुं धनुषो मुक्तां ᵛयुवतिं ᵛन लक्ष्येण मिश्रीभवन्तीमिव । सा यथा दुर्निवारा तथैषा कैश्चिदपि वारयितुमशक्येत्यर्थः। अत्र नैरुक्तं—'सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्यइव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम्' (निरु. १० २९) इति ॥ ॥ ३६ ॥

१. ग२-त४.५-भ१.४.७-तरितारं; त१.२.३.६.७-नेतारं । २. त-भ-मु-संबंधि ।

'उत्तिष्ठत' इति तृचमष्टाविंशं सूक्तमैन्द्रम्। आद्यानुष्टुप् शिष्टे त्रिष्टुभौ। उशीनरपुत्रः शिबिर्नाम राजा प्रथमाया ऋषिः। काशीनामधिपतिः प्रतर्दनो नाम द्वितीयायाः। रोहिदश्वपुत्रो वसुमना नाम तृतीयायाः। तथा चानुक्रान्तम्—'उत्तिष्ठतैकर्चाः शिबिरौशीनरः काशिराजः प्रतर्दनो रौहिदश्वो वसुमना आद्यानुष्टुप्' इति। दधिघर्मे आद्या वक्तव्या। सूत्रितं च—'होतर्वदस्वेत्युक्त उत्तिष्ठताव पश्यतेत्याह' (आश्व. श्रौ. ५. १३) इति॥

उत्तिष्ठताव पश्यतेन्द्रस्य भागमृत्वियम्।
यदि श्रातो जुहोतन यद्यश्रातो ममत्तन॥ १॥

उत्। तिष्ठत। अव। पश्यत। इन्द्रस्य। भागम्। ऋत्वियम्।
यदि। श्रातः। जुहोतन। यदि। अश्रातः। ममत्तन॥ १॥

हे ऋत्विजः $^{v}$उत्तिष्ठत। आसनादूर्ध्वमुत्तिष्ठत। नोपविशत। ऊर्ध्वकर्मत्वादात्मनेपदाभावः (पा. सू. १. ३. २४)। उत्थाय $^{v}$ऋत्वियम् ऋतौ वसन्तादिकाले भवम् $^{v}$इन्द्रस्य $^{v}$भागं भजनीयं दधिघर्मं पच्यमानम् $^{v}$अव $^{v}$पश्यत निरीक्षध्वम्॥ ऋतुशब्दाद्भवार्थे छन्दसि घस्। 'सिति च' (पा. सू. १. ४. १६) इति पदसंज्ञया भसंज्ञाया बाधाद्गुणाभावः। भजेः कर्मणि घञन्तो भागशब्दः। 'कर्षात्वतः॰' इत्यन्तोदात्तत्वम्॥ $^{v}$यदि स भागः $^{v}$श्रातः पक्वस्तर्हि $^{v}$जुहोतन। इन्द्रार्थमग्नौ जुहुत। 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः। 'भीह्री॰' (पा. सू. ६. १. १९२) इत्यादिना पिति प्रत्ययात्पूर्वस्योदात्तत्वम्। $^{v}$यद्यश्रातः अपक्वः तर्हि $^{v}$ममत्तन माद्यत। यद्वा। स्तुतिभिर्मादयत॥ अत्र तेनैव सूत्रेण तनबादेशः॥

तस्यैव दधिघर्मस्य 'श्रातं हविः' इत्येषानुवाक्या। सूत्रितं च—'श्रातं हविरित्युक्तः श्रातं हविरित्यन्वाह' (आश्व. श्रौ. ५. १३) इति॥

श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो विमध्यम्।
परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम्॥ २॥

श्रातम्। हविः। ओ इति। सु। इन्द्र। प्र। याहि। जगाम। सूरः। अध्वनः। विऽमध्यम्।
परि। त्वा। आसते। निधिऽभिः। सखायः। कुलऽपाः। न। व्राजऽपतिम्। चरन्तम्॥ २॥

हे $^{v}$इन्द्र $^{v}$हविः दधिघर्माख्यं त्वदीयं[1] $^{v}$श्रातं पक्वम्॥ 'श्रीञ् पाके' इत्यस्मान्निष्ठायाम् 'अपस्पृधेथाम्॰' इत्यादौ श्राभावो निपात्यते। $^{v}$ओ आ उ $^{v}$सु सुष्ठु $^{v}$प्र $^{v}$याहि प्रकर्षेण शीघ्रमागच्छ। $^{v}$सूरः सूर्यः $^{v}$अध्वनः गन्तव्यस्य मार्गस्य $^{v}$विमध्यं विकलमध्यमीषदूनं मध्यभागं $^{v}$जगाम गतवान्। तव यागार्थं मध्याह्नो जात इत्यर्थः। $^{v}$सखायः समानख्याना ऋत्विजश्च $^{v}$निधिभिः निहितैः अभिन्यासादितैः[2] सोमैः[2] सार्धं $^{v}$त्वा त्वां $^{v}$परि $^{v}$आसते पर्युपासते। तत्र दृष्टान्तः। $^{v}$कुलपा $^{v}$न कुलस्य वंशस्य रक्षकाः पुत्रा यथा $^{v}$व्राजपतिम्। व्राजा गन्तव्या गृहाः। तेषां पतिं $^{v}$चरन्तं गच्छन्तमुपासते तथेत्यर्थः॥ 'व्रज गतौ'। अस्मात्कर्मणि घञ्। 'अजिव्रज्योश्च' (पा. सू.७.३.६०) इति कुत्वनिषेधः। 'कर्षात्वतः॰' इत्यन्तोदात्तत्वे 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम्॥

तस्यैव दधिघर्मस्य 'श्रातं मन्ये' इत्येषा याज्या। सूत्र्यते हि—'श्रातं मन्य ऊधनि श्रातमग्नाविति यजति' (आश्व. श्रौ. ५. १३) इति॥

---

१. त-भ-मु-तदीयं। २. त४.५-अभिष्टुत्या सहितैः।

श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रातं मन्ये तदृतं नवीयः ।
माध्यंदिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन् पुरुकृज्जुषाणः ॥ ३ ॥

श्रातम् । मन्ये । ऊधनि । श्रातम् । अग्नौ । सुऽश्रातम् । मन्ये । तत् । ऋतम् । नवीयः ।
माध्यंदिनस्य । सवनस्य । दध्नः । पिब । इन्द्र । वज्रिन् । पुरुऽकृत् । जुषाणः ॥ ३ ॥

ऊधनि गोरूधस्येतद्दधिघर्माख्यं हविः पयोरूपेण श्रातं पक्कमिति मन्ये जाने । पुनश्च दुग्धं पयः अग्नौ अपि श्रातं पक्कम् । इदानीं दध्यवस्थमप्यग्नौ पच्यते । अतः सुश्रातं सुपक्कमिति मन्ये जाने । अत एतद्धविः[1] ऋतं सत्यभूतं नवीयः नवतरं प्रत्यग्रतरं भवति । हे वज्रिन् वज्रवन् हे पुरुकृत् बहुकर्मकृत् इन्द्र जुषाणः प्रीयमाणस्त्वं माध्यंदिनस्य मध्यंदिने भवस्य सवनस्य सोमस्य संबन्धिनः दध्नः । कर्मणि षष्ठी । दधिघर्माख्यं हविः[2] पिब ॥ ॥ ३७ ॥

'प्र ससाहिषे' इति तृचमेकोनत्रिंशं सूक्तमिन्द्रपुत्रस्य जयस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं—'प्र ससाहिषे जय ऐन्द्रः' इति । गतः सूक्तविनियोगः । दर्शे इन्द्रस्य हविषः 'प्र ससाहिषे' इत्येषा याज्या । सूत्रितं च—'प्र ससाहिषे पुरुहूत शत्रून् महाँ इन्द्रो य ओजसा' (आश्व. श्रौ. १.६) इति । एकादशिन ऐन्द्रपशौ पुरोडाशस्येयमेव याज्या । सूत्रितं च—'प्र ससाहिषे पुरुहूत शत्रून् स्वस्तये वाजिभिश्च प्रणेतः' (आश्व. श्रौ. ३. ७) इति । देवसुवां हविःषु इन्द्रस्येयमेवानुवाक्या । सूत्रितं च—'प्र ससाहिषे पुरुहूत शत्रून् भुवस्त्वमिन्द्र ब्रह्मणा महान्' (आश्व. श्रौ. ४.११) इति ॥

प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु ।
इन्द्रा भर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम् ॥ १ ॥

प्र । ससहिषे । पुरुऽहूत । शत्रून् । ज्येष्ठः । ते । शुष्मः । इह । रातिः । अस्तु ।
इन्द्र । आ । भर । दक्षिणेन । वसूनि । पतिः । सिन्धूनाम् । असि । रेवतीनाम् ॥ १ ॥

हे पुरुहूत बहुभिराहूतेन्द्र शत्रून् वैरिणः प्र ससाहिषे प्रकर्षेणाभिभवसि । ते तव शुष्मः शोषकं बलं ज्येष्ठः प्रशस्यतमं वृद्धतमं वा भवति । इह अस्मिन् कर्मणि रातिः तव दानम् अस्तु अस्मभ्यं भवतु । तदर्थं हे इन्द्र दक्षिणेन हस्तेन वसूनि धनानि आ भर आहर आनय । त्वं रेवतीनां रयिमतीनां बहुधनानां सिन्धूनां स्यन्दनशीलानां नदीनां पतिः असि स्वामी भवसि ॥ रयिशब्दान्मतुपि 'रयेर्मतौ बहुलम्' इति संप्रसारणम् । 'छन्दसीरः' इति मतुपो वत्वम् । 'रेशब्दाच्च' (का. ६.१.१७६.१) इति तस्योदात्तत्वम् ॥

वैमृधस्य हविषः 'मृगो न' इत्येषा याज्या । सूत्रितं च—'वि न इन्द्र मृधो जहि मृगो न भीमः कुचरो गिरिष्ठाः' (आश्व. श्रौ. २. १०) इति ॥

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताळ्हि वि मृधो नुदस्व ॥ २ ॥

मृगः । न । भीमः । कुचरः । गिरिऽस्थाः । पराऽवतः । आ । जगन्थ । परस्याः ।
सृकम् । सम्ऽशाय । पविम् । इन्द्र । तिग्मम् । वि । शत्रून् । ताळ्हि । वि । मृधः । नुदस्व ॥२॥

---

१. त–एव हविः । २. त१.२.३.६.७.८–भ–दधि हविः ।

ᐯकुचरः कुत्सितचरणः ᐯगिरिष्ठाः पर्वतनिवासी ᐯमृगो ᐯन सिंह इव हे इन्द्र त्वं ᐯभीमः भयंकरोऽसि । स त्वं ᐯपरस्याः ᐯपरावतः अतिशयेन दूरात् द्युलोकात् ᐯआ ᐯजगन्थ आगच्छ ॥ गमेश्छान्दसे लिटि[1] क्रादिनियमप्राप्तस्येटः ' उपदेशेऽत्वतः ' ( पा. सू. ७.२.६२ ) इति प्रतिषेधः ॥ आगत्य च ᐯसृकं सरणशीलं ᐯतिग्मं तीक्ष्णं ᐯपविं वज्रं ᐯसंशाय सम्यक् तीक्ष्णीकृत्य ᐯशत्रून् अस्मदीयान् वैरिणो हे ᐯइन्द्र तेन वज्रेण ᐯवि ᐯताळिह विशेषेण ताडय । विनाशयेत्यर्थः ॥ ' तड आघाते ' । अस्माल्लोटि व्यन्ताद्रूपमेतत् ॥ तथा ᐯमृधः संग्रामोद्युक्तान् युयुत्सूनन्यानपि ᐯवि ᐯनुदस्व विशेषेण[2] तिरस्कुरु ॥

इन्द्र॑ क्ष॒त्रम॒भि वा॒ममोजोऽजा॑यथा वृषभ चर्ष॒णीना॑म् ।
अपा॑नुदो॒ जन॑ममित्र॒यन्त॑मु॒रुं दे॒वेभ्यो॑ अकृणोरु लो॒कम् ॥ ३ ॥

इन्द्र॑ । क्ष॒त्रम् । अ॒भि । वा॒मम् । ओजः॑ । अजा॑यथाः । वृ॒ष॒भ॒ । च॒र्ष॒णीना॑म् ।
अप॑ । अ॒नु॒दः॒ । जन॑म् । अ॒मि॒त्र॒ऽयन्त॑म् । उ॒रुम् । दे॒वेभ्यः॑ । अ॒कृ॒णोः॒ । ऊँ इति॑ । लो॒कम् ॥ ३ ॥

हे ᐯइन्द्र ᐯक्षत्रं क्षतात्त्रायकं ᐯवामं वननीयं ᐯओजः बलमभिलक्ष्य ᐯअजायथाः उत्पन्नोऽसि । हे ᐯवृषभ कामानां वर्षितः ᐯचर्षणीनां मनुष्याणामस्माकम् ॥ ' नामन्यतरस्याम् ' इति नाम उदात्तत्वम् ॥ ᐯअमित्रयन्तम् । अमित्रः शत्रुः । स इवाचरन्तं ᐯजनम् ᐯअपानुदः अपागमयः । ᐯदेवेभ्यः च ᐯउरुं विस्तीर्णं ᐯलोकं स्वर्गाख्यम् ᐯअकृणोः अकार्षीः । उशब्दः समुच्चये ॥ ॥ ३८ ॥

' प्रथः ' इति तृचं त्रिंशं सूक्तं वैश्वदेवं त्रैष्टुभम् । वासिष्ठः प्रथसंज्ञ ऋषिः प्रथमायाः । भारद्वाजः सप्रथाख्य ऋषिर्द्वितीयायाः । सूर्यपुत्रो घर्म ऋषिस्तृतीयायाः । तथा चानुक्रान्तं—' प्रथश्चैकर्चाः प्रथो वासिष्ठः सप्रथो भारद्वाजो घर्मः सौर्यो वैश्वदेवम् ' इति । प्रवर्ग्येऽभिष्टव एतत्सूक्तम् । सूत्रितं च— ' गणानां त्वा प्रथश्च यस्य ' ( आश्व. श्रौ. ४. ६ ) इति ॥

प्रथ॑श्च॒ यस्य॑ स॒प्रथ॑श्च॒ नामानु॑ष्टुभस्य ह॒विषो॑ ह॒विर्यत् ।
धा॒तुर्द्युता॑नात्सवि॒तुश्च॒ विष्णो॑ रथंत॒रमा ज॑भारा॒ वसि॑ष्ठः ॥ १ ॥

प्रथः॑ । च॒ । यस्य॑ । स॒ऽप्रथः॑ । च॒ । नाम॑ । आनु॑ऽस्तुभस्य । ह॒विषः॑ । ह॒विः । यत् ।
धा॒तुः । द्युता॑नात् । स॒वि॒तुः । च॒ । विष्णोः॑ । र॒थ॒म्ऽत॒रम् । आ । ज॒भा॒र॒ । वसि॑ष्ठः ॥ १ ॥

ᐯयस्य वसिष्ठस्य ᐯप्रथः ᐯनाम पुत्रो यस्य भरद्वाजस्य ᐯसप्रथः नाम पुत्रः तयोर्मध्ये ᐯवसिष्ठः ᐯआनुष्टुभस्य अनुष्टुप्छन्दसा युक्तस्य ᐯहविषः घर्माख्यस्य ᐯयत् ᐯहविः हविष्ट्वापादकं ᐯरथन्तरम् । रथरंहःसाधनं साम तद्रथन्तरम् । ᐯधातुः धातृसंज्ञाद्देवात् ᐯद्युतानात् द्योतमानात् ᐯसवितुश्च ᐯविष्णोः च ᐯआ ᐯजभार आजहार । हृतवान् ॥ ' हृग्रहोर्भः ' इति भत्वम् । रथशब्दोपपदात्तरतेः संज्ञायां ' भृतॄवृजि॰' इति खच् । ' अरुर्द्विषदजन्तस्य ' इति मुमागमः ॥

अवि॑न्दन् ते॒ अति॑हितं॒ यदासी॑द्य॒ज्ञस्य॒ धाम॑ पर॒मं गुहा॒ यत् ।
धा॒तुर्द्युता॑नात्सवि॒तुश्च॒ विष्णो॑र्भ॒रद्वा॑जो बृ॒हदा च॑क्रे अ॒ग्नेः ॥ २ ॥

अवि॑न्दन् । ते । अति॑ऽहितम् । यत् । आसी॑त् । य॒ज्ञस्य॑ । धाम॑ । प॒र॒मम् । गुहा॑ । यत् ।
धा॒तुः । द्युता॑नात् । स॒वि॒तुः । च॒ । विष्णोः॑ । भ॒रत्ऽवा॑जः । बृ॒हत् । आ । च॒क्रे॒ । अ॒ग्नेः ॥ २ ॥

---

१. त४–लिटि थलि । २. त४.५–विशेषेण प्रेरय ।

ᵛते धात्रादयः तत् ᵛअविन्दन् अलभन्त ᵛयत् बृहत्सामाख्यं घर्मस्य हविषः संस्कारकम् ᵛअतिहितं तिरोहितम् ᵛआसीत् । ᵛयत् च बृहत्साम ᵛयज्ञस्य ज्योतिष्टोमादेः ᵛपरमम् उत्कृष्टं ᵛधाम धारकं शरीरभूतं वा ᵛगुहा गुहायामस्मदादिविषये निहितमासीत् तत्ते धात्रादयोऽलभन्त । तेभ्यः ᵛअग्नेः ᵛच सकाशात्तत् ᵛबृहत् साम ᵛभरद्वाजः ऋषिः ᵛआ ᵛचक्रे आभिमुख्येन कृतवान् । आहृतवानित्यर्थः ॥

**तेऽविन्दन्मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानम् ।**
**धातुर्द्युतानात्सवितुश्च विष्णोरा सूर्यादभरन् घर्ममेते ॥ ३ ॥**

ते । अविन्दन् । मनसा । दीध्यानाः । यजुः । स्कन्नम् । प्रथमम् । देवऽयानम् ।
धातुः । द्युतानात् । सवितुः । च । विष्णोः । आ । सूर्यात् । अभरन् । घर्मम् । एते ॥ ३ ॥

ᵛते धात्रादयः ᵛदीध्यानाः दीप्यमानाः सन्तः ᵛमनसा बुद्ध्या ᵛअविन्दन् अलभन्त । किं तत् । ᵛयजुः यागसाधनं ᵛस्कन्नं स्कन्दनीयमासेचनीयं प्रवृञ्जनसाधनं ᵛप्रथमं मुख्यं ᵛदेवयानं देवानां प्राप्तिसाधनं ᵛघर्मम् । एवं धात्रादिभिः प्रथममुपलब्धं तं घर्मं ᵛधातुः द्योतमानात् ᵛसवितुः ᵛविष्णोः ᵛसूर्यात् ᵛच ᵛएते ऋत्विजः ᵛआ ᵛअभरन् आहरन् । आनीतवन्त इत्यर्थः ॥ ॥ ३९ ॥

' बृहस्पतिः ' इति तृचमेकत्रिंशं सूक्तं बृहस्पतिदेवत्यं त्रैष्टुभम् । बृहस्पतिपुत्रस्तपुर्मूर्धा नामर्षिः । तथा चानुक्रान्तं—' बृहस्पतिस्तपुर्मूर्धा बार्हस्पत्यो बार्हस्पत्यम् ' इति । गतो विनियोगः ॥

**बृहस्पतिर्नयतु दुर्गहा तिरः पुनर्नेषदघशंसाय मन्म ।**
**क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ १ ॥**

बृहस्पतिः । नयतु । दुःऽगहा । तिरः । पुनः । नेषत् । अघऽशंसाय । मन्म ।
क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः ॥ १ ॥

ᵛबृहस्पतिः बृहतां देवानां पतिः पालयिता ॥ ' तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ' ( पा. सू. ६. १. १५७ ) इति सुडागमस्तलोपश्च । ' उभे वनस्पत्यादिषु'' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥ ᵛदुर्गहा दुर्गमनानां हन्ता स देवः ᵛतिरः ᵛनयतु तिरस्कर्तव्यानि पापान्यपसारयतु । ᵛअघशंसाय अस्माकमनर्थमाशंसमानाय पुरुषाय ᵛमन्म । मन्यतेर्दीप्तिकर्मणो मन्म । दीप्तमायुधं ᵛपुनर्नेषत् नयतु । नयतेर्लेट्यडागमः । ' सिब्बहुलम्' ' इति सिप् । अपि च ᵛअशस्तिम् अयशस्विनं शत्रुं ᵛक्षिपत् क्षिपतु अस्मत्तः प्रेरयतु । ᵛदुर्मतिं दुर्बुद्धिं च ᵛअप ᵛहन् अपहन्तु । ᵛअथ अनन्तरं ᵛशं रोगाणां शमनं ᵛयोः भयानां यावनं च ᵛकरत् ॥

**नराशंसो नोऽवतु प्रयाजे शं नो अस्त्वनुयाजो हवेषु ।**
**क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ २ ॥**

नराशंसः । नः । अवतु । प्रऽयाजे । शम् । नः । अस्तु । अनुऽयाजः । हवेषु ।
क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः ॥ २ ॥

पञ्चसु प्रयाजेषु द्वितीयः प्रयाजो नराशंसदेवताकः । तस्मिन् ᵛप्रयाजे देवताभूतः ᵛनराशंसः नरैः शंसनीयोऽग्निः ᵛनः अस्मान् ᵛअवतु रक्षतु । ᵛहवेषु आह्वानेषु सत्सु ᵛअनुयाजः । त्रयोऽनुयाजाः । द्वितीयोऽनुयाजो नराशंसः । तस्यानुयाजस्य देवताभूतो नराशंसोऽग्निश्च ᵛनः अस्माकं ᵛशं सुखकरः ᵛअस्तु । बृहस्पतिश्च ᵛअशस्तिं ᵛक्षिपत् इत्यादि पूर्ववत् ॥

तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हन्तवा उ ।
क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ ३ ॥

तपुःऽमूर्धा । तपतु । रक्षसः । ये । ब्रह्मऽद्विषः । शरवे । हन्तवै । ऊँ इति ।
क्षिपत् । अशस्तिम् । अप । दुःऽमतिम् । हन् । अथ । करत् । यजमानाय । शम् । योः ॥३॥

ᵛतपुर्मूर्धा तापकशिरस्को बृहस्पतिः ᵛरक्षसः ᵛये ᵛब्रह्मद्विषः ब्राह्मणद्वेष्टारो राक्षसाः तान् राक्षसान् ᵛतपतु तापयतु । दहत्वित्यर्थः । किमर्थम् । ᵛशरवे शरुं हिंसकं रक्षसामधिपतिं ᵛहन्तवै हन्तुम् । अनुचरान् पूर्वं नाशयतु पश्चादेनमपि नाशयत्वित्यर्थः । 'शॄ[1] हिंसायाम्' इत्यस्मात् 'शॄस्वृस्निहि' इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी । हन्तेः 'तुमर्थे सेसेन्' इति तवैप्रत्ययः । 'अन्तश्च तवै युगपत्' इत्याद्यन्तयोर्युगपदुदात्तत्वम् । उशब्दः पूरकः ॥ ॥ ४० ॥

'अपश्यम्' इति तृचं द्वात्रिंशं सूक्तं त्रैष्टुभम् । प्रजापतिपुत्रः प्रजावान्नामर्षिः । ऋचः क्रमेण यजमानपत्नीहोतृणामाशिषः प्रतिपादिकाः । अतस्तद्देवताकाः । तथा चानुक्रान्तम्—'अपश्यं प्रजावान् प्राजापत्योऽन्त्यृचं यजमानपत्नीहोत्राशिषः' इति । प्रवर्ग्येऽभिष्टव एतत्सूक्तम् । सूत्र्यते हि—'अपश्यं त्वेत्येतस्याद्यया यजमानमीक्षते द्वितीयया पत्नीं तृतीययात्मानम्' ( आश्व. श्रौ. ४. ६ ) इति ॥

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् ।
इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥ १ ॥

अपश्यम् । त्वा । मनसा । चेकितानम् । तपसः । जातम् । तपसः । विऽभूतम् ।
इह । प्रऽजाम् । इह । रयिम् । रराणः । प्र । जायस्व । प्रऽजया । पुत्रऽकाम ॥ १ ॥

हे यजमान ᵛत्वा त्वां ᵛमनसा बुद्ध्या ᵛअपश्यम् अदर्शम् । कीदृशम् । ᵛचेकितानं कर्माणि भृशं जानन्तं ᵛतपसः दीक्षारूपाद्व्रतात्[2] ᵛजातं पुनरुत्पन्नं यद्वा जन्मान्तरानुष्ठितात्सुकृतादुत्पन्नं ᵛतपसः अनुष्ठीयमानाद्यज्ञाद्धेतोः ᵛविभूतं व्याप्तं सर्वत्र प्रख्यातम् । हे ᵛपुत्रकाम पुत्रान् कामयमान स त्वम् ᵛइह अस्मिँल्लोके ᵛप्रजां पुत्रपौत्रादिरूपां ᵛरराणः रमयन् ᵛरयिं धनम्[3] ᵛइह अस्मिँल्लोके रमयन् ᵛप्रजया प्रजनेन ᵛप्र ᵛजायस्व[4] पुत्रादिरूपेणोत्पद्यस्व[5] । प्रजा उत्पादयेत्यर्थः ॥

अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् ।
उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥ २ ॥

अपश्यम् । त्वा । मनसा । दीध्यानाम् । स्वायाम् । तनू इति । ऋत्व्ये । नाधमानाम् ।
उप । माम् । उच्चा । युवतिः । बभूयाः । प्र । जायस्व । प्रऽजया । पुत्रऽकामे ॥ २ ॥

हे पत्नि[6] ᵛदीध्यानां दीप्यमानां ᵛस्वायाम् आत्मीयायां ᵛतनू तन्वां शरीरे ᵛऋत्व्ये । ऋतुकाले भवं गर्भधारणरूपं कर्म ऋत्वियम् । तस्मिन्निमित्तभूते ᵛनाधमानां भर्तुरुपगमनं याचमानां ᵛत्वा त्वां ᵛमनसा ᵛअपश्यम् अद्राक्षम् । हे ᵛपुत्रकामे पुत्रान् कामयमाने ᵛमाम् ᵛउप मत्समीपं

---

१. त१.२.३.६.७–शरवे शॄ; त८–किमर्थं शरवे शॄ । २. त१.२.३.६.७.८-भ२.४.८–ईक्षारूपा° । ३. त४.५–धनं च । ४. त१.२.३.६.७.८-भ–जायस्व प्रजा उत्पादय; त४.५–जायस्व प्रजा उत्पादयस्व । ५. त१.२.६.८-भ१.४.७–°णोत्पाद्यस्व । ६. त४.५–युवति ।

प्राप्य सा त्वम् <sup>v</sup>उच्चा उच्चैर्भृशं <sup>v</sup>युवतिः तरुणी <sup>v</sup>बभूयाः भूयाः । ' छन्दस्युभयथा ' इत्याशीर्लिङः सार्वधातुकत्वाच्छप् । तस्य छान्दसः श्लुः । अलिट्यपि व्यत्ययेन ' भवतेरः ' ( पा. सू. ७. ४. ७३ ) इत्यभ्यासस्यात्वम् । युवतिर्भूत्वा च <sup>v</sup>प्रजया प्रजनेन <sup>v</sup>प्र <sup>v</sup>जायस्व पुत्रान् प्रसूष्व । 'जनी प्रादुर्भावे'। श्यनि ' ज्ञाजनोर्जा ' इति जादेशः ॥

अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः ।
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥ ३ ॥

अहम् । गर्भम् । अदधाम् । ओषधीषु । अहम् । विश्वेषु । भुवनेषु । अन्तरिति ।
अहम् । प्रऽजाः । अजनयम् । पृथिव्याम् । अहम् । जनिऽभ्यः । अपरीषु । पुत्रान् ॥ ३ ॥

<sup>v</sup>अहं होता <sup>v</sup>ओषधीषु शाल्यादिषु फलार्थं <sup>v</sup>गर्भमदधां धारयामि । <sup>v</sup>विश्वेषु सर्वेष्वन्येष्वपि <sup>v</sup>भुवनेषु भूतजातेषु <sup>v</sup>अन्तः मध्ये <sup>v</sup>अहम् एव गर्भं धारयामि । तथा <sup>v</sup>पृथिव्यां भूम्यां <sup>v</sup>प्रजाः सर्वान् मनुष्यान् <sup>v</sup>अहम् <sup>v</sup>अजनयं जनयामि । <sup>v</sup>जनिभ्यः जायाभ्यः <sup>v</sup>अपरीषु अन्यास्वपि[1] स्त्रीषु <sup>v</sup>पुत्रान् <sup>v</sup>अहम् अजनयं जनयामि । मत्साध्येन यागेन सर्वस्योत्पत्तेरहं सर्वजननहेतुर्भवामीत्यर्थः ॥ ॥४१॥

' विष्णुः' इति तृचं त्र्यशीतिशं सूक्तमानुष्टुभम् । गर्भाणां कर्ता त्वष्टा नामर्षिः प्रजापतिपुत्रो विष्णुर्वा । लिङ्गोक्ता विष्णुत्वष्टृप्रजापतिसिनीवालीसरस्वत्यश्विन इति देवताः । तथा चानुक्रान्तं—' विष्णुस्त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यो गर्भार्थाशीर्लिङ्गोक्तदैवतमानुष्टुभम् ' इति । लैङ्गिको विनियोगः ॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ १ ॥

विष्णुः । योनिम् । कल्पयतु । त्वष्टा । रूपाणि । पिंशतु ।
आ । सिञ्चतु । प्रजाऽपतिः । धाता । गर्भम् । दधातु । ते ॥ १ ॥

<sup>v</sup>विष्णुः व्यापको देवः <sup>v</sup>योनिं गर्भाधानस्थानं <sup>v</sup>कल्पयतु करोतु । <sup>v</sup>त्वष्टा तनुकर्ता एतत्संज्ञको देवश्च <sup>v</sup>रूपाणि निरूपकाणि स्त्रीत्वपुंस्त्वाभिव्यञ्जकानि चिह्नानि <sup>v</sup>पिंशतु अवयवीकरोतु ॥ ' पिश अवयवे ' । मुचादित्वान्नुम् ॥ एवं प्रक्लृप्तायां योन्यां <sup>v</sup>प्रजापतिः रेतः <sup>v</sup>आ <sup>v</sup>सिञ्चतु निषिञ्चतु । विसृजत्वित्यर्थः । <sup>v</sup>धाता धारको देवो हे जाये <sup>v</sup>ते तव <sup>v</sup>गर्भं गर्भरूपेण परिणतं तद्रेतः <sup>v</sup>दधातु । तत्रैव धारयतु । स्रावपातापप्रसवा मा भूवन्नित्यर्थः ॥

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ २ ॥

गर्भम् । धेहि । सिनीवालि । गर्भम् । धेहि । सरस्वति ।
गर्भम् । ते । अश्विनौ । देवौ । आ । धत्ताम् । पुष्करऽस्रजा ॥ २ ॥

हे <sup>v</sup>सिनीवालि एतत्संज्ञे देवि <sup>v</sup>गर्भं <sup>v</sup>धेहि । निषिक्तं गर्भं धारय । हे[2] <sup>v</sup>सरस्वति त्वं च निषिक्तं <sup>v</sup>गर्भं धारय[2] । हे जाये <sup>v</sup>पुष्करस्रजा पुष्करमालिनौ स्वर्णकमलाभरणौ <sup>v</sup>अश्विनौ <sup>v</sup>देवौ <sup>v</sup>ते तव <sup>v</sup>गर्भम् <sup>v</sup>आ <sup>v</sup>धत्तां प्रक्षिपताम् । कुरुतामित्यर्थः ॥

हिरण्ययी अरणी यं निर्मन्थतो अश्विना ।
तं ते गर्भं हवामहे दशमे मासि सूतवे ॥ ३ ॥

---

१. त४.५-अपरास्त्वपि । २. त१.२.३.६.७.८-म२.४.५.८-' हे सरस्वति......धारय ' नास्ति ।

हिरण्ययी इति । अरणी इति । यम् । निःऽमन्थतः । अश्विना ।
तम् । ते । गर्भम् । हवामहे । दशमे । मासि । सूतवे ॥ ३ ॥

ᵛहिरण्ययी हिरण्मय्यौ ᵛअरणी ᵛयं गर्भमुद्दिश्य ᵛअश्विना अश्विनौ देवौ ᵛनिर्मन्थतः निर्मथितवन्तौ हे जाये ᵛते तुभ्यं त्वदर्थं ᵛतं ᵛगर्भं ᵛहवामहे आह्वयामहे । ᵛदशमे ᵛमासि ᵛसूतवे प्रसोतुम् ॥ 'पद्दन्' इत्यादिना मासशब्दस्य मास्भावः । सूतेः 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः ॥ ॥४२॥

'महि' इति तृचं चतुस्त्रिंशं सूक्तं वरुणपुत्रस्य सत्यधृतेरार्षं गायत्रमादित्यदेवताकम् । तथा चानुक्रान्तं—'महि सत्यधृतिर्वारुणिरादित्यं स्वस्त्ययनं गायत्रं वा' इति । धनलिप्सया प्रवसन्तं शिष्यमाचार्योऽनेन सूक्तेनाभिमन्त्रयते । सूत्र्यते हि—'महि त्रीणामित्यनुमन्त्र्यैवमतिसृष्टस्य न कुतश्चिद्भयं भवतीति विज्ञायते' (आश्व. गृ. ३. १०. ७-८) इति ॥

**महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ १ ॥**

महि । त्रीणाम् । अवः । अस्तु । द्युक्षम् । मित्रस्य । अर्यम्णः । दुःऽआधर्षम् । वरुणस्य ॥ १ ॥

ᵛत्रीणां त्रयाणां ᵛमित्रस्य ᵛअर्यम्णः ᵛवरुणस्य च ᵛद्युक्षं दीप्तमत एव ᵛदुराधर्षम् अन्यैर्धर्षितुं बाधितुमशक्यं ᵛमहि महत् ᵛअवः रक्षणमस्माकम् ᵛअस्तु । 'त्रीणामित्यपि छन्दसि दृश्यते' (का. ७. १. ५३. १) इति वचनात् त्रयादेशाभावः । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम्॥

**नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः ॥ २ ॥**

नहि । तेषाम् । अमा । चन । न । अध्वऽसु । वारणेषु । ईशे । रिपुः । अघऽशंसः ॥ २ ॥

अमेति गृहनाम । ᵛअमा ᵛचन गृहेष्वपि ᵛतेषां वरुणमित्रार्यम्णां तदनुगृहीतानां स्तोतॄणां वा ᵛअघशंसः अघमनर्थमाशंसमानः ᵛरिपुः शत्रुः ᵛनहि ᵛईशे न[1] खलु[1] हिंसितुमीष्टे ॥ 'लोपस्त आत्मनेपदेषु' इति तलोपः । अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते[2] ॥ तथा ᵛअध्वसु मार्गेषु ᵛवारणेषु यत्र पुरुषा निवार्यन्ते तेषु च स्थानेषु शत्रुर्निवारयितुं ᵛन ईष्टे ॥

**यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ॥ ३ ॥**

यस्मै । पुत्रासः । अदितेः । प्र । जीवसे । मर्त्याय । ज्योतिः । यच्छन्ति । अजस्रम् ॥ ३ ॥

ᵛअदितेः अदीनाया देवमातुः ᵛपुत्रासः पुत्रा मित्रादयः ᵛयस्मै ᵛमर्त्याय मनुष्याय स्तोत्रे ᵛअजस्रम् अविच्छिन्नं ᵛज्योतिः तेजः ᵛजीवसे जीवितुं ᵛप्र ᵛयच्छन्ति तस्य शत्रुर्नेश्वर इत्यर्थः ॥ ॥४३॥

'वातः' इति तृचं पञ्चत्रिंशं सूक्तं वातगोत्रस्योलस्यार्षं गायत्रं वायुदेवताकम् । तथा चानुक्रान्तं—'वातो वातायन उलो वायव्यम्' इति । गतो विनियोगः ॥

**वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूंषि तारिषत् ॥ १ ॥**

वातः । आ । वातु । भेषजम् । शम्ऽभु । मयःऽभु । नः । हृदे ।
प्र । नः । आयूंषि । तारिषत् ॥ १ ॥

ᵛवातः वायुः ᵛनः अस्माकं ᵛहृदे हृदयाय ᵛभेषजम् औषधमुदकं वा ᵛआ ᵛवातु आगमयतु । कीदृग्भूतम्[3] । ᵛशंभु रोगशमनस्य भावयितृ ᵛमयोभु सुखस्य च भावयितृ । अपि च ᵛनः अस्माकम् ᵛआयूंषि ᵛप्र ᵛतारिषत् प्रवर्धयतु ॥

---

१. त१.२.३.६.७.८-म-न हि त्वा खलु । २. त१.२.३.६.७.८-म-'शिष्यते' नास्ति । ३. त१.२.३.६.७.८-म-मु-ईदृग्भूतं ।

उत वात पितासि न उत भ्रातोत नः सखा। स नो जीवातवे कृधि ॥२॥
उत। वात। पिता। असि। नः। उत। भ्राता। उत। नः। सखा।
सः। नः। जीवातवे। कृधि ॥ २ ॥

उत अपि च हे वात त्वं नः अस्माकं पिता असि उत्पादको भवसि। उत अपि च भ्राता भवसि[1]। उत अपि च नः अस्माकं सखा समानख्यानो मित्रभूतश्च भवसि। सः त्वं नः अस्मान् जीवातवे जीवनहेतवे यागाय कृधि कुरु॥ करोतेश्छान्दसो विकरणस्य लुक्। 'श्रुशृणुपृकृवृभ्यः०' इति हेर्धिः ॥

यददो वात ते गृहे३मृतस्य निधिर्हितः। ततो नो देहि जीवसे ॥ ३ ॥
यत्। अदः। वात। ते। गृहे। अमृतस्य। निऽधिः। हितः। ततः। नः। देहि। जीवसे ॥३॥

हे वात वायो ते तव गृहे स्थाने यददः योऽसौ अमृतस्य अमरणस्य निधिः निक्षेपः हितः स्थापितो वर्तते ततः तस्मान्निधेराहृत्यामृतत्वं जीवसे नः अस्माकं जीवनाय देहि प्रयच्छ ॥ ॥ ४४ ॥

'प्राग्नये' इति पञ्चर्चं षट्त्रिंशं सूक्तमग्नेः पुत्रस्य वत्सस्यार्षं गायत्रमाग्नेयम्। तथा चानुक्रान्तं—'प्राग्नये पञ्चाग्नेयो वत्स आग्नेयं तु' इति। प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसीदमादिके द्वे सूक्ते। सूत्र्यते हि—'प्राग्नये वाचमिति सूक्त इमां मे अग्ने समिधम्' (आश्व. श्रौ. ४. १३) इति। दशरात्रस्य नवमेऽहन्याग्निमारुत इदं जातवेदसं निविद्धानम्। सूत्रितं च—'मरुतो यस्य हि प्राग्नये वाचमित्याग्निमारुतम्' (आश्व. श्रौ. ८. ११) इति ॥

प्राग्नये वाचमीरय वृषभाय क्षितीनाम्। सः नः पर्षदति द्विषः ॥ १ ॥
प्र। अग्नये। वाचम्। ईरय। वृषभाय। क्षितीनाम्। सः। नः। पर्षत्। अति। द्विषः ॥१॥

हे स्तोतः अग्नये स्तुतिरूपां वाचं प्र ईरय उच्चारय। कथंभूताय। क्षितीनां मनुष्याणां यजमानानां वृषभाय कामानां वर्षित्रे। किं प्रयोजनमिति चेत्। सः अग्निः नः अस्मान् द्विषः द्वेष्टॄन् अति पर्षत् अतिपारयेत् ॥

यः परस्याः परावतस्तिरो धन्वातिरोचते। स नः पर्षदति द्विषः ॥ २ ॥
यः। परस्याः। पराऽवतः। तिरः। धन्व। अतिऽरोचते। सः। नः। पर्षत्। अति। द्विषः ॥२॥

यः अग्निः परस्याः परावतः अतिशयिताद्दूरदेशात् तिरः। प्राप्तनामैतत्। प्राप्तसंबन्धं धन्व मरुभूमिं जलवर्जितं देशम् अतिरोचते अतिक्रम्य प्रज्वलति। यद्वा। धन्व अन्तरिक्षम्। धन्वन्यन्तरिक्षे तिरस्तिर्यग्गतिरोचते भृशं प्रकाशते। गतमन्यत् ॥

यो रक्षांसि निजूर्वत्यग्निस्तिग्मेन शोचिषा। स नः पर्षदति द्विषः ॥ ३ ॥
यः। रक्षांसि। निऽजूर्वति। वृषा। शुक्रेण। शोचिषा। सः। नः। पर्षत्। अति। द्विषः ॥३॥

वृषा वर्षिता यः अग्निः शुक्रेण निर्मलेन शुभ्रवर्णेन वा शोचिषा तेजसा रक्षांसि यज्ञस्य हन्तॄणि निजूर्वति निहिनस्ति। जूर्वी हिंसार्थः। गतमन्यत् ॥

यो विश्वाभि विपश्यति भुवना सं च पश्यति। स नः पर्षदति द्विषः ॥ ४ ॥
यः। विश्वा। अभि। विऽपश्यति। भुवना। सम्। च। पश्यति। सः। नः। पर्षत्। अति। द्विषः ॥४॥

---

१. भ—असि।

ᵛयः अग्निः सूर्यरूपेण ᵛविश्वा विश्वानि सर्वाणि भूतजातानि ᵛअभि अभिमुखं ᵛविपश्यति विशेषेण तेजसा प्रेक्षते। प्रकाशयतीत्यर्थः। ᵛभुवना भुवनानि भूतजातानि ᵛसं ᵛपश्यति ᵛच सम्यग्जानाति च। अन्यत्सिद्धम्[1] ॥

**यो अस्य पारे रजसः शुक्रो अग्निरजायत। स नः पर्षदति द्विषः ॥ ५ ॥**

यः। अस्य। पारे। रजसः। शुक्रः। अग्निः। अजायत। सः। नः। पर्षत्। अति। द्विषः ॥५॥

ᵛअस्य ᵛरजसः[2] लोकस्यान्तरिक्षस्य ᵛपारे उपरिदेशे[3] ᵛशुक्रः शुभ्रवर्णः ᵛयः ᵛअग्निः विद्युदात्मना[4] सूर्यात्मना वा ᵛअजायत प्रादुर्भवति ᵛसः ᵛनः अस्मान् ᵛद्विषः द्वेष्टॄन् ᵛअति ᵛपर्षत् अतिपारयतु ॥ ॥ ४५ ॥

'प्र नूनम्' इति तृचं सप्तत्रिंशं सूक्तमग्निपुत्रस्य श्येनस्यार्षं गायत्रम्। जातवेदोगुणकोऽग्निर्देवता। तथा चानुक्रान्तं—'प्र नूनं तृचमाग्नेयः श्येनो जातवेदस्यम्' इति। प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

**प्र नूनं जातवेदसमश्वं हिनोत वाजिनम्। इदं नो बर्हिरासदे ॥ १ ॥**

प्र। नूनम्। जातऽवेदसम्। अश्वम्। हिनोत। वाजिनम्। इदम्। नः। बर्हिः। आऽसदे ॥१॥

ᵛजातवेदसं जातानां वेदितारं जातधनादिकं वा ᵛअश्वं कर्मभिर्व्याप्नुवन्तं ᵛवाजिनम् अन्नवन्तं हे ऋत्विग्यजमानाः ᵛनूनम् अवश्यं ᵛप्र ᵛहिनोत प्रवर्धयत। यद्वा। अश्वमिव स्तुतिभिः प्रेरयत। 'हि गतौ वृद्धौ च'। अस्माल्लोटि तशब्दस्य 'तप्तनप्तनथनाश्च' इति तबादेशः। किमर्थम्। ᵛनः अस्माकम् ᵛइदं ᵛबर्हिः आस्तीर्णम् ᵛआसदे आसत्तुं प्राप्तुम्। बर्हिरासीदत्वित्यर्थः ॥ सदेः 'कृत्यार्थे तवैकेन्' इति केन्प्रत्ययः ॥

**अस्य प्र जातवेदसो विप्रवीरस्य मीळ्हुषः। महीमियर्मि सुष्टुतिम् ॥ २ ॥**

अस्य। प्र। जातऽवेदसः। विप्रऽवीरस्य। मीळ्हुषः। महीम्। इयर्मि। सुऽस्तुतिम् ॥ २ ॥

ᵛजातवेदसः जातानां वेदितुः ᵛविप्रवीरस्य। विप्रा मेधाविनो यजमाना वीराः पुत्रा यस्य। तादृशस्य ᵛमीळ्हुषः सेक्तुः ᵛअस्य अग्नेः ᵛमहीं[5] महतीं ᵛसुष्टुतिं शोभनां स्तुतिं ᵛप्र ᵛइयर्मि प्रेरयामि ॥ 'ऋ गतौ'। जौहोत्यादिकः। 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् ॥

**या रुचो जातवेदसो देवत्रा हव्यवाहनीः। ताभिर्नो यज्ञमिन्वतु ॥ ३ ॥**

याः। रुचः। जातऽवेदसः। देवऽत्रा। हव्यऽवाहनीः। ताभिः। नः। यज्ञम्। इन्वतु ॥३॥

ᵛजातवेदसः अग्नेः ᵛयाः ᵛरुचः रोचमानाः कालीकरालीप्रभृतयः सप्त जिह्वाः ᵛदेवत्रा देवान् प्रति ॥ 'देवमनुष्यपुरुषपुरुमर्त्येभ्यः' (पा.सू. ५.४.५६) इत्यादिना द्वितीयार्थे त्राप्रत्ययः ॥ ᵛहव्यवाहनीः[6] हव्यानां हविषां वोढ्र्यः प्रापयित्र्यो भवन्ति ॥ 'वा छन्दसि' इति जसि पूर्वसवर्णदीर्घः ॥ ᵛताभिः जिह्वाभिः ᵛनः अस्माकं ᵛयज्ञं यागसाधनं हविः ᵛइन्वतु देवान्[7] प्रापयतु[7]। 'इवि व्याप्तौ'। इदित्वान्नुम् ॥ ॥ ४६ ॥

'आयं गौः' इति तृचमष्टात्रिंशं सूक्तं गायत्रम्। सार्पराज्ञी नामर्षिका। सैव देवता सूर्यो वेति। तथा चानुक्रान्तम्—'आयं गौः सार्पराज्यात्मदैवतं सौर्यं वा' इति। अविवाक्येऽहनि मानसग्रह

---

१. त१.२.३.६.७.८-भ-'अन्यत्सिद्धं' नास्ति। २. त४.५-'रजसः' नास्ति। ३. त४.५-उपरिदेशे रजसः रक्तवर्णः। ४. त१.२.३.६.७.८-भ-मु-वैद्युतात्मना। ५. त१.२.३.७-भ१.२.४.८-'महीं' नास्ति; भ७-महि। ६. त-भ-'हव्यवाहनीः' नास्ति। ७. त१.२.३.६.७.८-भ१.२.४.८-'देवान् प्रापयतु' नास्ति।

एतत्सूक्तं शंसनीयम्। सूत्रितं च—'आयं गौः पृश्निरक्रमीदित्युपांशु तिस्रः पराचीः शस्त्वा' (आश्व. श्रौ. ८. १३) इति ॥

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः ॥ १ ॥

आ। अयम्। गौः। पृश्निः। अक्रमीत्। असदत्। मातरम्। पुरः।
पितरम्। च। प्रऽयन्। स्वऽरिति स्वः ॥ १ ॥

गौः गमनशीलः पृश्निः प्राप्टवर्णः प्राप्ततेजाः अयं सूर्यः आ अक्रमीत् आक्रान्तवान्। उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च पुरः पुरस्तात् पूर्वस्यां दिशि मातरं सर्वस्य भूतजातस्य निर्मात्रीं पृथिवीम् असदत् आसीदति प्राप्नोति। सदेश्छान्दसो लुङ्। लृदित्वाच्च्लेरङादेशः। ततः पितरं पालकं द्युलोकं[1] चशब्दादन्तरिक्षं च प्रयन्[2] प्रकर्षेण शीघ्रं गच्छन् स्वः स्वरणः शोभनगमनो भवति। यद्वा। पितरं स्वर्गलोकं प्रयन् वर्तते ॥

अन्तश्चरति रोचनास्य प्राणादपानती। व्यख्यन्महिषो दिवम् ॥ २ ॥

अन्तरिति। चरति। रोचना। अस्य। प्राणात्। अपऽअनती।
वि। अख्यत्। महिषः। दिवम् ॥ २ ॥

अस्य सूर्यस्य रोचना रोचमाना दीप्तिः अन्तः शरीरमध्ये मुख्यप्राणात्मना चरति वर्तते। किं कुर्वती। प्राणादपानती। मुख्यप्राणस्य प्राणाद्याः पञ्च वृत्तयः। तत्र प्राणनं नाडीभिरूर्ध्वं वायोर्निर्गमनम्। तथाविधात् प्राणात् प्राणनादनन्तरमपानती। अपाननं नाडीभिरवाङ्मुखं वायोर्नयनम्। तत्कुर्वती ॥ अपपूर्वादनितेर्लटः शतृ। अदादित्वाच्छपो लुक्। 'उगितश्च' इति ङीप्। 'शतुरनुमः' इति नद्या उदात्तत्वम् ॥ यद्वा। अन्तर्द्यावापृथिव्योर्मध्ये अस्य सूर्यस्य रोचना रोचमाना दीप्तिः चरति गच्छति ॥ 'रुच दीप्तौ'। 'अनुदात्तेतश्च हलादेः' (पा. सू. ३. २. १४९) इति युच् ॥ किं कुर्वती। प्राणात्प्राणनादुदयानन्तरमपानती सायंसमयेऽस्तं गच्छन्ती। ईदृश्या दीप्त्या युक्तः। अत एव महिषः महान् सूर्यो दिवम् अन्तरिक्षमुदयास्तमययोर्मध्ये व्यख्यत् विचष्टे। प्रकाशयति ॥ महेः 'अविमह्योष्टिषच्' (उ. सू. १. ४६) इत्यौणादिकष्टिषच्प्रत्ययः। चक्षिङः ख्याञ्। छान्दसे लुङि 'अस्यतिवक्ति°' इत्यादिना च्लेरङादेशः ॥

त्रिंशद्धाम वि राजति वाक्पतङ्गाय धीयते। प्रति वस्तोरह द्युभिः ॥ ३ ॥

त्रिंशत्। धाम। वि। राजति। वाक्। पतङ्गाय। धीयते। प्रति। वस्तोः। अह। द्युऽभिः ॥३॥

त्रिंशद्धाम[3] धामानि स्थानानि। वचनव्यत्ययः। वस्तोः वासरस्याहोरात्रस्यावयवभूतानि। अहशब्दोऽवधारणे। द्युभिः सूर्यस्य दीप्तिभिरेव वि राजति विराजन्ते विशेषेण दीप्यन्ते। व्यत्ययेनैकवचनम्। मुहूर्तान्यत्र धामान्युच्यन्ते। पञ्चदश रात्रेः पञ्चदशाह्नः। पतङ्गाय। पतति गच्छतीति पतङ्गः सूर्यः। तस्मै[4] स्तुतिरूपा वाक् प्रति धीयते प्रतिमुखं[5] स्तोतृभ्यः[5] क्रियते[6]। यद्वा। वस्तोरहनि त्रिंशद्धामानि। घटिकाभिप्रायमेतत्। त्रिंशद्घटिकाः। अत्यन्तसंयोगे द्वितीया। एतावन्तं कालं द्युभिः दीप्तिभिरसौ सूर्यो वि राजति। विशेषेण दीप्यते। तस्मिंश्च समये वाक् त्रयीरूपा तस्मै सूर्यरूपाय[7] पतङ्गाय प्रति धीयते प्रतिमुखं धार्यते। सूर्यं सेवत इत्यर्थः। श्रूयते हि—'ऋग्भिः

---

१. त१.२.३.६.७.८-भ१.२.७.८–भूलोकं। २. त१.२.३.६.७.८–प्रयच्छति; ०भ१.२.४.८–प्रयच्छन्। ३. त१.२.३.७-भ२.४.८–त्रिंशत्। ४. त४.५–तस्मै सूर्याय। ५. त१.२.३.६.७.८-भ–'प्रतिमुखं स्तोतृभ्यः' नास्ति। ६. त४.५–अभिधीयते। ७. त१.२.३.६.७.८-भ–'सूर्यरूपाय' नास्ति।

पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः ' ( तै. ब्रा. ३. १२. ९. १ ) इत्यादि । यदा त्विदं सूक्तं सार्पराज्ञ्या आत्मस्तुतिः तदा सूर्यात्मना स्तूयत इत्यवगन्तव्यम् ॥ ॥ ४७ ॥

' ऋतम् ' इति तृचमेकोनचत्वारिंशं सूक्तं मधुच्छन्दसः पुत्रस्याघमर्षणस्यार्षमानुष्टुभम् । रात्र्यादीनां भावानां सृष्ट्यादिप्रतिपादकत्वात्तद्रूप एवार्थो देवता । तथा चानुक्रान्तम्—'ऋतं माधुच्छन्दसोऽघमर्षणो भाववृत्तमानुष्टुभं तु ' इति । लिङ्गादिविनियोगोऽवगन्तव्यः ॥

**ऋतं च॑ स॒त्यं चा॒भी॑द्धा॒त्तप॒सोऽध्य॑जायत । तत॒ो रात्र्य॑जायत॒ तत॑ः समु॒द्रो अ॑र्ण॒वः ॥ १ ॥**

ऋतं च॑ स॒त्यं चा॒भी॑द्धा॒त्तप॒सोऽध्य॑जायत । तत॒ो रात्र्य॑जायत॒ तत॑ः समु॒द्रो अ॑र्ण॒वः ॥ १ ॥

ऋतमिति सत्यनाम । ऋतं मानसं यथार्थसंकल्पनं सत्यं वाचिकं यथार्थभाषणम् । चकाराभ्यामन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते । तत्सर्वमभीद्धादभितस्साद्ब्रह्मणा पुरा सृष्ट्यर्थं कृतात्तपसोऽधि । अध्युपर्यर्थे । उपर्यजायत । उदपद्यत । ' तपस्तप्त्वेदं सर्वमसृजत ' ( तै. आ. ८. ६ ) इति श्रुतेः । तपश्चात्र स्रष्टव्यपर्यालोचनलक्षणम् । ' यस्य[1] ज्ञानमयं तपः ' ( मु. उ. १. १. ९ ) इति श्रुत्यन्तरात् ॥ अभिपूर्वादिन्धेः कर्मणि निष्ठा । ' श्वीदितो निष्ठायाम् ' ( पा. सू. ७. २. १४ ) इतीट्प्रतिषेधः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । ' स्वरितो वानुदात्ते पदादौ ' इत्येकादेशः स्वर्यते ॥ यद्वा । अभीद्धादभितः प्रकाशमानात्[2] परमात्मनो मायाधिष्ठानरूपादुपादानभूताद्दतं सत्यं[3] चाजायत[3] ॥ ' जनिकर्तुः प्रकृतिः ' ( पा. सू. १. ४. ३० ) इति प्रकृतेरपादानसंज्ञा ॥ ततस्तस्मादेवेश्वराद्रात्री । उपलक्षणमेतदह्नोऽपि । अहश्च रात्रिश्चाजायत ॥ ' रात्रेश्चाजसौ ' ( पा. सू. ४. १. ३१ ) इति ङीप् । ततस्तस्मादेवेश्वरादर्णवोऽर्णसोदकेन युक्तः समुद्रश्चाजायत । समुद्रशब्दोऽन्तरिक्षोदध्योः साधारण इत्यभिमतार्थस्य प्रकाशनायार्णवशब्देन विशेष्यते । ' अर्णसः सलोपश्च ' ( का. ५. २. १०९. ३ ) इति मत्वर्थीयो वप्रत्ययः सलोपश्च ॥

**स॒मु॒द्राद॑र्ण॒वादधि॑ संवत्स॒रो अ॑जायत । अ॒हो॒रा॒त्राणि॑ वि॒दध॒द्विश्व॑स्य मि॒ष॒तो व॒शी ॥ २ ॥**

स॒मु॒द्राद॑र्ण॒वादधि॑ संवत्स॒रो अ॑जायत । अ॒हो॒रा॒त्राणि॑ वि॒दध॒द्विश्व॑स्य मि॒ष॒तो व॒शी ॥ २ ॥

अर्णवात्समुद्रात्सृष्टादध्यूर्ध्वं संवत्सरः संवत्सरोपलक्षितः सर्वः कालोऽजायत । श्रूयते हि— ' सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि कला मुहूर्ताः काष्ठाश्च ' ( तै. आ. १०. १. २ ) इति । स चेश्वरोऽहोरात्राण्येतदुपलक्षितानि सर्वाणि भूतजातानि विदधत् कुर्वन् सृजन् ॥ ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् । ततः समासे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ मिषतो[4] निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते[4] ॥

**सू॒र्या॒च॒न्द्र॒मसौ॑ धा॒ता य॑थापू॒र्वम॑कल्पयत् । दिवं॑ च पृथि॒वीं चा॒न्तरि॑क्ष॒मथो॒ स्व॑ः ॥ ३ ॥**

सू॒र्या॒च॒न्द्र॒मसौ॑ धा॒ता य॑थापू॒र्वम॑कल्पयत् । दिवं॑ च पृथि॒वीं चा॒न्तरि॑क्ष॒मथो॒ स्व॑ः ॥ ३ ॥

१. त१.२.३.७-भ२.४.८–' यस्य ' नास्ति । २. त४.५–प्रकाशमानात् स्वप्रकाशात् । ३. त४.५–च सत्यं वाजायत । ४. त३.४.५.८-भ४.५.७.८–' मिषतो ... वर्तते ' नास्ति; भ२–विश्वस्य त्रैलोक्यस्य मिषतः जायमानः वशी स्वामी; त१.२.६.७–स तादृशो धाता परमेश्वरः सूर्यादिदेवान् पृथिव्यादिलोकांश्च यथापूर्वं अतीतसृष्टौ यस्य यादृशं रूपं तादृशमनतिक्रम्य अकल्पयत् संकल्पमात्रेण संपादितवान् । दिवं चेत्युपात्तत्वात् स्वःशब्देन भोगविशेषो विवक्षितः । अघमर्षणं कृत्वा । तत ऊर्ध्वमवगाहनार्थास्तिस्र ऋचो दर्शयति । तैत्रीउपनिषदे बृहन्नारायणे माधवीव्याख्यापंक्तिः; त३.४.५.८-भ४.५.८–पुस्तकेषु तृतीयमंत्रस्य भाष्यं नास्ति ।

## द्वितीयोऽध्यायः

ॐ मैका भद्रं पञ्चानुष्टुभो जागर्ष्येका जातवेदस्यं स्वस्त्ययनं द्वे वर्षन्त्वेका हिरण्यवर्णामेकोना श्रीर्भार्गवी श्रीरलक्ष्मीघ्नं श्रैय्यमानुष्टुभं वै शक्रयन्तं हिंसाग्नेयी चतुर्थी प्रस्तारपङ्क्तिस्त्रिष्टुभौ पञ्चदश्युपरिष्टाद्बृहती श्रीः[1] पुत्राः[1] परे षट् चिक्लीतः पञ्चानन्दकर्दमौ वैश्वदेवं मयि श्लेषः श्लेषो जातवेदस्यं बृहत्यादि सं स्रवन्त्विति संस्रवान् वैश्वदेवं द्वितीयादि त्रिष्टुभौ आ ते सप्त प्रजावान् गर्भार्थाशीस्तुतिः[2] प्रजापतिरैन्द्रवायव्यौ चतुर्थी बृहती पञ्चमी प्रस्तारपङ्क्तिरग्निः पञ्च जीवपुत्र आग्निवारुणमतिजगत्यानुष्टुप्[3] त्रिष्टुबन्तं चक्षुरेकात्मस्तुतिः शंवर्ताः षट् शान्तिरानुष्टुभं पञ्चम्यादि बृहती जगत्यौ स्वप्नेका यस्योपानुष्टुप्[4] वालखिल्याः परेऽष्टौ[5] ।

१. 'श्रीपुत्राः' इति साधु;→बृहद्दे ५.९१.

२. 'आशीःस्तुतिः' इति शुद्धं.

३. आग्निवारुण°–Macdonell, Bṛhad. Part II, p. 190; अग्निवारुण°–Scheftelowitz

४. उप ( प्र वद ) इत्यस्या ऋषिर्वसिष्ठ इति निरु. ९.७

५. 'वालखिल्याः परेऽष्टौ' इति वस्तुतस्तृतीयाध्यायं समन्वैति

---

### १

मा बिभेर्न मरिष्यसि परि त्वा पामि सर्वतः ।

घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् ॥ १ ॥

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः० ॥ ऋ. सं. २. १. १

प्रथममण्डलान्ते पठनीयम् । ऋसं १.१९१.१० अन्ते पठनीयमिति मु ।

मॅ२–मु–आउ२–अल–जुना–ऋमं–ऋव्र ( शान्तिपाठ )–पञ्चामृ–आश्वमंसं–औंध ।

**१. मा बिभेर्न मरिष्यसि** ≡ अथर्व ५.३०.८ । १[2]. ≡ अथर्व १०.४.९. **अहिं**–का–मु–अथर्व; अहं–मॅ–आउ–अल–ऋमं–ऋव्र–पञ्चामृ ।

मॅ–आउ–अल–ऋमं–ऋव्र–पञ्चामृ–पुस्तकेषु बहवो मन्त्रा अस्मिन्सूक्तेऽधिकत्वेनोपलभ्यन्ते पाठवैषम्येण । ऋमं–पाठोऽधो दीयते–

आदित्यरथवेगेन विष्णोर्बाहुबलेन च । गरुडपक्षनिपातेन भूमिं गच्छ महायशाः ॥ २ ॥

गरुडस्य जातमात्रेण त्रयो लोकाः प्रकम्पिताः । प्रकम्पिता मही सर्वा सशैलवनकानना ॥ ३ ॥

गगनं नष्टचन्द्रार्कं ज्योतिषं न प्रकाशते ।

देवता भयभीताश्च मारुतो न प्लवायति मारुतो न प्लवायत्यों नमः ॥ ४ ॥

भो सर्प भद्र भद्रं ते दूरं गच्छ महायशाः । जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ॥ ५ ॥

आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्तते । शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ॥ ६ ॥

अगस्त्यो माधवश्चैव मुचुकुन्दो महामुनिः । कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥ ७ ॥

नर्मदायै नमः प्रातर्नर्मदायै नमो निशि । नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥ ८ ॥

यो जरत्कारुणा जातो जरत्कन्यां महायशाः । तस्य सर्पोऽपि भद्रं ते दूरं गच्छ महायशाः ।

तस्य सर्पस्य सर्पत्वं तस्मै सर्प नमोऽस्तु ते ॥ ९ ॥

आउ–पुस्तके १–६ मन्त्राः । मु–पुस्तके सप्तमो मन्त्रो नास्ति । अल–पञ्चामृ–पुस्तकयोः केवलं १-४ मन्त्राः ।

२. विष्णोर्बाहु°–ऋमं–ऋब्र–पश्चामृ; विष्णुबाहु°–मॅ–मु–आउ–अल. **निपातेन भूमिं**; भातेन भूमीं-अल. **महायशाः**; महाविषः–अल। ३-४[१] ≡ सुप २.१.२. ३[१]. **जातमात्रेण**–मॅ–मु–आउ–ऋमं–ऋब्र–पश्चामृ; जातमात्रस्य–अल–सुप; पातमात्रेण–आँध। ४[१]. **ज्योतिषं न प्रकाशते**; न ज्योतींषि चकासति–सुप। ४[२]. अल–सुप–पाठौ भिन्नौ। अल–देवता भयवित्रस्ता मारुतो नष्टचेतनाः; सुप–देवता भयवित्रस्ता नष्टशेषश्च मारुतः. **भयभीताश्च**; भयवित्रस्ता–आउ। ५. **भो**–का; भोः–इतरेषु. **महायशाः**; महाविष–आउ–आँध. **जनमेजयस्य**–ऋमं–मॅ-मु; जन्मेजयस्य–आउ–ऋब्र–पश्चामृ। ५-६ ≡ मभा १. ५३. २२ (टिप्पणी)। ७. ≡ मॅ ९. **अगस्त्यो माधवः**–ऋब्र; अगस्त्यं माधवं–ऋमं–पश्चामृ; अगस्तिर्माधवः–मॅ. **मुचुकुन्दो**; मुचकुंदं–पश्चामृ. ७[२]. = तं : श्वफल्कमास्तिकं चैव पंचैतानि स्मरेन्निशि पंचैतानि स्मरेन्निश्यों नमः। ८. = मॅ १०। ९. = मॅ ७. **जरत्कन्यां**; जरत्कार्वां–आँध. **सर्पोऽपि**–ऋमं–ऋब्र; सर्पाप–मॅ; सर्पापि–मु; स्मराभि–आँध. **दूरं**; भूमिं–मॅ. **महायशाः**; महाविष–आँध। ९[१]. (केवलं ऋमं–मध्य एव वर्तते) ≡ खिल २. १४. ८[२].

अधोलिखितः मॅ ८ मन्त्रः ऋमं–पुस्तके नास्ति—

**असिर्तिं चार्थसिद्धिं च सुनीतिं चापि यः स्मरेत् ।**
**दिवा वा यदि वा रात्रौ नास्ति सर्पभयं हरेत् ॥**

---

अधोलिखितं खिलसूक्तं ऋसं २. ३२ अनन्तरं पठनीयमिति आँधपुस्तके—

**कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।**
**सा नो ददातु श्रवणं पितृणां तस्यै ते देवि हविषा विधेम ॥ १ ॥**
**कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु ।**
**सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधातु ॥ २ ॥**
**अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥ ३ ॥**
**अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषत् ॥ ४ ॥**
**धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ ५ ॥**
**धाता ददातु दाशुषे वसूनि प्रजाकामाय मीळ्हुषे दुरोणे ।**
**तस्मै देवा अमृताः सं व्ययन्तां विश्वे देवासो अदितिः सजोषाः ॥ ६ ॥**
**धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिं वाजिनीवतः ॥ ७ ॥**
**धाता प्रजानामुत राय ईशे धातेदं विश्वं भुवनं जजान ।**
**धाता कृष्टीरनिमिषाभि चष्टे धात्र इद्धव्यं घृतवज्जुहोत ॥ ८ ॥**

एतस्मिन् विषये बृहद्देवतावचनम् (४. ८७-८८)—'तत्पूर्वे द्वे ऋचौ कुह्वाः कुहूमहमिति स्मृते। तदुत्तरे द्वेऽनुमतेरनु नोऽन्विदिति स्मृते। धातुश्चतस्रस्तत्रादौ धाता ददातु नो रयिम् ॥' एतेनैव क्रमेण तैत्तिरीयसंहितायां (३. ३. ११) कुहूमहमित्यादिसूक्तगताः सर्वे मन्त्रा उपलभ्यन्ते। प्रथमं ५-८ इति धातृदेवताकाश्चत्वारो मन्त्राः ५, ८, ७, ६ इति क्रमेण वर्तन्ते। अनन्तरं ३, ४ इति अनुमतिदेवताकौ मन्त्रौ तदनन्तरं ऋसं. २. ३२.४-५ एतौ राकाया मन्त्रौ वर्तेते। समनन्तरमेव १, २ इति कुहूदेवताकौ मन्त्रौ समागतौ (तैसं ३. ३. ११. ५)। किंत्वयं सार्धश्लोकात्मकोंऽशो बृहद्देवतायाः सर्वेषु लिखितपुस्तकेषु नास्ति। अतः तस्य मूलपाठत्वं शङ्कास्पदम्[1]। काश्मीरखिलग्रन्थ इदं सूक्तं नास्ति। आँधपुस्तकस्थो मन्त्राणां क्रमः तैसं-क्रमाद्भिन्न एव। इदं सूक्तं ऋसं २. ३२ अनन्तरं

---

1. Cf. Scheftelowitz, p. 25. A. B. Keith considers the Bṛhaddevatā verses as original, Comp. JRAS 1907, p. 229.

## २

भद्रं वद दक्षिणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात् कपिञ्जल ॥ १ ॥
भद्रं वद पुत्रैर्भद्रं वद गृहेषु च । भद्रमस्माकं वद भद्रं नो अभयं वद ॥ २ ॥
भद्रमधस्तान्नो वद भद्रमुपरिष्टान्नो वद । भद्रंभद्रं न आ वद भद्रं नः सर्वतो वद ॥ ३ ॥
असपत्नं पुरस्तान्नः शिवं दक्षिणतस्कृधि । अभयं सततं पश्चाद्भद्रमुत्तरतो गृहे ॥ ४ ॥
यौवनानि महयसि जिग्युषामिव दुन्दुभिः । शकुन्तक प्रदक्षिणं शतपत्राभि नो वद ॥ ५ ॥
**आवदंस्त्वं शकुने भद्रमा वद०** ॥ ऋ. सं. २. ४३. ३

ऋसं २. ४३. २ अनन्तरं पठनीयम् । मॅ–मु–औध-मते द्वितीयमण्डलान्ते पठनीयम् । मॅ–औध-पुस्तकयोः खिलान्ते 'आवदंस्त्वम्' ( ऋसं २.४३.३ ) इति मन्त्रः संपूर्णः पठितः । आश्वमंसं[1]-पुस्तके द्वितीयमण्डलान्ते 'भद्रं वद दक्षिणतः' इति मन्त्रं पठित्वानन्तरं 'अथ परशिष्टम्' ( पदशिष्टं अथवा परिशिष्टं ? ) इत्युक्तम् । एतद्ग्रन्थकर्तृमते प्रथमो मन्त्रः ऋसं. २. ४३ मध्ये समाविष्टः खिलसूक्तं च द्वितीयमन्त्रादारब्धम् । आश्वमंसं[2]-मध्येऽस्य सूक्तस्य चत्वारो मन्त्राः—१, ३[2] + ४[1], ४[2] + ५[1], ५[2], ऋसं. २. ४३. ३.

मॅ३–मु–आउ३–ऋमं–ऋब्र–औध–आश्वमंसं–अल–जुना ।

**१.** = निरु ९. ५. **कापिञ्जल**; कपिंजर–ऋब्र. **१. २. ५.** → कौसू ४६. ५४. । **२[2]. अस्माकं**; अस्माकं नो–मु–ऋब्र. **अभयं वद**; अभयं कृधि–ऋब्र । **३[2]. आ वद**; आ भर–ऋब्र । **४[1]. असपत्नं**; असपत्नः–मु ।

## ३

जागर्षि त्वं भुवने जातवेदो जागर्षि यत्र यजते हविष्मान् ।
इदं हविः श्रद्दधानो जुहोमि तेन पासि गुह्यं नाम गोनाम् ॥ १ ॥
**विदा दिवो विष्यन्नद्रिमुक्थैः०** ॥ ऋ. सं. ५. ४५. १

ऋसं ५.४४ अनन्तरं पठनीयम् ।

मॅ४–आउ४–मु–ऋमं–आश्वमंसं–अल–जुना ।

**१[2]. तेन पासि गुह्यं नाम गोनाम्** = ऋसं ५. ३. ३.

मॅ५–मु–अल–औध–अनुसारेण ऋसं ५. ४९ अनन्तरमधो लिखितं खिलं पठनीयम्–

**सूक्तान्ते तृणान्यग्नावरण्ये वोदकेऽपि वा । यस्तृणैरध्ययनं तदधीतं स्तृणानि भव ते भव ॥ १ ॥**
**वापीकूपतडागानां समुद्रं गच्छ स्वाहाग्निं गच्छ स्वाहा ॥ २ ॥**

पठनीयमिति यदुक्तं तदपि तैसं–पाठेन सम्यक्तया न समवैति । औन्धपुस्तक इदं सूक्तं केवलमभ्यूहमात्रेणैव स्वीकृतमिति तत्पुस्तकसंपादकैरावेदितम् । आश्वश्रौ१.१०; ४.१२; ६.१४ द्रष्टव्यम् ।

**१-२.** ≐ अथर्व ७. ४७. १,२. **३-४.** ≐ अथर्व ७. २०. १,२; → खिल ३. १५. ३. ५, **६, ७.** ≐ अथर्व ७. १७. १, ३, २; → खिल ३. १५. २.

**१. सुवृतं**; सुभगां–तैसं. **पितॄणां**; पितृणां–तैसं. **तस्यै ते**; तस्यास्ते–तैसं । **२. हविषः शृणोतु**; हविषश्चिकेतु–तैसं. **यजमाने**; चिकितुषे–तैसं । **३. भवतं**; भवतां–तैसं । **४. नस्कृधि**; नः कृधि–तैसं. **तारिषत्**; तारिषः–तैसं । **५. दधातु**; ददातु–तैसं । **७. दाशुषे**; नो रयिं–तैसं. **वाजिनीवतः**; सत्यराधसः । **८. प्रजानामुत**; प्रजाया उत–तैसं. तैसं–मध्ये उत्तरार्धः सर्वथा भिन्नो वर्तते–धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम ।

अनुभा ५. ४९; ऋविध ९. २१. ३ द्रष्टव्यम्। १[१]. सूक्तान्ते तृणावमावरण्ये वोदके पिबा-अल; सूक्तान्तेऽस्येतृणान्यप्नाविरिणे वोदकेऽपि वा-औध. १[२]. यस्तृणै°-अल; यदस्तृणैरधीतं तत्तृणानि भवति ध्रुवं-औध। २. 'अग्निं गच्छ स्वाहा' मु-पुस्तके नास्ति।

४

स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम्।
असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवा रुहेम ॥ १ ॥
अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम्।
प्रयतपाणिः शरणं प्र पद्ये स्वस्ति संबाधेष्वभयं नो अस्तु ॥ २ ॥

**प्र श्यावाश्व धृष्णुया०** ॥ ऋ. सं. ५. ५२. १

ऋसं ५. ५१ अनन्तरं पठनीयम्। आश्वगृ ३. ११. २ भाष्यमपि द्रष्टव्यम्।

मॅ६-मु-आउ५-ऋमं-ऋव्र (शान्तिपाठ)-औध-आश्वमंसं-अल-जुना-सुप१०. ५-६।

१. **स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं**; स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः-नृताउ १. १; मर (पुण्याह)· **महद्भूतं**; महाद्भुतं-आउ. **नावमिवा रुहेम** = ऋसं १०.१७८.२। २[२]. **नो अस्तु**; च नो अस्तु-आउ.

५

वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यव ब्रह्मद्विषो जहि ॥ १ ॥

**प्र सम्राजे बृहदर्चा गभीरम्०** ॥ ऋ. सं. ५. ८५. १

ऋसं ५. ८४ अनन्तरं पठनीयम्।

मॅ७-आउ६-मु-आश्वमंसं-औध-अल-जुना। पद्मामृ-पुस्तकेऽयं मन्त्रः श्रीसूक्तस्य चतुर्विंशतितममन्त्रत्वेनागतः।

१. = ऋसं ५. ८४. ३ : यत्ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः।

६

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममा वह ॥ १ ॥
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥

---

हे जातवेदः। जातानि वेद जातप्रज्ञो वा। जाते जाते विद्यत इति वा। हे अग्ने त्वं हिरण्यवर्णां हिरण्यस्य सुवर्णस्य वर्णः कान्तिस्तद्वद्वर्णो यस्यास्ताम्। हरिणीं हरितवर्णाम्। हरिणीरूपधरां वा। श्रीर्भूत्वा हरिणीरूपमरण्ये संचचार हेति देवीपुराणाच्च। सुवर्णरजतस्रजाम्। सुवर्णस्य पुष्पाणि सुवर्णानि एवं रजतस्य रजतानि तेषां स्रक् माला यस्यास्ताम्। स्रक्साहचर्यात् पुष्पाणीत्यवगम्यते। पुष्पसाहचर्यात् पुष्पे फले लुक्। आपं चैव हलन्तानामित्याप्। यद्वा सुवर्णरजतविकृतशृङ्खलाम्। सुष्ठु वर्णो यस्य तत्सुवर्णं यद्रजतं तत्पुष्पस्रजाम्। तद्विकृतशृङ्खलां वा। चन्द्रां चन्द्रवत्प्रकाशमानाम्। तद्रूपेणावस्थितां वा। हिरण्मयीं हिरण्यस्वरूपाम्। हिरण्यविग्रहां वा। लक्ष्मीं लक्षणवतीम्। 'लक्ष्मीर्लाभाद्वा लक्षणाद्वा' (निरु. ४. १०) इत्यादिनिरुक्तात्। एवंरूपां श्रियं मे मह्यं मदर्थमा वह। आह्वय। अग्नेर्देवहोतृत्वादाह्वानं तदधीनमिति भावः। 'अग्निर्वै देवानां होता' (ऐ. ब्रा. २. ७) इति श्रुतेः ॥ १ ॥

हे जातवेदः अग्ने त्वमनपगामिनीमपगमनरहिताम्। अनपायिनीमित्यर्थः। तां वक्ष्यमाणलक्षणां लक्ष्मीं मे मह्यमा वह। आह्वय। यस्यां श्रीदेव्यामावाहितायां सत्यां हिरण्यं सुवर्णं गां धेनुमश्वं वाजिनं पुरुषान् पुत्रपौत्रमित्रदासभूतानहं विन्देयं प्राप्नुयाम् ॥ २ ॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥
कांस्स्मि तां हिरण्यप्रावारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियम् ॥ ४ ॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मनेमिं शरणं प्र पद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि ॥ ५ ॥
आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरा याश्च बाह्या अलक्ष्मीः ॥ ६ ॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिं वृद्धिं ददातु मे॥७॥

अश्वपूर्वाम् अश्वाः पूर्वे पुरोगा यस्यास्ताम् । अथवाश्वपूर्णामश्वैः पूर्णाम् । परिपूर्णामिति केचित् । रथमध्यां रथा मध्ये यस्यास्ताम् । हस्तिनादप्रबोधिनीम् । हस्तिनां गजानां नादेन बृंहितेन गजपुष्करतूर्यनादेन वा प्रबोधिनीं प्रकर्षेण ज्ञापयित्रीम् । देवीं देवनशीलाम् । द्योतनशीलां वा । श्रियं श्रयणीयाम् । सेनारूपां वा । उप ह्वये समीपं प्रत्याह्वये । एतादृशी देवी श्रीर्मा मां जुषतां सेवताम् ॥ ३ ॥

कां वाङ्मनसयोरगोचरां दुर्निरूपस्वरूपामित्यर्थः । ब्रह्मरूपां वा । को ह वै नाम प्रजापतिरिति श्रुत्यन्तरात् । क इति ब्रह्मणो नामेति पुराणाच्च । सोस्मिताम् । आ ईषदुद्गतं स्मितं हास्यं तद्युक्ताम् । उपान्त्यलोपश्छान्दसः । हिरण्यप्राकारां हिरण्यस्य सुवर्णस्य प्राकार आवरणं यस्यास्ताम् । हिरण्यप्रकृष्ट आकार आकृतिर्यस्यास्तामिति वा । आर्द्रां क्लिन्नां क्षीरोदधेरुत्पन्नत्वात् । रुद्ररूपां वा । रुद्रशब्दोऽत्रामूर्धन्यस्वरादिः । आर्द्रया रुद्र इत्यादौ तथा दर्शनात् । अन्यद्बाहुलकम् । ज्वलन्तीं प्रकाशमानाम् । तृप्तां प्रीतामपि च तर्पयन्तीं भक्तान् मनोरथैरिति शेषः । पद्मेस्थितां कमले निषण्णामासीनाम् । पद्मवर्णां कमलवर्णाम् । तामिति प्रसिद्धां श्रियमिहोप ह्वये समीपं प्रत्याह्वये ॥ ४ ॥

अत्र प्र पद्य इत्यस्यानन्तरमहंशब्दप्रक्षेपः प्रामादिकः । चन्द्रां चन्द्रवत् प्रकाशमानां प्रभासाम् । प्रकृष्टा भाः कान्तिर्यस्यास्ताम् । आर्पं चैवेत्याप् । यशसा कीर्त्या ज्वलन्तीं प्रकाशमानाम् । लोके स्वर्लोके देवजुष्टां देवैरिन्द्राद्यैर्जुष्टां सेविताम् । प्रीतां वा । उदारां वदान्यां प्रगल्भां वा । पद्मिनीं पद्मलतारूपाम् । पद्माकारां वा । ईमिति निपातोऽनर्थकः । ' मिताक्षरेष्वनर्थकाः कमीमिद्रु ' ( निरु. १. ९ ) इति यास्कवचनात् । ईकारवाच्यां वा । तां श्रियं लोक इह लोके शरणं रक्षित्रीं प्र पद्ये प्रपन्नोऽस्मि । अहमिति शेषः । अतो हे श्रीः मे ममालक्ष्मीरश्रीर्नश्यतां नाशं प्राप्नोतु । एतादृशीं त्वां वृणोमि । शरणत्वेन स्वीकुर्वे ॥ ५ ॥

वृक्षोऽथेत्यन्तःपादमपि पूर्वरूपं बाहुलकात् । आदित्यवर्णे । आदित्यस्य सूर्यस्य वर्ण इव वर्णो यस्यास्तस्याः संबोधनम् । हे श्रीः तव तपसः नियमाद्धेतोर्वनस्पतिः । ' अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ' ( मनु. १. ४७ ) इति मानवस्मरणात् । बिल्वः बिल्वनामको वृक्षो द्रुमोऽधिजातः प्रादुर्भूतः । त्वत्करादिति शेषः । ' कात्यायन्याः शमी जाता बिल्वो लक्ष्म्याः करेऽभवत् ' इति वामनपुराणात् । अथानन्तरं तस्य बिल्वस्य फलानि पक्वशलाटुकानि तपसा त्वत्तपसा । त्वदनुग्रहेणेत्यर्थः । अन्तरा अन्तरिन्द्रियसंबन्धिनी माया अज्ञानं तत्कार्याणि च बाह्या बहिरिन्द्रियसंबन्धिन्यो यास्ता अलक्ष्मीरश्रियो नुदन्तु अपनुदन्तु । निवारयन्त्वित्यर्थः ॥ ६ ॥

हे श्रीः देवसखः देवो महादेवस्तस्य सखा कुबेरः । कीर्तिः कीर्त्यभिमानिनी दक्षकन्या देवता । कुबेरकोशशाला वा । सा च मणिना चिन्तामणिना मणिभद्रेण कोशाध्यक्षेण वा सह सार्धमुपैतु उपगच्छतु । अहमस्मिन् राष्ट्रे जनपदे प्रादुर्भूतोऽस्मि । उत्पन्नोऽस्मि । स आगत्य कीर्तिं यशः कोशं वा ऋद्धिं सर्ववस्तुसमृद्धिं मे मह्यं ददातु यच्छतु ॥ ७ ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्॥८॥
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम्॥९॥
मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः॥१०॥
कर्दमेन प्रजा भूता मयि सं भव कर्दम। श्रियं वासय मे कुले मातरं पद्ममालिनीम्॥११॥
आपः स्रवन्तु स्निग्धानि चिक्लीत वस मे गृहे। नि च देवीं मातरं श्रियं वासय मे कुले॥१२॥
पद्मां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममा वह॥१३॥
आर्द्रां पुष्करिणीं यष्टिं सुवर्णां हेममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममा वह॥१४॥
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्।
यस्यां हिरण्यं प्रभूतं गावो दास्यो विन्देयं पुरुषानहम्॥ १५॥
य आनन्दं समाविशदुपाधावन् विभावसुम्। श्रियः सर्वा उपासिष्व चिक्लीत वस मे गृहे॥ १६॥
कर्दमेन प्रजा स्रष्टा संभूतिं गमयामसि। अदधादुपागाद्येषां कामान् ससृज्महे॥ १७॥

क्षुत्पिपासामलामशनतृष्णामलिनात्मिकां ज्येष्ठां वृद्धाम्। श्रियः प्रागुत्पन्नामित्यर्थः। अलक्ष्मीम-श्रियमहं नाशयामि नाशं प्रापयामि। हे श्रीः त्वमभूतिमसंपत्तिं तथा सर्वामसमृद्धिं च अनभिवृद्धिमपि मे मम गृहात् निर्णुद निवारय॥ ८॥

गंधद्वाराम्। गंधो घ्राणग्राह्यो गुणो द्वारं लक्षणं यस्यास्ताम्। दुराधर्षां केनापि धर्षयितुमशक्यां नित्यपुष्टां नित्यं सदा सस्यादिभिः पुष्टां समृद्धां करीषिणीं करीषः शुष्कगोमयादिस्तद्वतीम्। गवाश्वादि-बहुपशुसमृद्धामिति यावत्। सर्वभूतानां सर्वप्राणिनामीश्वरीमधिष्ठात्रीम्। आधारभूतां वा। तां भूरूपां श्रियमिह लोक उप ह्वये उपाह्वये समीपं प्रत्याह्वये॥ ९॥

हे श्रीः मनसः कामं मनोरथम्। आकूतिं संकल्पं च। वाचः वागिन्द्रियस्य सत्यं याथार्थ्यम्। पशूनां गवादीनां रूपं क्षीरादि। अन्नस्य अदनीयस्य यवव्रीह्यादे रूपं भक्ष्यादिचतुर्विधं चाशीमहि लभे-महि। श्रीः संपत् यशः कीर्तिश्च मयि श्रयताम्। आश्रयताम॥ १०॥

कर्दमेन कर्दमाख्येन पुत्रेण प्रजा प्रकृष्टं जा अपत्यं यस्याः सा। सुपुत्रेत्यर्थः। 'जामपत्यम्' (निरु. ३.६) इति यास्कवचनात्। भूता अभवत्। अतः हे कर्दम श्रीपुत्र त्वं मयि मदीयगृहे सं भव संवस। पद्ममालिनीं कमलमालाधारिणीं मातरं तव जननीं श्रियं मे मम कुले वंशे वासय निवासय॥११॥

आपः अबभिमानिन्यो देवताः। स्निग्धानि स्नेहयुक्तानि कार्याणि स्रजन्तु उत्पादयन्तु। अपां स्नेहगुणवत्त्वादिति भावः। हे चिक्लीत चिक्लीताख्य श्रीपुत्र मे मम गृहे गेहे वस निवस। च अपि च देवीं मातरं श्रियं मे मम कुले वंशे नि वासय संवासय॥ १२॥

आर्द्रामार्द्राङ्गां पुष्करिणीमभिषेकोद्युक्तदिग्गजशुण्डाग्राम्। पुष्करशब्दो गजशुण्डाग्रवाचकः। पद्म-मालिनीं•पद्मवतीम्। पद्मलतारूपां वा। पुष्टिं पुष्ट्यभिमानिनीं पुष्टिरूपां वा। 'पुष्टिरूपेण संस्थिता' इति मार्कण्डेयवचनात्। पिङ्गलां पिङ्गलवर्णाम्। पद्ममालिनीमित्यादि सिद्धमन्यत्॥ १३॥

• आर्द्रामार्द्राङ्गाम्। यःकरिणीं यष्टिकरां वेत्रहस्तामित्यर्थः। टिलोपश्छान्दसः। दण्डकारिणीं वा। दण्डकरां वा। यष्टिं दण्डरूपाम्। सुवर्णां शोभनवर्णां हेममालिनीं हेमविकृतमणिशृङ्खलादिमालावतीं सूर्यां सूर्यवत् प्रकाशमानाम्। तद्रूपां वा। सिद्धमन्यत्॥ १४॥

इयं द्वितीयया व्याख्याता। प्रभूतं भूयिष्ठम्। गावः गाः। दास्यः परिचारिकाः। उभयत्र शसर्थे जस्। इयान् विशेषः॥ १५॥ इति श्रीसूक्तभाष्यं समाप्तम्॥

जातवेदः पुनीहिं मा रायस्पोषं च धारय । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ १८ ॥
अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहिं स्वस्तिं सुक्षितिं दिवो नॄन् द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥ १९ ॥

एतत् श्रीसूक्तं तदनुसारीणि पञ्च सूक्तानि च पञ्चममण्डलान्ते पठनीयानीति का-पुस्तकादवगम्यते । बृहद्दे ५.९१ अपि द्रष्टव्यम्[1] । आश्वमंसं-अनुसारेणेदं ऋसं ६. १. १ अन्ते पठनीयम् । बहुभिर्भाष्यैर्युतमिदं बहुत्र मुद्रितं प्रायः पञ्चदशर्चम् । एतासां पञ्चदशानामृचां प्राचीनत्वं ऋग्वि २. ९३ ( = मॅ-पुस्तके श्रीसूक्ते षोडशो मन्त्रः ) इत्यनेन ज्ञायते । शान्तिमयूख-शान्तिकमलाकर-प्रयोगरत्नाह्निकचन्द्रिका-संस्कारकौस्तुभ-ब्रह्मकर्मसमुच्चयादय इतरेऽपि ग्रन्था अस्य सूक्तस्य पञ्चदशर्चत्वं दर्शयन्ति ।

आह्निकसूत्रावल्यां पञ्चदश मन्त्राः षोडशश्च ऋग्वि २. १८ । मॅ-पुस्तके यद्यपि श्रीसूक्ते २९ मन्त्रास्तथापि भाष्यं १५ मन्त्राणामेव । ऋमं-पुस्तके २८ मन्त्राः, ऋब्र-आचं-मु-पुस्तकेषु २७ मन्त्राः, क्रिपसं-आउ-जुना-पुस्तकेषु २३ एव । पञ्चामृ-पुस्तके ३० मन्त्राः येषु १-२२ = मॅ१-२२; २४ = खिल २. ५; २५ = ऋमं २७; शिष्टाः ६ विभिन्ना अबद्धाश्च । का-पुस्तके आदितः १५ मन्त्रा इतरपुस्तकस्थमन्त्रैः समानाः, शिष्टाश्चत्वारो विभिन्ना अज्ञातचराश्च[2] । अल-पुस्तक एतत्सूक्तं नास्ति ।

मनु ३. २३२ भाष्ये, अग्निपुराणे (४१. ८), हेमाद्रौ (१. ७३१. १५), प्रयोगरत्ने, संस्कारकौस्तुभे ( मूलशान्तिः ) चेदं सूक्तं निर्दिष्टम् । ३, ५, ६, ७, १०, ११ मन्त्राणां प्रतीकानि ऋग्वि २. १८-१९ मध्ये निर्दिष्टानि । ३ = मागृ २. १३. ६; ७[2] = मागृ २. १३. ६; ८ = तैआ १०. ६६; ९ = तैआ १०.१; मागृ २. १३. ६; मनाउ ४. ८; मामंसं; अन्त्ये; शांम; प्रर; १० = वासं ३९. ४; तैब्रा २. ४. ६. ६; १८[2] = तैसं ३. १. ४. ३; मंब्रा २. २. ११; शांश्रौ ४. १७. १२; → आश्वश्रौ २. ७; १९ = ऋसं ६. २. ११; १४. ६.

१. स्रजां; स्रजं-आउ. ममा-ऋमं-आउ-जुना-प्रर-पञ्चामृ-आसू; म आ-मॅ-मु-आचं-ऋब्र-क्रिपसं । २. °लक्ष्मीमनप°; °लक्ष्मीमलग°-आसू-प्रर-जुना. गामश्वं; गामश्वान्-आउ । ३. अश्व-

1. Cf. Bṛhaddevatā, part II, p. 189.

2. With regard to the antiquity of the Kashmir recension, Scheftelowitz says that since according to the *Khila-anukramaṇī* the last six verses ( 14-19 ) deal with sons of Śrī as is referred to by Bṛhaddevatā V. 19, it is clear that this recension preceded the Bṛhaddevatā ( Apokryphen des Ṛgveda p. 75 ). The verse in the Bṛhaddevatā runs thus :

श्रीसूक्तमाशीर्वादस्तु श्रीपुत्राणां पराणि षट् ।
तस्याद्यालक्ष्म्यपनुदमग्निस्तत्र निपातभाक् ॥

The second pāda of this verse Scheftelowitz translates thus : " die sechs letzten Verse sind den Söhnen der Śrī geweiht ". This translation does not seem to be correct. Macdonell ( Bṛhaddevatā, part II, pp. 188-9 ) translates the same quite differently : " The following six are connected with fortune and sons ". To this Macdonell adds the following note : —" This must refer to the six *Khilas* which follow the Śrīsūkta in Kashmir MS. of the Khilas ...... ". This interpretation is confirmed by the next verse ( 92 ) which advises a special application of three of these six hymns, सं स्रवन्तु being charms for the prosperity of cattle ( Śrī ), आ ते गर्भो and अग्निरेतु for the attainment of sons ( Putra ) ( प्रजावज्जीवपुत्रौ वा गर्भकर्मणि संस्तुतौ । नानारूपाः पयस्विन्यः सं स्रवन्तीति संस्तुताः ). पराणि षट् means " the following six " ( hymns ), not " the last six " ( verses ). परे षट् in the खिलानुक्रमणी means the same. Compare वालखिल्याः परेऽष्टौ ( End of 2nd Adhyāya, खिलानुक्रमणी ). The last six verses of Śrīsūkta in the Kashmir recension have no special connection with the sons of Śrī. This passage in the Bṛhaddevatā, therefore, cannot serve the purpose of establishing the priority of the Kashmir recension to the Bṛhaddevatā.

**पूर्वां**-मॅ-मु-आचं-क्रिप्रसं; अश्वपूर्णां-ऋवि-आउ-जुना-प्रर-ऋमं-आसू-मागृ. **प्रमोदिनीं**-आउ-जुना-मागृ-आसू-पद्मामृ-प्रर; प्रबोधिनीं-ऋमं-मॅ-ऋब्र-आचं-मु-क्रिप्रसं. **देवी**; देवीः-प्रर-आचं-पद्मामृ। ४. **कांस्यस्मि तां**-का; कांसोस्मितां-मॅ-मु-ऋमं-आचं-पद्मामृ-आसू-ऋब्र-क्रिप्रसं-आउ-जुना-प्रर. °**प्रावारां**-का; °प्राकारां-मॅ-मु-आउ-जुना। ५. **पद्मनेमिं**-आउ-जुना-प्रर; पद्मनेमीं-ऋमं-आसू; पद्मिनीमीं-मॅ-मु-ऋब्र-क्रिप्रसं-आचं-पद्मामृ. **प्र**-मॅ-मु-आउ-आचं-क्रिप्रसं; अहं प्र-ऋमं-ऋब्र-आसू-पद्मामृ-प्रर. **अलक्ष्मी**°-ऋमं-मु-आउ-जुना-आसू-पद्मामृ; ऽलक्ष्मी°-ऋब्र-आचं-प्रर-मॅ. **वृणोमि**-ऋमं-मॅ-मु-आउ-जुना-आसू-क्रिप्रसं; वृणे-ऋब्र-मु-पद्मामृ-आचं। ६. **तस्य**; यस्य-आसू. **मायान्तरा**-ऋमं-ऋब्र-आसू-आचं-पद्मामृ-क्रिप्रसं-जुना-प्रर; या अन्तरा-मॅ-आउ; ममान्तरा-मु। ७. **स्मि राष्ट्रे**-मॅ-आउ-जुना-आचं-पद्मामृ; सुराष्ट्रे-ऋमं-ऋब्र-मु-क्रिप्रसं-प्रर-आसू. **कीर्तिं वृद्धिं ददातु**-आउ-जुना-प्रर-आसू-क्रिप्रसं; कीर्तिमृद्धिं ददातु-मॅ-मु-ऋमं-ऋब्र-आचं; श्रीः श्रद्धां दधातु-मागृ। ८. °**मला ज्येष्ठामलक्ष्मीं**-का-मु; °मलां ज्येष्ठामलक्ष्मीं-मॅ-ऋब्र-आचं; °मलां ज्येष्ठामलक्ष्मीर्-क्रिप्रसं; °मला ज्येष्ठा अलक्ष्मीर्-ऋमं-आउ-जुना-प्रर-आसू-पद्मामृ; °मलं ज्येष्ठामलक्ष्मीर्°-तैआ. **गृहात्**; पाप्मानं-तैआ। १०. °**माकूतिं**; °माकूतं-मु. **अन्नस्य**; अन्नं च-क्रिप्रसं; अन्यस्य-प्रर। ११. **भव**-ऋमं-मॅ-मु-ऋब्र-आचं; भ्रम-आउ-जुना-प्रर-आसू-पद्मामृ-क्रिप्रसं. **कुले**; गृहे-आउ-क्रिप्रसं-जुना। १२. **स्रवन्तु**-का; सृजन्तु-ऋमं-मॅ-मु-आउ-जुना-क्रिप्रसं; स्रजन्तु-ऋब्र-आसू-आचं-पद्मामृ-प्रर। १३. **पक्वां**-का; आर्द्रां-इतरेषु. **पुष्टां**-का; पुष्टिं-ऋमं-मॅ-मु-आचं-प्रर; पुष्टीं-जुना-क्रिप्रसं-पद्मामृ; यष्टिं-ऋब्र; यष्टीं-आउ. **पिङ्गलां पद्ममालिनीं**; सुवर्णां हेममालिनीं-ऋब्र-आउ-जुना-आसू-पद्मामृ. **सूर्यां**-ऋब्र-प्रर-आसू-जुना-पद्मामृ; चन्द्रां-इतरेषु. **ममा**-आउ-जुना-प्रर-आसू-पद्मामृ; म आ-ऋमं-ऋब्र-मॅ-मु-आचं-क्रिप्रसं. ऋमं-आउ-क्रिप्रसं-पुस्तकेषु त्रयोदशचतुर्दशमन्त्रयोर्व्यत्यासः। १४. **पुष्करिणीं**-आउ-जुना; यःकरिणीं-मॅ-मु-ऋमं-ऋब्र-आसू-पद्मामृ-आचं; यष्करिणीं-क्रिप्रसं-प्रर. **यष्टीं**; यष्टिं-मॅ-मु-प्रर-आचं; पुष्टीं-आउ-जुना; पुष्टिं-ऋब्र. **सुवर्णां हेममालिनीं**; पिंगलां पद्ममालिनीं-आउ-जुना-ऋब्र-प्रर-आसू-पद्मामृ. १४[२]=१[२]. **चन्द्रां**-ऋब्र-प्रर-जुना-पद्मामृ-आसू; सूर्यां-इतरेषु. **ममा**-आउ-जुना-प्रर-आसू-पद्मामृ; म आ-ऋमं-मॅ-मु-ऋब्र-आचं-क्रिप्रसं. १५[१] = २[१]. १५[२] = २[२]. **प्रभूतं**; प्रभूतिं-ऋमं-प्रर-आचं-आसू. **विन्देयं**-का; अश्वान् विन्देयं-इतरेषु. खिलानुक्रमण्यनुसारेणेयमुपरिष्टाद्बृहती ( ८ + ८ + ८ + १२ अक्षराणि ) अतः का-पुस्तके 'अश्वान्' नास्ति। इतरपुस्तकानुसारेणेयं प्रस्तारपङ्क्तिः। १६[२]. **चिक्लीत वस मे गृहे** = १२[२]। १७[१]. = ११[१]. १७[२]. **येषां**; यस्मै ? १८[१]. **जातवेदः पुनीहि मा** = ऋसं ९. ६७. २७.

१६-१९ मन्त्राः केवलं का-पुस्तक एव। इतरपुस्तकेषु वर्तमानाः पञ्चदशोत्तरा मन्त्रा अत्रोद्ध्रियन्ते। ऋमं-मॅ-पुस्तकयोर्मन्त्राणां पौर्वापर्यं विभिन्नम्। ऋमं-पुस्तकस्थः पाठः क्रमश्चात्र दीयते। ऋब्र२० = आचं २० = ऋमं १९; ऋब्र १९ = आचं १९ = ऋमं २७; आचं २१-२४ = ऋमं २०-२३; आचं-२७ = ऋमं २४. ऋमं २८ आचं-मध्ये नास्ति. आउ-क्रिप्रसं २२ = ऋमं १६; आउ-क्रिप्रसं २१ = ऋमं १७; आउ-क्रिप्रसं १६ = ऋमं १८; आउ-क्रिप्रसं १९ = ऋमं २१. ऋमं २३, २५-२८ मन्त्राः आउ-क्रिप्रसं-मध्ये न सन्ति. मॅ २८=ऋमं २४; मॅ २४-२७ = ऋमं २५-२८. मॅ २९ मन्त्रः केवलं औध-पुस्तके दत्तः। ऋब्र-मु २७ = ऋमं २४; मु १७ = ऋमं २७. ऋमं २८ मु-ऋब्र-आचं-पुस्तकेषु नास्ति. आश्वमंसं[१] मॅ-पुस्तकमनुसरति; २६ मन्त्रः १७ मन्त्रात्पूर्वमागच्छतीति तु विशेषः. आश्वमंसं[२]-पुस्तके मॅ-पुस्तकस्थाः १-२३,२६,२८ मन्त्राः। एते सर्वेऽधिका मन्त्रा अर्वाचीना इति २२[२] मन्त्रात् स्पष्टं ज्ञायते।

**यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्। सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत्॥ १६॥**
**पद्मानने पद्मऊरु पद्माक्षी पद्मसंभवे। तन्मे भजसि पद्माक्षी येन सौख्यं लभाम्यहम्॥ १७॥**

अश्वदायै गोदायै धनदायै महाधने । धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥ १८ ॥
पुत्रपौत्रं धनं धान्यं हस्त्यश्वादिगवे रथम् । प्रजानां भवसि माता आयुष्मन्तं करोतु मे ॥ १९ ॥
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः । धनमिन्द्रो बृहस्पतिर्वरुणं धनमुत्सृजे ॥ २० ॥
वैनतेय सोमं पिब सोमं पिबतु वृत्रहा । सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥ २१ ॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥२२॥

सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ २३ ॥
श्रीवर्चस्वमायुष्यमारोग्यमाविधाच्छुभमानं महीयते ।
धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ २४ ॥
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ।
लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ २५ ॥
महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ २६ ॥
पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ।
विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं हृदि सं नि धत्स्व ॥ २७ ॥
आनन्दः कर्दमः श्रीतश्चिक्लीत इव विश्रितः ।
ऋषयः श्रियः पुत्राश्च श्रीर्देवी देवदेवता ॥ २८ ॥

**१६. यः**; स–ऋग्वि. **सूक्तं**–ऋमं–मु–आचं–क्रिप्रसं; श्रियः–ऋग्वि–आसू–पश्चामृ–ऋब्र–मॅ–आउ–जुना। **१७. पद्मानने**; पद्मासने. **पद्मऊरू**–ऋमं–ऋब्र–आउ–जुना–मु–आचं; पद्मऊरु–मॅ; पद्मरूपे–क्रिप्रसं. **पद्माक्षी**–ऋमं–ऋब्र–जुना–मु–आचं; पद्माक्षि–मॅ–आउ–क्रिप्रसं. **तन्मे**; यन्मां–पश्चामृ; त्वं मां. **भजासि**; भजस्व. **पद्माक्षी**–ऋमं–जुना–आचं; पद्माक्षि–मॅ–आउ–मु–ऋब्र–क्रिप्रसं–पश्चामृ। **१८. अश्वदायै गोदायै धनदायै**–ऋमं–ऋब्र–आचं; अश्वदायी गोदायी धनदायी–मॅ–जुना; अश्वदायी गोदायी धनदायि–मु–आउ; अश्वदायि गोदायि धनदायि–क्रिप्रसं–पश्चामृ. **जुषतां**; लभतां–ऋब्र. **देवि**–मॅ–मु–ऋब्र–क्रिप्रसं–आचं–पश्चामृ; देवी–आउ; देवीं–ऋमं–जुना. **सर्वकामांश्च देहि मे**; सर्वकामार्थसिद्धये–पश्चामृ। **१९. पुत्रपौत्रं**–ऋमं–जुना. पुत्रपौत्र–मॅ–मु–आउ–ऋब्र–क्रिप्रसं–पश्चामृ–आचं. **°श्वादिगवे रथं**–ऋमं–मॅ–मु–ऋब्र–पश्चामृ–आचं; °श्वाश्वतरं रथैः–आउ–जुना–क्रिप्रसं; °श्वाश्वतरांरथे–औंध; °श्वाजाविगोरथं. **भवसि**–ऋमं–जुना–क्रिप्रसं; भवसी–मॅ–मु–आउ–ऋब्र–आचं; भजसि–पश्चामृ; भवतु. **मे**; मां–आउ–पश्चामृ–जुना। **२०. वरुणं**–मॅ–मु–ऋमं–ऋब्र–जुना–पश्चामृ–आचं; वरुणो–आउ–क्रिप्रसं. **उत्सृजे**–ऋमं; अश्नुते–मॅ–पश्चामृ; उच्यते–क्रिप्रसं–जुना; अस्तु मे–मु; अस्तु ते–ऋब्र–आचं; अश्विना–आउ । **२१. सोमिनो मह्यं**; सोमिनः सोमं–क्रिप्रसं; सोमिनो मिहं–जुना. **सोमिनः**; सोमिनि। **२२. भक्तानां श्रीसूक्तं जपेत्**; भक्त्या श्रीसूक्तजापिनां–औंध. **जपेत्**; जपेत् सदा। **२३. °शुकगन्ध°**–मु–ऋब्र–औंध–आचं; °शुभगन्ध°–इतरेषु. **°माल्यशोभे**–ऋब्र–औंध; °माल्यशुभे–मु. **°भूतिकरि**; भूतिकरी–मु। **२४. श्री°**; श्रीर्°–क्रिप्रसं. **°वर्चस्वं**–ऋमं–मॅ–मु–जुना–क्रिप्रसं–आचं; °वर्चस्यं–इतरेषु. **°विधाच्छुभमानं**–ऋमं; °विधाच्छोभमानं–मु–ऋब्र–आचं; °विधात्पवमानं–मॅ–आउ–जुना–क्रिप्रसं; °युधात्पवमानं–पश्चामृ. **धान्यं धनं**; धनं धान्यं–मु. **बहुपुत्र°**; पुत्र°–आउ; पशुपुत्र°–जुना। **२५. लक्ष्मीं प्रियसखीं**–ऋमं–ऋब्र–आचं; लक्ष्मी प्रियसखी–मु; विष्णोः प्रियसखीं–मॅ. **देवीं**; भूमिं–औंध। **२६. महालक्ष्मी**–ऋमं–मॅ–ऋब्र–आचं; महादेव्यै–मु. **विष्णुपत्नी**–ऋमं–मॅ–ऋब्र–आचं; विष्णुपत्न्यै–मु। **२७. पद्मिनि**; पद्मवि–ऋब्र–आचं; पद्मनि–मु. **पद्मप्रिये**; पद्मालये. **विश्वमनो°**; विष्णुमनो°–औंध. **हृदि**; मयि–मु–ऋब्र। **२८.**

**श्रीत°**–ऋमं; श्रीद°. **विश्रितः**–ऋमं; विश्रुतः–मॅ; ( इति ) विश्रुताः–औध. **श्रियः पुत्राश्च**–ऋमं; श्रियपुत्राश्च–मॅ. **देवी देवदेवता**–ऋमं; देवीर्देवताः श्रिया–मॅ; श्रीर्देवीर्देवता मताः–औध.

ऋमं–पुस्तकेऽविद्यमानो मॅ २९ मन्त्र एवमस्ति—

ऋणरोगादि दारिद्र्यं पापक्षुदपमृत्यवः । भयः शोकमनस्तापा नश्यन्तु मम सर्वदा ॥

औधपुस्तके–ऋणरोगादिदारिद्र्य°.... भयशोक°....

पश्चामृ–पुस्तके केषुचिल्लिखितपुस्तकेषु च २३-३० मन्त्राः सर्वथा विभिन्ना अतोऽत्र लिख्यन्ते–

चन्द्राभां लक्ष्मीमीशानां सूर्याभां श्रियमीश्वरीम् । चन्द्रसूर्याग्निवर्णाभां महालक्ष्मीमुपास्महे ॥२३॥

वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजान्यव ब्रह्मद्विषो जहि ॥ २४ ॥

पद्मप्रिये पद्मिनि पद्महस्ते पद्मानने पद्मदलायताक्षि ।
विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि सं नि धत्स्व ॥ २५ ॥

या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी ।
गम्भीरावर्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया ॥
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भै-
र्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥ २६ ॥

लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरङ्गधामेश्वरीं
दासीभूतसमस्तदेववनितां त्रैलोक्यदीपाङ्कुराम् ।
श्रीमन्मन्दकटाक्षलब्धविभवब्रह्मेन्द्रगङ्गाधरां
त्वां त्रैलोक्यकुटुम्बिनीं सरसिजां वन्दे मुकुन्दप्रियाम्[1] ॥ २७ ॥

सिद्धलक्ष्मीर्मोक्षलक्ष्मीर्जयलक्ष्मीः सरस्वती ।
श्रीर्लक्ष्मीर्वरलक्ष्मीश्च प्रसन्ना मम सर्वदा ॥ २८ ॥

वराङ्कुशापाशमभीतिमुद्रां करैर्वहन्तीं कमलासनस्थाम् ।
बालार्ककोटिप्रतिभां त्रिनेत्रां भजेऽहमाद्यां जगदीश्वरीं ताम् ॥ २९ ॥

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ॥ ३० ॥

**२३. श्रियमीश्वरीं**; श्रियमैश्वरीं. **°वर्णाभां**; संकाशां; सर्वाभां. **महालक्ष्मी°**; श्रीमहालक्ष्मी°; श्रियं लक्ष्मी° । **२४.** = खिल २. ५ । २५. = ऋमं २७ । **२६. °नमिता**; °णमिता । **२८. प्रसन्ना मम सर्वदा**; प्रसन्नवरदा भव । **२९. वराङ्कुशा°**; वराङ्कुशौ. **°मभीतिमुद्रां**; °मुपैतिमुद्रां. **°प्रतिभां**; °प्रतिमां. **भजेऽहमाद्यां**; भजे हिमाद्यां; भजेऽहमम्बां.

मॅ–पुस्तके श्रीसूक्तानन्तरं पठनीयं सूक्तद्वयं ( मॅ ९, मॅ १० ) दत्तं तद्यथा—

विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव । शरणं भव भूतेश करुणाकर शंकर ॥ १ ॥

हर शंभो महादेव विश्वेशामरवल्लभ । शिव शंकर सर्वात्मन् नीलकण्ठ नमोऽस्तु ते ॥ २ ॥

मृत्युंजयाय रुद्राय नीलकण्ठाय शंभवे । अमृतेशाय शर्वाय श्रीमहादेवाय ते नमः ॥ ३ ॥

एतानि शिवनामानि यः पठेन्नियतः सकृत् । नास्ति मृत्युभयं तस्य पापरोगादि किंचन ॥ ४ ॥

तथा च—

यज्ञेशाच्युत गोविन्द माधवानन्त केशव । कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते ॥ १ ॥

कृष्णाय गोपिनाथाय चक्रिणे मुरवैरिणे । अमृतेशाय गोपाय गोविन्दाय नमो नमः ॥ २ ॥

एतान्यनन्तनामानि मण्डलान्ते ( सदा ) पठेत् ॥ ३ ॥

1. Scheftelowitz does not give this verse and counts verse 26 as two (26 and 27) verses.

७

चिक्लीतो यस्य नाम तद्दिवा नक्तं च सुक्रतो ।
अस्मान् दीदास युज्याय जीवसे जातवेदः पुनन्तु मां देवजनाः ॥ १ ॥
पुनन्तु मनसा धियः पुनन्तु विश्वा भूतानि । जातवेदो यदस्तुतम् ॥ २ ॥
विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा । संभृता अस्माकं वीरा ध्रुवा ध्रुवेषु तिष्ठति॥३॥
ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवा ध्रुवेषु तिष्ठति । अग्ने अच्छा यदस्तुतं रायस्पोषं च धारय ॥ ४ ॥
अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्ति सुक्षितिं दिवो नॄन् द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम ॥५॥

१[२]-२[१] ≐ ऋसं ९. ६७. २७[१]; तैब्रा. १. ४. ८. १; २. ६. ३. ४; वासं १९. ३९। २. = मंदी ( पृष्ठं १७ मन्त्रः २१ )। ३[१]. = ऋसं ९. ६७. २७[२]। ४[१]. = ऋसं १०. १७३. ४; अथर्व ६. ८८. १; तैब्रा २. ४. २. ८; खागृ १. ४. ४; गोगृ २. ३. १२; मंब्रा १. ३. ७. **रायस्पोषं च धारय** = खिल २. ६. १८.

८

मयि श्रेष्ठो मा वधीः प्र सम्राजं च सुक्रतो ।
अस्मान् पृणीष्व युज्याय जीवसे जातवेदः पुनीहि मा ॥ १ ॥
मर्तो यो नो दिदासत्यधिरस्था न नानशत् । दविध्वतो विभावसो जागारमुत ते श्रियम् ॥२॥
अनमीवा भवन्त्वघ्न्या सु सं गर्भो वि मोचतु । अरातीर्यन्ति ये केचित्सूरयश्चाभि मज्मना ॥३॥
रायस्पोषं वि धारय जातवेदः पुनीहि मा । उस्रा भवन्तु नो मयो बह्वीर्गोष्ठे घृताच्यः ॥ ४ ॥
अच्छा नो मित्रमहो देव देवानग्ने वोचः सुमतिं रोदस्योः ।
वीहि स्वस्ति सुक्षितिं दिवो नॄन् द्विषो अंहांसि दुरिता तरेम ता तरेम तवावसा तरेम॥ ५ ॥

१[२]. ≐ खिल २. ७. १[२]। २. **अधिरस्था**; अधरस्था ? ४[१]. → खिल २. ६. १८[१]. **बह्वी-गोष्ठे घृताच्यः** → खिल ४. १२. १[२]। ५. = खिल २. ७. ५; ६. १९; ऋसं ६. २. ११; १४.६.

९

सं स्रवन्तु मरुतः संमश्वा. समु पूरुषाः । सं धान्यस्य या स्फातिः संस्राव्येण हविषा जुहोमि॥१॥
एह यन्ति पशवो ये परेयुर्वायुर्येषां सहचारं जुजोष ।
त्वष्टा येषां रूपधेयानि वेदास्मिंस्ताँल्लोके सविताभि रक्षतु ॥ २ ॥
इमं गोष्ठं पशवः सं स्रवन्तु बृहस्पतिरा नयतु प्रजानन् ।
सिनीवाली नयत्वग्र एषामा जग्मुषोऽनुमते नि यच्छ ॥ ३ ॥
सं सिञ्चामि गवां क्षीरं समाज्येन बलं रसम् ।
संसिक्ता अस्माकं वीरा ध्रुवा गावः सन्तु गोपतौ ॥ ४ ॥

आ हरामि गवां क्षीरमा हरामि धान्यं३ रसम्।
आहृता अस्माकं वीरा आ पत्नीरिदमस्तकम् ॥ ५ ॥

एतत् अथर्व २. २६ अनेन समानम्। १ = अथर्व ३; २ = अथर्व १; ३ = अथर्व २ एवं मन्त्राणां पौर्वापर्यभेदः। 'नानारूपाः पयस्विन्यः सं स्रवन्तीति संस्तुताः' इति बृहद्दे (५. ९२)। कौशिकसूत्रं (१९. १४) द्रष्टव्यम्।

१. **सं स्रवन्तु**–का; सं सं स्रवन्तु–अथर्व; सं स्रवन्ति–बृहद्दे. **मरुतः**–का; पशवः–अथर्व। २. **यन्ति**–का; यन्तु–अथर्व. **वेदास्मिंस्तांल्लोके**–का; वेदास्मिन् तान् गोष्ठे–अथर्व. **सविताभि रक्षतु**–का; सविता नि यच्छतु–अथर्व। ३. **नयत्यग्र**–का; नयत्वाग्रे–अथर्व. **ऽनुमते**–का; अनुमते–अथर्व। ४. **गावः सन्तु**–का; गावो मयि–अथर्व। ५. **हरामि धान्यं३**–का; हार्षं धान्यं१–अथर्व।

१०

आ ते गर्भो योनिमेतु पुमान् बाण इवेषुधिम्। आ वीरो अत्र जायतां पुत्रस्ते दशमास्यः ॥१॥
करोमि ते प्राजापत्यमा गर्भो योनिमेतु ते।
अनूनः पूर्णो जायतामनन्धोऽश्रोणोऽपिशाचधीतः ॥ २ ॥
पुमांस्ते पुत्रो जायतां पुमाननु जायताम्। यानि भद्राणि बीजान्यृषभा जनयन्ति नः ॥३॥
तानि भद्राणि बीजान्यृषभा जनयन्तु ते। तैस्त्वं पुत्रं जनयेः स जायतां वीरतमः स्वानाम् ॥४॥
यो वशायां गर्भो योऽपि वेहतीन्द्रस्तं नि दधे वनस्पतौ।
तैस्त्वं पुत्रान् विन्दस्व सा प्रसूर्धेनुका भव ॥ ५ ॥
सं वो मनांसि जानतां सं नाभिः सं ततोऽसत्।
सं त्वा कामस्य योक्त्रेण युञ्जान्यविमोचनाय ॥ ६ ॥
कामः समृध्यतां मह्यमपराजितमेव मे। यं कामं कामये देव तं मे वायो समर्धय ॥ ७ ॥

इदं सूक्तं प्रजावत आर्षमिति खिलानुक्रमण्यामुक्तम्। 'अग्निरेतु' इत्यग्रे वर्तमानेन जीवपुत्राख्य-सूक्तेन सहेदं गर्भकर्मणि विनियुक्तम्। 'प्रजावज्जीवपुत्रौ वा गर्भकर्मणि संस्तुतौ' इति बृहद्दे (५. ९२)। आश्वगृ १.१३.६ द्रष्टव्यम्। एते प्रजावज्जीवपुत्राख्ये सूक्ते अनवलोभने विनियुक्ते इति प्रर–ऋब्र–मतम्। एतत्सूक्तं ऋमं–प्रर–संकौ–ऋब्र–आपमं (१. १२. ९)–पुस्तकेषु ४[२], ५[१], ६ मन्त्रान् वर्जयित्वोद्धृतम्।

१. = अथर्व ३. २३. २; हिगृ १. २५. १; शांगृ १. १९. ६. **आ ते गर्भो योनिमेतु**–ऋमं–आपमं–हिगृ; आ ते योनिं गर्भ एतु–अथर्व–शांगृ; आ ते गर्भो योनिमैतु–ऋब्र–प्रर–संकौ. **अत्र**–शांगृ–हिगृ; ऽत्र–अथर्व; ऋमं–ऋब्र–संकौ–प्रर–आपमं–पुस्तकेषु 'अत्र' नास्ति। २. = हिगृ. १. २५. १; २[१]. = अथर्व ३. २३. ५[१]. **प्राजापत्यमा**; प्राजापत्येषा–संकौ. **एतु**–ऋमं–अथर्व–आपमं–हिगृ; ऐतु–ऋब्र–प्रर–संकौ. **अनन्धोऽश्रोणोऽपिशाचधीतः**–का; अनन्धोश्लोणोपिशाचधीरः–हिगृ; अश्लोणो-पिशाचधीतः–ऋमं–ऋब्र–आपमं–संकौ–प्रर। ३[१] = अथर्व ३. २३. ३[१]; शांगृ १. १९. ६. ३[२]. = शांगृ १. १९. ६; अथर्व ३. २३. ४[१]. **पुमांस्ते पुत्रो जायतां**–का; पुमांस्ते पुत्रो नारि तं–ऋमं–आपमं–संकौ–ऋब्र–प्रर. पुमांसं पुत्रं जनय तं–अथर्व–शांगृ. **यानि**–का–अथर्व–आपमं–संकौ–शांगृ; तानि–ऋमं–ऋब्र–प्रर. **ऋषभा**; पुरुषा–शांगृ. **जनयन्ति नः**–का–आपमं–शांगृ; जनयन्ति च–अथर्व; जनयन्तु नौ–ऋमं–प्रर–संकौ; जनयन्ति नौ–औध; जनयन्तु ते–ऋब्र। ४. = हिगृ १. २५. १. **तानि**–का–आपमं; यानि–ऋमं–ऋब्र–संकौ–प्रर–हिगृ. **जनयन्तु ते**–का; जनयन्तु नः–ऋमं–हिगृ; जनयन्ति

नः–ऋब्र–प्रर–संकौ; जनयन्तु नौ–आपमं. **तैस्त्वं पुत्रान् जनयेः**-का; तैस्त्वं गर्भिणी भव–हिगृ। ५. ≡ हिगृ १. २५. १. ५[२] ≡ अथर्व ३. २३. ४[२]; शांगृ १. १९. ६. **योऽपि**–का; यश्च–हिगृ. **पुत्रान्**; पुत्रं–अथर्व.हिगृ-शांगृ-मध्ये ५[२]–पाठो विभिन्नः। हिगृ–तेन त्वं गर्भिणी भव सा प्रासूर्धेनुगा भव. शांगृ–तेभिष्ट्वं पुत्रं जनय सुप्रसूर्धेनुका भव। ६[१]. **सं वो मनांसि** ≡ ऋसं १०. १९१. २;अथर्व ६. ६४. १. ६[२] ≡ हिगृ १. २४. ४.। ७. **कामः समृध्यतां**–का–ऋमं–प्रर–संकौ; कामप्रमृध्यतां–आपमं. **तं मे**–ऋमं–आपमं–संकौ; तन्मे–प्रर.

## ११

अग्निरेतु प्रथमो देवतानां सोऽस्याः प्रजां मुञ्चतु मृत्युपाशात्।
तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात्॥ १ ॥
इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै तिरतु दीर्घमायुः।
अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि वि बुध्यतामियम्॥ २ ॥
मा ते गृहे निशि घोर उत्थादन्यत्र त्वद्रुदत्यः सं विशन्तु।
मा त्वं विकेश्युर आ वधिष्ठा जीवपुत्रा पतिलोके वि राज प्रजां पश्यन्ती सुमनस्यमाना॥३॥
अप्रजस्यं पौत्रमर्त्यं पाप्मानमुत वाघम्। प्रजामिवोन्मुच्यस्व द्विषद्भ्यः प्रति मुञ्चामि पाशान्॥४॥
देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान्।
क्रव्यादो मृत्यूनधरान् पातयामि दीर्घमायुस्तव जीवन्तु पुत्राः॥ ५ ॥
**त्वं ह्यग्ने प्रथमो मनोता०** ॥ ऋ. सं. ६. १. १

९-११ खिलसूक्तानि पञ्चममण्डलान्ते पठनीयानि। इदं सूक्तं जीवपुत्रस्यार्षमित्यनुक्रमण्यामुक्तम्। ऋमं-ऋब्र–प्रर–संकौ–पुस्तकेषु ‘अथ जीवपुत्राख्यं सूक्तम्’ इत्युक्त्वेदं समुद्धृतम्। हिगृ-मध्ये एको मन्त्रोऽन्तेऽधिकः। इदं षण्मन्त्रात्मकमिति गोगृ २. १. २४; खागृ १. ३. ११ ( : अग्निरेतु प्रथम इति षड्भिश्च पाणिग्रहणे )। मंब्रा १.१.१०; आपमं १.४. ७ मध्ये केवलं पूर्वे चत्वारो मन्त्राः, तथा च आपमं-पुस्तके तृतीयचतुर्थयोर्मध्य एको मन्त्रोऽधिकः। प्रथमद्वितीयौ मन्त्रौ पागृ १.५.११; मंदी ५४-५५ मध्ये उपलभ्येते। ‘अग्निरैत्विति सूक्तेन जुहुयादाज्यमन्वहम्’ इति ऋग्वि २. ११०। बृहद्दे ५. ९२ द्रष्टव्यम्।

१. **एतु**–खिलानु–मंब्रा–खागृ–का; ऐतु–इतरेषु. १[१] ≐ अथर्व ४. १४. ५ : अग्ने प्रेहि प्रथमो देवतानाम्. **देवतानां**; देवताभ्यः–मंब्रा. **सोऽस्याः**; सोऽस्यै–ऋब्र–पागृ-संकौ–प्रर–औध। २. **तिरतु दीर्घमायुः**–का; नयतु दीर्घमायुः–ऋमं–ऋब्र–संकौ–पागृ–हिगृ–प्रर–आपमं–मंदी; जरदष्टिं कृणोतु–मंब्रा. **जीवतामस्तु**–का, जीवतु–ऋब्र. **अभि वि**–का–मंब्रा–मंदी–पागृ; अभि प्र–हिगृ–प्रर–ऋब्र–संकौ–आपमं। ३. **गृहे निशि घोर**–का; गृहे निशि घोष–ऋमं–प्रर–हिगृ–संकौ–ऋब्र–आपमं; गृहेषु निशि घोष–मंब्रा. **उत्थाद्**; उत्पाद्–प्रर. **रुदत्यः**–का–ऋब्र–हिगृ–संकौ–आपमं–मंब्रा; रुदन्त्यः–ऋमं–प्रर. **विकेश्युर**–का–ऋमं–हिगृ–आपमं; बिकेश्युर–प्रर–संकौ; विकेश्युरव–ऋब्र; रुदत्युरं–मंब्रा. **जीवपुत्रा**–का; जीवपत्नी–इतरेषु. **प्रजां पश्यन्ती सुमनस्यमाना**–का; पश्यन्ती प्रजां सुमनस्यमाना –ऋमं–ऋब्र–प्रर–संकौ; पश्यन्ती प्रजां सुमनस्यमानां–आपमं–मंब्रा; प्रजां पश्यन्ती सुमनस्यमानां–हिगृ। ४. **अप्रजस्यं पौत्रमर्त्यं**–मंब्रा; अप्रजस्तां पौत्रमृत्युं–ऋमं–प्रर–संकौ–हिगृ–आपमं; अप्रजास्त्वां पुत्रं मृत्युं–ऋब्र. **वाघं**; वा अघं–मंब्रा; वार्थं–संकौ. **प्रजामिवोन्मुच्यस्व**–का; शीर्ष्णः स्रजमिवोन्मुच्य–ऋब्र–मंब्रा–हिगृ–ऋमं–संकौ–प्रर–आपमं. **पाशान्**–का; पाशं–ऋमं–ऋब्र–संकौ–प्रर–आपमं–मंब्रा–हिगृ। ५. **पातयामि**–का–ऋमं–प्रर–संकौ; पादयामि–हिगृ।

## १२

चक्षुश्च श्रोत्रं च मनश्च वाक्च प्राणापानौ देह इदं शरीरम् ।
द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्सम् ॥ १ ॥

**यं आनयत्परावतः०** ॥ ऋ. सं. ६. ४५. १

ऋसं ६. ४४ अनन्तरं पठनीयम् । बृहद्दे ५. १०८ एतदेव दर्शयति । इदमेकर्चं सूक्तं सायणाचार्यैः ऋसं ६.४४. २४ व्याख्याने समुद्धृतम् । मॅ( ११ )-मु-आउ( ८ )-जुना-औंध-पुस्तकेष्विदं तृचं सूक्तम् । अल-पुस्तक इदं द्वृचम् ।

१[१]. → तैब्रा २. ५. ६. ५ : प्राणापानौ चक्षुः श्रोत्रं वाचं मनसि संभृताम्; तैउ १. ७. १ : चक्षुः श्रोत्रं मनो वाक् त्वक्. १[२]. **दशयन्त्रमुत्सम्** = ऋसं ६. ४४. २४. °**वेदं**-का; °वेतं-मॅ-मु-आउ-औंध-जुना । उत्तरे ऋचौ-

**पुरश्च पृष्ठश्च करौ च बाहू जङ्घे चोरू उदरं शिरश्च ।**
**रोमाणि मांसं रुधिरास्थिमज्जमेतच्छरीरं जलबुद्बुदोपमम् ॥ २ ॥**
**भ्रुवौ ललाटे च तथा च कर्णौ हनू कपोलौ छुबुकस्तथा च ।**
**ओष्ठौ च दन्ताश्च तथैव जिह्वा मे तच्छरीरं मुखरत्नकोशम् ॥ ३ ॥**

२. **पुरश्च**; उरश्च; जुना-आउ; नखश्च--औंध. **पृष्ठश्च**; पृष्ठिश्च-मु. **रोमाणि**; लोमानि-जुना. ३. **छुबुकः**; चिबुकः-जुना. **मे तच्छरीरं**; एतत्सुशुभ्रं-आउ; एतच्छरीरं-जुना.

ऋसं ६. ४८ अन्ते पठनीयमेकं खिलसूक्तं मॅ-औंध-जुना-पुस्तकेषु विद्यते । मॅ--पुस्तके

**यस्तृणैरध्ययनं तदधीतं स्तृणानि भवते भव । वापीकूपतडागानां समुद्रं गच्छ स्वाहा ॥ १ ॥**
**सूक्तान्ते स्तृणान्यग्नौ ॥ २ ॥**

औंध-पुस्तके

**सूक्तान्तेऽस्येत्तृणान्यग्नाविरिणे वोदकेऽपि वा ।**
**यदस्तृणैरधीतं तत् तृणानि भवति ध्रुवम् ॥ १ ॥**
**वापीकूपतडागानां समुद्रं गच्छ स्वाहा [ अग्निं गच्छ स्वाहा ] ॥ २ ॥**

जुनागड-पुस्तके

**यस्तृणैरध्ययनं स्तृणानि तृणते तृण । समुद्रं गच्छ स्वाहा भूमिं गच्छ स्वाहा ॥**

खिल २. ३ टिप्पणी द्रष्टव्या ।

## १३

शंवतीः पारयन्त्येतेदं पृच्छस्व वचो यथा । अभ्यारं तं समाकेतं य एवेदमिति ब्रवत् ॥ १ ॥
जायाकेतं परिस्रुतं भारती ब्रह्मवादिनी । संजानाना मही जाता य एवेदमिति ब्रवत् ॥ २ ॥
इन्द्रस्तं किं विभुं प्रभुं भानुना यं जुजोषति । तेन सूर्यमरोचयन्येनेमे रोदसी उभे ॥ ३ ॥
जुषस्वाग्ने अङ्गिरः काण्वं मेध्यातिथिम् । मा त्वा सोमस्य बर्बृहत् सुतस्य मधुमत्तमः ॥ ४ ॥
त्वमग्ने अङ्गिरस्तम शोचस्व देववीतमः। आ शंतम शंतमाभिरभिष्टिभिः शान्तिं स्वस्तिमकुर्वत॥५॥
शं नः कनिक्रदद्देवः पर्जन्यो अभि वर्षत्वोषधयः सं प्रवर्धन्ताम् ।
शं नो द्यावापृथिवी शं प्रजाभ्यः शं नो अस्तु द्विपदे शं चतुष्पदे ॥ ६ ॥

**शं न इन्द्राग्नी भवतामवोभिः०** ॥ ऋ. सं. ७.३५. १

ऋसं ७. ३४ अनन्तरमिदं पठनीयम्। आश्वमसं[२]–मतमपि तथैव। मॅ--मु--औंध-अनुसारेणेदं ऋसं ७. ३५ अनन्तरं पठनीयम।

मॅ१३--मु--आउ९–ऋमं–अल–जुना--ऋब्र( शान्ति )–अल। ऋग्विधानेऽपि (२. १३९)–'शंवतीः शं न इन्द्राग्नी इत्येते सततं जपेत्। न रक्षोभ्यो न भूतेभ्यो व्याधिभ्यो वा भयं भवेत्' इति॥

**१. एतंद् पृच्छस्व वचो यथा**--का; तं पृच्छन्ति वचो यथा–आउ–जुना; एतं छंति वचो गुजा–अल; एते तं पृच्छन्ति वचो युजा-मॅ–मु. **अभ्यारं तं समाकेतं**–का; अभ्यायन्तं समायन्तं–आउ; अभ्यारेतं यमाकेतं–अल; अभ्यानंतं यमाकेतं–जुना; अभ्यारं तं यमाकेतुं–ऋमं–ऋब्र--मॅ--मु. **ब्रवत्**; ब्रुवत्–अल; ब्रवन्--मु--ऋब्र। **२. जायाकेतं**--का–जुना; जायाकेतुं–आउ; भासाकेतुं--ऋमं--मु–मॅ--ऋब्र. **परिस्रुतं**–ऋमं–मु; पुरुस्पृहं–मॅ–आउ–जुना. **भारती ब्रह्मवादिनी**–का; भारतीर्ब्रह्मवर्धनीः–ऋमं–ऋब्र–मॅ--मु; भारतीं ब्रह्मवर्धनीं–आउ; भारतीं ब्रह्मवर्धनी–जुना. **जाता**–का; माता--ऋमं--ऋब्र--मॅ--मु--आउ--जुना. **ब्रवत्**; ब्रवन्–ऋब्र। **३. इन्द्रः**; इन्द्रं--अल. **किं**; कर्–आउ. **भानुना यं**--अल; भानुनेयं--ऋमं–ऋब्र–मॅ--मु--आउ; भानुमेयं--जुना. **जुजोपति**--का; सरस्वती--मॅ--आउ–जुना; सरस्वतीं ऋमं–ऋब्र--मु--अल. **तन**--का; येन--ऋमं--ऋब्र–मॅ--मु--आउ--अल–जुना। **४. बर्बृहत्सुतस्य**; बर्बृहन्सुतासो--आउ; वर्बृहत्सुतासो--अल. **मधुमत्तमः**; मधुमत्तमाः--आउ। **५. त्वं**--ऋमं–मॅ--मु--आउ; त्वां--का--अल. **अङ्गिरस्तम**--अल--जुना; अङ्गिरस्तमः--आउ; अङ्गिरः--ऋमं--मॅ--मु. **शंतमाभिरभिष्टिभिः**; शंतमाभिष्टिभिः--अल. **शान्तिं**; शान्तिः--मु; शान्ति--अल। **६. वर्षत्वोषधयः सं प्रवर्धन्तां**–का; वर्षत्वोषधयः प्रति धीयन्तां--आउ; अवर्षत्योषधयः प्रतिधीयतां–अल; अभिवर्षत्वोषधयः प्रतिधीयतां--जुना; वर्षतु--ऋमं–मॅ–मु. **शं नो अस्तु द्विपदे शं चतुष्पदे** = खिल ५. १. ५[२]. **नो अस्तु**--का; न एधि--मॅ--मु।

जुनागडलिखितपुस्तक इदं नवर्चं सूक्तम्। तृतीयमन्त्रानन्तरं लिखिता अधिका मन्त्रा अधो दीयन्ते–

**शं वो भूमिः शं व आपः शं वो भवन्तु मरुतः स्वर्काः।**
**शं वः प्रजाभ्यः शमयन्तु पापं शं वः पर्जन्यो अभि वर्षतु॥**
**शं व इन्द्रः शंताता शं वो भवन्तूषसो विभातीः।**
**शं वो वसवो रुद्रा आदित्याः सदन्तु शं वो मित्रावरुणावश्विना शम्॥**
**शं वो विष्णुः प्रजया संरराणोऽनु स्वधां कृणुहि लोके अस्मिन्।**
**शं वो भवतु भुवनस्य यस्पतिः शं वो भव द्विपदे शं चतुष्पदे॥**

## १४

स्वंप्नः स्वप्नांधिकंरणे संर्वं निं ष्वापया जंनम्। आं सूंर्यमन्यान् स्वापंयाव्युषं जागृयांमहम्॥ १॥

**क ईं व्यक्ता नरः संनीळा०** ॥ ऋ. सं. ७. ५६. १

ऋसं ७. ५५ अनन्तरं पठनीयम्। अयं मन्त्रः अथर्व ४. ५. ७ अनेन समानः। मॅ--पुस्तक एतदेकादशर्चं, पद्मामृ--पुस्तके दशर्चम्। ऋब्र( शान्तिपाठः )–आश्वमसं--जुना--पुस्तकेष्वष्टौ, ऋमं–आउ--मु--पुस्तकेषु नव मन्त्राः। आउ--पुस्तकस्थः षष्ठो मन्त्रो मॅ--पुस्तके नास्ति। मु १-८ = ऋमं–मॅ--पद्मामृ १-८; मु ९ = पद्मामृ ९ = मॅ १०; ऋमं ९ = आउ ६; पद्मामृ १० = मॅ ९; आउ ७ = मॅ८; आउ ८ = मॅ ६; आउ ९ = मॅ ७. अल-पुस्तके ८-९ मन्त्रौ न स्तः। जुना--पुस्तके तृतीयो मन्त्रो नास्ति।

**१. स्वप्नाधिकरणे**; स्वप्नाभिकरणेन–अथर्व. **जनं**–अथर्व–मॅ--मु--आउ; जरां–पद्मामृ; जिनं--ऋमं--ऋब्र. **आ सूर्यं**; ओत्सूर्यं--अथर्व. → मैसं ४. २. १ः आ तु सूर्यस्योदेतोर्जागृयात्. **अन्यान्**–का--आउ; अन्यान्त्–ऋमं--मॅ--मु–अथर्व; अन्यत्–पद्मामृ. **स्वापयाव्युषं**--अथर्व; स्वापयद्व्युषं–जुना–आउ; स्वाप-

यद्व्यूळहं--ऋमं--ऋब्र--मॅ--मु--पश्चाम्. **जागृयाम्यहं**--का; जागृयादहं--ऋमं--मॅ--पश्चाम्; जाग्रियादहं--ऋब्र--मु--आउ; जाग्याद्हं--जुना; जागृतान्--अथर्व.

शिष्टानां मन्त्राणां ऋमं--पुस्तकानुसारेण पाठो दीयते--

**अजगरो नाम सर्पः सर्पिरविषो महान् ।**
**तस्मिन् हि सर्पः सुधितस्तेन त्वा स्वापयामसि ॥ २ ॥**

**सर्पः सर्पो अजगरः सर्पिरविषो महान् । तस्य सर्पात्सिन्धवस्तस्य गाधमशीमहि ॥ ३ ॥**

**काळिको नाम सर्पो नवनागसहस्रबळः । यमुनह्रदे ह सो जातो यो नारायणवाहनः ॥ ४ ॥**

**यदि काळिकदूतस्य यदि काः काळिकाद्भयम् ।**
**जन्मभूमिमतिक्रान्तो निर्विषो याति काळिकः ॥ ५ ॥**
**आ याहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व ।**
**तृप्तां जुहुर्मातुळस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ॥ ६ ॥**
**यशस्करं बलवन्तं प्रभुत्वं तमेव राजाधिपतिर्बभूव ।**
**संकीर्णनागाश्वपतिर्नराणां सुमङ्गल्यं सततं दीर्घमायुः ॥ ७ ॥**

**कर्कोटको नाम सर्पो यो दृष्टीविष उच्यते । तस्य सर्पस्य सर्पत्वं तस्मै सर्प नमोऽस्तु ते ॥ ८ ॥**

**अति काळिकरौद्रस्य विष्णुः सौम्येन भाविना । यमुननदी काळिकं ते विष्णुस्तोत्रमनु स्मरम् ॥९॥**

**२. तस्मिन् हि**--ऋमं--मु--पञ्चाम्--ऋब्र--मॅ; तस्मिन्नु--आउ--जुना । **३. तस्य**--ऋमं--मु--पञ्चाम्; यस्य--मॅ--आउ. **सर्पात्**--ऋमं--मु; शुष्कान्--मॅ--आउ--पञ्चाम्. **गाधमशीमहि** = ऋसं ५. ४७. ७ । **४. नाम**; नाग--पञ्चाम्. °**बळः**; °फणः--पञ्चाम्. **ह सो**; ऽसौ--आउ । **५. भयं**--मॅ--आउ--पञ्चाम्; भयात्--ऋमं--ऋब्र--मु. **जन्मभूमिमतिक्रान्तो**--ऋमं--ऋब्र--मॅ--मु; जन्मभूमिपरिक्रान्तो--आउ--पञ्चाम्; जन्मभूमिरतिक्रांतो--जुना । **६.** = निरु १४. ३१. **तृप्तां**--ऋमं--ऋब्र--पञ्चाम्--मॅ--मु--निरु; तृप्ता--आउ. **जुहुः**--मॅ--आउ--निरु; जहुः--ऋमं--ऋब्र--मॅ--पश्चाम्--जुना. °**नागाश्वपति... सततं**; °नागाश्वपतिं नराणां सुपर्णं तं विदतं--जुना । ८[२]. = खिल २.१. ९[३] । **९. विष्णुः सौम्येन**--आउ; विष्णु सौम्येन--ऋमं. **भाविना**--आउ--जुना; भामिनि--ऋमं. **ते**--ऋमं; तेन--आउ; **स्मरं**--आउ; स्मरन्--ऋमं; स्वरं--जुना । मॅ--पुस्तके ९-११ मन्त्रा एवम्--

**येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु । तेषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥ ९ ॥**
**नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ १० ॥**

**उग्रायुधाः प्रमतिनः प्रवीरा मायाविनो बलिनो मिच्छमानाः ।**
**ये देवा असुरान् पराभवन् तांस्त्वं वज्रेण मघवन्नि वारय ॥ ११ ॥**

**९-१०.** = तैसं ४. २. ८. ३ ( व्यत्यासेन ). **९. दिवो**; दिवि--पश्चाम्; **तेषां**--मु; येषां--तैसं--पश्चाम्. **सदस्कृतं**-मॅ; सदःकृतं--तैसं--पश्चाम् । **१०.** = वासं १३. ६; कासं १६. १५; मैसं २. ७. १५; हिगृ २. १६. ७; मागृ २. ७. ३; ११. १०; १६. ३; माश्रौ ६. १. ७; आसू ; मंदी; शांम; मांमंसं. **अस्तु**--मॅ; स्तु--इतरेषु । **११. देवा असुरान्**--देवानसुराः--औध. औधपुस्तक एते त्रयोऽपि मन्त्राः सन्ति तथापि नवमदशमयोर्मध्येऽधो लिखितो मन्त्रोऽधिकः--

**या इषवो यातुधानानां ये वा वनस्पतीननु । ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥**

## १५

यस्य व्रतमुपतिष्ठन्त आपो यस्य व्रते पशवो यन्ति सर्वे ।
यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे जोहवीमि ॥ १ ॥

**यद्वो दिवो नृषदने पृथिव्याः०** ॥ ऋ. सं. ७. ९७. १

ऋसं ७. ९६ अनन्तरं पठनीयम्। बृहद्दे ६. १९ तदेव दर्शयति। इदं दर्शपूर्णमासयोर्विनियोज्यमिति वैसू ८. २; काम्यपशुयागे याज्यात्वेन विनियोज्यमिति शांश्रौ ६. ११. ८; आश्वश्रौ ३. ८।

तैसं ३. १. ११. ३; मैसं ४. १०. १; अथर्व ७. ४०. १; मॅ१५-आउ११-आश्वमंसं[1]-औंध--जुना--अल एतेषु सर्वेषु '**यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः**' इति प्रथमार्धः। **जोहवीमि**-का; हवामहे-अथर्व; हुवेम-इतरेषु।

१६

उप॑ प्र व॑द मण्डूकि व॒र्षमा॑ वद ता॑दुरि। मध्ये॑ ह्र॒दस्य॑ प्ल॒वस्व॑ निगृ॒ह्य च॒तुरः॑ प॒दः ॥ १ ॥

**इन्द्रासोमा तपतं रक्ष उब्जतम्०** ॥ ऋ. सं. ७. १०४. १

इत्यृग्वेदे खिले द्वितीयोऽध्यायः ॥

ऋसं ७. १०३ अनन्तरं पठनीयम्।

अथर्व ४. १५. १४; निरु. ९. ७; ऋमं-मॅ१६-आउ१२-मु-आश्वमंसं-औंध-अल-जुना।

**उप प्र वद**-का-अथर्व; उपप्लवद-ऋमं-मॅ-मु-आउ; उपप्लवत-औंध. **प्लवस्व**-का-जुना-अथर्व-निरु-मॅ-आउ; प्लवस्य-ऋमं-मु. **निगृह्य** का-ऋमं-मु-मॅ; विगृह्य-अथर्व-निरु-आउ-जुना. **पदः**--का--अथर्व--निरु--मॅ--आउ--जुना; परः-ऋमं--मु।

---

## अथ तृतीयोऽध्यायः

**आभि दश प्रस्कण्वः प्रागाथं तु[1] प्र पुष्टिगुर्यथा श्रुष्टिगुर्यथा आयुरुपममष्टौ मेध्य एतत्ते मातरिश्वा द्वितीयः[2] प्रागाथो वैश्वदेवो भूरि पञ्च कृशः पृषध्रस्य[3] दानस्तुतिस्तु[4] गायत्रं तु तृतीयापञ्चम्यावनुष्टुभौ प्रति पृषध्रः पाङ्क्त्यन्तं[5] सलिङ्गोक्ता देवता त्वमेका पावमानीः षड् वैश्वदेवमन्त्याद्ये च पावमानीस्तुतिः पञ्चमी त्रिष्टुप् इळेव द्वे बृहद्दिवो यच तिस्रः सलुपीरेकैहि मम द्वात्रिंशत्प्राजापत्यो हव्यो वैश्वदेवं तु विवाहार्थाशीस्त्वानुष्टुभं त्वाद्या त्रिष्टुप् तृतीयाविंशीपञ्चविंश्यः पङ्क्तयो दशमी पुरउष्णिग् द्वादशाद्ये आस्तारपङ्क्तिः प्रस्तारपङ्क्तिरेकोनविंशी बृहत्येकोनत्रिंशी त्रिष्टुब्जगतीवोदष्टौ परागदासो ध्रुव एका ध्रुका द्वे उदेका यश्चासौ द्वे ब्रह्म दश वामदेव्यो नकुलः सौरी घर्मस्तुतिर्बार्हस्पत्या साविश्यष्टिर्घर्मपरा एताः सौर्यश्चान्द्रमस्यश्च शेषा जगत्यः ॥**

१. **तु**-का, तत्-अनु. २. **द्वितीयः प्रगाथो वैश्वदेवो**-का; नो विश्व इति वैश्वदेवः प्रगाथः-अनु. ३. **पृषध्रस्य**-का; प्रस्कण्वस्य-अनु. ४. **तु**-का; अनुक्रमण्यां नास्ति. ५. **पाङ्क्त्यन्तं सलिङ्गोक्ता देवता**-का अन्त्याभिसौरी पङ्क्तिः-अनु.

---

१

अ॒भि प्र वः॑ सु॒राध॑स॒मिन्द्र॑मर्च॒ यथा॑ वि॒दे। यो ज॑रि॒तृभ्यो॑ म॒घवा॑ पुरू॒वसुः॑ स॒हस्रे॑णेव॒ शिक्ष॑ति ॥ १॥

श॒तानी॑केव॒ प्र जि॑गाति धृष्णु॒या हन्ति॑ वृ॒त्राणि॑ दा॒शुषे॑।

गि॒रेरि॑व॒ प्र रसा॑ अस्य पिन्विरे॒ दत्रा॑णि पुरु॒भोज॑सः ॥ २ ॥

आ त्वा॑ सु॒तास॒ इन्द॑वो॒ मदा॒ य इ॑न्द्र गिर्वणः।

आपो॒ न व॑ज्रि॒न्नन्वो॒क्यं॒ सरः॑ पृ॒णन्ति॑ शूर॒ राध॑से ॥ ३ ॥

अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषत् ॥ ४ ॥
आ नः स्तोममुप द्रवद्धियानो अश्वो न सोतृभिः ।
यं ते स्वधावन्त्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयः ॥ ५ ॥
उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुम् ।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयः ॥ ६ ॥
यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि । अतो नो यज्ञमाशुभिर्महेमत उग्र ऋष्वेभिरा गहि ॥७॥
अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः ।
येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशे ॥ ८ ॥
एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः । यथा प्रावं एतशं कृत्व्ये धने यथा वशं दशव्रजे ॥९॥
यथा कण्वे मघवन् त्रसदस्यवि यथा पक्थे दशव्रजे ।
यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवत् ॥ १० ॥

= ऋसं ८. ४९ वालखिल्यम् [१]। शांश्रौ ७. २३. ४; १२. ९. ११; १२. ६. १२ भाष्ये ऐब्रा ६. २४ भाष्ये च निर्दिष्टम्। बृहद्दे ६. ८४-८६ द्रष्टव्यम्। १. ≡ साम १. ३. १. ५. ३; २. २. १. १३. १; अथर्व २०. ५१. १। २. ≡ साम २.२.१.१३.२; अथर्व २०. ५१.२। ३. य–का; ये–मॅ; → ऋप्रा २. २८। ७. ऋष्वेभिः–का; उग्रभिः–मॅ-मु। ९[२] = ऋसं ८. ५०. ९[२].

२

प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये । यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहते ॥१॥
शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषुः ॥ २ ॥
यदीं सुतास इन्दवोऽभि प्रियममन्दिषुः ।
आपो न धायि सवनं म आ वसो दुघा इवोप दाशुषे ॥ ३ ॥
अनेहसं वो हवमानमूतये मध्वः क्षरन्ति धीतयः ।
आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरे ॥ ४ ॥
आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।
यं ते स्वधावन् स्वदयन्ति गूर्तयः पौरे छन्दयसे हवम् ॥ ५ ॥
प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।
उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषे ॥ ६ ॥
यद्ध नूनं परावति यद्वा पृथिव्यां दिवि । युजान इन्द्र हरिभिर्महेमत उग्र ऋष्वेभिरा गहि ॥७॥
रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति ।
येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसे ॥ ८ ॥

एतावत्तस्ते वसो विद्याम शूर नव्यसः ।
यथा प्रावो मघवन् मेध्यातिथिं यथा नीपातिथिं धने ॥ ९ ॥
यथा कण्वे मघवन् मेधे अध्वरे दीर्घनीथे दमूनसि ।
यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियम् ॥ १० ॥

= ऋसं ८. ५० वालखिल्यम [ २ ]। शांश्रौ ७. २३. ४; १२. ९. ११ मध्ये निर्दिष्टम्। ऐब्रा ६. २४ सायणभाष्ये द्वितीयमन्त्रस्य निर्देशः। **२. शतानीका हेतयो अस्य** → ऋपा २. ५०. **शिनिर्न**–का; गिरिर्न–मॅ-मु। **५. स्वधावन् स्वधयन्ति**–का; स्वदावन्स्वदन्ति–मॅ-मु। **७. उग्र**–का; ऋष्व–मॅ-मु। ९[२] = ऋसं ८. ४९. ९[२]। **१०. दीर्धनीथे दमूनसि** → ऋपा ५. ४८.

३

यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।
नीपातिथौ मघवन् मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचा ॥ १ ॥
पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।
सहस्राण्यासिषासद्गवामृषिस्त्वोतो दस्यवे वृकः ॥ २ ॥
य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसे ॥ ३ ॥
यस्मा अर्कं सप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमे पदे ।
स त्विमा विश्वा भुवनानि चिक्रदददादिज्जनिष्ट पौंस्यम् ॥ ४ ॥
यो नो दाता वसूनामिन्द्रं तं हूमहे वयम् । विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजे ॥५॥
यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषमश्नुते ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥ ६ ॥
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते॥७॥
प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
यदेदस्तम्भीत् प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवः ॥ ८ ॥
यस्यायं विश्व आर्यो दासः शेवधिपा अरिः । तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः॥९॥
तुरण्यवो मधुमन्तो घृतश्चुतो विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवः ॥ १० ॥

= ऋसं ८. ५१ वालखिल्यम् [ ३ ]। **१. सांवरणौ**–मॅ-मु; सांवरणं–का[1]. । **२. आसिषासत्**–का; असिषासत्–मॅ-मु। **३. अविष्यन्तं**–का; अरिष्यन्तं–मॅ-मु। **१०. मधुमन्तो घृतश्चुतो**–का; मधुमन्तं घृतश्चुतं–मॅ-मु.

1. Schefteloowitz defends the Kashmir reading ( p. 38 ), but compare the names in the latter half of the same verse and also the parallel Khila, III. 4. 1.

४

यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
यथा त्रिते च्छन्द इन्द्र जुजोषस्यायौ मादयसे सचा ॥ १ ॥
पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः। यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजीनसि॥२॥
य उक्था केवला दधे यः सोमं धृषतापिबत् ।
यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभिः ॥ ३ ॥
यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
तं त्वा वयं सुदुघामिव गोदुहे जुहूमसि श्रवःसु च ॥ ४ ॥
यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।
अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दाति नः ॥ ५ ॥
यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहे ॥ ६ ॥
कदा चन प्र युच्छस्युभे नि पासि जन्मनी । तुरीयादित्य सवनं त इन्द्रियमातस्थावमृतं दिवि ॥७॥
यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।
अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवम् ॥ ८ ॥
अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत । पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥ ९ ॥
समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
सं शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषुः ॥ १० ॥

= ऋसं ८. ५२ वालखिल्यम् [ ४ ] । **२. दशशिप्र दशोण्ये** → ऋप्रा २. ७१. **°वृजीनासि**–का; °वृजूनसि–मॅ-मु । **३. धृषतापिबत्**–का; धृषितापिबत्–मॅ-मु । ४[२]. → ऋसं १. ४. १ : सुरूपकृत्नुमूतये सुदुघामिव गोदुहे जुहूमसि; → ऋसं ८. १. १० : आ त्वद्य सबर्दुघां हुवे गायत्रवेपसम् इन्द्रं धेनुं सुदुघां. **गोदुहे**–का → ऋसं १. ४. १; गोदुहो–मॅ-मु. **श्रवःसु च**–का → ऋसं ३. ३७. ७; श्रवस्यवः–मॅ-मु । [१]. **दाति**–का; दातु–मॅ-मु । ६[२] = ऋसं ८. ६१. १०[२] । ७ = वासं ८. ३; तैसं १. ४. २२. **सवनं**–का; हवनं–मॅ-मु ।

५

उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् । पूर्भित्तमं मघवन्निन्द्र गोविदमीशानं राय ईमहे ॥१॥
य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ।
तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहे ॥ २ ॥
आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः । ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवः ॥३॥
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सुन्वन्त्वा वसु ।
शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसि ॥ ४ ॥
इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः । आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभिः॥५॥

आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।
प्र सू तिरा शचीभिर्ये त उक्थिनः क्रतुं पुनत आनुषक् ॥ ६ ॥
यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते । वीतिहोत्राभिरुत देवहूतिभिः ससवांसो विशृण्विरे ॥७॥
अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।
त्वामिदेव तममे समश्वयुर्गव्युरग्रे मतीनाम् ॥ ८ ॥

= ऋसं ८.५३ वालखिल्यम् [ ५ ] । ३. सिश्वन्त्य°–का; सिश्चन्त्व°–मॅ-मु । ४. सुन्वन्त्वा–( → ऋसं १०. ७६.४ : आ नो रयिं सुनोतन )–का; सन्वन्त्वा–मॅ-मु. शशिष्ठेषु–का; शशिष्ठेषु–मॅ-मु । ६. प्र सू तिरा शचीभिर्ये त उक्थिनः → ऋप्रा ८. ४; ३०. । ७. वीतिहोत्राभिः–का; वयं होत्राभिः–मॅ-मु. विशृण्विरे–का; मनामहे–मॅ-मु । ८. मतीनां–का; मथीनां–मॅ-मु ।

## ६

एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः । ते स्तोभन्त ऊर्जमावन् घृतश्चुतं पप्रासो नक्षन्धीतिभिः ॥१॥
नक्षन्त इन्द्रमवसे पुकृत्यया येषां सुतेषु मन्दसे ।
यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्व ॥ २ ॥
आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
वसवो रुद्रा अवसे न आ गमञ्छृण्वन्तु मरुतो हवम् ॥ ३ ॥
पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।
आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवी हवम् ॥ ४ ॥
यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम । तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहन् ॥५॥
आजिपते नृपते त्वमिद्धि नो वाज आ भक्षि सुक्रतो ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहे ॥ ६ ॥
सन्ति ह्य३र्य आशिष इन्द्र आयुर्जनानाम् ।
अस्मान्नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषीमिषम् ॥ ७ ॥
वयं त इन्द्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ।
महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशय ॥ ८ ॥

= ऋसं ८. ५४ वालखिल्यम् [ ६ ] । → बृहद्दे ६. ८८ । १. पप्रासो–का; पौरासो–मॅ-मु । २. पुकृत्यया–का; सुकृत्यया–मॅ-मु । ६. भक्षि–का; वक्षि–मॅ-मु. वयं–का; वीती–मॅ-मु. देवहूतिभिः–का; देववीतिभिः–मॅ-मु. मनामहे–का; वि शृण्विरे–मॅ-मु ।

## ७

भूरीदिन्द्रस्य वीर्यं३ व्यख्यमभ्यायति । राधस्ते दस्यवे वृक ॥ १ ॥
शतं श्वेतास उक्षणो दिवि तारो न रोचन्ते । मह्ना दिवं न तस्तभुः ॥ २ ॥
शतं वेणूञ्छतं शुनः शतं चर्माणि म्लातानि । शतं मे बल्बजस्तुका अरुषीणां चतुःशतम् ॥३॥

सुदेवाः स्थ काण्वायना वयोवयो विचरन्तः । अश्वासो न चङ्क्रमत ॥ ४ ॥
आदित्सातस्य चर्किरन्नानूनं च महि श्रवः । श्यावीरतिध्वसन् पथश्चक्षुषा चन संनशे ॥५॥

= ऋसं ८. ५५ वालखिल्यम् [ ७ ] । **१. अभ्याजति**–का; अभ्यायति–मॅ-मु । **४. सुदेवाः स्थ काण्वायना** → ऋपा ८. २०. **काण्वायना**–मॅ-मु; कण्वायना–का. **चङ्क्रमत**–का; चङ्कमत–मॅ-मु । ५. **आनूनं च**–का; आनूनस्य–मॅ-मु ।

८

प्रति ते दस्यवे वृक राधो अदर्श्यह्रयम् । द्यौर्न प्रथिना शवः ॥ १ ॥
दश मह्यं पूतक्रतुः सहस्रा दस्यवे वृकः । नित्याद्रायो अमंहत ॥ २ ॥
शतं मे गर्दभानां शतमूर्णावतीनाम् । शतं दासाँ अधि स्रजः ॥ ३ ॥
तत्रो अपि प्राणीयत पूतक्रतायी व्यक्ता । अश्वानामिन्न यूथ्यम् ॥ ४ ॥
अचेत्यग्निश्चिकितिर्हव्यवाट् स सुमद्रथः ।
अग्निः शुक्रेण शोचिषा बृहत्सूर्यो अरोचत दिवि सूर्यो अरोचत ॥ ५ ॥
**अग्न आ याह्यग्निभिः०** ॥ ऋ. सं. ८. ६०. १

= ऋसं ८. ५६ वालखिल्यम् [ ८ ] । एतान्यष्टौ सूक्तानि ( खिल ३. १–८ = ऋसं ८. ४९-५६ ) ' अग्न आ याह्यग्निभिः ' ( ऋसं ८. ६० ) इति सूक्तात्पूर्वं पठनीयानि । एतानि बृहद्दे ६. ८४-८६ अत्र निर्दिष्टानि ।

१[२]. = ऋसं १. ८. ५ । **२. पूतक्रतुः**–का; पूतक्रतः–मॅ; पौतक्रतः–मु-जुना । **३. अधि**–का; अति–मॅ-मु । **४. पूतक्रतायी**–का; पूतक्नायै–मॅ–मु. **यूथ्यं**–का; यूथ्यां-मॅ-मु । ५[१]. = साम १. ५. २. २. १. **चिकितिः**–का–साम; चिकितुः–मॅ-मु. ५[२]. **बृहत्सूर्यो**–का–खिल ४. ९. ७; बृहत्सूरो–मॅ-मु ।

९

त्वं द्रप्सं धनुषा युध्यमानमुपातिष्ठो मघवन्नंशुमत्याः ।
प्र शूर आपः सनिता धनानीन्द्र तानि ते पुरुकृत् सहांसि ॥ १ ॥
**त्वं ह त्यत्सप्तभ्यो जायमानः०** ॥ ऋ. सं. ८. ९६. १६

ऋसं ८. ९६. १५ अनन्तरं पठनीयम् । **सनिता धनानि** = ऋसं १. १००. ९; ९. ९०. ३.

१०

पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः । ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतं हितम् ॥१॥
पावमानीर्दिशन्तु न इमँल्लोकमथो अमुम् । कामान्समर्धयन्तु नो देवैर्देवीः समाहृताः ॥ २ ॥
येन देवाः पवित्रेणात्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु मा ॥ ३ ॥
प्राजापत्यं पवित्रं शतोद्यामं हिरण्मयम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥ ४ ॥
इन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या ।
यमो राजा प्रमृणाभिः पुनातु मा जातवेदा मोर्जयन्त्या पुनातु ॥ ५ ॥

पावमानीः स्वस्त्ययनीर्याभिर्गच्छति नान्दनम् । पुण्यांश्च भक्षान् भक्षयत्यमृतत्वं च गच्छति ॥ ६॥

**प्र देवमच्छा मधुमन्त०** ॥ ऋ. सं. ९. ६८. १

ऋसं ९. ६७ अनन्तरं पठनीयम् ।

ऋब्र--मॅ१७-मु-अल-जुना-आउ१३-ऋब्र-पुस्तकेष्विदं विंशर्चम् । आद्याः पञ्चर्चो मॅ-मु-आउ-ऋब्र( पवमान )-पुस्तकेष्वादितो वर्तन्ते । षष्ठी मॅ-मु-आउ--अल--पुस्तकेषु पञ्चदशी । हिरण्यकेशित्रिकालसंध्यायां धर्मसिन्धौ चेदं षड्चम् । आउ-पुस्तके तृतीयचतुर्थमन्त्रयोर्व्यत्यासः । औंधपुस्तक इदमेकविंशर्चम् । १-५ = तैब्रा १. ४. ८. ५-६. १-३, ६ = साम २. ५. २. ८. ३-६. ३ = निरु ५. ६; बौधसू २. १७. ३४.

१. → ऋसं ९. ६७. ३१[१], ३२[१] : ऋषिभिः संभृतं रसम् । **२. दिशन्तु**; दधन्तु-साम. **कामान् समर्धयन्तु**; कामाः स्पर्धयन्तु-अल. **देवैर्देवीः**; देवीर्देवैः-का-साम--धर्सि-तैब्रा; देवैर्देवा-अल. **समाहृताः**—का-साम; समाहिताः-ऋब्र-मॅ-मु-जुना-आउ; समाहिता-अल; समाभृताः-तैब्रा-ऋब्र-धर्सि । **३. पावमान्यः पुनन्तु मा**-तैब्रा-आउ-धर्सि; पवमानः पुनातु मा-अल-जुना; पावमानीः पुनन्तु नः-साम; पावमान्यः पुनन्तु मां-मॅ-मु-ऋब्र । **४. हिरण्मयं**—तैब्रा-ऋब्र-मॅ-मु-धर्सि; हिरण्ययं-आउ; हिरण्मयं-अल. **पुनीमहे**-तैब्रा-ऋब्र-धर्सि-मॅ-मु-आउ; पुनातु मा-अल-जुना । ५. **सुनीती**—का; पुनीही-मु; पुनीती-ऋब्र-औंध. **मा**; आउ-पुस्तके 'मा' नास्ति. **मोर्जयन्त्या**—तैब्रा-मॅ-धर्सि; मूर्जयन्त्या-मु-ऋब्र. पञ्चमो मन्त्रः अल-जुना-पुस्तकयोरीदृशमः स चैवमस्ति-'इन्द्रः सुदीर्ति सुहवा पुनातु सोमः स्वस्त्या वरुणः सुनील्या । यमो राजा प्रमृगाभिः पुनातु मा जातवेदा मूर्जयन्त्या पुनातु' । अल-पुस्तके क्वचिदशुद्धम् । **६. स्वस्त्ययनीर्याभिः**; स्वस्त्ययनीस्ताभिः-साम । शिष्टानां चतुर्दशमन्त्राणां पाठवैविध्यं पौर्वापर्यभेदश्च । १६ = बृहद्दे ६. १४५; १७ = बृहद्दे ६. १४१; १९ = ऋग्वि ३. ३. २; २० = ऋग्वि ४. २५. १ = बृहद्दे ६.१४४. अल-जुना-पुस्तकपाठोऽधो दीयते । तत्र मन्त्राणां क्रमस्त्वेवम् :- अल १-९ = मॅ-मु-आउ ७-१५ ( आउ-पुस्तकक्रमेण ); अल १० = मॅ-मु-आउ ५; अल ११-१४ = मॅ-मु-आउ १-४; अल १५-१६ = मॅ-मु-आउ १६-१७; अल १७ = मॅ-मु-आउ६; अल १८ = मॅ-मु-आउ १९; अल १९ = मॅ-मु-आउ २०; अल २० = मॅ-मु-आउ १८. ऋब्र-आश्वमंसं[१]-पुस्तकयोः क्रमः मॅक्समुल्लरपाठानुसारी, किंतु द्वादशो मन्त्रः ऋब्र-आश्वमंसं[१]-पुस्तकयोश्चतुर्दशत्वेनागच्छति । १७[२]-१८[१] आश्वमंसं[१] मध्ये नास्ति ।

**यन्मे गर्भे वसतः पापमुग्रं यज्जायमानस्य च किं चिदन्यत् ।**
**जातस्य च यच्चापि च वर्धतो मे तत्पावमानीभिरहं पुनामि ॥ १ ॥**
**मातापित्रोर्यन्न कृतं वचो मे यत्स्थावरं जङ्गममाबभूव ।**
**विश्वस्य यत्प्रहर्षितं वचो मे तत्पावमानीभिरहं पुनामि ॥ २ ॥**
**क्रयविक्रयाद्योनिदोषाद्भक्षाद्भोज्यात्प्रतिग्रहात् ।**
**असंभोजनाच्चापि नृशंसं तत्पावमानीभिरहं पुनामि ॥ ३ ॥**
**गोघ्नात्तस्करत्वात्स्त्रीवधाद्यच्च किल्बिषम् ।**
**पापकं च चरणेभ्यस्तत्पावमानीभिरहं पुनामि ॥ ४ ॥**
**ब्रह्मवधात्सुरापानात्सुवर्णस्तेयाद्वृषलीमिथुनसंगमात् ।**
**गुरोर्दाराभिगमनाच्च तत्पावमानीभिरहं पुनामि ॥ ५ ॥**
**बालघ्नान्मातृपितृवधाद्भूमितस्करात्सर्ववर्णगमनमिथुनसंगमात् ।**
**दारेभ्यश्च प्रतिग्रहात्सद्यः प्रहरन्ति सर्वदुष्कृतं तत्पावमानीभिरहं पुनामि ॥ ६ ॥**
**अमन्त्रमन्नं यत्किंचिद्धूयते च हुताशने । संवत्सरकृतं पापं तत्पावमानीभिरहं पुनामि ॥ ७ ॥**

दुर्यष्टं दुरधीतं पापं यच्चाज्ञानतोकृतम् ।
अयाजिताश्चासंयाज्यास्तत्पावमानीभिरहं पुनामि ॥ ८ ॥
ऋतस्य योनयोऽमृतस्य धाम सर्वा देवेभ्यः पुण्यगन्धाः ।
ता न आपः प्रवहन्तु पापं श्रद्धा गच्छामि सुकृतामु लोकं तत्पावमानीभिरहं पुनामि ॥ ९ ॥

१० = का ५
११ – १४ = का १–४
१५ = का ६

पावमानीं पितॄन्देवान् ध्यायेयश्च सरस्वतीम् । पितॄंस्तस्योप तिष्ठेत क्षीरं सर्पिर्मधूदकम् ॥ १६ ॥
ऋषयस्तु तपस्तेपुः सर्वे स्वर्गजिगीषवः । तपसस्तपसोऽग्र्यं तु पावमानीर्ऋचो जपेत् ॥ १७ ॥
पावमानं परं ब्रह्म ये पठन्ति मनीषिणः । सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥ १८ ॥
दशोत्तराण्यृचां चैतत्पावमानीः शतानि षट् । एतज्जुह्वञ्जपंश्चैव घोरं मृत्युभयं जयेत् ॥ १९ ॥
पावमानं परं ब्रह्म शुक्रं ज्योतिः सनातनम् । ऋषींस्तस्योप तिष्ठेत क्षीरं सर्पिर्मधूदकम् ॥ २० ॥

२. **यत्**-अल-जुना; तत्-मॅ-मु-ऋव्र-आउ । ५. **सुवर्ण°**—अल–जुना; स्वर्ण–ऋव्र–मॅ–मु–आउ. **वृषलीमिथुन°**-अल; वृषलिमिथुन°-जुना; वृषलीगमनमैथुन°-मॅ-आउ; वृषलिगमनमैथुन°-मु-ऋव्र. **दाराभि°**-मॅ-अल-जुना-आउ; दाराधि°-मु; दाराद्भि°-ऋव्र । ६. **°मिथुन°**-अल-जुना; °मैथुन°-मॅ-मु-आउ-ऋव्र. **°संगमात्**; °संभवान्-आउ. **प्रहरन्ति**-अल-जुना; प्रहरति-मॅ-मु-आउ-ऋव्र । ८. **°ज्ञानतोकृतं**-अल-जुना; °ज्ञानतः कृतं-आउ । ९. **सर्वा**-अल-जुना; विश्वा-मॅ-मु-आउ-ऋव्र. **पुण्यगन्धाः**-मॅ-मु-आउ-ऋव्र-जुना; पुण्यगन्धा-अल. **श्रद्धा**-अल; शुद्धा-मॅ-मु-आउ-जुना-ऋव्र. **गच्छामि**-जुना-अल; यचामि-आउ । १६. **पावमानीं पितॄन्**-मु; पावमानीं पितॄं-अल; पावमानीः पितॄन्-ऋव्र; पावमानं पितॄन्-बृहद्दे-मॅ-आउ-जुना. **ध्यायेयश्च**-मु-बृहद्दे-मॅ-आउ; ध्यायेभ्यश्च-अल-जुना-ऋव्र. **पितॄंस्तस्योप°**-ऋव्र-अल-जुना-मु-बृहद्दे; ऋषींस्तस्योप°-मॅ-आउ. **तिष्ठेत**-अल-जुना; वर्तेत-बृहद्दे-औंध; वर्ते तत्-ऋव्र-मॅ-मु-आउ । १७. **ऋषयस्तु**-अल-जुना; अथ ते वै-बृहद्दे. **तेपुः**-मॅ-मु-आउ; तेपे-अल-जुना. **स्वर्गजिगीषवः**; सर्वजिगीषमाः-अल; सर्वजिगीषिताः-जुना. **तपसस्तपसोऽग्र्यं तु**-अल-जुना; ततस्ते तपसोग्रेण-बृहद्दे; तपन्तस्तपसोऽग्रेण-औंध. **जपेत्**-अल-जुना; ऽब्रवीत्-मॅ-मु-आउ-ऋव्र; ऽब्रुवत्-बृहद्दे-औंध । १८. **सप्तजन्म**-अल-जुना-ऋव्र-आउ-मु; सप्तजन्मा-मॅ. **वेदपारगः**-अल-जुना-आउ; वेदपारगाः-ऋव्र-मॅ-मु । १९. **ऋचां चैतत्**-अल; ऋचां श्चैतत्-जुना; ऋचांश्चैव-ऋग्वि-ऋव्र-मु-आउ; ऋचश्चैव-मॅ. **जपंश्चैव**-अल-ऋग्वि; जपांश्चैव-जुना; जपेन्मन्त्रं-मॅ-मुं-आउ-ऋव्र. **घोरं**; घोर-मु. **जयेत्**-जुना-अल-ऋग्वि; हरेत्-ऋव्र-मॅ-मु-आउ । २०. **पावमानं**-जुना-अल; पावमान्यः-बृहद्दे. **शुक्रं ज्योतिः**-ऋव्र-मॅ-मु-आउ-जुना-बृहद्दे; शुक्रज्योतिः-अल. **ऋषींस्**-मु-जुना-ऋव्र; पितॄंश्च-मॅ; पितॄंस्-आउ; ऋषींश्च-अल. **तिष्ठेत**-अल; तिष्ठे तत्-मॅ-मु-ऋव्र-आउ. २०[२] बृहद्देवतायां विभिन्नः ।

औंधपुस्तके विंशतिमन्त्रानन्तरमेको मन्त्रोऽधिकः स यथा–

एतत्पुण्यं पापहरं रोगमृत्युभयापहम् । पठतां शृण्वतां चैव ददाति परमां गतिम् ॥

## ११

इळैव वामनु वस्तां घृतेन यस्याः पदे पुनते देवयन्तः ।
घृतपदी शक्वरी सोमपृष्ठोप यज्ञमस्थित वैश्वदेवी ॥ १ ॥

वैश्वदेवीं पुनतीं देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः ।
तया मदन्तः सधमाध्येषु वयं स्याम पतयो रयीणाम् ॥ २ ॥

**प्र तु द्रव परि कोशं नि षीद०** ॥ ऋ. सं. ९. ८७. १

ऋसं ९. ८६ अनन्तरं पठनीयम् ।

मॅ१८–औंध ।

१. ≡ अथर्व ७. २७. **इळैव वा**–मॅ; इडैवास्माँ–अथर्व. **घृतेन**–मॅ; व्रतेन–अथर्व । २[१]. **तन्वो वीतपृष्ठाः** ≡ अथर्व ६. ६२. २[१]. २[२] ≡ अथर्व ६. ६२. २[२]. **मदन्तः**–का–मॅ; गृणन्तः–अथर्व. **सधमाध्येषु**–का; सधमादेषु–मॅ–अथर्व ।

## १२

यत्र लोक्यास्तनुत्यजाः श्रद्धया तपसा जिताः ।
तेजश्च यत्र ब्रह्म च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ १ ॥
यत्र देवा महात्मनः सेन्द्राः समरुद्गणाः ।
ब्रह्मा च यत्र विष्णुश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ २ ॥
यत्र तत्परमं पदं विष्णोर्लोके महीयते । देवैः सुकृतकर्मभिस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव॥३॥

**यत्रानन्दाश्च मोदाश्च०** ॥ ऋ. सं. ९. ११३. ११

ऋसं ९. ११३. १० अनन्तरं पठनीयम् । मॅ–मु–औंध–पुस्तकेष्विदं नवममण्डलान्ते पठनीयम् । आउ–आश्वमंसं[१]–पुस्तकयोरिदं ऋसं ९. ११३ अनन्तरं पठनीयम् ।

मॅ१९–मु–आउ१४–औंध–ऋमं–आश्वमंसं–अल–जुना ।

ऋमं–आश्वमंसं[१]–पुस्तकयोश्चतुर्मन्त्रात्मकमिदं सूक्तम् । आश्वमंसं[२]–पुस्तके मण्डलान्तेऽस्य सूक्तस्य केवलमन्त्या ऋगस्ति । मॅ–मु–आउ–अल–जुना–पुस्तकेष्वेतत्पञ्चर्चम् । १–२ = मॅ–मु–आउ ३–४; ३ = मॅ–मु–आउ १ । औंधपुस्तके षड्चम् । मॅ–मु–आउ–अनुसारेण पञ्च, ऋमं-पुस्तके या चतुर्थी सा चात्र षष्ठी । **१. लोक्याः**—का; लोकाः–ऋमं–मॅ–मु–आउ–जुना. **तनुत्यजाः**—का–आउ; तनूत्यजाः–ऋमं–मॅ–मु–जुना. **ब्रह्म**; ब्रह्मा–ऋमं–जुना; 'तत्र माममृतं कृधीन्द्रायेन्द्रो परि स्रव' इत्यंशो ऋसं ९.११३ सूक्ते प्रतिमन्त्रं समानः । **२. महात्मनः**–का; महात्मानः–इतरेषु. **सेन्द्राः स**°–का; सेन्द्राश्च–मॅ–मु–आउ; °श्चेंद्राश्च–जुना । ऋमं–आश्वमंसं[१]–पुस्तकयोश्चतुर्थो ( औंधपुस्तके षष्ठो ) मन्त्रोऽधो दीयते–

**यत्र तद्विष्णुर्महीयते नराणां च नराधिपम् ।**

**यत्र शङ्खचक्रगदाधरः स्मरणं मुक्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव** ॥ इति परिशिष्टम् ॥

**तद्विष्णु**°; विष्णु°–आश्वमंसं. **च नराधिपं**; नराधिपतिं–आश्वमंसं. °**गदाधरः**; °गदा°–आश्वमंसं; °गदाधर°–औंध. मॅ–मु–आउ–औंध–पुस्तकस्थौ द्वितीयपञ्चममन्त्रौ—

**यत्र तत्परमाव्यं भूतानामधिपतिः ।**

**भावभावी च यो गीश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥**

**यत्र गङ्गा च यमुना यत्र प्राची सरस्वती ।**

**यत्र सोमेश्वरो देवस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥**

एतौ मन्त्रौ ऋमं–पुस्तकेऽप्यन्यत्रोपलभ्येते 'यत्र तत्परमं पदम्' इत्यनेन सह । एतौ अल–जुना–पुस्तकयोश्चतुर्थपञ्चमौ । **परमाव्यं**; परमाप्यं–औंध. °**माधिपतिः**; °मधिपतिं–ऋमं–आउ–जुना–औंध;

॰मधिपति–आउ. **भावभावी**; भावभागी–ऋमं. **च यो गीश्च**; वयो गीश्च–आउ; च योगीश्च–औंध; च योगी च–ऋमं. **यमुना**; यमुना च–मु–जुना।

## १३

सस्रुषीस्तदपसो दिवा नक्तं च सस्रुषीः। वरेण्यक्रतुरहमा देवीरवसे हुवे॥ १॥

**ओं चित्सखायं सख्या ववृत्याम्०** ॥ ऋ. सं. १०. १०. १

ऋसं १०. ९ अनन्तरं पठनीयम्।

अथर्व ६. २३. १; वैसू ४. १४; कौसू ७. १४; मॅ २०–आउ १५–आश्वमंसं–आचं–संभा–औंध–अल–जुना।

**॰क्रतु॰**–का–अथर्व; ॰क्रतू॰–मॅ–आउ–जुना–आचं–संभा. **॰रवसे**–मॅ–आउ–जुना–उद्गीथ–आचं–संभा; ॰रवसा–का. **आ देवीरवसे हुवे**; अपो देवीरुप ह्वये–अथर्व।

ऋग्वेदसंहिताया दशमे मण्डले उद्गीथभाष्यमंशत उपलब्धमस्ति। ऋसं १०. ४६. ५ सायणभाष्ये उद्धृतादुद्गीथवचनादेते उद्गीथाचार्याः सायणपूर्वकालीना इति व्यक्तं प्रतीयते। ऋसं १०. ९ भाष्यारम्भे इदं सूक्तं 'खैलिक्या सह दशर्चम्' इत्युक्त्वा 'सस्रुषीः' इत्यादिको मन्त्रस्तैरुद्धृत्य व्याख्यातः। तद्व्याख्यानं शोधयित्वात्रोद्ध्रियते–'अब्देवत्या खैलिक्येषा। सस्रुषीः स्रवणशीला निम्नानुसारिण्यः तदपसः तदेव स्रवणशीलत्वं निम्नानुसारित्वमपः कर्म यासां ताः। दिवा नक्तं च अहनि रात्रौ च सस्रुषीः। वरेण्यक्रतुः स्नानपानपावनादिवरणीयकर्मा अहं देवीरपः आ हुवे आह्वयामि अवसे आत्मनो रक्षणार्थं तर्पणार्थं वा'।

सप्तमाष्टकेऽष्टाविंशतिवर्गानन्तरं ( दशमे मण्डले अष्टादशसूक्तानन्तरं ) षष्ठोऽध्यायः समाप्तः। तथा च 'भद्रं नो' इति दशर्चं विंशं सूक्तमिति सर्वानुक्रमणीतोऽपि लभ्यते। उद्गीथकृते ऋग्वेदभाष्ये तावत् 'भद्रं नो' इत्येकर्चं विंशं सूक्तं विद्यते तदनन्तरं च सप्तमाष्टके षष्ठोऽध्यायः ( = चतुष्पञ्चाशोऽध्यायः ) समाप्तः 'अग्निमीळे भुजाम्' इति द्वितीयेन मन्त्रेण चाग्निममेकविंशं सूक्तं प्रारभ्यते। तच्च 'जुषद्धव्या' इति पञ्चम(चतुर्थ)मन्त्रानन्तरं त्रुटितम्। अनन्तरं 'कुह श्रुत इन्द्रः' इति द्वाविंशं सूक्तमागतम्। उद्गीथभाष्यगतोऽयं गणनाभेदः किंमूल इत्यन्वेषणीयम्।

## १४

एहीन्द्र वसुमता रथेन साकं सोममपिबन्मदाय।

हृत्सु पीत्वा मन्दसानो मरुद्भिः स्तीर्णं याहि वृत्रहत्याय वज्री॥ १॥

**इन्द्र सोममिमं पिब०** ॥ ऋ. सं. १०. २४. १

ऋसं १०. २३ अनन्तरं पठनीयम्। **हृत्सु पीत्वा** → ऋसं ८. ४८. १२ : हृत्सु पीतो.

मॅ२१–मु–आउ१६–अल–जुना–आश्वमंसं–औंध–ऋमं–पुस्तकेषु ऋसं १०. ७५. ५ अनन्तरं पठनीयमेकर्चं परिशिष्टं दत्तमस्ति तद्यथा—

**सितासिते सरिते यत्र संगथे तत्राप्लुतासो दिवमुत्पतन्ति।**
**ये वै तन्वं१ वि सृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते॥ १॥**

**संगथे**–मॅ–मु–औंध–ऋमं–आउ; संगते–मॅक्समुल्लरमहाशयानां केषुचिल्लिखितपुस्तकेषु।

## १५

मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु।

मम वाचमेकव्रता जुषस्व बृहस्पतिस्त्वा नि युनक्तु मह्यम्॥ १॥

धाता त्वा मह्यमदद्न्मह्यं धाता दधातु त्वा। प्र धाता त्वा मह्यं प्रा यच्छन्मह्यं त्वानुमतिर्ददौ॥२॥

अनुमतेऽनु मन्यस्व स्वानुमतेऽनु मन्यस्व ।
मह्यमेनं समा कुरु वाचा चक्षुषा मनसा मयि संयतम् ॥ ३ ॥
आ हरयत्ते हृदयं तदस्तु हृदयं मम । अथो यन्मम हृदयं तदस्तु हृदयं तव ॥ ४ ॥
हृदयेन हृदयं प्राणेन प्राणमगृभम् । गृभ्णामि चक्षुषा चक्षुर्गृभ्णामि मनसा मनः ॥ ५ ॥
आकूतं चित्तं चक्षुः श्रोत्रमथो बलम् । श्रियं यां देवा जग्मुस्तया बध्नामि ते मनः ॥ ६ ॥
अन्नमयेन मणिना प्राणसूत्रेण पृश्निना । बध्नामि सत्यग्रन्थिना हृदयं च मनश्च ते ॥ ७ ॥
आवर्तनं निवर्तनं मया संवननं तव । इन्द्राग्नी अश्विनोभा त्वष्टा धाता च चक्रतुः ॥ ८ ॥
येन चित्तेन वदसि येन त्वान्योऽभि दासति । सर्वं तदग्न आ भर मह्यं दासाय राध्यः ॥९॥
अनुवनं सुवनमुद्वनं वनम् । घर्मस्य पश्य रूपाणि तेन बध्नामि ते मनः ॥ १० ॥
सं मा विशन्तु पशवः सं मा विशन्त्वोषधीः । सं मा विशन्तु राजानो यथाहं कामये तथा॥११॥
अन्तरं च नेदीयश्च मनो देवा उपासते ।
अनन्तरोऽहं तुभ्यं भूयासं हृदयं मे भूयासमनन्तरम् ॥ १२ ॥
सभा समासावित्तुश्चावतामुभे प्रजापतेर्दुहितारौ सचेतसौ ।
संगथेषु पदे चारु नमो वैश्वानराय अधि ॥ १३ ॥
[...]य पदेन त आ ते प्राणान् समा ददे । अथो एतत्समाददे यदन्येषु जनेषु च ॥ १४ ॥
अहं ते चक्षुषा चक्षुरहं ते मनसा मनः । अहं गन्धर्वरूपेण सन आ वर्तयामि ते ॥१५॥
हतचित्तो हतमनो हतो अन्येषु ते मनः । सर्वेषु कृष्णकेशेषु हतो अन्येषु ते मनः ॥ १६ ॥
सर्वासु शुद्धदन्तीषु हतो अन्यासु ते मनः । मां चैवं पश्य सूर्यं च मा तृतीयं कदा चन ॥१७॥
स्मृतिरसि कामसंजननी मयि ते कामो अस्तु । यत्ते मनो वरेण्यं लोकेषु बहुधा कृतम् ॥१८॥
समुद्रमिव सरितः सर्वे त्वानुवर्तयामसि । आ दीपयामि ते हृदयमग्ना मेऽवं प्र दीपयामसि ॥१९॥
एष ते हृदयेऽङ्गारो दीप्तस्ते अस्मि दह्यसे ।
मया ते दह्यमानस्याग्निर्दासेन तृप्यतु भूमिर्दासेन तृप्यतु ॥ २० ॥ .
चित्तं च ते मनश्च ते मयि धाता नि यच्छतु । मयि ते चित्तमायत्तं मनस्ते मयि समश्नुते॥२१॥
आवृतास्ते मया प्रा

॥ २२ ॥
॥ २३ ॥
॥ २४ ॥
॥ २५ ॥

नष्टं ते कृपमन्यस्मिन्मयि ते रमतां मनः । अनु [ ] मनः ॥ २६ ॥
चक्षुः श्रोत्रं चाधीतं च सर्वं ते अहमा ददे । हृद्य ऋषिरजायत दे [ ] ॥२७॥
तदेवैष्वदधुर्हृदयेष्वर्थदर्शिनम् । सर्वज्ञं सर्वदर्शिनं स नः कर्माणि साधय ॥ २८ ॥

ये [ ] स्तव जातवेदः प्रविष्टा अग्निर्दुर्हृदयस्य कर्म ।
तेषामहं भागधेयं जुहोमि तां मा देवाः सर्वैः कामैस्तर्पयन्ताम् ।। २९ ।।
भृगूणामङ्गिरसां तपसो गृणं संयतम् । कुशिकाभ्यंवराणां च मन आ वर्तयामि ते ।। ३० ।।
यत्ते मनो वरेण्यं लोकेषु बहुधा कृतम् । तत्त आ वर्तयामस्यग्निश्चाहंश्च ब्राह्मणः ।। ३१ ।।
यत्कक्षीवान् संवननं पुत्रो अङ्गिरसामवेत् । तेन नोऽद्य विश्वे देवाः सं प्रियां समवीवनन्।।३२।।

इदमुत्तरं च ऋसं १०. ८४ अनन्तरं पठनीयम् । खिलानुक्रमण्यनुसारेणेदं हृद्यसूक्तम् । ' सुहृद्भूत्वा-सुहृद्यस्य देयं संवननं स्मृतम् । एकैकमभिरूपं तु हृद्यसूक्ताद्यतः पुनः ' इति ऋग्वि ३. २१. २-३ । बृहद्दे ७. ११७ अपि द्रष्टव्यम्[1] । १ ≡ पागृ १. ८. ८; २. २. १६; मागृ १. १०. १३; २२. १०; आश्वगृ १. २१. ७; शांगृ २. ४. १; मंब्रा १. २. १५;→ मंदी; ऋमं; संकौ ( उपनयन ); हिगृ १. ५. ११.

१. → अथर्व ६. ९४. २. **हृदयं ते**–का–ऋमं–शांगृ–संकौ; ते हृदयं–इतरेषु. **दधामि**—का–शांगृ–आश्वगृ–पागृ–संकौ–ऋमं–मंदी; दधातु–मागृ–मंब्रा. **एकव्रता**–का; एकव्रतो–ऋमं–संकौ; एकमना–इतरेषु. **बृहस्पतिः**–का–ऋमं–मंब्रा–शांगृ–संकौ; प्रजापतिः–मागृ–पागृ–आश्वगृ–मंदी । **३. अनुमतेऽनु मन्यस्व**→ गोगृ १. ३. २; खागृ १. २. १८; आपगृ १. २. ३; हिगृ १. २. ९. **४.** → मंब्रा १. ३. ९ : यदेतद्धृदयं तव तदस्तु हृदयं मम । यदिदं हृदयं मम तदस्तु हृदयं तव । **७.** ≡ मंब्रा १. ३. ८; गोगृ २. ३. २१. **अश्नमयेन**–का; अन्नप्राशेन–मंब्रा–गोगृ. **हृदयं च मनश्च**–का; मनश्च हृदयं च–मंब्रा । **८.** → तैसं ३. ३. १०. १ः आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र । **९. अग्न**; अत्र ? **१३**[१]. ≡ अथर्व ७. १२. १ः सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने । **१८**[२]. = ३१[१]. **२०. दासेन**[2]; दासेन न–का । **२९**[२] ≡ बृउ ६. ३. १. **तेषां**; तेभ्यो–बृउ. **तां मा देवाः**; ते मा तृप्ताः–बृउ. **तर्पयन्तां**; तर्पयन्तु–बृउ । **३०**[१]. **गृण**–का; उग्रेण ? → बृहद्दे ६. १४१ : तपसोग्रेण; खिल ३. १०. १७ : तपसोऽग्र्यं । **३२.** = खिल ५. १. ३; संकौ ( कन्यादान )।

## १६

उत्तुदैनं गृहपते ज्ञातेभ्यः शयनादधि । ग्रीवां गृहीत्वोत्तिष्ठ पादतो न विवेशय ।। १ ।।
उत्खादुदन्तु मरुत उत्समुद्रमतो दधि । ऋत्वार्यमग्निर्दहतु क्रत्वा तपतु सूर्यः ।। २ ।।
कामशय्यार्थिऽभितप्तां यथा स्त्रियं शोषयसि । एवं शोषय नोऽरातीर्दिवा नक्तं दशास्यतम्।।३।।
इमां मे मित्रावरुणौ कृधि चित्तेन व्यस्यताम् । दत्वां पीत्वाग्रतः कृत्वा यथास्यां देवशो वशे।।४।।
परान्कृणुष्व दासान् दैवीर्वशानन्ववायिनः । अधिष्ठाय पदा मूर्ध्नि सान्वयाञ्छश्वतीः समाः।।५।।
ऋतुभिष्ट्वार्तवेभिरायुषा सह वर्चसा । संवत्सरस्य तेजसा तेन मा सह शुन्धत ।। ६ ।।
अनेन ब्रह्मणाग्ने त्वमयं चेन्द्रो न ईळिनः । सम्राजं चाधिपत्यं च स्वानां कृणु तमुत्तमम्।।७।।
अग्ने नि जहि संहितानिषून् मर्मणि मर्मणि । खादिरं हृदि शङ्कुनो द्विषतो न विवेशय।।८।।
**सत्येनोत्तभिता भूमिः०** ।। ऋ. सं. १०. ८५. १

ऋसं १०. ८४ अनन्तरं पठनीयम् । इदं परागदासस्यार्षमिति खिलानुक्रमणी । ऋग्वि ३. ११२-११४; बृहद्दे[3] ७. ११८ मध्ये पराकदास इत्यस्यर्षेर्नाम [ बृहद्दे–' पराकदास आग्नेयं यदुदित्यष्टकं परम् ।

1. Comp. Bṛhaddevatā, part II, p. 281
2. Cf. A. B. Keith, JRAS 1907, p. 225
3. Comp. Bṛhaddevatā, part II, p. 281

मैत्रावरुण्यृक्तत्रास्ति चतुर्थ्यैन्द्राग्न्युपोत्तमा '॥ ऋग्वि–' पराकदासस्य विधिं हृद्येनोक्तं विदुर्बुधाः । स्त्रीणां संवननं चैतत्पुंसामपि विधीयते ॥ द्वेष्यं तु ज्ञातिनामेव जयश्चैव सदा युधि । खादिरं कारयेच्छङ्कुं हृदि तं संनिवेशयेत् । कृत्वा प्रतिकृतिं पूर्वं पांसुभिर्वाथवा तुषैः । इषुमप्यनुमन्त्र्यैव संग्रामं संप्रकल्पयेत् '॥ ] अस्य सूक्तस्य पञ्चममन्त्रस्य प्रथमपादादृषेर्नामेदं संपन्नं दृश्यते । चतुर्थो मन्त्रो मित्रावरुणौ स्तौति सप्तमश्चेन्द्रमिति यत् बृहद्देवतायामुक्तं तत्सत्यमेव ।

१. **शयनात्** → अथर्व ३. २५. १: उत्तुदस्त्वोत्तुदतु मा धृथाः शयने स्वे । **२. समुद्रं**; समुद्रां–का । ६. ≡ अथर्व ५. २८. १३; हिगृ. १. ११.२. °**ष्ट्वार्तवैरायुषा सह वर्चसा**–का; °ष्ट्वार्तवैरायुषे वर्चसे त्वा–अथर्व–हिगृ ( हिगृ-मध्ये ' त्वा ' नास्ति ). **तेजस्त**–का; धायसा–हिगृ. **तेन मा सह शुन्धत** ≡ ऋसं १०. १७. १४; तेन संहनु कृण्मसि–अथर्व; तेन सन्नुगृह्णासि–हिगृ । ८. **खादिरं** → ऋग्वि. ३. २१: खादिरं कारयेच्छङ्कुं हृदि तं संनिवेशयेत् । ५. **शश्वतीः समाः**; शाश्वतीः समाः–का[1] ।

## १७

ध्रु॒वैधि॒ पोष्या॒ मयि॒ मह्यं॒ त्वादा॒द्बृह॒स्पतिः॑ । मया॒ पत्या॑ प्र॒जाव॑ती॒ सं जी॑व श॒रदः॑ श॒तम् ॥ १ ॥

**वि॑ हि सोतो॒रसृ॑क्षत०** ॥ ऋ. सं. १०. ८६. १

ऋसं १०. ८५ अनन्तरं पठनीयम् । अथर्व १४. १. ५२; शांगृ १. १७; पागृ १. ८. १९; आपमं १. ८. ९; ऋमं–मंदी–विप-मॅ२२-मु–आउ१७-आश्वमंसं–अल.

ऋमं–मॅ–मु–आउ–अल–जुना–आश्वमंसं–पुस्तकेष्वस्मान्मन्त्रात्पूर्वं पञ्च मन्त्रा अधिकाः । बृहद्दे ७. १३७ अनुसारेणायं मन्त्रः ऋसं १०. ८५ सूक्तस्यान्तिमः [ → ' आ नः ( = ऋसं १०. ८५. ४३ ) प्रजापते इमां ( = ऋसं १०. ८५. ४५ ) ऐन्द्री चान्त्या बृहस्पतेः ' । ] । स च बृहस्पतिं स्तौति[2] ।

**ध्रुवैधि**; ममेयमस्तु–अथर्व. **मयि**; अथर्ववेदे नास्ति. **पोष्या**–अथर्व–आपमं–ऋमं–विप–मॅ–मु–आउ; पोष्ये–पागृ–मंदी. **प्रजावती**; प्रजावति–अथर्व ।

ऋमं–मॅ–मु–आउ–आश्वमंसं–पुस्तकेषु वर्तमानाः पञ्च मन्त्रा अधो दीयन्ते—

**अविधवा भव वर्षाणि शतं साग्रं तु सुव्रता । तेजस्वी च यशस्वी च धर्मपत्नी पतिव्रता ॥ १ ॥**
**जनयद्बहुपुत्राणि मा च दुःखं लभेत्कचित् । भर्ता ते सोमपा नित्यं भवेद्धर्मपरायणः ॥ २ ॥**
**अष्टपुत्रा भव त्वं च सुभगा च पतिव्रता । भर्तुश्चैव पितुर्भ्रातुर्हृदयानन्दिनी सदा ॥ ३ ॥**
**इन्द्रस्य तु यथेन्द्राणी श्रीधरस्य यथा श्रिया । शंकरस्य यथा गौरी तद्भर्तुरपि भर्तरि ॥ ४ ॥**
**अत्रेर्यथानुसूया स्याद्वसिष्ठस्याप्यरुन्धती । कौशिकस्य यथा सती तथा त्वमपि भर्तरि ॥ ५ ॥**

२ **लभेत्**; लभेः–ऋमं ।

## १८

एक॑ ए॒वाग्निर्ब॑हु॒धा समि॑द्ध॒ एकः॒ सूर्यो॒ विश्व॒मनु॒ प्रभू॑तः ।
एकै॒वोषाः सर्व॑मि॒दं वि भा॒त्येकं॒ वा इ॒दं वि ब॑भूव॒ सर्व॑म् ॥ १ ॥
यमृ॒त्विजो॑ बहु॒धा क॒ल्पय॑न्तः॒ सचे॑तसो य॒ज्ञमि॒मं वह॑न्ति ।
यो अ॑नूचा॒नो ब्रा॑ह्म॒णो यु॒क्त आ॑स्ते॒ का स्वि॒त्तत्र॒ यज॑मानस्य सं॒वित् ॥ २ ॥

**यावन्मात्रमुषसो न प्रतीकम्०** ॥ ऋ. सं. १०. ८८. १९

1. Cf. A. B. Keith, JRAS 1907, p. 225
2. Comp. Bṛhaddevatā, part II, p. 287

ऋसं १०. ८८. १८ अनन्तरं पठनीयम्। शाश्रौ १६. १३. १८ अपि तदेव दर्शयति। ऋसं १०. ८८. १८ भाष्ये 'अत्रोत्तराणि वालखिल्यसंहितायां दर्शितानि' इत्युक्त्वा 'एक एवाग्निः' इति मन्त्र उद्धृतः सायणाचार्यैः स्वकीय ऋग्वेदभाष्ये। शाङ्खायनशाखायां दशमं वालखिल्यसूक्तमपठित्वा 'एक एवाग्निः' 'यमृत्विजो' इति तत्स्थं मन्त्रद्वयं 'यावन्मात्रम्' इत्यस्मात्पूर्वं खिलत्वेन पठन्तीति चरणव्यूहभाष्ये लिखितम्। एवं जुनागडलिखितपुस्तके 'यमृत्विजो' इत्यादि वालखिल्यं नास्ति 'एक एवाग्निः' 'यमृत्विजो' इति मन्त्रौ च 'यावन्मात्रम्' इत्यस्मात्पूर्वं लिखितौ। १. = वालखिल्य १०. २ (ऋसं ८. ५८. २). **प्रभूतः**–मॅ–मु–आउ–जुना; प्रभूत–का. **एकैवा**–का–जुना; एकं वा–मॅ–मु–आउ। **२.** = वालखिल्य १०. १ (ऋसं ८. ५८. १). **आस्ते**–का; आसीत्–मॅ–मु–आउ।

१९

उदपप्ताम वसतेर्वयो यथा रिणन्त्वा भृगवो मन्यमानाः।
पुरूरवः पुनरस्तं परेह्या मे मनो देवजना अयान्त्स्युः॥ १॥
**प्र ते महे विदथे शंसिषं हरी०** ॥ ऋ. सं. १०. ९६. १

ऋसं १०. ९५ अनन्तरं पठनीयम्। जुनागडलिखितपुस्तक इदमुपलभ्यते।

१[१] ≐ ऋसं १. १२४. १२; ६. ६४. ६: उत्ते वयश्चिद्वसतेरपप्तन्. १[२]. = ऋसं १०. ९५. २. **उदपप्ताम**–जुना; उदपप्तम–का. **रिणन्त्वा**–का; रणंत्वा–जुना. **परेह्या मे**–जुना; परेहि यामे–का. **अयान्त्स्युः**–जुना; अयात्स्वः–का।

२०

[यच्च कृतं] यदकृतं यदेनश्चकृमा वयम्। ओषधयस्तस्मात्पान्तु दुरितादेनसस्परि॥ १॥
**बृहस्पते प्रति मे देवतामिहि०** ॥ ऋ. सं. १०. ९८. १

ऋसं १०. ९७ अनन्तरं पठनीयम्। जुनागडलिखितपुस्तक इदमुपलभ्यते। **यच्च कृतं**–जुनागडलिखितपुस्तके। च्चं इति स्वरितं कृ इत्यनुदात्तं च। का-पुस्तकेऽत्र त्रुटिर्वर्तते। 'यद्' इति खिलानुक्रमणीतः आद्यं पदमुद्धृत्य 'अचित्तम्' इति शेफ्टेलोवित्झमहाशयैरभ्यूहितमासीत् (= यदचित्तं)।

**यदेनश्चकृमा वयं** = वासं ३. ४५; लाश्रौ २०. १२. १२।

२१

असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्धमाना।
तां गूहत तमसापव्रतेन यथामीषामन्यो अन्यं न जानात्॥ १॥
अन्धा अमित्रा भवताशीर्षाणोऽहय इव। तेषां वो अग्निदग्धानामिन्द्रो हन्तु वरंवरम्॥ २॥

• इदमुत्तरं च ऋसं १०. १०३ अनन्तरं पठनीयम्[1]।

१. = साम २. ९. ३. ४. ३; अथर्व ३. २. ६; वासं १७. ४७; आसू; मंदी। २. = साम २. ९. ३. ८. २; अथर्व ६. ६७. २. इदमृग्द्वयं मॅ २३–मु–आउ१८–अल–जुना–ऋब्र (शान्तिपाठः)-औध–ऋमं–आश्वमंसं–पुस्तकेषूपलभ्यते। १[१]. **अभ्यैति न ओजसा**–का–वासं–ऋमं–मॅ–मु–आउ–जुना–आसू–मंदी–ऋब्र; अभ्येति न ओजसा–साम; अस्मानैत्यभ्योजसा–अथर्व. १[२]. ≐ ऋसं ५. ४०. ६: गूळ्हं सूर्यं तमसापव्रतेन. **गूहत**–का; विध्यत–अथर्व. **यथामीषां**–का–मॅ–आउ–जुना; यथामीषा-

1. Cf. Bṛhaddevatā, Part II, p. 297

ऋमं–ऋब्र–मु; यथामी–वासं–आसू–मंदी; यथैतेषां–साम; यथैषां–अथर्व. **जानात्**–का–साम–अथर्व–ऋमं–मॅ–मु–आउ–जुना; जानन्–वासं–आसू–मंदी. २. ≐ ऋसं १०. १०३. १२[२]. **अन्धा अमित्रा भवता**; मूढा अमित्राश्चरता–अथर्व. **°शीर्षाणोऽहय**-का–साम; °शीर्षाणा अहय–ऋमं–मॅ–मु–आउ–जुना–ऋब्र; °शीर्षाण इवाहयः–अथर्व. **अग्निदग्धानां**–का–जुना; अग्निमूढानां–अथर्व; अग्निदग्धानामग्निमूळ्हानां–ऋमं-मॅ-मु-आउ-ऋब्र; अग्निनुन्नानां-साम. **वरंवरं**; वरंवनम्–ऋब्र ।

## २२

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ॥ १ ॥
इयं पित्रे राष्ट्र्येत्यग्रे प्रथमाय जनुषे भूमनेष्ठाः ।
तस्मा एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्ति प्रथमाय धास्यै ॥ २ ॥
महान्मही अस्तभायद्विजातो द्यां पिता सद्म पार्थिवं च रजः ।
स बुध्न्यादाष्ट जनुषाभ्यु३ग्रं बृहस्पतिर्देवता तस्य सम्राट् ॥ ३ ॥
अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभिप्रियं मतिं कविम् ।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ ४ ॥
ता सूर्याचन्द्रमसा गातुवित्तमा महत्तेजो वसुमद्भ्राजतो दिवि ।
सामात्मना चरतः सामचारिणा ययोर्व्रतं न वसे जातु देवयोः ॥ ५ ॥
उभावन्तौ परि यात अर्म्या दिवो न रश्मींस्तनुतो व्यर्णवे ।
उभा भुवन्ती भुवना कविक्रतू सूर्या न चन्द्रा चरतो हतामती ॥ ६ ॥
पती द्युमद्विश्वविदा उभा दिवः सूर्या उभा चन्द्रमसा विचक्षणा ।
विश्ववारा वरिवोभा वरेण्या ता नोऽवतं मतिमन्ता महिव्रता ॥ ७ ॥
विश्ववपरी प्रतरणा तरन्ता सुवर्विदा दृशये भूरिरश्मी ।
सूर्या हि चन्द्रा वसु त्वेषदर्शना मनस्विनो भानु चरतो नु सं दिवम् ॥ ८ ॥
अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः ।
अस्मे सूर्याचन्द्रमसाभिचक्षे श्रद्धे कमिन्द्र चरतो वितर्तुरम् ॥ ९ ॥
पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम् ।
विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥ १० ॥
**असावि सोमः पुरुहूत तुभ्यम्०** ॥ ऋ. सं. १०. १०४. १

इत्यृग्वेदे खिले तृतीयोऽध्यायः ॥

ऋसं १०. १०३ अनन्तरं पठनीयम् । खिलानुक्रमणीमतेनेदं वामदेव्यस्य नकुलस्यार्षम् । निरुक्तटीकाकारो दुर्गाचार्योऽपि 'वि सीमतः सुरुचो वेन आवः' ( निरु १. ७ ) 'ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि' ( निरु ६. १२ ) इति मन्त्रौ नकुलस्य वामदेव्यस्य सूक्तादुद्धृताविति ब्रवीति ।

नकुलसूक्तस्य चतुर्थे मन्त्रे द्वितीयः पादोऽष्टादशाक्षर इति ऋक्प्रातिशाख्ये (१७.४५) निर्दिष्टम्–' एकादशैव च्छन्दसि पादा ये षोळशाक्षराः । सर्वे त्रिककुद्कीयासु नाकुलेऽष्टादशाक्षरः ' ॥ तथा चात्र बृहद्देवता[1] (८. १४-१६[3])—' चतुर्थी बार्हस्पत्या स्यान्नाकुले च महानिति । द्वृचस्तु मारुतः प्रेतेत्यैन्द्री वा ब्रह्म यत्परम् ॥ तत्रानिरुक्तसूक्तादावृगेका सूर्यमर्चति । घर्मपराश्चतस्रस्तु सवितारमभीति या ॥ सूक्तशेषस्य षळृचः सूर्याचन्द्रमसौ सह ' ।

' असौ या सेना ' इति मरुद्देवताकं द्वृचं सूक्तं ऋसं १०.१०३ अनन्तरं पठनीयमिति ' द्वृचस्तु मारुतः ' इत्यनेन सिद्धम् । तेनैव सह ' ब्रह्म जज्ञानम् ' इति सूक्तं पठनीयमिति यत् बृहद्देवतायामुक्तं तदपि खिलानुक्रमण्या संगच्छते । अस्य नकुलसूक्तस्य देवताज्ञापनविषये बृहद्देवतायाः खिलानुक्रमण्याश्च प्रायः समानत्वं दृश्यते । ' ...... सौरी घर्मस्तुतिर्बार्हस्पत्या सावित्र्यष्टिर्घर्मपरा एताः सौर्यश्चान्द्रमस्यश्च शेषा जगत्यः ' इति खिलानुक्रमणी । अस्य प्रथमानुक्तदेवताका ऋक् सूर्यं स्तौति (' तत्रानिरुक्तसूक्तादावृगेका सूर्यमर्चति ') । अथर्ववेदानुक्रमण्यां (४. १. १) निरुक्ते (१. ७) चेयमृगादित्यं स्तौतीत्येवोक्तम् । ' ब्रह्म जज्ञानमित्यस्य नकुल ऋषिः ब्रह्मा देवता ' इति तु संकौ । द्वितीया ' इयं पित्रे ' इत्याद्या घर्मस्तुतिपरेति खिलानुक्रमणीवचनम् । घर्मशब्दस्य साक्षान्निर्देशोऽपि तस्यामृच्युपलभ्यते । बृहद्देवतापाठेऽस्या ऋचो देवता नोक्ता दृश्यते । ' घर्मपराः' इत्यस्य स्थाने ' घर्मं परा ' इति बृहद्देवताया एकस्मिन् लिखितपुस्तक उपलभ्यमानः पाठः खिलानुक्रमणीवचनेन समन्वियात् । परा (= द्वितीया) घर्मं स्तौतीति तस्यार्थो भवेत् । तृतीया ' महान् ' इति बृहस्पतिं स्तौति (' नाकुले च महानिति ') । ' अभि त्यम् ' इति चतुर्थी सवितृदेवताका (' सवितारमभीति या ') । एताश्चतस्र ऋचः प्रवर्ग्ये विनियुक्ताः (' घर्मपराश्चतस्रस्तु ') → ऐब्रा १. १९; आश्वश्रौ ४. ६; शांश्रौ ५. ९ । शिष्टाः षडृचः सूर्याचन्द्रमसौ स्तुवन्ति[2] (' सूक्तशेषस्य षळृचः सूर्याचन्द्रमसौ सह ') ।

**१–४** = आश्वश्रौ ४. ६; ऐब्रा १. १९. **१, २, ४** = शांश्रौ ५. ९. **१–३** = अथर्व ४. १. १, २, ५. **५–१०** = तैब्रा २. ८. ९. १, २

**१.** → मैसं २. ७. १५; कासं १६. १५; २०. ५; ३८. १४; कपिसं २५. ५; ३२. ७; तैसं ४. २. ८. २; ५. २. ७. १; वासं १३. ३; साम १. ४. १. ३. ९; सामविब्रा १. ६. ४. ८; तैब्रा २. ८. ८. ८.; ३. १२. १. १; शांब्रा ८. ४; तैआ १. १३. ३; कौसू ९. १; १५. २; १८. २५; १९. १; २५. १५; ३८. २३; ५१. ७; ७९. ११; १३९. १०; बौधसू २. १८. ७; वैसू १४. १; शांश्रौ १५. ३. ६; १८. १. २; आचं; मंदी; पश्वामृ; ऋब्र(यज्ञोपवीत); प्रर; ऋमं; संकौ; शांक; मामंसं; शांम; धपंशां; धसिं । **२.** → शांश्रौ १५. ३. ६ भाष्यं; वैसू १४. १ । **३.** → तैसं २. ३. १४. ६. **४.** → साम १. ५. २. ३. ८; मैसं १. २. ५; कासं २. ६; २४. ५; कपिसं १. १९; ३७. ६; तैसं १. २. ६. १; ६. १. ९. ४; वासं ४. २५; अथर्व ७. १४. १-२; कौसू २४. ३; शब्रा १३. ५. १. ११; शांब्रा २३. ८; २७. २; ऋप्रा १७. ४४; वैसू १३. ७; धपंशां; ऋब्र । **९.** = ऋसं १. १०२. २ । **१०.** = ऋसं १०. ८५. १८; मैसं ४. १२. २; तैब्रा २. ७. १२. २; अथर्व ७. ८१. १; १३. २. ११; १४. १. २३.

**१**[1]. ± अथर्व १९. २२. २१ : भूतानां ब्रह्मा प्रथमो ह जज्ञे । **२. पित्रे**–का–आश्वश्रौ–शांश्रौ–ऐब्रा; पित्र्या–अथर्व–वैसू. **एत्यग्रे**–का–ऐब्रा–आश्वश्रौ–शांश्रौ; एत्वग्रे–अथर्व. **भूमनेष्ठाः**–आश्वश्रौ–शांश्रौ; भुवनेष्ठाः–अथर्व. **श्रीणन्ति**–का–आश्वश्रौ–शांश्रौ; श्रीणन्तु–अथर्व. **प्रथमाय**–का–

1. Comp. Bṛhaddevatā part II, pp 296 ff.
2. Cf. also Oldenberg, Hymnen des Ṛgveda I, 363 ff.

अथर्व; प्रथमस्य–आश्वश्रौ–शांश्रौ. **धासे**–का–आश्वश्रौ–शांश्रौ; धास्यवे-अथर्व । ३. **अस्तभायत्**–ऐब्रा–तैसं–आश्वश्रौ; अस्कभायत्–अथर्व. **पिता**; तैसं-मध्ये नास्ति. **बुध्न्यात्**–का-अथर्व; बुध्नात्–तैसं-आश्वश्रौ. **आष्ट्र**–का; आष्ट्र-अथर्व. **जनुषाभ्युग्रं**–का-आश्वश्रौ; जनुषाभ्यग्रं–तैसं; जनुषोऽभ्यग्रं–अथर्व. **तस्य**–का; यस्य–तैसं । ४. **ओण्योः**; ऊण्योः-तैसं. **कर्वि**; तैसं-ऋसं-मैसं-अथर्वपुस्तकेषु नास्ति. **कृपा**; कृपात्–अथर्व । ५. **गातुवित्तमा**-का; विश्वभृत्तमा–तैब्रा. **भ्राजतो**–का; राजतो–तैब्रा. **सामात्मना**–का; सामात्माना–तैब्रा. **वसे**–का; मणे–तैब्रा । ९. **वितर्तुरं**–का-ऋसं; विचर्तुरं–तैब्रा । १०. **अध्वरं**–का; ऽर्णवं–अथर्व. **विश्वान्यन्यो**–का; विश्वान्यो–अथर्व. **भुवनाभिचष्ट**–का-ऋसं; भुवनाभिचष्टे–तैब्रा; भुवना विचष्ट–अथर्व–मैसं. **जायते पुनः**–का; जायसे नवः–अथर्व ।

मॅ( २४ )-मु-अल-जुना-औंधपुस्तकेषु ऋसं १०.१०६ अनन्तरमधो दीयमानमेकर्चं सूक्तं पठनीयम्–

**हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ।**
**शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम ॥**

निरु १. ११ मध्ये इदमुद्धृतम् । **नरकं**; नरके–औंध ।

## अथ चतुर्थोऽध्यायः

ॐ **आ यस्मिन्नेकानुष्टुभं तु तदा रात्रि चतुष्कमाद्या बृहत्यर्वाञ्चमेका त्रिष्टुन्नमस्ते चतुष्कमश्माखानो वैद्युतमन्त्ये त्रिष्टुभौ यां चत्वारिंशत्प्रत्यङ् कृत्यानाशनमाशीः पाङ्क्त्यन्तमायुष्यं दश दाक्षायणायैकर्चाः**[1] **सनकः सनाकः सनातनः सनन्दनः सहसंज्ञाः सुमः सुश्रीः सुवाक् सर्वो हिरण्यात्मस्तुतिः पञ्चम्यष्टमीनवम्यौ त्रिष्टुभः सप्तमी शक्करी भूमिः सप्त प्राजापत्या लाक्षा लाक्षास्तवो मेधां नव मेधा मानवी मधावी चतुर्थ्यादिर्महाबृहती पङ्क्तिर्विराड्जगती गायत्री त्रिष्टुबा सूः सप्ताथर्वणः सुभेषज आग्नेयं**[2] **प्रकृतिः कृतिराकृतिर्विकृतिः संकृतिरभिकृतिरुत्कृतिर्वनस्तृचं वेनो भाववृत्तं तु येन सप्तोना मानवः शिवसंकल्पो मानसं यासो द्वे अनुष्टुप्पङ्क्ती नेजमेष तृचं प्राजापत्यो नेजमेषोऽनीकवन्तमेका ॥**

१. दाक्षायणा एकर्चाः Macdonell, Bṛhaddevatā, part II, p. 305
२. आग्नेयं Macdonell, ibid.; आग्नेयः-का.

१

आ यस्मिन् देववीतये पुत्रासो यन्तु संयतः । अनाधृष्टं विपन्यया प्रति श्रुताय वो धृषत्॥१॥
**अहं रुद्रेभिर्वसुभिश्चरामि०** ॥ ऋ. सं. १०. १२५. १

ऋसं १०. १२४ अनन्तरं[1] पठनीयम् ।
**अनाधृष्टं विपन्यया** ≡ शांश्रौ १८. ३. २

२

आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः ।
दिवः सदांसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः ॥ १ ॥

1. Cf. Bṛhaddevatā, part II p. 304. Macdonell means to say that this and the next hymn ( आ रात्रि ) precede RV. X 128. In fact the present hymn ( आ यस्मिन् ) precedes RV. X. 125.

ये॑ ते॑ रात्रि नृ॒चक्ष॑सो यु॒क्तासो॑ नव॒तिर्न॑व । अ॒शी॒तिः सन्त्व॒ष्टा उ॒तो ते॑ स॒प्त स॑प्त॒तिः ॥ २ ॥
रात्रीं॒ प्र प॑द्ये ज॒नन॑नीं स॒र्वभू॑तनि॒वेश॑नीम् । भ॒द्रां भग॑वतीं कृ॒ष्णां विश्व॑स्य जग॒तो नि॒शाम् ॥ ३ ॥
सं॒वेश॑नीं सं॒यम॑नीं ग्र॒हन॑क्षत्र॒मा॑लिनीम् । प्र॒पन्नो॒ऽहं शि॒वां रात्रीं॑ भ॒द्रे पा॒रम॑शीमहि ॥ ४ ॥
**म॒मा॒ग्ने वर्चो॑ विहवे॒ष्व॑स्तु॰ ॥ ऋ. सं. १०. १२८. १**

ऋसं १०. १२७ अनन्तरं पठनीयम्[1] । ऋमं–मॅ२५-मु-आउ१९-औंध–ऋब्र( शांतिपाठः )–आश्व-मंसं[2]-पञ्चामृ-पुस्तकेष्वस्मिन्सूक्ते दश मन्त्रा अधिकाः । जुनागड-पुस्तक इदं सप्तदशर्चम् । अल–आश्वमंसं[2]-पुस्तकयोरिदं पञ्चदशर्चम् । तत्र १-४ = का १-४; ५ = ऋमं ९; ६ = ऋमं १०. शिष्टाः ऋमं-पाठात् सर्वथा भिन्नाः । ऋमं-पाठे ५, ६, ७, ८ मन्त्राणामन्तिमैः पादैः ऋसं १. ९९ इत्येकर्चं सूक्तं संपद्यते । चतुर्दशमन्त्रस्य पूर्वार्धः ऋसं १०. १२७ सूक्तस्य सर्वानुक्रमात् उत्तरार्धश्च ऋग्वि ४. २८ अस्मादुद्धृतः । द्वादशो मन्त्रः तैआ १०. १. ६५ अनेन समानः । केषुचित्पुस्तकेषु ५-८, १०, ११, १४ मन्त्रास्त्यक्ताः ।

१. ≡ वासं ३४. ३२; अथर्व १९. ४७. १; निरु ९. २९; → पैप्प. अथर्व. ६. २०. **पितुरप्रायि धामभिः**; पितरः प्रायुधामभिः–मु-ऋब्र; पितरः प्रयुधामभिः–पैप्प. अथर्व. **बृहती वि**; बृहतीव–पैप्प. अथर्व । **२.** ≡ अथर्व १९. ४७. ३; → पैप्प. अथर्व ६. २०. **ये ते रात्रि**; एते रात्रे–पैप्प. अथर्व. **युक्तासो**; दृष्टारो–पैप्प. अथर्व; द्रष्टारो–अथर्व. **नवतिर्नव**–मॅ-मु-आउ-अल-जुना-ऋब्र; नवतीर्नेव–का. **सन्त्वष्टा**; सन्त्यष्टा–अथर्व; सन्त्वाष्टा–पैप्प. अथर्व. **सप्तति**ः; सप्ततीः–मु-ऋब्र । **३. निशां**–का- ऋमं-ऋब्र-अल-जुना-मॅ-मु-आउ; दिशां–पञ्चामृ । **४. संवेशनीं**–जुना; संवेशिनीं–अल. **संयमनीं**–जुना; संयमिनीं–मु-अल. **ग्रह**°–का-ऋब्र-मॅ-आउ-अल-जुना; गृह°–ऋमं-पञ्चामृ. ‘ भद्रे पारमशीमह्यों नमः ’ इत्यधिकमितरेषु पुस्तकेषु ।

ऋमं–आदिपुस्तकस्था अधिका मन्त्रा ऋब्र-पाठानुसारेणाधो दीयन्ते—

स्तोष्यामि प्रयतो देवीं शरण्यां बह्वृचप्रियाम् ।
सहस्रसंमितां दुर्गां जातवेदसे सुनवाम सोमम् ॥ ५ ॥
शान्त्यर्थं तद्द्विजातीनामृषिभिः समुपाश्रिताः ।
ऋग्वेदे त्वं समुत्पन्नारातीयतो नि दहाति वेदः ॥ ६ ॥
ये त्वां देवि प्रपद्यन्ति ब्राह्मणा हव्यवाहनीम् ।
अविद्या बहुविद्या वा स नः पर्षदति दुर्गाणि विश्वा ॥ ७ ॥
ये अग्निवर्णां शुभां सौम्यां कीर्तयिष्यन्ति ये द्विजाः ।
तान् तारयति दुर्गाणि नावेव सिन्धुं दुरितात्यग्निः ॥ ८ ॥
दुर्गेषु विषमे घोरे संग्रामे रिपुसंकटे ।
अग्निचोरनिपातेषु दुष्टग्रहनिवारणि दुष्टग्रहनिवारण्यों नमः ॥ ९ ॥
दुर्गेषु विषमेषु त्वं संग्रामेषु वनेषु च ।
मोहयित्वा प्रपद्यन्ते तेषां मे अभयं कुरु तेषां मे अभयं कुर्वों नमः ॥ १० ॥
केशिनीं सर्वभूतानां पञ्चमीति च नाम च ।
सा मां समां दिशां देवी सर्वतः परिरक्षतु सर्वतः परिरक्षत्वों नमः ॥ ११ ॥
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्र पद्ये सुतरसि तरसे नमः सुतरसि तरसे नमः ॥ १२ ॥

1. Cf. Bṛhaddevatā, part II, p. 304

दुर्गा दुर्गेषु स्थानेषु शं नो देवीरभिष्टये ।
य इमं दुर्गास्तवं पुण्यं रात्रौ रात्रौ सदा पठेत् ॥ १३ ॥
रात्रिः कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवं गायत्रम् ।
रात्रीसूक्तं जपेन्नित्यं तत्काल उपपद्यते ॥ १४ ॥

६. **तद्वाद्विजाती**°-ऋब्र; तद्विजातां°-ऋमं-मॅ-मु-पश्चामृ; त्वं द्विजाती°-आउ. **समुपाश्रिताः**; सोमपाश्रिताः-ऋमं-ऋब्र-पश्चामृ-मॅ-मु-आउ; सोमपैः श्रिता-आउ. **समुत्पन्नारा**°; समुत्पन्नामरा°-मु-पश्चामृ । ७. **देवि**; देवीं-पश्चामृ. **प्रपद्यन्ति**; प्रपद्यन्ते-आउ. **स**; सा-मॅ । ८. **ये अग्नि**°-ऋमं-ऋब्र-पश्चामृ-मु; अग्नि°-मॅ-आउ. **तान् तार**°; तांस्तार°-आउ । ९[२]. **अग्निचोर...... नमः**-ऋब्र; अग्निचोरनिपातेषु दुष्टग्रहनिवारणे दुष्टग्रहनिवारण्यों नमः-ऋमं; अग्निचोरनिपातेषु सर्वग्रहनिवारणे सर्वग्रहनिवारण्यों नमः-आउ; अग्निचोरनिपातेषु सर्वग्रहनिवारिणि सर्वग्रहनिवारिण्यों नमः-मॅ; अग्निचौरनिपाते च सर्वग्रहनिवारणे सर्वग्रहनिवारण्यों नमः-अल; अग्निचौरनिपातेषु सर्वग्रहनिवारणे-जुना; अग्निचोरनिपाते च सर्वग्रहनिवारणे दुष्टग्रहनिवारण्यों नमः-मु; अग्निचोरनिपाते न सर्वग्रहनिवारणे सर्वग्रहनिवारण्यों नमः-पश्चामृ. ९[२]-१०[१] आश्वमंसं[१]-पुस्तके नास्ति । १०[२]. **मोहयित्वा**; नमस्कृत्वा-अल-जुना. **कुरु**; कृणु-मॅ. **कुर्वो**; कृण्वों-मॅ. **तेषां मे**; तेषां नो-अल-जुना । ११. **केशिनीं**; 'केशिनी' इति साधु. **समां दिशां**-ऋब्र; समादिशा-ऋमं-मु; समां विशां-पश्चामृ; समा निशा-मॅ-आउ-औंध; समाहिषा-जुना. **देवी**; देवीं-पश्चामृ. **सर्वतः** ( २ ); विश्वतः-जुना । १२. = तैआ १०. १. ६५; मनाउ ६. ३. **कर्मफलेषु**; वर्मफलेन-पश्चामृ । १३. **य इमं**; इमं-पश्चामृ । १४. **रात्रिः**; रात्री-अनु. **कुशिकः सौभरो**-अनु-मॅ-मु-आउ; कुशिकः सोभरो-ऋब्र; कुशिकसौभरो-पश्चामृ; कुशिकसोभरो-ऋमं. **रात्रिर्वा भारद्वाजी रात्रिस्तवं गायत्रम्**-अनु-मु-ऋब्र-पश्चामृ; रात्रिस्तवं गायत्री-ऋमं; रात्रिस्तवो गायत्री-मॅ-आउ. **रात्रीसूक्तं**; रात्रिसूक्तं-मु. **जपेन्नित्यं तत्काल उपपद्यते**; जपन्नेव तं कालं प्रतिपद्यते-ऋवि; जपेन्नित्यं तत्कालमुपपद्यते न योनिं पुनरायाति सर्वपापैः प्रमुच्यते-औंध ।

अल-आश्वमंसं[२]-पुस्तकयोः[1] का१-४; ऋमं ९-१० अनन्तरं वर्तमाना नव मन्त्रा अधो दीयन्ते । औंधपुस्तके ऋमं-पाठानुसारं १४ मन्त्रानन्तरमेते नव मन्त्राः १५-२३ इति दत्ताः ।

क्षीरेण स्नापिता दुर्गा चन्दनेनानुलेपिता । बैल्वपत्रकृता माला नमो दुर्गे नमो नमः ॥ ७ ॥
सर्वभूतपिशाचेभ्यः सर्वसर्पमरीसृपैः । देवेभ्यो मानुषेभ्यश्चोभयेभ्यो माभिरक्षताम् ॥ ८ ॥
ऋग्वेदे स्तुतया देवी काश्यपेन उदाहृता । जातवेदप्रभा गौरी जातवेदसे सुनवाम सोमम् ॥ ९ ॥
सुरासुरैर्द्विजवरैः पिशाचासुरराक्षसैः । अरातीभयमुत्पन्नमरातीयतो निदहाति वेदः ॥ १० ॥
राजद्वारे पथे घोरे संग्रामेषु च गौतमी । सर्वं रक्षतु दुरितं स नः पर्षदति दुर्गाणि विश्वा ॥ ११ ॥
महद्भये समुत्पन्ने स्मरन्ति च जपन्ति च । सर्वं तारयते दुर्गा नावेव सिन्धुं दुरितात्यग्निः ॥ १२ ॥
य इमं स्तवं दुर्गायाः पठन्ति च शृणोति च । त्रिषु लोकेषु विख्यातं त्रिषु लोकेषु पूजितम् ॥ १३ ॥
अपुत्रो लभते पुत्रान् धनहीनो धनं लभेत् । अचक्षुर्लभते चक्षुर्बद्धो मुच्येत बन्धनात् ॥ १४ ॥
व्याधितो मुच्यते रोगादरोगी श्रियमाप्नुयात् । सर्वकामित्वं ददाति नारायणि नमोऽस्तु ते ।
कात्यायनि नमोऽस्तु ते ॥ १५ ॥

७. **स्नापिता**; स्नपिता-आश्वमंसं-जुना. **चन्दनेनानुलेपिता**; चन्दनेन विलेपिता-औंध. **बैल्वपत्रकृता माला**; बिल्वपत्रकृतापीडा-औंध । ८. **'भयेभ्यो माभिरक्षता**; उभयेभ्योऽभिरक्ष मां-

1. Dr. V. M. Apte (ABORI XX, Part III-IV, pp. 259-60) has reproduced these verses "as they are not traced either to Müller or to Aufrecht or to Scheftelowitz." In fact the Rātrī-sūkta of ĀMS 379 is identical with that already published by Peterson in his Second Report of operations in search of Sanskrit Manuscripts in the Bombay Circle, Bombay 1884.

औंध । ९. **ऋग्वेदे स्तुतया**; या ऋग्वेदे स्तुता-औंध. **काश्यपेन**; कश्यपेन-आश्वमंसं । १०. **पिशाचासुरराक्षसैः**; पिशाचोरगराक्षसैः-औंध. **अरातीभयमुत्पन्नं**; अरातीभय उत्पन्ने-औंध । ११. **राजद्वारे पथे**; गजद्वारेऽपथे-औंध. **गौतमी**; गौतमीं-जुना. **दुरितं**; दुरिता-जुना । १२. **महद्भये**; महाभये-औंध । १३. **य इमं स्तवं दुर्गायाः**; य इमं दुर्गास्तवं-औंध; परमं स्तव दुर्गायाः ( ? )-आश्वमंसं. **पठन्ति च शृणोति च**; शृण्वन्ति च जपन्ति च-औंध । १५. **अरोगी**; आरोगी-जुना. **सर्वकामित्वं ददाति**; ददाति कामितं सर्वं-औंध; सर्वकाममित्वं ददाति ( ? )-आश्वमंसं. नारायणि नमोस्तु ते कात्यायनि नमोस्तु ते कात्यायनि नमोस्तु ते-जुना. आश्वमंसं-पुस्तके ऋमं १३ मन्त्रोऽन्ते विनिवेशितः । औंध-पुस्तके च ऋसं १०.४.२२; १.१३३.५ मन्त्रौ अन्ते विनिवेशितौ ।

जुनागडलिखितपुस्तके सप्तदशर्चं रात्रिसूक्तं विद्यते । तत्रादौ का १-४ मन्त्राः । अनन्तरं

**आदित्यवर्णां तपसा ज्वलन्तीं वैरोकिणीं चन्द्रसहस्रदीप्तीम् ।**
**दैवीं कुमारीं ऋषिभिश्च पूजितां तां दुर्गमातां शरणं प्रपद्ये ॥**

इति पञ्चमो मन्त्रः । तदनन्तरं ऋमं-पुस्तकस्थौ ९-१० मन्त्रौ ततः अल-पुस्तकस्थौ ७-८ मन्त्रौ ततश्च ऋमं-पुस्तकस्थ एकादशो मन्त्रोऽन्ते च ९-१५ अल-पुस्तकस्था मन्त्राः ।

## ३

अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः ।
इमं नो यज्ञं विहवे जुषस्वेह कुर्मो हरिवो वेदिनं त्वा ॥ १ ॥

इदमुत्तरे च द्वे सूक्ते ऋसं १०. १२८ अनन्तरं पठनीयानि[1] । तैसं ४. ७. १४. ४; तैब्रा २. ४. ३. २; अथर्व ५. ३. ११; कौसू १४०. ६; ऋमं-ऋब्र( सांवत्स. श्राद्ध )-मॅ२६-मु-आउ २०-अल-जुना-आश्वमंसं-प्रर ( समावर्तन ) ।

**यज्ञं**; हव्यं-औंध. **जुषस्वेह**-का; जुषस्वास्म-औंध; जुषस्वास्य-इतरेषु. **कुर्मो**-तैसं-तैब्रा; कुल्मो-ऋमं-ऋब्र-मु-आउ-अल-जुना-प्रर. **वेदिनं**-का; मेदिनं-इतरेषु. 'इमं नो यज्ञं विहवे शृणोत्वस्माकमभूर्हर्यश्व मेदी' इत्यथर्वपाठः ।

## ४

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे । नमस्ते अस्त्वश्मने यो मा दूणाशो अस्यसि ॥ १ ॥
नमस्ते प्रवतो नपाद्यतस्तपः समूहसि । मृळया नस्तनूभ्योऽभयं नः पशुभ्यः ॥ २ ॥
प्रवतो नपान्नम एवास्तु तुभ्यं नमस्ते हेतये तपुषे च कृण्मः ।
विद्मा ते नाम परमं गुहा यत्समुद्रे अन्तर्निहितापि नासि ॥ ३ ॥
यां त्वा देवा अजनिष्ट धिष्व धियं कृण्वाना असनाय वाजम् ।
सा नो मृळ विदथे गृणाना तस्यै ते नमो अस्तु देवि ॥ ४ ॥

ऋसं १०. १२८ अनन्तरं पठनीयम्[2] । अथर्व १. १३ अनेनेदं समानम् । 'नमस्ते वैद्युतं सूक्तमाशीर्वादः परं तु यत्' इति बृहद्दे ८. ४४ । अन्यत्रापि ( बृहद्दे १. ५४ ) इदं निर्दिष्टम् ।

१[1]. = वासं ३६. २१; पैप्प. अथर्व; मंदी; कौसू ३८.८. **यो मा दूणाशो**-का; येना दूडाशे-अथर्व । २. **ऽभयं नः पशुभ्यः**-का; मयस्तोकेभ्यः कृधि-अथर्व; ≐ वासं ३६. २२; मंदी : शं नः

1. Cf. Bṛhaddevatā, part II, p. 304.
2. Ibid.

कुरु प्रजाभ्योऽभयं नः पशुभ्यः । **३. विद्मा ते नाम परमं गुहा** = ऋमं १०. ४५. २. **नाम–का**; धाम–अथर्व. **°पि नासि–का**; °सि नाभिः–अथर्व । **४. अजानिष्ठ–का**; असृक्षत–अथर्व; ' अजनिषत ' इति युक्तम् । **धिष्व धियं–का**; विश्व इषुं–अथर्व. **वाजं–का**; धृष्णुं–अथर्व.

५

यां कल्पयन्ति नोऽरयः क्रूरां कृत्यां वधूमिव । तां ब्रह्मणा परि निज्मः प्रत्यक्कर्तारमृच्छतु॥१॥
शीर्षण्वतीं कर्णवतीं विश्वरूपां भयंकरीम् । यः प्राहिणोमि हार्दं त्वा त्वं तत्त्वं योजयाशु भि ॥२॥
येन चित्तेन वदसि प्रतिकूलमघायूनि । तमेवं ते नि कृत्ये ह मास्माँ ऋष्यो अनागसः ॥३॥
अभि वर्तस्व कर्तारं निरस्तास्माभिरोजसा । आयुरस्य नि वर्तस्व प्रजां च पुरुषादिनि ॥४॥
यस्त्वा कृत्ये चकारेह तं त्वं गच्छ पुनर्नवे । अरातीः कृत्यां नाशय सर्वाश्च यातुधान्यः ॥५॥
क्षिप्रं कृत्ये नि वर्तस्व कर्तुरेवं गृहान्प्रति । पशूंश्चावास्य नाशय वीरांश्चास्य नि बर्हय ॥ ६ ॥
यस्त्वा कृत्ये प्र जिगाति [ विद्वाँ अविदुषो गृहान् । तस्यैवेतः परेत्याशु तनुं कृधि परुष्यसः॥७॥
प्रतीचीं त्वापसेधतु ब्रह्म रोचिष्णवमित्रहा । अग्निश्च कृत्ये रक्षोहा रिप्रहा चाज एकपात् ॥८॥
यथा त्वाङ्गिरसः पूर्वे भृगवश्चाप सेधिरे । अत्रयश्च वसिष्ठाश्च तथैव त्वापसेधिम ॥ ९ ॥]
यस्ते परूंषि संदधौ रथस्येव ऋभुर्धिया । तं गच्छ तत्र ते जनमज्ञातस्तेऽयं जनः ॥ १० ॥
[ यो नः कश्चिद्रणस्थो वा ] कश्चिद्रान्योऽभि हिंसति ।
तस्य त्वं द्रोरिवेद्धोऽग्निस्तनुः पृच्छस्व हेळितः ॥ ११ ॥
भ [ वाशर्वा देवहेळिम ]स्य ते पापकृत्वने । हरस्वतीस्त्वं च कृत्ये नोच्छिपस्तस्य किंचन ॥१२॥
ये नो शिवासः पन्थानः परायान्ति परावतम् । तैर्देव्यरातीः कृत्या नो गमयस्वा नि वर्तय॥१३॥
यो नः कश्चिद्द्रुहोऽरातिर्मनसाप्यभि दासति ।
दूरस्थो वान्तिकस्थो वा तस्य हृद्यमसृक् पिब ॥ १४ ॥
येनासि कृत्ये प्रहिता दृढयेनास्मजिघांसया । तस्य व्यनचान्यनच हिनस्तु शरदाशनिः॥१५॥
यद्यु वैषि द्विपदस्मान् यदि वैषि चतुष्पदी । निरस्तातोऽवतास्माभिः कर्तुरष्टापदी गृहम्॥१६॥
यो नः शपादशपतो यश्च नः शपतः शपात् । वृक्ष इव विद्युता हत आ मूलादनु शुष्यतु॥१७॥
यं द्विष्मो यश्च नो द्वेष्ट्यघायुर्यश्च नः शपात् । शुने पेष्ट्रमिवावक्षामं तं प्रत्यस्यामि मृत्यवे ॥१८॥
यश्च सापत्नः शपथो यश्च जाम्याः शपथः । ब्रह्मा च यन्क्रुद्धः शपात् सर्वं तत् कृध्यधस्पदम्॥१९॥
सबन्धुश्चासबन्धुश्च यो अस्माँ अभि दासति । तस्य त्वं भिन्ध्यधिष्ठाय पदा विष्पूर्यते शिरः ॥२०॥
अभि प्रेहि सहस्राक्षं युक्त्वाशुं शपथ रथम् । शत्रूँरन्विच्छती कृत्ये वृकीवाविवृतो गृहान्॥२१॥
परि णो वृङ्धि शपथान् दहन्नग्निरिव व्रजम् । शत्रूरेवा वि नो जहि दिव्या वृक्षमिवाशनिः॥२२॥
शत्रून्मे प्रोष्ट शपथान् कृत्याश्च सुहृदो हृयाः । जिह्माः श्लक्ष्णाश्च दुर्हृदः समिद्धं जातवेदसम्॥२३॥
असपत्नं पुरस्तान्नः शिवं दक्षिणतस्कृधि । अभयं संततं पश्चाद्भद्रमुत्तरतो गृहे ॥ २४ ॥
परेहि कृत्ये मा तिष्ठ वृद्धस्येव पदं नय । मृगस्य हि मृगारिस्त्वं तं त्वं निकर्तुमर्हसि ॥२५॥

अघ्न्यास्ये घोररूपे वैररूपे विनाशनि । जम्भितौः प्रेत्या गृभ्णीष्व स्वयमादायाद्भुतम् ॥ २६ ॥
त्वमिन्द्रो यमो वरुणस्त्वमापो अग्निरथानिलः । ब्रह्मा चैव रुद्रश्च त्वष्टा चैव प्रजापतिः ॥२७॥
आवर्तध्वं निवर्तध्वमृतवः परिवत्सराः । अहोरात्राश्चाब्दाश्च त्वं दिशः प्रदिशश्च मे ॥ २८ ॥
त्वमिन्द्रो यमो वरुणस्त्वमापो अग्निरथानिलः । अत्याहृत्य पशून् देवानुत्पातयस्वाद्भुतम् ॥२९॥
अभ्यक्तास्ताः स्वलंकृताः सर्वं नो दुरितं जहि ।
जानीथाश्चैव कृत्यानां कर्तॄन्नून् पापचेतसः ॥ ३० ॥
यथा हन्ति पूर्वासिनं तथैवेष्वाशुकृज्जनः। तथा त्वया युजा वयं तस्य निकृणम स्थास्नु जङ्गमम् ॥३१॥
उत्तिष्ठैव परेहितोऽघ्न्यास्ये किमिहेच्छसि । ग्रीवास्ते कृत्ये पदा चापि कर्त्स्यामि निर्द्रव॥३२॥
स्वायसा सन्ति नोसयो विद्मश्चैव परूंषि ते । तैः स्म निकृणम स्थान्युग्रे यदि नो जीवयस्व ईम् ॥३३॥
मास्योच्छिषो द्विपदं मो च किंचिच्चतुष्पदम् । मा ज्ञातीरनुजास्त्वन्वा मा वेशं प्रतिवेशिना॥३४॥
शत्रूयता प्रहितामिमां येनाभि यथायथा । तेनस्तथा त्वानुदतु योऽयमन्तर्मयि श्रितः ॥३५॥
एवं त्वं निकृतास्माभिर्ब्रह्मणा देवि सर्वशः । यथा तमाश्रितं कत्वा पापधीरेव नो जहि ॥३६॥
यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति । देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥३७॥
यथा विद्युद्धतो वृक्ष आ मूलादनु शुष्यति । एवं स प्रति शुष्यतु यो मे पापं चिकीर्षति ॥ ३८ ॥
यथा प्रतिहिता भूत्वा तामेव प्रति धावति । पापं तमेव धावतु यो मे पापं चिकीर्षति ॥३९॥
कुर्वीरं ते सुखं रुद्रं नन्दीमानं विमथ ह ।
ब्रह्म वर्म ममान्तरं शर्म वर्म ममान्तरं घर्मवर्म ममान्तरम् ॥ ४० ॥

ऋसं १०. १२८ अनन्तरं पठनीयम्। 'यां कल्पयन्ति नोऽरयः कृत्यानाशनमात्मनः' इति बृहद्दे[1] ८. ४५। 'यां कल्पयन्तीति सदा जपेत नियतव्रतः। नैनं कृत्या निहिंसन्ति क्षुद्राभिचारितानि च' इति ऋग्वि ४. ३०। ऋग्वि ४. ४१ अत्रेदं कृत्यासूक्तमित्युक्तम्। अथर्व १०.१ प्रायोऽनेन समानम्। पैप्प. अथर्व; कौसू. ३९. ७ अपि द्रष्टव्यम्।

**१. ब्रह्मणा परि निङ्मः**; ब्रह्मणाप निर्णुद्मः-औंध। **२**[२]. यः प्राहिणांदिहाद्य त्वां वि तं त्वं योजयामुभिः-औंध। **३**[२]. = तं कृत्येऽभिनिवर्तस्व मास्मानिच्छो अनागसः-अथर्व १०. १. ७. येन दिष्टेह वहसि प्रतिकूलमघायिनि। तमेवेतो निवर्तस्व मास्मान्मृच्छो अनागसः-औंध। **४.वर्तस्व**; कृन्तस्व-औंध। **५. कृत्यां**; कृत्ये-औंध. **नाशय सर्वाश्च यातुधान्यः** = अथर्व १९. ३९. ८। **६. पशूं-श्चावास्य**; पशूंश्चेवास्य-औंध। ७-९. 'यस्त्वा कृत्ये प्र जिगा' इत्येतावन्मात्रोंऽशः का-पुस्तके वर्तते। शिष्टं त्रुटितम्। एते त्रयो मन्त्रा औंधपुस्तकादुद्धृताः। उद्धृतभागेषु सर्वत्र स्वरितमुपरिष्टा-च्चिह्नाङ्कितमनुदात्तं चाधस्ताच्चिह्नाङ्कितम्। 'प्र जिगाति' अस्य स्थाने 'प्रजिघाय' इति औंध। **१०.** = अथर्व १०. १. ८. **रथस्येव ऋभुर्धिया**; रक्षस्येव विभुधिया-औंध. **गृच्छ**-का; गच्छ-अथर्व-औंध. **ते जनं**-का; **तेऽयनं**-अथर्व-औंध। **११.** प्रथमपादः का-पुस्तके त्रुटितः औंध-पुस्तकादुद्धृतः। कश्चिद्वान्योऽभि-औंध; कश्चिद्वा न्यभि-का। **तनुः पृच्छस्व हेळितः**; तनू मृच्छस्व हेळिता-औंध। **१२. भवा शर्वा देवहेळिमस्य ते**; भवा शर्वा देवहेळिमस्यत-औंध; भ......स्य

1. Cf. Bṛhaddevatā, part II, pp. 304–5

ते–का; शिष्टं औंधपुस्तकानुसारेण पूरितम्। **हरस्वतीस्त्वं**; हरस्वती त्वं–औंध. **नोच्छिषः**; मोच्छिषः–औंध. १३. = १५ औंध. **ये नो**–का; ये नः–औंध. **परायान्ति**; परायन्ति–औंध. **तैर्देव्यरातीः**–का; तैर्देवि रात्र्याः–औंध. **गमयस्वा नि वर्तय**–का; गमयस्वानुकृत्तये–औंध। १४. = १३ औंध. **द्रुहाऽरातिर्मनसाऽभ्यभि दासति**–का; द्रुहारातिर्मनसा प्रतिभूषति–औंध। १५. = १४ औंध. **व्यनच्चाव्यनच्च**–का ≡ ऋसं १०. १२०. २; अथर्व ५. २. २; व्यानचाऽव्यानच–औंध. **शरदाशनिः**–का; हरसाशनिः–औंध। १६. **यद्यु**–का; यदि–औंध. **निरस्तातोऽव्रतास्माभिः**–का; निरस्तेतो व्रजास्माभिः–औंध. **गृहम्**–का; गृहान्–औंध। १७[१]. ≡ तैब्रा ३. ७. ६. २३; तैआ २. ५. ११; आपश्रौ ४. १५. १. **यो नः…शपात्**–का; यो नः शपादशपतः शपतो यश्च नः शपात्–अथर्व ७. ५९.१; ६. ३७. ३. १७[२]. ≡ अथर्व ७.५९.१. **वृक्ष इव…शुष्यतु**–का; वृक्षमिव विद्युदाशुतमा मूलादनु शोषय–औंध। १८[१]. ≐ अथर्व १६. ६. ४ : यं द्विष्मो यच्च नो द्वेष्टि तस्मा एनद्गमयामः. १८[२]. ≡ अथर्व ६. ३७. ३[२]. **पेष्ट्रमिवावक्षामं**; पिष्टमिव क्षामं–औंध. **तं प्रत्यस्यामि मृत्यवे**; तं प्रत्यस्य स्वमृत्यवे–औंध. १९. ≐ अथर्व २. ७. २. **यश्च जाम्याः शपथः**; यश्च यामी शपाति नः–औंध. ब्रह्मा यन्मन्युतः शपात्सर्वं तन्नो अधस्पदम्–अथर्व। २०[१]. ≡ अथर्व ६. १५. २[१]; ५४. ३[१]. **°सबन्धुश्च**–का; °प्यबन्धुश्च–औंध. **विष्पूर्यते शिरः**–का; विस्फूर्य तच्छिरः–औंध। २१. ≐ अथर्व ६. ३७. १. उप प्रागात्सहस्राक्षो युक्त्वा शपथो रथम्–अथर्व. **युक्त्वाशुं शपथ रथं**; युक्त्वा तु शपथं रथे–औंध. शप्तारमन्विच्छन्मम वृक इवाविमतो गृहम्–अथर्व. **शत्रूँरन्विच्छती**–का; शत्रूनन्विच्छती–औंध. **वृकीवाविवृतो**–का; वृकीवाविमतो–औंध। २२. ≐ अथर्व ६. ३७. २. परि णो वृङ्धि शपथ ह्रदमग्निरिवा दहन्–अथर्व. **व्रजं**–का; ह्रदं–औंध. शप्तारमत्र नो जहि दिवो वृक्षमिवाशनिः–अथर्व. **शत्रूँरेवा वि नो**–का; शत्रूनेवाभितो–औंध। २३. **प्रोष्ठ**–का; प्रोथ–औंध. **सुहृदो हृद्याः**–का; सुहृदोऽसृहृत्–औंध। २४. = खिल २. २. ४. **असपत्नं पुरस्तात्** ≡ अथर्व १९. १६. १; २७. १४. **दक्षिणतस्कृधि**–का; दक्षिणतः कृधि–औंध। २५. ≐ अथर्व १०. १. २६. **तिष्ठ**–का–औंध; तिष्ठो–अथर्व. **वृद्धस्येव**–का; विद्धस्येव–अथर्व–औंध. मृगः स मृगयुस्त्वं न त्वा निकर्तुमर्हति–अथर्व. **मृगारिस्त्वं … °मर्हसि**–का; मृगारिप्रो न त्वा नीकर्तुमर्हति–औंध। २६. ≐ अघ्न्यास्येव घोररूपे विपुरूपेऽविनाशिनि। जृम्भिता प्रति गृभ्णीष्व स्वयमादाय चाद्भुतम्–औंध। २७. **°मापो अग्नि°**–का; °मापोऽग्नि°–औंध. **ब्रह्मा**–का; त्वं ब्रह्मा–औंध. २८. **दिशः प्रदिशः** ≡ अथर्व ९. २. २१; १९. ४५. ३। २९. ≐ त्वं यमं वरुणं सोमं त्वमापोऽग्निमथानिलम्। अत्राहृत्य पशूंश्चैवमुत्पादयसि चाद्भुतम्–औंध. ३०. ≐ अथर्व १०. १. २५ : अभ्यक्ताक्ता स्वरंकृता सर्वं भरन्ती दुरितं परेहि। जानीहि कृत्ये कर्तारं दुहितेव पितरं स्वम्. औंधपुस्तके त्रिंशो मन्त्रो निभिन्नो वर्तते स यथा–'ये मे दमे दारुगर्भे शयानं थिया सहितं पुरुषं निजह्नुः। कुम्भीपाके नरके ग्रीवबद्धं हुता एवं पुरुषासो यमस्य॥' त्रिंशो मन्त्रश्चैकत्रिंशत्वेनागतः। 'अभ्यक्ताक्ता स्वलंकृता सर्वं नो दुरितं दह' इति तस्य पूर्वार्धः। ३१. ≐ अथर्व १०. १. २७ = ३२ औंध. **पूर्वासिनं … … °ज्ञनः**–का; पुरासीनं तथैवेष्वा सुकृन्नरः–औंध. **त्वया युजा वयं** ≡ ऋसं १. ८. ४; अथर्व ४. ३२. १. **तस्य**; औंधपुस्तके नास्ति. **स्थास्तु**–औंध; स्यास्तु–का। ३२[१]. ≡ अथर्व १०. १. २०[१]. **°घ्न्यास्ये**–का; ऽज्ञाते–अथर्व–औंध. ३२[२]. ≡ अथर्व १०. १. २१[१]. ३२ = ३३ औंध. **पदा**–का; पादौ–अथर्व-औंध. **चापि**–का-अथर्व; चाभि–औंध. **निर्द्रव**–का-अथर्व. विद्रव–औंध। ३३[१]. ≐ अथर्व १०. १. २०[१] : स्वायसा असयः सन्ति नो गृहे विद्मा ते कृत्ये यतिधा परूंषि. ३३ = ३४.औंध. **स्वायसा**–का; स्वायसाः–औंध. **विद्मश्चैव**–का; विद्म चैव–औंध. **तैः स्थ … … ईम्**–का; तैस्ते निकृणमस्तान्युग्रे यदि नो जीवयस्वरीन्–औंध. ३४ = ३५ औंध. **मो च**–का; मोत–औंध. **ज्ञातीरनुजास्वन्वा**–का; 'ज्ञातीननुजसूत्वः' इति पाठं शेफ्टेलोविट्झमहाशया अभ्यूहन्ति. ज्ञातीननुजान् पूर्वान्–औंध. **वेशं प्रति-**

**वेशिना**-का; वेशि प्रतिवेशिनो-औंध. ३५ = ३६ औंध. **शत्रूयता ... ... यथायथा**-का; शत्रूयता प्रहितासि दृढयेनाभि यथायतः-औंध. ३६ = ३७ औंध. **एवं त्वं ... .. सर्वशः**-का; यथेतमाश्रिता गत्वा पापधीनिव नो जहि-औंध। ३७. = साम २. ९. ३. ८. ३; ऋसं ६. ७५. १९; अथर्व १. १९. ३[१], ४[२]; आश्वगृ ३. ५. ७ = ४० औंध। ३९. **प्रतिहिता**-का; प्रतिशुक्रो-औंध. **तामेव**-का; तमेव-औंध. **तमेव**-का; तमेवं-औंध। ४०. = ४२ औंधः कुबेर ते मुखं रौद्रं नन्दिमानन्दमावह। ज्वरमृत्युभयं घोरं विश नाशय मे ज्वरम्।

औंधपुस्तके केचन मन्त्रा अधिकत्वेन विद्यन्ते तेऽधो दीयन्ते—

**उत्वा मन्दन्तु स्तोमाः कृणुष्व राधो अद्रिवः। अव ब्रह्मद्विषो जहि ॥ ४१ ॥**
**यो मे करोति प्रद्वारे यो गृहे यो निवेशने। यो मे केशनखे कुर्यादन्नने दन्तधावने ॥ ४३ ॥**
**प्रतिसर प्रतिधाव कुमारीव पितुर्गृहान्। मूर्धानमेषां स्फोटय पदमेषां कुले कृधि ॥ ४४ ॥**
**ये नो रयिं दुश्चरितासो अग्ने जहुर्मर्तासो अनृतं वदन्तः।**
**तेषां वपूंष्यर्चिषा जातवेदः शुष्कं न वृक्षमभि सं दहस्व ॥ ४५ ॥**
**कृष्णवर्णे महद्रूपे बृहत्कर्णे महद्भये। देवि देवि महादेवि मम शत्रून् विनाशय ॥ ४६ ॥**
**खट् फट् जहि महाक्रूरये विधूमाग्निसमप्रभे। जहि शत्रूंस्त्रिशूलेन क्रुध्यस्व पिब शोणितम् ॥४७॥**
**ये द्रुह्युर्ऋजवे मह्यमग्ने कदाधियो दुर्मदा अश्मनासः।**
**आबध्यैतान् शोचिषा विध्य तन्तून् वैवस्वतस्य सदनं नयस्व ॥ ४८ ॥**

## ६

आयु॑ष्यं॒ वर्च॑स्यं॒ राय॒स्पोष॒मौद्भि॑दम्। इ॒दं हिर॑ण्यं॒ वर्च॑स्व॒ज्जैत्रा॒याविश॑तादु॒ माम् ॥ १ ॥
उ॒च्चैर्वा॒जि पृ॑तना॒षाट् स॑भा॒साहं॑ धनं॒जय॑म्। सर्वाः॒ सम॑ग्रा ऋ॒द्धयो॒ हिर॑ण्येऽस्मि॒न्त्सम॑हृताः ॥२॥
शुन॑म॒हं हिर॑ण्यस्य पि॒तुर्नामे॑व जग्रभ। तेन॒ मां सूर्य॑त्वचमकरं पुरुष॒प्रिय॑म् ॥ ३ ॥
स॒म्राजं॑ च वि॒राजं॑ चाभि॒ष्टिर्या॑ च मे ध्रु॒वा। ल॒क्ष्मी रा॒ष्ट्रस्य॒ या मुखे॒ तया॑ मामिन्द्र॒ सं सृ॑ज ॥४॥
अ॒ग्नेः प्र॒जा॑तं॒ परि॒ यद्धिर॑ण्यम॒मृतं॑ ज॒ज्ञे अधि॒ मर्त्ये॑षु।
य ए॑नद्वेद॒ स इदे॑नद॒र्हति॑ ज॒रामृ॑त्युर्भवति॒ यो बि॒भर्ति॑ ॥ ५ ॥
यद्वे॑द॒ राजा॒ वरु॑णो॒ यदु॑ दे॒वी सर॑स्वती। इन्द्रो॒ यद्वृ॑त्र॒हा वेद॒ तन्मे॒ वर्च॑स आ॒युषे॑ ॥ ६ ॥
न तद्रक्षां॑सि॒ न पि॑शा॒चास्त॑रन्ति दे॒वाना॒मोजः॑ प्रथम॒जं ह्ये॒३॒॑तत्।
यो बि॒भर्ति॑ दाक्षाय॒णं हिर॑ण्यं॒ स दे॒वेषु॑ कृणुते दी॒र्घमायुः॒ स म॑नु॒ष्ये॑षु कृणुते दी॒र्घमायुः॑ ॥ ७ ॥
यदा॒बध्न॑न् दाक्षाय॒णा हिर॑ण्यं श॒तानी॑काय सुमन॒स्यमा॑नाः।
तन्म॒ आ ब॑ध्नामि श॒तशा॑रदा॒यायु॑ष्माञ्ज॒रद॑ष्टि॒र्यथास॑त् ॥ ८ ॥
घृ॒तादु॑ल्लुप्तं॒ मधु॑मत् सु॒वर्णं॑ धनं॒जयं॑ ध॒रुणं॑ धारयि॒ष्णु।
ऋ॒णक्स॒पत्ना॒नध॑रांश्च कृ॒ण्वदा रो॑ह॒ मां म॑ह॒ते सौभ॑गाय ॥ ९ ॥
प्रि॒यं मा॑ कुरु दे॒वेषु॑ प्रि॒यं राज॑सु मा कुरु। प्रि॒यं विश्वे॑षु गो॒प्त्रेषु॒ मयि॑ धेहि रु॒चा रुच॑म् ॥१०॥

**नासदासीन्नो सदासीत्०** ॥ ऋ. सं. १०. १२९. १

ऋसं १०. १२८ अनन्तरं पठनीयम्। अस्मिन्नेवार्थे बृहद्देवता[1] (८. ४५):–' हिरण्यस्तुतिरायुष्यं नासद् (= ऋसं १०. १२९) यत्परमेष्ठिनः '। ऋग्विधानमपि (४.४३)–' आयुष्यमायुर्वर्चस्यं

1. Cf. Bṛhaddevatā, part II, p. 305

सूक्तं दाक्षायणं महत् ' इति । शांगृ ३. १; आश्वगृ ३. ८. २१; शांक एतेष्विदमुद्धृतम् । ऋमं-ऋब्र-मॅ२७–आउ२०–मु–अल–जुना–आश्वमंसं-प्र( समावतन )–संकौ( समावर्तन )–पुस्तकेष्विदं संपूर्णमुपलभ्यते । एतेष्वेकादशो मन्त्रोऽधिकः । ऋब्र–प्र-पुस्तकयोरस्य ऋषिच्छन्दोदेवताविनियोगा अपि कथिताः– ' आयुष्यमिति सूक्तस्य सनकसनन्दनसनातनादय ऋषयः । हिरण्यं देवता । आद्याश्चतस्रोऽनुष्टुभः पञ्चमी त्रिष्टुप् षष्ठ्यनुष्टुप् सप्तमी शक्वरी अष्टमीनवम्यौ त्रिष्टुभौ दशम्यनुष्टुबेकादशी पङ्क्तिः । कण्ठे मणिधारणे विनियोगः ' । संकौ अपि द्रष्टव्यम् ।

**१–४** ≡ हिगृ १. १०. ६; ११. १ ≐ आपमं २. ८. १-३, ८. **१** ≡ वासं ३४. ५०; अन्त्ये. ५ ≡ अथर्व १९. २६. १. **६** ≡ अथर्व ५. २५. ६; १९. २६. ४. **७** ≡ अथर्व १. ३५. २; वासं ३४. ५१. **८** ≡ वासं ३४. ५२; अथर्व १. ३५. १. **९** ≡ अथर्व ५. २८. १४; १९. ३३. २; ४६. ६. **१०** ≐ अथर्व १९. ६२; तैसं ५. ७. ६. ४; मैसं ३. ४. ८; हिगृ १. १०. ६; आपमं २. ८. ४.

**१. वर्चस्यं**; वर्चस्यं सुवीर्यं–आपमं. **वर्चस्वजैत्राया**–हिगृ-मॅ-आउ-अल; वर्चस्व जैत्राया–मु-ऋब्र-वासं-संकौ-प्र-ऋमं; वर्चस्वजैत्र्याया–आपमं. **विशतादु मां**–वासं-मॅ-आउ-प्र; विशतादिमां–ऋमं-ऋब्र-जुना-मु-संकौ; विशतादिमं–अल; विशतान्मां–आपमं-हिगृ । **२. वाजि**; वादि–आपमं. **सभासाहं**; सत्रासाहं–आपमं. **समग्रा**; सभग्र–अल; समृद्धीः–आपमं. **समाहृताः**–का; समाभृताः–हिगृ; समाहिताः–इतरेषु । **३. हिरण्यस्व°**–का-ऋमं-मु-जुना-संकौ; हिरण्ये स्व°–अल; हिरण्यस्य–इतरेषु. **नामेव**–का-ऋमं-आउ-मॅ-प्र; मानेव–ऋब्र-मु-जुना-अल-संकौ; नामाग्रभिषं–हिगृ; नामाग्रभेषं–आपमं. **पुरुषप्रियं**–का; पूरुषु प्रियं–मॅ-मु-अल-आउ-ऋब्र-संकौ-प्र; पुरुषु प्रियं–ऋमं; पूरिषु प्रियं–जुना; हिगृ–आपमं-पुस्तकयोरुत्तरार्धोऽन्यथा वर्तते–' तं मा हिरण्यवर्चसं करोतु पूरुषु ( पुरुषु–हिगृ ) प्रियम् । **४. सम्राजं च विराजं**; विराजं च सम्राजं–हिगृ. **चाभिष्टिर्या च मे ध्रुवा**–का-ऋमं-ऋब्र-मॅ-मु-आउ-प्र-संकौ; चाभिष्टिर्यातवे ध्रुवा–अल-जुना; चाभिष्टिर्या च नो गृहे–हिगृ; चाभिश्रीर्या च नो गृहे–आपमं. **या**; मा–अल. **मामिन्द्र सं सृज**; मा सं सृजामसि–हिगृ-आपमं; मामिन्द्र संमृज–प्र । ५. **प्रजातं**; प्रयातं-अल-जुना-संकौ. **जज्ञे**–का-ऋब्र-आउ; दध्रे-अथर्व; यज्ञे–इतरेषु. **इदेनदर्हति**–का-ऋब्र-आउ-प्र; इदेनमर्हति-ऋमं-अथर्व-मॅ-मु-जुना-संकौ; त्रिवेदमर्हति-अल. **यो**–का; ये–अल । **६. यद् वृत्रहा**; यजंपुहा-अल. **वर्चस**; वर्चस्य–अल । ७. **°स्तरन्ति**–का-वासं-अल; सहन्ते–अथर्व; °श्चरन्ति–इतरेषु. **प्रथमजं**; प्रथमं-अल. **दाक्षायणा**; दाक्षायणं–अथर्व-वासं-प्र. **देवेषु**; जावेषु–अथर्व । **८. यदाबध्नन्**–वासं-ऋमं-अथर्व-मॅ-आउ-संकौ; यदाबध्नं–का-ऋब्र-प्र-मु-अल-जुना. **सुमनस्यमानाः**–वासं-अथर्व-मॅ-आउ; सुमनस्यमाना-ऋमं-ऋब्र-मु–अल-जुना-प्र-संकौ. **यथासत्**; यथासन्-अल; यथासं–आउ, **तन्म आ**–का-वासं; तत्ते–अथर्व; तन्न आ–मॅ-मु-अल-जुना-ऋब्र-संकौ-प्र; तदा–आउ. तत्ते बध्नाम्यायुषे वर्चसे बलाय दीर्घायुत्वाय शतशारदाय–अथर्व. ९. **घृतादुल्लुप्तं**–का-अथर्व-मॅ-आउ; धृतादुलुक्तं–प्र; धृतादुर्लुप्तं–अल-जुना-मु-ऋमं-ऋब्र-प्र-संकौ. **सुवर्णं**; सुपर्णं–का-अल. **ऋणक्**; वृणक्–प्र. **सपत्नान्**–का–अथर्व; स्वपत्नाद्–अल; सपत्नाद्–इतरेषु. **कृण्वद्रा**; कृण्वमा–अल; कृण्वन्ना–जुना । **१०. राजसु**; राजस–अल. **गोप्त्रेषु**–का-ऋमं–मु; गोप्तृषु–जुना; गोत्रेषु–इतरेषु ।

उपरिनिर्दिष्टेषु सर्वेषु पुस्तकेषु वर्तमान एकादशो मन्त्र एवमस्ति—

> **अग्निर्येन विराजति सूर्यो येन विराजति ।**
> **विराड्येन विराजति तेनास्मान् ब्रह्मणस्पते विराज समिधं कुरु ॥**

**विराड्येन**–मॅ-आउ-अल-जुना-प्र-संकौ; विराज्येन–ऋमं-ऋब्र-मु. **समिधं**; समिधा–अल-जुना; समद्–प्र ।

७

भूमिर्माता नभः पितार्यमा ते पितामहः । घृताची नाम वा असि सा देवानामसि स्वसा॥१॥
यस्त्वा पिबति जीवति त्रायसे पुरुषं त्वम् । त्रात्रिणी शश्वतामसि शश्वतां सम्यञ्चनी ॥ २ ॥
यद्दण्डेन यदिषुणा यद्वारुहरसा कृतम् । तस्य त्वमसि निष्कृतिः सानौ निष्कृत्य ओषधीः ॥३॥
वृक्षंवृक्षं सं पतसि वृषायन्तीव कन्यना । जयन्ती प्रत्यातिष्ठन्ती संजेया नाम वा असि ॥४॥
भद्रात् प्लक्षे निस्तिष्ठाश्वत्थे खदिरे धवे । भद्रात्पर्णे न्यग्रोधे सा मां रौत्सीदरुन्धती ॥ ५ ॥
अश्वस्यासृक्संपतसि तत्पर्णमभि तिष्ठसि । सरत्पतत्यर्णसि सा मां रौत्सीदरुन्धती ॥ ६ ॥
हिरण्यपर्णे सुभगे सोक्ष्मे लोमशवक्षणे । अपामसि स्वसा लाक्षे वातो हात्मा बभूव ते ॥ ७ ॥

**तव त्यं इन्द्र सख्येषु वह्नयः०** ॥ ऋ. सं. १०. १३८. १

ऋसं १०. १३७ अनन्तरं पठनीयम् । तथा चात्र बृहद्देवता[1] ( ८. ५१ )–' भूमिर्लाक्षं परं सूक्तं तवैन्द्रं सूक्तमुत्तरम् ' । इदं लाक्षादेवताकमिति खिलानुक्रमणी । बृहद्दे १. १२९; २. ८४ अपि द्रष्टव्यम् । अस्य सूक्तस्य सप्तमे मन्त्रे लाक्षा इति पदमागतम् । इदं अथर्व ५. ५ अनेन प्रायः समानम् । क्वचित् मन्त्राणां व्यत्यासः । पैप्प. अथर्व ६.४ अपि द्रष्टव्यम् ॥

१. ≐ अथर्व १. **भूमिर्माता**–का-बृहद्दे; रात्री माता–अथर्व. → अथर्व १२. १. १२;६३. **घृताची**–का; सिलाची–अथर्व । २ ≐ अथर्व २ । ३. ≐ अथर्व ४. **इषुणा**–का; इष्वा–अथर्व. **सानौ निष्कृत्य ओषधीः**–का; सेमं निष्कृधि पूरुषं–अथर्व । ४. ≐ अथर्व ३. **सं पतसि वृषायन्तीव कन्यना**–का; आ रोहसि वृषण्यन्तीव कन्यला–अथर्व. **संजेया**–का; स्परणी–अथर्व । ५. ≐ अथर्व ५ : भद्रात्प्लक्षान्निस्तिष्ठस्यश्वत्थात्खदिराद्धवात् । भद्रान्न्यग्रोधात्पर्णात्सा न एह्यरुन्धति । ६. ≐ अथर्व ९ : अश्वस्यास्नः संपतिता सा वृक्षाँ अभि सिष्यदे । सरा पतत्रिणी भूत्वा सा न एह्यरुन्धति. **अर्णसि**–का; ' अर्णसी ' इति स्यादिति शेफ्टेलोवित्झमहाशयाः । ७. ≐ अथर्व ७. **हिरण्यपर्णे**–का; हिरण्यवर्णे–अथर्व. **सोक्ष्मे**–का; शुष्मे–अथर्व.

अधो दीयमानं ' हिमस्य त्वा ' इत्यादि सूक्तं ऋसं १०. १४२ अनन्तरं पठनीयम् । मु–मते तु ' आ रात्रि पार्थिवं ' इत्यस्यानन्तरं ( ऋसं १०. १२७ अनन्तरं ) पठितव्यम् । इदं मॅ२८–मु–आउ२१–ऋमं–आश्वमंस[2]–अल–जुना–औंध–पत्राम्–पुस्तकेषूपलभ्यते । प्रथममन्त्रस्य प्रथमतृतीयपादौ ≡ अथर्व ६. १०६. ३; वासं १७. ५. तैसं ४. ६. १. १.

**हिमस्य त्वा जरायुणा शाले परिव्ययामसि ।**
**उत हृदो हि नो भुवोऽग्निर्ददातु भेषजम् ।**
**शीतहृदो हि नो भुवोऽग्निर्ददातु भेषजम् ॥ १ ॥**

**अग्निकाममग्निमजनयद्दुर्वीरः शिशुरागमत् । अजातपुत्रपक्षाया हृदयं मम दूयते ॥ २ ॥**
**विपुलं वनं बह्वाकाशं चर जातवेदः कामाय । मां च रक्ष पुत्रांश्च शरणमुभौ तव ॥ ३ ॥**
**पिङ्गाक्ष लोहितग्रीव कृष्णवर्ण नमोऽस्तु ते । अस्मान्नि बर्हरस्योनं सागरस्योर्मयो यथा ॥ ४ ॥**
**इन्द्रः क्षत्रं ददातु वरुणमभि षिञ्चतु । शत्रवो निधनं यान्तु जय त्वं ब्रह्मतेजसा ॥ ५ ॥**
**कपिलजटीं सर्वभक्षं चाग्निं प्रत्यक्षदैवतम् ।**
**वरुणं च वशाम्यग्ने मम पुत्रांश्च रक्षतु मम पुत्रांश्च रक्षत्वों नमः ॥ ६ ॥**

1. Cf. Bṛhaddevatā, part II, p. 307. This Khila follows आयुष्यं वर्चस्वं and not यां कल्पयन्ति as stated by Macdonell.

**साग्रं वर्षशतं जीव पिब खाद च मोद च । दुःखितांश्च द्विजांश्चैव प्रजां च पशु पालय ॥ ७ ॥**
**यावदादित्यस्तपति यावद्भ्राजति चन्द्रमाः । यावद्वायुः प्रवायति तावज्जीव तया सह ॥ ८ ॥**
**येन केन प्रकारेण को वीनामनु जीवति । परेषामुपकारार्थं यज्जीवति स जीवति ।**
**एतां वैश्वानरीं सर्वदेव नमोऽस्तु ते ॥ ९ ॥**

**न चोरभयं न च सर्पभयं न च व्याघ्रभयं न च मृत्युभयम् ।**
**यस्यापमृत्युर्न च मृत्युः स सर्वं लभते स सर्वं जयते ॥ १० ॥**

१. **द्विमस्य**; यमस्य–ऋमं. **जरायुणा शाले**–मु-आउ-अल-जुना-अथर्व-ऋमं; जरायुणाग्ने–तैसं. **भुवो**; धियो–औंध. **शीतह्रदो**–मु-अल-जुना; शिशीतहूदो–ऋमं; शीतहूदा–अथर्व-आउ. **भुवोऽग्निर्ददातु**–ऋमं-आउ-अल-जुना; भियोऽग्निर्ददातु–मु; भुवोऽग्निष्कृणोतु–अथर्व; धियोऽग्निर्ददातु–औंध। २. **अजनयद्दुर्वारः**–आउ; अजयद्दुर्वादः–मु; अजनयद्दुर्वादः–मॅ; अजनदूर्वादः–अल-जुना; अजरदूर्वासः–ऋमं. **शिशुरागमत्**–मॅ-अल-आउ; शिशुलागमत्–ऋमं-मु; शशह्यागमत्–औंध. **दूयते**–मॅ-मु-आउ; हूयते–जुना-ऋमं; दूयेत–अल । ३. **चर**; चरत–ऋमं; तव–मु. **वनं**; धनं–मु. **मां च**–आउ-मु-ऋमं; मांश्च–अल. °**मुभौ तव**–अल-जुना; °मभूत्तव । ४. **अस्मान्नि बर्ह स्योनं**–मु; अस्यां निबर्हणः स्योनां–ऋमं; अस्मान्वि वर्जय स्थानं–आउ; अस्माद्वि बर्ह स्योनां–मॅ; अस्मांद्विबर्हज स्योनां–अल-जुना; अस्मान्निबर्हरस्येनां–औंध; अस्माद्वि बर्हरस्येनां । ५. **इन्द्रः**–मॅ-आउ-अल-जुना; इन्द्र–ऋमं-मु. **वरुणमभि**; वरुणस्त्वमभि–अल. **शत्रवो**; शत्रवस्ते–अल-जुना. **यान्तु**; यातु–ऋमं. **जय त्वं**–आउ-जुना; जप त्वं–अल; जयस्त्वं–मॅ-मु-ऋमं । ६. °**जर्टी**; °जर्टि–अल. **वशाग्न्यग्ने**; वशाह्यग्नि–अल. वशाह्यग्ने–जुना. **रक्षतु**; रक्षति–अल-जुना. 'मम पुत्रांश्च रक्षत्वों नमः' अल–जुना–पुस्तकयोः नास्ति । ७. **दुःखितांश्च**–मॅ-आउ; दुःखितान्त–ऋमं; दुःखितां न–मु । अल-जुना मध्ये सप्तमो मन्त्रो नास्ति । ८. **वायुः**; वातः–जुना. **प्रवायति**–जुना; प्रवायति–अल. **तया सह**–जुना; जया जय–इतरेषु. अष्टममन्त्रानन्तरं अल-आश्वमंसं-पुस्तकयोरेको मन्त्रोऽधिकोऽस्ति—

**एकशफैर्हस्तिनोद्देशेन**( °नोर्द्देशेन–आश्वमंसं ) **त्वं विपुलेन । पृथिवी त्वं भुञ्जस्येकच्छत्रेण दण्डेन ॥**

९. **वीनामनु**; नेहनाको न–अल; मेहनाको न–जुना; हि नाम न–मु; हि नाम नु–औंध; हीनमनु–आउ; विनामनु. **परेषामुपकारार्थं**; यदेषामपकाराणां–अल-जुना. **वैश्वानरीं सर्वदेव**–मॅ-मु; वैश्वानरं सर्वदेव–ऋमं; वैश्वानर सर्वदेव–आउ; वैश्वानरीं सर्वदेवान्–औंध; वैश्वानरं सर्वदेवं । मु–पुस्तके 'एतां वैश्वानरीं' इत्यादिभागो दशममन्त्रानन्तरमागतः । अयं अल-जुना पुस्तकयोर्नास्ति । १०. **स सर्वं लभते स सर्वं जयते**–मॅ-मु; सर्वं लभते सर्वं जयते–ऋमं. दशमो मन्त्रः आउ-अल–पुस्तकयोर्नास्ति । दशममन्त्रानन्तरं आश्वमंसं–पुस्तके ऋसं १०. १४२. ८ इत्ययं मन्त्रो दत्तोऽस्ति ।

मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः । मेधामिन्द्रश्चाग्निश्च मेधां धाता ददातु मे ॥ १ ॥
मेधां मे वरुणो राजा मेधां देवी सरस्वती । मेधां मे अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ २ ॥
या मेधाप्सरस्सु गन्धर्वेषु च यन्मनः । दैवी या मानुषी मेधा सा मामा विशतादिह ॥ ३ ॥
यन्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे ।
निशामितं नि शामये मयि श्रुतम् । सह व्रतेन भूयासं ब्रह्मणा सं गमेमहि ॥ ४ ॥
शरीरं मे विचक्षण वाङ्मे मधुमद्दुहे ।
अवृधमहमसौ सूर्यो ब्रह्मण आणीः स्थ। श्रुतं मे मा प्र हासीः ॥ ५ ॥

मेधां देवीं मनसा रेजमानां गन्धर्वजुष्टां प्रति नो जुषस्व।
मह्यं मेधां वद मह्यं श्रियं वद मेधावी भूयासमजिराचरिष्णुः ॥ ६ ॥
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिं मेधामयासिषम् ॥ ७ ॥
मेधाव्यहं सुमनाः सुप्रतीकः श्रद्धामनाः सत्यमतिः सुशेवः।
महायशा धारयिष्णुः प्रवक्ता भूयासमस्येश्वरया प्रयोगे ॥ ८ ॥
यां मेधां देवगणाः पितरश्चोपासते। तया मामद्य मेधयाग्ने मेधाविनं कुरु ॥ ९ ॥

एतदुत्तरं च ऋसं १०. १५१ अनन्तरं पठनीयम्। तथा चात्र बृहद्देवता (८. ५८)–'आग्नेयं श्रद्धया श्राद्धं मेधासूक्तमतः परम्। आग्नेयमा सूरेतु' इति। ऋग्विधानमपि (४. ७१-७२)–'श्रद्धासूक्तं जपेन्नित्यं श्रद्धाकामः समाहितः। सर्वत्र लभते श्रद्धां मेधासूक्तं तथैव च' इति। पुनरप्यन्यत्र (ऋग्वि ४. ९६-९७)–'पुरा स्तनप्रदानात्तं श्रद्धासूक्तेन पाययेत्। मेधासूक्तेन चैवैनं पिष्टं व्रीहिमयं चरुम्। मधुमिश्रं जातरूपं मेधावी तेन जायते' इति। ऋमं–मॅ२९–आउ२२–ऋव्र–अल–जुना–मु–आश्वमंसं–प्र–औंधपुस्तकेष्विदं संपूर्णमुपलभ्यते।

१. ≡ आपमं २. ४. ५; अन्त्ये. १[२]. ≡ वासं ३२. १५. **मेधां**; मेधा–मु. **सप्तर्षयो**–का–ऋव्र–आपमं; सप्त ऋषयो–इतरेषु. **अग्निश्च**; वायुश्च–वासं–अन्त्ये. **दधातु**–का–अल; ददातु–इतरेषु. **मे**–का–ऋव्र–अल–आउ–अन्त्ये; ते–इतरेषु। **२.** ≡ तैआ १०. ४०; आपमं २. १२. २; आश्वगृ १. १५. २; पागृ २. ४. ८; मंब्रा १. ५. ९; हिगृ १. ६. ४; ८. ४; गोगृ २. ७. २१; मंदां; मामंपा. → वैसू ३२. १५; मनाउ १६. ५. **मे**–का–ऋव्र–वासं–तैआ–पागृ–हिगृ; ते–इतरेषु. **वरुणो राजा**–का–ऋमं–ऋव्र–अल–आउ–मु–प्र–मॅं; देवः सविता–वासं–आश्वगृ–पागृ–आपमं; इन्द्रो ददातु–तैआ–हिगृ. **मे**–का–वासं–तैआ–हिगृ–मामंपा–आउ–अल; ते–इतरेषु. **धत्तां**–मॅ–मु–अल–जुना–तैआ–आश्वगृ–पागृ–ऋव्र–प्र–आउ–आपमं; धत्तं–का. **पुष्करस्रजा**–का–प्र–ऋमं–मॅ–मु–अल; पुष्करस्रजौ–इतरेषु। **३.** ≡ तैआ १०. ४१; आपमं २. ४. ६; हिगृ १. ८. ४; → मनाउ १६. ६. **मेधाप्सरस्सु**–का–ऋमं; मेधा अप्सरस्सु–प्र; मेधाप्सरासु–इतरेषु. तैआ–आपमं–हिगृमध्ये 'अप्सरासु च या मेधा' इति पाठः. **यन्मनः**–का–तैआ–प्र–मॅ–मु–आउ–ऋमं–हिगृ; यन्मम–अल; यद्यशः–आपमं. **दैवी या मानुषी मेधा**–का; दैवी मेधा मनुष्यजा–हिगृ. **मामा**–का–आपमं–मु–आउ; माया–ऋमं–मॅ–प्र–अल–जुना; मेधा–आउ. 'मां मेधा सुरभिर्जुषताम्' इति तैआ–हिगृ–पुस्तकयोरन्तिमः पादः. **इह**–का–आपमं; इमां–मु–अल–जुना–मॅ–ऋव्र–प्र; उ मां–आउ। **४. मेऽनूक्तं**–का; मेनोक्तं–इतरेषु. **तद्रमतां**–का–प्र–मॅ–आउ; तद्रवतां–मु–जुना; प्रद्रवतां–अल. **शकेयं यदनुब्रुवे**–का; शके अन्यदनुब्रुवे–अल–जुना. **निशामितं**–का; निशामतं–ऋमं–प्र–मॅ–मु–ऋव्र–अल–जुना; निशामनं–आउ. **शामये**–का; शामयि–ऋमं–प्र–मु; शामहै–मॅ–ऋव्र–आउ–अल–जुना. **मयि**–का; महि–अल–जुना. **श्रुतं**–का; व्रतं–इतरेषु. **व्रतेन भूयासं ब्रह्मणा**–का; व्रतेषु भूयासं ब्रह्मणा–ऋमं–ऋव्र–प्र; प्रियेण भूयासं ब्रह्मणा–मु–आउ–अल–जुना; ब्रह्मणा–मॅ। ५[१]. ≡ तैआ ७. ४. १. **विचक्षण**; विचक्षणं–ऋमं–ऋव्र–अल–जुना–आउ–प्र; विचर्षण–तैआ. **मधुमद्दुह**–का; मधुमद्दुहां–मॅ–ऋमं–मु–आउ–प्र; मधुमत्तमा–तैआ–पागृ; मधुमद्दुहा–ऋव्र; मधुमद्दुहा–अल–जुना. **अवृधं**–का; अवृद्धं–मॅ–आउ–ऋव्र–ऋमं–मु–प्र–अल–जुना. **ब्रह्मण आणीः**–का; ब्रह्मण आणी–प्र; ब्रह्मणानी–इतरेषु. **स्थ**–का–मॅ–आउ; स्थः–ऋमं–मु–अल–जुना–ऋव्र–प्र. **हासीः**–का–प्र–मॅ–मु–आउ; हासीत्–जुना–अल. → वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितं आविरावीर्य• एधि वेदस्य म आणी स्थ श्रुतं मे मा प्र हासीरनेनाधीतेन–ऐआ.। **६. देवीं**; देवी–का. **मनसा**; समनसां–मु.

→ वाग्देवी मनसा–शांगृ १. २४. **अजिराचरिष्णुः**–का; अजिराजरिष्णुः–अल–जुना. अजराजरिष्णुः–प्रर–मॅ–ऋमं–आउ; अजराजरिष्णु–ऋब्र–मु। ७. ≡ तैआ १०. १; वासं ३२. १३; ऋसं १.१८.६. ८. = ९ मॅ–मु–आउ–प्रर–ऋमं–ऋब्र–अल–जुना–औंध. **मेधाव्यहं सुमनाः**–ऋमं–जुना–आउ–मॅ–ऋब्र–प्रर; मेधाव्यं सुमनः–मु; मेधाव्यहं समनाः–अल. **श्रद्धामनाः**–मॅ–मु–आउ–जुना–ऋमं–ऋब्र–प्रर; श्रद्धामयाः–अल. **सत्यमतिः**–का–मॅ–मु–ऋमं–प्रर; सत्यमनाः–आउ; सत्यमुपः–अल–जुना. **धारयिष्णुः**; धारयिष्णु–मु. **प्रवक्ता**; प्रयुक्ता-ऋमं-प्रर; प्रविक्ता–अल–जुना. → तद्वक्तारमवतु–ऐआ. **अस्येश्वरया**–का; अस्ये स्वधया–मु–ऋब्र; अस्यै स्वधया–ऋमं; अयें स्वधया–मॅ–अल–जुना; अस्य स्वधया–आउ; अये स्वध्रया–प्रर; अस्मै शरया–औंध। ९. = इतरपुस्तकेष्वष्टमी. → वासं ३२. १४. ९². ≡ अथर्व ६. १०८. ४. **चोपासते**; चोप आसते–प्रर. **तया मामद्य मेधयाग्ने**; तया मा मेधया मे–ऋमं–ऋब्र–मु. **कुरु**; कृणु–अथर्व.

मु–औंधपुस्तकयोर्दशमो मन्त्र एवमस्ति—

**नाशयित्री पलाशस्यारुपसौ पथिकामसु। अथोत तस्य यक्ष्माणां पापरोगनाशिनी॥**

औंधपुस्तके उत्तरार्धो भिन्नः–अथो ततस्य यक्ष्माणमपापा रोगनाशिनी. औंधपुस्तके पुनरेकादशो मन्त्रो दत्तोऽस्ति स यथा—

**ब्रह्मवृक्ष पलाश त्वं श्रद्धां मेधां च देहि मे। वृक्षाधिप नमस्तेऽस्तु अत्र त्वं संनिधौ भव॥**

## ९

आ सू॑रेतु परा॒व॑तोऽग्निर्गृ॒हप॑तिः सु॒प्रती॑को वि॒भाव॑सुः। अ॒ग्निर्ज्यो॑तिर्नि॒चाय्यः॑ पृथि॒व्याम॒ध्याभ॑र।
य॒माग॒त्य वा॒ज्यध्वा॑नं॒ सर्वा॒ मृधो॒ वि धू॑नुते। आक्र॑म्या वाजिन् पृथि॒वीम॒ग्निमि॑च्छ रु॒चा त्वम्।
सेनां॑ जिगाति सुष्टु॒तिं सु॒दीधि॑तिर्वि॒भाव॑सुम्॥१॥
ध्रु॒वम॒ग्निर्नो॑ दू॒तो रोद॑सी हव्य॒वाड् दे॒वाँ आ व॑क्षदध्व॒रे।
विप्रो॑ दू॒तः परि॑ष्कृतो य॒तश्च॑ य॒ज्ञियः॑ क॒विः।
अप्नवानवदौर्वव॒द्भृगुव॒ज्जमदग्निवत्

॥२॥

यदि ते मात्रा ... हव्यवा॒ळग्निर्नो॑ दू॒तो रोद॑सी
उ॒तोत्त॑रेण दुहि॒ता जु॒हो॑ना मधु॑मत्तमम॒ग्नये॑ जा॒तवे॑दसे।
प्र॒जां मे॑ यच्छ द्वि॒पदं॒ चतु॑ष्पदम॒ग्निम॒हिंस॑न्तमङ्गि॒रस्व॑त्।
उ॒दस्था॑दू॒र्ध्वं ईयते द्यु॒मन्तो॑ दी॒घतो॑ बृ॒हच्छु॒क्राः शोच॑न्तो अ॒र्चयः॑॥३॥
म॒हि॒षी वो॑ अ॒ग्निर्धू॒मके॑तुरु॒षर्बु॑धो वै॑श्वान॒रं उ॒षसा॑म॒ग्रम॒ख्य-
द॒त्यक्र॑मीद्द्रवि॒णोदा॑ वा॒ज्यर्वा॑कः सु लो॒कं सु॒कृतः॑ पृथि॒व्याम्
त॒तः ख॒नेम सु॒प्रती॑कम॒ग्निं वै॑श्वान॒रं स्वो॒ रुहा॑णा अधि
नाके॑ अ॒स्मिन्न॑धा पोष॑स्व पोषे॑ण पुन॑र्नो न॒ष्टमा कृ॑धि पुन॑र्नो र॒यिमा कृ॑धि॥४॥
न वै दे॒वान् पीव॑रो संय॑तात्मा रोरू॑यमाणः क॒कुभा॑मचो॒दते॑ऽग्ने उ॒ मन्य
त्वम॑ग्ने व्रत॒भृच्छु॒चिर॑ग्ने दे॒वाँ इ॒हा व॑होप य॒ज्ञं ह॒विश्च॑ नः।

व्रतानि बिभ्रद्व्रतपा अदब्धो यजा नो देवाँ अजरः सुवीरः ।
दधद्रत्नानि सुमृळीको अग्ने गोपाय नो जीवसे जातवेदः ॥ ५ ॥
देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः सत्यमन्मायजी
होता होतुर्होतुरायजीयानग्ने यान् देवानयाड् याँ अपिप्रेयें
ते होत्रे अमत्सत तां ससनुषीं होत्रां देवंगमां दिवि
देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्निर्होताभूद्वसुवने वसुधेयस्य नमोवाके वीहि ॥ ६ ॥
सर्वं वहन्तु दुष्कृतमग्निं गीर्भिर्हवामहे ।
अग्निः शुक्रेण शोचिषा बृहत्सूर्यो अरोचत दिवि सूर्यो अरोचत ।
घृतैर्हव्यैभिराहुतं द्युमत्सूर्यो न रोचन् तेऽग्नौ हव्यानि धत्तनाग्नौ ब्रह्माणि केवलाग्ने बृहन्तमध्वरे ।
सश्चतो दाशुषो गृहमेवा त्वामग्ने सहोभिर्गीर्भिर्वत्सो अवीवृधत् ॥ ७ ॥

**शास इत्था महाँ असि० ॥ १०. १५२. १**

ऋसं १०. १५१ अनन्तरं पठनीयम् । एतस्मिन्नर्थे बृहद्देवता[1] ( ८. ५९ ) द्रष्टव्या । इदं सुभेषज-स्यार्षम् । अस्मिन् विषये ऋक्प्रातिशाख्यं[2] ( १६. ८८–९० )-' उत्तरास्तु सुभेषजे । कृतिः प्रकृतिरा-कृतिर्विकृतिः संकृतिस्तथा । षष्ठी चाभिकृतिर्नाम सप्तम्युत्कृतिरुच्यते ॥ अशीतिश्चतुरशीतिरष्टाशीतिर्द्विन-वतिः । षण्णवतिः शतं पूर्णमुत्तमा तु चतुःशतम् ' ॥ गोपथब्राह्मणे ( ५.२३ ) सौभेषजं छन्दो निर्दिष्टम् ।

**१.** = मैसं २. ७. १; वासं ११. ११ : अग्निं( अग्नेः-वासं ) ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ; तैसं ४. १. १. ४ : तया ज्योतिरजस्रमिदग्निं खात्वी न आ भरा. **आगत्य वाज्य°... रुचा त्वं** = वासं ११. १८; मैसं २. ७. २; कासं १६. २; १९. ३; तैसं ४. १. २. ३; ५. १२. ६. **२.** कियांश्चिद्भागः का-पुस्तके त्रुटितः । ' जमदग्निवत् ' इत्यस्यानन्तरं ' च्यवनवत् ' इति स्यात् यत एते पञ्चर्षयः प्रायेण समुल्लिख्यन्ते; → आपश्रौ २४. ५. १२; आश्वश्रौ १२. १०. **४. उषसामग्र-मख्यत्** = ऋसं ४. १३. १. शिष्टं वासं ११. २२; तैसं ४. १. २. ४; ५. १. ३. १; मैसं २. ७. २; कासं. १६. २ एतैः समानम्. **अत्यक्रमीत्**-का; उदक्रमीत्-इतरेषु. **अर्वाकः सु°**-वासं-मैसं; अर्वाकः स°-तैसं. **सुकृतः पृथिव्यां**-का; सुकृतं पृथिव्याः-इतरेषु. **अस्मिन्**-का; उत्तमं-वासं; उत्तमे-तैसं । ५. **ककुभामचोदते** = ऋसं ५. ४४. २. **उ मन्य;** तमन्य इति शेफ्टेलोवित्झमहा-शया अभ्यूहन्ति. **त्वमग्ने व्रत°...जीवसे जातवेदः** = मैसं ४. ११. ४; तैब्रा २. ४.१.११; ऐब्रा ७. ८; शांश्रौ ३. ५. ९; आपश्रौ ९. ४. १४; आश्वश्रौ ३. १२; शांगृ २. १३. **व्रतानि**-का-आश्वश्रौ-शांश्रौ-ऐब्रा; व्रता नु-तैब्रा-मैसं-आपश्रौ. **अदब्धो**-का-मैसं-आश्वश्रौ; अदाभ्यो-इतरेषु. **यजा नो**; भवा नो-शांश्रौ. **देवाँ**-का-तैब्रा-ऐब्रा-शांश्रौ-आपश्रौ-आश्वश्रौ; देवो-मैसं; दूतो-शांगृ. **सुमृळीको**-का-मैसं-आश्वश्रौ-शांश्रौ; सुविदानो-इतरेषु । ६. खिल ५. ७. ३१ अत्रायं मन्त्रः पुनरागतः । ७. **अग्निः शुक्रेण ... ... अरोचत** = खिल ८. ५[२]. **गीर्भिर्वत्सो अवीवृधत्** = ऋसं ८. ८. १५.

औंधपुस्तकानुसारेण ऋसं १०. १६१ अनन्तरमधो दीयमानमेकर्चं सूक्तं पठनीयम् । तत्पुस्तक-संपादकैरिदं केवलमभ्यूहमात्रेण स्वीकृतमित्यावेदितम् ।

---

1. Cf. Bṛhaddevatā part II, p. 309.

2. Regarding the ignorance of this hymn on the part of Uvaṭa, the commentator of Ṛk-prātiśākhya, Cf. Scheftelowitz, p. 125.

**ऊर्ध्वरेखा प्र दहन्ते विष्णुरिममिन्द्राग्नी अमृतं जुषेथाम् ।**
**मह्यं दधाना उप दीर्घमायुरस्मे धत्तं पुरुभुजा पुरंधिः ॥**

## १०

वेनस्तत्पश्यद्भुवनस्य विद्वान् यत्र विश्वं भुवत्येकनीळम् ।
इदं धेनुरदुहज्जायमाना स्वर्विदमभ्यनूषत व्राः ॥ १ ॥
प्र तद्वोचेदमृतं नु विद्वान् गन्धर्वो नाम निहितं गुहा यत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुष्पितासत् ॥ २ ॥
सतो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतीये धामन्नभ्यैरयन्त ॥ ३ ॥

**अक्षीभ्यां ते नासिकाभ्यां० ॥ ऋ. सं. १०. १६३. १**

ऋसं १०. १६२ अनन्तरं पठनीयम् । अत्र बृहद्देवता ( ८. ६६ )-' वैन्यं तु वेनस्तत्पश्यदक्षीभ्याम् ' इति । वाजपेयेऽतिरिक्तोक्थे इदं विनियुक्तं ( → शांश्रौ १५. ३ ) । विज्ञानकर्मणीदं विनियोज्यमिति कौसू ३७. ३ । एतत्सूक्तं अथर्व २. १. १, २, ३$^{१}$ + ५$^{२}$ अत्रोपलभ्यते । पैप्प. अथर्व २. ६ अत्रापीदं पाठभेदेनोपलभ्यते । वासं ३२.८-१०; तैआ १०.१.३; मनाउ २.३; अन्त्ये अत्रापीदं दृश्यते ।

**१. भुवनस्य विद्वान्**–का; विश्वा भुवनानि विद्वान्-तैआ; परमं गुहा यत्–अथर्व; निहितं गुहा सद्–वासं. **भुवत्येक°**–का–अन्त्ये; भवत्येक°–इतरेषु. **°नीळं**–का-वासं–अन्त्ये–तैआ; °रूपं-अथर्व. वासं–तैआ–अन्त्ये-पुस्तकेषूत्तरार्धः सर्वथा भिन्नः. **°धेनुः**–का; पृश्निः–अथर्व. **जायमाना**–का; जायमानाः–अथर्व. **स्वर्विदं**–का; स्वर्विदो-अथर्व । **२. अमृतं नु**; अमृतस्य-अथर्व. **नाम**–का–तैआ ( →ऋसं १०.४५.२ : विद्मा ते नाम परमं गुहा यत् ); धाम–इतरेषु. **निहितं**–का-तैआ; विभृतं–वासं. **गुहा यत्**–का-अथर्व; गुहा सत्–वासं-अन्त्ये; गुहासु- तैआ । **३. सतो**–का; स नो–वासं-अथर्व-अन्त्ये-तैआ. **बन्धुर्जनिता स विधाता**–का-वासं-तैआ-अन्त्ये; पिता जनिता स उत बन्धुः–अथर्व. **तृतीये धामन्**–का-वासं-अन्त्ये; तृतीये धामानि–तैआ; समाने योनौ–अथर्व. **अभ्यै°**–का-तैआ; अध्यै°–इतरेषु ।

## ११

येनेदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्त होता तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ २ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किं चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥
यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥
यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥
यदत्र षष्ठं त्रिशतं शरीरं यज्ञस्य गुह्यं नवनाभमाद्यम् ।
दश पञ्च त्रिंशतं यत्परं च तन्मे मनः शिवसंकल्पमस्तु ॥ ७ ॥
ये पञ्चपञ्चा दशतं शतं च सहस्रं च नियुतं न्यर्बुदं च ।
ते यज्ञचित्तेष्टकास्तं शरीरं तन्मे मनः शिवसंकल्पमस्तु ॥ ८ ॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
[तस्य योनिं परिपश्यन्ति ] धीरास्तन्मे मनः शिवसंकल्पमस्तु ॥ ९ ॥
येन कर्माणि प्रचरन्ति धीरा विप्रा वाचा मनसा कर्मणा च ।
यस्यान्वितमनु सं यन्ति प्राणिनस्तन्मे मनः शिवसंकल्पमस्तु ॥ १० ॥
ये मनो हृदयं ये च देवा ये अन्तरिक्षे बहुधा चरन्ति ।
ये श्रोत्रं चक्षुषी संचरन्ति तन्मे मनः शिवसंकल्पमस्तु ॥ ११ ॥
येन द्यौरुग्रा पृथिवी चान्तरिक्षं ये पर्वताः प्रदिशो दिशश्च ।
येनेदं जगद्व्याप्तं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ १२ ॥
येनेदं सर्वं जगतो बभूवुर्ये देवा अपि महतो जातवेदाः ।
तदिवाग्निस्तपसो ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥ १३ ॥

**तुभ्येदमिन्द्र परि षिच्यते मधु०** ॥ ऋ. सं. १०. १६७. १

ऋसं १०. १६६ अनन्तरं पठनीयम् । बृहद्देवतापि[1] ( ८. ६९ )–' ऋषभं मा ( = १०. १६६ ) सपत्नघ्नं येनेदमिति मानसम् ' इति । ऋग्विधानं ( ४. १०४-१०५ ) च–' येनेदमिति[2] वै नित्यं जपेत नियतव्रतः । समाधिं मनसस्तेन विन्दते नैव मुह्यति ' इति । इदं शिवसंकल्पसूक्तमिति खिलानुक्रमणी । ' खिलानि श्रीसूक्तशिवसंकल्पादीनि श्राद्धे ब्राह्मणान् श्रावयेत् ' इति मेधातिथिः ( मनु ३. २३२ ) । शिवसंकल्पसूक्तं पापहरमिति मनुः ( ११. २५१ ) । तथा चाग्निपुराणे–' शिवसंकल्पजापेन समाधिं मनसो लभेत् ' ( २६०. ७४ ) ' येनेदमिति वै जप्त्वा समाधिं विन्दते परम् ' ( २५९. ९३ ) ।

१-६ = वासं ३४. १-६; ऋमं; आसू; ऋब्र; अन्त्ये; प्रर ( गर्भाधान ); आश्वमंसं. का-वासं-पुस्तकयोः प्रथमचतुर्थमन्त्रयोर्व्यत्यासः । का–औंधपुस्तकयोस्तृतीयचतुर्थमन्त्रयोर्व्यत्यासः सप्तमो मन्त्रश्च औंधपुस्तके नास्ति । २. **यक्ष**; यक्ष्म°. ४. **तथैवैति**–का; तथैवेति-औंध. **ज्योतिरेकं** = ऋसं १. ९३. ४ । ६. **जविष्ठं**–का; यविष्ठं–ऋब्र-जुना-प्रर-औंध । आश्वमंसं-पुस्तके षण्णां मन्त्राणामनन्तरं ऋसं ७. ५९. १२ ऋक् लिखितास्ति । ७. **नवनाभमाद्यं**–का; नवनावमाद्यं-म्यु । **गुह्यं**–म्यु; ' गु ' इत्यक्षरं का–पुस्तके नष्टम् । ८. **पञ्चपञ्चा दशतं**–का; पञ्च पञ्चाशतः-औंध. **न्यर्बुदं**–का; चार्बुदं–औंध. **°ष्टकास्तं**–का; °ष्टकाटं-औंध. ' °ष्टकास्तच्छरीरं ' इति शुद्धमिति शेफ्टेलोवित्झमहाशयाः । ९[1]. = वासं ३१. १८;

1. Cf. Bṛhaddevatā part II, p. 312.

2. The editior of Lahore edition of Ṛgvidhāna which is a transliteration of Meyer's edition gives the text as येने( ? तुभ्ये )दमिति, while Meyer has rightly printed merely **येनेदमिति**. The transliterator did so because he related the verse to RV. X. 167 which begins with **तुभ्येदम्**, not knowing the Khila **येनेदम्**. See also footnote to Khila I. 2.

तैआ ३. १२. ७; ३. १९. १; श्वेउ ३. ८. ९[२] = वासं ३१. १९. **तमसः परस्तात्**–का; तमसस्तु पारे-तैआ. **तस्य योनिं परिपश्यन्ति**–म्यु-औंध; का-पुस्तक एतत्त्रुटितम्। **१०. प्रचरन्ति**–का; प्रतिरन्ति–प्रर-म्यु. **विप्रा**–का-औंध; यतो–प्रर-म्यु. **कर्मणा च**–का; कर्मणा वा–औंध; तानि हन्ति–प्रर-म्यु. **यस्यान्वितमनु**–म्यु; यस्यां त्वितमनु-प्रर; संविदमनु-का; यस्त्वां दिशमनु-औंध. **११. ये**–का; ये गे–औंध. **अन्तरिक्षे बहुधा चरन्ति**–का; अन्तरिक्षं बहुधा कल्पयन्ति-औंध; दिव्या आपो यः सूर्यरश्मिः–म्यु. **श्रोत्रं**–का; श्रोत्रं च-औंध. **संचरन्ति**–का-औंध; संचरन्तं-म्यु। **१२.** → ऋसं १०. १२१. ५; वासं ३२. ६. **ये**–का; यः-जुना; येन-औंध. यत्पर्वताः पृथिवी चान्तरिक्षं यत्पर्वताः प्रदिशो दिशश्च इति म्यु-पुस्तके मन्त्रस्य पूर्वार्धः। **येनेदं**–का; येनेदं सर्वं-औंध. **जगद्व्याप्तं**–औंध; जगत्याप्तं-का. **प्रजानां**–का; प्रजानत्-औंध. **१३. बभूवुर्ये देवा अपि**–का; बभूव तदेवापि–म्यु; बभूव यद्देवा अपि-औंध. **तद्दिवाग्निस्**–का; तदेवाग्निं-जुना; यदेवाग्र्यं-औंध. **ज्योतिरेकं** = ऋसं १. ९३. ४. **जातवेदाः**; जातवेदः इति स्यादिति शेफ्टेलोविट्झमहाशयाः।

लण्डननगरे ब्रिटिश म्यूझिअम्मध्ये ऋग्वेदसंहिताया एकं लिखितपुस्तकं ( क्रमाङ्कः Add. 5351) अस्ति। तत्र १०. १६६ सूक्तानन्तरं अष्टाविंशतिमन्त्रात्मिका शिवसंकल्पोपनिषद् लिखितास्ति। शेफ्टेलोविट्झमहाशयैः सा टिप्पण्या जर्मनभाषान्तरेण च सह प्रकाशितास्ति[1]। तत्र १३ मन्त्रानन्तरं वर्तमाना मन्त्रा अत्र दीयन्ते। अस्य लिखितपुस्तकस्य 'म्यु' इति संज्ञा कृता। उपरि दत्तास्त्रयोदश मन्त्रा अस्मिन् लिखितपुस्तकेऽपि वर्तन्ते। तेषां पाठभेदा उपरि 'म्यु' इति संज्ञया दत्ताः। तथापि का-पुस्तकक्रमात् म्यु-पुस्तकस्थः क्रमो भिन्नः स यथा–का १, २ = म्यु १, २; का ३ = म्यु ५; का ४ = म्यु ७; का ५ = म्यु ४; का ६ = म्यु ६; का ७ = म्यु १२; का ८ = म्यु १०; का ९ = म्यु १३; का १० = म्यु ३; का ११ = म्यु ११; का १२ = म्यु ९; का १३ = म्यु ८. इण्डिया ऑफिस–मध्ये वर्तमाने अन्यस्मिन् ऋग्वेदसंहितालिखितपुस्तकेऽपि ( क्रमाङ्कः २१३१ ) इदं शिवसंकल्पसूक्तमुपलभ्यते तत्त म्यु-पाठेन समानमेव। जुनागड-नवानगर-पुस्तकद्वयेऽपि शिवसंकल्पसूक्तं लिखितमस्ति तत्र मन्त्रसंख्या मन्त्रक्रमश्च म्यु-पुस्तकानुसार्येव। यत्र जुनागड–पुस्तकं न निर्दिष्टं तत्र तत्स्थः पाठो म्यु-समान एवेति मन्तव्यम्। औंधपुस्तके २६ मन्त्रात्मकं शिवसंकल्पसूक्तं मुद्रितमस्ति। तत्रस्थाः १३ मन्त्रपर्यन्तं वर्तमानाः पाठभेदा उपरि दत्ता एव। औंध-पुस्तकस्थो मन्त्राणां क्रमोऽपि का-पुस्तकाद्भिन्नः। अतः सोऽत्र प्रदर्श्यते–का १, २ = औंध १, २; का ३ = औंध ४; का ४ = औंध ३; का ५, ६ = औंध ५, ६; का ७ औंधमध्ये नास्ति; का ८ = औंध ७; का ९ = औंध ८; का १० = औंध ९; का ११ = औंध १०. औंधपुस्तके एकादशो मन्त्रः सर्वथा भिन्नो वर्तते स यथा–

> **यस्येदं धीराः पुनन्ति कवयो ब्रह्माणमेतं व्यावृणत इन्दुम्।**
> **स्थावरं जङ्गमं च द्यौराकाशं तन्मे मनः शिवसंकल्पमस्तु ॥ ११ ॥**

का १२ = औंध १२; का १३ = औंध १६। म्यु-पुस्तकस्था अधिका मन्त्रा अधुनोद्ध्रियन्ते–

> **अचिन्त्यं चाप्रमेयं च व्यक्ताव्यक्तपरं च यत्।**
> **सूक्ष्मात्सूक्ष्मतरं ज्ञानं तन्मे मनः शिवसंकल्पमस्तु ॥ १४ ॥**
> **अस्ति विनाशयित्वा सर्वमिदं नास्ति पुनस्तथैव दृष्टं ध्रुवम्।**
> **अस्ति नास्ति हितं मध्यमं पदं तन्मे मनः शिवसंकल्पमस्तु ॥ १५ ॥**
> **अस्ति नास्ति विपरीतो प्रवादोऽस्ति नास्ति सर्वं वा इदं गुह्यम्।**
> **अस्ति नास्ति परात्परो यत्परं तन्मे मनः शिवसंकल्पमस्तु ॥ १६ ॥**
> **परात्परतरं यच्च तत्पराच्चैव यत्परम्।**
> **तत्परात्परतोऽज्ञेयं तन्मे मनः शिवसंकल्पमस्तु ॥ १७ ॥**

---

1. ZDMG 1921, Band. 75. pp. 201-12.

परात्परतरो ब्रह्मा तत्परात्परतो हरिः ।
तत्परात्परतो ह्येष तन्मे मनः शिवसंकल्पमस्तु ॥ १८ ॥
गोभिर्जुष्टो धनेन ह्यायुषा च बलेन च ।
प्रजया पशुभिः पुष्कलाद्यं तन्मे मनः शिवसंकल्पमस्तु ॥ १९ ॥
प्रयतः प्रणवो नित्यं परमं पुरुषोत्तमम् ।
ओंकारं परमात्मानं तन्मे मनः शिवसंकल्पमस्तु ॥ २० ॥
यो वै वेदादिषु गायत्री सर्वव्यापिमहेश्वरात् ।
तद्विरुक्तं तथाद्वैश्यं तन्मे मनः शिवसंकल्पमस्तु ॥ २१ ॥
यो वै वेद महादेवं परमं पुरुषोत्तमम् ।
यः सर्वं यस्य चित्सर्वं तन्मे मनः शिवसंकल्पमस्तु ॥ २२ ॥
योऽसौ सर्वेषु वेदेषु पठते ह्यज ईश्वरः ।
अकायो निर्गुणोऽध्यात्मा तन्मे मनः शिवसंकल्पमस्तु ॥ २३ ॥
कैलासशिखरे रम्ये शंकरस्य शुभे गृहे ।
देवतास्तत्र मोदन्ति तन्मे मनः शिवसंकल्पमस्तु ॥ २४ ॥
कैलासशिखराभासा हिमवद्गिरिसंस्थिताः ।
नीलकण्ठं त्रिनेत्रं च तन्मे मनः शिवसंकल्पमस्तु ॥ २५ ॥
आब्रह्मस्तम्बपर्यन्तं त्रैलोक्यं सचराचरम् ।
उत्पातितं जगद्व्याप्तं तन्मे मनः शिवसंकल्पमस्तु ॥ २६ ॥
य इमं शिवसंकल्पं सदा ध्यायन्ति ब्राह्मणाः ।
ते परं मोक्षं गमिष्यन्ति तन्मे मनः शिवसंकल्पमस्तु ॥ २७ ॥
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् तन्मे मनः शिवसंकल्पमस्तु ॥ २८ ॥

औंध-पुस्तकस्थः मन्त्रक्रमो म्यु-पुस्तकाद्भिन्नः अतः सोऽत्र प्रदर्श्यते–म्यु १४ = औंध १३; म्यु १५ = औंध २५; म्यु १६ = औंध २६; म्यु १७ औंधमध्ये नास्ति; म्यु १८ = औंध २३; म्यु १९ = औंध १७; म्यु २० = औंध २१, २०; म्यु २१ = औंध १९; म्यु २२ = औंध २०, २१; म्यु २३ = औंध १८; म्यु २४ = औंध १४; म्यु २५, २६ औंधमध्ये न स्तः; म्यु २७ = औंध २४; म्यु २८ औंध मध्ये नास्ति । तथा च औंधपुस्तकस्थौ द्वौ मन्त्रौ म्यु-पुस्तके न स्तः तौ यथा–

आदित्यवर्णं तपसा ज्वलन्तं यत्पश्यसि गुहासु जायमानः ।
शिवरूपं शिवमुदितं शिवालयं तन्मे मनः शिवसंकल्पमस्तु ॥ १५ ॥
ओंकारं चतुर्भुजं लोकनाथं नारायणम् ।
सर्वस्थितं सर्वगतं सर्वव्याप्तं तन्मे मनः शिवसंकल्पमस्तु ॥ २२ ॥

• औंधपुस्तकस्थाः पाठभेदा अधुना प्रदर्श्यन्ते–

**१४. अचिन्त्यं**–म्यु; अव्यक्तं–औंध. **च यत्**–म्यु; शिवं–औंध. **१५. विनाशयित्वा**–म्यु; नास्ति शयित्वा–औंध. **तथैव**–जुना–औंध; तथैवा–म्यु. **१६. प्रवादो**–औंध; प्रवाहो–म्यु. **सर्वं वा इदं गुह्यं**–म्यु; गुह्यं वा इदं सर्वं–औंध. **१७. यच्च**–जुना; यस्य–म्यु. **यत्परं**–जुना; तत्परं–म्यु. **परतो**–म्यु; परतरो–जुना. **१८. परात्परतरो**–म्यु; तत्परात्परतो–औंध. **ब्रह्मा**–औंध; ब्रह्म–म्यु. **तत्परात्परतो ह्येष**–म्यु; परात्परतरं ज्ञानं–औंध. **१९. पुष्कलाद्यं**–म्यु; पुष्करार्धं–औंध. **२१. वै**–म्यु; औंधपुस्तके नास्ति. **सर्वव्यापिमहेश्वरात्**–म्यु; सर्वव्यापी महेश्वरः–औंध. **तद्विरुक्तं**

**तथाद्वैश्यं**-जुना; यद्विरुक्तं तथाद्वयैश्यं-म्यु; तदुक्तं च यदा ज्ञेयं-औंध. **२३. पठते ह्यज**-म्यु; पठ्यतेऽनद-औंध. **अकायो निर्गुणोऽध्यात्मा**-जुना; अकायो निगुर्णो ध्यात्वा-म्यु; अकार्यो निर्व्रणो ह्यात्मा-औंध. **२४. शुभे गृहे देवतास्तत्र मोदन्ति**-जुना; शुभे गृहे देवतास्तत्र मोद्यंति-म्यु; गृहालयं देवतास्ततःप्रमोदन्ते-औंध. **२५. हिमवद्गिरि**°; हि भवद्गिरि°-म्यु. **२७. इमं**-म्यु; इदं-औंध. **सदा ध्यायन्ति**-म्यु; सदाधीयन्ति-औंध. **परं मोक्षं गमिष्यन्ति**-जुना; परमोक्षं गमिष्यन्ति-म्यु; परं मोक्षमाप्स्यन्ति-औंध. **२८** = ऋसं ७. ५९. १२.

## १२

यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च । ता नः सन्तु पयस्वतीर्बह्वीर्गोष्ठे घृताच्यः ॥ १ ॥
उपमैतु मयोभुव ऊर्जं चौजश्च बिभ्रतीः ।
दुहाना अक्षितं पयो मयि गोष्ठे निवर्तध्वं यथा भवान्युत्तमः ॥ २ ॥
**विभ्राड्बृहत्पिबतु सोम्यं मधु०** ॥ ऋ. सं. १०. १७०. १

ऋसं १०. १६९ अनन्तरं पठनीयम्। आश्वगृ २. १०. ६ मध्ये एतौ मन्त्रावुध्दृतौ।

**१** = आपश्रौ ७. १७. १; शांगृ ३. ९. ३. **बह्वीः**-का-आश्वगृ-शांगृ; **अस्मिन्**-आपश्रौ. **घृताच्यः**-का-आश्वगृ-शांगृ; वयोवृधः-आपश्रौ। **२. मयोभुव**-जुना-आश्वगृ; मयोभुवं-का. **बिभ्रतीः**-जुना-आश्वगृ; → शांगृ ३. ७: ऊर्जं बिभ्रतः; पिप्रताः-का. **अक्षितं**-जुना-आश्वगृ; अक्षितिं-का. **मयि**-जुना-आश्वगृ; मम-का. **गोष्ठे**-जुना-आश्वगृ; गोत्रे-का. **निवर्तध्वं**-जुना; निविशध्वं-का-आश्वगृ. **भवान्युत्तमः**-जुना; भवाम्युत्तमः-का-आश्वगृ।

## १३

नेजमेष परा पत सुपुत्रः पुनरा पत । अस्यै मे पुत्रकामायै गर्भमा धेहि यः पुमान् ॥ १ ॥
यथेयं पृथिवी मह्युत्ताना गर्भमा दधे । एवं तं गर्भमा धेहि दशमे मासि सूतवे ॥ २ ॥
विष्णोः श्रैष्ठ्येन रूपेणास्यां नार्यां गवीन्याम् । पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥ ३ ॥
**महि त्रीणामवोऽस्तु०** ॥ ऋ. सं. १०. १८५. १

ऋसं १०. १८४ अनन्तरं पठितव्यम्। बृहद्देवतापि[1] ( ८. ८२-८३ )-' यद्विष्णुरिति ( = १०. १८४. १ ) सूक्तं तु वैश्वदेवं प्रचक्षते। तस्मिन्स्वदारगर्भार्थमृषिराशास्त आशिषः । परं तु नेजमेषेति गर्भार्थं वा तदुच्यते ' इति। ऋविव ४. ११९; आर्षानु १०. ९६ अपि द्रष्टव्यम्। मागृ २. १८. ४; आश्वगृ १. १४. ३; शांगृ १. २२; आपमं १. १२. ७, ४, ६; संकौ; प्रर; ऋब्र; आश्वमंसं; धर्सि; मॅ ३०; आउ २३; अल; जुना; मु; औंध एतेष्विदमुपलभ्यते।

**१**[१] = बृहद्दे ८. ८४. **गर्भमा**-का-आपमं-बृहद्दे-ऋमं-मॅ-मु-आउ; पुनरा-मागृ। **२**[१] = अथर्व ५. २५. २[१]. **उत्ताना**-ऋमं-मॅ-मु-आउ; मह्यमुत्ताना-मागृ; भूतानां-अथर्व; तिष्ठन्ती-आपमं. **२**[२]. **तं**-का; त्वं-आपमं. **धेहि**; धत्स्व-आपमं। **३** = अथर्व ५. २५. १०, १३. **श्रैष्ठ्येन**-का; श्रेष्ठेन-इतरेषु. **नार्यां**-का-आपमं-ऋमं-मॅ-मु-आउ; नार्या-अथर्व-मागृ. **पुत्रं**-का-अथर्व-मागृ; पुत्रान्-ऋमं-ऋब्र-प्रर-मॅ-मु-आउ; गर्भं-आपमं → ऋसं १०. १८४. ३ : तं ते गर्भं हवामहे दशमे मासि सूतवे; आश्वगृ १. ७. ३ : पुमांस एव मे पुत्रा जायेरन्।

1. Cf. Bṛhaddevatā part II, pp 316-17.

## १४

अनी॑कवन्तमू॒तये॒ऽग्निं गी॒र्भिर्ह॑वामहे । स नः॑ पर्ष॒दति॒ द्विषः॑ ॥ १ ॥

**प्र नूनं जा॒तवे॑दसं॰** ॥ ऋ. सं. १०. १८८. १

इत्यृग्वेदे खिले चतुर्थोऽध्यायः ॥

ऋसं १०. १८७ अनन्तरं पठनीयम् । ऋसं १०. १८८ अनन्तरं पठितव्यमिति मु-पुस्तके । साकमेधे अस्य विनियोगः । आश्वश्रौ २. १८; आश्वमंसं[२]; मं३१; आउ २४; अल; जुना; मु एतेष्विदमुपलभ्यते ।

'स नः पर्षदति द्विषः' इति ऋसं १०. १८७ सूक्ते प्रतिमन्त्रमन्तिमः पादः ।

## अथ पञ्चमोऽध्यायः

ॐ संज्ञानं पञ्च कश्यपः संज्ञानः शंयुरुत्तमा साशीः शक्वरी सर्वत्र नैर्हस्त्यं तृचं निर्हस्त्यः सपत्नघ्नं[१] सेनादरणमानुष्टुभं बृहतीमध्यं प्र सप्त कश्यपो जमदग्निरुत्तमा शंयुराद्याग्नेयी गायत्री द्वितीयोपोत्तमाशीः पाङ्क्तं[२] तृतीया अक्षरस्तुतिः सानुष्टुप् चतुर्थी सौमी पञ्चमी सौरी विद्रा दश पादाश्च पञ्च विश्वामित्र इन्द्रो वा प्रजापतिरैन्द्रं पावमानमानुष्टुभं[३] पुरीषपदान्याग्नेयवैष्णवैन्द्रपौष्णदैवानि वैराजानि द्वितीयापञ्चम्यावुष्णिहौ[४] चतुर्थी न्यङ्कुसारिणी सप्तमी पुरस्ताद्बृहती नवम्यन्त्ये पङ्क्ती अग्निरेकादश लिङ्गोक्तदेवतं यजूंषि वायुः सप्त प्रउगेणोक्तदैवतं गायत्रं षष्ठी शक्वरी याजुषाणि पञ्च होता द्वादश वसिष्ठो वा[५] प्रैषसूक्तान्याद्यमाप्रियं परं लिङ्गोक्तदेवतमनिरुक्तं स्वयज्ञोक्तदेवतमन्यत्प्रोक्तमजैदेकादश सप्तमीनवम्यौ त्रिष्टुभौ देवं होताष्टादश होता द्वादश इदं तृचं वसिष्ठवामदेवौ कुन्तापौ द्विबृहत्यावनुष्टुब्वच्यस्वरानुष्टुबन्तं[७] राक्षश्चतुष्कमिन्द्रः पङ्क्त्यन्तं[८] यः पञ्च यः षड् यत्पञ्च एता द्व्यूनैतशो मुनिः षष्ठ्यष्टम्यावुष्णिहावन्त्या द्विपदा यजूंषि वा चत्वारि वितती षडानुष्टुभमिहेत्था चतुष्कं द्विपदं भुगेकपादा निचृद्ग्रामेऽनुष्टुबादित्याः पञ्च जगती त्रिष्टुबुपरिष्टाद्बृहती पुरस्ताद्बृहती द्विपदा यजुर्वा त्वं तृचमानुष्टुभं तु यद्दश होतृप्रतिगरित्रोः संवादो नाकपृष्ठस्तु जगत्याद्या जगत्याद्या ॥

१. निर्हस्त्यः सपत्नघ्नं Macdonell, Bṛhaddevatā part II. p. 320 ; निर्हस्त्यसपत्नघ्नं का; → ऋखि ४. २४. ४

२. पाङ्क्तं ibid ; पाङ्क्त्यं–का

३. पावमानं ibid ; पावनं–का

४. अष्टम्यप्युष्णिक्

५. वाशब्दः समुच्चये । विश्वामित्रौ वसिष्ठश्च प्रैषाणामृषी । पुरोरुचां निविदां प्रैषाणां च विश्वामित्र ऋषिरिति शांश्रौ ८. १५. १५ भाष्ये ।

६. आद्ये द्वे बृहत्यावित्यर्थः. Scheftelowitz suggests द्वितीया बृहती (?).

७. 'वच्यस्व त्रिरानुष्टुबन्तम्' इति शुद्धम् । Scheftelowitz suggests वच्यस्वानु°.

८. 'उप वो नर एमसि इति चतुर्दशी सेयं पङ्क्तिः' इति आश्वश्रौ ८. ३. १२ भाष्येऽपि ।

१

संज्ञानमुशना वदत् संज्ञानं वरुणो वदत् । संज्ञानमिन्द्रश्चाग्निश्च संज्ञानं सविता वदत् ॥ १ ॥
संज्ञानं नः स्वेभ्यः संज्ञानमरणेभ्यः । संज्ञानमश्विना युवमिहास्मासु नि यच्छताम् ॥ २ ॥
यत्कक्षीवान् संवननं पुत्रो अङ्गिरसामवेत् । तेन नोऽद्य विश्वे देवाः सं प्रियां समवीवनन् ॥३॥
सं वो मनांसि जानतां समाकूतिं मनामसि । असौ यो विमना जनस्तं समावर्तयामसि ॥४॥
तच्छंयोरा वृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ।
ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे ॥ ५ ॥

दशममण्डलान्ते पठनीयम्[1] । पूर्णमासे विनियोगः ( शांश्रौ ३.६.३ ) । ऋमं-मॅ३२-आउ२५-मु-अल-जुना-औंध-पुस्तकेष्विदमुपलभ्यते । बृहद्दे ८.९३; ऋवि ४.१२६-१२७ अत्रापीदं निर्दिष्टम्। **२** = अथर्व ७.५२.१; तैब्रा २.४.४.६. **संज्ञानं नः**-अथर्व-तैब्रा-ऋमं-आउ; संज्ञानं न-अल-जुना-मु; संज्ञानं वः-मॅ-औंध. **स्वेभ्यः**-का-ऋमं-मॅ-आउ-अल; स्वेभिः-अथर्व; श्वेभ्यः-मु; स्वैः-तैब्रा. **अरणेभ्यः**-का-ऋमं-मॅ-आउ-अल-मु; अरणेभिः-अथर्व; अरणैः-तैब्रा. **यच्छतां**-का-मु-अल; यच्छतं-इतरेषु । **३** = खिल ३.१५.१२. **कक्षीवान्**; कक्षीवां. **संवननं**-का-आउ-ऋमं-मु-अल-जुना; संवननो-मॅ. **अङ्गिरसामवेत्**-का-आउ; अङ्गिरसामवे-मॅ-अल-जुना; अङ्गिरसा भवेत्-ऋमं-मु; अङ्गिरसां भवेत्-औंध. **समवीवनन्**-का; समचीचरन्-ऋमं; समर्जाजनन्-इतरेषु । **४**[1] = अथर्व ३.८.५[1]. **जानतां**; सं व्रता-अथर्व. **समाकूतिं**-का; समाकूतिर्-मॅ-मु-ऋमं-आउ; समाकूतीर्-अथर्व-अल-जुना. **मनामसि**-का-मु-अल-जुना-मॅ; नमामसि-अथर्व-आउ. **जनः**; दनः-ऋमं; नसः-मु; मनः-औंध. **तं**; सं-औंध; स्वं । **५** = तैसं २.६.१०.२; तैब्रा ३.५.११; तैआ १.९.७; शब्रा १.९.१.२६-२८; मैसं ४.१३.१०; शांब्रा १.५; ३.८; मागृ १.५.६; २.१५.६; आश्वगृ ३.५.९; शांगृ ४.५.९; १.१४.२१; माश्रौ १.३.४. → वैसू १३.३; निरु ४.२१ ( सभाष्यं ); पञ्चामृ; शांम; संकौ; ऋब्र; संभा. इयं शंयुबार्हस्पत्या ऋग्वेदसंहिताया अन्त्या ऋगिति शांगृ २.११.१३; ४.५. बाष्कलानां 'तच्छंयोरा वृणीमहे' इत्यन्त्या ऋग्भवतीति आश्वगृ ३.५.९ नारायणीयवृत्तिः । अस्मिन्मन्त्रे प्रथमं चतुर्भिः पादैरवसानं अनन्तरं द्वाभ्यां पादाभ्यामवसानमिति ऋप्रा १८.५६.

ऋमं-मु-औंध-पुस्तकेष्वयं मन्त्रो नास्ति ।

---

1. According to the commentary on the Caraṇavyūha *Saṁjñānam* is the last hymn of the Bāṣkalaśākhā and consists of 15 verses. But as it has only 5 verses, the commentator also counted the next two hymns and made up 15. In the British Museum MS. No. Add 5351, India Office MS. No. ?131, the Bombay edition of Ṛgvedabhāṣya and also in the Aundh edition these three hymns are given together. That these were originally not one is clear from their different contents. The fact that these three hymns were handed down together at the end of the Ṛgveda Saṁhitā and that the verse *Tacchaṁyorā* with which the Bāṣkalaśākhā ends also appears secondarily at the end of the third hymn lead the commentator to look upon the *Tacchaṁyorā* coming for the second time as the proper end of the whole. Not only the Khilānukramaṇī but the Bṛhaddevatā ( VIII. 93-7 ) also says that these three are independent hymns. Ṛgvidhāna IV. 126-7 also points to the same. Thus the conception that the *Saṁjñāna* hymn consisted of 15 verses is quite late. In the Nirṇayasagar edition of Ṛgveda the first *Tacchaṁyorā* which originally formed the end of the *Saṁjñāna* hymn is omitted. In order to make up the number 15 a quite late verse is added. The fact that Śāṅkh. Śr. III. 6. 3 quotes mere beginning of the hymn shows that it is old, and belongs to the Vedic period. [ See Scheftelowitz, Zeitschrift für Indologie und Iranistik, Vol. I, pp. 50-7, 1922 ].

२

नैर्हस्त्यं सेनादरणं परि वर्त्मेव यद्धविः । तेनामित्राणां बाहून् हविषा शोषयामसि ॥ १ ॥
परि वर्त्मान्येषामिन्द्रः पूषा च चक्रतुः। तेषां वो अग्निदग्धानामग्निगूळ्हानामिन्द्रो हन्तु वरंवरम्॥२॥
ऐषु नह्य विषादनं हरिणस्य धियं यथा । पराङमित्रॉं ऐषत्वर्वाची गौरुपेजतु ॥ ३ ॥

ऋमं-अल-जुना-मु-औंधपुस्तकेषूपलभ्यते। → बृहद्दे' ८. ९४ : यत्तु नैर्हस्त्यं तत्सपत्ननिबर्हणं; ऋग्वि ४. १२४ : सेनादारणमेतत्स्यान्नैर्हस्त्यमिति शौनकः।

१. **नैर्हस्त्यं**; नैर्हस्त्ये-अल. **वर्त्मेव**-का; वर्त्मे तु-इतरेषु. **बाहून्**-का-जुना; व्याहून्-अल; **बाहूः.** १[१] ≐ अथर्व ६. ६६. २[२]. **तेनामित्राणां**-का; तेनाविप्राणां-जुना. **२** ≡ अथर्व ६.६७.१[१],२[२]. **एषां**; सर्वतः-अथर्व. **च चक्रतुः**-का; च सस्रतुः-मु-अथर्व; च सस्रुतः-अल-जुना; नु यच्छतु-ऋमं. **२**[२]=खिल ३. २१. २[२]. **अग्निदग्धानामग्निगूळ्हानां**-का; अग्निमूळ्हानां-ऋमं-मु-अल-अथर्व; अग्निदग्धानामग्निमूळ्हानां-जुना. **३** ≡ अथर्व ६. ६७. ३. **ऐषु**-का; एषु. **नह्य**-का; नह्या. **विषादनं**-का; ग्रषाजिनं-इतरेषु. **धियं यथा**-का-मु-अल; भियं यथा-जुना; हि प्रियं यथा-ऋमं; भियं कृधि-अथर्व. **पराङ्**-का; परां-जुना-मु; पराँ-औंध; परा. **अमित्राँ**-का-ऋमं; अमित्रां-मु-जुना; अमित्रा-अल; अमित्र-अथर्व. **एषत्व**°; एषत्र°-अथर्व. **गौरुपेजतु**-का-जुना-ऋमं; गौरुपाजतु-मु; गौरुपेषतु-अथर्व; गौदुपेजतु-अल।

३

प्राध्वराणां पते वसो होतर्वरेण्यक्रतो । तुभ्यं गायत्रमृच्यते ॥ १ ॥
गोकामो अन्नकामः प्रजाकामोत कश्यपः ।
भूतं भविष्यत्प्र स्तौति महद्ब्रह्मैकमक्षरं बहु ब्रह्मैकमक्षरम् ॥ २ ॥
यदक्षरं भूतकृतो विश्वे देवा उपासते । महर्षिमस्य गोप्तारं जमदग्निमकुर्वत ॥ ३ ॥
जमदग्निरा प्यायते छन्दोभिश्चतुरुत्तरैः ।
राज्ञः सोमस्य भक्षेण ब्रह्मणा वीर्यावता शिवा नः प्रदिशो दिशः ॥ ४ ॥
अजो यत्तेजो ददृशे शुक्रं ज्योतिः परोगुहा ।
तदृषिः कश्यपः स्तौति सत्यं ब्रह्म चराचरं ध्रुवं ब्रह्म चराचरम् ॥ ५ ॥
त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ।
अगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥ ६ ॥
तच्छंयोरा वृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ।
ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे ॥ ७ ॥

ऋमं-मु-अल-औंध। → बृहद्दे ८. ९४ : सं समिद् ( = ऋसं १०. १९१. १ ) प्राध्वराणां चेत्याग्नेय्यावेव ते स्मृते।[1]

१. **गायत्रमृच्यते** ≡ ऋसं ८. ३८. १०. **ऋच्यते**; ऋग्यतो-अल। २. **प्रजाकामोत** ( प्रजाकामः + उत )-का; प्रजाकाम उत-ऋमं-मु-औंध-जुना; पूजाकाम उत-अल. **भूतं भविष्यत्**

1. Cf. Bṛhaddevatā, Part II, p. 320.

= अथर्व ४. ११. २; ११. ७. १७; १५. २. ६. **महद्**–का–ऋमं; मह°–अल–जुना; सह–मु–औध। ३. = तैआ १. ९. ६. **भूतकृतो**–का–ऋमं–अल–जुना; भूतकृतं–तैआ–मु–औध. **जमदग्निमकुर्वत**–का–तैआ–ऋमं–अल; जमदग्निरकुर्वतं–मु–औध। ४. = तैआ १. ९. ६; ∸ अथर्व ८. ९. १९ : सप्त च्छन्दांसि चतुरुत्तराणि. **प्यायते**–का; प्यायसे. **चतुरुत्तरैः**; चतुरक्षरैः–ऋमं. **राज्ञः**–तैआ–अल–जुना; राज्ञा–का–ऋमं; राजा–मु–औध. **भक्षेण**–का–अल–जुना–मु–औध; दक्षेण–ऋमं; तृप्तामः–तैआ. **वीर्यावता**–तैआ–ऋमं–औध–जुना; वीर्याता–अल. वीर्यावतां–मु; वीर्यवतां–का. ऋमं–मु–अल–जुना–औधपुस्तकेषु ' सत्या नः प्रदिशो दिशः ' इत्यधिकम्। ५. **ददृशे**–का–ऋमं–अल–जुना; ददृश्रे–मु–औध. **परोगुहा**–मु–अल–जुना–औध; पुरोगुहा–ऋमं. **तदृषिः**–का–ऋमं–अल–जुना; यदृषिः–मु–औध. **कश्यपः**–मु–औध; कश्यप–का–अल–जुना–ऋमं. ६. = वासं ३. ६२; शांगृ १. २८; हिगृ १. ९. ६; खागृ २. ३. ३१; मागृ १. १. २४; पागृ १. १६. ७; २. १. १५; मंब्रा १. ६. ८; ऋब्र; आपमं; मंदी; आसू. ६[१] = अथर्व ५. २८. ७. **देवानां**; देवेषु–वासं. **तन्नो**–का–वासं; तन्मे–ऋमं–मु–आपमं–अल–औध. षष्ठमन्त्रस्यान्ते मु–औधपुस्तकयोः ' सर्वमस्तु शतायुषं बलायुषम् ' इत्यधिकं ऋमं–पुस्तके च ' शतायुषं बलायुषम् ' इत्यधिकम्। ऋमं–पुस्तके षष्ठमन्त्रानन्तरमेको मन्त्रोऽधिकः स एवं–

**ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च।**
**यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः॥**

७. **दैवी**; दैवीः–मु। अस्य मन्त्रस्यानन्तरं मु–पुस्तके ' इति परिशिष्टानि समाप्तानि ' इति लिखितं निविदध्यायश्चानन्तरं मुद्रितः।

## ४

विदा मघवन् विदा गातुमनु शंसिषो दिशः। शिक्षा शचीनां पते पूर्वीणां पुरूवसो॥ १॥
आभिष्ट्वमभिष्टिभिः प्रचेतन प्र चेतय। इन्द्र द्युम्नाय न इषे एवा हि शक्रः॥ २॥
राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे। मंहिष्ठ वज्रिन्नृञ्जस आ याहि पिब मत्स्व॥ ३॥
विदा राये सुवीर्यं भुवो वाजानां पतिर्वशाँ अनु। मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम्॥४॥
यो मंहिष्ठो मघोनां चिकित्वो अभि नो नय। इन्द्रो विदे तमु स्तुषे वशी हि शक्रः॥ ५॥
तमूतये हवामहे जेतारमपराजितम्। स नः पर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत्॥ ६॥
इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम्। स नः पर्षदति द्विषः स नः पर्षदति स्रिधः॥७॥
पूर्वस्य यत्ते अद्रिवः सुम्नं आ धेहि नो वसो। पूर्तिः शविष्ठ शश्वत ईशे हि शक्रः॥ ८॥
नूनं तं नव्यं मन्यसे प्रभो जनस्य वृत्रहन्।
समन्येषु ब्रवावहै शूरो यो गोषु गच्छति सखा सुशेवो अद्वयाः॥ ९॥
एवा ह्येवैवा ह्यग्ना३इ एवा ह्येवैवा हि विष्णा३उ।
एवा ह्येवैवा हीन्द्र। एवा ह्येवैवा हि पूषन्। एवा ह्येवैवा हि देवाः॥ १०॥
एवा हि शक्रो वशी हि शक्रो वशाँ अनु।
आयो मन्याय मन्यव उपो मन्याय मन्यव उपेहि विश्वथ॥ ११॥

---

1. For the composition of Khila V. 1-2 in later Vedic period and for the German translation of Khila V. 1-3, see Scheftelowitz, Zeitschr. Ind. Irani. I.pp. 50-7.

अस्य सूक्तस्यादितो नव मन्त्राः 'महानाम्न्यः[1]' इत्युच्यन्ते ( आश्वश्रौ ७. १२. १०; ऐआ ४. १. १ भाष्यं; शांश्रौ १०. ६. १८ भाष्यं; षब्रा ३. ११; तांब्रा २३. २ द्रष्टव्यम् )। अन्त्यौ द्वौ च 'पुरीषपदानि' इत्युच्येते ( आश्वश्रौ ७. १२. ११; ८. १४. १६; तांब्रा १३. ४.१२, १३; लाट्याश्रौ ४. १०. १८ भाष्यं इत्यादि द्रष्टव्यम् ) । ऐआ ४. १. १ मध्ये सामवेदे पूर्वार्चिकान्ते चैतदुपलभ्यते। एतत्सूक्तं 'तच्छंयोरा' इति पूर्वसूक्तस्यान्त्यं मन्त्रमनुवर्तत इति बृद्दे ८. ९८-१०२; ऋग्वि ४. १२७-१२८ एताभ्यां स्पष्टम्। अल-जुना-पुस्तकयोरेतदुपलभ्यते।

**१. शंसिषो**-का; शासिषो; शसिषो। २. **°भिष्टिभिः**; °भिष्टिभिः स्वार्न्नांशुः-साम. **प्रचेतन**-का; प्रचेतनः-जुना। ४. **राये**-का-साम-अल-जुना; रायः-ऐआ. **भुवो**; भवो-साम। ५. **मघोनां**; मघोनां अंशुर्न शोचिः-साम. **चिकित्वाँ**-अल-जुना; चिकित्वो. **तमु**-का; तमुष. **स्तुष** **वशी**-का-ऐआ-अल-जुना; स्तुहि ईशे-साम। ६. **जेतारमपराजितं** = ऋसं १.११.२. **स नः पर्षदति** = ऋसं १०.१८७.१. **पर्षद्**; स्वर्षद्-साम. **क्रतुश्छन्द**; क्रतुच्छन्द-अल। ७. **इन्द्रं धनस्य सातये** = ऋसं ८. ३. ५. **पर्षदति**; स्वर्षदति-साम. **स्रिधः**; द्विषः-साम। ८. **अद्रिवः**; अद्रिवोऽशुर्मदाय-साम. **शश्वत**-का-अल; शश्वते-साम-ऐआ. **ईशे**-का-ऐआ-अल; वशी-साम. **पूर्तिः**; पूर्द्धि-अल। ९. **मन्यस**-का; संन्यसे-साम-ऐआ; सन्यसे-अल-जुना; सन्यस्ये. **समन्येषु ब्रवावहै** = ऋसं १. ३०. ६; समर्येषु ब्रवावहै-साम; समन्येषु ब्रवावहे-अल; समन्येषु ब्रवामहै. **सखा सुशेवो अद्वयाः** = ऋसं १. १८७. ३. **अद्वयाः**-ऐआ-अल-जुना; अद्वयुः-साम. **१०.** द्वितीयः पादः साम-अल-पुस्तकयोर्नास्ति किंतु बृद्दे ८. १०२ तत्र प्रमाणम्। जुनागडपुस्तके दशमो मन्त्र एवं वर्तते-' एवा ह्येऽव। एवा ह्यग्ने। एवा हीन्द्र। एवा हि पूषन्। एवा हि देवाः।' **११.** सामवेदे नास्ति. अस्य केचनांशाः पूर्वमन्त्रेभ्य उद्धृताः. **एवा हि शक्रो** = २[२]; **वशी हि शक्रो** = ५[२]; **वशाँ अनु** = ४[१]. **१०[२], ११[१]** → आश्वश्रौ ६. २. १२ : एवा ह्येवैवा हीन्द्रं; एवा हि शक्रो वशी हि शक्र. **विश्वथ**-का-अल; विश्वध-ऐआ।

## ५

## निविदध्यायः

अग्निर्देवेद्धः । अग्निर्मन्विद्धः । अग्निः सुषमित् । होता देववृतः । होता मनुवृतः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्तो होता । तूर्णिर्हव्यवाट् । आ देवो देवान् वक्षत् । यक्षदग्निर्देवो देवान् । सो अध्वरा करति जातवेदाः ।। १ ।।

इन्द्रो मरुत्वान् सोमस्य पिबतु । मरुत्स्तोत्रो मरुद्गणः । मरुत्सखा मरुद्वृधः । घ्नन् वृत्रा सुतदपः । मरुतामोजसा सह । य ईमेनं देवा अन्वमदन् । असूर्ये वृत्रतूर्ये । शम्बर-

1. The *Mahānāmnyaḥ* ( 9 verses ) belong to the Vedic period, as is clear from the fact that they were known to the other Vedas and are mentioned along with old Ṛgveda hymns; Cf. VS. XXIII. 35; TS. V. 2. 11. 1; MS. III. 12. 21; KS. V. 10. 5; AV. XI. 7. 6. From AV. XI 7. 6 it appears that at the time of the composition of the other Vedas the *Mahānāmnyaḥ* were as popular as the *Pāvamānī* and *Revatī* verses of Ṛgveda. All words in them belong to RV. vocabulary. In Upākaraṇa ceremonial in Baudhayana we find *Mahānāmnyaḥ* after the 10th Maṇḍala of Ṛgveda so mentioned as if they formed a regular part of the Saṁhitā coordinated with the Maṇḍalas. ( Cf. Oldenberg, Hymnen des Ṛgveda, Band I. pp. 509-10 ). The statement in the Khilānukramaṇī that Indra or Prajāpati composed this hymn is also referred to in AB. V. 7. 2-4. [ See, Scheftelowitz, Zeit. Indo. Iran. I. 58-68 ].

हृत्ये गविष्ठौ । अर्चन्तं गुह्या पदा । परमस्यां परावति । आदीं ब्रह्माणि वर्धयन् । अनाधृष्टान्योजसा । कृण्वन् देवेभ्यो दुवः । मरुद्भिः सखिभिः सह । इन्द्रो मरुत्वाँ इह श्रवदिह सोमस्य पिबतु । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमत् ।। २ ।।

इन्द्रो देवः सोमं पिबतु । एकजानां वीरतमः । भूरिजानां तवस्तमः । हर्योः स्थाता । पृश्नेः प्रेता । वज्रस्य भर्ता । पुरां भेता । पुरां दर्मा । अपां स्रष्टा । अपां नेता । सत्वनां नेता । निजघ्निर्दूरेश्रवाः । उपमाजिकृद्दंसनावान् । इहोशन् देवो बभूवान् । इन्द्रो देव इह श्रवदिह सोमं पिबतु । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमत् ।। ३ ।।

सविता देवः सोमस्य पिबतु हिरण्यपाणिः सुजिह्वः । सुबाहुः स्वङ्गुरिः । त्रिरहन् सत्यसवनः । यत्प्रासुवद्वसुधिती उभे जोष्ट्री सवीमनि । श्रेष्ठं सावित्रमासुवन् । दोग्ध्रीं धेनुम् । वोळ्हारमनड्वाहम् । आशुं सप्तिम् । जिष्णुं रथेष्ठाम् । पुरंधिं योषाम् । सभेयं युवानम् । परामीवां साविषत् पराघशंसम् । सविता देव इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमत् ।। ४ ।।

द्यावापृथिवी सोमस्य मत्सताम् । पिता च माता च । पुत्रश्च प्रजननं च । धेनुश्च ऋषभश्च । धन्या च धिषणा च । सुरेताश्च सुदुघा च । शंभूश्च मयोभूश्च । ऊर्जस्वती च पयस्वती च । रेतोधाश्च रेतोभृच्च । द्यावापृथिवी इह श्रुतामिह सोमस्य मत्सताम् । प्रेमां देवी देवहूतिमवतां देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवताम् । चित्रे चित्राभिरूतिभिः । श्रुतां ब्रह्माण्यावसा गमताम् ।। ५ ।।

ऋभवो देवाः सोमस्य मत्सन् । विष्ट्वी स्वपसः । कर्मणा सुहस्ताः । धन्या धनिष्ठाः । शम्या शमिष्ठाः । शच्या शचिष्ठाः । ये धेनुं विश्वजुवं विश्वरूपामरक्षन् । अरक्षन् धेनुरभवद्विश्वरूपी । अयुञ्जत हरी । अयुर्देवाँ उप । अबुध्रन् सं कनीनामदन्तः । संवत्सरे स्वपसो यज्ञियं भागमायन् । ऋभवो देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमन् ।। ६ ।।

विश्वे देवाः सोमस्य मत्सन् । विश्वे वैश्वानराः । विश्वे विश्वमहसः । महि महान्तः । तकाना नेमधितीवानः । आस्क्राः पचतवाहसः । वात आत्मानो अग्निजूताः । ये द्यां च पृथिवीं चातस्थुः । अपश्च स्वश्च । ब्रह्म च क्षत्रं च । बर्हिश्च वेदिं च । यज्ञं चोरु चान्तरिक्षम् । ये स्थ त्रय एकादशाः । त्रयश्च त्रिंशच्च । त्रयश्च त्री च शता । त्रयश्च त्री च

सहस्रा । तावन्तोऽभिषाचः । तावन्तो रातिषाचः । तावतीः पत्नीः । तावतीर्ग्नाः । तावन्त उदरणे । तावन्तो निवेशने । अतो वा देवा भूयांसः स्थ । मा वो देवा अतिशसा मा परिशसा विक्षि । विश्वे देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमन् ॥ ७ ॥

अग्निर्वैश्वानरः सोमस्य मत्सत् । विश्वेषां देवानां समित् । अजस्रं दैव्यं ज्योतिः । यो विड्भ्यो मानुषीभ्योऽदीदेत् । द्युषु पूर्वासु दिद्युतानः । अजर उपसामनीके । आ यो द्यां भात्या पृथिवीम् । उर्वन्तरिक्षम् । ज्योतिषा यज्ञाय शर्म यंसत् । अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमत् ॥ ८ ॥

मरुतो देवाः सोमस्य मत्सन् । सुष्टुभः स्वर्काः । अर्कस्तुभो बृहद्वयसः । शूरा अनाधृष्टरथाः । त्वेषासः पृश्निमातरः । शुभ्रा हिरण्यखादयः । तवसो भन्ददिष्टयः । नभस्या वर्षनिर्णिजः । मरुतो देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमन् ॥ ९ ॥

अग्निर्जातवेदाः सोमस्य मत्सत् । स्वनीकश्चित्रभानुः । अप्रोषिवान् गृहपतिस्तिर-स्तमांसि दर्शतः । घृताहवन ईड्यः । बहुलवर्त्मास्तृतयज्वा । प्रतीत्या शत्रून् जेतापराजितः । अग्ने जातवेदोऽभि द्युम्नमभि सह आयच्छस्व । तुशो अतुशः । समिद्धारं स्तोतारमंहसस्पाहि । अग्निर्जातवेदा इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमत् ॥ १० ॥

अस्य मदे जरितरिन्द्रः सोमस्य मत्सत् । अस्य मदे जरितरिन्द्रोऽहिमहन् । अस्य मदे जरितरिन्द्रो वृत्रमहन् । अस्य मदे जरितरिन्द्रोऽपां वेगमैरयत् । अस्य मदे जरित-रिन्द्रोऽजिन्वदजुवोऽपिन्वदजितः । अस्य मदे जरितरिन्द्र उदार्यं वर्णमतिरदव दासीद्विशो अस्तभ्नात् । अस्य मदे जरितरिन्द्र उद्द्यामस्तभ्नादप्रथयत् पृथिवीम् । अस्य मदे जरितरिन्द्रो दिवि सूर्यमैरयदृव्यन्तरिक्षमतिरत् । अस्य मदे जरितरिन्द्रः समुद्रान् प्रकुपिताँ अरम्णात् । अस्य मदे जरितरिन्द्र ऋश्याँ इव पम्फणतः पर्वतान् प्रकुपिताँ अरम्णात् । अस्य मदे जरित-रिन्द्र इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमत् ॥ ११ ॥

एता ११ निविदः मु; शांश्रौ ७. ९. ३; ८. १६-२५ अत्रोपलभ्यन्ते । तथा च १ = ऐब्रा २. ३४; शब्रा १. ४. २. ५; तैसं २. ५. ९; आश्वश्रौ १. ३; ५. ९. अलपुस्तके 'अग्निर्देवेद्धः'

एतावदेव। 'द्वादशपदा वा एषा निविद्' इति ऐब्रा २. ३३. ६. ४. → ऐब्रा ३. २९ सायण-भाष्यम्. ७. → शब्रा १४. ६. ९. २; बृउ ३. ९. १ (वैश्वदेवस्य निविद्); निरु ७. २४ दुर्ग-भाष्यम्। ९. → ऋसं १. ८६. ४ सायणभाष्यम्. १०. → शब्रा १३. ५. १. १२. ११. ≡ ऐब्रा ४. १; शांब्रा १७. ३; षोडशीशस्त्र इयमुत्तमा निविद् (आश्वश्रौ. ६. २; शांश्रौ ८. ७. ४)।

**१. प्रणीर्यज्ञानां** → ऋसं १०. ४६. ४ : नेतारमध्वराणाम्. **रथीरध्वराणां** ≡ ऋसं १. ४४. २; ८. ११. २. २. शांश्रौमध्ये केषांचन पादानां व्यत्यासः। **मरुत्स्तोत्रो मरुद्गणः** ≡ ऋसं ४. १८. ७ सायणभाष्यं. **य ईमेनं देवा ... गविष्टौ** → ऋसं ३. ४७. ४. **गविष्टौ**; गविष्टौ–मु–शांश्रौ. 'परमस्यां परावति' इत्यस्यानन्तरं शांश्रौमध्ये 'वधीद्वृत्रं सृजदपः। मरुतामोजसा सह' इत्यधिकम्. 'घ्नन्वृत्रा सृजदपः। मरुतामोजसा सह' इति शांश्रौमध्ये नास्ति. 'प्रेदं ब्रह्म प्रेदं क्षत्रम्' इति ऐब्रा ३. ११. ९ मध्ये निवित्पादत्वेनोद्धृतम्। अस्या निविदो विषये ऋसं ८. ३७. १, ६ द्रष्टव्यम्। **३. सृष्टा**; स्रष्टा–मु. **भूरिजानां**; भूरिदानं–मु. **हर्योः स्थाता ... ... पुरां दर्मा अपां सृष्टा**→ ऋसं ३. ४५. २. **पुरां भेत्ता** ≡ साम. १. २७५. **अपां नेता** ≡ ऋसं २. १२. ७. **उपमा-जिकृत्**–का; उपमातिकृत्–इतरेषु. **सोमं पिबतु**; सोमस्य पिबतु–मु। **४. पिबतु**; मत्सत्–शांश्रौ. **सविता ... सुजिह्वः** → ऋसं ३. ५४. ११. **यत्प्रासु**°; यः प्रासु°–शांश्रौ–मु. **वसुधितीं**–शांश्रौ → खिल ५. ७. ३[४]; वसुधीती–का–मु. **आसुवन्**; आसुवं–शांश्रौ–मु. **जिष्णुं रथेष्ठां पुरंधिं योषां**–का–शांश्रौ; पुरंधिं योषां जिष्णुं रथेष्ठां–मु. **गमतां**; गमन्तां–मु। **६. शच्या शचिष्ठाः** ≡ ऋसं ४. २०. ९. **अरक्षन्। अरक्षन् धनुः**–का–मु → ऋसं ४. ३३. ४; अतक्षन्। अतक्षन् धेनुः–शांश्रौ. **धनुरभव**°; धेनुमभव°–शांश्रौ–मु. **अबुध्नन्**; अबुध्नन्–मु. **श्रवन्**; श्रवत्–मु। **७. विश्वे विश्वमहसः**–का; विश्वे हि विश्वमहसः–मु. **तक्वाना**–का–मु; पक्वाना–शांश्रौ. **नेमधितीवानः**–का; नेमनिथीवानः–इतरेषु. **आस्क्राः**–का; अस्क्राः–मु. **वात आत्मानो**–का; वातात्मानो–इतरेषु. **अग्निजूताः**–का; अग्निदूताः–शांश्रौ–मु; अग्निहूताः. **अतिशसा मा परिशसा विक्षि**–का; अपिशसा मा परिशसा वृक्षि–मु; अविशसा मा विशसायुरा वृक्षि–शांश्रौ। **८. उपसामनीके ... भात्या** ≐ ऋसं ५. ७६. १ : आ भात्यग्निरुषसामनीकं. **दीदेत्**–का; अदीदेत्–मु. **भात्या**–का; भात्यां–मु. **उर्वन्तरिक्षं**–का; ओर्वन्तरिक्षं–शांश्रौ–मु. **यज्ञाय**–का; यज्ञियाय–शांश्रौ। **९. श्रवन्**–का; श्रवत्–मु। **१०. बहुलवर्त्मा**–का; बहुलवर्मा–इतरेषु. **प्रतीत्या शत्रून्** ≡ ऋसं १०. ११६. ५. **तुशो अप्तुशः**–मु; स्तुशो अस्तुशः–शांश्रौ. **समिद्धारं**–का; समेद्धारं–इतरेषु। **११. अस्य मदे ...** → ऋसं ७. ८२. ३. °**पिन्वदजितः**–का; °पिन्वदपितः–मु. **दासीद्विशो**–का; दासीद्विशो–मु; दासं वर्णं–शांश्रौ. **अस्तभ्नात्**; अहन्–शांश्रौ. **उद्द्यामस्तभ्नात्** ≡ ऋसं २. १२. २. **दिवि सूर्यमैरयद्व्यन्तरिक्षमतिरत्**; व्यन्तरिक्षमतिरदा सूर्यं दिव्यैरयत्–शांश्रौ. **व्यन्तरिक्षमतिरत्** ≡ ऋसं ८. १४. ७. **समुद्रान् प्रकुपितॉं अरम्णात्**–का; समुद्रं प्रकुपितं अरम्णात्–मु. **पर्वतान् प्रकुपितॉं अरम्णात्** ≡ ऋसं २. १२. २. **ऋश्यॉं**–का; ऋष्यॉं–शांश्रौ–मु.

मु–पुस्तक निविदां परिगणनं कृतं तद्यथा–

**अग्निर्द्वादश। इन्द्रो मरुत्वानिन्द्रो देवः सविता देवः पृथग्विंशतिः। द्यावापृथिवी पञ्चदश। ऋभवो देवाः सप्तदश। विश्वे देवास्त्रिंशत्। अग्निर्वैश्वानरः पञ्चदश। मरुतो देवाश्चतुर्दश। अग्नि-र्जातवेदा अस्य मदे पृथक् षोळश। इति निविदध्यायः॥**

## ६

वायुरग्रेगा यज्ञप्रीः साकं गन् मनसा यज्ञम्। शिवो नियुद्भिः शिवाभिः १॥

हिरण्यवर्तनी नरा देवा पती अभिष्टये। वायुश्चेन्द्रश्च सुमखा॥ २॥

काव्या राजाना क्रत्वा दक्षस्य दुरोणे । रिशादसा सधस्थ आ ॥ ३ ॥
दैव्या अध्वर्यू आ गतं रथेन सूर्यत्वचा । मध्वा यज्ञं समञ्जाथे ॥ ४ ॥
इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः । हरिवान् सुतानां सखा ॥ ५ ॥
विश्वान् देवान् हवामहेऽस्मिन् यज्ञे सुपेशसः । त इमं यज्ञमा गमन् देवासो दैव्या धिया ॥
जुषाणा अध्वरे सदो ये यज्ञस्य तनूकृतः । विश्व आ सोमपीतये ॥ ६ ॥
वाचा मही देवी वाचमस्मिन् यज्ञे सुपेशसम् । सरस्वतीं हवामहे ॥ ७ ॥

एताः 'पुरोरुचः' शांश्रौ ७. १०. ९–१६; मु–पुस्तके चोपलभ्यन्ते । काश्चन अन्यत्राप्युपलभ्यन्ते । १ = वासं २७. ३१; शांब्रा १४. ४; आश्वश्रौ २. १२; ५. १०. ३, ४ = वासं ३३. ७२–७३. ६. शांब्रा १४. ५; आश्वश्रौ ५. १० अत्र निर्दिष्टा. खिलानुक्रमण्यनुसारेणेयं शक्वरी सा च का–मु–पुस्तकानुसारिणी । शांब्रा–शांश्रौ–पुस्तकयोस्तु सा महापङ्क्तिः 'जुषाणा अध्वरे सदो' इत्यंशस्य तत्राभावात् ।

**२. सुमखा**–का; सुमखौ–शांश्रौ; सुमुखः–मु । **३. काव्या राजाना**–का–मु; काव्ययोराजानेषु–वासं–शांश्रौ । **४. दैव्या अध्वर्यू**–का; दैव्यावध्वर्यू–वासं–शांश्रौ । **६. सुपेशसः**; सजोषसः–शांश्रौ । ७. ≐ अथर्व ५. ७. ४ : सरस्वतीं ... हवामहे । वाचं जुष्टां मधुमतीमवादिषं देवानां देवहूतिषु. **वाचा मही**–का; वाचामहं–शांश्रौ; वाचमहं–मु. **वाचमस्मिन्**; वाचास्मिन्–मु. **सुपेशसं**; सुपेशसा –मु । मु–पुस्तके षष्ठो मन्त्रः षष्ठसप्तमत्वेन पठितः सप्तमश्चाष्टमत्वेन पठितः ।

## ७ [ १ ]

## प्रैषाध्यायः

(अ) होता यक्षदग्निं समिधा सुषमिधा समिद्धं नाभा पृथिव्याः संगथे वामस्य ।
वर्ष्मन् दिव इळस्पदे वेत्वाज्यस्य होतर्यज ॥

(आ) होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपाम् ।
मध्वाद्य देवो देवेभ्यो देवयानान् पथो अनक्तु वेत्वाज्यस्य होतर्यज ॥

(इ) होता यक्षन्नराशंसं नृशस्तं नॄः प्रणेत्रम् ।
गोभिर्वपावान् स्याद्वीरैः शक्तीवान् रथैः प्रथमयावा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज ॥

(उ) होता यक्षदग्निमीळ ईळितो देवो देवाँ आ वक्षद्दूतो हव्यवाळमूरः ।
उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज ॥

(ए) होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा अस्मिन्यज्ञे वि च प्र च प्रथतां स्वासस्थं देवेभ्यः ।
एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज ॥

(ऐ) होता यक्षद्दुर ऋष्वाः कवष्यो कोषधावनीरुदाताभिर्जिहतां वि पक्षोभिः श्रयन्ताम् ।
सुप्रायणा अस्मिन् यज्ञे वि श्रयन्तामृतावृधो व्यन्त्वाज्यस्य होतर्यज ॥

(ओ) होता यक्षदुषासानक्ता बृहती सुपेशसा नॄः पतिभ्यो योनिं कृण्वाने ।
संस्मयमाने इन्द्रेण देवैरेदं बर्हिः सीदतां वीतामाज्यस्य होतर्यज ॥

(औ) होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा ।
स्विष्टमद्यान्यः करदिषा स्वभिगूर्तमन्य ऊर्जा स्वतवसेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज ॥

(अं) होता यक्षत्तिस्रो देवीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वताम् ।
देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य होतर्यज ॥

(अः) होता यक्षत्त्वष्टारमचिष्टमपाकं रेतोधां विश्रवसं यशोधाम् ।
पुरुरूपमकामकर्शनं सुपोषः पोषैः स्यात्सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज ॥

(क) होता यक्षद्वनस्पतिमुपाव स्रक्षद्धियो जोष्टारं शशमन्नरः ।
स्वदात्स्वधितिर्ऋतुथाद्य देवो देवेभ्यो हव्यवाड् वेत्वाज्यस्य होतर्यज ॥

(ख) होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वाहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीनाम् ।
स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु होतर्यज ॥

७ [ २ ]

(अ) अजैदग्निरसनद्वाजं नि देवो देवेभ्यो हव्यवाट् । प्राञ्जोभिर्हिन्वानो धेनाभिः कल्पमानो यज्ञस्यायुः । प्रतिरन्नुपप्रेष होतर्हव्या देवेभ्यः ॥

(आ) होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज ॥

(इ) होता यक्षत्सोममाज्यस्य जुषतां हविर्होतर्यज ॥

(उ) होता यक्षदग्नीषोमौ च्छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज ॥

(ए) होता यक्षदग्नीषोमौ पुरोळाशस्य जुषेतां हविर्होतर्यज ॥

(ऐ) होता यक्षदग्नीषोमौ च्छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाग्नीषोमौ जुषेतां हविर्होतर्यज ॥

(ओ) देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् ।
प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठैः ॥

(औ) होता यक्षद्वनस्पतिमभि हिं पिष्टतमया रभिष्ठया रशनयाधित । यत्राग्नेराज्यस्य हविषः प्रिया धामानि यत्र सोमस्याज्यस्य हविषः प्रिया धामानि यत्राग्नीषोमयोश्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिव कृत्वी करदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥

( अं ) वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।
वहा देवत्रा दधिषो हवींषि प्र च दातारममृतेषु वोचः ॥

( अः ) होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रिया धामान्ययाट् सोमस्याज्यस्य हविषः प्रिया धामान्ययाळग्नीषोमयोश्छागस्य हविषः प्रिया धामान्ययाड् वनस्पतेः प्रिया पाथांस्ययाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥

( क ) अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोळाशं गृह्णन्नग्नय आज्यं गृह्णन् सोमायाज्यं बध्नन्नग्नीषोमाभ्यां च्छागं सूपस्थाद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नीषोमाभ्यां च्छागेनाघत्तां तं मेदस्तः प्रति पचताग्रभीष्टामवीवृधेतां पुरोळाशेन त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आ संगतेभ्यः । एष मे देवेषु वसु वार्यायक्षन इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्स्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥

७ [ ३ ]

( अ ) देवं बर्हिः सुदेवं देवैः स्यात्सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्रभ्रियेतात्यन्यान् राया बर्हिष्मतो मदेम वसुवने वसुधेयस्य वेतु यज ॥

( आ ) देवीर्द्वारः संघाते विड्वीर्यामञ्छिथिरा ध्रुवा देवहूतौ वत्स ईमेनास्तरुणा आमिमीयात्कुमारो वा नवजातो मैना अर्वा रेणुककाटः प्रणग्वसुवने वसुधेयस्य व्यन्तु यज ॥

( इ ) देवी उषासानक्ता व्यस्मिन् यज्ञे प्रयत्यह्वेतामपि नूनं दैवीर्विशः प्रायासिष्टां सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यज ॥

( उ ) देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि यूयवदान्यावक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ॥

( ए ) देवी ऊर्जाहुती इषमूर्जमन्यावक्षत्सग्धिं सपीतिमन्या नवेन पूर्वं दयमाना स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ॥

( ऐ ) देवा दैव्या होतारा पोतारा नेष्टारा हताघशंसावाभरद्वसू वसुवने वसुधेयस्य वीतां यज ॥

( ओ ) देवीस्तिस्रस्तिस्रो देवीरिळा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत्सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेळया वसुमत्या सधमादं मदेम वसुवने वसुधेयस्य व्यन्तु यज ॥

(औ) देवो नराशंसस्त्रिशीर्षा षळक्षः शतमिदेनं शितिपृष्ठा आदधति सहस्रमीं प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज ॥

(अं) देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिग् द्यामग्रेणास्पृक्षदान्तरिक्षं मध्येनाप्राः पृथिवी-मुपरेणादृंहीद्वसुवने वसुधेयस्य वेतु यज ॥

(अः) देवं बर्हिर्वारितीनां निधेधासि प्रच्युतीनामप्रच्युतं निकामधरणं पुरुस्पार्हं यश-स्वदेना बर्हिषाण्या बर्हींष्यभिष्याम वसुवने वसुधेयस्य वेतु यज ॥

(क) देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुराय-जीयानग्ने यान् देवानयाड् याँ अपिप्रेर्ये ते होत्रे अमत्सत । तां ससनुषीं होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होताभूर्वसुवने वसुधेयस्य नमोवाके वीहि यज ॥

## ७ [ ४ ]

(अ) होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान्करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपो मित्रावरुणयोः पयस्या प्रातःसावस्य पुरोळाशाँ इन्द्रः प्रस्थितां जुषाणो वेतु होतर्यज ॥

(आ) होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपो माध्यंदिनस्य सवनस्य पुरोळाशाँ इन्द्रः प्रस्थितां जुषाणो वेतु होतर्यज ॥

(इ) होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपस्तृतीयस्य सवनस्य पुरोळाशाँ इन्द्रः प्रस्थितां जुषाणो वेतु होतर्यज ॥

(उ) होता यक्षदग्निं पुरोळाशानां जुषतां हविर्होतर्यज ॥

(ए) होता यक्षद्वायुमग्रेगामग्रेयावानमग्रे सोमस्य पातारं करदेवं वायुरावसा गमज्जुषतां वेतु पिबतु सोमं होतर्यज ॥

(ऐ) होता यक्षदिन्द्रवायू अर्हन्ता रिहाणा गव्याभिर्गोमन्ता भ्रियन्तां वीरया शुक्रया एनयोर्नियुतो गोअग्रयाणां वीरो कशाश्वपुरस्तात्तासामिह प्रयाणमास्तिकर्विमोचनं करत एवेन्द्रवायू जुषेतां वीतां पिबतां सोमं होतर्यज ॥

(ओ) होता यक्षन्मित्रावरुणा सुक्षत्रा रिशादसा नि चिन्मिषन्ता निचिरा निचर्य्याँ-सा॒क्षगश्विद्रातुवित्तरोनुल्बणेन चक्षसा ऋतमृतमिति दीध्याना करत एवं मित्रा-वरुणा जुषेतां वीतां पिबेतां सोमं होतर्यज ॥

( औ ) होता यक्षदश्विना नासत्या दीद्यग्नी रुद्रवर्तनी न्यन्तरेण चक्रेण च वामीरिष ऊर्जं आवहतं सुवीराः सनुतरेणा नरुषो बाधेतां मधुकशयेमं यज्ञं युवाना मिमिक्षतां करत एवाश्विना जुषेतां वीतां पिबेतां सोमं होतर्यज ॥

( अं ) होता यक्षदिन्द्रं प्रातः प्रातःसावस्यार्वावतो गमदा परावत ओरोरन्तरिक्षादा स्वात्सधस्थादिमे अस्मै शुक्रा मधुश्चुतः प्रस्थिता इन्द्राय सोमास्तां जुषतां वेतु पिबतु सोमं होतर्यज ॥

( अः ) होता यक्षदिन्द्रं माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्यात्तारं पातारं श्रोतारं हवमागन्तारमस्या धियोऽवितारं सुन्वतो यजमानस्य वृषभोभा कुक्षी पृणतां वार्त्रघ्नं च माघोनं चेमे अस्मै शुक्रामन्थिनः प्रस्थिता इन्द्राय सोमास्तां जुषतां वेतु पिबतु सोमं होतर्यज ॥

( क ) होता यक्षदिन्द्रं तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवतो बृहस्पतिवतो विश्वदेव्यावतः समस्य मदाः प्रातस्तनाग्मत सं माध्यंदिनाः समिदातनास्तेषां समुक्षितानां गौर इव प्रगाह्या वृषायस्वायुया बाहुभ्यामुप याहि हरिभ्यां प्रप्रुथ्या शिप्रे निष्पृथ्य ऋजीषिन्निमे अस्मै तीव्रा आशीर्वन्तः प्रस्थिता इन्द्राय सोमास्तां जुषतां वेतु पिबतु सोमं होतर्यज ॥

( ख ) होता यक्षदिन्द्रं मरुत्वन्तमिन्द्रो मरुत्वाञ्जुषतां वेतु पिबतु सोमं होतर्यज ॥

( ग ) होता यक्षदादित्यान् प्रियान् प्रियधाम्नः प्रियव्रतान् महः स्वसरस्य पतीनुरोरन्तरिक्षस्याध्यक्षान् स्वादित्यमवोचत्तदस्मै सुन्वते यजमानाय करन्नेवमादित्या जुषन्तां मन्दन्तां व्यन्तु पिबन्तु मन्दन्तु सोमं होतर्यज ॥

( घ ) होता यक्षद्देवं सवितारं परामीवां साविषत् पराघशंसं सुसावित्रमसाविषत्तदस्मै सुन्वते यजमानाय करद्देवं देवः सविता जुषतां मन्दतां वेतु पिबतु सोमं होतर्यज ॥

( ङ ) अग्निमद्य होतारमवृणीतायं सुन्वन् यजमानः पचन् पक्तीः पचन् पुरोळाशान् गृह्णन्नग्नय आज्यं गृह्णन् सोमायाज्यं बध्नन्नग्नये च्छागं सुन्वन्निन्द्राय सोमं भृज्ज हरिभ्यां धानाः सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नये च्छागेनेन्द्राय सोमेन हरिभ्यां धानाभिरघत्तं मेदस्तः प्रति पचताग्रभीदवीवृधत पुरोळाशैरपादिन्द्रः सोमं गवाशिरं यवाशिरं तीव्रान्तं बहुरमध्यमुपोत्था मदा व्यश्रोद्विमदाँ आनळवीवृधताङ्गूषैस्त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं सुन्वन्यजमानो बहुभ्य आ संगतेभ्यः । एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्स्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥

( च ) धानासोमानामिन्द्राद्धि च पिब च बब्धां ते हरी धाना उप ऋजीषं जिघ्रतामा रथचर्षणे सिञ्चस्व यत्त्वा पृच्छाद्विषं पत्नीः कामीमदथा इत्यस्मिन् सुन्वति यजमाने तस्मै किमरास्थाः । सुष्ठु सुवीर्यं यज्ञस्यागुर उदचं यद्यदचीकमतोत्तत्तथा-भूद्धोतर्यज ॥

( छ ) इह मद एव मघवन्निन्द्र ते श्वो वसुमतो रुद्रवतो आदित्यवत ऋभुमतो विभुमतो वाजवतो बृहस्पतिवतो विश्वदेव्यावतः श्वस्सुत्यामग्निमिन्द्रायेन्द्राग्निभ्यां प्रब्रूहि । मित्रावरुणाभ्यां वसुभ्यो रुद्रेभ्यो आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्रह्मणेभ्यः सोम्येभ्यः सोमपेभ्यो ब्रह्मन् वाचं यच्छ ॥

( ज ) होता यक्षदश्विना सोमानां तिरो अह्न्यानां त्रिरा वर्तिर्यातं त्रिरह मानयेथामुतो तुरीयं नासत्या वाजिनाय देवाः । सजूरग्नी रोहिदश्वो घृतस्नुः । सजूरुषा अरुषेभिः । सजूः सूर्य एतशेभिः । सजोषसावश्विना दंसोभिः करत एवाश्विना जुषेतां मन्देतां वीतां पिबेतां सोमं होतर्यज ॥

## ७ [ ५ ]

( अ ) होता यक्षदिन्द्रं होत्रात्सजूर्दिवा पृथिव्या ऋतुना सोमं पिबतु होतर्यज ॥

( आ ) होता यक्षन्मरुतः पोत्रात्सुष्टुभः स्वर्का ऋतुना सोमं पिबन्तु पोतर्यज ॥

( इ ) होता यक्षद्ग्रावो नेष्टात्त्वष्टा सुजनिमा सजूर्देवानां पत्नीभिर्ऋतुना सोमं पिबतु नेष्टर्यज ॥

( उ ) होता यक्षदग्निमाग्नीध्राद्दतुना सोमं पिबत्वग्नीद्यज ॥

( ए ) होता यक्षदिन्द्रं ब्रह्माणं ब्रह्मणादृतुना सोमं पिबतु ब्रह्मन् यज ॥

( ऐ ) होता यक्षन्मित्रावरुणा प्रशास्तारौ प्रशास्त्रादृतुना सोमं पिबतां प्रशास्तर्यज ॥

( ओ ) होता यक्षद्देवं द्रविणोदां होत्रादृतुभिः सोमं पिबतु होतर्यज ॥

( औ ) होता यक्षद्देवं द्रविणोदां पोत्रादृतुभिः सोमं पिबतु पोतर्यज ॥

( अं ) होता यक्षद्देवं द्रविणोदां नेष्टादृतुभिः सोमं पिबतु नेष्टर्यज ॥

( अः ) होता यक्षदेवं द्रविणोदामपाद्धोत्रादपात्पोत्रादपान्नेष्टात्तुरीयं पात्रममृक्तममर्त्यमिन्द्र-पानं देवो द्रविणोदाः पिबतु द्राविणोदसः । स्वयमायूयाः स्वयमभिगूर्याः स्वयम-भिगूर्तया होत्राय ऋतुभिः सोमस्य पिबत्वच्छावाक यज ॥

( क ) होता यक्षदश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबेतामध्वर्यू यजताम् ॥

( ख ) होता यक्षदग्निं गृहपतिं गार्हपत्यात्सुगृहपतिस्त्वयाग्नेऽयं सुन्वन् यजमानः स्यात्सु-गृहपतिस्त्वमनेन सुन्वता यजमानेनाग्निर्गृहपतिर्गार्हपत्यादृतुना सोमं पिबतु गृह-पते यज ॥

[ १ ] एते प्रैषा मु-पुस्तकेऽप्युपलभ्यन्ते। तथा च १ = मैसं ४. १३. २; कासं १५. १३; तैब्रा ३. ६. २; → ऐब्रा २. ४. १-१५ सायणभाष्यं; वासं २१. २९; ३०; ३३; ३४.

अ. ≐ ऋसं ३. ५. ९; → ऋप्रा १. ५७. **नाभा पृथिव्याः** = ऋसं १. १४३. ४।

इ. **नराशंसं नृशस्तं नॄँः प्रणेत्रं** = ऋप्रा ४. ७८. **नृशस्तं**; नृशस्त्रं-मु।

ए. **स्वदन्तु**; स्वदन्तु-मैसं।

ऐ. **कवष्यो कोषधावनीः** = ऋप्रा २. ४१. **यक्षद्दूर**; यक्षद्दूर-मु. '**रुद्रातामि**°; '**रुद्रा**ताभि°-मु. **श्रयन्तां**; श्रयतां-मु. **सुप्रायणा अस्मिन्यज्ञे वि श्रयन्तां** = निरु ४.१८ (नि.४.१)

ओ. **नॄँः पतिभ्यो योनिं कृण्वाने** = ऋप्रा ४. ७८.

औ. **स्विष्टमद्यान्यः करत्** = ऋप्रा ४. ५१. **स्वतवसेमं**-कासं; सतवसेमं-का-तैब्रा-मु।

अः. **अचिष्टं**-मु; अचिष्टं-का-कासं-तैब्रा।

ख. = आश्वश्रौ ३. ४; शांश्रौ ५. १८. २. **जुषाणा ... व्यन्तु** ≐ ऐब्रा १. १७. ६ (सभाष्यं): जुषाणो अग्निराज्यस्य वेतु. अयं प्रैषः मु-पुस्तके ७ [ २ ] अ अनन्तरं मुद्रितः। 'इति प्रयाजप्रैषः' इति च तत्राधिकम्।

[ २ ] शांश्रौ ५. १६. ९; मैसं ४. १३. ५; कासं १६. २१; तैब्रा ३. ६. ५-१५; ऐब्रा २. ५. ७; मु एतेष्वेते प्रैषा उपलभ्यन्ते। 'उपप्रैषाः' इति तेषां नाम।

अ. **उपप्रेष**; उपप्रेष्य-तैब्रा-मु।

आ-इ. = मैसं ४. १३. ५; आश्वश्रौ ३. ४. ८ भाष्यम्।

उ. = शांश्रौ ५. १८. १०; → मैसं ४. १३. ५; तैब्रा ३. ६. ८. १. **अग्नीषोमौ**-मु; अग्नी-मैसं; इन्द्राग्नी-तैब्रा।

ए. = शांश्रौ ५. १९. ७; → मैसं ४. १३. ५; तैब्रा ३. ६. ८. २. **अग्नीषोमौ**-मु; अग्नी-मैसं; इन्द्राग्नी-तैब्रा. 'ए' इत्यस्यानन्तरं मु-पुस्तके 'होता यक्षदग्निं पुरोळाशस्य जुषतां हविर्होतर्यज' इत्यधिकम्।

ऐ. = मैसं ४. १३. ७; कासं १८. २१; तैब्रा ३. ६. ११. १; शांश्रौ ५. १९. १५; निरु ४. ३; → वासं २१. ४३. **अग्नीषोमौ**-मु; अग्नी-मैसं-कासं; इन्द्राग्नी-तैब्रा. **हविषा**; हविष-मु. **अग्निष्वात्तानां पीवोपवसनानां** = ऋप्रा २. ७३. **पार्श्वतः श्रोणितः शितामतः** = निरु ४. ३. **उत्सादतोऽङ्गादङ्गादवत्तानां** = ऋप्रा २. ४१. **एवाग्नीषोमौ**-मु; एवेन्द्राग्नी-इतरेषु।

ओ. = निरु ८. ९; मैसं ४. १३. ७; कासं १८. २१; तैब्रा ३. ६. ११; शांश्रौ ५. १९.१८.

औ. = मैसं ४. १३. ७; कासं १८. २१; तैब्रा ३. ६. ११; शांश्रौ ५. १९. १९. → वासं २१. ४६. **वह्वा**; वह-मु. **दधिषो**; दिधिषो-मु.

अं. = मैसं ४. १३. ७; कासं १८. २१; तैब्रा ३. ६. १२; निरु ८. २०; शांश्रौ ५. १९. २०; ऋप्रा ७. ९. **वनस्पते रशनया नियूय** = ऋसं १०. ७०. १०

अः. = मैसं ४. १३. ७; कासं १८. २१; शांश्रौ ५. १९. २२; → वासं २१. ४७; तैब्रा ३. ६. ११. ४; शांश्रौ १. ९. २. **अग्नीषोमयोश्छागस्य**-मु; अग्न्योश्छागस्य-मैसं; अश्विनोश्छागस्य-कासं; अग्निरिन्द्राग्नियोश्छागस्य-तैब्रा. **अध्वरा**; अध्वरान्-कासं. 'अः' अस्यानन्तरं 'इति पाशुकप्रैषाः। अथानुयाजप्रैषाः' इति मु-पुस्तके।

क. ≐ मैसं ४. १३. ९; तैब्रा ३. ६. १५; शांश्रौ ५. २०. ५; वासं २१. ५९-६१; २८.४६. **अग्नीषोमाभ्यां**-मु; इन्द्राग्निभ्यां-मैसं-तैब्रा. **सूपस्थाद्य**-का; सूपस्था अद्य-मु; → तैसं १. २. २. ३ : सूपस्था देवो वनस्पतिः. **छागेनाघस्तां**-का; छागेनाघत्तं-वासं २८. ४६; शांश्रौ ५. २०. ५ भाष्यं; छागेनाघस्तां-तैब्रा-मैसं; छागेनाद्यस्तं-मु. → शांश्रौ ६. १. १०;११ (सभाष्यं). **संगतेभ्यः**

सैगथेभ्यः–मु. 'वसु' मु–पुस्तके नास्ति। मु–पुस्तके 'क' इत्ययं प्रैषः 'सूक्तवाकप्रैषः' इति संज्ञया ७ [ ३ ] अनन्तरं वर्तते।

[ ३ ] अ. = मैसं ४.१३.८; तैब्रा ३.६.१३; शांश्रौ ५.२०. १; → वासं २१.४८; २८.१२.

आ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; → वासं २१. ४९; २८. १३. **मैना अर्वा रेणुककाटः प्रणग्** → ऋसं ८. २८. ४ः न ता अर्वा रेणुककाटो अश्नुते. **प्रणग्**–मैसं; पृणग्–तैब्रा–मु. °**स्तरुणा**; °स्तरुण–तैब्रा–मु. **नवजातो**; वनजातौ–मु।

इ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; → वासं २१. ५०; २८. १४. **व्यास्मिन्**–का; °ध्यास्मिन्–मैसं–तैब्रा–मु. **प्रायासिष्टां**; प्रायाशिष्टां–तैब्रा।

उ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; निरु ९. ४२; → वासं २१. ५१; २८. १५. **यूयवद्रा**°; युयवद्रा°–मु।

ए. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; निरु ९. ४३; → वासं २१. ५२; २८. १६. **दयमानाः**–मैसं; दयमाना–तैब्रा–मु।

ऐ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; → वासं २१. ५३; २८. १७. **हताघशंसौ**–तैब्रा–मु; हताघशंसा–मैसं।

ओ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; → वासं २१. ५४; २८.१८.

औ. = मैसं ४. १३. ८; तैब्रा ३. ६. १६; शांश्रौ १. १३. २; → वासं २१.५५; २८. १९.

अं. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; शांश्रौ ५. २०. ४; → वासं २१. ५६; २८. २०. °**मुपरेणा**°; °मपरेणा°–मु।

अः. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; शांश्रौ ५. २०. ४; → वासं २१. ५७; २८. २१. **यशास्वदेना**; यशस्विदेना–मु।

क. = खिल ४. ९. ६; मैसं ४. १०. ३; तैब्रा ३. ५. ९. १; ३. ६. १३; ऋप्रा ४. ७३; आश्वश्रौ १. ८; शांश्रौ १. १३. ३–४; → वासं २१. ५८; २८. २२.

[ ४ ] अ. = आश्वश्रौ ५. ४; शांश्रौ ७. १. ३. मु–पुस्तके अस्मात्पूर्वं किंचिदधिकं विद्यते तद्यथा–' अथ सुत्यायां सवनीयप्रैषाः। होता यक्षदग्निं च्छागस्य वपाया मेदसो जुषतां हविर्होतर्यज '। **इन्द्रं हरिवाँ ... इन्द्रस्यापूपो** = ऐब्रा २. २४. ५. **प्रातःसावस्य**; प्रातः प्रातःसावस्य–मु। मु–पुस्तके अ इति प्रैषानन्तरं उ ए ऐ ओ औ अं इति प्रैषा मुद्रिताः शिष्टाश्च ७ [ ५ ] अन्ते निवेशिताः। ७ [ ५ ] अन्ते ' होता यक्षदग्निं पुरोळाशस्य जुषतां हविर्होतर्यज ' इति प्रैषो मुद्रितः। तस्य चानन्तरं आ उ अः ख ग इति प्रैषा विनिवेशिताः तदनन्तरं कियांश्चिदधिको भागो वर्तते तस्य चानन्तरं इ क घ ङ च छ ज इति प्रैषाणां स्थानम्। मध्ये वर्तमानो मु–पुस्तकस्थोऽधिको भागोऽत्र दीयते–

**होता यक्षदग्निं छागस्य हविष आददद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः॥ घसन्नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करदेवाग्निर्जुषतां हविर्होतर्यज** [ → प्रैष ७ [२] ऐ ]॥ ( **होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठयारशनयाधित ॥ यत्राग्नेराज्यस्य हविषः प्रिया धामानि यत्र सोमस्याज्यस्य हविषः प्रिया धामानि यत्राग्नेश्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिव कृत्वी करदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज** [= प्रैष ७ [२] औ ] ॥ **होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रिया धामान्ययाट् सोमस्याज्यस्य हविषः प्रिया धामान्ययाळग्नेश्छागस्य हविषः प्रिया धामान्ययाट् वनस्पतेः प्रिया पाथांस्ययाट्**

**देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्याऽइष कृणोतु सोऽअध्वरा जातवेदा जुषतां हविर्होतर्यज )** [ = प्रैष ७ [ २ ] अः ]

उ. = आश्वश्रौ ५. ४; शांश्रौ ७. १. ७

ए. = आश्वश्रौ ५. ५; शांश्रौ ७. २. ३. **अवसा गमत्** = ऋसं ५. ४६. ६.

ऐ. = आश्वश्रौ ५. ५; शांश्रौ ७. २. ३. **अर्हन्ता रिहाणा**–का; अर्हन्तार्हाणा–मु. **गोअग्रयाणां वीरो कशाश्वपुरस्तात्**–का; गोअग्रा वीरोपशाश्वपुरस्त्याः–मु. **आस्तिकविमोचनं**–का; अस्तिवहविमोचनं–मु ।

ओ. = शांश्रौ ७. २. ६; आश्वश्रौ ५. ५. **नि चिन्मिषन्ता ... चक्षसा** ≐ ऋसं ८. २५. ९ : अक्षणश्चिद्गातुवित्तरानुल्बणेन चक्षसा । नि चिन्मिषन्ता निचिरा नि चिक्यतुः। **निचर्यांसा°**–का; निचिर्यांसा°–मु. **चक्षसा**–का; चक्षस–मु. **पिबेतां**–का; पिबतां–मु ।

औ. = शांश्रौ ७. २. ९; आश्वश्रौ ५. ५. **च वार्माः**–का; वार्माः–मु. **ऊर्जे आवहतं**–का; ऊर्जावहतं–मु. **°आ नरुषो**–का; °आरुषो–मु. **मधुकशयेमं यज्ञं युवाना मिमिक्षतां** = पंब्रा २१. १०. १२; काश्रौ २३. ३. १. **पिबेतां**–का; पिबतां मु.

अं. = शांश्रौ ७. ४. २; आश्वश्रौ ५. ५. **ओरोरन्तरिक्षात्** = ऋसं ३. ४६. ३. **स्वात्सधस्थात्** = ऋसं ६. १७. ५.

अः. = शांश्रौ ७. १७. ४; आश्वश्रौ ५. ५. **मन्थिनः**–का; मधुश्चुतः–मु.

क. = शांश्रौ ८. २. ४. **प्रातस्तनागमत**–का; प्रातस्तना अगमत–मु. **वृषायस्वायूया वाहुभ्यां** = ऋप्रा ९. ५२. **प्रप्रुथ्या शिप्रे** = ऋसं ३. ३२. १. **ऋजीपिन्**–का; ऋजीषि–मु. **निष्पृथ्य**–का; निष्पृथ्य–मु ।

ख. = शांश्रौ ७. १९. ३.

ग. = शांश्रौ ८. १. ५; आश्वश्रौ ५. १७. **प्रियधाम्नः...पर्तीनुरोः** = ऋप्रा ४. ७३. **स्वादित्यमवोचत तत्**–का; स्वादित्यानवोदघत्–मु. ' मन्दन्तु ' मु–मध्ये नास्ति ।

घ. = शांश्रौ ८. ३. ३; आश्वश्रौ ५. १८. **सुसात्रिमसाविषत्** = ऋप्रा ५. २७. **मन्दतां**–का; मदतां–मु ।

ङ. = शांश्रौ ५. २०. ६ ( भाष्यं ) → मैसं ४. १३. ९; तैब्रा ३. ६. १५; वासं २१. ५९; २८. २३; प्रैष [ २ ] क. **भृज्ज**–का; भृंजन्–मु. **तीव्रान्तं बहुरमध्यं** = ऐब्रा २. २०. १५. **मद्रा व्यश्रोत्**–का; मदाश्रौत्–मु. **संगतेभ्यः**–का; संगथेभ्यः–मु ।

च. = शांश्रौ ८. ८. २; निरु ५. १२ ( सभाष्यं ). **धानासोमानां**–का–मु; धानाः सोमानां –शांश्रौ–निरु( भाष्यं ). **यत्वा**–का–निरु; यत्वा–मु. **विषं पत्नीः**–का–मु; वृषन् पत्नी–निरु ( भाष्यं ). **अरात्थाः**–का–निरु; अरात्थाः–मु. **उद्दशं**; उद्रुचं–निरु( भाष्यं ). **यद्यदर्चीक°**–का; यद्यदचीक°–मु. **अर्चीकमतोत्तत्तथा**–का; अर्चीकमतां ततथा–निरु ( भाष्यं ) ।

छं. = शांश्रौ १०. १. ११. मु–मध्ये एतन्नास्ति. **ते श्वो**–का; तेभ्यो–शांश्रौ( भाष्यं ). **वसुमतो...विश्वदेव्यावतः** ≐ ऐब्रा २. २०. १४ : वसुमते रुद्रवत आदित्यवत ऋभुमत विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावते. → मैसं ४. ९. ८; प्रैष [ ४ ] क.

ज. = आश्वश्रौ ६. ५. **आ वर्तिः**–का; वर्तिः–मु. **यातां**–का; यातं–मु. **अह**–का; इह–मु. **मानयेथां**–का; मादयेथां–मु. **देवाः**–का; धेनुः–मु. **अरुपेभिः**–का; अरुणाभिः–मु. **पूतशोभिः**–का; पूतशेन–मु. **सजोषसावाश्विना**–का; सजोषावश्विना–मु. **मन्देतां**–का; मदेतां–मु. **पिबेतां**–का; पिबतां–मु ।

[५] एते द्वादश ऋतुप्रैषाः ऐब्रा ५. ९; मु अत्रोपलभ्यन्ते।

अ. = शांश्रौ ७. ८. २. **दिवा**-का; दिव आ-मु।

आ. **पिबन्तु**-का; पिबतु-मु।

ए. **इन्द्रं ब्रह्माणं**-का; इन्द्रो ब्रह्मा-मु. **ब्रह्मणा°**-का; ब्राह्मणा°-मु. **प्रशास्तर्यज** = ऋप्रा १. १०२; माश्रौ २. ४. १. २८.

औ. **पोतर्यज** = ऋप्रा १. १०१; माश्रौ २. ४. १. २८.

अः → ऋसं २. ३७. ४. 'पिबतु' मु-मध्ये नास्ति।

क. **पिबेतामध्वर्यू यजताम्**-का; पिबतामध्वर्यू यजतं-मु।

ख. **त्वधाग्ने**-का; त्वयाग्ने-मु. ≐ त्वयाग्नेऽयं सुन्वन्यजमानस्य-ऋप्रा २. ४२; मु.

काश्मीरपुस्तकेऽविद्यमाना अन्येऽपि केचन प्रैषाः सूत्रेषु ऋक्प्रातिशाख्ये च निर्दिष्टा वर्तन्ते तेऽप्यत्र संगृह्यन्ते—

## १

**होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणमिमे सोमाः सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो सदा मासरेण परिष्कृताः शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्चुतस्तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा जुषन्तां सौम्यं मधु पिबन्तु मदन्तु व्यन्तु होतर्यज।**

= वासं २१. ४२; तैब्रा २. ६. ११. १०; शांश्रौ १५. १५. ९; मैसं ३. ११. ४; कासं ३८. ९. **शुक्राः पयस्वन्तोऽमृताः** → ऋप्रा २. ४८. **तानश्विना सरस्वतीन्द्रः** → ऋप्रा ४. ७३. **अश्विना**-तैब्रा-शांश्रौ; अश्विनौ-इतरेषु. **सुत्रामाणं**-वासं-तैब्रा-शांश्रौ; मैसं-कासं मध्य एतन्नास्ति. **परिष्कृताः**-वासं-तैब्रा; परिस्रुता-मैसं. **सदा**; मदा-तैब्रा. **मधुश्चुतः**-वासं-तैब्रा; मधुश्च्युतः-मैसं. **सुत्रामा वृत्रहा**-वासं-तैब्रा; मैसंमध्ये नास्ति. **मदन्तु व्यन्तु**-वासं; मदन्तां व्यन्तु-मैसं; मदन्तु वियन्तु सोमं-तैब्रा.

## २

**पिता मातरिश्वाछिद्रा पदा धा अच्छिद्रोक्था कवयः शंसन् सोमो विश्वविन्नीथानि नेषद्बृहस्पतिरुक्थामदानि शंसिषत्।**

आज्यशस्त्रात्पूर्वं करणीयोऽयं जपः ऐब्रा २. ३८; आश्वश्रौ ५. ९; शांश्रौ ७. ९. १; तैसं ५. ६. ८. ६. अत्रोपलभ्यते। **बृहस्पतिरुक्थामदानि शंसिषत्** = ऋप्रा ९. ९. **धा अच्छिद्रोक्था**; धादच्छिद्रोक्था-आश्वश्रौ. **अच्छिद्रोक्था कवयः शंसन् सोमो विश्वविन्नीथानि**; अच्छिद्रा उशिजः पदा नु तक्षुः सोमो विश्वविन्नेता-तैसं; पदोशिगसीयानुतक्षिषत्सोमो नीथविन्नीथानि-शांश्रौ.

## ३

**दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्। प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः। उदीचीनामस्य पदो निधत्तात्सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम्। एकधास्य त्वचमाछ्यतात्पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात्। श्येनमस्य वक्षः कृणुतात्प्रशसा बाहू शला दोषणी कश्यपेवांसाछिद्रे श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद्गात्रं गात्रमस्यानूनं कृणुतात्। ऊवध्यगोहं पार्थिवं खनतात्। अस्ना रक्षः सं सृजतात्। वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवच्छमितारः। अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३उ॥**

तैब्रा ३. ६. ६. १ भाष्ये अग्निगुप्रैष इत्यस्य संज्ञा। ऐब्रा २. ६; शांब्रा १०. ४; आश्वश्रौ ३.३; शांश्रौ ५. १७. १-१०; मैसं ४. १३. ४; तैब्रा ३. ६. ६. १-३; कासं १६. २१; निरु ५. ११ भाष्यं एतेष्विदं दृश्यते। → शब्रा १३. ५. २.

**उदीचीनाम्**; उदीचीनाँ-निरुक्तभाष्यं. **सगर्भ्योऽनु सखा सयूथ्यः**-ऋप्रा २. ४१. **अध्रिगो शमीध्वं सुशमि शमीध्वमध्रिगो**-निरु ५. ११. **माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः**-वासं ६. ९. **आरभध्वमुत मनुष्या**-ऐब्रा-आश्वश्रौ; उत मनुष्या आरभध्वं-इतरेषु. **मेधपतिभ्यां**; मेधपतये-मैसं. **स्तृणीत बर्हिः** ≡ ऋसं १. १३. ५. **अन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं**-ऐब्रा-आश्वश्रौ-शांश्रौ; अन्ववसृजताद्दिशः श्रोत्रमन्तरिक्षमसुं-तैब्रा; अन्ववसृजतादन्तरिक्षमसुं-मैसं. **वारयध्वात्**-ऐब्रा-आश्वश्रौ-शांश्रौ; वारयतात्-तैब्रा-मैसं. **स्वच्छमितारः**-ऐब्रा-आश्वश्रौ-शांश्रौ-तैब्रा; स्वद्-मैसं.

अन्येऽपि केचन प्रैषा आश्वश्रौ-मध्य उपलभ्यन्ते तेऽत्रोद्ध्रियन्ते-

आश्वश्रौ ३. ९; कासं १७. १९; मु-

**होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणं सोमानां सुराम्णां जुषन्तां व्यन्तु पिबन्तु मदन्तु सोमान् सुराम्णो होतर्यज।**

आश्वश्रौ ३. ५; शांश्रौ ५. १९; मैसं ४. १३. ५; मु-

**होता यक्षदग्निं पुरोळाशस्य जुषतां हविर्होतर्यज।**

आश्वश्रौ १०. ९; शांश्रौ १६. ७. २; वासं २३. ६४; मु-

**होता यक्षत्प्रजापतिं महिम्नो जुषतां वेतु पिबतु सोमं होतर्यज।**

## कुन्तापाध्यायः ( ८–२२ )

### ८

इदं जना उपश्रुतं नराशंस स्तविष्यते। षष्टिं सहस्रा नवतिं च कौरव आ रुशमेषु दद्महे ॥१॥
उष्ट्रा यस्य प्रवाहिणो वधूमन्तो द्विर्दश। वर्ष्मा रथस्य नि जिहीळते दिव ईषमाणा उपस्पृशः ॥२॥
एष इषाय मामहे शतं निष्कान् दश स्रजः। त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥ ३ ॥

८-२२ एतानि कुन्तापसूक्तानि ऐतरेयब्राह्मणे ( ६. ३२-३६ ) निर्दिष्टानि। तत्र 'इदं जना' इत्याद्या ऋचः 'नाराशंस्यः' उच्यन्ते। अथर्व २०. १२७. १-३; शांश्रौ १२. १४. १-३ अत्रापि ता उपलभ्यन्ते। ऋसं १. १२६. १-३ आभिः सह प्रायः तासां समानत्वम्।

**१.** ≡ आश्वश्रौ ८. ३. **जना उपश्रुतं**-का; जना उपश्रुत-इतरेषु. **नराशंस**-का-शांश्रौ-आश्वश्रौ-मु; नाराशंस-अथर्व. **कौरव**-का-शांश्रौ; कौरम-इतरेषु। **२. प्रवाहिणो**; प्रवाहणो-अथर्व-मु। **३. इषाय**-का-अथर्व-शांश्रौ; इयाय-मु।

### ९

वच्यस्व रेभ वच्यस्व वृक्षे न पक्वे शकुनः। निष्टे जिह्वा चर्चरीति क्षुरो न भुरिजोरिव ॥१॥
प्र रेभासो मनीषया वृषा गाव इवेरते। अमोतपुत्रका एषामु मोदका उपासते ॥ २ ॥
प्र रेभ धियं भरस्व गोविदं वसुविदम्। देवत्रेमां वाचं श्रृणीहीषुर्नो वीरास्तारम् ॥ ३ ॥

एताः 'रैभ्यः' अथर्व २०. १२७. ४-६; शांश्रौ १२. १५. १; १२. १४. ४-५; मु अत्रोपलभ्यन्ते।

१. निष्टे-का; नष्टे-अथर्व-शांश्रौ-मु. क्षुरो न भुरिजोरिव = ऋसं ८. ४. १६. २. मनीषया-का-मु; मनीषा-अथर्व-शांश्रौ. एषामु मोदका उपासते-का; एषाममोत गा इवासते -अथर्व-शांश्रौ; अमोतका इवासते-मु । ३. धियं-का; धीं-अथर्व. शृणीहीषुः-मु-शांश्रौ; श्रीणीहीषुः- अथर्व. वीरास्तारं-का; वीरस्तारं-अथर्व-शांश्रौ; न वीरमस्तारं-मु ।

१०

राज्ञो विश्वजनीनस्य यो देवो मर्त्याँ अति । वैश्वानरस्य सुष्टुतिमा सुनोता परिक्षितः ॥ १ ॥
परिक्षिन्नः क्षेममकरत्तम आसनमा सरम् । अराय्यं कुर्वन् कौरव्यः पतिर्वदति जायया ॥२॥
कतरत्त आ हराणि दधि मन्थां३ परिस्रुतम् । जाया पतिं वि पृच्छति राष्ट्रे राज्ञः परिक्षितः ॥३॥
अभीव स्वः प्र जिहीते यवः पक्वः पथो बिलम् । जनः स भद्रमेधते राष्ट्रे राज्ञः परिक्षितः ॥४॥

एताः 'पारिक्षित्यः' अथर्व २०. १२७. ७-१०; शांश्रौ १२. १७. १. १-४; मु अत्रापि दृश्यन्ते । शांश्रौ १२. १६. २; आश्वश्रौ ८. ३; ऐब्रा ६. ३२ भाष्यमपि द्रष्टव्यम् ।

१. सुनोता-का-मु-अथर्व; शृणोता-शांश्रौ. परिक्षितः-का; परिक्षितिः-मु । २. परिक्षिन्नः -का; परिक्लिन्नः-मु; परिच्छिन्नः-अथर्व. क्षेममकरत्-का-मु; क्षेममकरत्तम-शांश्रौ; क्षेममकरोत्- अथर्व. तम आसनमा-का-अथर्व; तमासुनुमा-मु. सरम्-का-मु; चरन्-अथर्व-शांश्रौ. अराय्यं- का; मरार्यं-मु; कुलायं-अथर्व-शांश्रौ. कुर्वन्-का-मु; कृण्वन्-अथर्व-शांश्रौ । ३. मन्थां-मु-शांश्रौ; मन्थं-अथर्व. परिस्रुतं-शांश्रौ; परि श्रुतं-अथर्व; परिस्रुतां-मु. जाया-का; जायाः-अथर्व । ४. अभीव स्वः प्र जिहीते-का; अभीवर्ष्म प्र जिहाते-मु. भद्रमेधते-का; भद्रमैधत्त-मु; भद्रमेधति-शांश्रौ ।

११

इन्द्रः कारुमबूबुधदुत्तिष्ठ वि चरा चरन् । ममेदुग्रस्य चर्कृतिः सर्व इत्ते पृणादरिः ॥ १ ॥
इह गावः प्र जायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो वीरस्त्राता नि षीदतु ॥ २ ॥
नेमा इन्द्र गावो रिषन्मो आसां गोपती रिषत् । मासाममित्रयुर्जन इन्द्र मा स्तेन ईशत ॥३॥
उप वो नर एमसि सूक्तेन वचसा वयं भद्रेण वचसा वयम् ।
चनो दधिष्व नो गिरो न रिष्येम कदा चन ॥ ४ ॥

एताः 'कारव्यः' अथर्व २०. १२७. ११-१४; मु अत्र दृश्यन्ते । १-३ = शांश्रौ १२. १५. २-४. २ = ऐब्रा ८. ११; आपमं १. ९. १.

१. चरन्-का; जरन्-शांश्रौ; जनं-अथर्व-मु. चर्कृतिः-का; चर्कृधि-अथर्व-शांश्रौ-मु. सर्व इत्त पृणाद्दरिः-का; सर्वा इत्ते पृणादुरिः-मु । २. वीरस्त्राता-का-मु; ऽपि पूषा-अथर्व-शांश्रौ । षीदतु-का; षीदति-अथर्व । ३. नेमा-का-अथर्व-मु; मेमा-शांश्रौ. गोपती रिषत्-का-शांश्रौ; गोप रीरिषत्-अथर्व । ४. वो नर एमसि-का-मु; नो न रमसि-अथर्व. चनो-का; वना-अथर्व. दधिष्व नो-का; दधिध्वं नो-मु; दधिध्वनो-अथर्व. नो गिरो-का; नोऽगिरो-मु ।

१२

यः सभेयो विदथ्य३ः सुत्वा यज्वा च पूरुषः । सूर्यं चामू रिशादसं तद्देवाः प्रागकल्पयन् ॥१॥
यो जाम्या३ः प्रत्यमदद्यः सखायं निनित्सति । ज्येष्ठो यदप्रचेतास्तदाहुरधरागिति ॥ २ ॥
यद्भद्रस्य पुरुषस्य पुत्रो भवति दाधृषिः । तद्विप्रो अब्रवीदुदग्गन्धर्वः काम्यं वचः ॥ ३ ॥

यश्च पणिरभुजिष्यो३ यश्च रेवाँ अदाशुरिः । धीराणां शश्वतामहं तदपागिति शुश्रव ॥ ४ ॥
ये च देवा अयजन्तायो ये च परादुः । सूर्यो दिवमिव गत्वाय मघवानो वि रप्शते ॥ ५ ॥

'दिशां क्लृप्तयः'–नामकमेतत्सूक्तं अथर्व २०. १२८. १-५; मु अत्र वर्तते । १ = शांश्रौ १२. २०. २. १. २ = शांश्रौ १२. २०. २. ३. ३ = शांश्रौ १२. २०. २. २. ४-५ = शांश्रौ १२. २०. २. ४. ऐब्रा ६. ३२ सायणभाष्यं द्रष्टव्यम् ।

१. **रिशादसं**–का; रिशादसः–शांश्रौ–अथर्व. **तद्देवाः**–का; तं देवाः–मु । २. **जाम्याः प्रत्यमदत्**–का; जाम्या अप्रत्तमदत्–मु; जाम्या अप्रथयत्तत्–शांश्रौ; जाम्या अप्रथयः–अथर्व. **यः**–का –मु; यत्–अथर्व–शांश्रौ. **निनित्सति**–का–मु; दुधूर्षति–अथर्व–शांश्रौ. **यदप्रचे**°–का; यदि प्रचे°–मु । ३. **उदग्**; उ तत्–अथर्व–शांश्रौ. **कार्य्यं**–का; कार्य्यं–मु । ४. **पणिरभुजिष्यो**; पणि रघुजिष्ठयो–अथर्व. **अहं**–का–अथर्व–मु; अह–शांश्रौ. **शुश्रव**–का; शुश्रुम–अथर्व–शांश्रौ–मु । ५. **देवा**; देवाँ–अथर्व. **परादुः**–का; परादिः–अथर्व–मु. **गत्वाय**–का; गत्वा–मु. **मघवानो**–का; मघवा नो–अथर्व ।

१३

योऽनाक्ताक्ष्यो अनभ्यक्तो३ऽमणिवो अहिरण्यवः । अब्रह्मा ब्रह्मणः पुत्रस्तो ता कल्पेषु संमिता ॥ १ ॥
य आक्ताक्ष्यः स्वभ्यक्तः सुमणिः सुहिरण्यवः । सुब्रह्मा ब्रह्मणः पुत्रस्तो ता कल्पेषु संमिता ॥ २ ॥
अप्रपाणा च वेशन्ता रेवाँ अप्रचतिश्चयः । अयभ्या कन्या कल्याणी त्वो ता कल्पेषु संमिता ॥ ३ ॥
सुप्रपाणा च वेशन्ता रेवाँ सुप्रचतिश्चयः । सुयभ्या कन्या कल्याणी त्वो ता कल्पेषु संमिता ॥ ४ ॥
परिवृक्ता च महिषी स्वस्त्या च युधिंगमः । श्वाशुरश्च आयामी त्वो ता कल्पेषु संमिता ॥ ५ ॥
वावाता च महिष्वणिस्था च युधिंगमः । अनाशुरश्च आयामी त्वो ता कल्पेषु संमिता ॥ ६ ॥

एताः जनकल्पाभिधा ऋचः अथर्व २०.१२८.६-११; शांश्रौ १२. २१.२.१-६; मु अत्रापि द्रष्टव्याः ।

१. °**नाक्ताक्ष्यो**–का; °नाक्ताक्षो–अथर्व–शांश्रौ–मु. **मणिवो**–का–मु; अमणिवो–अथर्व–शांश्रौ. °**ब्रह्मणः पुत्र**°–का; °ब्रह्मणस्पुत्र–मु । **पुत्रस्तो ता**–का; पुत्रस्तोता–अथर्व. **संमिता**–का; संमितः–मु । २. **आक्ताक्ष्यः**–का; आक्ताक्षः–इतरेषु. **स्वभ्यक्तः**–का; सुभ्यक्तः–अथर्व. **ब्रह्मणः पुत्र**°–का; ब्रह्मणस्पुत्र°–मु. **संमिता**–का; संमितः–मु । ३. **वेशन्ता**; येशान्ता–मु. **अप्रचातिश्चयः**–का; अप्रदद्दिश्च यः–शांश्रौ–मु; अप्रतिदिश्ययः–अथर्व. **अयभ्या**; अयभ्रा–मु. **त्वो ता**–का; तोता–अथर्व–शांश्रौ–मु. **संमिता**–का; संमितः–मु । ४. **वेशन्ता**; येशान्ता–मु. **सुप्रचतिश्चयः**–का; सुप्रददिश्च यः–शांश्रौ–मु; सुप्रतिदिश्ययः–अथर्व. **सुयभ्या**; सुयभ्रा–मु. **त्वो**–का; तो–अथर्व–मु–शांश्रौ. **संमिता**–का; संमितः–मु । ५. **परिवृक्ता च महिषी स्वस्त्या**–का–अथर्व; परिवृक्ता च महिष्यनस्त्या–शांश्रौ; वावाता च महिष्यनस्ता–मु. **च युधिंगमः**–का; चायुधिंगमः–शांश्रौ. **श्वाशुरश्च आयामी त्वो**–का; अनाशुरश्च आयामी–मु; अनाशुरश्चायामी तो–शांश्रौ; अनाशुरश्चायामी–अथर्व. **संमिता**–का; संमितः–मु । ६. **वावाता**; परिवृक्ता–मु. **महिष्वणिस्था**–का; महिषी स्वस्त्या–अथर्व–शांश्रौ; महिषी विष्वस्त्या–मु. **अनाशुरश्च आयामी**–का; श्वाशुरश्चायामी–अथर्व; श्वाशुरश्च आयामी–मु; श्वाशुरश्चायामी–शांश्रौ. **त्वो**–का; तो–अथर्व–शांश्रौ–मु. **संमिता**–का; संमितः–मु ।

१४

यदिन्द्रादो दाशराज्ञेऽमानुषं विगाहथाः । विरूपः सर्वस्मा आसीत्सह यक्षाय कल्पते ॥ १ ॥
त्वं विराक्षं मघवन्नम्रं पर्याकरोरभि । त्वं रौहिणं व्यास्यस्त्वं वृत्रस्याभिनच्छिरः ॥ २ ॥

यः पर्वतान् व्यदधाद्यो अपो व्यगाहथाः । यो वृत्रं वृत्रहन्नहन् तस्मा इन्द्र नमोऽस्तु ते ॥३॥
प्रष्टि धावन्तं हर्योरौच्चैःश्रवसमब्रवम् । स्वस्त्यश्व जैत्रायेन्द्रमा वहतो रथम् ॥ ४ ॥
यत्वा श्वेता उच्चैःश्रवसं हर्योर्युञ्जन्ति दक्षिणम् । मूर्धानमश्वं देवानां बिभ्रदिन्द्रं महीयते ॥५॥

एताः ' इन्द्रगाथाः ' अथर्व २०. १२८. १२-१६; मु–पुस्तके च द्रष्टव्याः । १ = शांश्रौ १२. १५. ५. २ = शांश्रौ १२. १६. १. १. ४ = शांश्रौ १२. १६. १. २.

१. **यदिन्द्रादो**–अथर्व--शांश्रौ; यदिन्द्रो--मु. **ऽमानुषं**; मानुषं--अथर्व. **विगाहथाः**–अथर्व--शांश्रौ; व्यगाहथाः--मु. **सदृगक्षाय वश्वते**–मु; सह यक्षाय कल्पते–अथर्व; स ह यक्ष्माय पत्यते--शांश्रौ । २. **विषाक्षं**–मु; वृषाक्षुं--अथर्व--शांश्रौ. **पर्याकरोः**–मु; मर्याकरोः--शांश्रौ; मयोंकरो--अथर्व. **आभि**–का--मु; अपि--शांश्रौ; रविः–अथर्व. **व्यास्यस्त्वं**--का–मु; व्यास्यो वि--अथर्व--शांश्रौ । ३. **यो वृत्रं वृत्रहन्नहन्** ; यो वृत्रो वृत्रहन्नहन्--मु; इन्द्रो यो वृत्रहान्महं-अथर्व. **तस्मा इन्द्र**–का; तस्मादिन्द्र --अथर्व । ४. **प्राष्टिं**–का; पृष्टं–अथर्व. **अब्रवं**–का--मु; अब्रुवन्--अथर्व--शांश्रौ. **वहतो रथं**–का; वह सुस्रजं--अथर्व--शांश्रौ--मु । ५. **यत्वा श्वेता उच्चैःश्रवसं**; यत्वा श्वेतोच्चैःश्रवसं--मु; ये त्वा श्वेता अजैश्रवसो-- अथर्व. **हर्यो°**–का--मु; हार्यो--अथर्व. मूर्धानमश्वं--का--मु; पूर्वा नमस्य--अथर्व. **महीयते** –का; महीयसे--मु. **बिभ्रदिन्द्रं**–का; बिभ्रदिन्द्र--अथर्व ।

## १५

एता अश्वा आ प्लवन्ते । प्रतीपं प्रातिसत्वनम् । तासामेका हरिक्निका । हरिक्निके किमिच्छसि ॥१॥
साधुं पुत्रं हिरण्ययम् । क्वाह तं परास्यः । यत्रामूस्तिस्रः शिंशपाः। परि त्रयः पृदाकवः ॥२॥
शृङ्गं धमन्त आसते । अयं महाते अवहि । स इत्थ कं स एव कम् । स घा घ ते संघा घ मे ॥ ३ ॥
गोमी घ गोमिनीरभि । पुमां भूमे निनित्ससि । बल्बबथो ईति । बल्बबो अथो ईति ॥४॥
अजकोऽरकोऽविका । अश्वस्य वारो गोः शफः। केशिनी श्येनी एनीव । अनामयोपजिह्विका ॥५॥
को अम्ब हुंऽमायुनि । को अर्जुन्याः पयः । को असिक्न्याः पयः । एतं पृच्छ कुहं पृच्छ ॥६॥
कुहा कं पक्कं पृच्छ । यं आयन्ति श्वभिष्कुभि । अञ्जन्तः कुभायवः। आमनको मनस्थकः॥७॥
देवत्तः प्रतिजूर्यः । पिनष्टि पर्तिका हविः । प्र बुद्बुदो मथायति । शृङ्ग उत्पत ॥ ८ ॥
मा त्वाति संखा नो वदत् । वशायाः पुत्रमायन् तम् । ईरा चैन्द्रममन्दत । इयन्नियन्निति ॥९॥
अथो इयन्निति । अथो ज्यायस्तरो भुवत् । इयं यका शलाकका । आ भिनोति नि भज्यते॥१०॥
तस्या अनुनिभञ्जनम् । वरुणो याति बभ्रुभिः । शतं बभ्रोरभीशुभिः। शतं कशा हिरण्ययीः ॥११॥
शतं रथा हिरण्ययाः । आहलकुः शवर्तकः । आयवनेन तेजनी । शफेन पीव ओहते ॥१२॥
वनिष्ठुनोप नृत्यति । इमं मह्यमदुरिति । ते वृक्षाः सह तिष्ठन्ति । पाकवलिः शकवलिः ॥१३॥
अश्वत्थः खदिरो धवः । अरदुः परमः शये । हत इव पापपूरुषः । अदोहमित्पीयूषकम्॥१४॥
द्वौ च हस्तिनो दन्ती । अध्यर्धं च परस्वतः । आदलाबुकमेककम् । अलाबुकं निखातकम्॥ १५ ॥
कर्करिको निखातकः । तद्वात उन्मथायति । कुलायं करवाँ इति । उग्रं वल्यदाततम् ॥१६॥
न वल्यदनानलम् । क एषां कर्करिं लिखत् । क एषां दुन्दुभिं हनत् । यदीं हनत्कथं हनत् ॥१७॥
दैवीं हनत्कथं हनत् । पर्याकारं पुनः पुनः ॥ १८ ॥

एतानि सप्ततिपदानि 'ऐतशप्रलापाः' इतिसंज्ञकानि अथर्व २०. १२९-१३२ मु--पुस्तके च द्रष्टव्यानि। १-३, १२, १५-१८ ≡ शांश्रौ १२. १८. ऐब्रा ६. ३३; आश्वश्रौ ८. ३; वैसू ३२. २०; गोब्रा २. ६. १३ अपि द्रष्टव्यम्।

**१. प्रातिसत्वनं**-का--ऐब्रा-मु; प्राति सुत्वनं--अथर्व--शांश्रौ. **हरिक्लिका हरिक्लिके**-शांश्रौ--मु; हरिविनका हरिक्निके--अथर्व। **२. त**-अथर्व--शांश्रौ; कं--मु। **३. वहाते**-का; महान्ते-मु; महा ते-अथर्व. **अवहि**-मु; अर्वाहः-अथर्व. **स इत्थ कं स एव कं**-का-मु; स इच्छकं सघाघते-अथर्व. **सघा घ ते सघा घ मे**-का; सघा घ ते सघा ग मे--मु; सघाघते-अथर्व। **४. गोमी घ गोमिनीरभि**-का; गोमी घ मोमिनीरभि--मु; गोमीघा गोगतीरिति--अथर्व. **पुमां भूम्ने निनित्ससि**--का; पुमां कुस्ते-निमिच्छसि--अथर्व; पुमान् भूम्ने निजित्सति--मु. **वल्बवथो इति**-का; बद्बबथो इति--मु; पल्प बद्ध वयो इति--अथर्व. **वल्बवो अथो**-का; बद्बवो अथो--मु; बद्धवां अघा--अथर्व। **५. अजकोऽरकोऽविका**-मु; अजागारकेविका--अथर्व. **वारो गोः शफः**-का; वारो गोशपद्यके--अथर्व; वालो गोशफः--मु. **केशिनी श्येनी एनीव**-का; श्येनीपर्ता सा--अथर्व; केशिनी श्येनी एनीवा--मु। **६. अम्ब हुलमायुनि**-का; अंब कुलिमायुनि--मु; अयं बहुलिमा इषूनि-अथर्व. **असिक्न्याः**-का; असिद्याः--अथर्व। **७. य आयन्ति श्वाभिष्कुभिः**--का; यवानो यति स्वभिः कुभिः--अथर्व. **अक्जन्तः कुभायवः**-का; अकुभ्यन्तः कुभायवः--मु; अकुप्यन्तः कुपायकुः--अथर्व. **आमनको मनस्थकः**-का; आमणको मणत्थकः--मु; आमणको मणत्सकः--अथर्व। **८. देवत्तः प्रति जूर्यः**-का; देवत्तः प्रतिहूर्यः--मु; देव त्वप्रति सूर्य--अथर्व. **पिनष्टि पर्तिका**--का; पिनष्टि पतिका-मु; एनश्चिपङ्क्तिका--अथर्व. **प्र बुद्बुदो मथायति**-का--मु; प्र दुदुदो मघाप्रति--अथर्व. **शुङ्ग उत्पत**--का-मु; शृंग उत्पन्न-अथर्व। **९. त्वाति**-का; त्वाभि--अथर्व; त्वाबि--मु. **नो वदत्**-का; नो विदन्-अथर्व; नाविदन्--मु. **आयन् तं**-का; आयान्तं--मु; आ यन्ति-अथर्व. **चेन्द्रममन्दते**-का--मु; वेदुमयंदत--अथर्व। **१०. इयन्निति**; इयंनिति--मु; इयमिति--अथर्व. **ज्यायस्तरो भुवत्**-का-मु; ऽश्वा अस्थिरो भवन्-अथर्व. **इयं यका**-का-मु; उयं यकां शलोलका--अथर्व. **मिनोति**-का; मिणोति--मु; आमिनोनिति भद्यते--अथर्व। **११. तस्या अनुनिभञ्जनं**-का--मु; तस्य अनु निभंजनं--अथर्व. बभ्रुभिः--का--मु; वस्वभिः-अथर्व. **शतं बभ्रोरभीशुभिः**-का; शतं वा भारतो शवः--अथर्व; शतं बभ्रोरभीशवः--मु. **बभ्रोः**-का--मु; **वायोः**-अथर्व. **कशा हिरण्ययीः**-मु; कुथा हिरण्ययाः--अथर्व। **१२. रथा**-का; रथ्या-अथर्व. **आहलकुः शवर्तकः**-का; आहलकुः शवर्तकुः--मु; अहल कुश वर्तक--अथर्व. **तेजनी**-का; तेदनी-शांश्रौ; तोजनी--अथर्व; तेजनिः--मु. **ओहते**-का; ओहति-मु. **पीव**-का; इव--अथर्व। **१३. वनिष्ठुनाप**-का-मु; वनिष्ठा नाव--अथर्व. **नृह्यति**-का--मु; गृह्यन्ति--अथर्व. **इमं**-का--मु; इदं-अथर्व. **अदुरिति**-का-मु; मदूरिति--अथर्व. **तिष्ठन्ति**-का; तिष्ठति--अथर्व. **पाकबलिः शकबलिः**-का--मु; पाक बलिः शक बलिः-अथर्व। **१४. शये**-का; शयो-अथर्व. **खादिरो**-का; खबुरो-मु. **अरदुः परमः**-का-मु; अरदु-परम-अथर्व. **पापपूरुषः**-का-मु; व्याप पूरुषः-अथर्व. **अदोहमित्पीयूषकं**-का-मु। अदूहमित्यां पूषकं-अथर्व. **१५. द्वौ च**-का; दौव-अथर्व. **हस्तिनो दृती**-का; हस्तिनो दती-मु; हस्तिनो दर्ती-अथर्व. **अत्यर्धं च**-का-मु; अत्यर्धर्च-अथर्व. **१६. तद्वात**-का-मु; कद्वात-शांश्रौ. **उन्मथायति**-का; उन्मथा इति-मु. **करवाँ**-का-मु; कृणवाद्-अथर्व-शांश्रौ. **वल्षद्**-का; बलिशद्-मु; वनिषद्-अथर्व-शांश्रौ। **१७. वल्षद्**-का; बलिशद्-मु; वनिषद्-अथर्व-शांश्रौ. **कर्करि**-का; कर्करी-अथर्व; कर्करीं (रिखत्)-मु. **यर्दा हनत् कथं हनत्** ≡ आश्वश्रौ ८. ३. १७. **यर्दा**; यदीयं-अथर्व। **१८.** 'अन्त्या (अष्टादशी) द्विपदा' इति खिलानुक्रमणी। **देलीं**-का-मु; लेलिं-शांश्रौ; देवी-अथर्व. **कथं**-का-मु-शांश्रौ; कु-अथर्व. **पर्याकारं पुनःपुनः** ≡ आश्वश्रौ. ८. ३. १७. **पर्याकारं**-का-मु-आश्वश्रौ; पर्यागारं-अथर्व-शांश्रौ।

अथर्व २०. १३२ अन्ते यदधिकं तदत्र दीयते–

त्रीण्युष्ट्रस्य नामानि। हिरण्यं इत्येके अब्रवीत्।
द्वौ वा ये शिशवः। नीलशिखण्डवाहनः।

## १६

विंततौ किं॰णौ द्वौ तांवां पिनष्टि पूरुषः। नं वै कुमारि तत्तथा यथा कुमारि मंन्यसे ॥ १ ॥
मातुंष्टे किरणौ द्वौ नीवींतः पुंरुषादृते। नं वै कुमारि तत्तथा यथा कुमारि मंन्यसे ॥ २ ॥
निगृंह्य कंर्णकौ द्वौ निंरायंच्छसि मध्यमम्। नं वै कुमारि तत्तथा यथा कुमारि मंन्यसे ॥ ३ ॥
उत्तानांयै शयानांयै तिंष्ठन्नेवांव गूहसि। नं वै कुमारि तत्तथा यथा कुमारि मंन्यसे ॥ ४ ॥
श्लक्ष्णांयां श्लंक्ष्णिकायां श्लक्ष्णमेवांव गूहसि। नं वै कुमारि तत्तथा यथा कुमारि मंन्यसे ॥५॥
अंव श्लक्ष्णमवभ्रशदन्तर्लोमंवति ह्रदे। नं वै कुमारि तत्तथा यथा कुमारि मंन्यसे ॥ ६ ॥

एताः 'प्रवह्लिकाः' अथर्व २०. १३३; शांश्रौ १२. २२; मु अत्राप्युपलभ्यन्ते। आश्वश्रौ ८. ३ अपि द्रष्टव्यम्।

**२. नीवींतः** (नीवी + इतः)–मु; निवृत्तः–अथर्व–शांश्रौ. **पुरुषादृते**–मु; पुरुषादृतिः–शांश्रौ; पुरुषानृते–अथर्व। **३. मध्यमं**–का; मध्यमां–मु; मध्यमे–शांश्रौ–अथर्व. **कर्णकौ**; कर्तकौ–मु। **४. तिष्ठन्नेवाव**–का; तिष्ठन्तीवाव–अथर्व। **५. गूहसि**–गूहति–अथर्व। **६. अवभ्रशद्**–का–मु; इव भ्रंशद्–अथर्व–शांश्रौ. **लोमवति**–का–शांश्रौ; लोममति–अथर्व।

## १७

इहेत्था प्रागंपागुदगधरांगरांला उदभर्त्संत ॥ १ ॥
इहेत्था प्रागपागुदगधराग्वत्साः प्रुषन्त आसते ॥ २ ॥
इहेत्था प्रागपागुदगधराक्स्थालीपाको वि लीयते ॥ ३ ॥
इहेत्था प्रागपागुदगधराक् सिलीपुच्छो वि लीयते ॥ ४ ॥

एताः 'आजिज्ञासेन्याः' अथर्व २०. १३४. १-४; शांश्रौ १२. २३. १; आश्वश्रौ ८. ३; मु अत्राप्युपलभ्यन्ते। सर्वास्वृक्षु 'इहेत्था' इत्यस्य स्थाने 'इहेत्थ' इति अथर्व–शांश्रौ–आश्वश्रौ–मु पुस्तकेषु।

**१. प्रागपागुदगधराक्** = वासं ६. ३९. **अराला**–का–मु; अरालाग्–अथर्व–शांश्रौ. **उदभर्त्संत**–शांश्रौ; उदभर्त्सथ–अथर्व; उदभन्थते–मु। **२. प्रुषन्त**–का; पुरुषन्त–अथर्व। **३. स्थालीपाको वि लीयते**–का–शांश्रौ–अथर्व; सर्वापुत्सीलिलीशये–मु। **४. सिलीपुच्छो वि लीयते**–का; स्थालीपाको वि लीयते–मु; च्छिल्लीपु च्छिल्लीषते–शांश्रौ; स वै पृथु लीयते–अथर्व।

## १८

भुगित्यभिगतः। शरित्यभिष्ठितः। फलित्यपक्रान्तः ॥ १ ॥

एते त्रयः पादाः 'प्रतिराध्यः' उच्यन्ते ते च अथर्व २०. १३५. १; शांश्रौ १२. २३. २; आश्वश्रौ ८. ३; मु अत्रापि दृश्यन्ते।

**शरिति**–मु; शलिति–अथर्व–शांश्रौ. **अभिष्ठितः**–का–मु; अपक्रान्तः–अथर्व–शांश्रौ. **अपक्रान्तः**–का–मु; अभिष्ठितः–अथर्व–शांश्रौ।

